ॐनमः सद्गुरवे माधवाय ।

# सव्याख्ये निर्णयसिन्धौ

## प्रथमः परिच्छेदः

16047

मङ्गलाचरणम् ।

*कारुण्यैकनिकेतं रामं सीतालतायुक्तम् ॥
विश्वामित्रान्ववायव्रततिसमालम्ब्यशाखिनं वन्दे ॥१॥
*लक्ष्मीसहायं कल्पद्रु*तलं रञ्जितगोकुलम् ॥

---

श्रीगणेशाय नमः ॥

लक्ष्मीनारायणं नत्वा पितरौ च गुरूनपि ॥
कृष्णशर्मा वितनुते सारार्थां सिन्धुदीपिकाम् ॥ १ ॥
कमलाभू राङ्गनाथिः कृष्णो नारायणानुजः ॥
अधिनिर्णयसिन्ध्वाह संशयध्वान्तनाशिनीम् ॥ २ ॥

विघ्नध्वंसार्थं कृतं मङ्गलं [illegible] निबध्नाति—कारुण्ये ति । अन्ववायो वंशः । व्रततिर्लता, प्रतानत्वात् । उभयतोलल- [illegible] चेदं समस्तदेशनिवर्त्ति । यद्यप्यत्र सीताल- तायुक्तो रामशाखी स्वकुललतासमालम्ब इति न लभ्यते इत्य- [illegible], [illegible]ऽपि नमस्कार्यताप्रयोजकरूप[illegible] [illegible] [illegible]कतया ऽ[illegible]द्विधेयतायामतात्प- र्यान्न दोषः ॥ १ ॥

विघ्नबाहुल्यादि[illegible] अवर्जनीयतया तद्विधूननाय मङ्गलान्तरमाह—लक्ष्मीति । तलम्—स्वरूपम् । 'अधःस्वरूप-

बर्हापीडं घनश्यामं महः किञ्चिदुपास्महे ॥ २ ॥
*वेदार्थधर्मरक्षायै मायामानुषरूपिणम् ॥
पितामहं हरिं वन्दे भट्टनारायणाह्वयम् ॥ ३ ॥
यत्पादसंस्मृतिः सर्व*मङ्गलप्रतिभूर्मता ॥
तान् भट्टरामकृष्णाख्यान् *श्रीतातचरणान्नुमः ॥ ४ ॥
सर्वकल्याणसन्दोहनिदानं यत्पदद्वयम् ॥
[illegible] नौमि सादरम् ॥ ५ ॥

---

योस्तलम्' इति कोशात् । कल्पद्रुत्वाभिधानं चाचिन्त्यमहिमव्यञ्जकम् । कल्पद्रुस्तलमधो यस्येति वा । मुक्तेरपि दातृत्वात् । रञ्जितगोकुलमिति सुगमम् । 'तलरञ्जितगोकुलम्' इति पाठे कल्पवृक्षै रञ्जितं गोकुलं येनेति । तत्र कल्पवृक्षा गोकुले वर्त्तन्ते । श्रीभगवानेव कल्पवृक्ष इति तु वस्तुगतिः । 'कल्पद्रुतरलं जितगोकुलम्' इति पाठे कल्पद्रुस्तरलो येनेति उत्कृष्टतोऽजितमायत्तं गोकुलं यस्येति बोध्यम् ।

स्वस्य धर्मज्ञत्वमवगमयितुं धार्मिकपरम्परितत्वमाह—वेदार्थेति । मायामानुषरूपिणं हरिमिति न्यूनाभेदरूपकम् ।

मङ्गलेति । यद्यपि नमस्क्रियाया एव मङ्गलत्वं न तु स्तुतेः, विघ्नध्वंसार्थविहितसुवर्णदानादिवत्, तथाऽपि तत्तुल्यत्वमक्षतमित्येवमर्थं प्रतिभूपदम् । पितृपादस्तुतिश्च तदन्तर्गतनतिरूपेति मङ्गलरूपत्वम् । सर्वोत्कृष्टत्वज्ञापको व्यापारः स्तुतिः, स्वोत्कर्षज्ञापकः स नतिरिति भेदः । श्रीतातेति । यद्यपि चरणशब्दस्य राजपुङ्गवादिशब्दवन्न पूर्वपदार्थगतश्रैष्ठ्यार्थः ।

'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥'

इत्यनुशासने तदनुक्तेः, [illegible], तथा समासानुशासनाच्च । नापि 'गुरुचरणा आहुः' इतिवत्क्रियाकारकत्वारोपः । तद्वत् क्रियान्वयाभावात् । तथाऽपीह चरणः

बिन्दुमाधवपादाब्जरोलम्बीकृतविग्रहम् ॥
ज्यायांसं भ्रातरं भट्टदिवाकरमुपास्महे ॥ ६ ॥
*हेमाद्रिमाधवमते प्रविचार्य सम्य-
गालोच्य तत्त्वमथ *तीर्थकृतां परेषाम् ॥
श्रीरामकृष्णतनयः कमलाकराख्यः
काले* यथामति विनिर्णयमातनोति ॥ ७ ॥
सन्ति यद्यपि विद्वांसस्तन्निबन्धाश्च कोटिशः ॥

---

शाखाध्येता बोध्यः । अथैवं कर्मधारये तातबहुत्वलाभाद्विरुद्धमति-कृत्त्वं दुर्वारम् । मैवम् । काव्यमीमांसामांसलमनसामेव तथा मतिः, न तु वेदमीमांसामांसलमनसाम् । तेषां पुनर्गौरवस्यैव चरणशब्दव्य-वायेन लाभात् । यद्वा 'नागाद्याः' इत्याद्यपदेन 'पादपद्मचन्द्राद्याः' इति क्षीरस्वामिवचनात्पादचरणादिशब्दानामपि श्रेष्ठ्यार्थकत्वम् । तदु-त्कटताविशेषस्फोरकं च बहुवचनम् । केचित्तु चरणयोरेव तदा-ख्यामारोप्य द्वित्वा इतिवद्द्वित्वैकत्वाविवक्षया बहुवचनम्, यत्पादेति कर्मधारय इत्यप्याहुः । 'तं भट्टरामकृष्णाख्यं श्रीतातं सादरं नुमः' इति तु रमणीयम् ।

उन्मत्तप्रलपितत्वशङ्कां निरस्यन्नेव प्राचीनग्रन्थैरन्यथासि-द्धिशङ्कां परिहरन्ति—हेमाद्रीति । तीर्थम्—शास्त्रम् । तथा च हे-माद्र्यादिमतस्यैव [illegible] परिहृत्योपादानान्नान्यथासिद्धिरिति भावः । कालानङ्गीकर्तृसांख्यनिरासार्थं काले इति । वैषयिक आधारः । ज्योतिःशास्त्रादौ स्वरूपतो निर्णीतस्यापि 'सायं जुहो-ति' इतिवत् 'चतुर्थ्यां पूजयेद्देवम्' इत्यादिनाऽधिकरणसप्तमीनिर्देशाल्लब्ध-स्य विनायकपूजाद्यङ्गत्वस्य चतुर्थ्यां दिनद्वयसत्त्वे संशयः स्यादिति तस्याः पूर्वत्वादिनाऽप्यङ्गत्वं निश्चीयत इत्यर्थः । तादृशनिश्चयश्च क्वचि-देकतरकोटेः साधकस्य, क्वचित्तु बाधकस्योपन्यासेन । तच्च साधकं बाधकं च द्विविधम्, न्यायवचनभेदादिति तत्सर्वं प्रदर्श्यते इति यावत् ।

तथाऽप्यमुष्य *वैदग्धीं केचिद्विज्ञातुमीशते ॥ ८ ॥

तत्र *संक्षेपतः कालः षोढा—अब्दो, ऽयनम्, ऋतुः, मासः, पक्षो, दिवस इति।

तत्राब्दो *माधवमते पञ्चधा*— सावनः, सौरः, चान्द्रो, नाक्षत्रो, बार्हस्पत्य इति । गुरोर्मध्यमरा-

---

वैदग्धीमिति। निर्णयकमलाकरतया निर्णया उन्मज्जन्त्येव । वि-षयसंशयजनकतदप्रामाण्यसन्देहभञ्जकानि विशेषदर्शनानि तु सं-ख्यावतामेव प्रतिभासन्ते इति व्यञ्जनाय । तत्र—न्यायवचनाभ्यां निश्चितव्येऽङ्गत्वे । संक्षेपत इति । यद्यपि साक्षाद्व्याप्येन विभागे सम्भवति परम्परासाधारण्येन सोऽसङ्गतः, कलाकाष्ठादिनाऽपि तत्प्राप्तेरिति प्रथमतो जन्यत्वानित्यत्वाभ्यामेव विभागो वाच्यः, तथाऽपि नित्यस्य तस्य कर्मानङ्गत्वात्त्यागः। कर्मादौ तत्स्मरणस्यै-वाङ्गत्वात् स्मृतिद्वाराऽपि तस्याङ्गत्वे मानाभावात् ।

माधवमते इति । एवमादिप्राचीनग्रन्थतत्कर्तृनामलेखनं च प्रायशः स्वोत्प्रेक्षामूलकत्वशङ्कानिराकरणाय । स्वानभिमते तु अरुचिं दर्शयामः । पञ्चधेति । तथा चोक्तं माधवेनैव—

'सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युः । म-तल(३६५)—पतला(३६१)—ऽतल(३६०)—वमल(३५४)—वरगाश्च-(३२४)वत्सराः पञ्च'इति । मतलपाऽवरगाः क्रमेण पञ्चपञ्चै-कशून्यचतुर्द्वित्र्यर्थकाः। अङ्कानां च वामतो गतिः। अत्रारुचिं दर्श-यन्नेवाऽऽह—हेमाद्रिस्त्विति*। अत्र सावनादीनामनियमेन ग्रहणं तु न शङ्क्यम् । यतो यत्र तिथिविशेषरूपं स्पष्टं लिङ्गम्, यथा—

'वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः ।
शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः' ॥

इत्यादौ शुक्लप्रतिपत् । तत्र—

'ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजम् ।

शिभोगेन बार्हस्पत्यः । स च ज्योतिःशास्त्रे प्रसिद्धः । *हेमाद्रिस्त्वनयोर्धर्म*शास्त्रेऽनुपयोगात्तस्य एव

---

ततः प्रभृत्यनुदिनं तिलकालङ्कृतं मुखम् ॥
धार्यं संवत्सरं यावच्छशिनेव नभस्तलम्' ।

इत्यादितिलकव्रतादौ । यथा वा 'शुक्लपक्षे चतुर्दश्याम्'इत्यादि'नव वर्षाणि पञ्च च'इतिसंवत्सरावृत्तिसाध्येऽनन्तादिव्रते शुक्लचतुर्दश्यादि । तत्रोभयत्रापि चान्द्र एव संवत्सरः ।

यत्र वा मेषसंक्रमणे 'सोपवासो नरोत्तम'इत्यादौ संक्रमरूपं तत् तत्र 'कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु न चापि जन्म'इतिसंवत्सरसाध्ये सुजन्मावाप्तिव्रते, यत्र वा 'अयने विषुवे चैव त्रिरात्रोपोषितो नरः'इत्यादि अयनादिरूपं तत् तत्र 'एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियाम्'इतितादृशधान्यदानादिव्रते, तत्र संवत्सरः सौर एव ।

यत्र तु "गोसत्रं वै संवत्सरो, य एवं विद्वांसः संवत्सरमुपयन्ति"इत्यादौ गवामयनस्य संवत्सरशब्देन व्यवहारात्संवत्सरकालस्य तदङ्गत्वप्रतीतौ अभिप्लवषडहचतुष्टयैकपृष्ठ्यषडहयोः सावनैकमाससाध्ययोः सांवत्सरिकीणां द्वादशावृत्तीनां चान्द्रसौराभ्यामनिर्वर्त्तनम्, तत्र पारिशेष्यात्सावन एवाब्दः । एवम्—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन् द्विजः" ॥

इति द्वादशाहोरात्रसाध्यानां प्राजापत्यानां षष्ट्युत्तरशतत्रयरूपं द्वादशाब्दं तस्य चान्द्रसौराभ्यामनुष्ठानासम्भवात्सावन एवाब्दः । एवं द्वादशाब्दादिस्थाने नवाब्दादावपि । यथा पराकादिमिश्रप्राजापत्यादौ पराकषडब्दे त्र्यब्दं प्राजापत्यं षडब्दं चेति, तत्र [illegible] सावन एव तत्राब्दः । अत एव

विधा आह। तत्र वक्ष्यमाणैः *सावनादिद्वादशमासै-
स्तत्तदब्दम्। मलमासे तु सति षष्टिदिनात्मक एको
मास इति द्वादशमासत्वमविरुद्धम्। तथाच व्यासः—
'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः' इति॥

तत्र चान्द्रोऽब्दः षष्टिभेदः। तदाह गार्ग्यः—
'प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः।
अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च॥

---

मर्त्तुकामस्यैव दक्षिणा मुख्या, नान्यस्येति सिद्धान्तः। तस्या
अब्दानङ्गत्वात्। एवं यत्र "सावनेनैव कर्त्तव्या शत्रूणां चाप्युपा-
सना" इतित्सयपालनादौ विशेषवचनम्, तत्रापि सावन एव।

एवं च यत्र विशेषतो न लिङ्गादि तत्रेच्छया विक-
ल्पः। यथा 'एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सर-
वासिने' इतिव्यतिरेकमुखेनाम्नातगुरुकुलवासादौ। *धर्मेति।
अथ नाक्षत्रस्यायुर्दाये एवोपयोगाद् माऽस्तु धर्मशास्त्रे तत्प्र-
पञ्चः, 'गौतम्यां सिंहगे गुरौ' इत्यादौ अपेक्षणात्तु बार्हस्पत्यस्य
तं को वारयिता? इति चेत्। तिलकव्रतादौ हि चान्द्रादेर्वत्सरत्व-
ज्ञानमपेक्षितम्, न तु क्वापि कर्माणि बार्हस्पत्यस्य तत्। 'सिंहगे
गुरौ' इत्येव श्रवणात्। यदपि—

"गुरोर्मध्यमसंक्रान्तिहीनो यश्चान्द्रवत्सरः।
अधिसंवत्सरस्तस्मिन्कारयेन्न खवत्रयम्॥
वर्जनीयाः प्रयत्नेन प्रतिष्ठाः सर्वनाकिनाम्।
स्फुटसंक्रान्तिहीनश्चेत्केऽप्याहुरधिमासवत्"॥

इत्युक्तरसौरं, तदपि बार्हस्पत्यस्य संवत्सरत्वाज्ञानेऽपि मध्यमगणा-
नया गुरुसंक्रमशून्ये चान्द्राब्दे बृहस्पतिसत्वादिस्फुटगणनया तादृशे
तत्राधिमासवत् कामादि च न कार्यमित्यर्थकमिति न कश्चिद्विरोधः।

*सावनादीति। तिथिवद्द्वादशादिमासैरब्दमपि द्रष्टव्यम्।

ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ।
चित्रभानुः सुभानुश्च तारणः पार्थिवोऽव्ययः ॥
सर्वजित्सर्वधारी च विरोधी विकृतिः खरः ।
नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥
हेमलम्बो विलम्बोऽथ विकारी शार्वरी प्लवः ।
शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥
प्लवङ्गः कीलकः सौम्यः साधारण(१)विरोधकृत् ।
परिधावी प्रमादी च आनन्दो राक्षसोऽनलः ॥
पिङ्गलः कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती ।
दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः' ॥ इति ।

*यद्यपि ज्यौतिषे गुरोर्मध्यमराशिभोगेन* प्रभवादीनां माघादौ प्रवृत्तिरुक्ता, तथाऽपि प्रभवादीनां चान्द्रत्वमप्यस्ति । 'चान्द्राणां प्रभवादीनां पञ्चके पञ्च-

---

अन्यथा "मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्" इतिवत्सरत्व-ज्ञानसापेक्षे आब्दिकादौ अनियमेन वत्सरापत्तेः । लिङ्गाभावेन चान्द्रसौरयोरसम्भवादन्यवत्सरकर्तव्यताकगोसत्राद्यन्यतया साधनस्य च निष्फलत्वसम्भवात् । प्रभवादीनां चान्द्रत्वमप्रामाणिकमित्याशङ्कते—*यद्यपीति । मध्यमगणना गुरोः शराः ५ खमिति । प्रत्यहं पञ्चकला गुरोर्गतिरित्यर्थः । *भोगेनेति प्रभवान्वयि, न तु प्रवृत्तौ असम्भवात् । माघादौप्रभवादीनामित्यादिपदे विभवादेः फाल्गुनादिप्रवृत्तिसूचके ।

"तपसि खलु यदाऽसावुद्गमं याति मासि
मदनजनकतः सन् वासवे वासवेज्यः ॥
निखिलजनहितार्थं वर्णवन्दे वरिष्ठः

---

(१) इदं लुप्तविभक्तिकम्, साधारणनाहिनो विरोधकृदिति उत्तरपदलोपी वा ।

के युगे'* इति माधवोक्तेः । तेन चान्द्रः प्रभवादिश्चैत्रसिते प्रवर्तते । बार्हस्पत्यस्तु माघादौ । तयोर्विनियोगो ज्योतिर्निबन्धे ब्रह्मसिद्धान्ते-

'व्यावहारिकसंज्ञोऽयं कालः स्मृत्यादिकर्मसु ।
योज्यः सर्वत्र तत्रापि जैवो वा नर्मदोत्तरे' ॥

आर्ष्टिषेणः-

*'स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा ।
नान्यं *यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता' ॥ इति ।

अयननिर्णयः । अयनं तु *सौरर्तुत्रयात्मकम् । 'सौरर्तुत्रितयं प्रदिष्टमयनम्' इति दीपिकोक्तेः । तद्द्विविधम्-दक्षिणमुत्तरं चेति । कर्कसंक्रान्तिर्दक्षिणायनम्, मकरेऽन्यम् ।

अनयोर्विनियोगमाह मदनरत्ने सत्यव्रतः-
'देवताऽऽरामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।

---

प्रभव इति स नाम्ना जायतेऽब्दस्तदानीम्" ॥
इत्युपक्रम्य
"इयं हि षष्टिः परिवत्सराणां बृहस्पतेर्मध्यमराशिभोगात् ।
उदाहृता पूर्वमुनिप्रवर्यैर्नियोजनीया गणना क्रमेण" ॥
इत्युपसंहारात् । *युग इति ।
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इदावत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ॥
इद्वत्सरः पञ्चमस्तु तत्सङ्घो युगसंज्ञकः" ॥ इत्युक्तेः ।

'जैवो वा'इति वाकारोऽस्वरससूचनाय । को व्यावहारिकसंज्ञकः काल इत्यत आह-*स्मरेदिति । *यस्मादिति च शुक्लादिर्मुख्य इत्येतदर्थम्, न तु कृष्णादेः [illegible]र्थम् । अनेकवचनविरोधात् । *सौरेति मासातिदेशप्राप्तचान्द्र-

दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात्' ॥

वैखानसः—

*'मातृभैरववाराहनरसिंहत्रिविक्रमाः ॥

महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने' ॥

वैशब्दोऽप्यर्थे, न तु दक्षिणायन एवेति नियमः ।

पूर्ववचने दक्षिणायने निषिद्धाया देवप्रतिष्ठाया देवविशेषे प्रतिप्रसवमात्रात् ।

रत्नमालायाम्—

'*गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम् ।

सौम्यायने कर्म शुभं विधेयं

यद्गर्हितं तत्खलु दक्षिणे च' ॥ इति ।

अस्यापवादः काशीखण्डे—

*'सदा कृतयुगं चास्तु सदा चास्तूत्तरायणम् ।

सदा महोदयश्चास्तु काश्यां निवसतां सताम्'* ॥

इत्ययनम् ॥

ऋतुनिर्णयः । ऋतुर्मासद्वयात्मा । मलमासे तु मासद्वयात्मक एको मासः, तेन मासद्वयात्मकत्वमविरुद्धम् । स द्वेधा चान्द्रः सौरश्च । 'चैत्रारम्भो वसन्तादिश्चान्द्रः । मीनारम्भो, मेषारम्भो वा सौरः । *'मी-

---

त्वादिव्युदासार्थम् । *मातृ इति उग्रकर्मोपलक्षणम् ।

"उग्रे कर्मणि सौम्ये च स्तोऽयने दक्षिणोत्तरे"

इति माधवोक्तेः । तदेवाह—*गृहेति । *सदा कृतेत्यादि अपवादत्वाभ्युपगमवादः । अस्त्वित्याशीर्लोटः कृतयुगादिकार्याप्रापकत्वात् । *सतामिति निगूढदुर्वृत्तानां भासमानसाधुभावानां व्यावृत्तिः ।

*मीनेति । एतदनुसारेणोत्तरे ग्रीष्मादयो विकल्प्यन्ते ।

नमेषयोर्मेषवृषयोर्वा वसन्तः' इति बौधायनोक्तेः ।
अनयोर्विनियोगमाह त्रिकाण्डमण्डनः—

'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु ।
*तदभावे तु सौरर्तुष्विति ज्योतिर्विदां मतम्' ॥

स द्विविधोऽपि षोढा । वसन्तो, ग्रीष्मो, वर्षाः, शरद्, हेमन्तः, शिशिरः । इत्यृतुः ॥

मासनिर्णयः । मासश्चतुर्द्धा । सावनः, सौरः, चा-

---

तदभावे तु इति सौरर्तुगौणत्वार्थम् । एवं कृष्णादिमासानां गौणत्वात्तद्घटितमासद्वयात्मकर्तूनामपि गौणत्वं द्रष्टव्यम् । एवं च "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादौ नानैव वाक्यार्थः । अन्यथा मुख्यत्वगौणत्वविवेचनवैयर्थ्यात् । तत्र मुख्यवाक्यार्थे शुक्लादिचान्द्रमासद्वयघटितो मुख्य एव वसन्तः । कृष्णादिचान्द्रमासद्वयघटितस्य वसन्तपदार्थस्य गौणत्वात्, सौरमासद्वयघटितस्य तस्य गौणतरत्वात् । मुख्यासम्भवे गौणवाक्यार्थो ऽवलम्बनीयः ।

"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्" ॥

इतिमनुवचनात् । एवं च 'श्रौतस्मार्त्तक्रियाः' इत्यत्र श्रौतपदं सङ्गच्छते । "चान्द्रमासर्तुषु" इत्यत्र चान्द्रमुख्यगौणर्तुभ्यां गौणमुख्यभावोऽपि विवक्षितः । अन्यथा सौरर्त्तुना गौणभावप्रदर्शनासङ्गतेः । एवं शरदादिपदेऽपि । एवं च—

"मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति" ।

"नवमिश्रं तु षड्तून्" इत्यादौ ऋतुघटकत्वेन मुख्यचान्द्रमासग्रहणे मृताहे श्राद्धं न स्यादिति मृततिथेर्मृततिथिं यावच्चान्द्रो मासः, तद्युग्मं च ऋतुरिति तत्र मासानां गौणत्वेन ऋतुपदं गौणमेव । अस्तु वा तत्र ऋतुपदं मुख्यचान्द्रमासारब्धर्तुपरतया मुख्यमेव । मृताहकर्त्तव्यत्वं च—

न्द्रो, नाक्षत्र इति। त्रिंशद्दिनः सावनः। अर्कसंक्रान्तेः संक्रान्त्यवधिः सौरः।

यद्यपि हेमाद्रिमाधवकालादर्शाद्यालोचनेन, 'मेषसंक्रान्त्यां समाप्तामावास्याकत्वं चैत्रत्वम्' इति लक्षणाच्च मेषसंक्रान्तेश्चैत्रत्वं प्रतीयते; तथापि मेषसंक्रमे दर्शद्वये सति वैशाखस्यैवाधिक्यात्तत्पूर्वभावित्वेन मीनस्यैव चैत्रत्वं युक्तम्। एवं मेषादयो वैशाखाद्याः। अतो मीनसंक्रान्तिमध्यस्थपौर्णमासीकत्वम्, तादृशाद्यतिथिकत्वं वा चैत्रत्वमिति लक्षणात् मीन एव सौरश्चैत्रः। एवं वैशाखादयोऽपि मेषाद्या ज्ञेयाः॥

सौरमासप्रसङ्गात् *संक्रान्तिनिर्णय उच्यते। तत्र—

'मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम्'।

इतिवचनात्। तथा च मासि मासीत्यस्य प्रतिशुक्लादिमासं संवत्सरं यावन्मृततिथौ श्राद्धं कार्यमित्यर्थः। ऋतुश्च तद्द्वयात्मक इति।

*संक्रान्तीति। मण्डलनेमिमध्यं केन्द्रः। तस्य पूर्वराशिसम्बन्धत्यागेनोत्तरराशिप्रवेशः संक्रान्तिः। तत्कालश्चातिसूक्ष्म इति तत्रैकस्यापि कर्त्तव्यस्याननुष्ठाने प्रसक्ते तद्योग्यतया तत्सन्निहितः पूर्वोत्तरः कालो ग्राह्यः। स च यावता कालेन केन्द्रपूर्वापरौ भागावुत्तरराशिचक्रं प्रविशतस्तावान्। स एव च भोगः। भुज्येते पाल्येते विधिनिषेधावत्रेति व्युत्पत्तेः। स च सामान्यतः पञ्चदशपञ्चदशनाडीरूपः।

'अतीतानागते भोगे नाड्यः पञ्चदश स्मृताः'।

इत्युक्तेः। एतेन—

'संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः।

झषप्रवेशे दारूणां दानमग्नेस्तथैव च ॥
कुम्भप्रवेशे दानं तु गवामम्बुतृणस्य च ।
मीनप्रवेशे स्थानानां मालानामपि चोत्तमम्' ॥इति ।
अत्रोपवासमाह हेमाद्रावापस्तम्बः—

---

'सूर्योदयोत्तरं संक्रमेतु'इति । मूलवचनानि—

'मध्ये तु विषुवे पुण्यं प्राग्विष्णौ दक्षिणायने ।
षडशीतिमुखेऽतीते ह्यतीते चोत्तरायणे' ॥

इत्यादीनि, 'अह्नि संक्रमणे पुण्यम्'इत्याद्यग्रिमाणि च । अत्रोभयतः प्रसक्तस्य षोडशत्वादेः—

'वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश' ।

इति विषुवयोरपवादः, विष्णुपदीषु पूर्वत एव, षडशीत्यास्येषु परत एवेति च नियम इति केचित् ।

वस्तुतस्तु सर्वसंक्रान्तिषु भोगसाम्येन व्यवस्थायां मानाभावाद्विशेषतो दशत्वादीनि पुण्यतमत्वार्थानि ।

'या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः'—

इत्युक्तेः । अत एव—

'धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा ।
पूर्वापरविभागेन रात्रौ संक्रमते रविः ॥
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः ।
उदयेऽपि तथा पञ्च दैवे पित्र्ये च कर्मणि' ॥

इतिस्कान्दे तमनुपात्तः । उभयत्वपूर्वत्वादीनि चोभयभोगिनीत्वपूर्वभोगिनीत्वादिव्यवहारार्थानि । एतेन—

'पुण्यकालो विष्णुपद्याः प्राक् पश्चादपि षोडश' ।

इति वचनादुभयतः षोडशत्वस्य विष्णुपद्यामुपसंहार इत्यपास्तम् । तत्र विष्णुपदीग्रहणस्योपलक्षणत्वात् । एवं च—

*'अयने विषुवे चैव त्रिरात्रोपोषितो नरः ।
स्नात्वा यस्त्वर्चयेद्भानुं सर्वकामफलं लभेत्' ॥
अशक्तौ तु वृद्धवसिष्ठः—
'अयने संक्रमे चैव ग्रहणे चन्द्रसूर्ययोः ।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते' ॥

अत्रोपवासः संक्रमदिने, दानादि तु पुण्यकालदिन इत्याचार्यचूडामणिः । विधिलाघवात्पुण्यकालदिन एवोभयमिति वृद्धाः ।

---

'षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिकाः' ।

इति कृत्स्नदिवसाभ्यनुज्ञानं प्रत्युक्तम् । षडशीत्या आरभ्य चतसृणां प्रत्येकं पञ्चदशेत्यर्थात् ।

'षडशीतिमुखेऽतीते नाड्यः पञ्चदश स्मृताः' ।
इत्युक्तेः ।

*अयने इति । अत्रायनविषुवपदम्—
'अयने कोटिपुण्यं च लक्षं विष्णुपदीफलम् ।
षडशीतिसहस्रं तु षडशीत्यां स्मृतं बुधैः ॥
शतमिन्दुक्षये दानमनन्तं तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम्' ॥
इतिवृद्धवसिष्ठोक्ताद्यन्तोपग्रहमुखेन तदुक्तसर्वसंक्रान्तिपरम् ।
'नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत्' ॥

इतिव्रतप्राधान्याभिप्रायं वा । तेन सर्वसंक्रान्तिलाभान्नात्र त-[illegible]ः । एवं संक्रान्तिसामान्ये त्र्युपवासप्राप्तेस्तत्राशक्तस्याग्रिमैकोपवासोक्तेरपि । अहोरात्रोषित इतिक्तप्रत्ययार्थो (भूतकालः)

इदं च पुत्रिगृहस्थातिरिक्तविषयम् ।
*'आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
उपवासो न कर्तव्यः पुत्रिणा गृहिणा तथा' ॥
इति जैमिनिवचनात् ।
अत्र श्राद्धमुक्तं हेमाद्रौ विष्णुधर्मे—
'श्राद्धं *संक्रमणे भानोः प्रशस्तं पृथिवीपते' ।
अपरार्केऽपि विष्णुः—

---

न विवक्षितः ।

'अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः ।
एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥
अत्र स्नानं जपो होमो देवतानां च पूजनम् ।
उपवासस्तथा दानमेकैकं पावनं स्मृतम्' ॥

इतिसांवर्तैकवाक्यत्वात् । वस्तुतस्तु त्रिरात्रोपोषित इति पूर्ववाक्ये प्रत्ययार्थो विवक्षितः । 'अगृहिभिः पुत्रीतरैः सङ्क्रमे प्राच्यह्नां त्रितयेऽथवोपवसनं कार्यम्'इति दीपिकायां 'प्राचि' इतिविशेषणात् । तद्वदहोरात्रोषित इत्यत्रापि स विवक्षित एव । सांवर्तं तु संक्रान्त्यधिकरणकोपवासविध्यन्तरमिति ।

*आदित्ये इति ।

'रविवारार्कसंक्रान्तावेकादश्यां सितेतरे ।
पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही' ॥

इति पारणनिषेधात्तदङ्गिनः पूर्वस्य त्र्यहस्य एकाहस्य वा उपवासस्य निषेधोऽपि द्रष्टव्यः । इत्थमेव—

'सप्तवारानुपोष्यैत्र सप्तधा संयतेन्द्रियः ।
[illegible]त्तत्क्षणादेव हीयते' ॥

इति रविशन्युपवासयोः साक्षात्, पारणानिषेधमुखेन वा 'आदित्येऽहनि'इति 'रविवार'इति च निषेधः । परं तु संक्रान्त्या[illegible]

आदित्यसंक्रमश्चैव (१)विशेषेणायनद्वयम् ।
व्यतीपातोऽथ जन्मर्क्षं चन्द्रसूर्यग्रहस्तथा ॥
(जन्मभमभ्युदयश्च) ।
एतांस्तु श्राद्धकालान्वै *काम्यानाह(२) प्रजापतिः ।
इति ।

द्वादशादिदिनैरर्वागयनांशप्रवृत्तावपि पुण्यं वक्तुमयनद्वयमुक्तम् । अन्यथा संक्रमेण सिद्धेरयनग्रहणं व्यर्थं स्यादित्यपरार्कः ।

हेमाद्रावपि गालवः-
*अयनांशकतुल्येन कालेनैव स्फुटं भवेत् ।

---

तन्निमित्तकमर्थः, न तु तदधिकरणकेति । प्रयुक्तान्तरनिमित्तकोपवासपारणयोरावश्यकत्वात् । 'तत्प्रयुक्तोपवासस्य' इत्यादिन्यायसाम्यात् । एवं च-

भृगुभानुदिनोपेता सूर्यसंक्रान्तिसंयुता ।
एकादशी सदोपोष्या पुत्रपौत्रप्रवर्द्धिनी ॥

इति विष्णुधर्मादि संगच्छते । *संक्रमणे इति पुण्यकालीनत्वार्थम् । *विशेषेणेति मेषायनादौ श्राद्धसूचकम् । *नित्यानिति ।

रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः ।
सप्तजन्मानि रोगी स्याद्दरिद्रश्चापि जायते ॥

इति स्नानवत् श्राद्धस्यापि नित्यत्वं नैमित्तिकत्वादित्यपि द्रष्टव्यम् । सर्वसंक्रान्तावयनांशमध्ये किं मानमित्यत्राऽऽह-*[illegible]

(१) यद्यपि लिखितपुस्तकेषु "विषुवं चायनं" इति पाठस्तथाऽपि टीकायां 'विशेषेण' इति प्रतीकसत्त्वादयमेव युक्त इति ।

(२) अत्र 'नित्यानाह' इति पाठः साधुः । नैमित्तिकत्वेन तेषां काम्यत्वाभावात् । टीकायां 'नित्यान्' इति प्रतीकाच्च ।

भानोः संक्रान्तिभोगश्च *कुलिकश्चार्धयामकः ।
इति ज्योतिःशास्त्रे वर्ज्येषु परिगणनात् ।

अयनव्यतिरिक्तासु दशसु संक्रान्तिषु रात्रौ (१)स्नानश्राद्धादि न कार्यम् ।

अह्नि संक्रमणे कृत्स्नमहः पुण्यं प्रकीर्तितम् ।
रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः ॥
*अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं* पुण्यं मुक्त्वा मकरकर्कटौ ॥
इतिवृद्धवसिष्ठादिवचनैरहःपुण्यत्वोक्त्या,

---

जः प्रचरन्ति" इत्यत्रोष्णीषमुद्दिश्य लौहित्यविधिर्न स्यादिति वाच्यम् । तत्रोद्देश्यस्यान्यतः सिद्धत्वात् । इहतु भक्षणभ्य पिण्डस्य च विधानादन्यतः सिद्धं पार्वणमनूद्यते इत्येव युक्तमित्यर्थः ।

*कुलिक इति ।

कुलिकः कालवेला च यमघण्टश्च कण्टकः ।
वाराद् द्विघ्ने क्रमान्मन्दे बुधे जीवे कुजे क्षणः ॥ इति ।
वाराद् द्विघ्ने क्रमान्मन्दे घट्यूनः कुलिको निशि । इति च ।
भौमभार्गवसूर्यज्ञसौरीन्द्वाङ्गिरसक्रमात् ।
वासरेषु द्वितीयाद्या अर्द्धयामा बुधैः स्मृताः ॥

इति चार्द्धयामः । किं तर्हिनार्धमित्यत आह *अर्धरात्रादिति । *दिनद्वयमिति अर्धावच्छिन्नं बोध्यम् । दिनार्धमित्युपक्रमात् ।

---

(१) मनुरप्याह—"रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा । सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते" इति । (अ०३श्लो०२७)

रात्रौ संक्रमणे भानोर्दिवा कुर्यात्तु तत्क्रियाम् ।
पूर्वस्मात्परतो वाऽपि प्रत्यासन्नस्य तत्फलम् ॥

---

सम्पूर्णे अर्द्धरात्रे तु उदये ऽस्तमये ऽपि वा ।
मानार्द्धे भास्करे पुण्यमपूर्णे शर्वरीदले ॥

इति देवीपुराणाच्च ।

सम्पूर्णे अर्द्धरात्रे—रात्रेरष्टममुहूर्त्ते । उदये—प्रातःसन्ध्यायाम् । अस्तमये—सायंसन्ध्यायाम् । अपूर्णे शर्वरीदले—निशीथपूर्वोत्तरभागयोश्च संक्रमे । भास्करे—भासं करोतीति व्युत्पत्त्या दिवसे यन्मानार्द्धं, तत्पुण्यमिति तदर्थः । 'अर्द्धमन्तर्वेदि'इतिन्यायेन कृत्स्नां रात्रिमनूद्य दिनमानार्द्धत्वविधेः ।

आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् ।
अर्द्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि ॥

इति देवीपुराणं च दिनद्वयपुण्यत्वे नैमित्तिकावृत्तिवारणार्थम् । निशीथे संक्रमे तिथेः पूर्वदिनतिथ्यभेदे पूर्वं दिनार्द्धं पुण्यम्, परदिनतिथ्यभेदे च परदिनार्द्धमिति चाऽऽर्थिकम् । इत्थं च तत्र दिनद्वयतिथिसत्त्वे पूर्वभोगिनीषु पूर्वम्, उत्तरभोगिनीषूत्तरम्, उभयभोगिनीषु तु इच्छया विकल्प इति मन्तव्यम् । "आहत्य पूर्वदिनतिथ्यभेदोक्त्या तद्विपरीतस्तत्तिथिभेद एवाऽऽर्थिकः, न तूत्तरतिथ्यभेदस्तादृशः । येन निमित्तद्वयसन्निपातेन व्यवस्थापेक्षायामुक्तव्यवस्था घटेत । तथा चोत्तरभोगिन्यादावपि पूर्वतिथ्यभेदे पूर्वमेव पुण्यम्" इति हेमाद्र्यादयः । व्यतीते त्वित्यत्र द्वितीयपादानुषङ्गादर्द्धरात्रादूर्द्ध्वं संक्रमे पूर्वतिथ्यभेदेऽपि परेद्युरेवेत्यर्थः । अर्द्धरात्रो मध्यवर्त्तिदण्डद्वयम् । केचित्तु या या इत्यनेन दश पूर्वा दशापराः' इत्यादिविशेषशास्त्रप्रसिद्धसंख्या नानूद्यते । सकलशिष्टाचारविरोधात् । किं तु सामान्यतः प्राप्तघटीषु तत्तत्संख्या । तदनुरोधेन च क्षण एवार्धरात्र इत्याहुः ।

संध्यानिषेधमाहुस्तन्निर्मूलम् । अन्यच्च *बहु वक्तव्यं विस्तरभीतेर्नोच्यते ॥ इति संक्रान्तिनिर्णयः ॥

---

इति नव्यधृतवचनात् । *बह्विति ।

सूर्ये घोरा, विधौ ध्वांक्षी, पापवारे महोदरी ।
बुधे मन्दाकिनी नाम, मन्दा सुरपुरोहिते ॥
मिश्रिता शुक्रवारे स्याद्, राक्षसी च शनैश्चरे ।
मन्दा ध्रुवेषु विज्ञेया, मृदौ मन्दाकिनी तथा ॥
क्षिप्रे ध्वांक्षीं विजानीयाद्, उग्रे घोरा प्रकीर्त्तिता ।
चरैर्महोदरी ज्ञेया, क्रूरैर्ऋक्षैस्तु राक्षसी ॥
मिश्रिता चैव विज्ञेया मिश्रैर्ऋक्षैस्तु संक्रमे ।
द्विचतुःपञ्चसप्ताष्टनवद्वादश तासु तु ॥
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ।

पारमार्थिकं-सूक्ष्मतमे संक्रमकाले यत्पुण्यं धर्मानुष्ठानात् तदेतासु तत्तद्वारे तत्तन्नक्षत्रे तत्तत्फलं पूर्णम् । वारर्क्षयोर्विपर्यासे व्यामिश्रमिति बोध्यम् ।

मन्दा विप्रजने शस्ता, मन्दाकिन्यस्तु राजनि ।
ध्वांक्षी वैश्येषु विज्ञेया, घोरा शूद्रे सुखप्रदा ॥
महोदरी तु चौरेषु, शौण्डिकेषु तु राक्षसी ।
चण्डालपुल्कसानां च ये चान्ये क्रूरकर्मिणः ॥
सर्वेषां दारुणानां च मिश्रिता वृद्धिकारिणी ।

एवं—

पूर्वाह्णकाले नृपतीन्, द्विजेन्द्रान्मध्यन्दिने, चाथ विशोऽपराह्णे ।
शूद्रान् रवावस्तमिते, प्रदोषे पिशाचकान्, रात्रिचरान्निशीथे ॥
नटादिकांश्चापररात्रिकाले, प्रत्यूषकाले पशुपालकांश्च ।
संक्रान्तिरर्कस्य समस्तलिङ्गिव्रतं च सन्ध्यासमये निहन्ति ॥

इति वेलाफलम् । अत्र यस्य या शुभा संक्रान्तिः, तेन तस्यां

पक्षयुगजश्चान्द्रो मासः । स द्वेधा* । शुक्लादिरमान्तः, कृष्णादिः पूर्णिमान्तश्चेति । तथा च त्रिकाण्डमण्डनः—

चान्द्रोऽपि शुक्लपक्षादिः, कृष्णादिर्वेति च द्विधा ।
इत्युक्त्वा देशभेदेन तद्व्यवस्थामाह—

---

परमोदयसाधनं महादानादि कार्यम् । यस्य याऽशुभा, तेन तस्यामरिष्टहानिकरं तत्तच्छान्त्यादि । तदर्थ एव च षोडशघटिकादिः सामान्यकालः । आदित्यस्य नक्षत्रसंक्रमे, ग्रहान्तराणां राशिनक्षत्रयोः संक्रमे च पुण्यकालं स्नानादि चाऽऽह जैमिनिः—

नक्षत्रराश्यो रविसंक्रमे स्युरर्वाक् परस्ताच्च रसेन्दुनाड्यः ।
पुण्यास्तथेन्दोस्त्रिधरापलैर्युगैकैव नाडी मुनिभिः शुभोक्ता ॥
नाड्यश्चतस्रः सपलाः कुजस्य, बुधस्य तिस्रो मनवः पलानि ।
सार्द्धाश्चतस्रः पलसप्तयुक्ता गुरोश्च, शुक्रे सपलाश्चतस्रः ॥
द्विनागनाड्यः पलसप्तयुक्ताः शनैश्चरस्याभिहिताः सुपुण्याः ।
आद्यन्तमध्ये जपहोमदानं कुर्वन्नवाप्नोति सुरेन्द्रधाम ॥

इति । अर्वाक् परस्तादिति सर्वत्र सम्बध्यते । रसेन्दुः—षोडश । त्रिधरा—त्रयोदश । सपलाः—एकपलाधिकाः । मनवः—चतुर्दश । नागाः—अष्ट, द्विगुणिताः षोडश । एषु संक्रमेषु दिवापदाभावाद्रात्रौ जातेषु तत्रैव पुण्यम् ॥ इति संक्रमटिप्पणी ॥

*द्वेधेति । गवामयनाविकृतौ उत्सर्गिणामयने ऽतिदेशतः प्रतिमासं प्राप्तेषु त्रिंशदहःसु द्वितीयादिमासीयप्रथमाहस्त्यागे "अमावास्यया मासान् सम्पाद्याहरुत्सृजन्ति, अमावास्यया हि मासान् सम्पश्यन्ति" । "पौर्णमास्या मासान् सम्पाद्याहरुत्सृजन्ति, पौर्णमास्या मासान् सम्पश्यन्ति" इति श्रुतेः । यस्तु यत्किञ्चित्त्रिंशत्तिथिसमुदायत्वेनानुगतधर्मेणाक्रान्तस्तिथिबद्धो यत्किञ्चित्तिथिमारभ्य तत्तिथ्यवधिकश्चान्द्रः, स न विभक्तः । विशे-

कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति के च न।
येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥

इति। विन्ध्यस्य दक्षिणे कृष्णादिनिषेधादुत्तरतो* द्वयोरभ्यनुज्ञा गम्यते। तत्रापि शुक्लादिर्मुख्यः, कृष्णादिर्गौणः। *शास्त्रेषु चैत्रशुक्लप्रतिपद्येव चान्द्रसंवत्सरारम्भोक्तेः। तदुक्तं दीपिकायाम्—

'चान्द्रोऽब्दो मधुशुक्लगप्रतिपदारम्भः' इति। न हि ये कृष्णादिं मन्यन्ते, तेषां वत्सरारम्भो भिद्यते। अतः शुक्लादिर्मुख्यः। कृष्णादिना मलमासासम्भवाच्च। चन्द्रस्य सर्वनक्षत्रभोगेन नाक्षत्रो मासः। सावनादीनां व्यवस्थोक्ता हेमाद्रौ ब्रह्मसिद्धान्ते।

---

षवाचिनां चैत्रादिशब्दानां तत्राप्रयोगात्। न च तस्य सावन एवान्तर्भावः। षट्सवनस्नानविधिवशात्सवनशब्दो दिनस्य रात्रेश्च तृतीयभागार्थक इति तदुभयसम्बन्ध्यहोरात्रद्वारकतत्सम्बन्धिनः त्रिंशदहोरात्रसमुदायस्यैव सावनत्वात्।

*उत्तरत इति। विन्ध्यस्येति शेषः। नर्मदोत्तरभागे इत्यप्याहुः। ननु कर्मवर्णविशेषेषु अग्निमवचनसद्भावादस्य को विषय इति चेत्सङ्कल्प एव। आचारात्। त्रिकाण्डमण्डनवचनस्याऽऽचारमूलकत्वात्। एवं च मुख्यचान्द्रमासातिरिक्तगौणमासप्रयुक्तकर्मस्वपि सङ्कल्पे विन्ध्योत्तरे शुक्लाद्युल्लेखाचाराभावात् कृष्णादिरेवोल्लेख्यः। विन्ध्यदक्षिणे तु शुक्लादिः, न तु गौणमासः।

यत्तु 'द्वयोरभ्यनुज्ञा' इत्युक्तं, तस्य तिथिकृत्ये चेति विषयः। *शास्त्रेष्विति। 'चैत्रे मासि जगद्ब्रह्मा' इत्यादिकल्पयुगादिप्रवृत्तेः शुक्लप्रतिपत्सूर्योदयकालीनत्वोक्तेरित्यर्थः। अथ कृष्णादेर्गौणत्वमयुक्तम्। संवत्सरमासयोरारम्भतिथिरेकैवेत्यनियमात्, वैशाखादौ गतत्वात्। न चैवं कृष्णादिना मलमासापत्तिः। तस्य शुक्लादित्वोपगमात्।

अत एव माघस्नानादौ चातुर्मास्यादौ च कृष्णादेर्विनियोगः । अन्यथा गौणमुख्यन्यायेन तदसङ्गतेः । न चाननुगमः । स्वीयपञ्चदशकलावृद्धिक्षयपरिच्छेदपर्याप्तिमत्त्वसम्बन्धेन चन्द्रवत्त्वं चान्द्रत्वं ह्यनुगतम् । एतच्च तिथिबद्धचान्द्रेऽपि । आदौ कासां चित्कलानां वृद्धिः, ततः पञ्चदशानां तासां क्षयः, ततः पुनस्तासां कासाश्चिद् वृद्धिः; आदौ वा कासां चित्तासां क्षयः, ततः पञ्चदशानां तासां वृद्धिः, ततः पुनः कासां चित्तासां क्षय इति पौर्वापर्यभेदेऽपि अन्यूनानधिकपञ्चदशकलावृद्ध्यादिसत्त्वात् । एकद्व्यादिकलावृद्ध्यादिमत्तिथिद्वयादिवारणाय स्वीयत्वं यावत्कलालाभार्थम् । तथा च स्मरणम्—

मस्यन्ते परिमीयन्ते स्वकलावृद्धिहानितः ।
मासा एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः ॥ इति ।

तथा च तिथिबद्धचान्द्रापरिगणने न्यूनता; इति चेन्न । एतद्धि तिथिबद्धचान्द्रव्यावृत्तमेव स्वीकार्यम् । अन्यथा एते इति चैत्रादिविशेषवाचिसर्वनामदर्शनात्तस्य चैत्रत्वाद्यापत्तेः । एवं स्थिते 'अन्यायश्चानेकार्थत्वम्' इति न्यायेन शुक्लकृष्णाद्योरेकतरस्य गौणत्वे आवश्यके कृष्णादेरेव तथात्वमुपेयते । स्वकलावृद्धिहानीत्यत्र वृद्धिहान्योः क्रमस्यापि विवक्षणात् ।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ ॥

इतिलघुहारीतेनाऽऽदिमध्यसमाप्त्युपादानात्तदुपलक्षितकालविशेषरूपमाससामान्यलक्षणस्य दर्शान्तचान्द्र एव सत्त्वाच्च । उक्तसाधारणलक्षणं तु व्यर्थमेवेति न तिथिबद्धचान्द्रो गणितः । एवं चैत्रादयोऽपि दर्शान्तचान्द्रे एव मुख्याः । मुख्यमासलक्षणमभिधाय 'एते' इत्यभिधानात् । किञ्च इन्द्राग्नी यत्रेत्यादिशुक्लादिमाससामान्यलक्षणमभिधाय

चक्रवत् परिवर्त्तेत सूर्यः कालवशाद्यतः ।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् ॥
मासचिह्नं तु कर्त्तव्यं पौषमाघाद्यमेव हि ।
यतस्तत्र विधानेन स मासः परिकीर्त्तितः ॥

इति लघुहारीतेन—सांवत्सरश्राद्धं पूर्वोक्तमासचिह्नितं कार्यं, यच्च मासचिह्नं तत्पौषमाघाद्यमित्युक्तेः दर्शान्तप्रकरणात्तादृशपौषादिलाभाच्च सौरयोस्तयोः पुष्यमघायोगासम्भवात् । अथैवमपि "तपस्तपस्यौ शैशिरावृतू" "मधुश्च माधवश्च वासन्तिकावृतू" "शुक्रश्च शुचिश्च ग्रैष्मावृतू" अथैतदुदगयनं देवानां दिनम् । "नभश्च नभस्यश्च वार्षिकावृतू" "इषश्चोर्जश्च शारदावृतू" "सहश्च सहस्यश्च हैमन्तिकावृतू" अथैतद्दक्षिणायनं देवानां रात्रिः" इति श्रुतावयनयोः सौरत्वात्तद्घटकऋतुप्रविष्टा मासास्तप आदयोऽपि सौरा एव वाच्याः । ततश्च तत्पर्यायतया माघादीनामपि सौरत्वमुपेयम् । पर्यायत्वं च—

माघमासस्तपाः प्रोक्तः, तपस्यः फाल्गुनः स्मृतः ।
चैत्रो मासो मधुः प्रोक्तो, वैशाखो माधवो भवेत् ॥
ज्येष्ठमासस्तु शुक्रः स्याद्, आषाढः शुचिरुच्यते ।
नभो मासः श्रावणः स्यात्, नभस्यो भाद्र उच्यते ॥
इषश्चाश्वयुजो मासः, कार्त्तिकश्चोर्जसंज्ञकः ।
सहो मासो मार्गशिराः, सहस्यः पौषसंज्ञकः ॥

इति स्मरणादवगम्यते । तथा च श्रुतेर्बलीयस्त्वाच्चान्द्रस्यैव गौणत्वं स्यात्।मैवम् । सन्ति हि 'या वैशाखस्यामावास्या रोहिण्या सम्पद्यते'इत्यादीनि वचनानि, तत्र वैशाखो न सौरः । मेषस्थसूर्येऽमाया रोहिण्यृक्षीयवृषस्थचन्द्रत्वासम्भवात् । तस्यां सूर्याचन्द्रमसोरेकराशिस्थत्वनियमात् । किं तु दर्शान्तचान्द्रः । तत्रामायां चन्द्रसूर्ययोरेकराशिस्थत्वसम्भवात् । उभयोः श्रौतत्वाविशेषेऽपि अनेकार्थत्वभयेनैकत्र गौणत्वे आवश्यके अर्थवादगतेष्वेव तपआदिशब्देषु

तत्कल्प्यते, न विधिगतेषु वैशाखादिशब्देषु । "न विधौ परः शब्दार्थः" इति न्यायात् । एवं च चान्द्रसौरभिन्ने चैत्रादिशब्दानां प्रयोग एव नास्ति, चान्द्रसौरयोरपि अनेकार्थत्ववारणाय चान्द्रे एव मुख्यत्वमुपेयम् । "नक्षत्रेण युक्तः कालः" "साऽस्मिन् पौर्णमासीति"(१)संज्ञायाम् इति पाणिनिस्मरणात् । तेन हि तत्तच्चान्द्रमासतत्तत्पूर्णिमासु कादाचित्कतत्तन्नक्षत्रयोगमभिप्रेत्यावयवार्थः प्रदर्श्यते । सौरेषु त्वाश्विनपौषमाघेषु कन्याधनुर्मकरेषु तस्यां कदाचिदपि नाश्विनीपुष्यमघायोगः । तथा सति चन्द्रस्य यथाक्रमं मेषकर्कसिंहस्थत्वेन सूर्यचन्द्रयोः पूर्णिमान्ते षडष्टकेनावस्थानापत्त्या "सूर्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासी"इति–अन्योन्यं राशिसप्तकेनावस्थानरूपपरविप्रकर्षकथनविरोधात् । ननु एवमपि चैत्र्यादिपूर्णिमायाश्चित्रादियोगाभावे कथं चैत्र्यादिशब्दार्थता, तद्धितार्थबाधात् । दृष्टश्च–"पौर्णमासीषु सर्वासु मासर्क्षसहितासु च । दत्तानामिह दानानां पुण्यं दशगुणं भवेत्" कार्त्तिक्यां तु यदा ऋक्षम्"इत्याद्यग्रिमवचनैः पूर्णिमायां तत्तन्नक्षत्रविरहः । एवं च चैत्रादिशब्दानां योगासम्भवाद् रूढा एव स्वीकार्याः । रूढचैत्रादिमासयोगाश्च चैत्र्यादिशब्दाः ।

आषाढे कार्त्तिके वाऽपि माघवैशाखयोरपि ।
पौर्णमासीषु दातव्यं महादानं युधिष्ठिर ॥

इति भारतात् पौर्णमासीष्विव "प्रौष्ठपद्यष्टका भूयः" "क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः । निद्रां त्यजति कार्त्तिक्याम्" इत्यादौ पौर्णमासीभिन्नेऽपि प्रौष्ठपद्यादिशब्दप्रयोगः । तथा च प्रयोगाविशेषाच्चान्द्रेऽपि यौगिकत्वासम्भवात् रूढ्याश्रयणे चैत्र्यादिशब्दानां सौरचान्द्रयोर्मुख्यत्वं दुर्वारम् । सत्यम् । चैत्र्यादिशब्दा यौगिका एव पौषी रात्रिर्माघी रात्रिरितिवत्तत्-

---

(१) इतिशब्दादिति शेषः ।

नक्षत्रयुक्ततत्तव्यक्तिवचनाः । चैत्रादिशब्दास्तु चान्द्रे योगरूढाः। संज्ञायामिति पाणिन्युक्तेः । तत्र तेषु योगः चित्रास्वात्यादिद्व्यादिभयोगवचनतया ।

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः ।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया ॥

इति वचनात् । मासानां च पौर्णमासीद्वारकं द्विभत्वादि ।
द्वे द्वे चित्रादितारणां परिपूर्णेन्दुसंगमे ।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया ॥

इति संकर्षणकाण्डवचनात । ततश्चैत्रादिशब्दो न चित्रामात्रादियोगनिमित्तको, ऽपि तु चित्रास्वात्यन्यतरादियोगनिमित्तः । चैत्र्यादिप्रकृतिचित्रादिपदे च चित्रास्वात्यन्यतरत्वादिनाऽजहत्स्वार्थलक्षणा, मनोतास्थाग्निपदे इव सोमसहिताग्नेः । न च चित्राशब्दस्य चित्रायां शक्तिः, स्वात्यां लक्षणेति वाच्यम् । युगपद्वृत्तिद्वयापत्तेः। दृश्यते चायःशूलिको दाण्डाजिनिक इत्यादौ प्रकृतेरपि साहसदम्भयोर्लक्षणा । साहसिको दाम्भिक इत्येव प्रतीतेः । चैत्र्यादौ हस्तादिपाते तूत्पातः । 'प्रकृतेरन्यत्वमुत्पातः' इति लक्षणात् । एवं तिथिबद्धचान्द्रोऽपि सौरादितो मुख्य एव । चान्द्रत्वात् । दर्शान्तचान्द्रस्य सर्वतो मुख्यत्वेऽपि वार्षिकादावेतस्य विनियोगः परम्, वचनात । यथा गौणस्यापि कृष्णादेर्नियतः पाक्षिको वा विनियोगः, सौरादेश्च गौणतरस्य वचनादेव । नन्वेवं मासचातुर्विध्यानुपपत्तिः । गौणमुख्ययोरसमत्वात् । न च त्रिंशद्गुणितादिनावच्छिन्नत्वमनुगतमासत्वमिति वाच्यम् । नाक्षत्रमासे ऽव्याप्तेः ।

माने मासस्तु नाक्षत्रे सप्तविंशतिभिर्दिनैः ।
परिशेषेषु मानेषु मासस्त्रिंशद्दिनः स्मृतः ॥

इति विष्णुधर्मोक्तेः । न च तावद्दिनेष्वेव भागकल्पनया त्रिंशत्त्वं वाच्यम् ।

चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत् ।
तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य भार्गव ॥
भगणेन समग्रेण ज्ञेया द्वादशराशयः ।
त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते ॥
आदित्यसन्निकृष्टं तु भागद्वादशकं यदा ।
चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते ॥
इति तिथिं भागं च प्रदर्श्य—
तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्तितः ।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः ॥
आदित्यराशिभोगेन सौरो दिवस उच्यते ।
चन्द्रनक्षत्रयोगेन नाक्षत्रो दिवसः स्मृतः ॥

इतितत्तद्दिनप्रदर्शकविष्णुधर्मे नक्षत्रव्याप्त्यैव नाक्षत्रदिनप्रदर्शनात् । वस्तुतस्तु "इन्द्राग्नी यत्र हूयेते" इतिवत्सङ्कोचकस्पष्टालिङ्गाभावेन मासशब्दमात्रश्रवणेन च चान्द्रगौणमुख्यसाधारण्येन तथात्वमुपेत्याचान्द्रेषु मासेषु मासपदप्रयोगो भविष्यति, अनौरसेषु पुत्रपदवत् । नाक्षत्रे तत्प्रयोगबीजं तु चन्द्रकर्त्तृकैकसमुदायगोचरभोगावच्छेदकत्वेन चान्द्रवृत्तिधर्मेणैव । तथा च—

चन्द्रमाः पौर्णमास्यन्ते भास्करादतिरिच्यते ।
राशिषट्कं तदा राम मासार्द्धेन न संशयः ॥
भागद्वादशकं पूर्वं तिथ्यां तिथ्यां क्रमेण तु ।
चन्द्रमाः कृष्णपक्षान्ते सूर्येण सह युज्यते ॥
सन्निकर्षादथारभ्य सन्निकर्षं तथापरम् ।
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते ॥
सावने तु तथा मासे त्रिंशत्सूर्योदयाः स्मृताः ।
सूर्योदयाः—[illegible] सावनाः ॥
आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः ।

*अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ॥

---

सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्रो मास उच्यते ॥

इति विष्णुधर्मवचनं तच्चातुर्विध्ये विरुध्यते इति चेत्, किञ्चातः । पुत्रद्वादशत्वादिवत्संख्यानं भविष्यति । स्वरूपकथनं तु तत्तत्कर्मसु तत्तद्वचनविहितानां तेषां स्वरूपजिज्ञासायामुपयुज्यते, द्वादशपुत्रादिस्वरूपकथनवत् । एतेन स्वरूपकथनं मासपदस्य नानार्थत्वद्योतनायेत्यपाकृतम् । उक्तरीत्यैवोपपत्तौ नानार्थत्वे मानाभावादित्यलं पल्लवेन ।

*अमावास्येति । ननु मासशब्दस्य चैत्रादिशब्दस्य च शुक्लादावेव मुख्यत्वे "मासमग्निहोत्रं जुहोति" "मासं दर्शपूर्णमासाभ्यां यजेत" "मासं चातुर्मास्यैः" ।

"यथा कथञ्चित् पिण्डानां तिस्रोऽशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्" ॥
"पयसा वापि मासेन" ।
"गोमूत्रयावकाहारो मासं मासार्द्धमेव च" ॥

इत्यादिषु प्रत्यक्षैः, शुभाशुभफलकथनोन्नेयैर्वा विधिनिषेधैः मासविशेषाङ्ककेषु विवाहोपनयनचैत्रडोलादिप्रतिष्ठामन्त्रदीक्षादिषु, विवाहाद्युत्तरपिण्डदानादिनिषेधेषु, संख्याविशेषावच्छिन्नमासापेक्षेषु व्रतादिषु च, तादृशेषु गर्भाधानादिषु च साक्षान्मासानपेक्षेष्वपि षोडशदिनाद्यात्मकऋतुत्वादिरूपस्वकालघटनार्थं मासविशेषापेक्षेषु च सर्वत्र गौणमुख्यन्यायाच्छुक्लादिचान्द्रस्यैव ग्रहणादव्यवस्थाया अप्रसङ्गाद् "अमावास्या परिच्छिन्नो मासः" इति वचनं, "सौरो मासो विवाहादौ" इत्याद्यग्रिमवचनानि च न संगच्छेरन् । सौरादिव्यवस्थाविधेर्नियमविधितया सौरादेः पाक्षिकप्राप्त्यपेक्षणात् तस्याश्चासत्त्वात्, दर्शान्तचान्द्रव्यवस्थावचनं च न कार्यम् । तस्य

नित्यप्राप्तत्वादिति चेत् । न, यतो न्यायप्रवृत्तेः प्राक् सर्वमासानां प्राप्तिर्वाच्या । अन्यथा तस्यापि नियामकत्वं न स्यात् । तथा च तस्या अवश्यवाच्यत्वे तद्दशायां मन्थरान्न्यायात् प्राक् प्रवृत्तस्य शास्त्रस्यैव नियामकत्वमुपेयते ।

इत्थमेव (१)मुख्यद्रव्योपादानाशक्तिनिर्णये न्यायेन सुसदृश नियमात्प्रागेव प्रधानविधिबोधितप्रधानकर्त्तव्यताक्षेपात् सर्वद्रव्याणां पाक्षिकप्राप्तिसमये प्रवृत्तः पूतीकानां विधिर्नियमविधिरेवेत्युच्यते ।

एवम् "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यादिरुपस्थाने करणभूताया ऐन्द्र्या विधिस्तस्या नियमाय पाक्षिकप्राप्त्या वाच्यः । तत्र न्यायेन मुख्यसामर्थ्यवत्या आग्नेय्या एव कस्याश्चिन्नियमः स्यात्, समीपे स्थित्वाऽभिधानात्मकमुपस्थानं मन्त्रैककरणकमित्यव्यभिचारात् लिङ्गमात्रेणापि मन्त्रस्य विनियोगसम्भवात्, देहादिभिन्नात्मज्ञानस्येव पारलौकिकफलककर्मानुष्ठाने । तथा च यावन्न्यायः मुख्यसामर्थ्यवतीं कां चनाऽऽग्नेयीं नियन्तुमुपक्रमेत, तावच्छीघ्रप्रवृत्तेन प्रत्यक्षविधिनैवैन्द्री नियम्यते इति ।

एवमेव "तिलमाषैश्च सर्षपैः" इत्यादिषु माषनिषेधप्रवृत्तिपूर्वकालीनां निषेध्यप्रसक्तिरूपां पाक्षिकप्राप्तिमपेक्ष्यैव तन्नियमविधित्वमिति दिक् ।

एवं च 'सौरो मासो विवाहादौ' इत्यादेः—एतेषु कार्येष्वेते एव मासा ग्राह्या इत्यर्थे, शेषेषु मुख्यचान्द्र एवेतिव्यवस्थार्थं दर्शान्तचान्द्रवचनान्यप्यावश्यकानि । अन्यथा

---

१ मुख्यस्य द्रव्यस्य सोमस्योपादानेऽशक्तौ लाभाभावादिभि-[illegible] निर्णये कस्य ग्रहणं कर्तव्यमिति सन्देहे तत्करणे प्राप्ते न्यायेनेत्यर्थः ।

यावद्व्यवस्थाप्यविषयानुपादानात्तदसङ्गतेः। दर्शान्तचान्द्रवचने केषांचित्कार्याणामुपादानं चोदाहरणमात्रम् । एवं कृष्णादिसौरादिमासानां गौणत्वेऽपि मासशब्दवत्सु शास्त्रेषु, सङ्कल्पाद्युल्लेखे वा क्वचित्तेषामपि ग्रहणं मासत्वाभिधानात् । 'नापुत्रस्य लोकोऽस्ति' 'पितुः पुत्रेण कर्त्तव्या'इत्यादौ क्षेत्रजादीनामिव पुत्रत्वाभिधानादिति ।

अथ "कृष्णपक्षादिकं मासम्"इत्यादित्रिकाण्डमण्डनस्थदेशविशेषव्यवस्थावचनमाचारमूलकम् । इच्छन्ति इष्ट इत्युक्तेः। तच्च विंन्ध्यदक्षिणे न कृष्णादिः, विन्ध्यतदुत्तरयोश्च न शुक्लादिरित्यर्थकम् । क्वापि शिष्टाचारे तत्र शुक्लाद्युल्लेखादेरदर्शनात् । विन्ध्यादुत्तरतः शुक्लादिरेवेष्टः, अन्यत्र कृष्णादिरेवेति चाऽऽर्थिक एवार्थः । एवं च कर्मवर्णविशेषव्यवस्थावचनैर्विरोधे आचारस्य बाध्यत्वात्तद्वचनमशुद्धमेव; इति चेत्—न हि तद्वचनस्य कर्मादिव्यवस्थावचनैर्विरोधः । तथा हि—[illegible] ऽङ्गभूत[illegible], न तु विन्ध्यदक्षिणतः शुक्लादिरेव, ततोऽन्यत्र कृष्णादिरेवेति व्यवस्थाऽपि । तस्या अङ्गानङ्गसाधारणसङ्कल्पाद्युल्लेख्यलौकिकाधिकरणमात्रमासविषयत्वात् । कर्मसत्तावच्छेदकतया सूक्ष्मकालवन्मासादिस्थूलकालस्यापि अस्मिन्वर्षे ऽस्मिन् मासे कृतमिति प्रतीत्या तादृशाधिकरणत्वात् । स्मर्यते च—

> [illegible]नां च निमित्तानां च सर्वशः ।
> उल्लेखनमकुर्वाणो न तस्य [illegible] ॥—

इति सङ्कल्पादौ मासाद्युल्लेखः । निमित्तानामिति । देशक्षेत्रादीनां नक्षत्रयोगकरणादीनां च । अत एव [illegible]किमनुल्लिख्य स्नातस्य तदुल्लिख्य पुनः स्नानमिच्छन्ति ।

ननु मासादिविधिबोध्यो कालाद्युल्लेखो ऽङ्गभूतमासादिविषय एवास्तु, तदुल्लेखविधेस्तदनुसन्धानार्थम् । अङ्गभूतस्यैव चानुसन्धानं प्रयोगविधिरपेक्षते । तस्य मनसा सम्भवेऽपि विधिवशादेवोल्लेखेनैव कर्त्तव्यत्वम् । यच्च-

प्यहरहःस्नानादौ विध्यभावान्मासादेर्नाङ्गत्वं, तथापि यत्र यस्य मासादेरङ्गत्वं तत्रैव तस्योल्लेखविधिरस्तु । यद्यपि च निमित्तस्यानङ्गत्वाद् दृष्टानुसन्धानार्थं तदुल्लेखविधिर्न घटते, तथापि निमित्तत्वमनुष्ठानप्रयोजकं, तच्चाज्ञातस्य नोपपद्यत इत्यनङ्गस्यापि तस्यानुसन्धानं प्रयोगविधिरपेक्षत एवेति तदुल्लेखविधिरपि निष्प्रत्यूहः । तथा च सङ्कल्पवाक्यगतोल्लेखोऽङ्गभूतमासविषय इति कर्मवर्णव्यवस्थावाक्यविरोधो दुर्वारः; इति चेन्न । उल्लेखस्यादृष्टार्थत्वमेव । अनुसन्धानार्थत्वे च सर्वशब्देन च प्रतीयमानस्य सर्वेषां सर्वत्रोल्लेखस्य बाधापत्तेः ।

वस्तुतस्तु अवच्छेद्यकालस्याधिकरणत्वेन सर्वत्र प्राप्तत्वात् कालविधयः सर्वे तदवच्छेदककालोपाधिपराः । ते च कालोपाधयः कर्मप्रयोगाधिकरणकालपरिच्छेदमुखेन कर्मप्रयोगाङ्गाः । परिच्छेदश्चाऽऽद्ये [illegible] व्यापारे ऽपेक्षितः । स च व्यापारः कर्मप्रयोगारम्भार्थं प्रति ईक्षा । प्रयोगारम्भश्च सङ्कल्प एव । तथा च प्रयोगाङ्गकालस्य सङ्कल्पे उल्लेखार्थं ततः पूर्वमनुसन्धानमपेक्षितम् । ततश्च पूर्वमनुसन्धानेनोल्लेखे जाते ततो जायमानमप्यनुसन्धानमग्रे ऽनुपयोगाल्लोल्लेखप्रयोजकं भवितुमर्हति, यद्वशेन तस्य [illegible]विषयकत्वं, [illegible] वा स्यात् । एवं निमित्तस्य ज्ञातस्यानुष्ठानप्रयोजकत्व[illegible] तद[illegible]क्षितं, न तूल्लेखकृतेन तदनुसन्धानेन कश्चिदर्थः । तत् इत्थं सङ्कल्पादिगतो मासाद्युल्लेखो ऽङ्ग[illegible]साधारणमासविषयो ऽदृष्टार्थः ।

यथा चाहुः—'असङ्कल्पित[illegible]हिन [illegible]तादप्यदृष्टं जायते । आद्यं पापम्, उत्तरं पुण्यमित्यन्यदेतत् । मासाद्युल्लेखश्च[illegible]तुरित्यत्र व्यतिरेकप्रदर्शनार्थम् 'उल्लेखमकुर्वाण' इत्यादि, न तु तस्य विहितस्य कर्मणः मासाद्यनुल्लेखे

फलं न जायते इति । तद्विषयं च देशव्यवस्थावचनं नाङ्गभूतमासविषयकर्मादिव्यवस्थावचनैर्बाधितुं शक्यम् । भिन्नविषयत्वात् । एवं चाधानादौ वर्णविशेषव्यवस्थावचनेन दर्शान्तादेर्विवाहादौ कर्मविशेषव्यवस्थावचनेन सौरादेर्मासस्याङ्गत्वेऽपि सङ्कल्पे विन्ध्यदक्षिणे शुक्लादेरेव, विन्ध्यतदुत्तरयोश्च कृष्णादेरेवाधिकरणत्वेनोल्लेखो वचननिबद्धाच्छिष्टाचारादिति—

अथोषःकालीनाहरहःस्नानादावौदयिकयास्तिथेर्वारस्य चाङ्गत्वे सङ्कल्पे कस्योल्लेखः ? । अत्र केचित्—उदयस्य कर्मकालत्वाभावेऽप्युषःकाले स्नानादिसङ्कल्पे औदयिकयोरेव तिथिवारयोरुल्लेखः ।

सप्ताहं प्रातरस्नायी द्विजः शूद्रत्वमाप्नुयात् ।

इतिनिन्दास्मरणादाचाराच्च तत्राहरहःसन्ध्यादिविधिना स्नानलोपो मा प्रसाङ्क्षीदिति अल्पद्वादश्यां माध्याह्निकापकर्षवदुषसि स्नानापकर्षोपगमात् साकल्यवचनज्ञापिताहार्यतिथ्युल्लेखवदुषःस्नाने प्रातःस्नानत्वव्यवहारादुन्नीताहार्यप्रातस्त्वसत्त्वाच्चेत्याहुः ।

वस्तुतस्त्वहरहःस्नानादौ तिथिवारयोर्न विधिः । तिथिवाराङ्गकस्य च प्रतिपदादिभानुवारादिस्नानादेरुदयोत्तरमेवानुष्ठानं हेमाद्र्यादिसम्मतम् । सप्ताहमितिवचनं गौणकालातिक्रमे दोषाधिक्यार्थं, न तु तिथ्यादेरङ्गत्वार्थम् । तथा च सङ्कल्पेऽधिकरणतयोपागततिथिवारयोरेवोल्लेखः । तथाविधस्नानजनितशुचित्वं तु वचनात्स्नानकर्मोपयोगि । आचारस्तु स्मृतिविरोधाद्विगीत एवेति । [illegible]धितत्वात्तु नोषस उल्लेखः ।

इदं तु बोध्यम् । नैत्यके स्नान–देवपूजादौ, नैमित्तिके ग्रहण–संक्रान्ति–स्नानश्राद्धादौ,काम्ये च–सर्वत्र प्रधाने गौणकालकर्त्तव्येऽपि मुख्यचान्द्रवत्सरवत्,तादृश एव ऋतुः सङ्कल्पे उल्लेख्यः। स च गौणवसन्तादिरूपो ग्रीष्मादिः । अङ्गे तत्र मुख्यस्य तस्याबाधादा-

*अत्र ब्राह्मणादीनां यत्र कर्मविशेषे वचनान्तरेण *'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिवत् मास उक्तः । तत्र दर्शान्तत्वमात्रं नियम्यते, न तु सर्वकर्मसु दर्शान्त

---

चाराच्च, प्रधानविधिस्थवसन्तादिपदवृत्तिसजातीयवृत्तिलभ्यार्थकत्वे मानाभावाच्च । मासस्तु विन्ध्यदक्षिणे शुक्लादिः, विन्ध्यतदुत्तरयोः कृष्णादिः प्रागुक्त एवेति ।

अथ 'अमावास्यापरिच्छिन्न' इत्यादिवर्णव्यवस्थावचनाद्दर्शान्तमासविधायकत्वेन सर्वकर्मविषयता स्यात् न तु मासोपबद्धकर्मविषयतेत्यत आह *अत्रेति ।

वसन्ते इति । ब्राह्मणादीनामाधानोपनयनादिकालवसन्तादिप्रविष्टत्वेन मासे प्राप्ते विशेषमात्रं विधीयते, ब्राह्मणादेर्यो मासः स दर्शान्त एवेति । अङ्गत्वेन मासविशेषविधाने मासपदस्यापि विधेयार्थकत्वेन गौरवादिरर्थः । इदमुपलक्षणं, विवाहादिषु विधिनिषेधमुखेन शुभाशुभफलसूचकतया, तदुत्तरपिण्डदानादिनिषेधविषयत्वेन च यज्ञेषु मासाग्निहोत्रादिषु सत्रादिषु चाङ्गत्वेन, अहीनगर्भाधानादिषु चाङ्गभूताहोरात्रघटनार्थं मासे प्राप्ते "सौरो मास" इत्यादिर्विशेषविधिः । यो विवाहादिषु मास उपादेयः, स सौरादिरिति तदर्थः ।

ननु कर्मव्यवस्थावाक्ये मासस्योद्देश्यत्वे शुद्धतदुद्देशासम्भवात् कर्मविशेषीयमासो वाच्यस्तदपेक्षया शुद्धं कर्मानूद्यैव मासविशेषविधिः । वर्णव्यवस्थावाक्ये च कर्मणीत्यध्याहारेण कर्तृषष्ठ्यङ्गीकारेण च ब्राह्मणकर्तृककर्मोद्देशेनैव दर्शान्तादिविधिः । उभयत्रापि मासपदं विशेषाविनाभावादेव प्राप्तत्वादनुवाद एव । यद्वा षष्ठ्यन्तैकपदार्थब्राह्मणसम्बन्ध्युद्देशेनैव दर्शान्तादिविधिः । किं तद्ब्राह्मणसम्बन्धीत्याकाङ्क्षायां च विधीयमानविशेषोपस्थापितस्य मासस्यैव सम्बन्धित्वमुद्देश्यमासोद्देश्यार्थामिति सिद्धेर्मासपदं नित्यानुवाद

त्रैवर्णिकानां सर्वकर्मसु मासविशेषविधेः साव नादीनां शूद्रानुलोमादिपरत्वापत्तेश्चेति गुरुचरणाः ज्योतिर्गर्गः—

> सौरो मासो विवाहादौ, यागादौ सावनः स्मृतः ।
> आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

ऋष्यशृङ्गः—

---

व्यवस्थावचनेन वर्णांश इव कर्मांशेऽपि विशेषरूपतया स्वविषये वर्णांशे सामान्यरूपस्य कर्मव्यवस्थावचनस्य बाधादुपनयनादौ वर्णव्यवस्थैवाऽऽश्रयणीया । न च विवाहादावित्यादिपदेनोपनयनं ग्राह्यं श्रीकरेणोक्तमिति वाच्यम् । उपनयने सौरमासविधायकानां मूर्द्धावसिक्तादिविषयकत्वस्य तेनोक्तत्वादित्याखण्डलार्थः । नन्वेतादृशायामनपेक्ष्य वर्णव्यवस्थावचनस्य कर्मव्यवस्थावचनेन बाधात्तदविषयस्नानादिविषयत्वमस्तु इति चेत्तर्हि कर्मव्यवस्थावचनस्य वर्णव्यवस्थावचनेन बाधात्तदविषयमूर्द्धावसिक्तादिविषयत्वं स्यादिति ।

वर्णव्यवस्थावचने कर्मविशेषानालोचने बाधकान्तरमाह* त्रैवर्णिकानामिति । विवाहादाविति । ननु श्रीकरादिभिस्तावद्विवाहादावित्यादिपदेनोपनयन—चूडा—व्रत—नियम—प्रतिष्ठा—गृहकरण—क्षौर—यात्रा—महाषष्ठी—महालक्ष्मी—विजयद्वादशी—दशहरा—युगाद्यादीनां ग्रह इत्यभिहितम् । तत्र मासान्तरस्य प्रापकाणां का गतिः ? । तथा हि विवाहोपनयनादौ उदगयनविधिः सौरस्य, शुक्लपक्षतिथिविधिस्तु चान्द्रस्य, तत्रैव "गर्भाष्टमे ऽष्टमे वाऽब्दे" तृतीये वर्षे चौलं, गोदानं षोडशे वर्षे "अष्टवर्षा भवेद्गौरी" इत्यादौ गर्भग्रहणसम्बन्धिनमहोरात्रं तिथिं वाऽऽरभ्य वर्षमासादिगणनेन सावनस्य, तिथिवद्धचान्द्रस्य वा, तथा यज्ञेषु "या वैशाख्याममावास्या तस्यामादधीत" इति चान्द्रस्य, "विवाहव्रतयज्ञेषु सौरं मानम्" इति

सौरस्य च, पितृकृत्येषु "कन्यागते सवितरि" इति "अनेन विधिना श्राद्धं त्रिः पैत्रमिह निर्वपेत् । कन्याकुम्भवृषस्थेऽर्के" इति सौरस्य । एवमन्यत्राप्यूह्यम् । एवं च कथं वर्णकर्मव्यवस्थावचनैर्व्यवस्थाप्यम् ? । सत्यम् । वर्णव्यवस्थावचनस्य वर्णकर्मोभयांशे विशेषरूपतयाऽतिबलीयस्त्वात्तद्विषये आधानोपनयनादौ मासो ब्राह्मणादिभिर्दर्शान्तादिरेवोपादेय इत्युक्तम् ।

ननु यज्ञादौ सावन इत्युक्तेराधाने सावनोऽस्तु । नैवम् । तस्य स्वतो यज्ञभिन्नत्वात् । सद्यो निरूप्याणि पवमानहवींषीति यज्ञसंवलितत्वेऽपि न सः । वसन्ताद्यृतुद्वारकस्य माससम्बन्धस्य सत्त्वेऽपि साक्षात्तदसम्बन्धात् । ऋतूनां सौरचान्द्रान्यतरमात्रत्वेऽप्यसावनत्वात् ।

एवं च वर्णव्यवस्थावचनविषयभिन्नेषु तेषु तेषु कर्मव्यवस्थावचनविषयेषु सौरादिरिति स्थितम् । तत्रापि विवाहादाविति विवाहपदं संस्कारत्वसाधर्म्याच्चौलोपनयनादिग्राहकम् । तत्र विशेषनामभिर्विहिता निषिद्धाश्च मासाः सौराः । ते च यथा तत्र विवाहाधिकारे नारदः—

माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः ।
मध्यमः कार्त्तिको मार्गशीर्षो वै निन्दिताः परे ॥

इत्यादि । तत्र च तिथिपक्षविशेषाविधिः सम्भवत्येव । आकाङ्क्षावशात् । एवम्—

"एकोदरभ्रातृविवाहकृत्यात् स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयः समूचुः" ।
"एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
भ्रात्रोर्युगे, युगे स्वस्रो, भ्रातृस्वस्रोर्युगे तथा ॥
विवाहोऽब्ददलादर्वाङ् नैकस्मिन् मण्डपे गृहे" ।
"कुले ऋतुत्रयादर्वाक्" ।

"विवाहश्चैकजातानां षण्मासाभ्यन्तरे यदि"।
"विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकम्"।

इत्यादौ सौरा एव मासाः। तेषां विवाहाद्यनङ्गत्वेऽपि विवाहादिसम्बन्धस्याविशिष्टतया विवाहाधिकरणमासस्य सौरत्वेन तदवधिकानां तेषामपि तादृशानामेवोपस्थितेः। परं तु यस्मिन्सौरे माघादौ यत्पक्षगतायां यस्यां तिथौ विवाहादि जातं, तदवधिकाः सौरा एव फाल्गुनादयस्तत्पक्षगततत्तिथिपर्यन्ताः षडादयो मासा एषु बोध्याः। यज्ञेष्वितिपाठान्तरम्। चूडोपनयनाधिकारे वृद्धगार्ग्यः–

"माघादिपञ्चमासेषु मेखलाबन्धनं मतम्।
चूडाकरणमप्यत्र"

इत्यादि। नारदः—

दृश्यमाने गुरौ, शुक्रे, शाखेशे चोत्तरायणे।
शरद्ग्रीष्मवसन्तेषु व्युत्क्रमात्तु द्विजन्मनाम्॥
मुख्यं, साधारणं तेषां तपोमासादिपञ्चकम्।

गर्गः—

ज्येष्ठे मासि विशेषेण सर्वज्येष्ठस्य चैव हि।
उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव वा॥

व्यासः–"या चैत्रवैशाखसिता तृतीया"इत्यादि। व्रतानि नियमाश्च संक्रान्त्यादिकालान्यविशेषप्रयुक्ता एव। विवाहव्रतयज्ञेष्विति व्रतशब्देऽप्येते एव। मूर्तिप्रतिष्ठाधिकारे मात्स्ये–"चैत्रे वा फाल्गुने वाऽपि"इत्यादि। जलाशयोत्सर्गाधिकारे भविष्ये–"तस्मिन् सलिलसम्पूर्णे कार्त्तिके च"इत्यादि। गृहारम्भाधिकारे–"वैशाखे फाल्गुने पौषे" इत्यादि। क्षौराधिकारे–

न भाद्रमासे न च चैत्रमासे क्षौरं विवाहो न च कर्णवेधः।

इत्यादि। यात्राधिकारे मनुः–

मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः।

*विवाहव्रतयज्ञेषु सौरं मानं प्रशस्यते ।

---

फाल्गुनं वाऽथ चैत्रं वा मासं प्रति यथाबलम् ॥
अन्येष्वपि च कालेषु यदा पश्येद् ध्रुवं जयम् ।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥ इति ।

मन्त्रदीक्षाधिकारेऽगस्त्यसंहितायाम्—

मधुमासे भवेद् दुःखं, माधवे धनसञ्चयः ।
मरणं भवति ज्येष्ठे, आषाढे बन्धुनाशनम् ॥
समृद्धिः श्रावणे नूनं, भवेद्भाद्रे धनक्षयः ।
प्रजानामाश्विने मासि सर्वतः शुभमेव हि ॥
ज्ञानं स्यात्कार्त्तिके मासि, मार्गशीर्षे भवत्यरिः ।
पौषे ज्ञानक्षयो, माघे भवेन्मेधाविवर्द्धनम् ।
फाल्गुने ऽपि च वृद्धिः स्यान्मलमासं विवर्ज्जयेत् ॥ इति ।

महासप्तम्यादीनां योगानां तत्तद्राशिस्थसूर्यं पुरस्कृत्यैवाभिधानात्, महाषष्ठीदशहरायुगादीनां च

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्ममहाषष्ठ्योर्ह्येतदिष्टं वृषादितः ॥

इति तत्तन्मासेऽधिके सति तत्रैव कर्त्तव्यत्ववचनेन तदुत्पत्तिवाक्यगतज्येष्ठवैशाखादिशब्दानां सौरपरत्वावगमात्तत्तन्मासाः सौरा एव ।

*विवाहव्रतयज्ञेष्विति । यज्ञो निरूढपशुबन्धादिः । तत्र "पशुःप्रत्ययनं तथा" इत्ययनघटकऋतुप्रविष्टमासः सौर एव । विवाहोत्सवयज्ञेष्विति पाठान्तरम् । एवम्—"उदगयन आपूर्यमाणपक्षे पुण्याह" इत्यादिवचनादुत्सर्गतो दैवकर्मणि सौर एव मासः । एवमन्येऽपि तत्तत्कर्मसु तत्तन्मासविशेषनामभिस्तत्ताद्विधयो बोध्याः । एतच्च श्रीकराद्युक्तादिपदग्राह्यम् । यज्ञादावित्यादिपदेन लौकिकानां शास्त्रीयाणां च सावनं विना कर्त्तुमशक्यानामहोरात्रसाध्यानां ग्रहः ।

पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाऽऽब्दिके* ॥

स्मृत्यन्तरे-

---

तत्र लौकिकानि भृतिवृद्धिग्रहणादीनि । मासिकी भृतिर्वृद्धिर्वा कायिका । कायनिर्वाहार्थं दिनविभागेन गृह्यमाणत्वात् । तदुक्तं-

कायाविरोधिनी शश्वत् पणपादादिकायिका । इति ।

कायनिर्वाहश्चाहोरात्रकृत्यं, न तु तिथिकृत्यम् । शास्त्रीयाणि च श्रीकरादिभिरुक्तानि । यथा दान-होम-गर्भाधान-सीमन्तोन्नयन-जातकर्म-ऋण-क्रयविक्रयव्यवहारादीनि । तत्र होमो मासाग्निहोत्रहोमादिः । दानमपि तादृशमेव किञ्चिद् ग्राह्यं, व्रताहादिसाध्यानि महादानव्याधिप्रतिमादानादीनि च, सद्न्तजननादौ विहितानि सप्ताहब्राह्मणभोजनादीनि च । गर्भाधाने च रजोदर्शनदिवसात् षोडशदिवसात्मक ऋतुः सावन एव । सावनस्य तत्प्रथमदिनस्य द्वेधा त्रेधा विभागादिना व्यवस्थादर्शनात् । सीमन्तोन्नयनपरिगणनं तु अशुद्धमेव । योऽपि व्यवहारानुरोधेन तत्र तिथिवद्धचान्द्रस्यैवाश्रयणात् । जातकर्म तु कालातिपन्नम् । अन्यथा तस्य निमित्तानन्तरकालत्वेनानियतकालत्वात्सावननियमविषयेषु गणनानुपपत्तेः । ऋणे तु सौरेण विकल्पः । "ऋणादौ सौरसावनौ" इत्युक्तेः । क्रयविक्रयौ त्वहोरात्रसाध्यौ । आदिपदाद् द्वादशाहादिसाध्यानि कृच्छ्रातिकृच्छ्रपराकादीनि, "यथा कथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः । मासेनाश्नन्" इत्यादिविहितचान्द्रायणं च । "तिथिवृद्ध्या चरेत्पिण्डान्" इत्याद्युक्तचान्द्रे तु शुक्लादिः, कृष्णादिर्वा चान्द्र एव, न तु सावनः । एवं दशाहाद्याशौचमासाशौचादीनि [illegible]दीनि एकादशाहिकानि नामकरणैकोद्दिष्टानि । एकोद्दिष्टे सौरविधानं तु कन्यासंक्रान्त्यादिनिमित्त[illegible] ।

*आब्दिके इति । आब्दिकम्—अब्दसापेक्षम् । चौलो-

पनयनविवाहव्रतगोदानादौ गर्भधारणं जन्म वाऽऽरभ्य वर्ष-गणनम् । यच्चैत्रादिमासगतयत्पक्षगतायां यत्तिथौ गर्भधारणं जन्म वा तां तिथिमारभ्य वैशाखादिमासगततत्पक्षगततत्तिथिपर्यन्तैकत्र्यादिमासगणनया द्वादशमासात्मकमेकं वर्षम् । एवं द्वितीयादीत्येवं रूपम् । तत्र तिथिवृद्ध एव चान्द्र उपयुज्यते । एवमनन्तादिव्रतेषु, द्वादशाब्दादिव्रतचर्यासु च । "ब्रह्महा द्वादशाब्दानि"। "पिण्याकं वा कणान्वाऽपि भक्षयेत्रिसमा निशि"इत्यादेः, "गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति"इत्यादेश्च आवृत्तिं विना सिद्धेः । प्रायश्चित्तक्रिया तथा सावनेनैवेत्यादिकं तु आवृत्त्या क्रियमाणप्राजापत्यादिपरमिति न तद्विरोधः । एवं वर्षवृद्धावपि द्वितीयादिवर्षादिभूतायां द्वितीयादितन्मासतत्पक्षीयतत्तिथौ स एव,

सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥
स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः ।
प्रतिसंवत्सरश्चैवं कर्त्तव्यश्च महोत्सवः ॥

इति ब्राह्मे जन्मदिनोत्सवपर्यायतद्दाभिधानात्, न तु सौरः । तदुपगमे कदाचित्तत्तिथेरप्राप्त्या तल्लोपप्रसङ्गेन प्रतिसांवत्सरिकत्वव्याघातापत्तेः । पुंसवनादिगर्भसंस्कारेषु निष्क्रमणान्नप्राशनादिषु च यस्तृतीयादिमासः सोऽपि गर्भग्रहणजन्मतिथिवृद्धचान्द्र एव । एवमुपनिषद्ब्राह्मणोक्ताः प्रथममासमारभ्य गर्भावस्थाः, दन्तजन्म सप्तमे मासीत्याद्याश्च, तत्र तिथिवृद्धचान्द्र एव । प्रतिमासप्रायग्रहणाद्वस्थितयोर्भृतिवृद्धयोरपि पष्ठ्युत्तरशतत्रयतिथ्युत्तरं गृह्यमाणतया तथाविधवर्षघटका मासास्त एव । पितृकार्ये चेति असम्भवाच्चान्द्राणामेव पैत्राणां सावनप्रवेशः एकादशाहिकादीनां न त्वतथाभूतानां त्रैपक्षिकादीनामिति सूचनाय । 'अनेन विधिना श्राद्धम्' इति तु स्वविषये एतदपवादः । तत्प्रयोजनं च वर्षमध्ये तिसृष्वेवामावास्यासु श्रा-

द्धपक्षे सौरमासस्थानामेव तासां ग्रहणम् । कन्यादावधिमासपाते तु तत्स्थानामेव, न तूत्कर्ष इति । कन्यागते सवितरीति च न सौरमासविधायकं, किं तु तत्प्राशस्त्यबोधकमिति तत् न सौरनियामकम् । *व्रतेति । व्रतपदं च न हरिशयनाद्युत्सवपरम् । तस्य तिथिबद्धचान्द्रकर्तव्यत्वात् । एवं च 'तत्र—

मिथुनस्थे सहस्रांशौ स्थापयेन्मधुसूदनम् ।
तुलाराशिगते तत्र पुनरुत्थापयेत्तु तम् ॥
कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाऽऽश्विने ।
तुलायां बोधयेद्देवं वृश्चिके तु जनार्दनम् ॥

इति वचनात्सौर एव मासो युक्तो, न तु चान्द्रः । हरिशयनप्रबोधयोश्चान्द्रमासकर्तव्यत्वे चातुर्मास्यव्रते सौरबाधापत्तेः, तस्य हरिशयनोत्थानोपक्रमावसानत्वात्'इति प्रत्युक्तम् । शक्रध्वजोत्थापनादेश्चातुर्मास्यव्रतस्य च चान्द्रकर्तव्यत्वात् । नापि मासोपवासादिपरं तत् । तस्याश्विनशुक्लैकादशीमारभ्य कार्त्तिकशुक्लैकादशीपर्यन्ततिथिबद्धचान्द्रकर्त्तव्यत्वात् । नापि मासिकपयोव्रतादिपरम् । तस्य तिथिबद्धचान्द्रकर्त्तव्यत्वात । 'तिथिवृद्ध्या चरेत्पिण्डान्' इति मुख्यचान्द्रं तु अमान्तेन पूर्णिमान्तेन वा मासेन कार्यम् । कार्त्तिकवैशाखस्नानादिनियमाश्च पौर्णमास्यन्त–तिथिबद्ध–चान्द्रान्यतरं, सौरं वा मासमाश्रित्य कार्याः । सर्वत्र वचनसत्त्वात । तथाहि—आश्विनशुक्लैकादशीपौर्णमासीषु तदुपक्रमाभिधानात् ।

कार्त्तिकस्य तु यत्स्नानं माघे मासि विशेषतः ।
कृच्छ्रादिनियमानां च चान्द्रमानं प्रमाणकम् ॥

इति पितामहोक्तेश्च । 'तुलामकरमेषेषु' इति वचनात । उपाकर्माणि सामगानां सौरः । 'उपाकर्ममहापष्ठ्योः'इति वचनात् । अन्येषां चान्द्रः । 'श्रावण्यां प्रौष्ठपद्यां वा'इति तिथिकर्त्तव्यत्वात् । एवं च यत्र न विशेषतो वचनं, नियामकं वा; तत्र विकल्पः । 'ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने' इतिवत् ।

*एकोद्दिष्टविवाहादौ ऋणादौ सौरसावनौ ।
ज्योतिर्गर्गः—
आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा ।

---

'अपर्याप्तावृतु प्रति'इत्यत्र तिथिबद्धचान्द्रमासद्वयात्मा गौण एव ऋतुः । एवम्—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सरश्चैव, स्यातां षाण्मासिकेतरे ॥

इत्यत्रापि तिथिबद्धचान्द्र एव । यद्वा—

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा ॥

इत्येतदेकवाक्यतया गौणचान्द्रः । मुख्यचान्द्रग्रहणे दर्शे त्रयोदश्यां वा ऊनषाण्मासिकद्वयापत्तेः । मासिकेषु तु मुख्यचान्द्रः । पितृकार्ये चेत्युक्तेः । मृताहकर्त्तव्यत्वस्य च

मृतेऽहनि कर्त्तव्यं प्रतिमासं तु वत्सरम् ।

इति वचनसिद्धत्वात् । एवं च 'मुख्यं श्राद्धं मासि मासि' इत्यस्य वत्सरं यावत् प्रतिशुक्लप्रतिपदादिदर्शान्तं मासं मृतितिथौ श्राद्धमित्यर्थः ।

यस्तु 'प्रतिसंवत्सरं चैव'इत्यादौ 'न्यूनाः संवत्सरश्चैव'इत्यादौ च संवत्सरः स मृतितिथिमारभ्य यावत्तादृशमृतितिथिं षष्ट्यधिकत्रिशततिथिसमुदायरूपो गौण एवेति दिक् ।

अष्टकेति हेमन्तशिशिरमासां सौरत्वात्तन्मुदासाय । अन्यथा तदीयत्रिंशद्भागरूपाष्टमीत्वस्य कदाचित् नवम्यामपि सत्त्वेन तत्राप्यष्टकाकरणापत्तेः ।

*एकोद्दिष्टेति । पार्वणस्थाने एकोद्दिष्टमनुष्ठातॄणां कलमात्सस्मृतविषयम् ।

सावनेनैव कर्तव्या शत्रूणां चाप्युपासना* ॥

विष्णुधर्मे—

"*नक्षत्रसत्राण्ययनानि चेन्दो-

र्मासेन कुर्याद्भगणात्मकेन" । इति ।

ब्राह्मे—

तिथिकृत्ये च कृष्णादिं, व्रते *शुक्लादिमेव च ।

विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत् ॥

अथ मलमासः । *नष्टे*कमात्रसंक्रान्तिरहितः

---

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

तत्कार्यं पूर्वकाले च कालाधिक्ये च धर्मतः ॥

इति गभस्तिवचनात् । *उपासना—समयप्रतीक्षा । सत्रेषु "सत्राण्युपास्त्यान्यथ सावनेन" इति निर्द्धारितः सावनस्तदपवादमाह—*नक्षत्रेति । *व्रते इति । व्रतकाण्डोक्तेषु व्रतेषु प्रायः शुक्लादेरेव ग्रह इत्यर्थः ।

॥ इति मासग्रन्थटिप्पणी ॥

अथ मलमासस्य कथं मासत्वम् ?। न च मीनस्थाद्यादित्यावच्छिन्नकालत्वं तत्, तच्च सौर एवेति स एव मुख्य इति वाच्यम् । तस्य चान्द्रत्वबाधापत्तेः । नैवम् । मीनस्थाद्यादित्यारब्ध-शुक्लप्रतिपत्कत्वादिकं चैत्रादित्वम् ।

मीनादिस्थो रविर्येषामारम्भप्रथमक्षणे ॥

भवेत्, तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः ॥

इत्युक्तेः । एतच्च दर्शान्तचैत्रादावेव, न तु पूर्णिमान्ते । कृष्णप्रतिपत्क्षणस्य मीनस्थादित्यवत्त्वानियमात् । द्वादशेति च मलस्य शुद्धशेषत्वमालम्ब्य । *मत्रेति । मासेष्वित्यर्थः । मीनस्थाद्यादित्यारब्ध-शुक्लप्रतिपत्कससंक्रान्तत्रिंशत्तिथिकत्वं शुद्धत्वम् । तादृशासंक्रान्तत्रिंशत्तिथिकत्वं च मलत्वम् । असंक्रान्तत्वं [illegible]-शयेनाह—एकेति । न च यत्रामायां तुलासंक्रान्तिः ततो मासमाति-

क्रम्य प्रतिपदि वृश्चिकसंक्रान्तिः, ततो ऽव्यवहितामायां धनुःसंक्रान्तिः । तत्रासंक्रान्तः कार्त्तिकः, तुलास्थरव्यारब्धशुक्लप्रतिपत्कत्वात् । तदुत्तरक्षयमासो मार्गशीर्षः पौषात्पूर्वः, धनुस्थरव्यारब्धशुक्लप्रतिपत्को हि पौषः, तत्रा(१)व्याप्तिः । वृश्चिकस्थरव्यारब्धत्वाभावादिति वाच्यम् । तत्र वृश्चिकोपधानाभावेऽपि तत्स्वरूपयोग्यताघटितलक्षणसम्भवात् ।

यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः ।
तथैव सर्वसंक्रान्तिर्यावन्मेषं न गच्छति ॥

इति वचनादसंक्रान्ताऽमैव स्वभावतो वृश्चिकसंक्रान्तिस्थानं, गतिमान्द्यात्तु तस्याः प्रतिपदि भवनम् ।

यदा वक्रातिचाराभ्यां सूर्यसंक्रमणं भवेत् ।
क्षत्रियाणामसृग्धारां तदा पिबति मेदिनी ॥

इत्युक्तेः । वक्रातिचाराविह शीघ्रमन्दगती ।

ननु यत्र दर्शे कन्यासंक्रान्तिः, ततो दर्शमतिक्रम्य प्रतिपदि तुलासंक्रान्त्या कन्यायामसंक्रान्तः । ततो वृश्चिकधनुषी शुक्लप्रतिपदोरेव । तदनन्तरदर्शे एव मकरसंक्रान्तिरिति धनुषि क्षयः । ततः कुम्भमीनौ दर्शयोरेव । ततो ऽनन्तरदर्शमतीत्य मेषसंक्रान्तिरिति मीने पुनरसंक्रान्तः । तत्र क्षयस्य वृश्चिकस्थरव्यारब्धत्वान्मार्गशीर्षत्वं स्यात् । न चेष्टापत्तिः । पौषमासविलोपापत्तेः । यतस्तदुत्तरो न पौषः, धनुस्थरव्यनारब्धत्वात् । न च धनुर्योग्यकालस्थरव्यारब्धत्वं तत्र पौषत्वमिति वाच्यम् । प्रतिपदस्तुलाकालत्वेन तस्या एव स्वाभाविकधनुःस्थानत्वाद्मायाश्चातथात्वात् । किं तु मकरस्थरव्युपक्रान्तत्वान्माघः । तदुत्तरश्च न माघः, मकरस्थरव्यनारब्धत्वात्, किन्तु फाल्गुनः । कुम्भस्थरव्युपक्रान्तत्वात् । तदुत्तरो न फाल्गुनः, कुम्भस्थरव्यनारब्धत्वात्,

---

(१) तत्र–मार्गशीर्षे इत्यर्थः ।

किन्तु चैत्रः । मीनस्थरव्युपक्रान्तत्वात् । प्रतिपज्जातमेषसंक्रान्तिस्तु द्वितीयश्चैत्रः, मीनस्थरविसत्त्वात् । तदुत्तरे तु वैशाखादय एवेति । सत्यम् । मकरकुम्भमीनानां दर्शजातानामपि स्वाभाविकतदुत्तरप्रतिपत्स्थानत्वमेव । 'यां तिथिं समनुप्राप्य' इत्युक्तेः । एवं च तत्र मकरादिसंक्रान्तिमद्माया धनुरादियोग्यकालत्वादेव धनुरादिस्थरव्यारब्धत्वघटितं पौषत्वादिकं क्रमेणासंक्रान्तात्रधिकमासत्रयस्योपेयम् । धनुरादिस्वरूपयोग्यकालोत्तरस्वीयप्रथमक्षणत्वमारब्धत्वार्थ इति न तदव्याप्तिः ।

ननु तथापि यत्र दर्शे कन्यासंक्रान्तिः, ततोऽसंक्रान्तः, ततः प्रतिपदि तुलासंक्रान्तिः, तदनन्तरदर्श एव वृश्चिकसंक्रान्त्या कार्त्तिकक्षयः । ततोऽमास्वेव मेषान्ताः संक्रान्तयः, ततो दर्शमतीत्य प्रतिपदि वृषसंक्रान्त्या वैशाखोऽसंक्रान्तः । तत्र क्षयस्य कथं कार्त्तिकत्वम् ? । तुलापूर्वतनामायास्तुलायोग्यत्वासम्भवात् । 'यां तिथिं समनुप्राप्य' इतिवचनविरोधात् । तेन हि तुलासंक्रान्तिमत्तिथिसजातीयतिथेरेव वृश्चिकादिमत्त्वं बोध्यते, न तु तुलाप्राक्तनामायास्तुलादियोग्यत्वम् । मैवम् । एकवर्षे जातयोर्द्वयोरसंक्रान्तयोरन्यतरस्य त्रिंशन्मात्रतिथिकत्वात्प्राकृतत्वे वाच्ये-

एकस्मिन्नपि वर्षे चेद् द्वौ मासावधिमासकौ ।
पूर्वो मासः प्राकृतः स्यादुत्तरस्त्वधिमासकः ॥

इत्यादिवचनात् तुलापूर्वतनामावास्यायास्तुलायोग्यत्वमवसीयते । अन्यथा प्राकृतत्ववैयर्थ्यात् । एकशक्तिमत्त्वेन चामापक्षयोस्तद्योग्यता । ततश्च तदुत्तरस्य कार्तिकत्वम् । आश्विनस्य योग्यतया तुलासम्बन्धाच्छुद्धत्वं च । एवं च विद्यमानस्यैव कार्त्तिकादेः क्षयः [illegible] । सङ्कल्पे क्षयमासस्य तत्तन्मासत्वेनैवोल्लेख इति नवीनानुसारी पन्थाः ।

माधवानुसारिणस्तु मेषादिस्थरविसमाप्यत्वं तत्तन्मासत्वम् । "मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ।

सितादिश्चान्द्रो मासो मलमासः।एकमात्रसंक्रान्तिराहित्यमसंक्रान्तत्वेन संक्रान्तिद्वयसत्त्वेन च भवतीति मलमासो द्वेधा । अधिमासः, क्षयमासश्चेति । तदुक्तं काठकगृह्ये—

*यस्मिन्मासे न संक्रान्तिः, संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः* ॥ इति

---

चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वे ऽधिमासोऽन्त्यः" ॥ इतिवचनात् । यत्र पूर्वोक्तरीत्या धनुषि क्षयः, तत्र धनुस्थरविमदन्त्यक्षणकामान्तात्रिंशत्तिथिकत्वं मार्गशीर्षत्वं लुप्यते । क्षयसंज्ञाया लोपनिबन्धनत्वात् । किन्तु तत्र मकरस्थरविसमाप्यत्वं पौषत्वमेवेति संकल्पे पौष एवोल्लेख्य इति वदन्ति । तदसत् । प्रागुक्तकार्त्तिकक्षये कार्त्तिकत्वलोपस्य दुरुपपादत्वात्, वृश्चिकस्थरविसमाप्यत्वसत्त्वात् । अथ—तत्र तुलासंक्रान्तिकालसजातीयत्वयोग्यतया प्रतिपद एव वृश्चिकसंक्रान्तिकालत्वात् तत्पूर्वदर्शस्य तुलासम्बन्धयोग्यता वाच्या । तथा च तुलास्थरविसमाप्यत्वरूपाश्विनत्वसत्त्वात् कार्त्तिकत्वलोपः । सङ्कल्पे चाश्विन एवोल्लेख्य इति चेत्—तर्हि तदुत्तरस्य धनुस्थर[illegible]र्षत्वसम्भवात् क्षीणकार्त्तिकत्वविशिष्टमार्गशीर्षत्वानुपपत्तिरिति कृतमतिविस्तरेण ।

*[illegible] । न चात्र क्षयस्य तत्पूर्वभाविनश्च संसर्पस्यैकसंक्रान्तान्यत्वेऽपि अनधिककालत्वात्कथं मलत्वम् ? ।

मलं वदन्ति कालस्य मासं कालविदोऽधिकम् ।

इतिवचनादधिकस्यैव मलत्वात्; इतिवाच्यम् । तयोस्तादृशमलत्वाभावेऽपि

यस्मिन्मासे न संक्रान्तिः, संक्रान्तिद्वयमेव वा ।
संसर्पाहस्पती [illegible] निन्दिताः ॥

इतिवर्ज्यत्वरूपमलत्वोक्तेः । *त्रयोदश इति । अधिक-

सत्यव्रतोऽपि-

राशिद्वयं यत्र मासे संक्रमेत दिवाकरः ।

नाधिमासो भवेदेष मलमासस्तु केवलः* ॥ इति ।

अधिकमासस्य कालनियममाह वसिष्ठः-

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।

घटिकानां चतुष्केण पतत्यधिकमासकः ॥ इति ।

एतच्च *सावनादिमानेन संभवार्थं, न तु नियमार्थम् । *अन्यथा षोडशदिनाधिकद्वात्रिंशन्मासानन्तरं कृष्णपक्षनियमेन शुक्लादित्वभङ्गापत्तेः । *तेन न्यूनाधिककाले मलमासपातेऽपि न दोषः । अत एवोक्तं

---

मासो, न तु द्विसंक्रान्तः । तस्य तत्त्वासम्भवात् । *केवल इति चतुर्दशत्ववारणार्थम् । *सावनादीनि । आदिना सौरग्रहः । तदुक्तं विष्णुधर्मे-

सौरेणाब्दस्तु मानेन यदा भवति भार्गव ।

सावने तु तदा माने दिनषट्कं प्रवर्द्धते ॥

ऊनरात्राश्च ते राम प्रोक्ताः संवत्सरेण षट् ।

सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ॥

एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।

समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ॥ इति ।

अत्र चान्द्रसमाद्वयात्सौरसमाद्वयं द्वाविंशतिदिनैराधिकं, चान्द्रमासाष्टकाच्च सौरमासाष्टकं सार्द्धसप्तदिनैरिति मिलित्वा दिनार्द्धन्यूनो मासः स्यादित्याशङ्कायां दिनार्द्धपूरणाय दिनैः षोडशभिर्घटिकानां चतुष्केणेत्युक्तं, तच्च सावनमात्रान्वयीति सूचनाय सावनपदोपादानम् । चान्द्रमासं निरस्यति-*अन्य-

माधवीये-'मासे त्रिंशत्तमे* भवेत्' इति । क्षयस्यापि ज्योतिःशास्त्रे-

असंक्रान्तिमासोऽधिमासः *स्फुटं स्यात्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।

---

थेति । नियमाङ्गीकारे बाधकमाह-*तेनेति ॥ *त्रिंशत्तमे इति* । तदुक्तं विष्णुधर्मोत्तरे—

दिनमस्य हरत्यर्कः षष्टिभागमृतौ ततः ।
करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः ॥
एवमर्द्धतृतीयानामब्दानामधिमासकम् ॥
ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते तु पश्चिमम् ॥ इति ।

दिवसाहःशब्दौ चान्द्रतिथिपरौ । मलमासस्य चान्द्रत्वात्तत्रापेक्षणात् । सूर्येण चन्द्रेण च प्रतितिथि तिथिषष्टिभागस्य दण्डस्य च्छेदेनाकर्षणेन ऋतौ मासद्वये प्रत्येकं ताभ्यामेकैकतिथ्याकर्षणात् तिथिद्वयलाभक्रमेणार्द्धतृतीये वर्षे त्रिंशत्तिथयो लभ्यन्ते । एवं पञ्चाब्दमध्ये द्विः सम्भवेऽपि पूर्वो ग्रीष्मे एव वैशाखादिमासषट्के एव । "यां तिथिं समनुप्राप्य" इतिवचनात् । तुलादौ तिथेरवृद्ध्याऽसंक्रान्तपाताभावादिति । अयं च माधवेन शकवर्षाणामष्टपञ्चाशद्युतशतद्वयाधिके सहस्रे गते योऽनन्तरभावीश्वरसंवत्सरः, तत्र श्रावणमासोऽधिकः । ततः पूर्वे भावसंवत्सरे फाल्गुनोऽधिकः । तन्मध्यगौ युवधातृवत्सरावित्युदाहृतः । तत्रैव च तेनैव यथोक्तेश्वरसंवत्सरोत्तराचित्रभानुसंवत्सरे वैशाखोऽधिकः । तदुत्तरभाविनि तारणसंवत्सरे भाद्रोऽधिक इत्येकोत्तरात्रिंशत्तमत्वेन दुर्मुखसंवत्सरे श्रावणोऽधिकः । विकारिसंवत्सरे ज्येष्ठोऽधिक इति पञ्चत्रिंशत्तमत्वेन च न्यूनाधिकपात उदाहृतः । *स्फुटं-स्फुटमानेन । *कार्त्तिकादीति । यत्र कन्यायां संसर्पः, ततः क्रमेण तुलावृश्चिकसंक्रान्ती, ततो धनुषि क्षयः । तत्र संसर्पमाया एव तुलायोग्यस्थानत्वा-

क्षयः *कार्तिकादित्रये, नान्यतः* स्यात्
तदा वर्षमध्ये ऽधिमासद्वयं च ॥

एकः क्षयात्पूर्वं, परतश्चैक इत्यधिमासद्वयं भवतीत्यर्थः ।

अत्र विशेषमाह जाबालिः-

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
*प्राकृतस्तत्र पूर्वः स्यादधि*मासस्तथोत्तरः ॥ इति ।

---

त्संसर्पपरयोः क्रमेण कार्त्तिकादिकृत्यं बोध्यम् । *नान्यतः-नैकतः । क्षयोभयपार्श्वयोरिति यावत् ।

*प्राकृत इति । प्रकृतिः स्वभावः त्रिंशद्दिनरूपस्तद्युक्तः, अनधिकः, शुद्धः, कर्मार्ह इति यावत् । *अधिः-अधिको मासः ।

नन्वस्तु संसर्पोऽपि षष्टिदिनो मासः । एकराशिस्थरव्यारब्धत्वात्, 'षष्ट्या तु दिवसैः''इति वचनाच्च । तत्र च पूर्वार्द्धस्य निन्द्यत्वबाधार्थं प्राकृत इत्युक्तम् । ततश्चाश्विने संसर्पे द्वितीयाश्विनोत्तरमेव कार्त्तिको मासः । तुलास्थरव्यारब्धत्वात् तत्र प्रथमाश्विने यथायथं शुक्लकृष्णपक्षकर्म कार्यमेव, मत्याब्दिकादि च । तस्य शुद्धत्वेन प्रथमातिक्रमे कारणाभावात् । द्वितीयाश्विने च न पुनस्तत्करणम् । 'सकृत्करणेन कृतः शास्त्रार्थः'इति न्यायादङ्गभूतकालानुरोधेन प्रधानीभूतकर्मावृत्तेरयुक्तत्वात् । काम्यारम्भाश्च द्वितीयाश्विन एव । आद्यस्य तस्य "न कुर्याद्वानुलाङ्गिते''इत्यनेन निषेधात् । एवं दीपावल्याह्निकमपि परत्रैव, न पूर्वत्र । आश्विनस्य कथमपि कार्त्तिकसम्बन्धाभावात् । एवं च संसर्पोऽपि उत्तरमाससंज्ञोऽस्त्विति चेन्न । पूर्वोक्तकार्त्तिकरूपक्षयाव्यवधानेन जातस्य संसर्पस्य षष्टिदिनात्मकत्वासम्भवात् । तस्य षष्टिदिनात्मकत्वोपगमे त्वेकमासत्वेन क्षयस्य कार्त्तिकत्वानुपपत्तेः । द्वितीयाश्विनस्य क्षयत्वे च "क्षयः कार्त्तिकादित्रये" इतिनियमभङ्गापत्तेः । अत्र त्रिंशत्तिथिक्रमसंच-

उत्तरे एव* कालाधिक्यं, न पूर्वस्मिन्नित्यर्थः ।

---

यकालापेक्षिकं पौर्वापर्यं विवक्षितम् ।

कार्त्तिकादिषु मासेषु यदि स्यातां मलिम्लुचौ ।
सर्वकर्महरः प्रोक्तः पूर्वस्तत्र मलिम्लुचः ॥

इतिज्योतिःपराशरानुरोधात् । यत्र क्षयमासोभयपार्श्वयोराश्विनादिषट्के एवासंक्रान्तद्वयं तत्र पूर्वो ऽसंक्रान्तः त्रिंशत्तिथिक्रमसञ्चयकालादुपरि चेज्जायते तदा षष्टिदिनात्मको ऽधिक एव । तादृशकालात् प्राग् जनने तु स त्रिंशद्दिनात्मकः प्राकृत एव । एवमुत्तरोऽपि चेत्तादृशकालादूर्ध्वं पतेत्तदा ऽधिको, न तु ततः प्राक् पतने। तथा च पूर्वस्यैव प्राकृतत्वमुत्तरस्यैवाधिकत्वमिति न नियम इति तदर्थः । यदा तु पूर्व आश्विनादिषट्के, उत्तरस्तु चैत्रादिषट्के तदा तिथिक्रमसञ्चयकालादूर्ध्वं पतन्नपि पूर्वो नाधिकः ।

चैत्रादर्वाङ् नाधिमासः परतस्त्वधिको भवेत् ।

इत्यपवादात्; इति मतं निराकर्त्तुमाह—*उत्तर एवेति । पूर्वो ऽसंक्रान्तः कार्त्तिकादित्रयान्यतमपातिनः क्षयात्पूर्व एव । तेन व्यवहितो ऽव्यवहितो वाऽऽश्विनादिषट्के नियमितो, न तु तद्व्यवधानेन चैत्रादिषट्के भवितुमर्हः । उत्तरोऽसंक्रान्तस्तु शीघ्रमन्दगतिभ्यां चैत्रात्पूर्वतनषट्के 'यां तिथिं समनुप्राप्य'इति, स्वाभाविकऋजुगत्या चैत्रादिषट्के वा भवतीति क्षयमास एव पूर्वत्वोत्तरत्वयोरवधित्वेन ग्राह्यः, उपस्थितत्वात् । न तु त्रिंशत्तिथिक्रमसंचयकालः । तस्याबुद्धिस्थत्वेन परामष्टुमशक्यत्वात् । एवं च यत्र त्रिंशत्तममासादुत्तरत्वेऽपि नाधिक्यं कल्पयितुमर्हं, त्रिंशत्तमात् प्राग्भवे तु तत्र त्रिंशत्तिथित्वं, प्राकृतत्ववचनात् । प्राकृतत्वोक्त्या च यथास्थिते वर्षे यस्त्रिंशद्दिनात्मकः शुद्ध आयाति, स एवायमिति बोध्यते इति भवति तस्य षष्टिदिनात्मकत्वबाधः । तथा च प्रोक्तकार्त्तिकक्रत्ये न कस्यापि विमतिरिति ।

यत्तु ब्रह्मसिद्धान्ते—

*चैत्रादर्वाङ् नाधिमासः, परतस्त्वधिको भवेत् ।

इति । तत्र चैत्रात्पूर्वमसंक्रान्तद्वये पूर्वो नाधिकः,* किंतु *पर इत्यर्थः । यच्च ज्योतिःसिद्धान्ते—

*घटकन्यागते सूर्ये *वृश्चिके वाऽथ धन्विनि ।

मकरे वाऽथ कुम्भे वा नाधिमासो विधीयते ॥ इति ।

---

तिथिसञ्चयकालात्पौर्वापर्याभिप्रायेणेदमिति तु न सत् । चैत्रात्पूर्वमसंक्रान्तद्वये पूर्वो नाधिक इत्यनेन विरोधात् । तेन चैत्रात्पूर्वस्य तिथिसञ्चयक्रमकालोत्तरस्याप्युत्तरचैत्रादिषट्कपातेऽनाधिकत्वाभिधानात् । *चैत्रादर्वागिति । मासस्यैवावधित्वे सर्वस्याप्युत्तरस्य तथात्वाच्चैत्रादर्वाङ् नाधिमास इत्यस्यासङ्गतिः । त्रिंशत्तिथिसञ्चयक्रमकालस्यावधित्वे तु आश्विनादिषट्कपातिनोऽप्युत्तरासंक्रान्तस्यैव नियतमाधिक्यम् । प्राथमिकासंक्रान्तस्यापि कदाचित्तथात्वात् । चैत्रादिषट्कपातिनस्तु तस्य नियतं तदित्यर्थ इत्याभिमानः ।

*नाधिक इति कालतःपदगर्भम् । *पर इति । कालतोऽधिक इत्यनुवर्तते । अत्र यद्यपि ऋजुगत्या चैत्रात् परतो मेषादिष्वेवाधिकमास इति क्षयरहितसाधिमासवर्षपरत्वं सम्भवति । तदुक्तम्—

मध्ये विषुवतोर्भानुर्वर्द्धयेत्स्वान्यहानि तु ।

तैः सम्भूयाधिको मासः पतत्येष त्रयोदशः ॥ इति,

तथापि ब्रह्मसिद्धान्तः क्षयमासप्रकरणस्थ इति तथा नोक्तम् ।

*घटेति । क्षयोत्तरस्याधिकत्वाद्विरोधः ।*वृश्चिके वेति । अत्र मीनमपि प्रवेश्य वृश्चिकादिपञ्चके इति(१) विवक्षितम् । यत्रामायां कन्यासंक्रान्तिः, ततोऽमोत्तरप्रतिपदि तुलासंक्रान्तिः, तदनन्तरदर्शे एव वृश्चिकसंक्रान्तिः, ततो ऽसंक्रान्तोत्तरप्रतिपदि धनुःप्रवे-

---

(१) तेन 'चैत्रादर्वाग्' इत्यनेन न वैषम्यमिति बोध्यम् ।

तद् वृश्चिकादिचतुष्टये मलमासे सति पूर्वं तुलाकन्यागते सूर्ये क्षयपूर्वभाव्यधिमासस्य कालाधिक्यमात्रनिषेधार्थं, न त्वधिकमासस्य ।

दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित् ।
*नपुंसकत्वं भवतीत्येष शास्त्रविनिश्चयः ॥

इति हेमाद्रौ विष्णुधर्मविरोधात् । *मलमासेऽष्टकादिनिषेधानुपपत्तेश्च । *'मकरे वाऽथ कुम्भे वा' इति *दृष्टान्तार्थम् । प्राप्त्यभावात् ।

---

शः, तदभिप्रायेण वृश्चिकपदम् । कन्याग्रहणं चाऽऽश्विनस्य वैशाखादिषट्कपातित्वात्तत्र कालाधिक्यशङ्कावारणार्थम् । वस्तुतस्तु क्षयस्य कार्त्तिकादित्रयनियततया तुलादित्रये क्षयमासे सति कन्यादेर्न कालाधिक्यमित्यर्थः । तथैव मकरे चेत्यादिसंगतेः । *नपुंसकत्वम्—पुंसो मण्डलाधिष्ठातुः सूर्यस्याभावात् । तथा चोक्तम्—

अरुणः सूर्यो भानुस्तपनश्चन्द्रो रविर्गभस्तिश्च ।
अर्यमा हिरण्यरेता दिवाकरो मित्रविष्णू च ॥
एते द्वादश सूर्या माघाद्येषूदयन्ति मासेषु ।
निःसूर्यो ऽधिकमासो मलिम्लुचाख्यस्ततः पापः ॥ इति ।
मासेषु द्वादशादित्यास्तपन्ते हि यथाक्रमम् ।
नपुंसके ऽधिके मासि मण्डलं तपते रवेः ॥ इति च ।

न च चैत्रादिषट्क एव कालाधिक्यान्नपुंसकत्वं नान्यत्र, "मध्ये विषुवतोः" इति वाक्यादिति वाच्यम् । आश्विनादित्रयस्य माघफाल्गुनयोश्चासंक्रान्तत्वस्य क्षयमासनिबन्धनत्वात् । तुलादौ नाधिमास इत्यर्थं निरसितुमाह—*मलमासे इति । षष्टिदिनात्मकमासपूर्वभागे इत्यर्थः । हेमन्तादेर्मलतया "षष्ट्या तु दिवसैः" इति निषेधोपपत्तिरिति भावः । ननु क्षयस्य तुलादित्रयनैयत्यान्मकरे इत्येव न युज्यते, कैव कथा कुम्भे इत्यस्येति । तथा च कथं वृश्चिकादिचतुष्टये मलमासे सतीत्युक्तमित्यत्राह—*मकरे इति । *दृष्टा-

क्षयस्याऽऽगमनकाल उक्तः सिद्धान्तशिरोमणौ-

गतोऽब्ध्यद्रिनन्दैर्मिते शाककाले
तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः ।
गजाद्र्यग्निभूभिस्तथा प्रायशोऽयं
*कुवेदेन्दुवर्षैः क्वचिद् गोकुभिश्च ॥ इति ।

अब्धयः—चत्वारः, अद्रयः—सप्त, नन्दाः—नव, एषां प्रातिलोम्येन पाते ९७४ । तैर्मिते वर्षे कश्चित् क्षयमासः पूर्वं जात इत्यर्थः । तिथयः-पञ्चदश, ईशाः-एकादश, ११५। एवंमिते याते कश्चिद्भविष्यतीत्यर्थः । अङ्ग ६, अक्ष ५, सूर्याः १२, एकत्र १२५६ । गजाः ८, अद्रयः ७, अग्नयः ३, भूः १, एकत्र १३७८ । कुः १, वेदाः ४, इन्दुः १, एकत्र १४१ । गावः ९, कुः १, एकत्र १९ । एतैर्मिते वर्षे याते कश्चिद्भविष्यतीत्यर्थः ॥

अथ *मलमासे कार्याकार्यं निरूप्यते । तत्र जाबालिः-

---

न्तार्थम्-व्यतिरेकदृष्टान्तार्थम् । वृश्चिकादिद्वये क्षयमासे सति यथा मकरादेरधिकमासत्वं कालाधिक्यात्, तथा तुलादेर्नास्तीत्यर्थः । एवं च वृश्चिकादिचतुष्टये मलमासे सतीत्येव सम्यक् ।

*कुवेदेन्दुवर्षैरिति । अब्ध्यद्रिनन्देषु (९७४)कुवेदेन्दु-(१४१)योजने तिथीशाः(११५) । तत्र तद्योजने अङ्गाक्षसूर्याः (१२५६) । तत्र गोकु(१९)न्यूनतद्(१२२)योजने (१३७८) गजाद्र्यग्निभूमयः । तथा च गोकुभिश्चेति पूर्वोक्ते क्षेपके तावन्न्यूनाधिकपातेऽपि सम्भवार्थम् । *मलमासे—

"अमावास्याद्वयं यत्र मासि मासि प्रवर्त्तते ।
उत्तरश्चोत्तमो ज्ञेयः पूर्वस्तत्र मलिम्लुचः" ॥

*नित्यनैमित्तिके कुर्याच्छ्राद्धं कुर्यान्मलिम्लुचे ।
तिथिनक्षत्रवारोक्तं, काम्यं नैव कदाचन ॥
अयं च काम्यनिषेध आरम्भसमाप्तिविषयः ।
*असूर्या नाम ये मासा न तेषु मम संमतः ।
व्रतानां चैव यज्ञानामारम्भश्च समापनम् ॥
इति तेनैवोक्तत्वात् । असूर्या अधिकमासा इत्य-

"त(१)मतिक्रम्य तु रविर्यदि गच्छेत्कथं च न ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः" ॥
इत्याद्युक्तेः ।

*नित्येति । मलमासे अनन्यगतीनि नित्यनैमित्तिकानि, आवश्यकानि काम्यानि च आरम्भणीयानि । सावनमानसाध्यानि तु प्रागारब्धानि तत्र समाप्यानि । तत्र तदितरेषामारम्भः, समाप्तिश्च न; किं त्वनुवृत्तिमात्रमित्याखण्डलार्थः ।

सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
रविणा लङ्घितो मासो ह्यनर्हः सर्वकर्मसु ॥

इत्यादिसामान्यतोनिषेधानां विशेषप्रतिप्रसवैर्बाधात्तदितरकाम्यादिपरत्वमेव ।

*असूर्या इति ।
प्रवृत्तं मलमासात्प्राक् काम्यं कर्मासमापितम् ।
आगते मलमासेऽपि तत्समाप्यमसंशयम् ॥

इति तु सावनमानप्रवृत्तकृच्छ्राहीनसत्रादिपरम् । एतेनैतत्समाप्त्यनुज्ञानात्तद्वर्जनवचनं मोहात्तत्र प्रक्रान्तकाम्यसमाप्तिपरमित्यपास्तम् । अनियतकालानां तत्रानुवृत्त्यैव प्रयोगप्राप्तुभावाभङ्गे प्रतिप्रसवस्य तत्साधारण्यायोगात् । ननु कारीरीराक्षोघ्नाभिचारप्रत्यभिचाररोगग्रहदौःस्थ्यादिनिमित्तकस्य शान्त्यादेः काम्यत्वा-

(१) तं—मासमित्यर्थः ।

र्थः । तत्र 'मण्डलं तपने रवेः' इति वचनात् । *कारीर्यादेः काम्यस्य त्वारम्भसमाप्ती भवत एवेत्यादिरन्यत्र विस्तरः । काठकगृह्येऽपि—

मले*ऽनन्यगतिं कुर्यान्नित्यां* नैमित्तिकीं क्रियाम् ।

इति ।

तानि नैमित्तिकानि दीपिकायामुक्तानि—

यन्नैमित्तिक*मग्निनष्ट्यनुगताग्न्याधानमर्चासु वा

---

न्मलमासे कथमनुष्ठानमत आह—*कारीर्यादेरिति । विलम्बासहत्वादिति शेषः ।

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथैव कार्याणि न कालस्तु विधीयते ॥

इति दक्षोक्तेः ।

नेहतात्र विशेषेज्यामन्यत्राऽऽवश्यकाद्विधेः ।

इति गृह्यपरिशिष्टाच्च ।

नित्यनैमित्तिकान्यपि विशिनष्टि—*मले इति । *अनन्यगतिम्—यस्या मासान्तरे ऽनुष्ठाने कालातिक्रमनिमित्तकप्रायश्चित्तपातो, विहितकालालाभेन लोपो वा, ताम् । *नित्यामिति ।

अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ।
मलमासे तु कर्त्तव्यं काम्या इष्टीश्च वर्जयेत् ॥

इति तु दिङ्मात्रम् । अवषट्कारहोमाः—अग्निहोत्रौपासनहोमवैश्वदेवादयः । पर्व—दर्शपूर्णमासेष्टी, पार्वणस्थालीपाकश्च ।

*अग्नीति । अग्नेर्नष्टौ सत्यामनुगताग्न्याधानम् । तद्विलम्बे प्रायश्चित्तापत्तेः ।

अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥

संस्कारादिविलोपने सति पुनः प्रोक्तं प्रतिष्ठादिकम् ।

इति । *गत्यन्तरयुतं तु सोमादि हेयमेव ।

*तत्र कर्तव्यान्युक्तानि कालादर्शे—

*द्वादशाहसपिण्डान्तं कर्म, ग्रहणजन्मनोः ।
सीमन्ते पुंसवे श्राद्धं, द्वावेतौ, जातकर्म च ॥
रोगशान्तिरलभ्ये च योगे श्राद्धं व्रतानि च ।
प्रायश्चित्तं निमित्तस्य वशात्पूर्वे परत्र वा ॥

---

माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ।

इत्यत्र तु अग्न्याधेयप्रतिष्ठे नैमित्तिकातिरिक्तपरे । संस्कारादिलोपः चण्डालादिस्पर्शप्रयुक्तः । *गत्यन्तरेति ।

सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे ।
षष्ठीष्ट्याग्रयणाधानचातुर्मास्यादिकान्यपि ॥
महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् ।
स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ॥

इति काठकगृह्यात् । अत्र गत्यन्तरयुक्तत्वं बीजं बोध्यम् । षष्ठीष्टिः—काठकप्रसिद्धा पुत्रेष्टिः । पुष्टीष्टिरिति पाठे जातेष्टिः । शौचकालरूपाङ्गोपग्रहार्थं तस्या आशौचोत्तरत्वे मलोत्तरत्वस्यापि न्याय्यत्वात् ।

इदानीं विशिष्य कार्याकार्यमाह—*तत्रेति । विशेषतः प्रपञ्चनीये कार्याकार्यसमुदाये । *द्वादशाहेति ।

जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च ।
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश ॥
चन्द्रसूर्यग्रहे स्नानश्राद्धदानजपादिकम् ।
कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ।

इति वचनात् । यत्तु—

*अब्दोदकुम्भमन्नादि महालययुगादिषु ।
श्राद्धं दर्शोऽप्यहरहः श्राद्धं*मूनादिमासिकम् ॥
मलिम्लुचान्यमासेषु मृतानां श्राद्धमाब्दिकम् ।
श्राद्धं तु पूर्वदृष्टेषु तीर्थेष्वेवं युगादिषु ॥
मन्वादिषु च यद्दानं दानं दैनन्दिनं च यत् ।
तिलगोभूहिरण्यानां *सन्ध्योपासनयोः क्रिया ॥

---

अधिमासे न कर्त्तव्यं श्राद्धमभ्युदयं तथा ।
तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृ ऋते ॥

इति वचनं, तत्र श्राद्धं द्वादशाहसपिण्डनान्त–ग्रहणा–ऽलभ्य-योग—गर्भसंस्काराऽऽभ्युदयिका–ऽधिकमासिक–प्रथमसांवत्सरिक–मलमासमृतसांवत्सरिकाभिन्नं ग्राह्यम् । सपिण्डनान्तोपादानात्त-दुत्तरं न कार्यमिति लभ्यते ।

सपिण्डीकरणादूर्ध्वं यत्किञ्चिच्छ्राद्धिकं भवेत् ।
इष्टं वाऽप्यथ वा पूर्त्तं तन्न कुर्यान्मलिम्लुचे ॥

इत्यादिवचनात् । ग्रहणजन्मनोः श्राद्धं तन्निमित्तकदानादे-रुपलक्षणम् । वृद्धिश्राद्धस्य जातकर्मानङ्गत्वात् पृथगुक्तिः ।

*अब्देति ।

अब्दमम्बुघटं दद्यादन्नं चापि सुसञ्चितम् ।
संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम् ॥

इति कौथुमिवचनात् त्रिंशत्सोदकुम्भान्नदानानि, अधि-कमासिकं चेत्यर्थः । *ऊनादीति । अनन्यगतिकत्वात् ।

*सन्ध्येति ।

कुर्यात्प्रात्यहिकं कर्म प्रयत्नेन मलिम्लुचे ।
नैमित्तिकं च कुर्वीत सावकाशं न यद्भवेत् ॥

इति वचनात् । "कामं तु व्रीहियवतिलैः" इति चौपासनपरम् । नैमित्तिकं–विधिनिषेधातिक्रमनिमित्तककृच्छ्रचान्द्रायणादि, उप-

पर्वहोमश्चाग्रयणं* साग्नेरिष्टिश्च पर्वणि ।
नित्याग्निहोत्रहोमश्च देवताऽतिथिपूजनम् ॥
स्नानं च स्नानविधिनाऽप्यभक्ष्यापेयवर्जनम् ।
तर्पणं च निमित्तस्य नित्यत्वादुभयत्र च ॥ इति ।

*एतौ—पुंसवनसीमन्तौ । एतच्च गर्भाधानाद्यन्नप्राशनान्तसंस्कारोपलक्षणम् । तदुक्तं दीपिकायाम्—

---

स्थितनिमित्तप्रयुक्तश्रौतस्मार्त्तप्रायाश्चित्तम् । एवंजातीयकमन्यदपि ।
*आग्रयणम् । "पर्व चाग्रयणं तथा"इति विधिः पुराणान्नालाभे । तल्लाभे तु "षष्ठीष्ट्याग्रयण"इति निषेधः । *एताविति ।

रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च ।
यद्दानादि समुद्दिष्टं पूर्वत्रापि न दुष्यति ॥

इति । अत्र सीमन्तपुंसवशब्दादुपलक्षणम् ।

गर्भे वार्द्धुषिके भृत्ये श्राद्धकर्मणि मासिके ।
सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत् ॥

इति यमोक्तेः । गर्भे—गर्भसंस्कारे ।

जातकर्म च पुंसूतिः सीमन्तोन्नयनं रतम् ।
मलिम्लुचेऽपि कर्त्तव्यं निमित्तं यदि जायते ॥

इत्युक्तेः । वस्तुतस्तु—

अधिमासे न कर्त्तव्यं श्राद्धमभ्युदयं तथा ।

इति वाक्ये आभ्युदयिकस्याङ्गत्वेन तन्निषेधात्तदङ्गकस्य चौलादेरिव सीमन्तादेरपि निषेधे प्राप्ते यद् "वत्सरात्प्रथमादृते"इत्यभिधानं, तत् प्रथमवर्षसम्बन्धित्वेन मासविशेषनियतानां गर्भजन्मसम्बन्धिनामन्नप्राशनान्तानां प्रतिप्रसवार्थम् ।

नामान्नप्राशने चौलं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमणं जातकर्म काम्यं वृषविसर्जनम् ॥

'गर्भाधानमुखं च चौलविधितः प्राग्जातयागं(१) विना
कृच्छ्रेष्वाग्रयणं *गजेन्द्रपुरतश्छाया मघानङ्गयोः ।
तीर्थेन्दुक्षययोश्च पित्र्यमधिके मास्येवमाद्याचरेत्'
इति । अलभ्ययोगे ऽर्धोदयपद्मकादौ* काम्यान्यपि व्रतादीनि कार्याणीत्यर्थः । पूर्वे परत्र–मले शुद्धे वेत्यर्थः ।

---

अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उद्यापनमुपारम्भं व्रतानां नैव कारयेत् ॥

इति तु अतिपन्नजातकर्मनामकर्मान्नप्राशननिष्क्रमणपरम् । "जातकर्म च पुंसूतिः"इत्यत्र चकारेण नामकर्मादिग्रहः । एतेषां पुंसूत्यादेरिव मलमासादिव्यतिरेकेण विहितादिनलाभे तत्रैवेति सूचनाय 'निमित्तं यदि'इत्यादि । केचित्तु जातकर्मनामकर्मणोः प्रतिपदोक्तप्रसववशात्तथात्वेऽपि निष्क्रमान्नप्राशनयोर्नातिपन्नविषयत्वमिति नित्यानिषेधमाहुः । जातकर्मादेः प्रतिप्रसवेनाऽऽभ्युदयिकस्यापि तदङ्गतयैव प्रतिप्रसवो बोध्यः । वार्द्धुषिके—तत्कृत्ये वृद्धिग्रहणे । भृत्ये–तत्कृत्ये भृतिग्रहणे । मासिकम्—अमावास्याश्राद्धम् । नित्यम्—अहरहर्दानादि, सन्ध्योपासनादि चेति ।

*गजेन्द्रेति । इयं च—

परमान्नं च यो दद्यात् पितॄणां मधुना सह ।
छायायां तु गजेन्द्रस्य पूर्वस्यां दक्षिणामुखम् ॥

इति यौगिकी ग्राह्या । "यदेन्दुः"इति पारिभाषिक्यास्तस्या मलेऽसम्भवात् । अमावास्याप्रत्यासन्नायां कृष्णपक्षत्रयोदश्यां मघायोगे रवेरवस्थानं चेत्तर्हि तत्सम्बन्धिशुक्लादिचान्द्रे कन्यासंक्रान्तेरवश्यंभावेन तस्य मलत्वासम्भवात् । *पद्मकादाविति । आदिना कपिलाषष्ठ्यादिग्रहः । "महालयाष्टकाश्राद्ध"

---

(१) जातयागं–जातेष्टिमित्यर्थः ।

*महालयशब्देन मघात्रयोदश्युच्यते इति माधवः। दर्शश्राद्धं मलेऽपि कार्यम् । यत्तु—ऋष्यशृङ्गः

संवत्सरातिरेकेण मासो यः स्यान्मलिम्लुचः ।
तस्मिंस्त्रयोदशे श्राद्धं न कुर्यादिन्दुसंक्षये ॥

इति, तत् *काम्यदर्शश्राद्धविषयम् । 'काम्यं नैव कदाचन' इति वचनात् । दर्शे च काम्यं श्राद्धं ' कन्यां कन्यावेदिनश्च' इत्यादिना याज्ञवल्क्येनोक्तम् । नित्यं तु मलेऽपि भवत्येव ।

दर्शेऽप्यहरहःश्राद्धं, दानं च प्रतिवासरम् ।
गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे ॥

इति मात्स्योक्तेरिति हेमाद्र्यादयः । दिवोदासीयेऽपि—

इत्यादिपूर्वोक्तनिषेधादाह— *महालयेति ।

मघात्रयोदशीश्राद्धं मृत्युपस्थितिहेतुकम् ।
अनन्यगतिकत्वेन कर्त्तव्यं स्यान्मलिम्लुचे ॥

इत्युक्तेः । अत्रेदमरुचिबीजम् । महालयशब्दस्य मघात्रयोदश्यां लक्षणा व्यर्था ।

वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते ।

इतिभृगूक्तनिषेधस्य स्वकालातिपन्नमहालयविषयकत्वात् । यतः संसर्प आश्विनादिषट्के एवेति मतेऽतीतो महालयस्तत्रप्राप्तोऽपि न कार्यः, किं तु तदुत्तरगौणतत्काल एवेति । यदि तु भाद्रपदोऽपि संसर्प इति मतं, तदा मत्याब्दिकादिवत्स्वकालप्राप्तो महालयो भवत्येव । एवमेव "तथाऽधिमाससंसर्पमलमासादिषु द्विजे । प्रथमोपाकृतिर्न स्यात्"इतिसंसर्पपदोपादानसंगतिः । आश्विनस्यैव संसर्पत्वे तत्रोपाकर्माप्राप्तेरेव निषेधानुपपत्तेरिति । *काम्येति । एतेनामावास्यामृतस्य मासिकं मासवृद्धौ न वर्द्धनीयमित्येवमर्थ-[illegible] । मासिकपदासत्त्वेन तथा व्याख्याने मानाभावात् ।

द्धमासे भवति, तत्र त्रयोदशेऽधिके एवाऽऽद्याब्दिकं कार्यम्। यत्र त्वधिकमध्ये द्वादशं मासिकं, तत्र तस्य द्विरावृत्तिं कृत्वा चतुर्दशे शुद्धे एव प्रथमाब्दिकमिति निष्कर्षः। तेन द्वितीयादि शुद्धमासे एव। पृथ्वीचन्द्रोदये दिवोदासीये मदनपारिजाते चैवम्।

मलमासमृतानां तु यदा स एवाधिकः स्यात्तदा तत्रैव प्रतिसांवत्सरिकं कार्यम्। यथाऽऽह पैठीनसिः-

मलमासे मृतानां तु श्राद्धं यत्प्रतिवत्सरम्।
मलमासेऽपि कर्तव्यं नान्येषां तु कथं चन॥ इति।

हेमाद्रौ व्यासोऽपि-

मलमासमृतानां तु सौरं मानं समाश्रयेत्।
स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु(१)॥

---

(१) "अत्राधिकमृतस्य न द्वितीयाद्यब्देऽपि सौरविधिः। द्वितीयादावन्याधिके वाऽपूर्वनियमविधिवैरूप्यात्। किन्तु प्रथमाब्दिकस्य मले नियमात् सत्यव्रतेन तद्भिन्नस्य सर्वस्याधिके निषेधे प्राप्ते प्रतिप्रसवमात्रं, लाघवात्। अतो न द्वितीयादौ सौरमासप्रसङ्गः। 'चान्द्रमिष्टं तथाऽऽब्दिके' 'मासपक्षतिथिस्पृष्टे' इत्यादिविरोधाच्च" इति क्वचित् पुस्तकेऽधिकः पाठः।।

अस्यार्थः। वैशाखादावधिके मृतस्य यदा पुनः परिवर्तनक्रमेणाधिको वैशाखो भवेत् तदाऽऽब्दिकश्राद्धाद्यर्थं सौरं मानं समाश्रयेत्। मेषादिस्थे सवितरि अधिके एव तस्याब्दिकश्राद्धादि कुर्यात्, नतु वृषादिस्थे सवितरि शुद्धवैशाखादौ इति यावत्।

वैशाखाद्यधिके मृतस्य (संवत्सरे पूर्णे) द्वितीयवर्षादौ, वैशाखाद्यधिकपाते तत्र च आब्दिकश्राद्धार्थं सौरं मानं समाश्रयेत् इत्यविशेषेण सौरविधिर्नास्ति। तथा सति द्वितीयवर्षादौ आब्दिकश्राद्धार्थं सौरमानस्य केनापि वचनेनाप्राप्तस्य विधानेऽपूर्वविधित्वम्, वैशाखाद्यधिकपाते तत्र आब्दिकश्राद्धार्थं सौरमानस्य "मलमासे मृतानां तु श्राद्धं यत्प्रतिवत्सरम्। मलमासेऽपि कर्तव्यम्" इति वचनेन मलमासे कर्तव्यताबोधनेन प्राप्तस्य "सौरं मानमेवाश्रयेत्" इत्येवं नियमेन 'मलमासेऽपि' इति अपिशब्दस्वारस्येन प्राप्तस्य शुद्धमासस्य निवृत्तिः

इति नियमविधित्वमिति वैरूप्यप्रसङ्गात् । किं तु "असङ्क्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः" इति हारीतेन "आब्दिकं प्रथमं यत्स्यात् तत्कुर्वीत मलिम्लुचे" इति स्मृत्यन्तरवचनेन च प्रथमाब्दिकस्य मले नियमनात् अधिकमृतस्यान्यत्र मृतस्य च द्वितीयादेर्वार्षिकस्य "वर्षेवर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि । मलमासे न तत्कार्यम्" इति सत्यव्रतवचनेन अधिके निषेधे प्राप्ते वैशाखाद्यधिकमृतस्य वैशाखाद्यधिकपाते तत्रैव वार्षिकश्राद्धं कार्यं "सौरमानाश्रयेणेति प्रतिप्रसवमात्रं क्रियते लाघवात् । अतः अधिकमृतस्य द्वितीयवर्षादौ क्रियमाणे प्रथमाब्दिकादौ सौरमासप्रसङ्गो न । "चान्द्रमिष्टं तथाऽऽब्दिके" "मासपक्षतिथिस्पृष्टे" इत्यादिवचनविरोधाच्च "सौरमानं समाश्रयेत्" इत्यनेन न अविशेषात् द्वितीयाद्यब्देऽपि प्रथमादिवार्षिकार्थं सौरमानविधिरिति ॥

केचित्तु—"मलमासमृतानां तु यदा स एवाधिकः" इति उपक्रमग्रन्थार्थमनवगच्छन्तः "मलमासमृतानान्तु सौरं मानं समाश्रयेत्" इति वचनं "यदा स एवाधिकः स्यात्तावन्मात्रविषयम्" इति सांवत्सरिकश्राद्धप्रकरणोक्तं निर्णयसिन्धुग्रन्थं तत्रत्यकृष्णभट्टीयव्याख्याग्रन्थं चापर्यालोचयन्तः कृष्णादिमानमविविच्यैवाङ्गीकुर्वन्तः वैशाखाद्यधिककृष्णमृतस्य सांवत्सरिकश्राद्धं कृष्णादिमानेन वैशाखकृष्णादौ आचरन्ति । तदुपष्टम्भकतया च मलमासमृतानामिति वचनमुपन्यस्यन्ति, अत्राधिकमृतस्येत्याद्युक्तिग्रन्थं च ।

ते तु अधिकमृतस्य अविशेषात् सौरमानाश्रयणे वैशाखाद्यधिशुक्लमृतस्य चैत्रशुक्ले प्रथममार्षिकापत्त्यादिदूषणगणग्रासेन, पूर्वोक्तनिर्णयसिन्धुग्रन्थविरोधात्, तत्रत्यटीकाग्रन्थविरोधात्, अत्राधिकमृतस्येत्यादिग्रन्थेन तदर्थस्यास्पर्शनाच्च सर्वथोपेक्ष्याः । कृष्णादिमानाश्रयणं तु अधिकविषये न केनापि गौडेन दाक्षिणात्येन वा निबन्धारेणाश्रितम् । तस्य कृष्णादित्वासम्भवात् ।

अत एव वाचस्पतिमिश्रैः नरहरिमिश्रैश्च द्वैतनिर्णये वैशाखाद्यधिककृष्णमृतस्य शुक्लादिमानेन वैशाखकृष्णे सांवत्सरिकं प्रतिवर्षमनुष्ठेयम् उल्लेखश्च तस्य कृष्णादिमानेन ज्येष्ठत्वेऽपि वैशाखत्वेनैव कार्य इत्युक्तम् । श्राद्धप्रकरणीयकृष्णभट्टीयेऽप्येवम् ।

तुल्यन्यायात् वैशाखाद्यधिककृष्णजन्मनो जन्मतिथ्युत्सवश्च शुक्लादिमानेन वैशाखकृष्णे एव कार्य इति चैत्राधिमासनिर्णये विनायकशास्त्र्यादयः । तस्मात् वैशाखाद्यधिककृष्णमृतस्य शुक्लादिमाने-

यत्तु वृद्धवसिष्ठः—

श्राद्धीयाहनि संप्राप्ते अधिमासो भवेद्यदि ।
मासद्वयेऽपि कुर्वीत श्राद्धमेवं न मुह्यति ॥

यच्च व्यासः—

*उत्तरे देवकार्याणि पितृकार्याणि चोभयोः ॥ इति,

तन्मासिकादिविषयम् ।

यौगादिकं मासिकं च श्राद्धं चा*परपक्षिकम् ।
मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ॥

इति स्मृतिचन्द्रिकोक्तेः । तैर्थिकं—*तीर्थश्राद्धम् । *तच्च दैवात्तीर्थप्राप्तौ मासद्वयेऽपि कार्यमिति त्रिस्थलीसेतौ भट्टाः ।

केचित्तु—

प्रतिमासं मृताहे च श्राद्धं यत्प्रतिवत्सरम् ।
मन्वादौ च युगादौ च तन्मासोरुभयोरपि ॥

इति मरीचिवचनात्,

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।

---

*उत्तरे इति ।

द्वौ मासावेकनामानावेकस्मिन् वत्सरे यदि ।

इति पूर्वार्द्धम् ।

*आपरपक्षिकं—कृष्णपक्षप्रयुक्तं, दर्शश्राद्धं, वा । *तीर्थश्राद्धमिति । अपूर्वे एव गयादिरूपे तीर्थे । तत्प्रयुक्तस्य स्नानश्राद्धपिण्डदानापूर्वदेवतादर्शनजपयात्रादेरुपलक्षणमिदम् । "पूर्वदृष्टेषु तीर्थेष्वेव" इति कालादर्शस्तु अपूर्वतीर्थमुद्दिश्य गमननिषेधपर इति व्यक्तमग्रे । *तच्चेति । निमित्तस्य नित्यत्वादिति भावः ।

---

न वैशाखकृष्णे सांवत्सरिकश्राद्धं प्रतिवर्षमनुष्ठेयत्वेन गौडदाक्षिणात्योभयनिबन्धकाराणां संमतम् । कृष्णादिमानमाश्रित्य तदनुष्ठानं तु भ्रान्तिमूलकान्धपरम्पराप्राप्तमेवेति दिक् ॥

मासद्वयेऽपि तत्कुर्याद्व्याघ्रस्य वचनं यथा ॥

इति गालवोक्तेश्च प्रत्याब्दिकं मासद्वये कार्यमित्याहुः। तत्तुच्छम्*। *"प्रतिमासं मृताहे क्रियमाणं मासिकम्, प्रतिवत्सरं क्रियमाणं कल्पादिश्राद्धम्" इति मरीचिवचसो मदनरत्नेन व्याख्यानात् । गालवीयस्य च मासद्वयात्मके क्षयमासे इति माधवेन* व्याख्यानात् ।

यच्च कैश्चिदुक्तं प्रथमाब्दिकं मासद्वये कार्यम्—

*आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे ।
त्रयोदशे च संप्राप्ते कुर्वीत पुनराब्दिकम् ॥

इति यमोक्तेरिति। तदपि चिन्त्यम्(१)। पुनराब्दिकं द्विती-

---

*तत्तुच्छमिति । प्रत्याब्दिकावृत्तौ मानाभावादिति हेतुरूह्यः।
वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृते ऽहनि ।
मलमासे न तत्कार्यं व्याघ्रस्य वचनं यथा ॥

इति सत्यव्रतेन मलमासे द्वितीयाब्दिकादिनिषेधात्, प्रथमाब्दिकस्य च हारीतादिभिर्मलमास एव विधानादिति भावः। एवं सति उक्तवाक्यादेरावृत्तिविधायकत्वप्रसङ्गं वारयितुं प्रकारान्तरेण योजनामाह—*प्रतिमासमिति। कल्पादयश्चाग्रे । *माधवेनेति । वस्तुतस्तु प्रथमाब्दिकं मलमासमृताब्दिकं च मलमासे एव, अन्यत्तु शुद्धमासे एवेति रीत्योभयत्राऽऽब्दिकं कार्यमिति गालवार्थः। तेन स्वाभाविकगतिमाश्रित्य यत्संज्ञकः क्षयस्तन्मासीयाब्दिकस्य तत्रैव सिद्धावपि न क्षतिः ।

*आब्दिकं—वार्षिकश्राद्धम् । रूढेर्योगापहारित्वात् ।

---

(१) एवं सति यत् केषां चित् शिष्टम्मन्यानां वार्षिकश्राद्धस्य मलमासेऽपि सङ्क्षेपेण स्वयमनुष्ठानम्, अज्ञान् प्रति तथोपदेशेन तथाऽऽचारप्रवर्तनं च, तदतिसाहसमिति कालतत्त्वविवेचने स्पष्टम् ।

यादिवार्षिकं त्रयोदशेऽतीते चतुर्दशे कुर्यात् । अन्यथा—

सांवत्सरं न वर्धेत* श्राद्धं तत्र मृतेऽहनि ।

इति पैठीनसिविरोधः स्यादिति हेमाद्रौ पृथ्वीचन्द्रोदये च । एतेन 'न वर्धेत न छिन्द्यात्, शुद्धेऽपि कुर्यादेव' इत्यनन्तभट्टव्याख्या मानाभावात्परास्ता । पूर्वव्याख्यायां तु हारीतीये प्रथमग्रहणमेव मानम् ।

यदपि निर्णयामृते *पूर्वोक्तकालादर्शवचनात् मलमासे श्राद्धदिनस्य वन्ध्यत्वानिरासार्थं पित्रुद्देशेन *ब्राह्मणान् भोजयित्वा शुद्धमासे सपिण्डकं श्राद्धं कुर्यात् ।

पिण्डवर्जमसंक्रान्ते संक्रान्तौ पिण्डसंयुतम् ।
प्रतिसंवत्सरं श्राद्धमेवं मासद्वयेऽपि च ॥

इति वृद्धपराशरोक्तेरिति । तदपि चिन्त्यम्* ।

---

*न वर्द्धेत—नातिवर्त्तेत । "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमम्" इतिहारीतवाक्ये वत्सरान्तरीयवार्षिकश्राद्धस्य शुद्धभागमात्रकर्त्तव्यत्वे एवाऽऽब्दिकस्य प्रथमत्वविशेषणं युज्यते । न च 'असंक्रान्तेऽपि'इत्यपिना शुद्धभागसमुच्चयः सुवचः । तस्य शुद्धभागरूपस्वाभाविकस्थानिकत्वलाभद्वारा तत्र कर्त्तव्यतानिवर्त्तकत्वात् । यथा "भ्रस्जो रोपधयो रमन्यतरस्याम्" इत्यत्र स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिस्तद्वत् । एवं च मसंक्रान्तस्य प्रथमाब्दिकमसंक्रान्ते कार्यमित्यर्थ इति, द्विःकर्त्तव्यतायां न साधकमिति भावः ।

*पूर्वोक्तेति । निमित्तनित्यतानिबन्धनं द्विष्कर्त्तव्यत्वं स्वारसिकतदर्थः । यदाब्दिकं तन्मलिम्लुचे प्रथममाद्यं कुर्वीत । त्रयोदशे संप्राप्ते सम्पूर्णे ऽतीते सति पुनश्चतुर्दशे मासि पुनर्द्वितीयं कुर्वीतेति हारीतवाक्यार्थोऽङ्गीकार्य इत्यभिमानः । *ब्राह्मणानिति । मलमासे श्राद्धनिषेधानां सपिण्डकश्राद्धपरत्वमित्याशयः ।

पूर्वोक्तवचनस्य क्षयपूर्वभाव्यधिकमासविषयत्वात् । तत्र हि मासद्वये श्राद्धमुक्तम् । तदाह सत्यतपाः—

एक एव यदा मासः संक्रान्तिद्वयसंयुतः ।
मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते ॥ इति ।

मासद्वयगतं—पूर्वासंक्रान्तगतं, क्षयगतं च । मलमासे—क्षयमासे, अपिशब्दात् तत्पूर्वाधिमासे चेति हेमाद्रिः । दीपिकाऽपि

*तत्प्राक्सङ्ग्यधिमासको यदि भवेत्तत्रत्यसांवत्सरं
तस्मिन् शुद्धतया क्षये च वचनात्कुर्याद्द्वयोः कोविदः ।

इति । *कालादर्शोऽप्येतद्विषय* एवेत्यलं बहुना ।
मलमासे वर्ज्यान्युक्तानि कालादर्शे—

अनित्यमनिमित्तं च *दानं च महदादिकम् ।

---

मलमासमृतानां मृतिमासे ऽधिके श्राद्धद्वये प्राप्ते "वर्षे वर्षे तु यच्छ्राद्धम्" इति शातातपवाक्यं शुद्धपरिसंख्यार्थम् । तेन तत्र तस्य सपिण्डकत्वमिति बोध्यम् ।

*चिन्त्यमिति । तद्बीजं च यदाब्दिकं तन्मले प्रथमं कुर्वीतेति नार्थः । "संक्रान्तिद्वयसंयुतः" इत्यग्रे विशेषाभिधानविरोधात् । अन्यासंक्रान्तसाधारण्येन तत्रापि द्विःकर्त्तव्यतासिद्धेरिति । एवं च वृद्धपराशरवचनार्थमाह—*पूर्वोक्तेति ।

क्षयगतस्य संसर्पसामान्यकर्त्तव्यताभ्रमं निरस्यति—*तत्प्राक्सङ्गीति । क्षयसमनन्तरपूर्वः संसर्प इत्यर्थः । "नास्तिवचनस्यातिभारः" इति न्यायादिति भावः । एतावता नित्यनिमित्तकतया सर्वं वार्षिकं मासद्वये कार्यमिति यथाश्रुतकालादर्शः—प्रथमाब्दिकं मलमासे, द्वितीयाद्याब्दिकं शुद्धे इति योजितः। परं तु निमित्तस्य नित्यत्वादुभयत्रेत्यत्र न स्वरस इत्यत आह—*कालादर्शोऽपीति । *एतद्विषय इति । क्षयमासे उभयत्रेत्यस्य स्वारस्यादिति भावः ।

*दानं चेति। काम्यत्वेन वर्ज्यत्वेऽपि—

न कुर्यान्मलमासे तु महादानव्रतानि च।

इति पुनर्निषेधः प्रत्यवायाधिक्यार्थः। अन्ये तु—

तुला, हिरण्यगर्भश्च, ब्रह्माण्डं, कल्पपादपः।
गोसहस्रं, हिरण्याश्वो, हिरण्याश्वरथो, धरा(१)॥
हिरण्यकामधेनुश्च, हेमहस्तिरथस्तथा।
पञ्चलाङ्गलकं(२), विश्वचक्रं(३), कल्पलता तथा॥
सप्ताब्धी, रत्नधेनुश्च, महाकलश एव च।

इति षोडशमहादानानि मुख्यानि। कुण्डमण्डपादीतिकर्त्तव्यताकलापनियमेन तत्र महादानत्वस्य मुख्यत्वात् तेषामेवायं

---

(१) धरा चात्र हैमी बोध्या।

कारयेत् पृथिवीं हैमीं जम्बुद्वीपानुकारिणीम्।
मर्यादापर्वतवतीं मध्ये मेरुसमन्विताम्॥
लोकपालाष्टकोपेतां नववर्षसमन्विताम्।
नदीनदशतोपेतामन्ते सागरवेष्टिताम्॥

इति हेमाद्रौ मात्स्योक्तेः।

(२) पञ्चलाङ्गलकदानं च-

पुण्यां तिथिमथासाद्य युगादिग्रहणादिकाम्।
भूमिदानं नरो दद्यात् पञ्चलाङ्गलकान्वितम्॥

इत्यादिना हेमाद्रौ स्पष्टम्।

(३) विश्वचक्रं च-

तपनीयस्य शुद्धस्य विषुवादिषु कारयेत्।
ज्येष्ठं पलसहस्रेण, तदर्धेन तु मध्यमम्॥
तस्यार्धेन कनिष्ठं स्याद्विश्वचक्रमुदाहृतम्।
अन्यद्विंशपलादूर्ध्वमशक्तोऽपि निवेदयेत्॥
षोडशारं ततश्चक्रं भ्रमन्नेम्यष्टकावृतम्।
नाभिमध्ये स्थितं विष्णुं योगारूढं चतुर्भुजम्॥
शङ्खचक्रेऽस्य पार्श्वे तु देव्यष्टकसमावृतम्।

इति। अरो—नाभ्यन्तोपक्रमान्तगामी शलाकाकृतिरवयवविशेषः। योगारूढं—हृद्देशावस्थापितहस्तद्वयमित्यादिना हेमाद्रौ मत्स्यपुराणे च स्पष्टम्।

अग्न्याधानाध्वरापूर्वतीर्थयात्रा(१)ऽमरेक्षणम् ॥
देवारामतडागादिप्रतिष्ठा *मौञ्जिबन्धनम् ।
आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः ॥
*राजाभिषेकः प्रथमश्चूडाकर्म व्रतानि च ।
अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम् ॥
स्नानं विवाहो नामातिपन्नं देवमहोत्सवः ।

निषेधः, न तु

कनकाश्वतिला नागा दासीरथमहीगृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥

इति कौर्मोक्तानाम् । तत्र कुण्डमण्डपाद्यसत्त्वेन महादानत्वस्य गौणत्वादित्याहुः, तन्न। "काम्यं नैव कदा च न" इत्यनेन विरोधात् ।

*मौञ्जीति । वटाश्वत्थादेरपि । *राजाभिषेक इति ।

वर्षवृद्ध्यभिषेकादि कर्त्तव्यमाधिके न तु ।

इति कौथुम्युक्तेरपि—

राज्ञो ऽभिषेकः प्रथमः शुद्धं कालं प्रतीक्षते ।
प्रत्याब्दिकस्य नित्यत्वात्कालमात्रेऽपि वा भवेत् ॥

इति वाक्येन व्यवस्थापनात्। यत्तु वर्षवृद्धिः—राजजन्मदिनोत्सवः, अभिषेकसाहचर्यात् । तयोश्चाधिके निषेधः । अन्यवर्णजन्मदिनोत्सवस्त्वधिके एव । यत्तु 'उपाकर्म तथोत्सर्गः प्रसवाह' इति वचनं, तद् "दशहरासु नोत्कर्षः" इति वाक्ये उपाकर्मोत्सर्जनयोः सौरस्यैव नियमितत्वात्तत्सहचरिते प्रसवाहेऽपि सौरे ध्रु-

(१) अयं निषेधो गयातिरिक्ते तीर्थे ।

गयायां सर्वकाले च पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ।

इति वायुपुराणात् । अत्र श्राद्धस्य यात्रापूर्वकत्वाद्यात्रायामपि न निषेध इति पुरुषार्थचिन्तामणौ । दैवात्तत्तीर्थप्राप्तौ गयाश्राद्धं न त्यक्तव्यमित्यर्थो मम भाति ।

व्रतारम्भसमाप्ती च कर्म *काम्ये च पाप्मनाम् ॥
प्रायश्चित्तं तु *सर्वस्य मलमासे विवर्जयेत् ।
उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् ॥
अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः ।
ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम् ॥
दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः ।
पूर्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकम् ॥ इति ।

अत्र मूलवचनानि हेमाद्रिमाधवादिभ्यो ज्ञेयानि । दिवोदासीयेऽपि-

यात्रोत्सवं च देवादिशपथं दिव्यमेव च ।
मलमासे न कुर्वीत व्यासस्य वचनं यथा ॥ इति ।

अयं निर्णयः क्षयमासेऽपि ज्ञेयः ।

*रविसंक्रमहीने यो वर्ज्यावर्ज्यविधिः स्मृतः ।
स एव तु द्विसंक्रान्ते मलमासेऽप्युदीरितः ॥

इति काठकगृह्योक्तेः । क्षयमासमृतानां प्रत्याब्दिके विशेषो हेमाद्रौ-

---

वे यत्र सौरमासस्यैव वृद्धिवशाच्छ्रैशत्तिथित आधिक्यं, तत्रोपाकर्मादितिथिद्वैधेन परतिथिपरमिति, तदसत् । राजजन्मदिनोत्सवस्यातिरिक्तस्यासत्त्वेनैतादृशार्थस्याशुद्धत्वात् । राजतदितरकर्तृकत्वरूपविशेषस्य कल्पितत्वात् । "आरभ्य जन्मदिवसम्" इत्यादिनोक्तस्य जन्ममासस्य चान्द्रत्वात्तन्मासकर्त्तव्यजन्मदिनोत्सवस्य वर्णान्तरेणापि पूर्वकर्त्तव्यताया अत्यन्तायुक्तत्वाच्च ।

*काम्ये इति-द्विवचनातं पूर्वान्वयि । *सर्वस्य-पाप्मनामित्यन्वयः । आसन्नमृत्युकस्य तु मलमासेऽपि सर्वप्रायश्चित्तं भवत्येव शुद्धमासासम्भवेन निषेद्धुमशक्यत्वात् ।

*रवीति । रविसंक्रमहीनत्वेन संसर्पाधिमासयोरनुगमः ।

तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तथोत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासावधिमासश्च निन्दितौ ॥

इत्युक्तेः । तत्र क्षयसंसर्पयोर्निन्द्यत्वं विवाहयज्ञोत्सवमङ्गलेष्वेव ।

एकत्र वर्षे ऽधिकमासयुग्मं यत्कार्त्तिकादित्रितये क्षयाख्यः ।
तद्वर्जनीयं त्रितयं प्रयत्नाद् विवाहयज्ञोत्सवमङ्गलेषु ॥

इति वचनात् । तत्र मङ्गलम्—

चूडां मौञ्जीबन्धनं च अग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते ॥

इति वचनोक्तं चूडादि । भानुलङ्घितः—संसर्पः ।

चूडां मौञ्जीबन्धनं च अग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च मलमासे विवर्जयेत् ॥

इत्यधिकमासे पुनर्वचनात् मौञ्जीनिषेधो वैश्यपरः । संसर्पे दाक्षिणायनान्तःपातेन विप्रक्षत्रयोस्तदप्रसक्तेः । महालयनिषेधश्च स्वकालातिपन्नतद्विषय इत्युक्तम् । एवं च

कार्त्तिकादिषु मासेषु यदि स्यातां मलिम्लुचौ ।
सर्वकर्महरः प्रोक्तः पूर्वस्तत्र मलिम्लुचः ॥

इति संसर्पस्य सर्वहरत्वस्मृतिर्व्याख्याता । यानि मासविशेषसापेक्षाणि चौलोपनयनविवाहमन्त्रदीक्षादीनि, यानि च तन्निरपेक्षाणि ऋत्वयनमात्रापेक्षाणि संसर्पांहस्पत्यातिक्रमेण कृतान्यपि स्वकालकृतान्येव, यानि चानावश्यकत्वाद्वत्सरान्तरीयतन्मासे सुकराणि व्रतविशेषतदुद्यापनादीनि तेषामधिमासे इव संसर्पेऽप्यकर्त्तव्यत्वात्, तयोश्च न काम्यस्य प्रथमारम्भः । वत्सरान्तरे सुकरत्वात् । अत एव मासविशेषसापेक्षाणां प्रत्याब्दिकादीनां शुद्धमासे सम्भवत्कर्त्तव्यताकतया ऽधिमासे ऽकरणेऽपि न संसर्पांहस्पत्योरकरणं तद्वद् भागद्वयाभावात् । एवं चाऽऽश्विनस्य संसर्पत्वे

*आब्दिकवद्धापनेऽपि ज्ञेयम्। यन्मलमासे वर्ज्यमुक्तं, तच्छुक्रगुर्वोरस्तादिष्वपि ज्ञेयम्। तदाह—बृहस्पतिः—

बाले वा यदि वा वृद्धे शुक्रे वाऽस्तंगते गुरौ।

---

तत्र कार्त्तिकस्नानं कार्त्तिकस्य क्षयत्वे तत्र चातुर्मास्यव्रतसमाप्तिः, पौषस्य क्षयत्वे तत्र माघस्नानं च न वारयितुं शक्यम्। संसर्पे च नाधिकमासिकम्। कालस्यानाधिक्यात्। तथा च क्षयसंसर्पाधिमासानां त्रयाणां समानविषयकनिषेधसिद्ध्यर्थं वर्ज्यावर्ज्यविधिरित्यस्य भानुलङ्घितसाधारणविधिनिषेधविषयकत्वमेवार्थ इति न कश्चिद्दोषः।

*आब्दिकवदिति। तिथ्यर्द्धवृत्तेर्मार्गशीर्षादेः कदाचिद्रात्रिपाते ऽष्टकाश्राद्धादिलोपप्रसङ्गः। एवं तन्मासीयतिथिपूर्वार्द्धमृतस्य ऊनमासिकं तत्तिथिप्राक्तिथ्युत्तरार्द्धे प्राप्स्यति। द्वितीयमासिकं तु प्रागाद्यमासिकात्तत्तिथ्युत्तरार्द्ध एव प्राप्नुयात्। अकरणे तु स्वोत्तरस्य मलत्वात्तत्साहित्येन सप्तदशानामननुष्ठानापत्तिरित्यत आब्दिकवर्द्धापनयोरेवैतद्वचनं वाच्यम्। अन्यत्र तु—

एकस्मिन् मासि मासौ द्वौ यदि स्यातां तयोर्द्वयोः।
ता एव पक्षौ ता एव तिथयस्त्रिंशदेव हि॥

इति वाक्यात्सर्वतिथीनां मासद्वयात्मकत्वमिति मदनरत्नानुरोधिनः। संसर्पे उक्तरीत्या कालाधिक्याभावान्नाष्टकादिलोपापत्तिः। तिथ्यर्द्धवाक्यं त्वेकमासलोपभ्रान्तस्य कस्य चिदाधुनिकस्यैव। परं तु क्षयमासजातवर्द्धापने तन्मृतप्रत्याब्दिकादौ च यौक्तिकतया तदुपयुज्यते। यत्तु—गतवर्षीयमार्गशीर्षपौषोभयश्राद्धमेकस्मिन् क्षये कार्यमुक्तवचनादिति, तदशुद्धम्। क्षयोत्तरस्य पौषत्वोपपादनात्क्रमेणैव तद्द्वयौचित्यात्। यत्तु—

मासः संक्रान्तिहीनोऽधिक इति कथितः शीघ्रमन्दप्रचारैः
संसर्पोऽंहस्पतिः स्यात्समविषमतया चालनं तत्क्षयस्य।
पूर्वैश्चन्द्रार्कयोगैर्विरहविहितसंक्रान्तितश्चालनं स्या-

मलमास इवैतानि* वर्जयेद्देवदर्शनम् ॥ इति ।
*अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे* ।
मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥

आवृत्ततीर्थे दोषाभावमात्रं, न तु फलमिति वाचस्पतिमिश्राः । तन्न । असति बाधके फलहेतुत्वाक्षतेः । लल्लोऽपि--

*नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा
वक्रस्यार्कस्य मासे यदि च न चलति वै मासयुग्मं विचिन्त्यम् ॥

इति वटेश्वरसिद्धान्ते मासयुग्मचिन्ताभिधानं, तत्त्वशुद्धमेवेति निष्कर्षानुसारिणः । *एतानि—अग्न्याधेयादीनि ।

ननु सामान्यतः कथं देवदर्शननिषेधः ।

अनादिदेवतार्चासु कालदोषो न विद्यते ।
नित्यास्वभ्यासयोगेन तथैवैकादशीव्रते ॥

इति ज्योतिःपराशरविरोधादित्यत आह—*अनादीति । अत्र निन्दापेक्षितविधेराक्षेपमपेक्ष्य लाघवेन विवर्जयेदित्यनुषङ्गः । एवं च 'अरुणया एकहायन्या' इत्यादौ अरुणयेत्यस्य कारकपदत्वात्प्रथमं क्रीणातिनाऽन्वयः, पश्चादेकहायन्याऽन्वय इतिवत् अनावृत्तामित्यस्य द्वितीयान्तत्वात्तदन्वितस्य वर्जनेऽन्वयाद्देवतादर्शनेऽप्यनावृत्तत्वं लभ्यते । यदि च दातृप्रदात्रादिपदवदनावृत्तपदस्य यौगिकत्वात्प्रथमतो विशेष्यपदार्थान्वयात् पश्चाद्वर्जने ऽन्वयो वाच्यः । स च न सम्भवति । तदन्वययोग्यदर्शनपदाभावादित्युच्यते; तदा अपिना अनावृत्तदेवतादर्शनं समुच्चित्य निन्दोपपाद्या । अनावृत्तेति समस्तपाठेऽपि तत्समुच्चय इति न ज्योतिःपराशरविरोधः । *नष्टभार्गवे इति । नष्टेति बालादेः, भार्गवे इति गुरोश्चोपलक्षणम् ।

सर्वेषामेकधर्माणामेकस्यापि यदुच्यते ।
सर्वेषां तद्भवेत् कार्यमेकरूपा हि ते स्मृताः ॥

इति न्यायात् । तदेतदाह—*नीचस्थे इति । नीचो—मकरः,

संन्यासो देवयात्राव्रतनियमविधिः कर्णवेधस्तु दीक्षा ।
मौञ्जीबन्धोऽङ्गनानां प्रतियमनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च ॥

इति । दीक्षा–यागदीक्षा, *न त्वागमदीक्षा । तथा–

उद्यानचूडाव्रतबन्धदीक्षा–
विवाहयात्राश्च वधूप्रवेशम् ।
तडागकूपत्रिदशप्रतिष्ठा
बृहस्पतौ सिंहगते न कुर्यात् ॥

दिवोदासीये–

गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे ।
गृहकर्म व्रतं यात्रां मनसाऽपि न चिन्तयेत् ॥

अस्यापवादस्तत्रैव ब्राह्मे—

मुण्डनं चोपवासश्च गौतम्यां सिंहगे गुरौ ।
कन्यागते तु कृष्णायां न तु तत्तीरवासिनाम् ॥

तथा—

आद्या सा गौतमी गङ्गा, द्वितीया जाह्नवी स्मृता ।
सर्वतीर्थफलं स्नानाद् गौतम्यां सिंहगे गुरौ ॥

संहिताप्रदीपे—

स्यात्सप्तरात्रं गुरुशुक्रयोश्च
बालत्वमह्नां दशकं च वार्द्धम् ।
वृद्धौ सितेज्यावशुभौ शिशुत्वे
शस्तौ यतस्तावुपचीयमानौ ॥

वसिष्ठः—

अतिचारगते जीवे वर्जयेत्तदनन्तरम् ।
व्रतोद्वाहादिकार्येषु अष्टाविंशतिवासरान् ॥

बाल्यादिलक्षणमुक्तं ब्रह्मसिद्धान्ते—

---

*न त्वागमदीक्षा । तस्याः श्रौतस्मार्त्तकर्मान्तःप्रवेशायोगात् । तत्र

रविणाऽऽसत्तिरन्येषां ग्रहाणामस्त उच्यते ।
ततोऽर्वाग्वार्धकं प्रोक्तमूर्ध्वं बाल्यं प्रकीर्तितम् ॥

इति ।

बाल्यादिपरिमाणं च वृत्तशते—

बालः शुक्रो दिवसदशकं, पञ्चकं चैव वृद्धः,
पश्चाद् अह्नां त्रितयमुदितः, पक्षमैन्द्र्यां क्रमेण ।
जीवो वृद्धः शिशुरपि तथा, पक्षमन्यैः शिशू तौ,
वृद्धौ प्रोक्तौ दिवसदशकं, चापरैः सप्तरात्रम् ॥

पश्चिमत उदये दशदिनानि बालः, अस्ते पञ्चदिनानि वृद्धः, पूर्वतो दिनत्रयं बालः, पक्षं च वृद्ध इत्यर्थः । जीवो—गुरुः । अन्यत्र त्वन्यथोक्तम्—

प्राक्पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः ।
विपरीते तु वृद्धत्वं, तद्वदेव गुरोरपि ॥ इति ।

एषां च पक्षाणां व्यवस्थामाह मिहिरः—

बहवो दर्शिताः काला ये बाल्ये वार्धकेऽपि वा ।
ग्राह्यास्तत्राधिकाः, शेषा देशभेदादुतापदि ॥ इति ।

देशभेदश्च मदनरत्ने गार्ग्यः—

शुक्रो गुरुः प्राक्च पराक्च बालो
विन्ध्ये दशावन्तिषु सप्तरात्रम् ।
वङ्गेषु हूणेषु च षट् च पञ्च

---

कालान्तरस्य वक्तव्यत्वात् । गुर्वादित्यादि विवाहे वक्ष्यामः । केचित्तु—

सिंहस्थौ गुरुशुक्रौ च सर्वारम्भेषु वर्जयेत् ।

इति पठन्ति ।

सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत् ।
अन्यत्र सिंहभागे तु सिंहस्थोऽपि न दुष्यति ॥

इति केचित् ।

द्धा च। *दिने तिथ्यन्तरसम्बन्धरहिता शुद्धा। तत्स-हिता विद्धा॥ तत्र शुद्धायामसन्देहा*द्विद्धा निर्णीयते।

सूर्यमण्डलेन सह परमसन्निकर्षानन्तरं विप्रकर्षः, परमविप्र-कर्षानन्तरं सन्निकर्षो वा यावता कालेन भवति, तावान्समयो लक्षणया शुक्लकृष्णपक्षयोः प्रतिपदादितिथिपदार्थः।

तत्र पक्षावुभौ मासे शुक्लकृष्णौ सदैव हि।
चन्द्रवृद्धिकरः शुक्लः, कृष्णश्चन्द्रक्षयात्मकः॥
पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदश स्मृताः।
दर्शान्ताः कृष्णपक्षे ताः, पूर्णिमान्ताश्च शुक्लके॥

इति षट्त्रिंशन्मतात्। *दिने—दिवसे, न त्वहोरात्रे। तेन यथा—

प्रतिपत्प्रभृतिः सर्वा उदयादोदयाद्रवेः।
संपूर्णा इति विख्याता हरिवासरवर्जिता॥

इत्युक्तसंपूर्णाया ग्रहः, तथा अहोरात्ररात्रिमात्रान्यतरसाध्या-न्यकर्मसु उदयास्तमयव्यापिन्या अपि।

अहःसु तिथयः पुण्याःकर्मानुष्ठानतो दिवा।
नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते॥

इति वाक्यात्—अहःसु यास्तिथयस्ताः पुण्याः। दिवैव कर्मणामनुष्ठानमित्युत्सर्गात्। "पूर्वाह्णो वै देवानां, मध्यं दिनो मनुष्याणाम्, अपराह्णः पितॄणाम्"इत्यहर्भागेष्वेव दैवादिकर्मवि-धानात् सूर्योदयं विना नैव स्नानादिकक्रम इति।

स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने।
आसुरी रात्रिरन्यत्र, तस्मात्तां परिवर्जयेत्॥

इति सामान्यतो रात्रिनिषेधाच्च।

प्रातः संध्यां बुधः कृत्वा संकल्पं तत आचरेत्।

इति सामान्यतो दिनारम्भे एव संकल्पविधानाच्च। *असं-देहादिति। अयं भावः—विधिष्वनुष्ठीयमानस्य विधेयस्याभ्युद-

तत्र सामान्यतो वेधमाह माधवीये पैठीनसिः—

यहेतुत्वं प्रमेयं तिथिद्वैधे क ?, सकृत्करणेनैव शास्त्रार्थसिद्धेर्गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वादिति सन्देहः । न चैष पूर्णायां तिथौ । तस्या एकत्वादिति । निषेधेषु तु कालविशेषे कर्मकरणस्यानर्थहेतुत्वं प्रमेयम् । यदा कदापि तत्काले कर्मकरणेऽनर्थप्रसङ्गानपायेन सर्वदैव तत्काले तद्वर्ज्यत्वाद्यावत्तिथिनिवृत्तिसिद्धेः । तदुक्तम्—

निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः ।
विधिः पूज्यतिथौ तत्र, निषेधः कालमात्रकः ॥
तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता ।
निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते ॥ इति ।

नन्वेवमपि विधौ कथं सन्देहः ?। कालस्य निमित्ततया प्रकृतानुपयोगात् । यदा कदाचित्तत्काले निमित्ते कर्मणोऽनुष्ठातुं शक्यत्वात् । सत्यम् । तस्याङ्गतया तत्प्रतीक्षया सन्देहः । तिथीनां विधिनिषेधाङ्गत्वं च तत्र तत्र सप्तम्यैव । न च सा निमित्तसप्तमी । उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् । "वसन्ते वसन्ते" इत्यादौ तु प्रतिनिमित्तं नैमित्तिकावृत्तिसिद्ध्यर्थं निमित्तसप्तमी। अन्यथा वसन्तादेः केवलाङ्गत्वे सकृदेव तत्कर्मकरणं स्यादिति वीप्सावैयर्थ्यात् । तत्र च न केवलनिमित्तत्वम् । तस्मिन्काले निमित्ते विदिते कालाकाङ्क्षायां विशेषासत्त्वादुपस्थितत्वाच्च तस्यैवाङ्गत्वस्यापि उपेयत्वात् । संक्रान्त्यादिकालस्य तु केवलनिमित्तत्वम् । तस्य सूक्ष्मत्वाद् दीर्घकालव्यापिश्राद्धादिकर्माङ्गत्वासम्भवेन तत्पूर्वोत्तरकालस्यैवाङ्गत्वात् । एवं रविवारादिनिमित्तकस्नानादौ निमित्तभूतसूर्योदयपूर्वकालस्य, करणनिमित्तोपवासप्रतिनिध्येकभक्ते निमित्तोत्तरकालस्य च वचनादङ्गत्वं बोध्यम् । नन्वेवं वचनान्न्यायतश्च सर्वनिषेधानां तात्कालिकत्वे

अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने ।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः ॥

*पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥

इति । हेमाद्रिमदनरत्नादौ तु द्विमुहूर्तोऽप्युक्तः—

*उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥

मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः ।
व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया ॥

इत्यभ्यङ्गमैथुनदन्तधावननिषेधेषु तात्कालिकत्वं व्यर्थम् । न च साकल्यवचनात्तत्तिथिरुदयास्तमयवर्त्तिनीति तद्वर्त्तितत्तिथिस्पृष्टेतरतिथावपि तत्तिथिनिषिद्धानां तेषामननुष्ठानं स्यादिति तथोक्तमिति वाच्यम् । यतस्तत्तत्कर्मकालभूताहर्भागविशेषे तत्तिथ्यभावेऽपि तत्तत्कर्मानुष्ठानार्थं साकल्यवचनम् । न च तस्य निषेधेषु प्रवृत्तिरिति । तादृशेतरतिथौ निषेधाप्रसक्तेः । सत्यम् । साकल्यवचने हि "स्नानदानजपादिषु" इति आदिशब्देन "दानाध्ययनकर्मसु" इति बहुवचनेन चानुष्ठेयानामेव कर्मणां ग्रहणम् । एवं च तदपवादे एतद्वचने अभ्यङ्गादित्रयस्योपादानं सकलनिषेधानामुपलक्षणार्थम् । जननमरणयोस्तु तद् दृष्टान्तविधया । न ह्यननुष्ठेययोस्तयोः साकल्यवचनं प्रवर्त्तते । न च जननमरणाभ्यां तन्निमित्तकं कर्म गृह्यताम् । तथाविधे साकल्यस्येष्टत्वात् । जननादिग्रहणं च तत्तत्तिथिविशेषाधिकरणकोत्पादनादेरुपलक्षणम् । तन्निमित्तकर्मणः साकल्यस्येष्टत्वात् ।

*पक्षद्वयेऽपीति । अत्र पूर्वया तिथ्योदयादुत्तरम्, उत्तरया चोदयात्पूर्वं त्रिमुहूर्त्तयां वेध इति नार्थः । वेधस्य दिनमात्रसाध्यत्वभङ्गापत्तेः । तस्य तादृशसाध्यत्वे मानम्—"उदिते दैवतं भानौ" इत्येव ।

*उदिते इति । उदिते भानौ यद् द्विमुहूर्त्तं तद्दैवतं—देवकर्मार्हम् । अस्तमिते—अस्तं गन्तुमारब्धे यदह्नस्त्रिमुहूर्त्तं तत् पित्र्यं—पितृकर्मार्हमित्यर्थः । अह्न इत्यन्वयादस्तमिते इति आदि-

इति विष्णुधर्मोक्तेः । *द्विमुहूर्तत्वं चानुकल्पः* ।
*द्विमुहूर्ताऽपि कर्तव्या या तिथिर्वृद्धिगामिनी ।

---

कर्मणि क्तः । "पक्षद्वयेऽपि" इतिवेधिकात्रिमुहूर्त्तसंबन्धेन वेधोक्ते-स्तस्यास्त्रिमुहूर्त्तसत्त्वं वाचनिकम् । वेध्यायास्तु तदार्थिकं न्याय-साम्यादिति । द्विमुहूर्त्तसत्त्वस्य कथं निवेश इत्यत्राह—*द्वि-मुहूर्त्तत्वं चेति । *अनुकल्पः—स्नानदानादिविषय इति तदर्थः । न च वेध्यायास्त्रिमुहूर्त्तत्वस्यार्थिकत्वे मानाभावाद् द्विमुहूर्त्तत्वं नानुकल्प इति वाच्यम् ।

पौर्वाह्णिकास्तु तिथयो दैवे कार्ये फलप्रदाः ।

इति वृद्धयाज्ञवल्क्येनाह्नः पञ्चभागेष्वाद्यभागरूपपूर्वा-ह्णभवत्वोक्तेः । "प्रातः संकल्पयेद्विद्वान्" इति त्रिमुहूर्त्तात्मकोपक्रमका-लावच्छिन्नायास्तिथेरेव "यो यस्य विहितः कालः" इत्यनेनाङ्गत्वो-क्तेश्च । माधवाचार्या अपि पञ्चधा विभागो बहुस्मृत्युक्तत्वात्सर्वत्र ग्राह्य इति बहुसमयकर्त्तव्यव्रतदानादौ त्रिमुहूर्त्ता तदनुकल्पतया पौर्वाह्णिकत्वामितरपक्षोपग्रहार्थमिति रीत्या त्रिमुहूर्त्तत्वं मुख्यं वदन्ति।

वस्तुतस्तु पक्षद्वयेऽपीति यदि पूर्वां तिथिमुत्तरास्तिथय-स्त्रिभिर्मुहूर्त्तैर्युक्ता एव सत्यः (१)स्पृष्टाश्चेद्विद्धा इति व्यवहा-र्याः, तदोत्तरां तिथिं पूर्वा अपि मुहूर्त्तत्रयावच्छिन्ना एव स्पृश्या इत्यर्थः । तथा सत्येव युग्मखर्वसाकल्यादिशास्त्रप्रवृत्त्युपयोगितया त्रिमुहूर्त्तत्वविशिष्टतिथिद्वयसम्बन्धस्य वेधत्वसिद्धेः त्रिमुहूर्त्तोनवे-धिकासम्बन्धस्य त्रिमुहूर्त्तोनवेध्यासम्बन्धस्य च किंचिन्न्यूनतिथि-द्वयसम्बन्धतया प्रकृतानुपयोगात् ।

*द्विमुहूर्त्ताऽपीति ।

---

(१) स्पृष्टा इत्यस्य विध्यन्ति इत्यनेनाऽन्वयः । स्पृष्टाः सत्यः पूर्वां तिथिं विध्यन्ति चेद् विद्धाः । एवमुत्तरत्रापि मुहूर्तत्रयावच्छि-न्ना एव स्पृश्याः सत्य उत्तरां तिथिं विध्यन्ति चेद् विद्धा इति व्यव-हार्या इत्यर्थः ।

इति दक्षेणापि*शब्दोक्तेः। अयं वेधः प्रातरेव। सायं तु त्रिमुहूर्तो वेध एव

*यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्तैव या भवेत्॥

इति स्कान्दोक्तेः। दीपिकापि—'त्रिमुहूर्तगा तु सकला सायम्" इति। यानि तु—

व्रतोपवासस्नानादौ घटिकैकापि या भवेत्।
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके॥

इत्यादीनि स्कान्दादिवचनानि *तानि वैश्वानराधि-

---

त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी।

इति पूर्वार्धम्। *अपिशब्देति। तथा च पूर्वार्धेऽप्यपिशब्दान्वयान्न त्रिमुहूर्तत्यागे द्विमुहूर्तग्रहणे च तात्पर्यं, किन्तु द्विमुहूर्तत्वस्यानुकल्पत्वे इति। अयं निषेधो न त्रिमुहूर्तव्याप्तिबाधनाय, किन्तु चतुर्थमुहूर्तस्पर्शित्वविधित्सयेति त्रिमुहूर्तव्याप्तेर्मुख्यत्वमित्यन्ये। क्षयिण्यां त्रिमुहूर्तग्राह्यतानिषेधस्तदन्यस्यां तद्ग्राह्यतासाधकः, निषेधस्य प्राप्तिपूर्वकत्वादिति तस्यामुख्यत्वमितीतरे।

ननूदितवाक्ये यथासंख्यान्वयस्यानिर्बीजत्वात् सायमपि द्विमुहूर्तत्वमनुकल्पोऽस्तु इत्यत्राह—*यामिति। त्रिमुहूर्तेत्यत्रैवकाराद्,

यां प्राप्यास्तमुदेत्यर्कः सा चेत् स्यात्त्रिमुहूर्तगा।
धर्मकृत्येषु सर्वेषु सम्पूर्णां तां विदुर्बुधाः॥

इति विष्णुरहस्ये उद्देश्यविधेयभावेन त्रिमुहूर्तवत्त्वस्यैव पूर्णत्वोक्तेर्द्विमुहूर्तत्वनिवेशासम्भवाच्च।

*वैश्वानरेति। "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्याम्नाय "यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालो भवति त्रिवृतैवास्मिंस्तेजो दधाति"इत्यादिना

करणन्यायेनावयव*स्तुत्या त्रिमुहूर्तप्रशंसापराणि ।
तिथिविशेषे वेधविशेषः स्कान्दे—

*नागो द्वादशनाडीभिर्दिक्* पञ्चदशभिस्तथा ।
*भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥ इति ।

अयं चो*पवासातिरिक्तविषय इति वक्ष्यते ॥ इति वेधः ॥

तत्र सर्वा तिथिर्यदहःकर्मकाल*व्यापिनी, सैव ग्राह्या ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
*तया कर्माणि कुर्वीत, ह्रासवृद्धी न कारणम् ॥

---

फलवदष्टाकपालाद्युक्तम् । तत्रोत्पत्तिशिष्टद्वादशकपालावरुद्धे उत्पन्नशिष्टानामष्टाकपालादीनां निवेशे वाक्यभेदः स्यादतोऽवयवद्वाराऽवयविभूतद्वादशकपालस्तुतिराश्रीयते तद्वदित्यर्थः । *अवयवः-एकघटिका । *नागः—पञ्चमी ।*दिक्—दशमी ।*भूतः—चतुर्दशी । *उपवासातिरिक्तेति । "सर्वप्रकारवेधोऽयम्"इति वाक्यात् ।

*कर्मकालेति । कर्म षड्विधम् । उपवास—एकभक्त—नक्त—अयाचित—व्रत—दानभेदात् । अत्रोपवासे अहोरात्रस्तत्कालः । तस्याहोरात्राभोजनसङ्कल्परूपत्वात् । तदहोरात्रावच्छिन्नद्वितीयभोजनाभावविशिष्टं मध्याह्नभोजनमेकभक्तम् । तादृशं प्रदोषभोजनं नक्तम् । अयाचितलब्धस्य तादृशं सकृद्भोजनमयाचितम् । तेष्वपि विशेष्यांशे मध्याह्नादिः, विशेषणांशे चाहोरात्र एव कालः । एवं दानव्रतयोरपि प्रातरादिः । तत्तत्कर्मणि तत्तद्व्यापिनीत्यर्थः ।

*तया कर्माणीति । तत्र कालस्यानुपादेयत्वाद् यथा तत्तत्तिथिपरित्यागेन कर्म दुष्करं, तथा तत्तदहर्भागपरित्यागेनापि । अन्यथा "यावज्जीवमग्निहोत्रं जुहोति"इति यावज्जीवकालात् प्रातरादिभागं विहायापि अग्निहोत्रं हूयेतेति भावः । कर्मकालव्याप्तिर्द्वेधा । साकल्येन एकदेशेन वा । सापि पुनर्द्वेधा । पूर्वेद्युरेव, परेद्युरेवेति । एषु पक्षेषु सैव ग्राह्या । दिनद्वये तद्व्याप्त्यादौ त्वाह—

इति विष्णुधर्मोक्तेः। *दिनद्वये तद्व्याप्तावव्याप्तावेकदेशव्याप्तौ वा *युग्मवाक्यान्निर्णयः। *तस्य पूर्वोऽबाधेनोपपत्तेः। कर्मकालस्य प्रधानाङ्गत्वाच्च। युग्मवाक्यं तु निगमः।

---

*दिनद्वये इति। *युग्मवाक्यात्, खर्वादिवाक्यात्, शुक्लादिवाक्याच्च। नन्वस्तु कर्मकालशास्त्राद् ह्रासवृद्धिशास्त्रं(१)दुर्बलम्। एकदिन एव तत्सत्त्वेनासन्देहात्, 'ह्रासवृद्धी न कारणम्'इत्युक्तेः। न तु युग्मशास्त्रम्। तथा च तेन कर्मकालशास्त्रबाधो दुर्वार इत्यत्राह—*तस्येति। अयं भावः—तत्तत्कर्मसु विहितायां तत्तत्तिथौ खण्डायां संदेहे सति निर्णयार्थं युग्मवाक्यादित्रयप्रवृत्तिः। तिथ्यादिविधिप्रवृत्तिसमकालमेव च प्रातरादिभागविधिप्रवृत्तिः। प्रयोगविधिना कालस्योपादेयत्वात्। एवं च तेषां [illegible] तत्तत्कालीनतिथिलाभे तस्यां तत्तत्कर्मणि न संदेहः। एतदेव कर्मकालशास्त्रेण वाचो भङ्ग्या बोध्यते। ततश्च कर्मकाल एव प्रवर्त्तको, न तु ह्रासवृद्ध्यादि। दानव्रतयोरपि "[illegible] तिथयः" इति कालविशेषसत्त्वेन स एव कर्मकालः प्रवर्त्तकः। 'ह्रासवृद्धी न कारणम्'इत्यत्र ह्रासवृद्धिपदस्य युग्मानुपलक्षणतया युग्मादिशास्त्रं खर्वादिशास्त्रं च न कुत्रापि पुरस्तात्प्रवृत्तिप्रयोजकम् असंदेहादिति। यत्र कर्मकालानुरोधेन निर्णयो दुष्करः दिनद्वये कर्मकालव्याप्तौ, साम्येनैकदेशव्याप्तौ च प्रवर्तितेऽपि कर्मकालशास्त्रे सन्देहानपायात्, दिनद्वये तदव्याप्तौ कर्मकालशास्त्रौदासीन्येन संदेहतादवस्थ्यात्; तत्रैव विषये इतरशास्त्राणि निर्णायकानीति युग्मशास्त्रादेरुपरिष्टादेव प्रवृत्तिः। वैषम्येणैकदेशव्याप्तौ तु आधिक्यानुगृहीतकर्मकालशास्त्रादेव संशयनिरास इति। एवं च

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम्* ।
एतद्व्यस्तं* महादोषं, हन्ति पुण्यं पुरा कृतम् ॥ इति ।

अत्र रन्ध्रान्ताः शब्दा द्वितीयादिनवम्यन्ततिथिवाचकाः । रुद्रः—एकादशी । द्वितीया तृतीयायुता, सा च द्वितीयायुतेति *सप्तयुग्मानीत्यर्थः । इदं च शुक्लपक्षे *अमाप्रतिपद्युग्मस्य पूर्णिमायाश्च तत्रैव सत्त्वादिति के-

---

दिवारात्रिव्रतं यच्च एकमेव तिथौ गतम् ।
तस्यामुभययोगिन्यामारभेत्तद् व्रतं व्रती ॥ इति ।
त्रिसन्ध्यव्यापिनी या स्यात्सैव पूज्या सदा तिथिः ।

इत्यादिकं कर्मकालशास्त्रसिद्धार्थकमेव । यदा तिथिरेकत्र दिने अहोरात्रयोगिनी, अन्यस्मिंश्चाहर्मात्रयोगिनी, रात्रिमात्रयोगिनी वा; तदा ऽहोरात्रसाध्ये उपवासादौ अन्यतरमात्रयोगिनीं त्यक्त्वोभययोगिन्या एव(१)। न्यायतः कर्मकालव्याप्तेः प्राप्तेः । *महाफलं—तत्तत्तिथिकृततत्तत्कर्मफलदातृ । *व्यस्तम्—अन्यथा कृतम् । महादोषम्—कर्मवैगुण्यकारि ।

*सप्तेति । युग्मगता पूर्वा तिथिरुत्तरविद्धा उदयव्यापिनी, उत्तरा च पूर्वविद्धा अस्तमयव्यापिनी ग्राह्येत्यत्र तात्पर्यम् । *अमेति । द्वितीयादिकयुग्मस्य पक्षद्वयवर्तित्वात् त्यागः । अत्र साहचर्यस्य नियामकत्वमयुक्तम् । तस्य सन्निधिरूपतया स्थानावान्तरभेदत्वानुमुख्यत्वेन पक्षद्वयवर्तितिथिवाचिद्वितीयादिपदश्रुत्या बाधात् । तदुक्तं—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यम्" इति । (अ० ३ पा० ३ सू. १९ जै०) अत एव ताण्डिशाखायां "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यने-

चित्। *तत्त्वं त्वमा*प्रतिपद्युग्मात् कृष्णपक्षालिङ्गात् पक्षद्वयपरमिदं *तत्तद्विशेषवाक्यैः *कृष्णे तिथिविशेषेऽपोद्यते इति। दशमी तूक्ता पुराणसमुच्चये—

*संपूर्णे दशमी कार्या मिश्रिता, पूर्वयाऽथवा। इति।

संपूर्णे—शुक्लपक्षे। त्रयोदशी तु सुमन्तुनोक्ता—

कतच्छाखोक्तगुणैरुद्गीथाख्यभक्त्युपासनं, सन्निधिविशेषात्स्वशाखोद्गीथस्य वेति पूर्वपक्षो मुख्यवृत्त्या सामान्यवाचकोद्गीथपदश्रुत्या तत्सामान्योपस्थितेस्ताण्डिशार्दूलादिसर्वशाखोद्गीथोपासनमुपेत्य निरस्तो ब्रह्ममीमांसायामित्यभिप्रायकत्वात्—*तत्त्वं त्विति। *अमेति। पूर्णिमामात्रं च शुक्लपक्षलिङ्गं द्रष्टव्यम्। *तत्तद्विशेषेति। "प्रतिपत्सद्वितीया स्यात्" इत्यादिभिरित्यर्थः। यदि च तेषामपि सामान्यवाक्यत्वमुच्यते, तदा तत्तत्कर्मकालशास्त्रोत्तरप्रवृत्तिकेनैतद्वाक्येन संकष्टचतुर्थ्यादेर्दिनद्वयसत्त्वे प्राप्तं परविद्धत्वं "चतुर्थी गणनाथस्य" इत्यादिनाऽपोद्यते इत्यर्थः। *कृष्णे इति शुक्लोपलक्षणम्।

*संपूर्णे इति। अत्र हेमाद्रिः संपूर्णेति पाठः। संपूर्णे इति, संपूर्णे शुक्लपक्षे इति च प्रमादात्। अन्यथा कृष्णपक्षे विशेषालाभापत्तेः। न च शुक्लपक्षे इत्युक्तमप्यतन्त्रम्।

युक्ता न दूषिता यस्मादिति सा सर्वतो मुखी।

इतिवाक्यशेषात्। यतः सा सर्वतोमुखी अतोऽविशेषेण पूर्वा, परा वेत्यर्थादिति वाच्यम्। "शूर्पेण जुहोति, तेन ह्यन्नं क्रियते" इत्यत्र हेतुवाचिहिशब्दाद् [illegible]साधनमतः शूर्पेण होतव्यमिति शूर्पत्वाद्यविवक्षया पिठरादेः प्राप्तमपि होमसाधनत्वमानुमानिकमिति विभक्तिश्रुत्यवगतशूर्पसाधनत्वाद् दुर्बलत्वादुज्झितं, तद्वत् प्रकृतेऽपि सप्तमीविभक्तिश्रुत्या शुक्लपक्षावच्छिन्नदशम्या एव पूर्वापरविद्धत्वं स्यात्। तस्मात्संपूर्णेति पाठः। तत्र मूलाग्रयोरुभयोरपि मुख्यत्वोक्तेरविशेषबोधनद्वारा व्रीहियववद्विकल्प इति। वस्तुतस्तु

त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने । इति ।

कृष्णपक्षे त्वापस्तम्बः—

*प्रतिपत्सद्वितीया स्यात्, द्वितीया प्रतिपद्युता ।
चतुर्थीसंयुता या च सा तृतीया फलप्रदा ॥
पञ्चमी च प्रकर्तव्या षष्ठ्या युक्ता तु नारद ।
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥

---

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इतिशुक्लकृष्णवाक्यमेव तत्र व्यवस्थापकं न तु तुल्यवद्विकल्पः ।

उदासीने तु शास्त्रार्थे पुरुषेच्छा नियामिका ।

इति पुमिच्छाश्रयणानौचित्यात् । एवं च संपूर्णे इति पाठोऽपि सुयोज्यः । शुक्लपक्षे दशमी परविद्धा, अथ वा—पक्षान्तरे कृष्णपक्षे सा पूर्वविद्धेत्यर्थात् इति ।

*प्रतिपदिति । इदं च सामान्यवचनं तत्तद्विशेषैरपोद्यम् । एवं च यत्र परस्परविरुद्धं युग्मवाक्यद्वयं प्राप्नोति, यथा तृतीयायाम् । तत्र "रम्भाख्यां वर्जयित्वा तु" इत्यादिकं प्रबलं व्यवस्थापकम् । यत्र च तादृशं न व्यवस्थापकं किञ्चिदास्ति, तत्र पूर्वोक्तं शुक्लकृष्णवाक्यं व्यवस्थापकम् । विरुद्धयुग्मवाक्यद्वयाविषय इव तद्विषयेऽपि तस्य निष्प्रत्यूहं प्रवृत्तेः । न च शुक्लकृष्णवाक्यं युग्मवाक्यप्रवृत्तिसमये तत्तद्विशेषवाक्यप्रवृत्तिसमये वा कुतो न प्रवर्त्तते ? । (१)युग्माग्नियुगादौ पूर्वस्या उत्तरविद्धाग्राह्यत्वेन (२)परस्य, उत्तरस्याः पूर्वविद्धाग्राह्यत्वेन पूर्वस्य च विरोधात् । एवं "प्रतिपत्साद्वितीया" इत्येतत्प्रवृत्तिसमयेऽपि । अत एव

---

(१) 'युग्माग्नियुगभूतानाम्' इत्यत्रेत्यर्थः ।

(२) 'कृष्णपक्षे तिथिर्ग्राह्या, इत्यस्येत्यर्थः । एवं पूर्वस्येत्यस्य 'शुक्लपक्षे तिथिर्ग्राह्या' इत्यस्येत्यर्थो बोध्यः ।

पूर्वविद्धा प्रकर्तव्या, पराविद्धा न कुत्रचित् ।
दशमी च प्रकर्तव्या सदुर्गा द्विजसत्तम ॥
षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः, पराः पूर्वेण संयुताः ॥ इति ।

*यत्तु व्याघ्रः—

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ, हिंसा स्यात् पूर्वकालिकी ॥
इति । खर्वः—साम्यं, दर्पो—वृद्धिः, तयोः परा । हिंसा—क्षयस्तत्र पूर्वेत्यर्थः । एतच्छ्राद्धादि*विषयम् ।

---

दैवपित्र्यसाधारण्येन प्राप्तमौदयिकत्वं

दैवे कर्मणि संप्राप्ते यस्यामभ्युदितो रविः ।
सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी ॥

इतिपरिसंख्यातमिति कथं दैवेऽस्तमयातिथिग्रह इत्यपाकृतम् । उक्तरीत्या दैवेऽप्यस्तमयातिथिग्रौण्ये शुक्लकृष्णसाधारण्येन पित्र्ये आपराह्णिकत्वं तेन विधीयते, तत्स्तुत्यर्थं च दैवौदयिकत्वोक्तिरित्युपगमात्। त्रिदोषपरिसंख्याऽनुपगमात्।"उत्तरेऽहन्द्विरात्रस्य गृह्यते" इत्यौत्तराहिकस्य षोडशिग्रहस्य आङ्गिरसां द्विरात्रे"वैखानसं पूर्वेऽहन् साम भवति, षोडश्युत्तरे" इति परिसंख्यानान्न सर्वद्विरात्रे षोडशिग्रह इति प्राप्तस्य त्रैदोष्यादेव वैखानसस्य विध्यर्थत्वाद्त्वमुपेत्य निरासात्। न च 'कृष्णपक्षे तु' इत्यसङ्गतं युग्माग्निवाक्यवत् 'प्रतिपत्सद्वितीया'इत्यादेरपि शुक्लकृष्णपक्षसाधारण्यादिति वाच्यम् । पारिशेष्यात्तस्य कृष्णपक्षविषयत्वात् । एतच्चाग्रे वक्ष्यते ।

*यत्त्विति । यदा युग्मवाक्यं प्रवर्त्तते, तदैवास्य प्रवृत्तेः सन्देहो दुर्वार इत्याशयः । *श्राद्धादीति । कर्म द्विविधं—दैवं, पित्र्यं च । तत्र खर्वादिवाक्यं पित्र्यविषयमित्यर्थः । एतेन

*द्वितीयादिकयुग्मानां पूज्यता *नियमादिषु ।
एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना ॥
इति व्यासोक्तेः । नियमादिषु—व्रतदानादिदैव*कर्मसु ।
*एकोद्दिष्टादितिथिवृद्ध्यादावित्यर्थः ।

---

युग्मादिवाक्यस्य दैवविषयकत्वं ध्वनितम् । तदाह—*द्विती-याादिकेति । नियमो—व्रतम् । आदिपदं सादृश्यात्सर्वदैवकर्मपर-मित्याह—*दैवेति । ह्रासवृद्ध्यादिचोदना—खर्वादिवाक्यम् । ननु वृद्ध्यादाविति वृद्धिपदमयुक्तं वृद्धिश्राद्धस्य तिथ्यप्रयुक्तत्वादत आह—*एकोद्दिष्टादीति । अथ ह्रासवृद्धी चन्द्रह्रासवृद्ध्युपलक्षि-तकृष्णशुक्लपक्षौ तच्चोदना—शुक्लकृष्णवाक्याधीनः—शुक्लपक्षतिथिः (१)उत्तरा, कृष्णपक्षतिथिः पूर्वेति निर्णयः तत्र एकोद्दिष्ट्यादि-माध्याह्निकं पित्र्यं, वृद्ध्यादि—पौर्वाह्णिकं पित्र्यं विषय इत्यर्थोऽस्तु; आपराह्णिकपित्र्ये तु पक्षद्वयेऽप्यस्तमयव्यापिनी तिथिर्ग्राह्या ।

ययाऽस्तं सविता याति पितरस्तमुपासते ।
तिथिं, तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयंभुवा ।

इतिहेतुमन्निगदरूपवाक्यशेषादिति चेन्न । यतो दैवेषु युग्मवा-क्यमेव निर्णायकमिति नार्थः । तदविषये शुक्लकृष्णवाक्यप्रवृत्तेः, किन्तु युग्मवाक्यं दैवविषयमेवेति । अत एव पश्चार्द्धेऽपि शुक्ल-कृष्णवाक्यमेव पित्र्ये एव निर्णायकमिति नार्थः, तस्य दैवेऽपि प्र-वृत्तेरिति । ह्रासवृद्ध्यादिचोदनाशब्दे लक्षणापत्तेश्च ।

वस्तुतस्तु अव्यवस्थाप्राप्तौ पूर्वोत्तरतिथिव्यवस्थापकं शुक्ल-कृष्णपक्षवाक्यम् । तच्च पित्र्ये न प्रवर्त्तते । एकैकदिने कर्मकाल-व्याप्तौ तयैव, वैषम्येण तद्व्याप्तावाधिक्येन, साम्येन तद्व्याप्तौ—उभयत्र तद्व्याप्तौ—तदस्पर्शे वा अस्तमयापराह्णव्याप्तिभ्यां खर्वादि-

---

(१) उत्तरतिथिविद्धेत्यर्थः । एवं पूर्वेत्यत्रापि बोध्यम् ।

*कर्मकालव्याप्त्यभावे तु कर्मोपक्रमकालगैव ग्राह्या ।

कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या, न युग्मादरः ।

इति दीपिकोक्तेः । यानि तु—

---

वाक्यवशेन व्यवस्थासत्त्वात् । नापि "यथाऽस्तं सविता याति" इत्यादेरापराह्णिकपित्र्यविषयत्वात् माध्याह्निकादिपित्र्येऽव्यवस्थापत्तिः । "उदिते दैवम्"इत्यादिसामान्यवाक्यवशादपराह्णोऽह्नोऽपरभाग इति कुतपपूर्वार्द्धोपक्रमिण एकोद्दिष्टस्यापि तादृशापराह्णे समाप्यत्वेन सङ्ग्रहात् । अन्यथा शुक्लपक्षे कुतपपूर्वार्द्धोपक्रमिणः पार्वणस्याप्यसङ्ग्रहात् ।

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।

कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥

इत्युक्तेः । उपक्रमे रौहिणलङ्घनं निषेधता चानेनोपक्रमकाल एवोच्यते, न तु रौहिणे समाप्यत्वम् । येन

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।

इतिवदेकोद्दिष्टमात्रविषयकत्वं स्यात् । अत एव वृद्ध्यादौ—वृद्ध्यादिप्रयुक्ते संशये ह्रासवृद्ध्यादिचोदना—शुक्लकृष्णवाक्यमित्यपि नार्थः । तिथिखण्डत्वभिन्नस्य वृद्ध्यादेः सन्देहोत्थापकताया अनैकान्तिकत्वाच्च । वृद्ध्यादीत्यादिना क्षयसाम्यग्रहः । एतच्च कर्मकालशास्त्राबाधेन खर्वादिशास्त्रवद्युग्मादिशास्त्रवदिति बोधनाय । एकोद्दिष्टादीत्यादिना पार्वणस्य यज्ञोपवीतित्वादिदैवधर्मकस्य दैवश्राद्धादेश्च पित्र्यस्य ग्रहः । एतेन वृद्धिः—लक्षणया पुत्रोत्पत्तिनिमित्तकश्राद्धं तदादिः प्रकृतिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा दैवश्राद्धग्रह इत्यपाकृतं, लक्षणापत्तेः । *कर्मकालेति । एवकारेण कर्मकालेनानिर्णये यद्युग्मशास्त्रस्य निर्णायकत्वमुक्तं, तत् तदुपक्रमस्य निर्णायकत्वासंभवे एव, नान्यथा । तस्य कर्मकालसमत्वात् ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥

इत्यादीनि*, तानि *त्रिमुहूर्तादिस्तुतिरिति निर्णयशैली ॥

---

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।
विद्यमानो भवेदङ्गं नोदितो[illegible]क्रमेण तु ॥

इति बौधायनवचनाद्धेति सूचितम् । यथा साम्येन एकदेशव्याप्तौ यत्कर्म मध्याह्नादावेवोपक्रम्य समाप्यते, तत्रैव कर्मोपक्रमयोगिनी युग्मशास्त्रबाधश्चेत्यर्थः । दिनद्वये कर्मकालव्याप्तौ तदस्पर्शे वा पूर्वमेवोपक्रम्य मध्याह्नादावनुष्ठीयमाने कर्मणि साम्येन तदेकदेशस्पर्शेऽपि युग्मवाक्यात् खर्वादिवाक्याद्वा निर्णयः । तत्र कर्मकालशास्त्रेण निर्णेतुमशक्यत्वात्, यो यस्येत्युपक्रम्य तदुपक्रमे इत्युक्तेरावृत्त्या तस्मिन्काले, तस्य कर्मण उपक्रमे—तत्कालीनतत्संकल्पे इत्यर्थात्तदप्रवृत्तेश्च । उपक्रमः—सङ्कल्पः । "सङ्कल्पो व्रतसत्रयोः" इत्युक्तेः । *इत्यादीनीति । आदिना

यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिः सकला ज्ञेया स्नानदानजपादिषु ॥

इत्यादिसङ्ग्रहः । *त्रिमुहूर्त्तादीति । आदिना केवलौदयिकगौरीव्रतादिरूपतन्न्यूनसंग्रहः । वस्तुतस्तु त्रिमुहूर्त्तादिस्तुतिरित्यसङ्गतम् । एतद्वचनयोरुदयास्तमयगततिथेः स[illegible]प्रतिपादकत्वात् । तत्प्रतिपादनं च [illegible]न्तरेण त्रिमुहूर्त्तायास्ततो न्यूनाया वा पूर्वस्या उत्तरस्या वा तिथेर्ग्राह्यत्वे सिद्धे तत्तदहर्भागे तिथेरभावेऽपि तत्रैव कर्मानुष्ठानार्थम्, न तु युग्मादिवाक्याविषयिण्या अपि तिथेरेतद्वाक्यवशाद्ग्रहः । त्रिमुहूर्त्तादिवैयर्थ्यात् । एवं च यत्राङ्गभूतायास्तिथेः कर्मसङ्कल्पकालेऽभावस्तत्रापि क[illegible]यैवोल्लेखः सङ्कल्पतिथेस्तदधिकरणत्वस्य तद्विधियोगप्रयुक्तत्वात् । लौकिके तु कर्मणि न [illegible]ल्लेखः । तस्या

अनङ्गत्वात् । अनेकदिनसाध्ये कर्मणि तु अद्य प्रभृत्येतावद्दिनपर्यन्तमित्येव । मध्यवर्त्तितिथेः शास्त्रतोऽङ्गत्वाभावेऽपि अनायत्याङ्गत्वोपगमात् । साकल्यवचनात्तत्काले एव तिथ्यभावेऽपि यत्कर्मानुष्ठानं, तत् मन्वादिकर्त्तव्यस्नानश्राद्धादिव्यतिरिक्तविषयम् ।

अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने ।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः ॥
मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः ।
व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया ॥

इति स्कान्दात् । तस्माद् यानि

आदित्योदयवेलायां या ऽल्पापि च तिथिर्भवेत् ।
पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विना ॥
व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।

इत्यादीनि मुहूर्त्तत्रयन्यूनाया अपि सम्पूर्णत्वप्रतिपादकानि, तानि कैमुतिकन्यायेन त्रिमुहूर्त्तस्तुतिरिति दिक् । केचित्तु युग्मवाक्यमुपवासमात्रपरम् । यतः त्रिमुहूर्त्तया पूर्वतिथ्या विद्धा सती या उत्तरादिने त्रिमुहूर्त्ता तदधिका वा यद्युत्तरैव युग्मा, तदा युग्मवाक्यमेव निर्णायकम् । तद्वशादहोरात्रोऽप्यस्तु यदि पूर्वाह्ने या उदयवाक्यं चोत्तरस्या अङ्गत्वयोग्यतारूपमौपचारिकं साकल्यं बोधयति तत् यदि एकभक्तादौ मध्याह्नादिमात्रकर्त्तव्ये तत्कालस्पर्शिन्या अपि तिथेः साकल्यं प्रतिपादयेत्, अहोरात्रकालेऽपि तद् द्रढयेत् । "प्रातः सङ्कल्पयेत्"इति वचनेनाहोरात्रस्य कर्मकालत्वलाभात् । अत एव न प्रातः कालो नाकालः येनाकाले प्रक्रान्तस्य तत्समाप्तिर्निषिध्येत । नापि शिष्टकालोऽत्र गौणः, येन गौणकाले समाप्तिरुपकर्त्तव्या स्यात् । एवं यदि सा तिथिः पूर्वैव युग्मा तदाऽपि युग्मवाक्यमेव निर्णायकम् । उक्तं चेहाप्यस्तमयवाक्यस्य सङ्कल्पकाले तत्तिथेरभावेऽपि साकल्य-

अथैकभक्तम् । तत्कालः पाद्मे—

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः । इति ।

मध्याह्नश्च *पञ्चधाविभक्तदिनतृतीयांशः । तेन यद्यपि द्वादशदण्डानन्तरं प्राप्यते, तथाऽपि—

---

प्रापकत्वम् । इत्थं च या शुद्धा सती परेऽहनि त्रिमुहूर्त्ताऽपि, तत्र पूर्वा । कर्मकालशास्त्रस्य प्रागेव प्रवृत्तेः । या च विद्धा सती क्षयेण परेद्युर्नास्ति, त्रिमुहूर्त्तन्यूना वा, सापि पूर्वैव । युग्मशास्त्राप्रवृत्तेः । तत्प्रवृत्तेस्त्रिमुहूर्त्तसत्ताया आवश्यकत्वात् । नाप्यौदयिकशास्त्रं तत्र प्रवर्त्तते । तत्प्रवृत्तेरपि तथात्वात् । अथ

उदये तूपवासस्य, नक्तस्यास्तमये तिथिः ।

इत्यादिवाक्यात् परा स्यात् । न स्यात् । तेषां कैमुत्यन्यायेन त्रिमुहूर्त्तस्तावकत्वात् । न च या त्रिमुहूर्त्तन्यूनया पूर्वया युक्ता सती परादिने किञ्चिद्वर्त्तते, सा परैव स्यात् ।

द्वितीया पञ्चमीवेधाद्दशमी च त्रयोदशी ।

चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ।

इति विशेषतो वचनादिति वाच्यम् । उपवासभिन्ने त्रिमुहूर्त्तयोगे दोषः, उपवासे स्वल्पयोगे स इति वैरूप्यवारणायास्तमयवार्तिन्यास्त्रिमुहूर्ताया एव पूर्वतिथिदूषकत्वम्, उदयवर्तिन्यास्तादृश्या एवोत्तरातिथिदूषकत्वमिति धर्मोपगमादित्याहुः ।

अत्रेदं वक्तव्यम् । अस्त्वीदृश उपोष्यतिथिनिर्णयः । परं तु युग्मवाक्यं सकलदैवकर्मविषयमेव । "एतद्व्यस्तं महादोषम्" इति निन्दाश्रवणात् । अधिकमन्यतोऽवगन्तव्यम् ॥

*पञ्चधेति ।

मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः ।

मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः ॥

*दिनार्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि ॥

---

सायाह्नस्त्रिमुहूर्त्तः स्यात्सर्वधर्मबहिष्कृतः ।

इति व्यासेन

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तगते रवौ ।
प्रातस्तु स स्मृतः कालो भागश्चाह्नः स पञ्चमः ॥
सङ्गवस्त्रिमुहूर्तस्तु मध्याह्नस्तत्समः स्मृतः ।
ततस्त्रयो मुहूर्त्तास्तु अपराह्णो विधीयते ॥
पञ्चमो दिनभागो यः स सायाह्न इति स्मृतः ।

इति पराशरेण चोक्तेः । *दिनार्द्धेति । भुज्यते—भावे लकाराद् भोजनं तदर्थः । यदिति क्रियाविशेषणं, न तु कर्म । तथा च यद् भोजनं तदेकभक्तमित्यर्थः । एकं द्वितीयभोजनाभावविशिष्टं भोजनं व्रतस्वरूपं भक्तपदे तद्भोजने [illegible] । द्वितीयभोजनाभावश्च न नियमपदार्थः । [illegible] । नापि ब्रह्मचर्यादिः साधारणविधिनैव तल्लाभात् । किं तु ग्रास[illegible]न्यूनत्वम् । नैत्यके भोजने

अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य आमितं ब्रह्मचारिणः ।
[illegible]पिण्डांस्तु ग्रसेदेकैकशः पुमान् ॥

इत्या[illegible]

दिनार्द्धसमये ऽतीते भुज्यते नियमेन यत् ।
एकभुक्तं तु तत्प्रोक्तं न्यूनं ग्रासत्रयेण तु ।

इति देवलेन तदुक्तेः । एकभक्तपर्याय एकभुक्तम् । एकं भुक्तं भोजनमिति व्युत्पत्तेः । तत्र नियमो ब्रह्मचर्यादिः सामान्यविशेष-विधिलभ्यः । वस्तुतस्तु अयाचितवत् पाक्षिकोपवाससम्भावनया भोजनोपवासान्यतरस्यैतद्व्रतस्वरूपता स्यादतो नियमपदम् । उप-वासाद्यत्तिधर्मवत्त्वं तदर्थः । [illegible]

# जैकृष्णदास–हरिदास गुप्तः–चौखम्बासंस्कृतसीरीज आफीस बनारस सिटी।

१ अस्यां चौखम्बा–संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्रयते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्रयन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति। ... ... ... ... ... ...

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् १२

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १०

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः ... १

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचिता तर्कपादः (मीमांसा) ... ... २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः २

(८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्ण (वेदान्तः) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा। ... २

(१०) सिद्धित्रयम्, विशिष्टाद्वैतब्रह्मसिद्धान्तप्रकरणम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्त) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः (न्यायः) ... ... ... ५

(१३) विधिरसायनम्। श्रीमदप्पय्यदीक्षितकृतम्। सम्पूर्णम् २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) ... ... ... १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) ... २

(१६) मीमांसाबालप्रकाशः। जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि मीमांसादर्शनम्। महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ३।

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्याससप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः। (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् ... ... १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितं ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम्। (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ... १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ... ... ... ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता। २

(२५) क्रोडपत्रसंग्रहः। अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ... ... ४

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टरचितसिद्धान्तजाह्नवीयुतम् ... ... ... २

(२७) षड्दर्शनसमुच्चयः। बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः। मणिभद्रकृतटीकया सहितः। हरिभद्रसूरिकृतः ... ... ... १

(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका ... ... ... १२

(३०) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः। सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ... ... ... ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ४

(३३) वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता २

(३५) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराज-विरचितः ... ... ... ... २

(३६) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् ... ... ... १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थ-विरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् ... ... ... ... २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्द-सरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्य व्याख्या-संवलितम् ... ... ... ... ४

(३८) विश्वप्रकाशः। कोशः। विद्वद्वरश्रीमहेश्वरसूरिविरचितः २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवत-विरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्म-प्रकर्ण श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्री-श्री पुरुषोत्तमजीमहाराज विरचित ... ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गि-ण्याख्य टीकया सहिता ... ... ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनाराय-णाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकावि-भूषितश्च ... ... ... ... २

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्-कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गे-शोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्कि-कशिरोमणिविरचितदीधित्या च गर्भिता ... ८

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृ-ष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता त-र्कपादः ... ... ... ... ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्री-नागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य- बालम्भटाभ्यां-विरचितकुञ्जिकाकलाद्वटीकाद्वयसंवलिता ... ११

(४७) [illegible] । पर्वतीय विश्वेश्वरसूरि-विरचितः ... ... ... ... ८

(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्री-मित्रमिश्रविरचितः ... ... ... ५

(४९) बृहदारण्यकवार्त्तिक श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थ[illegible] ८

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्याय-श्रीमित्रमिश्रविरचितः... ... ... ५

(५१) पूर्वमीमांसाअधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनि-रूपणपूर्वकं टिप्पण्या परिष्कृत ... ... १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् ... ... २

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेश-वभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतवि-वरणोपेत ... ... ... ... २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमि-त्रमिश्रविरचितः ... ... ... ६

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भा-वागणेशविरचितम् । समासस्त्रव्याख्या सर्वोपका-रिणी च ... ... ... ... १

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसा-दिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ... ... ... ४

(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टकृत-व्याख्यासहितः ... ... ... १

(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः । श्रीमदनन्तदेव-विरचितया "भाट्टालङ्काराख्य" व्याख्यासहित यन्त्रस्थः

(५९) [illegible] वाचस्पतिमिश्रविरचि-ता । पण्डितराड़—वंशीधरमिश्रविरचित "तत्त्वविभा-कर" टीकासहित ... यन्त्रस्थः ...


—:०:—

जैकृष्णदास गुप्तः सेक्रटरी
चौखम्बासंस्कृतसीरीज आफीस
बनारस सिटी ।

*February* 1920.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 266.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः ।

कृष्णंभट्टकृतव्याख्यासहितः ।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं० व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा तदीयगुरुवर पं० पर्वतीयनित्यानन्दपन्त-प्रदर्शितरीतिमनुसृत्य संशोधितो टिप्पण्या परिष्कृतश्च ।

# NIRNAYA SINDHU;

of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Uyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS II—२.

*PUBLISHED & SOLD BY THE SECRETARY.*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1919
*Price Rupee one.*

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितसभ्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा–संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२६६

इति स्कान्दोक्तेः *षोडशसप्तदशादिदण्डा मुख्यः कालः। दीपिकायां तु—*'मध्याह्नान्त्यदले त्रिभागदिवसे स्यादेकभक्तम्'इति। ततः सूर्यास्तपर्यन्तं गौणः। 'दिवैव हि' इत्यस्य *वैयर्थ्यापत्त्यैतत्परत्वात्। अत्र पूर्वेद्युर्व्याप्तिः*, परेद्युः, उभयेद्युर्व्याप्तिः, *तदभावः, अंशव्याप्तिः। तत्रापि साम्यं वैषम्यं चेति षट् पक्षाः। तत्राद्ययोरसंदेह एव, तृतीये तु पूर्वेऽह्नि गौणमुख्यव्याप्तेः सत्त्वात् पूर्वा इति माधवः। *युग्मवाक्यान्निर्णय इति हेमाद्रिः।

---

सम्भवेन न प्रतिग्रहानुज्ञाप्रसङ्गः। ब्रह्मचर्यव्रतनिवृत्तेरपि सामान्यविधित एव सिद्धेः। *षोडशसप्तदशादिदण्डा इति। सप्तदशाष्टादशदण्डाविति [illegible]। सन्ध्याभोजननिषेधस्य रागप्राप्तभोजनपरतयेहाप्रवृत्तेः। *मध्याह्नेति। "पूर्वाह्णो वै देवानां, मध्यन्दिनो मनुष्याणाम्, अपराह्णः पितॄणाम्"इत्युक्तेस्त्रेधा विभागो ग्राह्यो न तूक्तः पञ्चधा। नापि

पूर्वाह्णः प्रहरं प्रातर्मध्याह्नः प्रहरं तथा।
आतृतीयादपराह्णः सायाह्नश्च ततः परम्।

इति गोभिलोक्तश्चतुर्धा। अह्नो मध्यं मध्याह्न इति व्युत्पत्तिविरोधात्। तुना च एवं सति पञ्चधा पक्षस्य वैयर्थ्यं स्यादतोऽन्यत्रैव बहुस्मृत्युक्तत्वेनेहापि स एव ग्राह्यो नान्य इत्यरुचिः।

*वैयर्थ्येति। न ह्यनेन नक्तं व्यावर्त्यते। तस्य व्यपदेशान्तरेणैव व्यावर्तितत्वात्, तत एव च दिवाभोजनसिद्धेः। कथं चिन्मुख्यकालात्यये प्रधानस्य लोपवारणाय गौणकालो विधीयते "अङ्गगुणविरोधे च तादर्थ्यात्"इति सूत्रात् प्रधानानुसारेण गुणस्य नेतव्यत्वादिति तदर्थः। *व्याप्तिः—मध्याह्नोत्तरदलव्याप्तिः, न तु मध्याह्नव्याप्तिः। तत्पूर्वदलस्य एकभक्तकालत्वाभावात्। *तदभावः—उभयेद्युरव्याप्तिः। *युग्मेति। अत्र

चतुर्थपक्षे पूर्वैव* । गौणकालव्याप्तेः सत्त्वात् । वैषम्ये-णांशव्याप्तौ याऽधिका, सा ग्राह्या । साम्ये पूर्वा । अथ च *स्वतन्त्रैकभक्तनिर्णयः । *अन्याङ्गे *उपवासप्रति-

---

स्वकालादुत्तरः कालो गौणः सर्वस्य कर्म्मणः ।

इति मध्याह्नोत्तरकाले प्राप्ते "दिवैव हि" इति पुनर्विधिवैयर्थ्य-मतः सायाह्नस्यापि संग्राहकतया निर्णायकं न युग्मवाक्यमित्यरु-चिः । *पूर्वैवेति । मुख्यकाले तत्तिथ्यभावेऽपि तत्रैवैकभक्तं कार्यम् ।

तिथ्यादौ च भवेद्यावान् ह्रासो वृद्धिः परेऽहनि ।

तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥

इति कृत्स्नह्रासप्रक्षेपोक्तेः । यत्तु

तिथेः परस्या घटिकास्तु या स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम् ।

अर्द्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने तत् ॥

इत्यर्द्धप्रक्षेपवाक्यं, तदुपसंहारेणोदयङ्गसन्धिनिर्णयपरम् । सङ्कल्प-श्च सर्वेषु पक्षेषु प्रातः ।

प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम् ।

इत्युक्तेः, तत्र साकल्यवचनापादिततिथिसत्त्वाच्च । *प्रतिपद्येकेति ।

प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रद ।

इत्यादि । स्वातन्त्र्यं च हेतुगर्भम् । कर्मणः प्रधानत्वात्तदेव निर्णया-र्थमनुसर्त्तव्यं न त्वङ्गं तिथ्यादीत्यर्थः । एतेन "पौर्वाह्णिकास्तु तिथयः" इति कर्मांशे सामान्यं यथा 'उपोष्याः परसंयुताः' इति तदंशे विशेषेण तिथ्यंशे सामान्यविहितं 'प्रतिपत्संमुखी कार्या' इति तदंशे विशेषेण बा-ध्यते, तथा मध्याह्नःप्रतिपद्वचनादिना कुतो न बाध्यते [illegible] ।

*अन्याङ्गे—दशम्यादौ प्रधाने [illegible] तिथौ तत्पूर्वदिनादौ तदुचितत्वात् । *उपवासेति । तच्च

एकभक्तेन नक्तेन तथैवायाचितेन च ।

उपवासेन दानेन न निर्द्वादशिको भवेत् ॥

निधौ च *तदनुसारेण निर्णयः ॥

अथ नक्तम् । *तच्च दिनानशनपूर्वं रात्रिभोजनम् । तत्र प्रदोषव्यापिनी ग्राह्या ।

प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।

इति वत्सोक्तेः । प्रदोषस्तु—

त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तं गते सति ।
नक्तं तत्र तु कर्तव्यमिति शास्त्रविनिश्चयः ॥

इति मदनरत्ने व्यासोक्तेः । तत्रापि त्रिदण्डोत्तरं कार्यम् ।

---

इत्यादिनोक्तम् । *तदनुसारेणेति ।

तिथिर्यथोपवासे स्यादेकभक्तेऽपि सा तथा ।

इति सौमन्तवमपि उपवासप्रतिनिध्येकभक्तपरम् । तेनाष्टौ तानीति गुर्वाज्ञा कृतैकभक्तमुपोष्यादिन एव ।

"नक्तं निशायां कुर्वीत" इत्यादौ नक्तपदं न कालार्थकं, विधातुमशक्यत्वापत्तेरित्यत्राह—*नचेति । न च नक्तं नक्तसाध्यमित्येवार्थः, तावता कथं भोजनलाभ इति वाच्यम् । प्राजापत्यादिषु भूयस एकभक्तायाचितोपवासादिभिः साहचर्यात् प्रायिकप्रतीतिकस्य भोजनस्य सिद्धेः । अत एव "नक्ताशी" इत्यादौ भोजनार्थकपदप्रयोगो न व्यर्थः । तावतैवार्थतो दिवाभोजनं विशेषणं लभ्यते । एवं च

मार्गशीर्षे सिते पक्षे प्रतिपद् या तिथिर्भवेत् ।
तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं च पूजयेत् ॥

इत्यादौ पृथक् क्रियानिर्देशादेः प्रायिकप्रतीतिकं भोजनं रात्रौ लभ्यते । तदनुरोधेन चाङ्गभूतपूजादेर्दिवानुष्ठानमेव । अत एव नवरात्रस्य नक्तव्रतत्वं माधवाचार्यैरुक्तं संगच्छते । भोजनस्य प्रायिकप्रतीतिकतया तदप्रत्ययेऽप्यक्षतेः ।

सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः।
इति स्कान्दोक्तेर्दण्डत्रयस्य संध्यात्वात्। तत्र
चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत्।
आहारं, मैथुनं, निद्रां, स्वाध्यायं च चतुर्थकम्॥

इति मार्कण्डेयेन भोजननिषेधात्।

*मुहूर्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः।
*नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप॥

इति माधवीये भविष्योक्तेश्च। गौडास्तु-

प्रदोषो *ऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते॥

इति वत्सोक्तः प्रदोषः। सन्ध्या च दिनरात्र्योः सन्धौ मुहूर्तः।

इति स्कान्दाच्च। यत्यादीनामपि सायाह्ने-

---

ननु निषेधो वास्तविकसन्ध्यापर एवास्त्वित्यत आह-*मुहूर्तोनमिति। नक्षत्रदर्शनादिति पूर्वत्राप्यन्वेति, काकाक्षिन्यायात्। नक्षत्रदर्शनावधिकं मुहूर्तोनं वास्तविकसन्ध्यारूपं नक्तं वदन्तीत्यभिधानेन तस्य नक्तत्वव्युदासः नक्षत्रदर्शनमादायाहं मन्य इत्यभिमानेन तस्य पारिभाषिकसन्ध्यारूपस्य तद्व्युदासः। वस्तुतस्तु ननूक्तप्रदोषः कुतो मुख्यः कालः "न नक्तं निशि भोजनम्"इति निषेधोपबृंहित[illegible]नक्तस्य मुख्यकालत्वेन तस्य "स्वकालादुत्तरः कालो गौण"इति वाक्येन गौणत्वस्यैव सम्भवादित्यत्राह-*मुहूर्तोनमिति। शिवेनाहं मन्य इति स्वाभिमतेनाभिधानात्। प्रवदन्तीत्यनेनोभयनिषेधस्याप्रसक्तस्यायोगाच्च। प्रदोषमुपजीव्य तत्प्रवृत्तेस्तस्य मुख्यत्वमिति भावः। *नक्षत्रेति। [illegible]। नक्षत्रदर्शनं प्राप्येत्यर्थः। *अस्तमयादिति। तारकोदयादिति यावत्। सन्ध्याप्रदोषयोर्भेदात्।

अर्धास्तमयात्सन्ध्या व्यक्तीभूता न तारका यावत् ।
तेजःपरि(१)हानिवशाद्भानोरर्धोदयं यावत् ॥

इति वराहोक्तेरित्याहुः, तन्न । *अस्य सन्ध्यावन्दनानध्यायादिपरत्वात् । अत एव तत्र खण्डमण्डलस्य सन्ध्यात्वमुक्तं विज्ञानेश्वरेण । यच्च मदनरत्ने नक्तस्य वैधत्वाद् रागप्राप्तभोजनगोचरो निषेध इत्युक्तम् । तन्न । *विधेर्निषेधाविरोधात् । अन्यथा *कपिञ्जलानित्यत्र

---

तस्याद्धोऽस्तमयादित्यर्थमभिप्रेत्याह—अस्येति । *विधेरिति । निषेधविषयपरिहारेणापि विधिचरितार्थ्यादिति भावः(२) । *कपिञ्जलो—गौरतित्तिरिः । अत्र वदन्ति नक्तभोजनस्य त्रिदण्डोत्तरत्वमयुक्तम् ।

निशानक्तं तु विज्ञेयं यामार्द्धे प्रथमे सदा ।

इति मुख्यतरकालस्य नैरर्थक्यात् । किं च दण्डत्रयं मुख्यकालः ।

---

(१) तेजःपरहानिवशादिति पाठः साधुः । तेजसः परस्य—अन्यस्य हानिवशात् । तमोहानिमारभ्येत्यर्थः ।

(२) अत एव 'मा हिंस्यात्'इतिनिषेधाविषयचतुर्थादिकपिञ्जलपरिहारेण कपिञ्जलानिति बहुवचनस्य साधारण्येऽपि त्रित्वसंख्यायामेव पर्यवसानात् कपिञ्जलत्रिकमेव आलब्धव्यं, न तु ततोऽधिकमिति सिद्धान्तितमधिकरणमालायां कपिञ्जलाधिकरणे ( अ० ११ पा० १ अधि० ८ ) तथा हि

कपिञ्जलेषु त्रित्वाद्याः पाक्षिकास्त्रित्वमेव वा ।
आद्यो बहुत्वसाम्यान्न त्रित्वेनैव कृतत्वतः ॥

अश्वमेधे "वसन्ताय कपिञ्जलानालभते" इति त्रित्वचतुष्ट्वादिसंख्यानां बहुत्वसाम्यादिच्छया या काचिद्बहुत्वसंख्या स्वीकार्या इति चेत् । न, त्रित्वेनैव शास्त्रस्य कृतत्वात् । यो हि चतुष्ट्वादिसंख्यामुपादत्ते, तेन न तदन्तर्भूतं त्रित्वं वर्जयितुं शक्यम् । त्रित्वमुपाददानेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं शक्यते । अतोऽवश्यंभावित्वेन प्रथमभावित्वेन लाघवेन च त्रित्वे उपात्ते शास्त्रार्थसिद्धौ ततोऽधिकपक्षिहिंसायां प्रत्यवायात् । तस्मात् [illegible] ।

प्रदोषोऽस्तमयादूर्ध्वं घटिकात्रयमुच्यते ।

इत्युक्तेः । त्रिमुहूर्त्तं मध्यमः । "त्रिमुहूर्त्तं प्रदोषः स्यात्" इत्युक्तेः । निशीथान्तमधमः । "नक्तं निशायां कुर्वीत" इत्युक्तेः । एवं "चत्वारीमानि" इति वाक्ये सन्ध्या न पारिभाषिकी । मानाभावात् । परिभाषायाश्च अनध्यायप्रयोजकसंध्यागर्जितादौ चारितार्थ्यात् । मदनरत्नोऽपि सम्यगेव । तथा हि—मैथुनादिसमभिव्याहारान्निषेधो रागप्राप्तभोजनपर एव न तु वैधतत्परः । विधितो यदर्थतया यत्प्राप्तं तदर्थतयैव तन्निषेधे विकल्पापत्तेः । न च निषेधो विशेषविषयत्वेन बलीयान् । तस्य सा[illegible] त्वादिना दुर्बलेनापि विधिनोपजीवितत्वादेव तुल्यबलत्वात् ।

यदपि कपिञ्जलत्रित्वेन विधिचारितार्थ्यान्न चतुर्थादीनां निषेधविषयत्वादालम्भनं, तदपि न । यतोऽग्नीषोमीयवत् फलार्थतया विहिताया हिंसाया एव न निषेधस्पर्श इतीहापि न तत्स्पर्शः, परं तु [illegible]त्रित्वाद्यन्यतरद् बहुवचनार्थः । तत्र लाघवेन त्रित्वमेव विधिविषयो न चतुष्ट्वादि । द्रव्यगतसंख्याया अपि वि[illegible] सिद्धान्तितत्वादिति नातिप्रसङ्गः । अत एव पर्वरविवारादौ प्राप्तं नक्तभोजनं रात्रौ भवत्येवेति वक्ष्यति । न च

ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः ।

दिनान्ते तेऽपि भुञ्जीर[illegible]भोजने ॥

इति वचनाद्गौणकाल एव तत्कर्तव्यमिति वाच्यम् । [illegible]ति[illegible] । वैधेऽपि तत्प्रवृत्तावन्याङ्गनक्तेऽपि प्रवर्त्तेत । तत्र प्रवर्त्ति[illegible]त्वात् । अन्यथा तद्द्वारा तद्गताङ्गत्वसिद्धौ [illegible]विहितनक्तादौ प्रवृत्तेः [illegible] [illegible] [illegible] कृप्यात् । [illegible] [illegible]दिविहितनक्तव्रतपरमेवेति ।

ननु प्रदो[illegible] कर्मकालत्वमसंगतम् ।

प्रदो[illegible] यत्र त्रिमुहूर्त्ता यदा दिवा ।

त्रिभ्योऽधिकानां हिंसनं स्यात् । *सायंकाले नक्तं तु दिनद्वये प्रदोषास्पर्शे ज्ञेयम् ।

अतथात्वे परत्र स्यादस्तादर्वाग्यतो हि सा ।

इति जाबालिवचनात् ।

*प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते ।
आत्मनो द्विगुणा छाया मन्दीभवति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।

इति स्कान्दाच्च । *यत्यादीनामपि सायाह्ने नक्तम् ।

नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः ।
यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम्* ॥

इति तत्रैव स्मृत्यन्तरात् । इदमपुत्रविधुरोपलक्षणम् । पुत्रवतस्तु रात्रावेव ।

अनाश्रमोऽप्याश्रमी स्यादपत्नीकोऽपि पुत्रवान् ।

इति संग्रहोक्तेः । सौरनक्तं तु दिवैव ।

*त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः ।
तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम् ॥

---

तत्र नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत् ॥

इति वाक्येन सायमोऽपि लाभादित्यत्राह—*सायमिति "यतो हि" इति सायमो गौणत्वार्थम् । अन्यथा पौनरुक्त्यात् । सायंकाल एव नक्तानुष्ठानविधानपूर्वककालत्व[illegible]-*प्रदोषेति । *य-त्यादीनामिति । यद्यपि सायंकालो गौणः "नक्तादिव्रतयोगेषु" इति वाक्यात्, तथापि यत्यादिषु स मुख्यः । *सदिवाकरमिति ।

सदिवाकरं तु [illegible] घटिकाद्वयम् ।

इति वचनं तु तस्य मुख्यतरत्वबोधकम् । पूजादिकं तु प्रधानाविरोधेन तत्रैव प्रागेव वा कार्यम् । *त्रिमुहूर्त्तेति । सायंप्रदोषव्या-प्त्योः प्राक्पश्चाद्विर्देशाभ्यां [illegible] दिवैवेति ला-

इति सुमन्तूक्तेः । हरिनक्ते *विशेषः कालादर्शे स्कान्दे—

उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः ।

इति । अन्यनक्तं तु संक्रान्त्यादावपि रात्रावेव । *निषेधस्य रागप्राप्तभोजनगोचरत्वेन वैधाबाधकत्वात् । *दिनद्वयव्याप्तौ परा* ।

उभयोर्यदि वा तिथ्योः प्रदोषव्यापिनी तिथिः ।

तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः ॥

इति कालादर्शे जाबालिवचनात् । अन्यपक्षेषु *एक-भक्तवन्निर्णयः । अत्र विशेषो मदनरत्ने गारुडे—

---

भः । एतेन सायाह्नमुख्यकालिकनक्ते एकैकदिन एव कात्स्न्र्येन एकदेशेन वा व्याप्तौ सैव ग्राह्या । दिनद्वयव्याप्तौ पूर्वा । गौणमुख्य-व्याप्त्योः सत्त्वात् । दिनद्वयास्पर्शे साम्येन वैषम्येण वा दिन-द्वयस्पर्शे च पूर्वैव गौणव्याप्तेः सत्त्वादित्युक्तं भवति । *विशेषः—सायाह्नप्रदोषव्याप्त्योरपवादः । *निषेधस्य—

अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमीदिवा ।

एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

इत्यादिलक्षणस्य । [illegible]मुख्यकालिकनक्ते त्वाह—*दिनद्व-योरिति । *परेति । 'तिथ्यादिषु भवेद्यावान्'इति वाक्येन [illegible] पूर्वदिने कर्मकालासत्त्वे[illegible]ऽपि द्रष्टव्यम् । *एकभक्तवदिति । यथा एकभक्ते गौ[illegible] निर्णा-यके, तथा नक्तेऽपीत्यर्थः । तेन एकैकदिने एव व्याप्तौ मुख्यकालव्याप्तिरेव । दिनद्वय[illegible] गौणकालव्याप्तिरेव । तदुक्त-वान् सायंकाले नक्तं त्वित्यादि । साम्येन वैषम्येण वांशतो व्याप्तौ परैव । गौणकालव्याप्तेराधिक्यात् । यत्र वैषम्येणांशतो व्याप्तौ पूर्वे-वाधिका तत्र पूर्वैव, आधिक्यात् । [illegible]स्यापि [illegible]त्वात् । आधिक्यं च देवपूजा-भोजनपर्याप्तं विवक्षितमिति [illegible] । अयं

च निर्णयो भोजनरूपे नक्त इव पूजादिरूपे नक्तेऽपीति मत्वा त्रयोदशीप्रदोषगोवत्सद्वादश्यादौ न पृथक् निर्णयमभिप्रयन्ति माधवादयः। "प्रदोषे शिवमर्चयेत्"इत्यादिना प्रदोषस्य मुख्यकालत्वावगमे सायाह्नस्य तत्र गौणकालत्वं लभ्यते । अन्यथा 'प्रदोषव्यापिनी न स्यात्'इत्यादिना तत्र नक्तविधानानुपपत्तेरिति तदभिप्रायः । उच्छृङ्खलास्तु त्रयोदशीप्रदोषे शिवपूजाया एव प्राधान्यान्न त्रिमुहूर्त्तं प्रदोषः । 'त्रिमुहूर्त्तं प्रदोष' इत्यस्य भोजनरूपनक्तपरत्वात् । 'नक्तं निशायां कुर्वीत'इत्युक्तेः ।

अथास्तु तत्र सार्द्धसप्तनाडीरूपः प्रदोषः ।

अस्तमानं समारभ्य सार्द्धाः सप्त च नाडिकाः ।
प्रदोष इति विख्यातस्त्वर्द्धयाममतः शृणु ॥

इति वचनादिति, तन्न । एतस्य प्रकरणेन नैमित्तिकपूजाद्यङ्गत्वादत्र प्रवृत्त्यसम्भवात् । किं तु नाडीचतुष्टयमेव ।

यजनं प्रति मानं तु उत्तमं परिकीर्त्तितम् ।
उदये चैव मध्याह्ने प्रदोषे चार्द्धयामिकम् ॥

इत्यनारभ्याधीतवचनात् । यत्तु

प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमुच्यते ।

इति माधवः, तत्र [illegible]हार्यम् । यच्च

प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमुच्यते ॥

इति तिथितत्त्वं, तत्र प्रशस्ततरमित्यध्याहार्यम् । तत्र एकत्र दिने साकल्येन एकदेशेन वा प्रदोषव्याप्तौ न सन्देहः । दिनद्वये प्रदोषव्याप्तौ प्रदोषद्वयास्पर्शे साम्येनैकदेशव्याप्तौ च परा । संकल्पकालेऽपि मानात् । यत्र पूर्वप्रदोषेऽधिका उत्तरप्रदोषे स्वल्पा तदाप्युत्तरैव 'दिवारात्रिव्रतं च'इति [illegible] । पठन्ति च

अस्तोत्तरं यत्र मुहूर्त्तयुग्मं त्रयोदशी चेत् खलु स प्रदोषः ।
दिनद्वयेऽप्यस्ति न वा समैकदेशोऽथवा तत्र परैव कार्या ॥
व्याप्तिर्यदा स्याद्विषमांशिका तु तदा बहुत्वेन विनिर्णयः स्यात् ।

द्वयोरभावेऽप्यथ गौणकालव्याप्त्या तु पूर्वामपि केचिदाहुः ॥

इति । पूजा च [illegible]प्रदोषे कार्या ।

ये नार्चयन्ति गिरिशं महिते प्रदोषे
येऽभ्यर्चितं शिवपदं प्रणमन्ति नान्ये ।
ये तत्कथां श्रुतिपुटैर्न पिबन्ति मूढा-
स्ते जन्मजन्मसु भवन्ति नरा दरिद्राः ॥

इत्यनिष्टस्मरणात् । आरम्भश्च शनिप्रदोषे कार्यः ।

यदा त्रयोदशी शुक्ला मन्दवारेण संयुता ।
आरभेत्तद्व्रतं तत्र सन्तानफलसिद्धये ॥

इति तत्रैवोक्तेरित्याहुः । तन्न । माधवादिभिरुक्तस्यास्य शाम-प्रदोषस्य धार्मिकैरनादृतत्वात् । एवमन्याङ्गे उपवासनक्तनिषेधौ च नक्ते तादृशैकभक्तन्याय एवैकभक्तवदित्यनेन लभ्यते ।

इदं तु बोध्यम् । यथैकभक्तं कुर्वीतेत्यादौ एकभक्तं न रात्रि-भोजननिवृत्तिमात्रं निवृत्तेरव्रतत्वात् ।

नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् ।

इति कोशात् । पुण्यं सुकृतं पुरुषार्थसाधनादृष्टहेतुः क्रिया, ता-दृशं द्रव्यं चेति तत्पर्यायव्रतपदस्यातदर्थकत्वात् । न हि नि-वृत्तेर्[illegible]वादिनो ऽदृष्टजनकत्वमुपयन्ति । तत्कुत इति चे-त्कालान्तरभाविफलाभावात् । नापि [illegible]र्थवादिनः । ते-[illegible]पि तस्य पुरुषार्थासाधनत्वोपगमात् । कथं च "नै-[illegible]मित्यम्" इत्यादौ सङ्कल्पविधित्वासिद्धान्तः । निवृत्तेर्व्रतत्वे भावोपक्रमाबाधेन [illegible] । तस्य व्रतत्वनिर्वा-हाय रात्रिभोजनाभावसङ्कल्पे लक्षणा वा स्यात् ।

अथैवं मासव्यापिचतुर्थकालिकत्व[illegible] एकादश्यादौ उपवासानापत्तिः । तद्विधिषु [illegible]थान्तचतुर्थका-लिकादिपदानां चतुर्थकालाहार इत्याद्येकवाक्यतया भोजनो-त्तरचतुर्थका[illegible]त्वात् । अब्भक्षो वायुभक्ष इत्यादावपि-

'हविष्यभोजनं *स्नानं सत्यमाहार*लाघवम् ।

---

वैकपदेऽप्यवधारणगर्भार्थवशेन त्र्यादिकालगतभोजननिवृत्तेश्चतुर्थ-कालगतनियमस्य च प्रतीतेः । मैवम् । चतुर्थकालाहारा-दिपदानां तादृशनिवृत्तावेव तात्पर्यात्, न तु नियमेऽपि । तत्पदस्य कालांशे परिसंख्यात्वेन भोजनांशे नियमत्वे भिन्नप्रमरतापा-तात् । व्रतत्वनिर्वाहश्च 'चतुर्थकालाहारो ब्राह्मणान् भोजयेत्'इत्या-दिविशेष्यभूतब्राह्मणभोजनादिनैव । चान्द्रायणादौ च चन्द्रगत्य-नुवर्त[illegible] इतरकालभोजननिवृत्तिविशिष्टचन्द्रोदय-कालभोजनस्य व्रतत्वम् । तथा 'नक्तं कुर्वीत'इत्यादौ न दिनभोजन-[illegible]भिप्रेत्यैकभक्तवदिति, पूर्वं रात्रिभोजनमिति चोक्तम् । अत एव 'एकभक्तं कुर्वीत' 'नक्तं कुर्वीत'इत्यादौ 'चान्द्रायणं कुर्वीत' इत्यादौ च न उपवासेन तत्सिद्धिः, नापि [illegible] । *स्नानमिति । पूजादेः प्राक् कर्माङ्गं प्रधानकालम् । *आहा-रेति । यद्यप्यत्र 'न्यूनं [illegible] तु' इत्येकभक्तवद्विशेषतो न वचनं दृश्यते, तथापि इह प्रा[illegible]करणगता नक्तभोजनविषया ग्राससंख्या ग्राह्या । साम्यात् । एवमेव

अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ।

इत्यादौ [illegible] तद्वदेव अयाचितभोजनविषयग्रास-[illegible] । सा [illegible]

सायं द्वाविंशतिर्ग्रासाः प्रातः [illegible] स्मृताः ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः ॥

इति नक्ते द्वाविंशतिरुक्ता । तद्विरुद्धा च नक्ते पराशरेण

सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः ॥ इति ।

तद्विरुद्धा च नक्तायाचितयोश्चतुर्विंशतिमते

प्रातस्तु द्वादश ग्रासा नक्तं पञ्चदशैव तु ।

*अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् ॥
अग्निकार्यं व्याहृतिहोमः* । इति नक्तम् ॥

अयाचिते तु*विशेषवचनाभावात्पक्षे* उपवासे प्राप्त उपवासवन्निर्णयः ॥

अथ नक्षत्रव्रतकालः । विष्णुधर्मे-

उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः ।

---

अयाचिते तु द्वौ चाष्टौ प्राजापत्यो विधिः स्मृतः ॥ इति ।

अत्र शक्ताशक्तभेदेन व्यवस्था ।

*अग्निकार्यमिति । यन्नक्ते विशेषतस्तन्नोक्तं, तत्राह—*व्याहृतिहोम इति । विशेषतो यदुक्तं तस्योपसंहारो ऽयमित्यन्ये । व्यस्तसमस्तव्याहृतिः । समस्तव्याहृतिरेवेति केचित् ।

*अयाचिते त्विति । अयाचितान्नभोजनं यदैव लाभस्तदैव दिने वा रात्रौ वा निषिद्धकालं विहाय इति तद् अहोरात्रसाध्यमेव, न तु कालविशेषापेक्षापि । पराधीनत्वात् । तत्र च 'दिवारात्रिव्रतं यच्च' इति सामान्यस्यैव प्रवर्त्तते । यदा तु तत्तिथिरेकादिने दिने एव, परदिने रात्रावेव, तदा [illegible] ग्राह्या । 'अहःसु तिथयः' इति स[illegible] । तदुक्तं *विशेषवचनाभावा-दिति । वस्तुतस्तु

एकभक्तायाचितयोर्या [illegible] तिथिः ।
सा तिथिः सर्वदा ज्ञेया नक्ते सायाह्नसंगता ॥

इति शार्ङ्गधरीये नारदोक्तेर्निर्णयः । [illegible]— *पक्ष इति ।

अथायाचितव्रतम् । अथापरं त्र्यहं न कं च न याचेतेत्यादौ । अत्र नञो याचितस्वीयं न भोक्ष्ये इति सङ्कल्पे लक्षणा । भावोपक्रमेण '[illegible]' इतिवन्निषेधरूपत्वाभावात् । तत्रोपवासेन सिद्धावपि '[illegible]' 'अयाचिताशी मितभुक्' इत्यादौ समस्त-

*युज्यते यत्र वा तारा निशीथे शशिना सह ॥ इति । माधवीये स्कान्दे—

---

नञ्श्रवणाद् व्रतविहितणिनिश्रवणाच्च याचितभिन्नमद्यादेवेत्येवं साधनविशेषविशिष्टभोजन[illegible]प्रत्ययाद् याचिताभिन्नमदनीयं भोक्ष्ये इत्येवंरूपस्यायाचितस्य कथमुपवासेन सिद्धिः ? । नैवम् । समस्तनञ्वाक्येऽपि लाघवेन—प्राप्ते भोजने याचितभिन्नरूपसा[illegible] एवायं, न त्वनन्तरूपयात्वर्थनियमोऽपि गौरवात् । "ऋतौ भार्यामुपेयात्" इत्यादौ तु केवलयात्वर्थनियम एव । अगौरवात्, ऋतौ [illegible] । अधिकमन्यत्रानुसंधेयम् । दिनान्तरे याचितस्यापि तद्दिने भार्यादि प्रति विना यानं भोजने व्रतभङ्गवारणाय तद्दिनाधिकरणकयाचितभिन्नानियमः, तादृशयाचना-[illegible] वा व्रतमिति । गौणकालमाह—* युज्यते इति । एवं च परेद्युरेवास्तमययोगे निशीथयोगिनीं पूर्वां विहायोत्तरैव ग्राह्या । [illegible] मुख्यकालत्वात् । दिनद्वयेऽस्तमययोगे पूर्वैव । [illegible]त्वात् ।

यत्रार्द्धरात्रादर्वाक् तु नक्षत्रं प्राप्यते तिथौ ।
तत्र ऋक्षव्रतं कुर्यादतीते पारणं भवेत् ॥

इति वचनाच्च । यत्तु

सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति, तद् अहोरात्रासाध्यदान[illegible] ।

तन्नक्षत्रमहोरात्रं यस्मिन्नस्तङ्गतो रविः ।
यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं भवेत् ॥

इति मार्कण्डेयं तु स्पष्टमेव तत्साध्याविषयकम् । [illegible] च त्रिमुहूर्तत्वसहितमेव, न तु केवलम् । तिथौ तथा दर्शनात् । एवं च दिनद्वये तथात्वे पूर्वमेव पूर्णत्वात् । श्राद्धे त्वपराह्णादेः

*तत्रैवोपवसेदृक्षे यन्निशीथादधो भवेत् ।
उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः ॥

अथ व्रतपरिभाषा ॥ तत्राधिकारिणो मदनरत्ने भविष्ये—

*अनग्नयस्तु ये विप्रास्तेषां श्रेयो विधीयते ।
व्रतोपवासनियमैर्नानादानैस्तथा नृप ॥

अनग्निग्रहणमुपवासविषयम् । अत एव देवलः—

*आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥

---

प्रतिपदोक्तत्वान्नक्षत्रस्य तद्व्याप्तिरेवाऽऽदर्त्तव्या । कर्मकालशास्त्रे तिथिवत्तस्य नक्षत्रे [illegible]त्वात् ।

नक्षत्रे खण्डिते येन व्याप्तः कालस्तु कर्मणः ।
नक्षत्रकार्याण्यत्रैव तिथिकर्म तथैव तु ॥

इति माधवोक्तेश्च । नक्तैकभक्तयोरुक्तरीत्या प्रतिपदोक्तनत्त-त्काले प्राप्तेऽपवादमाह—*तत्रैवेति । उत्तरार्द्धेनोपवासन्यायाति-देशादस्तमयव्याप्तिलाभेऽपि दिनद्वये तदभावे तिथिवत्प्रदोषमध्या-ह्नयोः प्राप्तौ तदपवादार्थं निर्णीतोपवासकालानुवादकं पूर्वार्द्धम् ।

फलभोक्तृत्वे सति कर्मकर्तृत्वमधिकारः । तद्वन्तः सर्वे वर्णा अधिकारिणः । सामान्यतो

निजवर्णाश्रमाचारनिरतः शुद्धमानसः ।

इत्यादिस्कान्दाद्युक्तेः । तत्र शूद्रादेरध्ययनाभावाद्वेदमन्त्राद्यङ्गा-सम्भवेन तद्द्वाराऽ[illegible]धिकारे प्राप्ते वक्ष्यति—शूद्रस्यापीत्यादि । *अनग्नय इति । [illegible]क्षितमुद्देश्यगतत्वात्, नापि "राजा राजसूयेन यजेत"इत्यादिवदधिकारसंकोचकम् । अन्येषामप्यधि-कारात् । *आहिताग्निरिति । यत्तु "अश्नन्त एव सिध्यन्ति" इत्युक्तावपि पञ्चाहुतिमात्रं[illegible]ोपवासदिने कार्यम् ।

गृहस्थो ब्रह्मचारी च योऽनश्नंस्तु तपश्चरेत्।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः॥

इत्यादौ प्राणाग्निहोत्रलोपे एव दोषोक्तेरिति, तन्न। तावता "अश्नन्त एव सिध्यन्ति" इति (१) तदसाधारणकार्यासिद्धेः, अनडुद्दृष्टान्तेन तथैव प्रतीतेः। किं च यदि 'यद्यदन्नं प्रथममागच्छेत् तत्तद्धोमीयम्' इत्युपासनाविशेषरूपे परिषेचनादिपूर्वक'प्राणाय स्वाहा' इत्यादिभोजनाङ्गपञ्चाहुतिरूपे वा प्राणाग्निहोत्रविधौ भोजनं विधीयेत, तदा तल्लोपे स्यादप्यवकीर्णित्वम्। रागप्राप्तभो[illegible] गुणविशेषविधाने चोपवासविधिवशान्निषेधवशाद्वा भोजनरूपाश्रयाभावेन तदननुष्ठाने को दोषः। यदि तु प्राणाग्निहोत्रपदेन तदाश्रयीभूतं भोजनमेवोच्यते। तच्च [illegible] "सायं प्रातर्द्विजातीनाम्" इत्यनेन। तत्रोत्तराश्रमिणां च-तुर्थकालिकैकभुक्तादिविधानेन पूर्वाश्रमिपरमिति तल्लोपे दोषोक्तिस-ङ्गतिरिति, तदाऽपि [illegible]रूपस्य तस्य विधिनिषेधाभ्यां का-म्यविधिना वा बाध एव। इत्थं च "प्राणाग्निहोत्रलोपेन" इति "तेन ह्यन्नं क्रियते" (२) इतिवद्धेत्वर्थवादः। "अनश्नन्" इति तु अविच्छि-न्नानुष्ठीयमान[illegible]वासादिपरम्। "कौ[illegible]क्ष्यं तु कुर्वाणान्" इति-वद् वर्तमानकालव[illegible]भ्यामप्रतीतेः। अयमपि निषेधः

---

(१) पञ्चाहुतिमात्रभक्षणेऽपि अशननिष्पाद्यनित्याग्निहोत्रहोमादि-[illegible]स्यासिद्धेरित्यर्थः।

(२) "तेन ह्यन्नं क्रियते" इत्यादौ हिशब्दश्रुत्या हेतुत्वाव-गमात् तस्य च 'येन येनान्नं क्रियते, तेन तेन होतव्यम्' इति व्याप्तिव-चनोत्थापकतया सर्वान्नकरणविधिकल्पकत्वेन प्रयोजनवत्त्वाद् हेतु-परत्वम्। तथा च शूर्पवद् दर्वीपिठरादीनामप्यन्नसाधनत्वाविशेषा-दिच्छया शूर्पेण सह दर्व्यादीनां विकल्पः इति चेत्। न, 'शूर्पेण जु-होति' [illegible]तृतीयाश्रुत्या शूर्पस्य होमकरणत्वं, दर्वीपि-ठरादिकानां तु कल्पितव्याप्तिवचनेनेति प्रबलश्रुतेः शूर्पस्यैव सर्वत्र प्रवेशाद् [illegible]हेतोरर्थत्वात्प्ररोचनायाऽर्थवादत्वम्। तद्वत् प्रकृतेऽपि, इति भावः।

एकादश्यादौ तु *वचनाद्भवतीति वक्ष्यामः । शूद्रस्याप्यधिकारः ।

शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥

---

श्रौताधिकारिण एव । मासोपवासादिविधेर्निरग्निका[illegible] सर्वेषु प्रवृत्त्यसम्भवात् ।

मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
आत्मतन्त्रोपघातस्तु न तपस्तत्सतां मतम् ॥

इति वाक्याच्च । प्रधानकर्मार्थकतन्त्रपदेन बलवत्तरश्रौतग्रहणाद् मासपक्षेत्युपलक्षणाद् । संलग्नोपवासत्रये तात्पर्यम् । तेन ब्रह्मचारिश्रौताधिकारिणोः प्राजापत्यादावपि दण्डकल्पितवत्पक्ष एव, न तु स्वस्थानवृद्धिमत्पक्षः; संलग्नोपवासत्रयापातादिति बोध्यम् । केचित्तु प्राणलोपेनाग्निहोत्रलोपेन चेत्यर्थः । अयं च पूर्वाश्रमिणोरेव मरणान्तिकानशनरूपतपसि दोषो नोत्तराश्रमिणोः कर्माशक्तिविरत्यादिना तदनुत्थानादिति व्याचख्युः ।

*वचनादिति । नित्यस्य काम्यस्य वा स्मार्तपौराणिकान्यतरस्योपवासस्यानुष्ठाने ब्रह्मचार्याहिताग्न्योरशक्त्याऽध्ययनाग्निहोत्रादिस्वकर्मलोपस्तस्य प्रतिनिषिद्धारकत्वं वा स्यादतोऽयं तन्निषेधो देवलेनोक्तः । स च न सर्वथा नित्यस्य (१)[illegible]नात्, किं तु काम्यस्यैव तदभावात् । न च काम्यस्य प्राबल्यम् । विरोधाभावेन श्रौताद् दुर्बलत्वात् । निषेधपालनं तु तत्र द्वयोरपि 'गृहस्थो ब्रह्मचारी च आहिताग्निश्च''

---

(१) नित्योपवासस्य—

उपवासनिषेधे तु भक्ष्यं किञ्चित् [illegible] ।
न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

इतिवायवीयवचनेन विहितानुकल्पफलादिभिरपि [illegible] निषेधाविरोधादिति भावः ।

इति व्यासोक्तेः । प्राच्यास्तु वैश्यशूद्रयो*र्द्विरात्राधिकोपवासनिषेधः ।

वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते ।
त्रिरात्रं *पञ्चरात्रं वा तेषां *व्युष्टिर्न विद्यते ॥
चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते ।
त्रिरात्रं तु न धर्मज्ञैर्विहितं ब्रह्मवादिभिः ॥

इति हेमाद्रौ वचनादित्याहुः । *यावदुक्तनिषेध इत्येके । प्रकरणात् *महातपोविषय इति युक्तम् ।

एवं स्त्रीणामपि* । यत्तु—स्कान्दे

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
भर्तृशुश्रूषयैवैता लोकानिष्टान् व्रजन्ति हि ॥

यद्देवेभ्यो यच्च पित्रादिकेभ्यः
कुर्याद्भर्ताऽभ्यर्चनं सत्क्रियां च ।
तस्यार्धं वै सा फलं नान्यचित्ता
नारी भुङ्क्ते भर्तृशुश्रूषयैव ॥

आदित्यपुराणे—

---

इत्यग्रिमवचनादित्यर्थः । *द्विरात्रेति । द्विरात्राधिककालव्यापिन उपवासस्य निषेध इत्यर्थः । *पञ्चरात्रमिति तु कैमुतिकन्यायेन त्रिरात्रनिषेधस्तुतिः । *व्युष्टिः—फलम् । *यावदुक्तेति । यावदंशे निषेधवाक्यं, तावदंशे निषेध इत्यर्थः । एतन्मते

चतुर्थ[illegible] वैश्ये शूद्रे विधीयते ।
त्रिरात्रं तु न धर्मज्ञैर्विहितं [illegible] ।

इत्येतन्नास्ति । नन्वेवं पञ्चरात्रनिषेधो व्यर्थः कैमुतिकन्याया-[illegible]तिकगतित्वादत आह—*महातप इति । त्रिरात्राद्य-ङ्गनिषेधो [illegible] इत्याशयः । *स्त्रीणामपीति । अधिकार इति वर्त्तते । '[illegible]रनिरत' इत्यादौ पुंस्त्वमतन्त्रमिति भावः ।

**नारी खल्वननुज्ञाता भर्त्रा वापि सुतेन वा ।**
**विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदेहिकम् ॥**
**इति । और्ध्वदेहिकं—पारलौकिककम् । तद् भर्त्रननुज्ञाविषयम् ।**
***भार्या पत्युर्मतेनैव *व्रतादीनाचरेत्सदा ।**
**इति कात्यायनोक्तेः । अत्र विशेषो हरिवंशे—**

---

*भार्येति । "नास्ति स्त्रीणाम्"इति निषिद्धोऽधिकारो ऽनेन प्रति प्रसूयत इति भावः ।

नन्वेवं विधवायाः कुतोऽधिकारः ? । भर्तुरभावेन तदनुज्ञाया अप्यभावात् । न च 'सुतेन वा'इति सुतानुज्ञयाऽधिकारः । 'यत्करोत्यौर्ध्वदेहिकम्'इत्यस्य लिङ्गरूपत्वकल्पने [illegible]दिति चेन्न।'नास्ति स्त्रीणाम्'इत्यादेर्न व्रतादिनिषेधे तात्पर्यं, किन्त्वनुज्ञामात्रे यतः । स्त्री व्रतादिकमनुज्ञया कुर्यादिति कात्यायनवाक्यार्थः । *पत्युरिति पितृपुत्रादेरुपलक्षणं,'न स्वातन्त्र्यं [illegible]'इत्युक्तेः । क्वचिदिति प्रशस्त-ब्राह्मणादिसङ्ग्रहार्थम् । अत एव प्रशस्ता विधवा ब्राह्मणाद्यभावे दासीदासादि अनुज्ञाप्य व्रतमारभन्ते । 'सुतेन वा'इति तु तत्सापेक्षतदीयधनाद्यभिप्रायकं, पित्रादे[illegible]ं च । अननुज्ञायां तु याज्ञवल्क्यः

प्रातिकूल्यं गुरोः कृत्वा प्रसाद्यैव विशुद्ध्यति । इति ।

स्मृत्यन्तरे च

अथ वा [illegible] ।

निग्रहेऽनुग्रहे वापि गुरुः सर्वत्र कारणम् ॥ इति ।

अवमाने त्वधिकम् । 'भर्तृव्यतिक्रमे कृच्छ्रम्' इत्यापस्तम्बोक्तेः ।
*व्रतादीनिति । आदिना [illegible]रधारणादिस्वधर्मपरिग्रहः । अनु[illegible] श्रौते नाधिकारः । वेदाध्ययनाद्यभावात् ।

*स्नानं चेति

*स्नानं च कार्यं शिरसस्ततः *फलमवाप्नुयात् ।
*स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत्सती ॥

*तथा—

गृहीत्वौदुम्बरं पात्रं सकुशं साक्षतं तथा ।
गोशृङ्गं दक्षिणं सिञ्चय(१) प्रगृह्णीयाच्च तज्जलम् ॥

औदुम्बरं—ताम्रमयम्* ।

ततो भर्तुः सती दद्यात्स्नातस्य प्रयतस्य च ।
आत्मनश्चाभिषेक्तव्यं ततः शिरसि तज्जलम् ॥

---

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।

इत्यादिस्नानान्तरवारणाय । किं च

नित्यमभ्युदयात्पूर्वं स्नातव्यं शुद्धिमिच्छता ॥
एष साधारणो धर्मश्चतुर्वर्णस्य नित्यशः ।
स्त्रीभिः शूद्रैश्च कर्तव्यं मन्त्रवर्जं त्रिगाहनम् ॥

इति स्नाने प्राप्ते पुनर्विधानं ज्ञापयति—सुवासिनीनामशिरस्कमेव प्रातः स्नानमिति । तत्र व्रताङ्गसशिरस्कताविधानार्थमेतत् । *फलं—व्रतवैगुण्यराहित्यम् । तेन नित्यव्रतसङ्ग्रहः । नियमान्तरमाह—*स्नात्वेति । *सतीति ।

उपवासार्थमथवा व्रतकार्थं धृतव्रता ।
स्पृष्ट्वा कराभ्यां चरणौ सततं सक्तमस्य च ॥

इत्युत्तरश्लोकः । सक्तम्—अनुरक्तम् । चकाराद् विज्ञापना व्रतदैवतानुज्ञाग्रहणार्थं च स्वब्रह्मचर्यादिसंरक्षणार्थम्(२) । सङ्कल्पप्रकारमाह—

---

(१) सिक्त्वा इति पाठः क्वचित्पुस्तके ।

(२) प्रातरुत्थाय स्नात्वा धृतव्रता सती—पतिव्रता स्त्री अस्य—पत्युः चरणौ कराभ्यां स्पृष्ट्वा उपवासार्थं व्रतार्थं विज्ञापयेत्, सततं—निरन्तरं सक्तम्—अनुरक्तं पतिं तु स्वब्रह्मचर्यादिसंरक्षणार्थं च विज्ञापयेदित्यर्थः ।

उपवासेषु कर्तव्यमेतद्धि व्रतकेषु* च । इति ।

सर्वव्रतेषु संकल्पविधिश्च भारते-

गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वा *संकल्पयेद्बुधः ॥

हस्तेनैवेत्यर्थः(१) ।

अथ व्रतारम्भकालः । मदनरत्ने गार्ग्यः-

अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उद्यापनमुपारम्भं व्रतानां नैव कारयेत् ॥

रत्नमालायाम्—

*सोमसौम्यगुरुशुक्रवासराः
सर्वकर्मसु भवन्ति सिद्धिदाः ।
भानुभौमशनिवासरेषु च
प्रोक्तमेव खलु कर्म सिध्यति ॥

तथा

*विरुद्धसंज्ञा इह ये च योगा-
स्तेषामनिष्टः खलु पाद आद्यः ।

---

*तथेति । *ताम्रमयमिति । 'उदुम्बरं स्मृतं ताम्रम्'इति विश्वः । *जलेनेति गोबलीवर्दन्यायेन । ताम्राभावे त्वाह—*यद्वेति । *संकल्पयेत्—हस्तेन जलं संगृह्य संकल्पयेत् । यद्वा 'वार्येव धारयेत्'इति पाठेऽप्ययमेवार्थः । 'यथा संकल्प[illegible]' पाठे यत्फलमिच्छेदित्यर्थः ।

*सोमेति । '[illegible]तुर्यं वार' इति वचनात् तत्र न निर्णयोऽपेक्षितः । *विरुद्धसंज्ञाः-विष्कम्भा-ऽतिगण्ड- शूल-

---

(१) यद्यपि पुस्तकान्तरे एतदुत्तरं 'यथेति पाठे यत्फलमिच्छेदित्यर्थ'इत्यधिकः पाठो दृश्यते, तथापि स टीकायामपि सत्वादस्माभिर्मूले उपेक्षितः ।

सवैधृतिस्तु व्यतिपातनामा
सर्वोऽप्यनिष्टः, परिघस्य चार्धम् ॥
*तिस्रस्तु योगे *प्रथमे, सवज्रे,
व्याघातसंज्ञे नव, पञ्च शूले ।
गण्डेऽतिगण्डे च षडेव नाड्यः
शुभेषु कार्येषु विवर्जनीयाः ॥

संग्रहे—
*कृष्णेऽग्निदिशयोरूर्ध्वं* सप्तमीभूतयोरधः* ।
शुक्ले वेदेशयोरूर्ध्वं भद्रा प्राग्वसुपूर्णयोः ॥

---

गण्ड-व्याघात-वज्राः । पक्षान्तरमाह—*तिस्रस्त्विति । *प्रथमे—विष्कम्भे । अयं च निषेधो योगोपवासे न प्रवर्त्तते । तथा सति तद्विधेरानर्थक्यापातात् । उपवासस्याहोरात्रसाध्यत्वेन तद्घटितकालवर्जनासम्भवाच्च । तत्र पूर्वविद्धतिथिवत्पूर्वविद्ध एव योगो ग्राह्यो, न तु नक्षत्रवदस्तमयव्यापी निशीथव्यापी वा । रात्रौ पारणानिषेधे परेऽह्नि तदप्राप्तेश्च ।

दानव्रतयोरौदयिकः, श्राद्धे त्वापराह्णिकः ।
नक्षत्रे खण्डिते येन व्याप्तः कालस्तु कर्मणः ।
नक्षत्रकार्यण्येवैव तिथिकर्म तथैव तु ॥

इति न्यायात् । करणेषु भद्रापरिमाणमाह—*कृष्णे इति । करणान्तरं तु भद्रावत्तिथ्यर्द्धपरिमितम् । भद्रायां भविष्योत्तरे स्मर्यते ।

यस्मिन्दिने भवेद्भद्रा तस्मिन्नहनि भारत ।
उपवासस्य नियमं कुर्यान्नारी नरोऽपि वा ॥
यदि रात्रौ भवेद्विष्टिरेकभक्तं दिनद्वये ।
कार्यं तेनोपवासः स्यादिति पौराणिको विधिः ॥
प्रहरस्योपरि यदा स्याद्विष्टिः प्रहरत्रयम् ।
उपवासस्तदा कार्य एकभक्तं ततोऽन्यथा ॥ इति ।

श्रीपतिः-

न सिद्धिमायाति कृतं च विष्टयां
विषारिघातादिकमत्र सिद्धम् ॥

व्यवहारसमुच्चये-

*दशम्यामष्टम्यां प्रथमघटिका पञ्चमपरं
*हरिद्यौ सप्तम्यां द्विदशघटिकान्ते त्रिघटिकम् ।
तृतीयाराकायां खयम(२०)घटिकाभ्यः परमत्रं
शुभं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विरमे ॥

तत्रैव-

सर्पिणी तु सिते पक्षे कृष्णे चैव तु वृश्चिकी ।
सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च ॥

माधवीये-

विष्टिर्यदाऽहनि तिथेरपरार्धजाता
पूर्वार्धजा निशि तदा शुभदा च पुच्छे ।

ब्रह्मयामले-

*दिनभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा ।
न त्याज्या शुभकार्येषु प्राहुरेवं पुरातनाः ॥

---

प्रहरस्येत्युदाहरणम् । उदयोत्तरं किञ्चित्काले गते [illegible] तात्पर्यम् । अत्र दिनरात्र्योः सत्त्वेनोपवासैकभक्तयोरेकतरस्य वि[illegible] । ईदृशस्थले च भद्रापूजा तत्प्रवेशात्प्रागेव । तद्रहिते काले भोक्तुं शक्यत्वात् ।

प्रातः संपूज्य तामेव ब्राह्मणं च स्वशक्तितः ।
ततो भुञ्जीत राजेन्द्र यावद्भद्रा प्रवर्त्तते ॥

इति भविष्योत्तरात् । करणान्तरे च [illegible]त्तस्य रात्रिमात्रव्याप्तित्वे दिनद्वये एकभक्तमित्यादि । *ऊर्ध्वम्-उत्तरार्द्धे । *अधः-पूर्वार्द्धे । अथ यत्कर्म सर्वथा विष्टिं परित्यज्य दुष्करं तत्राह-*दशम्यामिति । *हरिद्युः-एकादशी । *दिनभद्रेति । दिन-

श्रीपतिः-

षट् पौष्णतो द्वादश शाङ्कराच्च
पौरन्दराद्धानि नव क्रमेण ।
पूर्वार्धमध्यापरभागयुञ्जि
चिरंतनज्यौतिषिकैः स्मृतानि ॥

व्रतारम्भे विशेषो मदनरत्ने सत्यव्रतेनोक्तः-

*उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक् ।
सा खण्डा न व्रतानां स्यादारम्भश्च समापनम् ॥

इति । देवलः—

---

भद्रा-तिथेः पूर्वार्द्धभद्रा । रात्रिभद्रा—उत्तरार्द्धभद्रा । अत्र केषांचित्पुस्तके श्रीपतिः—

षट् पौष्णतो द्वादश शाङ्कराच्च पौरन्दराद्धानि नव क्रमेण ।
पूर्वार्द्धमध्यापरभागयुञ्जि चिरन्तनज्यौतिषिकैः स्मृतानि ॥

इति लिख्यते । तत्र

पूर्वभागयुजि भे पतिः प्रियो कोपि चापरभागयोगिनि ।
स्त्री नृणां भवति, मध्ययोगिनि प्रेम नूनमुभयोः परस्परम् ॥

इत्युत्तरश्लोको रत्नमालायामेव दृश्यते । तदुत्तरं च

स्त्रीग्रहैर्वल्लभा नारी, पुंग्रहैर्वल्लभो वरः ।
सकलैरुभयोः प्रीतिरुभयोः स्यात्करग्रहे ॥

इति क्षेपकं च । टीका च—अन्तःपुरस्त्रीणां वारवधूनां राजसङ्गमे येषु नक्षत्रेषु यत्फलं तदाह—षडिति । रेवत्यादीनि षट् पूर्वभागयोगीनि । आर्द्रादीनि द्वादश मध्ययोगीनि । ज्येष्ठादीनि नवापरभागयोगीनि । फलमाह—पूर्वेति । वधूवरयोर्नवसङ्गमेऽपीदम् । शेषं स्पष्टम् । तत्र प्रकृतसङ्गत्यर्थं धार्मिकाः प्रष्टव्याः ॥

*उदयस्थेति । यथा विद्धैकादशीं निषिध्य परेद्युर्व्रतस्य विधानेऽपि न तत्र तदुपक्रमः । एवंजातीयकेष्वन्येषु व्रतेष्वपि एषैव

*अभुक्त्वा प्रातराहारं स्नात्वाऽऽचम्य समाहितः ।

---

रीतिः । *अभुक्त्वेति । पूर्वदिने प्रातराहारमभुक्त्वा एकभक्तं व्रतं कृत्वेत्यर्थः ।

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे ।
उपवासफलं प्रेप्सुर्जह्याद् भुक्तचतुष्टयम् ॥

इत्यादौ तथा दर्शनात् । अत एव व्रतशब्दस्य श्राद्धोपलक्षणत्वात्तत्पूर्वदिने एकभक्तं वदन्ति । (१)आचम्येत्यादि तु परदिनाभिप्रायमित्येके । पूर्वदिने एव सायंसन्ध्योत्तरं व्रतं ग्राह्यं वारव्रतवत् । प्रातरित्यस्य स्नात्वेत्यनेनान्वय इत्यपरे । व्रतदिने प्रातराहारमभुक्त्वेत्यर्थः । न चैवम्—

स्नानसन्ध्यातर्पणादि जपहोमामरार्चनम् ।
उपवासवता कार्यं सायंसन्ध्याहुतीर्विना ॥

इत्यनेन पौनरुक्त्यमिति वाच्यम् । यथा "नानृतं वदेत्" इति निषेधद्वयम् । तत्रैकस्य वैयर्थ्यवारणाय दुरदृष्टद्वयमङ्गीकृत्य एकस्य पुरुषार्थविरोधित्वमपरस्य क्रतुविरोधित्वमित्युक्तं, (२) तथा प्रातरा-

---

(१) अत्र स्नात्वेत्यादि तु इति पाठः सम्यक् ।

(२) "नानृतं वदेत्" इति श्रुतौ दर्शपूर्णमासप्रकरणेऽनृतप्रतिषेधः पुरुषार्थः । वदनस्य तदर्थत्वात् । तथा हि—आख्यातात् कर्ता प्रतीयते । "लः कर्मणि च" (पा० सू० ३–४–६९) इति चकारात् कर्तरि तस्य स्मरणात्, 'देवदत्तः पचति' इति सामानाधिकरण्याच्च । ततश्च तस्य प्रत्ययार्थतया प्राधान्येन तद्विशेषणतया गम्यमानं वदनं तच्छेषः—तदभिलषितसाधनम् । प्रतिषेधोऽपि तद्विपरीतमर्थं बोधयंस्तस्यैव बलवदनिष्टसाधनतां बोधयतीति [illegible] पुरुषार्थत्वमाशङ्क्य आख्यातानां भावनाभिधायकतया कर्तुश्चाक्षेपादेवावगमोपपत्तौ न तत्र शक्तिकल्पनम् । "लः कर्मणि" (पा० सू० ३–४–६९) इति सूत्रं, "द्व्येकयोः" (पा० सू० १–४–२२) इति सूत्रैकवाक्यतया कर्तुरेकत्वे लकारैकवचनमित्याक्षेपलभ्यकर्तृसंख्याभिधानपरं, सामानाधिकरण्यं च गौः शुक्ल इतिवल्लाक्षणिककर्त्रभिप्रायमिति न कर्तुर[illegible] येन वदन-

सूर्याय देवनाभ्यश्च निवेद्य व्रतमाचरेत्* ॥

मदनरत्ने भविष्ये—

*क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।

---

हारे दुरदृष्टद्वयम् । तत्र एकस्य नित्यकर्मविरोधित्वमपरस्य व्रतविरोधित्वमित्यपौनरुक्त्याद् इतीतरे । *व्रतमाचरेत्—संकल्पयेदिति केचित् ।

इक्षूनपः फलं मूलं ताम्बूलं पय औषधम् ।
भक्षयित्वापि कर्त्तव्याः स्नानदानादिकाः क्रियाः ॥

इति चतुर्विंशतिमतादावभ्यनुज्ञातानामिक्ष्वादीनां निषेधार्थमिदमिति तु वस्तुगतिः । 'सूर्याय' इत्यादिनिवेदनमन्त्रो जन्माष्टम्यां वक्ष्यते । *क्षमेति । पुरुषार्थतया विहितानामप्येषां व्रताङ्गतया पुनर्विधानं संयोगपृथक्त्वन्यायेन(१) पुरुषार्थविद्विष्टस्यापि व्रते आव-

---

तन्निषेधयोः श्रुत्या तच्छेषता स्यात् । ततश्चायं निषेधः क्रत्वर्थः । अनारभ्याधीतस्मृतिवचनबोधितनिषेधस्तु पुरुषार्थ इति तदुल्लङ्घने पुरुषः प्रत्यवेयान्न तु क्रतुवैगुण्यमिति । एतद्व्यतिक्रमे तु क्रतोरेव वैगुण्यमिति सिद्धान्तितं जैमिनिना (अ० ३-पा० ४-) नवमाधिकरणे ।

(१) "खादिरे पशुं बध्नाति" "खादिरं वीर्यकामस्य यूपं करोति" इति श्रुतिभ्यां खादिरस्य नित्याङ्गत्वं काम्याङ्गत्वञ्च बोधितम् । काम्यञ्च कामनासापेक्षत्वादनियतम् । तथा च सति अनित्यसंयोगविरोधः । संयोगः—सम्बन्धः । प्रकृते तादात्म्यमिति यावत् । न च खादिरः काम्य एव, तथा च काम्यत्वेन प्राप्ते खादिरे पशुबन्धनाश्रयत्वमात्रं "खादिरे पशुं बध्नाति" इत्यनेन विधीयते, तेन यत्र कामनाविरहाद् यूपाभावः तत्र पशुबन्धनाभाव एव इति वाच्यम् । खादिरे इत्यस्य सप्तम्यन्तस्य वैयर्थ्यापत्तेः । सान्निध्यादेवाश्रयलाभात् । यस्यानियताङ्गत्वं तत्र नित्याङ्गत्वं नास्त्येव । यथा "चमसेनापः प्रणयेद्, गोदोहनेन पशुकामस्य" इति । चमसो-काष्ठनिर्मितं प्रणीतार्थं पात्रम् । गौर्दुह्यतेऽत्रेति व्युत्पत्त्या गोदोहो-दोहनपात्रम् । गोदोहनापां प्रणयनं कामनासत्त्वे एवेति [illegible] । तथा च खादिरे नियतत्वमनियतत्वञ्च विरुद्धमित्यत्र सूत्रम्—"एकस्य तु-

*देवपूजाग्निहवनं संतोषः स्तेयवर्जनम् ॥
सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः ॥

अग्निहोमस्तद्दैवत्यः, व्याहृतिहोमो वेति वर्धमानः ।

यत्तु तेनोक्तम्-

'सर्वपदमेतत्पुराणोक्तप्रकृतव्रतपरम् । *व्रतान्तरे तु विध्यन्तरसत्त्वे होमोऽन्यथा न । अत एवैकादश्यां शिष्टानां होमानाचरणम्' इति, तन्न । 'जपो होमश्च' इति*वक्ष्यमाणैकवाक्यत्वेनास्य काम्यव्रतसमाप्ति*परत्वात् । *नत्वत्र तु सामदश्यस्य पशुमित्रविन्दादिप्रकरणस्थेनेव तत्तद्व्रतविशेषहोमविधिभिर*स्योपसंहार इति । विष्णुधर्मे-

---

श्यकत्वार्थम् । *देवपूजा—व्रतदेवताकार्यम् । व्याहृतिहोमो वेति वाकारादरुचिः । सर्वव्रताङ्गत्वेनापूर्वतद्विधाने मानाभावात् । *व्रतान्तरे त्विति । तस्य पुराणान्तरोक्तत्वेनाप्रकृतत्वात् । *वक्ष्यमाणेति । तद्वचनं काम्यविषयम् । अतस्तत्र सर्वाङ्गोपसंहार आवश्यक इति भावः । *समाप्तीति दानान्तानामावश्यकत्वार्थम् । नन्वेतावता काम्यैकादश्यादौ होमाप्राप्तिरित्यत्राह—*नत्वत्र त्विति । *अस्येति । अनारभ्याधीतत्वाविशेषादिति शेषः ।

---

भयत्वे संयोगपृथक्त्वम्'' (जै० सू० ४-३-३-५) इति । एकस्य-अङ्गस्य, उभयत्वे-नित्यत्वकाम्यत्वोभयत्वे संयोगयोः प्रयोजकधर्मसम्बन्धयोः पृथक्त्वं द्वित्वं प्रयोजकमिति । नियताङ्गत्वप्रयोजकं यागं प्रति नियतपूर्वसत्त्वं, काम्याङ्गत्वप्रयोजकं (यस्याङ्गत्वप्रयोजिका कामना तम्) यागं प्रति नियतपूर्वासत्त्वम्, एतदुभयसम्बन्धयोः पृथक्त्वमस्त्येव । अयम्भावः-यूपे पशुं निबध्याथ [illegible] । तत्र परिभाषया यूपे पशुनिबन्धनमावश्यकम् । ततः खादिरयूपस्य नियतत्वमेव । तत्रैव यूपे काम्यत्वं बोधितम् । अपि ना नियतत्वं कर्तुं समर्थम् । अतोऽत्र न नित्यत्वकाम्यत्वयोर्विरोधः । तेन यस्य न कामना तेनापि खादिरः कर्तव्य एवेति ।

*तज्जप्यजपनध्याने तत्कथाश्रवणादिकम् ।
तदर्चनं च तन्नामकीर्तनश्रवणादयः ॥
उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः ॥

कौर्मे—

*बहिर्ग्रामाऽन्त्यजान् सूतिं पतितं च रजस्वलाम् ।

इयांस्तु विशेषः—साप्तदश्यं स्वतोऽपूर्वासम्बन्धित्वात्सामिधेनीलक्षणं द्वारमपेक्षते, होमस्तु स्वत एव तत्सम्बन्धित्वान्न द्वारमित्यभेद एवोपसंहारः । अत एव सर्वशब्दस्य न सामान्यवाचित्वं, किं तु 'विष्णुर्घृतं, पाण्डुरङ्गो दधि, रामो दुग्धं, कृष्णस्तेमनं(१) भुङ्क्ते, हरिस्तु सर्वमेव' इतिवत् तत्तद्विशेषवाचित्वमिति मतेऽपि नासङ्गतिः । 'व्रतोपवासनियमैः' इत्यत्रोपवासपदं निराहारावस्थाने रूढमेव । तत्र च फलसाधनतायां के च न नियमा अप्युक्ताः ।

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगादिवर्जितः ॥

इत्यादि । सर्वो [illegible] भोगोऽभ्यवहारः । आदिपदाद् अदनीयस्मरणादि च ।

स्मृत्यालोकनगन्धादिस्वादनं परिकीर्त्तितम् ।
अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम् ॥

इत्युक्तेः । तत्र पापाः—व्रते निषिद्धा मैथुनानृतादयोऽतिविस्तृता इति तान्विहाय गुणानाह—*तज्जप्येति । कतिपयान् पापानाह—*बहिरिति । बहिष्पदं दोषाधिक्यार्थम् । हारीतः—पतितपाषण्डिनास्तिकादिसम्भाषणा—ऽनृता—ऽश्लीलादिक[illegible]दिषु वर्जयेत् । आदिपदात् पुरुषार्थनिषेधेऽपि [illegible] निषेधो लभ्यते । अत एव व्रतमधिकृत्य सुमन्तुः—

---

(१) तेमनं दध्यादिनिष्पन्नव्यञ्जनमित्यर्थः । तिमत्यार्द्रीभवति अन्नमनेन तेमनम् इति व्युत्पत्तेः सूपाद्यपि तेमनमुच्यते इति बोध्यम् ।

न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥

पृथ्वीचन्द्रोदये अग्निपुराणे-

स्नात्वा व्रतवता सर्वव्रतेषु व्रतमूर्तयः ।

पूज्याः सुवर्णमय्याद्याः शक्त्या वै भूमिशायिना ॥

जपो होमश्च सामान्यं व्रतान्ते दानमेव च ।

चतुर्विंशद् द्वादश वा पञ्च वा त्रय एव वा ॥

विप्राः पूज्या* यथाशक्ति तेभ्यो दद्याच्च दक्षिणाम् ।

अत्र विप्रा इति पुंलिङ्गनिर्देशात् पुमांस एव *भोज्याः, न तु स्त्रियः । एवं सहस्रभोजनादावपि । *विरूपैकशेषस्य प्रमाणान्तरं विनाऽयुक्तत्वात् । अत एव 'द्वयोर्यजमानयोः *प्रतिपदं कुर्यात्, बहुभ्यो यजमानेभ्यः' इत्यादौ विरूपैकशेषायोगात् पत्न्यभिप्रायं द्वित्वं बहुत्वं वा न संभवति इत्युक्तमाचार्यैः, पार्थसा-

---

विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः ।

निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः ॥

पतितादिदर्शने विष्णुपुराणे—

तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः ।

स्पर्शादौ तु [illegible]—

संस्पर्शे च नरः स्नात्वा शुचिरादित्यदर्शनात् ।

सम्भाष्य तैः शुचिपदं चिन्तयेदच्युतं बुधः ॥

'जपो होमश्च' इत्युक्तार्थमुपसंहारे लाघवात् । *पूज्या इति । पूजा भोजनान्तेत्यभिप्रेत्याह—*भोज्या इति । विप्रो विप्रा चेत्येकशेषात्कुतो न स्त्रियो भोज्या इत्यत आह—*विरूपेति । 'शिवौ नमस्कुर्यात्' इत्यत्र शिवाया ग्रहणे दुर्गापूजाप्रकरणमेव [illegible]मित्यादि । *प्रतिपद्—[illegible]ः । ननु चतुर्विंशादित्यादीनां क्रियान्वयः संभवति, एवं 'सहस्रं [illegible]' इत्यादौ सहस्रादेरपीत्यत आह—

रथिना च । *एतेनैकस्य ब्राह्मणस्यावृत्त्या भोजनं

---

*एतेनेति । ननु महाभाष्ये कर्मविशेषे सहस्रगोदक्षिणा दानरूपक्रियायां सहस्रत्वान्वयेनोपपादिता एकगोमता यजमानेन तत्कर्माचरणे वैगुण्यनिरासार्थं(१), तद्वदिहाप्येकब्राह्मणस्यावृत्त्या

---

(१) तथा च भाष्यम्—"ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया ते सर्वे सहस्रदक्षिणाः सम्पन्नाः" इति । अस्य कैयटः—ऋषिसहस्रमिति प्रतीकमुपादाय क्रियेण क्रीत्वा प्रत्येकं दत्त्वा सहस्रदक्षिणा ऋषयः सम्पन्ना इत्यर्थं व्याचष्टे । सहस्रदक्षिणाः—सहस्रदक्षिणादानजन्यफलभाज इत्यर्थः । वस्तुतस्तु येन प्रतिगृहीता कपिला तेनान्यस्मै दत्ता सती तां तेन तस्मात् प्रतिगृह्यान्यस्मै दीयते इति दानप्रतिग्रहमालासहस्रेण सहस्रदक्षिणोपपादनं युक्तम् । स्मृतिप्रतिषिद्धगोविक्रयकल्पनाया अन्याय्यत्वादिति तत्त्वम् । यत्तु "तैलं न विक्रेतव्यं, मांसं न विक्रेतव्यमिति व्यपवृक्तं न विक्रीयते, अव्यपवृक्तं गावः सर्पपाश्च विक्रीयन्ते" इति "एओङ्"सूत्रस्थभाष्येणाव्यपवृक्तगोविक्रये दोषाभावप्रतिपादनेन 'न हि कर्मणि कर्मारम्भ" इति न्यायेन यदा यस्य यजमानत्वेन दातृत्वं, तदेतरेषामृत्विक्त्वेन प्रतिग्रहीतृत्वमिति, दक्षिणातः पूर्वतने स्वस्वकर्मण्येवानुष्ठानाधिकारवद् दक्षिणायामपि तथैवौचित्येन युगपद् दानप्रतिग्रहयोरसम्भवात् क्रमेणैव स्वत्वं सम्पाद्याऽन्यस्मै दानमिति सहस्रदक्षिणा सम्पाद्येति, तन्न । युगपद् दानप्रतिग्रहयोरुक्तन्यायेनाधिकाराभावेऽपि यजमानाद्गां प्रतिगृह्य तदनन्तरमन्यस्मै ऋत्विजे ददातीति दानप्रतिग्रहयोरेककालिकत्वाभावेनायौगपद्याद्विरोधाभावेन तत्राधिकारप्रतिबन्धस्य वक्तुमशक्यत्वात् । अन्यथा स्वसङ्कल्पितसहस्रगोदानरूपकर्मसमाप्तितः पूर्वं क्रयोऽपि कथं तव सङ्गच्छते इति विभावनीयम् । तस्मात् "न हि कर्मणि" इत्यस्य प्रधानकर्मणि प्रारब्धे सति फलान्तरसाधकान्यकर्मप्रारम्भो न करणीय इत्येवार्थ इति तस्याङ्गभूते प्रतिग्रहेऽनवसरः । "अव्यपवृक्तं गावः सर्पपाश्च विक्रीयन्ते" इति गोविक्रयस्य प्रत्यवायजनकत्वाभावप्रतिपादनपरं भाष्यं तु पुङ्गव्यक्तिविक्रयस्य तत्प्रतिपादनपरं न तु स्त्रीगोव्यक्तीनामपि । अत एव बलीवर्दा एव वाह्यन्ते विक्रीयन्ते च लोके इति तत्प्रसिद्धौ तदर्थं पुंसां निष्कासने कृते स्त्रिय एव गावोऽवशिष्यन्ते इत्यर्थकं "गाव उत्कालि-

परास्तम् । बहुत्वस्यै*कपदश्रुत्या ब्राह्मणान्वितत्वेन भोजनान्वयाभावादित्यन्यत्र विस्तरः । *'शूद्रस्य तु प्रतिष्ठादिवह्निप्रद्वारा व्याहृतिहोमः' इति वर्धमानः । व्रतमूर्तयो—व्रतदेवताप्रतिमाः । प्रतिमास्वरूपं च मदनरत्ने भविष्ये-

अनुक्तद्रव्यतत्संख्या* देवताप्रतिमा नृप ।
सौवर्णी राजती ताम्री वृक्षजा मार्तिकी तथा ॥
चित्रजा पिष्टलेख्योत्था निजवित्तानुरूपतः ।

---

भोजनेन सहस्रभोजनं सम्पाद्यमिति चेत् । मैवम् । ईदृशरीत्या "सहस्रं ब्राह्मणं भोजयेत्" इत्यत्रापि तत्सिद्धिः स्यादिति ब्राह्मणपदोत्तरबहुवचनवैयर्थ्यापत्तेः । तत्र बहुवचनार्थबहुत्वस्य क्रियान्वयभ्रमं निराचष्टे—*बहुत्वस्येति । *एकेति । सुब्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । यद्वा पदं—विभक्त्यन्तं, ततः प्रकृत्यर्थोपस्थितिः, विभक्त्यर्थोपस्थितिश्च; तावतैव तत्संभृतसामग्रीकं न धात्वर्थोपस्थितिमपेक्षते इत्यर्थः ।

*शूद्रस्येति । अत्रेदमरुचिबीजम् । सर्वत्र व्याहृतिहोमो नाङ्गमित्युक्तमेव । किं च तत्तद्धोमोऽपि न सर्वत्र । व्रतत्वेन ऋत्विजोऽनावश्यकत्वात् । नापि प्रतिनिधित्वेन विप्र आवश्यकः । विप्रे शूद्रप्रातिनिधित्वाभावस्य वक्ष्यमाणत्वादिति । *तत्संख्या—त-

---

तपुंस्का वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते" इति "त्यदादीनि सर्वैर्नित्यम्" ( पा० सू० १–२–७२ ) इति सूत्रस्थं भाष्यं सङ्गच्छते । एवं च स्त्रीगवीणां विक्रयस्य प्रत्यवायजनकत्वेन तत्कल्पनया प्रकृतभाष्यलापनमत्यन्तमसङ्गतम् । "स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते" (३–४–३) इति निरुक्तं शौनःशेपदृष्टान्तेन मनुष्यजातीयस्त्रीणामेव तत्प्रतिपादनपरं, "त्यदादीनि" इतिसूत्रभाष्यस्थाविवरणे प्रायेणेति पदं च लोकव्यवहारपरमिति न तत्स्वारस्येन स्त्रीगवीविक्रयः प्रामाणिक इति दिक् ॥

*आमाषात्पलपर्यन्तं कर्तव्या शाठ्यवर्जितैः॥

तत्रैव ब्राह्मे—

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
*मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः॥

मन्त्रानुक्तौ समस्तव्याहृतिरूपो मन्त्रः, प्रजापतिश्च देवतेति कल्पतरुः। वर्धमानधृतदेवीपुराणे—

होमो ग्रहादिपूजायां शतमष्टाधिकं भवेत्।
अष्टाविंशतिरष्टौ वा यथाप्राप्ति विधीयते॥

मदनरत्ने—

*अनुक्तसंख्या यत्र स्याच्छतमष्टोत्तरं स्मृतम्।

वर्धमानधृतवृद्धशातातपः—

उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम्।
कुर्यात्तेनास्य सगुण उपवासोऽभिजायते॥

व्रतोद्यापनानुक्तौ तु पृथ्वीचन्द्रोदये नन्दिपुराणे—

*कुर्यादुद्यापनं तस्य समाप्तौ यदुदीरितम्।
उद्यापनं विना यत्तु तद् व्रतं निष्फलं भवेत्॥
*यदि चोद्यापनं नोक्तं *व्रतानुगुणतश्चरेत्।

---

द्गुरुत्वम्। *आमाषादिति। "अङ्गुष्ठपर्वादारभ्य" इति तु प्रतिष्ठापरम्। *मन्त्रेति। मन्त्रस्यानादेशे(१)प्रजापतिः—प्राजापत्यो मन्त्र इत्याद्यन्वयः। *अनुक्तेति। यत्रेत्यस्य जपे होमे चेत्यर्थः। *कुर्यादिति

आदौ मध्येऽथ वाऽप्यन्ते व्रतस्योद्यापनं भवेत्॥

इत्यनेन विकल्पते। यद्वा—व्रतोद्यापनानुक्तावित्यवतारिकादर्शनात्तस्य व्रतस्य समाप्तौ उद्यापनं कुर्यात्। कीदृशम्?, कार्यतयोदीरितमिति। अनुक्तोद्यापने कालमभिधायेतिकर्त्तव्यतामाह—यदि चेतीति व्याख्येयम्।

*व्रतेति। एतदुक्तं भवति—यत्र व्रते या देवता, तां—सर्वतो

---

(१) अनुक्तावित्यर्थः।

वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते ॥
गाश्चैव काञ्चनं दद्याद्व्रतस्य परिपूर्तये ॥

*अशक्तौ तु नारदीये-

*सर्वेषामप्यलाभे तु यथोक्तकरणं विना ।
विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये ॥
वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभम् ।
अदत्त्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥

भारते—

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
*सर्वत्र तु यथोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥

बैजवापः—

*शिवनेत्रोद्भवं यस्माद्रजतं पितृवल्लभम् ।
अमङ्गलं तद्यत्नेन देवकार्येषु वर्जयेत् ॥

टोडरानन्दे देवीपुराणे-

व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः ।

---

भद्रमण्डले(१)तद्देवतास्थापनं कृत्वा कुम्भे विष्णुस्थापिते अधिवास्य, तद्देवताको होमः कार्यः। रुद्रव्रते तु लिङ्गतोभद्रमण्डले इति विशेषः। तत्राद्यं नवरात्रे। द्वितीयं शिवरात्रौ। तदन्ते शय्यादि दद्यादित्यग्रे विस्तरः। *अशक्तौ—उद्यापनाकरणे। *सर्वेषाम्—उद्यापन-वस्तूनाम्। संपूर्णताविधिश्च भविष्योत्तरे जन्माष्टम्यां वक्ष्यते। *सर्वत्र—वेदोपनिषदे इत्यन्वयः। वेदान्तश्रवणेऽपि याज्ञवल्क्याय जनकेन दक्षिणादानोक्तेः। *शिवेति।

सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते ।
सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते ॥

इति त्वनाकरम्। दक्षिणायां तु न दक्षिणा। अनवस्थानात्(२)।

---

(१) सर्वतोभद्रमण्डलदेवतानां स्थापनं पूजनं च कृत्वेत्यर्थः।
(२) दक्षिणायां दीयमानदक्षिणाया अपि सदक्षिणात्वावश्यकतया

*परान्नभोजनाद्देवि यस्यान्नं तस्य तत्फलम् ॥

पृथ्वीचन्द्रोदयेऽग्निपुराणे–

नित्यस्नायी मिताहारो गुरुदेवद्विजार्चकः ।
क्षारं *क्षौद्रं च लवणं मधु* मांसानि वर्जयेत् ॥

*क्षारास्तु तत्रैवोक्ताः–

तिलमुद्गादृते शिम्ब्यं सस्ये गोधूमकोद्रवौ ।
धान्यकं देवधान्यं च शमीधान्यं तथैक्षवम् ॥
स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः ॥

गोधूमानां तु तत्रैव प्रतिप्रसवः—

*परान्नेति ।

श्वशुरान्नं गुरोरन्नं मातुलान्नं तथैव च ।
पितृव्यभ्रातृपुत्राणां परान्नं नैव दोषकृत् ॥

इति तु निर्मूलम् । *क्षौद्रं–मधु । *मधिवति दोषाधिक्यार्थम् । मद्यादिनिषेधस्य सर्वदा सिद्धत्वात् । उन्मादकसामान्यं वा तदर्थः । अनुज्ञातमद्यानामपि व्रताङ्गो निषेध इति वा । ननु 'क्षारं-क्षौद्रं च लवणम्'इत्यत्र क्षारं लवणमिति नार्थः क्षौद्रं चेत्यनेन व्यवधानादतः क्षारानाह–*क्षारास्त्विति । धान्यावरणं सूक्ष्मं, शमी-स्थूलं शिम्बा । धान्यकं–कुस्तुम्बुरु । देवधान्यं–देवशालितण्डुलम् । ऐक्षवं–गुडफाणितादि, न तु सितादि । 'अगुडमैक्षवम्'इत्युक्तेः । स्विन्नं जलाग्न्यादिना धान्यं पृथुकादि । पण्यं–तद्दिनक्रीतम् । सम्भवे तु दिनान्तरक्रीतमपि । मूलं—मूलकं प्रसिद्धम् । 'मूलकं केमुकेतरत्'इति तु केमुकस्य सर्वथैवाग्राह्यत्वार्थम् । यद्वा मूलं कन्दफलशाकादेरुपलक्षणम् । अग्रिमगौतमवचने फलादिसमभिव्याहारात् । तत्र पण्येतिविशेषणम् । 'मूलकं केमुकेतरत्'इत्यत्र च स्वा-

---

तत्रापि दक्षिणादानप्रसक्तेस्तस्या अपि दानरूपत्वेन दक्षिणान्तरप्रसक्तिरितिरीत्यानवस्थापत्तेरित्यर्थः ।

व्रीहिषष्टिकमुद्गाश्च* कलायाः सतिलं पयः।
श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः॥
कूष्माण्डालाबुवार्ताकपालङ्कीज्योत्स्निकास्त्यजेत् ।
*चरुभैक्षं सक्तुकणाः शाकं दधि घृतं मधु ।
श्यामाकाः शालिनीवारा यावकं मूलतण्डुलम् ॥
हविष्यव्रतनक्तादाव*ग्निकार्यादिके हितम् ।
मधु मांसं विहायान्यद् व्रते च हितमीरितम्॥ इति।

शमीधान्यं माषादि। पालङ्की मध्यदेशे 'पोई' इति प्रसिद्धा। ज्योत्स्निका पटोलिका (कोशातकी)। मिताक्षरायां गौतमः-'चरु-भैक्ष-सक्तुकण-यावक-शाक-पयो-दधि-घृत-मूल-फलोदकानि हवींष्युत्तरोत्तरप्रशस्तानि। पयो

---

र्थे कप्रत्ययान्मूलमर्थः। तत्र च केमुकसंज्ञकमूलेतरत्वान्वयः। प्रसिद्ध-मूलकं शाक इति तत्र विहितत्वविशेषणाच्च तस्य ग्राह्यत्वप्रसङ्गः। *कलाया इति। शमीधान्यानां सामान्यतो निषेधान्निरवकाशतया हविष्यशास्त्रैकवाक्यतया च हविष्यसंकल्पे सतीनका ग्राह्याः। नीवाराश्च देवधान्यभिन्नत्वात्। यत्र त्वकृष्टपच्यं स्मर्यते तत्र देवधान्यादि ग्राह्यं तथैवाकाङ्क्षाशान्तेः। अत एव च सामान्यविधिनिषेधौ तत्र न प्रवर्तेते। गोधूमानां तु विहितप्रतिषिद्धत्वाद्ग्रहणाग्रहणवद्विकल्पः। इयाँस्तु विशेषः-यत्तत्र ग्रहणस्याभ्युदयार्थत्वादग्रहणे न क्रतुवैगुण्यम्, इह तु इतरासत्त्व एव गोधूमे व्रतसाद्गुण्यमितरसत्त्वे च तद्वैगुण्यमिति। एतेन 'गोधूमादीनामिति वाच्यम्। कलायनीवारयोर्विहितप्रतिषिद्धत्वात्' इति प्रत्युक्तम्। मधु-मधुरं सितादि। क्षौद्रस्यापि निषिद्धत्वात्। चरुः-हुतशेषः पुरोडाशादेरुपलक्षणम्। मूलतण्डुलं-मूलोद्भवास्तण्डुलाः। भर्जितमूलविशेषात्तण्डुला इव निःसरन्तीति प्रसिद्धम्। *अग्निकार्यादिके इति। तेन तादृशव्रते आहिताग्नेरधिकारः सूचितः। मधु-क्षौद्रम्, औषधाद्यर्थं गुर्वनुज्ञा-

दधि घृतं च गव्यम्' इति। अन्ये च विशेषा एकादशी-*चातुर्मास्यादिप्रकरणे वक्ष्यन्ते।

गृहीतव्रतत्यागे तु मदनरत्ने छागलेयः—

पूर्वं व्रतं गृहीत्वा यो नाचरेत् *काममोहितः।
जीवन् भवति चण्डालो, मृतः श्वा चाभिजायते॥

*तत्र प्रायश्चित्तमुक्तं पृथ्वीचन्द्रोदये अग्नि—गरुड-पुराणयोः—

क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि।
दिनत्रयं न भुञ्जीत *मुण्डनं शिरसोऽथवा॥

---

तमपि। *चातुर्मास्यादीति। आदिना व्रताङ्गतया विहितनान्दीमुखस्य सङ्ग्रहः।

नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किञ्चित्समारभेत्।

इति शातातपोक्तेः श्राद्धे वक्ष्यमाणत्वात्। *कामेति। व्याध्यादिनाऽनाचरणं तु न दोषः। "सर्वभूतभयं व्याधिः" इत्येकादश्यां स्कान्दात्। असकृत्त्यागे त्वाह—*तत्र प्रायश्चित्तमित्यादि। *मुण्डनमिति। प्रायश्चिताङ्गं मुण्डनं रात्रावपि कार्यम्।

क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके॥

इत्यग्निमवचनात्। गयादिदेशे रात्र्यपराह्णादिकाले च निषेधः। मृतिनिमित्तं तु दिन एव। "अस्तनी वपनक्रिया" इति विशेषात्। दिनत्रयोपवासश्चार्द्धप्राजापत्यरूपः। एवं च मुण्डनपक्षे दक्षिणा नास्ति।

कृच्छ्राणां व्रतरूपाणां श्मश्रुकेशादि वापयेत्॥

इति वासिष्ठे कृच्छ्रपदादर्धकृच्छ्रादौ न वपनमिति मुक्तावलीलिखनेन वपनेऽर्द्धकृच्छ्रव्यतिरेकलाभात्। सधवानां तु न मुण्डनम्। तत्राङ्गुलत्रयादिकेशकर्तनपक्षसम्भवात्।

इति *प्रायश्चित्ताम्नानादतिक्रान्तव्रतानुष्ठानं नास्तीति गम्यते । यत्तु-

प्रायश्चित्तं ततः कृत्वा पुनरेव व्रती भवेत् ।

इति वचनादतिक्रान्तमपि* व्रतं कार्यमेवेति शूलपाणिः, तत् मध्ये व्रतलोपे व्रतशेषसत्त्वे ज्ञेयम् । *एतच्च शक्तविषयम् ॥

अशक्तौ तु कालहेमाद्रौ पुराणान्तरे-

उपवासासमर्थश्चेदेकं* विप्रं तु भोजयेत् ।
तावद्धनादि वा दद्याद् भुक्तश्चेद् द्विगुणं तथा ॥

भुक्तः कृतभोजनः । ब्राह्मणभोजनं विनेति शेषः ।

सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् ।
कुर्याद्द्वादशसंख्याकान् *यथाशक्त्यातुरो नरः ॥ इति ।

शुद्धितत्त्वे मात्स्ये-

---

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः ॥

इति निषेधाच्च । *प्रायश्चित्ताम्नानादित्यादिरभ्युपगमवादः । व्रतभङ्गार्थस्य प्रायश्चित्तस्य तत्संपूर्णतार्थत्वासम्भवात् ।

प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ।

इति स्कान्दाच्च । तदाह-*अतिक्रान्तमपीति । *एतच्च-दिनत्रयोपवासविधानं च । *एकमिति । दिनत्रयोपवासे ब्राह्मणत्रयभोजनम् । एवं क्रमेण तावदित्यादावपि द्रष्टव्यम् । तावदित्यत्र कियदित्यपेक्षिते आह-*भक्तस्येति । 'भुक्तश्चेद् द्विगुणम्'इति पाठे च ब्राह्मणभोजनमकृत्वा भुक्तश्चेदित्यर्थः । द्विगुणं-ब्राह्मणद्वयं, तावद्धनद्विगुणधनं वा । *यथाशक्तीति [illegible] । आतुरो-व्रतभङ्गेन व्याकुलः । व्रतभङ्गेऽपि धृष्टस्य धाष्र्ट्यानुरोधेन द्विगुणत्रैगुण्यादि कल्प्यम् ।

उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।

मदनरत्ने वायवीये—

द्रव्यदानोपवासस्य फलं प्राप्नोत्यसंशयम् ।

तथाऽपरार्के देवलः—

ब्रह्मचर्यं तथा शौचं *सत्यमामिष*वर्जनम् ।

व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥

मात्स्ये—

तस्मात्कृतोपवासेन स्नानमभ्यङ्गपूर्वकम् ।

वर्जनीयं प्रयत्नेन रूपघ्नं तत्परं नृप ॥

*अन्ये च नियमास्तत्र तत्रान्वेषणीयाः ।

अथ स्त्रीव्रतेषु विशेष उच्यते । तत्र हेमाद्रौ व्रतकाण्डे गारुडे—

गन्धालंकारताम्बूलपुष्पमालानुलेपनम् ।

उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥ इति ।

इदं च सभर्तृकोपवासविषयम् ।

---

अथ वा विप्रमुख्येभ्यो दद्याद्दानं च शक्तितः ।

इति स्मृतेर्यथाशक्तिदानपक्षोऽपि द्रष्टव्यः ।

ब्रह्मचर्यं व्याख्यास्यते । शौचमतिविस्तृतत्वान्नेह प्रस्तूयते । *सत्यं—

प्राणात्यये, दारपरिग्रहे च पञ्चानृतान्याहुरपातकानि ।

इति वचनोक्तानि पञ्चानृतानि,

(स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसंकटे ।

गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥

इत्युक्तानि च तानि)

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ॥

इत्यादि चानृतं, तदन्यानृताभावः । *आमिषं—मांसं चातुर्मास्ये वक्ष्यमाणं, पारिभाषिकमामिषं च । *अन्ये चेति । अत्र

शरीरसाधनापेक्षं नित्यं यत्कर्म, तद् यमः ।

अञ्जनं च सुताम्बूलं कुङ्कुमं रक्तवाससी* ।
धारयेत्सोपवासाऽपि अवैधव्यकरं यतः ॥
विधवा *यतिमार्गेण, कुमारी वा यदृच्छया ॥

इति तत्रैव भविष्योक्तेः। तथा विष्णुधर्मे-

सर्वेषु तूपवासेषु पुमान्वाऽथ सुवासिनी ।
धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च ॥
विधवा शुक्लवसनमेकमेव हि धारयेत् ॥

मनुरपि-

पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥

मदनरत्ने व्यासः—

दन्तधावनपुष्पादि व्रतेऽप्यस्या न दुष्यति । इति ।

यद्यपीदं* सर्वोपवासविषयं प्रतीयते, तथापि शिष्टाचारात्सौभाग्याद्यर्थं क्रियमाणनवरात्रात्रिरात्राद्युपवासविषयमेव, न त्वेकादश्यादिविषयम् ।

---

नियमस्तु स, यत्कर्म नित्यमागन्तुसाधनम् ॥

इतियमानियमयोर्भेदादिह तादृशा वस्त्रग्रहणाद्यो नियमा ग्राह्याः। तेन स्थलत्रयमालम्ब्य व्रताङ्गानां नियमानां लिखनादन्ये तादृशास्ते क्व सन्ति?,इति परास्तम् । *रक्तवाससी—रञ्जितवाससी । द्विवचनं कञ्चुकाभिप्रायम् । दक्षः—

श्रुतिस्मृतिप्रमाणेन वस्त्रं ग्राह्यं च धारयेत् । इति ।

"अश्रीरा तनूर्भवति रुशती पापयाऽमुया । पतिर्यद्वध्वो वाससा स्वमङ्गमभिधित्सते" इति दाशतयीश्रुतिः । स्मृतयश्च तत्र तत्र प्रसिद्धाः । एवं यज्ञोपवीतोपवस्त्रादि बोध्यम् । *यतिमार्गेणेत्युपमानोपादानात्फलाद्यनुकल्पानां निवृत्तिः । एवं यतिचान्द्रायण एव विधवानामधिकारो न तु यवमध्यादौ इत्यादि बोध्यम् । *इदं-

असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात्।
उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात्॥

इत्यपरार्के देवलेन तन्निषेधात्। न चास्य पुंविषयत्वेन सावकाशत्वात् स्त्रीणां ताम्बूलादि प्राप्नोतीति वाच्यम्। ताम्बूलादिप्रापकस्यैवैकादशीतराविषयत्वेन *वैपरीत्यस्यापि सुवचत्वात्। यत्तु हरिवंशे—

अञ्जनं रोचनं चैव गन्धान्सुमनसस्तथा।
व्रते चैवोपवासे च नित्यमेव विवर्जयेत्॥
शिरसोऽभ्यञ्जनं *सौम्ये नैवमेतत्प्रशस्यते।
न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृता॥ इति,

तत्तत्रैवोक्तपुण्यकव्रतविषयं न तु सर्वत्र, पूर्वोक्तविरोधादिति मदनरत्ने उक्तम्। तत्रैव—

अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा।
उपवासाद्व्रताद्वापि सद्यो भ्रंशयति स्त्रियम्॥

स्त्रियमित्युपलक्षणम्। मदनरत्ने शिवधर्मे—

दानं व्रतानि नियमा ज्ञानं ध्यानं हुतं जपः।
यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा भवेत्॥

अथ सूतकादौ निर्णयः—'तत्र शावसूत्याशौचयोः सर्वस्मार्तकर्मनिवृत्तिर्निबन्धेषु *स्पष्टैव। गौडास्तु क्षताशौचादावपि तामाहुः—

जानूर्ध्वं क्षतजे जाते नित्यकर्म न चाचरेत्।
नैमित्तिकं च तदधः स्रवद्रक्तो न चाचरेत्॥

---

दन्तधावनताम्बूलचर्वणादिकर्त्तव्यतावाक्यम्। *वैपरीत्यस्यापीति। सुभगाचिह्नानां सौभाग्यार्थव्रत एवौचित्याच्चेत्यपि द्रष्टव्यम्। *सौम्ये इति सम्बुद्धिः। *स्पष्टैवेति।

स्मार्त्तकर्मपरित्यागो राहोरन्यत्र सूतके।

*लोतके च समुत्पन्ने ज्वरकर्मणि मैथुने।
धूमोद्गारे तथा वान्तौ नित्यकर्माणि संत्यजेत्॥
द्रव्ये भुक्ते त्वजीर्णे च नैव भुक्त्वापि किञ्चन।
कर्म कुर्यान्नरो नित्यं सूतके मृतके तथा॥

इति कालिकापुराणात्। वस्तुतस्तु पूर्वं देवीपूजोपक्रमात्तन्मात्रविषयत्वमस्येति युक्तं प्रतीमः। तथा हेमाद्रौ पाद्मे—

गर्भिणी *सूतिकादिश्च कुमारी वाऽथ रोगिणी।
यदाऽशुद्धा तदाऽन्येन कारयेत,*प्रयता स्वयम्॥ इति।

पुंसोऽप्येष विधिः। लिङ्गस्याविवक्षितत्वात्। तेन 'यस्मिन्व्रते यत्पूजाद्युक्तं तदन्येन कारयेत्, शारीरनियमान् स्वयं कुर्यात्' इति हेमाद्रिर्व्याचख्यौ। 'न व्रतिनां व्रते' इति विष्णूक्तेश्च। *आरम्भस्तु न भवत्येव।

तदाह—शुद्धितत्त्वे विष्णुः—

बहुकालिकसङ्कल्पो गृहीतश्च पुरा यदि।
सूतके मृतके चैव व्रतं तन्नैव दुष्यति॥

एतत्काम्यव्रतपरम्। नित्यं त्वनारब्धमपि कार्यमिति गौडाः। मदनरत्ने—

---

इत्युक्तेः। *लोतकं—(१)लूतासंपर्कजः स्फोटभेदः। *सूतिकादिरिति। आदिना रजस्वलाग्रहः। सूतिकापदं विंशत्यादिदिनपर्यन्तपरम्। *प्रयतेति। (२)प्रयता तु स्वयं कुर्यादित्यर्थः। *आरम्भस्त्विति। स्वस्याशुद्धेः, तत्र प्रतिनिध्यभावाच्च। अत्राधिकः पाठः- "तदाह—शुद्धितत्त्वे विष्णुः। 'बहुकालिकसङ्कल्पो गृहीतश्च पुरा

---

(१) लूता—तन्तुवायो जन्तुविशेषस्तन्मूत्रसंपर्कजन्यः स्फोटभेद इत्यर्थः।

(२) शुद्धेत्यर्थः।

पूर्वसङ्कल्पितं यच्च व्रतं सुनियतव्रतैः ।
तत्कर्तव्यं नरैः शुद्धं *दानार्चनविवर्जितम् ॥

माधवीये कौर्मे—

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥ इति ।

एतेन साङ्गेऽधिकाराद् व्रताङ्गदेवपूजादि कार्यमिति वर्धमानोक्तिः परास्ता *प्रारब्धं पूजादि कार्यमेव । नवरात्रे तु तत्रैव विशेषं वक्ष्यामः । *एवं रजस्वलाऽपि ।

यत्तु सत्यव्रतः—

---

यदि । सूतके मृतके चैव व्रतं तन्नैव दुष्यति' । एतत्काम्यव्रतपरम् । नित्यं त्वनारब्धमपि कार्यमिति गौडाः" इति । अथ व्याख्या गौडमतमाह—एतदिति । अत्र नित्ये शौचरूपाङ्गबाधापत्तिरित्यरुचिः । दानेति । अनन्यसाध्यजपहोमाद्युपलक्षणम् । *प्रारब्धं पूजादीति । 'न व्रतिनां व्रते'इति विष्णूक्तेः 'पूजामन्येन कारयेत्' इति निषेधस्य प्रारब्धपूजाशेषपरत्वासम्भवात् । तत्र दानं सूतकान्ते कार्यमिति वक्ष्यति । अर्चनं त्वन्येनैव कारणीयम् ।

सूतके तु नरः स्नात्वा प्रणम्य शिरसा हरिम् ।

इति तु स्वयं पूजां विनाऽशनाकरणव्रतपरम् । "प्रणम्य मनसा हरिम्"इति पाठे कायिकयाः पूजाया अन्येनैव कर्त्तव्यत्वार्थम्(१) । पठन्ति च

सूतकात्प्राक् समारब्धमनेकाहं तु यद् व्रतम् ।
कायिकं तत्तु कुर्वीत, न तु दानार्चनं जपम् ॥
सूतकाहे तु यत्किञ्चिद्दानाद्यन्तरितं भवेत् ।
सूतकानन्तरे त्वह्नि तत्कर्तव्यमतन्द्रितैः ॥ इति ।

न हीदं प्रारब्धपूजाद्यर्द्धत्यागं बोधयति, किं तु दानादेरप्रारम्भम् । 'दानाद्यन्तरितम्'इत्येवोक्तेः । यत्र पूजायामन्यः कर्त्ता न लभ्य-

---

(१) मनःपदमिति शेषः ।

प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥ इति,

तत् *प्रतिनिधिना कारयेदित्येतत्परम् । तदुक्तं मदनरत्ने मात्स्ये-

अन्तरा तु रजोयोगे पूजामन्येन कारयेत् । इति ।

प्रतिनिधयश्च निर्णयामृते पैठीनसिः—

भार्या पत्युर्व्रतं कुर्याद्भार्यायाश्च पतिर्व्रतम् ।
असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते ॥

स्कान्देऽपि—

पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवान्यं ब्राह्मणं वा नियोजयेत् ॥

कात्यायनः-

पितृमातृभ्रातृपतिगुर्वर्थे च विशेषतः ।
उपवासं प्रकुर्वाणः *पुण्यं शतगुणं लभेत् ॥
मातामहादीनुद्दिश्य एकादश्यामुपोषणे ।

---

ते, कर्त्रन्तरेण दुष्करश्च पूजाविशेषस्तत्र सूतकान्ते इत्यर्थः । *एवमिति । दानादिकमन्ते कुर्यात्, इतरत्स्वयं कारयेदित्यर्थः । *प्रतिनिधिनेति । यद्यपीदं दीर्घकालव्यापिमासोपवासादावेव एकविधिविषये प्रवर्त्तते इति प्रतीयते, तथापि वर्षादिपर्यन्तमभ्यासेन फलसाधनेष्वपि योजयितुं शक्यत्वात्तत्रापि प्रवर्त्तते इति भावः । *पुण्यमिति । अगृहीतव्रतः प्रतिनिधिरित्यादिः ।

कर्त्ता शतगुणं पुण्यं प्राप्नोत्यत्र न संशयः ।
यमुद्दिश्य कृतं सोऽपि सम्पूर्णं फलमाप्नुयात् ॥

इत्युक्तेः । गृहीतव्रतस्य तु तस्य स्वोपवासफलमपि ।

उपवासफलं ताभ्यां समग्रं समवाप्यते ।

इत्युक्तेः । अनयोश्च दक्षिणा न देया पुण्यप्राप्तेः सत्त्वात् । 'पितृमातृस्वसृ'इत्याद्युपक्रम्य—

कृते ते तु फलं विप्राः समग्रं समवाप्नुयुः ॥

मदनरत्ने प्रभासखण्डे–

भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखाऽपि च ।
यात्रायां धर्मकार्येषु जायन्ते प्रतिहस्तकाः ॥
एभिः कृतं महादेवि स्वयमेव कृतं भवेत् ।

तत्रैव वायवीये–

स्वयं कर्तुमशक्तश्चेत्कारयीत पुरोधसा ।

इदं च सर्ववर्णसाधारणम् । अविशेषात् । यत्तु कश्चिन्महोक्ष आह–'शूद्रस्य ब्राह्मणादिरेव प्रतिनिधिर्युक्तो न शूद्रः ।

जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् ।
विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम् ॥

इति नरसिंहवचनात्' इति, तत्तुच्छम् । प्रव्रज्यादीनां शूद्रेऽसंभवात्, '*विशये प्रायदर्शनात्'इति न्यायेनास्य ब्राह्मणादिगोचरत्वात् । यदपि–

दक्षिणा नात्र दातव्या शुश्रूषा विहिता हि सा ।

इति वचनाच्च । अत्र कनिष्ठस्वस्रादेः कन्यादेः पुत्रादेश्च ज्येष्ठभ्रात्रादिः प्रतिनिधिर्भवत्येव भार्यायाः पतिरिव । तत्र क्वापि न दक्षिणा । 'शुश्रूषा विहिता हि सा'इति हेतुमन्निगदात् । यत्तु 'स्वयं कर्तुमशक्तश्चेद्'इत्युपक्रम्य

हिरण्यं दक्षिणां दद्यात्स्वशक्त्या चानुरूपतः ।

इति पुरोधसे दक्षिणादानमुक्तं, तत् तदर्थिने द्रष्टव्यम् । *विशये इति । विशये संशये प्रायः पदान्तरसमभिव्याहारस्तस्य दर्शनान्निश्चायकत्वोपगमादिरर्थः(१) । तथा च प्रव्रज्यासाहचर्येण ब्राह्म-

(१) अग्निहोत्रदोहाधिकारे "वत्समालभेत"इति श्रुतम् । तत्र किमनेन वाक्येनाग्निहोत्राङ्गतया पशुयागो विधीयते उत पशुस्पर्शमात्रमिति संशयः । अत्रोच्यते–वत्सालम्भो यजिकर्म प्राणिद्रव्य-

उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् ।

णाधिकारिकप्राप्तिनिषेधमेव तद्विषय इति भावः । *होम इति ।

स्त्रीणां होमो न दातव्यः पञ्चगव्यं तथैव च ।

इति (१)ब्रह्मकूर्चहोमनिषेधोऽपि साक्षादेव। विप्रद्वारा स्त्रीशूद्रयोरेत-

कालम्भत्वाद् वायव्यवदित्यनुमानेन यागत्वाध्यवसाये याग एव वत्सालम्भ इति । यदि च यागस्य द्रव्यदेवतास्वरूपत्वेन वायव्यादिवदत्र देवतासंयोगाभावान्न यागत्वाध्यवसायः । न च "आज्यं द्रव्यमनादेशे देवता मान्त्रवर्णिकी" इति "पूषासीति वत्समुपसृजति" इति वत्सालम्भे 'पूषासि' इति-मन्त्रविधानात्तत्रत्यपूषदेवतायाः प्रकृते संयोगोऽस्त्येवेति वाच्यम् । उपसृजतेः समीपधारणार्थकतयाऽऽलम्भार्थकत्वाभावेन तेन वाक्येनोक्तमन्त्रस्य वत्सालम्भे विनियोगस्य विधातुमशक्यत्वात् । असिशब्दसामानाधिकरण्येन पुष्प्रयोगेन च पूषशब्दस्य वत्सपरतया देवतापरत्वाभावाच्च इत्युच्यते, तथापि "वायव्यं श्वेतमालभेत भूतिकामः" इत्यत्रालभतेर्यागार्थत्वावधारणे नात्रापि प्राणिकर्मतया प्रयुज्यमानत्वाविशेषात्पूर्वं यागार्थे तस्यावधारिते चोदकेनाग्नीषोमीयस्य विध्यन्तातिदेशाद्देवलाभासिद्धेर्यागत्वाध्यवसाय इति पूर्वपक्षे सिद्धान्तसूत्रम् "विशये प्रायदर्शनात्" (जै० सू० २-३-६-१६)। विशये-संशये, यागविधिः संस्कारविधिर्वेति संशये प्राये-दोहनादिसंस्कारप्रकरणे दर्शनात्-पाठात् संस्कारविधित्वमेवेत्यर्थः। अयं भावः "वायव्यमालभेत" इत्यत्र यागार्थतया "अध्वर्युमालभेत" इत्यत्र स्पर्शार्थतया च दृष्टस्य आलभतेः प्रकरणात् स्पर्शार्थकत्वमेव । न चोक्तानुमानेन यागार्थत्वाध्यवसायः । सामान्यतो दृष्टानुमानस्य वैदिकार्थे प्रवृत्त्यसम्भवात्, "अध्वर्युमालभेत" इत्यत्र व्यभिचाराच्च । न च स्पर्शो दोहनबलाद् "वत्समुपावसृजति" इत्युपावसर्जनबलाद्वा सिद्ध एवेति तद्विध्यानर्थक्यमिति वाच्यम् । उक्तवाक्येन चाटुकरणात्मकस्पर्शविशेषलक्षणसंस्कारविधानात्तस्य चात्राप्राप्तेरिति वत्सालम्भस्तत्संस्कार एवेति सिद्धान्तः ।

(१) ब्रह्मकूर्चहोमः—पञ्चगव्यहोमः । स च "सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः । एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि" । तत इत्यादिनेतिकर्तव्यताविशिष्टः पराशरस्मृतावेकादशाध्याये स्पष्ट इति एवावगन्तव्यः । पञ्चगव्यद्रव्याण्यपि "गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं तु पवित्रं पापशोधनम्" इति तत्रैव स्पष्टानि।

इति पूर्वार्धस्तदापि स एव दोषः।

"*स्त्रीशूद्रपतनानि षट्" इति(१) मानवीये जप-
निषेधात्।

---

द्वचनेन होमोक्तेरिति केचित्। द्विजस्त्रीणां पञ्चगव्यविकल्पः।

स्त्रीशूद्रस्य तु शुद्ध्यर्थं प्राजापत्यं समाचरेत्।
पञ्चगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत्॥

इति पराशरोक्तेः। उत्तरार्द्धे च स्त्रीमात्रान्वयो न शूद्रस्य(२)।

पञ्चगव्यं पिबेत् शूद्रो ब्राह्मणस्तु सुरां पिबेत्।
उभौ तौ पापकर्माणौ पूयाख्ये नरके वसेत्॥

इति निषेधात्।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
पञ्चगव्यं पिबेदेतत् श्वपाकमपि शोधयेत्॥

इति तु यस्य पञ्चगव्येऽधिकारः तत्परं, न स्वपूर्वाधिकारं बोधयति। 'श्वपाकम्' इत्यर्थवादात्(३)। *स्त्रीशूद्रेति।

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्।
देवताराधनं चेति स्त्रीशूद्रपतनानि षट्॥ इति।

---

(१) अत्र यद्यपि लिखितपुस्तकेषु समग्रः श्लोकोऽयमुपलभ्यते, तथापि टीकायां तस्योपलम्भादस्माभिर्मूले उल्लिखितः।

(२) वस्तुतस्तु उत्तरार्द्धे शूद्रस्याप्यन्वयो भवत्येव, तस्य प्रायश्चित्ताङ्गपञ्चगव्यप्राशनेऽधिकारादेतद्वचनेन तदङ्गभूतस्यैव पञ्चगव्यस्य बोधनात्। अत एव "शूद्राणां नोपवासः स्यात् शूद्रो दानेन शुद्ध्यति। ब्रह्मकूर्चमहोरात्रं श्वपाकमपि शोधयेत्"॥ इति पराशरस्मृतौ—"मृतपञ्चनखात् कूपादत्यन्तोपहतमुदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेद्, द्व्यहं राजन्य, एकाहं वैश्यः, शूद्रो नक्तं, सर्वे चान्ते पञ्चगव्यं पिबेयुः" इति विष्णुस्मृतौ च शूद्रस्य पञ्चगव्यपानं सङ्गच्छते। अनुपदोक्तात्रिवचनं तु स्वतन्त्रपञ्चगव्यपानस्यैव निषेधकं विप्रस्य सुरापानवदिति न तद्विरोध इति बोध्यम्।

(३) एतत्पञ्चगव्यपानं श्वपाकमपि शोधयेत् किं पुनरन्येषामित्यर्थात्।

स्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः *शब्दस्य च प्रतिनिधिर्विद्यते' इति(१) ॥

अथ व्रतादिसन्निपाते निर्णयः। तत्र तिथिद्वयसन्निपाते तन्त्रोक्तं दानहोमादि *क्रमेणानुष्ठेयम्, अविरोधात्। इदं पूर्वारब्धेष्वेव। एकमध्येऽन्यकाम्यकर्मारम्भस्तु न भवत्येव गुणफलादृते। "यस्य यज्ञे प्रततेऽन्तरा यज्ञस्तायते तं यज्ञं निर्ऋतिर्गृह्णाति" इतिराणकधृतश्रुतेः। यज्ञः-व्रतादिकर्ममात्रम्। अनङ्गेन व्यवधानदोषस्य सर्वत्र साम्यात्। शिष्टास्तु माघकार्त्तिकस्नानादिमध्ये लक्षहोम-तुला-भारतश्रवणाद्याचरन्ति, तन्नित्यमध्येऽस्तु, काम्यमध्ये तु चिन्त्यम्। यत्र तु नक्तैकभक्तादौ विरोधस्तत्र प्राथम्यादेकभक्तं कार्यम्। नक्तं तु परेद्युरन्तरा सामर्थ्याभावे त्वाह-*काम्येऽपीति। *शब्दस्य-मन्त्रस्य। *क्रमेणेति। यत्रोपवासद्वयमेकभक्तादिद्वयं वा तत्राङ्गिनस्तन्त्रम्। भिन्नदैवत्यत्वादिना विरुद्धं पूजाहोमाद्यङ्गं सहैव कार्यम्।

> पाकयज्ञान् समासाद्य एकाज्यानेकबर्हिषः।
> एकस्विष्टकृतः कुर्यान्नानापि सति दैवते ॥

इति न्यायात्। इदं पूर्वारब्धेष्वेव। पूर्वारब्धकर्ममध्ये च कर्मारम्भो न भवति। "यस्य यज्ञे प्रततेऽन्तरा यज्ञस्तायते तं यज्ञं निर्ऋतिर्गृह्णाति" इति श्रुतेः। यज्ञ इति व्रतादिकर्मो[illegible]। अनङ्गेन व्यव[illegible] तुल्यत्वात्। तत्रापि [illegible]ङ्गमपि

---

(१) वस्तुतस्तु पिण्डान्वाहार्यकादौ पुत्रस्य प्रतिनिधिर्भवत्येव। "क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥" इत्यादिवचनात्। हिरण्यकेशिसूत्रीयनिषेधस्तु "तत्तन्तवे ज्योतिष्मतीं तामाशिषमाशास्ते" इत्याशीराशासने, पितापुत्रीये सामनि "अमुकस्य पिता यजते" इतिवाचने च पुत्रप्रतिनिधिकरणस्य बोध्यः।

भवत्येव । तत्र "गोदोहनेन पशुकामस्य प्रणयेत्"इत्यादौ पुरुषार्थस्यैव क्रत्वर्थत्वात्(१) ।

यत्तु शिष्टानां माघकार्तिकस्नानादिमध्ये लक्षहोम–तुलादान–भारतश्रवणाद्याचरणं, तन्नित्यमध्ये, न तु काम्यमध्ये । वस्तुतस्तु ययोः पुरुषार्थयोर्व्रतादिकर्मणोर्न विरोधस्तयोरेकमध्येऽपरानुष्ठानं युगपदारम्भो वा भवत्येव । यथा काम्यकार्त्तिकादिस्नान–काम्यतद्व्रतयोः । तत्र सर्वाङ्गोपसंहारेण स्वयं तादृशद्वयस्य सुकरत्वात् । अन्यत्र च प्रथमोपक्रान्तमेव कार्यं प्राथम्याद्—अनुपसञ्जातविरोधित्वात्(२) ।

---

(१) दर्शपूर्णमासयोः श्रूयते "चमसेनापः प्रणयेद्, गोदोहनेन पशुकामस्य" इति । गावो दुह्यन्ते यस्मिंस्तद् गोदोहनं–दोहनपात्रं तेनेत्यर्थः । तत्र गोदोहनस्य क्रतुपुरुषोभयार्थत्वमुत पुरुषार्थत्वमेवेति संशयः । अत्रोच्यते कामसमभिव्याहृतषष्ठ्याः शेषित्वार्थकतया तच्छ्रुत्या पुरुषार्थत्वावगतेः क्रतूपकारकतया क्रत्वर्थतावगतेश्चोभयार्थत्वमिति । न चापकारकत्वरूपशेषत्वस्य तृतीये निराकृतत्वात् श्रुतितश्च क्रत्वर्थत्वानवगतेः कथं तदर्थत्वमिति वाच्यम् । उपकारकत्वे सति सर्वपदार्थग्राहिणा प्रयोगविधिना गोदोहनस्य क्रतूपकारायावश्यविधेयतया क्रत्वर्थत्वोपपत्तेः, इति पूर्वपक्षे सिद्धान्तसूत्रम्– "यस्मिन् प्रीतिः पुरुषस्य, तस्य लिप्सार्थलक्षणाऽविभक्तत्वात्" इति (जै० सू० ४–१–२) । यस्मिन्–स्वर्गादावनुभूयमाने पुरुषस्य तृप्तिर्भवति तस्य स्वर्गादिफलस्य लिप्सा अर्थलक्षणा–स्वारसिकी, फलस्य प्रीत्याऽविभागादित्यर्थः । अयं भावः–यस्मिन् वाक्ये फलश्रुतिस्तस्य पुरुषार्थत्वबोधकत्वमेवेति श्रुत्या पुरुषार्थत्वमेव । न चोपकारकत्वेन प्रयोगविधिना क्रत्वर्थतयाऽप्यस्य विधानात् क्रत्वर्थत्वमपीति । क्रत्वर्थप्रयोगविधिना गोदोहनस्य क्रत्वर्थत्वाविधानात् । पुरुषार्थेनैव गोदोहनेन प्रसङ्गात् क्रतूपकारसिद्धेः । तस्माद् गोदोहनस्य पुरुषार्थत्वमेवेति । एवं च तस्य क्रत्वनङ्गत्वे फलप्रयुक्तौव मध्येऽनुष्ठानम् ।

(२) अयं च न्यायो लघुपूर्वमीमांसाधिकरणकौमुदीपारिशिष्टाधिकरणेषु विस्तरेण प्रतिपादितो मयेति तत एवावगन्तव्यः ।

इति स्कान्दोक्तेः । *शुक्ला स्यात्प्रतिपत्तिथिः प्रथमतश्चेत्साऽपराह्णे भवेत्' इति दीपिकोक्तेश्च । अपराह्णश्च पञ्चधा भक्ते दिने चतुर्थो भागः । *तदभावे सायाह्नव्यापिनी ग्राह्या ।

तदभावे तु सायाह्नव्यापिनी परिगृह्यताम् ।

इति माधवोक्तेः । कृष्णा तु परा* । कृष्णा तूत्तरतोऽखिला' इति दीपिकोक्तेः । *कृष्णाऽपि पूर्वैवेत्यनन्तभट्टाः । सर्वतिथिषु वर्ज्यान्युक्तानि मुहूर्तदीपिकायाम्–

दिष्टादेः "आमश्राद्धं तु" इत्यादिना विशिष्यकालोक्तेः । *शुक्लेति । दिनान्तरवदेवापराह्णिकत्वे प्राप्ते पुनर्वचनं प्रतिपदोक्तापराह्णस्पर्शेऽपि पूर्वदिनग्राह्यत्वार्थमित्यभिमानः । अत्रापराह्णव्याप्तेरनिर्णायकत्वापत्तिररुचिः । *तदभावे इति । कथंचित्पूर्वदिनान्तराये परेऽह्नि भवत्येव शेषिलोपस्यान्याय्यत्वात् । *परेति । "प्रतिपत्सद्वितीया स्यात्" इत्यस्य कृष्णपक्षे प्रवृत्तेः । *कृष्णाऽपीति ।

प्रतिपत् पञ्चमी चैव उपोष्या पूर्वसंयुता ।

इतिजाबाल्युक्तेः,

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या संमुखी तिथिः ॥

इतिपैठीनस्युक्तेश्च,

प्रतिपत्पञ्चमी चैव सावित्रीभूतदर्शिका ।
नवमी दशमी चैव नोपोष्याः परसंयुताः ॥

इति ब्रह्मवैवर्त्ते उपवासे परविद्धानिषेधाच्च । 'उदये तूपवासस्य' इति सामान्यवचनं तु बाध्यते । 'प्रतिपत्सद्वितीया स्यात्' इत्यापस्तम्बवाक्यं तु उपवासेतरदैवकर्मविषयं सामान्यवाक्यस्यास्योपवासविषयैः पूर्ववाक्यैः संकोचात्, उपवासेऽप्यनापराह्णिकप्रतिपद्विषयं च । उपवासेतरदैवकर्मसु शुक्ला पूर्वविद्धा ग्राह्या । 'प्रतिपद्यप्यमावास्या' इति युग्मवाक्यात् । सा तु पूर्ववदापराह्णिकी । तदभावे

तूत्तरैव । 'प्रतिपत्सद्वितीया स्यात्'इत्युक्तेः । इदं च वचनं सामान्यविषयत्वाद् विशेषविषयेण युग्मवाक्येनापराह्णिकपूर्वविद्धशुक्लप्रतिपद्विषये बाधितमपि युग्मवाक्यानिर्णयपक्षेषु प्रवर्त्तते । "बाधकाभावे बाध्यस्य निरपवादत्वात्"इति न्यायात् । अत एव तादृशदैवकर्मसु कृष्णोत्तरविद्धा ग्राह्या पूर्वोक्तसामान्यवचनादिति परिष्कुर्वन्ति । अत्रेदमरुचिबीजम्—अस्तु उपवासेतरदैवकर्मणि भवदुक्तमेव, उपवासे तु कथं पूर्वा ?, तद्विधायकानां शुक्लपक्षपरतया संकोचसम्भवात्, 'प्रतिपत्सद्वितीया'इत्यस्य सामान्यतः कृष्णपक्षपरत्वादिति । उपवासश्च सर्वतिथिषु नारदेनोक्तः ।

शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतींस्तिथीन् ।
उपोष्यैव बलिं दत्त्वा विधिना ह्यपरे दिने ॥
ब्राह्मणान्भोजयित्वा तु सर्वपापैः प्रमुच्यते । इति ।

उपवासोत्तरदिने च पारणं कार्यं, तच्च भोजनम् ।

उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् ।
अन्यथा तु फलस्यार्द्धं धर्ममेवोपसर्पति ॥

इतिदेवलोक्तेः । धर्मो—यमः । पारणं—कर्मसमाप्तिः, अभोजनात्मकोपवाससमाप्तिश्च भोजनमेव । न च रागप्राप्तं भोजनमनूद्य पूर्वाह्णमात्रं विधीयताम् । शास्त्रीयकर्मसमाप्तिज्ञापनादिवच्छास्त्रीयत्वावश्यंभावात् । "भोक्ष्येऽहं पुण्डरीकाक्ष"इति सङ्कल्पविषयत्वादप्प्राशनरूपप्रतिनिधिविधानाच्च । तच्च पारणं तद्दिने उपोष्य तिथ्यनुवृत्तौ दिवा तिथ्यन्तप्रतीक्षया भोजनकालश्चेल्लभ्यते तदा तिथ्यन्ते कार्यम् ।

पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना ।
उपोष्य विधिवत्कुर्यात्तत्तदन्ते च पारणम् ॥

इति निगमवचनात् । यदा दिवा तादृशः पारणकालो न लभ्यते, तदा तिथ्यन्तो न प्रतीक्ष्यः, किं तु दिवैव पारणं कार्यम् ।

सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।
अन्यथा पुण्यहानिः स्याद्दते धारणपारणम् ॥

तृतीया तु सर्वमते रम्भाव्यतिरिक्ता परैव । तेन युग्मवाक्यं रम्भाव्रतविषयम् ।

रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ।
अन्येषु *सर्वकार्येषु गणयुक्ता प्रशस्यते ॥

इति ब्रह्मवैवर्तात् । *गौरीव्रते तु विशेषमाह माधवः-

*मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।

---

न चेष्टापत्तिः । सायाह्नमात्रव्याप्त्यापराह्णिकत्वानापत्तेः । अतस्तत्र पञ्चधा विभागेनापराह्णवत् पूर्वाह्णः पञ्चधा विभागेन प्रातरात्मकः । तत्र प्रविष्टा पूर्वा । इदं च वचनं कृष्णाद्वितीयाविषयमेव । तत्र प्राप्ते पूर्वविद्धत्वे पौर्वाह्णिकत्वरूपविशेषमात्रविधाने लाघवात् । तेन या पूर्वेद्युः सर्वं प्रातःकालं परित्यज्य प्रवृत्ताऽपरेद्युस्त्रिमुहूर्त्ता तदधिका वा, सा कृष्णाऽपि परैव। पूर्वेद्युः पौर्वाह्णिकत्वाभावात्, त्रिमुहूर्त्तसत्त्वेन च परविधायकवचनानां प्रवृत्तेः । या तु पूर्वेद्युः सर्वं प्रातःकालं परित्यज्य प्रवृत्ताऽपि परदिने नास्त्येव, त्रिमुहूर्त्तन्यूना वा, सा पूर्वैव । एवं या शुक्ला द्वितीया परदिने नास्त्येव त्रिमुहूर्त्तन्यूना वा, साऽपि पूर्वैव, परेद्युस्त्रिमुहूर्त्तासत्त्वादिति हेमाद्रिमाधवौ अतमेकीचक्रुः ।

*सर्वकार्येष्विति ।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इति चोपवासे(१)ऽवयुत्यानुवादः । गणो-गणेशः, तद्दैवत्या चतुर्थीत्यर्थः । रम्भाख्यां वर्जयित्वेति पर्युदासाद् रम्भासदृशीत्यपि लभ्यते । तत्सादृश्यं च त्रिमुहूर्त्तवेधवत्त्वेनेति गौरीव्रतव्यावृत्तिः । तत्र कलादिवेधस्यापि परविद्धत्वप्रयोजकत्वाद्विशेषमाह- *गौरीव्रते त्विति । *मुहूर्तेति कलाकाष्ठादिपरं त्रिमुहूर्त्त-

---

(१) अवयुत्य-पृथक्कृत्य, तृतीयामित्यर्थः । एकदेशानुवाद इति यावत् ।

शुक्लाधिकायामप्येवं गणयोगप्रशंसनात् ॥ इति ।

चतुर्थ्यपि सर्वमते *गणेशव्रतातिरिक्ता परैव । *युग्मवाक्यात् ।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

इति माधवीये वृद्धवसिष्ठोक्तेश्च । 'नागचतुर्थी तु मध्याह्नव्यापिनी पञ्चमीयुता च ग्राह्या' इति निर्णयामृते माधवीये चोक्तम् ।

युगं मध्यंदिने यत्र तत्रोपोष्य फणीश्वरान् ।
क्षीरेणाप्याय्य पञ्चम्यां पूजयेत्प्रयतो नरः ॥
विषाणि तत्र नश्यन्ति न तान् हिंसन्ति पन्नगाः ।

---

सद्भावानावश्यकत्वाभिप्रायम् ।

चतुर्थीसहिता या च सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्रपौत्रप्रवर्द्धिनी ॥

इति विधेः अवैधव्यार्थगौरीव्रते एव शेषरूपसाहित्यप्रतीतेः ।

द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥

इति शेषनिषेधवत् । यदि किंचिदपि परेद्युर्न लभ्यते, तदा पूर्वैव ग्राह्या ।

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धापि कर्त्तव्या यदि न स्यात्परेऽहनि ॥

इतिवृद्धवासिष्ठात् । व्रतान्तरे च मुहूर्त्तायाश्चतुर्थीयुताया ग्रहणं, त्रिमुहूर्त्तद्वितीयाविद्धाया एव वर्जनम् । यदि परेद्युस्त्रिमुहूर्त्ता न लभ्यते तदा विद्धापि पूर्वैव कालानुरोधेन प्रधानत्यागायोगात् । *गणेशव्रतेति-गौरीव्रतोपलक्षणं तदन्यदेवताके उपवासे व्रतान्तरे वेत्यर्थः । *युग्मेति । "युगभूतानाम्"इत्यादि । गणेशव्रते

इति माधवीये देवलोक्तेः । युग्मं-चतुर्थी । पूर्वत्र मध्याह्नव्यापी पूर्वा, अन्यपक्षेषु परैव; पञ्चम्यां पूजोक्तेः । *गणेशव्रते तु तृतीयायुतैव चतुर्थी ।

चतुर्थी तु तृतीयायां महापुण्यफलप्रदा ।
कर्तव्या व्रतिभिर्वत्स *गणनाथसुतोषिणी ॥

---

त्वाह*गणेशव्रते त्विति । *गणनाथेति । "संदिग्धेषु वाक्यशेषात्" इति(१) न्यायेनास्य गणेशव्रतपरता । न च तद्गणेशव्रतं

---

(१) "अक्ताः शर्करा उपदधाति" इति श्रूयते, "तेजो वै घृतम्" इति च । शर्कराः-मृत्तिकामिश्राः क्षुद्रपाषाणाः । तेजः-तेजोजनकमित्यर्थः । तत्र तेजःशब्दस्य "आयुर्वै घृतम्" इतिवल्लक्षणास्वीकारात् । तत्रायं संशयः-किं विधिवाक्येऽक्तत्वमात्रश्रवणेनाक्तत्वस्य च द्रवद्रव्यमात्रसाध्यत्वात् तदाकाङ्क्षायां यस्य कस्यापि घृत-तैल-वसादीनामन्यतमस्य ग्रहणं, किं वाऽर्थवादश्रुतघृतस्यैवेति ?। यद्यप्यत्राञ्जनस्य विधिर्नास्तीति तदुपजीव्योक्तसंशयो नोपपद्यते, तथापि अक्तत्वविशिष्टशर्करोपधानविधानादञ्जनं विना शर्कराणां तत्त्वासम्भवेनाञ्जनक्रियाक्षेपात्तद्विधिः कल्प्यते इति न दोषः ।

अत्रोच्यते-यद्यर्थवादानुसारेण तत्साधनघृतमात्रस्य ग्रहणं, तदा "अक्ताः शर्कराः" इति विधिवाक्येऽक्तशब्दस्य घृताक्ते लक्षणा स्यादिति विधेरर्थवादापेक्षया निरपेक्षत्वाद्, उपक्रमस्थत्वेनासञ्जातविरोधित्वाच्च प्राधान्येन गुणानुसारिप्रधानलक्षणाया अन्याय्यत्वाद्विध्यनुसारेण द्रवद्रव्यमात्रसाध्याञ्जनक्रियाविधौ कल्पिते यस्य कस्यापि द्रवद्रव्यस्य ग्रहणम् । ततश्च "तेजो वै घृतम्" इत्यत्र विध्यनुसारिणी घृतशब्दस्य घृताघृतसाधारणाञ्जनसाधकद्रवद्रव्यमात्रे लक्षणेति पूर्वपक्षे—

सिद्धान्तसूत्रम्-"सन्दिग्धेषु वाक्यशेषात्" इति (जैं० सू० १-४-२९) अयमर्थः- विधिषु सन्दिग्धेषु सत्सु अर्थवादरूपवाक्यशेषान्निर्णयः कर्तव्य इति । अर्थवादसमर्पिते विशेषे नान्यग्रहणं प्रामाणिकमिति यावत् । एवं च विधिवाक्यश्रुताक्तत्वान्यथानुपपत्तिप्रतिपन्नाञ्जनसाधनद्रवद्रव्यसामान्यस्याननुष्ठेयतया तद्विशेषाकाङ्क्षायामर्थवादसमर्पितघृतेनैव तस्याः शाम्यतया घृतस्यैवोपादानम् । न चैवमुक्तरीत्या लक्षणापत्तिः । घृतेऽपि द्रवद्रव्यत्वपर्याप्त्या लक्षणाऽनङ्गीकारात् । तत एव च न विरोधोऽपि, इति ।

इति हेमाद्रौ ब्रह्मवैवर्तात् । माधवीये तु गणेशव्रते मध्याह्नव्यापिनी मुख्या ।

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि ॥

इति बृहस्पतिवचनात् ।

*प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ।

इति तत्कल्पेऽभिधानाच्च । तेन 'परदिने तत्त्वे परा, अन्यथा *पूर्वा' इत्युक्तम् । *वस्तुतस्तु यत्र भाद्रशुक्लचतुर्थ्यादौ गणेशव्रतविशेषे मध्याह्नपूजोक्ता तद्विषयाण्येव प्रागुक्तवचनानि, न तु सार्वत्रिकाणि । *संकष्टचतुर्थ्यादौ बहूनां कर्मकालानां बाधापत्तेः । तेन

---

नास्त्येव यत्र तृतीयायुक्ताया ग्राह्यत्वं स्यादिति वाच्यम् । दूर्वागणपतिव्रतादेः सत्त्वात् । *चतुर्थीति । अग्रे भाद्रशुक्लचतुर्थी वरदचतुर्थीत्युच्यते ।

सुरासुरानाप्नुवती गणेशं भक्तिपूर्वकम् ।
तस्यां भादाद्वरं यस्मात्तस्माद्वरचतुर्थिका ॥

इतिवाक्यात् । तद्व्रत-सिद्धिविनायकव्रतयोर्भेदेऽपि निर्णयो न भिद्यते । अतश्च वरदचतुर्थीप्रकरणस्थप्रमाणमुक्त्वा सिद्धिविनायकव्रतप्रमाणमाह—*प्रातरिति । *पूर्वेति । मातृविद्धाप्राशस्त्यादिति भावः । गणेशव्रतसामान्ये माधवोक्तं निर्णयं तद्विशेषे व्यवस्थापयति—*वस्तुतस्त्विति । *सङ्कष्टेति ।

श्रावणे बहुले पक्षे चतुर्दश्यां विधूदये ।
तस्मिन् दिने व्रतं कार्यं सङ्कष्टाख्यं सुरेश्वरि ॥
गणेशं पूजयित्वा तु चन्द्रायार्घ्यं च दीयते ।

इति विधूदयस्य कर्मकालत्वोक्तेः ।

चन्द्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृता ।

सर्वत्र गणेशव्रते *पूर्वैवेति सिद्धम् । संकष्टचतुर्थी तु चन्द्रोदयव्यापिनी ग्राह्या । दिनद्वये तत्त्वे *मातृयोगस्य सत्त्वात्पूर्वेति केचित् । *अन्ये तु दिने मुहूर्तत्रयादिरूपस्य तृतीयायोगस्याभावात् परदिने माधवोक्तमध्याह्नव्यापिसत्त्वात्संपूर्णत्वाच्च परेत्याचक्षते । दिनद्वये तदभावे तु परैव । *गौरीव्रते तु पूर्वैव* ।

गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्तिताः ।
चतुर्थ्यः पञ्चमीविद्धा देवतान्तरयोगतः ॥

---

इतिवाक्याच्च । अत्रामान्तो मासः । "व्रते शुक्लादिमेव च" इति वचनात् । *मातृयोगस्येति। न च "मातृविद्धा प्रशस्यते" इत्यस्य कथमिह प्रवृत्तिः ?, दिवा त्रिमुहूर्तवेधे हि तत्प्रवर्तते, न तु रात्राविति वाच्यम् ।

अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगेषु रात्रियोगो विशिष्यते ॥

इति वाक्याद्रात्रिवेधस्यापि रात्रिसाध्यकर्मसु हेमाद्रिमाधवादिभिरुक्तत्वात् । दिनद्वये तदभावे पूर्वैव मातृयुक्तत्वात् । "गणेशगौरीबहुला व्यतिरिक्ताः" इत्यग्रिमवचनोपलक्षणमेतत् । *अन्ये त्विति । अत्रारुचिः । तथा हि—वेधवचांसि दिवावेधे एव प्रवर्त्तन्ते इत्यत्र मानाभावः । जन्माष्टम्यादौ रात्रिवेधस्यापि माधवादिभिरुक्तेः । महालक्ष्मीव्रतसमाप्तौ दिनद्वये चन्द्रोदयकालेऽष्टमीसत्त्वे "कृष्णपक्षेऽष्टमी चैव" इति पूर्वविद्धवाक्यस्य रात्रिवेधेऽपि प्रवृत्तेर्हेमाद्र्यादिभिरुक्तेरिति । *गौरीव्रते इति । तच्च—

माघशुक्लचतुर्थ्यां तु गौरीमाराधयेद्बुध ।

इत्यादिनोक्तम् । *पूर्वैवेति ।

जया च यदि सम्पूर्णा चतुर्थी ह्रसते पुनः ।
जया सैव हि कर्त्तव्या नागविद्धां न कारयेत् ॥

इति वाक्यस्य कैमुत्यन्यायेन तृतीयायुक्ताया ग्राह्यत्वार्थत्वात् ।

इति मदनरत्ने ब्रह्मवैवर्तात् ।(१)

पञ्चमी तु माधवमते सर्वाऽपि पूर्वा ।

चतुर्थीसंयुता कार्या पञ्चमी परया न तु ।

*दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते(२) ॥

इति हारीतोक्तेः । हेमाद्रिमते तु *कृष्णा पूर्वा, सिता परा । 'कृष्णा पूर्वयुता, सिता परयुता स्यात्पञ्चमी' इति दीपिकोक्तेः । *वस्तुतस्तु हारीतोक्ति*रुपवासविषया ।

प्रतिपत्पञ्चमी चैव *सावित्रीभूतपूर्णिमाः ।

---

*दैवे इति—"पूर्वाह्णो वै देवानाम्"इत्यादेरपवादार्थम्, पित्र्ये इति-दृष्टान्तः । *कृष्णेति । "एकादशी तथा षष्ठी"इति पूर्वविद्धत्वं "पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता"इत्युत्तरविद्धत्वं च शुक्लकृष्णवाक्येन(३) व्यवस्थाप्यम् । अत्र "शुक्लपक्षे तथाऽसिते"इत्यनेन विरोध इत्यत आह—*वस्तुतस्त्विति । *उपवासेति । न च—

प्रायः प्रातरुपोष्या हि तिथिर्दैवफलेप्सुभिः ॥

इत्यनेन विरोधः, तेनोपवासे उत्तरविद्धाविधानादिति वाच्यम् । प्रायःपदोक्त्या तस्य विधायकत्वाभावात् । *सावित्री—वटामा ।

---

(१) संकष्टचतुर्थी उभयेद्युश्चन्द्रोदयकाले सत्त्वेऽसत्त्वे वा परैव । मातृयोगस्य भाद्रशुक्लचतुर्थीपरत्वात् । रात्रिवेधस्य कृष्णाष्टमीचतुर्दश्योर्विधानात्तत्रैव पूर्वविद्धत्वं न चन्द्रोदयात्पूर्वकाले तृतीयायोगेन तद्विद्धत्वं चतुर्थ्या उपलक्षणत्वे प्रमाणाभावात् । अपि तूदये त्रिमुहूर्तात्मकतृतीयावेधे सत्येव तृतीयाविद्धत्वम् । तस्मात्परैव चतुर्थी युक्तेति पुरुषार्थचिन्तामणिः ।

(२) असिते—कृष्णे इत्यर्थः ।

(३) शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इत्यनेनेत्यर्थः ।

नवमी दशमी चैव नोपोष्याः परसंयुताः ॥

इति ब्रह्मवैवर्तात् । यत्तु-

पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारद ।

इत्यापस्तम्बीयं, तत्स्कन्दव्रतपरम् ।

स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता ।

इति वाक्यशेषादिति माधवः । नागपूजाविषयमित्यनन्तभट्टनिर्णयामृतादयः । चमत्कारचिन्तामणौ-

पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।

तस्यां तु तुषिता नागा इतरा सचतुर्थिका ॥ इति ।

*तेन नागपूजादौ परैव । यत्तु-मदनरत्नादिवोदासीययोः श्रावणपञ्चम्यतिरिक्ता पूर्वेत्युक्तम् ।

श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी ।

तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः ॥

इति संग्रहोक्तेः,—

गणेशस्कन्दयोगाभ्यां क्रमान्नागः शुभाशुभः ।

अरिमित्रे तयोः पत्रे नागानामाखुबर्हिणौ(१) ॥

इति षट्त्रिंशन्मताच्च श्रावणपञ्चम्यतिरिक्ताया नागपञ्चम्याश्चतुर्थीयुतत्वमुक्तं, तद् *उपवासादिविषयम् । पत्रे—वाहने ॥

---

भूतं—चतुर्दशी । पूर्णिमा—वटपूर्णिमा । उपवासातिरिक्तव्रते परेति लभ्यते; तदाह—*तेनेति । *उपवासादीति । आदिपदं सम्पातायातम्, उपवासपूर्वकपूजाग्रहणार्थं वा । उपवासे प्रधाने निर्णीतायास्तिथेस्तत्सहचरपूजायां ग्राह्यत्वात् । अत्र स्कन्दोपवासे परा कार्या ।

---

(१) चतुर्थीयुक्ता पञ्चमी शुभफलप्रदा, षष्ठीयुक्ता चाशुभफलप्रदा । तयोश्चतुर्थीयुक्तपञ्चम्या नागस्य मित्रमाखुर्वाहनं, षष्ठीयुक्तपञ्चम्याः तच्छत्रुर्मयूरश्च वाहनमित्यर्थः ।

**षष्ठी सर्वमते *स्कन्दव्रतातिरिक्ता परैव । *युग्मवाक्यात्,**

***नागाविद्धा न कर्तव्या षष्ठी चैव कदाचन ।**

**इति स्कान्दाच्च ।**

---

स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता ।

इति विशेषवचनात् । श्रावणपञ्चम्यपि उपवासे परा "श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी । तां परित्यज्य"इति वचनात् । तथा च परेद्युस्त्रिमुहूर्त्ता नागपञ्चम्यादिः पराऽन्यथा पूर्वेति । परे तु या पञ्चमी परा स्वीकार्या सा स्कन्दोपवासे नागपूजायां चेति (१)व्यवस्थयाऽन्या सर्वापि सर्वव्रते पूर्वैव, 'इतरा सचतुर्थिका' इति स्मरणात् । विशेषवाक्येषु उपोष्यादिपदान्युपलक्षणम् । "दैवे कर्मणि"इतिवचनादिति प्राहुः । मयूखे विवेचने चैतन्मतमेव दृश्यते । ग्रन्थकृता चोपवासादिपदानामुपलक्षणत्वं न मन्यते इति बोध्यम् । *स्कन्देति ।

षष्ठी [illegible] सर्वदा सर्वकामदा ।

उपोष्या सा प्रयत्नेन कार्त्तिकेयप्रिया सदा ॥

इति सर्वमासीयशुक्लषष्ठ्याम्,

आषाढशुक्लषष्ठ्यां तु तिथिः कौमारिकी स्मृता ।

इति आषाढशुक्लषष्ठ्यां च, स्कन्दोपवासे

कृष्णाऽष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।

एताः पूर्वयुता कार्यास्तिथ्यन्ते पारणं भवेत् ॥

इति स्कान्देन पूर्वविद्धत्वोक्तेः । कृष्णाष्टमी—कृष्णपक्षाष्टमी रुद्रदेवतया व्रतकाण्डोक्ता कृष्णाष्टमीसमाख्यातत्रतसम्बन्धिनी वा । कृष्णजन्माष्टमीति केचित् । *युग्मेति । "षण्मुन्योः"इत्यादिः । *नागेति ।

---

(१) [illegible]—[illegible] ।

सप्तमी पूर्वैव *युग्मवाक्यात्,

*षष्ठ्या युता सप्तमी च कर्तव्या तात सर्वदा ।

इति स्कान्दाच्च ॥ निर्णयामृते-

षष्ठी च सप्तमी चैव वारश्चेदंशुमालिनः ।

योगोऽयं पद्मको नाम सूर्यकोटिग्रहैः समः ॥

(१)नागविद्धा न षष्ठी स्यात्पक्षयोरुभयोरपि ।

दैवे कर्मणि तां कुर्यात् पित्र्ये पूर्वेण संयुताम् ॥

इति स्पष्टमपि सौमन्तवं स्मर्यते ।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।

अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इत्यादावुपोष्यग्रहणं व्रतसामान्योपलक्षणम् । "नागो द्वादशनाडीभिः"इति नागवेधः । तेन षण्मुहूर्तन्यूनपञ्चमीयोगे पूर्वैव । तिथिक्षये तु-

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविद्धाऽपि कर्त्तव्या यदि न स्यात्परेऽहनि ॥

इति वासिष्ठं स्मर्त्तव्यम् । *युग्मेति "षण्मुन्योः"इत्यादि । *षष्ठ्या युतेति । या पूर्वेद्यू रात्रिमारभ्य प्रवृत्तौ तिथिक्षयादष्टमीविद्धा सा, सैव ग्राह्या । गुणानुरोधेन प्रधानलोपस्यान्याय्यत्वात् । अतश्च

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।

कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः ॥

इति निषेधोऽपि तत्र न प्रवर्त्तते । नागः—पञ्चमी । रुद्रः—अष्टमी । दिवाकरः—सप्तमी । कामः—त्रयोदशी । विष्णुः—द्वादशी ।

ननु—

षष्ठ्या युता सप्तमी च कर्त्तव्या तात सर्वदा ।

षष्ठी च सप्तमी यत्र तत्र सन्निहितो रविः ॥

इति स्कान्दात्,

(१) नागः-पञ्चमी ।

अष्टमी तु *सर्वमते कृष्णा पूर्वा, सिता परा ।
व्रतमात्रेऽष्टमी कृष्णा पूर्वा, शुक्लाऽष्टमी परा ।
इति माधवोक्तेः, 'परयुक् शुक्लाऽष्टमी, पूर्वयुक् कृष्णा' इति

---

षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता ।
पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम् ॥

इति भविष्याच्च सौरोपवास एव पूर्वा युज्यते न सर्वत्र, इति चेन्न। "सप्तमी नाष्टमीयुक्ता न सप्तम्या युताऽष्टमी । सर्वेषु व्रतकल्पेषु" इति ब्रह्मवैवर्त्तात् । एवं च

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाऽष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ॥

इति वाक्ये उपोष्यशब्दस्य सर्वव्रतोपलक्षणत्वं द्रष्टव्यम् । केचित्तु यत्र यत्र प्रधानलोपापत्तिभयेन विद्धा गृह्यते तत्र स्वस्योपवासानिषेधात् पुत्रादिप्रतिनिधिना ब्राह्मणभोजनादिप्रतिनिधिना वोपवास इत्याहुः । *सर्वेति ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ॥
उपवासादिकार्येषु एष धर्मः सनातनः ।
शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ॥
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ।
उपवासादिकार्येषु एष धर्मः सनातनः ॥

इति निगमोक्तेः । यत्तु "वसुरन्ध्रयोः" इति युग्मवाक्यं, यच्च—

नागविद्धा तु या षष्ठी भानुविद्धो(१)महेश्वरः ।
चतुर्दशी कामविद्धा तिस्रस्ता मलिनाः स्मृताः ॥

इत्यादि; तत्सर्वं [illegible]त्रपरम् । यत्तु—

---

(१) भानुः—सप्तमी । महेश्वरः—अष्टमी ।

**दीपिकोक्तेश्च । *शिवशक्त्युत्सवे च कृष्णाऽप्युत्तरा ।**

**पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवे ।**

**इति माधवोक्तेः ।** दिवोदासीये भविष्ये-

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।

कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति, तत्तु नेह प्रवर्तते । सामान्यतः प्रसक्तयोर्द्वैधस्थापकं हि तत्, न चेह तथा प्रसक्तिरस्तीति । नन्वस्तु उपवासे कृष्णाऽप्युत्तरा ।

एकादश्यष्टमी षष्ठी अमावास्या चतुर्थिका ।

उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

इति स्मरणादिति चेन्न । कृष्णाष्टम्याः पूर्वविद्धत्वबोधकोक्तनिगमवाक्यान्ते

उपवासादिकार्येषु एष धर्मः सनातनः ।

इत्याहत्योपवासोक्तेः । न चेदं रुद्रोपवासपरम् ।

रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिः ।

अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत् ॥

इति स्मरणादिति शङ्क्यम् । 'एष धर्मः सनातनः' इत्यनेन सर्वविषयकत्वस्य स्पष्टं प्रतीतेः । रुद्रव्रतेष्विति च व्रतमात्रपरं, न तूपवासमात्रपरमिति समानविषयत्वाभावान्न तेनोपसंहारसंभव इति भावः । *शिवशक्तीति मिलितशिवशक्तिदैवत्यः पूजोपवासादिः, उत्सवः-व्रतम् ।

अष्टम्या नवमी विद्धा नवम्या चाष्टमी युता ।

अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥

अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः ।

शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि ॥

इति पाद्मे विहितः । अत्र शिवस्य शक्तेश्च य उत्सवः पक्षद्वयगतायामष्टम्यां नवम्यां वा विहितः, स नवमीयुताष्टम्यां अष्टमीयुतनवम्यां च कार्य इत्येतावद्विवक्षितं, शिवक्षेत्रे इत्यनुवादः । शिवो-

*यदा यदा सिताष्टम्यां बुधवारो भवेत्क्वचित् ।
तदा तदा हि सा ग्राह्या एकभक्ताशने नृप ॥
*संध्याकाले तथा चैत्रे प्रसुप्ते च जनार्दने ।
बुधाष्टमी न कर्तव्या हन्ति पुण्यं पुराकृतम् ॥

अन्त्यं पद्यं हेमाद्रौ न धृतम् ।

नवमी तु सर्वमते पूर्वा युग्मवाक्यात्,

न कुर्यान्नवमीं तात दशम्या तु कदाचन ।

इति स्कान्दाच्च ।

दशमी तु पूर्वा परा वेति हेमाद्रिः ।

कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ।

इति माधवः । *वस्तुतस्तु मुख्या नवमीयुतैव ग्राह्या ।

दशमी तु प्रकर्तव्या सदुर्गा द्विजसत्तम ।

इत्यापस्तम्बोक्तेः । यत्तु—

---

त्सवस्य तत्रैव करणात् । शेषोऽर्थवादः । एवं च—

उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् ।
पक्षयोरुभयोरेव उपवासविधिः स्मृतः ॥

इति वाक्यं शिवशक्त्युत्सवाभिप्रायम्, अन्योपवासाभिप्रायकत्वा-सम्भवादिति द्रष्टव्यम् ।

*यदा यदेति । बुधयुक्तायां शुक्लाष्टम्यां बुधाष्टमीव्रतं विधीयते, तस्य तदुद्यापनस्य च विस्तरो व्रतार्के द्रष्टव्यः । *सन्ध्या-काले इति—शुक्लाष्टमीत्वात्परा ग्राह्या । तत्र यदि परादिने बुधवारो नास्ति पूर्वदिने च सायंकाले नास्ति किं तु सन्ध्याकाले वर्तते, तत्र प्रधानं कार्यमिति प्राप्तावयं निषेधः पूर्वापरयोस्सायंकाले सत्त्वे बुधाष्टमी कार्या नान्यथेत्येतत्परम् ।

मतान्तरमाह—*वस्तुतस्त्विति । अत्रेदमरुचिबीजम्—
युक्ता न दूषिता यस्मादतः सा सर्वतोमुखी ।

संपूर्णा दशमी कार्या पूर्वया परयाऽथ वा ।
इत्यङ्गिरसोक्तं, तन्नवमीयुक्तालाभे औदयिकी ग्राह्ये-
त्येवं ज्ञेयम् ॥

अथैकादशी । *तत्रैकादश्युपवासो द्वेधा- *निषेधप-
रिपालनात्मको व्रतरूपश्च । तत्राऽऽद्यः-

न शङ्खेन पिबेत्तोयं न खादेत् *कूर्मसूकरौ ।
एकादश्यां *न भुञ्जीत पक्षयोरुभयोरपि ॥

इति कौर्मदेवलाद्युक्तेः । अग्निपुराणेऽपि-

---

इति सर्वतोमुखत्वोक्तिविरोधात् माधवमतमेव सम्यक् । आप-
स्तम्बवाक्यं तु कृष्णपक्षपरम् ।

नन्दाविद्धा तु या पूर्णा द्वादशी मकरे सिता ।
भृगुणा नष्टचन्द्रा च एता वै निष्फलाः स्मृताः ॥ इति ।
नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा नोपोष्याः स्युः कथं च न ॥

इति निषेधश्च तथैव । उपवासपदं तूपलक्षणम् ।
उपवासे एकादशीं निर्णेतुमाह- *तत्रेति । *निषेधेति ।

विधेर्यत्राप्रधानत्वं प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ॥ इति ।

निषेधस्वरूपं निवृत्तिः । *कूर्मसूकरौ—महाराष्ट्राणां 'कण-
गे'इति प्रसिद्धः कन्दः कूर्मः । 'गोडाळु'इति 'कान'इति वा प्रसिद्धः
कन्दः सूकरः । *न भुञ्जीतेति । न च भोजनमभ्यवहारविशेष इति
फलादिभक्षणं दुर्वारमिति वाच्यम् । धातोः सकलादनीयार्थत्वात् ।
अन्यथा कृष्णायां विद्धायां चैकादश्यां [illegible]निषेधे भो-
जननिषेधादेव फलादिभ[illegible]ः

उपवासनिषेधे तु भक्ष्यं [illegible] ।

इति फलादिभक्षणविधिवैयर्थ्यात् । एवम् "अ[illegible] पापानि"

*गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ इति ।
*न चात्र *पर्युदासेन व्रतविधिः । *तद्धेतुव्रतादि-
शब्दाभावात् । व्रतरूपस्तु ब्रह्मवैवर्ते—
प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ।
*दशम्यामुपवासस्य प्रकुर्याद्वैष्णवव्रतम् ॥ इति ।
*इदं च शिवभक्तादिभिरपि कार्यम् ।
वैष्णवो वाऽथ शैवो वा कुर्यादेकादशीव्रतम् ।
इति शिवधर्मोक्तेः ।
वैष्णवो वाऽथ शैवो वा सौरोऽप्येतत्समाचरेत् ।

---

इति निन्दादौ "न पचेदन्नमात्मनः" इत्यादिवदन्नशब्दोऽदनीयपर इति । निषेधपालने सर्वेषामधिकारमाह—*गृहस्थ इति *न चात्रेति । एकादशीभोजननिषेधवाक्यादिति शेषः । *पर्युदासः—
विधेर्यत्र प्रधानत्वं प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥
इति रीत्या नञः संकल्पलक्षणया । उत्तरपदेन—स्वोत्तरनाम-धात्वर्थान्यतरान्वितार्थकतया । *तद्धेत्विति । यथा "नेक्षेतोद्यन्तमादित्यम्" इत्यादौ "तस्य व्रतम्" इत्युपक्रमे व्रतशब्दोऽस्तीति संकल्पे लक्षणा, न चेह तथाऽस्तीत्यर्थः । ननु व्रतविध्यन्यनिषेधो नोपगम्यते, तद्वत्तनयोरेकवाक्यतायां लाघवादिति चेन्न । तथा सति संक्रान्तिरविवारादिवदुपवासनिषेधे भोजनस्यैव सम्भवात् किञ्चिद्भक्षणविधानवैयर्थ्यात् । सति तु पृथङ्निषेधे तत्पालनाय प्रवृत्तस्य निवृत्तेः संकल्पाविनाभावात् । संकल्पे चोपवासनिषेधाति-क्रमशङ्कानिवृत्तये किंचिद्भक्षणविधेरर्थवत्त्वात् ।

*दशम्यां निशि उपवासस्य नियममित्यन्वयः । व्रते सर्वेषामधिकारमाह—*इदं चेति । निषेधपालनस्य केवलनित्यत्वा-

इति सौरपुराणाच्च । *सोऽपि द्वेधा-*नित्यः काम्यश्च ।

उपोष्यैकादशीं नित्यं पक्षयोरुभयोरपि ।

इति गारुडोक्तेः,

पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ।

इति नारदोक्तेश्च नित्यता ।

यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इति कौर्मादिषु फलश्रुतेश्च काम्यता । उभयैकादशीव्रतं गृहस्थातिरिक्तानामेव नित्यम् । गृहस्थस्य तु शुक्लायामेव व्रतं नित्यं, न कृष्णायाम् ।

---

दाह-*सोऽपीति । व्रतरूपोऽपीत्यर्थः । *नित्य इति । नित्यत्वसाधकानि सङ्ग्रहे—

नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् ।
इत्युक्त्याऽकरणे(१)दोषश्रुतेरत्यागचोदनात् ॥
फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम् । इति ।

तत्राद्यन्तद्वयं ग्रन्थकारेणोक्तम्(२) । सदाशब्द उक्तः सनत्कुमारसंहितायाम्—

एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोः ।

यावदायुःशब्दो विष्णुपुराणे—

द्वादशी न प्रमोक्तव्या यावदायुः सुवृत्तिभिः ।

अतिक्रमनिषेधः कण्वेनोक्तः—

एकादश्यामुपवसेन्न कदाचिदतिक्रमेत् ।

विष्णुरपि—

---

(१) अत्र केषुचित्पुस्तकेषु 'इत्युक्त्याऽतिक्रमे" इति पाठः ।

(२) नित्यंवीप्सेति द्वयम् 'उपोष्यैकादशीं नित्यम्' 'पक्षे पक्षे च कर्तव्यम' इति वचनद्वयेनोक्तमतः सदेत्यारभ्य फलाश्रुतिपर्यन्तमेव स्पष्टीक्रियते इति भावः ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
*वनस्थयतिधर्मोऽयं, शुक्लामेव सदा गृही ॥

इति देवलोक्तेः । न चानेन निषेधपालनमेव वनस्थयतिविषये उपसंह्रियते, न तु व्रतमिति वाच्यम् । अस्य *पर्युदासेन व्रतविधिपरत्वात् । *अन्यथा पूर्वोक्ताग्निपुराणवचने निषेधपालने गृहस्थस्याधिकारोक्त्या विरोधः स्यात् । *निषेधस्य निवृत्तिमात्रफलत्वेन *विशेषा-

---

एकादश्यां न भुञ्जीत कदाचिदपि मानवः । इति ।

अकरणे दोषः सनत्कुमारेणोक्तः—

न करोति यदा मूढ एकादश्यामुपोषणम् ।
स नरो नरकं याति रौरवं तमसावृतम् ॥

अत्यागचोदना विष्णुरहस्ये—

परमापदमापन्नो हर्षे वा समुपस्थिते ।
सूतके मृतके चैव न त्यजेद्द्वादशीव्रतम् ॥

फलश्रुतिः कात्यायनादिवाक्ये—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । इति ।

*वनस्थेति ब्रह्मचारिविधवयोरुपलक्षणमित्यग्रे स्फुटम् ।

*पर्युदासः—न भुञ्जीतेत्यत्र भोजनाभावसंकल्पार्थकत्वम्(१) । *अन्यथा—पर्युदासाऽनुपगमे । नन्वाग्निपुराणे एकादशीसामान्ये गृहस्थस्याधिकारः प्रतीयते, स च शुक्लायामुपसंह्रियते ।

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।

इत्युक्तेः । तथा च वर्णिगृहिवनियतीनां रण्डायाश्च निषेधपालने शुक्ला, गृहिभिन्नानां तु तत्र कृष्णेत्याग्नेयदेवलवाक्ययोर्निष्टङ्कितार्थ इत्यत्राह—*निषेधस्येति । *विशेषः—अधिकारिविशेषो वनित्वादिः । नन्वेकत्रापि नञः प्रधानीभूताख्यातान्वये लाघवान्निषेध

---

(१) तेनेति शेषः ।

नवेक्षणादुपसंहारायोगात् । *अभावस्य धर्मत्वाभावा-च्च । *तस्मादनेन सर्वेषामेकादशीव्रतविधायिनां सामा-न्यवाक्यानां वनस्थयतिविषये *उपसंहारान्न गृहस्थ-स्य कृष्णायां नित्यव्रतप्राप्तिः । कथं तर्हि—

> संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे ।
> चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान् गृही ॥

इति नारदादिवचनेषु कृष्णानिषेधः ?, *प्राप्त्यभावा-दिति चेच्छ्रूयताम् ।

> शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् ।
> सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥

---

एवार्थो न पर्युदासः । वनस्थत्वादिकं तूदाहरणमात्रमित्यत्राह—*अ-भावस्येति । तथा च यथा "नेक्षेतोद्यन्तमादित्यम्" इत्यादौ प्रस-क्तोऽपि नञः प्रधानान्वयो व्रतान्वयार्थं त्यज्यते, तथा प्रकृते धर्म-त्वान्वयार्थं स त्याज्य इति भावः । नन्वेवं—

> यथा शुक्ला तथा कृष्णा विशेषो नास्ति कश्चन ।

इत्यादिसामान्यवाक्यानां का गतिरित्यत्राह—*तस्मा-दिति । *उपसंहारादिति । ननु उभयैकादशीविष-यवाक्यानां देवलादिवाक्यैर्वनस्थादिविषयत्वेनोपसंहारे गृहिणः सामान्यवाक्यैः शुक्लाया अप्राप्तेः "शुक्लामेव सदा गृही" इत्यस्य पृ-थग्विधायकत्वापत्तिः । इष्टापत्तौ चैवकारवैयर्थ्यं, वाक्यभेदश्च । अनुपसंहारे तु सामान्यवचनैरेव गृहिणः शुक्लाप्राप्तेः 'शुक्लामेव'-इत्येवकारस्य परिसंख्यार्थत्वापत्तिः । परिसंख्यायां त्रयो दोषाः ।

> स्वार्थत्यागः, परार्थस्य कल्पिः, प्राप्तस्य बाधनम् ।

इति वाक्यादिति चेन्न । विधिशक्तिकुण्ठकैवकारदर्शनात्तद्घटि-तवाक्यस्यानुवादत्वार्थं पक्षद्वयोपादानवशाच्छुक्ला सर्वैरुपोष्या कृष्णा गृहिभिन्नैरुपोष्येत्युपसंहारोपगमात् । *प्राप्त्यभावादिति । वस्तु-

इति पाद्मे गृहस्थस्य आषाढीकार्तिकीमध्यस्था या कृष्णा विहिता, सा पुत्रवतो निषिध्यते । अन्यकृष्णायां तु न विधिः । सर्वविधीनां वनस्थयतिषूपसंहारात् । न निषेधः, प्राप्त्यभावात् । शयन्यादिवाक्यं त्वपुत्रगृहिगोचरमित्यनन्तभट्टहेमाद्र्यादिग्रन्थाः । दीपिकाऽपि–'असिता तु शयनीबोधान्तरस्थाऽप्यर्थो न स्यात्सा*ऽऽत्मवतोऽपि' इति । मदनरत्ने भविष्ये—

यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया ।
शुक्ला गृहस्थैः *कर्तव्या भोगसन्तानवर्धिनी ।
*मुमुक्षुभिस्तथा कृष्णा न *ते तेनोपदर्शिता ॥(१)

इति ।

निषेधपालनं काम्यव्रतं च सर्वकृष्णायां सर्वगृहिणां भवत्येव ।

---

तत्तु नैते शास्त्रप्राप्तार्थनिषेधा विकल्पप्रसङ्गात् । सामान्यरूपस्यापि हि विधेर्विशेषरूपेणापि विधिनोपजीव्यत्वे तुल्यबलत्वं दुर्वारं किं तु पर्युदासः । नञः पुत्रवद्गृहिपदान्वयात्पुत्रवद्गृहिभिन्नः संक्रान्त्यादावुपवसेदित्यर्थात् । 'शुक्लामेव सदा गृही' इत्यत्र च गृहिपदं पुत्रवद्गृहिपरम् । एवं च पुत्रवद्गृहिणः कृष्णायामुपवासाप्राप्तौ तद्विशेषे शयन्यादिवाक्येन विधीयते इति सारम् । वस्तुतस्तु संक्रान्त्यादौ पुत्रवद्गृहिण उपवासनिषेधो व्यर्थः । गृहिणस्तन्निषेधादेव सिद्धेः । अतो गृहिपदस्यातन्त्रत्वात्पुत्रवतां (२)विधुरविधवादीनां तन्निषेधः । एवमेवानुपदमग्रे 'पुत्रांश्च सभार्यश्च' इति पृथग्द्वयोपादानं सङ्गच्छते इति । *आत्मवतः–पुत्रवतः(३) *कर्त्तव्येति व्रतादेशः । *मुमुक्षुभिरिति । गृहस्थानां कृष्णाप्रवादार्थम् । गृहिभिन्नैः

---

(१) कृष्णेति सम्बध्यते । (२) विधुरो मृतपत्नीकः ।
(३) "आत्मा वै पुत्रनामासि" इति निरुक्तात् ।

पुत्रवांश्च सभार्यश्च बन्धुयुक्तस्तथैव च ।
उभयोः पक्षयोः काम्यव्रतं कुर्यात्तु वैष्णवम् ॥

इति नारदोक्तेः । एतत् सर्वं कालादर्शे उक्तम्-

विधवाया वनस्थस्य यतेश्चैकादशीद्वये ।
उपवासो, गृहस्थस्य शुक्लायामेव पुत्रिणः ॥
भुजेर्निषेधः कृष्णायां, सिद्धिस्तस्य ततो व्रते ॥ इति ।

*प्राच्यास्तु वैष्णवगृहस्थानां कृष्णाऽपि नित्या ।

नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
*पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ॥
सपुत्रश्च सभार्यश्च सजनो भक्तिसंयुतः ।
एकादश्यामुपवसेत् *पक्षयोरुभयोरपि ॥

---

कृष्णोपोष्येति पूर्वोक्तार्थस्याक्षरारूढत्वं सूचितम् । निषेधपालने गृहिणामधिकारो 'गृहस्थो ब्रह्मचारी च' इत्यनेन दर्शितः । *ते—तत्र । पूर्वमतेऽरुचिं व्यञ्जयन् स्वसिद्धान्तमाह—*प्राच्यास्त्विति । *पक्षे पक्षे चेति व्रतस्य नित्यत्वार्थम् । सपुत्रश्चेत्यादि पुत्रादेरुपवासाधिकारार्थम् । बहुव्रीहिणा च पुत्रवदपुत्रगृहस्थयोर्निषेधोऽपि बाध्यते । अवैष्णवगृहस्थेषु पुत्रवद्गृहस्थनिषेधो दोषाधिक्यार्थः । *पक्षयोरुभयोरपीति कृष्णालाभः ।

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा ।
तुल्ये ते मन्यते यस्तु स वै वैष्णव उच्यते ॥

इति वैष्णवलक्षणं भगवद्भक्तत्वमेवेत्याविष्कर्तुं विष्णुपरायणैरिति ।

रविवारेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे ।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही ॥

इति रविवारादौ पुत्रवद्गृहिण उपवासनिषेधस्तु नेह प्रवर्तते । [illegible]वासस्येत्युक्तेः । व्यतीपातादावुपवासनिषेधस्तु काम्यो-

इति नारदोक्तेरित्याहुः । *पुत्रशब्दश्चापत्यमात्रवचनः । नारायणवृत्तौ—'पुमांस एव मे पुत्रा जायेरन्' इत्यत्रापत्यमात्रवाचित्वोक्तेः(१) । 'जनयेद्बहुपुत्राणि' इति लिङ्गात् । 'पौत्री मातामहस्तेन' इति मनूक्तेः । पुत्र्या अपत्यमित्यर्थे तु "स्त्रीभ्यो ढक्" (पा०सू० ४-१-१२) इति पौत्रेय इत्यापत्तेः । 'पुमान् पुत्रो जायते' इति च ॥ उपवासनिषेधे विशेषो वायवीये उक्तः—

---

परासपर इति । *पुत्रशब्दश्चेति । इदमापाततः । नारायणवृत्त्यादौ विशिष्टवाचिशब्दानां पृथग्विशेषणसमभिव्याहारे विशेष्यमात्रपरत्वमिति न्यायादेव तदुक्तेः । इतरथा 'न कुर्यात् पुत्रवान् गृही' इत्यादौ पुत्रशब्दः कथमपत्यमात्रवचनः? 'पौत्री मातामहः' इत्यत्र च पौत्रो दौहित्रः । पुत्रपदस्य स्त्रीलिङ्गस्य दुहित्रर्थत्वात् । तथा चामरः—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥ इति ।

अत्रात्मजादिशब्दानां पुत्रदुहित्रादिः पृथगर्थो, ऽपत्यादेस्तदुभयसाधारणोऽर्थ इति स्पष्टम् । "जनयेद्बहुपुत्राणि" इत्यनेकान्यपत्यानीत्यर्थः । तत्र पुमपत्यानामेव पुत्रपदार्थत्वे अजातपुमपत्यकजातकन्यकधनादेर्दुहितृदौहित्रादिगामित्वानुशासनबाधापत्तेः । अत्र चानेकापत्यानि न विधीयन्ते । एकपुत्रस्य दत्तकादिसंपादनापत्तेः । किं तु सकृत् कृते कृतः शास्त्रार्थ इति न्यायो निवर्त्यते । एवं च एकौरसस्यौरसान्तरवद्दत्तकादेरेकदत्तकस्य वा दत्तकान्तरसत्त्वे न शास्त्रविरोधः ।

अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ।

---

(१) स्त्र्यपत्यव्यावृत्त्यर्थतया 'पुमांस' इति विशेषणोपादानेन पुत्रशब्दस्यापत्यमात्रवाचित्वोक्तेरित्यर्थः ।

*उपवासनिषेधे तु भक्ष्यं किंचित् प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

भक्ष्यं च तत्रैवोक्तम्-

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वाऽपि वायुः
*प्रशस्तमत्रोत्तरमुत्तरं च ॥ इत्यलम् ।

तत्र दशमीवेधो द्वेधा-अरुणोदयवेधः सूर्योदयवेधश्चेति । आद्यो गारुडे-

---

इत्यत्रापुत्राद्युपादानं प्रायिकत्वार्थम् । 'एष्टव्या बहवः पुत्राः' इत्यत्राप्येवमेवेति । *उपवासनिषेधे त्विति । ननु सत्रायागूर्य विश्वजिता सत्रफलमिव(१) किंचिद्भक्षणेऽपि व्रतरूपोपवासफलं पापक्षयादिकं प्राप्नोतीत्यर्थः स्यात् । एवं च सर्वथा व्रतरूपोपवासनिवृत्तिर्दुर्लभेति चेन्न । कृष्णविद्धादौ ह्युक्तरीत्या [illegible], प्राप्तौ वा न दुष्यतीत्यनेन विरोधः, निषिद्धत्वे तदतिक्रमे दोषः स्यात् । किं तु सर्वपुरुषसाधारणः सकलैकादशीसाधारणो यो व्रतान्व्यतिरिक्तो निषेधस्तं पालयितुकामस्य 'इति विज्ञाय कुर्वीत' इत्यादिवचनादनुषक्तो विशेषनियमरहितभोजनद्वयवर्जनसंकल्परूपव्रतप्राप्तरुपवासनिषेधातिक्रमः शङ्क्यतेति तन्निवृत्त्यर्थं किंचिद्भक्षणविधिः । तथा चोपवासेन निषेधेऽनुष्ठीयमाने आनुषङ्गिकानि-

---

(१) "यः सत्रायागुरते स विश्वजिता यजेत" इति श्रुतौ सत्रसंकल्पपूर्वं तदनुष्ठानप्रवृत्ताप्रवृत्तयोरुभयोरपि विश्वजिद्यागानुष्ठानमावश्यकम् । संकल्पमात्रस्यैव विश्वजित्पूर्वकालिकतायाः क्त्वाप्रत्ययेन प्रतीतेः संकल्पस्य चोभयत्रापि विद्यमानत्वादिति पूर्वपक्षीकृत्य सत्रागोरणस्य निमित्तत्वेन श्रुतत्वात् संकल्पं कृत्वा तदनुष्ठानाभावे प्रायश्चित्तार्थं विश्वजिद्यागो विधीयते इति सिद्धान्तितं जैमिनिना "विश्वजित्यप्रवृत्ते भावः कर्मणि स्यात्" इति सूत्रेण (जै० सू०६-४-३२) । एवं च विश्वजिद्यागेन सत्रसंकल्पजन्यफलस्य सिद्धिरिति स्पष्टम् ।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दि नैकादशीव्रतम् ॥ इति ।

अरुणोदयस्वरूपं च माधवीये स्कान्दे—

*उदयात्प्राक् चतस्रस्तु घटिका अरुणोदयः । इति ।

यदपि—

उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता ।
संपूर्णैकादशी नाम तत्रैवोपवसेद् गृही ॥

इतिगारुडसौरधर्मादिवचनम्, यच्च भविष्ये—

आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता ।
एकादशी तु संपूर्णा विद्धाऽन्या परिकीर्तिता ॥

इति, तदप्युपसंहारन्यायेन [illegible] ।

हेमाद्रावप्येवम् । *यत्तु ब्रह्मवैवर्ते—

चतस्रो घटिकाः प्रातररुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥
अरुणोदयवेधः स्यात्सार्धं तु घटिकात्रयम् ।
अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।

---

त्यव्रतात्मकोपवासानुष्ठानेन निषेधाति[illegible]दोषं न प्राप्नोति । उपवासफलं भोजननिवृत्तिरूपं निषेधफलं च [illegible]रिहारं लभेदित्युत्तरार्धार्थः । कृष्णाविद्धादिनिषेधानां विद्धादिभिन्नां पूर्वस्थादिभिन्नो वोपवसेदिति पर्युदासत्वमते तु तुल्यफलत्वान्निषेधत्वोक्तिसङ्गतिरिति तु बोध्यम् । *इदानीमिति तत्कादेः [illegible] । *उदयादिति । उदयात्प्राक् चतुर्दण्डत्वमरुणोदयशब्दप्रवृत्तिनिमित्तं घटिकाशब्दात् । मुहूर्तद्वयं क्वचिद्दण्डचतुष्टयात् न्यूनं, क्वचित्त्वधिकमिति विरोधः । नित्योपवासवर्ज्यवेधवचोविरोधं शङ्कते—*यत्त्विति । उदयात्प्राक्तनचतुर्दण्डान्तःपातिप्रथमदण्डत्वमरुणोदयत्वम् ।

इत्याहुः। तन्न। अरुणोदयशब्दस्यानेकार्थत्वापत्तेः। *न च मुहूर्त्तद्वयमर्थः। दण्डद्वयैकमुहूर्तादिवेधानां तथाऽप्यनुपपत्तेः। न हि तेषां यामार्धत्वमरुणोदयत्वं चास्ति। मुहूर्तद्वयस्य यामार्धस्य च 'चतस्रो घटिकाः' इत्यनेनोपसंहाराच्च न तदर्थः*। न च 'सार्धं तु घटिकात्रयम्' इत्यनेनापि तदापत्तिः* शङ्क्या। तेन चतुर्दण्डवेधस्यैवोक्तेः। चतुर्दण्डेऽर्धघटीदशमीसत्त्वे हि वेधस्तदर्थः। द्विघटिकादौ *तदयोगाच्च। यत्तु मतम्-कियताऽरुणोदयवेध इत्यपेक्षायां सार्धघटिकात्रयनियमादरुणोदयेऽर्धघटिकातो न्यूनदशमीसत्त्वे न दोषः' इति। तत्तुच्छम्। *द्विदण्डादावपि तदापत्तेः*।

*दशमीशेषसंयुक्तो यदि स्यादरुणोदयः।
नैवोपोष्यं वैष्णवेन तद्दिने नैकादशीव्रतम्॥

इति गारुडे भविष्ये च योगमात्रनिषेधात्। नारदीयेऽपि-

लववेधेऽपि विप्रेन्द्र दशम्यैकादशीं त्यजेत्।
सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव निर्मलम्॥

स्कान्देऽपि-

कलाकाष्ठादिगत्यैव दृश्यते दशमी विभो।

---

*अत्रैके इति। *न चेति शक्तिनिमित्तैक्यान्न नानार्थत्वापत्तिरिति भावः। *तदर्थो-मुहूर्त्तद्वयमर्थः। *तदापत्तिः-मुहूर्त्तद्वयलाभः। अष्टाविंशतिघटीरात्र्यां मुहुर्त्तद्वयं सार्धघटीत्रयं तत्र दशमीप्रवेशमात्रेण विद्धत्वात्। *तदयोगात्-मुहूर्त्तद्वयालाभात्। इदमापाततः। चतुर्दण्डापत्त्यभावस्यापि सम्भवात्। सार्द्धघटिकात्रयस्य व्यापकत्वे दोषमाह-*द्विदण्डादावपीति *तदापत्तेः-निर्दुष्टत्वापत्तेः। तस्य व्याप्यत्वेऽर्द्धदण्डतो न्यूनदशमीसत्त्वेऽपि व्या-

एकादश्यां न कर्तव्यं व्रतं राजन्कदाचन ॥ इति ।

माधवोऽप्याह—'सोऽयं कलादिवेधोऽरुणोदयवेधे सूर्योदयवेधे च समानः' इति । निगमेऽपि—

सर्वप्रकारवेधोऽयमुपवासस्य दूषकः । इति ।

अत एव माधवेन—'अरुणोदयाद्यदण्डेऽल्पदशमीस्पर्शे संपृक्ता, कृत्स्नघटीयोगे संदिग्धा, मुहूर्तव्याप्तौ संयुक्ता, उदये संकीर्णा' इत्युक्त्वा

अरुणोदयवेलायां दशमी यदि संगता ।
संपृक्तैकादशी तां तु मोहिन्यै दत्तवान्प्रभुः ॥

इति गोभिलाद्युक्तेः *पूर्वोक्तगारुडादेश्च सामान्यतो विशेषतश्चारुणोदयवेधो निषिद्धः । *यत्तु—'अष्टमभागोऽरुणोदयः' इति हेमाद्रिणोक्तम्, यच्च 'महत्तरास्तु रात्रीः'' इति, तत्परमतं स्वयमेव*दूषितम् । *अन्तेऽप्युक्तम्—

---

प्यत्वानपायाद्दोषमाह—*दशमीति । *पूर्वोक्तेति ।

उदयात्प्राक् त्रिघटिका व्यापिन्येकादशी यदा ।
सन्दिग्धैकादशी नाम वर्ज्येयं धर्मकाङ्क्षिभिः ॥

इति पूर्वोक्तेत्यर्थः । आदिना

उदयात् प्राक् मुहूर्तेन व्यापिन्येकादशी यदा ।
संयुक्तैकादशी नाम वर्ज्येयं धर्मकाङ्क्षिभिः ॥

इति ग्रहः । इयमतिविद्धा ।

आदित्योदयवेलाया आरभ्य षष्टिनाडिकाः ॥
संकीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ।

इति च ग्रहः । वेला—तत्प्रत्यासन्नकालः । उदये संकीर्णेति वाक्येऽप्युदयस्तत्प्रत्यासन्नः कालः । इयं महाविद्धा । अतिवेधमहावेधौ ग्रन्थे दर्शितौ । रात्र्यन्ताष्टमभागत्वमरुणोदयत्वमिति हेमाद्रेरनिर्भरमाह—*यच्चेत्यादि । *दूषितमिति । रात्र्यन्ताष्टमभा

*अत्र वेधतारतम्याद्व्यवस्थेति हेमाद्रिः । *'निशः प्रान्ते' इत्यपि दोषाधिक्यार्थमेव । *तस्माच्चतुर्घटिकात्मक एवारुणोदय इति सिद्धम् । तेन षट्पञ्चाशद्दण्डानन्तरं दशमीप्रवेशोऽरुणोदयवेध उक्तो भवति । अन्त्योऽपि तत्रैव कण्वेनोक्तः—

उदयोपरिविद्धा तु दशम्यैकादशी यदि ।
दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः ॥ इति ।

स्मृत्यन्तरेऽपि—

*दशम्याः प्रान्तमादाय यदोदेति दिवाकरः ।
तेन स्पृष्टं हरिदिनं दत्तं जम्भासुराय तत् ॥ इति ॥

तत्रारुणोदयवेधो वैष्णवविषयः । तद्वाक्येषु वैष्णवग्रहणात् । तत्स्वरूपं तु माधवीये स्कान्दे—

परमापदमापन्नो हर्षे वा समुपस्थिते ।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षाऽस्ति वैष्णवी ।
विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते ॥ इति ।

*यद्यपि पित्रादेरागमदीक्षायां तन्मात्रस्य वैष्णवत्वं

---

इत्यग्रिमवचनादित्यत्राह—*अत्रेति उच्चावचानां पक्षाणां व्यवस्थयैव निवेशाद्वाक्यशेषस्तु निन्दामात्रमिति भावः । ननु दोषतारतम्येन वेधतारतम्यमयुक्तम्, अरुणोदयवेधे दोषतारतम्याभावादित्यत्राह—*निश इति । *तस्मादिति । एतच्च सर्वं जल्पकथायां ग्रन्थकृताऽभिहितम् । वस्तुतस्तु महत्तरह्रस्वतररात्रिष्वरुणोदयसाम्यस्याशुद्धत्वान्मुहूर्तद्वयमरुणोदय इति सिद्धान्तः । घटिकादिपदानि च मुहूर्तार्द्धपराणि । वेधतारतम्यं च मुहूर्तद्वयपर्याप्त्यैवेति शिष्टानां हेमाद्रिमतमेव सम्यगिति । *दशम्या इति । जम्भपदं तत्प्रधानकयातुधानपरम् । उदेतीतिदर्शनात्तद्वाक्येषु दशमीशेषेत्यादिवाक्येषु विष्णुमन्त्रदीक्षावत्त्वं वैष्णवत्वमालोच्य शङ्कते-*यद्यपीति ।

न तु पुत्रादेः, तथापि स्वपारम्पर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वं च मन्यन्ते वृद्धाः । तत्त्वसागरे भविष्ये—

यथा शुक्ला तथा कृष्णा, यथा कृष्णा तथेतरा ।
तुल्ये ते मन्यते यस्तु स वै वैष्णव उच्यते ॥

केचित्तु दशम्यां नवमीवेधमपि त्यजन्ति । तत्र मूलं मृग्यम् । उदयवेधस्तु *परिशेषात् स्मार्तगोचरः । तदाह माधवः—

अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा ।
उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्तयोः क्रमात् ॥

हेमाद्रिस्तु केषांचिदर्धरात्रेऽपि दशमीवेधमाह—

अर्धरात्रे तु केषांचिद्दशम्या वेध इष्यते ।
कपालवेध इत्याहुराचार्या ये *हरिप्रियाः ॥
न *तन्मम मतं यस्मात्त्रियामा* रात्रिरिष्यते ॥

इति ब्रह्मवैवर्तात् ।

---

*परिशेषादिति ।

अतिवेधादयः सर्वे ये वेधास्तिथिषु स्मृताः ।
सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये स्मृतः ॥

इत्युक्तेर्वैष्णवान् प्रति अतिवेधादीनां वेधत्वानिराकरणबाधादित्यर्थः ।

*हरिप्रिया इति ।

अयमर्थः—अतीतरात्रेः पश्चार्द्धेनागामिरात्रेः पूर्वार्द्धेन सह दिवसोऽद्यतनः, स एकादश्यामुपोष्यः । तत्र दशमीवेधे विद्धा सा त्याज्येति । एतन्निराकरोति—*न तन्मम मतमिति । *त्रियामेति । प्रथमप्रहरार्द्धस्य चतुर्थप्रहरार्द्धस्य च दिनकर्मसंबन्धितया तदन्या कथंचित्त्रियामा रात्रिः रात्रिकर्मणि ग्राह्येत्यर्थः । एवं चोपवासे दिनकर्मणि अरुणोदयमारभ्य ग्राह्या । तत्र

अस्यार्थः-'अनद्यतने लङ्'(पा०सू०३-२-१११)इत्यत्र 'अतीताया रात्रेः पश्चिमयामद्वयमागामिन्या रात्रेः पूर्वयामद्वयं दिवसश्च सकल एषोऽद्यतनः कालः' इत्युक्तं महाभाष्ये। स एष वर्तमानः काल एकादश्यहोरात्र उपोष्यः। तन्मध्ये दशमीप्रवेशे विद्धा। सा त्याज्या। अत एव हेमाद्रौ-

दशम्याः सङ्गदोषेण अर्धरात्रात्परेण तु।
वर्जयेच्चतुरो यामान् संकल्पार्चनयोः सदा॥

इति दोष उक्तः। चतुरो यामान् दिवसस्येत्यर्थः। स्वमते तु रात्रेस्त्रियामत्वात् प्रहरत्रयं पूर्वशेषः। तेन चतुर्थप्रहर एव वेधो युक्तः। सोऽप्यरुणोदय एव।

सूर्योदयं विना नैव स्नानदानादिकः क्रमः।

इति मार्कण्डेयपुराणात्। 'प्रत्यूषोऽहर्मुखं कल्यम्' इति कोशादरुणोदयमारभ्य सूर्यांशुप्रसूतेस्तत्रैव निषेधः। तेन मतभेदाद्व्यवस्थेति केचित्। कैमुतिकन्यायेनारुणोदयवेधस्यैवेयं स्तुतिरिति तु माधवः। य-

---

विद्धा हेया। यस्तु कपालवेधो नामार्द्धरात्रवेधः, स परेऽहनि उपवासे न त्याज्यः, किं तु दिवा संकल्पे एव।

दशम्याः सङ्गदोषेण अर्धरात्रात्परेण तु।
वर्जयेच्चतुरो यामान् संकल्पार्चनयोः सदा॥

इति हेमाद्रौ वचनादिति। ये तु-रात्रेस्त्रियामत्वात्प्रहरत्रयं पूर्वशेषः। तेन चतुर्थप्रहर एव वेधो युक्त इति वदन्ति, तदाशयं त एव जानन्ति। अन्ये तु—

सूर्योदयं विना नैव स्नानदानादिकः क्रमः।

इति वचनात् 'प्रत्यूषोऽहर्मुखं कल्यम्' इति कोशादरुणोदयमारभ्य सूर्यांशुप्रवृत्तेः तत्रैव निषेध इति न तन्मम मतमित्यस्यार्थमाहुः।

स्तु 'दिक्पञ्चदशभिस्तथा' इति वेधः, स उपवासातिरिक्तविषय इति माधवः ।

सर्वप्रकारवेधोऽयमुपवासस्य दूषकः ।
सार्धसप्तमुहूर्तैस्तु योगोऽयं बाधते व्रतम् ॥

इति निगमादित्यलम् । तत्र माधवमते *वैष्णवैररुणोदयविद्धा त्याज्या । यदा त्वेकादश्येव शुद्धा सती वर्धते, द्वादशी वा, उभयं वा, तदा परोपोष्या ।

*एकादशी द्वादशी वाऽधिका चेत्स्यदयलं दिनम् ।
पूर्वं, त्वाद्यं तूत्तरं स्यादिति वैष्णवनिर्णयः ॥

इति माधवोक्तेः । स्मार्तैस्तु सूर्योदयविद्धा त्याज्या । यदा त्वेकादशी शुद्धा सती वर्धते, द्वादशी च समा

---

*वैष्णवैरिति ।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ।

इति वचनात् । इदमुपलक्षणं वैष्णवेतरैरपि काम्यव्रते अरुणोदयविद्धायास्त्याज्यत्वात् । माधवमते इत्यभिधानं च केषांचिद्ग्रन्थे वैष्णवमधिकृत्योपवासो न लिखितस्तन्निवर्तनाय ।

*एकादशीति । नारदः—

संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी ।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणम् ॥

संपूर्णा च—"उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता । संपूर्णैकादशी नाम" इत्युक्ता । भागवततन्त्रे—

संपूर्णैकादशी त्याज्या परतो द्वादशी यदि ।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां च पारणम् ॥

यत्तु—व्यासः ।

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।

न्यूना वा, तदा *गृहस्थैः पूर्वा, यतिभिरुत्तरा कार्या ।

प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयुता ।
द्वादश्यां च तथा तात दृश्यते पुनरेव च ॥
पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो ॥

इति स्कान्दोक्तेः । धर्मसारोऽप्येवमाह । उभयवृद्धौ तु शुद्धा विद्धा वा सर्वेषां परैव ।

उपोष्या द्वादशी शुद्धा यदीच्छेत्परमां गतिम् ॥

इति, तत्तु न शुद्धाधिकद्वादश्यां प्रवर्तते । लोपो हि सूर्योदयास्पर्शित्वं तस्यावमदिन एव सत्त्वेन विद्धाया एव लाभात् । न च लोपो=द्वितीयसूर्योदयास्पर्शित्वम् । "उपादौ दशमीमिश्रितत्वात्" इतिविद्धाप्रस्तावगतमाधवविरोधादिति । हेमाद्रौ—

संपूर्णैकादशी यत्र द्वादशी च परेऽहनि ।
तत्रोपोष्या द्वादशी स्याद्द्वादश्यामेव पारणम् ॥ इति ॥

*गृहस्थैरिति । यत्तु—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तु परां वसेत् ॥

इति । तत्र कामी=गृहस्थः, निष्कामो=यतिरित्येके, तन्न ।

निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा ।
प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तमा ॥

इति स्कान्दे निष्कामगृहिणोऽपि परैवेति गृहिसामान्ये पूर्वोपवासाभावात् । एतदेवाभिप्रेत्य सकामैः पूर्वा निष्कामैरुत्तरेति सामान्यतो वक्ष्यति । अत एव—

पुनः प्रभातसमये घटिकैका यदा भवेत् ।
अत्रोपवासो विहितो वनस्थस्य यतेस्तथा ॥
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ॥

इत्यादौ वनस्थादिशब्दानां निष्कामोपलक्षणत्वाच्च वाक्यभेदः । अत्र 'उदयात्प्राक्'इति

*संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥

इति नारदोक्तेः । द्वादशीमात्रवृद्धौ तु शुद्धायां *पूर्वैव ।

न चेदेकादशी विष्णो द्वादशी परतः स्थिता ।
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम् ॥

इति नारदोक्तेः ।

द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यवस्थिते ।
शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः ॥

इति माधवोक्तेश्च । मदनरत्नेऽप्येवम् । यत्तु—

विद्धाऽप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ।
अविद्धाऽपि च विद्धा स्यात्परतो द्वादशी यदि ॥

---

परिभाविता न ग्राह्या । नाडीपञ्चकात्मकतिथिवृद्ध्या विना परेद्यु-र्घटिकासत्त्वासम्भवात् तावत्तिथिवृद्धौ चाकस्मिकह्रासस्य ज्योतिः-शास्त्रविरुद्धत्वादित्युदयद्वयसाङ्गव्यापिन्येव वाच्या । प्रभातपदं तु द्वितीयदिनप्रातःपरमिति । 'प्रथमेऽहनि संपूर्णा'इत्युक्ते 'संपूर्णैकाद-शी'इत्यग्रिमे च 'उदयात्प्राक्'इति परिभाषितैव । तादृशपदसत्त्वात् । एवं चैतद्वाक्यद्वयं स्मार्तपरमेव, न वैष्णवपरं तेषां विद्धत्वमात्रेण परत्वादिति । *संपूर्णेति । स्मार्त्तपरताबीजमुक्तम् । विद्धानिषे-धात्परेति स्मर्त्तव्यम् । *पूर्वैवेति ।

संपूर्णैकादशी शुद्धा द्वादश्यां नैव किञ्चन ।
द्वादशी च त्रयोदश्यामपि तत्र कथं भवेत् ॥
पूर्वा गृहस्थैः कार्या स्यादुत्तरा यतिभिस्तिथिः ।

इति तु निर्मूलम् । 'विद्धाऽपि'इति स्मार्त्तपरम् । वैष्णवानां विद्धानिषेधात् । 'अविद्धाऽपि च'इति स्मार्त्तपरं,न वैष्णवपरं; तेषां द्वादश्यामेवोपवासविधानात् । किं तु स्मार्त्तपरं परं तु तेषामविद्धै-

त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन ।
उपोष्यैकादशी तत्र दशमीमिश्रिताऽपि च ॥

इति स्कान्दात् ।

अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु ।
मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ॥

इत्यृष्यशृङ्गोक्तेश्च । मुहूर्तपञ्चकमरुणोदयमारभ्य ज्ञेयम् । अन्यथोत्तरेऽह्नि एकादश्यभावासम्भवात् । तथा च स एव ।

सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरैः ।
प्रातर्भवतु वा मा भूद्यस्मान्नित्यमुपोषणम् ॥ इति ।

यदपि हेमाद्रिणा–'शुद्धसमा शुद्धन्यूना वा अधिकद्वादशिका चेत्सर्वेषां परेव' इत्युक्तं, तदपि वैष्णवविषयम् । स्मार्तानां तु पूर्वैवेत्यविरोधः* ।

---

हितान्वयापत्तेः । मैवम् । कालादर्शादौ—

सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः ।
प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम् ॥

इत्यृष्यशृङ्गवचसो विद्धाधिकैकादशिकायां विद्धोपवासविधायकत्वेनार्थवत्त्वात् । अन्यथा प्रातर्भवत्वित्यस्यासङ्गतेः । न च त्रयोदश्यां द्वादशी प्रातर्भवत्विति तदर्थः । दशमीमिश्रितेत्युक्तेस्तदव्यवहितोत्तरप्रातर्लाभात् । अत्र संकल्पकाले एकादश्यसत्त्वेऽपि संकल्पं वक्ष्यति । तथा च "दिनत्रयमृते देवि" "सर्वत्रैकादशी कार्या" इत्याद्योर्विरोधभङ्गाय गृहिणां पूर्वा यतेरुत्तरेति व्यवस्था स्वीकार्या । त्रयोदश्यामिति वाक्यद्वयं विद्धसमापरं तस्यां यतीनां परा भविष्यतीत्याशङ्कावारणार्थम् । अविरोध इति प्रतिज्ञानिर्वाहाय

*हेमाद्रिमते तूच्यते । तत्र—

*शुद्धा विद्धा द्वयी नन्दा, शेषा न्यूनसमाधिकैः ।

षट्प्रकारा पुनश्शेषा द्वादश्यूनसमाधिकैः ॥

इत्यष्टादशैकादशीभेदाः। तत्र *शुद्धाऽधिका न्यूनद्वादशिका, शुद्धाऽधिका समद्वादशिका च सकामैः पूर्वा, निष्कामैरुत्तरा कार्या । *'प्रथमेऽहनि सम्पूर्णा' इति पूर्वोक्त-

---

स्मार्तान् प्रति हेमाद्रिमतमाह —

*हेमाद्रीति । हेमाद्रिमाधवयोः स्मार्तान् प्रति न मतभेद इति स्मर्तव्यम् । *शुद्धेति । शुद्धन्यूना न्यूनद्वादशिका १, शुद्धन्यूना समद्वादशिका २, शुद्धन्यूनाऽधिकद्वादशिका ३, शुद्धसमा न्यूनद्वादशिका ४, शुद्धसमा समद्वादशिका ५, शुद्धसमाऽधिकद्वादशिका ६, शुद्धाऽधिका न्यूनद्वादशिका ७, शुद्धाऽधिका समद्वादशिका ८, शुद्धाऽधिकाऽधिकद्वादशिका ९, एवं विद्धाऽपीत्यष्टादशभेदा इत्यर्थः । परदिनसूर्योदयात्प्राक् सपाद्घटिन्यूनत्वं, सूर्योदयात्किञ्चिदूनत्वं समत्वं, सूर्योदयोत्तरसत्त्वमाधिक्यम् । तत्र—

आद्यास्तु षट्सु पूर्वैव व्यवस्थाऽनन्तरद्वये ।

गृहस्थैर्यतीनां [illegible] स्यात्परेऽहनि ॥

शुद्धाधिका न्यूनसमोत्तरा चेत् पूर्वा गृहस्थैर्यतिभिः परैव ।

सा चेत्पराधिक्यवती परैव, शेषास्तु शुद्धाः प्रथमा उपोष्याः ॥

विद्धाद्वये तु पूर्वा स्याद्व्यवस्थाऽनन्तरद्वये ।

अपरेऽहनि शेषाः स्युः सप्तमी तु व्यवस्थया ॥

विद्धासमा न्यूनसमोत्तरा चेद्विद्धाधिका न्यूनपरा च तत्र ।

सैव व्यवस्था, यदि विद्धहीना ग्राह्योपवासे प्रथमैव सर्वैः ॥

विद्धासमा चाधिकोत्तरा स्याद्विद्धासमा विद्धसमोत्तरा स्यात् ।

तदा परैव प्रतिमुक्तशङ्कैरेकादशी सर्वजनैरुपोष्या ॥

इति कारिकाऽनुसारेणाह—*शुद्धेत्यादि । *प्रथमे इति ।

स्कान्दात् ।

ऊनद्वादशिकायां तु विष्णुप्रीतिकामैरुपवासद्वयं* कार्यम् ।

---

प्रथमेऽहनि सम्पूर्णा व्याप्याहोरात्रसंयुता ।
द्वादश्यां च तथा तात दृश्यते पुनरेव च ॥
पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो ।

इति स्कान्दादित्यर्थः । अत्र गृहस्थयतिपदे सकामनिष्कामपरे ।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तु परां वसेत् ॥

इति मार्कण्डेयवाक्यैकवाक्यत्वात् । न च सकामनिष्कामशब्दयोरेव गृहियतिपरत्वमस्तु, प्रायशो गृहिणां सकामत्वाद्यतीनां निष्कामत्वादिति वाच्यम् ।

निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा ।
प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम ॥

इति स्कान्दे गृहस्थस्यापि निष्कामस्योत्तरोपवासविधानात् । इदं च हेमाद्रेर्मतमात्रमिति । शुद्धाऽनधिकाऽनधिकद्वादशिका, शुद्धानधिकाऽधिकद्वादशिका २, शुद्धाऽधिकाधिकद्वादशिका ३, शुद्धाधिकाऽनधिकद्वादशिका ४ इति चत्वार एव भेदाः । तत्रायं चतुर्थो भेदः । तिथिवृद्धिह्रासयोः समाया एव तिथेर्ज्यौतिषे प्रसिद्धेर्दिनद्वयव्यापित्वेन समा तदधिकान्तरेण न्यूना चेत्तु[illegible] एवानधिकत्वेन सङ्ग्रहात् ।

*उपवासद्वयमिति । न चैकाधिकारिकमुपवासद्वयं कथं विधीयते ?, [illegible]हुवेरयुक्तत्वात् किन्त्वयं गृहियतिभेदेन विहितस्यानुवादोऽस्तु, तथा सति अधिकार्यन्तरमपि न कल्प्यमिति वाच्यम् । 'तिथी' इति द्वन्द्वसमासार्थकै[illegible]तरयोगप्रतीतेस्तदनुरोधेनाधिकार्यन्तरादेरपि युक्तत्वात् । अत्र

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
लुप्यते द्वादशी, तस्मिन्नुपवासः कथं भवेत् ॥
उपोष्ये द्वे *तिथी तत्र विष्णुप्रीणनतत्परैः ॥

इति वृद्धवसिष्ठोक्तेः ।

शुद्धन्यूना शुद्धाधिका शुद्धसमा विद्धन्यूना विद्धसमा वाऽधिकद्वादशिका चेत्सर्वेषां परैवेति हेमाद्रिः । *मदनरत्ने तु *शुद्धाधिका परा । *'संपूर्णैकादशी यत्र' इति पूर्वोक्तेः । *अन्यथा पूर्वा ।

---

लुप्यते इत्यस्यैवार्थः ।

सम्पूर्णैकादशी यत्र परतः पुनरेव सा ।
त्रयोदशी उषःकाले उपोष्या तत्र का भवेत् ॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ।

इति स्कान्दे 'त्रयोदशी उषःकाले' इत्युक्तेस्तदेकवाक्यत्वादित्याशयेनोनद्वादशिकायामित्युक्तम् । वस्तुतः समद्वादशिकायामपि विष्णुप्रीतिकामस्योपवासद्वयं युक्तम्। लोपो द्वितीयसूर्योदयस्पर्शित्वमपीति तस्या अपि संग्रहात् । 'त्रयोदशी उषःकाले' इति स्वतन्त्रमिति नवीनाः ।

शुद्धन्यूनेत्यादित्रयेऽधिकद्वादशिकाऽन्वयः । एतच्च वैष्णवाभिप्रायम् । स्मार्तान् प्रति त्वाह—*मदनेति । *शुद्धाधिकेति । अधिकद्वादशिकेति शेषः । अयं च शुद्धाधिकाऽधिकद्वादशिकारूपस्तृतीयो भेदः । *संपूर्णेति ।

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥

इत्यर्थः ।

पूर्णाऽप्येकादशी त्याज्या वर्द्धते द्वितयं यदि ॥

इत्यपि द्रष्टव्यम् । *अन्यथेति । शुद्धन्यूना शुद्धसमा वाऽधिकद्वा-

*शुद्धा यदा समा हीना समा हीनाऽधिकोत्तरा ।
एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि ॥

इति स्कान्दात् । शुद्धा=एकादशी । उत्तरा=द्वादशी । 'न चेदेकादशी विष्णौ'इति नारदोक्तेश्च । यत्तु—'अविद्धाऽपि च विद्धा स्यात्'इति पाद्मं तच्छुद्धाधिकापरम् । यत्तु—

संपूर्णैकादशी स्याद्वा परतो द्वादशी यदि ।
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् ॥

इत्यादि, *तद्वैष्णवपरम् । स्मार्तानां तु* पूर्वैवेत्युक्तम् ।

---

दशिकेत्यर्थः । अयं च शुद्धानधिकाधिकद्वादशिकेति द्वितीयो भेदः । *शुद्धेति । एकादशी यदि शुद्धा सती समा द्वितीयसूर्योदयपर्यन्ता ततो न्यूना वा, द्वादशी ततो न्यूना समाऽधिका वा तदा शुद्धामेवोपवसेत् न वै[illegible]मित्यर्थः । एतेन शुद्धानधिकानधिकद्वादशिकेति प्रथमभेदोऽपि संगृहीतः । [illegible]ह्रास ग्रन्थे नोट्टङ्कितः । *वैष्णवेति । [illegible] । *पूर्वैवेति । यत्तु—

उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुता ।
संपूर्णैकादशी नाम तत्रैवोपवसेद्गृही ॥

इति वचनाद् गृहिणां पूर्वा ।

संपूर्णैकादशी यत्र द्वादशी चापरेऽहनि ।
तत्रोपोष्या द्वादशी स्याद् द्वादश्यामेव पारणम् ॥
न गर्भे विशते जन्तुरित्याह भगवान् हरिः ।

इति वाक्याद्यतीनां परेति; तन्न । प्रथमवाक्यस्य उक्तरीत्या गृही सकामोऽवैष्णवः । तस्यारुणोदयविद्धायां काम्योपवासनिवर्त्तकत्वात् । तत्रैवेत्येवकारवशात्तद्भिन्ने उपवासो नेत्यर्थात्, द्वितीयवाक्यस्य च गृहिणामेवोभयाधिक्यविषयत्वात् । तत्र पराया एव "न गर्भे विशते जन्तुः"इत्यर्थवादसूचितगर्भवासदुःखविशेषनिवर्त्तकत्वात् ।

विद्धाऽपि एकादशी नवधोक्ता । तस्या विद्धाऽनधिकाऽनधिकद्वादशिका १, विद्धाऽनधिकाऽधिकद्वादशिका २, विद्धाधिकाऽधिकद्वादशिका ३, विद्धाधिकाऽनधिकद्वादशिका चेति चत्वारो भेदाः । तत्र विद्धन्यूना विद्धसमा वाऽधिकद्वादशिका चेत्सर्वेषां परा ।

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी शुद्धा यदीच्छेत्परमां गतिम् ॥

इत्युक्तेः । लुप्ता दिनद्वये सूर्योदयास्पर्शेन क्षयं गता । न चेदं मुमुक्षुपरं परमां गतिमिच्छुभिरित्यर्थात्, अन्येषां तु पूर्वा "अविद्धानि निषिद्धैश्च"इत्युक्तेरिति वाच्यम् ।

एकादशी यदा विद्धा द्वादश्यां न प्रतीयते ।
द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत् ॥
उपोष्या द्वादशी शुद्धा सर्वैरेव न संशयः ।

इति नारदीये सर्वैरेवेत्युक्तेः । "न चेदेकादशी विष्णौ"इति तु शुद्धापरम् । 'अविद्धानि'इत्यादीनि विद्धाग्रहवाक्यानि परत एकादश्यभावे द्वादश्यवृद्धावेव प्रवर्तन्ते ।

एकादशी द्विधा शुक्ता परतोऽपि न वर्तते ।
वृद्धिभिर्यातिभिश्चैव [illegible] क्षये तिथिः ॥

इति वाक्यवत् "त्रयोदश्यां न लभ्येत"इत्यादिवाक्यादिति । तदुक्तं—'विद्धन्यूना विद्धसमाऽधिकद्वादशिका सर्वेषां परा'इति । अयं विद्धानधिकाधिकद्वादशिकारूपो द्वितीयो भेदः । पारणपर्याप्तद्वादश्यलाभे तामुल्लङ्घ्य पारणं भवतीत्युक्तम् । यश्च विद्धानधिकानधिकद्वादशिकारूपः प्रथमभेदः, स चतुर्द्धा । एकादशीन्यूनत्वे—द्वादशीसाम्ये १, तन्न्यूनत्वे वा २ । एकादशीसाम्ये—द्वादशीसाम्ये ३, तन्न्यूनत्वेन वा ४ । तत्राद्ये आह—*विद्धेति । *मुमुक्षूणामिति ।

*विद्धन्यूना समद्वादशिका तु *मुमुक्षूणां *पुत्रवतां च परा। *अन्येषां *पूर्वा। पुत्रवतोऽपि पूर्वेति मदनरत्ने। विद्धन्यूना न्यूनद्वादशिका च सैव *सर्वैः कार्येति हेमाद्रिः। मुमुक्षूणां पराऽन्येषां पूर्वेति मदनरत्ने। वि-

---

दिनक्षये तु शुद्धैव द्वादशी मोक्षकाङ्क्षिभिः।
उपोष्या, दशमीविद्धा नोपोष्यैकादशी सदा॥

इति सौमन्तवात्। अत्र दिनक्षयो न तिथित्रयस्पृक्त्वं, किं तु त्रिद्युत्वादेकादश्याः सूर्योदयास्पर्शमात्रम्। *पुत्रवतामिति।

एकादश्यां यदा वत्स दिनक्षयतिथिर्भवेत्।
अत्रोपोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणम्॥

इति पितामहोक्तेः।

दिनक्षये तु संप्राप्ते उपोष्या द्वादशी भवेत्।
दशमीशेषसंयुक्तां न कुर्वीत कदाचन॥

इति कौर्मनिषेधाच्च। यद्यप्यत्रोभयत्र पुत्रवत्पदं न दृश्यते तथापि—

एकादशीषु नष्टासु रविसंक्रमणे तथा।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही॥

इति वाक्येन

एकादशीदिनक्षये उपवासं करोति यः।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा॥

इत्यर्थवादेन च पूर्वोपवासनिषेधऽपेक्षितपुत्रवदधिकारिलाभात्। पिण्डद इति आदन्तात् षष्ठ्येकवचने "आतो धातोः" (पा० ६—४—१४०) इत्यालोपः। *अन्येषां=पुत्ररहितगृहिणाम्। *पूर्वेति। पुत्रवतः पूर्वोपवासनिषेधकाभावेन तदुपवाससिद्धेः। पुत्रवतोऽपीत्यत्रारुचिः उक्तरीत्या स्पष्टा। द्वितीये विद्धन्यूनेति तृतीयचतुर्थयोर्विद्धसमेत्यादि। *सर्वैरिति।

दशमी समद्वादशिकोनद्वादशिका च मुमुक्षुभिः पराऽन्यैः पूर्वा कार्या।

दशमीमिश्रिता पूर्वा द्वादशी यदि *लुप्यते।
शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः॥

इति व्यासोक्तेः। मोक्षकाङ्क्षिग्रहणादन्येषां पूर्वैव।

सर्वैरेकादशी कार्या द्वादशीमिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम्॥

इति पाद्मोक्तेः। विद्धाधिका समद्वादशिका सर्वेषां पूर्वैव।

---

एकादशी तु सम्पूर्णा परतोऽपि न वर्द्धते।
यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः॥

इति पाद्मात्। 'अत्र परतोऽपि न वर्द्धते' इत्यनेनैकादश्याः साम्यमपि गृह्यते। क्षयोऽपि तस्याः साम्येऽपि यद्यपि सम्भवति एकादश्याः सूर्योदयास्पर्शात् तथापि पृथक् क्षयशब्दानर्थक्यापत्तेः क्षयः तन्न्यूनत्वरूपो ग्राह्यः। स च यत्यर्थम्। साम्ये मुमुक्षूणामुत्तरत्रोपवासविधानात्। तथा च क्षये यतिभिर्गृहिभिश्च सैवोपोष्या, साम्ये तु गृहिभिः सैवोपोष्येत्यन्वयः।

लुप्यते=वृद्धिं न प्राप्नोति। "पूर्णा च द्वादशी परा" इति पाठान्तरात्। परा=परदिनगतैव न तु पूर्वाहोरात्रमविष्टेत्युक्त्या एकादश्याः सूर्योदयपर्यन्तत्वलाभः। अन्यथा परशब्दवैयर्थ्यात्। एतत्पाठे यद्यपि द्वादश्या अनाधिक्यं न लभ्यते तथापि

दिनत्रयमृते देवि नोपोष्या दशमीयुता।
सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशी॥

इति स्कान्दे,

यदि दैवात्तु संसिध्येदेकादश्यां तिथित्रयम्।
तत्र क्रतुशतं पुण्यं द्वादशी पारणे भवेत्॥

*पारणाहे न लभ्येत द्वादशी कलयाऽपि चेत् ।
तदानीं दशमीविद्धाऽप्युपोष्यैकादशी तिथिः ॥

इति ऋष्यशृङ्गोक्तेश्च । *माधवमते तु अत्र गृहिणां पूर्वा, यतेरुत्तरा । *विद्धाधिका न्यूनद्वादशिका मोक्षपा-

---

इति नारदीये च तथैवाभिधानात् । विद्धायां तु

अविद्धानामलाभे तु पयोदधिफलानि तु ।
सकृद्देहाञ्जलं पीयादुपवासस्त्वसौ भवेत् ॥

इति भक्ष्यनियमो बोध्यः ।

अत्र निबन्धकाराः । "दिनक्षये तु सम्प्राप्ते" इति कौर्मे दिनक्षयो दिनत्रयस्पृक्त्वं तेन तत्रैव पुत्रवद्गृहिणामुपवास-निषेधः परत्रोपवासश्च; साम्ये तु तेषामपि पूर्वत्रैवोपवासः तत्र निषेधाप्रवृत्तेः । "दिनक्षये तु शुद्धैव" इति सुमन्तुवाक्ये च दिनक्षयो न प्रोक्तः किं तु विद्धत्वात्सूर्योदयस्पर्शित्वम् । तथा च एतत् द्वितीयसूर्योदयपर्यन्तत्वरूपनाड्यपरमेव । "न्यूनत्वविषये या तिथिर्गृहिभिश्चैव" इति वचनविरोधात् गृहिभिन्नपरम् । तेन कौर्मोक्तदिनक्षये उपवासनिषेधोऽत्र । तेन विद्धन्यूनानधिकद्वादशिकायां पुत्रवद्गृहिभिन्नानां सर्वेषां पूर्वत्रैवोपवासः, पुत्रवतामेव परेद्युः । विद्धसमाऽनधिकद्वादशिकायां सर्वेषां गृहिणां पूर्वेद्युः, यतीनां तूत्तरेद्युरिति प्राहुः ।

विद्धाधिका—समद्वादशिका ऽधिकद्वादशिका च सर्वेषां परैवेति पाठः । पूर्वैवेत्यपपाठः । अधिकत्वात् । अधिकद्वादशिकामधिकृत्याह—*पारणाहे इति । पारणाहे द्वादशीलाभे तु विद्धा नोपोष्येत्यत्र तात्पर्यम् । *माधवमते लिखति । तुनाऽरुचिः । सा च

दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशः स्यात्परेत्य नरकं व्रजेत् ॥

इत्यादिना पुत्रवतः परत्वसूचनात् । अयं च विद्धाधिकाधिकद्वादशिकारूपस्तृतीयो भेदः । *विद्धेति । विद्धाधिकानाधिकद्वाद-

१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था

३ एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते।

काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति। ... ... ... ... ... ...


(१) संस्काररत्नमाला। गोपीनाथभट्टकृता २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् १२

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १०

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः ... १

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचिता तर्कपादः (मीमांसा) ... ... २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः २

(८) [illegible] यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्ण (वेदान्तः) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा। ... २

(१०) सिद्धित्रयम्-[illegible] श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। १

(११) न्यायमकरन्दः। [illegible] (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः (न्यायः) ... ... ... ५

(१३) विधिरसायनम्। श्रीमदप्पय्यदीक्षितकृतम्। सम्पूर्णम् २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) ... ... ... १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) ... ... २

(१६) मीमांसाबालप्रकाशः। जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका [illegible] श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३।

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः। (वेदान्तः)

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् ... ... १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितं ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम्। (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ... १

(२३) श्रीलक्ष्मासहस्रम्-बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ... ... ... ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता। २

(२५) क्रोडपत्रसंग्रहः। अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः [illegible] व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ... ... ४

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टरचितसिद्धान्तजाह्नवीयुतम् ... ... ... २

(२७) षड्दर्शनसमुच्चयः। बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः। मणिभद्रकृतटीकया सहितः। हरिभद्रसूरिकृतः ... ... ... १

(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्नार्णवश्च१

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका ... ... ... १३

(३०) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः। सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ... ... ... ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ४

(३३) वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता २

(३४) प्रस्थानरत्नाकरः। गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् ... ... ... १

(३६) योगदर्शनम्। परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित–योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् ... ... ... ... २

(३७) वेदान्तदर्शनम्। परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्मामृतवर्षिणीसमाख्य व्याख्यासंवलितम् ... ... ... ... ४

(३८) विश्वप्रकाशः। कोशः। विद्वद्वरश्रीमहेश्वरसूरिविरचितः २

(३९) श्रीसुबोधिनी। श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतविरचितटिप्पणीसहिता। श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ... ३

(४०) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः। श्रुतिसिद्धान्तापरनामकः। श्रीब्रह्मचारिवनमालिमिश्रविरचितः। वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता ... ... ३

(४२) स्वानुभवादर्शः। श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः। स्वकृतटीकाविभूषितश्च ... ... ... ... २

(४३) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता। व्यवहाराध्यायः ... ११

(४४) गादाधरी। श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता। श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ... ८

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणिता। रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपादः ... ... ... ... ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय–श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्य- बालम्भटाभ्यां विरचितकुञ्जिकाकलाढ्यटीकाद्वयसंवलिता ... ११

(४७) व्याकरणसिद्धान्तसुधानिधिः। पर्वतीय विश्वेश्वरसूरिविरचितः ... ... ... ... ८

(४८) वीरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः ... ... ... ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः। महेश्वरतीर्थकृतयालघुसंग्रहाख्ययाटीकयासमलंकृतः ८

(५०) वीरमित्रोदयः। राजनीतिप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः... ... ... ५

(५१) पूर्वमीमांसाअधिकरणकौमुदी। श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या पारिष्कृत ... ... १

(५२) प्रसस्तपादभाष्यटीकासंग्रहः। तत्र कणादरहस्यम्। श्रीशंकरमिश्रविरचितम् ... २

(५३) क्रमदीपिका। श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता। विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत ... ... ... ... ३

(५४) वीरमित्रोदयः। तीर्थप्रकाशः। महामहोपाध्याय श्रीमित्रमिश्रविरचितः ... ... ... ६

(५५) सांख्यसंग्रहः। तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम्। सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम्। समाससूत्रव्याख्या सर्वोपकारिणी च ... ... ... ... १

(५६) न्यायपरिशुद्धिः। श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता। श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ... ... ... ४

(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टकृतव्याख्यासहितः ... ... ... २

(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः। श्रीमदनन्तदेवविरचितया "भाट्टालङ्काराख्य" व्याख्यासहित यन्त्रस्थः

(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमिश्रविरचिता। पण्डितराड़—वंशीधरमिश्रविरचित "तत्त्वविभाकर" टीकासहित ... यन्त्रस्थः ...

—:o:—

जैकृष्णदास गुप्तः सेक्रटरी
चौखम्बासंस्कृतसीरीज आफीस
बनारस सिटी।

*September* **1920.**

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 273.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः ।

कृष्णंभट्टकृतव्याख्यासहितः ।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं०
व्याकरणोपाध्याय नेने–इत्युपाख्यगोपालशास्त्रिणा
तदीयगुरुवर पं० पर्वतीयनित्यानन्दपन्त-
प्रदर्शितरीतिमनुसृत्य संशोधितो
टिप्पण्या परिष्कृतश्च ।

---

# NIRNAYA SINDHU;

of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Uyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS III–३

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

AGENTS: PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1920

*Price Rupee One.*

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशातपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२७३

पक्षयविष्णुप्रीतिकामैः परा कार्या । गृहस्थेन तु *नक्तं कार्यम् ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः ॥

इति कौर्मे दिनक्षये उपवासनिषेधात् ।

दशम्यैकादशी मिश्रा द्वादशी च क्षयं गता
क्षीणा सा द्वादशी ज्ञेया नक्तं तु गृहिणः स्मृतम् ॥

इति वृद्धशातातपोक्तेश्च *गृहिणः पूर्वत्रोपवासः । *एकादश्याः शुद्धन्यूनत्वे शुद्धसमत्वे वा द्वादश्या न्यूनसमत्वयोरेकादश्यामुपवासः । यानि तु–

दशम्यनुगता हन्ति द्वादशं द्वादशीफलम् ।
धर्मापत्यधनायूंषि त्रयोदश्यां तु पारणम् ॥

इति कौर्मादीनि दशमीवेधत्रयोदशीपारणयोर्निषेधकानि तानि विहितभिन्नपराणि । अत्र मूलवचनानि तद्व्यवस्था चाऽऽकरे ज्ञेया ।

यत्तु कालहेमाद्रौ—

बहुवाक्यविरोधेन सन्देहो जायते यदा ।
द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणम् ॥

इति मार्कण्डेयोक्तेः,

सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत् ।

तथा—

विवादेषु च सर्वेषु द्वादश्यां समुपोषणम् ।
पारणं च त्रयोदश्यामाज्ञेयं मामकी मुने ॥

---

शिकारूपश्चतुर्थभेदोऽयम् । *नक्तं=नक्तभोजनम् । *गृहिणः पूर्वत्रोपवास इति । नक्तकाले किञ्चिद्भक्षणेनेति शेषः, "उपवासनिषेधे तु" इति वचनात् । *एकादश्या इति । शुद्धत्वेनासंदेहात् ।

इति पाद्मोक्तेश्च वेधसन्देहे ज्योतिर्विदां विप्रतिपत्तौ वा परा कार्येत्युक्तम्, तद् *वैष्णवविषयमित्यलं बहुना।

अथात्रोपयुक्तं किञ्चिदुच्यते। तत्र दशम्यामेकादशीयोगे *दशमीमध्य एव भोजनं कार्यम्। 'एकादश्यां न भुञ्जीत' इति तस्या एव निमित्तत्वात्।

निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते ॥

इति देवलोक्तेश्च। केचित्तु एकादशीव्रताङ्गत्वेन पूर्वेद्यु*रेकभक्तविधानाद्विधिस्पृष्टे च निषेधानवकाशान्न काम्यव्रताङ्गे भोजननिषेधः प्रवर्तते। तेनैकादशीमध्येऽपि पूर्वदिने भोजनमित्याहुः*।

अत्राधिकारी माधवीये कात्यायनेनोक्तः—

---

*वैष्णवेति। संदेहे स्मार्तोपलक्षणम्।

*दशमीमध्य एवेति। एकभक्तविधौ चानृतवदनादिनिवृत्तिवद्व्रताङ्गतया द्वितीयभोजननिवृत्तिरेव विधीयते लाघवात्, न तु तद्विशेष्यं भोजनमपि गौरवात्। तेन शुद्धाधिकद्वादश्यामुपवासद्वयं भवति। *एकभक्तेति।

दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः।
एकादशीमुपवसेत्पक्षयोरुभयोरपि ॥
देवतास्तस्य तुष्यन्ति कामितं चास्य सिध्यति।

इत्युक्तेः। कामितं चेत्यतः काम्य इव नित्येऽप्येकभक्तं कार्यम्। "[illegible] पुनः कुर्याद्" इत्युक्तेः। *आहुरित्यरुचिः। तद्बीजं तु एकभक्ते विशेष्यं भोजनं नार्थः।

सायमाद्यन्तयोरह्नोः सायंप्रातश्च मध्यमे।
उपवासफलं प्रेप्सुर्जह्याद्भक्तचतुष्टयम् ॥

इति जह्यादित्येवाभिधानात्। निषेधस्य सर्वैः पाल्यत्वाच्चेति। किञ्चाऽधिकायां निषेधपालकस्य प्रातर्माध्याह्निकापकर्षविध्यभावात्त-

*अष्टवर्षाधिको मर्त्यो ह्यशीतिन्यूनवत्सरः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ इति ।

भविष्ये—

ब्रह्मचारी च *नारी च शुक्लामेव सदा गृही । इति ।

यत्तु विष्णुः—

पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् ।
आयुष्यं हरते भर्तुर्नरकं चैव गच्छति ॥

इति, तद्भर्त्रननुज्ञाविषयमिति प्रागुक्तम् ।
उपवासासामर्थ्ये तु मार्कण्डेयकौर्मयोः—

---

दपर्याप्तदशमीस्थले कथं भोजनमिति विभावनीयम् । *अष्टवर्षेति । उपनयनोपलक्षणम् । "अपि वा वेदतुल्यत्वादुपायेन प्रवर्त्तेरन्"इति न्यायात् । न चैवमष्टवर्षग्रहणं व्यर्थं,किं च तदंशे न्याय्यमात्मानुवादित्वम्, अन्यांशे चाप्राप्तविधायकत्वमिति वैरूप्यमिति वाच्यम् । "जातपुत्रः कृष्णकेश"इतिवदिहापि पदद्वयेनोपवासयोग्यावस्थाविशेषलक्षणयाऽशीतेरूर्ध्वमपि अष्टवर्षात्प्रागपि समर्थस्योपवासं वदतस्तत्राप्युक्तवैरूप्यस्य दुर्वारत्वात् । तेनैव रूपेणाष्टानष्टसाधारणस्योपवासस्य विधानान्न वैरूप्यमिति चेत् तर्हि उपनीतत्वमात्रेणैव तद्विधाने वैरूप्यासम्भवात्, लाघवाच्च, तत्रापि च तादृशस्य समर्थस्याकृतोपनयनस्याप्यधिकारप्रसङ्गेन तद्रूपस्योपनयघटितत्वावश्यकत्वाच्च । मम त्वनष्टवर्षीयादेरुपनीतस्याशक्तस्यानुकल्पेनापि व्रतसिद्ध्याऽधिकारनिवार्हात् । यद्वक्ष्यति शक्तिमांस्त्विति । *नारी चेति । नारी सधवा । तस्याः शुक्लायामेवोपवासः ।

एकादश्या विना रण्डा पतिश्च सुमहामते ।
पच्यते ह्यन्धतामिस्रे यावदाभूतसंप्लवम् ॥

इति नारदीये रण्डापदात् । नित्योपवासासामर्थ्येऽनुकल्पः । तत्र प्रथमं क्रियाऽनुकल्पः, पश्चात्कर्त्रनुकल्प इति क्रियानुकल्प-

*एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन *दानेन न निर्द्वादशिको भवेत् ॥

अत्र—

एकभक्तेन यो मर्त्य उपवासव्रतं चरेत् ।

इत्येकभक्तादिषूपवासशब्दस्तद्धर्मातिदेशार्थः । तेन तत्प्रयुक्ताः सर्वे धर्माः तत्स्थानापन्नेऽपि भवन्ति । संकल्पमन्त्रे चैकभक्तादिपदेनोहः कार्य इति मदनरत्ने ।

---

माह—*एकभक्तेनेति । "नक्तं हविष्यान्नम्" इति नक्तमुक्तं, तदसंभवे अयाचितमेकभक्तं वा कार्यमित्यत्र तात्पर्यम् । अत्र च

एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् ।
पयोमूलफलैर्वाऽपि न निर्द्वादशिको भवेत् ॥

इत्यादौ च कल्पैकतोलन्यायेनैव एकभक्तादेरुक्तिः, न तु क्रमः । "प्रशस्तमत्रोत्तरमुत्तरं च" इत्येव तदुक्तेः । क्रमवाक्ये च फलग्रहणं मूलादेः, क्षीरग्रहणं च दध्यादेरुपलक्षणम् । उपवासेनेति च तत्तुल्यत्वार्थम् । *दानेनेति । "तावद्धनादि वा दद्यात्" इत्याद्युक्तम् । *तद्धर्मेति । एषां चैकभक्तनक्तायाचितदानानामुपवासप्रतिनिधितया तत्तिथावनुष्ठानं निर्णीतम् । यानि त्विमानि स्वतन्त्राणि तत्र दशमीविद्धा त्याज्या । दशमीवेधश्च पञ्चदशनाडीरूपः "दिक् पञ्चदशभिस्तथा" इति वचनात् ।

पूर्णाविद्धां दिनार्द्धेन नन्दां पूर्णामपि त्यजेत् ।
एकभक्तं च नक्तं च दानं चायाचितं च न ॥
नन्दायां पूर्णविद्धायां कुर्यादैश्वर्यमीहितः ।

इत्यभियुक्तोक्तेश्च । तद्धर्मो मुख्योपवासधर्मः । एवम् 'उपवासासमर्थश्च' इत्यादावुपवासशब्दः एकभक्तादेर्ग्रहणार्थः । तेन यथा—'स्वर्यातस्य ह्यपुत्रस्य' इत्यादेर्गौणपुत्रस्य दत्तकादेरभावे पुत्रानुकल्पविधिवद् गौणस्याप्युपवासस्य स्वयं कर्तुमसामर्थ्ये कर्त्रनुकल्प

*तथाऽसामर्थ्ये प्रतिनिधिना कारयेदिति प्रागुक्तम् । व्रताकरणे प्रायश्चित्तमाह माधवीये कात्यायनः—

अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्त्वा *चान्द्रायणं चरेत्॥ इति।

अथ काम्यव्रतविधिः लघुनारदीये—

*दशम्यादि महीपाल त्रिदिनं परिवर्जयेत् ।
गन्धताम्बूलपुष्पादि स्त्रीसंभोगं महायशाः ॥

तत्र दशम्यां विधिः कौर्मे—

*कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान् ।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥

---

इत्याह—*तथेति । *चान्द्रायणमिति । एतच्च तत्स्थानिकस्य वक्ष्यमाणद्वादश्युपवासस्याकरणे बोध्यम् । तत्र प्रमादादिनाऽकरणे यवमध्यं, नास्तिक्यादिना तु पिपीलिकामध्यं, प्रतिनिमित्तं नैमित्तिकावृत्तिश्च । अशक्तस्याकामतश्चार्द्धं कल्प्यम् । दक्षिणा तु शक्तस्य कामतो वा त्यागेऽष्टगावः, अशक्तादेश्चतस्रः । न च रविवारादिसाहश्यान्निषेधातिक्रम एवेदम् । व्रतातिक्रमस्यापि 'भुक्त्वा'इत्यनेन वाच्यत्वात् । व्रतनिषेधयोर्द्वयोरपि पुरुषार्थतया नैमित्तिकस्यापि तथात्वात् । *दशम्यादीति । सामान्यतः । *कांस्यमिति । मधु=क्षौद्रम् । येषां क्षौद्रादीनां पुरुषार्थो निषेधोऽस्ति तेषां क्रत्वर्थोऽयं बोध्यः ।

कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् ।
व्यायामं च प्रवासं च दिवास्वापं च मैथुनम् ॥

अथाञ्जनमिति वा पाठः ।

तिलपिष्टं मसूरं च दशम्यादि विवर्जयेत् ॥

इति मात्स्यं च द्रष्टव्यम् । उपवसन्निति वर्त्तमानसामीप्ये । तेनानन्तरदिने उपोष्यन्नित्यर्थः । *अस्यम्बुपानमिति । अशनं

तथा—

शाकं मांसं मसूरांश्च पुनर्भोजनमैथुने ।
द्यूत*मत्यम्बुपानं च दशम्यां वैष्णवस्त्यजेत् ॥

मदनरत्ने नारदीये—

अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः ।
अवनीतलपशयनाः प्रियासंगमवर्जिताः ॥

व्रतघ्नान्याह हेमाद्रौ देवलः—

असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ।
उपवासः प्रणश्येत दिवास्वापाच्च *मैथुनात् ॥

---

च बोध्यम् । कैमुतिकन्यायात् ।

पुनर्भोजनमत्याशं दशम्यां परिवर्जयेत् ।

इत्युक्तेश्च । अक्षाराळवणा इति पाठेऽक्षाराश्चालवणाश्चेति विग्रहः । अक्षारळवणा इति पाठेऽपि क्षाराश्च ळवणानि चेति समासानन्तरं नञ्समासः । समान एवार्थः । क्षारळवणं खारीति प्रसिद्धम् । तन्निषेधोऽयमिति केचित् । तन्न, क्षारळवणपदयोः एकवैयर्थ्यात् । सकृत्पानं=पात्रं भूमावनाधाय पानम् ।

पानीयादि पिबेद्येन तत्पात्रं द्विजसत्तम ।
अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निक्षिपेत् ।

इति शातातपवचनात् । यत्तु शातातपेन—

पीतोच्छिष्टं तु पानीयं पीत्वा तु ब्राह्मणः क्वचित् ।
त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ।

इत्युक्तं, तत्प्रात्याहिकजलपानपरम् । तथा च तादृशं जळपानमुपवासदिने सकृत् अन्यदा त्वसकृदित्यर्थः । *मैथुनादिति । अयं पुंश्चलीषु

स्मरणं कीर्त्तनं केळिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥

अशक्तौ तु मदनरत्ने देवलः—

अत्यये चाम्बुपानेन नोपवासः प्रणश्यति।

अत्यये=कष्टे।

विष्णुरहस्ये—

गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्।
व्रतस्थो वर्जयेत्सर्वं यच्चान्यत्र निराकृतम्॥

एषु प्रायश्चित्तमुक्तं निर्णयामृते संग्रहे—

स्तेनाहिंसकयोः सख्यं कृत्वा स्तैन्यं च हिंसनम्।
प्रायश्चित्तं व्रती कुर्याज्जपेन्नामशतत्रयम्॥

---

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।

इत्यष्टाङ्गस्यापि निषेधः, न तु सतीषु। "प्रेक्षणालम्भने मैथुनशङ्कायाम्"इति गौतमेन शङ्कोक्त्या तासु तदभावात्। स्वदारेषु तु क्रियानिर्वृत्तिमात्रस्य।

स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः संकथनादपि।
निपद्यते ब्रह्मचर्यं स्वदारेषु तु संगमात्॥

इति देवलोक्तेः। न दारेष्वृतुसंगमादिति वा पाठः। *अन्यथेति। पुरुषार्थनिषिद्धस्य सर्वस्याप्ययं क्रत्वर्थो निषेधः। यच्चान्यद्रकरागकदिति वा पाठः। स्तैन्यं तुषादेरपि। हिंसनं कीटादेरपि। नाम्नां=विष्णुनाम्नां शतत्रयं न त्वेकमेव नाम शतत्रयवारम्। संख्यायाः पृथक्त्वनिवेशात्।

व्रतलोपो न चेत्कुर्यात्कृष्णावद्भुजिवर्जनम्।

इति। व्रतलोप इति पूर्वान्वयः। तत्र भुजिवर्जनम्=उपवासं न कुर्यात्, किं तु कृष्णावत्=किंचिद्भक्षणमित्यर्थः। अत्र प्रायश्चित्तं—

व्रतलोपो भवेत्कुर्यादष्टाक्षरमनोर्जपम्।

इति पाठे बोध्यम्। संभोगः स्वदारेषु, परदारेषु तु स्मार्तप्रायश्चितेन समुच्चयः। एतत्प्रायश्चित्तं भक्ष्यमांसे। अभक्ष्यमांसभक्षणे-

मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे ।
अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः ॥
प्रणवं पूर्वमुच्चार्य नमो नारायणः पदम् ।
चतुर्थ्यन्तं वदेत्पश्चान्मनुरष्टाक्षरो मतः ॥

तत्रैव पैठीनसिः—

ताम्बूलचर्वणे स्त्रीसंभोगे मांसनिषेवणे ।
व्रतलोपो न चेत्कुर्यात्कृष्णायुग्मजिन्मार्जनम् ॥ इति ।

कृष्णैकादश्यादिव्रोजनानिषेधमात्रपरिपालने तु ताम्बूलचर्वणादावपि न दोष इत्यर्थः। संभोगे ऋतुकालादन्यत्र

*रेतःसेकात्मसंभोगमृतेऽन्यत्र क्षयः स्मृतः ।

इति कात्यायनोक्तेः ।

हेमाद्रौ वसिष्ठः—

*उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम् ।

ऽहिंस्यहिंसने च स्मार्त्तप्रायश्चित्तेन समुच्चयः । *रेत इति । रेतःसेकात्मसंभोग ऋतुकालः । क्षयो=व्रतभ्रंशः । 'रेतःसंक्रमणाद्भोगाद्भोगे' इति पाठे रेतसः संक्रमणं=गर्भकोशे तद्योग्यं गमनं ऋतुकालगमनमेव तदात्मकात् स्त्रीसम्भोगादन्यत्र स्त्रीसम्भोगे इति स एवार्थः । ऋतुगमनाभ्यनुज्ञाऽपि प्रागसन्निहितस्य षोडश्यामेव रात्रौ सन्निहितस्यानन्यगतिकत्वात् श्राद्धे तदनुज्ञावत् । अत्रानुक्तप्रायश्चित्तेषु कायिकेषु ऋतुसंभोगस्य न प्रवेशः । तेन—

जपोऽष्टाक्षरमन्त्रस्य नामशतत्रयस्य वा ।

इति उत्तरार्द्धोक्तं विकल्पितप्रायश्चित्तं कायिकसामान्ये सिध्यति । जपे संख्या त्वष्टशत्येव पूर्वोक्ता । *उपवास इति । अत्र

दशम्यामेकभक्तं तु कुर्वीत नियतेन्द्रियः ।
आचम्य दन्तकाष्ठं तु खादेत तदनन्तरम् ॥
ततश्चानन्तरं विप्रो ब्रह्मचारी जितेन्द्रियः ।

दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥
*काष्ठग्रहणान्मृ*ल्लोष्टाद्यनिषेध इति हेमाद्रिः ।
विष्णुरहस्ये—
श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्र्या शतसंपूतमम्बु प्राश्य विशुध्यति ॥
निर्णयामृते व्यासः—
*वर्जयेत्पारणे मांसं व्रताहेऽप्यौषधं सदा । इति ॥

---

रात्रिं नयेत्ततः पश्चात् प्रातः स्नात्वा समाहितः ।
उपवासं तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत् ॥

इति वाक्येन पूर्वेद्युरेकभक्तानन्तरं काष्ठेन दन्तधावनमुक्तं स्मर्त्तव्यम् । *काष्ठेति । "अक्ताः शर्करा उपदधाति, तेजो वै घृतम्" इत्यादौ विधेरिव निषेधस्यापि विशेषपरत्वे वाक्यशेष एव बीजम् । तथा च न कुर्यात्काष्ठेन दन्तधावनमित्यर्थ इति विशेषनिषेधः शेषाभ्यनुज्ञाफलक इति भावः । *लोष्टादीति । आदिना

अलाभे वा निषेधे वा काष्ठानां दन्तधावने ।
पर्णादिना विशुध्येत जिह्वोल्लेखः सदैव हि ॥

इति पैठीनस्युक्तम् । दन्तपदोपादानात्काष्ठेन जिह्वोल्लेखो दर्शितः

अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥

इति व्यासेन यदुक्तं, तत् मृदादिसहितमसहितं वा द्रष्टव्यम् "तृणपर्णोदकेनाङ्गुल्या वा दन्तान् धावेत् प्रदेशिनीवर्जम्" इति पैठीनस्युक्तेः,

पश्चाद् द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ।
स्मृत्वोङ्कारं च गायत्रीं निबध्नीयाच्छिखां ततः ॥

इति शौनकोक्तेश्च । मांसनिषेवणे इति यदुक्तं, तदुपवासदि[illegible] तल्लक्षणप्रसक्त्यभावात्कथमित्यत्राह—*वर्जयेदिति । पारणदिनमा[illegible]

*एकादश्यां श्राद्धप्राप्तौ माधवीये कात्यायन आह—

उपवासो यदा *नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

---

व्रताहः । "पारणान्तं व्रतं ज्ञेयम्" इत्युक्तेः । तथा च तत्र मांसभक्षणे व्रतलोप इति तदर्थः । औषधरूपं च "अष्टौ तान्यव्रतघ्नानि" इत्यभ्यनुज्ञातमपि मांसं मुख्यव्रताहेऽपि वर्जयेदित्यर्थः । मांसतुल्यानां वसारुधिरादीनां तद्वदेव वर्जनं "बहूनामेकधर्माणाम्" इति न्यायात् । *एकादश्यामिति ।

श्राद्धं कृत्वा तु यो मर्त्यो न भुङ्क्ते पितृसेवितम् ।
हविर्देवा न गृह्णन्ति कव्यानि पितरस्तथा ॥

इति वाक्येन सामान्यतः

व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद् गृही ॥

इत्यादिना विशेषतश्च श्राद्धशेषभोजनं विहितम् । तत्र पुरुषार्थस्योपवासस्य क्रत्वर्थेन श्राद्धशेषभोजनेन बाधः स्यादित्यर्थः । *नित्य इति नैमित्तिकोपलक्षणम् । काम्योपवासे तु शेषभोजनं, तत्स्थानापन्नं तदाघ्राणं वा न कार्यम् । काम्यस्य नित्यबाधकत्वात् । तद्विधिः स्कान्दे—

यस्मिन् दिने पितुः श्राद्धं मातुर्वाऽथ भवेद् गुह ।
तस्मिन्नेव दिने तात भवेदेकादशीव्रतम् ॥
अन्यदाऽपि व्रतं स्कन्द तदा कार्यं तु तच्छृणु ।
तदा कृत्वा तु वै श्राद्धं भुक्तशेषं तु यद्भवेत् ॥
तत्सर्वं दक्षिणे पाणौ गृहीत्वाऽन्नं शिखिध्वज ।
अवजिघ्रेदनेनाथ तेन श्राद्धं शिखिध्वज ॥
पितॄणां तृप्तिदं जातं व्रतभङ्गो न विद्यते । इति ।

एतच्च मुख्योपवासपरम् । कन्दमूलाद्यनुकल्पे तु देयपितृपात्रे तत्परिवेषणेन शेषभक्षणं कार्यम् । सर्वजातीयशेषभोजनं विनाऽपि

*मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदि।
अभ्यर्च्य पितृदेवांश्च आजिघ्रेत्पितृसेवितम्॥ इति।

हेमाद्र्यादिसर्वनिबन्धेष्वप्येवम्। एतेनैकादशीनिमित्तकं श्राद्धं द्वादश्यां कार्यमिति वदन्तः परास्ताः। किंच महालये—

स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति।

इति श्रुतं(१) षोडशत्वं, पौषैकादश्यां च मन्वादिश्राद्धं, क्षयाहापरिज्ञाने च तस्यैकादश्यां विहितं श्राद्धं बाधितमेव स्यात्। यदपि स्मृतिचन्द्रिकास्थं पठन्ति—

अश्नाश्रितानि पापानि तद्भोक्तुर्दातुरेव वा।
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः॥ इति।

तस्यापि(२) रागप्राप्तभुजिगोचरस्य वैधं श्राद्धं गोचरयतां महत्साहसमित्यलम्*। योऽपि—

अकृतश्राद्धनिचया जलपिण्डं विना कृताः।

इति लघुनारदीये एकादश्यां श्राद्धादिनिषेधः स मातापितृभिन्नविषयः। पूर्ववाक्ये तद्ग्रहणात्। यद्वा-

---

श्राद्धवैगुण्यस्याग्रे स्पष्टत्वात्। *मातापित्रोरिति भ्रात्राद्युपलक्षणम्। मातापितृभिन्नेत्यस्य मातापितृभ्रात्रादिभिन्नेत्यर्थः। श्राद्धं नैमित्तिकमित्यस्याऽऽवश्यकमित्यर्थात्।

सूतके मृतके श्राद्धं सूतकान्ते विधीयते।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत्॥

इति तु प्रलाप एवेत्याह—*अलमिति।

---

(१) तस्मिन् पक्षे प्रतिपदारभ्य नवरात्रप्रतिपदन्तं प्रतितिथि श्राद्धस्य विधानादिति भावः।

(२) निषेधस्येत्यर्थः। रात्रिसत्रन्यायेन निन्दाऽर्थवादान्निषेधकल्पनमिति तात्पर्यम्।

श्राद्धनिषयः=श्राद्धे प्रतिग्रहः(१) ॥

अव्रतघ्नान्याह मदनरत्ने देवलः—

*सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम् ।
अव्रतघ्नानि पठ्यन्ते *सकृदेतानि शास्त्रतः ॥

स्कान्देऽपि—

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

*इदं चातिसङ्कटविषयम् । नारदीये-

अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनि ।
मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभे ॥
नत्वेव भोजनं कैश्चिदेकादश्यां बुधैः स्मृतम् ॥ इति ।

अस्यापवादः—

शयने च मदुत्थाने मत्पार्श्वपरिवर्तने ।

---

*सर्वेति । सर्वेभ्यो भूतेभ्यः सकाशाद् व्रतकर्तुर्भयम् । मदनरत्ने तु भूतमयेभ्यः सर्पादिभ्यो भयम् । तेन सर्पादिभयाद् व्रताङ्गवैकल्येऽपि न व्रतहानिरित्युक्तम् । *सकृदिति । असकृत्तु "कामात् क्रोधात्" इत्यादिनोक्तं प्रायश्चित्तम् । *इदं चेति । यथा हेमाद्रौ—

व्रतस्थं व्याधितं दृष्ट्वा मुमूर्षुं च तपोधनम् ।
दृष्ट्वा तु ब्राह्मणस्तस्य कुर्यात् सम्यगनुग्रहम् ॥
अमृतं पायसं क्षीरमिच्छमाने सकृन्निशि ।
यथेह न वियुज्येत प्राणैः क्षुत्पीडितो व्रती ॥
पाययित्वाऽशृतं क्षीरं रक्षेद्दत्वा फलानि च ।
एवं मासोपवासस्थमारूढप्राणसंशयम् ॥

इति मासोपवासव्रतपरं संकष्टविषयं, तद्वत् 'अष्टौ तानि' इति

---

(१) तेन श्राद्धप्रतिग्रहीतुरयं तद्दिने निषेधो न तु श्राद्धकर्तुरिति भावः ।

*नरो मूलफलाहारी हृदि शल्यं समार्पयेत् ॥
इदं चातिसंकष्टविषयम्(१) ।
एते चाविरोधिनो निर्णयाः सर्वव्रतेषु ज्ञेयाः ।
तत्रैकादश्यां *सङ्कल्पः—
गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वा वार्येव धारयेत् ॥
इति माधवीये वाराहोक्तेः ।
मन्त्रस्तु विष्णुः—
एकादश्यां *निराहारः स्थित्वाऽहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ इति ।
शैवादीनां तु हेमाद्रौ सौरपुराणे—
सावित्र्याऽप्यथ वा नाम्ना सङ्कल्पं तु समाचरेत् ।
*शिवादिगायत्र्यो यजुर्वेदे प्रसिद्धाः । वाराहे—

सर्वव्रतपरमपि सङ्कष्टविषयमित्यर्थः । *नरो मूलेति । 'पयोमूल' इति युक्तः पाठः । पयःपदं दध्यादेरुपलक्षणम् । *सङ्कल्प इति । प्रातः सङ्कल्पश्च प्रातः सन्ध्योत्तरं कार्यः ।

प्रातःसन्ध्यां बुधः कृत्वा सङ्कल्पं तत आचरेत् ।

इति वचनात् । सायमादिसङ्कल्पा अपि सायमादिसन्ध्याऽनन्तरमेव ।

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।

इति वचनात् । *निराहार इति । फलाहार इत्याद्यूहो बोध्यः । देशकालौ संकीर्त्य विष्ण्वनुज्ञया एकादशीव्रतमहं करिष्ये इति पठित्वेमं श्लोकं पठेत् । "भोक्ष्यामि"इत्यत्र चाहंपदमनुवर्त्तते अध्याहार्यं वा । सर्वथाऽहंपदाभावे पाणिनिस्मृत्या कथंचित् प्रयोगसम्भवेऽपि क्रतुवैगुण्यात्(२) । *शिवादीति । "तत्पुरुषाय

(१) इयं पङ्क्तिर्मुद्रितपुस्तके नास्ति ।
(२) वस्तुतस्तु अहंपदानुवृत्तेरध्याहारस्य वा नात्रापेक्षा । 'एका-

*इत्युच्चार्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेत् ।
*ततस्तज्जलं पिबेत् ।
अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम् ।
*उपवासफलं प्रेप्सुः पिबेत्पात्रगतं जलम् ॥
इति कात्यायनोक्तेः । मध्यरात्रे उदये वा दशमीविधे रात्रौ सङ्कल्प इति माधवः ।

---

विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्" इति शिवगायत्री । अन्या विस्तरभयान्नोच्यन्ते(१) । श्लोकमन्त्रस्तु तासां सम्भवेऽसम्भवे च । श्लोकमन्त्रासम्भवेऽपि संकल्पो भवत्येव । संकल्पानन्तरकृत्यमाह—*इत्युच्चार्येति । *तत इति । पात्रे हस्ते वा संकल्पवाक्योच्चारणसहितं वारिणो धारणं सङ्कल्पः । तत्र पात्रस्थं जलं पिबेत्, हस्तस्थं तु भूमौ त्यजेत् । *उपवासफलमिति । व्रतसामान्यं

---

दश्यां निराहारः स्थित्वाऽपरेऽहनि अहं भोक्ष्यामि'इत्यन्वयेन गतार्थत्वात् । निराहारस्थितिकर्तृत्वमहमर्थस्य समानकर्तृकतायां विहितक्त्वाप्रत्ययेनैव लब्धमिति चिन्त्यम् ।

(१) ताश्च तैत्तिरीयशाखायां नारायणोपनिषद्युक्ताः—'ॐ पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ १ ॥ ॐतत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥२॥ ॐतत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ ३ ॥ ॐतत्पुरुषाय विद्महे महासेनाय धीमहि । तन्नः षण्मुखः प्रचोदयात् ॥ ४ ॥ ॐनारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ ५ ॥ ॐवज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि । तन्नो नारसिंहः प्रचोदयात् ॥ ६ ॥ ॐभास्कराय विद्महे महद्द्युतिकराय धीमहि । तन्नो आदित्यः प्रचोदयात् ॥ ७ ॥ ॐवैश्वानराय विद्महे लालीलाय धीमहि । तन्नो अग्निः प्रचोदयात् ॥८॥ ॐकात्यायनाय विद्महे कन्याकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥ ९ ॥'इति क्रमेण परमपुरुष—शिव—गणपति—षडानन—विष्णु—नृसिंह—भास्कर—अग्नि—दुर्गाणां ज्ञेयाः ।

*दशम्याः सङ्गदोषेण अर्धरात्रात्परेण तु ।
वर्जयेच्चतुरो यामान्सङ्कल्पार्चनयोः सदा ॥
*विद्धोपवासेऽनश्नंस्तु दिनं त्यक्त्वा समाहितः ।
रात्रौ संपूजयेद्विष्णुं सङ्कल्पं च तदाऽऽचरेत् ॥
इति नारदीयोक्तेः । तत्रैव पूजामभिधाय—
देवस्य पुरतः कुर्याज्जागरं नियतो व्रती ।

---

द्रष्टव्यम् । *दशम्या इति विद्धोपवासे इति च-

प्रातः सम्पूजयेद् विद्वानुपवासव्रतादिकम् ।
इत्यस्यापवादः । पूजाप्रकारश्च ब्राह्मे—
एकादश्यामुभे पक्षे निराहारः समाहितः ।
नानापुष्पैर्मुनिश्रेष्ठ विचित्रं मण्डपं शुभम् ॥
कृत्वेति शेषः ।
स्नात्वा सम्यग्विधानेन सोपवासो जितेन्द्रियः ।
सम्पूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः ॥
पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः ।
उपचारैर्बहुविधैर्जपहोमैः प्रदक्षिणैः ॥
स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यमनोहरैः ।
दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः ॥
एवं सम्पूज्य विधिवद्रात्रौ कृत्वा प्रजागरम् ।
याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः ॥ इति ।
निराहार इति फलाहारादेरुपलक्षणम् ।
सताम्बूलमताम्बूलं सभोजनमभोजनम् ।
साहारं च निराहारं चतुर्विधमुपोषणम् ॥
इत्यनेनैकधर्मिणामेव त्रिभागात् । इयं च पूजा नित्यपूजातः पृथक्, अशक्तावपृथक्कार्या, अत्यशक्तौ नित्यपूजाङ्गानां द्रव्यमन्त्रादीनां लोपः । सोपवासः=कृतोपवाससङ्कल्पः । विशेषो नारदीये—
पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम् ।

द्वादश्यां पयसा स्नाप्य हरिसारूप्यमश्नुते ॥

एतेन द्वादश्यां स्नानोपचारो नेत्यग्रिमं परास्तम् । एकादशी-विशेषपूजा च भविष्ये—

पृथक् जलं पृथक् पुष्पं मासे मासे पृथक् पृथक् ।
मार्गशीर्षे सिते पक्षे हरेरेकादशी प्रिया ॥
जयन्ती नाम विख्याता सर्वपापप्रणाशिनी ।
केशवं स्थापयेद्देवं विशालाक्ष्या समन्वितम् ॥
पूजयेन्मालतीपुष्पैर्नैवेद्यं मोदका मताः ।
नारङ्गेण ददेदर्घ्यं सप्तधान्यं प्रदीयते ॥

मोक्षा एकादशी । शेषं पूर्ववदित्यन्यत्र । अर्घ्यमन्त्रः—

स्मृतो हरसि पापानि सत्यमेतज्जनार्दन ॥
दुःस्वप्नं दुर्मतं चैव मनसा दुर्विचिन्तितम् ।
नारकं च भयं देव भयं दुर्गतिसम्भवम् ॥
भयमेतत् सुरेशान ऐहिकं पारलौकिकम् ।
तेन सत्येन मे नौमि गृहाणार्घ्यं जनार्दन ॥ इति ॥ १ ॥
कृष्णपक्षे च विख्याता विमलैकादशी शुभा ।
न्यसेत् संकर्षणं देवं सहितं च सुनन्दया ॥
पूजयेद्विमलैः पुष्पैः शृणु राजन्नगस्त्यकैः ।
रम्भाफलेन चैवार्घ्यं नैवेद्यं गणकाः स्मृताः ॥
सुवर्णं दीयते दानं द्विजेभ्यो नृपसत्तम ।

अन्यत्र फला एकादशी, पक्वान्नं नैवेद्यम् ॥ २ ॥

पौषस्यैकादशी शुक्ला सा नन्दा नाम भूपते ।

पुत्रदेत्यन्यत्र ।

न्यसेन्नारायणं देवं लक्ष्म्या चैव समन्वितम् ॥
पूजयेत्पद्मपुष्पैश्च दाडिमं चार्घ्यमुत्तमम् ।
चूर्णमुक्तं तु नैवेद्यं रूप्यपात्रं प्रदीयते ॥

चूर्णं=चूर्मा इति गुर्जरभाषा । रूप्यपात्रं घृतपूर्णमिति स-

म्प्रदायः ॥ ३ ॥

कल्याणी कृष्णपक्षे तु न्यसेद्देवं हरिं शुभम् ।

षट्तिलेत्यन्यत्र ।

सहितं श्रीसुप्रियया कह्लारेण प्रपूजयेत् ।

दद्यादर्घ्यं शुभां द्राक्षां नैवेद्यं घृतरं वर ॥

घृतरं=घेवरमिति भाषा, घृतपूरमिति केचित् ।

दानानि दीयते दुग्धं द्विजेभ्यो नृपपुङ्गव ॥ ४ ॥

माघे कामप्रदा चैव शुक्ले माधवदेवता ।

जयाभिधेत्यन्यत्र ।

रुक्मिण्या सहितो देवः पूजयेत्कुन्दकैः शुभैः ॥

कुब्जकैरित्यन्यत्र ।

बीजपूरं दद्यादर्घ्यं नैवेद्यं मण्डकास्तथा ।

द्विजाय तिलधेनोश्च कथितं दानमुत्तमम् ॥

गुडतिलपिष्टयुता धेनुः, तद्युतस्तन्निष्क्रयो वा देय इति संप्रदायः ॥ ५ ॥

एकादशी जया कृष्णे अच्युतं पूजयेत् सुरम् ।

धात्र्या च सहितं देव्या पूजयेत् तुलसीदलैः ॥

सोमालिका च नैवेद्यं जम्बीरेणार्घ्यमुत्तमम् ।

उपानद्दीयते दानं द्विजाय विष्णुवत्सलैः ॥

विजया एकादशी, खर्जूरीफलं नैवेद्यं, पक्वान्नहोम इत्यन्यत्र ॥ ६ ॥

फाल्गुनैकादशी शुक्ला सा धात्री नाम भूपते ।

गोविन्दं पूजयेद्देवं चन्द्रकान्त्या समन्वितम् ॥

पूजयेच्चम्पकैः पुष्पैरक्षोटेनार्घ्यमुत्तमम् ।

कंसारकं च नैवेद्यं तिलपात्रं प्रदीयते ॥ ७ ॥

सौम्या चैकादशी कृष्णे आनिरुद्धं प्रपूजयेत ।

सहितं मित्रविन्दाया कुसुमैर्मुचुकुन्दकैः ॥

अर्घ्यं चैवोन्नती दद्यान्नैवेद्यं शष्कुलीं शुभाम् ।

तिलधेनुः प्रदातव्या द्विजाय कृष्णरूपिणे ॥
खर्जूरी अर्घ्यं, वटकं नैवेद्यमन्यत्र ॥ ८ ॥
चैत्रे च दमना नाम विख्यातैकादशी शुभा ।
विष्णुं संपूजयेद्देवं विशालाक्ष्या समन्वितम् ॥
पूजयेच्चूतपुष्पैश्च चिर्भिटेनार्घ्यमुत्तमम् ।
नैवेद्यं सक्तुकं चैव कर्पूरागुरुचन्दनम् ॥
कामदा एकादशी एलाऽर्घ्यं ऐक्षवो रसो दण्डो वा नैवेद्यम्॥९॥
बहुला कृष्णपक्षे च वासुदेवं सुरं नृप ।
शैठ्यया सहितं देव्या मरुपुष्पैश्च पूजयेत् ॥
अर्घ्यं जातीफलं चैव नैवेद्यं वटकानि च ।
दीयते वस्त्रयुग्मं च द्विजाय विष्णुरूपिणे ॥
वरूथिनी एकादशी, सक्तु नैवेद्यम् ॥ १० ॥
एकादशी नरश्रेष्ठ वैशाखे मधुसूदन ।
मधुसूदनदेवं च माधव्या च समन्वितम् ॥
पूजयेद्दमनैः पुष्पैरर्घ्यं तु पनसं स्मृतम् ।
उपानद्युगलं दानं पायसं शर्करान्वितम् ॥
मोहिनी एकादशी, राजनीकफलार्घ्यं, गुलाबशक्री नैवेद्यं दुग्ध-
दानम् ॥ ११ ॥
सिद्धा चैकादशी कृष्णे प्रद्युम्नं देवमर्चयेत् ।
कालिन्द्या सहितं देव्या अर्घ्यं चूतफलं नृप ॥
नैवेद्यं कथितं दुग्धं गोदानं द्विजसूनवे ।
अपारानमनाम एकादशी, बकुलं पुष्पं, कर्कटी अर्घ्यं छत्रोपानद्दानम् १२॥
ज्येष्ठे त्रिविक्रमा शुक्ले देवं चैव त्रिविक्रमम् ।
पूजयेद्यूथिकापुष्पैः पद्माख्या या तयाऽन्वितम् ॥
करणेन ददेदर्घ्यं नैवेद्यं घृतशालिजम् ।
दानं च दीयते छत्रं द्विजायानन्तरूपिणे ॥
निर्जला एकादशी, दध्योदनं नैवेद्यं, जलघटदानं परमान्न-

माल्यं च ॥ १३ ॥

एकादशी कृष्णपक्षे विख्याता पापनाशिनी ।
नृसिंहं स्थापयेद्देवं क्षेमकान्त्या समन्वितम् ॥
पूजयेद् भृङ्गराजेन अर्घ्यमाम्रफलं स्मृत ।
करम्बकैश्च नैवेद्यं जलधेनुर्द्विजाय च ॥

योगिनी एकादशी, क्षेमंकरी देवी, पक्वान्नं नैवेद्यं, षष्टिकाचन्दनदानम् ॥ १४ ॥

एकादशी शुक्लपक्षे आषाढे सुगतिप्रदा ।
पूजयेद्वामनं देवं देव्या कमलयाऽन्वितम् ॥
नारिकेलं ददेदर्घ्यमपामार्गेण पूजयेत् ।
खण्डमीकां च नैवेद्यं भूमिं छत्रं च दीयते ॥

पद्मा एकादशी, मधुमती देवी, पक्वान्नं नैवेद्यम्, इक्षुदानम् ॥ १५ ॥

एकादशी च विख्याता ह्यसिते चारिनाशिनी ।
युक्तं विजयया देव्या पूजयेत्पुरुषोत्तमम् ॥
सुगन्धैर्बहुलैः पुष्पैरर्घ्यं बिल्वफलं स्मृतम् ।
नैवेद्यं पूपकैः कार्यं नवनीतं प्रदीयते ॥

कामिका एकादशी, मल्लिका पुष्पं, मालपुवा नैवेद्यं, कांस्यपात्रदानं नवनीतदानं मिष्टान्नभोजनम् ॥ १६ ॥

श्रावणस्य सिते पक्षे ललितैकादशी नृप ।
श्रीधरं स्थापयेद्देवं कान्तिमत्या समन्वितम् ॥
पूजयेच्छतपत्रैश्च अर्घ्यं पनसकं वरम् ।
नैवेद्यं पोलिका श्रेष्ठा पुस्तकं दीयतेऽनघ ॥

पुत्रदा एकादशी, पक्वान्नं नैवेद्यं, छत्रताम्बूलदानम् ॥ १७ ॥

धर्मप्रदाभिधा कृष्णेऽधोक्षजं पूजयेत् सुरम् ।
रुक्मिण्या सहितं भूप पुष्पैः पाटलजैर्वरैः ॥
अर्घ्यं पूगीफलं चैव नैवेद्यं पूरिका मता ।
दीयते घृतपात्रं तु विप्राय विष्णुरूपिणे ॥

अजा एकादशी, शेवयाजिलबी नैवेद्यं तिलपिष्टरूप्यपात्रदानम् १८॥

एकादशी भाद्रपदे शुक्ले च हरिवल्लभा ।
स्थापयेच्च हृषीकेशमपराजितया सह ॥
पूजयेत्काशपुष्पैश्च कूष्माण्डेनार्घ्यमुत्तमम् ।
तिलक्षोदं च नैवेद्यं दानं ब्रह्मपुरी मता ॥

कामिका एकादशी, रतिकरी देवी, कुशपुष्पं पुष्पं, खाजा नैवेद्यं, कृतपात्रदानम् ॥ १९ ॥

रौद्रा चैकादशी कृष्णे पूजयेच्च जनार्दनम् ।
देवं सुभगया सार्धं दूर्वाङ्कुरवरैः शुभैः ॥
शिवाफलं ददेदर्घ्यं नैवेद्यं खण्डमण्डकाः ।
विधिवद्दीयते कन्या सजातीयवराय च ॥

इन्दिरा एकादशी, सुप्रभा देवी धात्रीफलार्घ्यं, पक्वान्नं नैवेद्यं गोदानं, सक्तुदानम् ॥ २० ॥

एकादशी विशोका च आश्विने प्रथिता सिता ।
स्थापयेत्पद्मनाभं तु पद्मावत्या समन्वितम् ॥
पूजयेच्च शमीपुष्पैरर्घ्यं मदनजं फलम् ।
शालिपिष्टेन नैवेद्यं शर्करासहितेन वै ॥
दीयन्ते मोदका भूप गुडेन सर्पिषाऽन्विताः ॥

पापाङ्कुशा एकादशी, कमलफलार्घ्यं, कदलीफलं नैवेद्यं, लड्डुदानम् ॥ २१ ॥

एकादशी च विख्याता असिते सुखवर्धिनी ।
कृष्णं संपूजयेद्देवं सुदेव्या सत्यया सह ॥
मुचुकुन्दैर्वरैः पुष्पैरर्घ्यं रम्भाफलं वरम् ।
नैवेद्यं गुडसर्पिर्भ्यां सुवर्णं दीयतेऽनघम् ॥

रमा एकादशी, नागकेसरमुचुकुन्दौ पुष्पम्, अशोकफलार्घ्यं, मुद्गलड्डुकं नैवेद्यं, गुडधेनुदानम् ॥ २२ ॥

एकादशी च विख्याता ज्ञानदा शुक्लकार्त्तिके ।

द्वादश्यां निवेदनमन्त्र उक्तः कात्यायनेन—
*अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।

---

न्यसेद्दामोदरं देवं सहितं राधया वरम् ॥
पूजयेत्कुम्भिकापुष्पैरर्घ्यं तु पद्मिनी फलम् ।
मुद्गचूर्णं तु नैवेद्यं सुखशय्या च दीयते ॥
प्रबोधिनी एकादशी, होमो दीपाश्च कार्याः, घेवरपेढा नैवेद्यं, दाडिमीफलार्घ्यं, गुडधेनुदानम् ॥ २३ ॥
अभया चासिते पक्षे उपेन्द्रं पूजयेत्सुधीः ।
सुगन्धया च सहितं तिलपुष्पैश्च पाण्डव ॥
इक्षुदण्डं ददेदर्घ्यं नैवेद्यं गुणसार्पिषी ।
भूमिदानं च विधिवद्विधिश्च कथितो मया ॥
उत्पत्तिका एकादशी, सत्या देवी, मोदका नैवेद्यम् ॥ २४ ॥
एवं द्वादशवर्षाणि कृत्वा संवत्सरं तु वा ।
पश्चादुद्यापनं कुर्यात् सुव्रती व्रतसिद्धये ॥
कार्त्तिके मार्गशीर्षे वा माघे भीष्मतिथौ तु वा ।
फाल्गुनैकादशी चैत्रे वैशाखे मधुसूदनी ॥
कर्त्तव्यं तत्र वा राजन्नेकादश्यां विसर्जनम् ॥ इति ।
उद्यापनप्रकारोऽन्यत्र बोध्यः । एकादशीव्रतोद्यापनाकरणे दोषो विष्णुरहस्ये—
समादाय विधानेन द्वादशीव्रतमुत्तमम् ।
व्रतभङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् ॥
परिगृह्य व्रतं सम्यगेकादश्यादिकं नरः ।
न समापयते यस्तु तस्य पापीयसी गतिः ॥
व्रतभङ्गे प्रायश्चित्ताद्यनन्तरं,तदभङ्गे च केवलमुद्यापनमित्यर्थः ।

*अज्ञानेति ।

प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥ इति ।
नारदीये—

*ब्राह्मणान् भोजयेच्छक्त्या दद्याद्वै दक्षिणां ततः ।

स्कान्दे—

कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने ।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥

द्वादश्यां च वर्ज्यान्याह बृहस्पतिः-

दिवा निद्रां परान्नं(१) च पुनर्भोजनमैथुने ।

---

प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।

इति पूर्वम् । *ब्राह्मणानिति ।

ततः स्वबन्धुभिः सार्द्धं नारायणपरायणः ।
कृतपञ्चमहायज्ञः स्वयं भुञ्जीत वाग्यतः ॥

इत्युत्तरार्द्धोक्तं पारणं कार्यम् । तत्र वर्ज्यानि ब्रह्माण्डे—

कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामं च प्रवासं च दिवास्वापमथाञ्जनम् ॥
तिलपिष्टं मसूरं च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥

तथा—

कांस्यं मांसं सुरां द्यूतं व्यायामं क्रोधमैथुने ।
हिंसामत्यन्तलौल्यं च तैलं निर्माल्यलङ्घनम् ॥
द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत् ।
द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोदकीम् ॥

उपोदकी=पोई इति महाराष्ट्रप्रसिद्धा ।

कांस्यं मांसं मसूरं च चणकं कोरदूषकाः ॥

---

(१) अत्र-'श्वशुरान्नं गुरोरन्नं मातुलान्नं तथैव च । पितृव्यभ्रातृपुत्राणां परान्नं नैव दोषकृत् ॥' इत्यपि नोपयुज्यते । तस्य व्रतादिभिन्नदिनपरान्नग्रहणविषयत्वात् ।

क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥

हेमाद्रौ ब्रह्माण्डपुराणे—

पुनर्भोजनमध्यायो भार आयासमैथुने ।
उपवासफलं हन्युर्दिवा निद्रा च पञ्चमी ॥

स्कान्दे—

परान्नं कांस्यताम्बूले लोभं वितथभाषणम् ।

वर्जयेदिति शेषः । विष्णुधर्मे—

*असम्भाष्यान्हि संभाष्य तुलस्यतासिकादलम् ।

---

शाकं मधु परान्नं च हन्युरष्टाविमे फलम् ।

*असंभाष्यानिति । असम्भाष्याश्च—

बहिर्ग्रामाऽन्त्यजान् सूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥

इत्यादिनोक्ताः । हारीतोऽपि—“पतितपार्षण्डनास्तिकादिसम्भाषणानृतात्मश्लाघादि उपवासादिषु वर्जयेत्”इति । अस्यापवादः—

स्त्रीषु नर्म विवाहे च वृत्त्यर्थे प्राणसङ्कटे ।
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥

स्त्रीष्वनृतं नर्मेत्याद्यन्वयः । हिंसायां=गोब्राह्मणहिंसायां प्रसक्तायां गोब्राह्मणजीवनार्थे, यद्वा गोब्राह्मणार्थे=तज्जीवनार्थे । हिंसायां=हिंसासामान्ये वा ।

अथ वाऽन्यदेव प्रायश्चित्तं कार्यं शास्त्रान्तरात् । तथा हि—

सम्भाष्यैतान् शुचिपदं चिन्तयेदच्युतं बुधः ।
इदं चोदाहरेत्सम्यक् कृत्वा तत्प्रवणं मनः ॥

शारीरमन्तःकरणोपघातं
वाचश्च विष्णुर्भगवानशेषम् ॥
शमं नयत्वस्तु ममेह शर्म
यायादनन्ते हृदि सन्निविष्टे ॥

अन्तःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः ।
स करोतु ममैतस्मिन् शुचिरेवास्मि सर्वदा ॥
बाह्योपघातानघान् बौद्धांश्च भगवानजः ।
शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः ॥
एतत्संभाष्य जप्तव्यं पाषण्डिभिरुपोषितैः । इति ॥

पाषण्डिभिरिति बहुवचनात्तत्सदृशानां ग्रहः । यद्यपीदं सर्वोपघाते प्रतीयते तथापि संभाषण एव । "एतत्संभाष्य जप्तव्यम्" इत्युपसंहारात् । हारीतः—

चण्डालैः सह संभाष्य द्विजसंभाषणाच्छुचिः ।
गायत्रीं व्याहरेद्वाऽपि इति धर्मो व्यवस्थितः ॥

अनेन सामान्यप्रायश्चित्तेन समुच्चयः । चण्डालादिदर्शने तु विष्णुपुराणे—

तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः ।

इति सूर्यावलोकनं च शुचिपद्पाठोत्तरं कार्यम् ॥

नमः शुचिपदेत्युक्त्वा सूर्यं पश्यते दीक्षितः ।

इति विष्णुधर्मात् । दीक्षितः=कृतनियमः । रात्रिस्पर्शे तु पराशरः—

अस्तं गते यदा सूर्ये चण्डालं पतितं स्त्रियम् ।
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते ॥
जातवेदः सुवर्णं च सोममार्गं तथैव च ।
ब्राह्मणानुगतिश्चैव स्नानं कृत्वा विशुध्यति ॥

रात्रिस्नानीयं तोयमाह देवलः—

दिवाऽऽहृतैर्जलैः स्नानं निशि कुर्यान्निमित्ततः ।
प्रक्षिप्य च सुवर्णं च सान्निधाप्य च पावकम् ॥

सुमन्तुः—

साक्षात् स्पर्शे तु यत्प्रोक्तं तद्वस्त्रान्तरितेऽपि च ।

दिवास्पर्शे तु तत्रैव—

आमलक्याः फलं वाऽपि पारणे प्राश्य शुध्यति ॥

बृहन्नारदीये—

रजस्वलां च चण्डालं महापातकिनं तथा ।

सूतिकां पतितं चैव उच्छिष्टं रजकादिकम् ॥

व्रतादिमध्ये शृणुयाद्यद्येषां ध्वनिमुत्तमम् ।

अष्टोत्तरसहस्रं तु जपेद्वै वेदमातरम्* ॥

एतद्व्रतं सूतकेऽपि कार्यम् ।

सूतके मृतके वापि न त्याज्यं द्वादशीव्रतम् ।

इति विष्णूक्तेः । तत्र त्यक्तं दानादि सूतकान्ते कार्यम् ।

सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् ।

*दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते ॥

इति मात्स्योक्तेः । रजोदर्शनेऽपि कार्यम् ।

---

संस्पर्शे च नरः स्नात्वा शुचिरादित्यदर्शनात् ॥ इति ।

मौनलोपे योगियाज्ञवल्क्यः—

यदि वाग्यमलोपः स्याज्जपादिषु कथं च न ।

'स्नानदानादिकर्मसु' इति वा पाठः ।

व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

इत्यादि । मानसे तु—

मानसे नियमे लुप्ते स्मरेद्विष्णुमनामयम् ॥

इति यमोक्तं द्रष्टव्यम् । एवं व्रताधिकारे—

विहितस्याननुष्ठानमिन्द्रियाणामनुग्रहः ।

निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः ॥

इति सुमन्तूक्तौ,

जपोऽष्टाक्षरमन्त्रस्य नामशतत्रयस्य वा ।

इति प्रायश्चित्तं स्मार्तप्रायश्चित्तेन समुच्चितं बोध्यम् ।

*वेदमाता=गायत्री । *दानमिति । ब्राह्मणभोजनमपि

*एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि ।

इति पुलस्त्योक्तेः । यदा द्वादश्यां श्रवणर्क्षं तदा शुद्धामप्येकादशीं त्यक्त्वा तत्रैवोपवासः कार्यः ।

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणाऽन्विता ।
तयोरेवोपवासश्च त्रयोदश्यां च पारणम् ॥

इति नारदीयोक्तेः । एते च नियमाः काम्यव्रते नियताः* । नित्यव्रते सति संभवे कार्याः ।

शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणम् ।

इति कात्यायनोक्तेः । अशक्तौ तु माधवीये ब्रह्मवैवर्ते–

इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम् ।
विशेषनियमाशक्तोऽहोरात्रं भुजिवर्जितः ॥ इति ॥

अथाष्टौ महाद्वादश्यः । तत्र शुद्धाधिकैकादशीयुता द्वादशी उन्मीलिनीसंज्ञा१। द्वादश्येव शुद्धाधिका वर्धते चेत्सा वञ्जुली२। वासरत्रयस्पर्शिनी त्रिस्पृशा३। अग्रे पर्वणः संपूर्णाधिकत्वे पक्षवर्धिनी४। पुष्यर्क्षयुता जया५। श्रवणयुता विजया६। पुनर्वसुयुता जयन्ती७। रोहिणीयुता पापनाशिनी८ । अत्र *मूलं हेमाद्रौ ज्ञेयम्। *एताः

---

ब्राह्मणनदानत्वात् । *एकादश्यां न भुञ्जीतेति ।

संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम्

इति वचनमपि द्रष्टव्यम् । *नियता इति । "सायमाद्यन्तयोरह्नोः" इत्यादौ "पुनर्भोजनम्" इत्यादौ च फलपदोक्तेः ।

*मूलमिति । ब्रह्मवैवर्ते—

उन्मीलिनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ॥
द्वादश्योऽष्टौ महापुण्याः सर्वपापापहा द्विजाः ।
तिथियोगेन जायन्ते [illegible]स्तथा ॥

नक्षत्रयोगात्प्रबलं पापं प्रशमयन्ति ताः ।
एकादशी तु संपूर्णा वर्द्धते पुनरेव सा ॥
तद्युता द्वादशीत्यर्थः ।
उन्मीलिनी भृगुश्रेष्ठ कथिता पापनाशिनी १ ॥
द्वादश्यामुपवासश्च द्वादश्यामेव पारणम् ।
वञ्जुली नाम सा प्रोक्ता हत्यायुतविनाशिनी ॥ २ ॥
अरुणोदय आद्या स्याद्द्वादशी सकलं दिनम् ।
अन्ते त्रयोदशी प्रातस्त्रिःस्पृशा सा प्रकीर्तिता ॥
आद्या=एकादशी । अरुणोदये=सूर्योदये ।
"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्र्यहस्पृक् तदहोरात्रम्" इति पाद्मेऽहोरात्रे तिथित्रययोगोक्तेः ॥ ३ ॥
कुहू राके यदा वृद्धिं प्रयाते पक्षवर्द्धिनी ।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ॥ ४ ॥
पुष्यश्रवणपुष्याद्यरोहिण्या संयुतास्तथा ।
पुष्याद्यः=पुनर्वसुः ।
उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक् ॥ इति ।
समफला इति आसां काम्यत्वं, न तु नित्यत्वम् ।
न करिष्यन्ति ये लोके द्वादश्योऽष्टौ ममाऽऽज्ञया ।
तेषां यमपुरे वासो यावदाभूतसंप्लवम् ॥
इत्यकरणे दोषस्मरणं त्वनाकरमित्याशयेनाऽऽह—*एता इति । मुक्त्याद्यर्थस्य स्वर्गाद्यर्थत्वं पुराणादौ निरूढमेव । अत्र तिथियुक्तासु न संदेहः । यत्तु—
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ।
इति, तदुपवासद्वयासमर्थं प्रति, श्रवणद्वादशीवत् । नक्षत्रयोगयुक्तासु श्रवणद्वादशी निर्णेष्यते । तादृशीष्वितरद्वादशीषु परेऽह्नि अल्पऋक्षयोगेऽपि तत्प्रयुक्तमुपवासादि कार्यम् । "तिथिनक्षत्रयोर्योगे"इत्याग्रिमवचनात् । यत्तु कश्चिच्छ्रवणरोहिण्योरभिधानं तद-

**पापक्षयमुक्तिकाम उपवसेत्। *एकादशीद्वादश्योरेकत्वे तन्त्रेणोपवासः। *पार्थक्ये तु शक्तस्योपवासद्वयम्।**

---

वयुत्याऽनुवाद इति प्राञ्चः। नव्यास्तु—सूर्योदयादारभ्य द्वितीयसूर्योदयपर्यन्तमस्तमयपर्यन्तं वा श्रवणान्यऋक्षयोगोऽपेक्षितः। उपवासस्याहोरात्रसाध्यत्वेन

प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम्॥

इति संकल्पस्य सूर्योदयानन्तरकालत्वेन—

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
तिथिर्याऽभिमता सा तु कार्या नोपक्रमोज्झिता॥

इति वचनात्॥

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
दिवारात्रिव्रतं यच्च एवमेव तिथौ गतम्॥

इत्यादिवचनेभ्यश्च

कृत्तिकादिभरण्यन्तं तारा वा वारसप्तकम्।
नैते संयोगमात्रेण पुनन्ति सकलां तिथिम्॥

इति शार्ङ्गगीतानिषेधवाक्याच्च श्रवणरोहिणीयोगवदल्पस्यापि ग्राह्यत्वे मानाभावात्"तिथिनक्षत्रयोर्योग"इति श्रवणद्वादशीप्रकरणगतत्वेन सामान्यवचनत्वाभावाच्चेति प्राहुः। *एकादशीति। "द्वादशी त्वेकादशीयुता"इति वक्ष्यति। तत्र खण्डतिथित्वादेकादशीद्वादश्युपवासयोरुपक्रमप्रभृति तन्त्रमित्यर्थः। *पार्थक्ये त्विति। प्रक्रान्तद्वादश्युपवासस्य प्रधानभूतद्वादश्युपवासानुरोधेनैकादश्युपवासाङ्गपारणबाध इत्यर्थः। अनुपक्रान्तद्वादश्युपवासेन तत्र द्वादश्युपवासो नोपक्रमितव्यः। "आपो वाऽशितमनाशितं च"इति श्रुतेरप्प्राशनस्याशितत्वेन पूर्वोपवासस्समाप्तिरनाशितरूपत्वेनोत्तरोपवासाविघात इति, तत्र जलपारणं कृत्वोपक्रान्तोऽनुपक्रान्तो वा द्वादश्युपवासः कार्य इति तु माधवः। अन्यतिथिषूपवासद्वयस्य नैरन्तर्ये-

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।

इति विष्णुरहस्यात् । अशक्तौ तु द्वादश्यामेव ।

एवमेकादशीं *भुक्त्वा द्वादशीं समुपोषयेत् ।

पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयम् ॥

इति तत्रैवोक्तेः । *यदा त्वल्पा द्वादशी तदोक्तं मात्स्ये—

यदा भवति अल्पाऽपि द्वादशी पारणादिने ।

उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदा ॥

नारदीयेऽपि—

अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये* ।

स्नानार्चनक्रियाः कार्या दानहोमादिसंयुताः ॥ इति ।

*संकटे तु माधवीये देवलः—

संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ।

अद्भिस्तु पारणां कुर्यात्पुनर्भुक्तं न दोषकृत् ॥ इति ।

संकटे=*त्रयोदशीश्राद्धप्रदोषादौ* ।

---

ण मात्स्यावरमेव निर्णयः । *भुक्त्वेति फलाहारपरम् । त्यक्त्वेति पाठेऽपि तत्परमेव । एकादशीपारणायां माधवीये स्मृत्यन्तरे—

कलाद्वयं त्रयं वाऽपि द्वादशीं न त्वतिक्रमेत् ।

पारणे मरणे नॄणां तिथिस्तात्कालिकी स्मृता ॥

इति । तत्राऽऽह्निकापकर्षमाह—*यदा त्विति । *अरुणोदये इति तदाधिककालसाध्यत्वावश्यकं सन्ध्यादि संकोचेनापि कार्यम् ।

महाहानिकरी ह्येषा द्वादशी लङ्घिता नरैः ।

करोति धर्महरणमस्नातेव सरस्वती ॥

इति द्वादशीलङ्घने दोषोक्तेः । अस्नातेति स्नातमत्रेत्यधिकरणेऽर्श-आद्यच् । *संकटे=कथं चित्पारणाया असंभवे । *त्रयोदशी-श्राद्धं=मृततिथि-गजच्छाया-वारुण्याद्यलभ्ययोगनिमित्तकम् । प्रदोषादाविति । आदिना स्नानदानादिकमन्यद्वा किञ्चिद्ग्राह्य-

अत्र केचिदाहुः-*'अपकर्षवाक्यानि अनाहिताग्निविषयाणि। अग्निहोत्रादीनां *श्रौतत्वेनापकर्षायोगात्' इति। द्वादश्यां च प्रथमपादमतिक्रम्य पारणं कार्यम्।

---

म्। सकलधार्मिकग्रन्थेषु जलपारणां कृत्वा श्राद्धाद्यनुष्ठानलिखनाच्च तल्लोपो युक्तः, नापि श्राद्धापकर्ष इति भावः। सर्वथा द्वादश्यभावे नारदीये—

त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम्।
शतयज्ञाधिकं वाऽपि नरः प्राप्नोत्यसंशयम्॥

तच्च प्रातरेवेति द्रष्टव्यम्। यत्तु भोजनापकर्षे तत्पूर्वभाविनैसर्गिकनित्यकृत्यमात्रापकर्षः।

क्रमवत्सु च कृत्येषु यद्ययमपकृष्यते।
तदा सर्वापकर्षः स्यादन्यथा क्रमबाधनात्॥

इति कातीयवाक्यादिति मतं, तदसत्। वैश्वदेवादेरत्र संस्कारत्वेन भोजनार्थत्वात् अतथात्वेऽपि वा दर्शपूर्णमाससोमयागवद्वाचनिकपौर्वापर्यस्यैवापकर्षे तदपकर्षो भवतु प्रातरौपासनदेवपूजादेस्तु अतथाभावात्कथं प्रोक्तन्यायादपकर्षः कालपौर्वापर्यकृतस्यार्थिकपौर्वापर्यस्यानुष्ठानानङ्गत्वेनानपकर्षेऽपि तल्लोपनिमित्तमकृतवैगुण्याभावात्, प्रत्युतापकर्षे काललोपेन वैगुण्यापाताच्च। अन्यथा पशूनां सहत्वे अग्नीषोमीयसवनीययोः प्रकृतौ पौर्वापर्येऽपि सवनीयस्यैव प्रथममुपाकरणं आश्विनग्रहग्रहणोत्तरकालानुरोधात् अग्नीषोमी यानुबन्ध्ययोरग्नीषोमीयप्राथम्यं तु कस्याप्यवैगुण्यादिति सिद्धान्तो भज्येत। तस्माद्वाचनिक एवायमपकर्षो वाच्यः। वचनं च 'प्रातर्मध्याह्नकर्तव्ये नित्य एव' इति तत्रैवापकर्षो न सर्वत्र। अत एव 'संकटे विषमे प्राप्ते' इति संकटपदसङ्गतिः। अन्यथा त्रयोदशीश्राद्धादेरप्यपकर्ष्टुं शक्यत्वेनासंकटादिति। *अपकर्षवाक्यानीति। होमादीत्यस्य सारूप्याद्धोमः औपासनहोमवैश्वदेवादिः स्मार्तश्च ग्राह्य इत्यर्थः *श्रौतत्वेनेति। पौराणधर्माणां दौर्बल्यात्।

द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः ।
*तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परैः ॥

इति निर्णयामृते मदनरत्ने च विष्णुधर्मोक्तेः । अत्र केचित्साङ्गिरन्ते—'यदा भूयसी द्वादशी तदाऽपि प्रातर्मुहूर्तत्रयं पारणं कार्यम् ।

सर्वेषामुपवासानां प्रातरेव हि पारणम् ।

इति वचनात्' इति ।

अस्मद्गुरवस्तु—'बहूनां कर्मकालानां विना कारणं बाधापत्तेः प्रागुक्तवचनैश्च अल्पद्वादश्यामेवापकर्षविधानादपराह्ण एव कार्यम् । प्रातःशब्दस्तु—

सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।

इतिवदपराह्णवाचित्वेऽप्युपपन्नः । न च वाक्यवैयर्थ्यं, पुनर्भोजनसायंपारणनिवृत्त्यर्थत्वात्तस्य;—इत्याहुः ।

प्रमादेन एकादश्युपवासातिक्रमे अपरार्के वाराहे—

एकादशी विलुप्ता चेद् द्वादशी परतः स्थिता ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम् ॥ इति ।

कैश्चित्तु विष्णुना चेदिति पठितम् । अत्राविरोधिनो नियमाः सर्वव्रतेषु बोद्धव्याः । अन्ये च नवरात्रे वक्ष्यन्ते इति दिक् ।

## इति श्रीरामकृष्णभट्टात्मजकमलाकरभट्टकृते निर्णयसिन्धौ एकादशीनिर्णयः ।

---

उदितादिहोमिनामिदम् । अनुदितहोमिनां तु उषसि माध्याह्निकापकर्षः ततो होम इति भवति । *तमतिक्रम्येति प्रातः पारणापवादः ।

(१)इति श्रीकृष्णभट्टकृतौ निर्णयसिन्धुव्याख्यायामेकादशी निर्णयः समाप्तः ॥

---

(१) इमे न पङ्क्ती ग्रन्थकारस्य ।

## अथ शुद्धाविद्धादिभेदेन स्मार्तवैष्णवयोः स्फुटज्ञानार्थं श्रीवासुदेवोपाध्यायविरचितो धर्माब्धिस्थोदाहरणसहितश्चैकादशीनिर्णयपट्टो लिख्यते ।

---

श्रीकाशिनाथोपाध्यायैरेकादश्या विनिर्णयः ।
कृतोऽष्टादशभेदात्मा स्मार्तवैष्णवयोः पृथक् ॥ १ ॥
संलक्ष्योदाहृतेः सिद्धिं संशोध्य ग्रन्थपट्टयोः ।
विभाग्यैक्यं च पट्टेऽस्मिन्स यथामति लिख्यते ॥ २ ॥
श्रीरामचन्द्रनामा नामप्रागर्धपृष्ठजिह्वाग्रः ।
स ब्रह्मविद्पिता मे जयतितरामेष जानकीजानिः ॥ ३ ॥
नामस्मृत्या यस्य च विबोधिता धर्मशास्त्रदुर्बोधम् ।
निर्णयमेकादश्या निःसंदिग्धं सुखेन विलिखामि ॥ ४ ॥

अत्र समत्वं सूर्योदयावधिक्षणाव्यवहितपूर्वक्षणान्ततिथिसत्त्वं षष्टिघटिकारूपम् । न्यूनत्वं तु किञ्चिन्न्यूनषष्टिघटिकावधि शुद्धाविद्धाभेदेषु तिथिक्षयवृद्धिभ्यां विलक्षणम् । यथा वैष्णवशुद्धैकादशीप्रथमभेदे दशमी-५५।५९, एकादशी-४९।५९, द्वादशी-४३।५९। एवं परमक्षये पलोनचतुश्चत्वारिंशद्घटीमितं न्यूनत्वम् । एवमेव स्मार्तवैष्णवयोः शुद्धाविद्धाभेदैर्विलक्षणत्वमूह्यम् ।

एते वैष्णवानामेकादश्याः शुद्धाभेदाः ।

अत्रारुणोदयवेधरहिता शुद्धा सा चतुर्विधा सा चोदाहरणेषु प्रदर्श्यते—

| | दशमी घ० | दशमी प० | एकाद. घ० | एकाद. प० | द्वादशी घ० | द्वादशी प० | |
|---|---|---|---|---|---|---|---|
| शुद्धन्यूना न्यूनद्वादशिका । | ५५ | ५९ | ५८ | ० | ५९ | ५९ | इयमनुभयाऽधिक्यवती शुद्धा । अत्र स्मार्तानां वैष्णवानां चैकादश्यामेवोपवासः । भेदः १। |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ५७ | ० | ५८ | ० | |
| शुद्धन्यूना समद्वादशिका । | ५५ | ५९ | ५८ | ० | ६० | ० | इयमप्यनुभयाऽधिक्यवती शुद्धा । अत्रापि स्मार्तानां वैष्णवानां चैकादश्यामेवोपवासः । भेदः २। |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ५७ | ० | ५८ | ० | |
| शुद्धन्यूनाऽधिकद्वादशिका। | ५५ | ५९ | ५८ | ० | ६० | १ | इयं द्वादशीमात्राऽधिक्यवती शुद्धा । अत्र स्मार्तानामेकादश्यां, वैष्णवानां द्वादश्यामेवोपवास इति माधवमतं, सर्वेषां द्वादश्यामेवेति हेमाद्रिमतम् । भे० ३। |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ५८ | ० | ६० | १ | |
| शुद्धसमा न्यूनद्वादशिका । | ५५ | ५९ | ६० | ० | ५९ | ५९ | इयमनुभयाधिक्यवती शुद्धा । अत्र स्मार्तानां वैष्णवानां चैकादश्यामेवोपवासः । |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ५७ | ० | ५८ | ० | इदमुदाहरणं विचार्यम् । भे० ४। |
| शुद्धसमा समद्वादशिका । | ५५ | ५९ | ६० | ० | ६० | ० | इयमप्यनुभयाधिक्यवती शुद्धा । अत्र स्मार्तानां वैष्णवानां चैकादश्यामेवोपवासः । भे० ५। |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ५७ | ० | ५८ | ० | |
| शुद्धसमाऽधिकद्वादशिका। | ५५ | ५९ | ६० | ० | ६० | ० | इयं द्वादशीमात्राधिक्यवती शुद्धा । अत्र स्मार्तानामेकादश्यां, वैष्णवानां द्वादश्यामेवोपवास इति माधवमतं, सर्वेषां द्वादश्यामेवोपवास इति हेमाद्रिमतम् । भे० ६। |
| | | | | | ३ | १ | |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ५८ | ० | ६० | १ | |

| | दशमी घ० | दशमी प० | एकाद. घ० | एकाद. प० | द्वादशी घ० | द्वादशी प० | |
|---|---|---|---|---|---|---|---|
| शुद्धाऽधिका न्यूनद्वादशिका । | ५५ | ५९ | ६० | ० | ५९ | ५८ | इयमेकादशीमात्राधिक्यवती शुद्धा । अत्र स्मार्तगृहस्थानां पूर्वैकादश्यां, यतीनां वैष्णवानां चोत्तरैकादश्यामेवोपवास इति माधवमतं, कामाद्वा अकामाद्वा वैष्णवो द्वयमुपवसेदिति हेमाद्रिमतम् । |
| | | | ० | १ | क्ष | यः | |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ६० | १ | ५८ | ० | इदमुदाहरणं विचार्यम् । भे० ७। |
| शुद्धाऽधिका समद्वादशिका। | ५५ | ५९ | ६० | ० | ५९ | ५९ | इयमप्येकादशीमात्राधिक्यवती शुद्धा । अत्रापि स्मार्तगृहस्थानां पूर्वैकादश्यां, यतीनां वैष्णवानां चावशिष्टैकादश्यामेवोपवास इति माधवमतं, कामाद्वा अकामाद्वा वैष्णवो द्वयमुपवसेदिति हेमाद्रिमतम् भे० ८। |
| | | | ० | १ | क्ष | यः | |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ६० | १ | ५८ | ० | |
| | | | | | क्ष | यः | |
| शुद्धाऽधिकाऽधिकद्वादशिका । | ५५ | ५९ | ६० | १ | ३ | ५५ | इयमुभयाधिक्यवती शुद्धा । अत्र स्मार्तैर्वैष्णवैश्च परैवैकादश्युपोष्यत्युभयमतम् । भे० ९। |
| धर्माब्धिस्थमुदाहरणम् । | ५५ | ० | ६० | १ | ५ | ० | |

इति वैष्णवानां शुद्धैकादशीभेदाः ।

## एते वैष्णवानां विद्धैकादशीभेदाः ।

अत्र विद्धत्वमरुणोदये दशमीसत्त्वम् । अरुणोदयस्तु सूर्योदयात्प्राक् चतुर्घटिकात्मकः ।

| | दशमी घ० | दशमी प० | एकाद० घ० | एकाद० प० | द्वादशी घ० | द्वादशी प० | |
|---|---|---|---|---|---|---|---|
| विद्धन्यूना न्यूनद्वादशिका। धर्माब्धिस्थमुदाहरणम् । | ५६<br>५७ | १<br>० | ५८<br>५८ | ०<br>० | ५९<br>५९ | ५९<br>० | इयमनुभयाधिक्यवती विद्धा । अत्र स्मार्तानामेकादश्यामेवोपवासो वैष्णवानां विद्धत्वात् द्वादश्यामुपवासः । भेदः १। |
| विद्धन्यूना समद्वादशिका धर्माब्धिस्थमुदाहरणम् । | ५६<br>५७ | १<br>० | ५८<br>५८ | ०<br>० | ६०<br>५९ | ०<br>० | इयमप्यनुभयाधिक्यवती विद्धा । अत्रापि स्मार्तानामेकादश्यामेवोपवासो, वैष्णवानां विद्धत्वाद् द्वादश्यामुपवासः । भे० २। |
| विद्धन्यूनाऽधिकद्वादशिका। धर्माब्धिस्थमुदाहरणम् । | ५६<br>५८ | १<br>० | ५८<br>५९ | ०<br>० | ६०<br>१<br>६० | ०<br>१<br>१ | द्वादशीमात्राऽधिक्यवती विद्धेयम् । अत्र स्मार्तैरेकादश्युपोष्या, वैष्णवैर्द्वादश्युपोष्या । हेमाद्रिमते तु सर्वैः द्वादश्येवोपोष्या । भे० ३। |
| विद्धसमा न्यूनद्वादशिका। धर्माब्धिस्थमुदाहरणम् । | ५८<br>५७ | ५९<br>० | ६०<br>५८ | ०<br>० | ५९<br>५९ | ५९<br>० | इयमनुभयाधिक्यवती विद्धा । अत्र स्मार्तानामेकादश्यामेवोपवासो वैष्णवानां विद्धत्वाद् द्वादश्यामुपवासः । भे० ४। |

| | दशमी | | एकाद. | | द्वादशी | | |
|---|---|---|---|---|---|---|---|
| | घ० | प० | घ० | प० | घ० | प० | इयमप्यनुभयाधिक्यवती विद्धा। अत्र स्मार्तानामेकाद- |
| विद्धसमा समद्वादशिका। | ५९ | १ | ६० | ० | ६० | ० | श्यामेवोपवासो वैष्णवानां विद्धत्वाद् द्वादश्यामुप- |
| धर्मान्धिस्थमुदाहरणम्। | ५७ | ० | ५८ | ० | ५९ | ० | वासः। भे० ५। |
| विद्धसमाऽधिकद्वादशिका। | ५७ | १ | ६० | ० | ६० | ० | इयं द्वादशीमात्राऽधिक्यवती विद्धा । अत्र स्मार्तैरेका- |
| | | | | | १ | ० | दश्युपोष्या, वैष्णवैर्द्वादश्युपोष्या । हेमाद्रिमते तु सर्वै- |
| धर्मान्धिस्थमुदाहरणम्। | ५८ | ० | ५९ | ० | ६० | १ | र्द्वादश्येवोपोष्या। भे० ६। |
| विद्धाधिका न्यूनद्वादशिका। | ५९ | १ | ६० | ० | ५९ | ५८ | इयमेकादशीमात्राऽधिक्यवती विद्धा । अत्र स्मार्तैर्गृह- |
| | | | ० | १ | क्ष | यः | स्थैः पूर्वैकादश्युपोष्या, यतिभिर्निष्कामगृहिभिर्वन- |
| धर्मान्धिस्थमुदाहरणम्। | ५८ | ० | ६० | १ | ५८ | ० | स्थैर्विधवाभिर्वैष्णवैश्च परैवोपोष्या । विष्णुप्रीतिकामैः |
| | | | | | क्ष | यः | स्मार्तैरुपवासद्वयं कार्यमिति केचित्। भे० ७। |
| विद्धाधिका समद्वादशिका। | ५९ | १ | ६० | ० | ५९ | ५९ | इयमप्येकादशीमात्राऽधिक्यवती विद्धा। अत्र स्मार्तैर्गृह- |
| | | | ० | १ | क्ष | यः | स्थैः पूर्वैकादश्युपोष्या यतिभिर्निष्कामगृहिभिर्वनस्थै- |
| धर्मान्धिस्थमुदाहरणम्। | ५८ | ० | ६० | १ | ५८ | ० | र्विधवाभिर्वैष्णवैश्च परैवोपोष्या । विष्णुप्रीतिकामैः |
| | | | | | क्ष | यः | स्मार्तैरुपवासद्वयं कार्यमिति केचित्। भे० ८। |
| विद्धाधिकाऽधिकद्वादशि | ५६ | १ | ६० | ० | ५ | ० | इयमुभयाधिक्यवती विद्धा । अत्र सर्वैः स्मार्तैर्वैष्णवै- |
| का | | | १ | ० | | | श्चावशिष्टा परैवैकादश्युपोष्या। भे० ९। |
| धर्मान्धिस्थमुदाहरणम्। | ५८ | ० | ६० | १ | ४ | ० | |

इति वैष्णवानां विद्धैकादशीभेदाः ।

## इमे स्मार्तानां शुद्धैकादशीभेदाः ।

शुद्धत्वं नाम सूर्योदये दशम्यसत्त्वम् । सा चतुर्विधा । सा चोदाहरणैः प्रदर्श्यते ।

| | दशमी | | एकाद. | | द्वादशी | | |
|---|---|---|---|---|---|---|---|
| | घ० | प० | घ० | प० | घ० | प० | |
| शुद्धन्यूना न्यूनद्वादशिका। | ५९ | ५९ | ५९ | ० | ५९ | ० | इयमनुभयाधिक्यवती शुद्धा । अत्र स्मार्तानामेकादश्यामेवोपवासो न द्वादश्यां, वैष्णवानां तु विद्धत्वाद् द्वादश्यामुपवासः । |
| धर्माब्धिस्थमुदाहरणम् । | ५७ | ० | ५८ | ० | ५९ | ० | भे० १ |
| शुद्धन्यूना समद्वादशिका । | ५९ | ५९ | ५९ | ४५ | ६० | ० | इयमप्यनुभयाधिक्यवती शुद्धा । अत्र स्मार्तानामेकादश्यामेवोपवासो न द्वादश्याम् । वैष्णवानां तु विद्धत्वाद् द्वादश्यामुपवासः । |
| धर्माब्धिस्थमुदाहरणम् । | ५७ | ० | ५८ | ० | ५९ | ० | भे० २। |
| शुद्धन्यूनाऽधिकद्वादशिका । | ५९ | ५९ | ५९ | ५९ | ६० | ० | इयं द्वादशीमात्राऽऽधिक्यवती शुद्धा । अत्र शुद्धत्वात् स्मार्तानामेकादश्यामेवोपवासो न द्वादश्यामिति माधवमतम् । हेमाद्रिमते तु सर्वैर्द्वादश्येवोपोष्या । केचित्तु मुमुक्षुभिः स्मार्तैः परोपोष्येत्याहुः । |
| | | | | | १ | ० | |
| धर्माब्धिस्थमुदाहरणम् । | ५८ | ० | ५९ | ० | ६० | ० | |
| | | | | | ० | १ | भे० ३। |
| शुद्धसमा न्यूनद्वादशिका । | ५८ | ५९ | ६० | ० | ५९ | ५९ | इयमनुभयाधिक्यवती शुद्धा । अत्र स्मार्तानामेकादश्यामेवोपवासो न द्वादश्याम् । वैष्णवानां तु विद्धत्वाद् द्वादश्यामेवोपवासः । |
| धर्माब्धिस्थमुदाहरणम् । | ५७ | ० | ५८ | ० | ५९ | ० | भे० ४। |
| शुद्धसमा समद्वादशिका । | ५८ | ५९ | ६० | ० | ६० | ० | इयमप्यनुभयाधिक्यवती शुद्धा । अत्रापि स्मार्तानामेकादश्यामेवोपवासो न द्वादश्याम् । वैष्णवानां तु विद्धत्वाद् द्वादश्यामेवोपवासः । |
| धर्माब्धिस्थमुदाहरणम् । | ५७ | ० | ५८ | ० | ५९ | ० | भे० ५। |

| | दशमी | | एकाद. | | द्वादशी | | |
|---|---|---|---|---|---|---|---|
| | घ० | प० | घ० | प० | घ० | प० | |
| शुद्धसमाऽधिकद्वादशिका । | ५९ | ५९ | ६० | ० | ६० | ० | इयं द्वादशीमात्राऽऽधिक्यवती शुद्धा । अत्र शुद्धत्वात्स्मार्तानामेकादश्यामेवोपवासो न द्वादश्यामिति माधवमतम् । हेमाद्रिमते तु सर्वैः परा द्वादश्येवोपोष्या । केचित्तु मुमुक्षुभिः स्मार्तैः परोपोष्येत्याहुः । भे० ६। |
| | | | | | १ | ० | |
| धर्माब्धिस्थमुदाहरणम् । | ५८ | ० | ५९ | ० | ६० | ० | |
| | | | | | ० | १ | |
| शुद्धाऽधिका न्यूनद्वादशिका । | ५९ | ५९ | ६० | ० | ५८ | ५९ | इयमेकादशीमात्राऽऽधिक्यवती शुद्धा । अत्र स्मार्तैर्गृहिभिः पूर्वैकादश्युपोष्या, यतिभिर्निष्कामगृहिभिर्वनस्थैर्विधवाभिर्वैष्णवैश्च परैवोपोष्या । विष्णुप्रीतिकामैरुपवासद्वयं कार्यमिति केचित् । भे० ७। |
| | | | १ | ० | क्ष | यः | |
| धर्माब्धिस्थमुदाहरणम् । | ५८ | ० | ६० | १ | ५८ | ० | |
| | | | | | क्ष | यः | |
| शुद्धाऽधिका समद्वादशिका । | ५९ | ५९ | ६० | ० | ५९ | ० | इयमप्येकादशीमात्राऽऽधिक्यवती शुद्धा । अत्र स्मार्तैर्गृहिभिः पूर्वैकादश्युपोष्या, यतिभिर्निष्कामगृहिभिर्वनस्थैर्विधवाभिर्वैष्णवैश्च परैवोपोष्या । विष्णुप्रीतिकामैरुपवासद्वयं कार्यमिति केचित् । भे० ८। |
| | | | १ | ० | क्ष | यः | |
| धर्माब्धिस्थमुदाहरणम् । | ५८ | ६० | ६० | १ | ५८ | ० | |
| | | | | | क्ष | यः | |
| शुद्धाधिकाऽधिकद्वादशिका । | ५९ | ५९ | ६० | ० | ३ | ० | इयमुभयाधिक्यवती शुद्धा । अत्र सर्वैः स्मार्तैर्वैष्णवैश्चावशिष्टा परैवैकादश्युपोष्या । भे० ९। |
| | | | १ | ० | | | |
| धर्माब्धिस्थमुदाहरणम् । | ५८ | ० | ६० | ० | ४ | ० | |
| | | | १ | ० | | | |

इति स्मार्तानां शुद्धैकादशीभेदाः ।

अत्र विद्धत्वं सूर्योदये दशमीसत्त्वम् । सूर्योदयस्तु षष्टिघटिकान्त्यक्षणाव्यवहितोत्तरक्षणलवादिकालावच्छिन्नः । इयमपि विद्धा चतुर्विधा, सा चोदाहरणेषु प्रदर्श्यते—

| | दशमी | | एकाद. | | द्वादशी | | |
|---|---|---|---|---|---|---|---|
| | घ० | प० | घ० | प० | घ० | प० | |
| विद्धन्यूना न्यूनद्वादशिका । | २ | ० | ५७ | ५९ | ५७ | ० | इयमनुभयाधिक्यवती विद्धा । अत्र स्मार्तानामेकादश्यामुपवासः । वैष्णवानां द्वादश्यामुपवासः । भेदः १। |
| | | | क्ष | यः | | | |
| धर्माब्धिस्थमुदाहरणम् । | २ | ० | ५६ | ० | ५५ | ० | |
| | | | क्ष | यः | | | |
| विद्धन्यूना समद्वादशिका । | २ | ० | ५७ | ५९ | ६० | ० | इयमप्यनुभयाधिक्यवती विद्धा । अत्रापि स्मार्तानामेकादश्यामुपवासः । वैष्णवानां द्वादश्यामुपवासः । भेदः २। |
| | | | क्ष | यः | | | |
| धर्माब्धिस्थमुदाहरणम् । | २ | ० | ५६ | ० | ५५ | ० | |
| | | | क्ष | यः | | | |
| विद्धन्यूनाधिकद्वादशिका । | १ | ० | ५८ | ५९ | ६० | ० | इयं द्वादशीमात्राधिक्यवती विद्धा । अत्रैकादश्या विद्धत्वाद् द्वादश्यामेव स्मार्तानामप्युपवासः । तत्र किमु वक्तव्यं वैष्णवानामिति । एवं चोभयाधिक्ये द्वादशीमात्राधिक्ये च स्मार्तानां विद्धायास्त्यागो नान्यत्र । भे० ३। |
| | | | | | १ | ० | |
| धर्माब्धिस्थमुदाहरणम् । | १ | ० | ५८ | ० | ६० | ० | |
| | | | | | ० | १ | |
| विद्धसमा न्यूनद्वादशिका । | २ | ० | ५८ | ० | ५८ | ५९ | इयमनुभयाधिक्यवती विद्धा । अत्र स्मार्तानामेकादश्यामुपवासः । वैष्णवानां द्वादश्यामुपवासः । भे० ४। |
| | | | क्ष | यः | | | |
| धर्माब्धिस्थमुदाहरणम् । | २ | ० | ५६ | ० | ५५ | ० | |
| | | | क्ष | यः | | | |

| | दशमी घ० | प० | एकाद. घ० | प० | द्वादशी घ० | प० | |
|---|---|---|---|---|---|---|---|
| विद्धसमा समद्वादशिका । | २ | ० | ५८ | ० | ६० | ० | इयमनुभयाधिक्यवती विद्धा । अत्र स्मार्तानामेकादश्या- |
| | | | क्ष | यः | | | मुपवासः । वैष्णवानां द्वादश्यामुपवासः । |
| धर्माब्धिस्थमुदाहरणम् । | २ | ० | ५६ | ० | ५५ | ० | भे० ५। |
| | | | क्ष | यः | | | |
| विद्धसमाऽधिकद्वादशिका । | २ | ० | ५८ | ० | ६० | ० | इयं द्वादशीमात्राऽऽधिक्यवती विद्धा । अत्रैकादश्या विद्ध- |
| | | | क्ष | यः | १ | ० | त्वाद् द्वादश्यामेव स्मार्तानामप्युपवासः । तत्र किमु वक्तव्यं |
| धर्माब्धिस्थमुदाहरणम् । | १ | ० | ५८ | ० | ६० | ० | वैष्णवानामिति । पूर्ववदत्र स्मार्तानां विद्धायास्त्यागः । |
| | | | क्ष | यः | ० | १ | भे० ६। |
| विद्धाधिका न्यूनद्वादशिका । | ७ | ० | २ | ० | ५५ | ० | इयमेकादशीमात्राऽऽधिक्यवती विद्धा । अत्र स्मार्तैर्गृहिभिः |
| | | | | | क्ष | यः | पूर्वैकादश्युपोष्या, यतिभिर्निष्कामगृहिभिर्वनस्थैर्विधवाभि- |
| धर्माब्धिस्थमुदाहरणम् । | ४ | ० | २ | ० | ५८ | ० | र्वैष्णवैश्च परैवोपोष्या । विष्णुप्रीतिकामैः स्मार्तैरुपवासद्वयं |
| | | | | | क्ष | यः | कार्यमिति केचित् । भे० ७। |
| विद्धाऽधिका समद्वादशिका । | ५ | ० | २ | ० | ५८ | ० | इयमेकादशीमात्राऽऽधिक्यवती विद्धा । अत्र स्मार्तैर्गृहिभिः |
| | | | | | क्ष | यः | पूर्वोपोष्या, यतिभिर्निष्कामगृहिभिर्वनस्थैर्विधवाभिर्वैष्ण- |
| धर्माब्धिस्थमुदाहरणम् । | ४ | ० | २ | ० | ५८ | ० | वैश्च परैवोपोष्या । विष्णुप्रीतिकामैः स्मार्तैरुपवासद्वयं |
| | | | | | क्ष | यः | कार्यमिति केचित् । भे० ८। |
| विद्धाधिकाऽधिकद्वादशिका । | ७ | ० | ४ | ० | ३ | ० | इयमुभयाधिक्यवती विद्धा । अत्र सर्वैः स्मार्तैर्वैष्णवैश्चाव- |
| धर्माब्धिस्थमुदाहरणम् । | २ | ० | ३ | ० | ४ | ० | शिष्टा परैवैकादश्युपोष्या । एतदुदाहरणेऽपि स्मार्तानां वि- |
| | | | | | | | द्धायास्त्यागः । भे० ९। |

इति स्मार्तानां विद्धैकादशीभेदाः ।

द्वादशी तु पूर्वैव *युग्मवाक्यात् —

द्वादशी तु प्रकर्त्तव्या एकादश्या युता प्रभो ।

इति स्कान्दाच्च ॥

त्रयोदशी तु *सर्वमते शुक्ला पूर्वा, कृष्णोत्तरा ।

---

*युग्मेति । रुद्रेण द्वादशीयुक्तेत्यादिः । सर्वकार्यपरमिदम् । उपवासे तु विशिष्यापि ।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

इति गार्ग्येण पूर्वविद्धाविधानात् ।

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ।

इति वासिष्ठेन तत्रोत्तरविद्धानिषेधाच्च । *सर्वमते इति । "एकादश्यष्टमी षष्ठी" इति सामान्यत उत्तरा विहिता । 'द्वितीया पञ्चमी वेधात्' इति निषिद्धा च । एवं च—

षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा ॥

इति निगमवचनात्कृष्णपक्षे परा, शुक्लपक्षत्रयोदशी तु पूर्वा इति । सामान्यविशेषन्यायात् । एवं च—

त्रयोदशी तु कर्त्तव्या द्वादशीसहिता मुने ॥

इति ब्रह्मवैवर्त्ते सामान्यवचनाच्छुक्लत्रयोदश्यामेव प्रवर्तते । या तु पूर्वा सा त्वपराह्णिकी ।

त्रयोदशी तु कर्त्तव्या या भवेदापराह्णिकी ॥

इति स्कान्दात् ।

या शुक्ला मृहने पूर्वा मृहता साऽपराह्णिकी ॥

'त्रयोदशातिथिः पूर्वः सितोऽथाऽसितः *पश्चात्'इति दीपिकोक्तेः।

शुक्ला त्रयोदशी पूर्वा, परा कृष्णा त्रयोदशी।

इति माधवाच्च।

---

इति माधवाच्च। *पश्चादिति। परदिने लाभे तु पूर्वैव "एकादशी तृतीया च"इति वचनात्। "यदि न स्यात्परेऽहनि" इति दर्शनात्। अत्र प्रदोषव्रतं ब्रह्मोत्तरखण्डे—

पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा।
घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेत्॥
शुक्लाम्बरधरो भूत्वा वाग्यतो नियमान्वितः।
कृतसंध्याजपविधिः शिवपूजां समारभेत्॥

इति व्रतमभिधाय

एवमाराधयेद्देवं प्रदोषे गिरिजापतिम्।
ब्राह्मणान् भोजयेत्पश्चाद् दक्षिणाभिश्च तोषयेत्॥

इति दिनेऽनाहारकर्तृकं शिवपूजाप्रधानकं व्रतं स्मर्यते। अत्र प्रदोषव्यापिनी ग्राह्या। तत्रैव पूजाविधानात्। प्रदोषस्त्रिमुहूर्त्तमित्यभिप्रायः। दिनद्वये प्रदोषव्याप्त्यव्याप्तौ वा पूर्वा।

त्रयोदशी तु कर्त्तव्या द्वादशीसहिता मुने।

इति सुमन्तूक्तेरिति मयूखकृतः। दिनद्वये प्रदोषव्याप्तौ तदव्याप्तौ साम्येन तदेकदेशस्पर्शे वा उत्तरा। संकल्पकाले सत्त्वात्। वैषम्येणैकदेशस्पर्शे तदाधिक्यवती ग्राह्येति विवेचनानुसारिणः। अधिकमुक्तं नक्तव्रते। इदं च मन्दवारे कृष्णपक्षेऽतिप्रशस्तम्।

मन्दवारे प्रदोषोऽयं दुर्लभः सर्वदेहिनाम्।
तत्रापि दुर्लभस्तस्मिन् कृष्णपक्षे समागतः॥

इति तत्रैवोक्तेः। आरम्भश्च शनिप्रदोषे कार्यः—

यदा त्रयोदशी शुक्ला मन्दवारेण संयुता।

चतुर्दशी तु सर्वमते *कृष्णा पूर्वा,*शुक्लोत्तरा । *उपवासे तु *द्वयापि परेति मदनरत्ने ।

---

आरभेत्तद् व्रतं तत्र सन्तानफलसिद्धये ॥

इति तत्रैवोक्तेः । पृथकृशानिप्रदोषव्रते तु एतदेवमिति प्रकाशः ।

*कृष्णेति ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ॥
उपवासादिकार्येषु एष धर्मः सनातनः ॥

इत्यापस्तम्बवाक्यात् । *शुक्लेति । "चतुर्दश्या च पूर्णिमा" इति युग्मवाक्यात् ।

सदा कार्या त्रयोदश्या न तु युक्ता चतुर्दशी ।
पौर्णमासीयुता सा स्याच्चतुर्दश्या च पूर्णिमा ॥

इति भविष्याच्च । *उपवासे त्विति । रुद्रोपवासभिन्ने इति शेषः । *द्वयपीति ।

एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इति वासिष्ठात् । रुद्रोपवासे तु पक्षद्वयगताऽप्यापराह्निकी चेत् पूर्वा ।

चतुर्दशी तु कर्त्तव्या त्रयोदश्या युता प्रभो ।
मम भक्तैर्महाबाहो भवेद्या चापराह्निकी ॥
दर्शविद्धा न कर्त्तव्या राकाविद्धा तथा मुने ॥

इति स्कान्दे "मम भक्तैः" इतीश्वरोक्तिलिङ्गेन रुद्रव्रतविषयत्वप्रतीतेः । आपराह्निक्या अलाभे तु परा । "ता उपोष्याः परान्विताः" इति दर्शितवासिष्ठात् । यदि कृष्णा पूर्वा न लभ्यते तदा परा ।

अष्टम्येकादशी षष्ठी कृष्णपक्षे चतुर्दशी ।
अमावास्या तृतीया च कर्तव्या परसंयुता ॥

पौर्णमास्यमावास्ये तु सावित्रीव्रतं विना परे ग्राह्ये।

*भूतविद्धे न कर्तव्ये दर्शपूर्णे कदाचन।

वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

इति ब्रह्मवैवर्तात् । अमायां योगविशेषमाहाऽपरार्के शातातपः—

अमावास्यां भवेद्वारो यदा भूमिसुतस्य वै।

जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत् ॥

अमा वा सोमवारेण रविवारेण सप्तमी।

चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥

तत्रैव व्यासः—

सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्।

गोसहस्रफलं दद्यात्स्नानं चेन्मौनिना कृतम् ॥

हेमाद्रौ बृहन्मनुः—

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः।

यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतम्=आश्लेषा, मस्तको=मृगशिरःप्रथमपाद इत्यन्ये। स च सर्वेषाम् ॥

---

इति ब्रह्मवैवर्तात्। *भूतविद्धे इति । तथा च "चतुर्दश्या च पूर्णिमा" इति युग्मवाक्यम्—

दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम्।

पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

इति पूर्वविद्धाविधानं—

पूर्णिमा परविद्धा च नोपोष्यं तिथिद्वयम् ॥

इति परविद्धानिषेधश्च सावित्रीव्रतविषयः।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।

अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

अथेष्टिकालः । गोभिलः—'पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः' इति । उपवासोऽन्वाधानम् ।

---

इति विष्णुधर्मोत्तरं—

षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे चतुर्दशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥

इति पाद्मं—

नागविद्धा च या षष्ठी सप्तम्या च तथाऽष्टमी ।
दशम्यैकादशी विद्धा त्रयोदश्या चतुर्दशी ॥
भूतविद्धा त्वमावास्या न ग्राह्या मुनिपुङ्गव ।
उत्तरोत्तरविद्धास्ताः कर्तव्याः काठकी श्रुतिः ॥

इति प्राचेतसं च तत्सावित्रीव्रतेतरव्रतविषयमिति भावः । अन्वाधानं यत्र क्रियमाणे यागदेवता यजमानसन्निधौ तिष्ठन्ति तदग्नीध्मादिसंपादनरूपप्रयोगप्रारम्भः । "पूर्वेद्युरग्निं गृह्णाति, उत्तरमहर्यजति"इति, "पूर्वेद्युरिध्माबर्हिः करोति, यज्ञमेवारभ्य गृहीत्वोपवसति"इति श्रुतेः उपवास कृत्वङ्गयमनियमः । इत्थं च "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेत"इति श्रुतिरुपक्रमपरा । अथ वा संधिपार्श्वद्वयवर्तिपर्वप्रतिपत्समुदायलक्षणया कृत्स्नप्रयोगकालविधायिनी । "संधौ यजेत"इत्यादावपि लक्षणैव । अन्यथा संधेर्दुर्लक्ष्यत्वेन तत्र एकस्याप्यनुष्ठातुमशक्यत्वात् "संधिमभितो यजेत" इत्याद्येकवाक्यत्वाच्च । तदुक्तं बौधायनेन—

सूक्ष्मत्वात्संधिकालस्य संधेर्विषय उच्यते ।
सामीप्यं विषयं प्राहुः पूर्वेणाह्ना परेण च ॥ इति ।

तत्राखण्डपर्वाणि पर्वप्रतिपदोरुदयास्तमयस्पृक्त्वे पर्वण एवास्तादूर्ध्वं समाप्तौ वा न कोऽपि विचारः । "त्रीनंशानौपवस्तस्य" [illegible]नकालयोरबाधात् । खण्डपर्वाणि

*तत्र मध्याह्ने तत्पूर्वं वा पर्वप्रतिपत्सन्धौ तद्दिने यागः ।

पूर्वाह्ने वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥

इति लौगाक्षिवचनात् । अत्र च त्रेधा विभागः-

आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः ।
मध्याह्नस्तु तयोः सन्धिर्यदावर्तनमुच्यते ॥

---

तु आह—*तत्रेति । पर्वण आद्यमंशत्रयमन्वाधानस्य कालः । तच्चतुर्थांशसहितं प्रतिपदोंऽशत्रयं प्रातरवच्छिन्नं तु यागस्य ।

त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः ।
द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि ।

इति लौगाक्ष्युक्तेः । न ह्ययं स्वतन्त्रो यागविधिः । वाक्यभेदापत्तेः॥

पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥

इति वचनान्तरवशादंशान्तरे प्रसक्त्यभावाच्च, किं तु पर्वान्त्यचतुर्थांशभिन्नांस्त्रीनिति पर्युदासविधया पूर्वशेषः । एवं प्रतिपदन्त्यचतुर्थांशभिन्नाश्चतुर इत्यर्थः ।

न यष्टव्यं चतुर्थेऽशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ॥

इति कातीयं तु पर्युदाससिद्धार्थानुवादः । 'आद्याः प्रतिपदस्त्रयः' इत्येतावन्मात्रोक्तेः । न चाद्याः प्रतिपदस्त्रय इत्येव पर्युदाससिद्धार्थानुवादः, प्राप्ते कर्मणि पर्वचतुर्थांशप्रतिपदाद्यत्रयांशप्रातःकालरूपानेकार्थविधायकत्वासम्भवादिति वाच्यम् । "अर्द्धमन्तर्वेदि अर्द्धं बहिर्वेदि मिनोति" इति न्यायेन एकस्य सन्धिपार्श्वद्वयवर्तिस्थूलकालविशेषस्य विधानात् । न हि पर्वचतुर्थांशप्रातिपदाद्यभागत्रययोः विशिष्यविधेयत्वम् । तथा सति एकवाक्योपादानात् कालद्वयसमुच्चये सति "सायं च प्रातश्च जुहोति" इति "यदाग्नेयोऽष्टाकपालोऽमावास्यायां

इति मदनरत्ने वचनात् । मध्याह्नादूर्ध्वं सन्धौ *माधवमते परेऽह्नि यागः ।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥

इति लौगाक्षिणोक्तेः । *हेमाद्रिस्त्वपराह्णसन्धावपि* परदिने प्रतिपच्चतुर्थांशे चन्द्रोदये च सति द्वितीयादिष्वत्यन्तक्षये सति पूर्वेद्युर्यागः ।

पर्वणोंऽशो द्वितीये तु यष्टव्यं तु द्विजातिभिः ।
द्वितीयासहितं यस्माद् दूषयन्त्याश्वलायनाः ॥ इति ।

द्वितीये त्विति कैमुतिकन्यायेन तुर्यांशपरम् । तुरीये त्विति शूलपाणौ पाठः स्पष्टार्थ एव । तथा—

भूता पञ्चदशी पूर्णा द्वितीया क्षयगामिनी ।
चतुरिष्टिरमायां स्याद्भूते कव्यादिकी क्रिया ॥

इति बौधायनवचनाच्चेत्यूचिवान् । मदनरत्नेऽपि—

---

पौर्णमास्यां च" इतिवदश्रुतकर्मान्तरत्वापत्तेः । प्रातरिति तु वाक्यभेदेन, पौरुषेयवाक्ये तस्यादोषत्वात् अवच्छेदकं वा प्रातरवच्छिन्न इत्यर्थात् । अधिकमन्यतोऽवगन्तव्यम् । *माधवमते इति । एतन्मतेऽमायां द्वितीया त्रिमुहूर्त्ता चेदित्यादि दर्शयिष्यति । तत्र हेमाद्रिमतं दर्शयति—*हेमाद्रिस्त्विति । *अपराह्णसंधावपीति । "द्वितीया त्रिमुहूर्ता चेत्" इत्यादीन्यावर्त्तनसन्निकृष्टापराह्णेऽमाप्रतिपत्सन्धिपराणीति तन्मतम् । *परदिने इति । अयमर्थः—द्वितीया त्रिमुहूर्त्ता चेदित्यग्रिमवाक्याद् द्वितीयैव यागनिवर्त्तिका न चन्द्रदर्शनं, मेघादिना व्यभिचारात् । "परतः सोमदर्शनात्" इति हेतूक्तितस्तु चन्द्रोदयो लभ्यते । स च प्रतिपदष्टमांशे भवतीति चन्द्रदर्शनयोग्यतारक्षणायात्यन्तक्षयानुधावनम् । *तृतीये त्विति । तृतीयांशस्यापूर्वविधिः । द्वितीये त्विति पाठे तु कैमु-

चतुर्दशी चतुर्यामा अमावास्या न दृश्यते ।
उभयोर्भूते प्रतिपच्चेत्स्यात् * पूर्वां तत्रैव कारयेत् ॥ इति ।

---

तिकन्यायेन तृतीयांशे तात्पर्यम् । द्वितीयायाः क्षीणत्वं क्वोक्तमित्यत्राह—*भूतामिति । भूतस्य पूर्णत्वं नियतं, न पञ्चदश्या इत्याह—*चतुर्दशीति । अमावास्या चतुर्यामा न दृश्यते इत्यन्वयः । *पूर्वामिति अयं च प्रधानकालः । तदनुरोधेन चतुर्दश्यामन्वाधानं कार्यम् । 'भूते कण्व्यादिकी' इत्यादिपदात् । अत्रेदमरुचिबीजं—हेमाद्रिमते प्रातिपद्यापराह्णिकीत्यपराह्णशब्दस्य द्वेधाविभक्तादिनान्त्यदलवाचित्वात्तत्र च सूर्यास्तात्प्राक् त्रिमुहूर्त्ताद्वितीयाप्रवेशेन चन्द्रदर्शने सति पर्वप्रतिपदो रात्रिसन्धावपि परदिने यागनिषेधापत्तिः । न चापराह्णसन्धिशास्त्रेणैव कैमुतिकन्यायेन रात्रिसन्धावपि परदिने यागसिद्धौ "अपराह्णेऽथ वा रात्रौ" इति रात्रिशास्त्रं व्यर्थं स्यादतश्चन्द्रदर्शननिषेधबाधकतयैव रात्रिसन्धिशास्त्रं सार्थकमिति वाच्यम् । अपराह्णशब्देन योगेनाहर्वर्त्यावर्त्तनोत्तरदलाभिधाने कैमुतिकन्यायेन तच्छास्त्रप्रवृत्तेरिति त्रिमुहूर्तशास्त्रं पञ्चधाभक्तदिनचतुर्थभागरूपापराह्णव्यापिद्वितीयाविषयम् । एवं च सोमदर्शनादिति हेतूक्तिः सङ्गच्छते, न तु सायाह्ने त्रिमुहूर्तमात्रसत्त्वे । तत्र चन्द्रदर्शनस्य व्यभिचारात् । एतच्च दिवासन्धावेव प्रवर्त्तते न रात्रिसन्धौ । परेद्युस्तावतः क्षयस्यासम्भवात् । यत्तु तत्रापराह्णो दिनाद्वितीयभाग इति, तन्न । यौगिकपारिभाषिकयोः परिभाषासार्थक्याय पारिभाषिकस्यैव ग्राह्यत्वात् । सन्धिनिर्णये तु द्वेधाविभक्तादिनभागार्थतया पूर्वाह्णापराह्णशब्दौ मध्याह्नशब्दश्च यौगिका एव ।

आवर्तने यदा सन्धिः पर्वप्रातिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥
पर्वप्रातिपदोः सन्धिरर्वागावर्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥

यत्तु माधवः—

यस्तु वाजसनेयी स्यात्तस्य सन्धिदिनात्पुरा ।
*न काप्यन्वाहितिः, किं तु सदा सन्धिदिने हि सा ॥

इत्याह ।

*यच्च कालादर्शेऽप्युक्तम्—
आवर्तनादधः सन्धिर्यद्यन्वाधाय तद्दिने ।
परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः ॥ इति ।

यच्च मदनरत्ने—

मध्यान्दिनात्स्यादहनीह यस्मिन्
प्राक्पर्वणः सन्धिरियं तृतीया* ।
सा खर्विका वाजसनेयिमत्या
तस्यामुपोष्याऽथ परेद्युरिष्टिः ॥ इति ।

एतत्पौर्णमासीपरमिति तत्रैव । *आवर्तनोर्ध्वमर्वागस्ताद्रात्रौ वा समाप्तौ वै मध्याह्नादर्वाक् समाप्तौ तृती-

---

आवर्तनात्परः सन्धिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येष पर्वद्वयविनिर्णयः ॥

इति गोभिलवचने 'अर्वागावर्तनात्' 'आवर्त्तनात्पर' इति शब्दस्वरसात् 'आवर्त्तनात्तु पूर्वाह्न' इति ग्रन्थस्थवाक्यमपि यौगिकार्थानुवादो, न तु परिभाषा । येन तद्बलात्तत्रापराह्णो द्वेधाविभक्तदिनापरभागो भवेत् । तस्माद् दिनसन्धौ परदिने पञ्चधाविभक्तदिनचतुर्थभागरूपसकलापराह्णव्यापिद्वितीयासत्त्वे चतुर्दश्यामन्वाधानं, सन्धिदिने याग इति । 'पर्वणोंऽशे तृतीये तु' इत्यादिवचनत्रयं चात्रानुकूलमेव । *न कापीति । तस्य पर्वद्वयेऽपि चतुर्दश्यामन्वाधानकालत्वबाध इत्यभिमानः । *यच्चेति । चन्द्रदर्शननिषेधबाधापत्तिरित्यभिमानः । तृतीयेति पूरणप्रत्ययसङ्गत्यर्थमाह—*आवर्त्तनोर्ध्वमिति । पौर्णमास्यामेव वाजसनेयिनामेव एतद्वाक्येन

येत्यर्थः। *तत्कर्कभाष्य-देवजानी-श्रीअनन्तभाष्यादि-सकलतच्छाखीयग्रन्थविरोधात् *वृद्धानादराच्चोपेक्ष्यम्।

पौर्णमास्यां विशेषमाह कात्यायनः—

*सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ नरैः॥

अमायां विशेषमाह बौधायनः—

---

पूर्वाह्णसन्धिशास्त्रं सद्यस्कालत्वं चापोद्यते परेद्युः प्रतिपत्तृतीयांशरूपयागकाललाभादिति भावः। माधवादिमतं दूषयति-*तदिति। वाजसनेयिनामपि पौर्णमास्यां तद्याज्ञिकग्रन्थेषु आवर्तनात्प्राक् सन्धौ तद्दिन एव यागोक्तेरिति भावः। कर्कभाष्येत्यादिसकलवाजसनेयियाज्ञिकग्रन्थोपादानं माधवादिवचसां निर्मूलत्वव्यञ्जकम्। समूलत्वेऽप्याह-*वृद्धेति। इदानींतनाचारस्तु अनादेय इति भावः। विवेचनकृतस्तु "मध्यंदिनात्स्यादहनीह यस्मिन्" इति भाष्यार्थसंग्रहवाक्यम् आवर्तनादूर्ध्वमस्तात्पूर्वं समाप्ता पौर्णमासी प्रथमा खार्विका,सूर्यास्तोत्तरं समाप्ता द्वितीया,आवर्तनात्पूर्वं समाप्ता तृतीया। सर्वाऽपि अल्पत्वात् खार्विकेत्युच्यते। अयं च वाजसनेयिनां संधिशास्त्रप्राप्तनिर्णयस्य सद्यस्कालत्वस्य चापवादः। तृतीयखार्विकायां वाजसनेयिभिन्नानां यागः। वाजसनेयिनां तु पूर्वेद्युरन्वाधानं, परेद्युर्यागः। स च परेद्युस्तृतीयांशलाभे, न तु चतुर्थांशलाभे; तस्यापराह्णसंधावेव यागकालत्वात् इति समर्थयन्ते। *संधिश्चेदिति। एतच्च वैकल्पिकम्-

अन्वाहितिश्चास्तरणोपवासौ पूर्वेद्युरेते खलु पौर्णमास्याम्।
आवर्तनात्प्राक् यदि पर्वसंधिः सद्यस्तदा वा क्रियते समस्तम्॥

इति संग्रहवचनादिति विवेचने। सद्यस्तदैवेति पाठाच्च विकल्प इति मयूखाद्याशयः। *परत इति।

द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्दश्यां *परतः सोमदर्शनात् ॥
कात्यायनश्च—
*यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद् द्विजातये॥इति ।
एतच्च *बौधायनवाजसनेयिविषयम् ।
*तैत्तिरीयश्रुतौ तु चन्द्रदर्शनेऽपि याग उक्तः—
'एषा वै सुमनानामेष्टिर्यमद्येजातं पश्चाच्चन्द्रमा

---

अर्वागस्तमयाद् यत्र द्वितीया तु प्रदृश्यते ।
तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥
इति तत्र यागनिषेधात् । द्वितीया च त्रिमुहूर्ता वाक्यान्तरात् । यतो विश्वेदेवाः पराङ्मुखा अतस्तत्र यागं न कुर्वीतेत्यर्थः । तर्हि तत्र क्व याग इत्यत्राह—परत इति । तत्र यागनिषेधादित्यर्थः ।
वसिष्ठः—
आदित्येऽस्तमिते चन्द्रः प्रक्षीण उदियाद्यदि ।
प्रतिपद्यतिपत्तिः स्यात्पञ्चदश्यां यजेत्तदा ॥
अस्तमिते=अस्तमयप्रत्यासन्ने । अतिपत्तिः=अननुष्ठानम् । चन्द्रदर्शनदिने यागकरणे प्रायश्चित्तमाह—*यजनीये इति । वारुणीसोमदर्शनवदहश्चेत् यजनीयं=यागसम्बन्धि मोहाच्चेत् तत्र यजेतेति यावत् । अत्र चेच्छब्दोपजनितं निमित्तत्वं विशेषणं याग एव 'हविरार्तिमाच्छेंत्'इत्यत्र हविश्चेदार्तिप्राप्तिमत् स्यादित्यत्रार्त्तावित्र । एतेन दर्शनस्य चेच्छब्देन न निमित्तत्वमायाति तस्यानिषिद्धत्वात् । निर्निमित्तकस्य व्याहृतिहोमादेर्यागाङ्गतापत्त्या तत्र यागो दुर्वार इत्यपास्तम् । तस्य यागनिमित्तकतया तद्वैगुण्यपरिहारार्थतया यागाङ्गत्वाभावात् । *बौधायनेति । बौधायनवाक्यात् कात्यायनवाक्याच्चेति शेषः । तैत्तिरीयाश्वलायनयोश्चन्द्रदर्शनदिनेऽपि यागं ध्वनयन्नाह—

अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति' इति । *श्रुत्य-न्तरेऽपि—'यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजाम्रि-माँल्लोकानभ्युदेति' इति । इदं बह्वृचापस्तम्बविषयम् । मदनरत्नेऽप्येवम् । *आपस्तम्बभाष्यार्थसङ्ग्रहेऽप्येवम् । *अतः पक्षद्वयस्य स्वस्वसूत्राद्व्यवस्थेति तत्त्वम् । *'वृष-यन्त्याश्वलायनाः' इति तु *पूर्वाह्णसन्धिविषयमिति माधवः ।

---

*तैत्तिरीयेति । *श्रुत्यन्तरे=ऐतरेयब्राह्मणे । *आपस्त-म्बेति । तत्र च कारिकाः ।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते ।
उपोष्या तत्र राका स्यात् सा पूर्णोत्सर्पिलक्षणा ॥
पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्याऽनुमतिस्तत्र सा श्वःपूरितलक्षणा ॥
अपराह्णे क्षपायां वा यदि पर्व समाप्यते ।
उपोष्या तु कुहूस्तत्र यदहर्नेति लक्षणा ॥
पूर्वाह्णे वाऽथ मध्याह्ने पर्वसन्धिर्यदा भवेत् ।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा ॥ इति ।

पौर्णमासीवदेवामावास्यानिर्णयकरणादेतन्मते चन्द्रदर्शनेऽपि अमावास्यायां न निषेध इति ज्ञायते । *अत इति । तैत्तिरीय-ब्राह्मणादेर्विधित्वोपगमाच्चन्द्रदर्शनादिने यागनिषेध आश्वलायनाप-स्तम्बाभिन्नविषय इति भावः । नन्वन्वाधानेऽपि "यदहस्त्वेव चन्द्रमा न दृश्येत काममावास्यां कुर्वीत" इति चन्द्रदर्शनस्य पर्यु-दस्तत्वात्कथं तत्र तदनुष्ठानम् ? । सत्यम् । द्वयोरपि चन्द्रदर्शनरहितं दिनमपेक्षितम् । अखण्डपर्वणि पूर्णायां प्रतिपदि च तत्संभवति । यदा त्वेकस्मिन्नेव दिने चन्द्रादर्शनं तदा द्वयोः स्वकालत्वासम्भवाद-ङ्गगुणविरोधन्यायेन चन्द्रादर्शनादिने यागः, पूर्वस्मिंश्चन्द्रदर्शनादिने

शेषपर्वणीष्टौ विशेषमाह माधवीये गार्ग्यः—

प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः *कर्तव्या यागवित्तमैः ॥
*गृह्याग्नेर्नायं नियम इति मदनपारिजातः । *एवं

---

चान्वाधानं कार्यम् । 'दृश्यमानेऽप्येके''इति गोभिलोक्तेः । "तद्वैके दृष्ट्वोपवसन्ति''इति श्रुतेश्च । एके दृष्ट्वोपवसन्ति तदयुक्तमिति तदर्थः । "एके" इति न पाक्षिकाभिप्रायं, किं तु परदिने यागानुष्ठानाभिप्रायम् । तस्मात् "यदैवैनं न पुरस्तान्न पश्चात्पश्येत्तर्ह्येवोपवसेत्''इति श्रुतिश्च पर्वप्रतिपदोः पूर्णताविषयिकेति ।

नवीनास्तु तैत्तिरीयादिश्रुतिश्चन्द्रदर्शने प्रसक्तो न यागं विधत्ते किं तु स्तौति । स्तुत्या तु न विधिः कल्पयितुं शक्यते । चन्द्रादर्शने यागविधायकप्रत्यक्षश्रुतिविरोधात् । स्तुतिश्च तादृशप्रत्यक्षविधिशेषतयैव अतिप्रशस्तमपि चन्द्रदर्शनादिनं चन्द्रादर्शनदिनाद् हीनमेवेति पयोविधिशेषतया जार्तिलगवेधुकस्तुतिवत् । अस्तु वा विधिः, परं तु रात्रिसन्धौ श्वोभूते चन्द्रदर्शनादिने याग इति तद्विषयक इत्याहुः ।

प्रकृतमनुसरामः—ननु चन्द्रदर्शनेऽपि यागानुष्ठाने ।
द्वितीयासहितं यस्माद् दूषयन्त्याश्वलायनाः ॥

इत्यसङ्गतं स्यादित्यत्राह—*दूषयन्तीति । *पूर्वाह्णेति । आवर्त्तने तत्पूर्वसन्ध्योस्तौ विहाय परेद्युः पूर्वचतुर्थांशे यागे इदमित्यर्थः । न त्वपराण्हसन्धौ परेद्युर्यागे दोष इति भावः । इष्टौ समाप्तायां विशेषं प्रायश्चित्तं—प्रणीय अग्निम् । *कर्त्तव्येति । एतद्द्वयेन ब्राह्मणभोजनादिः कश्चन पदार्थः प्रतिपदि कार्य इति रहस्यमनुसन्धेयम् । ततो माध्यान्हिकाद्युपक्रम इति स्मर्त्तव्यम् । *गृह्याग्नेरिति । इष्टिपदस्वारस्यात् । अत्रैयमरुचिः—

पर्वान्त्यांशः प्रतिपदश्च त्र्योंऽशा यागकाल उक्तः। *क्वचित्प्रतिपत्तुर्यांशेऽपि यागः।

सन्धिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

इति वृद्धशातातपोक्तेः। *एतत् पूर्णिमापरमिति मदनरत्ने। पर्वणि प्रतिपदः क्षयस्य वृद्धेश्चार्धं प्रक्षिप्य संधिर्ज्ञेयः। तदाह माधवः-

वृद्धिः प्रतिपदो याऽस्ति तदर्धं पर्वणि क्षिपेत्।

---

पक्षादावेव कुर्वीत सदा पक्षादिकं चरुम्।
पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः ॥

इति परिशिष्टे पक्षादिप्रतीक्षाविरोधात्। विद्धे=दर्शविद्धे। *एवमित्यादि। एतेनैतदुक्तं भवति-पूर्णिमाऽमावास्ययोर्मध्याह्ने तत्पूर्वं वा सन्धौ सन्धिशास्त्रमेव निर्णायकं, दिनद्वये प्रातर्नियमविषययागकालसत्त्वेन तच्छास्त्रस्यौदासीन्यात्। एवमावर्त्तनविप्रकृष्टापराह्णसन्धावपि तदेव निर्णायकम्। द्वितीयदिनेऽपि प्रातर्नियमविषयप्रतिपत्तृतीयांशरूपयागकालसत्त्वेन तच्छास्त्रस्यौदासीन्यादिति। नन्वेवमावर्त्तनसन्निकृष्टापराह्णसन्धौ परेद्युर्वृद्ध्यभावेन न प्रतिपत्तृतीयांशः किं तु तच्चतुर्थांशस्तत्र कथं सन्धिशास्त्रं प्रवर्त्तेत ?। परेद्युर्नियमविषयप्रातःकालाभावात्,

न यष्टव्यं चतुर्थांशे यागैः प्रतिपदि क्वचित्।

इति निषेधाच्च। न च तत्र पूर्वेद्युरेवास्तु यागः तस्य नियमविषयत्वाद् दर्शितनिषेधागोचरत्वाच्चेति वाच्यम्। संधिशास्त्रविरोधात्; इत्यत्राह-*क्वचिदिति। न यष्टव्यमिति न निषेधो विकल्पापत्तेः। किं तु "अयाज्ञिया वै माषाश्चणकावरकाः कोद्रवाः"इति प्रतिनिधिवर्जनवद् "द्वावंशावुत्सृजेदन्त्यौ"इत्युक्तपर्युदासानुवादः। नन्वेवं यत्र परदिने चन्द्रदर्शनं तत्र परादिने यागापत्तिः

क्षयस्यार्धं तथा क्षिप्त्वा संधिर्निर्णीयतां सदा ॥ इति ।
कात्यायनोऽपि—

*परेऽह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च याः ।
तदर्धक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् ॥ इति ।

एवं स्मार्तस्थालीपाकेऽपि ज्ञेयम् । तत्रेष्टिस्थालीपाकाधानगृहप्रवेशनीयहोमानन्तरभाविन्यां पौर्णमास्यां प्रारम्भणीयौ न तु दर्शे । यद्यारम्भे मलमासपौषमासगुरुशुक्रास्तादि भवति तदाप्यारम्भः कार्यः ।
यानि तु—

उपरागोऽधिमासश्च यदि प्रथमपर्वणि ।
तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते ॥
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा ॥

इति संग्रहवचनानि, तानि आलस्यादिनाऽतिक्रान्तशुद्धकालप्रारम्भविषयाणि ।

---

न दुष्यतीत्युक्तेरत आह—*एतदिति । अपराह्णसंधौ वृद्ध्यादिना परादिने चन्द्रदर्शनासत्त्वे तु अमायामपि प्रतिपच्चतुर्थांशे याग इति स्मर्तव्यम् । *परेऽह्नीति । विवृतं चैतत् "वृद्धिः प्रतिपदो याऽस्ति" इति माधवेन । यत्र चतुर्दशी दशदण्डा, पर्व पञ्चदशदण्डं, प्रतिपत्तु एकोनविंशतिदण्डा, तत्र प्रतिपद्वृद्धेरर्द्धं दण्डद्वयं पर्वणि क्षिपेत् । ततश्च सप्तदशदण्डा संधिः । एवं यत्र चतुर्दशी पञ्चविंशतिदण्डा, पर्व एकोनविंशतिदण्डं, प्रतिपच्चतुर्दशदण्डा तत्र प्रतिपद्ध्रासार्धं सार्धदण्डद्वयं पर्वणि क्षिपेदित्यर्थः । अत्र लौगाक्षिः—

तिथेः परस्ताद् घटिकास्तु या स्यु-
र्न्यूनास्तथैवाभ्यधिकास्तु तासाम् ।
अर्द्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत् ॥

नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे ॥

इत्यपरार्के गर्गवचनादिति प्रयोगपारिजाते । उक्तं चैतत् प्रयोगरत्ने भट्टैः । कालादर्शे तु-'नामकर्म च जातेष्टिम्' इति पाठः ।

*याज्ञिकास्तु—

आधानानन्तरा पौर्णमासी चेन्मलमासगा ।
तस्यामारम्भणीयादीन्न कुर्वीत कदाचन ॥

इति त्रिकाण्डमण्डनवचनाच्छुद्धकाल एव विभ्रष्टेष्टिं कृत्वाऽऽरम्भं कुर्यादित्याहुः । कालादर्शे स्मृतिसंग्रहेऽपि—

आरम्भं दर्शपूर्णेष्ट्योरग्निहोत्रस्य चादिमम् ।
प्रतिष्ठाः पञ्च कूर्माद्या मलमासे विवर्जयेत् ॥ इति ।

---

अत्र चतुर्दशीतो यावत्यः पर्वघटिकाः प्रतिपदस्ततो न्यूनत्वे आधिक्ये वा ह्रासवृद्धी इति रीत्या ते अवधिसापेक्षे, न तु निरपेक्षे । घटिकान्यूनाधिकभावे ह्रासवृद्ध्योरसंभवात् । तथा च प्रथमोदाहरणे ह्रासो, द्वितीयोदाहरणे तु वृद्धिरिति । यत्तु—

षोडशेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि ।
चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि ।

इति आपस्तम्बवाक्यं,तन्न प्रधानयागपरम् । पूर्वेष्टिदिनमारभ्य गणनायां वृद्धौ कदाचित् सप्तदशे दिनेऽपि यागस्य प्राप्तेस्तत्र तन्निषेधानौचित्यात् । अधिकमन्यतोऽवगन्तव्यम् । *याज्ञिकास्त्वित्यरुचिः—पुरुषापराधकृतविहितकालातिक्रमरूपनिमित्ताभावेन विभ्रष्टेष्टेरनौचित्यात् । यदीत्यादिविधेयकालगतमेकत्वं विवक्षितम् । तेनैकस्यां पौर्णमास्यामेकस्याममावास्यायां वा साङ्गप्रयोगसिद्धेः सद्यस्कालीनत्वं लभ्यते । वाशब्दोपादानात् । पौर्णमासीकालीनोपांशुयाजाग्नीषोमीयविकाराणां पौर्णमास्यामेवावामा-

अथ विकृतीष्टिः । तत्रापस्तम्बः—'यदीष्ट्या यदि पशुना यदि सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां च' इति । *अत्र प्रकृतितः काले सिद्धेऽपि सद्यस्कालता विधेया । तृतीयया साङ्गत्वेनोक्तेः । अत्र पौर्णमास्यमावास्याशब्दाभ्यां तदन्त्यक्षणो गृह्यते । तत्तद्वत्यहोरात्र इत्यर्थमाह रामाण्डारः । माधवोऽपि—

इष्ट्यादिविकृतिः सर्वा पर्वण्येवेति निर्णयः । इति ।

अत्र विशेषमाह त्रिकाण्डमण्डनः, कात्यायनश्च—

आवर्तनात्प्राग्यदि पर्वसन्धिः
कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः ।
तदैव यागः, परतो यदि स्यात्
*तस्मिन्विकृत्याः प्रकृतेः परेद्युः ॥ इति ।

धूर्तस्वाम्यादयोऽप्येवमाहुः । *'यदीष्ट्या' इति साङ्गाया विकृतेः पर्वकालत्वादा*वर्तनात् प्राक् सन्धौ 'स-

---

वास्याकालीनसान्नाय्यादिविकाराणां चामावास्यायामेवेति नाव्यवस्थाप्रसङ्गः । न च वाक्यभेदः इष्टिपशुसोमेष्वनुगतस्य यागस्योद्देश्यतावच्छेदकत्वात् पौर्णमास्यमावास्ययोरनुगतस्य पर्वत्वस्य विधेयतावच्छेदकत्वात् । *अत्रेति । तथा च पर्वान्त्यक्षणवदहोरात्र इत्यर्थात् 'आवर्त्तनात् प्राक्' इति वचनमनावश्यकमित्यभिमानः । वस्तुतस्तु पौर्णमास्यमावास्याशब्दयोस्तिथिवाचिनोर्न लक्षणा युक्ता । 'न विधौ परः शब्दार्थः' इति न्यायात् । *तस्मिन्निति । प्रातःकालस्यातिदेशात् प्राप्तेस्तत्र विकृतिः, ततः प्रकृतेरुपक्रमः, तस्यां चाङ्गत्वात्प्रातःकालबाधः । आवर्त्तनादितिवाक्यस्य याज्ञिकसंप्रदायेनार्थं सूचयित्वा मीमांसकसंप्रदायेनार्थमाह—*यदीष्ट्येति । *आवर्त्तनात्प्राक् सन्धाविति । अयं भावः- आवर्तनात्प्राक् सन्धेः प्रकृत्यधिकरणतया पर्वणो विकृत्यधिकर-

न्धिमभितो यजेत'इति*प्रकृतेः प्रतिपदि समाप्तिनियमात्। प्रकृत्यनन्तरं प्रतिपदि विकृत्ययोगात् पूर्वेद्युर्विकृतिरित्युक्तं तन्त्ररत्ने पार्थसारथिना। यद्यपि *'प्रकृतेः पूर्वत्वादपूर्वमन्ते स्यात्'इत्यापस्तम्बेनोक्तम्,

---

णत्वश्रुतेः,

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।

इति स्मृतेश्च प्रकृतिविकृतिपर्याप्तपर्वसत्त्वेन तद्दिन एवोभयोः कर्त्तव्यत्वसिद्धौ क्रमाकाङ्क्षायां पूर्वार्द्धेन क्रमो विधीयते, न त्वेतत्प्रयोगद्वयाव्यापिपर्वसत्त्वे प्रवर्त्तते; श्रुतपर्वाधिकरणत्वबाधापत्तेः। किं तु तत्रावर्तनप्राक्सन्धावपि पूर्वदिन एव विकृतिः,सन्धिदिने तु प्रकृतिमात्रमिति। *प्रकृतेरिति। न च प्रयोगद्वयाव्यापिपर्वण्यपि "कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः" इति प्रकृतिसमाप्त्यनन्तरं विकृतेः कर्त्तव्यत्वावगमात् प्रतिपदधिकरणकप्रकृत्यन्त्यपदार्थोत्तरं विकृतिरस्तु, न तु ततः प्रागिति वाच्यम्। श्रुतपर्वाधिकरणत्वबाधापत्तेः। तदुक्तं-'प्रतिपदि विकृत्ययोगात्'इति। वस्तुतस्त्वन्त्यपदार्थव्यतिरिक्ताया एव प्रकृतेः पर्वाधिकरणकत्वेन विकृत्येककालत्वात्तादृश्या एव क्रमविधिराकाङ्क्षितः। न च प्रकृतेः प्रतिपदि समाप्तिनियमात्तन्मध्ये कथं विकृतिः?, 'न कर्मणि कर्मारम्भः'इत्युक्तेरिति वाच्यम्। न हि न कर्मणीत्यत्र श्रुतिर्मूलं, किं तु प्रयोगप्राशुभावभङ्गप्रसङ्गः। स चात्र प्रतिपत्प्रतीक्षया विकृत्यननुष्ठानेऽप्यावश्यकः। अन्यथा दर्शस्य पौर्णमासस्य वा प्रयोगस्य मध्येऽग्निहोत्रस्यानुष्ठानं न स्यात्, न स्याच्चान्ततः पर्वद्वयसाध्यतन्महाप्रयोगमध्ये काम्यादीनामन्येषामपि कर्मणाम्। तस्मात्प्रयोगद्वयव्यापिपर्वाणि तादृशप्रकृतिविकृत्योरेवायं क्रमविधिर्नान्यत्रेति भावः। *प्रकृतेरिति। तथा चावर्त्तनपूर्वसन्धावपि प्रकृत्यनन्तरं वि-

तथाऽपि हेतुवादेन श्रुतिमूलत्वाभावादङ्गं* वा सम-
भिव्याहारादिति तदप्रामाण्यमिति तदाशयः । आग्र-
यणे तु विशेषं वक्ष्यामः । 'अन्वारम्भणीया तु चतुर्दश्यां
कार्या' इति हिरण्यकेशिवृत्तौ मातृदत्तीये । *अन्येषां
पर्वण्येव ।

पशौ सोमे च कालान्तरमप्याह बौधायनः—'अ-
मावास्येन वा हविषेष्ट्वा नक्षत्रे वा' इति । शुक्लपक्षे कृत्ति-
कादिविशाखान्तेषु देवनक्षत्रेष्विति केशवस्वामि
व्याचख्यौ । चातुर्मास्येष्वपि *द्वादशाहयथाप्रयोगपक्ष-
योर्नक्षत्रेष्वप्यारम्भः । यावज्जीवसांवत्सरप्रयोगयोस्तु
फाल्गुन्यां चैत्र्यां वाऽऽरम्भः । पशौ तु विशेषमाह-
कात्यायनः—

अर्धादह्नो भवति नियतं पर्वसन्धिः परस्तात्
कृत्वा तस्मिन्नहनि तु पशुं सद्य एव द्व्यहं वा ।

---

कृत्यनुष्ठानमित्यभिमानः । *अङ्गं वेति । "पितृयज्ञः स्वकालविधा-
नादनङ्गं स्यात्" (जै० सू० ४ । ४ । १९) इति सिद्धान्तसूत्रात् ।
*अन्येषामिति । नित्यक्रत्वर्थत्वेन प्रधानपरतन्त्रत्वात् । तदवि-
रोधेन पर्वापेक्षणात् । गृहदाहेष्ट्यादीनां तु निमित्तानन्तरमनुष्ठाने च
न पर्वापेक्षा । तदसम्भवे तु जातेष्टिवत् । जातेष्टिश्च शेषविरोधेन नि-
मित्तानन्तरमसम्भवादुचितकालप्रतीक्षायां पितुर्मातुश्च दशत्रिंश-
तिरात्रातिक्रमे पर्वणि अनुष्ठेया । हविर्दोषादिनिमित्तकक्रत्वर्थे-
ष्टयस्तु स्विष्टकृदनन्तरं समिष्टयजुषः प्राङ् निमित्तस्मृतौ तन्त्र-
मुपजीव्य निर्वापप्रभृति तदानीमेव, समिष्टयजुषोऽनन्तरं स्मरणे
तु तत्प्रयोगं समाप्येति । *द्वादशाहेति । आद्येऽह्नि वैश्वदेवं
पर्व, चतुर्थे वरुणप्रघासम्, अष्टमनवमयोः साकमेधं, द्वादशे शुना-

आरभ्याऽथ प्रकृतिरथ चेत्पर्वसन्धिः पुरस्तात्
कृत्वा तस्मिन् प्रकृतिमथ तु स्यात्पशुः सद्य एव ॥

'अधिकारपशुस्त्वग्नीषोमीयेण सवनीयेन वा समानतन्त्रः कार्यः' इति त्रिकाण्डमण्डनः ।

सोमे त्वाहाऽऽपस्तम्बः-'अमावास्यायां दीक्षायजनीये वाऽमावास्यायां *यजनीये वा सुत्यमहः, पौर्णमास्यां दीक्षायजनीये वा पौर्णमास्यां यजनीये वा सुत्यमहः'इति । लाट्यायनसूत्रेऽपि-'पूर्वपक्षस्य प्रथमेऽहनि दीक्षेत दृष्ट्वा वा नक्षत्रयोगम्(१)'इति । पूर्वपक्षः=शुक्लपक्षः । नक्षत्रयोगे चेति । अयमर्थः-चैत्र्यादिपूर्णिमायाश्चित्रादिनक्षत्रयोगे दीक्षेतेति । आधानं तु पर्वणि नक्षत्रेषु चोक्तम् । तत्र पर्व 'नक्तं गार्हपत्यमादधाति'इत्यादिकर्मकालव्यापि ग्राह्यम् । दिनद्वये तत्त्वे परं ग्राह्यम् । सङ्कल्पस्य पर्वणि लाभात् । पूर्वनक्षत्रयोगे तदेव ग्राह्यम् । 'यत्र त्रीणि सन्निपतितान्यृतुर्नक्षत्रं

सीरीयमित्येकः पक्षः । क्रमेण पर्वचतुष्टयमिति द्वितीयः । फाल्गुन्यां पौर्णमास्यामारभ्य चतुर्षु मासेषु क्रमेणैकैकं पर्वेत्येवं यावज्जीवमिति तृतीयः । एकवर्षं तथा कृत्वा सवनेष्टिपशुसोमान्यतमेन यजेदिति तुरीयः । एकाहचातुर्मास्यप्रयोगोऽपि शाङ्खायनेनोक्तः-'अपि वाऽप्येकपर्वणि'इति । *यजनीये वेति । यदीष्ट्येत्यादिवाक्यगतामावास्यादिपदस्य संधिमदहोरात्रवाचित्वमिति याज्ञिकमते आवर्त्तनतत्पूर्वसंध्योस्तत्रैव । तथा च त्रिकाण्डमण्डनः—

खण्डपर्वणि सोमश्चेत्प्रतिपन्मिश्रपर्वणि ।
सोमसुत्या प्रयोक्तव्येत्याह कौषीतकी श्रुतिः ॥ इति ।

मीमांसकमते तु पूर्वेद्युः तिथेरेवाङ्गत्वेन विधानात्तस्याश्च प्रोक्त-

(१) मुम्बापुरीस्थमुद्रितपुस्तके 'नक्षत्रयोगे च' इति पाठः ।

पर्व च, तत्समृद्धं. विप्रतिषेधे ऋतुर्नक्षत्रं च बलीयः' इति हिरण्यकेशिसूत्रात् । ऋतुः 'वसन्ते ब्राह्मणोऽग्नीमादधीत' इत्यादिः । रेणुककारिकायां तु—

माघादिपञ्चमासेषु श्रावणे चाश्विने तथा ।
मार्गशीर्षे शुक्लपक्षे आधानमथ कारयेत् ॥

इत्युक्तम् । अत्र मूलं मृग्यम् । आधाननक्षत्राणि त्वापस्तम्बसूत्रे 'कृत्तिका-रोहिणी-मृगशीर्ष-पुनर्वसु-पूर्वोत्तरा फाल्गुनी-हस्त-चित्रा-विशाखा-ऽनुराधा-श्रवणो-त्तराभाद्रपदा' इति । सोमपूर्वाधाने विशेषमाहाऽऽपस्तम्बः—'सोमेन यक्ष्यमाण आदधानो नर्तून्सूर्क्षेन्न नक्षत्रम्' इति । अत्र प्रकरणादा*धानकालबाधः । *तेन सोमस्य वसन्तकालता न बाध्यते' इति रुद्रदत्तवृत्तौ नारायणवृत्तौ चोक्तम् । *तन्त्ररत्ने वार्तिके च-'ते वा एते उभये अपहतपाप्मानो ऋतवः । एष वा उद्यन्नादित्य एषां पाप्मनोऽपहन्ता । यदैवैनं कदाचन यज्ञ उपनमेदथादधीत' इत्यत्रोत्तरायणरूपं दैवं, दक्षिणायनरूपं च पित्र्यमित्युभयमृतुत्रयं सोमाधाने शतपथे विशिष्य विहितम् । तदेकवाक्यतया शाखान्तरेऽपि 'नर्तून् सूर्क्षेत'इत्यत्र सोमकालबाध एव । आधानकालबाध-

---

संधिपूर्वेद्युरेव भूयः प्रयोगैकदेशव्याप्तेरिति । *आधानकालः=पर्वनक्षत्रादिः । ननु ऋतुनियमो रुद्रदत्तादिभिराश्रित इत्यत्राह—*तेनेति । मीमांसकानामपि ऋतवनियमः सम्मत इत्याह—*तन्त्ररत्ने चेति । तत्र हि 'ते वा एते अपहतपाप्मान ऋतवः । एष वा उद्यन्नादित्य एषां पाप्मनोऽपहन्ता, यदैवैनं कदाचन यज्ञ उपनमेदथादधीत'इति शतपथे उत्तरायणरूपं दैवं, दक्षिणायनरूपं पित्र्यमित्युभयमृतुत्रयमपहतपाप्मत्वं परीक्ष्याङ्गतया सोमाधाने विहितम् । तदेकवाक्यतया शाखा-

**स्य 'यदैवैनं श्रद्धोपनमेत्तदादधीत' इति तस्यां शाखायां वाक्यान्तरेण सिद्धत्वात्सोमकालबाधार्थमेवेदमित्युक्तम्। धूर्तस्वामी तु सोमस्यापि य ऋतुस्तस्यापि 'न सूर्क्षेत्'इति लिखनादुभयकालबाधं मन्यते। श्रीरामाण्डारस्तु काला-**

---

न्तरेऽपि 'न ऋतून् सूर्क्षेत्'इत्यादौ सोमकालबाधः। 'यदैवैनं श्रद्धोपनमेदथादधीत'इति तच्छाखास्थवाक्यान्तरेणाधानकालबाधस्य सिद्धत्वादेतस्य सोमकालबाधार्थत्वमिति। दिगर्थस्तु उदगयनादेः प्राशस्त्यमात्रम्। न चाग्निहोत्रं दर्शपूर्णमासावप्युत्तरायणे

उपक्रम्य यथाकालमुपासीरन् द्विजातयः।
सोमं च पशुबन्धं च सर्वाश्च विकृतीरपि॥
सौम्यायने यथाकालं विदध्युर्गृहमेधिनः॥

इतिवचनादुदगयननियम इति वाच्यम्। तद्यथा पशौ काम्यपरम्, अन्यथा 'पशुः प्रसयनं तथा'इत्यनेन विरोधात्; तथा सोमांशेऽपि तत्सहचारात्। अत एवाग्निहोत्रादिकमपि काम्यमेव,न तु नित्यमपि। ब्राह्मणाधिकारिकस्य तस्य नित्यप्राप्तत्वात्,वैश्याद्यधिकारिकस्य च यावज्जीवश्रुत्याऽनन्तरसायङ्कालादावेव प्राप्तेर्बाधात्। उपक्रम्येति तु द्वितीयादिप्रयोगेऽनियमार्थम्। केचित्तु आधानानन्तर्यमनपेक्ष्यापि सर्वसोमानुष्ठाने कालबाधमाहुः। 'वसन्ते ब्राह्मणोऽग्निमादधीत'इति सूत्रोत्तरं 'कृत्तिकास्वादधीत'इति सूत्रम्। तथा च विकल्पः,न तु समुच्चयः। तथा सति'वसन्ते कृत्तिकास्वादधीत'इत्येव सूत्रयेत्। एवं सोमेऽपि ऋतुनक्षत्रयोर्विकल्प इति श्रीकुमारः। 'सोमेन यक्ष्यमाणो नर्तून् सूर्क्षेन्न नक्षत्रमिति, तदेतस्यार्तस्यातिवेलं वा श्रद्धायुक्तस्य'इति सूत्रम्, तदार्तस्येव विशिष्टश्रद्धालोरप्यधिकारार्थं वाशब्दात्। तत्र केवलाधानेऽपि ऋतोर्नादरः 'यदहरेव विरजेत्' इतिवत् 'यदैवैनं श्रद्धोपनमेदथादधीत'इति श्रुतौ यदैवैनमित्युक्तेः श्रद्धायाः सामान्यतोऽङ्गत्वेऽपि इहाधिकारितावच्छेदकत्वं'यदेव श्रद्धया करोति'इत्यादा-

न्तरविधानं वा सर्वकालानादरो वेति पक्षद्वयमुक्तवान् । तत्राद्ये कृत्तिकादिकालान्तरस्य यथा आधाने वसन्ताद्यबाधेन विधानम्, तथा 'सोमेऽप्युदगयनपूर्वपक्षपुण्याहसन्निपाते यज्ञकालो नादेशः' इति च्छन्दोगसूत्रोक्तोदगयनाबाधेन सोमाभिसन्धिरूपकालान्तराविधानादुदगयनं त्वपेक्ष्यत इत्युक्तम् । द्वितीयपक्षे तु 'यदैवैनं यज्ञ उपनमेत्' इति सर्वकालानादर उक्त इति भारद्वाजसूत्रात्सर्वशब्दस्य च विश्वजित्सर्वपृष्ठइतिवद्भूयोरप्रयोगात् सर्वकालबाध इति । तेन दक्षिणायनेऽपि भवतीत्युक्तम् । षड्गुरुभाष्ये देवत्रातभाष्ये तन्त्ररत्ने च षट्स्वपि ऋतुषु भवतीत्युक्तमिति दिक् ॥

श्राद्धे त्वमावास्या त्रेधाविभक्तदिनतृतीयांशे योऽपराह्णभागस्तद्व्यापिनी *साग्निकैर्ग्राह्या ।

---

वित्र । आर्तस्येति तु सद्यस्कालाधानपक्षपरम् । 'तदहर्विदधीत पौर्णमास्यां सद्यस्कालम्' इति कमान्तिसूत्रात् ।

प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्त्तव्याऽऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥
एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः ।

इति वैश्वानरी तु प्रत्याम्नायत्वात्तत्तत्कर्मकाल एव । संस्थावाजपेयस्य तु वसन्तः कालः । आश्रयकाल एव गुणानां प्रवृत्तेः । अन्यस्य तु तस्य शरदादिरित्यन्यत्र विस्तरः । *साग्निकैरिति । अन्वाधानपिण्डपितृयज्ञश्राद्धान्येकदिने अनुष्ठातृभिरिति शेषः ।

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥

इति वचनात् । एतेषामन्वाधानादित्रयस्यैकादिनकर्त्तव्यत्वार्थं

*पिण्डान्वाहार्यकं श्राद्धं *क्षीणे राजनि शस्यते ।

दीर्घापराह्णापेक्षणात् । एवं च तृतीयांशे योऽपराह्णभाग इत्यस्य सतिसप्तमीवशात्तृतीयांशापराह्णभागयोरैक्ये तात्पर्यं, पञ्चधाभागस्याप्रवेशात् । *पिण्डान्वाहार्यकं=पिण्डापितृयज्ञोत्तराक्रियमाणं दार्शम् । तच्च तत्प्रख्यन्यायेन कर्मनामधेयम् ।

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥

इति मानवेन तथैव प्राप्तेः । मासानुमासिकं=मासे मासे भवं वीप्सापर्यायत्वात् । तेनावश्यकर्त्तव्यतासिद्धिः । यत्तु—

पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं द्विजोऽग्निमान् ।
पिण्डान्वाहार्यकं कुर्याच्छ्राद्धमिन्दुक्षये सदा ॥

इति मात्स्यं, तद्बलिदानरूपपितृयज्ञासमर्थस्यानुकल्पेन तर्पणरूपतत्परम् । न चेह—

एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिये ।

इत्युक्तं ब्राह्मणभोजनमेव पितृयज्ञोऽस्त्विति वाच्यम् । तस्य दार्शेन प्रसङ्गसिद्धेः पृथगसत्त्वात् । न च-पिण्डाः=पितरः

तत आरभ्य पितरः पिण्डसंख्यां तु लेभिरे ।

इति मात्स्यात् । तेषामन्वाहार्यं=तत्सम्बन्धिपिण्डभक्षणमिति कुतो नार्थ इति वाच्यम् । सर्वस्मृतिषु पिण्डैकदेशभक्षणविध्यदर्शनात् । अत एव—

यस्मादन्वाहृता मात्रा भक्षयन्ति द्विजातयः ।
अन्वाहार्यकमित्युक्तं तस्मात्तच्चन्द्रसंक्षये ॥

इति मात्स्यम् ।

पिण्डेभ्यस्त्वाल्पिकां मात्रां समादायानुपूर्वशः ।
तानेव विप्रानासीनान्विधिवत्पूर्वमाशयेत् ॥

इति मनूक्तप्रकारविशेषानुष्ठानपरमित्युक्तमाकरे । *क्षीण इति ।

वासरस्य तृतीयांशो *नातिसन्ध्यासमीपतः ॥

इति कात्यायनोक्तेः ।

*दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।
अपराह्णे पितृणां च तत्र दानं प्रशस्यते ॥

इति शातातपोक्तेश्च । *दिनद्वये तत्र सत्त्वे सर्वापराह्णव्यापी दर्शो ग्राह्यः । 'यस्तु भयेद्युरेष विहितः सर्वाऽपराह्णस्थितः' इति दीपिकोक्तेः ।

---

चन्द्रक्षयकालः प्रशस्तः । क्षयोऽग्रे । *नातीति ।

सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत् ।
राक्षसी नाम सा प्रोक्ता गर्हिता सर्वकर्मसु ॥

इति निषेधात् । ततश्चैकादशद्वादशमुहूर्तयोरेव पिण्डान्वाहार्यं तीव्रप्रयत्ने पितृयज्ञं कृत्वा श्राद्धोपक्रमात् । शिथिलप्रकृतेस्तु तत्पूर्वभाविदशममुहूर्तेऽपि तदुपक्रम इत्याशयेनाह—*दर्शेति । अपराह्णः पञ्चधाविभक्तादिनचतुर्थो भागः । वस्तुतस्तु पितृयज्ञादिक्रियानुष्ठानार्थं दिवसतृतीयभागरूपापराह्णोऽपेक्षितः । तत्रान्त्यमुहूर्त एव नातीत्यनेन पर्युदस्यते । सायाह्न इति वाक्यं त्वीदृशविषये हेयमेव । एवं च दशममुहूर्तादिरपराह्ण इत्यसंगतमिति दिक् । अत्रोक्तदीर्घापराह्णे न षट्पक्षाः त्रिमुहूर्त्ताधिकक्षयवृद्ध्योरभावेन कृत्स्नकालव्याप्तितदस्पर्शपक्षयोरसंभवात्, किं तु चत्वार एव । तत्रैकास्मिन् दिने कार्त्स्न्येन व्याप्तिर्द्विविधा—तदितरदिनेऽपराह्णस्पर्शेन तदस्पर्शेन च । उभयथापि द्विधा-पूर्वेद्युरेव कृत्स्नव्याप्तेः, परेद्युरेव वा । तत्र या पूर्वेद्युरेव कृत्स्नकर्मकालव्यापिनी उत्तरादिने तदेकदेशमपि न स्पृशति सा पूर्वैवासंदेहात् । या च पूर्वेद्युरेव कृत्स्नकर्मकालव्यापिनी उत्तरादिने तदेकदेशं स्पृशति, सा द्वेधा—परदिने चन्द्रस्य दर्शनात्, तददर्शनाद्वा । तत्राद्यामभिप्रेत्याह—*दिनद्वये इति । अन्त्यायां तु परदिने चन्द्रादर्शनात् प्रतिपद्येव

*यत्तु कार्ष्णाजिनिः—

भूताविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।

श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते ॥ इति ।

तदपराह्ण* चतुर्दशीवेधपरमिति श्राद्धहेमाद्रिः ।
*अपराह्णव्याप्तिपरमिति माधवः । *दिनद्वयेऽपराह्णव्या-

---

यागस्तदाऽन्वाधानानुरोधेन श्राद्धमप्येकदेशव्याप्तिदिन एव कार्यम् । त्रयाणामेककालत्वानियमात् । तथा हि—'पक्षान्ता उपवस्तव्याः' इत्याद्युपक्रमकं "यदहस्त्वेव चद्रमा न दृश्यतेताममावास्यां कुर्वीत" 'गताध्वा भवति" इति सूत्रद्वयम् ।

संमिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित् ।

खर्विकां तां विदुः केचिद् गताध्वामिति चापरे ॥

इति गताध्वालक्षणम् । तत्राद्यस्य दर्शाङ्गभूतोपवासपरत्वे तदधिकारिकश्राद्धविषयत्वमिति गोभिलगृह्यभाष्यकारादयः। या तु उत्तरेद्युरेव कृत्स्नकर्मकालव्यापिनी पूर्वेद्युस्तदस्पर्शिनी सोत्तरैव, उत्तरस्यां कालव्याप्तिलाभात् । पूर्वेद्युरेकदेशस्पर्शस्याप्यभावात्, अह्नि दर्शप्रवेशाभावाच्च । या तु तादृशी पूर्वेद्युरेकदेशस्पर्शिनी तामप्युत्तरां छलतो दर्शयति—*यच्चेति । *अपराह्ण इति । एतेन पूर्वेद्युरेकदेशस्पर्श उक्तः । एवं च तत्रोत्तरा कार्या उत्तरदिने प्रतिपत्प्रवेशाभावेन यागासंभवात् । अन्वाधानादेरेव तत्रानुष्ठातुमुचितत्वात् ।

वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि ।

यामांस्त्रीनधिकान् वाऽपि पितृयज्ञस्ततो भवेत् ॥

इति परिशिष्टाच्च । *अपराह्णव्याप्तीति । तन्मते पञ्चधाविभक्तदिनचतुर्थो भागोऽपराह्णः । तद्व्याप्त्या च निर्णयः । तत्र पूर्वेद्युरेव तद्व्याप्तौ सैव ग्राह्या । कर्मकालशास्त्रात् । तस्याश्च निषेद्धुमशक्यत्वात् । अतस्तदभावपरमित्यर्थः । अपराह्णव्याप्ती-

प्त्यभावेंऽशतो व्याप्तौ च तिथिक्षये पूर्वेति हेमाद्रिः ।

*यदा चतुर्दशी यामं तुरीयमनुपूरयेत् ।
अमावास्या *क्षीयमाणा तदैव श्राद्धमिष्यते ॥

इति कात्यायनोक्तेः ।

चतुर्दश्याश्चतुर्थं यामं दर्शः पूरयेत् । चतुर्दशी याम-त्रयं स्यादित्यर्थः । *क्षीयमाणा=परदिनेऽ*पराह्ण-व्यापिनी नेत्यर्थः । व्यतिरेकमाह—

---

ति पाठे परेद्युरिति शेषः । तदा पूर्वेद्युर्निन्दाया औचित्या-त् । *दिनद्वयेऽपराह्णव्याप्त्यभावे इति । अत्र व्याप्ति-पदोपसंदानात् या पूर्वेद्युरेवैकदेशं स्पृशति सा पूर्वेत्यर्थः । कुत इत्यत आह—*यदेति । चतुर्दशीदिनस्य चतुर्थं याममभावास्या-ऽनुपूरयेत्=तत्र प्रविशेदित्यर्थः । *क्षीयमाणा=यागदिने चन्द्र-दर्शनप्रयोजकक्षयवती । अंशतो व्याप्तौ च तिथिक्षये इति । दिनद्वयेऽपि क्षयेण समैकदेशव्याप्तौ च पूर्वेत्यर्थः । चन्द्रदर्श-नप्रयोजकक्षयसत्त्वात् । नन्वत्र पूर्वस्यां श्राद्धानुष्ठानेऽन्वाधा-नमपि तत्रैव कर्त्तव्यं, तदनुपपन्नम् । पूर्वस्यां चन्द्रदर्शनाव-श्यम्भावात् तत्सत्त्वे च 'यदहस्त्वेव चन्द्रमा न दृश्यते ताम-मावास्यां कुर्वीत'इति वचनविरोध इति; सत्यम् । तस्य चन्द्र-क्षयपरत्वात् । यदुक्तं 'यदहस्त्वेव दर्शनं नैति चन्द्रमाः' तत् क्षयापेक्षया ज्ञेयं, 'क्षीणे राजनि चेत्यपि'इति वचनात् । या तूत्त-रेद्युरेवैकदेशव्यापिनी सोत्तरैव, पूर्वेद्युर्दर्शप्रवेशाभावात् । वैषम्ये-णैकदेशव्याप्तौ त्वाधिक्यवती ग्राह्या । तत्र पूर्वस्यास्तथात्वे पूर्वैवेत्यत्र वचनं योजयति—*क्षीयमाणेति । *अपराह्णव्यापिनी नेति । आधिक्येनापराह्णव्यापिनी नेत्यर्थः । पूर्वेद्युरेवाधिक्येनापराह्णस्पृ-गिति यावत् । तदाधिक्यवती पूर्वेत्यर्थः । इतरथोत्तरामवतारयति—

वर्धमानाऽमावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान् वाऽपि पितृयज्ञस्ततो भवेत् ॥
ततः श्राद्धं च। *दिनद्वयेऽपराह्णव्याप्त्यादौ *तिथिवृद्धौ च हारीतः—

*त्रिमुहूर्ता च कर्तव्या पूर्वा खर्वा च बह्वृचैः।
कुहूरध्वर्युभिः कार्या *यथेष्टं सामगीतिभिः ॥

*त्रिमुहूर्ताभावे तु *पूर्वा नेत्यर्थः ॥

---

*दिनद्वये इति। दिनद्वये वैषम्येण एकदेशेनापराह्णव्याप्तौ इत्यर्थः। *तिथिवृद्धौ इति। पूर्वेद्युरिति शेषः। इदं च पूर्वेद्युस्तदाधिक्यमुत्तरत्र यागादिनगतचन्द्रादर्शनप्रयोजकं ग्राह्यम्। तदैव वर्द्धमानावाक्यादुपवासानुरोधाच्चोत्तराया ग्राह्यत्वात्। *त्रिहूर्त्ता चेति। यद्यपि पञ्चधाविभागपक्षेणेदं प्रतीयते, तथाऽपि त्रेधाविभागपक्षेऽपि सुयोजम्। या दशमैकादशद्वादशमुहूर्ततया त्रिमुहूर्ता सा त्रेधाविभागपक्षे पूर्वैव। या खर्वा खर्विका च, (खर्विकालक्षणमुक्तम्) साऽपि पूर्वैव। कुहूः परा। 'बह्वृचैरध्वर्युभिः'इत्याद्युपादानं पूजार्थम्। चन्द्रदर्शने पूर्वा तददर्शने तु परेति यावत्। अत एवाह—*यथेष्टमिति। अत्रैवाभिप्रायान्तरं सूचयति–त्रिमुहुर्त्ताभावे त्विति। दिनद्वये वैषम्येणैकदेशव्याप्तौ, उत्तरस्या आधिक्ये त्विति यावत्। *पूर्वा नेति। उत्तरेत्यर्थः। यद्युत्तरदिने चन्द्रदर्शनं न भवतीति शेषः। उत्तरदिने चन्द्रदर्शने तु पूर्वैवेत्यर्थः। तिथिवृद्धौ चेति चकारात् साम्यसमुच्चयः। तेन तिथेः साम्येनापि कालैकदेशस्य वैषम्येण व्याप्तौ चन्द्रदर्शनप्रयुक्तोऽधिकाग्रहणस्यापवादो बोध्यः। एतेन या दिनद्वयेऽपि साम्येन एकदेशव्यापिनी, सा–यदि क्षयेण तदा पूर्वा, क्षीयमाणावाक्यात्; यदि वृद्ध्या तदा परा; वर्द्धमाना

वाक्यात् । तत्रापि चन्द्रादर्शनतद्दर्शनप्रयुक्तस्तयोरपवादः प्राग्वत् । यदि साम्येन, तदा यागदिने चन्द्रादर्शने परा; तद्दर्शने पूर्वेति सूचितं भवति । एवं क्रमेणान्वाधानादित्रयस्यैकदिनकर्तव्यता-वतः प्रतिनिर्णयमनुसृत्यायं ग्रन्थो योजितः ।

तन्नियमरहिताश्चाश्वलायनापस्तम्बास्तैः कदाचिद्यागदिनेऽपि पितृयज्ञकरणात् सौत्रस्यामावास्यापदस्य सन्धिमदहोरात्रपरत्वेन तद्भाष्यकारादिभिर्व्याख्यानात्तान् प्रत्ययं ग्रन्थो योज्यते—त्रेधाविभक्तेति । संपूर्णदर्शोऽयमेवेत्यभिप्रायः । तत्रान्वाधानादित्रयं सुलभमित्यग्रे स्पष्टम् । वस्तुतस्तु पञ्चधाभक्तदिनचतुर्थभाग एव तान् प्रत्यपराह्णः श्राद्धकालः प्रशस्त इत्याह—दर्शश्राद्धं त्विति । एवं चामावास्या तत्राप्यैव निर्णेया । "कर्मणो यस्य यः कालः" इति वचनात् । एवं च पूर्वैवापराह्णव्यापिनी सा पूर्वैव ।

यस्यां सन्ध्यागतः सोमो मृणालमिव दृश्यते ।
अपराह्णे तु या तस्यां पिण्डानां करणं ध्रुवम् ॥

इति हारीतोक्तेश्च । या चोत्तरैवापराह्णव्यापिनी सोत्तरैव कर्मकालशास्त्रात् ।

अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वास्तानुयायिनी ॥

इति हारीताच्च । एतदेव हेमाद्रिसंवादेन द्रढयति—दिनद्वय इति । माधवसंवादेनाप्याह—अपराह्णव्याप्तीति । उत्तरस्या एवेत्यादिः । अपराह्णव्याप्त्यभावे=अपराह्णास्पर्शिन्यामिति यावत् । अत्र साग्न्यनग्निभेदेन व्यवस्था ।

अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥

इति जाबालिवचनात् ।

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः ॥

इति लौगाक्षिवचनाच्च । सिनीवालीकुह्वोः स्वरूपमग्रे । एतन्मते यः पञ्चधाविभक्तदिनचतुर्थभागरूपापराह्णमाश्रित्यादित आरभ्य सान्तो निर्णयः स एव निरग्निकान् स्त्रीशूद्रादींश्च प्रति बोध्यः । तथापि स्वयं साग्निकैरित्युपक्रमात्तदनुसारेणाह—क्षयेपूर्वेति । सिनीवालीत्यर्थः । यामं तुरीयमनु इति तुरीयभागोत्तरमित्यर्थः । अपराह्णव्यापिनी=अपराह्णस्पृक् नेत्यर्थः । तेन दिनद्वयापराह्णास्पर्शित्वलाभः । अंशातो व्याप्ताविति । दिनद्वये साम्येनैकदेशव्याप्तौ ग्राह्यतिथेः क्षयसाम्यवृद्धिसम्भवात् क्षये पूर्वा, साम्यवृद्ध्योः परेत्यर्थः । खर्वादिवाक्यात् ।

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता ।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥

इत्युक्तेश्च । दिनद्वयेऽपराह्णव्याप्त्यादाविति । दिनद्वये अपराह्णव्याप्तौ उत्तरातिथेः क्षये पूर्वा, वृद्धिसाम्ययोस्तु परा ।

अमावास्या तु या हि स्यादपराह्णद्वयेऽपि सा ।
क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता ॥

इति शिवराघवसंवादात् । अत्र च क्षयादिर्न ग्राह्यतिथिगतः । तस्याः क्षयेऽपराह्णद्वयव्याप्तेरसम्भवात्।एकदेशपदानुपादाने स्वरसतस्तथा प्रतीतेः। तथा च तिथिवृद्धौ इत्यस्य उत्तरतिथेर्वृद्धौ साम्ये चेत्यर्थः । एवं च त्रिमुहूर्त्ता चेति वाक्यमेतदनुसारेण कुशलमतिभिर्योज्यम् । दिनद्वये वैषम्येणैकदेशव्याप्तौ अधिकतव्यापिनी ग्राह्या

अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत् ।
अत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्मणि ॥

इति वचनात् अधिका ग्राह्येत्यर्थः । स्वरसतः सम्पूर्णापराह्णप्रत्ययेऽपि अल्पत्वायुक्त्या एकदेशलाभः । एतच्च सम्पूर्णोऽपराह्णः श्राद्धकाल इति विवेचनमतेन अपराह्णेऽप्येकादशद्वादशमुहूर्तौ पार्वणे मुख्यः काल इति मयूखमतेन व्याख्यायते—त्रेधाविभक्तेति । अपराह्णभाग एकादशद्वादशमुहूर्त्तरूपः ।

सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत् ॥

इति सायाह्ननिषेधात् । एतच्च पार्वणे । एकोद्दिष्टे तु कुतपाख्ये अष्टमे आरम्भः, नवमे रौहिणे समाप्तिः ।

कुतपं प्रथमे भागे एकोद्दिष्टमुपक्रमात् ।
आवर्त्तनसमीपे वा तत्रैव नियतात्मवान् ॥

इति व्यासोक्तेः ।

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥

इति गौतमोक्तेश्च । यत्तु नारदः—

मध्येह्नस्त्रिमुहूर्त्तस्तु यदा चलति भास्करः ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥

इति नारदेन कुतपो मुहूर्त्तत्रयात्मक उक्तस्तत्र मुहुर्त्तत्रयात्मकमध्याह्नस्यैकोद्दिष्टकालतया विधानेऽष्टमनवममुहूर्त्तयोस्तत्कालतया विनियोगेऽवशिष्टस्य दशमस्य गौणकालताविधानार्थम् ।

ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं ह्येतत् स्वधाभवनमिष्यते ॥

इति तु एकोद्दिष्टपार्वणयोः क्रोडीकाराभिप्रायम् । साग्निकैरिति । एतन्मते निरग्निकस्त्रीशूद्रोपलक्षणमेतत् । ग्रन्थकृन्मते तु न तदुपलक्षणं कुतपव्यापिन्या वाच्यत्वात् । पार्वणे एकादशद्वादशमुहूर्त्तयोरेव मुख्यकालत्वं दर्शितम् । तत्र वैषम्येणैकदेशव्याप्तावधिका ग्राह्या 'अपराह्णद्वयव्यापिनी'इत्युक्तवचनात् । एकदेशसमव्याप्तावुभयापराह्णव्याप्तौ च क्षये पूर्वा वृद्धिसाम्ययोः परा 'अमावास्या तु या हि स्यात्'इति शिवराघवसंवादात् । क्षयादिश्चाद्ये तात्तिथिगतः, अन्त्ये परतिथिगतः । दिनद्वये कालास्पर्शे तु आहिताग्नेः, सिनीवाली, निरग्न्यादेः कुहूः । 'अपराह्णद्वयव्यापिनी'इति जाबालिवचनात् । ''सिनीवाली द्विजैः कार्या''इति लौगाक्षिवचनेन स्त्रीशूद्रनिरग्निकानामपि ग्रहादिति

पिण्डपितृयज्ञस्तु कात्यायनैर्यागदिनात्पूर्वेद्युः कार्यः। 'पूर्वो वाऽङ्गत्वात् पिण्डपितृयज्ञः' इति तत्सूत्रात्। व्याख्यातं चैतत् कर्काचार्यैः-'पूर्व एव दर्शात् पिण्डपितृयज्ञो न पश्चात्। कुतः *अङ्गत्वात्। *तथा च श्रुतिः-'तस्मात् पूर्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान्यजन्ते' इति। 'पूर्वेद्युः पितृभ्यो यज्ञं निपृणीय प्रातर्देवेभ्यः प्रतनुते' इति च। तेन तन्मते अङ्गमेवासौ। तदुक्तम्-'अङ्गं वा समभिव्याहारात्' इति। तेन कर्कमते *चतुर्दशीयुक्तदर्शे पिण्डपितृयज्ञ इति। श्रीअनन्तभाष्ये तु *परेद्युरित्युक्तम्। अत्र द्वेधाऽप्याचारो दृश्यते।

आपस्तम्बानां तु परदिने मुहूर्तमपि दर्शसत्त्वे तत्रैव पितृयज्ञः। *तदाह आपस्तम्बः-'अमावास्यायां यदहश्चन्द्रमसं न पश्यति तदहः पिण्डपितृयज्ञं कुरुते'इति। अस्य रुद्रदत्तीया व्याख्या-'पिण्डैर्युक्तः पितृयज्ञः=पिण्डपितृयज्ञः। स च कर्मान्तरं न तु दर्शशेषः। यथा वक्ष्यति-'पितृयज्ञः स्वकालविधानादनङ्गं स्यात्'इति। तं च यदहश्चन्द्रमसं न पश्यति पञ्चदश्यां प्रतिपदि वा तदहः कुरुते। यदह-

---

ग्रन्थस्तु योजितः। *अङ्गत्वात्-दर्शयागं प्रतीति शेषः। अमायुक्तापराह्णनियमं निराकर्तुमाह-*तथा चेति। अमावास्यायामपराह्णे पिण्डपितृयज्ञ इत्यमावास्यापदं च कर्मपरमिति तदभिप्रायः। *चतुर्दशीयुक्तेति। चतुर्दशीयोगेन गतोऽध्वा यस्याः सा गताध्वेति व्युत्पत्तेः। अध्वा=स्थानम्। चन्द्रक्षयवदपराह्णः। *परेद्युरिति। अमावास्यायामपराह्ण इत्यमावास्यापदं पर्वसंधिमदहोरात्रपरम्। तस्मात्पूर्वेद्युरित्यादिश्रुतिस्तु काचित्काभिप्रायेति तदाशयः। नन्वेवम् "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरति"इति श्रुतिविरोध इत्यत्राह-*तदाहेति।

स्तयोः सन्धिस्तदहरित्यर्थः इति । श्रीरामाण्डारोऽप्याह—'पिण्डपितृयज्ञस्तु पर्वसन्धिमदहोरात्रापराह्णे'इति । अतः पर्वसन्धिदिने पितृयज्ञः । शतपथश्रुतिरपि—"यदैवैष न पुरस्तान्न पश्चाद् ददृशेऽथ पितृभ्यो ददाति" इति । पर्वसन्धिदिने हि पूर्वतः पश्चाद्वा चन्द्रो न दृश्यत एवेत्यर्थः । सत्याषाढोऽपि पितृयज्ञं प्रक्रम्य 'दृश्यमाने तूपोष्य श्वोभूते यजते' इत्याह । हेमाद्रिस्तु—'अमावास्याशब्दस्तिथिवचन एव । पूर्वोक्तापस्तम्बसूत्रे यदुक्तं 'न पश्यन्ति'इति, तत्र क्षयोऽभिप्रेतः । अतश्चतुर्दश्यां चन्द्रस्य क्षीणत्वात्तद्युक्तदर्शे पितृयज्ञः ।

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।

इति मनूक्तेः । यदुक्तं 'यदहस्त्वेव दर्शनं नैति चन्द्रमाः—' तत्क्षयापेक्षया ज्ञेयम् । 'क्षीणे राजनि चेत्यपि' इति, 'यदुक्तं दृश्यमानेऽपि, तच्चतुर्दश्यपेक्षया' इति च कात्यानोक्तेः । 'दृश्यमानेऽप्येके' इति गोभिलोक्तेश्च ।

यस्यां सन्ध्यागतः सोमो मृणालमिव दृश्यते ।
अपराह्णे क्षयस्तस्यां पिण्डानां करणं ध्रुवम् ॥

इति हारीतोक्तेश्च । चन्द्रक्षयकालश्चोक्तः कात्यायनेन—

अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमेंऽशे तु पुनः किल भवेदणुः ॥ इति ।

तेन पूर्वेद्युरेव पितृयज्ञ इत्यूचिवान् । कर्काचार्यैरपि—'अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम्' इति कात्यायनसूत्रेऽदर्शनेन क्षय एवोक्तः । 'तस्मिन्क्षीणे ददाति' इति श्रुतेः । अतस्तन्मते चतुर्दशीयुक्तदर्शे पितृयज्ञे सति परदिने यागोऽर्थात्सिद्धः । तदेतत् *सर्वोत्कृष्टमपि हेमाद्रिकर्कादिव्याख्यानमापस्तम्बैरन-

*सर्वोत्कृष्टमिति । अमावास्याशब्दस्य तिथिवाचित्वाद्यु-

भ्युपगमात्कात्यायबौधायनादिविषयम् ।

*आश्वलायनानामपि शेषपर्वणि पिण्डपितृयज्ञः । तथा च सूत्रम्–'अमावास्यायामपराह्णे पिण्डपितृयज्ञः' इति ।

अत्र नारायणवृत्तिः–'अमावास्याशब्दः प्रतिपत्पञ्चदश्योः संधिवचनोऽप्ययमपराह्णशब्दसमन्वयात्तद्वत्यहोरात्रे वर्तते । तस्यापराह्णेऽह्नश्चतुर्थे भागे पिण्डपितृयज्ञः कार्यः । औपवसथ्ये यजनीये वाऽहनि । यदा त्वहोरात्रसंधौ तिथिसंधिः स्यात्तदौपवसथ्ये एवाहनि क्रियते' इति । अत एव

मुहूर्तमप्यमावास्या प्रतिपद्यपि चेद्भवेत् ।
तदहस्तमक्षयं पर्व ज्ञेयं शेषं तु पर्ववत् ॥

इति हेमाद्रौ वचनं पिण्डपितृयज्ञपरमित्युक्तं प्रयोगपारिजाते । अयं च स्मार्ताग्निमता संपूर्णे दर्शे *श्राद्धव्यतिषङ्गेण कार्यः । व्यतिषङ्गो नामोभयोः सहानुष्ठानम् । *एतच्च 'स्थालीपाकेन सह पिण्डार्थमुद्धृत्य' इतिसूत्रे वृत्तिकृतोक्तम् ।

खण्डपर्वणि तु केचिदाहुः । पूर्वेऽह्नि पिण्डपि-

---

क्षणाविरहाच्च । *आश्वलायनानामिति । शाङ्खायनानां त्वन्वाधानानन्तरं पितृयज्ञः । तथैव तत्सूत्रात् । *श्राद्धव्यतिषङ्गेणेति । पितृयज्ञाधीनं परमापूर्वमेकं, श्राद्धे पिण्डदानाधीनं च तदपरमुभयमपि अग्नौकरणरूपाङ्गाधीनम् । अतः खण्डपर्वणि प्रधानयोर्भिन्नकालत्वात्तादृशमङ्गं भिद्यते, अखण्डपर्वणि तु स्थालीपाकभुक्तशेषाभ्यामेकस्मादेव पिण्डदानात्तादृशपरमापूर्वद्वयं जायते तत्रोभयत्राप्येकमेवाग्नौकरणमङ्गं न तु स्वेच्छया पितृयज्ञश्राद्धयोः पृथगनुष्ठानं कार्यं सूत्रविरोधादित्याह–*एतच्चेति ।

तृयज्ञव्यतिषङ्गेण श्राद्धं कृत्वा परेऽह्नि केवलः पिण्डपितृयज्ञः कार्यः । वृत्तिकृता तु—

आन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम् ।
काम्यमाभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥

इत्युदाहृत्य पूर्वेषु चतुर्षु स्थालीपाकादुद्धृत्याग्नौकरणमित्युक्तेर्दर्शश्राद्धे स्थालीपाको नियत इति गम्यते । स्थालीपाकश्च पितृयज्ञ एवेति पूर्वदिने व्यतिषङ्गः सिद्धः । प्रयोगपारिजाते तु *वार्षिकश्राद्धादेरपि व्यतिषङ्ग उक्तः, किमुत दर्शश्राद्धस्य ।

न्यायविदस्त्वाहुः—*सूत्रस्य वृत्तेश्च संपूर्णदर्शविषयत्वात् खण्डपर्वणि *पूर्वदिने केवलं श्राद्धं परदिने च केवलः पितृयज्ञः कार्यः । अत एवोक्तं वृत्तिकृता—*'नात्रापूर्वस्थालीपाकश्चोद्यते, सर्वश्राद्धेषु प्रसङ्गात्' इति । प्रयो-

---

*वार्षिकेति । "यद्यदन्नमुपभुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य" इति सूत्रे सहोद्धरणे स्थालीपाकोऽङ्गं करणतृतीयाबलात्, उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् । ततश्च स्थालीपाकः पिण्डार्थः, वार्षिके च पार्वणविकृतित्वात्तत्प्राप्तिरित्यभिप्रायः । *सूत्रस्येत्यादि । "सह शाखया प्रस्तरं प्रहरति" इतिवत्सहार्थे तृतीया । सा चोद्धरणे एव कर्मत्वेनान्नसाहित्यबोधिका, अतो न पिण्डार्थत्वसम्भवः । पिण्डदाने चोपभुक्तजातीयस्यैवान्नस्य करणत्वान्न चरुश्रपणापेक्षेति भावः । *पूर्वदिने इति । कालभेदेन तन्त्रन्यायाप्रवृत्तेः । *नात्रेति । सिद्धस्थालीपाकानुवाद इति न "उपपदविभक्तेः" इति न्यायप्रसङ्गः, नापि खण्डपर्वणि पूर्वेद्युः स्थालीपाकप्राप्तिः । न च—

पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ।

इति वचनात्तत्प्राप्तिरिति वाच्यम् । तस्य एकादिनीयेष्वाका-

गपारिजातोक्तिरप्ये*तद्विषयैव। पूर्वदिने च श्राद्धेऽग्नौ-करणमेव, न पाणिहोमः।

चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि॥

इति परिशिष्टे नियमात्। न च लौकिकाग्नौ पक्वस्य कथं गृह्याग्नौ होमः। 'नान्याग्नौ पक्वमन्याग्नौ जुहुयात्' इति निषेधात्। नैवम्। श्राद्धस्य गृह्यत्वेन स्मार्ताग्नौ *पचनाग्नौ वा कर्तव्यत्वात्। तस्मात् पूर्वेद्युः केवलं श्राद्धं, न व्यतिषङ्गः। *इदमेव च युक्तम्। आहिताग्निना

---

ङ्क्षितक्रमाविधायकत्वेनोपपत्तेरनाकाङ्क्षिताभिन्नादिनीयापूर्वविधायकत्वे मानाभावात्। *एतद्विषया=आर्थिकस्थालीपाकविषया। अग्रे विस्तरः। *पचनाग्नाविति। लौकिकाग्नौ श्राद्धानुष्ठाने च पाणिहोम एव। आश्वलायनभिन्नानां तु अखण्डपर्वण्य-पि न व्यतिषङ्गः तत्सूत्रानुक्तेः। तैत्तिरीयाणां पृथक्श्राद्धेऽपि न पाणिहोम इति स्मर्तव्यम्। अधिकमग्रे। *इदमेव चेति। तथा च वृत्तिः—यत्र स्थालीपाको विहितः तत्र तेन भुक्तशे-षेण च पिण्डनिपरणम्। यत्र स्थालीपाकविधिर्नास्ति तत्र केवलेन भुक्तशेषेणैव पिण्डनिपरणम्। आचार्येणाष्टौ श्राद्धान्युक्तानि— "आन्वष्टक्यं च पूर्वेद्युः" इत्यादि। तत्र पूर्वेषु चतुर्षु स्थालीपाका-दन्नमुद्धृत्याग्नौकरणम्, अग्निसमीपे भुक्तशेषेण स्थालीपाकेन च पिण्डानिपरणं पिण्डपितृयज्ञकल्पस्य तेषु विद्यमानत्वात्। उत्तरेषु चतुर्षु भोजनार्थादन्नमुद्धृत्य घृताक्तं कृत्वा पाणिहोमः, ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डानिपरणं तेषु स्थालीपाकविध्यभावात्, पिण्ड-पितृयज्ञकल्पप्राप्त्यभावाच्चेति। स्थालीपाकेनेति करणतृतीया-वादिनामुत्तरेषु चतुर्ष्वपि स्थालीपाकप्राप्त्यापत्तेः। किं च सर्व-श्राद्धेषु अतिप्रणयनादिपितृयज्ञेतिकर्तव्यता न प्राप्नोति। "आन्व-ष्टक्यं च पूर्वेद्युः" इत्याद्युक्त्वा आचार्येण—

तु सर्वाधानिनाऽर्धाधानिना* वा संपूर्णे खण्डे वा दर्शे *श्रौताग्नौ पृथगेव पितृयज्ञः कार्यो न तु दर्शश्राद्धव्यतिषङ्गेणेति विस्तरभीतेर्विरमामः । संपूर्णे दर्शे च विशेषमाह लौगाक्षिः—

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥ इति ।

पक्षान्तं कर्म=अन्वाधानम् । अन्वाहार्यकं=दर्शश्राद्धम् । अयमेव साग्नेर्जीवत्पितृकस्य पिण्डपितृयज्ञकालो ज्ञेयः । तस्यापि कात्यायनेन "होमान्तमन्वारम्भो वा" इत्याम्नानात् । पिण्डपितृयज्ञाकरणे *प्रायश्चित्तमाह पराशरमाधवीये कात्यायनः—

पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ॥

इत्यलम् ।

---

चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।

इति पितृयज्ञातिदेशप्रसज्यमानाग्नेः श्राद्धान्तरे परिसंख्यानात् ।

पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ।

इति त्वनुवादकं विधाने वाक्यभेदादित्याद्यन्यत्र विस्तरः । दर्शश्राद्धे तु पाणिहोमः । *अर्द्धाधानिना वेति । अत्र मयूखः—"पर्व=अमावास्या तत्र भवं पार्वणम् । तद् आहिताग्निः पिण्डपितृयज्ञं कृत्वा करोति । अनाहिताग्निस्तु तद् इतरेण व्यतिषज्य"इति परिशिष्टम् । तत्राहिताग्निः=सर्वाधानी, अनाहिताग्निस्तु अर्द्धाधानी, केवलस्मार्त्ताग्निमांश्च । अर्धाधानेऽपि व्यतिषङ्गानुरोधादिति । ग्रन्थकारस्तु *श्रौताग्नौ दक्षिणाग्नौ । निर्भरान्तरग्रस्तोऽनुपदमग्रे साग्निकादीन् दर्शयिष्यति । तदनुसारेणानुष्ठाने संप्रदायविरोधः । *प्रायश्चित्तमिति । अथ वा श्रौतग्रन्थोक्तं प्रायश्चित्तान्तरं सप्तहोतृहोमो बोध्यः । साग्निकान् प्रत्यमावास्या निर्णीता । अन्वाधाना-

प्रकृतमनुसरामः । *निरग्निकादिभिस्त्वमावास्याऽपराह्णव्याप्त्यलाभे कुतुपकालव्यापिनी ग्राह्या ।

भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतुपकालिकी ॥

इति हारीतोक्तेः । इदं च निरग्निकादिविषयम् ।

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः ॥

इति लौगाक्षिवचनात् । अत्र *साग्निरौपासनाग्निरपीति मदनपारिजाते उक्तम् । *कुतुपश्चा*पराह्णव्याप्त्यलाभेऽनुकल्पः ।

अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥

इति जाबालिना विधानात् । तेन साग्नीनां निरग्नीनां चापराह्णव्यापिन्येव मुख्या* । *तिथिसाम्यवृद्धिक्षयैः *समव्याप्तौ खर्वादिना निर्णयः । वैषम्ये-

---

दित्रयस्यैककाल्यनियमतद्रहितान्प्रति यथामतं ग्रन्थोऽपि योजितः । तत्प्रस्तावे च निरग्निकादीन् प्रति माधवमतं दर्शितम् । इदानीं हेमाद्रिमतमनुवदन्नाह-*निरग्निकादिभिरिति । आदिना स्त्रीशूद्रग्रहः । *साग्निरिति ।

य आहिताग्नेर्धर्मः स्यात्स औपासनिकस्य तु ।

इति वचनात् । हेमाद्रिमाधवयोर्विशेषं सूचयितुं माधवमतं स्मारयति-*कुतुपश्चेति । *अपराह्णेति । दिनद्वये अपराह्णस्पर्शाभावे इति यावत् । *मुख्येति । पूर्वेद्युरेवापराह्णव्याप्तौ पूर्वा । उत्तरेद्युरेव तद्व्याप्तावुत्तरा, कर्मकालशास्त्रात् । "यस्यां संध्यागतः" इत्यादिविशिष्यापि वाक्यद्वयं पूर्वमुक्तम् । *तिथीति । प्रकृततिथीत्यर्थः । *समव्याप्ताविति । एतेन "तिथिक्षये सिनीवाली" इत्यग्रिमम्,

ऽधिका * । दिनद्वयेऽपराह्णस्पर्शे कुतुपव्यापिनीति माधवः । *इदमेव च युक्तम् । *हेमाद्रिमते कुतुपव्यापिन्येव निरग्न्यादेर्मुख्या । सिनीवाली=दृष्टचन्द्रा । तथा च व्यासः-

दृष्टचन्द्रा सिनीवाली, नष्टचन्द्रा कुहूः स्मृता । इति । पूर्वदिने परदिन एव वा तद्व्यापित्वे सैव ग्राह्या । अंशव्यापित्वे वैषम्येऽधिककालव्यापिनी ग्राह्या । दिनद्वयेऽशतः समव्याप्तौ तिथिक्षये पूर्वा, वृद्धौ साम्ये च परा ।

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता ।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥

इति प्रचेतोवचनात् । दिनद्वये संपूर्णकुतुपव्याप्तिस्तु तिथिवृद्धावेव भवतीत्यनन्तरवचनात् परैवेति ।

कुतुपस्तु-

---

अमावास्या तु या हि स्यादपराह्णद्वये समा ।
क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता ॥

इत्युक्तं च स्मर्तव्यम् । *अधिकेति । "अपराह्णद्वयव्यापि" इति शिवराघवसंवादात् । ननु कुतपस्य मुख्यकालत्वं युक्तम् । अन्यथा-

सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि ।
स्यातां ते यदि मध्याह्ने श्राद्धादि स्यात्कथं तदा ॥

इत्युपक्रम्य "तिथिक्षये सिनीवाली" इति प्रचेतोवाक्यस्य निर्विषयत्वं स्यात्; इत्यत्राह-*इदमेव चेति । "स्यातां ते यदि मध्याह्नात्" इति प्रामाणिकपाठान्न कुतपो मुख्य इति भावः । प्रकृतं हेमाद्रिमतमनुसृत्याह-*हेमाद्रिमते इति । तद्व्यापिनी=कुतपव्यापिनी । तिथिवृद्धीति । वृद्ध्यविनाभावादित्यर्थः । अत्र

अह्नो मुहूर्ता विज्ञेया *दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः ॥

इति मात्स्योक्तेः । तुलादानपितृदेवप्रीत्यर्थोपवासादौ तु *परा ग्राह्येत्यन्यत्र विस्तरः ॥

दर्शे च मासिकवार्षिकादिश्राद्धप्राप्तौ कालादर्शे विशेष उक्तः—

दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि ।
नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि ॥

नवीनाः—यत् माधवेन हेमाद्रिणा वा दिनद्वये संपूर्णापराह्णव्याप्तौ संपूर्णकुतपव्याप्तौ वा परेत्युक्तं, तदयुक्तम्; खर्वादिवाक्ये "तिथिक्षये सिनीवाली"इति वाक्ये च क्षयादीनां ग्राह्यतिथिगतत्वाद् दिनद्वयगतसमैकदेशव्याप्तिविषयकत्वेनेहाप्रवृत्तेः । किं तूत्तरतिथेः क्षये पूर्वा, वृद्धिसाम्ययोस्तूत्तरा ।

अमावास्या तु या हि स्यादपराह्णद्वयेऽपि वा ।
क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता ॥

इत्युक्तेः । न चेदं दिनद्वयगतसमैकदेशव्याप्तिपरं, स्वरसतोऽपराह्णव्याप्तेरेव प्रतीतेः । एवं कुतपव्याप्तिवादिनामपीति वदन्ति ।

*दशेति ।

रौद्रः श्वेतस्तथा मैत्रस्तथा सारभटः स्मृतः ।
सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्तथा ॥
रौहिणस्तिलकश्चैव विभवो निर्ऋतिर्जयः ।
शम्बरो विजयश्चैव भेदाः पञ्चदश स्मृताः ॥

तत्रासंभवे तु—

कुतपाद्यान् मुहूर्तांस्त्रीन् यदाचरति भास्करः ।
स कालः कुतपस्तत्र पितृणां दत्तमक्षयम् ॥

इत्युक्तो गौणः कुतपो ग्राह्यः । *परेति । दानादिकर्मकालपर्याप्ता,

इत्युक्त्वा

संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत् ।
निमित्ता नियतिश्चात्र पूर्वानुष्ठानकारणम् ॥ इति ।

निर्णयदीपेऽपि—

नष्टचन्द्रे यदा काले क्षयाहादिवसो भवेत् ।
वैश्वदेवं क्षयश्राद्धं कुर्यात्प्राग्दर्शकर्मणः ॥

अमाश्राद्धं चानुपनीतोऽपि कुर्यात् । श्राद्धशूलपाणौ—

अमावास्याष्टकाकृष्णपक्षपञ्चदशीषु च ।

इत्युपक्रम्य

एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।
श्राद्धं साधारणं नाम सर्वकर्मफलप्रदम् ॥
भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः ।
शूद्रोप्यमन्त्रवत्कुर्यादनेन विधिना बुधः ॥

इति मात्स्योक्तेः । अमाश्राद्धातिक्रमे प्रायश्चित्तमुक्तमृग्विधाने—

न्यूषुवाचं जपेन्मन्त्रं शतवारं दिने दिने ।
अमाश्राद्धं यदा नास्ति तदा संपूर्णमेति तत् ॥

अत्र पूर्वोक्तसाग्निपदेनाऽऽहिताग्निः स्मार्ताग्निमांश्च गृह्यते । विच्छिन्नाग्निकादिश्च निरग्निकः । तथा च हेमाद्रिरग्नौकरणप्रकरणे—

साग्निरग्नावनग्निस्तु द्विजपाणावथाप्सु वा ।
कुर्यादग्नौ क्रियां नित्यं लौकिकेनेति निश्चितम् ॥

इति स्मृतिवाक्यमुदाहृत्य 'यस्त्वस्वीकृतौपासनतया समुच्छिन्नाग्नितया भार्याविधुरतया वाऽग्निरहितस्तस्य द्विजपाणौ जलादौ वा होमः' इति व्याचचक्षे । मदन-

पारिजातेऽप्येवम् । इदमेव साग्निकानग्निकस्वरूपं *सर्वत्र ज्ञेयम् ॥

अथ ग्रहणं निर्णीयते । तत्र चन्द्रग्रहणे यस्मिन्यामे ग्रहणं तस्मात्पूर्वं प्रहरत्रयं न भुञ्जीत । सूर्यग्रहे तु प्रहरचतुष्टयं न भुञ्जीत ।

सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना ॥

इति माधवीये वृद्धगौतमोक्तेः ।

*ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः ।
भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः ॥

इति मार्कण्डेयोक्तेश्च । अधि=ऊर्ध्वम् । ननु चन्द्रग्रहे यामचतुष्टयनिषेध उचितो नतु सूर्यग्रहे, सूर्योदयात्प्राग्भोजनाप्राप्तेः । नैवम् । वचनस्य प्रथमयामे सूर्यग्रहे सति पूर्वेद्युः पूर्वरात्रे भोजननिषेधपरत्वात् । चन्द्रग्रहे विशेषमाह माधवीये वृद्धवसिष्ठः—

ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् । इति ।

द्वयोर्ग्रस्तास्ते तु माधवीये व्यासः—

अमुक्तयोरस्तगयोरद्याद् दृष्ट्वा परेऽहनि । इति ।

विष्णुधर्मेऽपि—

---

मुहूर्तमात्राऽपीति भावः । *सर्वत्रेति । साग्निकानग्निकभेदेन व्यवस्थापेक्षायां मतान्तरं तु प्रागुक्तं स्मर्तव्यम् ॥ यामत्रयादौ ग्रहणयामोऽवधिर्न ग्रहणमित्याह—*ग्रहणं त्विति । प्रथमाद्यामतोऽधि=रात्रिद्वितीयप्रहरे ग्रहणं चेन्मध्याह्नात् पूर्वं भुञ्जीत, रात्रिप्रथमयामे चेत्तदा प्रथमादधः=प्रथमयाममध्ये ।

रवेस्त्वावर्तनादूर्ध्वमर्वागेव निशीथतः ।
चतुर्थप्रहरे चेत्स्याच्चतुर्थप्रहरादधः ॥

*अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा ।
मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ॥
*अहोरात्रनिषेधः सूर्यग्रस्तास्ते । मदनरत्ने*गार्ग्यः—
संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ ।

---

इति च द्रष्टव्यम् । *अहोरात्रमिति । इदमर्थाद् ग्रस्तास्तपरं, मुक्तिस्नानं च तत्र परेद्युरित्यर्थः । ब्रह्माण्डेऽपि—

नाश्नीयादथ तत्काले ग्रस्तयोश्चन्द्रसूर्ययोः ।
मुक्तयोश्च कृतस्नानः पश्चाद् भुञ्ज्यात्स्ववेश्मनि ॥

इति परान्ननिषेधः । मुक्तावपि भोजनं महानिशातः प्रागेव ।

मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ॥

इति शातातपोक्तेः । महानिशा च घटीद्वयम् ।

महानिशा द्वे घटिके रात्रिमध्यमयामयोः ।

इति मार्कण्डेयोक्तेः । घटिकाचतुष्टयं तु युक्तं, तथा कल्पतरूक्तेः । चन्द्रग्रस्तास्ते यावत्तदुदयमभोजनेन स्थातुमशक्तानां शास्त्रावगतमुक्तिकालभूताहर्भागानन्तरं भागद्वयमेकभागं वा हित्वा भोजनं भवतीत्युक्तं विवेचने । ग्रहणकाले च स्वापादि निषिद्धम् ।

सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम् ।
न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः ॥

इत्युक्तेः ।

निद्रायां जायते रोगो मूत्रे दारिद्र्यमाप्नुयात् ।
पुरीषे कृमियोनिः स्यान्मैथुने ग्रामसूकरः ॥
अभ्यङ्गे च भवेत्कुष्ठी भोजने स्यादधोगतिः ।
वचने च भवेत् सर्पो वधे च नरकं व्रजेत् ॥

इति निन्दोक्तेश्च । अहोरात्रम्=अह्नः पूर्वा रात्रिरित्याशयेनाह—अहोरात्रमिति । वस्तुतोऽहश्च रात्रिश्चेत्यर्थः, तेन चन्द्रग्रस्तास्तस्यापि लाभः, तदाह—*गार्ग्य इति । *स्नानेति । स्नानं च नित्यं मोक्ष-

तदहन्नैव भोक्तव्यं रात्रावपि कदाचन ॥

सायंसंध्यायां सूर्यग्रस्तास्ते पूर्वेऽह्नि रात्रौ च न भोक्तव्यम्। प्रातःसंध्यायां चन्द्रस्य ग्रस्तास्ते पूर्वरात्रावुत्तरेऽह्नि च न भोक्तव्यमित्यर्थः। चन्द्रग्रस्तास्ते उत्तरदिने संध्याहोमादौ न दोषः। तदाहोशनाः-

ग्रस्ते चास्तंगते त्विन्दौ ज्ञात्वा मुक्त्यवधारणम्।
*स्नानहोमादिकं कार्यं भुञ्जीतेन्दूदये पुनः॥

एतदनाहिताग्निविषयम्। 'अपराह्णे व्रतोपायनीयमश्नीत' इति कात्यायनोक्तेर्व्रतस्य श्रौतत्वेन विहितत्वेन च प्रबलत्वात्। अद्भिर्व्रतं कुर्यादिति निर्णयदीपः। रागप्राप्तभोजने कालनियमोऽयम्। तेन ज्वरादाविव न भोजनमिति कर्कानुसारिणः। बालवृद्धातुराणां तु ग्रहणयामात्पूर्वमेकयामो निषिद्धः।

*सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनम्।
अपराह्णे न मध्याह्ने, मध्याह्ने न तु सङ्गवे॥
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रिया॥

इति मार्कण्डेयोक्तेः। इदं च *बालादिविषयम्। 'बा-

---

स्नानस्यौदयिकत्वात्। मोक्षस्नानानन्तरं च भोजनम्, उक्तब्रह्माण्डात्। संवत्सरदीपे तु स्नानपाकादिकमिति पाठः। तत्र "शास्त्रावगतमुक्त्युत्तरमुदयात्पूर्वमपि पाकादि कार्यं, भोजनं तूदयोत्तरमित्यर्थ" इत्युक्तम्। शिष्टास्तूदयोत्तरमेव सर्वं कुर्वन्तीति विवेचने। *सायाह्ने इति स्पष्टं भागपञ्चकं, तच्च रात्रावपि उपलक्षणम्। तेन चन्द्रसूर्यग्रहलाभः। एवं चावतारिकायां यामपदद्वयं भागार्थकम्। यद्वाऽवतारिकारूपधार्मिकव्याख्यादर्शनात्सायाह्नादिपदमेव यामार्थकं चतुर्थयामे ग्रहणं चेत् तृतीययामे न भोजनमित्यादिरर्थः। तत्र सङ्गवे चेदिति दृष्टान्तः। *बालादीति। असमर्थेत्यर्थः।

लवृद्धातुरैर्विना' इति पूर्वोक्तेः । वेधकाले ग्रहणे वा पक्कमन्नं त्याज्यम् ।

सर्वेषामेव वर्णानां *सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥

इति हेमाद्रौ षट्त्रिंशन्मतात् । शृतमिति तदन्तरितस्योपलक्षणम् ।

नवश्राद्धेषु यच्छिष्टं ग्रहपर्युषितं च यत् ।

इति मिताक्षरायां वचनात् । भार्गवार्चनदीपिकायां ज्योतिर्निबन्धे मेधातिथिः—

*आरनालं पयस्तक्रं दधि स्नेहाज्यपाचितम् ।
मणिकस्थोदकं चैव न दुष्येद्राहुसूतके ॥

मन्वर्थमुक्तावल्याम्—

अन्नं पक्कमिह त्याज्यं स्नानं सवसनं ग्रहे ।
वारि तक्रारनालादि तिलदर्भैर्न दुष्यति ॥

जले त्वदोषो गाङ्गविषयः—

ग्रहोषितं जलं पीत्वा पादकृच्छ्रं समाचरेत् ।

इति तत्रैव चतुर्विंशतिमतेऽन्यजलस्य दोषोक्तेः ।

---

*सूतकमिति । तद्विहितेतरकर्मानाधिकारार्थम् । *आरनालमिति प्रतिप्रसवः । अन्यश्च स स्मृत्यन्तरे—

आरनालं तथा क्षीरं किलाटं दधिसक्तवः ।
स्नेहपक्कं च तैलं च न कदाचित्प्रदुष्यति ॥

अत्र विशेषः ।

आरनालं च तक्रं च ह्यादेयं घृतपाचितम् ।
उदकं च कुशच्छन्नं न दुष्येद्राहुसूतके ॥

स्मृत्यन्तरे—

जले घृते तथा तैले सन्धाने गोरसेषु च ।

वेधकाले ग्रहणे भोजने प्रायश्चित्तमुक्तं माधवीये कात्यायनेन—

चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति ॥ इति ।

ग्रहणे च *त्रिरात्रमेकरात्रं वोपवासः श्रेयोऽर्थिना कार्यः ।

एकरात्रमुपोष्यैव स्नात्वा दत्त्वा च शक्तितः ।
कञ्चुकादिव सर्पस्य निवृत्तिः पापकोशतः ॥
त्रिरात्रं समुपोष्यैवं ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वा दत्त्वा च विधिवन्मोदते ब्रह्मणा सह ॥

इति हेमाद्रौ लैङ्गोक्तेः । इदं च पुत्रवतिरिक्तविषयम् ।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
पारणं *चोपवासं च न कुर्यात्पुत्रवान् गृही ॥

इति जैमिनिवचनात् । *यदा रवेर्ग्रस्तास्तस्तदा पु-

---

कुशान्तरायं कुर्वीत ग्रहणे चद्रसूर्ययोः ॥

आरनालं=काञ्जिकं, घृतपाचितं=द्रोणाढकादिमितं कठिनतरं वा बद्धपकान्नमिति वाक्यात् । प्राजापत्यं=षडुपवासतुल्यं, तदर्द्धः त्रिरात्रोपवासः । ग्रस्तास्तोत्तरनिषिद्धकालभोजनेऽपि स एव कार्यः । "तस्मिन्नेव दिने" इत्यविशेषोक्तेः । "स्त्रीबालवृद्धानां तत्तदर्धम्" इति विवेचने । *त्रिरात्रमित्यादि । एकरात्रोपवासो ग्रहणवत्यहोरात्र एव । तथैव प्रतीतेः शिष्टाचाराच्च । क्त्वाप्रत्ययः समानकर्तृकत्वे 'मुखं व्यादाय स्वपिति' इतिवत् । त्रिरात्रोपवासेऽपि तृतीयमहोरात्रं ग्रहणवदेव । यद्वोपवासद्वयमपि क्त्वाप्रत्ययवशात्पूर्वदिने एव, ग्रहणे पारणानिषेधात् । *पारणं चेति । पुत्रिणः ग्रहणे पारणोपवासयोर्निषेधात् तदन्यस्य ग्रहणादिने तत्पूर्वदिने चोपवास इति गम्यते । *यदा त्वित्यादि । मार्कण्डेये एकप्रहरवर्जनं 'सायान्हे

त्रिणः *प्रहरद्वयं हित्वा बालादिवद्भोजनं, न तूपवासः । 'सायाह्ने ग्रहणं चेत्स्यात्' इति पूर्वोक्तमार्कण्डेयवचनात् ।

सायाह्ने सङ्गवेऽश्नीयाच्छारदे सङ्गवादधः ।
मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रहे ॥

इति स्मृतेश्चेति हेमाद्रिः । शारदोऽपराह्णः । माधवमते तु पुत्रिणोऽपि तत्रोपवास एव । 'अहोरात्रं न भोक्तव्यम्' इति पूर्वोक्तनिषेधस्य तेनापि पालनीयत्वात् । उपवासनिषेधस्तु व्रतरूपोपवासपरः कृष्णैकादशीनिषेधवदिति । मदनरत्नेऽप्येवम् । *इदमेव च युक्तम् । वर्धमानस्तु 'अहोरात्रं न भोक्तव्यम्' इति शातातपीयाद्ये ।

सूर्याचन्द्रमसोर्लोकानक्षय्यान्याति मानवः ।

इति फलश्रुतेर्मुक्त्यदर्शने उपवासः काम्यः *न त्वयं निषेध इत्याह । तन्न । अत्र व्रतत्वेपि*प्रागुक्तविष्णुधर्मे निषेधावश्यंभावात् । तथा च व्यासः—

रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा ।
चूडामणिरिति ख्यातस्तत्र दत्तमनन्तकम् ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ।

---

सङ्गवे' इत्यत्र प्रहरद्वयवर्जनं, तत्र बालादीनां प्रहरद्वयवर्जनं मुख्यम्, एकप्रहरवर्जनं त्वनुकल्पः । *पुत्रिण इति । पुत्री बालादिवत् "नोपवासो रविग्रहे" "न कुर्यात्पुत्रवान् गृही"इत्यनयोरेकविषयत्वलाभात् । समर्थे च पुत्रिणि नैकप्रहरवर्जनं, किं त्वसमर्थे तत्रेत्यर्थः । *इदमेव चेति । बालादिभिस्तु सर्वं दिनं नक्तं वा भोजनं विना स्थातुमशक्यत्वान्निषेधो न पालनीयः, किं तूक्तकल्पानुकल्पौ कार्याविति भावः । *न त्वयमिति । न हि निन्दान्यायादिति भावः । *प्रागुक्तेति । तथा च काम्य इव नित्योऽप्युप-

तत्पुण्यं कोटिगुणितं योगे चूडामणौ स्मृतम् ॥

अत्र चाद्यन्तयोः स्नानं कुर्यात् ।

*ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥

इति हेमाद्रौ वचनात्,

स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम् ।

इति ब्रह्मवैवर्ताच्च ।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
सचैलं तु भवेत्स्नानं सूतकान्नं च वर्जयेत् ॥

वासो भवत्येवेति भावः । *ग्रस्यमाने इति । एतच्च स्नानादि रात्रावपि ।

तथोपरागपातादौ स्नाने दाने निशा शुभा ।

इत्युक्तेः,

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥

इत्युक्तेश्च । दानं चात्यावश्यकम् ।

अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥

इति शातातपोक्तसदाशब्दात् । अत एव मलमासेऽपि कार्यमित्युक्तम् । दानं चापात्रायापि ।

अश्रोत्रियः श्रोत्रियो वा पात्रं वाऽपात्रमेव वा ।
विप्रब्रुवो वाऽपि विप्रो ग्रहणे दानमर्हति ॥

इति बौधायनोक्तेः । श्रोत्रियः=संस्कारवेदाध्ययनोभययुक्तः । अश्रोत्रियः=तदन्यतरहीनः । पात्रं—

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

इति याज्ञवल्क्योक्तं विद्यातपोयुक्तम् । विप्रब्रुवः=सुसंस्कृतोऽप्य-

इति वृद्धवसिष्ठोक्तेश्च । *सचैलत्वं मुक्तिस्नानपरमिति मदनरत्ने उक्तम् । भार्गवार्चनदीपिकायां चतुर्विंशतिमते—

*मुक्तौ यस्तु न कुर्वीत स्नानं ग्रहणसूतके ।
स सूतकी भवेत्तावद्यावत्स्यादपरो ग्रहः ॥

इदं च स्नान*ममन्त्रकं कार्यमिति स्मृतिरत्नावल्याम् । तत्र तीर्थविशेषा भारते—

गङ्गास्नानं प्रकुर्वीत ग्रहणे चन्द्रसूर्ययोः ।
महानदीषु वाऽन्यासु स्नानं कुर्याद्यथाविधि ॥

महानदीष्वपि मासविशेषे काश्चिच्छ्रेष्ठाः ।

प्रयागं देविका रेवा सन्निहत्या च वारणम् ।
सरस्वती चन्द्रभागा कौशिकी तापिका तथा ॥
सिन्धुर्गण्डाकिका चैव शरयूः कार्तिकादितः ॥

*मूलं हेमाद्रौ स्पष्टम् । व्यासः—

---

ध्ययनादिरहितः ।

नाध्यापयति नाधीते स भवेद् ब्राह्मणब्रुवः ॥

इति चतुर्विंशतिमतात् । सूतकान्नं=ग्रहणकाले ततः प्राग्वा पक्वमन्नम् । *सचैलत्वमिति ।

ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम् ।
तयोः संपत्तिमात्रेण उपस्पृश्य क्रियाक्रमः ॥

इति ब्रह्माण्डे स्पर्शे मोक्षे च सपिण्डमृतसूतिवदशुचित्वोक्त्या तयोरिव अनयोरपि सचैलमेव स्नानं कार्यं, तदुत्तरं च कर्माधिकारः । एवं—

यत्र पुंसः सचैलं स्यात् स्नानं तत्र सुवासिनी ।
कुर्वीतैवाशिरः स्नानं शिरोरोगी जटी तथा ॥

इत्यपि न प्रवर्त्तते शावाद्यभिधानात् इत्यभिप्रायः । मुक्तिस्नानं चावश्यकमित्याह—*मुक्ताविति । *अमन्त्रकमिति । मन्त्राणामविधानाद् विकृतेरभावेनातिदेशाप्रवृत्तेश्च । *मूल-

मिति । हेमाद्रौ-

इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः ॥
गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश ॥
गवां कोटिसहस्रस्य यत्फलं लभते नरः ।
तत्फलं लभते मर्त्यो ग्रहणे चन्द्रसूर्ययोः ॥

*असंभवे तु माधवीये शङ्खः-

वापीकूपतडागेषु गिरिप्रस्रवणेऽपि च ।
नद्यां नदे देवखाते सरसीषूद्धृताम्बुनि ॥
उष्णोदकेन वा स्नायाद् ग्रहणे चन्द्रसूर्ययोः ॥

अत्र तारतम्यमाह मार्कण्डेयः-

शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् ।
भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् ॥
ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् ।
तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम् ॥
ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यंस्ततोऽम्बुधिः ॥ इति ।

---

कार्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे ।
मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने ॥
पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ।
फाल्गुने वरणा पुण्या चैत्रे पुण्या सरस्वती ॥
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ।
ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी ॥
श्रावणे सिन्धुनामा तु तथा भाद्रे तु गण्डकी ।
आश्विने शरयूः श्रेष्ठा तथा पुण्या तु नर्मदा ॥

इति देवीपुराणम् । *असम्भवे त्विति ।

सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥

*उष्णोदकमातुरविषयम् । तथा-

गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।
सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने ॥
नर्मदातोयसंस्पर्शो कृतकृत्या भवन्ति ते ।

पृथ्वीचन्द्रोदये प्रभासखण्डे-

गावो नागास्तिला धान्यं रत्नानि कनकं मही ।
संप्रदाय कुरुक्षेत्रे यत्फलं लभते नरैः ॥
तदिन्दुग्रहणेऽम्भोधौ स्नानाद्भवति षड्गुणम् ॥

तत्रैव सौरपुराणेऽम्बुधिस्नानमुपक्रम्य-

दानानि यानि लोकेषु विख्यातानि मनीषिभिः ।
तेषां फलमवाप्नोति ग्रहणे चन्द्रसूर्ययोः ॥

देवीपुराणे—

गङ्गा कनखलं पुण्यं प्रयागे पुष्करं तथा ।
कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे ॥

स्नानासंभवे स्मरणं कार्यम् ।

स्मृत्वा शतक्रतुफलं दृष्ट्वा सर्वाघनाशनम् ।
गोमेधपुण्यं तु पीत्वा सौत्रामणेर्लभेत् ॥

---

इत्यत्र समशब्दोपादानात् ।

मृते जन्मनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

इत्यत्राह-*उष्णोदकमिति ॥

आदित्यकिरणैः पूतं पुनः पूतं च वह्निना ।
अतोव्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणा ॥

इति व्याघ्रोक्तेः । अपिनाऽस्पृश्यस्पर्शनादीनां । ग्रहः उष्णोदकायोग्यरोगिणस्तु—

आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।

स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः।
रविचन्द्रोपरागे च अयने चोत्तरे तथा॥

इति मार्कण्डेयोक्तेः। अत्र *श्राद्धमाह ऋष्यशृङ्गः—

चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत्।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे॥

भारते—

*सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्वाणस्तु नास्तिक्यात् *पङ्के गौरिव सीदति॥

विष्णुः—

राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।

इदं चामान्नेन हेम्ना वा कार्यं, न त्वन्नेन।

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा।

---

इत्यादि अग्रिमक्रमेण स्नातव्यं, गोरजःस्नानादिकमपि वा कार्यम्। *श्राद्धमिति। श्राद्धं तर्पणं च स्पर्शे कार्यम्॥

त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः॥

इति वासिष्ठात्। *सर्वस्वेनापीति। यदि सङ्क्षेपेणापि सामग्रीसम्पादने सर्वस्य व्ययो भवति तदाऽपीत्यर्थः।

विशिष्टे ब्राह्मणे प्राप्ते सूर्येन्दुग्रहणेऽयने॥
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छया।

इत्यत्र इच्छया चेति "श्राद्धं प्रति रुचिश्चैव" इत्येतत्समानार्थम्। अतश्चाकरणे प्रत्यवायमाह—*पङ्के इत्यादि। *घृतस्येति। घृतस्य प्राचुर्यं बोध्यम्। तेन न पाकानुपपत्तिः। तथा च अन्ननिवेदनवाक्ये 'इदमन्नम्' इत्यत्र पिण्डदानवाक्ये च 'अयं पिण्डः' इत्यत्र 'इदं घृतम्' इति प्रयोग इत्यर्थः। 'गृहीते राहुणा श्राद्धभोक्तु' इति ग्रहणकालीन—श्राद्धतर—भोजन-

आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा ॥

इति शातातपोक्तेरिति हेमाद्रिमाधवादयः ।

*अपरार्कस्तु एतद्द्विजातीनां पाकाभावे द्रष्टव्यं तीर्थश्राद्धवत् ।

पाकाभावे द्विजातीनामामश्राद्धं विधीयते ।

इति सुमन्तूक्तेः ।

सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु ।

गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ॥

*घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेत् ॥

इति वायवीयोक्तेश्चेत्याह । विज्ञानेश्वरोऽप्याह–'ग्रहणे श्राद्धे *भोक्तुर्दोषो दातुस्त्वभ्युदयः' इति ।

सूतके सूतके भुङ्क्ते गृहीते शशिभास्करे ।

छायायां हस्तिनश्चैव न भूयः पुरुषो भवेत् ॥

इत्यापस्तम्बेन भोजननिषेधात् । अयं च निषेधः *श्राद्धभोक्तुर्हस्तिच्छायासाहचर्यात् । अत्र *ग्रहणनिमित्तक-

---

व्युदासार्थम् । तत्र गजच्छायायां श्राद्धभोजने यत्प्रायश्चित्तं तत्कार्यं "न भूयः पुरुषो भवेत्" इति दोषसाम्यात् । *अपरार्कस्त्विति । तुनाऽरुचिः । सा चाऽऽमहेमश्राद्धमेव कार्यं विधानात् । पाकाभावे इत्यस्य यत्र पाकसम्भवस्तत्राऽऽमश्राद्धमिति नार्थः, किन्तु यत्र पाको विहितोऽपि केनचिद्धेतुना न सम्भवति तत्र श्राद्धं न त्याज्यं, किं तु आमश्राद्धं कार्यमित्यर्थः । ग्रहणे तु पाको न विहित इति न पाकश्राद्धप्राप्तिः । *घृतेनेति । आमश्राद्धे बहुघृतस्य हेमश्राद्धे च तद्द्रव्यस्य दानार्थं, घृतमिति तु आमहेमश्राद्धयोः प्रचुरघृतद्रव्यकपिण्डदानार्थम् । *भोक्तुरिति । विज्ञानेश्वरोऽपि ब्राह्मणात्प्रतिगृह्य भोजनार्थकः क्षत्रियादेः प्रतिगृह्य यथेष्टविनियोगोपलक्षणम् । *श्राद्धभोक्तुरिति ।

श्राद्धनैवामासंक्रान्त्यादिनैमित्तिकानां सिद्धिः । 'दार्शिकालभ्ययोरपि' इति कालादर्शोक्तेः।

अत्राशौचमध्येऽपि स्नानश्राद्धादि कार्यमेव ।

सूतके मृतके चैव न दोषो राहुदर्शने ।
*तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

इति माधवीये वृद्धवसिष्ठोक्तेः ।

*स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।

इति व्याघ्रपादोक्तेश्च । कालादर्शे आङ्गिराः-

सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने ।
स्नात्वा श्राद्धं प्रकुर्वीरन्दानं शाठ्यविवर्जितम् ॥

मदनपारिजातेऽप्येवम् । तेन

स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितम् ।

इति *निर्मूलं वदन्तो गौडाः परास्ताः । इयं च शु

---

अस्य श्राद्धीयं प्रतिग्रहीतुरित्यर्थः । तस्यैव "न भूयः पुरुषो भवेत्" इति दोष इति । *ग्रहणेति । देशकालाद्यविशेषे, न तु तद्विशेषे । *तावदेवेति । ग्रहणविहितसकलकर्मसु इति शेषः । स्नानमात्रे तद्वैयर्थ्यात् । अत एवानुपदमियं चेत्यादि । *स्मार्तेति । सूतके= आशौचे राहोरन्दुपरागादन्यत्र तदन्यनिमित्तकानां स्मार्तकर्मणां परित्यागो न तु तन्निमित्तकानामित्यर्थः । जननमरणनिमित्तकाशौचप्रयुक्तानाधिकारः अविशेषेण ग्रहणनिमित्तककर्मसामान्ये नास्तीति यावत् ।

चन्द्रसूर्यग्रहे स्नायात् सूतके मृतके तथा ।

इत्यादिविशेषविधिस्तु स्नानाकरणेऽनिष्टविशेषबोधनार्थ इति हेमाद्रिः । एतन्मते स्मार्तः सायंहोमादिः नवघटिकादिगौणकाले ग्रहणानन्तरं कार्यः । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"इत्यादिश्रुत एव स्वर्गे "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ"इति तदतिरिक्तविष-

द्विरविशेषान्मन्त्रदीक्षापुरश्चरणादिसर्वस्मार्तकर्मविषया । मदनरत्नेऽप्येवम् । रजस्वलायास्तु भार्गवार्चनदीपिकायां सूर्योदयनिबन्धे—

न सूतकादिदोषोऽस्ति ग्रहे होमजपादिषु ।
ग्रस्ते स्नायादुदक्यापि तीर्थादुद्धृत्य वारिणा ॥ इति ।

अत्र—

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥

इति मिताक्षरोक्तो विधिर्ज्ञेयः ।

तथा ग्रहणे रात्रावपि श्राद्धादि कार्यम् ।

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
*दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

इत्यपरार्के व्यासोक्तेः,

चन्द्रग्रहे तथा रात्रौ स्नानं दानं प्रशस्यते ।

इति देवलोक्तश्च । यदा तु ज्योतिःशास्त्रगम्ये दिने चन्द्रग्रहो रात्रौ सूर्यग्रहस्तदा दानस्नानादि न कार्यम् ।

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥

---

वदयं स्नानान्यविषयक इत्यन्ये । सूतके यः स्मार्तकर्मत्यागः स राहुसूतकादन्यत्र। अत्र तु तत्कालप्राप्तानां तेषां न त्याग इत्यर्थ इति। इदानीन्तनास्ते तु ग्रहणमध्येऽपि तमनुतिष्ठन्ति ।

*निर्मूलमिति । परासहेतुगर्भम् । नैमित्तिके इत्यनेन—सोमयागप्रारम्भानन्तरं रजस्वलाया न स्नानं, किं तु तद्वस्त्रत्यागयोनिशोधनादिकमेवेति श्रौतग्रन्थसंमतं लभ्यते, व्रतं रजस्वलाया विहितम् । *दानमिति । श्राद्धस्य विप्रापेक्षया

इति षट्त्रिंशन्मतात् । ग्रहणदिने वार्षिकश्राद्धप्राप्तौ तु प्रयोगपारिजाते गोभिलः—

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः ॥ इति ।

अत्र रविपितृसुतशब्दाः प्रदर्शनार्थाः, न्यायसाम्यात् । तेन चन्द्रग्रहणेऽपि सपिण्डादिवार्षिकमन्नादिना तद्दिने एव कार्यमिति मदनपारिजाते व्याख्यातम् । पृथ्वीचन्द्रोदयेऽप्येवम् । तेन यानि—

आमश्राद्धं प्रकुर्वीत माससंवत्सरादृते ।
अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन न क्वचित् ॥

इति मरीचिलौगाक्ष्यादिवचनानि, तानि ग्रहणदिनातिरिक्तविषयाणि । निर्णयामृतेऽप्येवम् । यानि तु—

ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे ।
ग्रस्तोदये यदा चन्द्रे प्रत्यब्दे समुपस्थितम् ॥
तद्दिने चोपवासः स्यात्प्रत्यब्दं तु परेऽहनि ।

तथा—

ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि ।
प्रत्यब्दं तु तदा कार्यं परेऽहन्येव सर्वदा ॥
चन्द्रसूर्योपरागे च तथा श्राद्धं परेऽहनि ।

इत्यादि वचनानि, तानि महानिबन्धेषु क्वाप्यनुपलम्भान्निर्मूलानि, प्रत्युत पूर्वोक्तनिबन्धेषु तद्दिन एव श्राद्धमुक्तमित्यलम् ।

---

दानत्वात् सङ्ग्रहः । श्राद्धं च दिवाभोजनमकृत्वा कार्यं न तु भोजनं कृत्वा । श्राद्धात्प्राक् तद्दिनभोजननिषेधस्येहापि निष्प्रत्यूहं प्रवृत्तेः । तर्पणं तु भुक्त्वाऽपि कार्यं चिन्नित्यतर्पणवदिति सम्प्रदायः ।

ग्रहणादिसप्तदिनपर्यन्तं रामगोपालाद्यागमदीक्षोक्ता शिवार्चनचन्द्रिकायां ज्ञानार्णवे—

*मन्त्राद्यारम्भणं कुर्याद्ग्रहणे चन्द्रसूर्ययोः ।
ग्रहणाद्वाऽपि देवेशि कालः सप्तदिनावधि ॥ इति ।

रत्नसागरे—

*(१)सत्तीर्थेऽर्कविधुग्रासे *तन्तुदामनपर्वणि ।
*मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् ॥

---

*मन्त्रादीति । आदिना पुरश्चर्यादिग्रहः *सत्तीर्थे इत्यादि । अङ्गत्वे सप्तमी न तु निमित्तत्वे । तेन तेषु तदकरणेऽपि न दोषः । एवं तुलादिमहादानादावपि ग्रहणस्याङ्गत्वमेव न निमित्तत्वमित्यूह्यम् । *तन्त्विति । पवित्रारोपणदमनारोपणकालयोः । *मन्त्रदीक्षा=मन्त्रोपदेशः ।

महादीक्षा तथा दीक्षा उपदेशस्तथा परः ।
युगे युगे च कर्त्तव्य उपदेशः कलौ युगे ॥

इत्युक्तः ।

चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥

इत्युपदेशस्वरूपम् । गुर्वलाभे तु मन्त्रशास्त्रे—

गुरोरभावे विप्रेन्द्र मन्त्रग्रहणमुच्यते ।
कृष्णपक्षे त्रयोदश्यां दक्षिणामूर्तिसन्निधौ ॥
ताडपत्रे (२)मनुं लिख्य स्थापयीत तदग्रतः ।
क्षीरखण्डादि नैवेद्यं स्थापयीत ततः शिवे ॥
ताडपत्रं समालोच्य पठेदष्टोत्तरं शतम् ।
एवं गृहीतो मन्त्रश्चेद्गुरोरपि विशिष्यते ॥

---

(१) 'चन्द्रसूर्यग्रहे तीर्थे महापर्वादिके तथा' इति क्वचित्पाठः ।
(२) मनुं=ग्राह्यमन्त्रम् ।

अत्र सूर्यग्रहणमेव *मुख्यम् ।

सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ।
सूर्यग्रहणकालेन समो नान्यः कदाचन ॥
न मासतिथिवारादिशोधनं सूर्यपर्वणि ।

इति तत्रैव कालोत्तरवचनात् ।

*चन्द्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणाम् ।
वनस्थस्य च या दीक्षा दारिद्र्यं सप्तजन्मसु ॥

इति तत्रैव योगिनीतन्त्रे निषेधाच्च ॥

ग्रहणं च जन्मराश्यादौ निषिद्धम् । तदुक्तं ज्योतिषे-

त्रिषड्दशाऽऽयोपगतं नराणां
शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः ।
द्विसप्तनन्देषुषु मध्यमं स्या-
च्छेषेष्वनिष्टं कथितं मुनीन्द्रैः ॥ इति ।

आयः=एकादश, नन्दाः=नव, इषुः=पञ्च । मदनरत्ने गर्गः-

जन्मसप्ताष्टरिःफाङ्कदशमस्थे *निशाकरे ।
दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च ॥

रिःफं=द्वादश, अङ्काः=नव, निधनं=सप्तमतारा । पृथ्वीचन्द्रोदये विष्णुधर्मे-

यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ ।
तज्जातानां भवेत्पीडा ये नराः शान्तिवर्जिताः ॥

---

गुरौ संभाविता दोषाः प्रायेण तु कलौ युगे ।
एवं गृहीते मन्त्रस्य सिद्धिर्भवति पार्वति ॥ इति ।

*मुख्यमिति । सूर्यग्रहदीक्षायाः प्राशस्त्यार्थमिदम् । अन्यथा ज्ञानार्णवधृतचन्द्रपदवैयर्थ्यात् । *चन्द्रग्रहे त्विति । निन्दाऽपि स्तुत्यर्थैवेति द्रष्टव्यम् । *निशाकरे इति । दिवाकरोऽपि ग्राह्यः ।

तत्रैव पुराणान्तरे—

सूर्यस्य संक्रमो वाऽपि ग्रहणं चन्द्रसूर्ययोः ।
*यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथ वा मृतिः ॥
*तस्य दानं च होमं च देवार्चनजपौ तथा ।
उपरागाभिषेकं च कुर्याच्छान्तिर्भविष्यति ॥
स्वर्णेन वाऽथ पिष्टेन कृत्वा सर्पस्य चाकृतिम् ।
ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः ॥

जन्मनक्षत्रं तत्पूर्वोत्तरे च त्रिजन्मनक्षत्रमित्युच्यते । जन्मदशमैकोनविंशतितारा इति केचित् । सर्पस्य=तदाकारस्य राहोरित्यर्थः । अद्भुतसागरे भार्गवः—

यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते ।
राज्यभङ्गं सुहृन्नाशं मरणं चात्र निर्दिशेत् ॥

राज्यस्य नक्षत्रम्=अभिषेकनक्षत्रमिति तत्रैव व्याख्यातम् । भार्गवार्चनदीपिकायां ज्योतिःसागरे—

*सौवर्णं कारयेन्नागं पलेनाथ पलार्धतः ।
तदर्धेन तदर्धेन फणायां मौक्तिकं न्यसेत् ॥
ताम्रपात्रे निधायाथ घृतपूर्णे विशेषतः ।
कांस्ये वा कान्तलोहे वा न्यस्य दद्यात्सदक्षिणम् ॥
चन्द्रग्रहे तु रूप्यस्य बिम्बं दद्यात्सदक्षिणम् ।

---

*यस्येति । होरायां ग्रहणे तु—

होरायां गृह्यते यस्य स वा मरणमृच्छति ।

इति द्रष्टव्यम् । *तस्य दानं चेति । विभवे दानहोमौ, तदभावे एकैकं; चकारद्वयात् । होमदेवार्चनजपेषु विशेषस्तत्रैव ।

मण्डलाधिपदैवत्यैर्मन्त्रैर्मृत्युञ्जयादिभिः ।
होमं कुर्यात्प्रयत्नेन तत्तन्मन्त्रान् जपेत्सुधीः ॥ इति ।

मण्डलानि=तत्तन्नक्षत्रगणात्मकानि, तदधिपाः=अग्निवरुणवायिवन्द्राः । नागमात्रदानमशक्तस्य । शक्तस्य त्वाह—*सौवर्णमिति ।

नागं रुक्ममयं सूर्यग्रहे बिम्बं च हेमजम् ॥
*तुरङ्गरथगोभूमितिलसर्पिश्च काञ्चनम् ॥

कालविवेकेऽपि—

सुवर्णनिर्मितं नागं सतिलं कांस्यभाजनम् ।
सदक्षिणं सवस्त्रं च ब्राह्मणाय निवेदयेत् ॥
सौवर्णं राजतं वाऽपि बिम्बं कृत्वा स्वशक्तितः ।
उपरागभवक्लेशच्छिदे विप्राय कल्पयेत् ॥

मन्त्रस्तु—

तमोमय महाभीम सोमसूर्यविमर्दन ।
हेमताराप्रदानेन मम शान्तिप्रदो भव ॥
विधुन्तुद नमस्तुभ्यं सिंहिकानन्दनाच्युत ।
दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् ॥ इति ।

अत्र शान्तिरप्युक्ता हेमाद्रौ मात्स्ये-

यस्य राशिं समासाद्य भवेद्ग्रहणसम्भवः ।
स्नानं तस्य प्रवक्ष्यामि मन्त्रौषधिसमन्वितम् ॥
चन्द्रोपरागं सम्प्राप्य कृत्वा ब्राह्मणवाचनम् ।
संपूज्य चतुरो विप्रान् शुक्लमाल्यानुलेपनैः ॥
पूर्वमेवोपरागस्य समानीयौषधादिकम् ।
स्थापयेच्चतुरः कुम्भानव्रणान्सलिलान्वितान् ॥
गजाश्वरथ्यावल्मीकसङ्गमाद् ह्रदगोकुलात् ।
राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥

---

*तुरङ्गेति । गजादेर्दानसामान्यस्य चोपलक्षणम् । राज्याभिषेकनक्षत्रोपरागे च दानहोमादिवत्तुरङ्गादिदानमप्यत्यावश्यकं, शान्तिश्च कार्या । पुरश्चरणचन्द्रिकायां—

अथान्येन प्रकारेण पुरश्चरणमिष्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ॥
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः । इति ।

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराज-विरचितः ... ... ... ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् ... ... ... १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थ-विरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् ... ... ... ... २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्द-[illegible]-लितम् ... ... ... ... ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भगवत-विरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्म-प्रकरण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्री पुरुषोत्तमजीमहाराज विरचितः ... ३
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तपरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गि-ण्याख्य टीकया सहिता ... ... ३
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनाराय-णाश्रमशिष्यमाधवाश्रमविरचितः स्वकृतटीकावि-भूषितश्च ... ... ... ... २
(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्-कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ११
(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गे-शोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्कि-कशिरोमणिविरचितदीधित्या च गर्भिता ... ८
(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्रप्रणीता । रामकृ-[illegible] सहिता त-र्कपादः ... ... ... ... ५
(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय–श्री-नागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां-विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता ... ११
(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरि-विरचितः ... ... ... ... ८
(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्री-मित्रमिश्रविरचितः ... ... ... ७
(४९) बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतया लघुसंग्रहाख्यया टीकया समलंकृतः १०
(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्याय-श्रीमित्रमिश्रविरचितः... ... ... ५
(५१) पूर्वमीमांसाअधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता नेने इत्युपाख्य गोपालशास्त्रिणा परिशिष्टाधिकरणनिरूपणपूर्वकं टि-प्पण्या परिष्कृता । ... ... ... १
(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् ... ... २
(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेश-वभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतवि-वरणोपेता ... ... ... ... २
(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमि-त्रमिश्रविरचितः ... ... ... ६
(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भा-वगणेशविरचितम् । समासस्तूत्रव्याख्या सर्वोपका-रिणी च ... ... ... ... १
(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसा-दिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ... ... ... ४
(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टकृत-व्याख्यासहितः (खण्डद्वयपूर्णश्च) ... ३
(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः । श्रीमदनन्तदेव-विरचितया "भाट्टालङ्काराख्य" व्याख्ययासहितः २
(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमिश्रविराचि-ता । पण्डितराड़—वंशीधरमिश्रविरचित "तत्त्वविभा-कर" टीकासहिता ... ... २

—:०:—

THE

# CHOWKHAMBÂ SANSKRIT SERIES.

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

Nos. 265, 266, 273, 274, 287, 304, 305, 307, 311.
320, 325, 327, 331, 334, 360, 364, 368, 369,
370, 381, 395, 401.

THE

# NIRṆAYASINDHU

By

KAMALÂKARA BHAṬṬA

With a Commentary by Kṛṣṇam Bhaṭṭa.

Edited with Notes by

Pandit Gopâl S'âstrī Nene, Professor,
Govt. Sanskrit College, Benares.

FASCICULUS I to XXII. १ से २२

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1930

## चौखम्बा-संस्कृत-ग्रन्थमाला.

### ग्रन्थ-संख्या ५२

नं० २६५, २६६, २७३, २७४, २८७, ३०४, ३०५, ३०७, ३११, ३२०, ३२५, ३२७, ३३१, ३३४, ३६०, ३६४, ३६८, ३६९, ३७०, ३८१, ३९५, ४०१.

कमलाकरभट्टविरचितो

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

काशीस्थराजकीयसंस्कृतपाठशालायां व्याकरणधर्मशास्त्राध्या
पकेन नेने-इत्युपाख्येन पं० गोपालशास्त्रिणा
संशोधितष्टिप्पण्या परिष्कृतश्च ।

प्रकाशकः—
जयकृष्णदास-हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज़ आफ़िस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।

१९८७

श्रीगुरुः शरणम् ।

# प्रास्ताविकम् ।

## उपक्रमः—

विदितमेवेदं सर्वेषां जनानां यच्चतुर्विधपुरुषार्थेषु धर्माख्यः प्रथमः पुरुषार्थः, संप्राप्ते च धर्मे पुरुषार्थे नातिदुर्लभा इतरे काम-अर्थ-मोक्षाः पुरुषार्था इति । स च धर्मः कथं प्राप्तव्य इत्यत्र शब्द एव प्रमाणम् । प्रत्यक्षादीनामलौकिकेऽनवतारात् धर्मस्य चालौकिकत्वात् । तदाह मीमांसासूत्रकारस्तत्र भवान् भगवान् जैमिनिः—"चोदनालक्षणोऽर्थो धर्मः" १-१-२ इति । विधिवाक्यैकगम्य इष्टार्थसाधको धर्म इति तदर्थः । विधयश्च श्रौताः स्मार्ताः पौराणाश्च । तत्र श्रौता विधयो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादयः । स्मार्तास्तावत्—

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥

इत्यादयः । पौराणाश्च—

प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ।
दशम्यामुपवासस्य, प्रकुर्याद्वैष्णवव्रतम् ॥

इत्यादयः । ते च धर्माः केन कदा कस्मै कुत्रानुष्ठेया इति निर्णयस्य श्रुतिस्मृतिपुराणेषु एकत्रानुपलब्धेरस्मादृशां मन्दधीनां कृतेऽस्य हेमाद्रिमाधवादिग्रन्थालोचनपूर्वकं सकलसंशयोच्छेदकस्य निबन्धस्यान्वर्थनामधेयस्य निर्णयसिन्धोः क्रियानुपयोग इति धार्मिकाणां न तिरश्चीनम् ।

### ग्रन्थावश्यकता ।

हेमाद्रिमाधवादिकृतेष्वन्येषु सत्स्वपि ग्रन्थेषु यथाऽनेन निबन्धेन विषयसंशयजनकतद्ग्रामान्यसन्देहानां विचारविधया निवृत्त्या निर्णयो, तथा

न तैर्ज्ञायते इत्यनन्यथासिद्धोऽयं निबन्ध इति । ग्रन्थकृताऽपि प्रतिज्ञातम्—

सन्ति यद्यपि विद्वांसस्तन्निबन्धाश्च कोटिशः ।
तथाप्यमुष्य वैदग्धीं केचिद्विज्ञातुमीशते ॥ इति ।

## विषयाः ।

अयं निबन्धः खलु परिच्छेदत्रये विभक्तः । तत्र प्रथमे परिच्छे-देऽब्दायनर्तुमाससंक्रान्तीनां सामान्यतो विशेषतश्च लक्षणनिरूपणमुखेन तत्र कर्तव्याकर्तव्यनिरूपणं, ततस्तिथिद्वैधतत्कर्तव्याकर्तव्यनिरूपण-मुखेन भक्तैकभक्तायाचितोपवासादिव्रतानां लक्षण-तदधिकारि-तदारम्भ-काल-तन्नियम-तदुद्यापननिरूपणं तद्भङ्गे प्रायश्चित्तनिरूपणं च, तत आशौ-चादिप्रतिबन्धेऽनेकव्रतानां युगपत्सन्निपाते वा व्रतानुष्ठानविधिनिरूपणं ततः प्रतिपदादिषोडशतिथिविशेषकृत्यनिरूपणमिष्टिदर्शपिण्डपितृयज्ञ-कालनिरूपणमुखेन दर्शे वार्षिकादिप्राप्तौ तदनुष्ठाननिरूपणं ततो ग्रह-णतत्कालकर्तव्याकर्तव्यनिरूपणमन्ते समुद्रस्नाननिरूपणमिति सामा-न्यतः कालनिर्णयः ।

द्वितीये चैत्रादिफाल्गुनान्तद्वादशमासेषु यस्मिन् पक्षे यस्यां तिथौ यत्कर्तव्यमकर्तव्यं वा तस्य सर्वस्यापि निरूपणं तिथिद्वैधे तद्ग्राह्या-ग्राह्यानिरूपणं चेति विशेषतः कालनिर्णयः ।

प्रकीर्णनिरूपकश्च तृतीयः परिच्छेदः । स च द्वेधा विभक्तः पूर्वार्धं उत्तरार्धं इति । तत्र पूर्वार्धे प्रथमं गर्भाधानादिविवाहान्ताः संस्काराः सवि-शेषं निरूपिताः । तेषामेव प्रसङ्गतो गर्भिणीतत्पतिधर्माः, अशुभकालजनन-शान्तयस्तत्फलानि च जन्मदापूजनादौ सूतकाभावः, दत्तकपुत्रपरिग्रहः, यमलविषये ज्येष्ठकनिष्ठभावोऽनुपनीतकामचारादिः, संस्कारलोपे प्रायश्चित्तं, ब्रह्मचारिधर्माः, द्विजानां नैमित्तिकः पुनःसंस्कारः, अनध्यायाः, महाना-म्न्यादिव्रतं, स्नातकव्रतं, छुरिकाबन्धः, सापिण्ड्यं, गोत्राणि, प्रवराश्च, सगोत्रादिविवाहे प्रायश्चित्तं, विवाहे गुर्वर्कबलं, बृहस्पतिशान्तिः, कुम्भ-विवाहो, विवाहे प्रतिकूलानि, मातू रजोदोषे विवाहादिकर्तव्याकर्तव्यता,

युगपदनेकेषां समानसंस्कारः, कन्याया रजोदोषे वृषलीत्वादि, तत्र प्रायश्चित्तं, विवाहादौ सद्यः शौचं, पुंसः पुनर्विवाहो युगपद्दारद्वयपाणिग्रहणेऽग्निद्वयसंसर्गः, आधानमग्निहोत्रं परिवेदनादि प्रासङ्गिकं कर्मजातं निरूपितम् । ततश्च जलाशयोत्सर्गः, प्रतिष्ठा, देवताप्रतिमा तत्पूजनं, पार्थिवपूजा, पञ्चायतनसन्निवेशः, केशवादिचतुर्विंशतिमूर्तिलक्षणानि, पुनःप्रतिष्ठा जीर्णोद्धारः, तुलसीग्रहणं, पुष्पादेः पर्युषितत्वं, शिवनिर्माल्यं तद्ग्राह्याग्राह्यते, कृच्छ्रादिव्रतानि कृष्यादि च यथाविधि निरूपितमन्ते च कलिवर्ज्यानि सप्रमाणं निरूपितानि । उत्तरार्धे च प्रकरणद्वयं निरूपितम् । तत्राद्यं श्राद्धप्रकरणम् । तत्रैव प्रसङ्गतो द्रव्यशुद्धिः, द्वादशविधाः पुत्राः, श्राद्धे वर्ज्यानि, श्राद्धकर्तृभोक्तृनियमाः, श्राद्धे विप्रवमने प्रायश्चित्तम्, अशक्तादेः श्राद्धानुकल्पः, श्राद्धभोजने प्रायश्चित्तं, श्राद्धविघ्ने निर्णयश्च, श्राद्धाङ्गं तर्पणं, जीवत्पितृकस्याधिकारः, विभक्ताविभक्तत्वादीनि निरूपितानि । द्वितीयं त्वाशौचप्रकरणम् । अस्मिन् हि सर्वविधमाशौचं सापवादं निरूप्य दुर्मरणादिप्रायश्चित्तं दशदानानि च प्रदर्श्यान्त्येष्टिसंस्कारनिरूपणपूर्वकं भेद-अधिकार-पद्धति-यतिधर्मसहितः संन्यासः, आतुरसंन्यासो यतिसंस्कारश्च निरूपितः । एवं परिच्छेदत्रयात्मकोऽयं निबन्धः प्रायः सकलस्मार्तपौराणधर्मविषये श्रौतधर्मविषये च याथातथ्येन साकल्येन च निर्णायक इति ।

## टीका ।

अस्योपरि अद्य यावदेकैव टीका रत्नमालाभिधा आठल्येकृष्णभट्टविरचिता समुपलब्धाऽस्माभिरस्मिन् संस्करणे निवेशिता ग्रन्थरहस्यजिज्ञासूनां ज्ञानसौलभ्याय । महतीयं टीका ग्रन्थस्य सर्वतोभावेन व्याख्यानरूपा ग्रन्थकाठिन्यहारिणी वर्तते । अस्यामपि ग्रन्थव्याख्यानप्रसङ्गेन प्रासङ्गिकाः पदार्था निरूपिता वर्तन्ते । यथा नवरात्रे घटस्थापनविधिप्रसङ्गे सर्वतोभद्रमण्डलं, पूजनप्रसङ्गे स्नानपुण्ड्रभस्मधारणविधिः, आचमनविधिः, पूजनेऽपराधाद्यप्रायश्चित्तं कलिधर्माश्चेत्यादयः ।

## ( ग्रन्थटीकाकर्त्रोः परिचयः )

अस्य महानिबन्धस्य रचयिता तत्र भवाननेकग्रन्थनिर्माता सुगृहीतनामधेयो विश्वामित्रसगोत्रो भट्टकमलाकराख्यः प्रसिद्ध एव । न खल्वेतदन्ववायोऽविदितस्तत्र लोकेऽल्पसंस्कृतज्ञानामपि, यतो भारतवर्षे चतसृष्वपि दिक्षु नैतादृशी विद्वत्परस्परा संजाता कस्मिंश्चिदप्येकस्मिन्नेव कुलेऽविच्छेदेन, यादृश्यनवच्छिन्नविद्वत्परम्परा पुत्रपौत्रादिक्रमेणैतस्मिन् भट्टकुले दृश्यते । अनेन कमलाकरभट्टेन धर्मशास्त्रेऽन्येऽपि आचारदीपः आह्निकप्रयोगो गयाकृत्यं दानकमलाकरः गोत्रप्रवरदर्पणं पूर्तकमलाकरः व्रतकमलाकरः शान्तिकमलाकरः समयकमलाकरः संस्कारकमलाकरः मन्त्रकमलाकरः नीतिकमलाकरः प्रायश्चित्तरत्नं शूद्रधर्मतत्त्वं कर्मविपाकरत्नं विवादताण्डवश्चेत्यादयो ग्रन्था आरचिताः ; पूर्वमीमांसायां मीमांसासूत्राणां व्याख्यानं धर्मतत्त्वं शास्त्रमाला वा, तन्त्रवार्तिकटीका, शास्त्रदीपिकाटीका शास्त्रदीपिकालोकश्च ; काव्यसाहित्ये काव्यप्रकाशव्याख्या, गीतगोविन्दभाष्यं रत्नमालाभिधं, रामकौतुकमहाकाव्यं चेत्यादयो बहवः प्रसिद्धा ग्रन्था रचिता वर्तन्ते ।

अनेन ग्रन्थकृताऽयं ग्रन्थः १६६८ तमे वैक्रमे रौद्रे सम्वत्सरे माघमासे कृष्णपक्षे शिवरात्र्यां चतुर्दशीतिथौ पूर्णतां गमित इति तदन्तश्लोकेन निश्चीयते । यथा—

> वसुऋतुऋतुभूमिते गतेऽब्दे
> नरपतिविक्रमतोऽथ याति रौद्रे ।
> तपसि शिवतिथौ समापितोऽयं
> रघुपतिपादसरोरुहेऽर्पितश्च ॥ इति ।

अस्य खलु माता उमा, पिता भट्टश्रीरामकृष्णः, ज्येष्ठो भ्राता च दिवाकरभट्ट आसन् । रामकृष्णभट्टस्य पिता नारायणभट्टः तत्पिता रामेश्वरभट्टः तत्पिता गोविन्दभट्टः तत्पिता अङ्गदेवभट्टः तत्पिता च श्रीनागनाथभट्ट इति पितृपरम्परा तद्ग्रन्थस्थश्लोकतो निर्णीता । तथा

हि, प्रकृतग्रन्थमङ्गलाचरणे—

"वेदार्थधर्मरक्षायै मायामानुषरूपिणम् ।
पितामहं हरिं वन्दे भट्टनारायणाह्वयम् ॥
यत्पादसंस्मृतिः सर्वमङ्गलप्रतिभूर्मता ।
तान् भट्टरामकृष्णाख्यान् श्रीतातचरणान्नुमः ॥
सर्वकल्याणसंदोहनिदानं यत्पदद्वयम् ।
द्युनदीसोदरीमम्बामुमाख्यां नौमि सादरम् ॥
बिन्दुमाधवपादाब्जरोलम्बीकृतविग्रहम् ।
ज्यायांसं भ्रातरं भट्टदिवाकरमुपास्महे ॥

श्रीमन्नारयणभट्टकृतवृत्तरत्नाकरटीकायां —

भट्टश्रीरामनाथस्समजनि विबुधश्चाङ्गदेवाख्यभट्टः
प्रासोष्टासौ तनूजं रघुपतिनिरतं भट्टगोविन्दसञ्ज्ञम् ॥
विश्वामित्रान्ववायाम्बुधिविधुराधिकं वर्धते तत्तनूजो
विद्याब्धौ लब्धपारः प्रथितपृथुयशा भट्टरामेश्वराख्यः ॥
नारायणेन सुधिया काश्यां निवसता सता ।
वृत्तरत्नाकरे टीका तद्भुवा रचिताऽञ्चिता ॥ इति ।

टीकानिर्माता च आर्डे इत्युपनामा कृष्णशर्मा वर्तते इत्यवोचम् । अनेनापि बहवः प्रसिद्धा महान्तो ग्रन्था न्यायशास्त्रे रचिता वर्तन्ते । केवलमयमेवैको ग्रन्थो धर्मशास्त्रे एतत्कृत उपलभ्यते । न्यायशास्त्रे च षष्टिः सप्ततिर्वा ग्रन्था उपलभ्यन्ते प्रकृतग्रन्थकर्तृरचिताः । अस्य माता कमला, पिता रङ्गनाथो, ज्येष्ठो भ्राता नारायणः गुरुश्च हरिरासीत् इति तदीयमङ्गलाचरणेन ज्ञायते । अयं खलु प्रथमपरिच्छेदान्तिमश्लोकेन एकोनविंशतिशतकस्य तृतीये भागे संजात इति ज्ञायते । यथा——

गुणरसेभभनाथमिताब्दकाधिकनभस्य सितेऽष्टमिकातिथौ ।
सुरगुरावलिखल्लघुमूलजित् कृष्णनिर्णयसिन्धुजटिप्पणम् ॥

तदेवं बहुशः संस्क्रियमाणस्यापि निर्णयसिन्धोः सटीकस्य कु

त्राप्यसंस्कृततया ऋते टीकां च संशयसिन्धूयमानतया मन्दधिजनानां दुर्ज्ञेयतादुःखमनुमिन्वाद्भिरस्माकं पूज्यपादैर्गुरुवर्यैः महामहोपाध्याय-विरुदावलीविराजितैः श्री १०८ मद्भिः पर्वतीयनित्यानन्दपन्तमहोदयैः प्रथममेव मुद्रापणकार्ये प्रवर्तयद्भिस्तच्छिल्पमुपदेष्टुमेवैतत्संस्करणभारव-हनायादिश्यमानस्तत्प्रदर्शितरीतिमनुसृत्य तदुपदिष्टविशेषार्थांस्तत्र तत्र टिप्पण्यां निवेशयन् प्रायशो [illegible] संशयपूर्वपक्षसिद्धान्त-प्रदर्शनेन च विवृण्वन्नद्य तत्कृपयैवैतत्कार्यं समापयन् क्षिप्तशिरोभारः [illegible] समर्पये संस्करणमिदम् ।

[illegible] सम्पादितम् । तत्र सप्त पुस्तकानि टीकायाश्चत्वारि मूलमात्रस्यासन् । तत्राप्येकं सटीकम् । तच्च 'ख' [illegible]: कच्छभुजराजधानीराजप्रतिष्ठापितसंस्कृत-विद्यालये [illegible]: श्रीदुर्गाप्रसादभट्टमहो-दयैः समर्पितम् । 'क' संज्ञकं मूलमात्रमस्मद्गुरुबन्धुभिः काशिकराजकीय-प्रधानसंस्कृतपाठशालायां भूतपूर्वव्याकरणधर्मशास्त्राध्यापकानां गुरुवराणां धर्माधिकारिनागेश्वरपन्तमहोदयानां पुस्तकसंग्रहात्तदीयसुपुत्रैः श्रीलक्ष्मी-धरपन्तैः प्रत्यर्पितमतीव शुद्धम् । प्रथमपरिच्छेदमात्रस्यैकमपरं च द्वितीयप-रिच्छेदस्य टीकामात्रं पुस्तकद्वयमलमोडाऽऽङ्ग्लपाठशालाध्यापकैर्वाराण-स्याभिजनैः पर्वतीय श्रीकृष्णानन्दशर्मभिः समर्प्य महत्साहाय्यमाचरितम् । [illegible] भूतपूर्वव्याकरणसांख्यशास्त्र प्रधानाध्यापकानां महामहो[illegible]परनामधेयश्रीरामकृष्ण शास्त्रिणामेकं सम्पूर्णं नातिशुद्धं टीकायाः पुस्तकमुपलब्धम् । अस्यैव पुस्तकस्याधारेण टीकासंस्करणं सम्पन्नमिति । इमानि त्रीणि खसंज्ञकं चेति चत्वारि पुस्तकानि टीकासंस्करणस्याधारभूतानि वर्तन्ते । घसंज्ञ-कमन्त खण्डितं टीकामात्रमशुद्धप्रायं शीतलाघट्टस्थ जडेइत्युपनामकबापु-दीक्षितानां पुस्तकसंग्रहात्तेषामेव कृपयोपलब्धम् । 'ङ' संज्ञकं च श्रीम-विद्याधुरंधरध्याञ्जिकमकरश्रीवामनाचार्याणां पुस्तकालयात्तदीयसत्पुत्राण

| विषयाः | पृष्ठाङ्काः | पङ्क्त्यङ्काः |
|---|---|---|
| नगरे पञ्चरात्रं वासः | २१४६ | २२ |
| वर्षासु चत्वारो मासा वासः | २१४६ | २३ |
| यतीनां वासस्थानानि | २१४६ | २४ |
| यतीनां कर्तव्याणि षट् कर्माणि | २१४७ | ५ |
| यतीनां पतनहेतूनि षट् कर्माणि | २१४७ | ७ |
| यतीनां बन्धककर्माणि षट् | २१४७ | ९ |
| यतीनामध्ययनादिनिषेधः | २१४७ | १२ |
| यतिपात्राणि | २१४७ | १३ |
| यतीनां निषिद्धभिक्षा | २१४७ | १५ |
| यतीनां निषिद्धकर्माणि | २१४७ | १८ |
| यतिधर्माः | २१४७ | २१ |
| यतीनां पितृपुत्रादिमरणे स्नानमात्रम् | २१४७ | २५ |
| यतिसंस्कारः | २१४८ | १ |
| आतुरसंन्यासः | २१४८ | ४ |
| आतुरसंन्यासप्रयोगः | २१४८ | १२ |
| संन्यासग्रहणे फलम् | २१४८ | २३ |
| कृच्छ्रनान्दीश्राद्धविरजाहोमाशक्तौ निर्णयः | २१४९ | १३ |
| श्रौतातुरस्य विलम्बितस्य प्रयोगः | २१४९ | ९ |
| आतुरसंन्यासविधिः | २१४९ | २० |
| तत्र अप्सु होमः | २१५० | १ |
| आतुरसंन्यासिनि मृते निर्णयः | २१५० | १९ |
| विरक्तस्यातुरस्य निर्णयः | २१५० | २१ |
| समाधिसंस्कारादि निर्णयः | २१५० | २४ |
| आतुरसंन्यासानन्तरं जीवितश्चेन्निर्णयः | २१५० | २५ |
| कुटीचकस्य दहनम् | २१५१ | ६ |
| बहूदकं पूरयेत् | २१५१ | ६ |
| हंसस्य जले निक्षेपः | २१५१ | ७ |
| परमहंसं पूरयेत् | २१५१ | ७ |
| पलाशमूले नदीतीरे वा पूरणम् | २१५१ | ८ |
| शवस्य स्नानालंकरणादिपूजनम् | २१५१ | ९ |
| यथास्थानं दण्डादिदानम् | २१५१ | १४ |
| ततः प्रोक्षणम् | २१५१ | १९ |
| अवटे प्रोक्षणं प्रेतनिक्षेपश्च | २१५१ | २२ |
| खड्गेन मूर्धभेदनम् | २१५१ | २४ |
| ततो लवणेन गर्तपूरणम् | २१५१ | २५ |
| कुटीचकस्य दहनविधिः | २१५२ | १ |
| अस्थ्नां तीर्थे प्रक्षेपः | २१५२ | ६ |
| अस्याशौचं नास्ति | २१५२ | ६ |
| एकादशेऽह्नि पार्वणम् | २१५२ | ९ |
| हंसपरमहंसानां न पार्वणम् | २१५२ | १० |
| द्वादशेऽह्नि नारायणबलिः | २१५२ | १५ |
| तद्विधिरन्यश्च विशेषः | २१५२ | १६ |
| ग्रन्थकर्तुः श्लोकाः | २१५२ | १७ |


इति श्रीसटीकनिर्णयसिन्धुविषयानुक्रमणिका समाप्ता ।

*दानवाक्ये विकल्पः । याज्ञवल्क्यः—

कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ।

काम इच्छा । प्रेततृप्तीच्छायां देयमन्यथा नेत्यर्थः ॥ शङ्खपारस्करौ*"आचार्ये चैवं मातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च तेषाम्"इति । द्विवचनान्मातामह्या अपि । शङ्खलिखितौ—"उदकक्रिया कामं श्वशुरमातुलयोः शिष्ये सहाध्यायिनि राजनि च" इति । वृद्धमनुः—

*क्लीबाद्या नोदकं कुर्युः*स्तेना*व्रात्या*विधर्मिणः ।

गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥

याज्ञवल्क्यः—

न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ।

षडशीतौ—

स्वीयाचारादपि भ्रष्टाः पतिता ये च दूषिताः ।

न कुर्युरुदकं ते वै तेभ्योऽप्यन्ये न चैव हि ॥

---

ण्डीति । *दानवाक्ये । प्रेतस्तृप्यतु इति । प्रचेताः-अमुष्मै स्वधेति । बैजवापो-असावेतत्ते उदकमिति । पारस्करोऽसौ तृप्यतामिति । हारीतः गोत्रनामपदान्ते च तर्पयामीत्येवं वदेदिति हारीतः कात्यायनश्चेति तत्तदानमन्त्रैः सह रामायणदानवाक्ये । सखा मित्रम् । प्रत्ता परिणीता दुहितृभगिन्यादिः । सपिण्डसोदकानामुदकदानस्य नित्यत्वार्थे कामपदम् । अन्यत्रापि नित्यं, तदाह-*आचार्ये इति । स्त्रीणां दुहितृभागिन्यादीनाम् । *क्लीबाद्या इति । आद्यपदेन ब्रह्महादयः । *स्तेनाः सुवर्णतत्समद्रव्यहर्त्तारः । *व्रात्याः कालेऽनुपनीताः । *विधर्मिणः पाखण्डिनः । गर्भपदं पुत्रदुहित्रोरुपलक्षणम् । गर्भादयश्चत्वारोऽब्राह्मणं प्रति । योषितोऽसवर्णा अपि अपविद्धाः बहिष्कृताः ।

मदनरत्ने हारीतः--

पतितानामवृद्धानां चरन्तीनां च कामतः ।
*प्रत्तानां चैव कन्यानां निर्वर्त्या सलिलक्रिया ॥

अपरार्के शङ्खलिखितौ—"अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्तन्ते"। अपपात्रितः कृतघटस्फोटः। तस्यापि संग्रहविधौ कृते आशौचोदकादि कुर्यादेवेत्याशौचप्रकाशः ॥

अथा*शौचे नियमाः। याज्ञवल्क्यः—

*इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।

---

*प्रत्तानां स्वस्रादीनाम् ।

*आशौचे मरणाशौचे । *इतीति ।

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥
मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
यः करोति स संमूढो जलबुद्बुदसंभवे ॥
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥

इति प्रकृतम् । ग्रामात उदकात् सम्यगुत्तीर्णान् । मृदुशाद्वलेति तत्रैव "शवस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य" इति पारस्करोक्तेः बहिरेव वस्त्रशोषणादिकं कर्तव्यम् । बहिःस्थित्यशक्तौ स एव "ब्राह्मणानुमत्या वा" इति । तान् पुत्रादीन् प्रति । कुलवृद्धा इति अर्थलभ्यम् । शोकनिर-

*विदश्य निम्बपत्राणि *नियता द्वारि वेश्मनः ॥
आचम्या*ग्न्यादिसलिलं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥
प्रवेशनादिकं कर्म *प्रेतसंस्पर्शिनामपि ।
*क्रीतलब्धाशना भूमौ स्वपेयुस्ते *पृथक् *क्षितौ ॥

सनसमर्थेतिहासमाह—मानुष्येति । जलबुद्बुदोऽचिरविनश्वरः । पञ्चधा भूतपञ्चकात्मतया । स्वशरीरं प्रागुजन्मतः यदि फलोपभोगक्षयः । परिदेवनाऽनुशोचनम् । वस्तुतस्तथात्वात् । वस्तुस्थिते केनाप्यतिक्रमितुमशक्यत्वात् । नेदमाश्चर्यं यन्मरणमित्याह—गन्त्रीति । कथमिति । तथाच मरणधर्मिणः नाशस्यावश्यकतया शोको निष्फल इति भावः । अनिष्टापादकत्वादपि न शोको युक्त इत्याह—श्लेष्मेति । अतो नेति । इतः परं रोदननिषेधः । ग्रन्थे—*विदश्येति । विदशनं (१)खण्डनं न तु भक्षणम् । *नियताः मूत्रपुरीषाद्युत्तरं विहितशौचेन शुचयः । अत्रार्थक्रम ऊह्यः । *अग्न्यादीति । "अश्मानमग्निं गोमयमक्षतां तैलमप उपस्पृशन्ति" इत्याश्वलायनः । तत्र दृश्यस्पर्शः पादेन, "कृत्वाश्मनि पदम्" इत्युल्लङ्घनव्यावर्तनात् । "दूर्वाप्रवालमग्निवृषभौ वा" इति शङ्खः । दूर्वाप्रवालं दूर्वाङ्कुरः इदमादिपदग्राह्यम् । केषाञ्चिदालम्भे मन्त्रानपि वक्ष्यति—शमीमित्यादिना । *प्रेतसंस्पर्शिनाम् । सपिण्डानां शवनिर्हरणस्नानालङ्करणकर्तृणाम् । *क्रीतम् । अयाचितं लब्धं वा । एतद्देवोत्पन्नम् । महागुरुमृतौ त्र्यहमेकाहं वोपोष्य पारणा क्रीतोत्पन्नेनैव । *पृथक् एकाकिनः । *क्षितौ तार्णास्तीर्णायाम् । क्षितिपदं खट्वाकम्बलादिनिषेधार्थं न तु कटस्य, "भूमौ प्रस्तरशायिनः" इति विष्णुपुराणात् । दिवाऽप्युपवेशनं तार्णास्तीर्णक्षितावेवेत्याह—

(१) खण्डनं दन्तैरिति यावत् ।

इदं चाद्येऽह्नि । वसिष्ठः-"*अधः(१)प्रस्तरे त्र्य(१)हमनश्नन्त आसीरन् क्रीतोत्पन्नेन वा वर्तेरन्" । शुद्धितत्वे बैजवापः-"शमीमालभन्ते शमी पापं शमयत्विति, अश्मानमश्मेव स्थिरो भूयासमिति, अग्निमाग्निर्नः शर्म यच्छत्विति, (२)ज्योतिरित्यन्तरा गामजमुपस्पृशन्तः क्रीत्वा लब्ध्वा वाऽन्यगेहोदकान्नमलवणमेकरात्रं दिवा भुञ्जीरंस्त्रिरात्रं च कर्मोपरमणम्" क्रीताद्यशनमुपवासाशक्तस्य । आश्वलायनस्तु-"नैतस्यां रात्र्यामन्नं पचेरन् क्री(३)तोत्पन्नेन वा वर्तेरंस्त्रिरात्रमक्षारलवणाशिनः स्युर्द्वादशरात्रं वा" इत्याह । अशक्तौ रत्नाकरे आपस्तम्बः-"भार्यापरमगुरुसंस्थायां चाकालभोजनानि कुर्वीरन्" । यदा मृतिः, परदिने तावत्कालमित्यर्थः । बृहस्पतिः—

अधःशय्यासना *दीना *मलिना भोगवर्जिताः ।
अ*क्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ॥

भोगोऽभ्यङ्ग*ताम्बूलादिः । *क्षाराः परिभाषाया-

---

*अधःप्रस्तरे इति । आशौचिनां शयनासनार्थं निर्मितः कटादिरधः प्रस्तारः । *दीना इति मङ्गलहर्षरहस्यादेर्निषेधः । *मलिना इति । मार्जनवस्त्रक्षालनादेः । *क्षारो यवक्षारादिः, लवणविशेषणं वा । तेन सैन्धवादेरनिषेध इति । मेधातिथिस्त्वक्षारलवणान्ना इत्यत्रैव अक्षारालवणाशिन इति आश्वलायनेन नञ्द्वयोपादानात्पृथक् क्षाराणां गोधूमगुडादीनां निषेध इत्याह । *ताम्बूलादिरिति । आदिना स्रक्चन्दनादिधारणव्यसनोच्चासनादिग्रहः । *क्षारा इति ।

---

(१) 'अद्य प्रस्तरे त्र्यहमनश्नन्त' ग० ।
(२) 'ज्योतिष अन्तरा' ग० । (३) 'क्रीतोत्पन्नेन वा वर्तेरन्' ग० ।

मुक्ताः । यत्तु मार्कण्डेयपुराणे—

तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनं च यत् ।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः ॥
प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ।
वस्त्रत्यागं बहिः स्नानं कृत्वा दद्यात्तिलोदकम् ॥ इति ।

तदन्त्यदिनपरम्, "आशौचान्ते *तिलकल्कैः स्नाता गृहं प्रविशेयुः" इति विष्णूक्तेः । विष्णुपुराणे त्वस्थिसंचयनोर्ध्वं *भोगोप्युक्तः—

शय्यासनोपभोगस्तु *सपिण्डानामपीष्यते ।
अस्थिसंचयनादूर्ध्वं *संयोगस्तु न योषिताम् ॥

भारते—

तिलान् द(१)दतु पानीयं दीपं द(१)दतु जाग्रतु ।
ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ॥

मनुः—

*मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ।

---

तिलमुद्गादृते शैब्यं सस्ये गोधूमकोद्रवौ ।
धान्याके देवधान्यं च शमीधान्यं तथैक्षवम् ।
स्विन्नधान्यं तथा पण्यं मूलं क्षारगणाः स्मृताः ॥ इति ।

*तिलकल्कैरिति । तिलकल्काविकल्पितत्वादन्त्यदिनमात्रगामीति भावः । *भोगोपीति लोलुपताऽर्थः । *सपिण्डानामिति । पुत्रस्य तु दशाहं कटम् यावदाशौचं यावद्भोगनिषेधः, "दशाहं कटमुपासीरन्मातापित्रोर्मरणे" इति बौधायनस्मृतेः । *संयोगो मैथुनम् । सपिण्डानामिति वर्तते । *मांसाशनमिति गौतमेन "ब्रह्मचारिणो न मार्जयीरन् मांसं न भक्षयेयुराप्रदानात्" इति प्रदानमैकादशाहिकश्राद्धं तत्पर्यन्तं मार्जनरहितस्ना-

(१) 'ददत' क० ।

देवजानीये कारिकायाम्—

लवणक्षीरमाषान्नापूपमांसानि पायसम्।
वर्जयेदाहृतान्नेषु बालवृद्धातुरैर्विना॥
उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत्॥

मरीचिः—

*प्रथमेऽह्नि तृ(१)तीये च सप्तमे दशमे तथा।
ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम्॥

भोजनं च दिवैव,

दिवा चैव तु भोक्तव्यममांसं मनुजर्षभ।

इति विष्णुपुराणात्। 'क्रीत्वा लब्ध्वा वा दिवान्नमश्नीयुः' इति पारस्करोक्तेश्च। मदनरत्ने हारीतः—'पाणिषु मृन्मयेषु पर्णपुटकेषु वाऽश्नीरन्'। देवजानीये ब्राह्मे (शु(२)द्धितत्त्वे आदिपुराणे-)

आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्।

अन्त्यदिने तु मदनरत्ने ब्राह्मे—

यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः।
स तत्र गृहशुद्धिं च *वस्त्रशुद्धिं करोत्यपि॥

अन्त्यकर्मकालीनवस्त्रयोस्तु तत्रैवोक्तम्—

ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे तु वाससी।
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोत्यथ॥इति।

---

नं मांसभक्षणवर्जनं चोक्तम्। "त्र्यहं मांसाशनं च नाश्नीयुः" इति मनुस्तु मांसलोलुपपरः। दिनविशेषे सहभोजनपक्षमाह—*प्रथमेऽह्नीति। एकान्नमिति। "क्रीत्वा लब्ध्वा वाऽन्यगृहादेकान्नमलवणमेकां रात्रीं भुञ्जीरन्" इति बैजवापोऽपि द्रष्टव्यः। *वस्त्रशुद्धिः निर्णेजकादिद्वारा निर्णेजनम्। "प्रथमतृतीयपञ्चमसप्तम-

---

(१) 'तृतीये च चतुर्थे सप्तमे तथा' क०।
(२) धनुश्चिन्हान्तर्गतं नास्ति ग०।

शङ्खः—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च।
प्रेतपिण्डक्रियावर्ज्यमाशौचे विनिवर्तते॥

काठकगृह्ये—'यत्र प्राणोत्क्रमस्तत्रान्वहं महाबलिं कुर्यात्' इति। पारस्करः—'तदानीमेव वस्त्रं तण्डुलं दीपं कांस्यभाजनं प्रेताय दद्यात्'। आशौचप्रकाशे भरद्वाजः—

वासोऽन्नं च जलं कुम्भं प्रदीपं कांस्यभाजनम्।
नग्नप्रच्छादने श्राद्धे ब्राह्मणाय निवेदयेत्।

भृगुः—

तिलोदकं तथा पिण्डान् नग्नप्रच्छादनादिकम्।
रात्रौ न कुर्यात्संध्यायां यदि कुर्यान्निरर्थकम्॥

अथ *प्रेतपिण्डः। यद्यपि हेमाद्रौ पारस्करेण—

ब्राह्मणे दशपिण्डास्तु क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः॥

इ(१)त्युक्तं, तथापि—

प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान्दद्याद्दशैव तु।

इति तेनैवोक्तेः सर्वेषां दशैव ज्ञेयाः। मदनरत्नेऽप्येवम्। *तथा च हेमाद्रौ ब्राह्मपाद्मयोः—

जात्युक्ताशौचतुल्यांस्तु वर्णानां कांचिदेव हि।

---

नवमेषु वाससां त्यागः" इति गौतमोक्तत्यागस्तु परिवर्तनमात्रम्। *प्रेतपिण्डः—

तिलमन्नं च पानीयं धूपं दीपं तथैव च।
मधु सर्पिः खण्डयुतं पिण्डमष्टाङ्गमुच्यते॥

इत्यष्टाङ्गः। नन्वेवं पूर्वोक्तसंख्या बाधेतेत्यत आह—*तथा-

---

(१) अत्र शक्तं प्रति पक्षान्तरमुक्तं धर्मप्रदीपे—प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमे तथा। द्वौ द्वौ पिण्डौ [illegible]स्तु दशमेऽहनि॥ इति।

*देशधर्मान्पुरस्कृत्य प्रेतपिण्डान्वपन्त्यपि ॥

इत्युक्त्वा विप्रान्येषु दशमपिण्डोत्कर्ष उक्तः—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ।

वैश्यानां वै पञ्चदशे देयस्तु दशमस्तथा ॥

शूद्रस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते ॥ इति ।

युद्धमृतादेः सद्यःशौचे त्र्यहादौ च तेनैवोक्तम्—

सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा ।

*त्र्यहाशौचे प्रदातव्यः प्रथमेऽह्न्येक एव हि ॥

द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ॥

त्र्यहे *प्रकारान्तरं प्रागुक्तम् । शातातपः—

आशौचस्य च ह्रासेऽपि पिण्डान्दद्याद्दशैव तु ।

तत्रैकपात्रे सकृत्पक्त्वा दश पिण्डान् दद्यात,

*उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये ।

पूर्वदत्ताञ्जलीन्दद्यात्पूर्वपिण्डांस्तथैव च ॥

इति गृह्यकारिकायां पात्रविपर्यये दोषोक्तेः । *शि·

---

चेति । सर्वेषां दशैव पिण्डा इति सिद्धौ चेत्यर्थः । *देशेति । पूर्वोक्तसंख्याया देशविशेषविषयतया न विरोध इति भावः । *महाशौचेति । त्र्यहादाविति पाठे आदिपदेन शूद्रपञ्चाहादि ग्राह्यम् । *प्रकारान्तरम्—

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।

द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ॥

त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः ।

इति पारस्करोक्तम् । *उत्तरीयेति । आचार्यविपर्ययेऽप्येवमिति (१)वदतामयमभिप्रायः—आचार्यस्यापि कारयितृत्वेन प्रयो-

---

(१) अन्त्येष्टिपद्धतौ भट्टानामित्यर्थः ।

लाविपर्यये घटस्फोटादेर्नावृत्तिः । *अन्वाभ्यञ्जनादिपद-कर्मणः एकहायनीनयनवदप्रयोजकत्वात् । तद्वच्चात्र लौकिकग्रहणम् । केचित्तु—

नवान्यादाय भाण्डानि आरुकं चरुकं तथा ।

इति प्रचेतसोक्तेः पात्रानेकत्वमाहुः । *क्रियाकर्तुर्नाशेऽन्येन शेषः समापनीयः,

एवं क्रियाप्रवृत्तानां यदि कश्चिद्विपद्यते ।

तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥

इति शुद्धितत्वे बृहस्पतिस्मृतेः । पत्न्याः कर्तृत्वे रजोदर्शने च तदन्ते कुर्यात्, 'शावाद् द्विगुणमार्तवम्' इत्युक्तेः । आशौचान्ते आर्तवे कर्तुरस्वास्थ्ये वाऽन्येन क्रिया सर्वाऽऽवर्तनीया, कर्तुर्विपर्ययात्कालातिक्र-

---

जककर्तृत्वमिति । *अन्वेति । ज्योतिष्टोमे "एकहायन्या क्रीणाति" इति सोमक्रय आम्नातः । सेयमेकहायनी गौर्यदा सोमं क्रेतुमानीयते तदाऽध्वर्युः पृष्ठतोऽनुगच्छन् सप्तमे पदे हिरण्यं निधाय हुत्वा तत्पदगतं रजो गृह्णीयात् गृहीतेन च तेन रजसा हविर्धानयोः शकटयोरक्षमञ्ज्यात् इत्यक्षाञ्जनमपि "यदि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्" इत्यभिहितम् । तत्र यथा क्रयः सन्निकृष्टः तथा पदकर्माद्यक्षाञ्जने सन्निकृष्टमिति क्रयवत् पदकर्मापि सोमक्रयण्यानयनस्य प्रयोजनमिति पूर्वपक्षे एकहायन्या सोमं क्रीणातीति तृतीयाश्रुत्या गोः क्रयार्थत्वावगमाद् गोद्वारा तदानयनक्रयार्थमिति क्रय एवानयने प्रयोजकः । ननु पदकर्मार्थत्वं गोर्वा तदानयनस्य वा क्वचिद् श्रूयते इति न पदकर्मानयनप्रयोजकमिति सिद्धान्तः । तद्वद् घटस्फोटो न शिलानयनस्य प्रयोजकः किन्त्वौर्ध्वदेहिकमित्यर्थः । शुद्धितत्त्वोक्तविपर्ययपदोपादानफलमाह—*क्रियाकर्तुरिति । पित्रोर्दशाहं कुर्वन् यदि पुत्रो

मायोगाच्च ।

वाराहे—

स्थण्डिले प्रेतभागं तु दद्यात्पूर्वाह्ण एव तु ।
कृत्वा तु पिण्डसंकल्पं नामगोत्रेण सुन्दरि ॥

मरीचिः—

प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् ।
प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः ॥

दर्भवर्जनमनुपनीतपरम्, 'असंस्कृतानां भूमौ पिण्डं दद्या*त्संस्कृतानां कुशेषु' इति प्रचेतसोक्तेः । मिताक्षरायां स्मृत्यन्तरे– *'भूमौ माल्यं पिण्डं पानीयमुपले वा दद्युः' ।

---

मृतः पुत्रान्तरं शेषपिण्डं दद्यात् तदसत्त्वे तु तत्पुत्रः प्रत्यहमादौ स्वपितुः पिण्डं दत्त्वा स्नात्वा पितामहस्य शेषपिण्डं दद्यात् अन्यस्याधिकाराभावात् । दत्तकसत्त्वे यथामतं स वा पौत्रो वा शेषपिण्डं दद्यात् । एवमेवान्यस्मिन् कर्त्तरि । न त्वपकृष्य शेषः समापनीय इत्यर्थः । एतच्च दाक्षिणात्या न मन्यन्ते । सपिण्डने पितामहमृतौ दशाहान्तः पितृमृतौ पितुः संस्कारं कृत्वा पितामहस्य पुनः सर्वं भावयेत् वृत्ते दशाह नैवमिति स्वयमाभिधानस्य मानत्वात् । *संस्कृतानामिति । "संस्तरे दर्भान्" इत्युत्तरग्राह्यं तूपनीतपरमिति भावः । *भूमाविति । सकलस्मृतिपुराणेषु भूमिः कुशास्तीर्णैव "गृहद्वारि तस्मै प्रेताय पिण्डं निर्वपेयुः भूमौ माल्यं पानीयं चोपलिप्तायां दद्युः" इति प्रचेतोवचनाच्चात्रापि उपलिप्तायामित्येव पाठः । केचित्तु भूमावित्यसंस्कृतपरम् । तत्परमेव चोपले इति । पाषणमयदेशे इत्यर्थ इत्याहुः । स्मृत्यन्तरे तु—

भूमौ पिण्डप्रदानं च कर्षूं कृत्वा विधानतः ।

(हा(१)रीतः—

अकृतचूडा ये बाला ये च गर्भाद्विनिःसृताः ।
मृता अनुपनीता ये अनूढा अपि कन्यकाः ॥
ये मृताश्चाप्यसंस्कारास्तेभ्यो भूमौ प्रदीयते ।

पैठीनसिः—

शालिना सक्तुभिर्वापि पिण्याकैर्वापि निर्वपेत् ॥ )

शुनःपुच्छः—

*फलमूलैश्च पयसा शाकेन च गुडेन च ।
*तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत् ॥
*तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च ।
शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ॥
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ।

मदनरत्ने मात्स्ये—

तैजसं मृन्मयं वाथ पात्रं संशोध्य यत्नतः ।
लौकिकाग्नावधिश्रित्य पचेदन्नं घृतप्लुतम् ॥
स्नात्वाऽथ तिलसंमिश्रं प्रदद्याद्दर्भसंस्तरे ॥

शुद्धितत्त्वे देवजानीये च ब्राह्मे—

प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः ।
अन्नं नवसु चान्येषु स एव प्रददात्यपि ॥

---

इत्युक्तम् । प्रादेशमात्रदीर्घश्चतुरङ्गुलविस्तारस्तावदेव निम्नो गर्तः कर्षूः । *फलेति । फलादीनां साक्षादसाधनत्वेऽपि तन्मिश्रितस्य तत्त्वं, परन्तु फलादीनां बहलत्वमावश्यकं प्राधान्यात् । *तिलमिश्रमिति सर्वशेषः सर्पिःसेकोऽप्यावश्यकः । क्षीरसेकस्तु सति सम्भवे । प्रथमेऽह्निकरणे त्वग्रेऽप्यावश्यकः । एतेन—

फलमूलगुडक्षीरतिलमिश्रं तु कुत्रचित् ।

इति ब्राह्मं व्याख्यातम् । मधुस्थाने गुड उक्तः । *तूष्णी-

---

(१) कंसान्तर्गतं नास्ति क० छ०

मृन्मयं भाण्डमादाय नवं स्नातः *सुसंयतः ।
तण्डुलप्रसृतिं तत्र त्रिः प्रक्षाल्य पचेत्स्वयम् ॥
सपवित्रैस्तिलैर्मिश्रं कृमिकेशविवर्जितम् ।
द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वा गौरमृत्तिकाम् ॥
भूपृष्ठे संस्तरे दर्भान् याम्याग्रान्देशसंभवान् ।
ततोऽवनेजनं दद्यात् संस्मरन् गोत्रनामनी ॥
तिलसर्पिर्मधुक्षीरैः संसिक्तं *तप्तमेव हि ।
दद्यात्प्रेताय पिण्डं तु दक्षिणाभिमुखः स्थितः ।
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः ।
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ॥
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ।
सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा ॥
त्र्यहाशौचेऽपि दातव्यास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ॥
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः ।
दशाहेऽपि च दातव्यः प्रथमे त्वेक एव हि ॥
एकस्तोयाञ्जलिस्त्वेवं पात्रमेकं च दीयते ।

---

मिति । प्रसेकोऽर्थः । *सुसंयत इति । एतदुत्तरं—

लकुडं सर्वदोषघ्नं गृहीत्वा तोयमानयेत् ।
ततश्चोत्तरपूर्वस्यामग्निं प्रज्वालयेद्दिशि ॥

इत्येतदनन्तरं तण्डुलप्रसृतिमित्यादि । द्विः प्रक्षाल्य पचेदिति पाठः । *तप्तमिति ।

न याति यावदाकाशं पिण्डाद्बाष्पमयी शिखा ।
तावत्तत्संमुखं तिष्ठेत् सर्वं तोये क्षिपेत्ततः ।

इति ब्राह्मं च द्रष्टव्यम् । तण्डुलेति मुख्यः कल्पः फलमूलैरित्यादिरत्वनुकल्पः । शुद्धां वेति वाकार उपान्त्यदेशानियतार्थः,

द्वितीये द्वौ तृतीये त्रीन्'

*इत्याद्युक्त्वा—

एवं स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् ।

तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः॥इति।

पात्रं कुम्भः । अत्राहःपदमहोरात्रपरम् । तेन रात्रावपि देय इति गौडाः । *दिवसपदाद्रात्रौ नेति मै-

---

"प्रेतपिण्डं बहिर्दद्यात्" इत्युक्तेः ।

ग्रामाद् बहिश्च कर्तव्यं जलाशयसमीपतः ।

पिण्डदानं दशाहानि प्रेतायारण्यमाश्रितैः ॥

इति ब्राह्माच्च । शुनःपुच्छोपि--

द्वारदेशे प्रदातव्यो देवतायतनेषु च । इति ।

गौरमृत्तिकाप्रक्षेपस्तु स्थण्डिलार्थः, "स्थण्डिले" इत्युक्तवाराहात् । मधु क्षौद्रं कलिवर्ज्यमित्याहुः । *इत्याद्युक्त्वेति ।

"चतुर्थे चतुरस्तथा ।

पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त चैव हि ।

अष्टमेऽष्टौ च नवमे नवैव दशमे दश ॥

इत्युक्तेरित्यर्थः । पञ्चपञ्चाशत्तोयाञ्जलिदानं च पिण्डोपरि, द्वितीयतृतीयादिशब्दैः सन्निहितपिण्डानामेवोक्तेः । पिण्डानामवयवपूरकत्वमुक्त्वा--

एकादशैवेन्द्रियाणि सन्ति बुद्धिवधैः(?) सह ।

सर्वेषामेव भूतानां परलोकसमागमे ॥

प्रेतभावगतानां तु रौरवादिषु वर्तताम् ।

पञ्चभिः पञ्चभिस्त्वेभिः पात्रैरञ्जलिभिस्तथा ॥

एकादशैवेन्द्रियाणि पूर्यन्ते शास्त्रदर्शनात् ।

इति ब्राह्मे सपात्राञ्जलीनामिन्द्रियपूरकत्वाभिधानाच्चापूर्वतोयाञ्जलीनां च तापोपशान्त्यर्थत्वात्। अत्रास्वरसं सूचयन्नाह-*दि-

थिलाः। स एवेत्युक्तेः सपिण्डेन दशपिण्डे प्रक्रान्ते पुत्रागमेऽपि स न दद्यात्, *'असगोत्रः सगोत्रो वा' इति प्रागुक्तेः। *दाहकर्तैव दशाहं कुर्यादिति मिताक्षरायामेवसोति। रात्रिमृतौ त्ववयवकरणपिण्डमपवादः। *असगोत्र इति। यः सन्निकृष्टासन्निधानात् प्रथमेऽहनि दद्यात् स मध्ये सन्निकृष्टसन्निधानेऽपि दद्यात् नान्य इत्यर्थः। यत्तु—

स्वगृहे विद्यते पुत्रः पिता ग्रामान्तरे मृतः।
केनापि तत्र चारब्धमग्निपिण्डोदकादिकम्॥
पुत्रः संचयनात् प्राक् चेद् गच्छेदूर्ध्वं स आचरेत्।
स्वगृहे तत्र वा सर्वं प्रेतकार्यं सपिण्डनम्॥

इति मैत्रायणीयपरिशिष्टोक्तेः कथं कर्तृनियम इति? तन्न, तस्य निर्मूलत्वात्। यद्वा कर्ता चेत् पुत्रेण प्रतिषिद्धः सन् दशाहकर्म त्यजति तदा पुत्रो दशाहमावर्तयेत्। पुत्रश्चेद्गच्छेत्तदा सञ्चयनात् प्रागूर्ध्वं च स आचरेदित्यर्थः। सञ्चयनं यदि कृतं तदा पुत्रो न तदाचरेत्, अन्यथा तु तदपि। ननु—

भयस्थानेऽथवा मार्गे मृतस्तत्र च संस्कृतः।
न तिष्ठति जनस्तत्र तत्र पिण्डं च वर्जयेत्॥

इति वाक्यवेद्यदाहास्थिसञ्चयौ संस्कारौ यत्र कृतौ तत्र भयादिना स्थातुमशक्तौ यत्र यत्र प्रेतकार्यकृद्गच्छेत्तत्रैव पिण्डोदकदानादि सपिण्डान्तं कुर्यादित्यापत्तिरितिचेत्? न, दशाहक्रियादेशस्य दाहास्थिसञ्चयदेशबाधेऽपि भेदाऽयोगात्। यदि पित्रोर्दशाहं कुर्वन् पुत्रो रोगेणान्येन वा केनचित्प्रतिबन्धेन समापयितुमशक्तः तदा तत्पुत्रः पितामहस्य दशाहमावर्तयेत्। तस्य पुत्रान्तरसत्त्वे तु स एव। दत्तकसत्त्वे यथामतं स वा पौत्रो वा। मातुः पक्षिणीमध्ये मातृक्रिया कार्या, त्र्यहत्र्यहवृद्धौ त्र्यहाशौचवत्। *दाहकर्तैवेति। पुत्राद्यसन्निधानेऽन्येन दाहे कृते प्रथमपिण्डो-

म् । शुद्धितत्त्वे वायवीयेऽपि—

अमगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
यश्चाग्निदाता प्रेतस्य पिण्डं दद्यात् स एव हि ॥ इति ।

तत्रैव—

*पूरकेण तु पिण्डेन देहो निष्पद्यते यतः ।
कृतस्य करणायोगात् पुनर्नावर्तयेत् क्रियाम् ॥

शुद्धिप्रकाशे वायवीयेऽपि—

निवर्तयति यो मोहात् क्रियामन्यनिवर्तिताम् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते ॥
तस्मात् प्रेतक्रिया येन केनापि च कृता यदि ।
न तां निवर्तयेत्प्राज्ञः सतां धर्ममनुस्मरन् ॥ इति ।

आदिपुराणे—

पितृशब्दं स्वधां चैव न प्रयुञ्जीत कर्हिचित् ।
*अनुशब्दं तथा चेह प्रयत्नेन विवर्जयेत् ॥
उपतिष्ठतामयं पिण्डः प्रेतायेति समुच्चरेत् ।

क्रियानिबन्धे व्यासः—

प्रेताय पिण्डं दत्त्वा तु ततोऽश्नीयाद्दिनात्यये ॥

भविष्ये—

ओदनामिषसक्तूनां शाकमूलफलादिषु ।
प्रथमेऽहनि यद्दद्यात्तद्दद्यादुत्तरेऽहनि ॥
गृहद्वारे श्मशाने वा तीर्थे देवगृहेपि वा ।
यत्राद्ये दीयते पिण्डस्तत्र सर्वं (१)समाचरेत् ॥

---

अक्रमात्पूर्वं पित्राद्यागमनेऽपि दाहकर्तृभिन्नतया निषेधात्कथञ्चिद्-ग्धुर्विपर्यासे क्रियामात्रावृत्तिर्वाचनिकत्वात् । *पूरकेण त्विति । आद्यपिण्डानन्तरं पुत्राद्यागमे देहस्य प्रारब्धत्वात्तन्निष्पत्तावेव यत-

---

(१) 'समापयेत्' ग० ।

ब्राह्मे—

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीयेन तु कर्णाक्षिनासिकाश्च समासतः ॥
गलांसभुजवक्षांसि तृतीयेन यथाक्रमम् ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥
जानू जङ्घे तथा पादौ पञ्चमेन तु सर्वदा ।
सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ॥
दन्तलोमान्यष्टमेन वीर्यं तु नवमेन च ।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ॥ इति ।

याज्ञवल्क्येन तु—

*पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ।

इत्युक्तम् । अत्र फलतारतम्यं ज्ञेयमिति विज्ञानेश्वरः । तेन त्र्यहाशौचपरत्वं देवयाज्ञिकोक्तं चिन्त्यम् ।

आशौचस्य च ह्रासेपि पिण्डान्दद्याद्दशैव तु ।

इति वचनाच्च । दिनत्रयावश्यकत्वार्थमिति हारलतादयः ।

शातातपः—

जलमेकाह*माकाशे स्थाप्यं क्षीरं च मृन्मये ।

पारस्करः—"मृन्मये तां रात्रिं क्षीरोदके विहायसि

---

तेत्यर्थः । *अनुशब्दं ये च त्वामत्रान्विति । *पिण्डयज्ञावृतेति । पितृयज्ञवत् आवृत् अनुष्ठानप्रकारः तया प्राचीनावीतित्वादिना दिनत्रयं प्रेतायान्नं क्षितौ दद्यादित्यर्थः । पितृयज्ञप्रकारोक्तावपि स्वधाशब्दादिनिषेधः पूर्वोक्तः । *आकाश इति । शिक्यादौ द्रव्यद्वयविधानसामर्थ्याद्द्वयोः शरावयोर्भेदेन विधानम् । 'मृन्मये' इति एकवचनादेकत्रैवोभयविधानमिति तु न युक्तम्,

पृथक्शरावयोर्दद्यादेकाहं क्षीरमम्बु च ।

निदध्युः, *प्रेतात्र स्नाहीत्युदकं, पिब चेदमिति क्षीरम्"।
इदं रात्रावेवेति गौडाः । गारुडे तु—

अपक्के मृन्मये पात्रे दुग्धं दद्याद्दिनत्रयम् ।

इत्युक्तम् । हेमाद्रौ पाद्मे तु दशाहमुक्तम्—

*तस्मान्निधेयमाकाशे दशरात्रं पयो जलम् ।
सर्वतापोपशान्त्यर्थमध्वश्रमविनाशनम् ॥

देवजानीये कारिकायाम्—

तत्र प्रेतोपकृतये दशरात्रमखण्डितम् ।
कुर्यात्प्रदीपं तैलेन वारिपात्रं च मार्तिकम् ॥
भोज्याद्भोजनकाले तु भक्तमुष्टिं च निर्वपेत् ।
नामगोत्रेण सम्बुद्ध्या धरित्र्यां पितृयज्ञवत् ॥

शातातपः--

भूलोकात्प्रेतलोकं तु गन्तुं श्राद्धं समाचरेत् ।
तत्पाथेयं हि भवति मृतस्य मनुजस्य तु ॥

अथ दशाहमध्ये दर्शपाते निर्णयः । भविष्ये--

प्रवृताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते ।
समाप्य चोदकं पिण्डान् *स्नानमात्रं समाचरेत् ॥

ऋष्यशृङ्गः—

आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् ।
समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः ॥

पैठीनसिः—

आद्यैन्दावेव कर्तव्या प्रेतपिण्डोदकक्रिया ।
द्विरैन्दवे तु कुर्वाणः पुनः शावं समश्नुते ॥

---

इति गारुडात् । निधानभेदेन मन्त्रभेदमप्याह—*प्रेतात्रेति । *तस्मादिति ।

तस्मात्प्रेतपुरं प्रेतो द्वादशेऽहनि नीयते ।
गृहं पुत्रकलत्रं च द्वादशाहं स पश्यति ॥

मातापित्रोस्तु श्लोकगौतमः—

अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात्पिण्डान् जलाञ्जलीन् ॥

इदमपि त्र्यहमध्ये दर्शपाते । तदूर्ध्वं दर्शे तु पित्रोरपि तन्त्रं समाप्यमेव,

पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् ।
तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात्परम् ॥

इति गालवोक्तेः । अन्येषां तु त्र्यहमध्येपि समाप्तिरिति पराशरमाधवीये निर्णयामृते चोक्तम् । कालादर्शेपि—

दर्शो दशाहमध्ये स्यादूर्ध्वं तन्त्रं समापयेत् ।
त्रिरात्रादुत्तरं पित्रोर्मृताविति विनिश्चयः ॥

मदनपारिजाते तु गालवीयमा*पदनौरसपुत्रादिविषयम् । 'त्र्यहोर्ध्वमपि पित्रोर्न तन्त्रसमाप्तिः' इत्युक्तम् । मदनरत्नेप्येवम् । *मम तु देशाचाराद्व्यवस्थेति प्रतिभाति ।

अथास्थिसंचयः । तत्राश्वलायनेन च कृष्णपक्षे *एकादशीत्रयोदशीदर्शेषु *आषाढाफल्गुनीप्रोष्ठपदाभिन्नर्क्षे उक्तम्, तदाशौचमध्येऽसंभवे तदूर्ध्वं च प्राग-

---

इति पूर्वश्लोकः । *स्नानमात्रं प्राकृपादिकं । *आपादिति । अत्र गौतमीयस्यापदनौरसपुत्रादिपरतया च वैपरीत्यमपि सुवचमित्यस्वरसः । *मम त्विति । इदमापाततः, अत्रोर्ध्वपित्रोस्तन्त्रसमाप्तौ धार्मिकाणां माधवादीनां प्रामाण्यात् ।

"सञ्चयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेके"इत्यस्य "नक्षत्रे"इत्यस्य कृष्णपक्षसम्बन्धिदशम्युत्तरास्वित्यर्थं दर्शयति—*एकादशीति । एकनक्षत्रे इत्यस्यार्थमाह—*आषाढेति ।

न्दा*त्करणे ज्ञेयम् । आशौचमध्ये तु मदनरत्ने संवर्तः—

*प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।
अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह ॥

छन्दोगपरिशिष्टे तु—

अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेत् ।

इति द्वितीयेऽप्युक्तम् । विष्णुकात्यायनौ-'संचयनं चतुर्थ्याम्' इति । माधवीये यमः—

भौमार्कमन्दवारेषु तिथियुग्मे विवर्जयेत् ।
वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसंचयम् ॥
प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ।

ब्राह्मे—

चतुर्थे ब्राह्मणानां तु पञ्चमेऽहनि भूभृताम् ।
नवमे वैश्यजातीनां शूद्राणां दशमात्परम् ॥

दशमेऽहनीति वा पाठः । शौनकः—

पलाशेष्वस्थिदाहे च सद्यःसंचयनं भवेत् ॥

---

*करणे । सपिण्डीकरणे । *प्रथमेन्ह्नीति ।

अनग्निमत उत्क्राते साग्नेः संस्कारकर्मणः ॥
शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथाविधि ।

इत्याङ्गिरसा दिनं गणितम् । वर्णविशेषेण कालव्यवस्थापक्ष-माह ब्राह्मे—

क्वचित्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च ।
पञ्चमे वैश्यजातेश्च शूद्रस्य दशमेऽहनि ॥
अस्थ्नां च सञ्चयः प्रेते क्रियते देशगौरवात् ॥ इति ।

अत्र—

चतुर्थे ब्राह्मणां तु पञ्चमेऽहनि भूभृताम् ।
नवमे वैश्यजातीनां शूद्राणां दशमात् परम् ॥

काम्यमरणे तु--

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ।

इत्युक्तम् । अङ्गिराः---

*प्रेतीभूतं तथोद्दिश्य यः शुचिर्न करोति चेत् ।

देवतानां तु यजनं तं शपन्त्यथ *देवताः ॥

तद्विधिः स्वस्वसूत्रे भट्टकृतौ च ज्ञेयः ।

हेमाद्रौ नागरखण्डे---

त्रीणि सञ्चयनस्यार्थे तानि वै शृणु साम्प्रतम् ।

यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं प्रकल्पयेत् ॥

एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ।

ततः संचयनस्यार्थे तृतीयं श्राद्धमिष्यते ॥

अपरार्के मदनरत्ने च ब्राह्मे--

सद्यःशौचे तथैकाहे सद्यःसंचयनं भवेत् ।

त्र्यहाशौचे तृतीयेऽह्नि कर्तव्यस्त्वस्थिसञ्चयः ॥

*तत्रैव—

*श्मशानदेवतायागं चतुर्थे दिवसे चरेत् ।

मृन्मयेषु च भाण्डेषु कुम्भेषु रुचकेषु वा ॥

सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा ।

फलैर्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः ॥

---

इति तु प्रमादपाठ इत्यग्रे स्फुटम् । द्वादशाहे सपिण्डने आशौचमध्य एव सञ्चयनं, "तदुत्तरं श्राद्धं चास्मै दद्युः" इत्येकोद्दिष्टविधानात् सपिडनानन्तरं तन्निषेधात् । *प्रेतीभूतमिति ।

अस्थिसञ्चयने यागो देवानां परिकीर्तितः ।

इति पूर्वार्द्धम् । यागः पूजा । *देवता इति ।

श्मशानवासिनो देवाः शवानां परिकीर्तिताः ।

इत्युत्तरार्द्धम् । श्मशानदेवतापूजाप्रकारमाह—*तत्रैवेति । *श्मशानेति ।

धूपो दीपस्तथा माल्यमर्घ्यं देयं त्वरान्वितैः ।
तत्र पात्राणि पूर्णानि श्मशानाग्नेः *समन्ततः ॥
निवेदयद्भिर्वक्तव्यं तैः सर्वैरनहंकृतैः ।
नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ॥
येऽत्र श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम ॥
प्रेतस्यास्य शुभान् लोकान् प्रयच्छन्तु च शाश्वतान् ।
अस्माकमायुरारोग्यं सुखं च ददतां चिरम् ॥
एवं कृत्वा बलीन्सर्वान्क्षीरेणाभ्युक्ष्य *वाग्यतैः ।
एवं दत्त्वा बलिं चैव दद्यात्पिण्डत्रयं बुधः ॥
एकं श्मशानवासिभ्यः प्रेतायैव तु मध्यमम् ।
तृतीयं तत्सखिभ्यश्च दक्षिणासंस्थमादरात् ।
ततो यज्ञियवृक्षोत्थां शाखामादाय *वाग्यतः ।
प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च ॥

---

स्नात्वा त्रिरात्रं कुर्वन्ति प्रेतायोदकतर्पणम् ।

इति पूर्वार्द्धम् । *समन्तत इति ।

कैश्चिद्देयानि सर्वाणि पानीयान्यक्षतानि च ।

इत्युत्तरार्धम् । धूपैः इत्यारभ्य प्रत्येकं कैश्चिदित्यस्यान्वयादार्थक्रमेणार्थो युक्तः । पुष्पाणि मालाः धूपो दीपः तण्डुलादिपूर्णपात्राणि केषुचित्पात्रेषु प्रणीयानि यवाद्यक्षताश्चेति पूजाङ्गानि भिन्नभिन्नपुरुषैः खलेकपोतन्यायेन दातव्यानि । अत एव त्वरान्वितैः निवेदयद्भिरिति बहुत्वम् । भक्षभोज्यपायसपानकफलमूलात्मको बलिः, प्रधानभक्ष्यादीनां पूजाकरणत्वोक्तेः । *वाग्यतैरिति ।

विसर्जनं च देवानां कर्तव्यं च समाहितैः ।

इत्युत्तरार्धम् । *वाग्यत इति ॥

अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः ।

*शिरसो वक्षसः पाण्योः पार्श्वाभ्यां चैव पादतः ।
पञ्चगव्येन संस्नाप्य क्षौमवस्त्रेण वेष्ट्य च ॥
प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे ।
अरण्ये वृक्षमूले वा शुद्धे संस्थापयत्यपि ॥
गृहीत्वाऽस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ।
ततः संमार्जनं भूमेः कर्तव्यं गोमयाम्बुभिः ।
पूजां च पुष्पधूपाद्यैर्बलिभिः पूर्ववत्क्रमात् ॥ इति ।

अथ तीर्थेऽस्थिक्षेपविधिः । तत्रैव—

*तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले ।
कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ॥
मातृकुलं पितृकुलं वर्जयित्वा *नराधमः ।
अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत् ॥

तत्रैव ब्रह्माण्डपुराणे—

अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये कथंचित् ।
सद्बान्धवस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥

*स्नात्वा ततः पञ्चगव्येन सिक्त्वा

---

इत्युत्तरार्धम् । प्रधानाङ्गान्याह—*शिरस इति ।

अप्रदक्षिणमस्थीनि गृण्हातीत्यादिगोभिलः ।

इत्युत्तरार्धम् । गर्ते इति पाठः । तोये इति पाठे वर्षाकालादन्यत्रेति बोध्यम् ।

भूमेराच्छादनार्थं च वृक्षः पुष्करकोऽपि वा ।
पादिको वा प्रकर्तव्यः तत्र सर्वैर्विधानतः ॥

इति ग्रन्थान्तरे । पुष्करः पुष्करिणी । पादिकः चत्वरः । संचितास्थिप्रतिपत्तिमाह—*तत्स्थानादिति । वैधानिखातस्थानादित्यर्थः । *नराधम इति । भृतिग्रहणे । अत एव सद्बान्धवस्यापीति अपिना तदितरस्यापि समुच्चयात् । सत्त्वं चेह स्वाचारशा-

हिरण्यमध्वाज्यतिलैश्च योज्य ।
ततस्तु मृत्पिण्डपुटे निधाय
पश्यन् दिशं प्रेतगणोपरूढाम् ॥
नमोस्तु धर्माय वदेत्प्रविश्य
जलं स मे प्रीत इति क्षिपेच्च ।
*उत्थाय भास्वन्तमवेक्ष्य सूर्यं
स दक्षिणां विप्रमुखाय दद्यात् ॥
एवं कृते प्रेतपुरःस्थितस्य ।
*स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या ॥

यमः—

गङ्गातोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः ।
न तस्य पुनरावृत्ति*र्ब्रह्मलोकात्सनातनात् ॥

तथा—

*अस्तं गते गुरौ शुक्रे तथा मासे मलिम्लुचे ।
गङ्गायामस्थिनिक्षेपं न कुर्यादिति गौतमः ॥

---

लित्वमबान्धवेऽपि । *स्नात्वेति । तीर्थपात्रप्रक्षेपे । *उत्थायेति ।

स्नात्वा तथोत्तीर्य दिवाकरं च दृष्ट्वा प्रदद्यादथ दक्षिणं तु ।

इति सेतुः । *स्वर्गे इति । अन्यत्रापि—

यस्मिन् काले नृणामस्थि गङ्गायां क्षिप्यते नृभिः ।
तं कालमादितः कृत्वा स्वर्गलोके भवेत् स्थितिः ॥ इति ॥

अत्रोत्तरावध्यसत्त्वात्कल्पांतोऽवधिः । *ब्रह्मेति । प्रयागादि-
क्षेत्रविशेषे ब्रह्मलोकः अन्यथा स्वर्गः ।

भविष्ये—

कावेरी तुङ्गभद्रा च कृष्णवेणी च गौतमी ।
जान्हवी चेति विख्याताः पञ्च गङ्गाः प्रकीर्तिताः ॥

इत्युक्तम् । *अस्तं गते इति । प्रथमाब्दे न निषेध इति

*दशाहान्तर्न दोषः,

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ॥

इति मदनरत्ने वृद्धमनूक्तेः ।
शौनकः—

शौनकोऽहं प्रवक्ष्यामि अस्थिक्षेपविधिं क्रमात् ।
आदौ ग्रामाद्बहिर्गत्वा स्नानं कुर्यात्सचैलकम् ॥
प्रोक्षयेत्पञ्चगव्येन भुवं मन्त्रैर्विचक्षणः ।

*गायत्र्याद्यैः पञ्चगव्यमन्त्रैर्निखातास्थिभूमिं प्रोक्षेदित्यर्थः ।

उपसर्पादिभिर्मन्त्रैः प्रार्थनं खननं तथा ।
मृत्तिकोद्धरणं चास्थ्नां ग्रहणं च यथाक्रमम् ।

उपसर्पेति चतुर्भिर्मन्त्रैः क्रमेण प्रार्थनादि ज्ञेयम् ।

*स्नात्वाऽस्थिशुद्धिं कुर्वीत *एतोन्विन्द्रेति सूक्ततः ।
स्पृष्ट्वा स्पृष्ट्वा ततः स्नानं पञ्चगव्येन शुध्यति ॥
*दश स्नानानि कुर्वीत *तत्तन्मन्त्रैर्विचक्षणः ।

---

वक्ष्यति । *दशाहन्त इति गङ्गारहितग्राममृतस्य तु गङ्गातीरे दाहसम्भवे तत्र शवो नेयः । तदनयने तु पिण्डदानादिकमारभ्य प्रक्षेपः । दशाहमध्ये गङ्गाप्राप्त्यसंभवे तु सपिण्डनोत्तरमेव, आरब्धप्रेतकर्मणो देशैक्यनियमात् । द्वादशाहोत्तरसपिण्डने त्वेकादशाहोत्तरमपि । *गायत्र्याद्यैरिति । आदिना गन्धद्वाराम् आप्यायस्व दधिक्राव्णः घृतं मिमि इति ग्रहः । गोमूत्रगोमयपयोदधिसर्पींषि पञ्चगव्यम् । सेतौ तु पयोदधिगोमूत्रगोमयसर्पींषि तत्तन्मन्त्रैरुक्तानि । *स्नात्वेति । जलाशयेऽस्थिसहित इत्यादिः ।

ततो जलाशयं गत्वा स्नानं कुर्याद्यथाविधि ।

इति सेतौ वचनात् । *एतोन्वेति । एतोन्विन्द्रेति सूक्तेन स्पृष्ट्वा पञ्चगव्येन स्पृष्ट्वा प्रक्षाल्य शुध्यति ततः शुद्धोदकेन स्नापयेदित्यर्थः । *दशेति । सास्थिरित्यादि । *तत्तन्मन्त्रैः । गा-

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
भस्म मृन्मधु वारीणि मन्त्रतस्तानि वै दश ॥
कुशैः संमार्जयेदस्थीन्यतोदेवेति मन्त्रतः ।
*एतोन्विन्द्रं शुचिवेति नतमंह इतीति च ॥
पावमानीर्मिमाग्ने च रुद्रसूक्तं यथाक्रमम् ॥
*एतैः कुशैर्मार्जनम् ।
हेमश्राद्धं ततः कुर्यात्*पितॄनुद्दिश्य यत्नतः ।
पिण्डदानं प्रकुर्वीत ततश्च तिलतर्पणम् ॥
अस्थिक्षेपाङ्गं चेदम् ।
*अजिनं कम्बला दर्भा गोकेशाः शाण एव च ।

---

यव्या गोमूत्रम् , गन्धद्वारामिति गोमयम् , आप्यायस्वेति पयः दधिक्राव्ण इति दधि, घृतं मिमिक्ष इति घृतम्, आपोहिष्ठेति कुशोदकम् । देवस्य त्वेति केचित् । मानस्तोके इति भस्म, "बाळित्था पर्वतानाम्" इति अश्वक्रांते इति इत्यादिभिर्वा मृत्, मधुवातेति मधु आपोहिष्ठेति कुशोदकम् । *एतोन्विन्द्रमिति । एतोन्विन्द्रमिति तृचं शुचीवोहव्येति तृचं नतमंह इति अष्टर्चम् "इति मे मन" इति त्रयोदशर्चं यदन्ति यच्चेति तृचं ममाग्ने वर्च इति नवर्चं कद्रुद्रायेति नवर्चं च सूक्तम् । मन्त्रत इति विशेषोक्त्याऽतोदेवेत्यत्रैव सूक्तसम्बन्धाभावात् । *एतैरिति । प्रतिमन्त्र इति यावत् । *पितॄनिति । यदस्थीनि तद्दैवत्यम् । कृते सापिण्डने पार्वणं पुरूरवार्द्रवौ विश्वेदेवाः । सक्तुभिः तण्डुलेन वाऽग्नौकरणं, सक्तुभिः पायसेन वा पिण्डदानम् । अकृते सपिण्डने त्वेकोद्दिष्टम् । नमो वः पितर इति मन्त्रे इषेपदस्थाने हेम्ने इत्यूहः । स्मृत्युक्तप्रकारे तु "उशन्तस्त्वा" इत्यादिमन्त्रेष्वपि ऊहः । श्राद्धांते यद्दैवत्यं श्राद्धं तद्दैवत्यं तिलतर्पणम् । यक्षकर्दमादिलेपः पुष्पैः पूजा च । *अजिनमिति ।

भूर्जपत्रं ताडपत्रं सप्तधा वेष्टनं स्मृतम् ॥
हेमं च मौक्तिकं रौप्यं प्रवालं नीलकं तथा ।
निक्षिपेदस्थिमध्ये तु शुद्धिर्भवति नान्यथा ॥
ततो होमं प्रकुर्वीत तिलाज्येन विचक्षणः ।
*उदीरतेति सूक्तेन हुनेदष्टोत्तरं शतम् ॥
ततो गत्वा क्षिपेत्तीर्थे स्पर्शदोषो न विद्यते ।
मूत्रं पुरीषाचमनं कुर्वन्नास्थीनि धारयेत् ॥

अत्र दशदानं वैतरणीऋणमोक्षपापधेनुदानमुक्तम् । दिवोदासीये काशीखण्डे—

धनञ्जयोऽपि धर्मात्मा मातृभक्तिपरायणः ।
आदायास्थीन्यथो मातुर्गङ्गामार्गस्थितोऽभवत् ॥

---

अजिनं कम्बला दर्भा गोकेशा भूर्जपत्रकम् ।
ताडपत्रं च नेत्रं चेत्यस्थ्नां वेष्टनसप्तकम् ॥

इति पाठान्तरम् । *उदीरतेति । सूक्तग्रहणात्सूक्तस्याष्टोत्तरशतमावृत्तयः । एकमन्त्राणि कर्माणीति न्यायेन ऋगन्त एव होमः । होमसंख्याबाहुल्येऽपि यावद्वचनन्यायाददोष इत्येके । चतुर्दशऋगात्मकमुदीरतेति सूक्तं तस्य ऋगन्ते होमात्सप्ताष्टस्याऽष्टनवतिहोमान् संपाद्य पुनरुदितिमन्त्रैर्दशभिर्हुत्वाऽष्टोत्तरसंख्यापूर्तिः अवशिष्टमन्त्रचतुष्टयत्यागः । अत एवाग्निमुखं कृत्वा शताष्टकृत्व इति बौधायनसूत्रे शतंचाष्टचेति अष्टोत्तरशतं तत्पूरणाय षडर्चसूक्तस्याष्टादशावृत्तयः कार्याः । एवं चाश्विनं कपालमित्यादौ अतिदेशप्राप्तानां कपालोपधानमन्त्राणां बहुत्वेऽपि आद्यद्वितीयमन्त्राभ्यां कपाले उपधाय शेषमन्त्रलोपवदिति कौस्तुभे इत्यन्ये । होमशेषं समाप्य ताम्रसंपुटेऽस्थीनि निदध्यात् । ततः चण्डालपतितश्वासोक्तशौचाचमने कृत्वा तानि गृण्हीयात् । ततस्तीर्थे सास्थि स्नात्वा पलाशपत्रपुटेऽस्थीनि निधाय अमुकगोत्रस्या-

पञ्चगव्येन संस्नाप्य तथा पञ्चामृतेन वै ।
यक्षकर्दमलेपेन लिप्त्वा पुष्पैः प्रपूज्य च ॥
आवेष्ट्य (१)तत्र वस्त्रेण ततः पट्टाम्बरेण च ।
ततः सुरसवस्त्रेण ततो माञ्जिष्ठवाससा ॥
नेपालकम्बलेनाथ मृदा चाथ विशुद्धया ।
ताम्रसंपुटके कृत्वा मातुरङ्गान्यथो वहत् ॥

व्यासः—

पट्टवस्त्रं च कौशेयं माञ्जिष्ठं श्वेतवस्त्रकम् ।
कम्बलं शाणपट्टं च अजिनं च तथोत्तरम् ॥

*एषां विकल्पः । अन्यश्चात्र विशेषस्त्रिस्थलीसेतौ दिवोदासीये च ज्ञेयः । संचयनोत्तरं श्राद्धमाहाश्वलायनः—'श्राद्धमस्मै दद्युः' इति । स्मृत्यर्थसा-

मुकशर्मणोऽपुनरावृत्तिब्रह्मलोकावाप्तये गङ्गायां मोक्षप्राप्तये तीर्थान्तरे अस्थिनिक्षेपं करिष्ये इति सङ्कल्प्यास्थीनि तूष्णीं पञ्चगव्येन प्रक्षाल्य शुद्धोदकेन स्नापयित्वा हिरण्यशकलमधुघृततिलैर्मिश्रीकृत्य मृत्पेटिकायां संस्थाप्य दक्षिणतोऽवेक्ष्यमाणो नाभिमात्रजलस्थो नमोस्तु धर्मराजाय स मे प्रीतोऽस्त्विति मन्त्रेण निक्षिप्य जलाद्बहिरागत्य सूर्यं दृष्ट्वा नत्वा च हरिं स्मृत्वा यज्ञोपवीती अमुकगोत्रशर्मणः कृतास्थिनिक्षेपस्य साद्गुण्यायेदं रजतं पितृदैवत्यं चन्द्रदैवत्यं सम्प्रददे इति यथाशक्ति दक्षिणां ब्राह्मणाय दद्यात् । पितृकृत्यत्वाद्रजतम् । अस्थिग्रहणादि प्रक्षेपान्तं दक्षिणावर्तं प्राचीनावीती कुर्यात् । *एषामिति । वेष्टनसाधनानां वेष्टनक्रमाणां चेत्यर्थः । तीर्थमात्रेऽयं विधिः, प्रयागे तु अत्यावश्यकः । अस्थिक्षेपोत्तरमेव तीर्थविधिरिति दिवोदासः । अन्ये तु तीर्थकृत्यानन्तरमास्थिक्षेपः, तीर्थश्राद्धादौ तिलस्वनिषेधात् 'आगन्तु-

(१) 'नेत्रवस्त्रेण' ग० ।

रे—'संचयने कृते म(१)नुष्यलोकात्प्रेतलोकं गच्छतः पाथेयश्राद्धमामेन कार्यमिति । अनुपनीतस्य न संचयनम्' ।

अथ नवश्राद्धम् । पृथ्वीचन्द्रोदयेऽङ्गिराः—

प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥

शिवस्वामी—

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।
आपस्तम्बाः षडित्याहु*र्विभाषा त्वितरेषु हि ॥

पञ्च एकादशाहिकं विना, *'मरणाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं कुर्यादानवमात्, यदि नवमं विच्छिद्येतैकादशे तत्कुर्यात् ।' इति मदनरत्ने बौधायनोक्तेः ।

भविष्ये—

नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः ॥

हेमाद्रौ वृद्धवसिष्ठः—

*अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्नैव मुच्यते ।

---

नामन्ते निवेशः' इति न्यायाच्चेत्याहुः । वस्तुतस्तु अस्थिप्रक्षेपफलोद्देशेन चेद्गतः तेनादौ स एव कार्यः, उद्देश्यकृतश्राद्धादिविलम्बस्य तच्छ्राद्धेणाभ्यनुज्ञातत्वात् : अत्र तीर्थनिमित्तकक्षौरादिकृत्यान्यपि पश्चादेव । यस्तु तीर्थफलोद्देशेन गच्छन् अनुषङ्गादस्थीनि नयति स सकलतीर्थकृत्यानन्तरं तानि निक्षिपेदिति मयूखे । संक्षिप्तोऽस्थिनिक्षेपप्रयोगस्तत्रैव द्रष्टव्यः । *विभाषा त्वितरेषु हीति । विभाषामैतरेयिण इति रघुनाथपाठः । *मरणादिति । नवश्राद्धानि पञ्च । नवमदिनकर्तव्यं तु तत्रासम्भवे एकादशे-

---

(१) 'मनुष्यलोकं गच्छतः' क० घ० ।

अर्वाक् तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतम् ॥

अतः षडेव। एतान्येव विषमश्राद्धानीत्युच्यन्ते। नागरखण्डे तु—

*पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा।
दशमैकादशे चैव नवश्राद्धानि तानि च ॥

इत्युक्तम्। कात्यायनस्तु—

चतुर्थे पञ्चमे चैव नवमैकादशे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

प्रथमे सप्तमे चैवेत्याद्यपादे व्यासपाठः। बह्वृचानां तु—

*नवश्राद्धं दशाहानि नवमिश्रं तु षड्ऋतून्।

---

ऽन्हि कार्यमित्यर्थः। नवश्राद्धानां प्रेतत्वनिवर्तकतामाह—*अलब्ध्वेति। षट् पञ्च वा नवश्राद्धानि। अनयोः पक्षयोर्व्यवस्था च शिवस्वाम्युक्तैवेत्यन्ये। *पञ्चमे इति। त्रीणि सञ्चयनस्यार्थे इत्यादि प्रागुक्तश्राद्धत्रयसाहित्यमिह विवक्षितम्। तथाच नवत्वसंख्यालाभः। चतुर्थाहनवश्राद्धे त्वन्यदपि देयम्,

चतुर्थेऽहनि विप्रेभ्यो देयमन्नं हि बान्धवैः।
गावः सुवर्णं वित्तं च प्रेतमुद्दिश्य शक्तितः ॥
(?)यदीनृङ्गीवतश्चासीन्न दद्यात्तस्य यत्नतः।

इति बृहस्पत्युक्तेः। क्षत्रियादिभिस्तु पञ्चमादिषु,

चतुर्थे ब्राह्मणानां च पञ्चमेऽहनि भूभुजाम्।
नवमे वैश्यजातीनां शूद्राणां दशमात्परे।

इति ब्रह्माण्डात्। शय्यादिकं त्वेकादशाह एव। अत्रिणा त्वेकमेवोक्तम्—

नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि। इति।

*नवश्राद्धमिति। नवश्राद्धं नवनवमिश्रपुराणभेदात्त्रिधा। प्रथमाद्येकादशाहान्तं नवम्। षड्ऋतूनमासिकानि न-

इत्युक्तं नारायणवृत्तौ । दीपिकायाम्—'अथ तनुयाद्यान्ये चतुर्थे दिने श्राद्धं पञ्चमसप्तमाष्टनवदिग्रुद्रेषु *युग्मद्विजैः' ।

*प्रथमेह्नि तृतीयेऽह्नि पञ्चसप्तनवस्वपि ।
द्वौ द्वौ पिण्डौ प्रदातव्यौ शेषेष्वेकं तु विन्यसेत् ॥

एको विषमश्राद्धेऽवयवपिण्डश्चैक इति द्वावित्यर्थः ।

---

व्यमिश्रम् । 'षड्डुत्तरम्' इति पाठे नवश्राद्धानामुत्तरत्र उपरि कर्तव्यमित्यर्थः ।

अतः परं पुराणं च त्रिविधं श्राद्धमुच्यते ।

इत्युत्तरात्प्रत्याब्दिकात्तृतीयमित्यर्थः । संज्ञाकरणं "चान्द्रायणं नवश्राद्धे" इत्यादिप्रायश्चित्तविशेषविधानार्थम् । *युग्मद्विजैरिति । यद्यपि नवश्राद्धानाम्—

नव श्राद्धानि कुर्वीत प्रेतोद्देशेन यत्नतः ।
एकोद्दिष्टविधानेन नान्यथा तु कदाचन ॥

इति ब्रह्माण्डपुराणात्सपिण्डनप्राग्भावित्वाच्चैकोद्दिष्टत्वं, तथापि—

पञ्चमे नवमे चैव तथैवैकादशेऽहनि ।
युग्मांस्तु भोजयेद्विद्वान्नवश्राद्धं तु तद्विदुः ॥

इति कौर्मवचनाद्ब्राह्मणयुग्मं कार्यम् । अत्रानुक्तेष्वपि युग्मद्विजा एव, नवश्राद्धं तु तद्विदुरित्युक्तत्वात् । एतेन—

अयुग्मान् भोजयेद्विप्रांस्तन्नवश्राद्धमुच्यते ।

इति शूलपाणिः । *प्रथमेऽह्नीति । एतेन—

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
द्वौ द्वौ पिण्डौ प्रदातव्यौ शेषास्तु दशमेऽहनि ॥

इति व्याख्यातम् । द्वितीयाद्यवयवपिण्डाः क्रमेण दशमेऽह्नि समापनीया इति चतुर्थपादार्थात् । ननु नवश्राद्धे कः पक्ष आश्र-

*अत्र शाखाभेदाद्व्यवस्था ।

अपरार्के भविष्ये—

नवश्राद्धं त्रिपक्षं च षण्मासं मासिकानि च ।
न करोति सुतो यस्तु तस्याधः पितरो गताः ॥

वाराहे—

*गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः ।
मनसा वायुभूतेन विप्र त्वाहं नियोजये ॥
पूजयिष्यामि भोगैस्त्वामेवं विप्रं निमन्त्रयेत् ॥

आवाहनेऽपि तत्रैव—

इहलोकं परित्यज्य गतोसि परमां गतिम् ।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥ इति ।

तत्रैव बह्वृचपरिशिष्टे—

अनूदकमधूपं च गन्धमाल्यविवर्जितम् ।
नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम् ॥

उदकमर्घ्यः । पिण्डोदकं 'शुन्धन्तां पितरः' इत्य*-वनेजनादिः ।

*एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम् ।
नाग्नौकरण(१)मन्त्रश्च एकं वाथ तिलोदकम् ॥

---

णीय इत्यत आह—*अत्रेति । यहि गृह्येषु नवश्राद्धान्युक्तानि तदा एतान्येव कार्याणि, अन्यथाऽऽङ्गिरसोक्तानि, आचारात् । नागरखण्डाद्युक्तानि तु यत्र तदाचारस्तत्रैवेत्यर्थः । *गतोसीति । द्वयमैकादशाहिकश्राद्धे । *अवनेजनादीति । आदिना प्रत्यवनेजनग्रहः । *एकोद्दिष्टेषु सर्वेष्विति । यद्यपि याज्ञवल्क्यादिभिरेकोद्दिष्टसामान्ये 'अभिरम्यताम्' इति विसर्जनमन्त्र उक्तः गोभिलेनापि "अभिरम्यताम् इति [illegible]

---

(१) 'मन्त्राश्च एक चार्थ'क० ।

अनपत्येषु सर्वेषु न स्वधा नाभिरम्यताम् ।
स्वस्त्यस्तु विसृजेद्देवं सकृत्प्रणववर्जितम् ॥
एकोद्दिष्टस्य पिण्डे तु *अत्रशब्दो न विद्यते ।
पितृशब्दं न कुर्वीत पितृहा चोपजायते ॥

सपिण्डनात्प्रागिति हेमाद्रिः । तेन—

न च स्वधां प्रयुञ्जीत प्रेतश्राद्धे दशाहिके ।

इति ऋष्यशृङ्गोक्तौ दशाहिकोक्तेरेकादशाहे स्वधाप्रयोग एवेति हारलता परास्ता ।

रत्नावल्याम्—

आशिषो द्विगुणा दर्भा जयाशीः स्वस्तिवाचनम् ।
पितृशब्दः (१)स्वसम्बद्धः शर्मशब्दस्तथैव च ॥
*पात्रालम्भो*ऽवगाहश्च उल्मुकोल्लिखनादिकम् ।
तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा ।
अष्टादश पदार्थां*श्च प्रेतश्राद्धे विवर्जयेत् ॥

अत्र स्वधापितृनमः*शब्दानां "तिलोऽसि" इतिमन्त्रे *प्रेतशब्दोहेन तूष्णीं वा तिलावपनम् । *तूष्णीमर्घ्यम्

---

प्रेतश्राद्धम्" इति विशेषतोऽपि तथापि आश्वलायनानां प्रेतश्राद्धे न भवति तत् परिशिष्टे तन्निषेधात् मन्त्रान्तरविधानाच्चेत्याशयः । *अत्रशब्दः अत्र 'पितरो मादयध्वम्' इति मन्त्रः । 'अनुशब्दो न विद्यते' इति पाठे 'ये च त्वामत्रानु' इतिमन्त्रः । *पात्रालम्भः समन्त्रः । *अवगाहः द्विजाङ्गुष्ठनिवेशनम् । महैकोद्दिष्टप्रयोगमाह—*चेति । *शब्दानामिति । इदमुपलक्षणं न धूर्यादयो नाभिश्रवणं न श्राद्धशेषभोजनमित्यपि बोध्यम् । *प्रेतशब्दोहेन—मन्त्रः प्रेतमिमानित्यूहः—*तूष्णीमिति । अमुकगोत्रामुकप्रेत

---

(१) 'स्वसम्बन्धः' क० छ० ।

दानम् । अमुष्मै स्वाहेति प्रेतनाम्ना पाणिहोमः *नाम्ना एकः पिण्डः । निनयनमन्त्रे ऊहः । अनुमन्त्रणादि त्वमन्त्रकम् । अभिरम्यतामिति विसर्जनम् । एवं *नवश्राद्धवर्जैकोद्दिष्टेषु । 'नवश्राद्धे त्वमन्त्रकं सर्वम्' इति नारायणवृत्तिः । क्रियानिबन्धे--

उत्तानं स्थापयेत्*पात्रमेकोद्दिष्टे सदा बुधः ।
न्युब्जं तु पार्वणे कुर्यात्तस्योपरि कुशान्न्यसेत् ॥
*नवश्राद्धं गृहे कुर्याद्द्वार्यां यत्राग्नयोऽपि वा ।
सपिण्डीकरणान्तानि प्रेतश्राद्धानि यानि वै ॥
तानि स्युर्लौकिके वह्नावित्याह त्वाश्वलायनः ॥

इदं सम्भवे*ऽन्नेन कार्यम्,

नवश्राद्धेषु य*च्छिष्टं *ग्रहपर्युषितं च यत् ।
दंपत्योर्भुक्तशेषं च न तद्भुञ्जीत कर्हिचित् ॥

इत्यङ्गिरोवचनालिङ्गात् ।

द्वाभ्यां तदा तु कृच्छ्राभ्यां शुद्धिः स्यात्तु द्विजन्मनाम् ।

इति ब्राह्मे उक्तम् । विघ्ने तु निर्णयामृते कण्वः--

नवश्राद्धं मासिकं च यद्यदन्तारितं भवेत् ।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥

हेमाद्रौ गालवः--

शावे तु सूतकं चेत्स्यान्निशायां च मृतौ तथा ।

---

मैहैकोद्दिष्टे इदमर्घ्यं तत्रोपतिष्ठतामिति सङ्कल्प्यापोशनादि दद्यात् । *नाम्नेति । अमुकगोत्रामुकप्रेताऽयं ते पिण्डमुपतिष्ठतामिति मन्त्रः । *नवश्राद्धवर्जेति । नवश्राद्धभिन्नेत्यर्थः । *पात्रम् । अर्घ्यस्य । *नवश्राद्धमिति । प्रयोगोऽन्त्येष्टिपद्धतौ बोध्यः । *अन्नेनेति । सम्भुक्ते[illegible]प्युक्तैव निष्कृतिः । *शिष्टं शेषः । *ग्रहः ग्रहणम् । निशायां मृतावित्यन्यथाऽऽदाह--

नवश्राद्धानि देयानि यथाकालं यथाक्रमम् ॥

निशायामाशौचान्ते*ह्यहवृद्धौ । अन्वारोहणे तु—

नवश्राद्धानि सर्वाणि सापिण्डीकरणं पृथक् ।
एक एव वृषोत्सर्गो गौरेका तत्र दीयते ॥

आशौचान्त्यदिने कार्यमुक्तं ब्राह्मे—

यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः ।
स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि ॥
समाप्य दशमं पिण्डं प्रेतस्पृष्टे तु वाससी ।
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोत्यपि ॥
श्मश्रुलोमनखानां च यस्याज्यं तज्जहात्यपि ।
गौरसर्षपकल्केन तिलकल्केन संयुतम् ॥
शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः ।
वृषभं गां सुवर्णं च स्पृष्ट्वा शुद्धो भवेन्नरः ॥

क्रियानिबन्धे गृह्यकारिकायाम्—

*अत्र पिण्डत्रयं दद्युस्तत्सखिभ्यस्तथाऽऽदिमम् ।
प्रेताय मध्यमं तद्वत्तृतीयं च यमाय वै ॥

तथा—

कर्ताऽत्र प्रार्थिताः सन्तो ज्ञातिसंबन्धिबान्धवाः ।
दद्युरभ्यङ्गतः पूर्वं त्रींस्त्रीन्धर्मोदकाञ्जलीन् ॥
पूर्ववन्नामगोत्राभ्यां नियमो नेह कश्चन ॥

मदनरत्ने विष्णुहारीतौ—'आशौचान्ते कृतश्मश्रुकर्माणास्तिलकल्कैः सर्षपकल्कैर्वा स्नाताः शुक्लवाससो गृहं

---

*ह्यहवृद्धाविति । यद्यपि तत्र पुत्रस्याग्निदस्य च पूर्णमेवाशौचं तथाप्यन्यस्मिन् क्रियाकर्त्तरि तद् द्रष्टव्यम् । *अत्रेति । अत्र पञ्च कुम्भाः स्थाप्याः । तत्र मध्यमे प्रेताय पूर्वे प्रेतसखिभ्यः दक्षिणे यमाय पश्चिमे वायसायोत्तरे प्रेताधिपतये तद्राजायेति पञ्च पिण्डा इति प्रका-

प्रविशेयुस्तत्र *शान्तिकं कृत्वा ब्राह्मणपूजनं कुर्युः।' इति।

देवलः—

*दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत्।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च॥

अपरार्के बृहस्पतिः—

*नवमे वाससां त्यागो नखरोम्णां तथान्तिमे।

तत्रैव व्यासः—

आशौचान्त्यदिने क्षौरं जनन्या च गुरौ मृते।

एतत्प्रेतालपवयसामित्याहापस्तम्बः—*'अनुभाविनां च (१)परिवापनम्' इति। अनुभाविनः कनिष्ठा इति विज्ञानेश्वररत्नाकरादयः।

आशौचमनुभवतां पुंसां सर्वाशौचे तु मुण्डनम्।
आज्ञया नरपतेर्द्विजन्मनां दारकर्ममृतसूतकेषु च।
बन्धमोक्षमखदीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु॥

इति रत्नमालोक्तेर्जननाशौचेऽपीति शुद्धितत्त्वादयः। अत्र देशाचारतो व्यवस्था। परि शिखावर्जम्, 'केशश्मश्रुलोमनखानि वापयीत शिखावर्जम्' इति गोभिलोक्तेः। यत्त्वापस्तम्बः—'न समावृत्ता वपेयुरन्यत्र विहारादित्येके'। विहारो दर्शादियागः। तेन विना समावृत्ता गृहस्था न वपेयुरित्यर्थः। यच्च—

वृथा छिनत्ति यः केशांस्तमाहुर्ब्रह्मघातिनम्। इति,

---

रान्तरमन्त्येष्टौ। *शान्तिकं सपिण्डनोत्तरपाथेयश्राद्धानन्तरम्। *दशमेऽहनीति। अन्त्यदिने इत्यर्थः। उपान्त्यदिनं विकल्पयति—*नवमे इति। वाससां त्यागो निर्णेजकादौ निर्णेजनार्थः। *अनुभाविनां चेति। दशमेऽहनीति पूर्वोक्तदेवलवाक्याद्दशमदिने वपने प्राप्ते अनेन मृतकनीयःसपिण्डानां तन्नियम्यते। एवं च

---

(१) 'परिवपनम्' ग०

तत्—

केशश्मश्रु धारयतामग्र्या भवति संततिः ।

इति दानधर्मोक्तकाम्यपरम् । अनुभाविनः *पुत्रादय एवेत्येके,

*पुत्रः पत्नी च वपनं कुर्या(१)दन्ते यथाविधि ।

पिण्डदानोचितोऽन्योऽपि कुर्यादित्थं समाहितः ॥

इत्यपरार्के व्यासोक्तेः । यत्तु मिताक्षरायाम्—

द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः ।

तृतीये पञ्चमे वापि दशमे वाऽऽप्रदानतः ॥ इति ।

आप्रदानतः इति *चतुर्थादीनि । तत्प्रथमादिनेऽसंभवे ज्ञेयम्,

---

"कृतश्मश्रुकर्माणः" इति वाक्यान्तराण्यपि संकुचद्वृत्तीन्येव । श्मश्रुपदं तु तत्पूर्वकत्वलाभाय, तत्कल्पनस्यावश्यकत्वार्थं च तेन क्षणमपि न यवनाचारप्रसङ्गः । एवं च शिष्यस्यापि पुत्रधर्मातिदेशेन तत्सिद्धौ "गङ्गायां भास्करक्षेत्रे" इत्यादिवचनात् मातापित्राचार्यमरणे तदावश्यकम् अन्यत्र चानियतम् । अन्यथैतदानर्थक्यापत्तेः । गङ्गापदं च सर्वतीर्थोपलक्षणं, "सर्वतीर्थेष्वयं विधिः" इत्युक्तत्वात् । *पुत्रादय एवेत्येके इति । एकशब्दाभिधानं भ्रात्रादेर्निवृत्तावस्वारस्य सूचकम् , तेषामपि प्रेताभ्युदयकामनायां तत्प्राप्तेः । पत्न्यास्तु पुत्रवत्तन्नित्यमित्याह—*पुत्र इति । पत्न्याः प्रथमेऽह्नि दशमे वा यथाचारम् । यतिपत्न्यास्तु तदैव । यत्तु—

सूतके मृतके क्षौरं न कुर्यादहलेऽह्नि यः ।

तस्याशौचं भवेन्नित्यं पितरो नरके स्थिताः ॥ इति ।

तन्निर्मूलम् । समूलत्वे त्वनुभाविविषयतया संकुचितमिति मृतके सूतके इत्यस्य मृतिनिमित्ताशौचे इत्यर्थः *चतुर्थादीनीति । प्रदा-

(१) 'अन्त्ये' क०

*अलुप्तकेशो यः पूर्वं सोऽत्र केशान्प्रवापयेत् ।
द्वितीयेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा ॥
यावच्छ्राद्धं प्रदीयेत तावदित्यपरं मतम् ॥

इति माधवीये मदनरत्ने च बौधायनोक्तेः । मदनपारिजाते तु दशमे प्रथमे च समुच्चय उक्तः । यत्तु—

दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् । इति,

तदे*कादशाहश्राद्धाङ्गविप्रनिमन्त्रणार्थं ज्ञेयम् ॥

अथैकादशाहः । मनुः—

*विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधे ।
वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥

शुद्धितत्त्वे देवलः—

अघाहःसु निवृत्तेषु सुस्नाताः कृतमङ्गलाः ।
आशौचाद्विप्रमुच्यन्ते ब्राह्मणान्स्वस्ति वाच्य च ॥

याज्ञवल्क्यः—

( मृ(१)तेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैव ) आद्यमेकादशेऽहनि ॥

क्षत्रियाद्यैराशौचेऽप्येकादशेऽह्नि श्राद्धं कार्यम्,

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

---

नमैकादशाहिकश्राद्धमिति स्वतन्त्रविधिः । *अलुप्तकेश इति । तथाच दग्धृपरं मिताक्षरावचनम्, दाहाङ्गभूतस्य वपनस्य प्रथमदिन उक्तेः । *एकादशाहेति । विज्ञानेश्वरमते महैकोद्दिष्टाहन्येव प्रातर्विप्रनिमन्त्रणं युक्तम् ।

*विप्र इति । कृतक्रियः कृतस्नान इति विप्रादीनां विशेषणम् । तथाच यस्य विप्रादेर्यावत्कालमाशौचमुक्तं स तत्काला-

---

(१) कंसान्तर्गतं नास्ति । क० छ०

इति हेमाद्रौ शङ्खोक्तेः । पैठीनसिः—

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक् ॥

यत्तु मरीचिः—

आशौचान्ते ततः सम्यक् पिण्डदानं समाप्यते ।
ततः श्राद्धं प्रदातव्यं सर्ववर्णेष्वयं विधिः ॥ इति ।

तत्सर्ववर्णानां दशाहाशौचपरम् । यत्तु विष्णुः—'अथाशौचापगमे' इति । यच्च गौडग्रन्थे हारीतः—'श्वोभूते एकोद्दिष्टं कुर्यात्' । यच्च बैजवापः 'ऊर्ध्वं दशम्या अपरेद्युः' इति; तद्विप्रविषयम् । एतेन *दशमपिण्डो-

तिक्रमे सति स्नायात् । ततो विप्रो हस्तेनापः स्पृष्ट्वा शुद्ध्यति । एवं क्षत्रिय इति । स्पृष्ट्वेति स्पर्शक्रियैवोच्यते नतु स्नानमाचमनं वा, तस्यैवाग्रेऽनुषङ्गात् । अत्र कृतक्रियो यावदाशौचं कृतक्रियोदको विप्रादिक्रमेणोदकादिकं स्पृष्ट्वा विशुद्ध्यतीति आशौचकालानन्तरभाविस्नानप्रतिनिधिरुच्यते इति पक्षान्तरं शिष्टा नाचरन्ति ।
*दशमेति ।

ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्तिताः ॥

इत्येको गात्रपूरकपिण्डपक्षः । अपरश्च—

सर्वेभ्यः प्रेतवर्णेभ्यः पिण्डान् दद्याद्दशैव तु ।

इतिपारस्करोक्तपक्षे—

राज्ञस्तु दशमः पिण्डो द्वादशेऽहनि दीयते ।
वैश्यस्य पञ्चदशमे ज्ञेयस्तु दशमस्तथा ॥
शूद्रस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते ॥

इत्यादिपुराणोक्त इत्यर्थः । याज्ञवल्क्योक्तावयवपिण्डपक्षे पूर्वोक्तसर्ववर्णदशाहाशौचपक्षे च अवयवपिण्डसमाप्तिलाभादुक्तम्—

त्कर्ष*पक्षे अवयवपिण्डासमाप्तौ कथमेकादशाहे श्राद्धमिति मूर्खोक्तिः परास्ता, *वचनादाशौचमध्य इव तत्राप्यविरोधात् ।

भविष्ये—

एकादशभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि ।
भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने ॥

यत्तु मात्स्ये—

एकादशेऽहनि तथा विप्रानेकादशैव तु ।
क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ॥ इति ।

तद्रु*द्रगणश्राद्धपरमिति मदनपारिजातः । गौडास्त्व*स्माद्वचनात्क्षत्रियादीनामाशौचान्त एवेत्याहुः ।

---

*पक्षे इति । *वचनादिति । तथाच वचनबलादेकादशाहश्राद्धं कृत्वा पिण्डसमाप्तौ न क्षतिः "नास्ति वचनस्यातिभारः" इति न्यायादित्यर्थः । अत एव शूद्रस्य मृताहावधिकद्वादशाहे षोडशश्राद्धपूर्वकं सपिण्डनं विज्ञानेश्वरसंमतमाचक्षते रघुनाथप्रभृतयः । *रुद्रगणेति । वस्तुतस्तु तस्याऽऽद्यश्राद्धपरत्वमेव, ब्राह्मण एकादशाहे आद्यश्राद्धे एकादश द्विजान् भोजयेदेव क्षत्रियादिस्तु तत्रैव तत्कुर्वन्नपि न पक्केनान्नेन तदा ब्राह्मणान् भोजयेत् । किन्तु तदा त्यक्तेन तावद्ब्राह्मणभोजनपर्याप्तेनाऽऽमेन सूतकांते पक्त्वा भोजयेदिति तदर्थात् । अयं च विधिरावश्यकः विष्णुना सूतकान्तमात्राभिधानात्तस्य सर्ववर्णसाधारण्यापातात् । तस्य विप्रपरत्वोपगमे एकादशाहे क्षत्रियादेर्भोजनमसङ्गात् । *अस्मात् मात्स्यात् । एतन्मते च सपिण्डनपाक्षिकश्राद्धोत्तरादिन एवेति बोध्यम् । गौडास्त्वित्यस्वरसः । मात्स्यवचनस्य "एकादशेऽहनि" इत्युक्तस्य श्राद्धीयस्यामस्य सूतकान्ते पाकेन भोजनार्थकत्वेनोपपत्तेः सूतकान्तकर्तव्यत्वबोधकत्वाभावात् । नच—

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।

रामायणेऽपि—

समतीते दशाहे तु कृतशौचो यथाविधि ।
चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च ॥

---

द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः ॥
गलांसभुजवक्षांसि तृतीयेन तु सर्वदा ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ॥
ऊरुजङ्घे तथा पादौ पञ्चमेन विधीयते ।
षष्ठेन सर्वमर्माणि सप्तमेन च नाडयः ॥
दन्तलोमाद्यष्टमेन वीर्यं तु नवमेन च ।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ॥
दशाहमेनपिण्डेन ज्ञानं प्रेतेषु जायते ॥

इति ब्रह्मपुराणात् दशपिण्डदानस्य पूर्णप्रेतशरीरावयवनिष्पादकत्वम् ।

प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्तिता ॥

इति वचनाच्च । तथाचोत्तरश्राद्धसहकारेण तद्विनाशफलकत्वाच्छ्राद्धस्य तत्पूर्वकपितृत्वप्राप्तिफलकानां वा सपिण्डनान्तानां दशमपिण्डात् पूर्वकरणं विरुध्यते इति वाच्यम् । प्रेतशरीरस्य—

क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दन ।

इति वचनात् दुःखैकहेतुत्वेन वैधकर्मफलत्वासम्भवात् । एतच्छरीरपातावशिष्टकर्मभिः शुक्रशोणिताहारपरिणामविशेषादिभिर्दृष्टैश्च तदारम्भोपपत्तेरेतत्पिण्डदानानपेक्षणात् । अन्यथा चण्डालतिर्यगादिशरीरपातानन्तरं न स्यात्, तत्र पिण्डदानाभावात् । तस्मात् पिण्डदानफलं नावयवनिष्पत्तिः किन्तु तदकरणनिमित्तकप्रेतनरकनिवृत्तिः । तथाच ब्राह्मे—

ग्रामाद्बहिश्च कर्तव्यं जलाशयसमीपतः ।
पिण्डदानं दशाहानि प्रेतायारण्यमाश्रितैः ॥

अरण्ये पिण्डदानं तु मोहान्न क्रियते यदि ।
तदा रौरवमायाति प्रमीतः प्रथमेऽहनि ॥
पुन्नामसंज्ञं त्वपरे महारावं तृतीयके ।
तामिस्राख्यं चतुर्थे तु प्रयात्यथ सुदारुणम् ॥
पञ्चमे चान्धतामिस्रं षष्ठे घोरं च सुप्रभम् ।
अमेध्यं कृमिसम्पूर्णं सप्तमेऽहनि घातकम् ॥
असिपत्रवनं घोरमष्टमेऽहनि सर्वथा ।
महारौरवसञ्ज्ञं तु नवमे याति मानवः ॥
अवीचिरिति विख्यातं दशमेऽहनि भीषणम् ॥ इति ।

नच पिण्डदानाकरणस्यारण्यसम्बन्धांशे एवेयं निन्दा, ना[illegible]विशेषणवत्तया पिण्डदानस्यैव प्रागवगमात् । नचैवं वाराणसीमरणादिनिमित्तकमुक्तौ नरकादर्शनफलकप्रवृत्तकर्मणा वा प्रेतगतानिष्टासत्त्वेन पिण्डदानं व्यर्थमिति वाच्यम्,

तण्डुलैः सक्तुभिः शाकैः फलैर्वा श्रद्धया ततः ।
देशकालानुसारेण कुर्यात् प्रेतस्य तर्पणम् ॥

इत्यादिशाकेङ्गुदीपिण्याकादिनिःसारद्रव्यविधानेन तदकरणे कर्त्तुरेव प्रत्यवायकल्पनात् । अथवा पिण्डदानस्य प्रेतत्वावस्थानिवृत्तिरेव फलं—

स्वगोत्रा वाऽन्यगोत्रा वा स्त्रियो वा पुरुषास्तथा ।
प्रेतास्तु पिण्डसम्बन्धान्मुच्यन्ते तेन कर्मणा ॥
वायुभूतास्तु तिष्ठन्तः कालापेक्षेण सर्वदा ॥

इत्यादित्यपुराणात् । एवं च प्रागुक्तवचनस्याधर्मारब्धं प्रेतशरीरं दुःखैकभोगहेतुस्तन्निवर्तकाभावे दुःखभोगार्थं तांस्तान् नरकान् गच्छेत् पिण्डदानेन तु तदारम्भकादृष्टनाशेन तच्छरीरनिवृत्तौ तदप्राप्तिरित्यत्र तात्पर्यम् । तस्मात् क्षत्रियादिभिर्दशमपिण्डदानात्प्राक् प्रेतत्वनिवर्तकस्यैकादशाहस्य शूद्रेण वा द्वादशाहे सपिण्डनान्तस्य करणे न कोपि विरोधः । प्रेतत्वनिवृत्तिस्तु दशमपि-

*द्वादशिकं (१)द्वादशाहेन निर्वर्त्य त्रयोदशाहश्राद्धम्। त्रयोदशिकं चतुर्दशाहविधेयं सपिण्डनपाथेयादि। क्षत्रियाणां द्वादशाहाशौचे त्रयोदशे महैकोद्दिष्टं चतुर्दशे सपिण्डनम्। *द्विविधवाक्यादेकादशाहाशौचान्तयोर्विकल्प इत्येके। *सद्यःशौचादौ युद्धहतादेरेकादशाहे *अन्येषामाशौचान्त इति वयम्। कौर्मे—

एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः।
द्वादशे वाऽह्नि कर्तव्यमनिन्द्येऽप्यथवाऽहनि॥

---

ण्डोत्तरमेव। द्वादशाहादिसपिण्डने प्रेतत्वनिवृत्तेर्वत्सरोत्तरत्ववत्तदन्त एव सकलनिवर्तकसम्पत्तेः। समतीते इत्यादि रामायणवाक्यस्य चायमर्थः—सत्यपि द्वादशाहाशौचे दशाहोत्तरदिने एकादशाहिकं चक्रे, ततो द्वादशाहिकं श्राद्धं, ततस्त्रयोदशाहिकं पाथेयञ्च श्राद्धमिति। गौडमते दशाहपदस्याशौचकालद्वादशाहपरत्वाद् व्याचष्टे—*द्वादशिकमिति। मतान्तरमाह—*द्विविधेति। एकपक्षाङ्गीकारसम्भवाद्विकल्पोऽष्टदोषग्रस्तो नाङ्गीकार्य इत्यस्वरसः। सिद्धान्तमाह—*सद्य इति। आदिना त्र्यहैकाहग्रहः।

तृतीये तूदकं दत्त्वा चतुर्थे श्राद्धमाचरेत्।

इत्यादौ तु तद्बाधोऽनुसन्धेयः। *अन्येषामिति। अयं भावः—प्रायशः एकसंवत्सरस्थायी वायवीयः प्रेतदेहः, तदारम्भकश्च मनुष्यशरीरारम्भकाधर्मशेषः पितृत्वप्राप्तिप्रतिबन्धकः तद्देहभोग्यदुःखभोगैकनाश्यः, तदधर्मनाशार्थं दुःखभोगस्तदर्थं च प्रेतदेह आवश्यकः तदुत्पत्त्यर्थं च पिण्डदानमिति प्रेतदेहोत्पत्तिर्भवत्येव पिण्डदानफलम्। अत एवैकादशाहादिश्राद्धानां पूर्णप्रेतशरीरानिवृत्तिः फलं,

यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश।

---

(१) 'द्वादशाहेऽतीते श्राद्धम्' क० छ०।

निन्द्यं प्रेतक्रिया(१)काले उक्तम्। एकादशे तु न निषेध इत्युक्तं प्राक्। बृहस्पतिः—

वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकम्।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत्॥
श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश।
(२)ज्ञातयो बान्धवा निःस्वास्तथा चातिथयोऽपरे॥

पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि॥

इति यमोक्तेः।

एकादशाहादिभिः श्राद्धैर्मृतस्याप्यायनं भवेत्।
सम्यक् संवत्सरे प्रेतः पितॄणां स्थानमृच्छति॥

इति देवलोक्तेश्च। आप्यायनं प्रेतत्वपरिहार इति हि शूलपाणिः। "सगोत्रा वाऽन्यगोत्रा वा" इति वचनं तु चिरकालमृताकृतौर्ध्वदेहिककेवलदुरितप्राप्तप्रेतदेहविषयं, "कालापेक्षेण तिष्ठन्तः" इति तत्रैवाभिधानात्। यत्तु त्रिरात्रं दशरात्रं वा प्रेतमुद्दिश्योदकं क्षीरं च स्नानपानार्थं दीयते तेन तदानीमेव प्रेतो न स्नानपाने कुरुते तयोः प्रत्यक्षतोऽदर्शनात् किन्तु तदा तज्जन्यापूर्वेण तदानीमेव तस्य स्नानपानयोग्यदेहलाभोऽनन्तरं तत्सजातीयनीरक्षीरान्तरोपस्थितिः। एवं दशाहमध्ये शालीनां सहभोजनादेः प्रेताप्यायकत्वेऽपि। अथवा यथा गर्भिण्युपभुक्तं दोहदान्नपानादि अपूर्णस्यैव गर्भस्याप्यायकं तथा क्षीरोदकदानादि अपूर्णद्वारेण प्रेतदेहपुष्टिकरम्। ततश्च मरणानन्तरमेव दत्तैर्गात्रपूरकैः पिण्डैः प्रेतभावार्हाणामक्लेशेन क्षिप्रं प्रेतशरीरं भवति इति वा व्यवस्थायामवैधं बुद्धिपूर्वं वा मरणे दुर्मरणे च प्रायश्चित्तविशेषादिनाऽधिकारं सम्पाद्य दत्तैः पिण्डैस्तत्। अधिकारासम्पादने तु क्षिप्रमप्यतिमूढं पिण्डदानवत्त्वेऽप्यनर्हम्। सर्वथा पिण्डदाने तु विलम्बेन क्लेशेन च तदिति सिद्धम्। तथाच दशमपिण्डदानात् पूर्वं

(१) 'कालयुक्तम्' ग। (२) 'जातयो' ग०।

देवयाज्ञिकनिबन्धे—

एकादशसु विप्रेषु प्रेतमावाह्य भोजयेत् ।

---

प्रेतदेहस्यैवानिष्पन्नत्वात्तन्निवृत्त्यर्थानामेकादशाहादिश्राद्धानामाशौचमध्ये कथं करणमिति याज्ञवल्क्यादिवाक्ये पैठीनसिवचने चैकादशाहग्रहणमाशौचान्त्यदिनोत्तरदिनार्थकं विष्णुवचनैकवाक्यत्वात् । "ततः श्राद्धमशुद्धौ तु" इति शङ्खवचनपाठे श्राद्धं प्रथमादिदिनेष्वशुद्धौ कुर्यादित्यर्थः । अशुद्धौ कथं श्राद्धं स्यादित्यत्राह–कर्त्तुरिति । एकादशाहे अशौचोत्तरदिने च कुर्यादिति व्याख्येयम् ।अशुद्धोऽपीति पाठे सर्वेषामपि आशौचान्त्यदिनस्य महैकोद्दिष्टाङ्गविप्रनिमन्त्रणपरत्वम्।तत्सिद्धं सर्वैरपि दशमपिण्डे दत्ते स्वस्वाशौचोत्तरेऽह्नि एकादशाहश्राद्धं कार्यं तदितरैकादशाहकृत्यं च तत्रैव, तयोरेकदिनकर्त्तव्यत्वात् । द्वादशाहाशौचकारिक्षत्रियाणां मासाशौचकारिशूद्राणां चाचारोऽप्येवमेव । तदुत्तरेऽह्नि च सपिण्डनम् । सर्वेषां दशाहाशौचपक्षे तु एकादशाहद्वादशाहयोरेव तत्कृत्यम् । शूद्राणां द्वादशे सपिण्डनविधानं तु न मरणाद्द्वादश इति वक्ष्यामः । एकादशभ्य इति । एकस्यैव प्रेतस्थाने एकादश ब्राह्मणा इति मुख्यः कल्पः । विष्णुना तु यथाशक्ति ब्राह्मणा उक्ताः । यथा—"आशौचव्यपगमे प्रातः सुप्रक्षालितपाणिपादः स्वाचान्तः ब्राह्मणान् यथाशक्ति उदङ्मुखान् गन्धमाल्यवस्त्रादिभिः पूजितान् भोजयेत्" इति । ग्रन्थेऽपि एतदभिप्रेत्यैव "नव सप्त त्रयोदश" इत्युक्तम् । एकैको वा, "गतोऽसि दिव्यलोकं त्वम्" इति प्रागुक्तवाराहात् ।

स्नापनाभ्यञ्जनं दद्याद्विप्राय विधिपूर्वकम् । इति,

ब्राह्मणं शीघ्रमेवानयेत् ।

आगतं च द्विजं दृष्ट्वा कर्तव्या स्वागतक्रिया । इति ।

आवरणार्थं छत्रं तद्ब्राह्मणाय प्रदीयते ।

तत्रा*द्याय च शय्यादि दद्यादाद्यामिति स्मृतम् ॥

विष्णुः—'एकवन्मन्त्रानूहेतैकोद्दिष्टे' बहुवचनान्तानेकवचनान्तान्वदेदित्यर्थः। एतत् *दृष्टार्थत्वे।

पश्चादुपानहौ दद्यात् पादस्पर्शकरे शुभे ॥

सन्तप्तवालुकां भूमिं महीं कण्टकितां तथा।

सन्तारयति दुर्गाणि प्रेतं दददुपानहौ ॥

तिलोपचारं कृत्वा तु विप्रस्य नियतात्मवान्।

इत्यनेकवाक्येष्वेकवचनाच्च।

नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि।

इत्यग्निवचनाच्च। बहुपक्षेऽपि प्रेतोपभुक्तवस्त्रादिकं नवशय्या च तन्मध्ये एकस्मै गुणवते देया "तस्मात्तेषामेकस्मै गुणवत्ते शय्या देया" इति सत्यव्रतवचनात्। गुणवांश्चाऽऽद्यः कर्तव्य इत्याह—*आद्यायेति। एवं चेतरेभ्यो यथाशक्ति दक्षिणैव, एकस्मै वस्त्रादिदानमुक्त्वा—

प्रदद्याद्दक्षिणां तेषां सर्वेषामनुरूपतः।

इति बृहस्पत्युक्तेः। अयं च सर्वैकोद्दिष्टप्रकृतिरिति मिताक्षरादर्शनान्मासिकसांवत्सरिकाद्येकोद्दिष्टेषु तद्धर्मातिदेशो बोध्यः। ननु वैष्णवं पुराणैकोद्दिष्ट एव प्रवर्तते न तु सपिण्डनप्राक्तने मासिके एकादशाहिके च प्रेतैकोद्दिष्टे। तदानीं पितृत्वाभावेन तद्वाच्यत्वस्याविशेषात्तत्पितृत्वाभावेन तद्वाचिबहुवचनान्तपितृपदोपेतमन्त्राणां तत्राप्रवृत्तेः।"पितृशब्दं न युञ्जीत"इति निषेधश्च न्यायप्राप्तानुवादमात्रत्वात्। अत एवान्वष्टक्ये पितृपदे न मातृपदोह इति वृत्तिकृतः। नच पवित्रच्छेदनमन्त्रे द्विवचनान्तः पवित्रशब्दस्तत्रैकवचनोह इति वाच्यं तथापि 'मन्त्रान्' इतिबहुत्वानुपपत्तेरिति चेत्? न, वैष्णवस्य प्रेतैकोद्दिष्टमुपक्रम्याम्नानेन तत्साधारण्यस्यावश्यकत्वात्। *दृष्टार्थत्वे इति। दृष्टार्थत्वादर्थस्त-

अभिरम्यतामिति वदेद् ब्रूयुस्तेभिरताः स्म *इ ॥

इत्यग्नौकरणनिषेधोऽन्यपरः। *बह्वृचानां सर्वैकोद्दिष्टेषु तद्भवत्येवेत्युक्तं *प्राक्। स्वादितामिति तृप्तिप्रश्न इति कात्यायनः। प्रथमे पात्रे संस्रवानित्यस्य तृतीयेनापिधानस्य च बाधान्न पात्रन्युब्जतेति शूलपाणिः। प्रचेताः—'नात्र पात्रालम्भो नाशिषः प्रार्थयेत्' ॥

अत्र विशेषो हेमाद्रौ वाराहे—

श्मश्रुकर्म तु कर्तव्यं नखच्छेदस्तथैव च।
स्नपनाभ्यञ्जने दद्याद्विप्राय विधिपूर्वकम् ॥

तथा—

उपवेश्यासने भद्रे छत्रं तत्र प्रकल्पयेत्।
पश्चादुपानहौ दद्यात्सर्वाण्याभरणानि च ॥

विष्णुः—'दक्षिणान्तं श्राद्धमुक्त्वा दत्ताक्षय्योदकेषु चतुरङ्गुलपृथ्वीस्तावदन्तरालास्तावदधःखाता वितस्त्या-

---

तद्वाच्यः। श्रुत्यादौ बहुषु लक्षणापातात्। न च होलाङ्गपवित्रादेकैकदलरूपादिदं न भिन्नमेव दलद्वयरूपं, तस्यैवान्यत्रापि विनियोगसम्भवेन भेदे मानाभावात्। ततश्च द्वित्वविशिष्टस्य दलरूपस्य पवित्रस्योत्पन्नत्वात्पार्वणे प्रतिपात्रं दलद्वयरूपमिव एकोद्दिष्टे एकपात्रे द्वयदले प्राप्ते इति एकतद्विधानार्थमेकं पवित्रम्। वस्तुतस्तु "तिस्रास्तिस्रः शलाकास्तु" इति वचनात् पार्वण इवात्रैकैकदलात्मकानि त्रीणि पवित्राणि प्राप्तानि, तत्र एकदलं विधीयते। तथाचोक्तम्—"एकोद्दिष्टे शलाकैकम्"इति। *हेति। प्रसिद्धौ। प्रसिद्ध[illegible]। *बह्वृचानाम्। आश्वलायनसूत्रानुसारिणाम्। *प्रागिति। "अथातः पार्वणे श्राद्धे काम्ये आभ्युदयिके एकोद्दिष्टे च" इति चत्वारि श्राद्धानि प्रक्रम्याग्नौकरणादीनां समानविधानादित्यादि। *दत्तेति। अ-

यतास्तिस्रः कर्षूः कुर्यात् । कर्षूणां समीपेऽग्नित्र(१)यमाधाय परिस्तीर्यैकैकस्मिन्नाहुतित्रयं जुहुयात् सोमाय पितृमते स्वधानमोऽग्नये कव्यवाहनाय यमायाङ्गिरस्वते इति ॥' स्थानत्रये प्राग्वत्पिण्डनिर्वपणं दधिमधुघृतमांसैः कर्षूत्रयं पूरयित्वैतत्त इति जपेत् । शेषं नवश्राद्धवत् । अत्र साग्नेरप्यन्ते वैश्वदेव इत्युक्तं प्राक् । इदं दशाहकर्त्रा पुत्रेण वा कार्यमित्युक्तम् । क्रियानिबन्धे गृह्यकारिकायाम्—

तिलोसि प्रेतदेवत्यः प्रेतं लोकान्हिनोन्तकम् ।
मन्त्रमुक्त्वा तिलानेवं प्रक्षिपेदर्घ्यपात्रतः ॥
दक्षिणामुदकुम्भं च सान्नं दत्त्वा तथैव गाम् ।
तस्मै दद्याद् *भुक्तशेषं तद्भाण्डान्यपि भाजनम् ॥

विप्राभावेऽग्नावेकोद्दिष्टम्, 'अग्नौ पायसं श्रपयित्वाऽऽज्यभागान्ते तदग्रे श्राद्धप्रयोगं कृत्वाऽग्नौ प्रेतमावाह्य गन्धाद्यैः सम्पूज्य पृथिवी ते पात्रमित्यादिनाऽन्नं सङ्कल्प्योदीरतामवर इत्यष्टाभिश्चतुरावृत्ताभिर्द्वात्रिंशदाहुतीर्हुत्वा पिण्डदानादिश्राद्धं समापयेत्' इति । याज्ञवल्क्यः—

एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥

अथ वृषोत्सर्गः । स च नित्यः काम्यश्च,

---

*आशौचव्यपगमे सुस्नातः सुप्रक्षालितपाणिपाद आचान्तस्त्वेवंविधान् ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेदेकवन्मन्त्रानूहतैकोद्दिष्टे उच्छिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत् । भुक्तवत्सु ब्राह्मणेषु दक्षिणयाऽभिपूजितेषु प्रेतनामगोत्राभ्याम्" इत्यादि । *भुक्तशेष-

(१) 'त्रय' नास्ति । ग० ।

न करोति वृषोत्सर्गं सुतीर्थे वा जलाञ्जलिम् ।
न ददाति सुतो यस्तु पितुरुच्चार एव सः ॥

उच्चारः पुरीषम् ।

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

इति मात्स्यकौर्मोक्तेः,

एकादशेऽह्नि प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

इति षट्त्रिंशन्मते निन्दाश्रुतेः,

एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितम् ।
यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिम् ॥
वृषोत्सृष्टः पुनात्येव दशातीतान्दशापरान् ।

इति देवीपुराणे भविष्यादौ फलश्रुतेश्च । अयं द्वादशाहे उक्तो भविष्ये—

*चैत्र्यां वापि तृतीयायां वैशाख्यां द्वादशेऽह्नि वा ।

इति ।

विष्णुधर्मे तु मृताहेऽप्युक्तः—

*विषुवद्द्वितये चैव मृताहे बान्धवस्य च । इति ।

अयं गृहे न कार्यः,

न गृहे मोचयेन्नीलं कामयन्पुष्कलं फलम् ।

इति कालिकापुराणात् । कामधेनौ—

वत्सराभ्यन्तरे पित्रोर्वृषस्योत्सर्गकर्मणि ।
वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समारभेत ॥

---

*मिति । श्राद्धशेषभोजनाभावात् । *चैत्र्यामिति ।

कार्तिक्यामथवा माघ्यामयने वा युधिष्ठिर ।

इत्यादि । *विषुवदिति ।

तल्लक्षणं तु ब्राह्मे—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

श्वेतवर्णस्य मुखादीनि श्यामानि श्यामस्य वा श्वेतानि यस्य सोऽपि नीलवृष उक्तो मात्स्यादौ । देवीपुराणे—

*चतस्रो वत्सिका भद्रा द्वे वा संभवतोऽपि वा ।

यत्तु—पठन्ति—

वृषोत्सर्जनवेलायां (१)वृषाभावे कथंचन ।
मृद्भिः पिष्टैश्च दर्भैर्वा वृषं कृत्वा विमोचयेत् ॥
न शक्यते वृषोत्सर्गो होमं वा तत्र कारयेत् ॥ इति,

तन्निर्मूलम् । तद्विधिर्हेमाद्रौ भट्टकृतौ च ज्ञेयः । अत्र देवयाज्ञिकेन वृषोत्सर्गात्पूर्वं पुरुषसूक्तेन विष्णुरूपिप्रेतोद्देशेन विष्णुतर्पणमुक्तम् । तत्र मूलं चिन्त्यम् ।

पारस्करः—

सव्येन पाणिना पुच्छं समालभ्य वृषस्य तु ।
दक्षिणेनाप आदाय सतिलाः सकुशास्ततः ॥
प्रेतगोत्रं समुच्चार्य अमुकस्मै इति ब्रुवन् ।
वृष एष मया दत्तस्तं तारयतु सर्वदा ॥
सहेम सतिलं भूमावित्युच्चार्य विनिक्षिपेत् ॥

---

उत्सृजेन्नीलकण्ठं वै कौमुद्याः समयागमे ।

इति शेषार्थम् । कौमुदी आश्वयुजी पूर्णिमा ।

चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णं तु तं नीलमिति निर्दिशेत् ॥

इति लक्षणान्तरम् । *चतस्र इति ।

अयं हि गोपो महतः सर्वासां पतिरुत्तमः ।
तुभ्यं च ता मया दत्ताः पत्न्यः सर्वा मनोरमाः ॥

---

(१) 'वृषाभावः' ग० ।

तथा—

विधारयेन्न तं कश्चिन्न च कश्चन वाहयेत् ।
न दोहयेच्च ता धेनूर्न च कश्चन बन्धयेत् ॥

स्त्रीषु विशेषः संग्रहे—

पतिपुत्रवती नारी भर्तुरग्रे मृता यदि ।
वृषोत्सर्गं न कुर्वीत गां दद्याच्च पयस्विनीम् ॥

पतिपुत्रयोः *साहित्यं विवक्षितम् । अन्वारोहणेऽपि गोदानमेवेत्युक्तं प्राक् । आशौचान्तरेऽपि वृषोत्सर्गाद्य-मासिकशय्यादि दद्यादेवेत्युक्तम् । क्रियानिबन्धे स्मृत्यन्तरे—

सूतके मृतके चैव द्वितीयं मृतकं यदि ।
पिण्डदानं प्रकुर्वीत वृषोत्सर्गं तथैव च ॥
न हन्यात्सू(१)तकं कर्म द्वादशैकादशाहिकम् ।
शुद्धो वा यदि वाऽशुद्धः कुर्यादेवाविचारयन् ॥ इति ।

अत्र पददानमुक्तं देवजानीये गारुडे एकादशाहं प्रक्रम्य—

तदाहि दीयते (२)सर्वं द्वादशाहे विशेषतः ।
पदानि सर्ववस्तूनि वरिष्ठानि त्रयोदश ॥
यो ददाति मृतस्येह जीवतोऽप्यात्महेतवे ।
सुखी भूत्वा महामार्गे वैनतेय स गच्छति ॥

---

इति मन्त्रो बहुगोपक्षे एकादिपक्षेऽनूह्य इत्येके । एकगोयुक्तप्रयोगस्य बहुगोयुक्तप्रयोगेन प्रकृतिविकृतित्वाभावात् । 'व्रीहीणां मेध' इत्यस्य यवप्रयोग इवास्यापि लोप इत्यन्ये । *साहित्यमिति । अत्राहुः—सत्यपि वृषोत्सर्गाधिकारिणि पुत्रे भर्तृसमक्षं मृताया यदि न वृषोत्सर्गः, तदा सुतरां पुत्राभावे, भर्तृसमक्षमृतेरेव तदकरणप्रयोजकत्वात् "अपि पुत्रवती नारी" इति पाठान्तराच्च । तस्मात्सा-

(१) 'सूतके' ग० । (२) 'सर्वैः' ग० ।

तथा—

आसनोपानहौ छत्रं मुद्रिका च कमण्डलुः ।
(१)भाजनं भोजनाधारो वस्त्राण्यष्टविधं पदम् ॥

तथा—

भाजनासनदानेन मुद्रिकाभोजनेन च ।
महिषीरथगोदानात्सुखी भवति निश्चितम् ।
सर्वोपस्करयुक्तानि पदान्यत्र त्रयोदश ॥
यो ददाति मृतस्येह जीवन्नप्यात्महेतवे ।
स गच्छति परं स्थानं महाकष्टविवर्जितः(२) ॥
*त्रयोदश पदानीत्थं प्रेतायैकादशेऽहनि ।
दातव्यानि यथाशक्ति तेनासौ प्रीणितो भवेत् ॥
अन्नं चैवोदकं चैवोपानहौ च कमण्डलुः ।
छत्रं वस्त्रं तथा यष्टिं लोहदण्डं तथाष्टमम् ॥
अग्नीष्टिकां च दीपं च तिलांस्ताम्बूलमेव च ।
चन्दनं पुष्पदानं चोपदानानि चतुर्दश ॥
योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादयेत् ।
स्वमहिम्नोऽनुसारेण तत्तत्सुखमवाप्नुयात् ॥ इति ।

अत्र मूलं चिन्त्यम् ॥

अथ शय्यादानम् । हेमाद्रौ भविष्ये—

तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ।
दन्तपत्रचितां रम्यां हेमपट्टैरलंकृताम् ॥
हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानिकाम् ।

---

हित्यं न विवक्षितमिति । *त्रयोदशेति । अशक्तौ तु-
त्रयोदश तथा पञ्च तत्र त्रीणि यथाक्रमम् ।

---

(१) 'भोजनं' ग० ।

(२) चतुःषष्टिपदान्याद्ये द्वात्रिंशन्मध्यमे पदम् । षोडशापि कनिष्ठे स्युस्त्रयोदश त्वनाद्यके ॥ एवं निर्णयामृते इत्येकस्मिन्पुस्तकेऽधिकम् ।

प्रच्छादनपटीयुक्तां गन्धधू(१)पादिवासिताम् ।
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ॥

अत्र हरिस्थाने प्रेतम् ।

उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् ।
ताम्बूलं कुङ्कुम(२)क्षोदं कर्पूरागरुचन्दनम् ॥
दीपिकोपानहच्छत्रं चामरासनभाजनम् ।
पार्श्वेषु स्थापयेद्भक्त्या सप्त धान्यानि चैव हि ॥
शयनस्थस्य भवति यदन्यदुपकारकम् ।
भृङ्गारकरकाद्यं तु पञ्चवर्णवितानकम् ॥

मन्त्रस्तु—

यथा न कृष्णशयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥
यस्मादशून्यं शयनं केशवस्य शिवस्य च ॥

अर्धं तत्रैव ।

दत्वैवं तस्य सकलं प्रणिपत्य विसर्जयेत् ।
एकादशाहेपि तथा विधिरेष प्रकीर्तितः ॥
विशेषं चात्र राजेन्द्र कथ्यमानं निशामय ।
तेनोपभुक्तं यत्किंचिद्वस्त्रवाहनभाजनम् ॥
यद्यदिष्टं च तस्यासीत्तत्सर्वं परिकल्पयेत् ।
तमेव पुरुषं हैमं तस्यां संस्थापयेत्तदा ॥
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥

पाद्मे—

मृतकान्ते द्वितीयेऽह्नि शय्यां दद्यात्सु(३)लक्षणाम् ।
काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितम् ॥
संपूज्य द्विजदांपत्यं नानाऽऽभ(४)रणभूषितम् ।

---

(१) 'धूपाधि' क० ।　　(२) 'क्षोदक' क० ।
(३) 'सलक्षणाम्' ग० ।　　(४) 'मणिविभू' ग० ।

उपवेश्य तु शय्यायां मधुपर्कं ततो (१)ददेत् ॥
रजतस्य तु पात्रेण दधिदुग्धसमन्वितम् ।
*अस्थि लालाटिकं गृह्य सूक्ष्मं कृत्वा सपायसम् ॥
भोजयेद्द्विजदांपत्यं विधिरेष सनातनः ।
एष एव विधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः ॥

एतत्प्रतिग्रहे तत्रैवोक्तम्—

गृही(२)तायां तु तस्यां वै पुनः संस्कारमर्हति ।

शय्यादानफलं भविष्ये—

स्वर्गे पुरंदरपुरे सूर्यपुत्रालये तथा ।
सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ॥
आभूतसंप्लवं यावत्तिष्ठत्यातङ्कव(३)र्जितः ॥ इति ।

अथोदकुम्भः । हेमाद्रौ स्मृतिसमुच्चये—

*एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः ।
दिनेदिने प्रदातव्यो यावत्संवत्सरं सुतैः ॥

---

इति द्रष्टव्यम् । *अस्थीति । अयं पार्वतीयाचारोऽन्यदेशीयानां निन्द्यः । एतद्वचनानां निर्मूलत्वमिति धार्मिकाः । अन्तरितमुत्क्रान्तिधेनोर्वैतरण्याश्च दानम् एवमासनस्य ताम्रादिभाजनस्योदकुम्भस्य महिष्या गन्त्र्या हिरण्यस्य कार्पासस्य सप्तधान्यानां भुवः गोर्घृतस्य शालग्रामस्य रुद्राक्षस्य वेदपुराणस्मृत्यादिपुस्तकस्य चैवञ्जातीयस्य प्रेतकल्पोक्तस्य दानमपि अमुकस्मै इत्येकोद्देशेन क्रियमाणे बहूनां नामभिः एकादशेऽन्हि कुर्वन्ति । *एकादशाहादिति । वर्षान्तसापिण्डनपक्षे ।

प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्तिता ।
क्षुत्तृष्णे प्रत्यहं तत्र यतो हि भृगुनन्दन ॥

---

(१) 'वदेत्' ग० । (२) 'गृहीत्वा मृतशय्यां' इति पाठः । (३) 'वर्जितम्' ग० ।

लौगाक्षिः—

*यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥

उत्तरार्धे—

तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ।

इति याज्ञवल्क्यपाठः । सपिण्डनापकर्षेऽस्यापकर्षप्राप्तेर्बाधकमिदमिति शूलपाणिः । तन्न, प्रकृतिविकाराभावेन तदन्तन्यायाविषयत्वात् । मात्स्ये—

यावदब्दं च यो दद्यादुदकुम्भं विमत्सरः ।
प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ॥

केचित्त्रयोदशाहमारभ्याहुः*स्तन्निर्मूलम् ॥ अ(१)त्र देवयाज्ञिकः—'सपिण्डनापकर्षे संवत्सरं यावदुदकुम्भं अर्वागेव दद्यात नोर्ध्वम्'

प्रेतलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ।

इति गोविन्दराजधृतविष्णूक्तेः ।

अन्नं चैव स्वशक्त्या तु संख्यां कृत्वाब्दिकावधि ।
दातव्यं ब्राह्मणे स्कन्द घटादौ निष्क्रयं तु वा ॥
अपि श्राद्धशतैर्दत्तैरुदकुम्भं विना नराः ।

---

तदर्थमिह दातव्यं जलान्नमाभिवत्सरम् ।

इति च । द्वादशाहादौ सपिण्डनपक्षे ऽपि षोडशश्राद्धापकर्षवन्नास्यापकर्षः, "श्राद्धानि षोडशादत्त्वा" इतिवद्वचनाभावात् । प्रत्युतानपकर्षमेवाह—*यस्येति । पूर्वार्द्धे च—

अर्वाक् सपिण्डीकरणं यस्य संवसराद्भवेत् ।

इति पाठः । *तन्निर्मूलमिति । एकादशाहात्प्रभृति कर्तव्ये उदकुम्भश्राद्धे मासिकसपिण्डनयोः प्रेतस्य अनुमासिके अन-

---

(१) 'अत्र' नास्ति क० ग० ।

दरिद्रा दुःखिनस्तात भ्र(१)मन्ति च भवार्णवे ॥
तेनापकृष्य दातव्यं प्रेतस्याप्युदकुम्भकम् ॥

इति गोभिलभाष्ये स्कान्दाच्च सपिण्डनात्प्रागेव तस्य विधानादूर्ध्वं निषेधादित्याह । तन्न, उदकुम्भे पार्वणविधिनानुपपत्तेरेवं व्याख्यायां मानाभावान्मिताक्षरादिविरोधाच्च । वचनं यदि समूलं तदा *वृद्धावपकर्षं विधत्ते,

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा ।

इति हेमाद्रौ शाट्यायनोक्तेः । 'तस्याप्यन्नं सोदकुम्भम्' इति याज्ञवल्क्यविरोधाच्च ।

मदनरत्ने गौतमः—

अदैवं पार्वणं श्राद्धं सोदकुम्भमधर्मकम् ।
कुर्या*त्प्रत्याब्दिकाच्छ्राद्धात्संकल्पविधिनाऽन्वहम् ॥

अधर्मकं *ब्रह्मचर्यादिनियमहीनम् । *एतन्मासिकवदे-

---

न्तरमृतस्य च ब्राह्मणायैवं उदकुम्भं दद्यात् न तु पृथगुदकुम्भश्राद्धमिति तु ध्येयम् । *वृद्धाविति । एतच्च न सपिण्डनानिमित्तापकर्षविधायकं, याज्ञवल्क्यवचनाविरोधात् । किन्तु यदा कदापि सपिण्डने प्रत्यहं सोदकुम्भान्नदानाशक्तौ नैकस्मिन्नेव दिने आमेन तन्निष्क्रयेण वाऽपकृष्यापि तावत् कर्तव्यमित्येवमर्थमित्यन्ये । *प्रत्याब्दिकात् । आप्रत्याब्दिकात् । सङ्कल्पविधिश्च—

सङ्कल्पं तु यथा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नावाहनाग्नौकरणे न पिण्डान् विकिरं न च ॥

इत्यादि । *ब्रह्मचर्यादीति । कर्तृभोक्त्रोरित्यादि । सपिण्डनात्प्राक् क्रियमाणस्य तस्यैकोद्दिष्टत्वात् तदुत्तरं क्रियमाणपार्विक्रत्याह—*एतदिति । "पार्वणं वा" इति यथाश्रुतार्थं दूषयन्ने-

---

(१) 'भवन्ति' क० ।

कोद्दिष्टं पार्वणं वा कार्यम् । *अपरार्कस्तु—

सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ।

पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डना ॥ इति ।

लघुहारीतोक्तावपि—

*तस्याप्यन्नं सोदकुम्भं देयं संवत्सरं द्विजे ।

इति याज्ञवल्कीये तस्येत्येकत्वोक्तेः सपिण्डनोत्तरमप्येकोद्दिष्टमेवेत्याह । अत्र पिण्डदानं कृताकृतम्, 'अहरहरन्नम*स्मै ब्राह्मणायोदकुम्भं च दद्यात्पिण्डमप्येके निपृणन्ति' इति हेमाद्रौ पारस्करोक्तेः । श्राद्धाशक्तौ पिण्डमात्रमिति गौडाः । तन्न, अपिशब्दबाधापत्तेः । हारीतः—

मृते पितरि वै पुत्रः पिण्डमब्दं समाचरेत् ।

अन्नं कुम्भं च विप्राय *प्रेतनिर्देशधर्मतः ॥

*प्रेतशब्दोच्चारणेनेति हलायुधः । यद्वा प्रेतस्य निर्देशो यत्र तदेकोद्दिष्टं तद्धर्मकमित्यर्थः । अत्राशौचान्तदिनाद्यब्दान्तं यावद्वत्सरपूर्तेः शौचं नाधिकारिविशेषणम् । तेन मृतिदिनमारभ्यैतत्कार्यमिति केचित् । तन्न, हेमाद्रिधृतवचोविरोधात् । मध्ये आशौचादिना बाधे तु लोप एव दार्शवत् ।

---

वाह—*अपरार्केत्यादि । *तस्यापीति । यथा चानन्तरमृतस्यैकमृतस्यैवोद्देश्यत्वं न्याय्यमिति भावः । *अस्मा इति । एकवचनस्य विवक्षितत्वात्सपिण्डनात् प्राक् प्रेतशब्देन पश्चात्त्वनुमासिकवत् पितृशब्देन नतु प्रेतशब्देन । एवञ्च पूर्ववाक्ये पार्वणश्राद्धमित्यस्य पार्वणविधिना प्रेतशब्दं विहायेति यावत् श्राद्धमित्यर्थः । अत्रोत्तरत्र चान्नमुदकं चेत्यभिधानात्सोदकुम्भादिपदेन प्रधानगुणभावविवक्षा । तेनैष उदकुम्भः इदमन्नमिति पृथगेव त्यागः । *प्रेतनिर्देशधर्मत इति । प्रेतशब्देन प्रेतोद्देश्यत्वरूपधर्मेणेत्यर्थः ।

तथा प्रथमाब्दे दीपदानमुक्तम् देवजानीये गारुडे—

प्रत्यहं दीपको देयो मार्गे तु विषमे नरैः ।
यावत्संवत्सरं वापि प्रेतस्य सुखलिप्सया ॥
प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजालये ।
कुर्याद्याम्यमुखं पित्र्ये आद्भिः संकल्प्य सुस्थि(१)रम् ॥

अथ मासिकानि । *तानि च कृत्वैव सपिण्डनं कार्यम् । तथा च गोभिललौगाक्षी—

श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम् ।
श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ॥

तानि त्वाह जातूकर्ण्यः—

*द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥

आद्यषाण्मासिकाब्दिकशब्दाः *ऊनमासिकोनषष्ठोनाब्दिकपराः । हेमाद्रौ तु—

सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशम् ।

---

*प्रेतेति । धर्मपदवैयर्थ्यापत्तिरस्वरसः । *तानिचेति अकृतनवश्राद्धादिकस्य न मासिकेष्वधिकारः,

नवश्राद्धादिश्राद्धानि न कृतानि तु यस्य वै ।
नाधिकारी भवेत्तत्र मासषाण्मासिकाब्दिके ॥

इति वचनात् । *द्वादशप्रतिमास्यानीति । मासश्च मृततिथिं गृहीत्वा चान्द्रत्रिंशत्तिथिसमुदायः । अवयवपिण्डे जाते यदि नवश्राद्धमात्रमन्तरितं करोति तदा एकादशाहे तदीयगौणकाले वा तत्कार्यम् । तत्र च नाशौचं, कर्मणो वृत्तत्वात् । अन्यथा एकादशाहे अन्तरितनवश्राद्धकरणे तत्प्रसङ्गात् । इदानीन्तनाचारसंवादिपक्षमाह—*ऊनमासिके इति । द्वादशाहे इत्यर्थः,

---

(१) 'सुस्थितम्' ग० छ० ।

इत्युत्तरार्धे पाठः। तदा आद्यमूनमासिकं द्वादशाहे, षाण्मासिके ऊनषष्ठोनाब्दिके इत्यर्थः। कात्यायनस्त्वन्यथाह—

द्वादश प्रतिमास्यानि आद्यषण्मासिके तथा।
सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशम्॥
एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।
न्यूनः संवत्सरश्चैव स्यातां षण्मासिके तदा॥

द्विवचनादूनषष्ठोनाब्दिके इत्यर्थमाह पृथ्वीचन्द्रः। व्यासस्त्वन्यथाह—

द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके।
श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः॥

द्वादशाहपदमूनमासिकपरं तस्य द्वादशाहेप्युक्तेरिति कालादर्शः। मदनरत्ने ब्राह्मे त्वन्यथोक्तम्—

नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसंख्यया॥ इति।

चतुर्थादीनि दिनानि। भविष्ये त्वन्यथोक्तम्—

अस्थिसंचयनं श्राद्धं त्रिपक्षे मासिकानि तु।
रिक्तयोश्च तथा तिथ्योः प्रेतश्राद्धानि षोडश॥ इति।

रिक्तयोस्तिथ्योरित्यूनषष्ठोनाब्दिकपरमिति हेमाद्रिः। अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्वनिबन्धाः। गालवः—

ऊनषाण्मासिकं षष्ठं मासे वाप्यूनमासिकम्।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा॥

ऊनमासिके तु गोभिलः—

मरणाद्द्वादशाहे स्यान्मास्यूने चोनमासिकम्॥

मदनरत्ने कालादर्शे च श्लोकगौतमः—

एकद्वित्रिदिनैरूने त्रिभागेनोन एव वा।

श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः ॥

क्रियानिबन्धे क्रतुस्तु—

सार्धे एकादशे मासे सार्धे वै पञ्चमे तथा ।
ऊनाब्दमूनषण्मासं भवेतां श्राद्धकर्मणि ॥

इत्युक्तं, तत्र मूलं चिन्त्यम् ।

ऊनेषु वर्ज्यान्याह मरीचिः—

*द्विपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने ।
चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे ॥

गालवः—

त्रिभिर्वा दिवसैरूने त्वेकेन द्वितयेन वा ।
आद्यादिषु च मासेषु कुर्यादूनाब्दिकादिकम् ॥

*एकन्यूनपक्षे पञ्चम्यां मृतस्य तृतीयायां त्रिभिर्न्यूने प्रतिपदि द्व्यूने द्वितीयायामिति केचित् । माधवस्तु—

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा ॥

इति पैठीनसिवाक्ये *ऊनषाण्मासिकं सप्तममासगत

---

ऊने मासि द्वादशाहे वा तस्य कर्त्तव्यत्वात् । आद्यैकाहृक्षा-हिकं षण्मासे ऊने षष्ठे मासे मासिकाब्दे ऊनमासिकस्य ऊनाब्दे । मासिकैः सह द्वादशाहरूपकालो जातूकर्ण्याद्विशेषः । रिक्तत्वमेकतिथिन्यूनत्वम् । *द्विपुष्करे चेति । गार्ग्योऽपि—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥ इति ।

निषेधश्च द्वित्रिदिनन्यूनपक्षे । अत्र "एकाहेन तु षण्मासाः" इत्यादिवाक्यान्तरे चोक्तत्वोक्तेः कश्चिदाह—*एकेति । मासः आद्यमृताहं गृहीत्वोत्तरमृताहपूर्वतिथिपर्यन्तात्रिंशत्तिथिसमुदायः, तथैव लोकप्रसिद्धेः । तस्यैकाहन्यूनता उपान्त्यतिथावेव, अन्त्यायां पूर्तेः । एवं त्र्यहन्यूनताप्यन्तपूर्वचतुर्थ इति । *ऊनेति ।

*मृताहात्पूर्वेद्युः कार्यम्, ऊनाब्दिकं तु द्वितीयाब्दे मृताहदिनात्पूर्वेद्युः कार्यमित्यर्थमाह। पूर्वेद्युर्मृताहादित्यर्थः,'मासिकानि स्वकीये तु दिवसे' इत्युक्तेः। *इदमेव युक्तम्। मदनरत्नेऽप्येवम्। याज्ञवल्क्यः—

मृतेहनि तु कर्तव्यं प्रतिमासं तु *वत्सरम्।

---

षाण्मासिकाब्दिकशब्दयोरूनषाण्मासिकोनाब्दिकपरत्वात्। *मृताहादिति। मृताहपूर्वतिथीत्यर्थः। पूर्वमतेऽस्वरसं सूचयति-*इदमेवेति। एकाहन्यूनतापक्षेऽमान्ततन्मासान्त्यतिथावेव करणम्, अन्यथा पैठीनसिवचनविरोधात्। किञ्च अन्त्यतिथ्यन्त्यक्षण एव मासपूर्तेर्यदेकातिथ्यभावप्रयुक्ता मासस्यैकाहन्यूनता तस्यां तिथाविति एकाहन्यूनता लभ्यते उपान्त्यतिथौ तु तत्करणे द्व्यहन्यूनता स्यात्। यत्तिथित्रयाभावप्रयुक्ता त्र्यहन्यूनता तन्मध्ये-प्रथमतिथाविति त्रिभिर्न्यून इत्यस्येति। अत्रोक्तं मयूखे-सत्यमन्त्यतिथ्यन्तक्षण एव मासपूर्तिः। परन्तु षष्ठ्यां मृतस्य पञ्चम्यां माससमाप्तिर्न तु षण्मासा इति जातूकर्ण्येनापि एकाहेन न्यूनइत्यनेनैकाहरहितमासस्यैव ऋतुतया प्रतिपादनात् दर्शितत्रक्रपरिष्कारस्याप्रामाणिकत्वात्।

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते।

इति पैठीनसिवाक्ये माससमाप्तेः पूर्वेद्युरित्यर्थो नतु मृताहात् पूर्वेद्युरिति, ऊनानां मृताहकर्त्तव्यताया अप्रसक्तत्वेन तदुक्तिवैयर्थ्यात्। एवं च "एकाहेन तु षण्मासाः" इत्यादौ "एकद्वित्रिदिनैरूने" इत्यादौ "पूर्वेद्युरेव ते" इत्यादौ च अहरादिपदस्य तिथिपरत्वे प्रमाणाभावाद्यथामासिकादीनामूनैरेकाहोव्यवधानं भवति तथा तत्कालो ग्राह्य इति। *वत्सरमिति। यावदिति शेषः। मासे भवं मासिकमित्येव मासिकाद्यम् मासिकादिशब्दव्युत्पत्तिः। नचैवं समुदायान्तर्गततया किञ्चित्तिथौ तत्करणे मासिकत्वं स्यात्

अत्रा*द्यमासिकमा*द्याब्दिकं *चैकादशेऽहनीति निर्णयामृतादयः ।

ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा ।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥

इति गोभिलीयं च *तद्विषयमाहुः । *अन्ये तु 'मासपक्षतिथिस्पष्टे' इत्यादि *विरोधादाब्दिकं *वर्षान्ते एव । मासिकं तु मासादौ । द्विरावृत्तिस्तु एकादशाहिकाद्यमासिकपरा । देवयाज्ञिकोऽप्येवमाह । लौगाक्षिरपि—

मासादौ मासिकं कार्यमाब्दिकं वत्सरे गते ।

---

ज्योतिष्टोमादेर्वसन्तकालत्ववदापरपाक्षिकत्ववच्छ्राद्धस्येति वाच्यं, प्रथमातिक्रमे कारणाभावात् "मृतेहनि तु कर्तव्यम्" इति वचनाच्च तत्तन्मासाद्यतिथावेवाद्यमासिकादेः सिद्धेः । एवञ्च मृततिथावेवाद्यमासिकस्य कर्त्तव्यत्वे प्राप्ते तदुत्कर्षमाह—*आद्यमिति । *आद्याब्दिकं चेति । वर्षे भवं वार्षिकमिति व्युत्पत्तौ प्रथमातिक्रमे कारणाभावात् प्रतिसंवत्सरं चैवमित्यत्र मृताहनि इत्यनुवृत्तेश्च मरणोत्तरमेव प्राप्तमाद्यवार्षिकमाद्यमित्यनेनोत्कृष्यते तस्याप्याद्यत्वाद्विशेषानुक्तेश्चेत्यर्थः । *एकादशेऽहनि । आशौचोत्तरादिने । *तद्विषयमिति । आद्याब्दिकाद्यमासिके महैकोद्दिष्टेन सह तन्त्रेण कार्ये इति तु मयूखे । मलमासमृतस्याद्याब्दिकं तु तत्र प्रथमदिने प्राप्तमप्येकादशेऽह्न्येव, दाहादिसपिण्डनान्तकर्मणो मलमासे प्रतिप्रसूतत्वात् । द्वितीयाद्यदिनकर्तव्यतया विहितं शुद्धमास एव । इदानीन्तनाचारसंवादिमतमाह—*अन्ये त्विति । *विरोधादिति । तथाभूतमासादिना मृततिथिसाजात्यम् । तदुत्पत्त्यैवोत्पन्नस्याब्दिकस्य तद्भिन्नवत्सरतिथौ करणे तद्विरोधः । वार्षिकत्वं तस्य दर्शयति—*वर्षान्ते इति । वर्षान्ते भवं वार्षिकं नतु वर्षे भवम्, सपिण्डनं विधाय "अत ऊर्ध्वं संवत्सरे वत्सरे प्रेता-

आद्यमेकादशे कार्यम*धिके त्वधिकं भवेत् ॥

दीपिकायां तु—'*आद्यं रुद्रमितेऽर्कसंमितदिने वा स्यात्' इत्युक्तम् । गौडास्तु मृततिथ्यवधिके एकदिनाधिके । *माससंवत्सरपदं गौणम् । *पूर्णेऽब्दे इति ईष-

---

यान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यात्" इति गोभिलवचनात् । एवञ्च मरणतिथावमासस्य नैकादशेऽन्हि उत्कर्षः नापि एकस्यैवाब्दिकस्यैकादशेऽन्हि प्रेतदैवत्यं द्वितीय[illegible]तत्तिथौ पितृत्वमासेऽन्तद्वत्यामिति वैरूप्यम् । *अधिके इति । मलमासमृते तु मरणादेकादशेऽह्नि आधिकाद्यं कृत्वा स्वकाले ऊनं कुर्यात् । 'षष्ठ्या तु दिवसैर्मासे' इत्युक्तावपि "अधिके त्वधिकं भवेत्" इति दर्शनान्मासिकेषु त्रिंशत्तिथीनामेकमासत्वात् । ततः शुद्धमासादौ द्वितीयाद्यं कृत्वा त्रैपक्षिकं ततो द्वितीयमासिकम् । एवं सति—

मलमासमृतानां तु सौरं मासं समाश्रयेत् ।

इति वचोऽनुगृहीतमाब्दिकं सुकरम् । द्वितीये मलमासे तु एकादशेऽह्नि आद्यमासिकं स्वकाले चोनमासिकं कृत्वा मलेऽधिकमासिकं कृत्वा त्रैपक्षिकं, ततो द्वितीयमासिकम् । एवं च यत्र षष्ठद्वादशौ मलमासौ तत्र तयोराधिकमासिकं कृत्वा तदुत्तरयोः षष्ठद्वादशमासिके तत ऊनषाण्मासिकोनाब्दिके अधिकमासस्य पूरणप्रत्ययान्तेनाव्यवहारात् । *आद्यमिति । तन्मासादिरहह[illegible]ः तेन मरणतिथेरपि संग्रहो दुर्वारः, तथाभूतेत्यनेन तद्भेदालाभात्, "आब्दिकं वत्सरे गते" इति लौगाक्षिवाक्येऽप्यगते इति च्छेदाच्च । तस्माद्वर्षेभवमित्येव व्युत्पत्तिर्नतु वर्षान्तेभवमित्याशयः । *माससंवत्सरपदमिति । प्रथममासिकप्रथमसांवत्सरिकादिप्रकृतिभूतमाससंवत्सरादिपदं तादृशमासे तद्घटितवत्सरे च लाक्षणिकमित्यर्थः । द्वितीयादिमासवर्षयोस्तत्रानुपपत्तेरिति शेषः । मृततिथेर्मृततिथिं यावत्त्रिंशत्तिथ्यात्मको मास इति लक्षणेऽपि दर्शश्चान्द्र-

दसमासपरत्वमिति शूलपाणिः । *तेन द्वितीयमासादावाद्यमासिकादीति तन्मौर्ख्यकृतम् ।

अशक्तौ तु हारीतः—

मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति ।
द्वादशाहेन वा भोज्या एकाहे द्वादशापि वा ॥

*ऋतुं प्रति द्वे द्वे इत्यर्थः । *यदा पितुर्मरणात्त्रयोविंशतितमे दिने *दर्शो वृद्धिर्वा स्यात्तदा *द्वादशादिनेषु द्वादशमासिकानि कार्याणीत्यर्थः । त्रैपक्षिकं तु त्रिपक्षेऽतीते मृताहे कार्यम्,

---

दवधौ पञ्चमी तिथिन्मृततिथेर्न मासान्तर्गतत्वम्, एवं त्रिपक्षशब्दोऽपि तादृशपञ्चचत्वारिंशत्तिथिरूपसार्धमासवाची । नन्वेवं द्वितीयवर्षाद्यादिने सापिण्डीकरणप्रसङ्ग इत्यत आह—*पूर्णे इति । *तेनेति । आदिना आद्याब्दिकं द्वितीयवर्षाद्यतिथौ कार्यमित्यस्य ग्रहः । अत्राद्याब्दिकस्य द्वितीयवर्षाद्यतिथौ कर्तव्यत्वेपि आद्यमासिकस्य द्वितीयमासाद्यतिथौ कथं करणं तत्राद्यमासत्वाव्यवहारात् आद्यमासो गत इति व्यवहाराच्चेत्यस्वरसः । अपर्याप्तौ प्रतिमासं श्राद्धकरणाशक्तौ ऋतुं प्रतीत्यस्यार्थमाह—*ऋतुमिति । मुख्यस्य चान्द्रस्य सौरस्य वा नेह ग्रहणम्, असम्भवात्; किन्तु मृततिथिमारभ्य त्रिंशत्तिथिरूपमासद्वयम् तथाचैकं मृताहमतिक्रम्य तदुत्तरमृताहेऽतिक्रान्तं प्राप्तकालं चेति श्राद्धद्वयं कार्यमित्यर्थः । एवं करणे क्वचित्त्रयमपि । यथा एकादशे आद्यं, स्वकाले ऊनं, द्वितीयमासिकत्रैपाक्षिकाभ्यां सह तृतीयं मासिकं, चतुर्थेन सह पञ्चमं, षष्ठोनषाण्मासिकाभ्यां सप्तमम्, अष्टमेन नवमं, दशमेनैकादशं, द्वादशोनाब्दिकामिति । सपिण्डनापकर्षपक्षे पक्षद्वयं द्वादशाहेन वेत्यनेनोक्तं, तत्राद्यपक्षविषयमाह-*यदेति । *दर्श इति । तत्राहिताग्नेः पितृयज्ञार्थं सपिण्डनस्यावश्यकत्वात् । *द्वादशादिनेषु

त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरम् ।

इति भविष्योक्तेरिति मदनरत्ने उक्तम् । पृथ्वीचन्द्र-कालादर्शनिर्णयामृतादयस्तु—

ऊनान्यूनेषु मासेषु विषमाहे समेपि वा ।
त्रैपक्षिकं त्रिपक्षे स्यान्मृताहे त्वितराणि तु ॥

इति कार्ष्णाजिनिस्मृतेः पूर्वत्र वृत्ते प्रवृत्ते इत्यर्थमाहुः । ते तदनन्तरशब्दविरोधात् त्रैपक्षिकद्वितीयमासिकयोः संकरापत्तेरेवं व्याख्यायां मानाभावाच्चोपेक्ष्याः । त्रिप-क्षसपिण्डने त्वेवंशब्दाभावादधिकरणत्वमेव ज्ञेयम् । यत्तु क्रियानिबन्धे गारुडे—

त्रैपक्षिकं त्रिपक्षे तु प्रवृत्ते विषमे दिने ।
मासिकान्यपि चोनानि अष्टाविंशतिमे दिने ॥ इति,

तन्निर्मूलम् । स्मृतिरत्नावल्याम्—

द्वादशाहे यदा कुर्यात्पितुः पुत्रः सपिण्डनम् ।
एकादशेऽह्नि कुर्वीत प्रेतश्राद्धानि षोडश ॥

पैठीनसिः—

सपिण्डीकरणादर्वाक् कुर्वन् श्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥

---

द्वादशमासिकानीति । मध्यवर्तीनि ऊनमासिकादीन्यपि ग्रा-ह्याणि । ततश्चैकादशाहे आद्यं, तदुत्तरादिने ऊनं द्वितीयं च, तदु-त्तरदिने त्रैपाक्षिकं तृतीयं च, तदुत्तरादिनेषु चतुर्थपञ्चमषष्ठानि, तदुत्तरादिने ऊनषाण्मासिकं सप्तमं च, तत्तदुत्तरदिनेष्वष्टमनवम-दशमैकादशानि, तदुत्तरादिने द्वादशमूनाब्दिकं चेति मरणदिनाद्वा-विंशतिदिनानि गतानि । ततस्त्रयोविंशतितमे दिने सपिण्डनं कृत्वा पितृयज्ञं वृद्धिं वा कुर्यात् द्वादशाहे सपिण्डने तु एकादशाहे एकाहे इत्यर्थः । तत्र तु द्वादशाहे एव मासिकान्यपि क्रियन्ते । तत्राद्यस्य

सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ॥

मदनरत्ने कात्यायनः—

श्राद्धम*ग्निमतः कार्यं दाहादेकादशेऽहनि ।
ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा ॥

ध्रुवाणि त्रैपक्षिकादूर्ध्वानि । क्रियानिबन्धे गारुडे—

*त्रिपक्षात्पूर्वतः साग्नेर्भवेत्संस्कारवासरे ।
ऊर्ध्वं मृतदिनेऽनग्नेः सर्वाण्येव मृताहतः ॥

*एतानि च *यदा सपिण्डनात्पूर्वं युगपत्कुर्यात्तदा देशकालकर्त्रैक्ये तन्त्रत्वादे*कः पाक इति केचित् । पाकभेद इति भट्टचरणाः । *अत्र केचिदाहुः—

---

पूर्वेऽह्नि जातत्वादूनमारभ्य पञ्चदशमासिकानि कार्याणि न षोडश । एवं यदा वृद्धिपूर्वदिनादौ सापिण्डनार्थं क्रियन्ते तदा स्वकालवाचिनौ न यदि तर्ह्यनर्थकौ तथात्वे सापिण्डनात्पूर्वं परस्ताद्वा सकृदेवानुष्ठानापत्तेः । *अग्निमत इति । आहिताग्नेरित्यर्थः ।

मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निभिः ।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः ॥

इति शङ्खवचनात् एकादशपदं च नवश्राद्धादेरप्युपलक्षणम् । *त्रिपक्षादिति । त्रैपक्षिकान्तं पूर्वश्राद्धं दाहवासरमारभ्य भवेदित्यर्थः ।

ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् ।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥

इति जातूकर्ण्यवचनात् । *एतानि चेति । षोडशश्राद्धानीति प्रकृतं । *यदेति । वृद्ध्यर्थं चोत्तराणि कुर्यादिति शेषः । *एकः पाक इति । एतच्च यावत्संन्निपाति आरादुपकारकं च तस्य तन्त्रत्वार्थम् । ये तु प्रधानयोर्विप्रभोजनपिण्डदानयोरपि तन्त्रं मन्यन्ते तन्मतं दर्शयति—*अत्र केचिदाहुरिति। प्रधा-

देशकालकर्तृदैवतैक्ये तन्त्रत्वात् श्राद्धकालातिक्रमापत्तेः,

*द्वादशाहेऽथ सर्वाणि संक्षेपेण समापयेत् ।
तान्येव तु पुनः कुर्यात्प्रेतशब्दं न कारयेत् ॥

इति कात्यायनोक्तेः,

नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचित् ।

इत्यस्य दैवतैक्यपरत्वेऽप्यत्र तत्सत्त्वात्—

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न कारयेत् ।

इति जाबाल्युक्तेः । *षोडशसंख्यायाश्च वाजपेये प्राजापत्ययागसप्तदशत्ववत्सान्नाय्ययागद्वित्ववच्च दर्शपातसंक्रान्तिश्राद्धवद्युगपदनुष्ठानेऽप्युपपत्तेः—'आद्यमासिकाद्यूनाब्दिकान्तेषु षोडशश्राद्धेषु क्षणः क्रियताम्' इत्येवं प्रयोगेणैको विप्रः पिण्डोऽर्घश्चेति । *विरुद्धविधिविध्वंसेऽप्येवम् । तन्मन्दम्,

द्वादशाहेन वा भोज्या*एकाहे द्वादशापि वा ।

इति हेमाद्रौ हारीतवचोविरोधात् । तेन विप्रभेदात् पिण्डार्घाद्यपि भिन्नमिति सिद्धम् ।

एतानि द्वादशाहादौ सपिण्डनात्पूर्वं कृतान्यपि वृद्धिं विनाऽपकर्षे पुनः स्वकाले कार्याणि,

---

नतन्त्रस्य वाचनिकत्वमप्याह—*द्वादशाहे इति । ननु प्रयोगैक्ये षोडशत्वव्याघात इत्यत आह—*षोडशेति । *विरुद्धविधीति । अथाहिताग्नेर्मरणादिनात् पञ्चमे मासि दाहः तदा षष्ठे मासि सपिण्डनं चेत् यानि सुकराणि तानि कृत्वा सपिण्डनप्राग्दिने सर्वाणि कृत्वा सपिण्डनं तदा तस्मात्त्रैपक्षिकान्तं कृत्वा मृताहनि सप्तममासि तृतीयमासिकादि ऊनषाण्मासिकान्तानि । तत्रैकैकं, ततः शेषमप्यपकृष्य कुर्यात्, ततः सपिण्डनमित्याद्यूह्यम् । *एकाहे द्वा-

यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम्।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम्॥

इति मदनरत्नेऽङ्गिरसोक्तेः। न चेदं मासिकानामपकर्षं *विधत्ते किंतु सपिण्डनोर्ध्वं स्वकालेऽनुष्ठानमेवेति वाच्यम्,

श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सापिण्डताम्।

इति विरोधात्,

यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता।
विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश॥

इति माधवीये गोभिलोक्तेश्च।

अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं कृतम्।
षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः॥

इति तत्रैव गालवोक्तेः। षोडशत्वं चैकादशाहसपिण्डनपक्षे तत्राद्यमासिकस्य कालसत्त्वात्,अन्यपक्षे-

---

दशेति। अयं भावः—यत्र द्रव्यगता संख्या तत्र कर्मणस्तन्त्रत्वेऽपि न बाधः यथा "सप्तदश प्राजापत्यान्" इत्यादौ। यत्र तु कर्मगता संख्या तत्र कर्मणः तन्त्रत्वेऽपि संख्यायाः पृथक्त्वसन्निवेशित्वाद्बाधः यथा षोडशश्राद्धे। एकाहे द्वादश विप्रा भोज्या इति च भोजनरूपप्रधानपृथक्त्वे पर्यवसानादिति। एकाहश्चैकादशाहः उत्तरत्राद्यस्यैकादशे कृतत्वात्तं विनैवानुष्ठानं स्यात्। तदुत्तरादिने वा,

मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा।

इति वचनात्। यदा तु तदुत्तरं वृद्ध्यादिनिमित्तादपकर्षः प्राप्तस्तदा मृताहे एव अवशिष्टानि कर्तव्यानि एकस्यापि तावत्स्वकालानुग्रहलाभात् इतरेषामपि मृताहसामान्यकालानुग्रहात्। मृताहालाभे तु सपिण्डनादिने एव, तन्निमित्तस्यापकर्षस्य तद्दिन एव कर्तुमुचितत्वात्। *विधत्ते इति। अन्यथोदकुम्भानामप्यपकर्षः

षु यथासंभवं ज्ञेयम् । यत्तु दीपिकायाम्—'अनुमासिकानि तु चरेत्तान्येव सापिण्ड्यतः पश्चात् द्वादश' इत्युक्तेरूनानां न पुनः कृतिरित्युक्तं, तदेतद्विरोधाच्चिन्त्यम्। यत्तु गौडाः—

सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः ।

इति शातातपोक्तेर्मासिकानां प्रेतत्वविमोक्षार्थत्वात्सपिण्डनापकर्षे तदन्तन्यायेन तेषामप्यपकर्षान्मासिकानां न पुनः कृतिः । यत्तु 'मासिकं चोदकुम्भं च' इति लौगाक्ष्यादिवचनं, तन्निर्मूलम् । समूलत्वेपि दार्शपरं चेत्याहुः । त उक्तवक्ष्यमाणवचोनिबन्धविरोधान्मूर्खा इत्युपेक्ष्याः । यत्तु मिताक्षरायां सपिण्डनोर्ध्वं स्वकाले एव कार्याणि अपकर्षस्त्वनुकल्प इत्युक्तम्, तदपि पूर्वविरोधाच्चिन्त्यम्। तेन वृद्धिं विनाऽपकर्षे पुनः *कृतिः।

अर्वाक्संवत्सराद्यस्य सपिण्डीकरणं भवेत् ।
प्रेतत्वमिह तस्यापि ज्ञेयं संवत्सरं नृप ॥

इत्यग्निपुराणात् । वृद्धिनिमित्तापकर्षे त्वस्त्येव तन्निवृत्तिः, अन्यथा वृद्ध्यसंभवादिति शूलपाणिः ।

कार्ष्णाजिनिः—

*सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

---

स्यात् । *कृतिरिति । प्रेतत्वपरिहारार्थमेव तत्करणादिति भावः । अत एवापकृष्य कृतानां स्वकाले पुनः क्रियमाणानां वृद्ध्युपस्थितौ पुनरपकर्षमाह—*सपिण्डीति ।

सपिण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम् ।
सांवत्सरविधानेन दद्यादित्याह शौनकः ॥

इति छन्दोगपरिशिष्टं तु येषामुत्तराक्रियाऽनावश्यिका ते-

निषेधं चाह कात्यायनः—

निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्।
*अयातयामं मरणं न भवेत्पुनरस्य तु॥ इति।

द्विरनुष्ठानं चोत्तरेषामेव, न पूर्वेषां स्वस्वकालकृतानाम्।
तदाह माधवीये कार्ष्णाजिनिः—

अर्वाग्दाद्यत्र यत्र सपिण्डीकरणं कृतम्।
तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः॥

हेमाद्रौ शाट्यायनिः—

प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा।
अपकृष्यापि कुर्वीत कर्तुं नान्दीमुखं द्विजः॥

वृद्धिं विनापकर्षे दोषमाहोशनाः—

*वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत्।
स श्राद्धी नरके घोरे पितृभिः सह मज्जति॥ इति।

आधानेऽपकर्षमाह हेमाद्रावुशनाः—

पितुः सपिण्डीकरणं वार्षिके मृतिवासरे।
*आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात्॥

---

षां पुनःकरणं निषिध्यान्येषां तत्प्रापकम्। सांवत्सरं पार्वणम्। प्रागुक्तलघुहारीतं तु अशक्त्यारोपेणानावश्यकवृद्ध्यर्थं वा अपकर्षो न कार्य इति बोधयदेव वत्सरान्तान्यसपिण्डनकालानामनुकल्पत्वव्यञ्जकं। *अयातयामं नूतनम्। वृद्धिश्राद्धोत्तरं मासिकाकरणेऽस्य मरणं न नूतनं अन्यथा तु नूतनमिति परिग्रहः। *वृद्धिश्राद्धविहीनः तदुपस्थितिविहीनः। *आधानादीति। आदिना इष्टापूर्तिपरिग्रहः। यत्तु आधानाद्यङ्गभूतनान्दीश्राद्धाधिकारसिध्यर्थमयं सापिण्डनापकर्षः नान्दीश्राद्धस्य [illegible]ऽङ्गत्वं न पुनराधाने। तस्मात्पित्रादिमरणोत्तरं प्रथमाब्दे अपूर्वाधानसोमयागादि कार्यमिति। तदसत्, [illegible]धाने प्रवृ-

विशेषस्तूक्तो विवाहनिर्णये। कण्वः—

नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत्।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते॥

गारुडेऽपि—

आपदाद्यकृतं यत्तु कुर्यादूर्ध्वं मृतेऽहनि।

अथ सपिण्डीकरणम्। माधवीये हारीतः—

या तु पूर्वममावास्या मृताहाद्दशमी भवेत्।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान्॥

---

त्तेरभावात् यथाचैतत्तथोक्तं—"पितुरब्दमशौचं स्यात्" इत्यत्र पुनराधाने च,

स्नानाधानविवाहेषु नान्दीश्राद्धं विधीयते।

इत्यविशेषेणैव पुनरुपनयनपुनर्विवाहयोरिव नान्दीश्राद्धस्याङ्गतया प्राप्तेः तत्रैवैतत्प्रवृत्तेरुपपत्तेः। इदं तु बोध्यं प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणादर्वाग् इति विध्योः "निर्वर्त्य वृद्धितन्त्रं तु" इति निषेधस्य च सामान्यरूपत्वेपि चौलोपनयनविवाहाधानेष्टापूर्तेष्वेव प्रवृत्तिः नतु गर्भाधानपुंसवनसीमन्तजातकर्मनामान्नप्राशनादिषु, दाक्षिणात्यानां तथैवाचारात्। जातकर्मादौ केषांचिदनुमासिकाद्यपकर्षाचारस्तु नादरणीयः, न्यायविरोधात्। यथा हि यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं विना क्षिपेत् न्यग्रोधस्तिमिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तस्मै भक्षं प्रयच्छेन्न सोममिति राजन्यवैश्यनिमित्तविहिते फलचमसे सोमाङ्गानां क्रयाभिषवादिविधीनां न प्रवृत्तिः नित्यानित्यसंयोगविरोधात्। नित्यस्य सोमधर्मस्य क्रयादेरनित्येन फलचमसेन संयोगः सर्वथा विरुद्धो नित्यक्रयादिभिर्ज्योतिष्टोमे उपकुर्याद्अनित्यफलचमसद्वारेति वाक्यार्थोपगमेन उपपन्न इति यावत्। तथात्रापि यतोऽनुमासिकापकर्षो मृताह एव कार्यः, एकस्यापि स्वकालाभात्,

*मृताहादूर्ध्वं दशमी एकादशीत्यर्थः ।
सपिण्डीकरणं कुर्यात्पूर्ववच्चाग्निमान्सुतः ।
परतो (१)दशरात्राच्चेत्कुहूरब्दोपरीतरः ॥

इतरेषामपि मृताहरूपसामान्यकालानुग्रहात् नान्यतिथौ । तथाच जातकर्मादिष्वपि । अधिकृतस्यैवापकर्षेऽधिकारो नान्यस्य । नच जननात् प्राग् जातकर्माधिकारोऽस्ति येन सोऽपकर्षे स्यात् । जन्मोत्तरं जातकर्माधिकारे च सूतकेन प्रतिबन्धात्तन्निवृत्तावेकादशाहनियमेन मृताहासम्भवान्नित्यानित्यसंयोगविरोधः जातकर्माणि नित्यमपकर्षः कार्यः स चानियतमृताहप्राप्ताविति वाक्यार्थसम्भव इति यावत् । एवं गर्भाधाने षोडशदिनावधिऋतुकालेऽप्यनियत एव मृताहः । एवं नामकर्मणि । षष्ठे मास्यन्नप्राशनमित्यादौ प्रायशो मृताहसम्भवेऽपि यस्य मृताहो दर्शे तदुत्तरप्रतिपदि शिशोः षष्ठमासप्रवृत्तिः, तत्र मध्ये मृताहासम्भवादुत्तरे वर्षे मासस्यैव समासत्वान्न नियमेन मृताह इति न तत्रापकर्षः नापि वृध्युत्तरनिषेधप्रवृत्तिः । तृतीये वर्षे चौलमिति वर्षादिविहितचौलादिषु च नियमेन मृताहसम्भवात्तत्रैवापकर्षः । एवमनियतकालेष्विष्टापूर्तादिष्वपकर्षः नियमेन मृताहसम्भवात् । ननु वर्षाधिकारेऽप्युपनयनादौ अष्टमवर्षान्त्यकाले मुहूर्तो धृतः तन्मास एव कर्तुः पित्रादेर्मृतत्वात्सपिण्डनार्थमपकृष्टानामपि मासिकानामुपनयने वृद्धिश्राद्धार्थमपकर्षे मृताहासम्भवात् पूर्वोक्तन्यायप्रवृत्तिर्दुर्वारेति चेत् ? ईदृशान्तिममुहूर्तनिश्चयस्य पुरुषापराधप्रभवत्वेन मृताहापकर्षकर्तव्यताविध्याविघातत्वात् । अतस्तत्र नवमवर्षे एवोपनयनं कार्यम् । तस्माच्चौलादिष्वेवापकर्षो न गर्भाधानादिषु । अत एव कालकाण्डहेमाद्रिप्रयोगपारिजातादिषु गर्भाधानाद्युल्लङ्घ्य चौलादिष्वेवापकर्षविधिवि-

( १ ) 'दशरात्रस्य पूर्णे त्वब्दे तथेतरः' क०

इति कार्ष्णाजिनिस्मृतेः । *आहिताग्नेस्तेन विना श्रौतपिण्डपितृयज्ञासिद्धेः । तदाह गालवः—

सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां (१)पितृयज्ञः प्रवर्तते ॥

मदनरत्ने प्रजापतिः—

*नासपिण्ड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।

---

षयो दर्शित इति । आहिताग्नेः पुत्रस्य पित्रोः सपिण्डने कालत्रयं दर्शरूप एकादशाहः दशाहात् परं दर्शात् पूर्वं यत्किञ्चिद्दिनं द्वादशाहो वेति क्रमेण दर्शयति—*या त्वित्यादि । अत्र साग्निकपदान्याहिताग्निपराणि । तत्राग्निपदं विधुरान्याग्निपरं, विच्छिन्नाग्नेः पितृयज्ञस्याकर्तव्यत्वात् पार्वणश्राद्धस्यानावश्यकत्वाच्च । अन्यान्यग्निपदान्याहिताग्निपराणि । *मृताहादिति । यदि तु मृताहाद्दशमी या रात्रिस्ततः परो दर्श इति व्याख्यायते तदा दशाहात् परो दर्शः कालो लभ्यते नान्यथा दर्शात्मकैकादशाहस्यानियतत्वात् । *इतरः अनाहिताग्निः । *आहिताग्नेरिति । औपासनाग्निमतस्तु दशाहान्तःपातिदर्शवत् पितृयज्ञलोपः नतु तस्य पितृयज्ञानुरोधादुक्तकाले सपिण्डनमपि । *नासपिण्ड्येति ।

पापी भवत्यकुर्वन् हि पितृहा चोपजायते ।

इत्युत्तरार्धेन स्मार्ताग्निमतः पितृयज्ञाकरणे पापाभावो ध्वन्यते । तस्योक्तकालाविधानात् । यथाऽनाहिताग्नेर्विहितो "यदहर्वा वृद्धिरापद्येत" इति कालः आहिताग्नेर्न प्रवर्तते एवमाहिताग्नेर्विहितकालोऽप्यनाहिताग्नेः, आहिताग्न्यधिकारिककालनियमाबाधवदनाहिताग्न्यधिकारिककालनियमाबाधस्यैवौचित्यात् । अन्ये तु साग्निकेन पितृयज्ञाधिकारिणा सम्भवे आशौचोत्तरदिनमारभ्य द्वादशसु दिनेषु प्रोक्तरीत्या षोडशश्राद्धानि विधाय तदुत्तरदि-

(१) 'प्रेतयज्ञः' क०

अपरार्के कात्यायनः—

एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि ।
प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिण्डताम् ॥

आशौचान्तप्रथमदर्शयोर्मध्ये कस्मिंश्चिदह्नीत्यर्थः । पित्रादीनां सपत्नीकानां देवतात्वेन *मातुरपि तत्रानुप्रवेशान्मातुरपि प्राग्दर्शात्सपिण्डनं *युक्तमित्यपरार्कः ।

---

ने पितृपितामहप्रपितामहान्यतमस्य मात्रादीनां च सपिण्डनं कार्यम् । तदुत्तरदर्शे पितृयज्ञः दर्शात्पूर्वं तावत्कालासम्भवे "एकाहे द्वादशाथवा" इति पक्षेणाशौचोत्तरदिने तन्त्रेण षोडशश्राद्धानि विधाय तदुत्तरदिने दर्शादर्वाग् यत्र क्वापि दिने वा सपिण्डनं कृत्वा दर्शे पितृयज्ञः "एकादशाहान्तं निर्वर्त्य" इति वाक्यात् । द्वादशादिन एव दर्शपाते तत्रैव सपिण्डनं पितृयज्ञश्च । एकादशाहे तत्पाते तु तत्रैव षोडशश्राद्धानि सपिण्डनं पितृयज्ञश्च । "सपिण्डीकरणं कुर्यात्" इत्यत्र दशरात्रस्य परतः पूर्वे दर्शे इत्यन्वयेन "या तु पूर्वममावास्या" इत्यत्र मृताहावधिकदशमीत्वोक्त्या चाशौचान्त्यदिनानन्तरभाविदर्शविषयत्वात् । सपिण्डनं कृत्वा पितृयज्ञस्तु दुष्करः तथाचोक्तं "नासपिण्ड्याग्निमान्" इत्यादीनि वदन्ति। *मातुरपीति । पितामह्यादेरुपलक्षणमनुप्रवेशादिति ।

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।

इति वचनात् । *युक्तमिति । मातापित्रोरिति स्पष्टमुक्तमित्यर्थः । नचैवं श्राद्ध इव पिण्डपितृयज्ञेऽपि सपत्नीकत्वेन पित्रादिनिर्देशापत्तिः तं विनाप्यसम्भावित्वोपपत्तेः मातुर्मातामहेन सपिण्डने तत्पिण्ड इव एकमूर्तित्वमाप्नोतीतिवचनात् अन्यथा मातामहांशभागित्वार्थं तस्यापि सदुहितृकत्वेन निर्देशापत्तेः । अत्र सुतः पुत्रः मातापित्रोरितिपदवशात्साग्निकः पुत्र एव । अनग्निकोऽपि स एव तत्प्रतियोगित्वादिति मतं निराकर्तुमाह—

*एवं पितामहादेरपि सपिण्डनं प्राग्दर्शात्कार्यम् । *तेन विना *पार्वणायोगात् । द्वादशाहे वा कार्यम् ।

साग्निकस्तु यदा कर्ता प्रेतश्चानग्निमान्भवेत् ।
द्वादशाहे भवेत्कार्यं सपिण्डीकरणं सुतैः ॥

इति गोभिलोक्तेः । साग्नेः प्रेतस्य तु त्रिपक्षे,

प्रेतश्चेदाहिताग्निः स्यात्कर्ताऽनग्निर्यदा भवेत् ।
सापिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके ॥

इति सुमन्तूक्तेः । मदनरत्ने लघुहारीतोपि—

अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही ।
प्रेतश्चेदाग्निमांस्तु स्यात्त्रिपक्षे वै सापिण्डनम् ॥

---

*एवमिति । पिण्डपितृयज्ञार्थं साग्निकस्य कर्तुः साग्नेर्निरग्नेर्वा प्रेतस्य सपिण्डने द्वादशाहादिविधिषु पितृग्रहणं पितामहप्रपितामहयोर्मातृग्रहणं पितामहीप्रपितामह्योश्चोपलक्षणं पुत्रग्रहणं च पौत्रप्रपौत्रयोः । अन्यथा तद्दैवताकपितृयज्ञानिर्वाहात् । निरग्नेस्तु कर्तुः साग्निकस्य निराग्निकस्य वा प्रेतस्य त्रिपक्षद्वादशाहादिविधिषु पितृपुत्रग्रहणं नोपलक्षणं मानाभावादित्यर्थः । हेत्वन्तरमाह—*तेनेति । *पार्वणेति । मृतपितृकस्य साग्निकस्य पितृयज्ञवद्दर्शश्राद्धमप्यावश्यकम् ,

नासपिण्ड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ॥

इति प्रजापतिनाऽऽवश्यकाभ्युदयसाहचर्येण पार्वणोक्तेः त्रिपक्षे वै इति अधिकरणसप्तमीवशात्तृतीयपक्षः स कालः न तु तत्पूर्त्यनन्तरा मृतसजातीया तिथिः, तस्यास्तर्हि भूतत्वात् । एवं त्रिमासषण्मासादावपि । प्रेतश्राद्धनिषिद्धतिथिनक्षत्रादिकं तु तत्र साज्यम् । वैशब्दादाहिताग्नेस्त्रिपक्ष एवेति नियमः । न त्वस्यैव त्रिपक्ष इति अग्रिमभविष्याविरोधात् । विरुद्धनियमोपगमे

द्वयोः साग्निकत्वे द्वादशाह एव,

साग्निकस्तु यदा कर्ता प्रेतो वाप्यग्निमान्भवेत् ।
द्वादशाहे तदा कार्यं सपिण्डीकरणं *पितुः ॥

इति तेनैवोक्तेः । द्वयोरनग्निमत्त्वे तु भविष्ये—

सापिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् ।
अनाहिताग्नेः प्रेतस्य *पूर्णेऽब्दे भरतर्षभ ॥

---

त्रिपक्षेऽकृतसापिण्डनस्य नैव सापिण्डनं स्यादिति चेत् ? न, नियमेन एकादशाहद्वादशाहयोः पूर्वकालयोरेव निवृत्तिर्नतूत्तरभाविनां तृतीयमासादीनां, द्वादशाहादिकालेष्विति गोभिलवाक्यात् ।

स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः ।

इति मण्डनोक्तेश्च । अत्र विच्छिन्नाग्नेस्त्रिपक्ष एवात्मन्यग्निसत्त्वेन साक्षित्वात् । यत्र च दम्पत्योरन्यतरस्य पूर्वं मरणेनाग्नयो गतास्तत्रेतरस्य कालान्तरे मरणे साग्नित्वाभावान्न त्रिपक्षानियमः । उत्सृष्टाग्नेरप्येवम् । *पितुरिति । पितुरित्युक्तेः पित्रादिभिन्नस्य साग्निकस्यापि कर्तुर्न द्वादशाहनियमः । नच पितुरित्यविवक्षितम्, उभयोः साग्निकस्यापि कर्तृत्वापत्तेः । एवं साग्निकायाः पत्न्याः पुत्राभावात् पत्या सापिण्डने न द्वादशाहनियमः पुत्रग्रहणात् साग्निपदस्य विद्यमानाग्निपरत्वाच्च । नापि तस्या अनग्निकर्तृके साग्नेः सपिण्डने त्रिपक्षविधानात्त्रिपक्षानियमः,

प्रेतश्चेदाहिताग्निः स्यात्कर्ताऽनग्निर्यदा भवेत् ।

इत्यत्राहिताग्निपदवशादलग्निनाऽनाहिताग्नेरेव ग्रहणात् । एवं साग्निकः पतिः पत्न्याः सपिण्डनं करोति तत्र न द्वादशाहत्रिपक्षयोर्नियमः । *पूर्णेऽब्दे इति । अतीते इत्यनेन व्यक्तम् । तत्राशक्तावेकादशो मासः, तत्राप्यशक्तौ नवमः, तत्राप्यशक्तौ आशौचान्त्यदिनोत्तरं दिनमारभ्य द्वादशसु अहःसु षोडशश्राद्धानि कृत्वा त्रयोदशेऽन्हि, तत्राप्यशक्तौ एकादशाहे द्वादशाहेऽप्येव वा

द्वादशेऽहनि षण्मासे त्रिपक्षे वा त्रिमासि वा ।
एकादशेऽपि वा मासि *मङ्गलस्याप्युपस्थितौ ॥

---

तानि कृत्वा मृतिदिनाद् द्वादशाहे इत्यर्थः षाण्मासादित्रिके पूरणप्रत्ययार्थविवक्षया षष्ठमासादावित्यर्थः । तेषां च षष्ठमासादीनां समस्तानामेवाङ्गत्वमधिकरणत्वात् । नतु तदुत्तरातिथेः 'पूर्णे' इत्यस्मरणात् । संवत्सरान्वयित्वेन श्रुतस्यानुषङ्गे प्रमाणाभावात्—"मासं दर्शपूर्णमासाभ्याम्" इत्यादिषु "उपसद्भिश्चरित्वा" इत्यस्येव । तेन षष्ठमासादिगते इति हेमाद्रिः प्रत्युक्तः । ननु आहिताग्नेः प्रेतस्याहिताग्निश्चेत् कर्ता तदा द्वादशाहनियमात् अनाहिताग्निश्चेत्कर्ता तदा त्रिपक्षनियमादेतौ कालौ अनाहिताग्नौ प्रेते अनाहिताग्नेः कर्तुः कथं स्याताम् ? नहि तयोरयमेव कालो नान्य इत्येवनियमो नान्यादृश इति मन्तव्यम् । "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिषु एकवाक्योपादानाद्ब्राह्मणाद्यो वसन्तादिष्वेव वसन्तादिषु ब्राह्मणादय एवेति द्वयोरपि कर्तृकालयोर्मिथोनियमद्वयस्य दुर्वारत्वात् । मैवं, तत्र कर्तृकालविशेषयोरैककर्म्यादरुणैकहायनीवद्युक्तो मिथोनियमः । इह तु सापिण्डनस्य वाक्यान्तरेण विधानेनाविधेयत्वात्क्रियानुवादेन गुणद्वयविधेरसम्भवात् , यदा चेत्यादिशब्दैः कर्तृप्रेतसाग्निकत्वादेर्निमित्तत्वेन स्पष्टमुपादानाच्च तयोः स एव कालो नान्य इत्येक एव नियमः । अत एवाऽऽनन्त्यात्कुलधर्माणामिति व्याघ्रवचनमपि साग्निप्रेतकानग्नौ कर्तरि न प्रवर्तते । एवं हेमाद्रिमाधवादिसकलनवीनप्राचीनधार्मिकसंमते साग्नौ प्रेते अनग्नौ कर्तरि त्रिपक्ष एवेति नियमे स्थिते, ये—

आहिताग्निः पिता चाथ पुत्रश्चानाग्निमान् भवेत् ।
त्रिपक्षादौ द्वादशेऽह्नि त्रयोदशादिनेऽथवा ॥
सपिण्डीकरणं तस्य कुर्यादिति पितामहः ॥

कात्यायनगोभिलौ—'यदहर्वा वृद्धिरापद्येत' इति। तच्च वृद्धिदिन एवेति वाचस्पतिः। तन्न, 'प्रातर्वृद्धिनिमित्तकम्' इति नियमात्सापिण्डनस्य चा*पराह्णकालीनत्वेन पूर्वत्वबाधापत्तेः। *वृद्धिदिने तत्पूर्वदिने वेति श्रीदत्तः। *स्मार्तगौडस्तु 'वृद्धिपूर्वो वर्षान्त्यश्च क्षणः सपिण्डनस्य प्रेतत्वनाशे सहकारी। तेन परेद्युर्विघ्नाद्वृद्ध्यभा-

---

इति पद्यं वृद्धगार्ग्यनाम्ना—

उभयोः साग्निकत्वेऽपि निरग्नित्वेऽपि वै सुतः।
पितुः सापिण्डनं कुर्याद् द्वादशेऽह्न्येव नित्यशः॥

इति पद्यमाङ्गिरोनाम्ना—

कर्ताऽनग्निर्यदा प्रेतः साग्निकस्तु भवेत्तदा।
त्रिपक्षादौ च सापिण्ड्यं द्वादशेऽह्न्यथवा भवेत्॥

इति पद्यं लघुहारीतनाम्ना च मुक्तकण्ठाः पठन्ति तत्र "यवमयश्चरुर्भवति" इत्यादौ यथा दीर्घशूकेषु यवशब्दप्रसिद्धिरार्याणां कंगौ तत्प्रसिद्धिर्म्लेच्छानाम्। अतो म्लेच्छप्रसिद्धिं विहायार्यप्रसिद्धेरुपग्रह आर्यम्लेच्छन्याये दर्शितस्तथा त्रिपक्षादिरेवानाहिताग्नौ कर्तरि साग्नेः प्रेतस्य सपिण्डीकरणकालः हेमाद्रिमाधवप्रभृ[illegible] संमतः द्वादशाहस्तु तादितरेषामिति इतरमतं कालं विहायार्यमतः काल एवोपादेयः। किञ्च प्रेतत्वनिवृत्तिसहि[illegible] सापिण्डनं विहितं, तच्च कथं धार्मिकानुमते द्वादशाहे तस्य तत्कर्तृकसपिण्डनाद्वृथा चेष्टारुपालभ्येत, तत्र तथाचेष्टां कुर्वन् वा पितृद्रोग्धा न स्यादिति? वृद्धिनिमित्तं सपिण्डनापकर्षमाह—*मङ्गलस्यापीति। *अपराण्हकालीनत्वेनेति। मध्याह्नकालीनत्वेन वेति शेषः। *वृद्धिदिने इति। यत्र नान्दीश्राद्धमपराण्हे तत्र वृद्धिदिने, यत्र तत्र प्रातस्तत्र पूर्वदिने इत्यर्थः। वृद्धिपूर्वदिनस्य सापिण्डनकालत्वं दूषयतां मतमाह—*स्मार्तगौड-

वेऽपि तत्कर्तव्यतानिश्चयसहितमेव कालान्तरक्रियमाणवृद्धिपूर्वक्षणसहकृतं प्रेतत्वनाशकम्' इत्याह । तन्न, *अकाले कृतस्य फलाजनकत्वात् । एतेन निमित्तनिश्चयवत एवाधिकाराद्वृद्ध्यभावेऽपि न क्षतिरिति मिश्रोक्तिः परास्ता । वृद्धिपूर्वदिनस्य *वर्षान्तस्य च कालस्याङ्गत्वेन निमित्तत्वाभावात् । तेन पुनः कार्यमित्यन्ये । मदनरत्ने पुलस्त्यः—

निराग्निकः सापिण्डत्वं पितु*र्मातुश्च धर्मतः ।
पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत् ॥

चतुर्विंशतिमते—

सापिण्डीकरणं चाब्दे संपूर्णेऽभ्युदयेपि वा ।
द्वादशाहे *तु केषांचिन्मतं चैकादशे तथा ॥

---

क्त्वाति । *अकाले इति । मासानन्तरं वृद्धिः कर्तव्येति निश्चयवतोऽप्यधिकारापातादिति भावः । *वर्षान्तस्येति मृताहस्य वर्षान्तस्य पक्षेण स्मृत्यर्थसारमतेन च । वस्तुतस्तु आपद्येतेति गोभिलस्य सन्निधीयेतेत्यर्थाद् वृद्धिसन्निहिते दिने इत्यर्थः ॥

पितुः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम् ।
वृद्धिरागामिनी चेत्स्यात्तदाऽर्वागपि कारयेत् ॥

इति नागरखण्डात् । सन्निहितादिनं च पूर्वं तत्रासम्भवे तत्पूर्वादिकम् । सम्भवति च मृताहे मासिकानि कृत्वा सपिण्डनं ततो वृद्धिरिति । *मातुश्चेति । चकारो मातामहादिसङ्ग्रहार्थः यतो वृद्धिनिमित्तकः सपिण्डनापकर्षो वृद्धिश्राद्धार्थः, सपिण्डनं विना पितृत्वप्राप्त्यभावेन श्राद्धस्यैव दुष्करत्वात् । *तु केषांचिदिति । द्वयोर्निरग्निकयोरेकादशाहोपि सपिण्डीकरणकाल इत्यर्थः। न चायं दर्शात्मक एकादशाहः पिण्डपितृयज्ञाधिकारिकसाग्निककर्तृविषय एवास्तीति वाच्यं, वर्षान्तकृत्यसपिण्डनकालान्तरानुरो-

पृथ्वीचन्द्रोदये बौधायनः—*'अथ सपिण्डीकरणं, त्रिपक्षे वा तृतीये वा मासि, षष्ठे वैकादशे वा द्वादशे वा द्वादशाहे वैकादशाहे वा' इति । एतत्प्रक्रमे विष्णुः—'मासिकार्थं द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात् । मन्त्रवर्ज्यं हि शूद्राणाम् । द्वादशेऽह्नि संवत्सराभ्यन्तरे यद्यधिमासो भवेत्तदा मासिकार्थं दिनमेकं वर्धयेत्' इति । आशौचोत्तरं द्वादशस्वहस्सु मासिकानि । तेष्वेवाद्यषष्ठद्वादशादिनेषून*मासिकादीनि कृत्वा त्रयोदशेऽह्नि सपिण्डनं कुर्यात् । अधिमासे तु चतुर्दशेऽह्नि कुर्यात् । *शूद्रस्त्रयोदशे "द्वादशेऽह्नि' इत्यस्य मासिकान्त्यदिनपरत्वादिति पृथ्वीचन्द्रः । पैठीनसिः—'संवत्सरान्ते सपि(१)ण्डनं नवमे मासीत्येके ।' अत्र*साग्नेरनग्नेर्वोक्तकालाभावे त्रिपक्षादिसंवत्सरान्ता अनुकल्पा ज्ञेयाः । कल्पतरुस्त्वग्रे वृद्धिनिश्चय एव सर्वेऽपकर्षप्रकारा इत्याह । तन्न, 'यदहर्वा' इति स्वातन्त्र्यश्रुतेः । यद्यपि

---

धेनैतद्वाक्यस्य द्वयोरनाग्निविषयत्वात् । एकादशाहद्वादशाहशब्दौ तु आशौचान्त्यादिनोत्तरादिनतदुत्तरदिनपराविति स्मर्तव्यम् ।

*अथ सपिण्डीकरणमिति । द्वादशेवेत्यत्रातीते इति शेषः । अथ संवत्सरे पूर्णे सपिण्डीकरणमिति पाठे द्वादशे वेति न पाठः, मयूखादौ तदलेखात् । मासिकानामर्थः प्रयोजन प्रेतत्वनिवृत्तिस्तद्वत् ।*ऊनमासिकादीनि । आदिना त्रैपाक्षिकोनषष्ठोनाब्दपरिग्रहः । श्राद्धशब्दस्य षोडशश्राद्धपरत्वात् । *शूद्र इति । अधिमासे इति वर्तते । अयमर्थः—द्वि[illegible]त्तरं त्रयोदशे अधिमासपाते चतुर्दशेऽह्नि अपकर्षं विधाय शूद्राणां न तत्राह्नि किन्तु द्वादशादिन एव आधिक्यपाते त्रयोदशादिन एव तत्र कर्त-

---

(१) 'संसर्जनं' ग० ।

सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम् ।

इति निर्णयामृते कात्यायनोक्तेः । सर्वेषामिति त्रैवर्णिकपरम् । शूद्राणां त्वाशौचमध्ये,—

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्तितम् ।

इति विष्णूक्तेः । एतद्दर्शश्राद्धकारिशूद्रविषयमित्यपरार्के कल्पतरौ च । वृद्धमनुः—

*द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभुजाम् ।
वैश्यानां तु त्रिपक्षादावथ वा स्यात्सपिण्डनम् ॥

निर्णयामृते गोभिलः—

द्वादशाहादिकालेषु प्रमादादननुष्ठितम् ।
सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु ।

इदं *साग्नेरुक्तकालासम्भवे गौणकालविधानार्थमिति मदनपारिजातः । मदनरत्नेऽप्येवम् । ऋष्यशृङ्गः—

*सपिण्डीकरणं श्राद्ध*मुक्तकाले न चेत्कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ।

---

द्वादशे त्वस्य विप्रमात्रपरत्वं स्यादत आह—*एतदिति । दशमपिण्डदानस्याजातत्वादिति । सच्छूद्रस्य दशाहाशौचस्य ज्ञापितत्वात् । ततश्च तस्य दर्शश्राद्धार्थतया साग्निकाग्निवदग्रं सापिण्डनापकर्षः । अत्र मासाद्याशौचिशूद्राणामपि द्वादशाहे सपिण्डने कथं विरोधः ? प्रेतत्वानिवृत्तेः सत्त्वात् । दशमपिण्डानन्तर्यस्य वचनवशेन त्यागादित्यस्वरसः । दर्शितनिष्कर्षमालोच्य त्रैवार्णिककालं व्यवस्थाप्याह—*द्वादशेऽहनीति । *साग्नेरिति । साग्निप्रेतमात्रस्येत्यपि द्रष्टव्यम् । तेन द्वयोरनग्नित्वे वचनवैयर्थ्यं न शक्यम् । साग्निनिरग्निसाधारण्येन संवत्सरान्तेऽपि यदि सपिण्डनं जातं तदा कथमित्यत्राह—*सपिण्डीति । *उक्तकाले वत्सरान्ते । प्रोक्ताः [illegible] लाघवा[illegible] अन्यैर-

कालादर्शेऽपि—

*एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा ।
षष्ठे चैकादशे वाब्दे संपूर्णे वा शुभागमे ॥
सपिण्डीकरणस्यैवमष्टौ कालाः प्रकीर्तिताः ।
साग्नौ कर्तर्युभावाद्यौ प्रेते साग्नौ तृतीयकः ॥
अनग्नेस्तु *द्वितीयाद्याः सप्त काला मुनीरिताः ।
*रोहिणीरौद्रहस्तेषु मैत्रभे वापि तच्चरेत् ॥

नारदसंहितायां तु—

सपिण्डीकरणं कार्यं वत्सरे वा*र्धवत्सरे ।
त्रिमासे वा त्रिपक्षे वा*मासि वा द्वादशेऽह्नि वा ॥

इत्युक्तं, *तच्च वत्सरेऽतीते ज्ञेयम्,

ततः सपिण्डीकरणं वत्सरात्परतः स्थितम् ।

---

पि संगृहीता इत्याह- *एकादशे इति । *द्वितीयाद्या इति । एकादशाहं नवममासं च कालं कालादर्शकृतो न लिखन्ति । *रोहिणीति नक्षत्रम् । सपिण्डनं यावद्वार्षिकपार्वणानुष्ठातॄणामपि वार्षिकमेकोद्दिष्टं श्राद्धं पितृत्वप्राप्त्यभावात् । *अर्धवत्सरे इत्यधिकरणसप्तमी । *मासि वेति । मृताहात्त्रयोविंशतितमे दिनेऽधिकपाते विंशतिमे दिने इति पक्षे । ननु प्राक् पूर्णेऽब्दे इत्यत्र न सतिसप्तमी कारकसप्तम्या बलीयस्या बाधात् । नच पूर्णत्वं न पूर्तिक्षणस्य सपिण्डनाधारत्वासम्भवादिति वाच्यं, लक्षणया पूर्तितिथिमत्त्वसम्भवात् । अत एवात्र वत्सरस्यैवाधिकरणत्वमुक्तमित्यत्राह—*तच्च वत्सरेऽतीते इति । शूलपाण्यादयस्तु आद्यमृताहावधिकषष्ठ्यधिकशतत्रयतिथ्यात्मकः संवत्सरः, तदन्त्यमृताहे सपिण्डनम् "ततः संवत्सरे पूर्णे" "समाप्ते संवत्सरे" इत्यादिवचनेभ्य इत्याहुः । पूर्तिसमाप्ती च नान्त्यकलारूपे तत्र श्राद्धासम्भवात्, किन्त्वन्त्यदिनरूपे—

इति भविष्योक्तेः,

पितुः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम् ।

इति नागरखण्डोक्तेः ।

पितुः सपिण्डीकरणं वार्षिके मृतिवासरे ॥

इत्युशनसोक्तेश्च ।

*पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्तितः ।

तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते ॥

इति हेमाद्रौ वचनाच्च । अस्थानाकरत्वोक्ति*मूर्खोक्तिरेव । यत्तु—

पूर्णे संवत्सरे कुर्यात् सपिण्डीकरणं सुतः ।

*एकोद्दिष्टं च तत्रैव (१)मृतेऽहनि समापयेत् ॥

---

सम्पूर्णे तु ततो मासे पिण्डशेषं समापयेत् ।

शूद्रस्य दशमः पिण्डो मासे पूर्णेऽन्हि दीयते ॥

इत्यादिवत् । यद्वा, संवत्सरपदमेकादिनाधिकवत्सरपरम् । "संवत्सरान्ते प्रेताय" इत्यादिवैष्णवेऽधिकैकादिनकवर्षस्यान्तो मृताह इत्यर्थ इति । तत्र वस्तुतः सपिण्डनकालस्याभेदेऽपि मृताहं गृहीत्वैव वत्सरो निर्वाच्यः । तथा सति 'वत्सरात् परतः' इत्यादिप्रागुक्तसङ्गतिः । अत एव नैकदिनातिभावेनार्थ इत्यभिप्रायः । पूर्णशब्दसहिताब्दादिपदात् वचनवशाद् वत्सरोत्तरदिनमेव ग्राह्यमितिस्थितेऽपि पूर्णसंवत्सरपदस्य तत् लक्षकत्वे स्फुटं वचनमप्याह—*पूर्ण इति । सपिण्डनाब्दिकयोरेकादिनकर्तव्यत्वोक्तेस्तल्लाभः । तत्र सतिसप्तमीप्रकृतेर्लक्षणयाऽधिकरणसप्तमी उत्तरादिने इति शेषो वा वाच्यः । स एव "संवत्सरान्ते प्रेताय" इत्यादावप्यालम्ब्यः । *मूर्खोति । तथाच सपिण्डनमात्रेणैवाब्दिकनिर्वाह इति ग्रन्थकृत्सम्मतोऽर्थः । *एकोद्दिष्टम् मासिकम् ।

---

(१) 'मृताहनि' ग० छ०

इति धवलनिबन्धे जाबाल्युक्तेः

पुत्रः सपिण्डनं कृत्वा कुर्यात्स्नानं सचैलकम् ।
एकोद्दिष्टं ततः कुर्यात् कुतपं न विचारयेत् ॥

---

अत्र वदन्ति सपिण्डीकरणं कृत्वा प्रथमसांवत्सरिकमनुष्ठेयम् । यतः हेमाद्रिवचने षोडशेत्यस्य कोऽर्थः । न तावद् द्वादशमासिकम्, तेन सपिण्डनादिकार्यानिर्वाहात् । नापि सपिण्डीकरणं पितृत्वाप-न्नतृप्तिरूपस्याब्दिककार्यस्य तेनासम्भवात् । किन्तु ऊनाब्दिकपिण्डः,

पूर्णे संवत्सरे श्राद्धं षोडशं परिकीर्तितम् ।

इति पाठात् । तेनैवेत्यस्य च—

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।

इत्यत्र मृताहात् पूर्वेद्युरित्यर्थे तदनन्तरं मृताहे नेति फलि-तार्थः । अर्थान्तरे तु तेनैव संदृब्धमिति पूरणेन तदधिकरणदि-नोत्तरमृताहे नेत्यर्थः । अथ संदृब्धार्थकसांवत्सरिकं दुष्करं यतः मु-ख्यकालः सपिण्डनेनावरुद्धः । नच गौणकालः सम्भवति श्राद्धशे-षभोजनरूपोत्तराङ्गं विना सपिण्डीकरणप्रयोगासमाप्तेः । न च—

एकोद्दिष्टस्य शेषं तु ब्राह्मणेभ्यः समुत्सृजेत् ।
ततः स्वयं तु भुञ्जीत पुनर्मङ्गलभोजनम् ॥

इति मते श्राद्धभोजनमिति प्रेतश्राद्धशेषभोजनमिति प्रेतश्रा-द्धशेषभोजनं निषिद्धमेवेति वाच्यम्, पार्वणैकोद्दिष्टयोः पाकस्य भिन्नत्वादेकोद्दिष्टांशशेषस्याभोजनेऽपि पार्वणांशशेषभोजनस्यावश्य-कत्वात् । वृद्धिमद्दिनसपिण्डने स्वगत्या शेषभोजनलोपे नैव त-त्समाप्तिः—

मलमासेऽपि कर्तव्यमाब्दिकं प्रथमं सुतैः ।

इत्याब्दिकं तु द्वादशाहात्तु सपिण्डनपक्ष एवेति चेत्? मैवम्, विसर्जनेन समाप्ते श्राद्धप्रयोगे पश्चादनियमेन प्राप्तस्य भोजनस्य नियमः श्राद्धशेषप्रतिपत्त्यर्थः । तद्दिनरात्रिगतब्रह्मचर्यादिनियम-

नि यदि कनिष्ठभ्रात्रादिना कृतानि तदा सपिण्डनमेव कुर्यादित्यपरार्कः। सपिण्डने तु कनिष्ठानां नैवाधिकार इत्यर्थः। तत्रैव—

अज्ञानादथवा मोहान्न कृता चेत्सपिण्डता।
तत्रापि विधिवत्कार्या कालादतिचिरादपि॥

तेष्वपि ज्येष्ठस्यैवाधिकारः,

ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः।

इति मनूक्तेः। अपरार्के प्रचेता अपि—

*एकादशाद्याः क्रमशो ज्येष्ठस्तु विधिवत्क्रियाः।
कुर्यान्नैकैकशः श्राद्धमाब्दिकं तु पृथक्पृथक्॥

मरीचिः—

*सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम्।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्॥

यत्तु वाचस्पतिशूलपाणिभ्यामुक्तं द्रव्यदानानुमत्यभावे कनिष्ठैः पृथक्कार्यमिति। तन्न, एवकारस्य तदभा-

---

तु पत्नी स्यात्" इत्यादिसामान्यविध्यपवादकतया पुत्रासन्निधाने तद्भिन्नकृतम् 'अनधिकारिणा कृतमप्यकृतमेव' इति पुत्रेण सपिण्डनमावर्तनीयम्। मासिकापकर्षोऽप्यावर्तनीयः। तत्र सपिण्डनाधिकृतस्यैवाधिकारादित्यर्थः। अपरार्कमतमाह—*तानीति। अत्र—

श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम्।
श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सपिण्डताम्॥

इति समानकर्तृकत्वभङ्गापत्तेरित्यस्वरसः। *एकादशाद्या इति। एकादशपदं षोडशश्राद्धार्थकं श्राद्धानीत्येकवाक्यत्वात्, न तु महैकोद्दिष्टादिपरम्। तेन तस्य पत्न्यादिना करणेऽपि नावृत्तिः। ननु "कुर्यान्नैकैकशः श्राद्धम्" इत्यनेन सपिण्डनान्तश्राद्धस्य विभक्तपुत्रेषु पृथक्त्वनिषेधे कनीयः पुत्रादेस्तत्फलानुपपत्तिरित्यत्राह—*सर्वेषां त्विति। तस्य द्रव्यदानानुमतिद्वारा फल-

वेऽपि पृथक्करणाभावार्थत्वात्*अन्धादेरिव ज्येष्ठे सति कनिष्ठानामनधिकाराच्च। *अतस्तेषां प्रत्यवायमात्रम्। आहिताग्निः कनिष्ठस्तु *कुर्यादेव। अन्यथा *पितृयज्ञासिद्धेः। *एवमावश्यकवृद्धावपि कनिष्ठोऽन्यः सपिण्डो

---

लाभ इति भावः। *अन्धादेरिति। अग्न्याधाने इति विशेषः। *अत इति। ज्येष्ठे सति तदन्यः पितुः सपिण्डनं न कुर्यादित्येवकारवशनिषेधविध्युल्लङ्घनादिति भावः। *कुर्यादेवेति। एवकार आवृत्तिव्यवच्छेदार्थः। अयं चाधिकारः ज्येष्ठस्यासान्निधाने सूतकादिबन्धे वा। *पितृयज्ञेति।

एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि।
प्रकुर्वीताग्निमान् पुत्रो मातापित्रोः सपिण्डनम्॥
नासपिण्ड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत्।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम्॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते॥

इत्यादिवचनात्। नचेमानि पितृयज्ञस्य प्रमाणान्तरप्राप्तसपिण्डनप्रयोजकत्वबोधनेनैवार्थवन्ति एतदुपात्तार्थान्तरस्य प्रमाणान्तरप्राप्तत्वात्। परन्तु क्लृप्ताधिकारं ज्येष्ठं प्रति चरितार्थानि नाक्लृप्तं कनीयसोऽधिकारमपि कल्पयन्ति गौरवादिति वाच्यम्, आरब्धपिण्डपितृयज्ञस्यानिर्वाहापत्त्या कनिष्ठेऽपि प्रवृत्त्यनङ्गीकारात्। यद्वा,

पितुः पुत्रेण कर्तव्याः पिण्डदानादिकाः क्रियाः।

इत्यादिभिः पुत्रमात्रस्य सर्वक्रियाधिकारे प्राप्ते "एकादशाहाद्याः क्रमशः" इत्यादिना एकादशाहादिषु कनिष्ठं प्रत्यपवादे जाते उक्तवाक्यं प्रतिप्रसवविधित्वेन लाघवात्कनिष्ठं प्रत्येव प्रवर्तते, न ज्येष्ठं प्रति; अपूर्वविधित्वे गौरवादनुवादत्वेन वैयर्थ्यात्। शेषं क्रमाधिकारिप्रकरणे। *एवमिति। तथाचेहापि ज्येष्ठस्य

वा कुर्यात् ।

*भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च ।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥
तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥

इति मदनरत्ने लघुहारीतवचनात् । *वृद्ध्यनन्तरं प्रथमाब्दमध्येऽपि काम्यं कुर्यात् । वृद्ध्यभावे तु प्रथमाब्दादूर्ध्वमेवेत्यर्थः । काम्योक्तेः *रनावश्यकेष्टापूर्तादौ *नापकर्षः । *एतद् *भ्रातृपुत्रादिसंस्कारे प्राप्ताधिकारस्य *ना-

---

पुत्रस्य वा न सपिण्डनिवृत्तिरितिभावः । *भ्राता वेति । "अर्धमन्तर्वेदि" इत्यादिन्यायेन भ्रात्रादिपदैराभ्युदायिककर्तृमात्रं ग्राह्यमित्याहुः । काम्यमनावश्यकमपि कर्म वत्सराद् प्रथमादृते तदुत्तरसपिण्डनं कृत्वैव कुर्यात् नतु प्रथमवर्षे तदर्थं सपिण्डनमपकृष्य काम्यस्यापकर्षनिमित्तत्वाभावादित्यर्थे फलितमाह——*वृद्धीति । श्राद्धाङ्गकयोरभ्युदयकाम्ययोरत्र ग्रहणात्तदुत्तरं सपिण्डनापकर्षेऽपि प्रथमाब्दे न कार्यमित्यपि केचित् । *अनावश्यकत्वं सगतिकत्वम् । *नापकर्ष इति । षोडशश्राद्धपूर्वकसपिण्डनस्येति शेषः । अत्र यस्य कस्यापि सपिण्डस्य गृहे वृद्ध्युपस्थितौ येन केनापि सपिण्डेन स्वपित्रादेः सपिण्डनं कार्यमिति दाक्षिणात्यमूर्धन्यतमाचारं प्रदर्शयितुमाह——*एतदिति । अशक्त्यादिनाऽनुकल्पकाले तदनुष्ठाने तु अनुमासिकापकर्षो भवत्येवेत्युक्तं—*भ्रात्रिति । "पितैवोपनयेत्पुत्रम्" इत्यादि । "पिता पितामहो भ्राता" इत्यादिना क्रमेण योऽधिकारस्तद्वत इत्यर्थः । *नान्दीति ।

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

इति कात्तीये तस्याभावे तत्क्रमात् "पितैवोपनयेत् पुत्रम्" इत्यादिः "पिता पितामहो भ्राता" इत्यादिश्च यत्क्रमोऽधिकारिक्रमस्तेन

न्दीश्राद्धाधिकारार्थम् । *अभ्युदयपदं च नान्दीश्राद्धनिमित्तकर्ममात्रपरमिति हेमाद्रिः । तेन ज्येष्ठे देशान्तरस्थे कनिष्ठः सपिण्डनं विनैव वृद्धिं कृत्वा पुत्रसंस्कारं कुर्यादिति श्रीदत्तोक्तिः परास्ता । *भ्रातृशिष्याद्युक्ते*र्नान्दीश्राद्धेज्यदेवतामात्रपरोऽपकर्ष इ*त्यपास्तम् । अस्य क्रममात्रपरत्वाद्वृद्धिकर्त्रैव सपिण्डनं कुर्यादिति न नियम इति

---

क्रमेण स्वपितृभ्य एव दद्यान्न संस्कार्यपितृभ्य इत्यर्थादिति भावः । अभ्युदयक्रियापदे नान्दीश्राद्धकर्मणो लाभं वारयति—*अभ्युदयेति । तेन नान्दीश्राद्धस्य सपिण्डननियमत्वपूर्वेण नियमेन । दर्शिताचारनिर्वाहार्थं जेष्ठापेक्षां निरस्यति—*भ्रात्रिति । *नान्दीति । येषां नान्दीश्राद्धे देवतात्वं तेषामेव पितृत्वासिद्ध्यर्थं । लघुहारीतेन सपिण्डनं कर्तव्यतयोक्तम्, आकाङ्क्षितविधानस्य न्याय्यत्वात् । *अपास्तमिति । अत्र भ्रातृशिष्याद्युक्तेरिति हेतुः । न च "स्वपितृभ्यः पिता दद्यात्" इत्यादौ चतुर्थपादस्य भ्रात्राद्यपत्यसंस्कारे संस्कार्यपितृभ्य एव नान्दीश्राद्धोक्तेः भ्रातेत्यादेर्भ्रात्राद्यपत्यसंस्कारविषयत्वेनैवोपपत्तेर्न तद्विरोधः । एवमनाकाङ्क्षितविधानोपगमे सपिण्डान्यगुरोरसपिण्डनापत्तिरिति वाच्यम्, सुतसंस्कारकर्मसु स्वपितृभ्यो दद्यादिति तावत् सामान्यतो विशेषतश्च प्राप्तं नान्दीश्राद्धमनूद्य—

नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।

इति वचनादन्यसंस्कारे कथमित्यपेक्षायां चतुर्थचरणस्य विधायकत्वमुपेयम् । अन्यथा वैयर्थ्यापत्तेः । तथा च तत्र स्वपितृभ्य इत्यस्यैव सम्बन्धो नतु संस्कार्यपितृभ्य इत्यस्य "सिद्धमन्त्रम्" इति न्यायात् । नहीदं सपिण्डनं नान्दीश्राद्धे देवतात्वासिद्ध्यर्थं किन्तु कर्तुरधिकारासिद्ध्यर्थम् । समानकर्तृकत्वं तु काचित्कत्वेनाप्युपपद्यते । अत एव—

गौडाः । अत एव कन्याया मातृमरणे भ्रात्रा सपिण्डने कृते पितुर्दानाधिकारः ।

*शूलपाणिस्तु—

*महागुरौ प्रेतभूते वृद्धिकर्म न युज्यते ।

इति निषेधात्*मृतस्य भ्रात्रादिः सपिण्डनं कृत्वा तत्पुत्रकन्यादेरभ्युदयं कुर्यान्न तु स्वपुत्रसंस्कारे संस्कार्यपितुः सपिण्डनं विना वृद्धौ देवतात्वाभावादित्याह । तन्न, देवताप्रयुक्तापकर्षस्य निरस्तत्वात् । वृद्धिं विना क-

---

श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ।

इत्येतत्समानकर्तृकत्वस्यापि मायिकत्वाद्यदा कनिष्ठेन षोडशश्राद्धानि कृतानि तदा ज्येष्ठेन सपिण्डनमेव कार्यमित्यपरार्केऽप्युक्तम् । तथाच भ्राता चेत्यादिवाक्येनाभ्युदायिकश्राद्धदेवताभिन्नस्यापि सपिण्डनस्य सपिण्डनं कार्यमिति दाक्षिणात्याचारः सुस्थ एव । तस्याभावे तु तत्क्रमादित्यस्य भ्रात्राद्यपत्यसंस्कारे संस्कार्यपितृभ्य एव दद्यादित्यर्थमनुसृत्य भ्रात्रावेत्यादि वाक्यं व्याचक्षाणस्य मतमाह—*शूलपाणिस्त्विति । तत्र संस्कार्यपित्रादेः सपिण्डनं तत्संस्कारोपस्थितौ तदधिकारिणा तदङ्गनान्दीश्राद्धार्थमपकृष्य कार्यमिति प्रथमतः साधयति—*महागुराविति । नहि भ्रात्रादेर्भ्रात्रादिर्महागुरुर्भवति स्वापत्यस्येति । तदनुसृत्य भ्राता वेत्यस्यार्थमाह—*मृतस्येति । भ्रात्रादयश्च सन्निहिताधिकार्यन्तराभावान्मृतस्य सपिण्डनाधिकारिणः सन्तस्तदपत्यसंस्काराधिकारिणः क्त्वाप्रत्ययात् । पुत्रस्याग्रहणं च पित्रादेः सपिण्डनं कृत्वैव स्वापत्यस्य भगिन्यादेश्च संस्कारं कुर्यादित्यस्य वचनान्तरसिद्धत्वात् । अथ मातापितृमृतिवत्सरे तदपत्यानां कथं संस्कारः?

पितरौ तु मृतौ यस्य देहस्तस्याशुचिर्भवेत् ।

न दैवं नापि पित्र्यं वा यावत्पूर्णो न वत्सरः ॥

निष्ठेन कृते तु विदेशस्थेन ज्येष्ठेन पुनः कार्यम्,

यवीयसा कृतं कर्म *प्रेतशब्दं विहाय तु ।
तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः ॥

इति स्मृतेः ।

ज्येष्ठेन वा कनिष्ठेन सपिण्डीकरणे कृते ।

आद्यपादे 'मातापित्रोः कनिष्ठेन' इति वा पाठः ।

देशान्तरगतानां च पुत्राणां तु कथं भवेत् ।
श्रुत्वा तु वपनं कार्यं दशाहान्तं तिलोदकम् ॥
ततः सपिण्डीकरणं कुर्यादेकादशेऽहनि ।
द्वादशाहे न कर्तव्यमिति शातातपोऽब्रवीत् ॥

इति वचनाच्चेति भट्टाः। लिङ्गाभट्टीयेऽप्येवम् । *पूर्ववचनेऽत्र च मूलं चिन्त्यम् । स्मृत्यर्थसारे तु–'*निभ-

---

इति निषेधादिति चेत् ? न, अशुचित्वोक्तेरनावश्यककर्मपरत्वात् । अपकर्षस्यावश्यकवृद्धिविषयत्वात् । "आधानाद्युपसंप्राप्तौ" इत्यभिधानात् "तथैव काम्यं यत्कर्म" इति लघुहारीताच्च । *प्रेतशब्दमिति । न च सपिण्डनस्य ज्येष्ठमात्राधिकारित्वेऽनधिकारिकनिष्ठकृतसपिण्डनेन प्रेतत्वानिवृत्त्या कथं प्रेतशब्दत्यागेन पुनरावृत्तिरिति वाच्यं दशाहोत्तरदर्शे कनिष्ठस्य पितृयज्ञार्थं सपिण्डनेऽधिकारात् । तत्र प्रेतशब्दं विनाऽर्घ्यसंयोजनादिरूपं सपिण्डनमन्यत्र तु प्रेतशब्दसहितं तत्कार्यम् । अत एव कनिष्ठाधिकारस्यैवार्घ्यसंयोजनादित्यागस्याप्रामाणिकतामनुपदं दूषयति । यत्र कनिष्ठेन पुत्रातिरिक्तेन वाऽभ्युदयार्थं सपिण्डनं कृतं तत्र ज्येष्ठेन पुत्रेण वा नावर्तनीयमित्यावेदनाय वृद्धिं विनेत्युक्तम् । *पूर्ववचने यवीयसेति वचने । तथाच पितृयज्ञार्थं कनीयसा सपिण्डने कृतेऽपि ज्येष्ठस्य सपिण्डनावृत्तिः प्रेतशब्दसहितैव । तेन वृद्ध्यर्थमपकृष्टे तु तत्र न ज्येष्ठस्यावृत्तिरिति नव्यमतमित्यर्थः । *वि-

क्ता ऋद्धिकामाश्चेत्पुत्राः पृथक्सपिण्डीकरणं कुर्युः' इत्युक्तम् । अत्र दत्तकस्य तत्पुत्रादीनां विशेषः प्रागुक्तः । केचित्तु वृद्धिं विनाऽपि कनिष्ठस्य सपिण्डनमाहुः—

मातापित्रोर्मृतेः काले ज्येष्ठे देशान्तरस्थिते ।
कनिष्ठेन प्रकर्तव्यं सपिण्डीकरणं तथा ॥

इति कार्ष्णाजिनिस्मृतेः ।

गते वा रोधिते ज्येष्ठे पित्रा वा प्रेषिते सति ।
षण्मासान्न निवर्तेत तदा कार्यं कनीयसा ॥

संवर्तः—

पुनः सपिण्डीकरणं श्राद्धं पार्वणवच्चरेत् ।
अर्घ्यसंयोजनं नैव पिण्डसंयोजनं न च ॥ इति ।

ते *वचसां निर्मूलत्वात्–'प्रोषिताथसिते पुत्रे' इत्यादिविरोधाच्चोपेक्ष्याः ।

व्युत्क्रममृतौ तु हेमाद्रौ ब्राह्मे—

मृते पितरि यस्याथ विद्यते च पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् ।
मातर्यथ मृतायां च विद्यते च पितामही ॥

---

भक्ता इति ।

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥

इत्यस्यात्रापवादः । वृद्धिकामनया प्राप्ताधिकारेण कनीयसा कृते तु ज्येष्ठेन प्रेतशब्दरहितमेवावर्तनीयम् । *वचसामिति । अत एव—

काश्यादिषु गयायां च प्रेतकार्यं तु यत्कृतम् ।
सपिण्डैरसपिण्डैर्वा पुत्रैरेव कृतं भवेत् ॥

प्रपितामहीपूर्वस्तु कार्यस्तत्राप्ययं विधिः ॥

एवं प्रपितामहजीवने तत्पित्रादिभिर्ज्ञेयम् । तदाह सुमन्तुः—

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने ।
पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ॥

यत्तु—

*व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिण्डता । इति, तन्मातापितृभर्तृभिन्नविषयम्,

व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते ।
यदि माता यदि पिता भर्ता नै*ष विधिः स्मृतः ॥

इति माधवीये स्कान्दोक्तेः । मदनरत्नादौ चैवम् । अत्र 'प्रपितामहादिभिः पितुः सपिण्डने कृते पितामहे मृते तत्सापिण्डने सति पुन*स्तेन सह पितुः सपिण्डनं कार्यम्' इति हेमाद्रिमतमाह । अन्ये *नैतन्मन्यन्ते । तत्त्वं तु पितुः सपिण्डनाभावे पितामहेन सह पुनः कार्यं, न तत्सत्त्वे,

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने ।
पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ॥

इति विष्णुधर्मोक्तेः । पितामहे प्रपितामहे वा पुत्रान्तरै*रसंस्कृतेऽप्यसंस्कृताभ्यामेव पितुः सपिण्डनं-

---

इत्यादीन्यपि निर्मूलानि तीर्थप्रशंसापराणि वा । एवमिदं तीर्थं प्रशस्तं यद्दशाहान्तप्रेतकार्ये पुत्रेतरकृतेऽपि पुत्रकरणप्रयुक्तफलवदिति, नतु ज्येष्ठेतरेण येन केनापि सपिण्डनं कार्यमित्यर्थपराणि तथापदाभावात् । तत्र ज्येष्ठस्यैवाधिकारादिति माधवः । *व्युत्क्रमादिति । गोब्राह्मणादिहतोपलक्षणम् । *एष निषेधरूपो विधिः । * तेन पितामहेन । *नैतदिति । पितुः पुनः सपिण्डनवचनासत्त्वादिति शेषः । *असंस्कृते अकृतसपिण्डने ।

कुर्यात् ,

असंस्कृतौ न संस्कार्यौ *पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥

इति छन्दोगपरिशिष्टात् । असंस्कृतौ दाहाद्यैरिति केचित् । असपिण्डीकृताविति तु तत्त्वम् । अत एवोक्तं तत्रैव—

पापिष्ठमपि शुद्धेन *शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥

पापिष्ठमकृतसापिण्डनं न तु पतितादि, 'अभिशस्तपतितभ्रूणघ्नाः स्त्रियश्चातिचारिणीर्न संसृजेत्' इति वैजवापोक्तेः 'पापकर्मिणो न संसृजेरन्' इति गौतमोक्तेश्चेत्युक्तं निर्णयामृते ॥

पूर्वयोः पुत्राभावे तु पौत्रः कुर्यादेव,

पितामहः *पितुः पश्चात्पञ्चत्वं यदि गच्छति ।

एतच्चान्तिमकाले एव । पूर्वकाले तु पितामहप्रपितामहयोः तत्पुत्रादिना तदभावे स्वयं वा सपिण्डनं संपाद्यैव पितुः सपिण्डनसम्भवात् । न चैवं वर्षान्तपर्यन्तातिक्रमेऽपि तयोः सपिण्डनं कृत्वैव पितुः सापिण्डनं नक्षत्रेषु सुकरमिति वाच्यं, वचनैतदयथार्थ्यापत्त्या कृतसपिण्डनाभ्यां ताभ्यां वर्षान्तकाले पितुः सपिण्डनस्य वाचनिकत्वोपगमात् । तावता वचनसार्थक्यात् तत्पूर्वकालेषु पितामहादिपितृभावानपेक्षपितृसपिण्डनाबोधनात् । *पूर्वौ पितामहप्रपितामहौ । *शुद्धमिति । पितामहेनेति प्रपितामहेनेत्यपि बोध्यम् । अकृतसपिण्डनेन पितामहादिना सह सम्यक् शुद्धं कुर्यादिति भावः । मातामहादित्रयाणां सपिण्डनासत्त्वे तु चतुर्थेन सपिण्डनस्यैवासम्भवात् । वर्षान्तकालेपि पितुः सापिण्डनं न सम्भवति । किन्तु शुद्धैरशुद्धसापिण्डनानन्तरं पितामहेनैवेति । *पितु-

पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम् ॥
नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः ।
पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ॥

इति कात्यायनोक्तेः । अपरार्के शूलपाणौ चैवम् । तेन सपिण्डनस्यानित्यत्वादकृतसपिण्डनयोरेव पावणानुप्रवेश इति *मूर्खोक्तिः परास्ता ।

*कृते सपिण्डीकरणे प्रेतः पावणभाग्भवेत् ।

इति हारीतविरोधाच्च । केचित्पुत्रान्तराभावे पितामहवार्षिकमप्याहुः । तन्न, श्राद्धषोडशमिति नियमात् । इच्छया भवत्येव ।

पितामहस्य चेद्दद्यादेकोद्दिष्टं न पार्वणम् ।

इति वाचस्पतिधृतगर्गोक्तेः । *त्रयाणां यौगपद्ये तु प्राधान्यात्पितुः सपिण्डनं कृत्वा पूर्वयोः कुर्यात् । *पितामहे मृते दशाहान्तः पितृमृतौ पितुः संस्कारं कृत्वा पितामहस्य पुनः सर्वमावर्तयेत् । वृत्ते दशाहे नैवम् ।

---

रिति । तत्र दर्शश्राद्धमप्यकृतसपिण्डनाभ्यां ताभ्यां सह कार्यं नतु तदर्थं तयोः सपिण्डनप्रतीक्षेत्यर्थः । *मूर्खोक्तिरिति । सामान्यतोऽकृतसपिण्डनयोरित्युक्तिरित्यर्थः । वर्षान्तान्यकाले कृतसपिण्डनयोः पार्वणानुप्रवेशापत्तेरिति भावः । नच वर्षान्ते तादृशाभ्यां ताभ्यां सपिण्डने तयोः पार्वणानुप्रवेशो माऽस्त्विति वाच्यं, तथा सति "पापिष्ठमपि शुद्धेन" इति वचनोत्तरं "पितुः सपिण्डनं कृत्वा कुर्यान्मासानुमासिकम्" इति वचनाविरोधात् । *कृते इति । निरग्निकस्य प्रायिकं साग्निकस्य तु दर्शादर्वाक् सपिण्डनं दर्शश्राद्धार्थमुक्तम् । *त्रयाणामिति । एतदपि पितुः वर्षान्तकाल एव । *पितामहे मृते इति । क्रियाकर्तुर्नाशे क्रियावृत्तिर्नास्तीति मिश्रोक्तशुद्धितत्त्वमतं तु हेयम् । अग्निसंस्कारा-

*अशक्त्या पित्रानुज्ञातेन पौत्रेण पितामहश्राद्धे प्रक्रान्ते पितृमृतौ तदाशौचं वहन्नेव पौत्रः पितामहकर्म कुर्यात्प्रक्रान्तत्वादिति मदनपारिजातपृथ्वीचन्द्रौ । यत्तु —

उत्तरात्रितयरौद्ररोहिणी
याम्यसर्पपितृभेषु चाग्निभे ।
श्मश्रुकर्म सकलं च वर्जये
त्प्रेतकार्यमपि बुद्धिमान्नरः ॥

इति सपिण्डनप्रकरणे पाठा*न्मुख्यकाले निषिद्धर्क्षे सपिण्डनापकर्षः । सर्वकालेषु तद्दत्ते तद्वर्ज्यान्येव । पूर्वोक्तब्रह्मोक्तानि षोडशश्राद्धानि कार्याणीति वाचस्पतिमिश्राः । तन्न, अस्य परिभाषात्वेन वाक्यात्सावकाशकर्मपरत्वात्, अस्य प्रेतमात्रदैवत्याभावाच्च ॥

अथ स्त्रीषूच्यते । हेमाद्रौ बृहस्पतिः—

भर्तृगोत्रेण नाम्ना च मातुः कुर्यात्सपिण्डनम् ।

यत्तु भविष्ये—

पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः । इति,

तदा*सुरादिविवाहोढापरम्,

आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् ।

इति वृद्धशातातपोक्तेः । तच्चानेकवचनेषु पितामह्याः पत्या मातामहेन वा सहोक्तम् । तत्र व्यवस्थोक्ता भविष्ये—

जीवत्पिता पितामह्याः मातुः कुर्यात्सपिण्डनम् ।

---

वृत्तिर्केचिन्मते । *अशक्त्येति । इदं तु बोध्यम्–अशौचान्तरमध्ये क्रिया एकादशाहान्तेव सपिण्डनस्य शुद्धकालसम्भवात् ।

*मुख्यकाले वर्षान्ते ।

*आसुरादीति । आदिना गान्धर्वराक्षसपैशाचा ग्राह्याः ।

प्रमीतपितृकः पित्रा तत्पित्रा पुत्रिकासुतः ॥
तत्पित्रा मातुः पित्रा । लौगाक्षिः—
पितामह्यादिभिः सार्धं मातरं तु सपिण्डयेत् ।
पितरि ध्रियमाणे तु *तेनैवोपरते सति ॥
शङ्खः—
मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतः ।
पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम् ॥
येन केनापि मातुः सापिण्ड्यं यत्रान्वष्टकादौ मातुः श्राद्धं पृथगुक्तं तत्र पितामह्या सह कार्यम् ।
नान्दीमुखेऽष्टकाश्राद्धे गयायां च मृतेऽहनि ।
पितामह्यादिभिः सार्धं मातुः श्राद्धं समाचरेत् ॥
इति शातातपोक्तेः । अपुत्रायां तु पैठीनसिः—
अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥
यत्तु लघुहारीतः—
पुत्रेणैव तु कर्तव्यं सपिण्डीकरणं स्त्रियाः ।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये ॥ इति ।
यच्च मार्कण्डेयपुराणे—
सपिण्डीकरणं स्त्रीणां पुत्राभावे न विद्यते । इति,
तत्पुत्रपत्यभावे ज्ञेयम् । अत्र सपत्नीपुत्रोऽपि ज्ञेयः,
बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥
इति मनूक्तेरेतत्परत्वात् । यत्तु शातातपः—
मृते पितरि मातुस्तु न कार्या सहपिण्डता ।

---

तथा च भर्तृगोत्रेणेति वचनं ब्राह्मदैवार्षप्राजापत्यान्यतमाविवाहोढापरम् । *तेनैवेति । यत्र सह[illegible] वा स्त्रियाः सपिण्डनं

पितुरेव *सपिण्डत्वे तस्या अपि कृतं भवेत् ॥ इति, तदशक्तपरम्, केषाञ्चिद्वा मतामिति हेमाद्रिः ।
अन्वारोहणे तु भर्त्रैव सापिण्ड्यम्,

मृता यानुगता नाथं सा तेन सहपिण्डताम् ।
अर्हति स्वर्गवासं च यावदाभूतसंप्लवम् ॥

इति शातातपोक्तेः ।

पत्या चैकेन कर्तव्यं सापिण्डीकरणं स्त्रियाः ।
सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥

इति यमोक्तेश्च । अत्रैकशब्दः पितामह्यादिपञ्चनिवृत्त्यर्थः । पतिपदं वर्गपरम् । सपिण्डनस्य पार्वणैकोद्दिष्टरूपत्वादिति माधवकल्पतरुमदनरत्नादयः । अन्ये तु भर्त्रैवैकेनाहुः—

*स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं भवेत् ।

इत्येवकारश्रवणात् । पृथ्वीचन्द्रोदयेऽपि विकल्प उक्तः । इदं तु तत्त्वम्—यदा हेमाद्र्यादिमते द्वयोरेकः पिण्डस्तदा वर्गेण सह । यदा माधवपृथ्वीचन्द्रादिमते पृथक्पिण्डस्तदैकेन पत्यैकवचनाच्चैकेनापि । अतो *मातृपिण्डमसापिण्डीकृतेनैव पतिपिण्डेन संयोज्यैकीकृतं पि-

---

पत्या सह तत्र भर्तरि अकृतसापिण्डनेऽपि प्रेतीभूते "पापिष्ठमपि शुद्धेन" इति न्यायेनेति । *सपिण्डत्वे सपत्नीकत्वे ।

पूर्वमतेऽस्वरसमाह—*स्वेनेति । *मातृपिण्डमिति । पितृभावापन्नेनैव सपिण्डनं न प्रेतेनेति नियमे मानाभावात् । अत्र पितृमातृपितामहादित्रयाणां पञ्चार्घ्यपात्राणि तत्र मातृपात्रदत्तार्घ्यशेषं पितृपात्रे आसिच्य दत्तार्घ्यजलशेषं पितृपात्रं पितामहादिपात्रत्रये सिञ्चेदित्यर्घ्यप्रकारो बोध्यः । विवेचनकृतस्तु पत्युः सपिण्डनं कृत्वा तद्दिन एव कालान्तरे वा भिन्नप्रयोगं स्त्रियाः

ण्डद्वयं तत्पित्रादिभिः संयोजयेत् । *अन्त्यपक्ष एव-युक्तः । स्मृत्यर्थसारे तु—'अन्वारोहणेनैकदिनमरणे स्त्रियाः पृथक्सपिण्डनं नास्ति । भर्तुः कृते स्त्रिया अपि कृतं भवति इत्युक्तम् , तन्मतान्तरमस्तु । इदं ब्राह्मादिविवाहेषु ज्ञेयम् ।

आसुरादिषु तु शातातपः—

तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् ।
आसुरादिविवाहेषु विन्नानां योषितां भवेत् ।

मातामह्या मातुःपितामह्या तत्प्रपितामह्या चेत्यर्थः । सुमन्तुः—

पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।
माता मातामहे तद्वदित्याह भगवाञ्छिवः ॥

इदमासुरादिपरं पुत्रिकापुत्रपरं चोक्तं प्राक् । हेमाद्रिस्तु *ब्राह्मादिष्वपि सर्वत्र देशभेदाद्विकल्पमाह ।

---

सपिण्डनं कार्यम् , आहत्य प्रयोगैक्यस्य प्रेतीभूतभर्तृपिण्डसंयोजनस्य च विध्यदर्शनात् । तत्रापि पत्नीपिण्डसंयोजनमेकेनैव भर्तृपिण्डेन । "पत्या चैकेन" इति वचनादिति प्राहुः । वस्तुतस्तु आहत्यैकप्रयोगाविध्यभावेऽपि एकदेशकालकर्तृत्वादेकप्रयोगत्वं भविष्यति, "पत्या चैकेन" इति सामान्यवचनादेव च प्रेतपिण्डसंयोजनम् । नच सपिण्डनजन्यपितृभावापन्नैरेव सपिण्डनं "पितृत्वजनकपितृपात्रेषु प्रेतपात्रमासिञ्चति एतेन पिण्डो व्याख्यातः" इति कात्यायनोक्तेरिति वाच्यम् , "शुद्धं पापकृताऽपि वा" इत्याद्यविशेषेण सम्भवन्त्याः पितृत्वापत्तेरत्याग इत्येतावन्मात्रबोधनात् भिन्नप्रयोगस्यावाचनिकत्वात् तत्कल्पनस्याचारविरोधेन दुर्घटत्वाच्चेत्याशयेनाह—*अन्त्यपक्ष एवेति । एवकारो भिन्नप्रयोगपक्षव्यावृत्त्यर्थः । आचारमपि तत्र दर्शयति—*ब्राह्मेति ।

अत ए(१)व गुर्जरेषु कोकिलमतानुसारिणां मातृमातामहप्रमातामहा इति श्राद्धप्रयोगः *सपिण्डनं च दृश्यते । हेमाद्रावापस्तम्बोपि—

कोकिलस्य यथा पुत्रा अन्यसंचयजीविनः ।
पुष्टास्ते स्वकुलं यान्ति एवं नारी मृता सती ॥

यदपि विज्ञानेश्वरो मातामहेन मातुः सापिण्ड्ये पितृश्राद्धवन्मातृश्राद्धं *नित्यमित्याह, यच्च वृद्धिश्राद्धे छन्दोगपरिशिष्टम्—

षड्भ्यः पितृभ्य*स्तदनु श्राद्धदानमुपक्रमेत् । इति,
तदेतद्विषयमेव, *मातुः पृथक् श्राद्धाभावात् ।

अत एव हेमाद्रौ भविष्ये मातुः सपिण्डनं प्रक्रम्य—

उदितेऽनुदिते चैव होमभेदो यथा भवेत् ।
तथा कुलक्रमायातमाचारं च चरेद्बुधः ॥

इत्युक्तम् । अस्य वृद्धावपवादमाह तत्रैव व्याघ्रपात्—

कुर्यान्मातामहश्राद्धं सर्वदा मातृपूर्वकम् ।
विधिज्ञो विधिमास्थाय वृद्धौ मातामहादिवत् ॥

केचिदेतत्पुत्रिकापुत्रपरमाहुः ।

पत्युः सापिण्ड्यमाह लौगाक्षिः—

सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च ॥ इति ।

यत्तु वचनम्—

अपुत्रस्य परेतस्य नैव कुर्यात्सपिण्डताम् । इति,

यच्चापस्तम्बः—

अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा ।

---

*सपिण्डनं चेति । मातामहेन सहेत्यादिः । *नित्यमिति । पृथगित्यर्थः । *तदनु सपिण्डनानन्तरम् । *मातुरिति । अ-

---

(१) 'एव' नास्ति ग०

तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम् ॥ इति, तत्पुत्रोत्पादनविधिप्रशंसार्थमिति माधवः ।

सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते ।
अपुत्राणां तु सर्वेषामपत्नीनां तथैव च ॥

इति हेमाद्रौ प्रचेतसोक्तेश्च । अन्ये तु द्विविधवाक्यदर्शनाद्विकल्पमाहुः । स्मृत्यर्थसारेऽपि–'ब्रह्मचारिणामनपत्यानां च सापिण्डनं नास्ति, तेषां सदैकोद्दिष्टमेव *व्युत्क्रममृतानां सापिण्ड्यं कार्यं न वा । केचि*त्सर्वत्र

---

न्यथेत्यादिः । अन्यत्र "पतिना सह" इत्युक्तेः । *व्युत्क्रमेति ।

पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः ।
पितुः स नाम संकीर्त्य कीर्तयेत् प्रपितामहम् ॥

इति मनूक्तौ पितुर्नाम संकीर्त्य पितरं देवतात्वेनोद्दिश्य प्रपितामहं तदादित्रीनुद्दिशेदित्यर्थात् "यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां दद्यात्" इति विष्ण्युक्तौ "पित्रे पिण्डं निधाय पितामहात् पराभ्यां द्वाभ्याम्" इत्यत्र तृतीयस्याप्युपलक्षणादितिव्याख्यापक्षे कार्यम् अन्यव्याख्यायां तु न कार्यम् । सा चेत्थम्, व्युत्क्रममृतपुत्रेण दर्शादौ पितामहादीनामेव पार्वणं कार्यम्,

ब्राह्मणादिहते ताते पतिते संगवर्जिते ।
व्युत्क्रमाच्च मृते देयमेभ्य एव ददात्यसौ ॥

इति कात्यायनोक्तेः । एवञ्चोक्तमानवं पितुः पितामहप्रपितामहवृद्धप्रपितामहेभ्य इति प्रयोगनियमार्थम् । पितृप्रपितामहवृद्धप्रपितामहोद्देश्यकपार्वणाविध्यर्थत्वासम्भवेन पितुर्नाम सङ्कीर्त्येत्यादेः तत्सम्बन्धित्वेन स्वप्रपितामहादिबुद्धिरेवेत्यर्थात् । ईदृशपार्वणेन सदा पितुरेकोद्दिष्टं च कार्यं, प्रोक्तविष्णुना "पित्रे पिण्डं निधाय" इत्युक्तेः । एवञ्च तद्वाक्ये पितामहादित्यादेः

सपिण्डनमाहुरिति । अपुत्रे व्युत्क्रममृते विशेषो रेणुकारिकायाम्—

*भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सर्वबन्धुविहीनस्य पत्नी कुर्यात्सपिण्डताम् ।
ऋत्विजं कारयेद्वापि पुरोहितमथापि वा ॥
वसुरुद्रादितिसुतैः कार्या तेषां सपिण्डता ।
व्युत्क्रमाच्च प्रमीता *ये*तद्विना प्रेतता ध्रुवम् ॥
पुनः सपिण्डनं तेषां कुर्यात्प्रेते पितामहे । इति ।

*अत्र मूलं मृग्यम् । यतीनां सपिण्डनं नास्ति किन्त्वेकादशेहि पार्वणं कार्यम् । तदपि त्रिदण्डिनः । एकदण्ड्यादीनां तदपि नेत्युक्तं प्राक् । दण्डग्रहणात्पूर्वं मृते तु दाहादिसपिण्डनान्तं सर्वं कार्यमिति भट्टचरणाः ।

सपिण्डनविधिमाह बैजवापः—'समासे संवत्सरे चत्वार्युदपात्राणि प्रयुनक्ति एकं प्रेताय, त्रीणि पितृभ्यः प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्या*मेवं पिण्डोऽथाभिमृशति—

एष वोऽनुगतः प्रेतः पितरस्तं ददामि वः ।

---

पितुर्यः पितामहस्तत्पराभ्यां द्वाभ्यां दद्यादित्यर्थः । पितामहस्त्वात्मनः प्रपितामहः सम्प्रदानभूतः स्थित एवेति पितुः पितामहादित्रयलाभः । *सर्वत्रेति । इदानींतनाः शिष्टाः परिगृह्णन्ति । *भ्राता वेति । एकादशाहान्तश्राद्धकर्ता स तदन्यो वेत्यत्र न विशेषः । *ये इति । तेषां सपिण्डतां कुर्यादित्यनुवर्तते । हेतुमाह—*तद्विनेति । सपिण्डनं विनेत्यर्थः । *अत्रेति । पुनः सपिण्डनांशे इत्यर्थः । यदि च व्युत्क्रममृतस्य सपिण्डनमकृतं तदा पितामहे मृते तेन कुर्यादिति व्याख्या तेषां पुनरिति योजनयोचितेति बोध्यम् । *एवंपिण्ड इति । पिण्डोत्थानपर्यन्तं पिण्डदा-

शिवं भवतु शेषाणां जायन्तां चिरजीविनः ॥

"समानी वः" "संगच्छध्वं संवदध्वम्" इति (१)द्वाभ्याम्' इति । यद्यपि—

तच्चापि देवरहितमेकार्घ्यैकपवित्रकम् ।
नैवाग्नौकरणं तत्र तच्चावाहनवर्जितम् ॥

इति मार्कण्डेयेनोक्तम्, तथापि—

सपिण्डीकरणं श्राद्धं दैवपूर्वं नियोजयेत् ।

इत्यादिविरोधाद्विकल्पः, प्रेतांशे वा ज्ञेयम् ।

अत्र कामकालौ विश्वेदेवावपीत्युक्तं प्राक् । मैत्रायणीयपरिशिष्टे—

पित्र्यविप्रकरे होमः साग्नेरपि भवेदिह ।

यत्तु गोभिलः—

अनुक्तकालेष्वपि तु व्युत्क्रमेण मृतावपि ।
आमेन वापि सापिण्ड्यं हेम्ना वापि प्रकल्पयेत् ॥ इति,

तदापदि मातापितृभिन्नपरम्,

आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ।

इति तेनैवोक्तेः । शुद्धितत्त्वे कामधेनौ च लघुहारीतः—

सपिण्डीकरणं यावत्प्रेतश्राद्धं तु षोडशम् ।
पक्वान्नेनैव कर्तव्यं सामिषेण द्विजातिभिः ॥

विश्वप्रकाशे—

प्रेतः सपिण्डनादूर्ध्वं पितृलोकेऽनुगच्छति ।
कुर्यात्तस्य तु पाथेयं द्वितीयेऽह्नि सपिण्डनात् ॥

---

नप्रयोगं कृत्वा पिण्डसंयोजनं कार्यं, "दत्त्वा पिण्डान्" "निरूप्य चतुरः पिण्डान्" इत्यादिपिण्डदानभावनोत्तरं तद्विधानात् । विष्णुना तु विसर्जनोत्तरमुक्तम् "उच्छिष्टसंनिधौ पिण्डत्रयं कुर्यात्

---

(१) 'द्वाभ्याम् इति यद्यपि' नास्ति ग० ।

स्मृत्यर्थसारेऽप्येवम् । ततो वृद्धिश्राद्धं कुर्यात् ।
एतन्मलमासेपि कार्यम्,

अधिमासे न कर्तव्यं श्राद्धमाभ्युदयं तथा ।
तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥

इति हेमाद्रौ हारीतोक्तेः ॥

इति भट्टकमलाकरकृते निर्णयसिन्धौ सपिण्डीकरणम् ॥

अथ प्रथमाब्दे निषिद्धानि । हेमाद्रौ—

*स्नानं चैव महादानं *स्वाध्यायं चाऽ*ग्नितर्पणम् ।
प्रथमाब्दे न कुर्वीत महागुरुनिपातने ॥

अन्यतर्पणमिति शुद्धितत्त्वे पाठः ।

अग्नितर्पणं लक्षहोमादि नत्वाऽधानम् ।

तत्तु प्रथमाब्दे भवत्येव । तदाह हेमाद्रावुशनाः—

पितुः सपिण्डीकरणं वार्षिके मृतवासरे ।
आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात् ॥

आदिपदं *वृद्धिनिमित्तनित्यकर्मपरम् । दिवोदासीये—

महातीर्थस्य गमनमुपवासव्रतानि च ।
संवत्सरं न कुर्वीत महागुरुनिपातने ॥

---

देवपूर्वान् ब्राह्मणानाचान्तानदत्तदक्षिणांश्चानुव्रज्य विसर्जयेत् । ततः प्रेतपिण्डमर्घ्यपात्रोदकवत् पिण्डत्रये निदध्यादिति" । केचित्तु संयोजितान् त्रीन् पिण्डान् इदानीन्तनमृतमारभ्य पुरुषत्रयपर्यन्तं पुनरपि पार्वणवन्नामगोत्राण्युच्चार्य दद्यादित्याहुः । तत्तु न ग्रन्थकृत्संमतम्, तथावचनानुपलम्भात् । अक्षय्यादौ तु प्रेतशब्द एव । पिण्डमात्रेण पितृत्वाप्राप्तेः सङ्गस्य जनकत्वात् ।

*स्नानं समावर्तनं काम्यस्नानं वा । *स्वाध्यायं काम्याध्ययनम् । *अग्नितर्पणमिति पितृतर्पणमिति पाठान्तरम् । *आधानं पुनराधानम् । *वृद्धीति । आवश्यकेषु वि-

इदं श्राद्धकौमुद्यां देवीपुराणस्थमुक्तम् ।

गौडनिबन्धे मात्स्ये—

सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभुग्भवेत् ।
वृद्धीष्टापूर्तयोग्यश्च गृहस्थश्च सदा भवेत् ॥

वर्षान्तसपिण्डनाभावे नाधिकारीत्यर्थः । गृहस्थः सपिण्डोऽपीत्यर्थः । अत एव—

*प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं, ततः पुंसि पञ्चमे शुभदं भवेत् ॥

इति ज्योतिषे उक्तम् । माधवीये देवलः—

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः ॥

इदं वर्षान्तसपिण्डनपरम्,

तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ।

इति लघुहारीताद्येकवाक्यत्वात् । वृद्धिनिमित्तापकर्षे तु वर्ष(१)मध्येऽपि काम्यादि भवत्येवेति गौडाः । पित्र्यं सपिण्डनम् । अत एव लौगाक्षिः—

अन्येषां प्रेतकार्याणि महागुरुनिपातने ।
कुर्यात्संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत् ॥

---

वाहचौलोपनयनेष्टापूर्तेषु वर्षमध्येऽधिकार इत्यर्थः । *प्रेतकर्माणीति । येषां करिष्यमाणवृद्धिश्राद्धे देवतात्वं तेषामेवापकर्षो नान्येषां प्रमाणाभावादिति मते आत्मानमारभ्य चतुर्थः प्रपितामहः तत्पर्यन्तसपिण्डनमावश्यकम् । स्वकर्तृकाभ्युदयिकश्राद्धे पितृपितामहप्रपितामहानां देवतात्वात्सपिण्डीकरणाभावे वृद्धिश्राद्धाभावात् । पञ्चमस्य वृद्धप्रपितामहस्य पौत्रपुत्रकर्तृकाभ्युदये देवतात्वाभावात् सपिण्डीकरणान्तश्राद्धाभावेऽपि तत्कर्तृकमाभ्युद-

(१) 'वर्षमध्येऽपि' नास्ति ग० ।

दाहाद्येकादशाहान्तं कार्यम्। तत्राशौचान्तरस्याप्रतिबन्धकत्वात्।

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।

इत्युक्तेश्च। एकं सपिण्डनम्।

पत्न्यादौ त्वपवादमाह माधवीये ऋष्यशृङ्गः—

पत्न्याः पुत्रस्य तत्पुत्रभ्रात्रोस्तत्तनयस्य च।
स्नुषास्वस्रोश्च पित्रोश्च संघातमरणं यदि॥
अर्वागब्दान्मातृपितृपूर्वं सापिण्ड्यमाचरेत्॥

लौगाक्षिः—

पत्नी पुत्रस्तथा पौत्रो भ्राता तत्पुत्रका अपि।
पितरौ च यदैकस्मिन् (१)म्रियेरन्वासरे तदा॥
आद्यमेकादशे कुर्यात्त्रिपक्षे तु सपिण्डनम्॥

धवलनिबन्धे—

महागुरुनिपाते तु प्रेतकार्यं यथाविधि।
कुर्यात्संवत्सरादर्वागेकोद्दिष्टं न पार्वणम्॥

भृगुः—

माता चैव तथा भ्राता भार्या पुत्रस्तथा स्नुषा।
एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः॥

एतदपि सपिण्डनपरम्। पितुर्मृतावन्यस्य श्राद्धं न चरेदित्यर्थः। शुद्धितत्त्वे श्रा(२)द्धकौमुद्यां च देवलः—

अन्यश्राद्धं परान्नं च गन्धमाल्यं च मैथुनम्।

---

थिकं शुद्धमित्यर्थः। यस्यकस्यापि सपिण्डस्य गृहे वृद्ध्युपस्थितौ येन केनापि सपिण्डेन स्वपित्रादेः सपिण्डनं कार्यमिति दाक्षिणात्यरीतौ च वर्षमध्ये सपिण्डनेऽप्यनाधिकारश्चतुर्थान्तः। अत एव गृहस्थः सपिण्डोऽपि इत्युक्तम्। पञ्चमादौ तु उक्तदाक्षिणा-

---

(१) 'म्रियेताम्'। (२) 'श्राद्धकौमुद्यां च' नास्ति ग०।

वर्जयेद् गुरुपाते तु यावत्पूर्णो न वत्सरः॥

पारस्करभाष्ये बृहस्पतिः—

पितर्युपरते पुत्रो *मातुः श्राद्धान्निवर्तते।
मातर्यपि च वृत्तायां पितृश्राद्धादृते समम्॥

समं पितरं विनाऽन्यश्राद्धं नेत्यर्थः। शुद्धितत्त्वे देवलः—

महागुरुनिपाते तु काम्यं किंचिन्न चाचरेत्।
आर्त्विज्यं ब्रह्मचर्यं च श्राद्धं देवक्रियां तथा॥

एतत्सपिण्डनात्प्रागिति केचित्। तदुत्तरमपीत्यन्ये। श्राद्धकौमुद्यां कालिकापुराणे पू(१)र्वार्धे—

विशेषतः शिवपूजां प्रमीतपितृको नरः।
यावद्वत्सरपर्यन्तं *मनसापि न चाचरेत्॥

केचित्तु—

पित्रोरब्दमशौचं स्यात्षण्मासं मातुरेव च।
त्रैमासिकं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः॥

इति स्मृतेः सापत्नमातु*रब्दार्धमाहुः। श्राद्धकौमुदीकारस्तु—

द्वयोरेव महागुर्वोरब्दमेकमशौचकम्।
नान्येषामधिकाशौचं स्वजातिविहितात्किल॥

---

त्याचाराद् वर्षमध्ये सपिण्डने इष्टापूर्तादिकमपि शुभदमिति। *मातुः श्राद्धादिति। यत्र मातृमरणानन्तरं पिता मृतस्तत्र मातुः सपिण्डनस्यावश्यकतया स्वपुत्रादिना तत्कारणीयम्। अथवा यत्र मातुः सपिण्डनमपि न कार्यं तत्रान्यसपिण्डने किं वक्तव्यमित्यन्यसपिण्डननिन्दायां तात्पर्यम्। *मनसापीति। अपिः संक्षेपपूजाविशेषलाभार्थः *अब्दार्धमिति। पूजाऽनाचरणार्थ-

---

(१) 'पूर्वार्धे' नास्ति क० छ०।

इति समूलजातूकर्ण्यविरोधान्निर्मूलमाह । हेमाद्रौ भविष्ये—

गयाश्राद्धं मृतानां तु पूर्णे त्वब्दे प्रशस्यते ।

त्रिस्थलीसेतौ गारुडे—

तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ।
अ(१)ब्दमध्ये न कुर्वीत महागुरुविपत्तिषु ॥

इदं वृद्ध्यर्थसपिण्डनाभावे । वृद्धौ सपिण्डनापकर्षेऽब्दमध्येऽपि दर्शादि कार्यमेव,

पितुः सपिण्डनं कृत्वा कुर्यान्मासानुमासिकम् ।

इति छन्दोगपरिशिष्टात्;

सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभुग्भवेत् ।

इति मात्स्यात्;

ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते ।
विन्दते पितृलोकं च ततः श्राद्धं प्रवर्तते ॥

इति हारीताच्चेति शूलपाणिः । यत्तु कातीयम्—

सपिण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम् ।
एकोद्दिष्टविधानेन दद्यादित्याह शौनकः ॥ इति ।

तत्रैकोद्दिष्टविधिना न दद्यादित्यन्वयः । *तुर्यपादेन पार्वणे विकल्प उक्तः ।

( ब्रह्म(२)वैवर्ते—

उद्वाहश्चोपनयनं प्रथमेऽब्दे महीपते ।
कृते सपिण्डनेऽप्यूर्ध्वमस्थ्नां चोद्धरणं त्यजेत् ॥
तथापि कर्तुमिच्छन्ति त्रीणि चैतानि वै सुताः ।

---

मिति शेषः । ननु पुनर्दद्यादित्यधिकं स्यादित्यत आह—*तुर्येति ।

प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ।

---

( १ ) 'प्रथमाब्दे' क० ( २ ) कंसान्तर्गतं नास्ति । क० छ०

मासिकान्यवशिष्टानि चापकृष्य चरेत्पुनः ॥)

अत्रेदं तत्त्वम् । वृद्धिं विनाऽर्वागपि सपिण्डनापकर्षे पितृत्वप्राप्तिर्वर्षान्त एव,

कृते सपिण्डीकरणे नरः संवत्सरात्परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ॥

इति विष्णुधर्मोक्तेः—

अर्वाक्संवत्सराद्यस्य सपिण्डीकरणं भवेत् ।
प्रेतत्वमिह तस्यापि विज्ञेयं वत्सरं नृप ॥

इत्यग्निपुराणाच्च । तेन तत्सत्त्वेऽपि वृद्धिदैवपित्र्येष्वनधिकारः । वृद्धिनिमित्ते त्व*नन्तरमेव,

अर्वाक्संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा ।
ये सपिण्डीकृताः प्रेता न तेषां तु*पृथक् क्रिया ॥

इति शातातपोक्तेः । तथैव काम्यमिति हेमाद्रिधृतहारीतादिवशाच्चैवमिति । तथा—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्दे न कुर्वीत *(१)कृतेऽपि तु सपिण्डने ॥

अस्यापवादः—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्देऽपि कुर्वीत*यदि स्याद्भक्तिमान्सुतः ॥

*भक्त्याख्यं श्राद्धं तद्वानिति मदनपारिजातादयः । अन्ये यथाश्रुतमाहुः । तत्त्वं तु यदीदं समूलं तदा वृद्धिं

---

इति प्रागुक्तत्वादिति भावः । *अनन्तरमेवेति । पितृत्वप्राप्तिरिति वर्तते । *पृथक्क्रियेति । आभ्युदयिकश्राद्धदेवतात्वात् पृथक्कार्येत्यर्थः । एवञ्च पितृत्वावाप्तिरर्थसिद्धैवेति । *कृतेपि त्विति । यदि न स्यात्सापिण्डनामिति अन्यत्र पाठः । *यदि स्यादिति । कृतं यस्यौर्ध्वदेहिकमिति केचित् । *भ-

---

(१) 'कृते पितुः' ग०

विनापकर्षे पूर्वं,*वृद्ध्यर्थे तु परमिति योज्यम् । पतितानां गयायां विशेषो ब्राह्मे—

क्रियते पतितानां च गते संवत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद्गयाश्राद्धं स्वबन्धुभिः ॥

अथ विधानानि । तत्र पञ्चकमृते मदनरत्ने गारुडे—

आदौ कृत्वा *धनिष्ठार्धमेतन्नक्षत्रपञ्चकम् ।
रेवत्यन्तं सदा दूष्यमशुभं दाहकर्मणि ॥
शवस्य च समीपे तु क्षेप्तव्याः पुत्तलास्तदा ।
दर्भमयास्तु*चत्वार ऋक्षमन्त्राभिमन्त्रिताः ॥
ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह ।
सूतकान्ते ततः पुत्रैः कार्यं शान्तिकपौष्टिकम् ॥
*पञ्चकेषु मृतो यो वै न गतिं लभते नरः ।
तिलांश्चैव हिरण्यं च तमुद्दिश्य घृतं ददेत् ॥

क्रियानिबन्धे—

भाजनोपानहौ छत्रं हैममुद्रां च वाससी ।

---

त्याख्यमिति । देवतात्वसंपादकं चेदम् । *वृद्ध्यर्थे तु इति । अपकर्ष इति वर्तते । एवञ्च भक्तिमानिति यथाश्रुतमेव सिद्धाया भक्तेरनुवादः ।

यतिधर्मे—

नाश्नन्ति पितरो देवा मृते वै गृहमेधिनि ।
भिक्षुर्भिक्षां न गृह्णाति यावत्कुर्यात्सपिण्डनम् ॥

अत्र वर्षान्ते वृद्ध्यर्थं वा सपिण्डनमवधिः । पितुरब्दमशौचं स्यादिति वचनानुसारिणो यतयः । *धनिष्ठार्धमिति । अतिनिषिद्धं धनिष्ठाया एव निषेधात् । *चत्वार इति चतुर्नक्षत्राभिप्रायकम् । तेन दर्भाणां प्रतिमाः कार्याः इत्यादिना न विरोधः । ऋक्षमन्त्रा जप्याः । अत्र वसवोरन्त १, तत्त्वायामि ब्रह्मणा २, सुतनोर्हिबुध्न्यः ३, कद्रुद्राय ४, पूषा गा अन्वेतु ५ । शान्तिकपौष्टिकं वक्ष्यति ।

दक्षिणा दीयते विप्रे सर्वपातक*मोचनी ॥

मदनरत्ने गार्ग्यः—

यदि भद्रातिथीनां स्याद् भानुभौमशनैश्चरैः ।
त्रिपादृक्षैश्च संयोगो द्वयोर्योगे द्विपुष्करः ॥
द्वित्रिपुष्करयोगे तु मृतिर्मृत्यन्तरावहा ।
दहने मरणे चैव त्रिगुणं स्यात्त्रिपुष्करे ॥
खननेऽप्येवमेव स्यादेतद्दोषोपशान्तये ।
तिलपिष्टैर्यवैर्वापि शरीरं कारयेत्ततः ॥
शूर्पे निधायालंकृत्य दाहयेत्पैतृकोपरि ॥

तद्दाहे मन्त्रमाह बौधायनः—

अस्मात्त्वमिति मन्त्रेण तिलपिष्टं प्रदाहयेत् ।
द्वित्रिपुष्करयोर्दोषस्त्रिभिः कृच्छ्रैर्व्यपोहति ॥
वासवे मरणं चेत्स्याद् गृहे वापि पुनर्मृतिः ।
सुवर्णं दक्षिणां दद्यात्कृष्णवस्त्रमथापि वा ॥

वासवं धनिष्ठा । ब्राह्मे—

कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते ।
न तस्योर्ध्वगतिर्दृष्टा संततौ न शुभं भवेत् ॥
न तस्य दाहः कर्तव्यो विनाशात्स्वेषु*जन्तुषु ।
अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकम् ।
धनिष्ठापञ्चके जीवो मृतो यदि कथंचन ।
त्रिपुष्करे याम्यभे वा कुलजान्मारयेद्ध्रुवम् ॥
तत्रानिष्टविनाशार्थं विधानं समुदीर्यते ।

---

प्रेतस्य गतिसिद्ध्यर्थमाह—*पञ्चकेष्विति । *मोचनीति ।

बालवृद्धस्य यूनश्च पञ्चकेषु मृतस्य च ।
विधानं यो न कुर्वीत विघ्नस्तस्य प्रजायते ॥

इत्युत्तरश्लोकः । *जन्तुष्विति । ततः पञ्चकानन्तरं

दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः ॥
यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् ॥
प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः ।
प्रेतहर्ता पञ्चमस्तु नामान्येतानि च क्रमात् ॥

अत्र प्रतिमा गन्धपुष्पैः पूजयित्वा प्रथमां शिरसि, द्वितीयां नेत्रयोः, तृतीयां वामकुक्षौ, चतुर्थीं नाभौ, पञ्चमीं पादयोर्न्यस्य तदुपरि नामभिर्घृतं*हुत्वा—"यमाय सोमं" "त्र्यम्बकम्" इति मन्त्राभ्यां प्रत्येकं तास्वाज्यं हुनेदिति भट्टाः ।

सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकम् ।
कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद्द्विजन्मने ॥
ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः ।
माषमुद्गयवव्रीहिप्रियंग्वादि प्रयच्छति ॥
स्वर्णदान रुद्रजाप्यं लक्षहोमो द्विजार्चनम् ।
गोभूदानं षडंशेन कुर्याद्दोषोपशान्तये ॥

अपरार्के—

धनिष्ठापञ्चकमृते पञ्चरत्नानि तन्मुखे ।
प्रास्याहुतित्रयं तत्र हुनेद्वहवपामिति ॥
ततो निर्हरणं कुर्यादेष साग्नेर्विधिः स्मृतः ।
इतरं निखनेदेव जले वा प्रतिपादयेत् ॥
त्रिपादर्क्षमृते तद्वद्धिरण्यशकलं मुखे ।
न्यस्य पिष्टमयं कुर्यात्पुरुषत्रितयं ततः ।
होमं प्रतिमुखं कुर्यात्तथा वहवपामिति ।
कार्ष्णायसं च कार्पासं कुसुम्भं प्रतिपाद्य च ।
निर्यात्य साग्निं संस्कुर्याद्भुव्यग्नौ वान्यमुत्सृजेत् ॥

---

कार्य दाहादिकं मध्ये न त्वित्यर्थः । *हुत्वेति । उदकधारां च द-

तत्रैव—

कनकं हीरकं नीलं पद्मरागं च मौक्तिकम् ।
पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्वदर्शिभिः ॥
रत्नानां चाप्यभावे तु स्वर्णं कर्षार्धमेव च ।
सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः ॥

मदनरत्नेऽप्येवम् । तथा—

एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् ।
नवषट्त्रिपलं वापि दद्याद्विप्राय शक्तितः ॥

तथा*न्यत्र—

*स्वगृह्योक्तविधानेन कृत्वाग्नेः स्थापनं ततः ।
अन्वाधानं निर्वपणं देवतानां तथाहुतिः ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात् ॥
विधिना श्रपणं कृत्वा एकैकामाहुतिं *हुनेत् ॥

त्रिपादर्क्षेऽप्येतदेव । अपरार्के—

पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी ।
पूर्वाभाद्रा विशाखा च ज्ञेयमेतत्त्रिपादभम् ॥

मयूरचित्रे गर्गः—

मृतः श्मशानं यो नीत उपजीवति मानवः ।

---

स्वेति अन्त्येष्टिः । *अन्यत्र बौधायनीयशान्तिसर्वस्वे । *स्व-गृह्योक्तेति ।

पञ्चके ये मृता विप्रास्तेषां शान्तिं विधानतः ।
अतीते सूतके कुर्यात्कोचित्तदृक्षयोगतः ॥

इत्यादि । *हुनेदिति ।

कृष्णां गां कृष्णवत्सां च हैमानिकलशान्विदात् ।

गृहे यस्य प्रविष्टोसौ तिष्ठेदथ कदाचन ॥
अचिरान्मृत्युमायाति हृतदारपरिग्रहः ।
तत्र शान्तिं प्रवक्ष्यामि धर्मराजमतं यथा ॥
सक्षीराणां घृताक्तानामग्नेर्हुत्वा मुखे बुधः ।
औदुम्बराणां विधिवत्ततः शान्तिः कृता भवेत् ॥
सावित्र्यष्टसहस्रेण क्षीरशान्तिं च कारयेत् ।
कापिलां तिलकांस्यं च हुतान्ते भूरिदक्षिणा ॥ इति ।

अथ ब्रह्मचारिमृतौ शौनकः—

ब्रह्मचारिमृतौ रीतिं कथयामि समासतः ।
तत्रावकीर्णदोषस्य प्रायश्चित्तं प्रशान्तये ॥
द्वादशाब्दं षडब्दं वा त्र्यब्दं शक्त्याथवा*चरेत् ।
स्नातको ब्रह्मचारी च निधनं प्राप्नुयाद्यदि ॥
संयोज्य चार्कविधिना संयोज्यौ तौ ततः परम् ॥

देशकालौ स्मृत्वा—'अमुकगोत्राऽमुकनाम्नो मृतस्य ब्रह्मचारिणो व्रतविसर्गं करिष्ये' इत्युक्त्वा हेम्ना नान्दीश्राद्धं कृत्वाऽग्निं प्रतिष्ठाप्याघारान्ते चतसृभिर्व्याहृतिभिरग्नये व्रतपतये व्रतानुष्ठानसंपादनाय विश्वेभ्यो देवेभ्यश्चाज्यं हुत्वा स्विष्टकृदादि समाप्य पुनर्देशकालौ स्मृत्वाऽर्कविवाहं करिष्ये इत्युक्त्वा हेम्ना नान्दीश्राद्धं कृत्वाऽर्कशाखां शवं च हरिद्रया लिप्त्वा पीतसूत्रेण वस्त्रयुग्मेन चावेष्ट्याऽग्निं प्रतिष्ठाप्याघारान्तेऽग्नये बृहस्पतये विवाहविधियोजकाय च "यस्मै त्वं कामकामाय" इति कामाय व्याहृतिभिश्चाज्यं हुत्वा स्विष्टकृदादि

---

दद्याद् विप्राय शान्ताय प्रीतो भवतु मे यमः ॥
इत्यपि क्वचित् । *चरेदिति ।
ततो वृषविसर्गाख्यं विधिं सम्यक् समाचरेत् ।

समाप्यार्कशाखां शवं च दहेत् । विधानमालायाम्—

येषां कुले ब्रह्मचारी निधनं प्राप्नुयाद्यदि ।
तत्कुलं क्षयमाप्नोति सोऽपि*दुर्गतिमाप्नुयात् ॥
मृतस्य म्रियमाणस्य षडब्दं व्रतमादिशेत् ॥
त्रिंशद्भ्यो *ब्रह्मचारिभ्यो दद्यात्कौपीनकान्नवान् ।
हस्तमात्रान्कर्णमात्रान्दद्यात्कृष्णाजिनानि च ॥
पादुकाछत्रमाल्यानि गोपीचन्दनमेव च ।
मणिप्रवालमालाश्च *भूषणादि समर्पयेत् ॥
एवं कृते विधाने च विघ्नः कोऽपि न जायते ।

अत्र मूलं मृग्यम् ॥

कुष्ठिमृतौ तु यमः—

मृतस्य कुष्ठिनो देहं निखनेद्गोष्ठभूमिषु ।
वासरात्रितयं पश्चादुद्धृत्यान्यत्र तं दहेत् ॥
न गङ्गाप्लवनं कार्यं निक्षेपे विधिरुच्यते ।
षडब्दव्रतपूर्णेन विधिनान्त्यं क्रतुं चरेत् ॥
ततोऽस्थिसंचयं तस्य गङ्गायां प्रक्षिपेत्सुधीः ।
मासिमासि ततः कुर्यान्मासि श्राद्धानि पार्वणान् ॥
इत्येतत्कुष्ठिमरणे कथितं शास्त्रकोविदैः ॥

शुद्धितत्त्वे भविष्ये—

शृणु कुष्ठिगणं विप्र उत्तरोत्तरतो गुरुम् ।
विचर्चिका तु दुश्चर्मा चर्चरीयस्तृतीयकः ॥

---

इत्युत्तरार्धम् । एवमेव ब्रम्हचारिपदस्थाने स्नातकपदं योजयित्वा विधिर्द्रष्टव्यः । *दुर्गतिमिति । सा च तत्रैव—

ग्रहत्वमाप्नुयाद् बोधिद्रुमेऽनवरतं वसेत् । इति ।

*ब्रह्मचारिभ्य इति । तदभावे "ये सकृद्दारैः संयुज्यन्ते ब्रह्मचारिण एव ते" इत्युक्तब्रह्मचारिभ्यः । साधुगृहस्थेभ्य इत्य-

विकर्चूर्व्रणताम्रौ च कृष्णश्वेते तथाष्टकम् ॥

इत्युक्त्वा—

मृते तु प्रापयेत्तीर्थमथवा तरुमूलकम् ।
न पिण्डं नोदकं कार्यं नच दानक्रियां चरेत् ॥
षण्मासीयास्त्रिमासीयो मृतः कुष्ठी कदाचन ।
यदि स्नेहाचरेद्दाहं यतिचान्द्रायणं चरेत् ॥

अकृतप्रायश्चित्तकुष्ठ्यादिदाहे इदं प्रायश्चित्तम् ॥ अत एव कुनख्यादिवत्कुष्ठिनोपि द्वादशरात्रं शूलपाणिनोक्तम् । अतएवान्यदीयकुष्ठिनो मरणान्तमाशौचमुक्तं कौर्मे—

क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्मरणान्तमशौचकम् ॥

महारोगास्तु—

वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्तिताः ॥ इति ।

रजस्वलायास्तु वृद्धशातातपः—

रजस्वलायाः प्रेतायाः संस्कारादीनि नाचरेत् ।
ऊर्ध्वं त्रिरात्रात्स्नातां तां शवधर्मेण दाहयेत् ॥

अतः प्रक्षाल्य काष्ठवद्दग्ध्वा *त्र्यहोर्ध्वं दहेत् ॥ सङ्कटे तु मदनरत्ने स्मृत्यन्तरे—

उदक्या सूतिका वापि मृता स्याद्यदि तां तदा ।
आशौचे त्वनतिक्रान्ते दाहयेदन्तरा यदि ॥
उद्धृतेन तु तोयेन स्नापयित्वा तु मन्त्रतः ।
आपोहिष्ठेति तिसृभिर्हिरण्यवर्णाश्चतसृभिः ॥
पवमानानुवाकेन यदन्तीति च सप्तभिः ।

---

न्ये । *भूषणादीति । ब्रह्मसूत्राणि चार्पयेदिति अन्त्येष्टिः । *त्र्य-

ततो यज्ञपवित्रेण गोमूत्रेणाथ ते द्विजाः ॥
स्नापयित्वाऽन्यवसनेनाच्छाद्य शवधर्मतः।
दाहादिकं ततः कुर्यात्प्रजापतिवचो यथा ॥

यज्ञपवित्रमापो अस्मानिति। मिताक्षरायाम्—

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम्।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥

गृह्यकारिकायाम्—

अन्तरिक्षमृता ये च वह्नावप्सु प्रमादतः।
उदक्या सूतिका नारी चरेच्चान्द्रायणत्रयम् ॥

ततो यवपिष्टेना*नुलिप्याष्टोत्तरशतं शूर्पोदकैः *संस्नाप्य *भस्मगोमयमृत्कुशोदकपञ्चगव्यशुद्धोदकै*रापोहिष्ठापावमानीभिः संस्नाप्यान्यवस्त्रे धृते दहेदिति भट्टाः।

अत्र प्रायश्चित्तमाह बौधायनः—

उदक्यासूतिकामृत्यौ चरेच्चान्द्रायणत्रयम्। इति।

सूतिकायास्तु मिताक्षरायाम्—

सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः।
कुम्भे सलिलमादाय पञ्चगव्यं क्षिपेत्ततः ॥
पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः।
तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥
अब्लिङ्गाभिर्मन्त्रिताभिर्वामदेव्याभिरेव च।
अन्यैश्च वारुणैर्मन्त्रैः संस्नाप्य विधिना दहेत् ॥

---

ह्योर्ध्वमिति अतन्त्रम्। *अनुलिप्येति। स्वयं स्नात्वेति शेषः। *संस्नाप्येति। प्रेतं प्रक्षाल्येति शेषः। *भस्मेति। संस्नाप्येत्यनुवर्तते। *आपोहिष्ठेति। पावमानीः स्वस्त्ययनीः, यदन्ति यच्च दूरके, आपोहिष्ठेति चतसृभिः, कया नः इति

गृह्यकारिकायाम्—

सूतिकामरणे प्राप्ते सर्वौषध्यनुलेपनम्।
असूतकी तु संस्पृष्टः शूर्पाणां तु शतं क्षिपेत्॥

प्रायश्चित्ते विशेषस्तत्रैव—

सूतिका तु यदा साध्वी विस्नाता मरणं गता।
त्रिवर्षपूर्णपर्यन्तं शुध्येत्कृच्छ्रेण सर्वदा॥

इदं चाद्यत्र्यहे॥

सूतिका तु यदा नारी रजसा तु परिप्लुता।
म्रियते चेत्तु सा नारी द्विवर्षं कृच्छ्रमाचरेत्॥

इदं द्वितीयत्र्यहे॥

सूतिका तु यदा साध्वी विस्नाता मरणं गता।
अब्दं कृच्छ्रेण शुद्ध्येत व्यासस्य वचनं यथा॥

इदं तृतीयत्र्यहे। अत्राशक्तौ पक्षान्तरमुक्तं तत्रैव-

सूतिका तु यदा नारी विस्नाता मरणं गता।
त्रिषण्णवदिनादर्वाग*काब्देन विशुध्यति॥

ऊर्ध्वं तु—

सूतिका तु यदा नारी प्राणांश्चैव परित्यजेत्।
मासमेकावधिं यावत्त्रिभिः कृच्छ्रैर्विशुद्ध्यति॥

गर्भिणीमृतौ मदनरत्ने शौनकः—

गर्भिण्युदक्यासंस्कारं शिशुसंस्कारमेव च।

---

त्रिभिरित्यर्थः। *एकाब्देनेति। एककृच्छ्रेणेति पठित्वा दशाहोर्ध्वमेककृच्छ्रमित्यन्ये।

सूतिका तु यदा नारी प्राणांश्चैव परित्यजेत्।
मासमेकावधिर्यावत्त्रिभिः कृच्छ्रैर्व्यपोहति॥

इति तु दशाहोर्ध्वम्। सर्वं च प्रायश्चित्तं तदैव प्रत्याम्नायेन सूतकान्ते वा कार्यम्।

प्रवक्ष्यामि समासेन शौनकोऽहं द्विजन्मनाम् ॥
गर्भिणीमरणे प्राप्ते गोमूत्रेण जलैः सह ।
आपोहिष्ठादिभिर्मन्त्रैः प्रोक्ष्य भर्ता समास्थितः ॥
प्रेतं श्मशाने नीत्वाऽथोल्लिख्य सव्योदरं ततः ।
पुत्रमादाय जीवंश्चेत्स्तनं दत्त्वा सुताय तु ॥
यस्ते स्तनः शशय इत्यृचा ग्रामे निधाय च ।
उदरं चाव्रणं कुर्यात्पृषदाज्येन पूर्य च ॥
मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः ।
स्नाप्य चाच्छाद्य वासोभिः शवधर्मेण दाहयेत् ॥

तत्रैव षडशीतिमते गद्यानि—"गर्भिण्यां मृतायां दक्षिणशिरसं निधाय तस्या नाभिरन्ध्रात्सव्यमुदरं चतुरङ्गुलं हिरण्यगर्भः समवर्ततेति छित्त्वा गर्भश्चेदप्राणस्तं प्रक्षाल्य निखनेत्स यदि जीवन् 'जीव त्वं मम पुत्रक' इत्युक्त्वा क्षेत्रियेत्वेति पञ्चभिः स्नापयित्वा हिरण्यमन्तर्धाय भूमौ निधाय व्याहृतिभिरभिमन्त्र्य यस्ते स्तनः शशय इति स्तनं पाययित्वा शिशुं ग्रामं प्रापयेत् । गर्भच्छेदस्थले शतायुधायेति पञ्चाहुतीर्हुत्वा प्राणाय स्वाहा पूष्णे स्वाहेत्यनुवाकाभ्यां व्याहृत्या वाऽऽज्यं हुत्वा भिन्नमुदरं सूत्रेण संग्रथ्य घृतेनानुलिप्य ब्राह्मणाय तिलान् गां भूमिं सुवर्णं दद्यादथ यथोक्तेन कल्पेन दहेत्" । बौधायनेन तु शतायुधायेति पञ्चहोमानन्तरं प्रयासाय यासाय वियासाय संयासायोद्यासाय शुचे शोकाय तप्यते तपत्यै ब्रह्महत्यायै सर्वस्मै इति स्वाहान्तैराहुतयोऽप्यधिका उक्ताः । गृह्यकारिकायाम्—

यदा गर्भवती नारी सशल्या संस्थिता भवेत् ।
कुक्षिं भित्त्वा ततः शल्यं निर्हरेद्यदि जीवति ॥
प्रमीतं निखनेत्तं तु प्रायश्चित्तमतः परम् ।

सा त्रयस्त्रिंशता कृच्छ्रैः शुध्यते शल्यदोषतः ॥
सगर्भदहने तस्या वर्णजं वधपातकम् ।
प्रायश्चित्तं चरित्वा तु शुध्यन्ति पापकारिणः ॥
दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत् ॥
अथान्वारोहणं स्त्रीणामात्मनो भर्तुरेव च ।
सर्वपापक्षयकरं निरयोत्तारणाय च ॥
अनेकस्वर्गफलदं मुक्तिदं च तथैव च ।
जन्मान्तरे च सौभाग्यधनपुत्रादिवृद्धिदम् ॥

देशकालौ स्मृत्वाऽरुन्धतीसमाचारत्व-*स्वर्गलोकमहीयमानत्व-मनुष्यलोमसमसंख्याब्दावच्छिन्नस्वर्गवास-भर्तृसहितचतुर्दशेन्द्रावच्छिन्नकालिकक्रीडमानत्व-मातृपितृश्वशुरकुलत्रयपूतत्व-ब्रह्मघ्नमित्रघ्नकृतघ्नपतिपूतत्व-पत्यवियोग-कामा भर्तृ*ज्वलच्चितारोहणं करिष्ये । अनुगमने तु-फलमुल्लिख्यान्वारोहणं करिष्ये इत्युक्त्वा *हरिद्राकुङ्कुमाञ्जनादियुतशूर्पाणि सुवासिनीभ्यो दद्यात् । मन्त्रस्तु—

लक्ष्मीनारायणो देवो बलसत्त्वगुणाश्रयः ।

---

*स्वर्गलोकेति । भर्त्रा स्वरोमसमिताब्दानां सहस्रं स्वर्गमाचरेत् । *ज्वलच्चितारोहणं स्वर्गमनम् । *हरिद्रेति ।

देवैः सम्पादितो मह्यं पतिस्त्वं सार्वदैवतः ।
त्वया सह गमिष्यामि भर्ता त्वं चान्यजन्मनि ॥

इत्युक्त्वा स्नात्वा कुङ्कुमादिना स्वात्मानमलङ्कृत्य पुत्रादिभ्यो बन्धुभ्यश्चाशिषो दत्त्वा—

चितिस्थो भगवानग्निर्विष्णुरूपी जनार्दनः ।
पतिलोकसमावाप्त्यै गृहाणार्घ्यं नमोऽस्तु ते ॥

इति विष्णुरूपिणेऽग्नयेऽर्घ्यं दत्त्वा—

गाढं सत्त्वं च मे देया(१)द्वायनैः परितोषितः ॥
सोपस्कराणि शूर्पाणि (१)वायनैः संयुतानि च ।
लक्ष्मीनारायणप्रीत्यै सत्त्वकामा ददाम्यहम् ॥
अग्नेः समीपमागत्य *पञ्चरत्नानि पल्लवैः ।
नीलाञ्जनं तथा बध्वा मुखे मुक्ताफलं न्यसेत् ॥
ततोऽग्निप्रार्थनं कृत्वा मन्त्रेणानेन मिश्रितम् ।
स्वाहासंश्लेषनि(२)र्विण्ण सर्वगोत्र हुताशन ॥
सत्त्वमार्गप्रदानेन नय मां भर्तुरन्तिकम् ॥

ततोऽग्न्याद्यर्घेनाऽग्नये तेजोऽधिपतये, विष्णवे सत्त्वाधिपतये, कालाय ध(३)र्माधिपतये, पृथिव्यै लोका-

---

एष चार्घ्यो मया दत्तः सूर्य साक्षिस्त्वदग्रतः ।
प्रसादं कुरु मे देव गृहाणार्घ्यं नमोऽस्तु ते ॥

इति सूर्याय तं दत्त्वा—

त्वं ब्रह्मा त्वं च वै रुद्रस्त्वं रविस्त्वं प्रजापतिः ।
त्वमिन्द्रो वसवस्त्वष्टौ परमात्मा त्वमेव हि ॥
त्वमेव शरणं विष्णो शरणं त्वं पतिर्मम ।
स्वर्गे वा नरके वाऽपि यत्र यत्र गमिष्यसि ॥
तत्र तत्र त्वहं पृष्ठे गमिष्यामि तवाशु वै ।
ब्रह्महत्यादिभिः पापैर्मोक्ष्यामि च यमालयात् ॥
अहं ब्रह्मा ह्यहं विष्णुरहं सूर्यश्च दिक्पतिः ।
आदित्यचन्द्रावानिलोऽनलश्च द्यौर्भूमिरापो(?)प्यहर्निशा च ।
एते च सर्वे मम साहसेन तुष्यन्तु ते देववराश्च सर्वे ॥

इति पठित्वा पञ्च शूर्पाणि हारिद्राकुङ्कुमाञ्जनकञ्चुक्यादियुतानि दद्यादित्यर्थः । *पञ्चेति । स्ववस्त्रपल्लवे पञ्चरत्ननीलाञ्जनबन्धः ।

---

(१) 'वाणकैः' ग० । (२) निर्वाण सर्वगात्र, क० ।
(३) 'सर्वाधिपात्रे' क० ।

धिष्ठात्र्यै, अद्भ्यो रसाधिष्ठात्रीभ्यः, वायवे बलाधिपतये, आकाशाय सर्वाधिपतये, कालाय धर्माधिष्ठात्रे, अभ्यः सर्वसाक्षिणीभ्यः, ब्रह्मणे वेदाधिपतये, रुद्राय श्मशानाधिपतये च हुत्वाऽग्निं प्रदक्षिणीकृत्य दृषदमुपलां च संपूज्य पुष्पाञ्जलिं गृहीत्वाऽग्निं प्रार्थयेत्—

त्वमग्ने सर्वभूतानामन्तश्चरासि साक्षिवत् ।
त्वमेव देव जानीषे न विदुर्यानि मानुषाः ॥
अनुगच्छामि भर्तारं वैधव्यभयपीडिता ।
सत्त्वमार्गप्रदानेन नय मां भर्तुरान्तिकम् ॥
मन्त्रमुच्चार्य शनकैः प्रविशेच्च हुताशनम् ॥

गौडास्तु—'इमा नारीरविधवाः' इति,

ॐ इमाः पतिव्रताः पुण्याः स्त्रियोऽपापाः सुशोभनाः
सह भर्तुः शरीरेण संविशन्तु विभावसुम् ॥

इति च विप्रः पठेदित्याहुः । कातरां तु—प्रेतोत्तरे सुप्तां देवरः शिष्यो वा उदीर्ष्वेति द्वाभ्यामुत्थापयेत् । एतन्माहिमा मिताक्षरादौ ज्ञेयः ।

पृथ्वीचन्द्रोदये स्कान्दे—

*अनुव्रजन्ती भर्तारं गृहात्पितृवनं मुदा ।
पदेपदेऽश्वमेधस्य फलं प्राप्नोत्यनुत्तमम् ॥

यत्त्वाङ्गिराः—

या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ॥ इति,

---

शीलापूजोत्तरं तदारोहणं कार्यम् । *अनुव्रजन्ती भर्तारमिति।

मृते भर्त्तरि या नारी धर्मशीला दृढव्रता ।
अनुगच्छति या नारी शृणु तस्यास्तु यत्फलम् ॥
तिस्रः कोट्योऽर्धकोटी च यावन्त्यङ्गरुहाणि वै ।

यच्च व्याघ्रपात्—

न म्रियेत समं भर्त्रा ब्राह्मणी (१)शोककर्शिता ।

न ब्रह्मगतिमाप्नोति मरणादात्मघातिनी ॥ इति,

तत् पृथक्चितिपरम्,

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।

अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परः स्मृतः ॥

इत्युशनसोक्तेः ।

पृथक्चितिस्तु क्षत्रियादिपरा । तद्विधिर्ब्राह्मे—

देशान्तरे मृते पत्यौ साध्वी तत्पादुकाद्वयम् ।

निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥

ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ।

त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शास्त्रवत् ॥

इमा नारीरविधवा इति ऋग्वेदवादः । त्र्यहाशौचमन्वारोहणपरमिति स्मार्ताः । *निषेधवाक्यानि प्रायश्चित्तार्थं मृतेन पतितेन वा सह मरणनिषेधपराणीत्य-

---

तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥

मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।

कुलत्रयं पुनात्येषा भर्तारं याऽनुगच्छति ॥

व्यासः—

यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।

संप्राप्तो यातनास्थानं गृहीतो यमकिंकरैः ॥

तिष्ठते विवशो दीनश्चेष्टमानः स्वकर्मभिः ।

व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ॥

तद्वदुद्धृत्य सा नारी तेनैव सह मोदते ॥

*निषेधेति । यस्तु प्रायश्चित्तार्थं मृत एव शुद्धस्तेन सह

---

(१) 'शोकपीडिता' क० ।

प्याहुः । अस्थिदाहे पलाशदाहे वा न *पृथक्चितिदोषः । अङ्गत्वेन स्थानापत्त्या वा शरीरतुल्यत्वात् । यत्तु—

ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः।
पुनात्यविधवा नारी तमादाय मृता तु या ॥

इति हारीतीयम्, तत्*पतितदाहादिनिषेधेन सहगमनस्य दूरतोऽपास्तत्वादर्थवादमात्रमिति पृथ्वीचन्द्रः। जन्मान्तरीयपापवता सह मरणे नोद्धार इति स्मार्तगौडाः। शुद्धितत्त्वे व्यासः—

दिनैकगम्यदेशस्था साध्वी चेत्कृतनिश्चया ।
न दहेत्स्वामिनं तस्या यावदागमनं भवेत् ॥

तत्रैव भविष्ये—

तृतीयेऽह्नि उदक्यायां मृते भर्तरि वै द्विजाः ! ।
तस्यानुमरणार्थाय स्थापयेदेकरात्रकम् ॥
एकां चितिं समासाद्य भर्तारं याऽनुगच्छति ।
तद्भर्तुर्यः क्रियाकर्ता स तस्याश्च क्रियां चरेत् ॥

*एतद्दशाहान्तम्,

यश्चाग्निदाता प्रेतस्य पिण्डं दद्यात्स एव हि ।

इति वायवीयोक्तेः । आपस्तम्बः—

चितिभ्रष्टा तु या नारी मोहाद्विचलिता भवेत् ।

---

कथं निषेधः स्यादित्यस्वरसः। *पृथगिति । यूपादिशब्दवाच्चितिशब्दस्य दृष्टादृष्टवाचित्वादन्यदेशे काष्ठवद्दाहे संस्काराभावान्न चितिभेदः, समन्त्रदाहे तु विप्राया दोषो न क्षत्रियादेः । *पतितेति । प्रायश्चित्ताधिकारी प्रायश्चित्तमकृत्वा मृतस्तस्य प्रायश्चित्तं दत्त्वौर्ध्वदेहिके सहगमनस्तावकमिदमिति तु वस्तुगतिः । *एतद् दशाहान्तमिति । एकादशाहादिभिन्नमित्यभिप्रायः। परे तु यदि मृतस्य भिन्नमातृका अनेके पुत्रास्तदा पितुः सर्वज्येष्ठ एवौर्ध्वदे-

प्राजापत्येन शुध्येत तस्माद्वै पापकर्मणः ॥

तथा—

अन्वारोहे तु नारीणां पत्युश्चैकोदकाक्रियाम् ।
पिण्डदानाक्रियां तद्वच्छ्राद्धं प्रत्याब्दिकं तथा ॥
अन्वारोहे कृते पत्न्या पृथक्पिण्डांस्तिलाञ्जलीन् ।
पृथक्शिले न कुर्वीत दद्यादेकाशिले तथा ॥

*अन्यत्प्रागुक्तम् ।

इदं गर्भिणीबालापत्यासूतिकारजस्वलाऽव्यभिचारिणीभिर्न कार्यम् ,

स्वैरिणीनां गर्भिणीनां पतितानां च योषिताम् ।
नास्ति पत्याऽग्निसंवेशः पतितौ हि तथा उभौ ॥

इति मदनरत्ने स्मृतिसंग्रहोक्तेः । मदनरत्ने बृहस्पतिः—

बालसंवर्धनं मुक्त्वा बालापत्या न गच्छति ।
व्रतोपवासनियता रक्षेद्गर्भं च गर्भिणी ॥

तृतीयपादे 'रजस्वला सूतिका च' इति पृथ्वीच-

---

हिकं कुर्यात् । अन्वारूढायास्तु कनीयानपि साक्षात्पुत्र एव सर्वं कुर्यात्; नतु सपत्नीपुत्रो ज्येष्ठ एव, तत्र तन्निरूपितपुत्रत्वाभावात् । दाहस्तु एकस्यामेव चितौ । सपिण्डीकरणं तु ज्येष्ठेन पितुरेव पितामहादिभिः, कनिष्ठेन तु पत्या मातुः पितृसपिण्डनादिने दिनान्तरे वा कार्यमिति प्राहुः । अत्रैकादिने दिनान्तरे वा सपिण्डनं पितृसपिण्डनोत्तरमेव सम्भवति, पितृभावापन्नेन संयोजने प्रेतसंयोजनायोगादित्यप्याहुः । तत्रापि मातुः पितुश्चैकोद्दिष्टद्वयमेव । मातुरेकोद्दिष्टं पितुः पार्वणमित्यन्ये । *अन्यदिति ।

नवश्राद्धानि सर्वाणि सापिण्डीकरणं पृथक् ।
एक एव वृषोत्सर्गो गौरेका तत्र दीयते ॥ इति ।

अवयवपिण्डार्थः पाकस्तन्त्रेण, पिण्डः पृथगित्यादि ।

न्द्रोदये गौडीयशुद्धितत्त्वे च पाठः । तत्रैव बृहन्नारदीयेऽपि—

बालापत्या च गर्भिण्यो ह्यदृष्टऋतवस्तथा ।
रजस्वलाराजसुते नारोहन्ति चितां तु ताः ॥ इति ।

अत्र—

पतिव्रता सुसंदीप्तं प्रविशेद्या हुताशनम् ।

इति भारतात्, 'ऋग्वेदवादात्साध्वी स्त्री' इति ब्राह्माच्च पतिव्रतानामेवाधिकारो न दुर्वृत्तानाम् । यत्तु—

अवमत्य च याः पूर्वं पतिं दुष्टेन चेतसा ।
वर्तन्ते याश्च सततं भर्तॄणां प्रतिकूलतः ॥
तत्रानुमरणं काले याः कुर्वन्ति तथाविधाः ।
कामात्क्रोधाद्भयान्मोहात्सर्वाः पूता भवन्त्युत ॥

इति भारतम् , तत् कैमुतिकन्यायेन स्तावकमिति पृथ्वीचन्द्रः । ब्राह्मण्या एकचितिरेव न पृथक्चितिः । क्षत्रियादीनां पृथगेका वेति कल्पतरुरत्नाकरमदनपारिजातादयः । शुद्धिचिन्तामणौ चैवम् । तत्रान्वारोहणे भर्त्रशौचमध्ये तदूर्ध्वं वा कृते त्रिरात्रमध्ये एव दशापिण्डाः । सहगमने तु भर्तृशौचतुल्यमाशौचं पिण्डदानं च,

अन्वितायाः प्रदातव्या दश पिण्डास्त्र्यहेण तु ।
स्वाम्याशौचे व्यतीते तु तस्याः श्राद्धं प्रदीयते ॥

इति शुद्धितत्त्वे शूलपाणौ च पैठीनसिस्मृतेः ।

संस्थितं पतिमालिङ्ग्य प्रविशेद्या हुताशनम् ॥
तस्याः पिण्डादिकं देयं क्रमशः पतिपिण्डवत् ।

इति (१)शूलपाणिशुद्धितत्त्वधृतव्यासोक्तेः । अन्यत्प्रागुक्तम् । यदा तु रजस्वलाऽपि पत्नी मृते पत्यौ देश-

(१) 'जिकनशूल' छ० क०

कालवशात्तदैवानुगच्छति न शुद्धिं प्रतीक्षते तत्र देवयाज्ञिकनिबन्धे—

यदा स्त्रियामुदक्यायां पतिः प्राणान्समुत्सृजेत्।
द्रोणमेकं तण्डुलानामवहन्याद्विशुद्धये॥
मुसलाघातैस्तदसृक् स्रवते योनिमण्डलात्।
विरजस्कां मन्यमाना स्वे चित्ते तदसृक्क्षयम्॥
दृष्ट्वा शौचं प्रकुर्वीत पञ्चमृत्तिकया पृथक्।
त्रिंशद्विंशतिर्दश च गवां दत्वा त्वहःक्रमात्॥
विप्राणां वचनाच्छुद्धा समारोहेद्धुताशनम्।
नारीणां सरजस्कानामियं शुद्धिरुदाहृता॥

अत्र श्राद्धादौ निर्णयः पूर्वमुक्तः।

इति श्रीभट्टकमलाकरकृते निर्णयसिन्धा-
वन्त्यकर्मनिर्णयः।

---

अग्निप्रवेशाशक्तौ तु विष्णुः—'मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा' इति। ब्रह्मवैवर्ते—

सहानुगमनं शस्तं वैधव्यस्याथ पालनम्।

यत्तु तत्रैव—

कलौ नान्या गतिः स्त्रीणां सहानुगमनादृते। इति,

तद्ब्रह्मचर्याशक्यत्वपरम्। तथा च मनुः—

ब्रह्मचर्यं चरेद्वापि प्रविशेद्वा हुताशनम्।

काशीखण्डेऽपि—

पत्यौ मृतेऽपि या योषिद्वैधव्यं पालयेत्क्वचित्।
सा पुनः प्राप्य भर्तारं स्वर्गलोकं समश्नुते॥
अनुयाति न भर्तारं यदि दैवात्कथंचन।

तत्रापि शीलं संरक्षेच्छीलभङ्गात्पतत्यधः ॥
तद्वैगुण्यादपि स्वर्गात् पतिः पतति नान्यथा ।
तस्याः पिता च माता च भ्रातृवर्गस्तथैव च ॥

अथ विधवाधर्माः । मदनरत्ने स्कान्दे—

विधवाकबरीबन्धो भर्तृबन्धाय जायते ।
शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥
एकाहारः सदा कार्यो न द्वितीयः कदाचन ।
मासोपवासं वा कुर्याच्चान्द्रायणमथापि वा ॥
पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ।
नैवाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् ॥
गन्धद्रव्यस्य सम्भोगो नैव कार्यस्तथा पुनः ।
तर्पणं प्रत्यहं कार्यं भर्तुस्तिलकुशोदकैः ॥
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम् ।

इदमपुत्रापरमिति मदनपारिजातः ।

नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥
कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् ।
वैशाखे कार्तिके माघे विशेषनियमं चरेत् ॥

प्रचेताः—

ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥

श्राद्धादौ तु विशेषः प्रागुक्तः । यत्तु बौधायनः—

संवत्सरं प्रेतपत्नी मधु मांसं विवर्जयेत् ।
अधःशयीत षण्मासानिति मौद्गल्यभाषितम् ॥ इति,
तदसवर्णापरमित्यपरार्कः ।

अथ संन्यासः । याज्ञवल्क्यः—

वनाद् *गृहाद्वा कृत्वेष्टिं *सार्ववेदसदक्षिणाम् ।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥
अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ॥

एतदाश्रमसमुच्चयपक्षे । *जाबालश्रुतौ त्वन्येऽपि पक्षा उक्ताः—'यदि चे*तरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा । *अथ पुनर*व्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा *यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति । अङ्गिराः—

प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेद्वा गृहादपि ।
वनाद्वा प्रव्रजेद्विद्वानातुरो वाथ दुःखितः ॥

संसारमेव निःसारं दृष्ट्वा पारदिदृक्षया ।
प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः ॥

इत्यङ्गिरसोक्तेः । *गृहादिति । आश्रमपक्षः । *सार्ववेदसं सर्वस्वम् । आश्रमचतुष्टयसमुच्चयश्च—

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥

इति मनुनोक्तः । यदा तु प्राग्भवीयसुकृतपरिपाकादिवशाद्बाल्य एव वैराग्योत्पत्तिस्तदाऽऽह—*जाबालश्रुतौ त्विति । *इतरथा वैराग्ये । *अथेति । तथाच संन्यासो ब्रह्मचार्यादिभिरेव ग्राह्य इति न नियमः । किन्तु स्नातकविधुरादिभिरपीत्यर्थः । *अव्रतीति । उपनयनस्यापि नापेक्षा शुकनामदेवादिवत् सुकृतपाकातिशयसद्भावे । *यदहरेवेति । अविरक्तस्य तु—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥

आतुरो मुमूर्षुः । दुःखित*चौर*व्याघ्रादिभीतः । भारते—

आतुराणां तु संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत् ॥

जाबालश्रुतावपि—*यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत्' इति । अत्र विप्रस्यैवाधिकारः 'ब्राह्मणाः प्रव्रजन्ति' इति जाबालश्रुतेः;

आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ।

इति मनूक्तेश्चेति विज्ञानेश्वरादयः । वृद्धयाज्ञवल्क्योऽपि—

---

अनधीत्य गुरोर्वेदाननुत्पाद्य तथाऽऽत्मजान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥

इति मनूक्तनिषेधाभिप्रायक एवकारः । *चौरेति ।

उत्पन्ने सङ्कटे घोरे तथा व्याघ्रादिसङ्कटे ।
भयभीतस्य संन्यासमङ्गिरा मुनिरब्रवीत् ।

इति महाभारतात् । *व्याघ्रादीति । आदिना नद्यादिग्रहः । *यद्यातुरः स्यादिति । नन्वत्र किं विधीयते ? न तावत्संन्यासः, तस्य यदहरेवेति प्रागेव विधानात् । नापि तदनुवादेन वाङ्मनसी । नहि तद्विधिर्नियमरूपः, प्रैषादिविधिपर्यालोचनया वाङ्मनसोर्नित्यं प्राप्तेरप्राप्तांशपूरणफलकस्य तस्यायोगात् । नापि परिसंख्या, त्रैदोष्यात् । नच संन्यासमनूद्यातुरः कर्ता विधीयताम्, तथा सति कर्तृस्वरूपमात्रस्य क्रियाऽविनाभावबललब्धतयाऽऽतुरत्वे विधिपर्यवसानापत्तेः । नचैवमेवास्तु, क्रियागुणभूतकर्तृविशेषणं हि तदङ्गं स्यात् । तच्च यद्युपादेयं, संन्यासदशायां नियमेनानुष्ठीयेत, वाग्यतस्तिस्रो दोहयित्वेति दोहदशायां वाग्यमवत् । अनुपादेयत्वे तु राजत्ववदधिकारिसङ्कोचकं स्यात् । उभयथापि

अनातुरस्य संन्यासाननुष्ठानापत्तिरिति चेत्? न, यतः ज्ञानार्थतया काम्ये संन्यासकर्मणि सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारादतथाभूतस्यातुरस्याधिकाराप्राप्तौ तत्प्राप्तिफलकोऽयमपूर्वविधिरेव "यदि ब्राह्मणो यजेत" इत्यादिवत् । परं चास्य कर्तृपक्षाविशेषः, आतुरार्थतया संन्यासस्यैव विधेयत्वात् । तादर्थ्यं च तस्य तदपेक्षितफलजनकत्वेनैव सम्भवतीति । किं तत्फलमित्यपेक्षायां यदेवाप्रागवगतं वाक्यशेषात्तदेवात्रापि सम्बध्यते । यथा "यदि ब्राह्मणो यजेत" इत्यादिब्राह्मणादीन् प्रति नित्यामाप्ताऽवेष्टिप्रयोगविधायकवाक्ये फलापेक्षायाम् "एतयाऽन्नाद्यकामं याजयेत्" इत्येतत् । इयांस्तु विशेषः—तत्र राजसूयान्तर्गतत्वेनावेष्टेरितरसापेक्षतयैव साधनत्वावगमाद्राजसूयसाध्यत्वेनावगतस्य स्वाराज्यस्यावेष्टिफलत्वेनानुपस्थानाद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा फलस्यावेष्टिसाध्यत्वेन प्राप्तौ 'एतयान्नाद्यकामम्' इत्येतस्य प्रवृत्तेरपेक्षितविधानात्सार्थक्यम्, अत्र तु प्रागेव संन्यासस्य निरपेक्षसाधनतावगमात्सन्न्यासमसाध्यत्वेनावगतस्यात्यूहमुपस्थितस्यापरित्यागान्न फलोपस्थापकवाक्यापेक्षेति । यावज्जीवादिवाक्येषु तूपस्थितोऽपि स्वर्गस्त्यज्यते, निमित्तवशेन प्रयोगस्यावश्यकत्वसिद्धौ निष्कामं प्रति प्रयोगनिर्वाहाय पापक्षयार्थत्वस्यैव कल्प्यत्वात् । ननु "यदि रथन्तरसामा सोमः स्यात्" इत्यादाविवात्रापि यदिशब्दवशादातुरत्वं निमित्तं स्यादिति चेत्? पीडावत्त्वं ह्यातुरत्वम् । तच्च संसृतस्य शरीरत्वान्नित्यमतो न निमित्तम् । अत एव "यस्य पुरोडाशौ क्षायतः" इत्यत्र पुरोडाशक्षामस्य पुनः प्रयोगनिमित्तत्वे एकदेशक्षामस्य स्थायिनिमित्तत्वं प्राप्तस्य एकदेशक्षामस्यावर्जनीयत्वेन नित्यतया निमित्तत्वायोगाद् 'इयानवर्जनीयो दाहो नाधिकः' इत्यपरिज्ञानाच्चावर्जनीयदाहातिरिक्तस्यैकदेशेऽपि वर्तमानस्य दाहस्य निमित्तत्वासम्भवात्सर्वक्षाममेव निमित्तमिति स्थापितं "क्षामे तु सर्वदाहे स्यात्" (जै०सू०६-४-५-१७) इत्यधिकरणे । अधिकारपक्षे तु

सर्वाङ्गोपसंहारासमर्थमात्रोपलक्षणतयाऽऽतुरशब्दार्थे नानुपपत्तिः। तथाचातुरस्य यथासम्भवमङ्गोपसंहारौ प्रत्युक्तौ। अनुवादोऽयं "मनसा वाचा वा" इति। यथाकथञ्चित् प्रधानमात्रेणापि आतुरस्य फलसिद्धिरिति वाक्यतात्पर्यम्, "आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी" इति न्यायेन विधिनैवातुरत्वतारतम्यानुरोधेनाङ्गोपसंहारतारतम्याभ्यनुज्ञानात्। नच काम्ये यथाशक्त्यङ्गोपसंहारोपगमे तिर्यगधिकरणविरोधः, आतुरसंन्यासविधिबलेनेह तदुपगमात्। एक एव संन्यासः स्वस्थातुररूपकर्तृभेदेन अङ्गान्यपेक्षते नापेक्षते इति विरुद्धमिति चेत्? सन्ध्यावन्दनादौ नित्ये तथादर्शनात्। यत्त्वातुरसन्न्यासो भिन्न एव इडो यजतीत्यादाविवाभ्यासेन कर्मभेदादिति। तन्न, अनन्यपरपुनःश्रवणरूपो ह्यभ्यासः कर्मभेदकः। नचेह सोऽस्ति, पुनःश्रवणस्यातुराधिकारसिद्धिप्रयोज्यकत्वेनान्यपरत्वात्। विधेर्हि प्रयोजनमात्रं वाच्यम्। नच पुनर्विधाने विधित्रैविध्यभङ्गः, इतरनिवृत्तिप्रयोजकत्वस्यैवापूर्वविधित्वेन तत्र प्रवेशात्। तत्त्वं च साक्षात्परंपरया वेत्यन्यदेतत्। यद्वा विधिस्त्रिधेति प्रायोवादः। "षडस्माकमनादयः" "समासश्चतुर्धा" "अनुपस्थितस्याप्रकारत्वम्" इति तत्तद्दर्शनस्थोद्घोषवत्। अस्ति हि मूलावरणादेरप्यनादिता। अस्ति च "सुप् सुपा" इति समासः। अस्ति चानुपस्थिताभावत्वादेः प्रकारतेति। ननु तथापि यदिशब्दः कथं योज्य इति चेदत्र भट्टपादाः—यदिशब्दपरित्याग उताध्याहारकल्पना। व्यवधानेन सम्बन्धो हेतुहेतुमतोश्च लिङिति। अस्यार्थः— "यदि ब्राह्मणः" इत्यत्रेव हुंफडादौ निपातानामनर्थकत्वदर्शनाद्यदिशब्दस्य तथात्वकल्पनया इह परित्यागः, अथवा यदि रोचेतेत्यध्याहारः, अथवा व्यत्ययेन सम्बन्धः यदि सन्यस्येत्तर्ह्यातुर इति "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्" इत्यादौ यदि गृह्णीयात्तर्हि रथन्तरसामा सोमः स्यादिति रथन्तराधिकरणपूर्वपक्षवत्। वस्तुतस्त्विह न व्यत्ययः कार्यः यद्यातुररूपेप्सितं फलं भावयेत्तर्हि

सन्न्यासेनेति तं विनैवोपपत्तेः । फलांशस्यातुरशब्देन समर्पणात्तत्र विधेरनुष्ठापकत्वात् । उक्तं हि सौभराधिकरणपूर्वपक्षे—पुरुषशेषता च तदभिलषितफलसाधनतयेति । अथवा सोमः स्यादिति हेतौ लिङ्, गृह्णीयादिति विधौ रथन्तरसामसोमहेतुकान् ऐन्द्रवायवाग्रान् गृह्णीयादिति अक्रियमाणस्य हेतुत्वासम्भवादर्थात्सोमविधिः । यद्वा गृह्णीयादिति हेतुमति । सोमः स्यादिति विधौ । हेतुपदादि.........
...............सोमस्यैव च ग्रहाग्रतारूपफलजनकः सोमया.................

संन्यासस्य श्रवणांगत्वादातुरस्य प्रधानभूतश्रवणाभावादनुष्ठानं व्यर्थमिति चेत्? न, अङ्गत्वासिद्धेः । तथाहि "एतमेव लोकमिच्छन्तः प्रव्राजिताः प्रव्रजन्ति" इतिश्रुतिर्विधिर्नार्थवादः । "एतद् ब्रह्म" इत्यर्थवादसम्बद्धत्वात् । अर्थवादस्यार्थवादान्तरापेक्षानुपगमात् । तस्मादनया संन्यासो विधीयते । स च फलमाकाङ्क्षमाणः एकवाक्योपात्तकामनार्थकधातुपदसमभिव्याहृतकर्मप्रत्ययान्तलोकशब्देनैतच्छब्दसमानाधिकरणेनोपस्थापितं प्रकृतं ज्ञानविशिष्टमात्मानं फलत्वेन गृह्णाति । तत्र विशेष्यस्य कूटस्थनित्यस्य स्वरूपेण भाव्यत्वायोगादानर्थक्यतदङ्गावतरणन्यायेन सविशेषणे हीति न्यायेन वा ज्ञानमेव भाव्यं गृहीत्वा पर्यवस्यति । न च प्रकरणप्रायपाठाभ्यां सन्न्यासस्य श्रवणाङ्गत्वाद्गुणार्थवादोऽयं "वर्म वा यद्यज्ञस्य" इत्यादिवदिति वाच्यं, प्रकरणापेक्षया वाक्यस्य प्राबल्यात्। प्रयाजादौ अन्यतराकाङ्क्षयाऽऽर्थवादिकं फलं कल्प्यमिति तदपेक्षया दर्शपूर्णमासाङ्गताग्राहकस्य प्रकरणस्य प्राबल्यमिति वैषम्यात् । न च संन्यासस्य ज्ञानफलकत्वे तुल्यार्थत्वाच्छ्रवणेन सह विकल्पापत्तिरिति वाच्यं, द्वारभेदात् । अद्वितीये ब्रह्मणि वेदान्तानां तात्पर्यावधारणानुकूलव्यापाररूपमुपक्रमोपसन्धानं श्रवणम्। तच्च प्रमाणताऽसम्भावनानिवृत्तिद्वारोपयुज्यते । संन्यासस्तु प्रतिबन्धककल्मषनिवृत्तिद्वारा,

ये च संतानजा दोषा ये च स्युः कर्मसम्भवाः ।

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ताः॥द्वावेको वैश्यशूद्रयोः॥इति ।

---

संन्यासस्तान् दहेत्सर्वांस्तुषाग्निरिव काञ्चनम् ॥
इतिमाधवोक्तस्मरणात् ;
मृत्तोयैः शोध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः ॥

इतिमनूक्तेश्च । एवञ्च संन्यासस्य ज्ञानाङ्गत्वे स्थिते श्रवणाङ्गत्वायोगात् "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादिवद् "वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्" इत्यादिवाक्यानि क्रममात्रविधायकानि । अतएव "अन्तरा चापि तु तद्दृष्टेः" (ब्र०सू०३–४–९–३६) इत्यधिकरणे विधुरस्यापि श्रवणाधिकारः समर्थितः, जन्मान्तरीयेणापि क्रमनिर्वाहात् । यदि च माधवोक्तरीत्याऽग्निहोत्राद्यभावात्सत्कर्मजन्यान्तःकरणशुद्ध्यभावेन साधनासम्भवाद्विधुराणां न सन्न्यासाङ्गविशिष्टश्रवणेऽधिकार इति पूर्वपक्षः । जप्यादिना चित्तशुद्धिसम्भवात्साङ्ग एवाधिकार इति सिद्धान्त इत्युच्यते । तदापि गार्गीप्रभृतिष्वगतिरेव "पुराकल्पेतु" इत्यादिना तासां वेदाध्ययनाधिकारावगमात् । अत एव गार्गीप्रभृतीनां विद्याधिकारोऽपि तत्रैव भाष्यकारैः समर्थितः । अत एव वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैरिति संक्षेपशारीरकं न-केवलमैहिकमेव पारिव्राजकं किन्तु जन्मान्तरीयमपि ............
.................................. त्वाद् श्रवणं न विरुद्ध्यते । जन्मान्तरीयसंन्यासकल्पनात् । नत्वेतज्जन्मन्येव संन्यासोत्तरं गार्हस्थ्यम् ,

त्रयाणामानुलोम्यं स्यात् प्रातिलोम्यं न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात् पापकृत्तमः ॥

इति दक्षेण निषेधात् उत्तरमीमांसायां तृतीयाध्याये "तद्भूतस्य तु नातद्भावः" इत्याद्यधिकरणेऽवरोहाभावस्य निर्णीतत्वा-

*माधवस्तु—

ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात् ।

इति कौर्माद्युक्तेर्वर्णत्रयस्याप्यधिकारः । पूर्ववाक्यं तु काषायदण्डादिनिषेधार्थम्,

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।

राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः ॥

इति बौधायनोक्तेरिति पक्षान्तरमाह । तत्त्वं तु कुटीचकादिपरमेव तदिति । योऽपि 'संन्यासं पलपैतृकम्' इति कलौ निषेधः, सोऽपि त्रिदण्डादिपर इत्युक्तं प्राक् ।

---

च्च । *द्वाविति । द्वौ वैश्यस्य एकः शूद्रस्येत्यन्वयः । यत्तु—

चत्वार आश्रमाः प्रोक्तास्तेषु शूद्रस्तु नार्हति । इति,

तत्समन्त्रकविवाहनिषेधार्थम् । *माधवस्त्विति । अत्रायमस्वरसः—यद्यपि सुरेश्वरवार्तिके एव—

त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ ।

पदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा ॥ इति ।

प्रत्ययार्थात्म्यविज्ञानस्वभावश्चेत्समर्थ्यते ।

उत्थानं यस्य यस्य स्यात्स स व्युत्थातुमर्हति ॥

इति द्विजानां संन्यास उक्तस्तथापि भाष्यकृद्भिर्ब्राह्मणस्यैव संन्यासे अधिकारोक्तेः स एव युक्तः। न च क्वचित्सामान्यशब्दश्रवणबलात्सर्वत्र ब्राह्मणशब्दस्य द्विजपरत्वं सांप्रतम्, "पुरोडाशं चतुर्धा करोति" "आग्नेयं चतुर्धा करोति" इत्यत्रेव सामान्यस्य विशेषे उपसंहारात्। नतु विपरीतम्, अभिधात्र्यश्रुतेः। द्विजशब्दस्य ब्राह्मणपरत्वे च न कोपि बाधः। किञ्च क्षत्रियादिसंन्यासनिषेधानां मुखजानामिति वचनमालम्ब्य काषायादिनिषेधपरत्वमयुक्तलक्षणापत्तेः। मुखजानामित्यनेनापि हि अंगनिषेधमुखेन क्षत्रि-

स च सन्यासश्चतुर्धेत्याह हारीतः—

कुटीचको बहूदको हंसश्चैव तृतीयकः ।
चतुर्थः परमो हंसो यो यः पश्चात्स उत्तमः ॥

*आद्यः पुत्रादिना कुटीं कारयित्वा तत्र गृहे वा वसन् काषायवासाः शिखोपवीतत्रिदण्डवान् बन्धुषु स्वगृहे वा भुञ्जान आत्मज्ञो भवेत् । एतदत्यन्ताशक्तपरम् । द्वितीयस्तु बन्धून् हित्वा सप्तागाराणि भैक्षं चरन् पूर्वोक्तवेषः स्यात् । हंसस्तु पूर्वोक्तवेषोऽप्येकदण्डः,

एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् ।

इति स्कान्दात् । विष्णुरपि—

यज्ञोपवीतं दण्डं च वस्त्रं जन्तुनिवारणम् ।
तावान् परिग्रहः प्रोक्तो नान्यो हंसपरिग्रहः ॥

---

यादीन् प्रति प्रधानमेव बाध्यते, ज्ञानार्थतया काम्ये संन्यासे सर्वाङ्गोपसंहारेणैवाधिकारात् । तत एवातुरवाक्यस्याप्यप्रवृत्तिः सजातीययोरातुरानातुरयोरधिकारासिद्धेः । एतेन मुखजानामिति वाक्यस्य कुटीचकादिपरत्वमप्ययुक्तं पारहंस्यस्याप्यननुमतत्वादिति । *आद्य इत्यादि । तथाच स्कान्दे—

कुटीचकश्च संन्यस्य स्वे स्वे सद्मनि नित्यशः ।
भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथवा ॥
शिखायज्ञोपवीती स्यात्त्रिदण्डः सकमण्डलुः ।
बहूदकश्च संन्यस्य बन्धुपुत्रादिवर्जितः ॥
सप्तागारं चरेद्भैक्ष्यमेकान्नं तु परित्यजेत् ।
गोवालरज्जुसंबद्धं त्रिदण्डं शिक्यमुद्धृतम् ॥
जलपात्रं पवित्रं च खनित्रीं च कृपाणिकाम् ।
शिखां यज्ञोपवीतं च देवताराधनं चरेत् ॥

चतुर्थोऽपि स्कान्दे—

*परहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मिताम्।
शिखां यज्ञोपवीतं च *नित्यं कर्म परित्यजेत्॥

अयमप्येकदण्ड एव। ये तु शिखोपवीतादित्यागनिषेधास्ते कुटीचकादिपराः। यत्तु मेधातिथिः—

यावन्न स्युस्त्रयो दण्डास्तावदेकेन वर्तयेत्। इति,

तदपि तत्परमेव। यच्चात्रिः—

चतुर्धा भिक्षवः प्रोक्ताः सर्वे चैव त्रिदण्डिनः।इति,

तद्वाग्दण्डादिपरं न यष्टिपरम्,

वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च।
यस्यैते नियता दण्डाः स त्रिदण्डीति चोच्यते॥

इति मनूक्तेः। तस्मात्परमहंसस्यैकदण्ड एव। सोऽप्यविदुषः। विदुषस्तु सोऽपि नास्ति,

'न दण्डं न शिखां नाच्छादनं चरति परमहंसः' इति महोपनिषदुक्तेः; 'ज्ञानमेवास्य दण्डः' इति वाक्यशेषाच्च। यत्तु यमः—

काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः।
स याति नरकान् घोरान् महारौरवसंज्ञितान्॥इति,

---

हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च।
कन्थां कौपीनमालाद्यमङ्गवस्त्रं बहिःपटम्॥
एकं तु वैणवं दण्डं धारयेन्नित्यमादरात्।
....................कुर्याद् ध्यानं समर्चयन्॥

इत्युक्त्वा परमहंस उक्तस्तमाह—*परहंस इति। *नित्यं कर्म। संध्यावन्दनगायत्रीजपादि। तथा—

कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम्।
अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम्॥

तद्वैराग्यं विना जीवनार्थसंन्यासपरम्,

एकदण्डं समाश्रित्य जीवन्ति बहवो नराः ।
नरके रौरवे घोरे कर्मत्यागात्पतन्ति ते ॥

इति स्मृतेः । यच्चाश्वमेधिके—

एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा ।
काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर ॥ इति,
तस्यापि पूर्वोक्तव्यवस्था ज्ञेया ।

*अथ तद्विधिः । बौधायनः—

कृत्वा श्राद्धानि सर्वाणि पित्रादिभ्योऽष्टकं पृथक् ।
वापयित्वा च केशादीन् मार्जयेन्मातृका इमाः ॥

सर्वाणीति स्वस्य नवश्राद्धषोडशश्राद्धादि कृत्वेत्यर्थः ।
स्मृत्यर्थसारेऽपि—

एकोद्दिष्टविधानेन कुर्याच्छ्राद्धानि षोडश ।
अग्निमान्पार्वणेनैव विधिना निर्वपेत्स्वयम् ॥ इति ।

कात्यायनः—

कृच्छ्रांस्तु चतुरः कृत्वा पावनार्थमनाश्रमी ।
आश्रमी चेत्सकृत्कृच्छ्रं तेनासौ योग्यतां व्रजेत् ॥

बौधायनः—

सदैवमार्षकं दिव्यं पित्र्यं मातृकमानुषे ।
भौतिकं चात्मनश्चान्ते अष्टौ श्राद्धानि निर्वपेत् ॥

अत्र क्रममाह हेमाद्रौ शौनकः—"देवश्राद्धे ब्रह्मविष्णुमहेश्वरा देवताः । आर्षे देवर्षिब्रह्मर्षिक्षत्रर्षयः, देव-

---

माधूकरमथैकान्नं परहंसः समाचरेत् ॥ इति ।

आद्यौ त्रिदण्डावन्त्यावेकदण्डौ । इष्टेः प्राक्कर्तव्यतया श्राद्धादि वक्तुं प्रतिजानीते—*अथेति । एतच्च विश्वेश्वर्यादि-

र्षिक्षत्रर्षिमनुष्यर्षयो वा" । मरीच्यादिऋषय इति संन्यासपद्धतौ । तच्चिन्त्यम् । दिव्ये वसुरुद्रादित्याः । मानुषे सनकसनन्दनसनातनाः । भूतश्राद्धे पृथिव्यादिभूतानि चक्षुरादिकरणानि चतुर्विधो भूतग्रामश्चेति तिस्रः । पित्र्ये पित्रादित्रयो मातामहाश्च । मातृके मात्राद्यास्तिस्रः । आत्मश्राद्धे आत्मपितृपितामहा देवताः । आत्मश्राद्धं परमात्मदैवत्यमिति संन्यासपद्धतौ । तच्चिन्त्यम् । सर्वत्र च नान्दीमुखत्वं विशेषणं ज्ञेयम् । सर्वत्र पिण्डदानम् । युग्मा विप्राः । दक्षक्रतू सत्यवसू वा विश्वेदेवौ । अन्यन्नान्दीश्राद्धवदिति हेमाद्रिः । स्मृत्यर्थसारे—

केशश्मश्रुलोमनखं वापयित्वोपकल्पयेत् ।
दण्डं जलं पवित्रं च शिक्यं पात्रं कमण्डलुम् ॥

आसनं कौपीनमाच्छादनं कन्थां पादुके इति दश पञ्च वा । एतच्च पूर्वेद्युर्नान्दीमुखं कृत्वा परेद्युः पुण्याहवाचनं कृत्वा कार्यमिति शौनकः ।

बौधायनः—

त्रीन्दण्डानङ्गुलीस्थूलान्वैणवान् मूर्धसंमितान् ।
एकादश नव द्वित्रिचतुःसप्तान्यपर्वकान् ॥
वेष्टितान्कृष्णगोवालरज्ज्वा तु चतुरङ्गुलान् ।
एको वा तादृशो दण्डो गोवालसदृशो भवेत् ॥
अनग्निरग्निमुत्पाद्य नित्येन विधिना ततः ॥

पृष्टोदिविविधानेनेत्यर्थः ।

स्वाग्नावेवाग्निमान्कुर्यादपवर्गोक्तमादितः ।
आज्यं पयो दधीत्येतत्त्रिवृद्धा जलमेव वा ॥
ॐभूरित्यादिना प्राश्य रात्रिं चोपवसेत्ततः ।
अथादित्यस्यास्तमयात्पूर्वमग्नीन्विहृत्य सः ॥

आज्यमग्नौ गार्हपत्ये संस्कृत्यैतेन च स्रुचा ।
पूर्णयाहवनीये तु जुहुयात्प्रणवेन तत् ॥
ब्रह्मान्वाधानमेतत्स्यादग्निहोत्रे हुते ततः ।
संस्तीर्य गार्हपत्यस्य दर्भानुत्तरतोऽत्र तु ॥
पात्राण्यासाद्य दर्भेषु ब्रह्मायतन एव तु ।
जागृयाद्रात्रिमेतां तु यावद्ब्राह्मो मुहूर्तकः ॥
अग्निहोत्रं स्वकाले तु हुत्वा प्रातस्तनं ततः ।
इष्टिं वैश्वानरीं कुर्यात्प्राजापत्यामथापि वा ॥

जाबालश्रुतौ-'तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति तदु तथा न कुर्यादाग्नेयीमेव कुर्यात्पश्चात् त्रैधातवीयामेव कुर्यात्" इत्युक्तम् । तेनात्र विकल्पः । अत्राहुः-त्रेताग्नेः प्राजापत्या, तद्वाक्यशेषेऽग्नीनिति बहुत्वश्रुतेः; एकाग्नेस्त्वाग्नेयी इति । अनाहिताग्नेरिष्टिस्थाने वैश्वानर आग्नेयो वा चरुरिति माधवः । कात्यायनः—

आत्मन्यग्नीन्समारोप्य वेदिमध्ये स्थितो हरिम् ।
ध्यात्वा हृदि त्वनुज्ञातो गुरुणा प्रैषमीरयेत् ॥

कपिलः—

विधिवत्प्रैषमुक्त्वाऽथ त्रिरुपांशु त्रिरुच्चकैः ।
अभयं सर्वभूतेभ्यो मत्तः स्वाहेत्यपो भुवि ॥
निनीय दण्डशिक्यादि गृहीत्वाऽथ बहिर्व्रजेत् ॥

---

निबन्धेष्वतिविस्तृतमिति तत एव न्यूनातिरिक्तं निश्चेतव्यमित्युपरम्यते ॥

इति आर्डोपाह्वकृष्णभट्टविरचिता रत्नमाला ॥

श्रीरस्तु । शुभं भवतु ।

(अ(१)भयमिति मन्त्रेणापां पूर्णमञ्जलिं निनीयेत्यर्थः ।)

बौधायनः—

सखे मेत्यादिना दण्डं येन देवाः पवित्रकम् ।
यदस्य पारे शिक्यं तु पात्रं व्याहृतिभिस्तथा ॥
युवासुवासाः कौपीनं गृहीत्वा बान्धवांस्त्यजेत् ।

अथ क्रमः । तत्र संन्यासेऽधिकारसिद्ध्यर्थं स्वस्य नवश्राद्धषोडशश्राद्धसपिण्डनानि साग्निः पार्वणान्यनग्निस्त्वेकोद्दिष्टविधिना कृत्वाऽनाश्रमी चेत्कृच्छ्रचतुष्टयम्, अन्यस्तु तप्तकृच्छ्रं कृत्वोदगयने एकादश्यां द्वादश्यां वा साग्निरमावास्यायां पौर्णमास्यां चतुर्दश्यां वा यथा पर्वणि प्राजापत्या स्यात् । तत्र देशकालौ स्मृत्वा परमहंसादिसंन्यासग्रहणं करिष्य इति संकल्प्य गणेशं संपूज्य पुण्याहं वाचयित्वा मातृकापूजां वृद्धिश्राद्धं च कृत्वाऽस्तमयात्प्रागौपासनं समिध्याहिताग्निस्तु गार्हपत्यं, विधुरोऽग्निहोत्री तु त्रिकाण्डमण्डनोक्तदिशा कुशपत्न्या सह पवमानेष्ट्यन्तं पूर्णाहुत्यन्तं वाधानं कुर्यात् । ब्रह्मचारी चेल्लौकिके विधुरश्चेद्व्याहृतिभिः प्रणवेन चाग्निमाधायान्वग्निरुषसामित्यानीय पृष्ठोदिवीति निधाय तेनैव समिध्य "तत्सवितुः" "तां सवितुः" "विश्वानि देव" इति तिस्रः समिधोऽभ्यादध्यात् । एवमग्नौ सिद्धे कक्षोपस्थवर्ज्यं वपनं कृत्वा पयोदधियुतमाज्यमपो वा—"ॐभूः सावित्रीं प्रविशामि तत्सवितुर्वरेण्यम्" इति प्राश्याचम्य पुनरादाय—"ॐ भुवः सावित्रीं प्रविशामि भर्गो देवस्य धीमहि" इति द्वितीयम्, ॐस्वः सावित्रीं प्रविशामि धियो यो नः प्रचोदयात्" इति

(१) कंसान्तर्गतं नास्ति ग० पुस्तके ।

तृतीयम्, समस्तया चतुर्थम्—ॐभूर्भुवः स्वः सावित्रीं प्रविशामि तत्सवितु०यात् इति। संन्यासपद्धतौ तु त्रिवृदसीति प्रथमं, प्रवृदसीति द्वितीयं, विवृदसीति तृतीयं प्राश्याऽपः पुनन्त्विति जलं प्राश्य सावित्रीप्रवेश उक्तः। तत आहवनीयं विहृत्य ब्राह्मणमुपवेश्याज्यं संस्कृत्य चतुर्द्वादश वा गृहीत्वा समित्पूर्वमोंस्वाहा परमात्मन इदमिति हुत्वोपवसेत् । (इ(१)दं ब्रह्मान्वाधानम् ।) ततः सायंहोमं वैश्वदेवं च कृत्वा अग्नेरुदक्कुशानास्तीर्य दण्डादीनि दश पञ्च वाऽऽसाद्य ब्रह्मासने कृष्णाजिनोपविष्टो रात्रौ जागरणं कृत्वा प्रातर्होमानन्तरं प्राजापत्यां वैश्वानरीं वा कृत्वा ऋत्विग्भ्यः सर्वस्वं ब्रह्मणे च मधुपूर्णं तैजसपात्रं दत्त्वा दारुपात्राण्याहवनीयेऽश्ममृन्मयानि च जले क्षिपेत्। कृष्णाजिनं त्वाददीत। अनाहिताग्निस्तु वैश्वानरमाग्नेयं वा चरुं हुत्वा पात्राण्यग्नौ क्षिप्त्वा भूर्भुवः स्वरित्यपः स्पृष्ट्वा "तरत्समन्दी" इति सू(२)क्तं जप्त्वा विप्रान्संभोज्य पुण्याहं वाचयित्वा अत्र वा वपनं कृत्वा हेमरूप्यकुशजलैः स्नात्वा पुरुषाय चरुं कृत्वा प्राणाय स्वाहेति पञ्चाज्याहुतीर्हुत्वा पुरुषसूक्तेन प्रत्यृचमाज्यं चरुं च जुहुयात्।

अत्र विरजाहोमं केचिदाहुः। यथोक्तं शिवगीतासु—

जुहुयाद्विरजामन्त्रैः प्राणापानादिभिस्ततः।
अनुवाकान्तमेकाग्रः समिदाज्यचरून्पृथक्॥
आत्मन्यग्नीन्समारोप्य याते अग्नेति मन्त्रतः।
भस्मादायाग्निरित्याद्यैर्विमृज्याङ्गानि संस्पृशेत्॥
पापैर्विमुच्यते सत्यं मुच्यते नात्र संशयः।

---

(१) कंसान्तर्गतं नास्ति ग० पुस्तके।
(२) 'सूक्तं' नास्ति ग० पुस्तके।

यथा—"प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्माभूयासꣲ स्वाहा।" सर्वत्र लिङ्गोक्तदेवताभ्य इदमिति त्यागः। वाङ्मनश्चक्षुःश्रोत्र-जिह्वाघ्राणरेतोबुद्ध्याकूतिसङ्कल्पा मे शुध्यन्तां ज्यो-ति०। त्वक्चर्ममांसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योति०। शिरःपाणिपादपार्श्वपृष्ठोरूदरज-ङ्घशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं०। उत्ति-ष्ठ पुरुष हरितपिङ्गललोहिताक्षि देहिदेहि ददापयिता मे शुध्यन्तां ज्योति०। पृथिव्यापस्तेजोवायुराकाशा मे शु-ध्यन्तां ज्योति०। शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योति०। मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योति०। अव्यक्तभावैरहंकारैर्ज्योति०। आत्मा मे शुध्यन्तां०। अन्तरात्मा मे शुध्यन्तां०। परमात्मा मे शुध्यन्तां०। क्षुधे स्वाहा। क्षुत्पिपासाय स्वाहा। विविट्यै स्वाहा। ऋग्विधानाय स्वाहा। कषोत्काय स्वाहा। क्षुत्पिपा-सामलं ज्येष्ठामलक्ष्मीर्नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वान्निर्णुद मे पाप्मानꣲ स्वाहा। अन्नमयप्राणम-यमनोमयविज्ञानमयानन्दमयमात्मा मे शुध्यन्तां ज्यो-ति०। ततः स्विष्टकृदादि हुत्वा ब्रह्मणे हिरण्यमाज्यपा-त्रं धेनुं च दत्त्वा "समासिञ्चतु" इत्युपतिष्ठेत। अत्र केचिदनग्नेः सावित्रीप्रवेशं पूर्णाहुतिं चाहुः।

ततो—"यात अग्ने यज्ञिया तनूः" इति त्रिस्त्रिरेकैकं जिघ्रन्नात्मन्यग्नीन् समारोप्य गुरवे सर्वस्वं दत्त्वा—

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहि-णोति तस्मै।

तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये।'

इत्युपस्थाय दक्षिणं जान्वाच्य पादावुपसंगृह्याधीहि भगवो ब्रह्मेति वदेत्। ततो गुरुरात्मानं ब्रह्मरूपं ध्यात्वा शङ्खं द्वादशप्रणवैरभिमन्त्र्य तेन शिष्यमभिषिच्य—"शन्नो मित्रः" इति शान्तिं पठित्वा तच्छिरसि हस्तं दत्त्वा पुरुषसूक्तं जप्त्वा—"मम व्रते हृदयं ते दधामि" इति च जप्त्वोदङ्मुखः प्रणवार्थमनुसंदधद्दक्षिणे कर्णे प्रणवमुपदिश्य तदर्थं च पञ्चीकरणाद्यवबोध्य अयमात्मा ब्रह्म, तत्त्वमसि, प्रज्ञानं ब्रह्मेत्याद्युपदिशेत्। तदर्थं च वदेत्। ततो नाम दद्यात्। ततः शिष्यस्तेनोपदिष्टो हरिं स्मरन्नूर्ध्वबाहुस्तिष्ठन् देवान्साक्षिणः कृत्वा ॐभूर्भुवःस्वः संन्यस्तं मयेति त्रिरुपांशु त्रिरुच्चैस्त्रिरत्युच्चैश्चोक्त्वा जलसमीपं गत्वा स्नात्वा अभयं सर्वभूतेभ्यो मत्तः स्वाहेति त्रिरञ्जलिं क्षिप्त्वा "युवा सुवासाः" इति काषायं कौपीनं वासश्च परिधाय (१)सखे मा गोपायेति मुख्यं वैणवं पालाशं बैल्वमौदुम्बरं वा दण्डं गृह्णीयात्। अत्र पुत्रकामो गृहस्थः शङ्खेन पुरुषसूक्तेन दण्डमभिषिच्य दद्यादित्याचारः। ततः शिखामुत्पाट्य ॐभूःस्वाहेत्यग्नौ जले वा हुत्वा तथैवोपवीतं हुत्वा "येन देवाः पवित्रेण" इति जलपवित्रं, "यदस्य पारे" इति शिक्यम्, सावित्र्या कमण्डलुं, सप्तव्याहृतिभिर्भोजनपात्रमिदं विष्णुरित्यासनं बृसीं वा गृहीत्वा ॐभूस्तर्पयामीति व्यस्तसमस्ताभिर्महर्नम इति तर्पयित्वा ॐभूः स्वधों भुवः स्वधोंस्वः स्वधोंभूर्भुवःस्वर्महर्नमः स्वधेति पितॄंस्तर्पयित्वा "उदुत्यं" "चित्रम्" "तच्चक्षुः" "हंसःशुचिषद्" "नमो मित्रस्य" इति

(१) 'सखा' क० ख०

स्नात्वा सुरभिमतीभिरापोहिष्ठेति हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिश्च मार्जयित्वा अष्टोत्तरशतवारमघमर्षणं प्राणायामांश्च कृत्वा ॐभूर्भुवः स्वरिति च पठित्वा "नमःसवित्रे" इति सूर्यं चोपस्थाय पुनः स्नात्वा जङ्घे क्षालयित्वा ओमिति ब्रह्मोमितीदं सर्वमोमिति ब्रह्म वा एष ज्योतिर्य एष तपति वेद्यमेवैतद्य एष वेदो यद्वनमस्तीति जपित्वा अष्टसहस्रं गायत्रीं जपेदिति ॥

अथ यतिधर्माः—प्रातरुत्थाय "ब्रह्मणस्पते" इति जपित्वा दण्डादीनि मृदं च निधाय मूत्रपुरीषयोर्गृहस्थचतुर्गुणं शौचं कृत्वाऽऽचम्य पर्वद्वादशीवर्ज्यं प्रणवेन दन्तधावनं कृत्वा तेनैव मृदा बहिः कटिं प्रक्षाल्य जलतर्पणवर्ज्यं स्नात्वा पु(१)नर्जङ्घे प्रक्षाल्य वस्त्रादीनि गृहीत्वा मार्जनान्तं कृत्वा केशवादिनमोन्तनामभिस्तर्पयित्वा ॐभूस्तर्पयामीत्यादिव्यस्तसमस्तव्याहृतिभिर्महर्जनस्तर्पयामीति तर्पयेत्। ॐभूःस्वाहेति स्वाहाशब्दान्तैः स्वधाशब्दान्तैश्चैभिरेव पुनस्तर्पयेदिति केचित्। तत आचम्याञ्जलिना प्रणवेन जलमादाय व्याहृतिभिरुद्धृत्य गायत्र्या त्रिःक्षिप्त्वा गायत्रीं जपेत्। उदिते सूर्ये प्रणवेन व्याहृतिभिर्वार्घ्यं त्रिर्दत्त्वा मित्रस्य चर्षणीत्याद्यैः पूर्वोक्तसौरीभिरिदं विष्णुस्त्रिर्देवो ब्रह्मजज्ञानमिति चोपस्थाय सर्वभूतेभ्यो नम इति प्रदक्षिणमावर्तते। ततो नत्वा "आदित्याय विद्महे सहस्राक्षाय धीमहि। तन्नः सूर्यः प्रचोदयात्" इति त्रिर्जपेत्। एवं त्रिकालं विष्णुपूजां ब्रह्मयज्ञं च कुर्यात् ॥

(१) 'पुनः' नास्ति ग०

अथ भिक्षा ।

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
कालेऽपराह्णे भूयिष्ठे नित्यं भिक्षां यतिश्चरेत् ॥

इत्युक्ते काले उद्वयमिति चतसृभिरादित्यमुपस्थाय तेनैक्यं ध्यात्वा आकृष्णेनेति प्रदक्षिणं कृत्वा "येते पन्थानः" इति जप्त्वा—

योऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्हृदि स्थितः ।
सोऽहं नारायणो देव इति ध्यात्वा प्रणम्य तम् ।
त्रिदण्डं दक्षिणे त्वङ्के ततः संधाय बाहुना ॥
पात्रं वामकरे क्षिप्त्वा श्लेषयेद्दक्षिणेन तु ।

इति बौधायनोक्तदिशा त्रीन्पञ्च सप्त वा गृहान् गत्वा भवत्पूर्वां भिक्षां याचित्वा "पूर्णमसि पूर्णं मे भूयाः" इत्यागत्य शुचिरन्नं प्रोक्ष्य ॐभूःस्वधा नम इत्यादिव्यस्तसमस्तव्याहृतिभिः सूर्यादिदेवेभ्यो भूतेभ्यश्च भूमौ क्षिप्त्वा भुक्त्वा प्रणवेन षोडशप्राणायामान्कुर्यादिति संक्षेपः । गौतमव्याख्यायां भृगुः—

यतिहस्ते जलं दत्त्वा भैक्ष्यं दद्यात्पुनर्जलम् ।
भैक्ष्यं पर्वतमात्रं स्यात्तज्जलं सागरोपमम् ॥

अत्र सर्वत्र मूलं माधवापरार्कमदनरत्नस्मृत्यर्थसारादौ ज्ञेयम् ।

कण्वः—

एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र, वर्षासु मासांस्तु चतुरो वसेत् ॥

जाबालश्रुतौ—"शून्यागारदेवगृहतृणकुटीवल्मीकवृक्षमूलकुलालशालाग्निहोत्रगृहनदीपुलिनगिरिकुहरनिर्झरस्थण्डिलेष्वनिकेतनः" इति । मात्स्ये—

अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरो मासान्वार्षिकान्निवसेत्पुनः ॥
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ।

अत्रिः—

भिक्षाटनं जपं स्नानं ध्यानं शौचं सुरार्चनम् ।
कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत् ॥
मञ्चकं शुक्लवस्त्रं च स्त्रीकथां लौल्यमेव च ।
दिवास्वापं च यानं च यतीनां पतनानि षट् ॥
आसनं पात्रलोभश्च संचयः शिष्यसंग्रहः ।
दिवास्वापो वृथाजल्पो यतेर्बन्धकराणि षट् ॥

दक्षः—

नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कथंचन ।
यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ॥

मदनरत्ने अत्रिः—

पित्रर्थं कल्पितं पूर्वमन्नं देवादिकारणात् ।
वर्जयेत्तादृशीं भिक्षां परबाधाकरीं तथा ॥

बृहस्पतिः—

न तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः ।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत् ॥

एतद्वेदार्थभिन्नपरम् । अत्रिः—

स्नानं सुरार्चनं ध्यानं प्राणायामो बलिः स्तुतिः ।
भिक्षाटनं जपः संध्या त्यागः कर्मफलस्य च ॥

एते यतिधर्मा इत्यर्थः । अन्येऽपि माधवमिताक्षरादौ ज्ञेयाः । यतिधर्मसमुच्चये—

न स्नानमाचरेद्भिक्षुः पुत्रादिनिधने श्रुते ।
पितृमातृक्षयं श्रुत्वा स्नात्वा शुध्यति साम्बरः ॥

अथ यतिसंस्कारः स्मृत्यर्थसारे—

(१)संन्यसेद् ब्रह्मचर्याद्वा संन्यसेच्च गृहादपि ।
वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः ॥
आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं च संन्यास आतुराणां विधीयते ॥
उत्पन्ने सङ्कटे घोरे चौरव्याघ्रादिगोचरे ।
भयभीतस्य संन्यासमङ्गिरा मनुरब्रवीत् ॥
"यद्यातुरः स्यान्मनसा वाचा वा संन्यसेद्द्विजः ॥"

इति जाबालश्रुतिः ।

आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत् ॥
संन्यस्तोऽहमिति ब्रूयात्सवनेषु त्रिषु क्रमात् ।
त्रिवारं च त्रिलोकात्मा शुभाशुभसुधाद्रवे ॥
यत्किंचिद्बाधकं कर्म कृतमज्ञानतो मया ।
प्रमादालस्यदोषाद्यत्तत्संत्यक्तवानहम् ॥
एवं संत्यज्य भूतेभ्यो दद्यादभयदक्षिणाम् ।
पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः ॥
करिष्ये प्राणिनां हिंसां प्राणिनः सन्तु निर्भयाः ॥

इत्यातुरस्य स्वशक्त्याऽवस्थानुरूपमङ्गलभूतप्रैषोच्चारणादियथाशास्त्रं मनसा वाचा वा कुर्वतस्तावतैव कृच्छ्रचान्द्रायणनान्दीश्राद्धनखकृन्तनादीनि कृत्वा संन्यासपूर्तिरिति प्रतीयते । आङ्गिराः—

षष्टिः कुलान्यतीतानि षष्टीनामधिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥

---

( १ ) कंसान्तर्गतो भागो ग० पुस्तकं विहायान्यपुस्तकेषु नास्ति ।

विष्णुः—

एकरात्रोषितस्यापि यतेर्या गतिरुच्यते ।
न सा शक्या गृहस्थेन आतुरोऽपि च संन्यसेत् ॥
संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि ।
न तत्क्रतुशतैः पुण्यं प्राप्तुं शक्नोति मानवः ॥

मनुः—

यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।
तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ॥

अथ श्रौतातुरस्य विलम्बितस्य—

प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूजयेत् ॥ इति ।

अत्र मात्रत्वोपसम्भवादङ्गकलापाध्यापकत्वेनाप्युपपत्तौ कर्तुर्यागत्यागकलापव्याघ्रुत्तस्यैकत्वानुपपत्तेः कृच्छ्रनान्दीश्राद्धविरजाहोमादिकर्तुमशक्तस्यातुरस्य विद्यमानाग्नेरिष्टदेवतायै पूर्णाहुतिं हुत्वा असौ स्वर्गाय लोकाय स्वाहेति आहवनीये दारुमयानि पात्राणि प्रज्वाल्य मृन्मयान्यप्सु प्रक्षिप्य समासिं च मरुत इत्युपस्थाय याते अग्ने इत्यनेन हस्तं प्रताप्य आत्मन्यग्निं समारोप्य सर्वप्रायश्चित्तपूर्वकं सप्तपञ्चकेशान् विसृज्य वापयित्वा यथाविधि स्नात्वा आतुरसंन्यासं कुर्यात् ॥

अथातुरसन्यासविधिः। अपां समीपे गत्वा तिथ्याः स्मरणपूर्वकं स्नानसन्ध्यावन्दनादि कृत्वा देशकालौ सङ्कीर्त्य ममाशेषदुःखनिवृत्तिनिरातिशयानन्दप्राप्तिपरमपुरुषार्थप्राप्तये च परमहंससंन्यासं करोमीति सङ्कल्पयेत् । तत्र प्रधानानि प्रैषोच्चारप्रणवोपदेशमहावाक्यानि । ततः संन्यासोचितं क्षौरं कृत्वा पूर्ववत्सप्तपञ्चकेशान् विसृज्य स्नात्वाचम्य पात्रेण तोयमादाय उपस्पृ-

अथ दक्षिणेन पाणिनाऽप्सु जुहोति । एष वोऽग्नेर्योनिर्यः प्राणं गच्छ स्वाहा इति प्रथमाहुतिः । आपो वै सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोमि स्वाहा इति द्वितीया । ततो हुतशेषम् आशुःशिशान इत्यनुवाकेनाभिमन्त्य पुत्रेषणा वित्तेषणा लोकेषणा मया त्यक्ता स्वाहेति प्रथमां पिबेत् । ॐ ॐभूर्भुवः स्वरोम् मया संन्यस्तं स्वाहेति द्वितीयां पिबेत् । अभयं सर्वभूतेभ्यो मत्तः स्वाहेति तृतीयां पिबेत् । ततोऽन्यत्तोयमञ्जलिपूर्णमादाय प्रागादिदिक्षु प्रत्येकं निनयेत् ॐभूः सावित्रीं प्रवेशयामि, ॐभुवः सावित्रीं प्रवेशयामि, ॐस्वः सावित्रीं प्रवेशयामि, ॐभूर्भुवः स्वः सावित्रीं प्रवेशयामि इति सावित्रीप्रवेशं कृत्वा अथोर्ध्वबाहुः सूर्याभिमुखो भूत्वा ॐभूः संन्यस्तं मया, ॐभुवः संन्यस्तं मया, ॐस्वः संन्यस्तं मया, ॐभूर्भुवःस्वः संन्यस्तं मयेति प्रैषोच्चारं ब्रूयात् । एवं मन्द्रमध्योच्चैस्त्रिरुक्त्वा तूष्णीं शिखां निकृत्य स्नात्वाचम्य यज्ञोपवीतमुद्धृत्याञ्जलिना गृहीत्वा भूःस्वाहेति अप्सु हुत्वा दिगम्बरो भूत्वा पुत्रेषणावित्तेषणालोकेषणातो मुक्तोऽहमिति ब्रूयात् । अत ऊर्ध्वं न पुत्रगृहं गच्छेत् । मृते च पुरुषसूक्तेन विष्णुबुद्ध्याऽभिषिञ्चति संस्कारमेव कुर्यात । एवं विरक्तस्यातुरस्य स्वस्थस्य संन्यासविहिताङ्गेषु यन्मन्त्रानुष्ठाने शक्तिर्यथाविधिस्तदनुष्ठानपूर्वकं प्रधानं प्रैषोच्चारणमात्रं मत्वा संन्यासयुक्तिरिति श्रवणात् । तदुत्तरकालमेव मृतस्योपदेशविकलस्यापि खननसंस्कारमेव कुर्यात् । जीवतश्चेच्छिखां यज्ञोपवीतं च नित्यक्रियाविधिवद्विसृज्य दण्डकाषायवस्त्रादीनि चाऽऽदाय यतिधर्मानेवानुतिष्ठेत् । सद्गुरुमन्विष्य तदुपदेशं गृ-

हीत्वा स्वधर्मनिष्ठो भवेत् । अयमर्थो विद्वत्संम्मतः प्रयोक्तव्यः । इत्यातुरसंन्यासः ) ।

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥

तथा—

कुटीचकं तु प्रदहेत्पूरयेत्तु बहूदकम् ।
हंसो जले तु निक्षेप्यः परहंसं (१)प्रपूरयेत् ॥

पालाशमूले नदीतीरेऽन्यत्र वा गन्धपुष्पालङ्कृतं शवं वाद्यघोषेण नीत्वा दण्डमात्रं व्याहृतिभिः खात्वा सप्तव्याहृतिभिस्त्रिः प्रोक्ष्य दर्भानास्तीर्य नवघटे पञ्चरत्नोदकं क्षिप्त्वा नारायणः परं ब्रह्मेत्यभिमन्त्र्य तेनैव संस्नाप्याष्टाक्षरेण वस्त्रगन्धपुष्पधूपदीपान् दत्त्वा विष्णो हव्यं रक्षस्वेति शवं गर्ते निधाय "इदं विष्णुः" इति दक्षिणहस्ते दण्डं "यदस्य पारे" इति सव्ये शिक्यं "येन देवाः पवित्रेण" इति मुखे जलपवित्रं सावित्र्योदरे (२)भिक्षापात्रं "भूमिः श्वभ्रे" इति गुह्ये कमण्डलुं निधाय "चित्तिः स्रुक्" इति दशहोत्राभिर्मन्त्रयेदिति विश्वादर्शटीकायां स्मृत्यर्थसारे च । बृहच्छौनकस्तु—

यतिं पुरुषसूक्तेन स्नापयित्वाऽवटं ततः ।
प्रणवेनाष्टवारं तं प्रोक्षयेदथ सर्वतः ॥
विष्णो हव्यं रक्षस्वेति यजुषा प्रणवेन च ।
गर्ते प्रेतं विनिक्षिप्य चेदं विष्णुर्विचक्रमे ॥
इति मन्त्रेण दण्डं तु दद्याद्दक्षिणहस्तके ।
मूर्धानं भूर्भुवः स्वश्चेत्युक्त्वा शङ्खेन भेदयेत् ॥
गर्तं पुरुषसूक्तेन लवणेन प्रपूरयेत् ।
सृगालश्वादिरक्षार्थं सम्यग्गर्तं प्रपूरयेत् ॥ इति ।

---

(१) 'प्रपूजयेत्' क० छ० । (२) 'भिक्षा' नास्ति ग० ।

कुटीचकस्य तु दाहः कार्यः । यथा सर्वं प्रागवत्कृत्वाऽग्निं प्रज्वाल्य साग्नेर्दक्षिणकरे उपावरोहेत्यवरोह्य निर्मथ्य वा गर्ते चितिं कृत्वा "अग्निनाग्निः समिध्यते" इत्यग्निं दत्त्वा सावित्र्या प्रणवेन वा दहेत् । ततोऽष्टशतं प्रणवं नारायणः परं ब्रह्मेति जप्त्वा सशिरःप्रणवव्याहृत्या गायत्र्या तद्भस्मास्थीनि तीर्थे क्षिप्त्वा स्नानाच्छुचिः । नास्यान्यदौर्ध्वदेहिकम्,

त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ।

इति उशनःस्मृतेः । एकादशेऽह्नि पार्वणं तदपि त्रिदण्डिनः । हंसपरमहंसादीनां पार्वणादिकमपि न कार्यम्, इति शूलपाणिः । श्राद्धचिन्तामणौ दत्तात्रेयः—

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ।
न कुर्याद्वार्षिकादन्यद्ब्रह्मीभूताय भिक्षवे ॥

प्रेतक्रियैकोद्दिष्टनिषेधे सिद्धे पुनस्तद्ग्रहणमाब्दिकपरम् । तेन तत्पार्वणमेव । त्रिदण्डिनां द्वादशे नारायणबलिः । तद्विधिरन्यश्च विशेषः प्रागुक्त इत्यलं बहुना ॥

एवं निरूपितमिदं गहनं तु धर्म-
तत्त्वं विचार्य वचनैश्च नयैश्च सम्यक् ।
तद्दोषदृष्टिमपहाय विवेचनीयं
विद्वद्भिरित्यविरतं प्रणतोऽस्मि तेषु ॥ १ ॥
मया सद्वाऽसद्वा यदिह गदितं मन्दमतिना
किमेतच्छक्यं वाऽऽध्यवसितुमपि स्वल्पमतिना ।
तदेवं यत्किंचिद्गदितमिह विख्यातमहिमा
प्रतापोऽयं सर्वो विकसति तु पित्रोश्चरणयोः ॥ २ ॥
यो भाट्टतन्त्रगणनार्णवकर्णधारः
शास्त्रान्तरेषु निखिलेष्वपि मर्मभेत्ता ।

योऽत्र श्रमः किल कृतः कमलाकरेण
प्रीतोऽमुनाऽस्तु सुकृती बुधरामकृष्णः ॥ ३ ॥
श्रीभट्टरामेश्वरसूरिसूनुश्रीभट्टनारायणसूरिसुनोः ।
श्रीरामकृष्णस्य सुतः कृतीमं व्यधान्निबन्धं कमलाकराख्यः ॥ ४ ॥

नानानिर्णयवक्त्रान्निणर्यसिन्धुः प्रोच्यतां विबुधाः ।
निर्णयसरोजवक्त्रान्निर्णयकमलाकरोऽप्यस्तु ॥ ५ ॥
वसुऋतुऋतुभूमिते १६६८ गतेऽब्दे
नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽयं
रघुपतिपादसरोरुहेऽर्पितश्च ॥ ६ ॥
जगति सकलविद्यासिन्धुमुष्टिंधयानां
परभणितिपरीक्षा युज्यते सज्जनानाम् ।
तदिह मम निबन्धे दूषणं भूषणं वा
यदि भवति विदग्धैस्तद्ध्यवश्यं विमृश्यम् ॥ ७ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीमद्रामेश्वरभट्टसूरिसूनुनारायणभट्टसुतविद्वन्मुकुटहीराङ्कुरश्रीरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृते निर्णयसिन्धौ तृतीयः परिच्छेदः ॥

इस कार्यालय द्वारा इस सूचीपत्र के अलावा ४ संस्कृत ग्रन्थमालायें यथा "चौखम्बासंस्कृतसीरिज़" "काशीसंस्कृतसीरिज़" "बनारससंस्कृतसीरिज़" तथा "हरिदाससंस्कृतसीरिज़" ग्रन्थमालायें भी निकलती हैं, सूचीपत्र पृथक् मंगवाकर देखने की कृपा करें। इन सब सूचीपत्रों में छपे ग्रन्थों के अलावा भारतवर्ष के सभी प्रकाशकों के प्रकाशित ग्रन्थ भी विक्रयार्थ प्रस्तुत रहते हैं, इसके अलावा इस प्रेस द्वारा सर्व प्रकार की संस्कृत, हिन्दी, अंग्रेजी की सुन्दर छपाई होती है, परीक्षा प्रार्थनीय है।

October 1920.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 274.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः।

कृष्णंभट्टकृतव्याख्यासहितः।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं०
व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा
तदीयगुरुवर पं० पर्वतीयनित्यानन्दपन्त-
प्रदर्शितरीतिमनुसृत्य संशोधितो
टिप्पण्या परिष्कृतश्च।

NIRNAYA SINDHU;

of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Uyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS IV-४

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

AGENTS: PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,
at the Vidya Vilas Press, Benares.*

1920

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥

सुवर्णाऽङ्कितभव्याभशातपत्त्रपरिष्कृता ॥ १ ॥

चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥

रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२७४

पञ्चगव्यं पञ्चरत्नं पञ्चत्वक् पञ्चपल्लवम् ।
रोचनं पद्मकं शङ्खं कुङ्कुमं रक्तचन्दनम् ॥
शुक्तिस्फटिकतीर्थाम्बुसितसर्षपगुग्गुलान् ।
मधुकं देवदारुं च विष्णुक्रान्तां शतावरीम् ॥
बलां च सहदेवीं च निशाद्वितयमेव च ।
गजदन्तं कुङ्कुमं च तथैवोशीरचन्दनम् ॥
एतत्सर्वं विनिक्षिप्य कुम्भेष्वावाहयेत्सुरान् ।
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥
आयान्तु यजमानस्य दुरितक्षयकारकाः ।
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ॥
सहस्रनयनः शक्रो ग्रहपीडां व्यपोहतु ।
मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः ॥
चन्द्रोपरागसम्भूतामग्निः पीडां व्यपोहतु ।
यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः ॥
यमश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ।
रक्षोगणाधिपः साक्षान्नीलाञ्जनसमप्रभः ॥
खड्गहस्तोऽतिभीमश्च ग्रहपीडां व्यपोहतु ।
नागपाशधरो देवः सदा मकरवाहनः ॥
स जलाधिपतिर्देवो ग्रहपीडां व्यपोहतु ।
प्राणरूपो हि लोकानां सदा कृष्णमृगप्रियः ॥
वायुश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ।
योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः ॥
चन्द्रोपरागकलुषं धनदोऽत्र व्यपोहतु ।
योऽसाविन्दुधरो देवः पिनाकी वृषवाहनः ॥
चन्द्रोपरागपापानि स नाशयतु शंकरः ।
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥
ब्रह्मविष्ण्वर्करुद्राश्च दहन्तु मम पातकम् ।

एवमावाहयेद्देवान्मन्त्रैरेभिश्च वारुणैः ॥
एतानेव तथा मन्त्रान्स्वर्णपट्टे विलेखयेत् ।
ताम्रपट्टेऽथ वाऽऽलिख्य नववस्त्रे तथैव च ॥
मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः ।
कलशान् द्रव्यसंयुक्तान्नानारूपसमन्वितान् ॥
गृहीत्वा स्नापयेद् गृहं भद्रपीठोपरि स्थितम् ।
पूर्वैरेव तु मन्त्रैश्च यजमानं द्विजोत्तमाः ॥
अभिषेकं ततः कुर्यान्मन्त्रैर्वारुणसूक्तकैः ।
आचार्यमर्चयेत्पश्चात्स्वर्णपट्टं निवेदयेत् ॥
आचार्यदक्षिणां दद्याद्गोदानं च स्वशक्तितः ।
होमं वाऽपि प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा ॥
दानं च शक्तितो दद्याद्यदीच्छेदात्मनो हितम् ।
सूर्यग्रहे सूर्यनामयुक्तान्मन्त्रांश्च कीर्तयेत् ॥
अनेन विधिना यस्तु ग्रहणे स्नानमाचरेत् ।
न तस्य ग्रहणे दोषः कदाचिदपि जायते ॥

इति ग्रहणशान्तिः ॥

भार्गवार्चनदीपिकायां ब्रह्मसिद्धान्ते—

**सर्वैः पटस्थितं वीक्ष्यं खस्थं तैलाम्बुदर्पणैः ।**
**ग्रहणं गुर्विणी जातु न पश्येत पटं विना ॥**

तथा मङ्गलकृत्येषु विधिविशेषो हेमाद्रौ—

त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥

प्रकारान्तरं तत्रैवोक्तम्—

द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः ॥

इदं च पूर्णग्रासे । *त्र्यहं खण्डग्रहे तयोः’ इति त-

---

*त्र्यहमिति। तदुक्तं दीपिकायां—“खण्डग्रहे त्वेतयोः प्राक् प-

त्रैवोक्तेः । इदं च *ग्रस्तास्ते त्रिदिनं पूर्वम्' इति नारदेन ग्रस्तास्ते विशेषोक्तेर्ग्रस्तास्तभिन्नग्रहणपरम् । ज्योतिर्निबन्धे च्यवनः—

ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् ।
यावच्च रविणा भुक्त्वा मुक्तं भं दग्धकाष्ठवत् ॥

अन्यानि चाग्नेयादिमण्डलानि तत्फलं वर्णविकारादिफलं च दैवज्ञेभ्यो ज्ञेयम् । पुरश्चरणचन्द्रिकायाम्—

*चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः ।
*स्पर्शादिमोक्षपर्यन्तं जपेन्मन्त्रं समाहितः ॥

---

श्चाद्य दिनं तथा ग्रहणादिनं निन्द्यम्'' इति *ग्रस्तास्ते इति । 'ग्रस्तोदये तूत्तरं त्रिदिनम्' इति केचित् । आग्नेयादीनि=आग्नेयवारुणवायव्यैन्द्राणि । अत्राथर्ववेदोक्ताः शान्तयो राजभिः कारणीयाः ।

आग्नेयीं कारयेच्छान्तिं शान्तिं कुर्याच्च वारुणीम् ।
वायवीं च तथा कुर्यान्माहेन्द्रीं तत्र कारयेत् ॥

इति कात्यायनोक्तेः । एवं राजभिस्तदितरैश्च नाडीदोपवारणाय स्नानादि कार्यम् ।

ग्रहपरिपीडितनाडीनक्षत्रदोषशमनाय ।
सह शतपुष्पैः स्नायात्फलिनीचन्दनोशीरैः ॥
ताम्रपात्रं तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा ।
भास्करग्रहणे दद्यान्नाडीदोषोपशान्तये ॥
घृतकुम्भोपरि निहितं शङ्खं नवनीतपूरितं दद्यात् ।
नाड्यादिदोषशान्त्यै द्विजाय दोषाकरग्रहणे ॥

इत्यादिवाक्यात् । *चन्द्रसूर्योपरागे चेति ।

यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः ।

इति पाठान्तरात् पूर्वोपवासानन्तरं नाभिमात्रोदके स्थितः इत्यनुवर्तते । *स्पर्शादीनि । अतश्च ग्रस्तोदये ग्रस्तास्ते च न पुरश्चरणम् ।

जपाद्दशांशतो होमस्तथा होमात्तु*तर्पणम् ।
तर्पणस्य दशांशेन मार्जनं कथितं किल ॥
तत्रैव देवतारूपं ध्यात्वात्मानं प्रपूज्य च ।
नमोन्तं *मन्त्रमुच्चार्य तदन्ते देवताभिधाम् ॥
द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु ।
तोयैरञ्जलिना शुद्धैरभिषिञ्चेत्स्वमूर्धनि ॥
मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् ।
जपोऽर्चापूर्वको होमस्तर्पणं चाभिषेचनम् ॥
भूदेवपूजनं पञ्चप्रकारोक्ता पुरस्क्रिया: ॥

तथा—

होमाशक्तौ जपं कुर्याद्धोमसंख्या*चतुर्गुणम् ।
एवं कृते तु मन्त्रस्य जायते सिद्धिरुत्तमा ॥

ग्रहणप्रसङ्गात्कुरुक्षेत्रप्रतिग्रहे प्रायश्चित्तमुच्यते ।
तत्रारुणस्मृतौ—

---

काम्यपुरश्चरणेन च नैमित्तिकस्य बाधः वैश्यकर्तृकप्रयोगे साप्तदश्यस्य काम्यैकविंशतिसंख्यया बाधवत् । अतः स्नानदानादि न कार्यमिति केचित् । संख्याकार्यं सामिधेनीपरिच्छेदस्तस्य संख्यान्तरेण सिद्धेर्युक्तस्तत्र बाधः, न त्वत्र । काम्येन नैमित्तिकस्नानादिकार्यस्य प्रत्यवायपरिहारस्यासिद्धेः । अतः पुरश्चरणोत्तरमतिक्रान्तं नैमित्तिकं कार्यमित्याहुः । वस्तुतस्तु तदैव भार्यादिप्रतिनिधिनैव कार्यम्, एकभक्तनक्तादिवत् गौणकालविध्यभावात् 'यावद्दर्शनगोचरः'' इत्युक्तेश्चातिक्रान्तस्य दुष्करत्वादिति ।
*तर्पणमिति । तत्प्रकारश्च—

मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं *पश्चात्तर्पयामि नमोन्तक ॥

इति बोध्यः । *मन्त्रं=मूलमन्त्रम् । *चतुर्गुणमिति विप्रपरम् ।

प्रतिग्राही कुरुक्षेत्रे न भूयः पुरुषो भवेत् ।
तथाऽपि मनसः शुद्ध्यै प्रायश्चित्तं समाचरेत् ॥
तप्तकृच्छ्रद्वयं कुर्यादैन्दवेन समन्वितम् ।
सत्रेण वा यजेनाथ जपेद्वा लक्षसप्तकम् ॥
वापीकूपतडागादिखननैर्विसृजेद्धनम् ॥ इति ।

*एतच्च—

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुद्ध्यन्ति दानेन तपसैव च ॥

इति मनूक्तेरुत्सर्गोत्तरं ज्ञेयमिति दिक् । ग्रहणान्तरितस्य पूर्वसंकल्पितद्रव्यस्य द्वैगुण्यं भवतीति शिष्टाः । पठन्ति च ब्रह्मवैवर्ते—

---

अन्येषां तु—

षड्गुणं चाष्टगुणितं यथासंख्यं द्विजातयः ।
तेषां स्त्रीणां तु विज्ञेयस्तेषामेव समो जपः ॥
यं वर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्तितः ।

इत्यपि द्रष्टव्यम् ।

यद्यदङ्गं विहीयेत तस्य स्याद् द्विगुणो जपः

इति मन्त्रशास्त्रं तु अशक्तपरम् । तप्तकृच्छ्रं=तत्प्रत्याम्नायः प्राजापत्यत्रयम् । ऐन्दवं=चान्द्रायणं, प्राजापत्याष्टकम् ।

यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनम् ।
प्राजापत्येन कृच्छ्रेण शोधयेत्तान्न संशयः ॥

इति वचनात् । तदुभयोत्तरं सत्रं कार्यम्, अथ वा तदुभयोत्तरं सप्तलक्षगायत्रीजपः ।

प्रजप्य भोजयेद्विप्रान् शतं साग्रमतन्द्रितः ।

इत्युत्तरार्द्धम् । वाप्याद्यकरणे तु विप्रेभ्यो देयमित्याह—*एतच्चेति । ग्रहणभोजनेऽप्येतदेव प्रायश्चित्तम् "न भूयः पुरुषो भ-

दातव्यमिति नो कार्यं वक्तव्यं कुत्रचित्क्वचित् ।
अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत् ॥
दशोत्तरं पर्वसु स्याच्छतं चन्द्रग्रहे भवेत् ।
सूर्यग्रहे सहस्रं तन्मरणेऽनन्तकं स्मृतम् ॥ इति ।

अत्र मूलं चिन्त्यम् ॥ अत्र केचिद्गौडतुल्या आहुः—"ग्रहणस्य निमित्तत्वेन तन्निश्चयस्य प्रयोजकत्वात् ज्योतिःशास्त्रादिना जातस्य ज्ञानस्य निमित्तत्वे प्राप्तेऽपि-

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे ॥

इति जाबाल्यादिवचनेषु *दृशिप्रयोगाच्चाक्षुषज्ञानस्यैवोपसंहारन्यायेन निमित्तत्वम् । अन्यथा दृशौ लक्षणा स्यात् । *तेन मेघाच्छादनेऽन्धादीनां जन्मसप्ताष्टेत्यादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकारः" इति । कल्पतरुरप्याह—'दर्शनशब्देन चाक्षुषज्ञानं गृह्यते, न ज्ञानमात्रम् । अज्ञातस्य निमित्तत्वासंभवान्निमित्तत्वमहिम्नैव ज्ञानलाभेन दर्शनपदवैयर्थ्यापत्तेः । तेन चाक्षुषधीयोग्यः कालः पुण्यः । योग्यत्वं च प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यम् । *तेन मेघच्छन्ने योग्यताऽभावान्न स्नानादि' इति । निर्णयामृतेऽप्येवम् । तदेतत्तुच्छम् । यदि चाक्षुषज्ञानं निमित्तं स्यात्तदा

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥

इति वाक्यं व्यर्थं स्यात् । चाक्षुषज्ञानाभावेन प्राप्त्य-

---

वेत्"इत्युक्तेः । *दृशीति । राहुदर्शन इत्यस्य कृदभिहितन्यायेन दृश्यमाने राहावित्यर्थः । *तेनेति । "दृष्ट्वा स्नायात्" "मुक्तिं दृष्ट्वा तु भुञ्जीत"इत्यादौ च स्नानादिकर्तृगतस्यैव दर्शनस्य धातुसम्बन्धाधिकारविहितक्त्वाप्रत्ययाद्विशेषणत्वप्रतीतेः स्नानादावप्य-

भावात् । तत्पूर्वकत्वाच्च निषेधस्य । न चेदं* ग्रस्तास्तपरम् । रविचन्द्रयोरस्तानन्तरं रात्रिदिवाग्रहणत्वादिति वाच्यम् । तत्रपदस्य ग्रहपरत्वेऽधिकरणत्वायोगान्निमित्तपरत्वे च तद्ग्रहनिमित्तकस्नानदानादेरस्तात्प्रागप्यभावापत्तेः । अथ तत्रेति रात्रिदिने उच्येते *सा वैश्वदेवीतिवद्गुणभूते अपि । तन्न । *तादृशमन्त्रलिङ्गाभावात् । तयोर्निमित्तत्वेऽधिकरणत्वे वाऽन्यप्रयुक्तस्नानाद्यभावापत्तेश्च । *किं च

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इति मनुवचनं बाध्येत*, 'दृष्टोऽरिष्टप्रदो राहुः' इत्यादि च । न चात्र विहिते दर्शने निषेधाप्रवृत्तिवत्पर्युदसनीयताऽपि न युक्तेति वाच्यम् । दर्शनस्य निमित्तत्वानुवादेन *विधेयत्वाभावात् । एतच्चाग्रे वक्ष्यामः ।

---

न्वयः । अन्यथा दर्शनापगमादौ स्नानापत्तेरिति भावः । दर्शनोपधाननिवेशे एकस्यापि कर्मणस्तत्काले कर्तुमशक्यत्वाद्योग्यतानिवेशः । *इदमिति । तावताऽपि तद्वैयर्थ्यपरिहारात् । *सेति । "तप्ते पयसि दध्यानयति सा वैश्वदेवी" इति श्रुतौ गुणीभूतं पयस्तच्छब्दार्थः । *तादृशेति । वैश्वदेवीशब्दार्थान्वयेन मान्त्रवर्णिकदेवतासंबन्धिनि यागे विनियोगलाभात्पयोलाभः, न त्विह तथा किञ्चिदस्तीत्यर्थः । ननु अन्यनिमित्तकस्नानादि भविष्यति तन्निमित्तकन्यायादित्यत आह—*किं चेति । *बाध्येतेति । उपरक्तेक्षणस्यासिद्धेः । *विधेयत्वेति । येन "मा हिंस्यात्" इत्यस्याग्नीषोमीयादिविधिनेव प्रकृते दर्शनविधिना निषेधस्य रागप्राप्तगोचरत्वं स्यात्तदेव तु नेत्यर्थः । ननु—

एकरात्रमुपोष्यैव राहुं दृष्ट्वाऽक्षयं नरः ।
पुण्यमाप्नोति कृत्वा च स्नानश्राद्धे विधानतः ॥

*तत्त्वे वा दर्शनस्य विधौ तत्र स्नानविधौ च *विरुद्धत्रिकद्वयापत्तेः। अस्तु *सकृद्दर्शनविधानेन संकोच इति चेन्न। 'मुक्तिं दृष्ट्वा ततः स्नायात्' इति मुक्तिस्नानेऽपि चाक्षुषज्ञानस्य निमित्तत्वापत्तेः। अस्तु किं नश्छिन्नमिति चेत्। न, ग्रस्तास्ते

तयोः परेद्युरुदये दृष्ट्वाऽभ्यवहरेच्छुचिः।

इति दर्शनोत्तरं भोजनविधानादन्धस्य पूर्ववेधकाल इव यावद्दर्शनं भोजननिषेधापत्तिः। मध्येऽन्धीभूतस्य सुतरां यावच्चक्षुःप्राप्त्युपवासप्रसङ्गश्च। अथान्नलोलुपतया तत्र ज्ञानमात्रं विवक्ष्यते। तत्तत्पूर्वमपि निर्लज्जेन

---

इति वाक्येन उपवासदर्शनोभयपूर्वकस्नानश्राद्धे विधाय तत्राक्षयपुण्यरूपफलसंबन्धो बोधनीयः, न तूपवासदर्शनयोस्तादृशफलसंबन्धः। बहुषु वचनेषु स्नानश्राद्धयोरेव फलसंबन्धश्रवणात्। दर्शनोपवासयोस्त्वफलत्वादङ्गतया विधिरस्त्वित आह—*तत्त्वे वेति। *विरुद्धेति दर्शनस्य विधौ तत्र स्नानादिविधौ च दर्शनस्य उपादेयत्वविधेयत्वगुणत्वानि त्रीणि उद्देश्यत्वानुवादत्वमुख्यत्वानि त्रीणि इति विरुद्धमर्थः। यथा "वाजपेयेन स्वाराज्यकामो यजेत"इत्यत्र वाजपेयेन यागं कुर्यात यागेन स्वाराज्यं संपादयेदित्यर्थेनाशङ्क्य यजेरुपादेयत्वविधेयत्वगुणत्वानि उद्देश्यत्वानुवादत्वमुख्यत्वानीति विरुद्धत्रिकद्वयमापादितम्। तदुक्तं माधवेन—

उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः।

उद्देश्यानूक्तिमुख्यत्वं त्रिकं तस्य गुणं प्रति॥ इति।

*सकृदिति। सर्वनैमित्तिकार्थं तन्त्रेण सकृद्दर्शनं विधेयम्। तत्र न विरुद्धत्रिकद्वयम्, अनुवादत्वानुपगमात्, "दृष्टोऽरिष्टप्रद"इति "नोपरक्तम्"इत्यादि च रागप्रात्यक्षणनिषेधपरम्। न च नोपरक्तमित्येतदस्तु तथा, "अरिष्टप्रदः" इति तु वैधविषयमिति वा-

स्वीक्रियताम्* । एतेन यत्केनचिदुक्तं स्पर्शस्नानं मुक्तिस्नानं च यस्य दर्शनं तेनैव कार्यं नान्येन क्त्वाप्रत्ययेन समानकर्तृकत्वावगतेरिति, तन्निरस्तम् । का तर्हि

---

स्यम् । चन्द्रांशे सार्थक्यात् । अङ्गन्मते च उपरागनिमित्ताशौचस्यापि दर्शनोत्तरकालत्वेन "नाशुची राहुतारकाः" इति निषेधोऽपि प्रवर्त्तेत, ऐहिकानिष्टविशेषार्थो वा स्यात् । यत्तु—"जन्मादिस्थोपरागकान्यः 'दृष्ट्वा स्नायात्' इतिदर्शनविधिशेषोऽयं विशेषतःपुरुषगतानिष्टविशेषसङ्कीर्त्तनरूपानिन्दोन्नीतः पर्युदासः, तादृशोपरागकाणां च वैधदर्शनाभावान्न सर्वथा स्नानादीति, तत्तुच्छम् । तेषामपि प्रमादादितः स्नानजन्याभ्युदयलाभेन वाऽनिष्टमङ्गीकृत्यापि दर्शने इष्टं स्नानादि न स्यात् । पर्युदस्तकर्तृकदर्शनस्यावैधत्वेनाधिकारासम्पादकत्वात्, अवैधाध्ययनवत् । किंच वैधदर्शनशेषपर्युदासातिक्रमे तत्कार्यासम्पत्तिमात्रं न तु द्रष्टॄणां कश्चिदनर्थ इति शान्तिविशेषविध्यनुपपत्तेश्च । न च नायं शान्तिविधिः पर्युदासातिक्रमविषयः, किं तु यः सामान्यरूपो रागप्राप्तदर्शननिषेधस्तदतिक्रमविषयः । यथा ऋतुगमननियमविधौ पर्ववर्जमिति पर्वपर्युदासेऽपि रागप्राप्तगमनसामान्यगोचरपर्वनिषेधातिक्रमप्रायश्चित्तविधिस्तद्वदिति वाच्यम् । सामान्यतो दर्शननिषेधस्येहासन्निधानात् । तस्मादयं राशिविशेषगतोपरागे रागप्राप्तदर्शननिषेध एव, अस्तु वा पर्युदासः । ऋतुगताद्यनिशाचतुष्टयगमनादिषु नञ्युक्तस्नातकव्रतातिक्रमे च शतशः पर्युदासविषयेषु च प्रायश्चित्तविधिदर्शनाद्वर्जनप्रतीत्यविशेषाच्च तदतिक्रमेऽपि प्रायश्चित्तमपेक्षणीयमेव । तत्र निषेधवत्क्रत्वर्थपर्युदासातिक्रमे क्रतुवैगुण्यपरिहारार्थत्वेन क्रत्वर्थं, पुरुषार्थतदतिक्रमे च पुरुषगतानिष्टपरिहारार्थत्वेन पुरुषार्थम् । तस्माद्राशिविशेषोपरागवतामपि प्रमादादिना दर्शने स्नानादि भवत्येवेति भावः ।

*स्वीक्रियतामिति । तथा च 'यावद्दर्शनगोचरे' इति वाक्येऽन्धा-

जपाद्दशांशतो होमस्तथा होमात्तु*तर्पणम् ।
तर्पणस्य दशांशेन मार्जनं कथितं किल ॥
तत्रैव देवतारूपं ध्यात्वात्मानं प्रपूज्य च ।
नमोन्तं *मन्त्रमुच्चार्य तदन्ते देवताभिधाम् ॥
द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु ।
तोयैरञ्जलिना शुद्धैरभिषिञ्चेत्स्वमूर्धनि ॥
मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् ।
जपोऽर्चापूर्वको होमस्तर्पणं चाभिषेचनम् ॥
भूदेवपूजनं पञ्चप्रकारोक्ता पुरस्क्रिया: ॥

तथा—

होमाशक्तौ जपं कुर्याद्धोमसंख्या*चतुर्गुणम् ।
एवं कृते तु मन्त्रस्य जायते सिद्धिरुत्तमा ॥

ग्रहणप्रसङ्गात्कुरुक्षेत्रमतिग्रहे प्रायश्चित्तमुच्यते तत्रारुणस्मृतौ—

---

काम्यपुरश्चरणेन च नैमित्तिकस्य बाधः वैश्यकर्तृकप्रयोगे साप्तदश्यस्य काम्यैकविंशतिसंख्यया बाधवत् । अतः स्नानदानादि न कार्यमिति कश्चित् । संख्याकार्यं सामिधेनीपरिच्छेदस्तस्य संख्योत्तरेण सिद्धेर्युक्तस्तत्र बाधः, न त्वत्र । काम्येन नैमित्तिकस्नानादिकार्यस्य प्रत्यवायपरिहारस्यासिद्धेः । अतः पुरश्चरणोत्तरमतिक्रान्तं नैमित्तिकं कार्यमित्याहुः । वस्तुतस्तु तदैव भार्यादिप्रतिनिधिनैव कार्यम्, एकभक्तनक्तादिवत् गौणकालविध्यभावात् 'यावद्दर्शनगोचरः'' इत्युक्तेश्चातिक्रान्तस्य दुष्करत्वादिति ।
*तर्पणमिति । तत्प्रकारश्च—

मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं *पश्चात्तर्पयामि नमोन्तक ॥

इति बोध्यः । *मन्त्रं=मूलमन्त्रम् । *चतुर्गुणमिति विप्रपरम् ।

प्रतिग्राही कुरुक्षेत्रे न भूयः पुरुषो भवेत् ।
तथाऽपि मनसः शुद्ध्यै प्रायश्चित्तं समाचरेत् ॥
तप्तकृच्छ्रद्वयं कुर्यादैन्दवेन समन्वितम् ।
सत्रेण वा यजेनाथ जपेद्वा लक्षसप्तकम् ॥
वापीकूपतडागादिखननैर्विसृजेद्धनम् ॥ इति ।

*एतच्च—

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुद्ध्यन्ति दानेन तपसैव च ॥

इति मनूक्तेरुत्सर्गोत्तरं ज्ञेयमिति दिक् । ग्रहणान्तरितस्य पूर्वसंकल्पितद्रव्यस्य द्वैगुण्यं भवतीति शिष्टाः । पठन्ति च ब्रह्मवैवर्ते—

---

अन्येषां तु—

षड्गुणं चाष्टगुणितं यथासंख्यं द्विजातयः ।
तेषां स्त्रीणां तु विज्ञेयस्तेषामेव समो जपः ॥
यं वर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्तितः ।

इत्यपि द्रष्टव्यम् ।

यद्यदङ्गं विहीयेत तस्य स्याद् द्विगुणो जपः ।

इति मन्त्रशास्त्रं तु अशक्तपरम् । तप्तकृच्छ्रं=तत्प्रत्याम्नायः प्राजापत्यत्रयम् । ऐन्दवं=चान्द्रायणं, प्राजापत्याष्टकम् ।

यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनम् ।
प्राजापत्येन कृच्छ्रेण शोधयेन्नात्र संशयः ॥

इति वचनात् । तदुभयोत्तरं सत्रं कार्यम्, अथ वा तदुभयोत्तरं सप्तलक्षगायत्रीजपः ।

प्रजप्य भोजयेद्विप्रान् शतं साग्रमतन्द्रितः ।

इत्युत्तरार्द्धम् । वाप्याद्यकरणे तु विप्रेभ्यो देयमित्याह—*एतच्चेति । ग्रहणभोजनेऽप्येतदेव प्रायश्चित्तम् "न भूयः पुरुषो भ-

दातव्यमिति नो कार्यं वक्तव्यं कुत्रचित्क्वचित् ।
अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत् ॥
दशोत्तरं पर्वसु स्याच्छतं चन्द्रग्रहे भवेत् ।
सूर्यग्रहे सहस्रं तन्मरणेऽनन्तकं स्मृतम् ॥ इति ।

अत्र मूलं चिन्त्यम् ॥ अत्र केचिद्गौडतुल्या आहुः–"ग्रहणस्य निमित्तत्वेन तन्निश्चयस्य प्रयोजकत्वात् ज्योतिःशास्त्रादिना जातस्य ज्ञानस्य निमित्तत्वे प्राप्तेऽपि–

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे ॥

इति जाबाल्यादिवचनेषु *दृशिप्रयोगाच्चाक्षुषज्ञानस्यैवोपसंहारन्यायेन निमित्तत्वम् । अन्यथा दृशौ लक्षणा स्यात् । *तेन मेघाच्छादनेऽन्धादीनां जन्मससाष्टेत्यादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकारः" इति । कल्पतरुरप्याह–'दर्शनशब्देन चाक्षुषज्ञानं गृह्यते, न ज्ञानमात्रम् । अज्ञातस्य निमित्तत्वासंभवान्निमित्तत्वमहिम्नैव ज्ञानलाभेन दर्शनपदवैयर्थ्यापत्तेः । तेन चाक्षुषधीयोग्यः कालः पुण्यः । योग्यत्वं च प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यम् । *तेन मेघच्छन्ने योग्यताऽभावान्न स्नानादि' इति । निर्णयामृतेऽप्येवम् । तदेतत्तुच्छम् । यदि चाक्षुषज्ञानं निमित्तं स्यात्तदा

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥

इति वाक्यं व्यर्थं स्यात् । चाक्षुषज्ञानाभावेन प्राप्त्य-

---

वेत्"इत्युक्तेः । *दृशीति । राहुदर्शन इत्यस्य कृदभिहितन्यायेन दृश्यमाने राहावित्यर्थः । *तेनेति । "दृष्ट्वा स्नायात्" "मुक्तिं दृष्ट्वा तु भुञ्जीत"इत्यादौ च स्नानादिकर्तृगतस्यैव दर्शनस्य धातुसम्बन्धाधिकारविहितक्त्वाप्रत्ययाद्विशेषणत्वप्रतीत्या स्नानादावप्य-

भावात् । तत्पूर्वकत्वाच्च निषेधस्य । न चेदं* अस्तास्तपरम् । रविचन्द्रयोरस्तानन्तरं रात्रिंदिवाग्रहणत्वादिति वाच्यम् । तत्रपदस्य ग्रहपरत्वेऽधिकरणत्वायोगान्निमित्तपरत्वे च तद्ग्रहनिमित्तकस्नानदानादेरस्तात्प्रागप्यभावापत्तेः । अथ तत्रेति रात्रिदिने उच्येते *सा वैश्वदेवीतिवद्गुणभूते अपि । तन्न । *तादृशमन्त्रलिङ्गाभावात् । तयोर्निमित्तत्वेऽधिकरणत्वे वाऽन्यप्रयुक्तस्नानाद्यभावापत्तेश्च । *किं च

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इति मनुवचनं बाध्येत*, 'दृष्टोऽरिष्टप्रदो राहुः' इत्यादि च । न चात्र विहिते दर्शने निषेधाप्रवृत्तिवत्पर्युदसनीयताऽपि न युक्तेति वाच्यम् । दर्शनस्य निमित्तत्वानुवादेन *विधेयत्वाभावात् । एतच्चाग्रे वक्ष्यामः ।

---

न्वयः । अन्यथा दर्शनापगमादौ स्नानापत्तेरिति भावः । दर्शनोपधाननिवेशे एकस्यापि कर्मणस्तत्काले कर्तुमशक्यत्वाद्योग्यतानिवेशः । *इदमिति । तावताऽपि तद्वैयर्थ्यपरिहारात् । *सेति । "तप्ते पयसि दध्यानयति सा वैश्वदेवी" इति श्रुतौ गुणीभूतं पयस्तच्छब्दार्थः । *तादृशेति । वैश्वदेवीशब्दार्थान्वयेन मान्त्रवर्णिकदेवतासंबन्धिनि यागे विनियोगलाभात्पयोलाभः, न त्विह तथा किञ्चिदस्तीत्यर्थः । ननु अन्यनिमित्तकस्नानादि भविष्यति तन्निमित्तकन्यायादित्यत आह—*किं चेति । *बाध्येतेति । उपरक्तेक्षणस्यासिद्धेः । *विधेयत्वेति । येन "मा हिंस्यात्" इत्यस्याग्नीषोमीयादिविधिनेव सङ्कुचिते दर्शनविधिना निषेधस्य रागप्राप्तगोचरत्वं स्यात्तदेव तु नेत्यर्थः । ननु—

एकरात्रमुपोष्यैव राहुं दृष्ट्वाऽक्षयं नरः ।
पुण्यमाप्नोति कृत्वा च स्नानश्राद्धे विधानतः ॥

*तत्त्वे वा दर्शनस्य विधौ तत्र स्नानविधौ च *विरुद्धत्रिकद्वयापत्तेः। अस्तु *सकृद्दर्शनविधानेन संकोच इति चेन्न। 'मुक्तिं दृष्ट्वा ततः स्नायात्' इति मुक्तिस्नानेऽपि चाक्षुषज्ञानस्य निमित्तत्वापत्तेः। अस्तु किं नश्छिन्नमिति चेत्। न, ग्रस्तास्ते

तयोः परेद्युरुदये दृष्ट्वाऽभ्यवहरेच्छुचिः।

इति दर्शनोत्तरं भोजनविधानादन्धस्य पूर्ववेधकाल इव यावद्दर्शनं भोजननिषेधापत्तिः। मध्येऽन्धीभूतस्य सुतरां यावच्चक्षुःप्राप्त्युपवासप्रसङ्गश्च। अथान्नलोलुपतया तत्र ज्ञानमात्रं विवक्ष्यते। तत्तत्पूर्वमपि निर्लज्जेन

---

इति वाक्येन उपवासदर्शनोभयपूर्वकस्नानश्राद्धे विधाय तत्राक्षयपुण्यरूपफलसंबन्धो बोधनीयः, न तूपवासदर्शनयोस्तादृशफलसंबन्धः। बहुषु वचनेषु स्नानश्राद्धयोरेव फलसंबन्धश्रवणात्। दर्शनोपवासयोस्त्वफलत्वादङ्गतया विधिरस्त्वत आह—*तत्त्वे वेति। *विरुद्धेति। दर्शनस्य विधौ तत्र स्नानादिविधौ च दर्शनस्य उपादेयत्वविधेयत्वगुणत्वानि त्रीणि उद्देश्यत्वानुवादत्वमुख्यत्वानि त्रीणि इति विरुद्धमर्थः। यथा "वाजपेयेन स्वाराज्यकामो यजेत"इत्यत्र वाजपेयेन यागं कुर्यात यागेन स्वाराज्यं संपादयेदित्यर्थमाशङ्क्य यजेरुपादेयत्वविधेयत्वगुणत्वानि उद्देश्यत्वानुवादत्वमुख्यत्वानीति विरुद्धत्रिकद्वयमापादितम्। तदुक्तं माधवेन—

उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः।
उद्देश्यानूक्तिमुख्यत्वं त्रिकं तस्य गुणं प्रति॥ इति।

*सकृदिति। सर्वनैमित्तिकार्थं तन्त्रेण सकृद्दर्शनं विधेयम्। तत्र न विरुद्धत्रिकद्वयम्, अनुवादत्वानुपगमात्, "दृष्टोऽरिष्टप्रद"इति "नोपरक्तम्"इत्यादि च रागप्राप्तेक्षणनिषेधपरम्। न च नोपरक्तमित्येतदस्तु तथा, "अरिष्टप्रदः" इति तु वैधविषयमिति वा-

स्वीक्रियताम्* । एतेन यत्केनचिदुक्तं स्पर्शस्नानं मुक्तिस्नानं च यस्य दर्शनं तेनैव कार्यं नान्येन क्त्वाप्रत्ययेन समानकर्तृकत्वावगतेरिति, तन्निरस्तम् । का तर्हि

---

स्यम् । चन्द्रांशे सार्थक्यात् । अङ्गत्वमते च उपरागनिमित्तकाशौचस्यापि दर्शनोत्तरकालत्वेन "नाशुची राहुतारकाः" इति निषेधोऽपि मत्वर्थेन, ऐहिकानिष्टविशेषार्थो वा स्यात् । यत्तु—"जन्मादिस्थोपरागकान्यः 'दृष्ट्वा स्नायात्' इतिदर्शनविधिशेषोऽयं विशेषतःपुरुषगतानिष्टविशेषप्रक्षीर्तनरूपानिन्द्योक्तितः पर्युदासः, तादृशोपरागकाणां च वैधदर्शनाभावान्न सर्वथा स्नानादीति, तत्तुच्छम् । तेषामपि प्रमादादितः स्नानजन्याभ्युदयलाभेन वाऽनिष्टमङ्गीकृत्यापि दर्शने इष्टं स्नानादि न स्यात् । पर्युदस्तकर्तृकदर्शनस्यावैधत्वेनाधिकारासम्पादकत्वात्, अवैधाध्ययनवत् । किं च वैधदर्शनशेषपर्युदासातिक्रमे तत्कार्यासिम्पत्तिमात्रं न तु द्रष्टॄणां कश्चिदनर्थ इति शान्तिविशेषविध्यनुपपत्तेश्च । न च नायं शान्तिविधिः पर्युदासातिक्रमविषयः, किं तु यः सामान्यरूपो रागप्राप्तदर्शननिषेधस्तदतिक्रमविषयः । यथा ऋतुगमननियमविधौ पर्ववर्जमिति पर्वपर्युदासेऽपि रागप्राप्तगमनसामान्यगोचरपर्वनिषेधातिक्रमप्रायश्चित्तविधिवत्तद्वदिति वाच्यम् । सामान्यतो दर्शननिषेधस्येहासन्निधानात् । तस्मादयं राशिविशेषगतोपरागे रागप्राप्तदर्शननिषेध एव, अस्तु वा पर्युदासः । ऋतुगताद्यानशाचतुष्टयगमनादिषु नञ्युक्तस्नातकव्रतातिक्रमे च शतशः पर्युदासविषयेषु च प्रायश्चित्तविधिदर्शनाद्वर्जनप्रतीत्यविशेषाच्च तदतिक्रमेऽपि प्रायश्चित्तमपेक्षणीयमेव । तत्र निषेधवत्क्रत्वर्थपर्युदासातिक्रमे क्रतुवैगुण्यपरिहारार्थत्वेन क्रत्वर्थं, पुरुषार्थतदतिक्रमे च पुरुषगतानिष्टपरिहारार्थत्वेन पुरुषार्थम् । तस्माद्राशिविशेषोपरागवतामपि प्रमादादिना दर्शने स्नानादि भवत्येवेति भावः ।

*स्वीक्रियतामिति । तथा च 'यावद्दर्शनगोचरे' इति वाक्येऽन्या-

तस्य गतिः ? । इतो *रुद्देश्यविशेषणत्वाद् ग्रहैकत्ववद्-*विवक्षयाऽर्थतः सिद्धं *ज्ञानमात्रानुवादत्वे सर्वं सुस्थम् । अङ्गुल्याद्यनादेश्यग्रहण्याद्यया वा दर्शनस्यार्थवत्त्वम् । *न चोक्तयोग्यताऽपि साध्वी, दर्शनोत्तरं मेघच्छन्ने योग्यताऽभावापत्त्या दानाद्यभावापत्तेः । *तेन तत्तद्देशावच्छेदेन ज्योतिःशास्त्रावेद्यत्वमेव योग्यता । किं च—

रजसो दर्शने नारी त्रिरात्रमशुचिर्भवेत् ।

इत्यत्राप्यन्धस्त्रीणामा*शौचाभावप्रसङ्गः ।

---

दिसाधारण्यार्थं व्यधिकरणस्यापि दर्शनस्य निमित्तावच्छेदकत्वेनान्वयाच्चन्द्रसूर्योपरागः यस्मिन् देशे यावत्कर्मपर्याप्तश्चाक्षुषज्ञानयोग्यः स तद्देशे तावत्कर्मसु निमित्तमिति निष्कर्षः । देशलाभश्च "सूर्यग्रहो यदा रात्रौ" इत्यादिद्वीपान्तरस्थपर्युदासात्, द्वीपान्तरस्थान् प्रति तयोर्द्रष्टुं योग्यत्वात् । अतिसूक्ष्मतयाऽनादेश्यं तु न निमित्तमयोग्यत्वात् ।

रात्रौ सूर्यग्रहः स्याच्चेद्दिवा चन्द्रग्रहस्तथा ।

नादेश्यमुभयं राज्ञे यत्र सूक्ष्मतमं भवेत् ॥

इति गणकैः पाठाच्च । तस्य च शास्त्रतो ज्ञानमेवानुष्ठानप्रयोजकं, तत्कालश्च तादृशः न तु संक्रान्त्यादिवत्पूर्वापरकालः । तथा च चाक्षुषज्ञानयोग्येऽल्पकालीनेऽपि ग्रहणे स्नानदानादि स्नानमेवं वा यावत्कर्तुं शक्यं तावत्कुर्यात् । वर्तमानमेव हि ग्रहणं निमित्तं न त्वतीतं भावि वेति वक्तुं यावत्पदमिति निष्कर्षः । *उद्देश्यं= ग्रहणम् । *अविवक्षया चाक्षुषत्वस्येत्यादिः । *ज्ञानमात्रेति । तदुक्तं—चाक्षुषज्ञानयोग्य इति शास्त्रतो ज्ञानमात्रेति चाऽर्थः । इदानीं प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यरूपां तद्योग्यतां दूषयति— *न चेति । स्वयं योग्यतामाह—*तेनेति ।

*आशौचाभावेति । तत्रापि रजोदर्शनस्याशौचाङ्गतापत्त्या तदङ्गासम्भवात् । यदि तु भावलक्षणसप्तमी तर्हीहापि तुल्यैव प्रास-

यत्तु वर्धमानेनोक्तम्—*ज्ञानोत्तरं ह्यधिकारो *न ज्ञानकाले । स्नानकाले *ज्ञानाभावात् । एवं *दर्शनोत्तरं मुक्तिपर्यन्तमस्त्येव योग्यतेति, तदपि *प्रतिज्ञामात्रम् । *किञ्च ग्रस्तास्ते

तयोः परेद्युरुदये दृष्ट्वाऽभ्यवहरेच्छुचिः ।

इत्यादिवाक्यवैयर्थ्यापत्तिः । चाक्षुषज्ञानान्यथानुपपत्त्यैवार्थादुदये स्नानसिद्धेः । ननु मुक्तिस्नानं शास्त्रीयदर्शनसापेक्षणत्वात् । तथा च श्रौतोऽपि विधिसम्बन्धो विहन्यते । तदा 'दृष्टे स्नायात्'इत्यत्रापि तद्विघात एव । 'दृष्ट्वा स्नायात्' इत्यादौ तु कैमुतिकन्यायेनैव, तत्र तस्य वाक्यीयत्वादिति भावः ।

ज्ञानोत्तरं=चाक्षुषज्ञानोत्तरम् । *न ज्ञानकाले=न चाक्षुषज्ञानकाले । चाक्षुषज्ञानरूपस्याङ्गस्याधिकारसम्पादकत्वादिति भावः । *ज्ञानाभावात्=ज्ञानरूपाङ्गाभावादन्धादेरधिकारः *दर्शनोत्तरमिति । योग्यतावशाज्जातस्य सकृद्दर्शनस्यैव दानादिप्रयोजकत्वोपगमादित्याशयः । *प्रतिज्ञामात्रमिति । ज्ञानमात्रस्य प्राप्तत्वाद्दर्शनं नियम्यते, न त्वपूर्वं विधीयते, अवघातवत् । तथा चान्धादीनामशक्यत्वेन तदङ्गासम्भवेऽपि यथाशक्त्युपबन्धेनैव नैमित्तिकेऽधिकारो दुर्वारः । नन्वशक्याङ्गहानेऽप्यधिकारे तत्सम्पादकाग्निविद्याद्यभावेऽपि अधिकारः स्यात् । न स्यात् । कर्मप्रयोगविध्यप्रयोज्ये हि न यथाशक्तिन्यायविषयत्वम् । यथा स्वतः सिद्धतया कर्मानुरोधेन कर्त्तुमशक्येषु देशकालकर्तृकत्वब्राह्मणत्वराजत्वादिषु यथा वा विध्यन्तरसिद्धतया तादृशेषु आधानविधिसिद्धेष्वग्निषु, अध्ययनविधिसिद्धायां विद्यायां च न ह्येतादृशो दर्शननियम इति भवति यथाशक्त्युपबन्धविषयः । तस्मादन्धादेस्तदङ्गाभावेऽपि स्नानं दुर्वारमिति भावः । एतच्च दर्शनस्य स्नानेऽङ्गत्वमुपेत्य दूषणमुक्तम् । इदानीं वस्तुतस्तस्याङ्गत्वमेव न सम्भवतीत्याह—*किञ्चेति ।

मेव ज्ञानं निमित्तं न चाक्षुषम् ।

चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः ।
राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम् ॥

इति वृद्धगौतमेन विज्ञायेति ज्ञानमात्रोक्तेः । यत्तु—

मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ।

इति तदपि ज्ञानमात्रपरम् ।

*मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते ।
आकलय्य तु तं कालं स्नात्वा भुञ्जीत वाग्यतः ॥

इति गौडनिबन्धे वचनात् । मैवम् । अज्ञानस्य *निमित्तत्वाभावेन निमित्तमाहिम्नैव ज्ञानलाभे वाक्यवैयर्थ्यात्, ग्रस्तास्तेऽपि तदापत्तेश्च । किञ्च दर्शनं पुंसो *विशेषण*मुपलक्षणं वा ? । नाद्यः । दर्शनावच्छिन्ने काले स्नानतुलादानादेर्वाभावात् दर्शनविच्छेदे कृतमपि स्नानादि न ग्रहणनिमित्तं स्यात् । नान्त्यः । 'यावद्दर्शनगोचरे' इति *यावत्पदवैयर्थ्यप्रसङ्गात् । *वृद्धग्रह-

---

दर्शनं मुक्तिस्नानाधिकारसम्पादकमिति निरस्यति—*मेघेति । तं कालमित्यस्य मुक्तिकालमित्यर्थः

यदैवास्तङ्गतश्चन्द्रो राहोराननगोचरः ।
आकलय्य तु तं कालं क्रिया कार्या विचक्षणैः ॥

इत्यादिवचनेष्वेव तं कालमित्यस्य चन्द्रोदयकालमित्यर्थः । अन्यथा 'तयोः परेऽन्युरुदये' इत्यनेन विरोधात् ।

*निमित्तत्वाभावेन=अनुष्ठानहेतुत्वरूपतत्सम्भवेन । *विशेषणं=विद्यमानं सद् व्यावर्त्तकम् । *उपलक्षणम्=अविद्यमानं सत्तादृशम् । *यावदिति । संक्रान्तौ पूर्वोत्तरकालयोः पुण्यत्वात्तद्व्यवच्छेदाय लाभार्थमिदं यावत्पदम् । उपलक्षणत्वे त्विहापि तत्कालयोः मास्तु तद्वैयर्थ्यमित्यर्थः । ननु भाविग्रहणमादाय स्नानवारणाय तदित्य-

णोत्तरमपि स्नानाद्यापत्तेश्च । ज्ञानपक्षेऽप्येष दोषस्तुल्य इति चेत् मूर्खोऽसि । यदि ज्ञानवाचकं पदं श्रूयेत, ततस्तस्यान्वयो विचार्येत । दृशिस्तु श्रूयत इति वैषम्यम् । कथं तर्हि ज्ञानं लभ्यते ? । 'संक्रान्तौ स्नायात्' इतिवद् *र्थादित्यवेहि । अश्रुतत्वादेव नोद्देश्यविशेषणविवक्षाकृतो वाक्यभेदोऽपि । *अस्तु तर्हि दृष्टं ग्रहणं निमित्तमिति चेत् । ग्रस्तास्तेऽस्तोत्तरं स्नानापत्तेः विशिष्टोद्देशे वाक्यभेदाच्च । तत्राप्येतत्तुल्यमिति चेत् 'यावद्दर्शनगोचरे' इति वचनेन *तन्निषेधात् । तत्र त्वन्यग्रह इव ग्रस्तास्तेऽपि स्यात् ।

---

आह–*दृष्टे इति।*अर्थादिति । ननु संक्रान्तौ ज्ञानस्यार्थिकत्वं युक्तं न तु 'दृष्टे राहौ'इत्यादौ, दृष्टे इति श्रवणादिति चेत् । अत्राहुः–दृष्टे इति । "यस्य च भावेन भावलक्षणम्"(पा० सू० २–३–३७)इति सूत्रेण सप्तमी । ज्ञानरूपभावलक्षणभूतराहुविषयकभावान्तरापेक्षायां तस्य निमित्तत्वेन लक्षणत्वात् । तत्स्वभावलब्धो ज्ञानरूपो भावो दर्शनेन लक्ष्यः । यथा "[illegible]स्य हविर्निरुप्तं पश्चात् चन्द्रमा अभ्युदेति"इत्यादौ निरुप्तशब्देन प्रवृत्तिमात्रम् । अप्रवृत्तस्य हविषोऽभिशब्दोक्तचन्द्रोदयलक्षणत्वायोगात् । न चैवं लक्षणा । प्रधानभूतसप्तम्यर्थान्वयानुरोधेन गुणभूते प्रातिपदिके तस्या अदोषत्वात् । प्रातिपदिकार्थानुरोधेन सप्तम्या एवार्थत्यागे तु तस्या एवासाधुतापत्तेः । वस्तुतः शास्त्रीयज्ञानं दृशेरभिधेयमेव । "पश्यार्थैश्चानालोचने" "षड् दर्शनानि"इति प्रयोगात् । तथा च क्व लक्षणाऽपि ।

इयान् परं भेदः–"संक्रान्तौ स्नायात्"इत्यादौ निमित्तमाहिम्ना "दृष्टे राहौ स्नायात्"इत्यादौ तु लक्षणमाहिम्नेति । दर्शनविशेषणतया निमित्तान्तर्भावं शङ्कते–*अस्त्विति । *तन्निषेधादिति । योग्यतामुखेन निमित्तावच्छेदकत्वस्यावेदितत्वात् ।

किञ्च दर्शनस्य विधिरनुवादो वा ?। आद्ये ग्रहणोद्देशेन दर्शनविधिरुत दर्शनविशिष्टस्नानविधिरुत स्नानोद्देशेन दर्शनविधिः ?। नाद्यः। ग्रहोद्देशेन स्नानविधाने दर्शनविधाने च वाक्यभेदात्। *एतेन द्वितीयोऽपि परास्तः। न तृतीयः। स्नानस्याप्राप्तेः दर्शनस्य निमित्तत्वेनाविधेयत्वाच्च। अन्यथा सोमवमनादौ प्रसञ्जनविधिः केन वार्येत। अथ *नानावाक्येषु क्वचिद्दर्शनविशिष्टस्नानविधिः, क्वचिच्च प्राप्तं दर्शनं निमित्तीकृत्य स्नानमात्रविधिः। तन्न। *स्नानस्य प्रधानस्य प्राप्तौ तदङ्गदर्शनप्राप्तिः, तस्यां च निमित्ते सति स्नानमित्यन्योन्याश्रयात्। एवं दर्शनविधौ सति तन्निमित्तकस्नानविधिः। सति च प्रधानस्नानविधौ तदङ्गदर्शनविधिः। एव*मधिकारे प्रयोजकत्वे च यो-

---

*एतेन=विशेषणविशेष्योभयस्मिन् विधेयत्वप्राप्त्या वाक्यभेदेन। *नानावाक्येष्विति निर्धारणसप्तमी। क्वचित् "दृष्ट्वा स्नायात्"इत्यादौ दर्शनस्य प्राप्तत्वमालम्ब्य दूषयति— *स्नानस्येति। नन्वस्तु 'दृष्ट्वा स्नायात्'इत्यादौ दर्शनविशिष्टस्नानविधिः "एतस्यैव वारवन्तीयमग्निष्टोमसाम कृत्वा"इति विशिष्टविधिवदिति चेन्न। "वारवन्तीयमग्निष्टोमसाम कृत्वा" इत्यादौ सर्वथैवाप्राप्तेस्तमकृत्वा तदुत्तरक्रियाकरणाशक्यतयैव विशिष्टविधिः, इह तु कथंचिदपि प्राप्ते लाघवाय न तद्विधिः। क्त्वो हि न विधायकत्वं, स्नात्यादेः परस्य लिङादेस्तदर्थविधान एव च व्यापृतत्वमिति विशेषात्। *अधिकार इत्यादि। स्नानाद्यधिकारिणः सिद्धस्य दर्शनाधिकारसिद्धिः तस्य स्नाद्याद्यङ्गत्वात्, अङ्गानां च प्रधानाधिकारिकत्वाद्, दर्शनाधिकारिणश्च स्नानाद्यधिकारसिद्धिः तस्य दर्शननिमित्तकत्वात्। एवं स्नानं दर्शने प्रयोजकं

ज्यम् । *क्त्वार्थपूर्वकालत्वविधौ चास्त्येव वाक्यभेदः । अन्यथा स्नानोत्तरमपि दर्शनमङ्गं स्यात् । न द्वितीयः ।

---

प्रधानत्वात्,दर्शनं च स्नाने निमित्तज्ञानत्वादित्यर्थः । ननु सन्त्वेते दर्शनस्य निमित्तान्तर्भावे पुम्प्रवृत्तिविधिप्रवृत्त्यधिकारप्रयुक्तिविरोधाः, शुद्धमेवोपरागं निमित्तीकृत्य स्नानं विधाय पश्चात्तदङ्गतया दर्शनं विधीयतां, दोषाभावात् । तथा हि—निमित्तमेव शास्त्रीयं प्रयोजकं तदुपाप्तौ नैमित्तिकानां विधानात् । ज्ञानं त्वर्थतस्तथा । तथा च ज्योतिःशास्त्राद्दर्शनयोग्यं ग्रहणं निश्चित्य धर्मशास्त्राच्च तन्निमित्तकं महाभ्युदयसाधनं स्नानाद्यवगत्य तत्प्रयुक्त्या दर्शनप्रयुक्तिरिति न प्रयुक्तेर्विरोधः, नापि पुंप्रवृत्तेः । शास्त्रीयायास्तस्याः शास्त्रावगतनिमित्तकत्वाद्दर्शनस्य निमित्तेऽनन्तर्भावात् । अत एव न विधिप्रवृत्तेः, नाप्यधिकारस्य । अधिकारो हि कर्तृत्वपूर्वकं फलस्वाम्यं विधेययोरङ्गप्रधानयोरेकप्रयोजकत्वेन तदङ्गाक्षिप्तायाः कर्तृशक्तेरैक्यात् न त्वविधेयस्य [illegible]र्शनस्येत्यत्राह—*क्त्वार्थेति । निरूपितमेतत् । [illegible]नु दृश्य[illegible]ानालिङ्गितस्य दर्शनस्याशक्यनिरूपणत्वेनानुवाद्यत्वायोगात् ग्रहणदर्शनं स्नानादिकं प्रति निमित्तमस्तु ।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।

इतिवचनात्, तदेव चाशौचं प्रत्यपि तथाऽस्तु । अन्यथा "नाशुची राहुतारकाः" इति निषेधात् निषेधपालकानां शिष्टानां स्नानाद्यनापत्तेः, अस्तु वाऽत एव निषेधात् सपिण्डजननादिना निमित्तान्तरेणाशुचेर्दर्शनाभावात्स्नानादेरभावः, अस्तु च निषेधातिक्रमजन्यप्रत्यवायपरिहारस्योपायापेक्षत्वेन तदर्थतया—

चन्द्रसूर्यग्रहे स्नायात् सूतके मृतके तथा ।

इति स्नानादिविधानं सुरापानादिनिमित्तकप्रायश्चित्तवि-

तत्रापि *दर्शनग्रहयोर्निमित्तत्वे स्नानद्वयापत्तेः। दर्शनावृत्तौ नैमित्तिकावृत्तिप्रसङ्गाद्दर्शनविशिष्टग्रहस्य विशिष्टस्यानुवादे वाक्यभेदापत्तेः। न च हविरार्तिवद्विशिष्टं निमित्तमिति वाच्यम्। आर्तिमात्रस्य हि निमित्तत्वे निमेषाद्यार्तेरपि तत्त्वापत्तेर्नैमित्तिकत्वभङ्गाद् युक्तं विशिष्टोद्देश्यत्वम्। *इह तु ग्रहणमात्रस्य निमित्तत्वे न काचित्क्षतिः। तस्माद्दर्शनवाक्यानां प्रस्तास्तविषयत्वाद*नादेश्यग्रहपरत्वाद्वा ज्ञानस्य चार्थतः प्राप्तेस्तदेव निमित्तम्। तेन मेघाद्याच्छादनेऽन्धादेश्च स्नानादि भवत्येवेत्यलं* वेदबाह्यैः संलापेन। इति ग्रहणनिर्णयः॥

अथ समुद्रस्नानम्। आश्वलायनः-

समुद्रे पर्वसु स्नायादमायां च विशेषतः।
पापैर्विमुच्यते सर्वैरमायां स्नानमाचरन्॥
भृगौ भौमदिने स्नानं नित्यमेव विवर्जयेत्।

भारते-

---

धानवदित्यत्राह-*दर्शनेति

*इह त्विति। इतिरहितवाक्येषु तत्पदाध्याहाराकरणेन लाघवात्। प्रसह्यैव विशिष्टोद्देश्यत्वे तु विशेषणावृत्तौ स्नानाद्यावृत्तिप्रसङ्गः, उपघातादिविशिष्टाग्निं निमित्तीकृत्य श्रुतानामुपघाताद्यावृत्तिवदिति भावः। *अनादेश्येति उक्ताभिप्रायम्। ननु—

मीमांसका हि वाक्यार्थविचारे प्रस्कृते सति।
लोकदृष्टीः प्रतिघ्नन्ति वचनव्यक्तिपांसुभिः॥

इति दर्शनादमीमांसकाभिभवमात्रमेतत्। दर्शनं विना स्नानादि तु दुष्करमेवेत्यत्राह-*अलमित्यादि। दर्शनस्य निमित्ता-

अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
अश्वत्थं मन्दवारे तु सागरं पर्वणि स्पृशेत् ॥

पृथ्वीचन्द्रोदये स्कान्दे—

पुनाति पर्वणि स्नानात्तर्पणैः सरितां पतिः ।
कदाचिदपि नैवात्र स्नानं कुर्यादपर्वणि ॥

अस्यापवादस्तत्रैव प्रभासखण्डे—

पर्वकाले च संप्राप्ते नदीनां च समागमे ।
सेतुबन्धे तथा सिन्धौ तीर्थेष्वन्येषु संयुते ॥
*एवमादिषु सर्वेषु मेध्योऽन्ये तु स्वकर्मणि ।

तथा—

विना मन्त्रं विना पर्व *क्षुरकर्म विना नरैः ।
कुशाग्रेणापि देवेशि न स्प्रष्टव्यो महोदधिः ॥

---

न्तर्भावे नैमित्तिकेषु निमित्तवत एवाधिकारादधिकारिणश्च तदकरणे प्रत्यवायादर्शने सति स्नानाद्यकरणे प्रत्यवायः 'तदभावे च तदभाव' इति प्रसत्रायकष्टकर्मानुष्ठानान्यतरप्रयोजकं दर्शनं बुद्धिपूर्वकारी कोऽपि न कुर्यादिति तन्नियोज्यकः स्नानादिविधिर्दुःस्थितः स्यात् । न चैवमाधानाध्ययनाभ्यामग्निविद्याऽर्जनमपि न कोऽपि कुर्यात् । तस्मिन् सति अग्निहोत्रादिकर्माकरणे प्रत्यवायस्य तत्परिहारार्थं कष्टकर्मकरणस्य चापत्तेः, सिद्धाग्निविद्यस्यैव कर्माधिकारोपगमात् तयोः कर्मविध्यप्रयोज्यत्वात्, इति वाच्यम् । नित्यतया तयोः पुरुषार्थत्वेनोपगमात्, व्रात्यताऽनाहिताग्नितयोरुपपातकपाठादपि विद्यावत्त्वरूपकर्माधिकारस्यासंपादने प्रत्यवायकल्पनाद्वेति । *एवमादिष्विति । एवमादिषु देशकालेषु सर्वेषु कर्मसु मेध्यः, अन्ये देशादौ तु स्वकर्मणि तत्तीरवासिनां नियमिते कर्मणि मेध्य इत्यन्वयः । *क्षुरकर्म=समुद्रलक्षणतीर्थप्रयुक्तम् ।

तथा-

न कालनियमः सेतौ समुद्रस्नानकर्मणि ।

तद्विधिश्च तत्रैव-

पिप्पलादसमुत्पन्ने कृत्ये लोकभयङ्करे ।
पाषाणस्ते मया दत्त आहारार्थं प्रकल्प्यताम् ॥

इति पाषाणं प्रक्षिप्य-

विश्वाची च घृताची च विश्वयोने विशां पते ।
सान्निध्यं कुरु मे देव सागरे लवणाम्भसि ॥
नमस्ते विश्वगुप्ताय नमो विष्णो अपांपते ।
नमो जलधिरूपाय नदीनां पतये नमः ॥
समस्तजगदाधार शङ्खचक्रगदाधर ।
देव देहि ममानुज्ञां तव तीर्थनिषेवणे ॥
त्रितयान्तकमीशानं नमो विष्णुमुमापतिम् ।
सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ॥

अग्निश्च योनिरनिलश्च देहो
रेतोधा विष्णुरमृतस्य नाभिः ।
एतद् ब्रुवन्पाण्डव सत्यवाक्यं
ततोऽवगाहेत पतिं नदीनाम् ॥

इति भारतोक्तमन्त्रान्पठित्वा विधिवत्स्नात्वा-

सर्वरत्नो भवान् श्रीमान् सर्वरत्नाकरो यतः ।
सर्वरत्नप्रधानस्त्वं गृहाणार्घ्यं महोदधे ॥

इत्यर्घ्यं दत्वा तर्पयेत् । यथोक्तं पृथ्वीचन्द्रोदये स्कान्दे-

पिप्पलादं विकर्णं च कृतान्तं जीविकेश्वरम् ।
वसिष्ठं वामदेवं च पराशरमुमापतिम् ॥
वाल्मीकिं नारदं चैव वालखिल्यांस्तथैव च ।
नलं नीलं गवाक्षं च गवयं गन्धमादनम् ॥

जाम्बवन्तं हनूमन्तं सुग्रीवं चाङ्गदं तथा ।
मैन्दं च द्विविदं चैव ऋषभं शरभं तथा ॥
रामं च लक्ष्मणं चैव सीतां चैव यशस्विनीम् ।
एतांस्तु तर्पयेद्विद्वान् जलमध्ये विशेषतः ॥
आब्रह्मस्तम्बपर्यन्तं यत्किंचित्सचराचरम् ।
मया दत्तेन तोयेन तृप्तिमेवाभिगच्छतु ॥ इति ॥

इति श्रीमीमांसकनारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृते निर्णयसिन्धौ प्रथमः परिच्छेदः समाप्तः ॥

---

गुणरसेभमनाथमिताब्दका-
धिकनभस्य सितेऽष्टमिकातिथौ ।
सुरगुरावलिखल्लघुमूलजि-
त्प्रथमनिर्णयसिन्धुजटिप्पणम् ॥ १ ॥
हुतभुगृत्विभचन्द्रसमागता-
धिकनभस्य सिताष्टमिकातिथौ ।
प्रथमनिर्णयसिन्धुपरिच्छिदो
विवरणं व्यलिखल्लघुमूलजित् ॥ २ ॥

इति प्रथमस्य वृत्तिः ॥

श्रीः ।

# सव्याख्ये निर्णयसिन्धौ

## द्वितीयः परिच्छेदः ।

श्रीगणेशाय नमः ॥ अथ संवत्सरप्रतिपदमारभ्य—

*तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत् ॥

=इति ब्राह्मं *प्रायशोऽनुसृत्य तिथिनिर्णयस्तत्कृत्यं च निरूप्यते । तत्र मीनसंक्रान्तौ पश्चात्षोडश घटिकाः पुण्यकालः । रात्रौ तु निशीथात्प्राक्परतश्च संक्रमे पूर्वोत्तरदिनार्धे(१) पुण्यं, निशीथे तु दिनद्वयं पुण्यमिति सामान्यनिर्णयादवसेयम् ॥

अथ तिथिनिर्णयः । तत्र चैत्रशुक्लप्रतिपदि *वत्सरारम्भः । तत्रौदयिकी ग्राह्या ।

---

श्रीगणेशाय नमः ॥

*तिथि कृत्ये चेति । यद्यप्यग्रे शुक्लादिमासेन तिथिनिर्णयकरणाद्विरोधो भाति, तथाऽपि 'व्रते शुक्लादिना' इत्युक्तेर्न दोषः । तत्र तिथिकृत्यानि दीपावल्यादीनि कृष्णादिमासेनैव । शुक्लादिमासावलम्बनं च चैत्रादिविशेषवन्मासानां तत्र मुख्यत्वात् । वस्तुतः 'श्रावणे बहुले पक्षे' इत्यादौ श्रावणः शुक्लादिः । 'व्रते शुक्लादिमेव च' इत्युक्तेः । 'मासि भाद्रपदे' इत्यादौ तु नेत्येतदर्थं *प्रायश इति । *वत्सरारम्भ इति । तत्र शकादिश्रवणमपि कार्यम् ।

---

(१) रात्रावर्धरात्रात्प्राक् संक्रमे पूर्वदिनस्य पश्चार्धं परतश्च संक्रमे उत्तरदिनस्य पूर्वार्धं पुण्यमित्यर्थः ।

चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति ॥

इति हेमाद्रौ ब्राह्मोक्तेः । दिनद्वये [illegible]* वा पूर्वैव । तदुक्तं ज्योतिर्निबन्धे—

---

शकवत्सरभूपमन्त्रिणां रसधान्येश्वरमेघपतीनाम् ।
श्रवणात्पठनाच्च वै नृणां शुभतां यात्यशुभं सह श्रिया ॥
चैत्रे मासि महाबाहो पुण्या या प्रतिपत्परा ।
तस्यां वै निम्बपत्राणि प्राश्य संशृणुयात्तिथिम् ॥

तत्र (१)यष्टीप्रवेशः कार्यः । उपरिचरवसुकथायाम्—

यष्टिं च वैणवीं तस्मै ददौ वृत्रनिषूदनः ।
इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालनीम् ॥
ततः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा ।
प्रवेशं कारयामास गते संवत्सरे तदा ॥
ततः प्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः ।
प्रवेशः क्रियते राजन् यथा तेन प्रवर्त्तितः ॥
अपरेद्युस्ततस्तस्याः क्रियते तूच्छ्रयो नृपैः ।
अलङ्कृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः ॥
माल्यदामपरिक्षिप्ता विधिवत् क्रियतेऽपि च ।

इति भारतात् । पिटकः=काष्ठादिरचितपात्रभेदः ।

*अव्यामाविति । तत्राऽमावास्यासत्त्वेऽपि संकल्पः प्रातरेव । 'प्रातः संकल्पयेत्' इति वाक्यात्, सङ्कल्पवचनाच्च प्रतिपत्संकीर्त्तनम् । आपाद्यसाकल्यस्य प्रयोगाविषयत्वे संकल्पविषयत्वात् ।

केचित्तु ततोऽप्युषः कालः प्रशस्तः 'तावति कुर्वीत यत्कारी स्यात्' इति श्रुतिव्याख्याने वेदभाष्ये सूर्योदयात्प्रागारम्भस्य सतामपि शास्त्रोक्तदोषाणामुपशामकत्वोक्तेः, मीमांसकैः 'पुरावाचः

---

(१) 'तत्र च [illegible]' इति क्वचित् पुस्तके पाठः ।

चैत्रे सितप्रतिपदि
यो वारोऽर्कोदये स वर्षेशः ।
उदयद्वितये पूर्वो
नोदययुगलेऽपि पूर्वः स्यात्(१) ॥
यस्माच्चैत्रसितादेरुदयाद्भानोः प्रवृत्तिरब्दादेः ॥ इति ॥
वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ॥

इति वृद्धवसिष्ठोक्तेः ।

चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद्भवेत् ।
तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम् ॥
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ॥

इति हेमाद्रौ विष्णुधर्मोक्तेः । यदा तु चैत्रो मलमासो भवति तदा दैवकार्यस्य तत्र *निषिद्धत्वाच्छुद्धे मासि संवत्सरारम्भः कार्य इति केचिदाहुः । निष्कर्षस्तु—

शुक्लादिर्मलमासस्य सोऽन्तर्भवति चोत्तरः ।

इत्यादिवचनादग्रिमवर्षान्तःपातान्मलमासमारभ्यैव वर्षप्रवृत्तेः शुक्रास्तादाविव मलमास एव कार्य इति वयं प्रतीमः ।

ननु शुक्रास्तादौ चैत्रशुक्लप्रतिपदन्तरस्याभावादुक्तं तन्मध्य एवानुष्ठानम् । मलमासे तु शुद्धप्रतिपदन्त-

---

प्रवादितो निर्वपेत्'इत्यस्य नियमविधित्वार्थमुषःकालस्यापि प्रातः-शब्दवाच्यत्वोपगमाच्च । 'अश्लीलसंज्ञस्तु भागः परं निषिद्धो न श्रौर्यस्येति स्वरूपात्'इत्याहुः । *निषिद्धत्वादिति ।

---

(१) यदा दिनद्वये उदयकाले चैत्रशुक्लप्रतिपत् तदा पूर्वस्मिन् दिने यो वारः स वर्षेशः । यदा दिनद्वयेऽप्युदयकाले प्रतिपन्नाऽस्ति तदाऽपि पूर्वस्मिन्नेव वारो वर्षेश इत्यर्थः ।

रस्य सम्भवात् शुद्ध एव वत्सरारम्भो युक्त इति चेत्, भ्रान्तोऽसि* । न हि प्रतिपदन्तरसत्त्वं प्रयोजकं, द्विःकरणापत्तेः वर्षशब्द(१)यापत्तेश्च । अपि तु वत्सरारम्भः स तु मलमासेऽपीत्युक्तं प्राक् । न हि चैत्रशुक्लादिर्मलमासः पूर्ववर्षेऽन्तर्भवतीति ब्रह्मणाऽपि सुवचम् । अत्र तैलाभ्यङ्गो नित्यः ।

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ॥

इति वासिष्ठोक्तेः ।

अस्यामेव नवरात्रारम्भः । तदुक्तं मार्कण्डेयपुराणे—

शरत्काले महापूजा क्रियते या च वार्षिकी* । इति ।

तत्र परयुतैव ग्राह्या ।

---

श्रौतस्मार्त्तक्रियाः सर्वा द्वादशे मासि कीर्तिताः ।
त्रयोदशे तु सर्वास्ता निष्फलाः परिकीर्त्तिताः ॥
तस्मात्त्रयोदशे मासि कुर्यात्ता न कथञ्चन ।
कुर्वन्ननर्थमेवाशु कुर्यादात्मविनाशनम् ॥
=इत्यादिना । *भ्रान्तोऽसीत्यादि ।

नव्यास्तु प्रतिपदः प्राधान्याच्छुद्धातदितरसमवाये शुद्धैव ग्राह्या । किञ्च यादृशेन स्थूलोपाधिना शुद्धा भवति तादृशस्तत्सजातीयः स मलमासो न तु स एव, उत्तरमासशेषत्वविरोधात् । अत एव न तत्तत्तिथिकूटः । एवं च 'उत्तरेऽब्दे च कार्याणि' इत्युक्तेरुत्तरत्रैव वत्सरारम्भः, तत्रैवाभ्यङ्गस्नानादिश्चेति प्राहुः ।

*या च वार्षिकीति । वर्षाशब्दो वर्षादिपरः । वर्षे वर्षे भवेति व्युत्पत्त्या प्रतिवर्षादिकर्त्तव्यत्वं, याचेति चकारेण तत्समुच्चयः ।

---

(१) वर्षद्वयापत्तेः वर्षशब्दत्वापत्तेश्चेति प्राचीनपुस्तके पाठः ।

अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकाऽर्चने ।
मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता ॥

इति देवीपुराणात् ।

तिस्रो ह्यताः पराः प्रोक्तास्तिथयः कुरुनन्दन ।
कार्तिकाश्वयुजोर्मासोश्चैत्रे मासि च भारत ॥

इति हेमाद्रौ ब्राह्मोक्तेः । पराः=परयुताः ।

*अत्र विशेषः पारणानिर्णयश्च शारदनवरात्रे वक्ष्यते ।

अत्र प्रपादानमुक्तमपरार्के भविष्ये—

अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे ।
पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत् ॥

इत्युपक्रम्य—

ततश्चोत्सर्जयेद्विद्वान्मन्त्रेणानेन मानवः ।
'प्रपेयं सर्वसामान्या *भूतेभ्यः प्रतिपादिता ॥
अस्याः प्रदानात्पितरस्तृप्यन्तु हि पितामहाः' ।
अनिवार्यं ततो देयं जलं मासचतुष्टयम् ॥ इति ।

तथा—

प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना ।
प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः ॥
ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः ॥

तत्र मन्त्रः—

'एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात्सकला मम सन्तु मनोरथाः' ॥
अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति ।
प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः ॥ इति ।

---

*अत्रेति । चण्डिकाऽर्चनविषयकसकलविधिनिषेधाना-मिहापि प्रवृत्तिरिति भावः । *भूतेभ्य इति । पश्वादिसाधारण्य-

चैत्रशुक्लतृतीयायां गौरीमीश्वरसंयुताम् संपूज्य दोलोत्सवं कुर्यात्। तदुक्तं निर्णयामृते देवीपुराणे—

तृतीयायां यजेद्देवीं शंकरेण समन्विताम्।
कुङ्कुमागरुकर्पूरमणिवस्त्रसुगन्धकैः॥
स्रग्गन्धधूपदीपैश्च दमनेन विशेषतः।
आन्दोलयेत्ततो वत्स शिवोमातुष्टये सदा॥ इति।

अत्र चतुर्थीयुता ग्राह्या।

मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे।

इति माधवोक्तेः। अत्र सौभाग्यशयनव्रतमुक्तं मात्स्ये—

वसन्तमासमासाद्य तृतीयायां जनप्रिये।
सौभाग्याय सदा स्त्रीभिः कार्यं पुत्रसुखेप्सुभिः॥इति।

*तत्रापि परयुतैव।

इयं च मन्वादिरपि। अत्रैव प्रसङ्गात्सर्वमन्वादिर्निर्णीयते(१)। ताश्चोक्ता दीपिकायाम्—

'तिथ्यग्नी न तिथिस्तिथ्याशे कृष्णेभोऽनलो ग्रहः।
तिथ्यर्कौ न शिवोऽश्वोऽमातिथी मन्वादयो मधोः'॥

इति।

तिथिः=पूर्णिमा। अग्निः=तृतीया। नेति। वैशाखे नास्तीत्यर्थः। आशा=दशमी। कृष्णेभः=कृष्णाष्टमी। अनलः=तृतीया। ग्रहो=नवमी। अर्कौ=द्वादशी। नेति। मार्गशीर्षे नेत्यर्थः। शिवः=एकादशी। अश्वः=सप्तमी। मधोश्चैत्रादारभ्यैता मन्वादय इत्यर्थः। अत्र *मूलमचलाभः। *तत्रापीति। गौरीव्रतत्वात्। *मूलेति।

आश्वयुक् शुक्लनवमी कार्त्तिके द्वादशी तथा।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च॥

(१) मुम्बापुरीस्थमुद्रितपुस्तके 'मन्वादिनिर्णय उच्यते' इति पाठः।

नानि हेमाद्र्यादेर्ज्ञेयानि । एताश्च मन्वादयो हेमाद्रिमते शुक्लपक्षस्थाः पौर्वाह्णिकाः, कृष्णपक्षस्था आपराह्णिका ग्राह्याः ।

पूर्वाह्णे तु सदा ग्राह्याः शुक्ला मनुयुगादयः ।
दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः ॥

इति गारुडवचनात् ।

'अथो मन्वादियुगादिकर्मतिथयः
पूर्वाह्णिकाः स्युः सिते
विज्ञेया अपराह्णिकाश्च बहुले'

इति दीपिकोक्तेश्च। कालादर्शे त्वपराह्णव्यापित्वं मन्वादिषूक्तं तत्तु अयुक्तमिति युगादिनिर्णये वक्ष्यामः । अत्र च श्राद्धमुक्तं मात्स्ये—

कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।
हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत् ॥ इति ।
मन्वादिश्राद्धं च मलमासे सति मासद्वयेऽपि कार्यम् ।
मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ॥

इति स्मृतिचन्द्रिकोक्तेः । अत्र पिण्डरहितं श्राद्धं (कुर्यात् । तदुक्तं कालादर्शे—

विषुवायनसंक्रान्तिमन्वादिषु युगादिषु ।
विहाय पिण्डनिर्वापं सर्वं श्राद्धं)(१)समाचरेत् ॥ इति ।

---

फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैता दत्तस्याऽक्षयकारकाः ॥ इति ॥

---

(१) कंसान्तर्गतो ग्रन्थः कपुस्तके नास्ति ।

मन्वादिश्राद्धं नित्यम्। अकरणे प्रायश्चित्तदर्शनात्। तदुक्तमृग्विधाने—

त्वं सुवः प्रतिमन्त्रं च शतवारं जले जपेत्।
मन्वादयो यदा न्यूनाः कुरुते नैव चा पिधः॥ इति।

एवं यत्र प्रायश्चित्ताधिक्यादिदर्शनं तानि *षण्णवतिश्राद्धानि नित्यानि। तानि तु—

अमायुगमन्वन्तरक्रान्तिधृतिपातमहालयाः।
अन्वष्टक्यं च पूर्वेद्युः षण्णवत्यः प्रकीर्तिताः॥

इत्युक्तानि। चकारादष्टकाग्रहणम्।

चैत्रशुक्लतृतीयैव मत्स्यजयन्ती। अत्रैव प्रसङ्गाद्दशावतारजयन्त्यो निर्णीयन्ते। तत्र पुराणसमुच्चये—

मत्स्योऽभूद्धुतभुग्दिने मधुसिते कूर्मो विधौ माधवे
वाराहो गिरिजासुते नभसि यद्भूते सिते माधवे।
सिंहो भाद्रपदे सिते हरितिथौ श्रीवामनो माधवे
रामो गौरितिथावतः परमभूद्रामो नवम्यां मधोः॥
कृष्णोऽष्टम्यां नभसि सितपरे, चाश्विने यद्दशम्यां
बुद्धः, कल्की नभसि समभूच्छुक्लषष्ठ्यां क्रमेण।
अह्नो मध्ये वामनो रामरामौ
मत्स्यः क्रोडश्चापराह्णे विभागे।
कूर्मः सिंहो बौद्धकल्की च सायं
कृष्णो रात्रौ कालसाम्ये च पूर्वे॥ इति।

केचित्तु स्फुटान् श्लोकान् पठन्ति। तथा-

---

अत्र विशेषानिर्देशे शुक्लाः। *षण्णवत्य इति। यत्र वर्षमध्ये द्विर्व्यतीपातादि तत्र सप्तनवत्यादि अधिकस्यापि तस्याधिकाग्राह्यत्वात्। एवं द्वासप्ततीत्यत्रापि। हुतभुक्=तृतीया। विधुः=द्वादशी गिरिजासुतः=चतुर्थी। भूतं=चतुर्दशी। हरिः=द्वादशी। गौरी=

चैत्रे तु शुक्लपञ्चम्यां भगवान्मीनरूपधृक्* ।
ज्येष्ठे तु शुक्लद्वादश्यां कूर्मरूपधरो हरिः* ॥
चैत्रेऽकृष्णे नवम्यां तु हरिर्वाराहरूपधृक्* ।

---

तृतीया । *धृगिति । ततः—
वेदस्योद्धरणार्थाय मध्याऽह्ने समुपस्थिते ॥
मध्याह्नव्यापिनी यत्र पञ्चमी मूलसंयुता ।
तत्रोपवासं कुर्वीत विष्णुसायुज्यमाप्नुयात् ॥
पञ्चमी गणसंयुक्ता नोपोष्या हि प्रयत्नतः ।
वेदस्योद्धरणार्थाय धर्मसंस्थापनाय च ॥
परित्राणाय साधूनां जातो मत्स्यः स्वयं हरिः ।
गृहाणार्घ्यं मया दत्तं जनन्या सहितो हरे ॥
देवान् पितॄन् समभ्यर्च्य अनन्तं फलमश्नुते ।
यत्किञ्चिद्दत्तं यद्दानं तद्दानं मेरुणा समम् ॥ इति ।
*हरिरिति ।
कृत्तिकाऋक्षसंयोगे सायाह्ने च विधूदये ।
द्वादश्यां पूर्वविद्धायामुपवासव्रतं चरेत् ॥
जगन्निर्वहणार्थाय विश्वसंस्थापनाय च ।
परित्राणाय साधूनां जातः कूर्मः स्वयं हरिः ॥
गृहाणार्घ्यं मया दत्तं गिरिणा सहितो हरे ।
स्नानं दानं प्रकुर्वीत पितॄनुद्दिश्य तर्पणम् ॥
वित्तशाठ्यं न कर्त्तव्यं विष्णुसायुज्यमिच्छता ।
जयन्ती व्रतमाहात्म्यं श्रोतव्यं च विशेषतः ॥ इति ।
*धृगिति ।
शुक्लपक्षे विशेषेण प्रभाते समुपस्थिते ।
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ॥
तस्मात्सर्वप्रयत्नेन दशाविद्धा प्रशस्यते ।

नरसिंहश्चतुर्दश्यां वैशाखे शुक्लपक्षके* ॥
मासि भाद्रपदे शुक्लद्वादश्यां वामनो हरिः

दुष्टजातिविनाशाय भूभारोत्तारणाय च ॥
परित्राणाय साधूनां हरिर्वाराहरूपधृक् ।
गृहाणार्घ्यं मया दत्तं धरण्या सहितो हरे ॥
तत्रोपवासं कुर्वीत पितॄनुद्दिश्य तर्पणम् ।
यदेव दीयते किञ्चित्तद्दानं मेरुणा समम् ॥ इति ।

*पक्षके इति ।

स्वातीयोगे च संध्यायां मन्दवासरसंयुते ।
संध्याकाले समुत्पन्नो रक्षोदमनकारणात् ॥
स्तम्भात्सह समालोक्य त्रेतायामादिपूरुषः ।
जयायुक्ता न कर्त्तव्या परविद्धा प्रशस्यते ॥
हिरण्यस्य वधार्थाय प्रह्लादवरदाय च ।
दानवानां विनाशाय दैत्यानां निधनाय च ॥
परित्राणाय साधूनां जातो नरहरिः स्वयम् ।
गृहाणार्घ्यं मयादत्तं श्रीलक्ष्म्या सहितो हरे ॥
स्नानं दानं च कर्त्तव्यं पितॄनुद्दिश्य तर्पणम् ।
वित्तशाठ्यं न कुर्वीत विष्णुलोके महीयते ॥

*हरिरिति ।

सङ्गमे श्रवणे चैव पुण्यकालः प्रशस्यते ।
द्वादशी श्रवणोपेता मध्याह्नव्यापिनी तिथिः ॥
तत्रोपवसते कामी विष्णुसांनिध्यहेतवे ।
सङ्गमे सरितः स्नात्वा [illegible] फलम् ॥
जातो बलिविनाशाय धर्मसंस्थापनाय च ।
दानवानां विनाशाय दैत्यानां निधनाय च ॥
परित्राणाय साधूनां वामनश्च स्वयं हरिः ।

राधशुक्लतृतीयायां रामो भार्गवरूपधृक्* ॥
चैत्रशुक्लनवम्यां तु रामो दशरथात्मजः* ।

---

गृहाणार्घ्यं मया दत्तमदित्या सहितो हरे ॥
स्नानं दानमित्यादि प्राग्वत् ॥

*धृगिति ।
तृतीया माधवे शुक्ला रोहिण्यामरुणोदये ।
जमदग्निकुलादित्यो जातो भृगुपतिः स्वयम् ॥
द्वितीयाशेषसंयुक्तां यः कुर्यात्स नराधमः ।
तृतीया गणसंयुक्ता सर्वकार्यफलप्रदा ॥
जातः क्षत्रवधार्थाय भूमारोत्तारणाय च ।
क्षितिपालकधर्मज्ञद्विजसंस्थापनाय च ॥
परित्राणाय साधूनां जातो भृगुपतिः स्वयम् ।
गृहाणार्घ्यं मया दत्तं रेणुकासहितो हरे ॥
उपवासव्रतं तत्र श्राद्धशेषं नरोत्तमैः ।
यत्किंचिद्दीयते दानं तद्दानं मेरुणा समम् ॥
*दशरथात्मज इति ।
चैत्रशुक्लनवम्यां च जातो रामः स्वयं हरिः ।
पुनर्वसृक्षसंयोगे सा तिथिः सर्वकामदा ॥
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ।
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ॥
तत्रोपवासं कुर्वीत विष्णुसायुज्यमाप्नुयात् ।
दशाननवधार्थाय भूभारोत्तारणाय च ॥
दानवानां विनाशाय दैत्यानां निधनाय च ।
परित्राणाय साधूनां जातो रामः स्वयं हरिः ॥
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ।
स्नानं दानं प्रकुर्वन्ति पितॄनुद्दिश्य तर्पणम् ॥

नभस्ये तु द्वितीयायां बलभद्रोऽभवद्धरिः* ॥
श्रावणे बहुलेऽष्टम्यां कृष्णोऽभूद्रक्षक*रक्षकः ।
*ज्येष्ठशुक्लद्वितीयायां बौद्धः कल्की भविष्यति ॥

यत्किञ्चिद्दीयते दानं तद्दानं मेरुणा समम् । इति ।

*हरिरिति । बलभद्रकृष्णयोर्मतभेदेन गणनायां भेदः । बलभद्र एवावतार इति स्वाभिप्रायः ।

*रक्षक इति ।

अर्द्धरात्रे च रोहिण्यां सा तिथिः सर्वकामदा ॥
अर्द्धरात्रेऽष्टमी पुण्या पूर्वा वा यदि वा परा ।
रोहिणीसहिता स्तोका मुक्तिदा सर्वजन्तुषु ॥
तत्रोपवासं कुर्वीत नात्र कार्या विचारणा ।
उपोषणं जागरणं विशेषेण प्रशस्यते ॥

स्नानं दानमित्यादिश्लोकः ।

जातः कंसवधार्थाय भूभारोत्तारणाय च ॥
दानवानां वधार्थाय दैत्यानां निधनाय च ।
परित्राणाय साधूनां जातः कृष्णः स्वयं हरिः ॥
गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ।

*ज्येष्ठ इति ॥ भाद्रे बौद्धः, ज्येष्ठे कल्कीत्याहुः ।

भाद्रशुक्लद्वितीया च हस्तनक्षत्रसंयुता ॥
चन्द्रोदये समुत्पन्ने बौद्धरूपोऽभवद्धरिः ।
नन्दायुक्ता न कर्त्तव्या द्वितीया विष्णुतत्परैः ॥
कामान्मोहात्प्रकुर्वीत दुष्टानां विजयो भवेत् ।
तस्मात्सर्वप्रयत्नेन गौरीयुक्ता प्रशस्यते ॥
तत्रोपवासं कुर्वीत विष्णुसायुज्यमाप्नुयात् ।
जातः कारुण्यकार्याय दुष्टानां निधनाय च ॥
परित्राणाय साधूनां जातो बौद्धः स्वयं हरिः ।
गृहाणार्घ्यं मया दत्तं श्रीदेव्या सहितो हरे ॥

इति । कोङ्कणास्तु वाराहपुराणस्थत्वेन वाक्यानि पठन्ति—

'आषाढे शुक्लपक्षे तु एकादश्यां महातिथौ ।
जयन्ती मत्स्यनाम्नीति तस्यां कार्यमुपोषणम् ॥
नभोमासि तृतीयायां हरिः कमठरूपधृक् ।
नभस्यशुक्लपञ्चम्यां वराहस्य जयन्तिका ॥
वैशाखे तु चतुर्दश्यां नृसिंहः समपद्यत ।
मासि भाद्रपदे शुक्लैकादश्यां वामनो हरिः ॥
वैशाखे शुक्लपक्षे तु तृतीयायां भृगूद्वहः ।
चैत्रे नवम्यां रामोऽभूत्कौशल्यायां परः पुमान् ॥
श्रावणे बहुलेऽष्टम्यां वासुदेवो जनार्दनः ।
पौषशुक्ले तु सप्तम्यां कुर्याद् बौद्धस्य पूजनम् ॥
माघशुक्लतृतीयायां कल्किनः पूजनं हरेः ।
प्रातः प्रातस्तु मध्याह्ने सायं सायं तथा निशि ॥
मध्याह्ने मध्यरात्रे च सायंप्रातरनुक्रमात् ॥

इति । तदत्र समूलत्वनिर्णये सति कल्पभेदेन व्यवस्था द्रष्टव्या । एताश्च तदुपासकानां नित्याः, अन्येषां तु काम्याः । जन्माष्टम्यादौ तु विशेषं वक्ष्यामः ॥

---

स्नानं दानमित्यादि ।
ज्येष्ठे शुक्लद्वितीया च पुनर्वसुसमन्विता ॥
सूर्योदये समुत्पन्ने कल्की विष्णुस्तदाऽभवत् ।
द्वितीया गौरिसंयुक्ता उपपन्ना व्रतादिषु ॥
नन्दायुक्ता न कर्त्तव्या विष्णुसायुज्यमिच्छता ।
स्नानं दानं च यत्किञ्चित्तदक्षय्यमुदाहृतम् ॥
जातो म्लेच्छवधार्थाय दुष्टानां निधनाय च ।
परित्राणाय साधूनां धर्मसंस्थापनाय च ॥

*चैत्रशुक्लपञ्चमी कल्पादिः । तदुक्तं हेमाद्रौ मात्स्ये—

ब्रह्मणो या दिनस्यादिः कल्पादिः सा प्रकीर्तिता ।
वैशाखस्य तृतीया या कृष्णा या फाल्गुनस्य च ॥
पञ्चमी चैत्रमासस्य तथैवान्त्या* तथा परा ।
शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी ॥
नवमी मार्गशीर्षस्य*सप्तैताः संस्मराम्यहम् ।
कल्पानामादयो ह्येता दत्तस्याक्षयकारकाः ॥

---

गृहाणार्घ्यं मया दत्तं कृपाचार्येण हे हरे । इति ।

*चैत्रशुक्लेति । ब्राह्मे—

शुक्लायामथ पञ्चम्यां चैत्रेमासि शुभानना ।
श्रीब्रह्मलोकान्मानुष्यं संप्राप्ता केशवाज्ञया ॥
ततस्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति । इति ॥

*अन्त्या=अमावास्या ॥ *सप्तेति । त्रिंशदन्ये कल्पादयः

अथ कल्पादयो राजन् कथ्यन्ते तिथयः शुभाः ॥
यासु श्राद्धे कृते तृप्तिः पितॄणामक्षया भवेत् ।
चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराऽभवत् ॥
तस्य शुक्लत्रयोदश्यामुदानः समजायत ।
कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत् ॥
अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्यकल्पत ।
वैशाखस्य तृतीयायां शुक्लायां नीललोहितः ॥
चतुर्दश्यां तु शुक्लायां संजातो गारुडाभिधः ।
समानस्तु तृतीयायां कृष्णायां समभवत ॥
माहेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत् ।
ज्येष्ठशुक्लतृतीयायां वामदेवस्य संभवः ॥
पौर्णमास्यां तु तत्रैव कूर्मः प्रवक्ष्यते नृप ।

कृष्णपक्षे तृतीयायामाग्नेयः समगच्छत ॥
पञ्चदश्यां तु कृष्णायां पितृकल्पः समागमत् ।
शुक्लां चतुर्थीमाषाढे प्राप्य नारायणोऽभवत् ॥
चतुर्थ्यां तस्य कृष्णायां सोमकल्पःसमापतत् ।
श्रावणे शुक्लपञ्चम्यां रौरवः समवर्त्तत ॥
तस्यैव कृष्णपञ्चम्यां मानवः प्रत्यपद्यत ।
षष्ठीं प्रौष्ठपदे शुक्लां प्राप्य प्राणाभिधोऽभवत् ॥
सितेतरायां षष्ठ्यां तु तस्य तत्पुरुषाह्वयः ।
बृहत्कल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य च ॥
कृष्णायामपि वैकुण्ठः प्रविवेश विशांपते ।
कार्तिकस्य सिताष्टम्यां कल्पः कन्दर्पसंज्ञकः ॥
असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य कल्पना ।
मार्गशुक्लनवम्यां तु कल्पसत्योऽभ्यवर्त्तत ॥
असितायां च सावित्रीकल्पः प्रारम्भमभ्यगात् ।
पौषे दशम्यां शुक्लायामीशानः प्रादुरास ह ॥
असितायामघोरस्य कल्पस्योपक्रमोऽभवत् ।
एकादश्यां तु शुक्लायां माघे व्यानः प्रजज्ञिवान् ॥
तस्यामेव तमिस्रायां वाराहः प्राप भूपते ।
सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य ह ॥
कृष्णायामपि वै राज्ञो विरराज महामनाः ।
इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः ॥
आरम्भतिथयस्तासु शुक्लाः पुण्यतमा मताः ।
आसु श्राद्धं कृतं पुण्यमाकल्पस्यापि कल्पते ॥ इति ॥

दीपिकाऽपि—

'स्युः पक्षद्वयगाः क्रमात्प्रतिपदाद्याश्चैत्रमासक्रमात्
भूतौ माधवगौ मधौ तु मदनौ ज्येष्ठस्थिते पर्वणी ।

अत्र सर्वोऽपि निर्णयो *मन्वादिवज्ज्ञेयः । हेमाद्रौ ब्राह्मे—

शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना ।
श्रीर्ब्रह्मलोकान्मानुष्यं संप्राप्ता केशवाज्ञया ॥
ततस्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति ॥

चैत्रशुक्लाष्टम्यां भवान्या उत्पत्तिः । तत्र नवमीयुता ग्राह्या ।

अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता ।

इति ब्रह्मवैवर्तात् । अत्र भवानीयात्रोक्ता काशीखण्डे—

भवानीं यस्तु पश्येत शुक्लाष्टम्यां मधौ नरः ।
न जातु शोकं लभते सदानन्दमयो भवेत् ॥ इति ।

अत्रैवाशोककलिकाप्राशनमुक्तं हेमाद्रौ लैङ्गे—

अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥

प्राशनमन्त्रस्तु—

त्वामशोक नराभीष्टं मधुमाससमुद्भवम् ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥ इति ।

अत्र विशेषः पृथ्वीचन्द्रोदये विष्णुः—

---

श्राद्धे त्रिंशदमी शुभाः शुभतराः कल्पादयः शुक्लगाः' ॥ इति ।

*मन्वादिवदिति । आस्वभातिथित्वोक्त्या युगमन्वारम्भतिथिसादृश्यलाभादिति भावः । युगान्ताश्च ब्राह्मे—

सूर्यस्य सिंहसंक्रान्तावन्तः कृतयुगस्य तु ।
अथ वृश्चिकसंक्रान्तावन्तस्त्रेतायुगस्य तु ॥
ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तस्तु संख्यया ।
तथा च कुम्भसंक्रान्तावन्तःकलियुगस्य तु ॥ इति ।

पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी ।
प्रातस्तु विधिवत्स्नात्वा वाजपेयफलं लभेत् ॥ इति ।

तिथितत्त्वे कालिकापुराणे—

चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः ।
स्नायाल्लौहित्यतोयेषु स याति ब्रह्मणः पदम् ॥
चैत्रं तु सकलं मासं शुचिः प्रयतमानसः ।
लौहित्यतोये यः स्नायात्स कैवल्यमवाप्नुयात् ॥

*लौहित्यो ब्रह्मपुत्रः । मन्त्रस्तु—

'ब्रह्मपुत्र महाभाग शान्तनोः कुलसम्भव ।
अमोघागर्भसंभूत पापं लौहित्य मे हर ॥'

चैत्रशुक्लनवमी रामनवमी । तदुक्तमगस्त्यसंहितायाम्—

'चैत्रे नवम्यां *प्राक्पक्षे दिवा पुण्ये पुनर्वसौ ।
*उदये *गुरुगौरांशे स्वोच्चस्थे ग्रहपञ्चके ॥
मेषे पूषणि संप्राप्ते लग्ने कर्कटकाह्वये ।
आविरासीत्स कलया कौसल्यायां परः पुमान् ॥
तस्मिन् दिने तु कर्तव्यमुपवासव्रतं सदा ।
तत्र जागरणं कुर्याद्रघुनाथपरो भुवि* ॥ इति ।

इयं च मध्याह्नयोगिनी ग्राह्या ।

चैत्रशुक्ले तु नवमी पुनर्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥

---

*लौहित्य इति ।

लोहितात्सरसो जातो लौहित्याख्यस्ततोऽर्थवत् ।

इति कालीपुराणात् ।

*प्राक्पक्षे=शुक्लपक्षे । *उदये=लग्ने । पुण्ये इत्यन्वयः । *गुरुगौरांशे=गुरुनवांशे । गौरांश्वोरिति पाठे गौरांशुश्चन्द्रः । *भु-

इति तत्रैवोक्तेः । तथा-

चैत्रमासे नवम्यां तु जातो रामः स्वयं हरिः ।
*पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥
श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका ।

तथा-

*केवलापि सदोपोष्या नवमीशब्दसंग्रहात् ।
तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमीव्रतम् ॥

पूर्वेद्युरेव मध्याह्नयोगे *कर्मकालव्याप्तेः सैव ग्राह्या । दिनद्वये मध्याह्नव्याप्तौ तदभावे वा पूर्वदिने पुनर्वस्वृक्षयुक्तामपि त्यक्त्वा परैव कार्या । तदुक्तं माधवीयेऽगस्तिसंहितायाम्-

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां च दशम्यां चैव पारणम् ॥ इति ।

---

वीति । खड्गादिव्याप्तिः । *पुनर्वस्विति प्राशस्त्यार्थम् ।

तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम् ।
तस्मात्तिथिं प्रशंसन्ति न नक्षत्रं तिथिं विना ॥

इति वाक्यात् ॥

*केवलाऽपीति । तिथेरेव निर्णायकत्वान्न ऋक्षापेक्षा ।

*कर्मकालेति । कर्मकालशास्त्रापेक्षयाऽष्टमीविद्धानिषेधानां दौर्बल्यात् ।

नवीनास्तु दिनद्वये मध्याह्नव्याप्तावव्याप्तावेकदेशस्पर्शित्वे वा एकादिने पुनर्वसुमती "पुनर्वसुयुता यदि । सैव मध्याह्नयोगेन" इत्युक्तेः । दिनद्वये पुनर्वसुयुता या तादृशी सा मध्याह्ने तद्युतैव । तारतम्यानुरोधेन ततस्तथैव प्रतीतेः । यदि च दिनद्वये मध्याह्ने पुनर्वसुमती तद्रहिता वा मध्याह्नव्यापिनी तदेकदेशस्पृग्वा तदैव परा 'नवमी चाष्टमीविद्धा' इति वाक्यादिति प्राहुः ॥

अष्टमीविद्धा सङ्क्षयाऽपि नोपोष्येति माधवः ।
रामार्चनचन्द्रिकायामपि—

विद्धैव चेद्दक्षयुक्ता व्रतं तत्र कथं भवेत् ।
विद्धानिषेधश्रवणान्नवमी चेति वाक्यतः ॥
वैष्णवानां विशेषात्तु तत्र विष्णुपरैरपि ।
दशम्यादिषु वृद्धिश्चेद्विद्धा त्याज्यैव वैष्णवैः ॥
तदन्येषां च सर्वेषां व्रतं तत्रैव निश्चितम् ॥ इति ।

अत्र 'दशम्यादिषु वृद्धिश्चेत्'इति 'तदन्येषाम्'इति वचनात्(१)यदा प्रातस्त्रिमुहूर्ता नवमी, दशमी च क्षयवशात्सूर्योदयात्प्रागेव समाप्यते, तदा स्मार्तानां तत्रैव एकादशीनिमित्तोपवासात् नवमीव्रताङ्गपारणालोपः स्यात् । अतोऽष्टमीविद्धैव स्मार्तैः कार्या । वैष्णवानां त्वरुणोदयविद्धैकादश्या हेयत्वान्न पारणालोपप्रसङ्ग इति द्वितीयैव तैः कार्येति*सूचयति । दशमीवृद्ध्यभावेऽष्टमीविद्धाया एव मध्याह्नव्यापित्वे क्षये च वैष्णवैरपि विद्धैवोपोष्येत्यर्थसिद्धम् । इदं च व्रतं *संयोगपृथ-

---

*सूचयतीति । इदं तु चिन्त्यम् । विष्णुपरायणैः साद्भिरिदं व्रतं कार्यमित्युपदेशमात्रेणैवोपपत्तेरवैष्णवानामष्टमीविद्धाग्राह्यत्वापादककर्तृविशेषणत्वानङ्गीकारात् ।

पारणं तु पूर्वविद्धोपवासे नवमीमतिक्रम्यैव । "दशम्यामेव पारणम्" इत्युक्तेः । *संयोगेति । "एकस्य तूभयत्वे संयोगपृथक्त्वम्"(जै० सू० ४-३-५)इति सूत्रम् । अत्र काम्यत्वमनित्यत्वम् । अकामे हेयत्वात् । एककर्मणो नित्यत्वकाम्यत्वाभ्यां द्वैरूप्ये नित्यानित्यसंयोगाविरोध इत्यत्रैकस्येति । "खादिरो यूपो

---

(१) 'तदन्येषाम्' इति च वदन्' इति मुम्बापुरीस्थमुद्रितपुस्तके पाठः ॥

षामित्याहुः। अन्ये तु अकरणे*दोषश्रवणात्

तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमीव्रतम्।

इति पूर्वोक्तवचनाच्च जन्माष्टम्यादिवदिदमपि सर्वेषां नित्यम्। अन्यथा जन्माष्टम्यादावपि तदुपासकानामेव नित्यतां वक्तुः को वारयितेत्याहुः।

अत्र विशेषो हेमाद्रावगस्त्यसंहितायाम्—

आचार्यं चैवसंपूज्य वृणुयात्प्रार्थयेन्निशि*।
श्रीरामप्रतिमादानं करिष्येऽहं द्विजोत्तम॥
भक्त्याचार्यो भव प्रीत श्रीरामोऽसि त्वमेव च।

तथा—

स्वगृहे चोत्तरे देशे दानस्योज्ज्वलमण्डपम्।
शङ्खचक्रहनूमद्भिः प्राग्द्वारे समलंकृतम्॥
गरुत्मच्छार्ङ्गबाणैश्च दक्षिणे समलंकृतम्।
गदाखड्गाङ्गदैश्चैव पश्चिमे सुविभूषितम्॥
पद्मस्वस्तिकनीलैश्च कौबेरे समलंकृतम्।
मध्ये हस्तचतुष्कं [illegible]यं वेदिकायुक्तमायतम्॥
ततः संकल्पयेद्देवं राममेव स्मरन्मुने।
अस्यां रामनवम्यां च रामाराधनतत्परः॥
उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि।
इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः॥

---

त्यस्यान्वयः। काम्यप्रयोगस्य खण्डतिथौ निषेधेन नित्यप्रयोगविधिमात्रशेषत्वे तदन्तर्गततत्पदस्यापि तच्छेषत्वौचित्यात्। *दोषेति। तद्वाक्ये मर्त्यसामान्यश्रवणात्सर्वेषामेतदन्वयात् शिष्टाचारानुगृहीतत्वात्कल्पनाया इति। वैष्णवानामेव नित्येऽधिकारः। सामान्यशब्दोऽपि वैष्णवपर इत्यपि वदन्ति। *निशि—पूर्वरात्रौ। ताव-

श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ।
प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे ॥
अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति च ।
ततः स्वर्णमयीं रामप्रतिमां पलमात्रतः ॥
निर्मितां द्विभुजां दिव्यां वामाङ्कस्थितजानकीम् ।
बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने ॥
वामेनाधःकरेणाराद्देवीमालिङ्ग्य संस्थिताम् ।
सिंहासने राजतेऽत्र पलद्वयविनिर्मिते ॥

तथा—

अशक्तो यो महाभागः स तु वित्तानुसारतः ।
(१)पलेनाथ तदर्धेन तदर्धार्धेन वा मुने ॥
सौवर्णं राजतं वापि कारयेद्रघुनन्दनम् ।
पार्श्वे भरतशत्रुघ्नौ धृतच्छत्रकरावुभौ ॥
चापद्वयसमायुक्तं लक्ष्मणं चापि कारयेत् ।
दक्षिणाङ्के दशरथं पुत्रावेक्षणतत्परम् ॥
मातुरङ्कगतं राममिन्द्रनीलसमप्रभम् ।
पञ्चामृतस्नानपूर्वं *संपूज्य विधिवत्ततः ॥

---

त्पर्यन्तं च यजमानाचार्ययोरभोजनं हविष्यादिभक्षणं वेत्याद्यन्यतोऽवसातव्यम् । ज्ञानमुद्रालक्षणं तु—

तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् ।
वामहस्ताम्बुजं वामजानोर्मूर्द्धनि विन्यसेत् ।
ज्ञानमुद्रा भवेदेषा श्रीरामस्य सदाप्रिया ॥ इति ।

*सपूज्येति । पूजा दक्षावर्ता मूलमन्त्रेण अन्येषां तु पुरुषसूक्तविष्ण्वादिसूक्तैः नाममन्त्रेण वा । स्त्रीशूद्राणां तु नाममन्त्र एव ।

(१) 'पलेनार्धतदर्धार्धतदर्धार्धेन वा मुने' इति मुद्रितपुस्तके पाठः ।

कौसल्यामन्त्रस्तु—

रामस्य जननी चासि रामरूपमिदं जगत् ।
अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते ॥
नमो दशरथायेति पूजयेदित्यपरं मतः ॥

अत्र *दशावरणपञ्चावरणादिपूजा ऽन्यत्र ज्ञेया ।

---

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे-
राविर्भूतमभूदपूर्वविभवं यत्किञ्चिदेकं महत् ॥

इति जन्मभावनां कुर्वन्वाद्यानि वादयेत् ।

इन्द्रोऽग्निश्च यमश्चैव नैर्ऋतो वरुणोऽनलः ।
कुबेर ईशो ब्रह्माद्या दिक्पालाः स्नापयन्तु ते ॥

इति स्नानमन्त्रः । * [illegible] ।

अथ प्रयोगः । आदौ प्रणवः सर्वत्र स्त्रीशूद्रवर्जम् । तत्र षट्कोणे पूर्वादितः—राँ हृदयाय नमः, रीं शिरसे स्वाहा, रूँ शिखायै वषट्, रैं कवचाय हुँ, रौं नेत्रत्रयाय वौषट्, रः अस्त्राय फट् ॥

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ।
भक्त्या समर्पये तुभ्यमहं प्रथमावरणार्चनम् ॥

इति पठेत् । द्वितीयावरणार्चनानन्तरं पाठे 'द्वितीयावरणार्चनम्'इत्यादिः । इति प्रथमावरणम् । अथाऽष्टदलमूले—ॐ आत्मने नमः, (प्रणामानन्तरं 'सर्वविद्याक्षरं' सर्वत्रावर्त्तते) निवृत्त्यै अन्तरात्मने, प्रतिष्ठायै परमात्मने, विद्यायै ज्ञानात्मने शान्त्यै इति द्वितीयम् । अथ तत्पत्रे वासुदेवाय श्रियै, संकर्षणाय शान्त्यै, प्रद्युम्नाय प्रीत्यै, अनिरुद्धाय रत्यै इति तृतीयम् । पत्राग्रे हनुमते सुग्रीवाय, भरताय बिभीषणाय, लक्ष्मणाय अङ्गदाय, शत्रुघ्नाय जाम्बवते इति चतुर्थम् । अथ द्वितीयाष्टदलाग्रेषु धृष्टये जयन्ताय, विजयाय सौरा। राष्ट्र-

नाय सौराष्ट्राय अकोपाय धर्मराजाय सुमन्त्राय इति पञ्चमम् ॥ अथ द्वादशपत्रपत्रेषु वसिष्ठाय वामदेवाय जाबालये गौतमाय भरद्वाजाय कौशिकाय वाल्मीकाय नारदाय सनकाय सनन्दनाय सनातनाय सनत्कुमाराय इति षष्ठम् । अथ षोडशपत्रपत्रेषु नीलाय नलाय सुषेणाय मैन्दाय शरभाय द्विविदाय वन्दनाय गवाक्षाय किरीटाय कुण्डलाय श्रीवत्साय कौस्तुभाय शङ्खाय चक्राय गदायै पद्माय इति सप्तमम् । अथ द्वात्रिंशत्पत्रपत्रेषु ध्रुवाय धराय सोमाय अद्भ्यः अनिलाय अनलाय प्रत्यूषाय प्रभासाय वीरभद्राय शम्भवे गिरीशाय अजैकपदे अहिर्बुध्न्याय पिनाकिने भुवनाधीश्वराय कपालिने दिक्पतये स्थाणवे भगाय वरुणाय सूर्याय वेदान्ताय भानवे इन्द्राय रवये गभस्तिने यमाय हिरण्यरेतसे दिवाकराय मित्राय विष्णवे धात्रे इत्यष्टमम् । अथ भूपूरे ॐ लँ इन्द्राय सुराधिपतये सायुधाय सवाहनाय सपरिवाराय सशक्तिकाय नमः ॥ ॐ रँ अग्नये तेजोऽधिपतये इत्यादि पूर्ववत् । एवमग्रेऽपि । यँ यमाय प्रेताधिपतये । क्षँ निर्ऋतये रक्षोऽधिपतये । वँ वरुणाय जलाधिपतये । शँ वायवे प्राणाधिपतये । सँ सोमाय नक्षत्राधिपतये । ईँ ईशानाय विद्याधिपतये आँ ब्रह्मणे लोकाधिपतये पूर्वेशानयोर्मध्ये । ह्रीं विष्णवे भूताधिपतये निर्ऋतिपश्चिमयोर्मध्ये इति नवमं तद्बहिः । वज्राय शक्तयै दण्डाय खड्गाय पाशाय ध्वजाय गदायै शूलाय अम्बुजाय चक्राय इति दशमम् । तदुक्तं रामार्चनचन्द्रिकायाम्—

'षट्कोणे प्रथमावृत्तिः स्याद्बीजैर्हृदयादिभिः ।
द्वितीयाऽऽत्मादिभिर्देवैरष्टाब्जस्य तु मूलके ॥
तृतीया वासुदेवाद्यैरष्टपत्रे तथैव च ।
चतुर्थी वायुपुत्राद्यैः पत्राग्रे पूर्वतः क्रमात् ॥
सृष्ट्याद्यैः पञ्चमी प्रोक्ता तस्मिन्नेव दले तथा ।
षष्ठी द्वादशपत्रे तु वसिष्ठाद्यैर्महर्षिभिः ॥

*अशोककुसुमैर्युक्तमर्घ्यं दद्याद्विचक्षणः ।
दशाननवधार्थाय धर्मसंस्थापनाय च ॥
राक्षसानां विनाशाय दैत्यानां निधनाय च ।
परित्राणाय साधूनां जातो रामः स्वयं हरिः ॥
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ।
पुष्पाञ्जलिं पुनर्दत्वा यामे यामे प्रपूजयेत् ॥
दिवैवं विधिवत्कृत्वा रात्रौ जागरणं ततः ।
ततः प्रातः समुत्थाय स्नानसंध्यादिकाः क्रियाः ॥
समाप्य विधिवद्रामं पूजयेद्विधिवन्मुने ।
ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् ॥
पूर्वोक्तपद्मकुण्डे वा स्थण्डिले वा समाहितः ।
लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः ॥

---

सप्तमी षोडशाब्जे स्यान्नीलाद्यैः कपिपुङ्गवैः ।
ध्रुवाद्यैरष्टमी ज्ञेया द्वात्रिंशद्दलपङ्कजे ॥
इन्द्राद्यैर्भूगृहे बाह्ये नवमावरणं भवेत् ।
तदस्त्रैर्वज्रशक्त्याद्यैर्दशमावरणं भवेत् ॥' इति ।
अत्र पूज्यपूजकयोर्मध्ये प्राची ।
'देवा ये स्वस्य चाप्यग्रे प्राची प्रोक्ता दिक्स्थितैः ।
प्राच्येव प्राची नोद्दिष्टा मुक्त्वा देवस्य पूजनम् ॥
इति रामार्चनचन्द्रिकावचनात् । तत्राशक्तस्य षट्कोणमात्रपूजा भवति । सापि तत्रैव ।
पूर्वषट्कोणकोणेषु हृदयादीनि षट्क्रमात् ।
दले हनूमत्प्रमुखान् सुग्रीवादीन् दलमध्यतः ॥
दलाग्रे लोकपालांश्च तदस्त्राणि ततो बहिः । इति ।
अर्थो रामार्चनचन्द्रिकायां द्रष्टव्यः । *अशोकेति* ।
'दत्वा पुष्पाञ्जलिं पूर्वं गृहीत्वा सकुसुमम् ।

साज्येन पायसेनैव स्मरन् राममनन्यधीः ।
ततो भक्त्या सुसन्तोष्य आचार्यं पूजयेन्मुने ॥
ततो रामं स्मरन् दद्यादेवं मन्त्रमुदीरयन् ।
'इमां स्वर्णमयीं रामप्रतिमां समलंकृताम् ॥
चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते ।
श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः ॥'
इति दत्वा विधानेन दद्याद्धि दक्षिणां भुवम्* ।
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः' ॥ इति ।
इयं मलमासे न कार्या ।

'सुजन्ममप्यजन्मं स्यान्नोपवासः कृतो भवेत्' । इति,
'न कुर्यान्मलमासे तु महादानव्रतानि च ।'
इति च माधवीये सङ्ग्रहवचनात् । ननु रामनवमीव्रतस्य नित्यत्वादेकादशीवन्मलमासेऽपि कर्तव्यता स्यादिति चेत्, अत्र ब्रूमः—

---

फलपुष्पाम्बुसंपूर्णं युक्तं च तुलसीदलैः ॥'
इत्यादि ॥
*भुवमिति* ।
विप्रान्संभोज्य विधिवत् साचार्यः पारयेद्व्रतम् ।
इति बोध्यम् । अथ दुर्दशाग्रस्तानां दशादित्यव्रतं हेमाद्रौ । तच्च—
आदित्यवारयुक्तायामेव शुक्लदशम्यां कार्यम् ।
'रविवारेण युक्तायां दशम्यां पूजयेद्दशाः ।'
इत्युक्तेः । तिथिश्च मध्याह्नव्यापिनी । दिनद्वये तत्सत्त्वेऽसत्त्वे च परा, एकदेशव्याप्तौ तु महत्त्वाल्पत्वाभ्यां निर्णयः । विधिश्च रविवारे तादृशतिथियोगे । तत्प्रयोगः—तिथिवारादीर्त्तनान्ते 'मम दुर्दशानिवृत्तिपूर्वकसुदशाप्राप्त्यर्थं दशादित्यव्रतमहं करिष्ये' इति सङ्कल्प्य तदङ्गतया गणपतिपूजापुण्याहवाचननान्दीश्राद्धान्तं कृत्वा

नैकादश्युपवासस्य व्रतत्वेन प्राप्तिः । किन्तु

'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।'

इत्यादिनिषेधस्य मलमासेऽपि पालनीयत्वात् कृष्णैकादश्यां पुत्रवद्गृहिण इत्यर्थादुपवासः प्रसज्यते । न त्विह तथेति व्रतत्वेन प्राप्तिर्वाच्या । सा च निषिद्धेत्यप्रसङ्गः ।

स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।

इति निषेधाच्च । एवं जन्माष्टम्यादावपि बोद्धव्यम् । इति रामनवमी ॥

चैत्रशुक्लैकादश्यां दोलोत्सव उक्तो ब्राह्मे-

'चैत्रमासस्य शुक्लायामेकादश्यां तु वैष्णवैः ।

आन्दोलनीयो देवेशः सलक्ष्मीको महोत्सवैः ॥' इति ।

चैत्रशुक्लद्वादश्यां दमनोत्सवः ।

'द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः ।

बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरम् ॥'

इति रामार्चनचन्द्रिकोक्तेः ।

---

सूर्यं पञ्चोपचारैः सम्पूज्य प्राङ्मुखो बहिर्देशे गोमयोपलिप्ते इङ्गाललिखिता दशदुर्दशापुत्रिकाः पूजयेत् । ताश्च—

'दुर्मुखा दीनवदना मलिनाऽसत्यवादिनी ।

दुर्बुद्धिदायिनी हिंस्रा दुष्टा मित्रविरोधिनी ॥

उच्चाटनकरी नाम चतुर्दिक्पाददायिनी ।'

एताश्चतुर्थ्यन्तनामभिः एकैकपुत्रिकायामावाह्य षोडशोपचारैः पूज्याः, फलानि दश, दश वराटिका दक्षिणेति । ततः—

'नित्यं पापरते पापे देवद्विजविरोधिनि ।

गच्छतां दुर्दशे देवि नीतिशास्त्रविरोधिनि ॥'

इति प्रत्येकं विसर्जयेत् । ततः शीतोदकेन स्नायात् । अश्व-

*'ऊर्जे व्रतं मधौ दोला श्रावणे तन्तुपूजनम् ।
चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः ॥'

इति तत्रैव पाद्मवचनाच्च ।

शिवभक्तादिभिस्तु चतुर्दश्यादौ कार्यम् ।
'तत्र स्यात्स्वीयतिथिषु वह्न्यादेर्दमनार्पणम् ।'

इति तत्रैवोक्तेः । (ज्योतिःप्रकाशेऽपि—

स्वस्वदेवप्रतिष्ठायां मन्त्रसंग्रहणे तथा ।
पवित्रदमनारोपे ग्राह्या तत्तत्तिथिर्बुधैः ॥)(१)

तिथयस्तु—

वह्निर्विरिञ्चिर्गिरिजा गणेशः

---

क्तौ हस्तौ पादौ च प्रक्षालयेत् ॥ ततः शुचि शुभ्रं वस्त्रं परिधाय गृहं प्रविशेत् । ततो भित्तौ काष्ठफलकेन अष्टदलं लिखित्वा तत्र सुगन्धिचन्दनादिना दशपुत्रिका लिखेत् । ताश्च—

सद्बुद्धिदा सुखकरी सर्वसम्पत्प्रदायिनी ।
इष्टभोगप्रदा लक्ष्मीः कीर्तिदा सुखदायिनी ॥
पुत्रप्रदा च विजया दशमी धर्मदायिनी । इति ॥

लिखितसुदशापुत्रिकाणां पुरः दशग्रन्थियुतं पट्टदोरकं सूत्रदोरकं वा प्रतिष्ठाप्य तत्र रविं पूजयेत् । षोडशोपचारैः पूजां कृत्वा

'अशेषसम्पदां दात्रे भर्त्रे त्रिजगतां सदा ।
जगतः कामदात्रे च जगत्पूज्याय ते नमः ॥'

इति विसर्जयेत् । ततश्चतुर्थ्यन्तनामभिर्दश सुदशाः तासु पुत्रिकासु पूजयेत्, दश मधुरफलानि दबुकादिदक्षिणा, नात्र विसर्जनम् । दशभिर्मोदकैर्वायनं, भुञ्जीयात्तैलवर्जितम् । इति संक्षिप्तो दशादित्यव्रतप्रयोगः ॥

*ऊर्जे इति नित्यत्वम् ।

---

१—कंसान्तर्गतः पाठो लिखितपुस्तके नास्ति ।

फणी विशाखो दिनकृन्महेशः ।
दुर्गाऽन्तको विश्वहरिः स्मरश्च
शर्वः शशी चेति तिथीषु पूज्याः ॥

इत्युक्ताः ।

अथागमोक्तदीक्षावतो दमनारोपणविधी रामार्चनचन्द्रिकायाम् । तत्रैकादश्यां—

'क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो ।
न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि ॥
सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः ।
उपवासेन त्वां देव तोषयामि जगत्पते ॥
कामक्रोधादयोऽप्येते न मे स्युर्व्रतघातकाः ।
अद्यप्रभृति देवेश यावद्वैशेषिकं दिनम् ॥
तावद्रक्षा त्वया कार्या सर्वस्यास्य जगत्पते ।

इति देवं संप्रार्थ्य दमनमादाय पञ्चगव्येन प्रोक्ष्य वारिणा प्रक्षाल्याशोकमूले देवाग्रे वा—

'अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन ।
शोकार्तिं हर मे नित्यमानन्दं जनयस्व मे ॥

इत्यशोकम्,

'त्रुट्यादिकालपर्यन्तः कालरूपो महाबलः ।
कलते चैव यः सर्वं तस्मै कालात्मने नमः ॥'

इति कालम्,

'वसन्ताय नमस्तुभ्यं वृक्षगुल्मलताश्रय ।
सहस्रमुखसंवास कामरूप नमोऽस्तु ते ॥'

इति वसन्तम्,

'कामभस्मसमुद्भूत रतिबाष्पपरिप्लुत ।
ऋषिगन्धर्वदेवादिविमोहक नमोऽस्तु ते ॥

इति दमनं च संपूज्य—

'नमोऽस्तु पञ्चबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय ते ॥'

इति दमनमुपस्थाय 'ॐ कामाय नमः' इति संपूज्य निशायां देवताग्रे पञ्चवर्णैः चन्दनेन वा अष्टदलं कृत्वा बहिश्चतुरस्रं तद्बहिर्वर्तुलत्रयं तद्बहिर्भूस्रं चतुरस्रं च कृत्वा तत्र कुम्भं संस्थाप्योपरि वस्त्रेऽष्टदले दमनं पूजयित्वा—

'पूजार्थं देवदेवस्य विष्णो लक्ष्मीपते प्रभो ।
दमन त्वमिहागच्छ सांनिध्यं कुरु ते नमः ॥'

'ॐ क्लीं कामदेवाय नमः' 'ॐ ह्रीं रत्यै नमः' इत्यावाह्य दिक्षु पूर्वादितः—क्लीं कामायनमः (बीजादिनमोऽन्तं सर्वत्र) भस्मशरीराय० अनङ्गाय० मन्मथाय० वसन्तसखाय० स्मराय० इक्षुचापाय० पुष्पास्त्राय० इति पूजयित्वा—'ॐ तत्स्वरूपाय विद्महे कामदेवाय धीमहि । तन्नोऽनङ्गः प्रचोदयात् ॥' इत्यष्टोत्तरशतं संमन्त्र्य पूजयित्वा 'ह्रीं नमः' इति पुष्पाञ्जलिं दत्वा—

'नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय ते ॥'

इति नत्वा—

'आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ।
क्षीरोदधिमहानागशय्यावस्थितविग्रह ।
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः ॥
निवेदयाम्यहं तुभ्यं प्रातर्दमनकं शुभम् ।
सर्वदा सर्वथा विष्णो नमस्तेऽस्तु प्रसीद मे ॥'

इति देवं संप्रार्थ्य पुष्पाञ्जलिं दत्वा अस्त्रेण चक्रमन्त्रेण वा रक्षां कुर्यात् । ततः प्रातर्नित्यपूजां कृत्वा पुनर्देवं संपूज्य गन्धदूर्वाक्षतयुक्तं दमनमादाय मूलमन्त्रं

पठित्वा—

'देवदेव जगन्नाथ वाञ्छितार्थप्रदायक ।
हृदिस्थान्पूरयेः कामान्मम कामेश्वरीप्रिय ॥
इदं दमनकं देव गृहाण मदनुग्रहात् ।
इमां साम्वत्सरीं पूजां भगवन्परिपूरय ॥'

इति मन्त्रान्ते पुनर्मूलमन्त्रेण देवे समर्पयेत् । ततोऽङ्गदेवताभ्यः स्वस्वमन्त्रेण दत्त्वा प्रार्थयेत्—

'मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ॥
वनमालां यथा विष्णो कौस्तुभं सततं हृदि ।
तद्वद्दामनकीं मालां पूजां च हृदये वह ॥
जानताऽजानता वाऽपि न कृतं यत्तवार्चनम् ।
तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते ॥
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥'

'मन्त्रहीनम्—' इति च संप्रार्थ्य पञ्चोपचारैः पुनः संपूज्य नीराज्य पारयेदिति । दीक्षारहितानां तु नाम्नैव समर्पणम् । अत्र च द्वादशीमतन्त्रीकृत्य पारणाहो ग्राह्यः ।

'पारणाहे न लभ्येत द्वादशी घटिकाऽपि चेत् ।
तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे' ॥

इति तत्रैवोक्तेः । गौणोऽपि काल उक्तस्तत्रैव—

'*हरौ न दमनारोपः स्यान्मधौ विघ्नतो यदि ।
वैशाखे श्रावणे वाऽपि तत्तिथौ स्यात्तदर्पणम् ॥'

---

*हरौ=द्वादश्याम् ।

'श्रावणावधि शुक्रास्ते कर्तव्यमिति नारदः ।'
इति पाठान्तरम् । इदं च मलमासे न कार्यम् ।
'उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् ।'
इति कालादर्शे मलमासवर्ज्येषु परिगणनात् ।
'उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यात्पूर्वे तन्निष्फलं भवेत् ॥
इति माधवीये प्रजापतिवचनाच्च । शुक्रास्तादा तु कार्यमेव । पूर्वोक्तवचनात् ।
'उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् ।
ईशानस्य बलिं विष्णोः शयनं परिवर्तनम् ।
कुर्याच्छुक्रस्य च गुरोर्मौढ्येऽपीति विनिश्चयः ॥
इति ज्योतिर्निबन्धे वृद्धगार्ग्यवचनाच्च ।

इति दमनारोपः ॥

चैत्रशुक्लत्रयोदश्यामनङ्गव्रतं (हेमाद्रौ भविष्ये—
'चैत्रोत्सवे सकललोकमनोविनोदे
कामं त्रयोदशतिथौ च वसन्तयुक्तम् ।
पत्न्या सहार्च्य पुरुषप्रवरोऽथ योषित्
सौभाग्यरूपसुतसौख्ययुतः सदा स्यात् ॥')(१)
तत्र सा *पूर्वा ग्राह्या ।

*पूर्वेति ।
'कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी ।
कामत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥'
इति वचनात् ।
'त्रयोदशी प्रकर्त्तव्या भवेद्या चापराह्णिकी ।'
इति स्कान्दन्तु शुक्लत्रयोदशी पौर्वाह्णिकी उत्तराविद्धा न

१—अत्रायं धनुश्चिह्नान्तर्गतो भागो बहुग्रन्थानुरोधेन प्रक्षिप्त इति गम्यते

'त्रयोदशातिथिः पूर्वः सितः' इति दीपिकोक्तेः । चैत्रशुक्लचतुर्दशी *पूर्वा ग्राह्या ।

'मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी ।
सा रात्रिव्यापिनी ग्राह्या नान्या शुक्ला कदाचन ॥'

इति हेमाद्रौ बौधायनोक्तेः ।

*'परा पूर्वाह्णगामिनी' इति वा पाठः । अत्र केचिद्यथाश्रुतमेवार्थं वर्णयन्ति ।

'निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।
अतस्तत्र चतुर्दश्यां सत्यां तत्पूजनं भवेत् ॥'

इति ब्रह्मवैवर्तात् । हेमाद्रिमाधवादिलिखनमप्येवम् । संप्रदायविदस्त्वाहुः—

'चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो ।

इति स्कान्दमुत्सर्गः । तदपवादश्च—

तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥'

इति नारदीयवचनं, तदपवादश्च—'मधोः श्रावणमासस्य' इति, तत्र 'अपवादाभावे पुनरुत्सर्गस्य स्थितिः' । इति न्यायेन*पूर्वविद्धैव ग्राह्येति सिध्यति । ब्रह्मवैवर्तं तु सामान्यरूपमन्यत्र सावकाशमिति । तेन पूर्व-

---

आपराह्णिकी पूर्वविद्धेत्यर्थ इति केचित् । परे तु सायाह्नव्यापिनी आपराह्णिकी चेदिति सामान्यतो निर्णयः । अनङ्गत्रयोदशी तु अनापराह्णव्यापिनी सायाह्नव्यापिनीति वाक्यद्वयं सार्थकमित्याहुः ॥ *पूर्वेति* । दमनपवित्रारोपादौ इति शेषः । *परा=मासान्तरवर्तिनी शुक्ला पूर्वाह्णगामिनी उत्तरविद्धेत्यर्थः। *पूर्वविद्धैवेति* । पूर्वविद्धात्वस्य रात्रिव्यापित्व-

दिने मुहूर्तत्रयवेधे पूर्वा अन्यथोत्तरेति ॥

चैत्रपूर्णिमा सामान्यनिर्णयात्परैव । अत्र विशेषो निर्णयामृते विष्णुस्मृतौ—'चैत्री चित्रायुता चेत्स्यात्तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति' इति ।' तथा ब्राह्मे—

'मन्दे वाऽर्के गुरौ वाऽपि वारेष्वेतेषु चैत्रिका ।
तत्राश्वमेधजं पुण्यं स्नानश्राद्धादिभिर्लभेत् ॥' इति ।

अत्र सर्वदेवानां दमनकपूजोक्ता तत्रैव वायवीये—

संवत्सरकृतार्चायाः साफल्यायाखिलान् सुरान् ।
दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवम् ॥ इति ।

अत्र स्वतिथ्या समुच्चय इति केचित् । *स्वीयतिथ्यामकरणेऽत्र दमनपूजनमित्यन्ये । दीक्षिततदितरविषयत्वेन व्यवस्थेत्यपरे । इयं मन्वादिरपि । सा च पूर्वमुक्ता ॥

*चैत्रकृष्णत्रयोदश्यां महावारुणीसंज्ञो योगो गौ-

---

ण्याप्यत्वात्तथोक्तम् । एतेन 'पूर्वाह्णव्यापित्वस्यापि विधाने वाक्यभेदः । मधुश्रावणशुक्लचतुर्दशीभिन्नानां पूर्वाह्णगानां ग्रहणस्याप्राप्तेरनुवादकत्वासंभवात्'इत्यपास्तम् । *स्वीयेति ॥ 'तत्र स्यात्स्वीयतिथि' इत्युक्तेः ॥

*चैत्रकृष्णेति । तिथिकृत्यत्वात्कृष्णादिर्मासो न तु शुक्लादिः । चित्रातः शतभिष एकादशत्वेन पक्षह्रासेऽपि चैत्रोत्तरत्रयोदश्या असम्भवात् । गङ्गास्नानं च रात्र्यादावपि कार्यम् ।

'दिवा रात्रौ च संध्यायां गङ्गायां च प्रसङ्गतः ।
(प्रसङ्गतश्चेत्यन्वयः ।)
स्नात्वाऽश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥'

इति ब्रह्माण्डात् । एवं महानिशायामपि ।

'महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।

डेषु प्रसिद्धः । तदुक्तं वाचस्पतिकृतौ शूलपाणौ च स्कान्दे—

'वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥'

तत्रैव ज्योतिषे—

'चैत्रासिते वारुणऋक्षयुक्ता
त्रयोदशी सूर्यसुतस्य वारे ।
योगे शुभे सा महती महत्या
गङ्गाजलेऽर्कग्रहकोटितुल्या ॥' इति ।

त्रिस्थलीसेतौ ब्रह्माण्डपुराणे—

'वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा ॥' इति ।

कल्पतरौ ब्राह्मे—

'मधौ कृष्णत्रयोदश्यां [illegible] शतभिषायुता ।
वारुणीति समाख्याता शुभे तु महती स्मृता' ॥

---

तत्र स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते ॥'

इति देवलोक्तेः । यत्तु—

'त्रयोदश्यां तृतीयायां दशम्यां च विशेषतः ।
शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथं च न ॥'
'स्नानं कुर्वन्ति या नार्यश्चन्द्रे शतभिषाङ्गते ।
सप्त जन्म भवेयुस्ता दुर्भगा विधवा ध्रुवम् ॥'

इति निषेधद्वयन्तु भोगार्थस्नानपरम् ।

*चैत्रकृष्णचतुर्दश्यां विशेषः पृथ्वीचन्द्रोदये । पुलस्त्यः—

'चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ ।
न प्रेतत्वमवाप्नोति गङ्गायां तु विशेषतः' ॥ इति ।

अत्र पूर्वा ग्राह्या कृष्णपक्षस्थत्वात् । गौडैस्त्वेतदेव शुक्लचतुर्दश्यामित्येवं देवलीयत्वेन पठितम् ॥

इति श्रीरामकृष्णभट्टसूरिसूनुकमलाकरभट्टकृते कालनिर्णयसिन्धौ चैत्रमासः ॥

मेषसंक्रमे प्रागपरा दश दश घटिकाः पुण्यकालः । रात्रौ तु प्रागुक्तम् । अत्र धर्मघटादिदानमुक्तं पृथ्वीचन्द्रोदये पाद्मे—

'तीर्थे चानुदिनं स्नानं तिलैश्च पितृतर्पणम् ।
दानं धर्मघटादीनां मधुसूदनपूजनम् ॥
माधवे मासि कुर्वीत मधुसूदनतुष्टिदम् ॥'

अथ वैशाखस्नानम् । तत्र पृथ्वीचन्द्रोदये विष्णुस्मृतिपाद्मयोः—

'तुलामकरमेषेषु प्रातःस्नानं विधीयते ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम्' ॥

इति सौरमास उक्तः । अन्यत्पक्षद्वयमुक्तं तत्रैव पाद्मे—

---

'भोगाय क्रियते यत्तु स्नानं याहच्छिकं नरैः ।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिके न तु ॥'

इत्युक्तेः । संकल्पे च वारुण्यादिशब्दैस्तन्मासातिथ्यादिग्रहेऽपि मासादीनामाधिकरणत्वेनोल्लेखः । मासादिशब्दैश्च वारुण्यादियोगग्रहेऽपि निमित्तत्वेन तत्तद्योगानाम् । दशहरादिष्वप्ययमेव ।

*चैत्रकृष्णेति । पूर्णिमान्तमानेन तिथिकृत्यत्वात् ॥

इति चैत्रः ॥

'मधुमासस्य शुक्लायामेकादश्यामुपोषितः ।
पञ्चदश्यां च भो वीर मेषसंक्रमणे तु वा ॥
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया ।
मधुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकम्' ॥

तत्र मन्त्रः—

'वैशाखं सकलं मासं मेषसंक्रमणे रवेः ।
प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः ॥
मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् ।
निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥
माधवे मेषगे भानौ मुरारे मधुसूदन ।
प्रातःस्नानेन मे नाथ फलदो भव पापहन्' ॥ इति ।

तीर्थविशेषोऽपि तत्रैवोक्तः—

'मेषसंक्रमणे भानोर्माधवे मासि यत्नतः ।
महानद्यां नदीतीर्थे नदे सरसि निर्झरे ॥
देवखातेऽथवा स्नायाद्यथा प्राप्ते जलाशये ।
दीर्घिकाकूपवापीषु नियतात्मा हरिं स्मरन् ॥' इति ।

सङ्कल्पे च *तत्तत्तीर्थनाम ग्राह्यम् । अज्ञाने तु विष्णुतीर्थमिति वदेत् ।

'यदा न ज्ञायते नाम तस्य तीर्थस्य भो द्विजाः ।
तत्रेत्युच्चारणं कार्यं विष्णुतीर्थमिदं त्विति ॥
तीर्थस्य देवता विष्णुः सर्वत्रापि न संशयः ॥

इति तत्रैवोक्तेः ।

---

*तत्तत्तीर्थनामेति । अपिः पूरणीयः । तेन विष्णुतीर्थसमुच्चयात्तत्तीर्थनाम विष्णुतीर्थमिति चेत्यर्थः । 'तीर्थस्य देवता विष्णुः सर्वत्रापि'इति सर्वत्रपदात् । एवं 'नद्यां नद्यन्तरस्मृतिः'इति निषेधो गङ्गास्मरणे न प्रवर्त्तते ।

तथाऽन्योऽपि विशेषस्तत्रैव पाद्मे—

'तुलसी कृष्णगौराख्या तयाऽभ्यर्च्य मधुद्विषम् ।
विशेषेण तु वैशाखे नरो नारायणो भवेत् ॥
माधवं सकलं मासं तुलस्या योऽर्चयेन्नरः ।
त्रिसंध्यं मधुहन्तारं नास्ति तस्य पुनर्भवः' ॥

तथा—

'प्रातः स्नात्वा विधानेन माधवे माधवप्रियम् ।
योऽश्वत्थमूलमासिञ्चेत्तोयेन बहुना सदा ॥
कुर्यात्प्रदक्षिणं तं तु सर्वदेवमयं ततः ।
पितृदेवमनुष्यांश्च तर्पयेत्सचराचरम् ॥
योऽश्वत्थमर्चयेद्देवमुदकेन समन्ततः ।
कुलानामयुतं तेन तारितं स्यान्न संशयः ॥
कण्डूय पृष्ठतो गां तु स्नात्वा *पिप्पलतर्पणम् ।
कृत्वा गोविन्दमभ्यर्च्य न दुर्गतिमवाप्नुयात्' ॥

तथा—

'एकभक्तमथो नक्तमयाचितमतन्द्रितः ।
माधवे मासि यः कुर्याल्लभते सर्वमीप्सितम् ॥
वैशाखे विधिना स्नानं देवनद्यादिके बहिः ।
हविष्यं ब्रह्मचर्यं च भूशय्या नियमस्थितिः ॥

---

'स्नानकालेऽन्यतीर्थेषु कीर्त्यते जान्हवी जलैः ।
विना विष्णुपदीमन्यत्समर्थं नावशोधने ॥'

इति स्कान्देनान्यतीर्थे भागीरथीस्मरणकार्यताबोधनात् । केचित्तु गंगायमुनाशतद्रुसरस्वतीनां स्मरणे न दोषः । 'इमं मे गङ्गे यमुने सरस्वती'इति मन्त्रेणाघमर्षणोक्तेरिति प्राहुः । भागीरथ्यामन्यतीर्थस्मरणं न कार्यम् । प्रयागादिमणिकर्णिकादेः स्मरणं कुर्वन्ति । *पिप्पलतर्पणम्=अश्वत्थसेचनम् ।

व्रतं दानं दमो देवि मधुसूदनपूजनम् ।
अपि जन्मसहस्रोत्थं पापं दहति दारुणम्' ॥

मदनरत्ने स्कान्दे—

'प्रपा कार्या च वैशाखे देवे देया *गलन्तिका ।
उपानद्व्यजनच्छत्रसूक्ष्मवासांसि चन्दनम् ॥
जलपात्राणि देयानि तथा पुष्पगृहाणि च ।
पानकानि च चित्राणि द्राक्षारम्भाफलान्यपि' ॥

तिथितत्त्वे—

'ददाति यो हि मेषादौ सक्तूनम्बुघटान्वितान् ।
पितॄनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते' ॥ इति ।

तथा—

'वैशाखे यो घटं पूर्णं सभोज्यं वै द्विजन्मने ।
ददाति सुरराजेन्द्र स याति परमां गतिम् ॥'

एवं सम्पूर्णस्नानाशक्तौ त्र्यहं वा स्नायात् । तदुक्तं तत्रैव पाद्मे—

त्रयोदश्यां चतुर्दश्यां वैशाख्यां वा दिनत्रयम् ।
अपि सम्यग्विधानेन नारी वा पुरुषोऽपि वा ॥
प्रातःस्नातः सनियमः सर्वपापैः प्रमुच्यते ॥

यदा तु वैशाखो मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधात्* मासद्वयं स्नानं तन्नियमाश्च कर्तव्याः । मासोपवासचान्द्रायणादि तु मलमासे एव समापयेत् । तदुक्तं दीपिकायाम्—

'नियतत्रिंशद्दिनत्वाच्छुभे मास्यारभ्य समापयेत् मलिने मासोपवासव्रतम्' इति ।

---

*गलन्तिका=सन्ततपतद्धारमुदकपात्रम्(१) । *[illegible] ।

(१) 'अलिञ्जरः स्यान्मणिकः कर्कर्यालुर्गलन्तिका' । इत्यमरात् ।

अत्र दानविशेष उक्तोऽपरार्के वामनपुराणे—

'गन्धाश्च माल्यानि तथा वैशाखे सुरभीणि च ।
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥'

एवं स्नाने कृते तस्योद्यापनं कार्यम् । तदुक्तं तत्रैव—

मासमेवं बहिः स्नात्वा नद्यादौ विमले जले ।
एकादश्यां च द्वादश्यां पौर्णमास्यामथापि वा ॥
उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः ।
मण्डलं कारयेदादौ कलशं तत्र विन्यसेत् ॥
निष्केण वा तदर्धेन तदर्धार्धेन वा पुनः ।
शक्त्या वा कारयेद्देवं सौवर्णं लक्षणान्वितम् ॥
लक्ष्मीयुक्तं जगन्नाथं पूजयेदासने बुधः ।
भूषणैश्चन्दनैः पुष्पैर्दीपैर्नैवेद्यसंचयैः ॥
एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् ।
श्वोभूते कृत*मैत्रोऽथ ग्रहवेद्यां ग्रहान्यजेत् ॥
होमं कुर्यात्प्रयत्नेन पायसेन विचक्षणः ।
तिलाज्येन यवैर्वाऽपि सर्वैर्वाऽपि स्वशक्तितः ॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
प्रतद्विष्णु(१)रनेनैव इदंविष्णुरनेन वा ॥

---

आरब्धं कर्म यत्किञ्चित्तत्तु कार्यम्मलिम्लुचे ।
इत्यनुवृत्तिवचनाच्चेत्यपि द्रष्टव्यम् । *मैत्रं=मित्रदेवताकं सन्ध्यादि । सर्वभूतसौहार्दमिति केचित् ।

---

(१) स तु मन्त्रो ऋग्वेदसंहितायां द्वितीयाष्टके द्वितीयाध्याये—'प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा' ॥ इति । अस्यार्थः—'स महानुभावो विष्णुः वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण प्रस्तवते प्रकर्षेण स्तूयते सर्वैः । वीर्येण स्तूयमानत्वे दृष्टान्तः—मृगोन=

व्रतसंपूर्तिसिद्ध्यर्थं धेनुमेकां पयस्विनीम् ।
पादुकोपानहौ छत्रं गुरवे व्यजनं तथा ॥
शय्यां सोपस्करां दद्यादीपिकां दर्पणं तथा ।
ब्राह्मणान्भोजयेत्रिंशत्तेभ्यो दद्याच्च दक्षिणाम् ॥
कलशाञ्जलसम्पूर्णांस्तेभ्यो दद्याद्यवांस्तथा ।
एवं कृते माधवस्य चोद्यापनविधौ शुभे ॥
फलमाप्नोति सकलं विष्णुसायुज्यमाप्नुयात् ॥'

एतावत्यशक्तौ तत्रैवोक्तम्—

'वैशाख्यां विधिना स्नात्वा भोजयेद्ब्राह्मणान्दश ।
कृसरं सर्वपापेभ्यो मुच्यते नात्र संशयः' ॥ इति ॥

वैशाखशुक्लतृतीया अक्षयतृतीयोच्यते । सा*पूर्वा

---

*पूर्वाह्णव्यापिनी=परविद्धा । गौरीव्रते तु द्वितीयावेधः कलाकाष्ठादिरूपोऽपि त्याज्यः ।

तत्र स्वल्पाऽपि परा । यदा परा न लभ्यते तदा द्वितीयाविद्धापि ग्राह्या उक्तवाक्यसिद्धात् । तदलाभे पूर्वा ।

---

सिंहादिरिव । यथा स्वविरोधिनो मृगयिता सिंहो भीमो=भीतिजनक कुचरः=कुत्सितहिंसादिकर्ता, दुर्गमप्रदेशगन्ता वा । गिरिष्ठाः=पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते, तद्वदयमपि मृगः=अन्वेष्टा शत्रूणां भीमः=भयानकः, सर्वेषां भीत्यपादानभूतः । परमेश्वराद्भीतिः—'भीषाऽस्माद्वातः पवते' इत्यादिश्रुतिषु प्रसिद्धा । किञ्च कुचरः=शत्रुवधादिकुत्सितकर्मकर्ता, कुषु सर्वासु भूमिषु लोकत्रयेषु संचारी वा । तथा गिरिष्ठाः=गिरिवदुच्छ्रितलोकस्थायी । यद्वा गिरि=मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः । ईदृशोऽयं स्वमहिम्ना स्तूयते । किञ्च यस्य विष्णोरुरुषु=विस्तीर्णेषु त्रिषु=त्रिसंख्याकेषु विक्रमणेषु=पादप्रक्षेपेषु विश्वाः=सर्वाणि भुवनानि=भूतजातानि अधिक्षियन्ति=आश्रित्य निवसन्ति, स विष्णुः स्तूयते' । इति श्रीसायणाचार्यैर्भाष्ये उक्तः । इममर्थं मनसि निधाय कर्मानुष्ठेयं श्रद्धालुभिरिति तद्बोधनार्थमेवायमर्थो निवेदित इति ज्ञेयम् ।

ह्णव्यापिनी ग्राह्या । दिनद्वयेऽपि तद्व्याप्तौ परैव । तदुक्तं निर्णयामृते नारदीये—

'वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता ।
दुर्लभा बुधवारेण सोमेनापि युता तथा ॥
रोहिणीबुधयुक्तापि *पूर्वविद्धा विवर्जिता ।
भक्त्या कृताऽपि मांधातः पुण्यं हन्ति पुराकृतम् ॥
गौरी विनायकोपेता रोहिणीबुधसंयुता ।
विनापि रोहिणीयोगात्पुण्यकोटिप्रदा सदा' ॥ इति ॥

इयं युगादिरपि । सा चोक्ता रत्नमालायाम्—

'माघे पञ्चदशी *कृष्णा नभस्ये च त्रयोदशी ।
तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः' ॥ इति ।

यत्तु गौडाः—

'माघस्य पौर्णमास्यां तु घोरं कलियुगं स्मृतम् ।'

इति ब्राह्मोक्तेः,

'वैशाखमासस्य च या तृतीया
नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे
त्रयोदशी, पञ्चदशी च माघे ॥'

इति विष्णुपुराणे चकारेण तमिस्रपक्षानुषङ्गेऽपि पूर्वानुरोधात्पौर्णमास्येव ज्ञेया । 'द्वे शुक्ले' इत्यादिकं तु निर्मूलमित्याहुः । तन्न ।

---

'एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धाऽपि कर्त्तव्या यदि न स्यात्परेऽहनि ॥'

इत्युक्तवासिष्ठात् । *पूर्वविद्धेति । द्वितीयावेधस्त्रिमुहूर्त्तः । परादिने च त्रिमुहूर्त्तैव ग्राह्या ।

*कृष्णेति । काकाक्षिन्यायेनोभयान्वयि । एवं शुक्लेत्यत्रापि ।

'दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् ।'

इति *भविष्यविरोधात् ।

एतेन ब्राह्मानुसारात्पूर्णिमायामेव युगादिश्राद्धं वदन् शूलपाणिः परास्तः । *तेन कल्पभेदाद्युगभेदाद्वा व्यवस्थेति तत्त्वम् । एतेन—

'कार्तिके नवमी शुक्ला माघमासे च पूर्णिमा ।'

इति बृहन्नारदीयं व्याख्यातम् । *निर्मूलत्वोक्तिर्नारदीयाज्ञानकृता । अत्र श्राद्धमुक्तं मात्स्ये—

'कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।
हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत् ॥' इति ।

भारतेऽपि—

'या मन्वाद्या युगाद्याश्च तिथयस्तासु मानवः ।
स्नात्वा हुत्वा च दत्वा च जप्त्वाऽनन्तफलं लभेत् ॥'

इति ।

श्राद्धेऽपि पूर्वाह्णव्यापिनी ग्राह्या ।

'पूर्वाह्णे तु सदा कार्याः शुक्ला मनुयुगादयः ।
दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः ॥'

इति पाद्मोक्तेः ।

'द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥'

---

*भविष्येति ।

'नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात्कृतम् ।
त्रेता सिततृतीयायां वैशाखे समपद्यत ॥'

इति पूर्वेण—

'कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः ॥'

इत्युत्तरेण च वचनेन संश्लिष्टकालत्वादिति भावः । दर्शेपूर्णिमायां वा युगादित्वं व्यवस्थापयति—*तेनेति । *निर्मूल-

इति हेमाद्रौ नारदीयवचनाच्च । दीपिकाऽपि—

'कर्मतिथयः पूर्वाह्णिकाः स्युः सिते विज्ञेया अपराह्णिकाश्च बहुले' इति । स्मृत्यर्थसारेऽपि मन्वादिश्राद्धेषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या, कृष्णपक्षेऽपराह्णव्यापिनी' इति ।

दिवोदासीये गोभिलः—

'वैशाखस्य तृतीयां यः पूर्वविद्धां करोति वै ।
हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा ॥' इति ॥

गोविन्दार्णवेऽप्येवम् । तेनेयं पूर्वाह्णव्यापिनी । दिनद्वये तत्त्वे *परैवेति धर्मतत्त्वविदो हेमाद्र्यादयः । अनन्तभट्टस्तु—

'सवैधृतिव्यतीपातो युगमन्वादयस्तथा ।
सन्मुखा उपवासे स्युर्दानादावन्तिमाः स्मृताः ॥'

इत्याह । दानादाविति *श्राद्धसंग्रहः । उपवासस्त्वग्रे वक्ष्यते । हेमाद्रावप्येवम् । माधवस्तु व्यतीपातः श्राद्धेऽपराह्णव्यापी ग्राह्य इत्याह । स्मृत्यर्थसारे तु कुतुपकालयोगीत्युक्तम् । यत्तु मार्कण्डेयः—

'शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षेऽपराह्णे हि रौहिणं तु न लङ्घयेत् ॥'

रौहिणो=नवमो मुहूर्तः,

*अत्र शुक्लपक्षयुगादिश्राद्धं *पूर्वाह्णे कार्यमिति शूल-

---

स्योक्तिरिति । ब्राह्मस्येत्यादि । *परैवेति । कर्मकालशास्त्रं बाधित्वेत्यादि । *श्राद्धेति । पौर्वाह्णिकत्वेऽप्यपराह्णावच्छेदेन कार्यमिति भावः । सिद्धान्तमाह—*अत्रेति । *पूर्वाह्ण इति । "शुक्लपक्षस्य" इति मार्कण्डेयवाक्येन कृष्णपक्षे श्राद्धारम्भ इव शुक्लपक्षश्राद्धसमाप्तौ रौहिणस्यैवोक्तेः ॥

दिगर्थस्तु कालापाणिः । निर्णयामृतादयस्तु कालादर्शो-ऽमापराह्णिकमुक्त्वा—'एष मन्वन्तरादीनां विनिर्णयः' इत्युक्तत्वात् "द्वे शुक्ले' इत्यादिवचनं विष्णुपूजनविषयम् । श्राद्धं त्वापराह्णिकमेवेति व्यवस्थां जगदुः । सेयं पूर्वोक्तानेकवचोविरोधात् 'पूर्वाह्णे दैविकं कुर्यात्' इत्यादिवचनादेव सिद्धे वचनवैयर्थ्याच्च स्वाच्छन्द्य-विलसितमात्रमित्युपेक्षणीया । किञ्च कालादर्शोक्ति-र्न्यायमूला वचोमूला वा ? । नाद्यः । युगादि-श्राद्धस्यामाश्राद्धविकृतित्वेन न्यायतोऽपराह्णव्याप्तावपि वचनेन तस्य बाधात् । नान्त्यः । अतिदेशादेवापराह्णप्राप्तेर्वचनवैयर्थ्यात् । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् । तेन यदि कालादर्शोक्तेः कथञ्चिच्छ्रद्धा-जाड्येन समाधित्सा, तर्हि न्यायप्राप्तकृष्णपक्षयुगादि-विषयत्वेन सा व्यवस्थापनीयेति दिक्* ।

पूर्वाह्णस्तत्र द्वेधाभक्तदिनपूर्वार्धः ।

'द्वेधाभक्तदिनांशकोऽत्र गदितः प्राह्णापराह्णौ' इति दीपिकोक्तेः । माधवादयोऽप्येवम् ।

अत्र विशेषो हेमाद्रौ भविष्ये—

'वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च ।
गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥
तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् ।
यवान्दद्याद् द्विजातिभ्यः प्रयतः प्राशयेद्यवान् ॥' इति ।

अत्र स्नानविशेषस्तत्रैव भविष्ये इमां प्रक्रम्य—

---

दिगर्थस्तु दर्शोऽश्रद्धेय एव । 'द्वे शुक्ले' इति वाक्ये युगादिशब्दे प्रसरन्ती वृत्तिर्युगादिकार्यत्वेनैव प्रसरन्तीति श्राद्धस्यापि क्रोडी-कारात् । सर्वग्रन्थेषु अमाक्षयाहादिपार्थक्येन युगादिश्राद्धातिथि-निर्णयादमातिथ्यतिदेशे मानाभावादित्यप्याहुः ।

'उदकुम्भान्सकनकान्सान्नान्सर्वरसैः सह ।
यवगोधूमचणकान्सक्तुदध्योदनं तथा ॥
ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते ॥' इति ।

देवीपुराणेऽपि—

'तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूज्य तु ।
उदकुम्भप्रदानेन शिवलोके महीयते ॥'

मन्त्रस्तु—

'एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात्तृप्यन्तु पितरोऽपि पितामहाः ॥
गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं फलान्वितम् ।
पितृभ्यः सम्प्रदास्यामि अक्षय्यमुपतिष्ठतु ॥' इति ।

अत्र च पिण्डरहितं श्राद्धं कुर्यात् ।

'अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते ॥'

इति हेमाद्रौ पुलस्त्यवचनात् । अत्र रात्रिभोजने प्रायश्चित्तमृग्विधाने—

'रात्रौ भुक्ते वत्सरे तु मन्वादिषु युगादिषु ।
(१)अभिस्ववृष्टिं मन्त्रं च जपेद्दश न पातकम् ॥' इति ।

---

(१)—"अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः । इन्द्रो यद्वज्री धृषमाणो अन्धसाऽभिनद्वलस्य परिधींरिव त्रितः ॥" इति । ऋ० अ० १ अ० ४ । अस्य व्याख्या—'ऊतयो मरुतः मदे = सोमपानेन हर्षे सति अस्य = इन्द्रस्य युध्यतो = वृत्रेण सह युध्यमानस्य पुरतः स्ववृष्टिं = स्वभूतवृष्टिमन्तं वृत्रम्, अभि = आभिमुख्येन सस्रुः = जग्मुः । [कथंभूताः] रघ्वीरिव प्रवणे । यथा गमनस्वभावा आपः निम्नदेशे गच्छन्ति । यद् = यदा अन्धसा = सोमलक्षणेनान्नेन पीतेन धृषमाणः = प्रगल्भः सन् वज्री = वज्रधानिन्द्रः बलस्य = संवृण्वतः एतत्संज्ञमसुरम् अभिनत् व्यदारयत्, अवधीदित्यर्थः । तत्र दृष्टान्तः—त्रितः परिधीनिव । देवानां हविर्लेपनिघर्षणाय अग्नेः सकाशादप्सु एकतो द्वितस्त्रित इति त्रयः

अपरार्के यमः—

'कृत्वोपवासाः सलिलं ये युगादिदिनेषु च।
दास्यन्त्यन्नादिसहितं तेषां लोका महोदयाः॥' इति।

वैशाखे मलमासे सति तत्रैव युगादिः कार्या। तथा-च हेमाद्रौ ऋष्यशृङ्गः—

'दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।
उपाकर्मणि चोत्सर्गे ह्येतादिष्टं वृषादितः॥' इति।

एतद्दशहरादिकं वृषादिसंक्रमे इष्टम्। 'कन्याचन्द्रे वृषे रवौ' इत्यादिना सौरमासोक्तेरित्यर्थः। कालादर्शेऽपि—

अब्दोदकुम्भमन्वादिमहालययुगादिषु*।

इति मलमासकर्तव्येषु परिगणनाच्च। महालयशब्देन मघात्रयोदश्युच्यत इति माधवः। स्मृतिचन्द्रिकायां तु मासद्वये कर्तव्यमित्युक्तम्।

ननु ज्येष्ठवैशाखादिशब्दाश्चान्द्रा एव मुख्याः तत्कथमनुत्कर्षोक्तिरित्यत्राह—*एतदिति। यद्यपि 'वृषे रवौ' इति सौरमुपजीव्यैव दशहरा न तु युगादिस्तथाऽपि 'एतदिष्टं वृषादितः' इति सिद्धवद्धेतुनिर्देशादेव युगादिवाक्येऽपि सौर एव मासो ग्राह्य इति भावः। *युगादिष्विति मन्वाद्युपलक्षणम्। युगादिकार्यं च युगादितिथिमध्य एव कार्यम्।

---

पुरुषा जज्ञिरे। तथा च तैत्तिरीयैः समाम्नातम्—'सोऽङ्गारेणाप अभ्यपातयत्, तत एकतोऽजायत, स द्वितीयमभ्यपातयत् ततो द्वितोऽजायत,' इति। तत्र उदकपानार्थं प्रवृत्तस्य कूपे पतितस्य प्रतिरोधायासुरैः परिधयः परिधायकाः कूपस्याच्छादकाः स्थापिताः। तान्यथा सोऽभिनत्तद्वत्।' इति श्रीमत्सायणाचार्याणाम्। अत्र यत्र यत्र मन्त्रास्तेषामर्थाश्च निर्दिष्टाः तत्र मन्त्रनिर्देशप्रयोजनं स्फुटमेव। विशेषतोऽर्थनिर्देशप्रयोजनं च जपकाले तत्तन्मन्त्रार्थज्ञानं तावदवश्यमपेक्षितम्। अन्यथा जपस्य न सम्यक् फलनिष्पत्तिरिति तज्जपस्तदर्थभावनम्' इति श्रीमत्पतञ्जलिकृतयोगसूत्रादवगम्यत इति ज्ञेयम्।

'यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम् ।

---

'मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः ।
व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया ॥'

इति स्कान्दात् । माधव इत्यस्वाचिः । महालयश्राद्धं कन्याप्रयुक्तमेव । तत्रैव—

'हंसे कन्यासु वर्षास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः ॥'

इति विधानात् ।

'सूर्ये कन्यास्थिते श्राद्धं यो न कुर्याद् गृहाश्रमी ।
शाकेनापि दरिद्रोऽपि सोऽन्त्यजत्वमुपेष्यति ॥'

इत्यादिनिषेधाच्च । तथा च यदा सिंहोपक्रमः कन्यासमाप्यः प्रथमः पक्षः, कन्योपक्रमस्तुलासमाप्यश्चरमस्तदा पूर्वत्र पञ्चम्यादिपक्षेण परत्र वा सकृत्पक्षेण कन्याभागे श्राद्धम् । यदा तु दर्शान्त्यभाग एव कन्यासंक्रमः तदनन्तरदर्शातिक्रमेण प्रतिपदि तुलासंक्रान्त्या कन्यायामाधिमासस्तदा दर्शश्राद्धवेलां यावत्सिंहव्याप्तेरधिकमास एव कन्यायां येन केनापि पक्षेण श्राद्धम् । "रोगे चालभ्ययोगेऽपि" इति वचनात् । तथा च महालयशब्दस्य तत्परत्वसम्भवेऽलं मघात्रयोदशीपरत्वेन । यत्तु—

'मासः कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयम् ॥'

इति वचनं, तन्नोत्कर्षं विधत्ते मानाभावात् । किन्तु पित्र्यमिति सामान्यतः श्रवणात् व्रीहिपाकादिश्राद्धविषयम् । तस्य शरदि विधानेनाश्विनेऽप्राप्तेरिति । महालयपदं तीर्थविशेषपरमिति केचित् । महालयविधावाश्विनादिशब्दानां चान्द्रपरत्वात्तत्पदं चिन्त्यमेवेत्यन्ये ॥

मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि*च ॥' इति ।
अपरपक्षः कृष्णपक्षो न तु महालयः । तस्य तत्र निषेधात् । मदनरत्नेऽपि मरीचिः—

'प्रतिमासं मृताहे च श्राद्धं यत्प्रतिवत्सरम् ।
मन्वादौ च युगादौ च तन्मासोरुभयोरपि ॥' इति ।

प्रतिवत्सरं क्रियमाणं कल्पादिश्राद्धमिति स एव व्याचख्यौ ।

अत्र श्राद्धाकरणे प्रायश्चित्तमुक्तमृग्विधाने—

(१)'नयस्यद्यावामन्त्रं च शतवारं तदा जपेत् ।
युगादयो यदा न्यूनाः कुरुते नैव चापि यः ॥' इति ।

अत्र समुद्रस्नानं प्रशस्तम् । तदुक्तं पृथ्वीचन्द्रोदये सौरपुराणे-

---

*मासद्वयेऽपीति । फलविशेषार्थितया मले, तत्कालावच्छिन्नजीवनरूपनिमित्तवशाच्च शुद्धे इत्यर्थः । उपवासोऽप्युक्तः ।

'कृतोपवासाः सलिलं ये युगादिदिनेषु तु ।
दास्यन्त्यन्नादिसहितं तेषां लोका महोदयाः ॥'

इति यमोक्तेः । साम्भम्=सलिलपूर्णकुम्भादिदानम् । श्राद्धा-

---

(१) "न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः । नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक् ॥" इति । ऋ० अ० १ अ० ४ । 'यस्येन्द्रस्य व्यचो व्यापनं द्यावापृथिवी द्यावापृथिव्यौ नान्वानशाते प्राप्तुमसमर्थे बभूवतुः, तथा रजसोऽन्तरिक्षलोकस्य उपरि सिन्धवः स्यन्दनशीला आपः यस्येन्द्रस्य तेजसोऽन्तमवसानं नानशुः न प्रापुः । उत अपि च सोमपानेन मदे हर्षे सति स्ववृष्टिं स्वीकृतवृष्टिं वृत्रादिं युध्यतः युध्यमानस्यास्येन्द्रस्य बलस्यान्तं वृत्रादयो न प्रापुः । अतः हे इन्द्र एकस्त्वम् अन्यत् स्वव्यतिरिक्तं विश्वं सर्वं भूनजातम् आनुषक् अनुषक्तं चकृषे । सकलमपि भूनजातं त्वदधीनमभूदिति भावः' इति । अनेन य एवमपरिमितशक्तिरीश्वरस्त्वमस्माकं विहितकर्माकरणरूपं दोषं परिहर्तुमपि समर्थोऽसीति भावोऽवसेयः ।

'युगादौ तु नरः स्नात्वा विधिवल्लवणोदधौ ।
गोसहस्रप्रदानस्य कुरुक्षेत्रे फलं हि यत् ॥
तत्फलं लभते मर्त्यो भूमिदानस्य च ध्रुवम् ॥' इति ।

अयं निर्णयः सर्वयुगादिषु बोद्धव्यः ॥ इति युगादिनिर्णयः ॥

इयमेव तृतीया परशुरामजयन्ती । सा प्रदोषव्यापिनी ग्राह्या । तदुक्तं भार्गवार्चनदीपिकायां स्कान्दभविष्ययोः—

'वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ ।
निशायाः प्रथमे यामे रामाख्यः समये हरिः ॥
स्वोच्चगैः षड्ग्रहैर्युक्ते मिथुने राहुसंस्थिते ।
रेणुकायास्तु यो गर्भादवतीर्णो हरिः स्वयम् ॥' इति ।

दिनद्वये तद्व्याप्तावंशतः समव्याप्तौ च परा, अन्यथा पूर्वैव । तदुक्तं तत्रैव भविष्ये—

'शुक्ला तृतीया वैशाखे शुद्धोपोष्या दिनद्वये ।
निशायाः पूर्वयामे चेदुत्तराऽन्यत्र पूर्विका ॥' इति ।

वैशाखशुक्लसप्तम्यां गङ्गोत्पत्तिः । तदुक्तं पृथ्वीचन्द्रोदये ब्राह्मे—

'वैशाखे शुक्लसप्तम्यां जह्नुना जाह्नवी पुरा ।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ॥' इति ।

अत्र शिष्टाचारान्मध्याह्नव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तावव्याप्तावेकदेशव्याप्तौ वा पूर्वा । युग्मवाक्यात् ॥

वैशाखशुक्लद्वादश्यां योगविशेषो हेमाद्रौ ज्योतिःशास्त्रे—

---

करणे तर्पणं ब्राह्मणभोजनं चार्थः । पृथक्वचनान्यन्यत्र । उपवा-

'पञ्चाननस्थौ गुरुभूमिपुत्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता
तिथिर्व्यतीपात इतीह योगः ॥
अस्मिंस्तु गोभूमिहिरण्यवस्त्र-
दानेन सर्वं परिहाय पापम् ।
सुरत्वमिन्द्रत्वमनामयत्वं
मर्त्याधिपत्यं लभते मनुष्यः ॥' इति ।

पञ्चाननः=सिंहः, पाशाभिधाना तिथिः=द्वादशी । करभः=हस्तः ॥

वैशाखशुक्लचतुर्दशी नृसिंहजयन्ती । सा*प्रदोषव्यापिनी ग्राह्या । तदुक्तं हेमाद्रौ नृसिंहपुराणे—

'वैशाखे शुक्लपक्षे तु चतुर्दश्यां निशामुखे ।
मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम् ॥
वर्षे वर्षे तु कर्तव्यं मम सन्तुष्टिकारणम् ॥' इति ।

दिनद्वयेऽपि तद्व्याप्त्यावंशतःसमव्याप्तौ च परा* । विषमव्याप्तौ त्वधिकव्याप्तिमती । दिनद्वयेऽप्यव्याप्तौ परा । परदिने*गौणकालव्याप्तेः सत्त्वात्पूर्वदिने च तदभावात् । यत्तु—

---

से तु पूर्वा ।

सवैधृतिर्व्यतीपातो युगमन्वादयस्तथा ।
संमुखा उपवासे स्युर्दानादावन्तिमाः स्मृताः ॥

इति वचनात् । *प्रदोषेति ।

'अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ।'

इति स्कान्दात् । जयन्तीषु जन्मकालस्यैव पूजारूपकर्मकालत्वात् । *परेति । संकल्पकाले सत्त्वात् । *गौणकालेति ।

'ततो मध्याह्नवेलायां नद्यादौ विमले जले'।

इत्युपक्रम्य—

'परिधाय ततो वासो व्रतकर्म समारभेत्'।

इति तत्रैवोक्तं, तत्संकल्परूपव्रतोपक्रमविषयम्। न त्वेतावता मध्याह्नव्यापिनी ग्राह्येति भ्रमितव्यम्। पूर्वोक्तवचनविरोधात्।

'वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके।
अवतारो नृसिंहस्य प्रदोषसमये द्विजाः'॥

इति टोडरानन्दे स्कान्दात्। "कूर्मः सिंहो बौद्धकल्की च सायम्" इति पूर्वोक्तपुराणसमुच्चयवचनाच्चेति केचित्। तत्त्वं तु पूर्ववचसामनाकरत्वेन निर्मूलत्वात्, हेमाद्रौ नृसिंहपुराणे—

'मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम्'।

इत्युपक्रम्य—

स्वातिनक्षत्रयोगे च शनिवारे तु मद्व्रतम्।
सिद्धयोगस्य संयोगे वणिजे करणे तथा॥
पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः।
सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम्॥
एतदन्यतरे योगे मद्दिनं पापनाशनम्।
केवलेऽपि प्रकर्तव्यं मद्दिने व्रतमुत्तमम्॥
अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ॥'

इत्युक्त्वा—

---

यस्तु नृसिंहपुराणे—

'वैशाखशुक्लपक्षस्य चतुर्दश्यां विवस्वति।
अस्तंगामिनि सर्वेषां पुरस्तात्स्तम्भमध्यतः॥

'ततो मध्याह्नवेलायां नद्यादौ विमले जले ।'

इत्यादिना मध्याह्न एव व्रतविधानाच्चतुर्दश्युत्तराधवणिजे करणे मध्याह्ने च स्पष्टं जन्म प्रतीयते । संध्यायां जन्म तु क्वाप्यनुक्तेर्मौर्ख्यकृतं, तद्वशान्निर्णयश्च हेय एवेति । (१)इयमेव योगविशेषेणातिप्रशस्ता । तदुक्तं तत्रैव—

'स्वातिनक्षत्रयोगे च शनिवारे च मद्व्रतम् ।
सिद्धयोगस्य संयोगे वणिजे करणे तथा ॥
पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः ।
एभिर्योगैर्विनापि स्यान्मद्दिनं पापनाशनम् ॥
सर्वेषामेव वर्णानामधिकारोऽस्ति मद्व्रते ।
मद्भक्तैस्तु विशेषेण कर्तव्यं मत्परायणैः ॥'

तथा—

'सिंहःस्वर्णमयो देयो मम सन्तोषकारकः ।'

तथा—

'विज्ञाय मद्दिनं यस्तु लङ्घयेत्पापकृन्नरः ।
स याति नरकं घोरं यावच्चन्द्रदिवाकरौ ॥

इदं च संयोगपृथक्त्वन्यायेन नित्यं काम्यं च । अथा-

---

प्रबभूव महाविष्णुर्नरसिंहाकृतिर्नृप ।
तस्यां व्रतं नरैः कार्यं महाविष्णोरतिप्रियम् ॥'

विवस्वत्यस्तङ्गामिनीति सायाह्नलाभः । भविष्ये च—

'अवतारो नृसिंहोऽभूत् त्रेतायां चादिकल्पके ।
सायंकाले सदसतो रक्षोदमनकारणात् ॥' इति ।

स गौणः । प्रदोषस्य मुख्यकालत्वेन तत्पूर्वस्य सायाह्नस्यैव बहुपु गौणत्वदर्शनात् । वस्तुतस्तु—

---

( १ ) क्वचित्पुस्तके 'तथा' इत्याधिकम् ।

त्र विशेषः—मध्याह्ने मृद्गोमयतिलामलकस्नानं कृत्वा—

'नृसिंह देवदेवेश तव जन्मदिने शुभे ।
उपवासं करिष्यामि सर्वभोगविवर्जितः ॥'

इति मन्त्रेण संकल्पं कृत्वा आचार्यं वृत्वा सायंकाले—

'हैमीं तु तत्र सन्मूर्तिः स्थाप्या*लक्ष्म्यास्तथैव च ।
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥
यथाशक्ति तथा कुर्याद्वित्तशाठ्यविवर्जितः ॥'

इत्युक्तां नृसिंहमूर्तिं शक्त्या कृतं सुवर्णसिंहं च कलशोपरि सम्पूज्य रात्रौ जागरणं कृत्वा प्रातः पुनः सम्पूज्य—

---

त्रिमुहूर्त्तं प्रदोषः स्याद्भानावस्तङ्गते सति ।

इत्युक्तः प्रदोषः । भविष्ये च सायंकालो न तु सायाह्नः । स च—

'नक्षत्रदर्शनात्संध्या सायं तत्परतः स्थितम् ।'

इति लक्षितः । नक्षत्रदर्शनं च घटीत्रयात्मकः कालः ।

'सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः ।'

इत्युक्तेः । अस्तङ्गामिनीत्यस्यापि अयमेवार्थः । एवं च प्रदोषसायंकालशब्दाभ्यां सायंसंध्योर्ध्वं घटीत्रयं जन्मकालः तत्पूर्वः सायान्हस्तु पूर्वोक्तयुक्त्या गौणकाल इति । *लक्ष्म्या इति । लक्ष्मीनृसिंहाभिप्रायम् । प्रातःकृत्यानन्तरं सूर्यादिभ्यो जन्माष्टम्यां वक्ष्यमाणेन मन्त्रेण व्रतं निवेद्याचम्य प्राणानायम्य सजलं ताम्रपात्रं गृहीत्वा संकल्पं कुर्यात् ।

'नियमं च प्रकुर्वीत दन्तधावनपूर्वकम् ।'

इति नारसिंहात् । दन्तधावनशब्दः प्रातःकृत्योपलक्षणम् । दन्तधावनं च तृणपर्णादिना द्वादशगंडूषैर्वा कार्यम् । उपवासदिने काष्ठनिषेधात् । व्रतिना च मिथ्याभाषणपाखण्ड्यादिसंभाषणं नि-

'नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते ।
अनेनार्घ्यप्रदानेन सफलाः स्युर्मनोरथाः ॥'

इत्याचार्याय दत्त्वा—

'मद्वंशे ये नरा जाता ये जनिष्यन्ति चापरे ॥
तांस्त्वमुद्धर देवेश दुस्तराद्भवसागरात् ।
पातकार्णवमग्नस्य व्याधिदुःखाम्बुवारिभिः ।
तीव्रैश्च परिभूतस्य महादुःखगतस्य मे ॥
करावलम्बनं देहि शेषशायिन् जगत्पते ।
श्रीनृसिंह रमाकान्त भक्तानां भयनाशन ॥
क्षीराम्बुनिधिवासिस्त्वं चक्रपाणे जनार्दन ।
व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ॥'

---

राकार्यम् ।

'व्रतस्थेन न कर्त्तव्या संगतिः पापिभिः सह ।'

इति वचनात् । संकल्पमन्त्रश्च—

'श्रीनृसिंह महोग्रस्त्वं दयां कृत्वा ममोपरि ।
अद्याहं च विधास्यामि व्रतं निर्विघ्नतां नय ॥' इति ।

ततो मध्याह्ने नद्यादौ मृद्गोमयतिलामलकैः स्नात्वा नित्यकृत्यं कृत्वा गृहमागच्छेत् ।

मध्याह्ने संकल्पलिखनं चानुकल्पः । अन्यथा 'नियमं च प्रकुर्वीत' इत्यादिना संकल्पमभिधाय व्रतस्थेनेत्यादिना मिथ्यालापादिवर्जनं च प्रदर्श्य ततो मध्याह्नवेलायामित्याद्यभिधानविरोधात् । 'नित्यकर्म समाचरेत्'इति पाठे नित्यं=मध्याह्नसंध्यादि । ततो गोमयेनोपलिप्तेऽष्टदलं कृत्वा तत्र कलशं संस्थाप्य प्रतिमां हैमीं पलतदर्धतदर्धमितां संस्थाप्य नूतनायामग्न्युत्तारणप्राणप्रतिष्ठे कृत्वा मूलमन्त्रेण वैदिकेन नाम्ना वाऽऽवाहनादि कृत्वा पञ्चामृतेन शुद्धोदकेन च संस्नाप्य यज्ञोपवीतवस्त्रे दत्त्वा आचमनं दद्यात् ।

'स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।'

इत्युक्तेः ।

'चन्दनं शीतलं दिव्यं चन्द्रकुंकुममिश्रितम् ।
ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर ॥'

चन्दनम् ।

'कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो ।
पूजयामि नृसिंह त्वां लक्ष्म्या सह नमोऽस्तु ते ॥'

पुष्पम् ।

'कालागुरुमयं धूपं सर्वदेवसुवल्लभम् ।
करोमि ते महाविष्णो सर्वकामसमृद्धये ॥'

धूपम् ।

'दीपः पापहरः प्रोक्तस्तमोराशिविनाशनः ।
दीपेन लभ्यते तेजस्तस्माद्दीपं ददामि ते ॥'

दीपम् ।

'नैवेद्यं सुखदं चारु भक्ष्यभोज्यसमन्वितम् ।
ददामि ते रमाकान्त सर्वपापक्षयं कुरु ॥'

नैवेद्यम् । ततः फलं ताम्बूलं दक्षिणां च दद्यात् । ततोऽर्घ्यम् ।

तत्र मन्त्रः—

'नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते ।
अनेनार्घ्यप्रदानेन सफलाः स्युर्मनोरथाः ॥'

ततो नीराज्य पुष्पाञ्जलीन्दत्त्वा स्तोत्रादिना स्तुत्वा प्रार्थयेत् ॥

तत्र मन्त्रः—

'पीताम्बर महाबाहो प्रल्हादभयनाशकृत् ।
यथाभूतेनार्चनेन यथोक्तफलदो भव ॥'

ततो रात्रौ गीतवाद्यपुराणश्रवणादिभिर्जागरणं कृत्वा पुनः प्रातः संपूज्य ब्राह्मणान्तदुद्दिश्य भोजयित्वा मूर्त्तिं ब्राह्मणाय दद्यात् । मन्त्रः—नृसिंहाच्युतेति ग्रन्थे । गोभूतिलहिरण्यशय्यादि

इति प्रार्थयेदिति संक्षेपः* ॥

वैशाखपौर्णमास्यां विशेषोऽपरार्के जाबालिनोक्तः—

'शृतान्नमुदकुम्भं च वैशाख्यां च विशेषतः ।
निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ॥
सुवर्णतिलयुक्तैस्तु ब्राह्मणान्सप्त पञ्च च ।
तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति ॥' इति ।

उदकुम्भदानमन्त्रस्त्वक्षय्यतृतीयाप्रकरणे उक्तः ।

भविष्येऽपि—

'वैशाखी कार्तिकी माघी तिथयोऽतीव पूजिताः ।
स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन ॥'

अत्र कृष्णाजिनदानं कार्यम् । तथा च विष्णुः—

'कृष्णाजिने तिलान्कृष्णान्हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥' इति ।

इति श्रीरामकृष्णभट्टसूरिसूनुकमलाकरभट्टकृते कालनिर्णयसिन्धौ वैशाखमासः समाप्तः ॥

---

दत्त्वा प्रार्थयेत् 'मद्वंशे ये नरा' इत्यादि । एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि उपहारादिकं सर्वमाचार्याय निवेदयेत् ।

'दक्षिणाभिः सुसंतोष्य ब्राह्मणांस्तु विसर्जयेत् ।
मध्यान्हे तु समायुक्तो नरो भुञ्जीत बन्धुभिः ॥' इति ॥

यत्तु मध्यान्हे नृसिंहजन्म, जयन्तीषु तत्काल एव पूजाकालः, तत्कालीना च तिथिरिति, तदसत् । मध्याह्नः प्रातरेव वा व्रतोपक्रमकालः मध्याह्नस्तु व्रताङ्गस्नानविशेषकाल इत्यभिप्रायेणाह-*संक्षेप इति । नृसिंहजयन्तीनवरात्रं महोदधौ—

'षष्ठ्यामारम्भणं कार्यं चतुर्दश्यां समापनम् ।
नवरात्रमिति प्रोक्तं नृसिंहस्य रमेशितुः ॥' इति ।

इति वैशाखः ।

वृषसंक्रान्तौ पूर्वाः षोडश घटिकाः पुण्यकालः। रात्रौ संक्रमे सति प्रागेवोक्तम्॥

ज्येष्ठशुक्लतृतीयायां रम्भाव्रतमुक्तं माधवीये भविष्ये–

'भद्रे कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम्।
ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा॥' इति।

सा पूर्वविद्धा ग्राह्या।

'*बृहत्तपा तथा रम्भा*सावित्री*वटपैतृकी।
*कृष्णाष्टमी च भूता च कर्तव्या*संमुखी तिथिः॥'

इति स्कान्दोक्तेः॥

*ज्येष्ठशुक्लदशमी दशहरा। तदुक्तं हेमाद्रौ ब्राह्मे—

---

ज्येष्ठशुक्लप्रतिपदि दशाश्वमेधस्नानम्।

'ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम्।
दशाश्वमेधके स्नात्वा मुच्यते सर्वपातकैः।'

इतिकाशीखण्डात्। *बृहत्तपा=श्रावणकृष्णद्वितीया। *सावित्री=तद्व्रतसंबन्धिपूर्णिमा। *वटपैतृकी=तद्व्रतसंबन्ध्यमावास्या। *कृष्णाष्टमी=कृष्णपक्षाष्टमी। *सम्मुखी=सायाह्नव्यापिनी। त्रिमुहूर्त्ताभावे तु परा।

*ज्येष्ठेति। दशम्याः श्रीगङ्गायाश्च क्रमेण दशहरात्वमुक्तम्। दशपापानि मनुनोक्तानि—

'पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥
अदत्तानामुपादानं हिंसा चैवाविधानतः।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम्॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्।
वितथाऽभिनिवेशश्च मानसं त्रिविधं स्मृतम्॥' इति।

'ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥' इति ।

वाराहेऽपि—

'दशमी शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि ।
अवतीर्णा यतः स्वर्गात् हस्तर्क्षे च सरिद्वरा ॥
हरते दशपापानि तस्माद्दशहरा स्मृता ॥' इति ।

स्कान्दे तु दशयोगा उक्ताः ।

*'ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
व्यतीपाते*गरानन्दे कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते' ॥ इति ।

*अत्र बुधभौमयोः कल्पभेदेन व्यवस्था । इयं च यत्रैव योगबाहुल्यं सैव ग्राह्या । योगाधिक्ये फलाधिक्यात् । ज्येष्ठे मलमासे सति तत्रैव दशहरा कार्या न तु शुद्धे* ।

---

*ज्येष्ठे इति । ज्येष्ठश्चान्द्रमानेन न तु सौरमानेन । 'वृषे रवौ' इत्यनेन पौनरुक्त्यापातात् । 'वृषे रवौ' इति पुण्यतमत्वार्थम् । नन्वेवं 'दशहरासु' इत्यनुक्तपूर्ववाक्यस्य का गतिः ? दशहरास्वरूपस्य सौराघटितत्वादिति चेन्न । अधिमासे दशहरासु तत्तन्नक्षत्रयोगस्यैव वृषस्थरवेरपि लाभात्तत्रापि सा कार्येत्यर्थात् । अत एव दशहरास्विति अनेकसमुदायाभिप्रायं बहुवचनम् । अन्यथा तद्गतदशम्या एकत्वात्तदनुपपत्तेः । एतच्च [illegible] महाषष्ठीपदं तदितरालभ्ययोगस्य युगादिपदं च मन्वादीनामुपलक्षणम् । न च बुधहस्तयोग एवानन्द इति कथं पृथगुक्तम्, एवं हस्तस्य दिननक्षत्रस्य कन्याचन्द्राविनाभाव एवेति वाच्यम् । प्रवृत्तिनिमित्तभेदेन तद्भेदात् । बुधनक्षत्रयोः प्रवृत्तिनिमित्तमेकैकमात्रवृत्ति आन[illegible] । एवं हस्तस्य शुक्लपक्षाविनाभावेऽपि । *गरं करणभेदः । 'कुजेऽहनि' इत्युक्तेराह—*अत्रेति । *न तु शुद्धे इति ।

'दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु' ।
इति हेमाद्रौ कृष्णशङ्कोक्तेः । तथा स्कान्दे—
'यां*काञ्चित्सरितं प्राप्य दद्याद्दर्भ तिलोदकम् ।
मुच्यते दशभिः पापैः स महापातकोपमैः' ॥
अत्र विशेषः काशीखण्डे—
'ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम् ।
दशाश्वमेधके स्नात्वा मुच्यते सर्वपातकैः ॥
एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः ।
आशुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत् ॥'
तथा—
'लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ ।
दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ॥'
तथा भविष्योत्तरकाशीखण्डयोः—
'निशायां जागरं कृत्वा समुपोष्य च भक्तितः ।
पुष्पैर्गन्धैश्च नैवेद्यैः फलैश्च दशसङ्ख्यया ॥
तथा दीपैश्च ताम्बूलैः पूजयेच्छ्रद्धयाऽन्वितः ।
स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः ॥
दशप्रसृतिकृष्णांश्च तिलान्सर्पिश्च वै जले ।
सक्तुपिण्डान् गुडपिण्डांस्तद्वच्च दशसङ्ख्यया ॥
ततो गङ्गातटे रम्ये हेम्ना रूप्येण वा तथा ।
गङ्गायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीम् ॥
संस्थाप्य पूजयेद्देवीं तदलाभे मृदाऽपि च ।
अथ तत्राप्यशक्तश्चेल्लिख्योत्पिष्टेन वै भुवि ॥
वक्ष्यमाणेन मन्त्रेण कुर्यात्पूजां विशेषतः ।

---

'गुडेऽपि' इति तु कृत्यरत्नावली । *यां कांचिदिति । श्रीगङ्गाया असत्वे ।

नारायणं महेशं च ब्रह्माणं भास्करं तथा ॥
भगीरथं च नृपतिं हिमवन्तं नगेश्वरम् ।
गन्धपुष्पादिभिः सम्यग्यथाशक्ति प्रपूजयेत् ॥
दशप्रस्थांस्तिलान्दद्याद्दशविप्रेभ्य एव च ।
दशप्रस्थान्यवान्दद्याद्दशसङ्ख्यागवीस्तथा ॥'

प्रस्थः=षोडशपलानि । पलं तु 'मुष्टिमात्रं पलं स्मृतम्' इति भट्टार्थ्ये उक्तम् ।

'मत्स्यकच्छपमण्डूकमकरादिजलेचरान् ।
हंसकारण्डवबकचक्रटिट्टिभसारसान् ॥
कारयित्वा यथाशक्ति स्वर्णेन रजतेन वा ।
तदलाभे पिष्टमयानभ्यर्च्य कुसुमादिभिः ॥
गङ्गायां प्रक्षिपेद्दाऽयदीपांश्चैव प्रवाहयेत् ।
पुष्पाद्यैः पूजयेद्गङ्गां मन्त्रेणानेन भक्तितः ॥
'ॐनमः शिवायै नारायण्यै दशहरायै गङ्गायै नमो नमः ।'
इति मन्त्रं तु यो मर्त्यो दिने तस्मिन्दिवानिशम् ।
जपेत्पञ्चसहस्राणि दशधर्मफलं लभेत्' ॥

काशीखण्डे त्वन्यो मन्त्र उक्तः—

'नमः शिवायै प्रथमं नारायण्यै पदं ततः ।
दशहरायै पदमिति गङ्गायै मन्त्र एष वै ॥
स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः ।
पूजा दानं जपो होमस्तेनैव मनुना स्मृतम् ।' इति ।

अत्र गङ्गास्तोत्र(१)पाठमपि दशवारं कुर्यात् । तदुक्तं

१—तच्च स्तोत्रं तत्पाठविधिश्च उक्तो धर्मसिन्धौ । यथा—'ब्रह्मोवाच-नमः शिवायै गङ्गायै शिवदायै नमो नमः । नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ॥ नमस्ते विश्वरूपिण्यै ब्रह्ममूर्त्यै नमो नमः । सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते । स्थाणुजङ्गमसम्भूतविषहन्त्र्यै नमो

भाविष्ये—

'तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु दरिद्रो वाऽपि चाक्षमः ॥
सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः ॥' इति ।

---

नमः । भोगोपभोगदायिन्यै भोगवत्यै नमो नमः । मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमः सदा ॥ नमस्त्रैलोक्यभूषायै जगद्धात्र्यै नमो नमः । नमस्त्रिशुक्लसंस्थायै तेजोवत्यै नमो नमः ॥ नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः । नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥ बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमो नमः । नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ॥ पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः । शान्तायै च वरिष्ठायै वरदायै नमो नमः ॥ उस्रायै सुखदोग्ध्र्यै च सञ्जीविन्यै नमो नमः । ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ॥ प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोऽस्तु ते । सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ॥ शरणागतदीनार्त्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः । परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा ॥ गङ्गे ममाग्रतो भूया गङ्गे मे देवि पृष्ठतः । गङ्गे मे पार्श्वयोरेहि त्वयि गङ्गेऽस्तु मे स्थितिः ॥ आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे । त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ॥ गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे । य इदं पठति स्तोत्रं भक्त्या नित्यं नरोऽपि यः ॥ शृणुयात् श्रद्धया युक्तः कायवाक्चित्तसम्भवैः । दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते ॥ सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते । ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥ तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः । यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥ सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः । अदत्तानामुपादानं हिंसा चैवाविधानतः ॥ परदारोपसेवा च कायिकं त्रिविधं स्मृतम् । पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ॥ असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् । परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ॥ वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् । एतानि दश पापानि हर त्वं मम जाह्नवि ॥ दशपापहरा यस्मात्तस्माद्दशहरा स्मृता । त्र्यधिकांस्त्रिशतं पूर्वान् पितॄनथ पितामहान् ॥ उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता ॥ नमो भगवत्यै दशपापहरायै गङ्गायै नारायण्यै रेवत्यै शिवायै दक्षायै अमृ-

स्तोत्रं च प्रतिपदादिदशमीपर्यन्तं दिनवृद्धिसंख्यया पठनीयमिति शिष्टाः। अत्र सर्वोऽपि विस्तरः स्तोत्रादि च भट्टकृतत्रिस्थलीसेतोरवधेयः। विस्तरभीतेस्तु न लिख्यते। एवं कुर्वतः फलमुक्तं काशीखण्डे—

'एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः।
उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते॥
सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते॥' इति।

अस्यां सेतुबन्धरामेश्वरस्य प्रतिष्ठादिनत्वाद्विशेषेण पूजा कार्या। तदुक्तं स्कान्दे सेतुमाहात्म्ये—

'ज्येष्ठे मासे सिते पक्षे दशम्यां बुधहस्तयोः।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ॥
दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम्।
रामो वै स्थापयामास शिवलिङ्गमनुत्तमम्॥' इति।

इति दशहरा॥

ज्येष्ठशुक्लैकादशी निर्जला। तत्र निर्जलमुपोष्य विप्रेभ्यो जलकुम्भान्दद्यादिति निर्णयामृते उक्तम्। मदनरत्ने स्कान्दे—

'ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा।
निर्जलं समुपोष्यात्र जलकुम्भान्सशर्करान्॥
प्रदाय विप्रमुख्येभ्यो मोदते विष्णुसन्निधौ।'

---

तायै विश्वरूपिण्यै नन्दिन्यै ते नमो नमः॥ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलामत्यभीष्टाम्। विधिहरिहररूपां सेन्दुकोटीरजुष्टां कलितसितदुकूलां जाह्नवीं तां नमामि॥ आदावादिपितामहस्य निगमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम्। भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं देवी कल्मषनाशिनी भगवती भागीरथी दृश्यते॥ गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि। मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति॥' इति॥

ज्येष्ठपौर्णमास्यां सावित्रीव्रतम् । तदुक्तं स्कान्दभविष्ययोः—

'ज्येष्ठे मासि सिते पक्षे द्वादश्यां रजनीमुखे ।'

इत्युपक्रम्य—

'व्रतं त्रिरात्रमुद्दिश्य दिवारात्रिं स्थिरा भवेत् ।'

इति अन्तेऽप्युपसंहृतम् ।

'ज्येष्ठे मासि सिते पक्षे पूर्णिमायां तथा व्रतम् ।
चीर्णं पुरा महाभक्त्या कथितं ते मया नृप ॥' इति ।

दाक्षिणात्याश्चैतदेवाद्रियन्ते । एतच्चामावास्यायामप्युक्तं निर्णयामृते भविष्ये—

'अमायां च तथा ज्येष्ठे वटमूले महासती ।
त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ॥'

मदनरत्ने त्विदं वाक्यम्—'पञ्चदश्यां तथा ज्येष्ठे' इति पठित्वा ज्येष्ठपौर्णमास्यामुक्तम् ।

'अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया ।
अयाचितं चतुर्दश्याममायां समुपोषणम् ॥' इति ।

तत्तु पाश्चात्या आद्रियन्ते । हेमाद्रिसमयोद्द्योतादिषु तु भाद्रपदपूर्णिमायामुक्तम् । तत्तु नेदानीं प्रचरति । गौडास्तु—

'मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत् ।
ज्येष्ठशुक्लचतुर्दश्यां सावित्रीमर्चयन्ति याः ॥
वटमूले सोपवासा न ता वैधव्यमाप्नुयुः ॥

इति वचनाच्चतुर्दश्यां प्रदोषे व्रतम् । दिनद्वये तद्व्याप्तौ परैवेत्याहुः । तन्निर्मूलम् । अत्र पूर्णिमामावास्ये पूर्वविद्धे ग्राह्ये ।

'भूतविद्धा न कर्तव्या अमावास्या च पूर्णिमा ।

वर्जयित्वा नरश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥'

इति ब्रह्मवैवर्तात् । स्कान्देऽपि—

'भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् ।
वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन ॥' इति ।

मदनरत्ने ब्रह्मवैवर्तेऽपि—

'प्रतिपत्पञ्चमी भूतसावित्री *वटपूर्णिमा ।
नवमी दशमी चैव नोपोष्याः परसंयुताः ॥' इति ।

यदा त्वष्टादशघटिका चतुर्दशी तदा परा ग्राह्या ।

'पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः ।
नाड्योऽष्टादश भूतस्य स्युश्चेत्तत्र परेऽहनि ॥

इति माधवः । *वस्तुतस्तु—

'भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ।'

इत्यस्य व्रतान्तरे सावकाशत्वाद्विशेषप्रवृत्तपूर्वविद्धा-

---

*सावित्री=तद्व्रतसंबन्ध्यमावास्या । *वटपूर्णिमा=त-द्व्रतसंबन्धिपूर्णिमा ॥ नन्वेवं षण्मुहूर्तपरिमितपञ्चमीवेधव-त्यां षष्ठ्यां स्कन्दव्रतमपि न स्यात् । 'नागो द्वादशनाडीभिः' इति वाक्येन षण्मुहूर्तमितपञ्चम्या दूषकत्वात् । किंच स्कन्दव्रते तिथिक्षये पूर्वेति माधवादिग्रन्थोऽसंगतः । त्रिमुहूर्ताऽधिकक्षयाभा-वेनोत्तरदिने तादृशविद्धायास्त्रिमुहूर्तसत्त्वावश्यम्भावेन

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धाऽपि कर्त्तव्या यदि न स्यात्परेऽहनि ॥

इति वासिष्ठवचनाविषयत्वादित्यत्राह—*वस्तुतस्त्विति ॥ 'नागो द्वादश'इत्यादेर्दूषकताऽनुवादेन नाडीविशेषविधायकत्वं लाघ-वात् । वेधविशिष्टदूषकताविधाने गौरवात् । तथा च यत्र व्रते पञ्चमीविद्धा षष्ठी निषिद्धा तद्विषयकमेतत् । स्कन्दव्रते पञ्चमीवि-

विधायकवचनेन तस्य बाधाद्दृष्टादर्शनादिविषयेऽपि पूर्वैवे-ष्टयं पन्थाः साधुः । *अत्र पूर्णिमानुरोधेनैव यथा त्रि-रात्रसंपत्तिर्भवति तथा त्रयोदश्यादि ग्राह्यम् । तस्याः प्रधानत्वात्* । अयं निर्णयोऽमायामपि ज्ञेयः । पारणं तु

द्धाया ग्राह्यत्वात् तत्र पञ्चमीवेधस्यादूषकत्वात् । षण्मुहूर्त्तपञ्चमी-युतायामपि तत्कर्त्तव्यमेव तद्वत् । यत्र व्रते चतुर्दशीविद्धा निषिद्धा तद्विषयकतया सावित्रीव्रते च—

बृहत्तपा तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी च भूता च कर्त्तव्या संमुखी तिथिः ॥

इति पूर्वविद्धाविधानेन तस्या ग्राह्यत्वात्तत्र चतुर्दशीवेधो न दूषक इत्यर्थः ॥ उक्तवासिष्ठं च परेऽह्नि एकभक्तादिकाले मध्याह्नादौ षष्ठ्याद्यभावे सामान्यतो निषिद्धाया नागविद्धायाः प्रतिप्रसवार्थ-मिति स्मर्त्तव्यम् । ननु केचन सोपपदाः त्रिरात्रादिशब्दाः । यथा सावित्रीत्रिरात्र–बिल्वत्रिरात्र–गोत्रिरात्र–दुर्गानवरात्रादिमध्यगाः । तानि कर्मनामधेयान्येव तत्तद्देवतातत्तत्कालसंबन्धयोः प्रमाणान्तर-गोचरत्वेन प्रवृत्तिनिमित्तसंभवात् । ननु निरुपपदास्त्रिरात्रनवरात्रादि-शब्दाः । बहुव्रीहौ समासान्ताऽसंभवेनावश्यकसमाहारत्वेन 'न त्रिरा-त्रमुपवसेत् नवरात्रे विशेषतः' इत्यादौ अत्यन्तसंयोगार्थकाद्वितीयया सप्तम्या वा गुणविधौ संभवति लक्षणया नामधेयत्वानौचित्यात्, त्रयोदश्यादितिथित्रये च प्राप्ते त्रिरात्रादिसामान्ये विशेषविधयः गुणविधित एव त्रिरात्रादिशब्दे रात्रिशब्दस्तिथिपरः । एवं च यत्र चरमतिथिकृत्यमेव प्रधानं तिथ्यन्तरकृत्यं त्वङ्गं तत्र साङ्गप्रधानप्रयोगः । तावत्कालिक इति प्रधान-तिथ्यनुरोधेनेतरतिथिग्रहोऽयुक्तः । पूर्वापरतिथिकृत्याङ्गकैकादशी-व्रतादौ तु त्रिरात्रादिव्यवहारविरहस्त्वनादेस्तस्यापर्यनुयोज्यत्वा-त् । प्रकृते तु तिथित्रयकृत्यं प्रधानमतः कथमित्यत्राह—*अत्रेति । *प्रधानत्वादिति । यद्यपि तिथित्रयकृत्यं प्रधानं तथाऽपि वट-

पूर्णिमान्ते कार्यम् ॥

अत्र स्त्रीव्रतेषु विशेषः परिभाषायामुक्तः । अत्र विशेषो भविष्ये—

'गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर ।
ततो*वंशमये पात्रे वस्त्रयुग्मेन वेष्टित ॥
सावित्रीप्रतिमां कुर्यात्सौवर्णीं वापि मृन्मयीम् ।
सार्धं सत्यवता साध्वीं फलनैवेद्यदीपकैः ॥
रजन्या कण्ठसूत्रैश्च शुभैः कुङ्कुमकेशरैः ॥'

पूजयेदिति शेषः । रजनी=हरिद्रा । कण्ठसूत्रं=सौभाग्यतन्तुः ।

'सावित्र्याख्यानकं वापि वाचयीत द्विजोत्तमैः ।
रात्रौ जागरणं कृत्वा प्रभाते विमले ततः ॥
तामपि ब्रह्मणे दत्त्वा प्रणिपत्य क्षमापयेत् ॥'

मन्त्रस्तु—

'सावित्रीयं मया दत्ता सहिरण्या महासती ।
ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम् ॥
व्रतेनानेन राजेन्द्र वैधव्यं नाप्नुयात्क्वचित् ॥' इति ॥

ज्येष्ठपौर्णमास्यां विशेष आदित्यपुराणे—

'ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशेषतः ।
अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः ॥'

विष्णुरपि—

---

पूर्णिमा वटपैतृकीत्यादिसमाख्यव त्रयोदशीचतुर्दश्योरुपवासानुकल्पविधानं च पूर्णिमादेर्निर्णयेऽपजीव्यत्वरूपं प्राधान्यं द्योतयति । तथा निर्णीतपूर्णिमादेरव्यवहितपूर्वतिथ्योरनुकल्पवाक्ये त्रयोदश्यादिशब्देन ग्रह इत्यर्थः । *वंशमये पात्रे । पात्रं च सप्तधान्यपूर्णं कार्यम् । 'सप्तधान्यभृतं कार्यम्'इति कथायामुक्तेः ॥

'ज्यैष्ठी ज्येष्ठायुता चेत्स्यात्तस्यां छत्रोपानत्प्रदानेन नरो नराधिपत्यमाप्नोति' इति ।

हेमाद्रौ ज्योतिषे—

'ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।

पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्तिता ॥' इति ।

इयं मन्वादिरपि । सा पौर्वाह्णिकी ग्राह्या । विशेषस्तु चैत्रे उक्तः । तथाऽपरार्के वामनपुराणे—

'उदकुम्भाम्बुदानं च *तालवृन्तं सचन्दनम् ।

त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि तु ॥' इति ।

इति कमलाकरभट्टकृते निर्णयसिन्धौ ज्येष्ठमासः ॥

मिथुनसंक्रान्तौ पराः षोडश घटिकाः पुण्यकालः । रात्रौ तु प्रागेवोक्तम् । आषाढशुक्लद्वितीयायां रथोत्सवः । तदुक्तं तिथितत्त्वे स्कान्दे—

'आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।

तस्यां रथे समारोप्य रामं वै *भद्रया सह ॥

यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान्बहून् ॥'

तथा—

'ऋक्षाभावे तिथौ कार्या यात्राऽसा प्रीयते मम ॥'

---

'इहामुत्रातपत्राणां कुरु मे केशव प्रभो ।

छत्रं त्वत्प्रीतये दत्तं ब्राह्मणाय मया सह ॥'

छत्रमन्त्रः ।

'उपानहौ प्रदास्यामि कण्टकादिनिवारणे ।

सर्वस्थानेषु सुखदे अतः शान्तिं प्रयच्छ मे ॥'

उपानन्मन्त्रः ।

*तालवृन्तं=तालव्यजनः ॥

इति ज्येष्ठः ॥

आषाढशुक्लदशमी पौर्णमासी च मन्वादिः । सा च पूर्वाह्णव्यापिनी ग्राह्येति प्रागुक्तम् । आषाढशुक्लद्वादश्यामनुराधायोगरहितायां पारणं कुर्यात् । तदुक्तं भविष्ये—

'आभाकासितपक्षेषु मैत्रश्रवणरेवती* ।
सङ्गमे न हि भोक्तव्यं द्वादश द्वादशीर्हरेत् ॥'

'आषाढभाद्रपदकार्तिकशुक्लद्वादशीष्वनुराधाश्रवणरेवतीयोगे पारणं न कुर्यादिति । अत्र यद्यप्येतावदेवोक्तं तथाप्यनुराधाप्रथमपाद एव वर्ज्यः । तदुक्तं विष्णुधर्मे—

'मैत्राद्यपादे स्वपितीह विष्णुः,
पौष्णान्त्यपादे प्रतिबोधमेति ।
श्रुतेश्च मध्ये परिवर्तमेति
सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यम् ॥' इति ।

*वस्तुतस्तु*पूर्ववचनमिदं च निर्मूलमेव ॥

अत्रैव विष्णुशयनोत्सव उक्तो हेमाद्रौ ब्राह्मे—

*एकादश्यां तु शुक्लायामाषाढे भगवान्हरिः ।

---

*भद्रा=सुभद्रा ॥ *आभाकेति । गद्यं 'संजवे'इति पाठं वदताम् । रेवतीति लुप्तषष्ठीकम् । संगवे न भोक्तव्यं, प्रातर्मध्याह्नयोस्तु तद्भवत्येवेति तदर्थः । यत्र दिनं व्याप्यानुराधा द्वादशी च तत्र प्रातरेव पारणं 'सर्वेषामुपवासानाम्'इत्युक्तेः ॥ *वस्तुतस्त्विति । महानिबन्धेष्वदर्शनात् । *एकादश्यामिति । शयनादीनि निशादिवेलायां कार्याणीति ।

'निशि स्वापो दिवोत्थानं संध्यायां परिवर्त्तनम्' ।

इत्युक्तेः । तत्तन्नक्षत्रयोगस्तु नापेक्षितः तदनुक्तेः । स्वापविधिर्भविष्ये—

'महापूजां ततः कुर्याद्देवदेवस्य चक्रिणः ।
जातीकुसुममालाभिर्मन्त्रेणानेन पूजयेत् ॥

भुजङ्गशयने शेते क्षीरार्णवजले सदा ॥' इति।

कल्पतरौ यमः—

*'क्षीराब्धौ*शेषपर्यङ्के आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोः सम्पूजयेत्सदा ॥
ब्रह्महत्यादिकं पापं क्षिप्रमेवं व्यपोहति।
हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः ॥
प्रस्वापे च प्रबोधे च पूजितो येन केशवः।

टोडरानन्देऽपि स्कान्दे—

आषाढशुक्लैकादश्यां कुर्यात्स्वप्नमहोत्सवम्।'

अयं द्वादश्यामप्युक्तः

'आभाकासितपक्षेषु मैत्रश्रवणरेवती।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवाः ॥

---

'सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदम्।
विबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत ॥' इति।

भाद्रशुक्लैकादश्यां विष्णोः परिवर्त्तनमुक्तं भविष्ये—

'मासे भाद्रपदे मासि एकादश्यां दिने सिते।
कटिदानं भवेद्विष्णोर्महापातकनाशनम् ॥'

कटिदानम्=अङ्गपरिवर्त्तनम्। तत्र महापूजां कृत्वा परिवर्त्तनं प्रार्थयेत्

'परिवर्त्तस्व देवेश केशवाच्युत भो प्रभो।
त्वयैवैकादशी देव हितार्थं निर्मिता पुरा ॥' इति।

कार्त्तिकशुक्लैकादश्यां विष्णोरुत्थापनं पाद्मे—

'एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम्।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥' इति।

*क्षीराब्धावित्यादि। [illegible]। 'नक्षत्रेण युक्तः कालः' इति प्रत्ययः। पूर्णिमायामेवेति न नियमः [illegible]-

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्तनम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥
आभाकाद्येषु मासेषु*मिथुने माधवस्य च ।
द्वादश्यां शुक्लपक्षे च प्रस्वापावर्तनोत्सवाः ॥'

इति भविष्योक्तेः ।

---

णात् पूर्णिमायां तत्तन्नक्षत्रयोगस्य प्रायिकत्वाच्च । न च तदत्यन्तायोगव्यावृत्त्या योगः मानाभावात् । तस्मादिह कथंचिल्लक्षणया एकादश्यपि ग्राह्या इति । अत्राहुः—अस्तु तथा माघी सप्तमी प्रौष्ठपदी अष्टकेत्यादौ मघायुक्तः कालो=माघी यत्र मासे स माघः । माघस्येयं माघी सप्तम्यन्वयानुरोधात् । प्रथमतो नक्षत्राण् ततो मासाण् ततः शैषिकाण् कर्त्तव्यः । एवं प्रौष्ठपदीत्यत्रापि अष्टकान्वयाऽनुरोधात् । पठन्ति च ।

'नक्षत्राणं च मासाणं कृत्वा प्रौष्ठपदीपदम् ।
विशेष्यं चाष्टकारूपं शैषिकाणां प्रबोधयेत् ॥'इति ।

इह तु आषाढी कार्त्तिकी च अत्यन्तायोगव्यावृत्त्याऽऽषाढादियुक्तैव नक्षत्राणैव अनुरोधविशेषविरहात् । पौर्णमासीलाभस्तु

'आषाढशुक्लपक्षान्ते भगवान्मधुसूदनः ।
भोगिभोगे निजां मायां योगनिद्रां समाप्नुयात् ॥'

इत्युक्तेः । *मिथुने इति ॥ आषाढमात्रान्वायि । अन्यत्र बाधात् । यद्द्वादश्यां शयनाद्युक्तं तान्मिथुनार्क एवेत्यर्थ इति मयूखः । उत्सवो=जागरः ।

'आषाढशुक्लद्वादश्यां सर्वशान्तिकरं शुभम् ।
य एतेन विधानेन ज्ञात्वा वै कर्म कारयेत् ॥
स पुमान्न प्रणश्येत संसारेषु युगे युगे ॥'

तथा—

'इयं च द्वादशी देवप्रबोधार्थं तु निर्मिता ।

त्वयैषा सर्वलोकानां हितार्थं शेषशायिना ॥' इति ॥

परिवर्त्तनेऽपि द्वादश्येव ग्राह्या । एतासां रात्रिदिनसन्ध्यादिषु अनुराधाश्रवणरेवतीनां क्रमेणादिमध्यान्तभागे प्रस्वापादि कार्यम् ।

'आभाकासितपक्षेषु मैत्रश्रवणरेवती ।

आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवाः ॥'

इति भविष्यात्,

'मैत्राद्यपादे स्वपितीह विष्णुः

श्रुतेश्च मध्ये परिवर्त्तमेति ।

पौष्णावसाने च सुरारिहन्ता

प्रबुध्यते मासचतुष्टयेन ॥'

इतिनारदीयाच्च ।

'निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।'

इत्युक्तेः निशादौ नक्षत्रपादयोगाभावे नक्षत्रमात्रयोगो ग्राह्यः ।

'पादयोगो यदा न स्यात् ऋक्षेणापि तदा भवेत् ।'

इति वाराहात् ।

'विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते ।

द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥'

इति विष्णुधर्मोत्तरात् । द्वादश्यामेकदेशेनापि नक्षत्रयोगाभावे एकादश्यां त्रयोदश्यां वा तदृक्षभाग एव निशादिवेलानादरेणैव प्रस्वापादि कार्यम् ।

'अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः ।

पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत् ॥'

इति जीमूतवाहनोदाहृतवचनात् । उत्थानशयने इति परिवर्त्तनोपलक्षणम्, अहोरात्रमिति संध्यादिवेलायाः । एवं च द्वादश्यां निशाद्यादरे अन्यतिथौ च नक्षत्रपादयोगादरे च नियते सति यदा द्वादशीषु निशादेरन्यत्र तत्तदृक्षभागयोगः अन्यतिथौ च तदि-

'द्वादश्यां*सन्धिसमये नक्षत्राणामसम्भवे ।
आभाकासितपक्षेषु शयनावर्तनादिकम् ॥'
इति वाराहोक्तेश्च । द्वादश्यामित्यत्रापि पारणाऽहो-मात्रं विवक्षितम् ।

'*पारणाऽहे पूर्वरात्रे घण्टादीन्वादयन्मुहुः ।'
इति रामार्चनचन्द्रिकोक्तेः । *अत्रैकादशीद्वादश्यो-र्देशभेदेन व्यवस्था ।

---

तरनक्षत्रस्यैव योगः तदा द्वादशीषु संध्यायां प्रस्वापादि कार्य-मित्याह—*द्वादश्यामिति । निशादौ तन्नक्षत्रयोगाभावे सति शयनावर्त्तनप्रबोधाः संधिसमये=संध्यासमय एव, न तु तत्र नक्षत्रभागयोगे ।

'रेवत्यन्तो यदा रात्रौ द्वादश्यां च समागतः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥'

इति वचनात् । रेवत्यन्तविबोधग्रहणं चोपलक्षणम् । न चैतस्य श्रीरामविषयत्वमस्तु तत्र तत्र विष्णुरिति श्रवणात् । अत्र मैत्राद्यपादे इति नानावाक्येषु चतुर्थभागार्थकपादशब्दात् अनुराधारेवत्यौ चतुर्द्धा विभज्याऽऽद्यान्त्यपादयोरेव स्वापबोधौ कार्यौ श्रवणं तु त्रेधा विभज्य तन्मध्यभागे परिवर्त्तनं कार्यम् । श्रुतेश्च मध्ये परि-वर्त्तयतीति मध्यपदात् । *पारणाहे इति । वैष्णवैः पारणाह एव प्रस्वापादि क्रियते इत्यपरः पक्षः । अत्र द्वादशीपदमस्त्वेकादशी-परमित्यत्राह-*अत्रेति । "धनदश्च रमा गौरी"इत्यादिपवि-त्रारोपणप्रकरणस्थवाक्यानन्तरम्

'यस्य यस्य च देवस्य यन्नक्षत्रं तिथिस्तथा ।
तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकम् ॥'

इति वाक्यात्पवित्रारोपणदेवप्रस्वापादेर्द्वादश्यामप्यौचित्यादतो व्यवस्थेत्यर्थः । आषाढकार्त्तिकपौर्णमास्योरपि स्वापप्रबोधौ दर्शितौ

इदं च मलमासे न कार्यम् ।

'ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम् ।'

इति कालादर्शे निषेधात् । यदपि—

'एकादश्यां तु गृह्णीयात्संक्रान्तौ *कर्कटस्य वा ।
आषाढ्यां वा नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ॥'

इति हेमाद्रौ ब्रह्मवैवर्ते, तदपि मलमासेऽसति द्रष्टव्यम् ।

*'मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥'

इति तत्रैव मोहचूलोत्तरोक्तेः ॥

---

"क्षीराब्धौ शेषपर्यङ्के" इत्यादि । एकादशीमारभ्य पञ्चाहमपि प्रस्वापादि पुराणान्तरे तद्विस्तरः । *कर्कटस्येति । प्रस्वापतत्तदुत्तरकर्त्तव्यस्य चातुर्मास्यव्रतस्य मिथुन एव न्याय्यत्वात्कथमेतदित्यभिमानः । मलमासे मिथुनेऽधिकमासे न । तथा च हरिशयने मिथुने द्वादशीस्थाने कर्के द्वादशी लभ्यते तदुत्तरकर्त्तव्यचातुर्मास्यव्रते सैव संक्रान्तौ कर्कटस्येत्यनेन धर्त्तव्येत्यर्थः । वस्तुतस्तु चातुर्मास्यव्रतारम्भे चत्वारः पक्षाः । आषाढे—शुक्लैकादशी—तद्द्वादशी—तत्पौर्णमासी—कर्कसंक्रान्तिभेदात् । "एकादश्यान्तु शुक्लायाम्" इति वाक्यात् ।

'आषाढशुक्लद्वादश्यां पौर्णमास्यामथाऽपि वा ।
चातुर्मास्यव्रतारम्भं कुर्यात्कर्कटसंक्रमे ॥'

इति वाराहात् । *मिथुनस्थ इति ।

'माधवाद्येषु यद्येकमासि दर्शद्वयं यदा ।
द्विराषाढः स विज्ञेयः शेते कर्कटकेऽच्युतः ॥'

इति द्विराषाढकथनं तु व्यवस्थार्थम् ।

'मेषादिमिथुनान्तेषु यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तदावश्यं मिथुनार्के हरिः स्वपेत् ॥

*अत्रैव चातुर्मास्यव्रतारम्भ उक्तो भारते—

'आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्याद्यत्किंचिन्नियतो नरः ॥' इति ।

अस्य नित्यत्वं तत्रैवोक्तम्—

'वार्षिकांश्चतुरो मासान्वाहयेत्केनचिन्नरः ।
व्रतेन नोचेदाप्नोति किल्बिषं वत्सरोद्भवम् ॥
असम्भवे तुलार्केऽपि कर्तव्यं तत्प्रयत्नतः ॥' इति ।

तेनाषाढशुक्लैकादश्यां द्वादश्यां पौर्णमास्यां वाऽऽरम्भः । समाप्तिस्तु कार्तिकशुक्लद्वादश्यामेव । तदुक्तं हेमाद्रौ भारते—

'चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥' इति ।

अस्यारम्भः शुक्रास्तादावपि कार्यः ।

'न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वा तिथेः ।
खण्डत्वं चिन्तयेदादौ* चातुर्मास्यविधौ नरः ॥'

इति हेमाद्रौ वृद्धगार्ग्योक्तेः । *इदं च द्वितीयाद्यारम्भविषयम् । प्रथमारम्भस्तु न भवत्येव । आशौचमध्येऽपि द्वितीयाद्यारम्भो भवति ।

'अशुचिर्वा शुचिर्वापि यदि स्त्री यदि वा पुमान् ।

---

कर्कटादित्रिके वापि यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तदावश्यं मिथुनार्के हरिः स्वपेत् ॥'

इति स्पष्टमुक्तेः । *अत्रैवेति । आषाढशुक्लद्वादश्यामित्यादिवाराहाच्चत्वारः पक्षा अनुपदमुक्ताः । एकादश्यां सूतकादिना प्रतिबन्धे द्वादश्यादयः सर्वत्रापि प्रतिबन्धे त्वनारम्भ एव । 'आरब्धे सूतकं न स्यात्' इति वाक्यात् । *आदौ=आरम्भे । *इदं चेति । निषिद्धस्यास्तादेस्सामान्यतः प्रतिप्रसवे गौरवात् द्वितीयारम्भपरत्वमित्यु-

व्रतमेतन्नरः कृत्वा मुच्यते सर्वपातकैः ॥'
इति भार्गवार्चनदीपिकायां स्कान्दोक्तेः ।
'आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ।'
इति विष्णुवचनाच्च ।
यत्तु—
'*असंक्रान्तं तथा मासं दैवे पित्र्ये च कर्मणि ।
*मलमासमशौचं च वर्जयेन्मतिमान्नरः ॥'
इति हेमाद्रौ चातुर्मास्यव्रतप्रकरणे भविष्यवचनं, तत् *पूषानुमन्त्रणमन्त्रवदसम्बद्धं मध्ये पठितमिति ज्ञेयम् । *अन्यथा पित्र्यस्य पूर्वोक्तस्य विवाहादेश्च चातुर्मास्यव्रते कः प्रसङ्गः । *प्रकरणनिवेशोऽपि वा प्रथमारम्भविषयं ज्ञेयम् । केचित्तु प्रतिवर्षं चातुर्मास्यव्रतप्रयोगाणां भिन्नत्वादाशौचादिपाते द्वितीयादिप्रयोगो न भवत्येवेत्याहुः । तन्न ।
'*प्रतिवर्षं च यः कुर्यादेवं वै संस्मरन् हरिम् ।
देहान्तेऽतिप्रदीप्तेन विमानेनार्कवर्चसा ॥

---

र्थः । वस्तुतस्तु वर्षभेदेऽपि व्रतैक्ये मानाभावात्सर्वेऽपि प्रथमारम्भा एवेति । अत एव बहुषु पुस्तकेष्विदं चेत्यादिपाठो न दृश्यते । *असंक्रान्तम्=अधिकम् । *मलमासं=क्षयमासम् । *पूषेति । दर्शपूर्णमासप्रकरणे 'पूष्णोऽहं देव प्रजया पशुभिश्च जनिषीय' इति पूषानुमन्त्रणमन्त्रः पठितोऽपि स तत्र न विनियुज्यते तत्र तद्देवताविरहेण प्रकरणस्य दौर्बल्यात् विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य विनियोगाभावात् । अतः स पूषयागे नेतव्य इत्यर्थः ॥ प्रकरणदौर्बल्यमाह—*अन्यथेति । दैवविवाहादि चातुर्मास्यव्रते दैवमिति मत्वाह—*प्रकरणेति । *प्रतिवर्षं चेति । वस्तुतस्त्विदं फलविशेषार्थावृत्तिबोधकं प्रयोगैक्यपक्षे मानाभावात् । चातुर्मास्यव्र-

मोदते विष्णुलोकेऽसौ यावदाभूतसंप्लवम् ॥'
इति हेमाद्रौ भविष्यवचनादित्याद्यन्यत्रा विस्तरः।
इदं च शिवभक्तादिभिरपि कार्यम्।
'शिवे वा भक्तिसंयुक्तो भानौ वा गणनायके।
कृत्वा व्रतस्य नियमं यथोक्तफलभाग्भवेत् ॥'
इति ब्रह्मवैवर्तात्। व्रतग्रहणप्रकारस्तु हेमाद्रौ भविष्ये—
*'महापूजां ततः कुर्याद्देवदेवस्य चक्रिणः।
जातीकुसुममालाभिर्मन्त्रेणानेन पूजयेत् ॥
सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम्।
विबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत ॥
एवं तां प्रतिमां विष्णोः पूजयित्वा स्वयं नरः।
प्रभाषेताग्रतो विष्णोः कृताञ्जलिपुटस्तथा ॥
चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि।
इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ॥
इदं व्रतं मयादेवगृहीतं पुरतस्तव।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ॥
गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत्।
तदा भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥
गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे मृतो ह्यहम्।
तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥' इति।
तत्र भार्गवार्चनदीपिकायां नृसिंहपरिचर्यायां च भविष्ये—
'श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा।
दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् ॥' इति।
स्कान्देऽपि चातुर्मास्यकल्पे—

---

तारम्भः शयनोत्सवं कृत्वा कार्य इति सूचयितुं—*महापूजामिति।

'चत्वार्येतानि नित्यानि चतुराश्रमवर्णिनाम् ।
प्रथमे मासि कर्तव्यं नित्यं *शाकव्रतं नरैः ॥
द्वितीये मासि कर्तव्यं दधिव्रतमनुत्तमम् ।
पयोव्रतं तृतीये तु चतुर्थेऽपि निशामय ॥
द्विदलं बहुबीजं च वृन्ताकं च विवर्जयेत् ।
नित्यान्येतानि विप्रेन्द्र व्रतान्याहुर्मनीषिणः ॥
जम्बीरं राजमाषांश्च मूलकं रक्तमूलकम् ।
कूष्माण्डं चेक्षुदण्डं च चातुर्मास्ये त्यजेद् बुधः ॥'

तथा—

'विशेषाद्बदरीं धात्रीं कूष्माण्डं तिन्तिणीं त्यजेत् ।
जीर्णधात्रीफलं ग्राह्यं कथञ्चित्कायशोधनम् ॥' इति ।

तीर्थसौख्ये स्कान्दे—

'वार्षिकांश्चतुरो मासान्प्रसुप्ते वै जनार्दने ।
मञ्चखट्वादिशयनं वर्जयेद्भक्तिमान्नरः ॥
अनृतौ वर्जयेद्भार्यां मांसं मधु परौदनम् ।
पटोलं मूलकं चैव वृन्ताकं च न भक्षयेत् ॥
अभक्ष्यं वर्जयेद् दूरान्मसुरं सितसर्षपम् ।
राजमाषान्कुलित्थांश्च आशुधान्यं च सन्त्यजेत् ॥
शाकं दधि पयो माषान् श्रावणादिषु सन्त्यजेत् ॥'

अत्र त्यजेदिति वर्जनसङ्कल्परूपः पर्यु(१)दासो ज्ञेयः [illegible] । अत्र केचित्—

'शाकाख्यं पत्रपुष्पादि' इत्यमरकोशस्य 'शाक्यतेऽ

*शाकव्रतं=शाकवर्जनसंकल्पः । बहुबीजव्रतं च मासचतुष्टये । राजमाषाः=चवलया इति महाराष्ट्राः । मधु=क्षौद्रम् । पटोलं द्वयमपि । आशुधान्यम्='आशुव्रीहिः पाटलः स्यात्' इति

(१) पर्युदासो निषेधः ।

शितुमनेनेति शाकः' इति क्षीरस्वामिना व्याख्यानात् व्यञ्जनमात्रस्य निषेधमाचक्षते। अन्ये तु शाकशब्दस्य पत्रादिदशविधशाके योगरूढत्वात् योगाच्च*रूढेर्बलीयस्त्वात् सूपादीनामपि त्यागापत्तेश्च तत्प्रत्याचक्षते। तेन

'*मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः।

त्वक् पुष्पं कवचं चेति शाकं दशविधं स्मृतम्॥'

इति क्षीरस्वामिनोक्तस्य शाकस्य निषेध इति। अधिरूढकाः=अङ्कुराः। वस्तुतस्तु

*तत्तत्कालोद्भवाः शाका वर्जनीयाः प्रयत्नतः।

बहुबीजमबीजं च विकारि च विवर्जयेत्॥

इति भविष्यवचनात्तत्कालोत्पन्नानां दशविधशाकानां निषेधः। तत्र *तत्कालो(१)द्भवजातीयत्वं विवक्षितम्। तेनातपादिशोषितानां वर्षान्तरोद्भवानामपि निषे-

---

कोशात्तुच्छधान्यम्। *योगाच्चेति। केवलयौगिकत्वमते। *मूलेति। मूलं कन्दोऽपि बोध्यः। करीरं=वंशाङ्कुरः। अग्रं=पल्लवः। काण्डो=दण्डः। कवचं=छत्राकसदृशम्। अङ्कुर इति क्षेत्राद्भिन्नफलमूलादेः, स्वेदोद्भिन्नोऽङ्कुर इति केचित्। अत्र फलपत्रेत्यादेः सर्वस्य न निषेधः किंतु फलमूलादेरेव। तेषां व्यञ्जनत्वेन भूयो लोकव्यवहारादिति केचित्। तत्रान्यत्रापि तद्व्यवहारभूयस्त्वादित्यपरे। *तत्तदिति। 'यत्र काले वृतं तस्य तदन्यस्य च' इत्येवं वर्षाकाललाभात्। एतेन तत्तत्कालेति संवत्सरलाभे तत्कालोत्पन्नानामित्यग्रिमग्रन्थविरोधः। इतरथा वीप्सावैयर्थ्यमिति समाहितम्। *तत्कालेति तत्तत्कालेत्यभिधातव्ये द्वितीयतच्छब्दप्रभृत्यनुवादः। एतच्च वर्षाकालोद्भवशाकव्रतमित्यभिप्रायेण। शाकसामा-

(१) क्वचित् 'तत्तत्कालोद्भवजातिर्विवक्षिता' इति पाठः।

## जयकृष्णदास—हरिदास गुप्तः—चौखम्बासंस्कृतसीरीज आफिस बनारस सिटी।

१ अस्यां चौखम्बा— संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... ” ” १ ” ०

६ आपणव्ययः पृथग् नास्ति। ... ... ... ... ... ...


(१) संस्काररत्नमाला। गोपीनाथभट्टकृता २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् ३२

(३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १५

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः ... २

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचित तर्कपादः (मीमांसा) ... ... २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा २

(८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानं। सम्पूर्णम्। (वेदान्तः) ६

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा। ... २

(१०) [illegible] श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आनन्दपूर्णमुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः (न्यायः) ... ... ... ५

(१३) विधिरसायनम्। श्रीमदप्पय्यदीक्षितकृतं सम्पूर्णम् २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) ... ... ... १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) ... ... २

(१६) मीमांसाबालप्रकाशः। जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि-मीमांसादर्शनम्। महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः। (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् ... ... ३५

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितं ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम्। (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ... १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ... ... ... ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता। २

(२५) क्रोडपत्रसंग्रहः। अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ... ... ४

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टरचितसिद्धान्तजाह्नवीयुतम् ... ... ... २

(२७) षड्दर्शनसमुच्चयः। बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः। मणिभद्रकृतटीकया सहितः। हरिभद्रसूरिकृतः ... ... ... १

(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्नार्णवः १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका ... ... ... १३

(३०) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः। साणिक्यदीपकश्च १२

(३१) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ... ... ... ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ४

(३३) वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराज-विरचितः ... ... ... ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् ... ... ... १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् ... ... ... ... २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासवलितम् ... ... ... ... ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविराचितः २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरण श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्री पुरुषोत्तमजीमहाराज विरचितः ... ३
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता ... ... ३
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः स्वकृतटीकाविभूषितश्च ... ... ... ... २
(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ११
(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वाचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ... ८
(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्रप्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः ... ... ... ... ५
(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुबलाचार्य- बालम्भटाभ्यां विरचितकुञ्जिकाकलाढ्यटीकाद्वयसंवलिता ... ११
(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः ... ... ... ... ८
(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः ... ... ... ५
(४९) बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः महेश्वरतीर्थकृतयालघुसंग्रहाख्ययाटीकयासमलंकृतः १
(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः... ... ... ५
(५१) पूर्वमीमांसाअधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता नेने इत्युपाख्य गोपालशास्त्रिणा परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । ... ... ... १
(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् श्रीशंकरमिश्रविरचितम् ... ... २
(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेता ... ... ... ... ३
(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः ... ... ... ६
(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भावगणेशविरचितम् । समाससूत्रव्याख्या सर्वोपकारिणी च ... ... ... ... १
(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यय टीकया युता ... ... ... ४
(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टकृतव्याख्यासहितः (खण्डद्वयपूर्णश्च) ... ४
(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः । श्रीमदनन्तदेवविरचितया "भाट्टालङ्काराख्य" व्याख्ययासहितः २
(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमिश्रविरचिता । पण्डितराड्—वंशीधरमिश्रविरचित "तत्त्वविभाकर" टीकासहिता ... ... १

—:०:—

जयकृष्णदास गुप्तः सेक्रेटरी
चौखम्बासंस्कृतसीरीज आफिस
बनारस सिटी ।

*November* **1921.**

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NO. 287.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं०
व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा
तदीयगुरुवर म० म० पं० पर्वतीयनित्यानन्द-
पन्तप्रदर्शितरीतिमनुसृत्य संशोधितो
टिप्पण्या परिष्कृतश्च ।

# NIRNAYA SINDHU;

of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Uyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS V—५.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICF, BENRAES.
AGENTS:-OTTO HARRASSOWITZ, LEIPZIG.
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

*1921.*

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥

सुवर्णाऽङ्कितमव्याप्तशतपत्रपरिष्कृता ॥ १ ॥

चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥

रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२८७

धः । *अत्र तत्कालोद्भवा इति वीप्सावशात्स्वस्वकालोद्भवानां सर्वेषां निषेध इति निष्कर्षः । बहुबीजमित्यनेकबीजमिति केचित् । इतरावयवापेक्षया बीजावयवा यत्र बहवस्तदित्यन्ये । अबीजं कदलादि* । वस्तुतस्तु इदं महानिबन्धेष्वभावान्निर्मूलमेव । आचारप्रदीपे—

'वृन्ताकं च कलिङ्गं च बिल्वौदुम्बरभिःसटाः ।
उदरे यस्य जीर्यन्ति तस्य दूरतरो हरिः ॥'

तथाऽपरार्के देवलः—

'ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् ।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥'

आमिषाणि चोक्तानि रामार्चनचन्द्रिकायां पाद्मे—

'प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम् ।
अयज्ञशिष्टमाधार्दि यद्विष्णोरनिवेदितम् ॥
दग्धमन्नं मसूरं च मांसं चेत्यष्टधाऽऽमिषम् ।
कौम्भं तत्तद्देशालम्भं सुप्ते देवे विवर्जयेत् ॥'

पाद्मे कार्तिकमाहात्म्ये—

'गोच्छागीमहिषीदुग्धादन्यद् दुग्धादि चामिषम् ।
धान्यं मसूरिकाः प्रोक्ता अन्नं पर्युषितं तथा ॥
द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ।

---

न्यन्नमित्याशयेनाह—*अत्रेति । *कदलमिति । अनुदरा कन्येतिवत् अत्यल्पबीजमित्यर्थादाम्रफलमिति । भिःसटा=दग्धान्नम् । भीःसटेति पाठे 'भीःसटं श्लेष्मान्तकम्' इति धन्वन्तरिनिघण्टुः ॥ प्राण्यङ्गं=मौक्तिकशुक्त्यादि । चर्मं=काचिकादि । धान्यं=कुस्तुम्बुरुः । अन्नं पर्युषितम्—

'अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥'

*'ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् ।
*आत्मार्थं पाचितं चान्नमामिषं तत् स्मृतं बुधैः ॥'

तथा—

*'निष्पावान् राजमाषांश्च मसूरं संधितानि च ।
वृन्ताकं च कलिङ्गं च सुप्ते देवे विवर्जयेत् ॥'
संधितानि=लवणशाकादीनि ।

तत्रैव विष्णुधर्मे—

'चतुर्ष्वपीह मासेषु हविष्याशी न पापभाक् ।'

हविष्याणि तु पृथ्वीचन्द्रोदये भविष्ये-

*'हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः ।
कलायकङ्गुनीवारा वास्तुकं हिलमोचिका ॥
षष्टिका कालशाकं च मूलकं केमुकेतरत् ।
कन्दः सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥

---

इत्याद्युक्तम् । आरनालादि च द्विजात्क्रीताः । *ताम्रेति ।

'यज्ञपात्रे तथा दोहे पाके च परिवेषणे ।
स्नानतर्पणदानेषु ताम्रं गव्यं न दुष्यति ॥'

इत्युक्तम् । *आत्मार्थमिति । 'परपाकरतश्च यः, तावुभौ पापकर्माणौ'इति निषेधेऽपि दोषाधिक्यार्थं विप्रभोजनवैश्वदेवाद्यर्थ-पाकहीनः परपाकनिवृत्तः । *निष्पावा पावटे इति महाराष्ट्राः ।

'यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितम् ।
कन्याविक्रयतो लब्धं सुप्ते देवे विवर्जयेत् ॥'

इत्यादीनि त्वतिदोषार्थानि । *हैमन्तिकं=हेमन्तोद्भवम् । सितं श्वेतमस्विन्नम्=अनूष्मकं किंचिदग्निपाकेन जातस्वेदं स्विन्नं तद्भिन्नं तेन पृथुकादिनिषेधः । धान्यं=तण्डुलाः । कलायः=सतीनकः, मटरी इति प्रसिद्धम् । वास्तुकं वथुवा इति प्रसिद्धः शाकः । हिलमोचिका=गौड-देशे । कालशाकम्=तद्देशे । मूलकं स्वार्थे कः मूलानि न तु मूलशाकः

*पयोऽनुद्धृतसारं च *पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरङ्गं च तिंतिणी ॥
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
*अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥' इति ।

मिताशित्वम्=अनुष्णपक्वम् । धान्यं=तण्डुलादि* । केमुकं केमुताइति प्राच्येषु प्रसिद्धः कन्दः 'कलायस्तु-सतीनकः' इत्यमरः 'बटुरी' इति प्रसिद्धं धान्यम् । मदनरत्नेऽप्येवम् । अगस्त्यसंहितायां हैमन्ताद्युक्त्वा—

'नारिकेलफलं चैव कदली लवली तथा ।
आम्रमामलकं चैव पनसं च हरीतकी ॥
व्रतान्तरप्रशस्तं च हविष्यं मन्वते बुधाः ॥'

अन्यान्यपि व्रतान्युक्तानि हेमाद्रौ भविष्ये—

'स्त्री वा नरो वा मद्भक्तो धर्मार्थं सुदृढव्रतः ।
गृह्णीयान्नियमानेतान्दन्तधावनपूर्वकान् ॥
तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक् ।
मधुरस्वरो भवेद्राजन् पुरुषो गुडवर्जनात् ॥
तैलस्य वर्जनाद्राजन् सुन्दराङ्गः प्रजायते ।
कटुतैलपरित्यागाच्छत्रुनाशः प्रजायते ॥
योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् ।

---

तस्य वृत्ते मदिरोपमत्वात् । केमुकेत्यत्र—केमुकं केमुता इति प्राच्येषु प्रसिद्धं मूलं तद्भिन्नम् इतोऽपि च न मूलशाकः अव्यावर्तकत्वेन एतदन्वयात् । कन्दः यद्यपि 'अर्शोघ्नः सूरणः कन्दः' इत्युक्तस्तथापि तस्य निषिद्धत्वात्तदन्यो ग्राह्यः ॥ *अनुद्धृतसारमिति । दध्यपि बोध्यम् । *पनसेत्यादि । 'फले लुक्' । नारङ्गं=नारिङ्गम् । नागरमिति पाठे शुण्ठी । *अतैलपक्वमिति कथितहविष्यान्नस्य विशेषणम् ।

ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते ॥
घृतत्यागाच्च लावण्यं सर्वस्निग्धतनुर्भवेत् ।
शाकपत्राशनाद्भोगी अपक्वादोऽमलो भवेत् ॥
भूमौ प्रस्तरशायी च विप्रो मुनिवरो भवेत् ।
एकान्तरोपवासेन ब्रह्मलोके महीयते ॥
धारणान्नखरोम्णां च गङ्गास्नानफलं लभेत् ।
मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् ॥
भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् ।
प्रदक्षिणाशतं यस्तु करोति स्तुतिपाठकः ॥
हंसयुक्तविमानेन स च विष्णुपुरं व्रजेत् ।
अयाचितेन प्राप्नोति पुत्रान्धर्म्यान्विशेषतः ॥
षष्ठान्नकालभोक्ता यः कल्पस्थायी भवेदिति ।
पर्णेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ॥
गुडवर्जी नरो दद्यात्तद्भृतं ताम्रभाजनम् ।
सहिरण्यं नरश्रेष्ठ लवणस्याप्ययं विधिः ॥
सुप्ते देवे तु यो विष्णोः शिवस्याङ्गणमर्चयेत् ।
पञ्चवर्णैस्तु यो नित्यं स्वस्तिकैः पद्मकैस्तथा ॥
स याति रुद्रलोकं हि गाणपत्यमवाप्नुयात् ॥'

अथैषां समाप्तौ कार्तिक्यां दानानि । 'एकभक्तव्रते* दम्पती संपूज्य धेनुर्देया, नक्ते वस्त्रयुगं, एकान्तरोपवासे गौः, भूशयने शय्या, षष्ठकालभोजने गौः, व्रीहिगोधूमादित्यागे हैमव्रीह्यादि, कृच्छ्रे गोयुग्मं, शाकाशने गौः

---

*एकभक्तव्रते इति । विहितदानानन्तरं
"चतुरो वार्षिकान् मासान्नियमो येन यः कृतः ।
कथयित्वा द्विजेभ्यस्तं दद्याद्भक्त्या सदक्षिणाम् ॥
दत्त्वा विसर्जयेद्विप्रांस्ततो भुञ्जीत वाग्यतः ।"

पयोव्रते च, दधिमधुघृतव्रतेषु वासो गौश्च, ब्रह्मचर्ये स्वर्णमूर्तिः, ताम्बूलव्रते वासोयुगं, मौने घृतकुम्भो वस्त्रयुगं घण्टा च, देवाग्रे रङ्गमालिकाकरणे धेनुर्हेमपद्मं च, दीपिकाव्रते दीपिका वासोयुगं च, भूमिभोजने पर्णभोजने च कांस्यपात्रं गौश्च, चतुष्पथदीपे गोग्रासे च गोवृषौ, प्रदक्षिणाशने वस्त्रम्, *अनुक्तेषु स्वर्णं गौश्च' इत्यादि हेमाद्रौ ज्ञेयम् । तथाच भार्गवार्चनदीपिकायां पाद्मे-

'शयनीबोधिनीमध्ये शमीदूर्वापमार्गकैः ।
भृङ्गराजेन देवांस्तु नार्चयीत कदाचन ।'

हेमाद्रौ पाद्मे—

'आषाढादिचतुर्मासानभ्यङ्गं वर्जयेन्नरः ।
समाप्तौ च पुनर्दद्यात्तिलतैलयुतं घटम् ॥
आषाढादिचतुर्मासं वर्जयेन्नखकृन्तनम् ।
वृन्ताकं गृञ्जनं चैव मधु सर्पिर्घटान्वितम् ॥
कार्तिक्यां तत्पुनर्हैमं ब्राह्मणाय निवेदयेत् ।

'अन्यान्यपि (१)केशकर्तनादिवर्जनसंकल्पानुरूपाणि पृथ्वीचन्द्रोदये ज्ञेयानि । टोडरानन्दे स्कान्दे—

'एकान्तरं त्र्यन्तरं वा कुर्यान्मासोपवासकम् ।
अन्नोदनं फलाहारं नक्तमन्नमथापि वा ॥'

अत्रैव तत्तद्व्रताचरणमुक्तं रामार्चनचन्द्रिकायां भविष्ये—

---

इत्युक्तव्रतसमापनं कार्यम् । *वस्त्रमिति । सन्ध्याकाले दीपदाने सुवर्णयुतां दीपिकां दद्यात् । *अनुक्तेष्विति । चातुर्मास्यव्रतं कृत्वा 'व्रतान्ते गोप्रदः' इति वाक्याद्धेनुं वा दद्यात् । व्यासः—

(१) आदर्शपुस्तके 'केशकर्तनादि' इति नास्ति ।

'शयन्यां चैव बोधिन्यां चक्रतीर्थे तथैव च ।
शङ्खचक्रविधानेन वह्निपूतो भवेन्नरः ॥' इति ।

(१)'अतप्ततनूर्न तदामो अश्नुते'इति ऋग्वेदात्, 'स होवाच याज्ञवल्क्यस्तस्मात्पुमानात्महिताय हरिं भजेत्। सुश्लोकमौलेर्वर्माणयङ्केष्वग्निना संदधते' इति शतपथश्रुतेः, 'प्रतद्विष्णो अब्जचक्रे सुतप्ते जन्माम्भोधिं*तर्तवे *चर्षणीन्द्राः । मूले बाहोर्दधन्ते ये पुराणा लिङ्गान्यङ्के तावकायार्पयन्ति' इति सामवेदात् ।

---

'योऽधीते भारतं पुण्यं ब्राह्मणो नियतव्रतः ।
चतुरो वार्षिकान् मासान् सर्वपापात्प्रमुच्यते ॥
तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदम् ।
कृष्णप्रोक्तामिमां पुण्यां भारतीमुत्तमां कथाम् ॥
श्रावयिष्यन्ति ये विप्रा ये च श्रोष्यन्ति मानवाः ।
सर्वथा वर्तमाना वै न ते शोच्याः कृताकृते ॥' इति ।

नियमाः ब्रह्मचर्यहविष्याशनभूशय्यादयः । एवं सङ्कल्पपूर्वकं श्रुत्वा समाप्तौ सति सामर्थ्ये पर्वसमाप्तौ वाचकं पायसेन भोजयेत्तस्मै रत्नकाञ्चनगोभूगृहवस्त्रादि दद्यात् ततो द्विजान् भोजयित्वा तेभ्यो दक्षिणां दद्यादेवं सर्वपुराणश्रवणविधिरिति । *तर्तवे=तरितुम् । *चर्षणीन्द्राः=ज्ञानपूर्णाः ।

(१) इयं श्रुतिर्वैष्णवैः स्वमतपरतया व्याख्याता । अस्या वास्तवार्थस्तु—'तत् पवित्रं अतप्ततनूः पयोव्रतादिना असन्तप्तगात्रः आमः अपरिपक्वो नाश्नुते न व्याप्नोति'इति श्रीमत्सायणाचार्यैः ऋक्संहिताभाष्ये उक्तः। एवमन्यान्यपि श्रुतिवाक्यानि वस्तुतो भिन्नार्थानि बलादाकृष्य व्याख्यातानि सन्ति। सार्वजनीनं तु ग्रन्थकृदप्यग्रे वक्ष्यति-'दस्तु संतप्तशङ्खादि' इति।

'अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।
ब्राह्मणस्य तथैवेदं तप्तमुद्रादिधारणम् ॥'

इति पद्मपुराणाच्चेति ।

'ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः ।
शङ्खचक्राङ्किततनुस्तुलसीमञ्जरीधरः ॥
गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः ॥'

इति काशीखण्डात् । तत्प्रकारस्तु रामार्चनचान्द्रिकातो ज्ञेयः ।

पृथ्वीचन्द्रोदयादयस्तु —

'यस्तु संतप्तशङ्खादिलिङ्गचिह्नतनुर्नरः ।
स सर्वयातनाभोगी चण्डालो जन्मकोटिषु ॥
द्विजं तु तप्तशङ्खादिलिङ्गाङ्किततनुर्नरः ।
संभाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ॥'

इति बृहन्नारदीयोक्तेः ।

शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥
शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः ॥
यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥'

तथा—

'शिवकेशवयोरङ्कान्शूलचक्रादिकान्द्विजः ।
न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ॥'

इति विष्णवाश्वलायनादिवचनात् ऋग्वेदादिश्रुतीनाम-*न्यार्थत्वादन्यश्रुतीनां चासत्त्वाच्चक्रादिधारणं शूद्र-

---

* अन्यार्थत्वमतप्ततनुरित्यादिश्रुतेः कृच्छ्रचान्द्रायणादिपरत्वात् ।

विषयमित्यूचुः । 'नृत्यं चोदरार्थं निषिद्धम्' इति श्रीधरस्वामी ।

यद्यपि निषेधस्य प्राप्तिमपेक्षत्वाद्विधिं विना च तद्योगादुपजीव्यविरोधेन 'न तौ पशौ करोति' इतिवद्विकल्पो युक्तस्तथापि 'एकजातेरयं धर्मः' इत्यनेन(१) सामान्यवाक्यानामुपसंहाराद्विजातिनिषेधो नित्यानुवाद इति तदाशयः । अत्र शिष्टाचार एव संकटपाशानिःसरणसरणिरिति संक्षेपः । आषाढपौर्णमास्यां कोकिलाव्रतमुक्तं हेमाद्रौ भविष्ये—

'आषाढपौर्णमास्यां तु सन्ध्याकाले ह्युपस्थिते ।
संकल्पयेन्मासमेकं श्रावणे प्रत्यहं ह्यहम् ॥
स्नानं करिष्ये नियता ब्रह्मचर्ये स्थिता सती ।
भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम् ॥'

इति ।

अस्य नक्तव्रतत्वात् *सायाह्नव्यापिनी (२)ग्राह्या ।

अत्रैव शिवशयनोत्सव उक्तो हेमाद्रौ वामनपुराणे—

'पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे ।
वैयाघ्रे च जटाभारं समुद्ग्रथ्याहिचर्मणा ॥'

---

*आषाढेति । अधिकाषाढपौर्णमास्यामारम्भः ।

'आषाढौ द्वौ यदा स्यातां कोकिलाव्रतमाचरेत् ।'

इत्युक्तेः । अधिकाषाढपौर्णमासीविरहे तु तन्मासनिमित्तभूतं श्रावणमभिव्याप्य शुद्धे कार्यम् । *सायाह्नव्यापिनीति—न-

---

(१) मुद्रितपुस्तके 'विधिवाक्यानाम्' इति पाठः ।

(२) आषाढौ द्वौ यदा स्यातां कोकिलायास्तदार्चनम् । तथा या कुरुते नारी न सा वैधव्यमाप्नुयात् ॥ श्रृणु देवि प्रवक्ष्यामि मन्त्रैः पौराणिकैर्युतम् । मलमासे त्वतिक्रान्ते शुद्धाषाढे समागते ॥' इतिव्रतराजवराहोक्तिस्तु मलमासे प्राप्ते सति शुद्धमास एव व्रतनिर्णयपरा । न तु आषाढेऽधिमासे सत्येव तद्व्रतकरणनियमपरेति बोध्यम् ।

मदनरत्नेऽप्येवम् । इयं च *प्रदोषव्यापिनी । **अत्रैव** व्यासपूजोक्ता । तत्र त्रिमुहूर्ता चेत् परैवेति(१) **संन्यासपद्धतौ ।**

'त्रिमुहूर्ताधिकं ग्राह्यं पर्व क्षौरप्रणामयोः ।'

इति वचनात् ॥

इति श्रीरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृते निर्णयसिन्धौ आषाढः समाप्तः ॥

कर्कसंक्रान्तौ पूर्वे त्रिंशद्दण्डाः पुण्यकालः । **सूर्या-**

---

न्ध्याकालव्यापिनीति मयूखे । *प्रदोषेति । स्वापस्य प्रदोषकालीनत्वात् । आषाढपूर्णिमायां किञ्चिद्देयम् ।

'आषाढी कार्त्तिकीमाघीतिथयः पुण्यसम्भवाः ।
अप्रदानवतो यान्तु यस्यार्थोऽनुमतो गतः ॥'

इति भरतशपथेपूक्तेः ।

'आषाढीकार्त्तिकीमाघीतिथयोऽतीव पावनाः ।
स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन ॥' इति,
'आकाभावे त्वनन्तकम्' इति च वाक्यात् ।

इत्याषाढः ॥

---

(१) संन्यासिनां चातुर्मास्याऽऽवाससंकल्पाङ्गत्वेन क्षौरव्यासपूजादिकं विहितम् । तत्रादौ क्षौरं विधाय द्वादश मृत्तिकास्नानानि प्राणायामादिविधिं च कृत्वा व्यासपूजां कुर्यात् । पूजान्ते 'असति प्रतिबन्धे चतुरो वार्षिकान्मासानिह वसामि' इति मनसा संकल्प्य—'अहं तावन्निवत्स्यामि सर्वभूतहिताय वै । प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते ॥ अतस्तेषामहिंसार्थं पक्षान्वै श्रुतिसंश्रयान् । स्थास्यामश्चतुरो मासानत्रैवास्मिन्ति याधके ॥' इति वाचिकसंकल्पं कुर्यात् । ततो गृहस्थाः प्रतिब्रूयुः—'निवसन्तु सुखेनात्र गमिष्यामः कृतार्थताम् । यथाशक्ति च शुश्रूषां करिष्यामो वयं मुदा ॥' इति । अन्योऽपि सविस्तरविधिर्धर्मसिन्धुतोऽवगन्तव्यः ।

दयोत्तरं संक्रमे तु परत एव पुण्यम् । रात्रौ तु निशीथात्प्राक् परतश्च संक्रमेऽपरार्धे ग्रहणवन्मकरादिभिन्ने पूर्वोत्तरदिनयोः पञ्च नाड्यः पुण्यकालः ।

'धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा ।
पूर्वापरविभागेन रात्रौ संक्रमते रविः ॥
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः ।
उदयेऽपि तथा पञ्च दैवे पित्र्ये च कर्मणि ॥'

इति स्कान्दोक्तेः । 'पूर्वापरविभागेनेति मकरकर्कभिन्नसंक्रान्तिपरम् । वक्ष्यमाणवचोविरोधात्' इत्युक्तं मदनरत्ने । तेनायमर्थः—रात्रौ पूर्वभागे मकरे उदये पञ्च नाड्यः पुण्यकालः । रात्रावपरभागे कर्कटे दिनान्ते पञ्च नाड्यः पुण्यकालः । विषुवतोस्तु पूर्वदिने पञ्चापरदिने च पञ्चेति वाक्यान्तरानुरोधात् । तेन हेमाद्रिमाधवयोः सर्ववचनानां चाविरोधः । माधवमते तु—

'अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥'

इति वृद्धगार्ग्योक्तेः ।

'मिथुनात्कर्कसंक्रान्तिर्यदि स्याद‌ंशुमालिनः ।
प्रभाते वा निशीथे वा तदा पुण्यं तु पूर्वतः ॥'

इति भविष्योक्तेश्च पूर्वदिन एव पुण्यम् । दाक्षिणात्यास्त्वेतदेवाद्रियन्ते । अत्र रात्रावपि स्नानादि भवतीत्युक्तं प्राक् । अत्र दानोपवासादि पूर्वेद्युरेव । तथा कर्के *केशादिकर्तनं* निषिद्धम् ।

'कुम्भे कर्कटके वापि कन्यायां कार्मुके रवौ ।

---

*केशादीति । 'नखानामनुक्तत्वात्तत्खण्डने न दोषः' इत्याहुः । *कर्तनमिति । वपनस्यापि न ग्रहः 'रोमखण्डम्' इति

रोऽन्नकणं *गृहस्थस्य पितॄन्प्राशयते यमः ॥'
इति सुमन्तुवचनादित्युक्तं जीवत्पितृकानिर्णये गुरुभिः ॥
अथ नदीनां रजोदोषः । हेमाद्रावत्रिः—

*'सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
न स्नानादीनि* कर्माणि तासु कुर्वीत मानवः ॥'

इदं च क्षुद्रनदीषु ।

'सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥'

इति व्यासोक्तेः । मात्स्ये त्वगस्त्योदयावधित्वमुक्तम् ।

'यावन्नोदेति भगवान्दक्षिणाशाविभूषणः ।
तावद्रजो महानद्यः करतोयाः प्रकीर्तिताः ॥'

करतोयाः=अल्पतोयाः । तथा कात्यायनः—

'याः शोषमुपगच्छन्ति ग्रीष्मे कुसरितो भुवि ।
तासु प्रावृषि न स्नायादपूर्णे दशवासरे ॥'

इदं चापदि । स्मृतिसङ्ग्रहे—

'धनुःसहस्राण्यष्टौ तु गतिर्यासां न विद्यते ।
नता नदीशब्दवहा गर्तास्ताः परिकीर्तिताः ॥'

महानदीषु तु भविष्ये उक्तम्—

---

सामान्योक्तेः । *गृहस्थस्येति वर्ण्यादिव्युदासः । जीवत्पितृकस्यापि व्युदास इति केचित् । उपरते लक्षणापत्त्या तस्य न व्युदास इत्यन्ये ।

'धनुःकुम्भौ द्विधा कृत्वा पूर्वभागं [illegible] ।
कर्कटस्यान्तिमं भागं कन्यां तु सकलां त्यजेत् ॥'

इत्यपि केचित् । नद्यो द्विविधाः—अल्पाः, महत्यश्च । तदन्या गर्तास्[illegible]-*र्विशन्ति । *स्नानादीनीति । आदिना तर्पणादिग्रहः । तदुक्तम्—

'आदौ तु कर्कटे देवि महानद्यो रजस्वलाः ।
त्रिदिनं च चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी*यथा ।'

महानद्यश्च ब्राह्मे—

'गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका च वितस्ता च विन्ध्यस्योत्तरसंस्थिताः ।
द्वादशैता महानद्यो देवर्षिक्षेत्रसंभवाः ॥'

मदनरत्ने पुराणान्तरे—

'महानद्यो देविका च कावेरी वञ्जरा तथा ।
रजसा तु प्रदुष्टाः स्युः कर्कटादौ त्र्यहं नृप ॥'

कात्यायनः—

'कर्कटादौ रजोदुष्टा गोमती वासरत्रयम् ।
चन्द्रभागा सती सिन्धुः सरयूर्नर्मदा तथा ॥'
इदं गङ्गाव्यतिरिक्तविषयम् ।

---

'रजोदुष्टेऽम्भसि स्नानं वर्ज्यं नद्यादिषु द्विजैः ।
कदर्थितं रजस्तेषां सन्ध्योपास्तिश्च तर्पणम् ॥ इति ।

कदर्थितं=निन्दितम् । एतच्चादृष्टार्थकर्मसामान्यपरम् । "ग्राम-भोगो न दुष्यति"इति वचनात् । *जाह्नवीति । यथा जाह्नवी सर्वकाले शुद्धा, तथा तदन्या । त्रिदिनानन्तरमित्यर्थः । अत्र प्रायश्चित्तमुक्तम्—

'काले नभस्यशुद्धं स्यात् त्रिरात्रं तु नवोदकम् ।
अकाले तु दशाहं स्यात्पीत्वा नाद्यादहर्निशम् ॥' इति

स्नानपानोभयकरणे तु त्रिरात्रं कृच्छ्रो वा बोध्यः ।

'गङ्गा च यमुना चैव *प्लक्षजाता सरस्वती ।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञिताः ॥
शोणसिन्धुहिरण्याख्याः कोकलोहितघर्घराः ।
शतद्रुश्च नदाः सप्त पावनाः* परिकीर्तिताः ॥'

इति देवलोक्तेः । यत्तु—

'प्रथमं कर्कटे देवि त्र्यहं गङ्गा रजस्वला ।'

इत्यादि वचनं तज्जाह्नवीभिन्नगोदावर्यादिगङ्गान्तरपरमिति मदनरत्ने । अन्ये त्वन्तर्गतरजोविषयम् ।

'गङ्गा धर्मद्रवः पुण्या यमुना च सरस्वती ।
अन्तर्गतरजोदोषाः सर्वावस्थासु चामलाः ॥'

इति निगमोक्तेः । तीरवासिनां तु रजोदोषो नास्ति । 'न तु तत्तीरवासिनाम्' इति निगमोक्तेः । रजोदुष्टमपि जलं गङ्गाजलयोगे पावनम् ।

'गङ्गाम्भसा समायोगाद् दुष्टमप्यम्बु पावनम् ।'

इति मात्स्योक्तेः । नूतनकूपादौ तु योगियाज्ञवल्क्यः-

'अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
भूमेर्नवोदकं*चैव दशरात्रेण शुध्यति ॥' इति ।

क्वचित्त्वदोषमाह व्याघ्रपादः—

'अभावे कूपवापीनामनपायिपयोभृताम् ।
रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति ॥'

गौडास्तु—'अन्येनापि समुद्धृते' इति द्वितीयपादे पाठः ।

---

*प्लक्षजाता=कुरुक्षेत्रस्था । *पावना इति । रजोदोषहीनत्वं नदत्वमित्याशयः । 'नदाः कृष्णा च वेणिका' इति विवेचने चतुर्थपादः ।

*नवोदकं=नवखातितकूपाद्युदकम् । एतच्च [illegible] ।

तेनोद्धृते न दोषः। तथा च 'तासु स्नानं नेति मातुलम्' इत्याहुः। वसिष्ठोऽपि—

'उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च।

चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते॥' इत्यलं विस्तरेण॥

श्रावणशुक्लतृतीया मधुस्रवाख्या गुर्जरेषु प्रसिद्धा। *सा परयुता ग्राह्येति दिवोदासः। माधवस्तु पूर्वयुता*। 'मातृविद्धो गणेश्वरः' इत्यादिवचनात्। श्रावण-शुक्लपञ्चमी नागपूजादौ परैवेति सामान्यनिर्णये उक्तम्। चमत्कारचिन्तामणौ—

'पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता।

तस्यां तु तुषिता नागा इतरा सचतुर्थिका॥' इति।

'श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी।

तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः॥'

इति मदनरत्नेऽभिधानाच्च। तेन परैवेति। अत्र विशेषो हेमाद्रौ भविष्ये—

'श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप।

द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः॥

पूजयेद्विधिवद्वीर दधिदूर्वाङ्कुरैः कुशैः।

गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः॥

ये यस्यां पूजयन्तीह नागान् भक्तिपुरःसराः।

न तेषां सर्पतो वीर भयं भवति कुत्रचित्॥' इति।

---

*सेति 'अस्या मधुस्रावणिका' इत्यग्रिमवचनात्। 'रम्भाख्यां वर्जयित्वा' इत्युक्तेश्च। *पूर्वयुतेति। मध्याह्नव्यापिनीति नव्याः।

श्रावणशुक्लद्वादश्यां(१) दधिव्रतं प्रागुक्तम् । तक्रादीनां त्वनिषेधः । तत्र दधिव्यवहाराभावादिति वक्ष्यते(२) ।

अत्रैव विष्णोः पवित्रारोपणमुक्तं हेमाद्रौ विष्णुरहस्ये—

श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
द्वादश्यां श्रावणे मासि पञ्चम्यामथ वा द्विज ।
आनुकूल्येषु कर्तव्यं पञ्चदश्यामथापि वा ॥' इति ।

शिवे तु तत्रैव कालोत्तरे—

'आषाढान्ते चतुर्दश्यां नभस्यनभसोस्तथा ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोः समम् ॥' इति ।

अन्यदेवतानां तु वक्ष्यते । अधिवासनं दीपिकायाम्—

'गोदोहान्तरिते काले पूर्वेद्युर्वाऽधिवासनम् ।' इति ।

गौणकालो रामार्चनचन्द्रिकायाम्—

'पवित्रारोपणं विघ्नाच्छ्रावणे न भवेद्यदि ।
कार्तिकावधि*शुक्रास्ते कर्तव्यमिति नारदः ॥
हैमरौप्यताम्रक्षौमैः सूत्रैः कौशेयपद्मजैः ।

---

*शुक्रास्ते=शुक्रास्तेऽपि । 'शुक्लार्के' इति पाठे शुक्लद्वादश्या-

---

(१) चातुर्मास्ये भक्ष्याभक्ष्यविचारे 'द्वितीये मासि कर्तव्यं दधिव्रतम्—' इत्यादिनेत्यर्थः । अस्यामेव द्वादश्यां मासं कृतस्य शाकवर्जनव्रतस्य साङ्गतार्थं 'ब्राह्मणाय शाकदानं करिष्ये' इति संकल्प्य ब्राह्मणं संपूज्य—'उपायनमिदं देव व्रतसंपूर्तिहेतवे । शाकं तु द्विजवर्याय सहिरण्यं ददाम्यहम् ॥' इत्यादिमन्त्रेण पक्वमामं वा शाकं दद्यात् । ततो 'दधि भाद्रपदे मासि वर्जयिष्ये सदा हरे ।' इत्येतच्च संकल्पयेत् । इति धर्मसिन्धुः ।

(२) भाद्रपदमासनिर्णये शुक्लद्वादश्यां बुधश्रवणादिविचारे 'एवं दधिव्रते न तक्रादीनां निषेधः' इत्यादिनेत्यर्थः ।

कुशैः काशैश्च कार्पासैर्ब्राह्मण्या कर्तितैः शुभैः* ॥
कृत्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत* ।
तत्रोत्तमं पवित्रं तु षष्ठ्या सह शतैस्त्रिभिः ॥
सप्तत्या सहितं द्वाभ्यां शताभ्यां मध्यमं स्मृतम् ।
साशीतिना शतेनैव कनिष्ठं तत्समाचरेत् ॥
साधारणपवित्राणि त्रिभिः सूत्रैः समाचरेत ।
उत्तमं तु*शतग्रन्थि पञ्चाशद्ग्रन्थि मध्यमम् ॥
कनिष्ठं तु पवित्रं स्यात्षट्त्रिंशद्ग्रन्थिशोभनम् ।
षट्त्रिंशच्च चतुर्विंशद्द्वादशेति च केचन ॥
चतुर्विंशद्द्वादशाष्टावित्येके मुनयो विदुः ॥

हेमाद्रौ विष्णुरहस्ये त्वन्यथोक्तम्—

'अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशदेव वा ।
सप्तविंशतिरेवाथ ज्येष्ठमध्यकनीयसम् ॥
अधमं नाभिमात्रं स्यादूरुमात्रं द्वितीयकम् ।
प्रलम्बतो जानुमात्रं प्रतिमायां निगद्यते ॥'

शिवपवित्रं तु तत्रैव शैवागमे—

'एकाशीत्यथवा सूत्रैस्त्रिंशता वाष्टयुक्तया ।
पञ्चाशता वा कर्तव्यं तुल्यग्रन्थ्यन्तरालकम् ॥

---

मित्यर्थः । *शुभैरिति ।

कन्यया वा पवित्रं स्यान्न पुंश्चल्यादिभिः कृतम् ।

इति पाठः । *शोधयेदिति । पृथक्पृथक् पञ्चगव्योदकादिना ।

'पृथक्पृथक्पञ्चगव्यैरद्भिः प्रक्षालयेत्ततः ।
मूलेनाष्टोत्तरशतं गायत्र्या रामसञ्ज्ञया ॥
शङ्खोदकेनाभिमन्त्र्य पवित्राणि विनिर्ममेत ।'

इत्युक्तेः । *शतग्रन्थीति । ग्रन्थिप्रमाणं तत्रैव-

'अङ्गुष्ठपर्वमात्रं तु कुर्याद्ग्रन्थिमथोत्तमे ।

द्वादशाङ्गुलमानानि व्यासादष्टाङ्गुलानि वा।
लिङ्गविस्तारमानानि चतुरङ्गुलकानि च ॥' इति।

हेमाद्रौ कालोत्तरे युगधर्मे—
'कृते मणिमयं कार्यं त्रेतायां हेमसम्भवम्।
पट्टजं द्वापरे प्रोक्तं कार्पासं तु कलौ स्मृतम् ॥'

अधिकारिणोऽपि तत्रैव विष्णुरहस्ये—
'ब्राह्मणः क्षत्रियो वैश्यस्तथा स्त्री शूद्र एव च।
स्वधर्मावस्थिताः सर्वे भक्त्या कुर्युः पवित्रकम् ॥'

तथा—
'अतोदेवेति मन्त्रेण द्विजो विष्णौ निवेदयेत्।
शूद्रस्य मूलमन्त्रो वा येन वा पूजयेद्धरिम् ॥'

एतच्च नित्यम्।
'न करोति विधानेन पवित्रारोपणं तु यः।
तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ॥
तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः।
वर्षे वर्षे प्रकर्तव्यं पवित्रारोपणं हरेः ॥'

इति तत्रैवोक्तेः। देवताविशेषे तिथयोऽपि तत्रैव—
'धनदश्च रमा गौरी गणेशः सोमराड् गुहः।
भास्करश्चण्डिकाऽनन्ता च वासुकिश्च तथर्षयः ॥
चक्रपाणिश्चानङ्गश्च शिवो ब्रह्मा तथैव च।
प्रतिपत्प्रभृतिष्वेताः पूज्यास्तिथिषु देवताः ॥
यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य च ॥' इति।

तथा हेमाद्रौ कालोत्तरे—
चतुर्दश्यामथाष्टम्यां सर्वसाधारणं तु तत्। इति।

तत्प्रकारस्तु रामार्चनचन्द्रिकायां यथा—

'*ततस्तानि पवित्राणि वैणवे पटले शुभे ।
संस्थाप्य शुचिवस्त्रेण पिधाय पुरतो न्यसेत् ॥
अरत्निसंमितां वेणीं कुर्यात्षट्त्रिंशता कुशैः ।
क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो ॥
मयैतत्क्रियते देव तव तुष्ट्यै पवित्रकम् ।
न मे विघ्नो भवेद्देव कुरु नाथ दयां मयि ।
सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः ॥
उपवासेन देव त्वां तोषयामि जगत्पते ।
कामक्रोधादयोऽप्येते न मे स्युर्व्रतघातकाः ॥
अद्यप्रभृति देवेश यावद्वैशेषिकं दिनम् ।
तावद्रक्षा त्वया कार्या सर्वस्यास्य नमोऽस्तु ते ॥'
इति देवं संप्रार्थ्य कुम्भं संस्थाप्य तत्र संभारान्-
'ॐ सांवत्सरस्य यागस्य पवित्रीकरणाय भो ।
विष्णुलोकात्पवित्राद्य आगच्छेह नमोऽस्तु ते ॥'
अनेन मूलेन चावाह्योत्तममध्यमकनिष्ठेषु विष्णु-ब्रह्मरुद्रान्, सत्त्वरजस्तमांसि, *देवत्रयं, वनमालायां

---

तदर्धेन तदर्धेन मध्यमे च कनिष्ठिके ॥' इति ।

*तत इति । पवित्रेषु कुङ्कुमगोरोचनादिनाऽङ्कनमुत्तम-मध्यमा-ऽधमानां तेषां क्रमेण द्वादशाक्षरमन्त्रेण त्रिर्द्विःसकृदभिमन्त्रणं चोक्तं, तत इत्यर्थः । *देवत्रयं=ब्रह्म-विष्णु-रुद्रान् । वनमालालक्षणं तत्रैव-

'आरभ्य मुकुटं यावत्सूत्रैर्विरचिता शुभा ।
आपादलम्बिनी माला वनमाला प्रकीर्तिता ॥' इति(१) ।

---

(१) अन्यच्च—'तुलसीकुन्दमन्दारपारिजाताम्बुजैस्तु या । पञ्चभिर्ग्रथिता माला वनमाला प्रकीर्तिता ॥' इति ।

प्रकृतिं चावाह्य त्रिसूत्र्यां ब्रह्मविष्णुरुद्रान् ग्रन्थिषु—क्रिया, पौरुषी, वीरा, विजया, ईशा, अपराजिता, मनोन्मनी, जया, भद्रा, मुक्तिश्चेत्यावाह्य सम्पूज्य ।

'ॐ संवत्सरकृतार्चायाः संपूर्णफलदोऽपि यत् ।
पवित्रारोपणायैतत्कुरु कन्धर ते नमः ॥
विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् ।
सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् ॥'

इति देवकरे मङ्गलसूत्रं बद्ध्वा देवं संपूज्य निमन्त्रयेत्-

'आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ॥
क्षीरोदधिमहानागशय्यावस्थितविग्रह ।
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः ॥
निवेदयाम्यहं तुभ्यं प्रातरेतत्पवित्रकम् ।
सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे ॥'

ततः पुष्पाञ्जलिं दत्वा रात्रौ जागरणं कुर्यादिति अधिवासनम् । प्रातर्नित्यपूजां कृत्वा गन्धदूर्वाक्षतयुतं पवित्रमादाय—

'ॐदेवदेव नमस्तुभ्यं गृहाणेदं पवित्रकम् ।
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ।
शुद्धो भवाम्यहं देव त्वत्प्रसादान्महेश्वर ॥'

मूलसंपुटितेनानेन दत्वाऽङ्गदेवताभ्यो नाम्ना समर्प्य महानैवेद्यं दत्वा नीराज्य—'मणिविद्रुममालाभिः' इत्यादिभिर्दमनारोपणोक्तमन्त्रैः प्रार्थयित्वा गुरवे ब्राह्मणेभ्यश्च दत्त्वा स्वयं धारयेत् । तथा—

'मासं पक्षमहोरात्रं त्रिरात्रं धारयेत्तथा ।

देवे तं सूत्रसंदर्भं देशकालविचक्षणः ॥'

अकरणे तु तत्रैव—

'पवित्रारोपणं काले न करोति कथंचन ।
तदाऽयुतं जपेन्मन्त्रं स्तोत्रं वाऽपि समाहितः ॥'

इत्युक्तम् ॥

इति पवित्रारोपः ।

श्रावणशुक्लचतुर्दशी पूर्वयुता ग्राह्या । अत्र चन्क-स्यो विशेषश्चैत्रचतुर्दश्यामुक्तः । अथोपाकर्म* । तत्र ब-ह्वृचानां प्रयोगपारिजाते शौनकः—

'अथातः श्रावणे मासे श्रवणर्क्षयुते दिने ।
श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते ॥
दिवसे विदधीतैतदुपाकर्म यथोदितम् ।
अध्यायोपाकृतिं कुर्यात्तत्रौपासनवह्निना ॥'

इति । अत्र पौर्णमास्युपसंहारन्यायेन यजुर्वेदिविषयमिति हेमाद्रिः* । अत्र हस्तयुक्ता पञ्चम्युक्ता । कारिकायामपि—

'तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ।' इति ।

---

*उपाकर्मेति कर्मनामधेयम् । अध्यायोपाकरणमित्यत्र अधीयते यः सोऽध्यायो=वेदः, तस्योपाकरणम्=उपक्रम इत्यर्थः ।

*हेमाद्रिरित्यरुचिः । श्रावण्यामित्यस्य यजुर्वेदिपरत्वे शौनको-क्तौ तद्वैयर्थ्यं स्यात् । तस्मात्तद्बह्वृचानां पौर्णमास्यां विधानं इत्येव वाच्यम् । पर्वद्वैधे च श्रवणं निर्णायकम् । 'पर्वण्यौदयिके' इत्युपक्र-म्य 'बह्वृचाः श्रावणे कुर्युः' इत्युक्तेः । तदलाभे शुक्लपञ्चम्याम् । तस्माच्छ्रवणयुक्ते दिने तद्युक्तायां पूर्णिमायामित्यनयोः पक्षयो-राचाराद्व्यवस्थेति प्रतियन्ति । तन्मासे इति व्यासकृन्मतम् । एत-न्मते ये यजुषामपि यत्सूत्रे हस्तपञ्चम्यानुक्तं, तेषामपि हस्तयुक्तप-

*केवलपञ्चम्यां *हस्तयुतेऽन्यस्मिन् दिने इति तु हेमाद्रिः । उपासनवह्निनेति तु—

'कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते ।'

इति कारिकोक्तलौकिकाग्निना विकल्प्यते । तत्र 'अप्य*ध्याप्यैरन्वारब्धः' इति सूत्रात् सशिष्यस्य कर्तृत्वे तदधिकारिकस्याचार्यस्याग्नौ नान्यस्याग्नावन्यो जुहुयादितिनिषेधाल्लौकिके एव । तदभावे तु स्मार्ते* इति निगर्वः । यद्यपि दीपिकायां—

---

श्रावण्येव बोध्या । अनुक्तपञ्चमीकैस्तु प्रौष्ठपदी ग्राह्येत्यग्रे । *केवलपञ्चम्यामिति ।

स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ।

इत्याग्रिमवचनात् । *हस्तयुते इति । 'प्रौष्ठपदीं हस्तेनोपाकर्म' इति गोभिलीये केवलहस्तस्याप्युपादानात्तद्विशिष्टपञ्चमीलक्षणायां मानाभावात् ।

'अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥'

इति याज्ञवल्क्येन श्रावणीविकल्पितश्रवणयोरिव व्यवधानेन हस्तपञ्चम्योरुक्तेश्च । *अध्याप्यैरिति । चतुःप्रवरादिभेदेन भिन्नकल्पानामपि तेषामधिकारः । 'अपि जामदग्न्यो [illegible] कुर्यात्' इति सत्याषाढोक्तेः । 'दातृपुरोहितौ सायुज्यकामौ यजेयाताम्' इति विहितकुलाययागवत् । तत्र तुल्यकल्पानामनधिकार इत्यस्य अपवादाधिकरणे वसिष्ठशुनका-त्रिवध्र्यश्वराजन्यानां नाराशंसो द्वितीयः प्रयाजः । तनूनपादन्येषां नाराशंसद्वितीयप्रयाजवद्याज्ञः तनूनपाद्द्वितीयप्रयाजवत्पुरोहितस्य चोभयोरधिकार इति [illegible] । *स्मार्ते

'वेदोपाकृतिरोषधिप्रजनने पक्षे सिते श्रावणे'

इति शुक्लपक्षोऽपि सर्वेषां मुख्यकालत्वेनोक्तः *वक्ष्यमाणगार्ग्यवचनेन छन्दोगान्प्रति विहितस्या-विरोधिनः सर्वान्प्रति प्रवृत्तिश्च । तथापि श्रावणमास-सम्बन्धस्य *सूत्रोक्तत्वात्कृष्णपक्षेऽपि कार्यमिति वृद्धाः । तथाच सूत्रम्—'अथातोऽध्यायोपाकरणमोषधीनां प्रादु-र्भावे श्रवणेन श्रवणस्य पञ्चम्यां हस्तेन वा'। अत्र श्राव-णो मुख्योऽन्ये गौणाः*तस्य साध्यत्वात् । तस्याहल्ल-ययोगे हेमाद्रौ व्यासः—

'धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम् ॥
श्रवणेन तु यत्कर्म उत्तराषाढसंयुतम् ।

---

इति । शिष्याभावेऽपि स्मार्तासत्त्वे लौकिको बोध्यः । *वक्ष्यमा-णगार्ग्यवचनेनेति । कातीयवचनेनेति त्वपपाठः । तथा का-तीयस्याग्रेऽदर्शनात् । *सूत्रोक्तत्वादिति । सूत्रानुक्तशुक्लत्वस्य नान्वय इत्याशयः । पञ्चम्यामिवेहापि सूत्रानुक्तादपि शुक्लत्वान्वय इत्यन्ये । *अन्ये गौणा इति । स च श्रावणशुक्लपञ्चमीहस्त-युक्तं दिनं भाद्रशुक्लश्रवणः । तद्गतशुक्लपञ्चमी एवमादि । येषां श्राव-णपञ्चमी हस्तयुक्ता, तेषां भाद्रपञ्चमी तादृशीति केचित् । एवमेव यजुर्वेदिनां श्रावणहस्तपञ्चम्यौ, भाद्रपदपौर्णमासीतद्गतहस्तपञ्च-म्यौ वा । अत्र—"पूर्वेद्युरुत्तराषाढयोगे, परेद्युः श्रवणाभावे घटि-काद्वयन्यूने वा पञ्चम्यादौ कार्यं, न तु पूर्वविद्धायां सङ्गवमात्रे । अपवादाभावात् । किञ्च परेद्युः सङ्गवास्पर्शे निषिद्धपूर्वग्रहणे किं मानम् ?, सङ्गववाक्यं श्रवणवाक्यं चेति चेत्तर्हि व्रीहिवाक्याद्श्व-शफवाक्याच्च माषमिश्राणामप्युपादानं स्यात् । निषेधानुमेयशास्त्रे-

संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥' इति ।

प्रयोगपारिजाते गार्ग्योऽपि—

'उदयव्यापिनी त्वेव विष्णवृक्षे घटिकाद्वयम् ।

तत्कर्म सफलं ज्ञेयं तस्य पुण्यं त्वनन्तकम् ॥' इति ।

पूर्वेद्युरुत्तराषाढयोगे परेद्युः श्रवणाभावे घटिकाद्वयन्यूने वा पञ्चम्यादौ कार्यम्, न तु पूर्वविद्धायां संगवमात्रे । अपवादाभावात् । किञ्च परेद्युः संगवास्पर्शे निषिद्धपूर्वाग्रहणे किं मानम् ? । संगववाक्यं श्रवणवाक्यं चेति चेत् तर्हि व्रीहिवाक्यादश्वशफवाक्याच्च माषमिश्राणामप्युपादानं स्यादिति महत्पाण्डित्यम् । निषेधानुप्रवेशान्नैरपेक्ष्यबाधान्नेति चेदिहापि तुल्यम् । एतेन पर्वाण्यौदयिकं व्याख्यातम् । निषेधानुप्रवेशस्योभयत्र तुल्यत्वात् ॥

---

रपेक्ष्यबाधान्नेति चेदिहापि तुल्यम् । एतेन पर्वाण्यौदयिकं व्याख्यातम् । "निषेधानुप्रवेशस्योभयत्र तुल्यत्वात्" इति पाठः । स च सुगम एव । परं तु श्रवणेन श्रावणस्येति कार्त्स्न्येन श्रवणसम्बन्धः प्रतीयते । स चान्तिमक्षणसम्बन्धः । तद्वत्त्वं च पौर्णमास्यां दिनान्तरे वा । तदुक्तम्—'धनिष्ठाप्रतिपद्युक्तम्' इत्यादि । तेन यत्रोदयात्पूर्वं प्रवृत्तः श्रवणः परेऽह्नि उदयोत्तरं किञ्चिद्वर्तते । तत्र परेऽह्नि धनिष्ठायोगात् ग्राह्यत्वे प्रसक्तेऽपि तत्र कर्मकालव्याप्तिर्नास्ति । पूर्वेद्युश्चान्त्यक्षणेऽभावेनाग्राह्यत्वात् पञ्चम्यादि ग्राह्यम् । यत्र तूत्तराषाढसंयुक्तश्रवणः क्षयवशान्न परेद्युः, तदा धनिष्ठायुक्तश्रवणस्य मुख्यकालस्यासत्त्वादुत्तराषाढयुक्तेऽपि तद्दिन एव कार्यम् । उत्तराषाढयोगनिन्दावाक्यं तु न हि निन्दान्यायग्रस्तम् । स्वतो निषिद्धत्वाभावादेव न निषिद्धत्वा[illegible]काऽपि । द्वितीय-

श्रवणयुतदिने *संक्रान्त्यादौ तु—

उपाकर्म न कुर्वीन्ति [illegible]द्विजः ।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥

इति हेमाद्रौ निषेधात् । पञ्चम्यादयो ग्राह्याः । मदनरत्नेऽपि—

*यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम् ।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥

स्मृतिमहार्णवे—

'संक्रान्तिर्ग्रहणं वाऽपि यदि पर्वणि जायते ।
तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥'

---

यद्दिने च कर्मकालपर्याप्तश्रवणलाभः तद्दिने, अन्यथा तु पञ्चम्यादाविति । यत्तु श्रवणे आदौ घटीचतुष्टयमभिजिन्नक्षत्रांशः स त्याज्य इति स्मृत्यर्थसारे उक्तं, तत्क्षयस्थले इति प्राहुः । अधिकमग्रे ।

*संक्रान्त्यादाविति । सम्भावितसूतकाद्यपि द्रष्टव्यम् ।

'संक्रान्तौ ग्रहणे वाऽपि सूतके मृतकेऽथ वा ।
गणस्नानं न कुर्वीत नारदस्य वचो यथा ॥'

इत्युक्तेः । न च सूतकादौ श्रौतस्याभावात्कथं निषेध इति वाच्यम् । गृह्याग्नेः श्रौतत्वात् उपाकर्मणश्च वैतानत्वात् । *यदीति । याजुषान्प्रति 'परतश्चेन्न दोषकृत्' इति, 'परतश्चेत्परेऽहनि' इति पाठे परेऽहनि न कुर्वीतेत्यर्थः । श्रावण्यामिति पञ्चम्याद्युपलक्षणम् । अत्र पर्वश्रवणगतयोरेव ग्रहणसङ्क्रान्त्योर्निषेधः ।

'ग्रहसङ्क्रान्तियुक्तेषु हस्तश्रवणपर्वसु ।' इति ॥

तत्सामानाधिकरण्यात् न तिथ्यन्तरनक्षत्रान्तरगतयोरपि । तेन प्रतिपदि धनिष्ठादौ वा ग्रहणसङ्क्रमयोः पर्वणि श्रवणे चोपाकर्म कार्यम् । अन्ये तु ग्रहसङ्क्रान्तिदिने येषामुपाकर्म प्राप्तं, तैस्तत्र

तत्रापि प्रयोगपारिजाते वृद्धमनुकात्यायनौ—

'*अर्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं यदा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ॥' इति ।

मदनरत्ने गार्ग्योऽपि—

'यद्यर्धरात्रादर्वाक्तु ग्रहः संक्रम एव वा ।
नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा ॥'

एतेन ग्रहसंक्रान्तिकाले श्रवणसत्त्वे एव निषेधो नान्यथेति मूर्खशङ्का परास्ता । ग्रहविशिष्टानां हस्तश्रवणपर्वणां प्रत्येकं निषेधे तद्युतोपाकर्मनिषेधे च विशिष्टोद्देशे वाक्यभेदात् पञ्चम्यां संक्रान्तौ निषेधाभावापत्तेश्च । तेनार्धरात्रात्पूर्वं ग्रहसंक्रमसत्त्वे एवोपाकर्मनिषेधो न तद्योगे एव । हेमाद्रौ निगमः—

'ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी ।
तयोर्हन्त्युत्तराषाढा उपाकर्मणि वैष्णवे ॥'

यत्तु—

'प्रतिपन्मिश्रिते नैव नोत्तराषाढसंयुते ।
श्रवणे श्रावणं कुर्युर्ग्रहसंक्रान्तिवर्जिते ॥'

इति प्रतिपन्मिश्रनिषेधकं वचनं, तन्निर्मूलम् ।

अत्र च—

'*वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।

---

न कार्यमित्यर्थः । अन्यथा ग्रहादिविशिष्टपर्वाद्युद्देशेनोपाकर्मनिषेधे विशिष्टोद्देशे वाक्यभेदापत्तेरित्याहुः । *अर्धरात्रादीनि । यद्दिने उपाकर्म तद्दिनार्धरात्रात्पूर्वमेव ग्रहसङ्क्रान्तियोगो दूषको, नोत्तरत इत्यर्थः ।

*वेदेति । चैत्रादेर्मासादिरूपत्वात्तत्क्रमेण श्रावणःकर्कः ।

उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके ॥'

इति वचनं *देशान्तरविषयम् ।

'नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ॥'

इति बृहस्पतिवचनादिति प्रयोगपारिजातेनोक्तम् । पराशरमाधवीयेऽप्येवम् । सामगानां हि सिंहस्थरवावुक्तेस्तद्विषय इदं *पुरोडाशचतुर्धाकरणवदुपसंह्रियते ।

---

तत्र चाधिक एवोपाकर्मप्राप्तौ सिंहश्रावणविधानम् । *देशान्तरेति । नेदं सामगविषयम् । तेषां कर्कप्राप्त्यभावेन व्यवस्थाया अनुपपत्तेः । किन्तु तदितरविषयम् । तेषां च श्रावणशब्देनोपाकर्मकालो विहितः । श्रावणश्च सौरः ।

'उपाकर्ममहापष्ठ्योर्हेतदिष्टं नृपादितः ।'

इत्युक्तेः । सच 'मीनमेषयोर्मेषवृषयोर्वा वसन्तः' इति क्रमेण चैत्रादिरिव द्वेधेति कर्कसिंहयोरप्यव्यवस्थाप्राप्तौ व्यवस्थाविधिरर्थवान् । नच चैत्रादेर्मीनादिरूपत्वरवात्तत्क्रमेण श्रावणः कर्क एवेति वाच्यम् । न्यायस्य मान्थर्यात्प्रागेव व्यवस्थापनात् । अन्यथा न्यायेन सुमहशानुपेक्ष्य विसदृशपूतीकानियमविधानानुपपत्तेः । कथं तर्हि नर्मदोत्तरभागस्थानामार्यावर्तनिवासिनां शिष्टानामृग्यजुर्वेदिनां कर्कटस्थेऽपि रवावुपाकर्मानुष्ठानम् ? । प्राच्यनिबन्धादावेतद्वाक्यस्यालिखितत्वेनानाश्वासात् । *पुरोडाशेति । यथा 'पुरोडाशं चतुर्धा करोति' इत्यस्य 'आग्नेयं चतुर्धा करोति' इत्यनेनोपसंहारः ।

'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' ।

इत्युक्तेः । तथा 'वेदोपाकरणे' इत्यस्य 'सिंहे रवौ' इत्यग्रिमेणोपसंहार इत्यर्थः । 'नर्मदोत्तरभागे' इति देशभेदेन कर्कसिंहव्यवस्थाऽपि सामगान् प्रत्येव । अयं हि तदर्थः—यत्सिंहे कार्यं तन्नर्मदोत्तरभागे इति । तर्हि सामगैर्दक्षिणभागे कदा कार्यमित्यपे-

तेषामेव देशव्यवस्था न तु बह्वृचादिपरम्। तेषां सूत्रे चान्द्रश्रावणोक्तेः। सौरे पञ्चम्ययोगात इति तु वयं पश्यामः सामान्येन सौत्रविशेषस्य बाधायोगाच्च। यत्तु कालादर्शे—

'अध्यायानामुपाकर्म श्रावण्यां तैत्तिरीयकाः।
बह्वृचाः श्रवणे कुर्युः सिंहस्थोऽर्को भवेद्यदि॥
*सहस्तशुक्लपञ्चम्यां वा तद्ग्रहणसंक्रमे।
असिंहार्के प्रौष्ठपद्यां श्रवणेन व्यवस्थया॥' इति।

---

क्षायां कर्कटे इति विधिः। एककोटिसिंहमात्रप्राप्तावपि कोट्यन्तरकर्कटाप्राप्त्यव्यवस्थाविधिः सङ्गच्छत एव। पाठतो द्वितीयस्थाने तनूनपात्प्रयाजस्य प्राप्तौ नाराशंसस्य चाप्राप्तौ वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषाम्' इतिवत्। बह्वृचादीन्प्रति तु नेदं प्रवर्तते, अप्राप्तसिंहादिविधौ गौरवात्। 'श्रवणेन श्रावणस्य' इति सूत्रे हि चान्द्र एव श्रावण उक्तः। नतु सौरः पञ्चम्यनन्वयापत्तेः। न चोभयपरता। वृत्तिद्वयविरोधात् लक्षणापत्तेश्च। न च बह्वृचसूत्रेण श्रावणश्रवणे विहितमपि सिंहार्कविरहे भाद्रश्रवणे उत्कृष्यते इत्येव किं न स्यादिति वाच्यम्। ऋग्यजुःसामवेदिविशेषाश्रवणेन बह्वृचान्प्रत्येव स्वातन्त्र्येण प्रवर्तमानसूत्रबोध्यचान्द्रश्रावणश्रवणादेः कर्कार्के सम्भवे परित्यागायोगात्। किंचमूलंति। बह्वृचान्प्रतीत्यादिः। वेदोपाकरणे इत्यादेः सामगपरत्वादिति भावः। वस्तुतस्तु कालादर्शो नासङ्गतः। 'भवेद्यदि' इति यदि पदस्य पाक्षिकाभिप्रायत्वात्। तद्भावेऽपि श्रवणस्यैव लाभात्। तत्र ग्रहणादौ त्वाह — *सहस्तेति। प्रौष्ठपद्यां=पञ्चम्याम्। *श्रवणे=भाद्रश्रवणे इत्यर्थः।

तत् *मूलालेखनाच्चिन्त्यम्। सूत्रे हि श्रवणेन श्रावणस्येति चान्द्रमास एवोक्तो न सौरः तस्य पञ्चम्यभावात्। श्रुतिलक्षणाभ्यामुभयपरत्वे वृत्तिद्वयविरोधाच्च। तेन सिंहस्थोऽर्को भावी यदि तदा कर्केऽपि ग्रहणसंक्रमे सति असिंहार्के शुक्लपञ्चम्यां श्रावणे वा बह्वृचाः प्रौष्ठपद्यां तैत्तिरीया इति व्याख्येयम्। तेषां सौरमासाभावात्। श्रावणे सस्यानुद्गमादौ तु बह्वृचपरिशिष्टे-

'*अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत्।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते॥' इति।

तत्राप्यनुद्गमे तु—

*'कुर्यादेव तद्वार्षिकमित्याचक्षते' इति सूत्रात्। वर्षतौ भवं वार्षिकम्। एतच्च शुक्रास्तादावपि कार्यम्।

'उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम्।'

इति दमनारोपे लिखितवचनात्।

'नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते॥'

इति प्रयोगपारिजाते संग्रहोक्तेः। पर्वणि ग्रहणे सति पूर्वं त्रिरात्रादिवेधाभावं वक्तुमिदम्। तेन पर्वणि ग्रहणेऽपि चतुर्दश्यां श्रवणे कार्यमिति हेमाद्रिः। अस्ते प्रथमारम्भस्तु न भवति।

'गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा।

---

*अवृष्ट्येति। ग्रहणसङ्क्रान्तिसूतकादिवशाच्छ्रवणाद्यतिक्रमोऽपि द्रष्टव्यः। *कुर्यादेवेति। भाद्रश्रवणे तच्छुक्लपञ्चम्यादौ वा। तत्रापि प्रतिबन्धे तु उपाकर्म लुप्यत एव अशक्तवत्। यजुर्वेदिनां तूक्तम्। 'शुक्रास्तादावपि' इत्यादिना ग्रहवेधग्रहः। अधिमाससंसर्परूपौ मलमासौ। ननु मलमासः क्षयः तस्य कार्तिकादित्रयन्येय-

तथाधिमाससंसर्पमलमासादिषु द्विजे ॥
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् ॥'

इति तत्रैव कश्यपोक्तेः। अत्र प्रथमारम्भे *वृद्धिश्राद्धं कुर्यादिति नारायणवृत्तौ। एतच्चाधिमासे न कार्यम्।

'उपाकर्मतथोत्सर्गः प्रसवाहोत्सवाष्टकाः।
मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् ॥'

इति ज्योतिःपराशरोक्तेः।

'उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ॥'

इति कात्यायनोक्तेश्च। यत्तु—

'उपाकर्मणि चोत्सर्गे ह्येतादिष्टं वृषादितः।' इति क-

---

स्यात् तत्रोपाकर्मप्रसक्तेः। आदिना सिंहस्थगुरुवक्रातिचारादिग्रहः।

'गुरुशुक्रतिरोधाने वर्जयेच्छ्रुतिचोदितम्।'

इत्याह भगवानत्रिः 'श्रावणं तु विशेषतः।' इत्यपि प्रथमोपाकर्मपरमेव।

'यज्ञोपवीतं धर्तव्यं श्रावणे गुरुशुक्रयोः।
मौढ्येऽपि वार्षिके वाऽल्पे नित्यवत्कर्मचोदितम् ॥'

इति स्मृतिसारे। तदनुष्ठानस्यापि तत्रोक्तेः। यज्ञोपवीतधारणं चोपाकर्म। तत्र यज्ञोपवीतधारणस्याग्रे स्पष्टत्वात् अधिमासादिग्रहणं च प्रत्यवायातिशयज्ञापनार्थम्। वचनान्तरेण सर्वसाधारण्येन निषेधस्य सिद्धत्वात्। श्रावणश्रवणस्य गुरुशुक्रास्तबाल्याद्याक्रान्तत्वे च तत्र प्रथमोपाकृत्यभावाद्यथासम्भवं श्रावणपञ्चम्यां भाद्रश्रवणपञ्चम्योर्वा कार्यम्। *वृद्धिश्राद्धमिति।

'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किंचित्समारभेत्'।

इति मदनरत्नहेमाद्र्यादौ गार्ग्येण द्वयोरुक्तेः । अत्र शिङ्गाभट्टीये विशेषः—

'श्रवणः श्रावणं पर्व सङ्गवस्पृग्यदा भवेत् ।
तदैवौदयिकं कार्यं नान्यदौदयिकं भवेत् ॥'

पराशरमाधवीयेऽपि गार्ग्यः—

'श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत् ॥'

कर्मकालमाह—कालादर्शे निगमः—

'श्रावण्या प्रौष्ठपद्या वा प्रतिपत्पञ्चमुहूर्तकैः ।
विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत् ॥'

अत्र पौर्णमासीश्रवणहस्तयोरुपलक्षणम् । *तेन तावपि सङ्गवस्पृशौ ।

'उदये संगवस्पर्शे श्रुतौ पर्वणि चार्कभे ।
कुर्युर्नभस्युपाकर्म ऋग्यजुः सामगाः क्रमात् ॥'

इति पृथ्वीचन्द्रः । *तेनोदयसङ्गवोभयव्यापिनी

---

गृह्ये श्रवणस्यैवोक्तेस्तदन्ये याजुषा ग्राह्याः । *पूर्वामिति । कात्यायनादीनां त्वित्यादिनाऽग्रे स्पष्टम् । अत्रोदयव्यापित्वं घटिकाद्वयव्यापित्वमुदयसङ्गवोभयस्पर्शित्वम्, प्रातःसङ्गवोभयात्मकषण्मुहूर्तव्यापित्वं वेति मतत्रयम् । तत्राद्यं ग्रन्थकृन्मतम् । तत्र सङ्गवस्पर्शित्वादिवाक्यानि घटिकाद्वयमुपोद्बलयन्ति । द्वितीयं पृथ्वीचन्द्रोदयमतम् । तत्र घटिकाद्वयवाक्यमवयुत्याऽनुवादः । सङ्गवात्परतः षण्मुहूर्तकैरिति तु मुख्यत्वार्थम् । तृतीयं हेमाद्र्यादेर्मयूखविवेचनकृतोश्च मतम् । सङ्गवात्परतो यदि षण्मुहूर्तकैरित्येतद्यथाश्रुतलभ्यम् सङ्गवस्पर्शित्वादिकमनुवादः । सुदर्शनभाष्ये त्वेतद्विशेषः *तत्राद्यं मतं सपाश्चितम्, तृतीयं तु न विवृतम् । द्वितीयं मतमाह—*तेनेति । हस्तश्रवणयोरपि ग्रहणेत्यर्थः । *तेन=

सङ्गवस्पर्शश्रवणेन । *मुख्येति । अन्यथा 'सङ्गवात्परतः' इत्यादेर्वैयर्थ्यात् । केचित्तु कर्मकालः प्रातःसङ्गवरूपषण्मुहूर्तरूपः, येषां तावत्साध्यमुपाकर्म तत्पराणि 'सङ्गवात्परतः'इत्यादीनि । सङ्गवस्पर्शः सर्वावयवावच्छेदेन विवक्षित इति तद्वाक्यमपि तत्परमेव । एवं सङ्गवस्पर्श एकदेशावच्छेदेनेति यथाश्रुतार्थोऽपि विवक्षितः । येषां न्यूनकालसाध्यमुपाकर्म तत्परं च । तेन घटिकाद्वयवाक्यं तु सङ्गवात्पूर्वावयवमर्शसाद्वारा सङ्गवस्तावकम् । ईदृशरीत्या सर्ववाक्यानामर्थसम्भवादनुवादत्वे मानाभावः । नाप्यष्टदोषग्रस्तो विकल्प इति भाष्यानुसारेणाहुः । सामगानां त्वपराह्णः कर्मकाल इत्यपराह्णोपाकर्मिणामुदये सङ्गवस्पर्शे इत्यादिवचनात्तत्कालव्यापिनमपि पूर्वहस्तं बाधित्वोत्तरदिन एव तदनुष्ठानम् । न च दिनद्वयेऽपराह्णव्याप्तौ तदस्पर्शे वा परग्रहोऽस्त्विति वाच्यम् । सङ्गवस्पर्शित्वमात्रेण ग्राह्यताविधानानुपपत्तेः । केचित्तु येषां सामगानामौदयिकः कर्मकालः, तत्परं वचनमित्याहुः । तादृशः सामगो नास्त्येवेत्यप्याहुः । (१) (केचित्तु कर्मकालः प्रातःसङ्गवरूपषण्मुहूर्तात्मकः । तद्व्यापित्वं हेमाद्र्यादिभिर्मूलवचनादिकाद्भिश्चादृतम् । तत्राद्यं मपाश्चितम् । एतन्मते 'सङ्गवस्पृक्' 'सङ्गवात्परतः' इति चानुवादकम् । द्वितीयमभिप्रेत्याह—*तेनेति । हस्तश्रवणयोरपि ग्रहेणेत्यर्थः । षण्मुहूर्तव्याप्यत्वं मदर्थः । सङ्गवस्पर्शः सर्वावयवावच्छेदेनेति प्रातःसङ्गवोभयस्य षण्मुहूर्तकैरिति षण्मुहूर्तस्पृक्केर्लाभात् । एतच्च येषामुपाकर्म षण्मुहूर्तसाध्य तत्परम् । एवं संगवस्पर्शः एकदेशावच्छेदेन । एतच्च येषामुपाकर्म ऊनकालसाध्यं तत्परं 'त्रिष्णवर्क्षे घटिकाद्वयम्' इति तु सङ्गवात्पूर्वावयवमर्शनाद्वारा सङ्गवस्तावकम् । ईदृशरीत्या सर्ववाक्यानामर्थसम्भवे एकदेशानुवादत्वे मानाभावः, नाप्यष्टदोषग्रस्तो विकल्प इत्याहुः । सामगा[illegible]

(१) कंसान्तर्गतः पाठः क्वचित्[illegible]धिको दृश्यते ।

मुख्या* । *परेद्युः *सङ्गवाभावे *पूर्वेद्युरुदयाभावे चै-कैकसत्त्वे पूर्वेद्युश्चतुर्दशीवेधनिषेधात*सामान्यवाक्यादौ-दयिकी कर्मपर्याप्ता ग्राह्या, न पूर्वा । *सङ्गवनिमित्त-पूर्वविद्धापवादाभावात् । 'नान्यदौदयिकी' इत्यस्य पूर्व-विद्धापरत्वाभावात् । तेन श्राद्धादौ कालान्तरे स्यान्न

---

कर्मकालः । तादृशे साम(१) तेन=सङ्गवस्पर्शित्वरूपेण । *मुख्येति । यथा न विवृतं सङ्गवात्परतः षण्मुहूर्तकैरित्येतल्लभ्यम् । एतन्मते 'विष्णवृक्षे घटिकाद्वयं' 'सङ्गवस्पृक्' इति चानुवादः । [illegible] वचनात्तत्कालव्यापिनमपि पूर्वहस्तं बाधित्वोत्तरदिन एव तदनु-ष्ठानम् ।) अत्र 'परेद्युः सङ्गवाभावे पूर्वेद्युरुभयाभावे चैकैकसत्त्वे पूर्वे-द्युश्चतुर्दशीवेधनिषेधात्सामान्यवाक्यादौदयिकी कर्मपर्याप्ता ग्राह्या, न पूर्वा । सङ्गवनिमित्तपूर्वविद्धापवादाभावात् । नान्यदौदयिकीत्यस्य पूर्वविद्धापरत्वाभावात् । तेन श्राद्धादौ कालान्तरे स्यान्न तु निषिद्धे । न हि व्रीह्यलाभे निषिद्धमाषग्रहणं युक्तम् । अत एव परेद्युः स-ङ्गवव्याप्तौ पूर्वविद्धानिषेधः, तदभावे तु नेति सुदर्शनव्याख्याऽप्य-युक्ता । विधिवैषम्यात्, [illegible]निषेधेऽपि तथाऽऽपत्तेश्च । पूर्वविद्धाव-चनसत्त्वे हि सा युज्यते । एवं श्रवणेऽपि ज्ञेयम् । तन्न, 'विष्णवृक्षे घटिकाद्वयम्' इति पूर्वोक्तविरोधात् । तेन प्राशस्त्यमात्रपर[illegible] क्वचित्पाठः । सुदर्शनभाष्यमतं प्रपञ्चयति—*परेद्युरिति । *सङ्गवाभावे=सङ्गवास्पर्शे । *पूर्वेद्युरुभयाभावे=उदयसङ्गवोभ-याभावे चैकैकसत्त्वे इति यावत् । एतेन पूर्वेद्युरुदयसङ्गवोभयसत्त्वे पूर्वेति व्यञ्जितम् । तत्रापि न पूर्वा, प्रतिपद्योगाभावादिति मतान्तरं प्रागुक्तम् । *सामान्यवाक्यादिति । सुदर्शनभाष्यकृतां सङ्गववाक्यस्यानुवादकत्वात् ।(२)( [illegible]

---

(१) इदमसंबद्धं प्रतिभाति । तत्तु सुधी[illegible] ।

(२) '( )'कंसान्तर्गतः पाठोऽत्र [illegible] दृश्यते ।

**तु निषिद्धे । न हि व्रीह्यलाभे निषिद्धमाषग्रहणं युक्तम् । अत एव परेद्युः सङ्क्रमणासौ पूर्वविद्धानिषेधः । तदभावे तु नेति पूर्वोक्तवाक्यस्यानुक्त्या, विधिवैषम्यात् । माषनिषेधेऽपि तथात्वमेव । *पूर्वविद्धावचनसत्त्वे हि सा युज्यते । एवं श्रवणेऽपि ज्ञेयम् । तन्न । 'विष्णुर्क्षे घटिकाद्वयम्' इति पूर्वोक्तविरोधात् । तेन प्राशस्त्यमात्रपरमिदम् । तत्त्वं तु एतच्छुद्धाधिकपरम् । तेन यथाग्निहोत्रादौ सायंप्रातःकालालाभे सामान्ये जीवनावच्छिन्नकाले *दर्शादौ वाऽनुष्ठानम्, यथा वा व्रीह्यस्वशक्यभावे यागादिर्निषिद्धवर्जद्रव्येण, तथाऽत्र सङ्क्रमाभावे निषिद्धवर्जकर्मपर्यासौदयिके कालान्तरे वाऽनुष्ठानं न तु कदाऽपि निषिद्धे । अपवादाभावे**

---

मित्तको यस्तदपवादः पूर्वविद्धाग्राह्यत्ववादः, तस्याभावादित्यर्थः ।) विधिवैषम्यं विवृणोति -*पूर्वविद्धावचनेति । इदं तु चिन्त्यम् ।

> 'अतो भूतादिने तस्मिन्नोपाकरणमिष्यते ।'

इति न निषेधः । हेतुपूर्वमेव 'नेष्यते' इत्यभिधानात् ।

तस्मात्सङ्क्रमणात्तौ परा, अन्यथा पूर्वेति मतं सम्यक् । अत्र "तत्त्वं त्वेतच्छुद्धाधिकपरम् । तेन यथाऽग्निहोत्रादौ सायंप्रातःकालालाभे सामान्ये जीवनावच्छिन्नकाले दर्शादौ वाऽनुष्ठानम् , यथा वा व्रीह्यस्वशक्यभावे यागादिनिषिद्धवर्जद्रव्येण, तथाऽत्र सङ्क्रमाभावे निषिद्धवर्जकर्मपर्यासौदयिके कालान्तरे वाऽनुष्ठानं, न तु कदाऽपि निषिद्धे । अपवादाभावे उत्सर्गस्यैव प्राप्तेः" इति क्वचित् पाठः । '[illegible] चेत् परमेव' इति सुदर्शनभाष्यम् । एतन्मते सङ्क्रमो न नियामक इत्याशयः । अत्रापि 'अतो भूतादिने' इत्यस्य न निषेधत्वमिति स्पष्टम् । 'तैत्तिरीया' इति पदोपादानफलं स्पष्टयति—*दर्शादाविति । यदि सामान्यकालेऽपि प्रतिबन्ध-

उत्सर्गस्यैव प्राप्तेः । *कात्यायनादीनां तु दिनद्वये पूर्वाह्ण-
व्याप्तौ एकदेशस्पर्शे वा पूर्वैवेति हेमाद्रिः । यदपि—

'श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ॥'

इति ब्रह्मवैवर्तम्, तद्ब्रह्मपवित्रश्रवणाकर्मादिदैव-
कर्मविषयमिति हेमाद्रिः । अत एव वचनात्कुलधर्मत्व-
तादावपि पूर्वैव । मदनरत्नेऽप्येवम् । मदनपारिजाते-पूर्व-
विद्धायां श्रावण्यां वाजसनेयिनामुपाकर्मेत्युक्तम् ।

मदनरत्ने तु—

'पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ।'

इति बह्वृचपरिशिष्टे बह्वृचान्प्रति कर्मविधानार्थं
प्रवृत्ते तत्र तैत्तिरीयककर्मविध्ययोगात् पूर्वोक्तकालिका-
पुराणादौ सामान्यत औदयिकपर्वप्राप्तेस्तन्निषेधेन बह्वृ-
चानां श्रवणविधानात्तैत्तिरीयकपदमनुवादत्वात् तस्य
च प्राप्त्यधीनत्वात् प्राप्तेश्च यजुर्वेदिमात्रपरत्वात्सर्वयजु-
र्वेद्युपलक्षणार्थम्, अ(१)वयुत्यानुवादो वा, न तु विधा-
यकम् । *येन विशेषविधिनोपसंहारः स्यात् । अनुवा-
दत्वाल्लक्षणा न दोषः । अन्यथा त्वौदयिकपर्वविशिष्टो-

---

ऽन्यदा कालान्तरमेवेत्यत्र दृष्टान्तः । *कात्यायनादीनां त्विति ।
सर्वं वाक्यमेवानुवादः तैत्तिरीयकपदमात्रं वा ?, आद्ये कालिका-
पुराणादिति । अन्त्ये कुर्युरिति । कालिकापुराणादौ प्रत्यक्षतो
विधिप्रत्ययाश्रवणेन यावद्विधिः कल्प्येत तावत्ततः प्रागेव कुर्युरिति
प्रत्यक्षविधिना तैत्तिरीयान् प्रत्येव तद्विधिरुपेयते, उपस्थितिलाघ-
वादिति भावः ।

*येनेति । तैत्तिरीयकसम्बन्धिधर्मविधानार्थं प्रवृत्तेन गृह्येन

---

(१) अवयुत्य=पृथक्कृत्य अनुवादो वा ॥

पाकर्मोद्देशेन कर्तृविधौ कर्तृविशिष्टे वा औदयिकपर्वविधौ वाक्यभेदापत्तेः । तस्मात्तैत्तिरीयकपदाविवक्षया सर्वयजुर्वेदिनामौदयिकमेव पर्वेत्युक्तम् । तन्न । न तावत्परिशिष्टे बह्वृचान्प्रत्येव विधिः ।

'धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।'

इत्यादितदुदाहृते एव परिशिष्टे वेदान्तरधर्मविधीनां दर्शनात् । नाप्यनुवादोऽयं कालिकापुराणाद्बह्वृचादीनामपि तदापत्तेः । कुर्युरित्यस्य विधित्वेन तस्यैवार्थवादत्वेनैतत्प्राप्तानुवादित्वाच्च । न च तैत्तिरीयकाणां गृह्ये तद्विधिरस्ति, येनानुवादः स्यात् । न च वाक्यभेदः । तैत्तिरीयकमात्रस्य कर्ममात्रस्य वा उद्देश्यत्वायोगेन *हविरार्तिवत्, 'अष्टवर्षं ब्राह्मणमुपनयीत' इतिवच्चागत्या विशिष्टस्योद्देश्यत्वात् । *अन्यथोत्तरार्धे बह्वृचपदस्याप्यविवक्षापत्त्या श्रवणस्य सर्वसाधारण्यापत्तेः । *तस्मात् हेमाद्रिमतमेव युक्तमिति दिक् । इदं च शिष्यानध्यापयन् आवसथ्येऽग्नौ, अनध्यापयतो नाधिकार इति कर्कः । श्रावण्यामपि ग्रहणादिदुष्टायां कातीयभिन्नैः

---

तल्लाभे पुनस्तदुपादानमिति शेषः । *हविरिति । हविरार्त्यादे[illegible] उद्देश्यत्वस्यायोगात् । 'तैत्तिरीयकमात्रस्य' इत्यत्राष्टवर्षमिति दृष्टान्तः । ब्राह्मणमात्रस्योद्देश्यत्वायोगात् । 'कर्ममात्रस्य' इत्यत्र हविरिति दृष्टान्तः । आर्तिमात्रस्योद्देश्यत्वायोगात् ।

नन्वेवं वाक्यभेदपरिहारेऽपि तुल्यकक्षाणामेव समभिव्याहा[illegible] लभ्यते । न हि क्षत्रियैरिदं कर्म कर्तव्यं वैश्यैरिदं कठैरिदमिति भवति, भवति तु ब्राह्मणैरिदमितीत्यत्राह— *अन्यथेति । समभिव्याहारस्य तैत्तिरीयकपदधर्मत्वेन तस्यैवाविवक्षायां बह्वृचपदस्याप्यविवक्षापत्तेरिति भावः । *तस्मादि-

*प्रौष्ठपद्यां कार्यम्। तैस्तु श्रवणपञ्चम्यां—

'संक्रान्तिर्ग्रहणं वाऽपि पौर्णमास्यां यदा भवेत्।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः॥'

इति स्मृतिमहार्णवे वाजसनेयिग्रहणादिति हेमाद्रिः।(१)( इदं च सूत्रोक्तकालपरत्वाद्धस्तपरमपि। आश्वलायनैस्तु हस्ते कार्यम्। आपस्तम्बैराथर्वणैश्च प्रौष्ठपद्याम्। ) यत्तु बौधायनः—'श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य' इत्यूचे, तत् प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्यमित्येवमर्थं, *श्रवणाभावे तिथिपरं वा।

सामगास्तु श्रावणे हस्ते कुर्युः।

'बह्वृचाः श्रवणे चैव हस्तर्क्षे सामवेदिनः।'

इति निर्णयामृते गोभिलोक्तेः। सोऽप्युत्तरः।

---

त्ति। 'धनिष्ठाप्रतिपद्युक्तम्' इत्यादौ यजुःपदस्य तैत्तिरीयपरत्वादिति भावः। दिगर्थस्तु कालिकापुराणमपि तैत्तिरीयकपरमेवेति। विवेचने तु हेमाद्रिमतं त्यक्तम्। *प्रौष्ठपद्यामिति। 'श्रावण्यां प्रौष्ठपद्यां वा' इत्युक्तेः। परं तु येषां गृह्ये श्रावण्यसम्भवे श्रावणहस्तपञ्चम्यनुक्ते तैस्तत्र कार्यम्। तयोरप्यसम्भवे भाद्रपौर्णमास्यां [illegible] कार्यम्, येषां गृह्ये ते नोक्ते तैर्भाद्रपद्येव ग्राह्या वाजसनेयिभिरिति।

अत्राहुः—अत्र वाजसनेयिभिरेवेति नार्थः। बह्वृचानां पञ्चम्यनापत्तेः। किं तु येषां वाजसनेयिनां सूत्रे पञ्चम्युक्ता तेषां पर्वदोषे पञ्चमी, अन्येषां तु प्रौष्ठपदीति। एवं च मैत्रायणीयानां पौर्णमास्येव न। तद्गृह्ये श्रवणस्यैवोक्तेरिति द्रष्टव्यम्। *नच्छास्त्रीयेति। बौधायनैर्वार्षिकसमाख्यां बाधित्वाऽऽषाढी ग्राह्येत्यर्थः। एवं च—

(१) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति।

'धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥'

इति मदनरत्ने परिशिष्टोक्तेः । गार्ग्योऽपि—

'सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे*ऽविवरे बहिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम् ॥
*शुक्लपक्षे तु *हस्तेन उपाकर्मापराह्णिकम् ॥' इति ।

अविवरे=ग्रहादिदोषहीने । विवरेदिति पाठोऽज्ञानकृतः । (१)(पुष्यर्क्षे*पूर्वाह्णे उत्सर्गः । अपराह्णिकमुपाकर्मेत्यन्वयः ।) उपाकरणं नाम पक्षद्वयेऽपि स्वाध्यायपाठस्य स्वीकारः । तथा च सूत्रम्–'षण्मासानधीयीत' इति । एवं च यथासूत्रमुपाकर्म कृत्वा सार्धांश्चतुरः पञ्च षड् वा मासानुत्सर्जनकालवशाद् व्यवस्थया स्मृतिसिद्धानध्यायपरिहारेण शुक्लकृष्णपक्षयोः स्वाध्यायमधीयीरन्, अलब्धावेकमङ्गानि । उत्सर्जनं च यथापूर्वं पक्षद्वयेऽपि स्वाध्यायपाठस्य त्यागः । उत्सर्जनोत्तरं शुक्लपक्षेष्वेव वेदाध्ययनविधानात् । तथा च मनुः—

'यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशम् ॥

---

'श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ।
आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं मतम् ॥'

इति कमलाकरस्यापि बौधायनसम्मतमिति भावः । *अविवरे=सङ्क्रान्त्यादिदोषहीने । विवरेदिति पाठोऽज्ञानकृतः । *शुक्लपक्षे त्विति । सिंह रवाविति वर्तते । *हस्तेनेति । 'प्रौष्ठपदी हस्तेन' इत्यादौ सौरप्रौष्ठपदोपादानेन चान्द्रभाद्रपदी हस्तयुक्ता कां च न तिथिं प्राप्नोति सम एवार्थः । *पुष्यर्क्षे इति । एतेन हस्ता-

(१) कुण्डलान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् ॥' इति ।

अन्यस्तु *विशेषः पूर्वमेवोक्तः । प्रयोगपारिजाते गोभिलः—

'*उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
*धारणाध्ययनाङ्गत्वाद् गृहिणां ब्रह्मचारिणाम् ॥
उत्सर्जनं च वेदानामुपाकरणकर्म च ।

---

त्पूर्वः पुण्यो लभ्यते ।

*विशेषः=मलमासे सामगानां प्रथमोपाकर्मनिषेध इत्यादिः । 'उपाकृत्याधीयीत' इति सूत्रादुपाकरणं ग्रहणाध्ययनाङ्गम् । तद्धिकारिणश्च ब्रह्मचारिणः व्रतमात्रस्नातका गृहिणोऽपि । 'तथा समावृत्तो ब्रह्मचारिकल्पेन' इत्याश्वलायनेन

'वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।'

इति व्रतमात्रानुष्ठानेन स्नानं वदता योगीश्वरेण च ग्रहणाध्ययनध्वननात् । अतो धारणाध्ययनार्थत्वमप्याह—*उपाकर्मेति । ग्रहणधारणब्रह्मयज्ञपारायणादिकरणहेतुकर्मविशेषः=उपाकर्म । तत्त्यागहेतुकर्मविशेषः=उत्सर्जनम् । हेत्वन्तं च परित्यागकम् । तत्रोपाकर्मानन्तरं यावदुत्सर्जनं स्मृतिसिद्धाननध्यायान्विना पक्षद्वये वेदोऽध्येतव्यः, अनध्यायेष्वङ्गानि । उत्सर्जनानन्तरं तु शुक्लपक्ष एव वेदः ।

'यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशम् ॥
अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु सम्पठेत् ॥'

इति मनुवाक्यात् । एतच्च धारणाध्ययनं न तु ग्रहणाध्ययनम् । 'उपाकृत्याधीयीत' इत्युक्तेः । उत्तरायणे आरण्यकाध्ययनं तूपाकर्मादिनस्योत्सर्जनकालत्वप्रसादायोग्यत्वाद् । *धारणेति ।

अकृत्वा वेदजप्येन फलं नाप्नोति मानवः ॥'

सर्वथा लोपे तु कृच्छ्र उपवासश्च । 'वेदोदितानां नित्यानाम्' इति मनुनाऽभोजनोक्तेः । एवमुत्सर्गेऽपि ।

अथ प्रसङ्गादत्रैवोत्सर्जनमुच्यते । तच्च पौषमासे रोहिण्यां तत्कृष्णाष्टम्यां वा कार्यम् ।

'पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥'

इति याज्ञवल्क्योक्तेः । *श्रावण्यां प्रौष्ठपद्यां वोपाकृतौ क्रमेण पौषशुक्लप्रतिपदि माघशुक्लप्रतिपदि वा का-

---

'अध्येष्यमाणोऽध्याप्यैरन्वारब्धः' इति । अध्येष्यमाणः=अध्यापयिष्यमाणः । अध्याप्यपदसमभिव्याहारात् । अध्यापनम्=धारणाध्ययनरूपमिति तेनैव रूपेण लटोपाकर्म प्रति शेषित्वप्रतीतिः । वेदजप्येनेत्यपि धारणाध्ययनाङ्गत्वसूचकम् । एवं च तत्समर्थस्याध्याप्यैर्विनाऽप्युपाकर्मादि आवश्यकम् । उपाकृतानां चोत्सर्गः । ततश्चानयोर्नित्यत्वात्तल्लोपे प्रायश्चित्तं सर्वथा इति कृच्छ्रः । पाकयज्ञलोपे कृच्छ्रविधानात् ।

'वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥' इति ।

*अथापि वेति ।

'जलान्ते छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।'

इत्युत्तरार्धे ग्रामाद्बहिरित्यर्थः । *श्रावण्यामिति ।

'पुष्ये तु च्छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य सम्प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥'

इति मानवात् । पुष्ये=पौषे मासि । शुक्लपक्षादित्यन्वयः । यदा श्रावण्यामुपाकर्म तदा पौषशुक्लप्रतिपदि, यदा भाद्र्यां तदा-

र्यम्। '*अर्धपञ्चमान्मासानधीयीत' इति मनूक्तेः। अर्धः पञ्चमो येषु सार्धचतुर इत्यर्थः। यत्तु हारीतः—'अर्धपञ्चमान्मासानधीत्योदगुत्सृजेत्, पञ्चा*र्धषष्ठान्वा' इति; तदाषाढ्युपाकर्मविषयम्। बौधायनास्तु पौष्यां माघ्यां वा कुर्युः। 'पौष्यां माघ्यां चोत्सृजेत्' इति तत्सूत्रात्। तैत्तिरीयैस्तु तैष्यां कार्यम्। 'तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत्' इति तत्सूत्रात्; बह्वृचैस्तु माघ्यां कार्यम्।

'अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते'।

इति कारिकोक्तेः। कातीयास्तु भाद्रपदे कुर्युः।

'उत्सर्गश्चेत्तदा तिष्यतिथ्यां रौद्रर्क्षकेऽपि वा।'

इति कात्यायनोक्तेः। सामगास्तु सिंहार्के पुष्ये कुर्युः। तथा च 'सिंहे रवौ तु' इति गार्ग्यवचनं पूर्वमुक्तम्। *सर्वैरुपाकर्मदिने वा कार्यम्।

---

माघशुक्लप्रतिपदीत्यर्थः। *अर्धेति। अर्धः पञ्चमो येषु इति विग्रहः। सार्धाश्चत्वार इत्यर्थः।

'श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥'

इत्यत्र तथैव प्रतीतेः। एतेषां पक्षाणां यथा परिग्रहं व्यवस्था। विज्ञानेश्वरस्तु पौषे पूर्वाण्हमात्रान्वयः, न तु प्रथमाहःशुक्लपक्षयोः। 'अर्धपञ्चमान्मासानधीयीत' इत्यादौ अर्धपदं खण्डपरं न समांश-परं चन्द्रार्धमौलिरित्यादिवत्। टीकाकारस्तु व्यवस्थितविकल्पार्थं इत्याह—*अर्धषष्ठानिति। अर्धः षष्ठो येषां तान् सार्धाः पञ्चेत्यर्थः।

*सर्वैरिति। अत्रापि स्वगृह्ये चोदिता एव मङ्गलस्पर्शिनः कालाः, तेषां दैवत्वेन पुरस्कृतत्वात्। ननु सिंहे रवावि-

'पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वा ।'

इति हेमाद्रौ खादिरगृह्योक्तेः ।

*यदा सिंहस्थे सूर्ये सति तन्मध्यस्थहस्तनक्षत्रा-त्प्राक् पुष्यः कर्कटस्थो भवति तदा तस्मिन्पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः ।

'मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा ।
तदा च श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः ॥'

इति तत्रैव परिशिष्टोक्तेः । अत्र द्वावपि सौरौ मासौ ज्ञेयौ* । तेषां सौरस्यैवोक्तेः ।

अत्र *विशेषमाह कार्ष्णाजिनिः—

'उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च ।

---

त्यनेनोपाकर्मोत्सर्गयोर्नक्षत्रयोः हस्तपुष्ययोः सिंहस्थत्वमुक्तं तत्रो-त्सर्गनक्षत्रपुष्यस्य यत्र कर्कस्थत्वं तत्र तल्लोपापत्तिः सिंहस्थ-त्वाभावादित्यत्राह—*यदेति । तत्र 'उपाकर्मोत्सर्जनं भवेत्'इति प्रोक्तवचनाच्च । आषाढ्यामुपाकृत्य माघशुक्लप्रतिपद्युत्सर्गे तु सार्ध-पञ्चमासाध्ययनमपि बोध्यम् । कर्कस्थः=कर्कस्थ एव न तु सिंहस्थः । सिंहस्थे पुष्ये तु तत्रैवेत्यर्थः । *ज्ञेयाविति । अन्यथा यत्र चान्द्रप्रौष्ठपदे एव सौरश्रावणे पुष्यः, सौरभाद्रपदे च हस्तः तदाऽपि चान्द्रश्रावणग्रहणं स्यात् । *विशेषमिति । अत्र चेदं द्रष्टव्यम् ।

'स्वशाखीं नैव कुर्वीत स्वकीयं परशाखया ।
प्रमादाद्यदि कुर्वीत पुनः संस्कारमर्हति ॥
यत्र नास्ति स्वशाखोक्तमृक्शाखोक्तं समाचरेत् ।
पुनर्नार्हति संस्कारमन्यदाऽर्हति चेत् पुनः ॥
[illegible] बह्वृचैर्यदि कर्म तत् ।
कृतं चेत्तर्हि तत्कर्म पुनः कुर्याद्यथाविधि ॥

ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ॥' इति ।

'उपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वाऽनध्यायः' इति मिताक्षरायामुक्तम् । अत्र नदीनां रजोदोषो नास्ति ।

'उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते ।'

इति गार्ग्योक्तेः ।

अत्रैव रक्षाबन्धनमुक्तं हेमाद्रौ भविष्ये

(१)('संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
उपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम् ।
शूद्राणां मन्त्ररहितं स्नानं दानं च शस्यते । )
उपाकर्मणि कर्तव्यमृषीणां चैव पूजनम् ॥
ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ।
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैः ॥' इति ।

अत्रोपाकर्मानन्तर्यस्य पूर्णातिथ्यार्थिकस्यानुवादो न तु विधिः । गौरवात् प्रयोगविधिभेदेन क्रमायोगाच्छूद्रादौ तदयोगाच्च । तेन परेद्युरुपाकरणेऽपि पूर्वेद्युरपराह्णे तत्करणं सिद्धम् । इदं भद्रायां न कार्यम् ।

'भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।
स्वशाखाविधिना कर्म यदि स्यादन्यशाखिनाम् ।
न तत्कर्म पुनः कुर्यादिति यज्ञविदां मतम् ॥' इति ।

ननु—

'उपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम् ।'

इत्याद्युपक्रम्य 'ततोऽपराह्णसमये' इत्यादि उक्तम् । ततश्च वक्ष्यमाणदोषो दुर्वार इत्यत्राह—*अत्रेति । अपराह्णः कर्मकालः ।

(१) कोष्ठान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ॥'

इति संग्रहोक्तेः । *तत्सत्त्वे तु रात्रावपि तदन्ते कुर्यादिति निर्णयामृते । (१) इदं प्रतिपद्युतायां न कार्यम् ।

'नन्दायां दर्शने रक्षा बलिदानं दशासु च ।
भद्रायां गोकुलक्रीडा देशनाशाय जायते ॥'

इति मदनरत्ने ब्रह्मवैवर्तात् । भविष्ये—

'उपलिप्ते गृहमध्ये दत्तचतुष्के न्यसेत्कुम्भम् ।
पीठे तत्रोपविशेद्राजाऽमात्यैर्युतश्च सुमुहूर्ते ॥
तदनु पुरोधा नृपते रक्षां बध्नीत मन्त्रेण ॥'

इदं रक्षाबन्धनं नियतकालत्वाद्भद्रावर्ज्यं ग्रहणदिनेऽपि कार्यं होलिकावत् । ग्रहसंक्रान्त्यादौ रक्षानिषेधाभावात् ।

'सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।'

इति तत्कालीनकर्मपर एव न त्वन्यत्र । अन्यथा होलिकायां का गतिः । अत एव—

'नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥'

इति नियतकालीने तदभाव इति दिक् । उपाकर्मणि तद्दिनभिन्नपरं तत्र तन्निषेधादित्युक्तं प्राक् । मन्त्रस्तु—

*'येन बद्धो बली राजा दानवेन्द्रो महाबलः ।
तेन त्वामपि बध्नामि रक्षे मा चल मा चल ॥

---

दिनद्वयव्याप्तौ पूर्वा 'श्रावणी दुर्गनवमी' इति वाक्यात् । *तत्सत्त्वे त्विति । भद्रां विना चेदपराह्णे तदा परा । तत्सत्त्वे तु रात्रावपीत्यर्थः । *येन=रक्षाबन्धनाभावेन हेतुना । तेनेत्यस्यापि

(१) तत्कालमात्रनिषेधाच्च 'त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् । मार्कण्डेयेषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥' इति यो निषेधः सोऽप्यनित्य इति विशेषः कर्मभिङ्गिस्धुल्लके ।

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः ।
कर्तव्यो रक्षिताचारो द्विजान्संपूज्य शक्तितः ॥' इति

अत्रैव हयग्रीवोत्पत्तिः । तदुक्तं कल्पतरौ—
'श्रावण्यां श्रवणे जातः पूर्वं हयशिरा हरिः ।
जगाद सामवेदं तु सर्वकल्मषनाशनम् ॥
स्नात्वा संपूजयेत्तं तु शङ्खचक्रगदाधरम् ॥'

अत्राश्वलायनेन श्रवणाकर्मोक्तम् । 'श्रावण्यां पौर्णमास्यां श्रवणाकर्म' इति । तत्राऽस्तमययोगिनी ग्राह्या । 'अस्तमिते स्थालीपाकं श्रपयित्वा' इति सूत्रात् । अत एव निरूढेष्टेर्दर्शप्रयोगान्तःपातनियमात्तदङ्गैः प्रसङ्गसिद्धिरुक्ता द्वादशे । अन्यथा परेद्युः प्राप्तौ कः प्रसङ्गः प्रसङ्गस्य । *केचित्तु पौर्णिमादर्शशब्दयोः पर्वान्त्यक्षणवदहोरात्रवाचित्वात्तत्रैव कर्मकालव्याप्तिर्ग्राह्येति विकृतित्वाच्छेषपर्वेच्छन्ति ।

---

स एवार्थः । तत्कार्ये तत्कार्यस्य प्रतिबन्धकत्वात् । *अस्तमयेति । कर्मकालशास्त्रात् । दिनद्वये तद्व्याप्त्यभावव्याप्तौ वा परा विकृतित्वात् । एवं सर्पबलावपि । *केचित्त्विति याज्ञिकमतम् । दर्शशब्दवत् पौर्णमासीशब्दस्यापि तदन्त्यक्षणवदहोरात्रवाचित्वात् पर्वसन्धिदिनेऽस्तमितलाभः ।

अत्रेदमरुचिबीजम् । द्वादशे निरूढेष्टेर्दर्शप्रयोगान्तःपातित्वात्तदङ्गैः प्रसङ्गसिद्धिरिति सिद्धान्तितम्, तद्भङ्गापत्तिः । भवन्मते तस्या विकृतित्वेन शेषपर्वण्येव न्याय्यत्वेनान्तःपाताभावादिति । श्रवणाकर्मसर्पबल्योरकरणे प्रायश्चित्तमाह प्रजापतिः—

'हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमादितः ।
प्राजापत्येन शुध्येत पाकसंस्थासु चैव हि ॥' इति ।

श्रावणादिमासचतुष्टयकृष्णपक्षद्वितीयासु अशून्यशयनव्रतम् । तत्र *चन्द्रोदयव्यापिनी, दिनद्वये तत्त्वे *परेति निर्णयामृते ॥ इति कमलाकरभट्टकृते निर्णयसिन्धौ श्रावणमासः ॥

*सिंहे पराः षोडशघटिकाः पुण्यकालः । अन्यत्पूर्ववत् । अत्र गोप्रसवेऽद्भुतसागरे नारदः—

'भानौ सिंहगते चैव यस्य गौः संप्रसूयते ।
मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥
तत्र शान्तिं प्रवक्ष्यामि येन संपद्यते शुभम् ।
प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् ॥
ततो होमं प्रकुर्वीत घृताक्तैः राजसर्षपैः ।
आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥
[व्याहृतिभिश्चायं होमः ।]

---

एतच्च श्रवणाकर्मसर्पबल्याश्वयुजीकर्माग्रयणप्रत्यवरोहणेषु प्रवर्तते । तत्र प्रायश्चित्तान्तरादर्शनात् । *चन्द्रोदयेति ।

'एकभक्ते दिवानक्ते निशि चन्द्रोदयव्रते ।
तिथिस्तात्कालिकी ग्राह्या पारणे त्वपरा तिथिः ॥'

इति स्मृतिसङ्ग्रहात् । इदं च चन्द्रोदयव्रतम् ।

'चन्द्राय वाऽर्घ्यो दातव्यो दध्यक्षतविभूषितः ।'

इति चन्द्रोदये चन्द्रार्घ्यदानविधानात् । *परेति ।

'चतुर्ष्वसितपक्षेषु मासेषु श्रावणादिषु ।
अशून्याख्यं व्रतं कुर्याज्ज्ञायथा तु फलाधिकम् ॥'

इत्युक्तेः । अत एव दिनद्वये तदभावेऽपि परा ।
मासश्च पूर्णिमान्तः । हेमाद्रिणा तथा व्याख्यानात् ।

इति श्रावणः ॥

*सिंहे परा इति । पूर्वा इत्यपपाठः ।

सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणाम् ।' इति ।

तथा—

'सिंहराशौ गते सूर्ये गोप्रसूतिर्यदा भवेत् ।
पौषे च महिषी सूते दिवैवाश्वतरी तथा ॥
तदाऽनिष्टं भवेत्किंचित्तच्छान्त्यै शान्तिकं चरेत् ।
अस्यवामेति सूक्तेन तद्विष्णोरिति मन्त्रतः ॥
जुहुयाच्च तिलाज्येन शतमष्टोत्तराधिकम् ।
मृत्युंजयविधानेन जुहुयाच्च तथायुतम् ॥
श्रीसूक्तेन ततः स्नायाच्छान्तिसूक्तेन वा पुनः ।
मध्यरात्रे निशीथे वा यदा गौः क्रन्दते सदा ॥
ग्रामे वा स्वगृहे वापि शान्तिकं पूर्ववद्दिशेत् ॥'

एवं श्रावणे वडवाप्रसवो दिने निषिद्धः । तदुक्तमथर्ववेदिनां गार्ग्यपरिशिष्टे—

'माघे बुधे च महिषी श्रावणे वडवा दिवा ।
सिंहे गावः प्रसूयन्ते स्वामिनो मृत्युदायकाः ॥' इति ।

अत्र *तदुक्तामृताख्या शान्तिः कार्या ।

भाद्रकृष्णतृतीया कज्जलीसंज्ञा । सा परा ग्राह्येति दिवोदासीये उक्तम् । *वचनं तु हरितालिकाप्रकरणे वक्ष्यामः । *भाद्रकृष्णचतुर्थी बहुलाख्या मध्यदेशे

---

*तदुक्ता=अथर्वोक्ता । कज्जलीव्रतं पूर्णिमान्तश्रावणकृष्णतृतीयायां कार्यमिति मतं निरसितुमाह—*वचनान्त्विति । चतुर्थीमिश्रिता' इत्युपक्रम्य 'भाद्रस्य कज्जली कृष्णा ।' इत्युक्तेः ।

*भाद्रकृष्णेति । अमान्तमानेन श्रावणकृष्णोपादानं प्रमादात् । पूर्णिमान्तमानेन श्रावणकृष्णे द्रष्टव्यम् । भाद्रपदकृष्णचतुर्थ्यां सङ्कष्टचतुर्थीव्रतं स्कान्दे—

'श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये ।

प्रसिद्धा । सा *सायाह्नव्यापिनी ग्राह्या । दिनद्वये तत्त्वे पूर्वा ग्राह्या ॥

*'गौर्याश्चतुर्थी *वटधेनुपूजा *दुर्गार्चनं कुम्भरहोलिके च ।
*वत्सस्य पूजा शिवरात्रिरेताः परान्विता घ्नन्ति नृपं सराष्ट्रम् ॥'

इति दिवोदासीये वचनात् । 'अत्र वत्सपूजायाः पृथगुपादानात् धेनुपूजाशब्देन बहुलाख्या गृह्यते' इति स एव व्याचख्यौ । मदनरत्नेऽप्येवम् । अत्र गोपूजा-यवान्नाशनं च तत्रैवोक्तम् । भाद्रकृष्णषष्ठी हलषष्ठी । सा सप्तमीयुतेति दिवोदासः । भाद्रकृष्णसप्तम्यां शीतलाव्रतम् । तत्र *पूर्वा ग्राह्येति हेमाद्रौ ।

अथ जन्माष्टमी । सा च *कृष्णादिमासेन भाद्रप-

---

गणेशं पूजयित्वा तु चन्द्रायार्घ्यश्च दीयते ॥' इति ।

श्रावणोऽमान्तः 'व्रते शुक्लादिमेव च' इत्युक्तेः । इयं चन्द्रोदययोगिनी ग्राह्या । तत्काले चन्द्रार्घ्यदानोक्त्या चन्द्रोदयव्रतत्वात् ।

'चन्द्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृता ।'

इत्युक्तेः । दिनद्वये चन्द्रोदये सत्त्वेऽसत्त्वे वा पूर्वं निरूपितमेतत्सामान्यनिर्णये । *सायाह्नेति । गोधूलिकाले गोपूजाद्युक्तेः । *गौर्याः=गौरीव्रतसम्बन्धिनी चतुर्थी ।

*वटेति । वटसम्बन्धिनी पञ्चदशी । *दुर्गार्चनं=दुर्गानवमी । कुम्भरः+ ॥ *वत्सस्य पूजा=वत्सद्वादशी । *पूर्वेति । नव्यास्तु हलषष्ठ्यां शीतलाव्रते च मध्याह्नव्यापिनी ।

'पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।'

इत्युक्तेः । दिनद्वये सत्त्वेऽसत्त्वे वा पूर्वा युग्मवाक्यादित्याहुः ॥

*कृष्णादीति । 'श्रावणे बहुले पक्षे' इत्यादिकं तु शुक्ला-

दकृष्णाष्टमी ।

'तथा भाद्रपदे मासि *कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥'

इति कल्पतरौ ब्राह्मोक्तेः । अत्रेदं माधवमतम् । अष्टमी द्वेधा—जन्माष्टमी जयन्ती चेति । तत्राद्या केवलाष्टमी ।

'ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् ।
ते भवन्ति नराः प्राज्ञ व्याला व्याघ्राश्च कानने ॥'

इति स्कान्दात्,

'दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥'

इति पुराणान्तरात्,

'श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति क्रूरराक्षसः ॥'

इति भविष्योक्तेश्च केवलाष्टम्या एवोपोष्यत्वावगतेः । सैव रोहिणीयुक्ता जयन्ती ।

*'कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि ।
जयन्ती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः ॥'

इति वह्निपुराणात् ।

'अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता ।
भवेत्प्रौष्ठपदे मासि जयन्ती नाम सा स्मृता ॥'

इति विष्णुरहस्यादिवचनाच्च । *ज्योतिरादिवत्सं-

---

दिमासेनेत्युभाभ्यामेकैव तिथिर्लभ्यते । अन्यथा तिथिभेदापत्त्या मूलश्रुतिभेदापत्तेः । *कृष्णाष्टम्याम्=कृष्णपक्षाष्टम्याम् । कृष्णाष्टम्याम्=कृष्णजन्माष्टम्याम् । *ज्योतिरादिवदिति । यथा "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्र-

ज्ञया कर्मभेदः । रोहिणीयोगश्चाहोरात्रं मुख्यः, निशीथमात्रे मध्यमः, दिवसादावधमः ।

'*अहोरात्रं तयोर्योगो ह्यसंपूर्णो भवेद्यदि ।
मुहूर्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत् ॥'

इति वासिष्ठसंहितोक्तेः ।

'अर्धरात्रे तु योगोऽयं तारापत्युदये सति ।
नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्तयेत् ॥'

इति विष्णुधर्मोक्तेः ।

'वासरे वा निशायां वा यत्र स्वल्पाऽपि रोहिणी ।
विशेषेण नभोमासे सैवोपोष्या मनीषिभिः ॥'

इति पुराणान्तराच्च । विशेषेणेति श्रुते*र्भाद्रपदेऽपीदम् । 'श्रावणे वा नभस्ये वा' इति वक्ष्यमाणात् । गौडास्तु निशीथ एव रोहिणीयोगे जयन्ती *नान्यथेत्याहुः । तन्न । *'वासरे वा निशायां वा' इति विरोधात् । *योगवि-

---

क्षिणेन यजेत" इत्यत्र प्रकृतविच्छेदकेनाथशब्देन एतच्छब्दाभ्यां प्रकृतज्योतिष्टोमानुवादासम्भवात्तत्र गुणविधित्वं न सम्भवतीति ज्योतिष्टोमादिसंज्ञाभिन्नया ज्योतिरादिसंज्ञया कर्मभेदः । तथा जन्माष्टमीसंज्ञाभिन्नया जयन्तीसंज्ञयाऽपीत्यर्थः ।

*अहोरात्रमिति । अहोरात्रयोगं प्रत्याय्यैव व्यतिरेकोक्तेः । *भाद्रपदेऽपीति । शुक्लादिमासमभिप्रेत्य । *नान्यथेति । अहोरात्रयोगे निशीथयोगः सम्भवति । मुहूर्तपदं च निशीथाख्यमुहूर्तपरम् । *वासरे वेति । न चेदं स्तावकं, निशीथेनात्यन्तविप्रकर्षात् । केषांचिन्मतमास्कन्दयति—* योगेति । अयमाशयः—रोहिणीयोगस्य जयन्तीति संज्ञा सा नित्यां जन्माष्टमीमाश्रित्य

'रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम ।

मदनरत्ने स्कान्दे त्वत्र *फलमप्युक्तम् ।
'जन्माष्टमीव्रतं ये वै प्रकुर्वन्ति नरोत्तमाः ।
कारयन्त्यथवा लोकाँल्लक्ष्मीस्तेषां सदा स्थिरा ॥
सिध्यन्ति सर्वकार्याणि कृते जन्माष्टमीव्रते ॥' इति ।

जयन्तीव्रतं तु नित्यं काम्यं च ।

'महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽनघ ।
धर्ममर्थं च कामं च मोक्षं च मुनिपुङ्गव ॥
ददाति वाञ्छितानर्थान्ये चान्येऽप्यतिदुर्लभाः ॥'

इति स्कान्दादौ फलश्रुतेः ।

'शूद्रान्नेन तु यत्पापं शवहस्तस्थभोजने ।
तत्पापं लभते कुन्ति जयन्तीविमुखो नरः ॥
न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम् ।
यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥'

इत्यकरणे निन्दाश्रुतेश्च । *यदा च *पूर्वेद्युः परेद्युर्वा रोहिणीयोगस्तदा जन्माष्टमी जयन्त्यामन्तर्भूता ज्ञेया

---

वासासमर्थश्चेदेकं विप्रं तु भोजयेत्' इत्यादिर्द्रष्टव्यः । *फलमपीति । एतच्च 'जन्माष्टमी नित्यत्वाच्छुद्धा, जयन्ती तु नित्यकाम्यत्वाभ्यां मिश्रा' इति माधवोक्तिखण्डनार्थम् । वस्तुतस्तु स्कान्दात् तत्र फलं न प्रतीयत एव तस्य सुहृत्संमितत्वात् । तस्मात्

'केवलेनोपवासेन तस्मिन् जन्मदिने मम ।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥'

इति वाक्यात्पापक्षयः फलमिति नव्याः । नन्वेवं यत्र पूर्वेद्युर्जन्माष्टमी परेद्युश्च जयन्ती तत्र पारणाया अङ्गत्वाद्भोजनोपवासरूपविरुद्धधर्मद्वयमसंगतम् इत्यत्र माधवाचार्याणां समाधिमाह—*यदा चेति । *पूर्वेद्युरिति दृष्टान्तार्थम् । नन्वेवं तद्व्रतयो-

*न तु जन्माष्टमीव्रतं पृथक्कार्यं विष्णुशृङ्खलवत् । तदुक्तं माधवेनैव—

'यस्मिन्वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा ।
अन्तर्भूता जयन्त्यां स्यादृक्षयोगः प्रशस्तितः ॥'इति

मदनरत्ननिर्णयामृतगौडमैथिलमतेऽप्येवम् । *हेमाद्रिस्तु-

'रोहिणीसंयुतोपोष्या सर्वाघौघविनाशिनी ।
अर्धरात्रादधश्चोर्ध्वं कलया वा यदा भवेत् ॥
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी ॥'

इत्यग्निपुराणाद*र्धरात्र एव रोहिणीयोगस्य प्राशस्त्यात् *'मुहूर्तमपि लभ्येत' इत्यादीनां चा*र्धरात्र-

---

ऐक्यापत्तिरित्यत्राह-*न त्विति । यद्वर्षे जयन्तीयोगो नास्ति तद्वर्षे जन्माष्टमीव्रतं भवत्येव, ऐक्ये तु जयन्त्यभावे तन्न स्यादिति भावः । अत्रोपक्रान्तजयन्तीव्रतस्य जन्माष्टमीव्रतं भवत्येव पारणालोपभयाभावस्याग्रे स्फुटीकरणादित्यरुचिः । *हेमाद्रिस्त्विति । इत्यूचिवानित्यनेनान्वयः । *अर्धरात्र एवेति । "अर्धरात्रे तु योगोऽयम्" इतिवाक्योक्तस्येत्यादिः । "पूजां तत्र प्रवर्तयेत्"इति तु "दाक्षायणयज्ञेन स्वर्गकामो यजेत" इतिवज्जन्माष्टमीव्रतस्य प्रकारभेदमात्रमिति भावः । ननु—

'प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्त्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत् ॥'

इतिवचनेऽहोरात्रे तदन्तर्गतयाकिंचिन्मुहूर्तं प्रतीयते ।

'मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते ।
अष्टम्यां रोहिणीमृक्षं तां सुपुण्यामुपावसेत् ॥'

इतिविष्णुरहस्यादिति कथं प्रकारभेद इत्यत्राह-*मुहूर्तमपीति । आदिना "कृष्णाष्टम्यां भवेद्यत्र कलैका"इत्यादिवाक्ये

योगेऽप्युपपत्तेर्न जयन्तीव्रतं भिन्नम्* । तत्त्वं तु हेमाद्रिमतेऽपि जयन्तीव्रतं भिन्नमेव । 'उदये चाष्टमी' इत्यस्य तेन जयन्तीपरत्वोक्तेः । *किञ्च—

'रोहिण्यामर्धरात्रे च यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥'

इति विष्णुधर्मोक्तेः,

'समायोगे तु रोहिण्यां निशीथे राजसत्तम ।
समजायत गोविन्दो बालरूपी चतुर्भुजः ॥
तस्मात्तं पूजयेत्तत्र यथावित्तानुरूपतः ॥'

इति वह्निपुराणाच्चार्धरात्रस्य *कर्मकालत्वमवसीयते । अतः 'कर्मणो यस्य यः कालः' इत्यादिवचनात्पूर्वत्रैव प्राप्तेः परदिने सतोऽपि रोहिणीयोगस्य न प्रयोज-

---

कलादिपदग्रहः । *अर्धरात्रेति । मुहूर्तादिपदं निशीथमुहूर्तकलादिपरम् । वस्तुत ऋक्षयोगस्तावकमिदम् । अपिशब्दवशेन स्वार्थे तात्पर्याभावात् । *न जयन्तीव्रतं भिन्नमिति । एतेन श्रावणकृष्णाष्टमीमाश्रित्य जन्माष्टमीजयन्त्योरुक्तेराश्रयाश्रयिभावो व्रतैक्यभ्रमहेतुरिति माधवोक्तं प्रत्युक्तम् । वस्तुतो व्रताभेदादिति सूचितम् । ननु गुणविकृतित्वादस्तु कर्मभेदः, उपवाससाम्येऽपि जयन्त्यां पूजादिरूपाधिकगुणसत्त्वात् द्वादशस्तोत्रकाज्ज्योतिष्टोमादुक्थ्यादावधिकस्तोत्रत्रयवदिति । अतः पृथक् जयन्त्या गुणप्रयोजकत्वं निराकरोति—*किं चेति । *कर्मकालत्वं=पूजादिरूपकर्मकालत्वम् । तत्र चोपवासस्याङ्गत्वान्न गुणविकृतित्वमित्याशयः । ननु "ये न कुर्वन्ति" इत्याद्युक्तेरुपवासः प्रधानं पूजाऽपि । स्वातन्त्र्येण फलसंबन्धात् । न चैवं प्रयोगभेदापत्तिः । चित्रोद्भिद्वन्निरपेक्षेतिकर्तव्यताया एवान्वयादिति वाच्यम् । तत्तद्वाक्यानां

केवलं फलसंबन्धबोधकत्वं स्वीकृत्य 'श्रावणे बहुले पक्षे' इत्यादि-कालविधिषु कृष्णजन्माष्टम्यादिपदेनोभयोपादानवशाद्दर्शपूर्णमास-राजसूयादिवत् प्रयोगैक्य एव लाघवात् । एवं च

'वासुदेवं समुद्दिश्य सर्वपापोपशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥'

इति संकल्पवाक्ये उपवासपदं पूजोपलक्षणम् । अन्यथोपवासे उद्देश्यानपेक्षणेन 'वासुदेवं समुद्दिश्य'इत्यस्यानन्वयापत्तेः । न च वासुदेवपदे तत्प्रीतौ लक्षणया तदन्वयः । जघन्यतयोपवासपदे एव तस्या न्याय्यत्वात् "सोपवासो हरेःपूजाम्"इत्यादौ उपवासस्य पूजोपसर्जनत्वदर्शनाच्च । ततश्चापर्यायप्रकृतिकाख्यातरूपाच्छब्दा-न्तरादपि कर्मभेदो दुर्वार इति चेन्न। एकपदोपादानस्य "य इष्ट्या पशुना सोमेन" इत्यादिवदप्युपपादयितुं शक्यत्वेनोक्तरीत्या प्रयो-गविधिभेदो दुरुद्धरः स्यादित्यतः फलिसंस्कार एवोपवासः स्वी-कार्यः । "मासि भाद्रपदे" इत्यादौ 'शुचिः सम्यगुपोषितः' इति गुणत्वप्रतीतेः न तु प्रधानम् । पारार्थ्यात्तूपवासवाक्ये फलोल्लेखः पर्णतादिवदर्थवादः । संकल्पवाक्ये उपवासस्य कार्यत्वेनोल्लेखश्च मन्त्रस्य क्रियासंबन्ध्युपवासप्रकाशकत्वेन करणत्वात् । क्रियां क्रियासंबन्धिनं वा प्रकाशयन्मन्त्रः करणत्वं भजते इति न्यायात् । उत्तरार्धे चोपवासेनेति उपलक्षणे तृतीया । पूजाकरणत्वासंभवा-त् । पूजैव नित्या । 'श्रावणे बहुले पक्षे' इति तस्या एव निन्दार्थ-वादात् तत्र व्रतशब्देन पूजाग्रहणात् । एतेन रूपभेदोऽप्यपाकृतः । उत्पत्तिशिष्टगुणस्य वाक्यान्तरेऽश्रवणात् । धात्वर्थभेदस्तु न रूप-भेदः । कर्मभेदकतयाऽऽमिक्षाधिकरणोपन्यासासंगतेः । *न प्रयो-जकत्वमिति। तथा च कथं स कर्म भेदयेत्। एतेन—निमित्तभेदात्

योगेऽप्युपपत्तेर्न जयन्तीव्रतं भिन्नम्* । तत्त्वं तु हेमाद्रिमतेऽपि जयन्तीव्रतं भिन्नमेव । 'उदये चाष्टमी' इत्यस्य तेन जयन्तीपरत्वोक्तेः । *किञ्च—

'रोहिण्यामर्धरात्रे च यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥'

इति विष्णुधर्मोक्तेः,

'समायोगे तु रोहिण्यां निशीथे राजसत्तम ।
समजायत गोविन्दो बालरूपी चतुर्भुजः ॥
तस्मात्तं पूजयेत्तत्र यथावित्तानुरूपतः ॥'

इति वह्निपुराणाच्चार्धरात्रस्य *कर्मकालत्वमवसीयते । अतः 'कर्मणो यस्य यः कालः' इत्यादिवचनात्पूर्वत्रैव प्राप्तेः परदिने सतोऽपि रोहिणीयोगस्य न प्रयोज-

---

कलादिपदग्रहः । *अर्धरात्रेति । मुहूर्तादिपदं निशीथमुहूर्तकलादिपरम् । वस्तुत ऋक्षयोगस्तावकमिदम् । अपिशब्दवशेन स्वार्थे तात्पर्याभावात् । *न जयन्तीव्रतं भिन्नमिति । एतेन श्रावणकृष्णाष्टमीमाश्रित्य जन्माष्टमीजयन्त्योरुक्तेराश्रयाश्रयिभावो व्रतैक्यभ्रमहेतुरिति माधवोक्तं प्रत्युक्तम् । वस्तुतो व्रताभेदादिति सूचितम् । ननु गुणविकृतित्वादस्तु कर्मभेदः, उपवाससाम्येऽपि जयन्त्यां पूजादिरूपाधिकगुणसत्त्वात् द्वादशस्तोत्रकाज्ज्योतिष्टोमादुक्थ्यादावधिकस्तोत्रत्रयवदिति । अतः पृथक् जयन्त्या गुणप्रयोजकत्वं निराकरोति—*किं चेति । *कर्मकालत्वं=पूजादिरूपकर्मकालत्वम् । तत्र चोपवासस्याङ्गत्वान्न गुणविकृतित्वमित्याशयः । ननु "ये न कुर्वन्ति" इत्याद्युक्तेरुपवासः प्रधानं पूजाऽपि । स्वातन्त्र्येण फलसंबन्धात् । न चैवं प्रयोगभेदापत्तिः । चित्रोद्भिद्वन्निरपेक्षेतिकर्तव्यताया एवान्वयादिति वाच्यम् । तत्तद्वाक्यानां

'दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला ।
रात्रियुक्तां *प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥'

इत्यनेन रोहिणीयोगाभावेऽर्धरात्रव्याप्तेर्ग्राह्यतोक्ता, तथापि यस्मिन्वर्षे जयन्तीयोगो नास्ति तत्र जयन्तीव्रतलोपे प्राप्ते अष्टमीमात्रेऽपि जयन्तीव्रतं कार्यमित्येवंपरमिदमिति तदाशयः। अत्र हि 'सत्राद्याग्र्ये त्रिदृवजिता यजेत"

एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः ।

इतिवद्रोहिणीयोगाभावे विधानात्तत्कार्योपपत्तिः स्पष्टैव। अत एवोक्तं—'जयन्ती नाम शर्वरी' इति । यच्च स्कान्दे—

---

कलामात्राऽपि चेद्रोहिणी नास्ति तदा रात्रियुक्तां परामिति यावत् । *प्रकुर्वीतेति। दिनद्वये निशीथे अष्टम्यभावे यत्किंचिद्दिने तत्सत्त्वे इन्दुसंयुतामर्धरात्रव्यापिनीं विशेषेण प्रकुर्वीतेत्यर्थः । जयन्तीयोगो माधवाभिमतः । जयन्तीव्रतलोपे प्राप्ते अष्टम्या जयन्तीत्वेऽपि रोहिणीयोगनिबन्धत्वभ्रमेण पूजादिप्रधानलोपप्रसङ्गवारणाय अनेन वचनेन पूजादेरष्टमीनिबन्धनत्वबोधनादिति भावः ।

केचित्तु इन्दुः=सोमवारः "सोमेनापि विशेषतः" इत्येकमूलकल्पनालाघवात् । तथा च सोमवारयुक्तां विशेषेणाधिक्येन रात्रियुक्तां प्रकुर्वीतेत्यर्थः। तेन दिनद्वये निशीथास्पर्शे सोमवाराधिकव्याप्तेर्निर्णायकत्वलाभात्कर्मकालशास्त्राबाधेनोपपत्तौ तद्बाधो न कल्प्यते इत्याहुः। परे तु रात्रिपदमधिकरात्रिपरम् । रोहिणीयोगाभावेऽधिकरात्रिव्यापिनी ग्राह्या । तद्योगे तु तद्युक्तानिशीथगा कार्येत्यर्थ इत्याहुः।अपरे तु रोहिणीयोगाभावेऽधिकनिशीथव्यापिनी ग्राह्या। तद्योगे त्वधिकानिशीथव्यापिनीं विहाय स्वल्पनिशीथगा ग्राह्येत्याहुः—रात्रियुक्तां प्रकुर्वीतेति । नन्वेवं कर्मकालशास्त्र-

'उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
भवते बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभ्यते वाऽथवा न वा ॥' इति ।

यच्च पाद्मे—

'प्रेतयोनिगतानां तु प्रेतत्वं नाशितं तु तैः ।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥'

इति, तद्दानादिविषयम् । उपवासेऽप्यौदयिक्यादित्यनन्तभट्टः*, *जयन्तीपरमिति हेमाद्रिः । *उदये=चन्द्रो-

---

बाधं विनाऽगतिप्रसङ्ग इति चेन्न । बाधो ह्यनन्यगतिका गतिः । यावद्बाधं विना न गतिस्तावदेव बाधते इति न्यायात् । अन्यथा व्रीहियवशास्त्रयोरन्योन्यं सार्वत्रिक एव बाधो भवेदित्याहुः ।

अन्ये तु विशेषः=आधिक्यं, वैशिष्ट्ये तृतीया तस्येन्दावन्वयः । तथा चाधिकानिशीथगां रात्रियुक्तां प्रकुर्वीतेत्यर्थः । एतेन शब्दतो रोहिणीयोगाभावलाभेऽपि शब्दतो दिनद्वये वैषम्येण निशीथस्पर्शालाभान्नैतद्वाक्यस्य तत्परत्वमिति प्रत्युक्तम् । रात्रियुक्तामिति त्वनुवादः । यत्त्वनुवादत्वपरिजिहीर्षया विशेषपदस्य रात्रिपदेनान्वयं मत्वा रोहिणीयोगाभावेऽधिकरात्रिव्यापिनी ग्राह्येति सार्थक्यकल्पनं, तन्न । यत्र पूर्वेद्युः सार्धप्रहरोत्तरं प्रवृत्त्या परेद्युर्निशीथान्तमनुवर्तते तत्र पूर्वेद्युरधिकव्याप्तिग्रहणेऽपसिद्धान्तादित्याहुः । *अनन्तभट्ट इति । अनन्तभट्टेनैवंरीत्या समर्थ्यते इत्यर्थः । एवमग्रेऽपि । *जयन्तीति । जयन्ती=रात्रिस्तत्परामित्यर्थः । उदये अष्टमी=उदयमारभ्य प्रवृत्ताऽष्टमी । सकला=निशीथमारभ्य निशीथान्ता । प्राजापत्यर्क्षसंयुक्ता=रोहिणीयुक्ता उभयेद्युरपि निशीथेऽष्टमीरोहिणीभ्यां युक्तेति यावत् । सा च किञ्चिन्नव-

दय इति केचित् । तन्न । चन्द्रोदयसत्त्वेऽसंदेहान्नवमी*सकलेत्यद्योगान्मानाभावाच्च । तेन पूर्वेद्युः सप्तमीवेधे परदिने सूर्योदये घटिकाऽपि ग्राह्या । पूर्वविद्धाऽष्टमीति पाद्मोक्तेः । इति युक्तम् । अतो न व्रतभेदो नाप्यन्तर्भाव इत्यूचिवान् ।

गौडास्तु नवमीक्षयपरमिदं वचनम् 'नवमी सकला यदि' इति विशिष्योक्तेः । *एतत्पूर्वदिने जयन्त्यभाव-

---

मीति परैव जयन्ती । "अपि वर्षशतेनापि" इत्यर्थवादाअस्यादित्यर्थात् । न त्वत्र जयन्तीव्रतं हेमाद्रेर्भिन्नमस्तीति भ्रमः कार्यः । *उदये इति । "नाशयत्युदये तथा" इति वाक्यान्तरसंवादात् । यत्त्वेवं सति नवमी सकलेत्यनन्वयः । निशीथोत्तरनवम्याः साकल्यासम्भवादिति, तत्तुच्छम् । न हि षष्टिदण्डव्यापित्वं साकल्यं सूर्योदये कलाकाष्ठादशमीसत्त्वे तद्बाधात् । उदयमारभ्यापरोदयपर्यन्ताया एव सकलत्वात् । किं तु एकाहोरात्रे सूर्योदयेऽष्टम्याः सत्त्वे तदुत्तरकालव्याप्तत्वं साकल्यम् । तच्च चन्द्रोदये निशीथे अष्टम्यां तदुत्तरनवम्या अप्यक्षतमिति । तथा च दिनद्वये वैषम्येण निशीथस्पर्शे पूर्वाऽधिकनिशीथगाऽपि न जयन्ती रात्रिः, किं तु रोहिणीसत्त्वे स्वल्पनिशीथगा परैवेति जयन्तीरात्रिनिर्वचनमित्यर्थः । उदये सूर्योदये इति तु नोक्तम् । किञ्चित्सकलपदयोर्वैयर्थ्यापत्तेः । *सकलेति । सूर्योदयान्तरास्पर्शित्वरूपसाकल्येनाष्टमीविद्धाया नवम्याः क्षयलाभादिति भावः ।

*एतादिति ।

'सिंहार्के रोहिणीयुक्ता नराः कृष्णाष्टमी यदि ।
रात्र्यर्धपूर्वापरगा जयन्ती कलयाऽपि च ॥'

इत्यादिवचनादर्धरात्र एव रोहिणीयोगे अष्टमी जयन्तीत्युक्तम् । तत्र 'जयन्ती शिवरात्रिश्च' इति 'जयन्त्यां पूर्वविद्धायाम्' इत्या-

परमित्याहुः । *जयन्त्यादिसर्वापवादोऽयमित्याचार्य-चूडामण्यादयः । वयं तु*सत्यं व्रतभेदः । लोकास्तु *जन्माष्टमीमेवानुतिष्ठन्ति । *न हि—

'श्रावणे वा नभस्ये वा रोहिणीसहिताष्टमी ।
यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्तिता ॥
श्रावणे न भवेद्योगो नभस्ये तु भवेद् ध्रुवम् ॥'

इति माधवीये वसिष्ठसंहितोक्ताऽपि भाद्रे जयन्ती केनापि न क्रियते । (अतः पूर्वेद्युरेवोपवासः) । यद्वा

---

दिना पूर्वा न त्वष्टम्या एव पूर्वदिने निशीथे सत्त्वे तदुत्तरं च रोहिण्यादियोगे तत्र जयन्त्यभावात् । किं तु तत्र परा नवम्यां सूर्योदयान्तराननुवृत्तिरूपसाकल्यसत्त्वात् । एतन्मते ह्यहर्वेध एव वेधः । या तु न विद्धा नापि जयन्ती सा कर्मकालशास्त्रादेव ग्राह्येति भावः । अत्राष्टम्या यदा कदाचिद्रोहिणीयोगेऽपि जयन्ती-त्वसाधनादरुचिः । *जयन्त्यादीति । 'जयन्त्यां पूर्वविद्धा-याम्' इत्यादिविरोधोऽरुचिः । *सत्यमिति । उपलभ्यमानस्मृत्या-देरसन्निध्यनुपलम्भेऽपि 'कृष्णाष्टम्यां भवेद्यत्र' इत्यादेर्भिन्नवाक्य-त्वमेव प्रकरणान्तरत्वसम्पादकं ''स्योनं ते सदनं कृणोमि'' इत्यादिवदित्यभिप्रायः । *जन्माष्टमीमेवेति । एवकारो जय-न्तीव्रतव्यावृत्त्यर्थः । तेन जन्माष्टम्या उपवासमात्रेण सिद्धेरभावेन वक्ष्यमाणपूजादि तत्र भवत्येव शिष्टाचारात् । 'शुचिः सम्य-गुपोषितः' 'पूजां तत्र प्रवर्तयेत्' इति वचनाद्वा न त्वेता-वता तत्र जयन्तीसम्बन्धित्वभ्रमः कार्यः । जयन्तीव्रतं तु म-त्स्यादिजयन्तीसाधारण्येनानुष्ठातुरेवेत्यभिप्रायः । अस्तु केवलकृ-ष्णजयन्तीव्रतमपि परं तु तदपि न तदा क्रियते इत्याह— *न हीति । जयन्तीव्रतस्य कदाचिल्लोप इत्येतन्निराकरणाय

*गुणात्फलम् । 'सप्तमे ब्रह्मवर्चसकाममुपनयेत्' इतिवदित्यन्ये । तन्न । *नित्यत्वानुपपत्तेः । अत्र गौणमुख्यचान्द्राभ्यामेक एव *मास इत्यन्ये । तन्न । एकवाक्ये उभयनिर्देशे *वाशब्दद्वयायोगात् । अतो जयन्तीव्रतस्यापि नित्यत्वादुपवासद्वयं कार्यमिति ब्रूमः । अत एव हेमाद्रिमदनरत्नादौ जन्माष्टमीव्रतं *जयन्तीव्रतं च भिन्नमुक्तम् । भिन्नकालत्वात्सर्वथा तावदन्तर्भावो नेति सिद्धम् । यद्यपि पूर्वा परा वाल्पाऽपि रोहिणीयुतैव कार्येति ग्रन्थानां तत्त्वं प्रतीयते तदपि जयन्तीपरमेव । इदं च काम्यमेवेत्यनन्तभट्टः । तद्दूषणं हेमाद्रौ ज्ञेयम् । नित्यं काम्यमिति तु बहवः ।

ननु यथा विष्णुशृङ्खलयोगेन श्रवणद्वादशी*वामनजयन्त्यादिसर्वसिद्धिर्यथा वैकादशी स्वल्पापि परा, तथा

'कला काष्ठा मुहूर्तोऽपि यदा कृष्णाष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता न हि ॥'

इत्यादिवचनादर्धोदयादिवद्योगाधिक्ये फलाधिक्या-

---

*गुणादिति । यथा नित्योपनये फलविशेषार्थः सप्तमवर्षादिरूपकालविधिः, तथा नित्योपवासे जयन्तीविधिरित्यर्थः । *नित्यत्वेति । दृष्टान्ते केवलकाम्यत्वेन नित्यत्वाभावः, दार्ष्टान्तिके तु जयन्त्यप्रसिद्ध्या जन्माष्टम्या आश्रयत्वाभाव इत्यर्थः । *मास इति । तथा च भाद्रे जयन्त्यां प्रमाणाभाव इति भावः । *वाशब्देति । समुच्चयार्थत्वे तु पौनरुक्त्यं स्यात् । 'श्रावणे न भवेत्' इति शेषविरोधोऽपि द्रष्टव्यः । *जयन्तीव्रतं चेति । हेमाद्रिमते दशजयन्तीव्रतान्तरमस्तीति तदभिप्रायेण ।

*वामनेति । वामनजयन्तीव्रतं प्रकारभेद इत्याशयेन ।

स्परैव जन्माष्टमी युक्तेति चेत् बाढमात्थ। न हि तत्र व्रतभेदो द्वयोर्नित्यत्वं द्वयोरकरणे दोषो वा श्रुतः। इह त्वे-*तैस्त्रिभिर्हेतुभिः *संज्ञाभेदाद्धर्मभेदात्कालभेदाच्चोपवासभेदः स्पष्ट एव। एकदैवतत्वाच्छ्रवणद्वादशीवन्न पारणालोपदोषोऽपि। *तेन व्रतद्वयमेव युक्तम्। द्वयोरपि नित्यत्वात*। केचित्तु—

'त्रेतायां द्वापरे चैव राजन्कृतयुगे तथा।
रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता॥
अतः परं महीपाल संप्राप्ते *तामसे कलौ।

---

*एतैरिति। जन्माष्टमीव्रतं श्रावणमात्रकालकं, योगव्रतं योगवशेन श्रावणभाद्रपदान्यतरकालकमिति व्रतभेदः। नित्यत्वं=नियतत्वम्। माधवोक्तानन्यानपि हेतूनाह-*संज्ञेति। धर्मभेदात्=माधवमते जन्माष्टम्यामुपवासः प्रधानं, जयन्त्यां पूजादि। ग्रन्थकृन्मते च तत्र पूजयोरेव भेदः जन्माष्टम्यां पापनाशमात्रं जयन्त्यां तु

'महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽनघ।'

इत्यादिनोक्तफलभेदः। न चैतदुभयत्रापि नित्यकाम्यतया संयोगपृथक्त्वन्यायेन वाच्यं, तच्च न संभवति काम्यत्वे कादाचित्कत्वं नित्यत्वे तदभाव इति विरोधादिति वाच्यम्। कामनाप्रयुक्तात्तदनुष्ठानात्फलसिद्धिरित्येव कामसंयोगफलमित्याविरोधात्। *तेनेति। रामादिजयन्त्यां क्वचित्तद्व्रतमुपक्रम्य जन्माष्टमीव्रतोत्तरदिने तदाचरणमित्याभिप्रायः। *नित्यत्वात्=अवश्यकर्तव्यत्वात्। *तामसे इति। तथा च जयन्तीव्रतानिषेधाविधिकल्पनं न संभवतीत्यर्थः।

"श्रावणे वा नभस्ये वा" इतिवचनं जयन्तीपरमिति प्रपञ्चि-

'जन्मना वासुदेवस्य भविता व्रतमुत्तमम् ॥'

इति हेमाद्रौ वह्निपुराणात् कलौ जन्माष्टमीव्रतमेव न जयन्तीव्रतमित्याहुः । तन्न । 'तामसे कलौ' इत्युक्तेः परमश्रेयोहेतोरस्य कलौ पापिनां दुर्लभत्वमुच्यते । तेन कलौ तामसा न करिष्यन्ति किन्तु धन्यास्त एवेत्यर्थः । अन्यथा

'शूद्राश्च ब्राह्मणाचारा भविष्यन्ति युगे कलौ ।'

इत्यादौ विधिकल्पनापत्तेः ॥

---

तम् इदानीं जन्माष्टमीपरमिति दर्शयति—तत्त्वं त्विति । दिनद्वये रोहिणीयोगे तु परैवेति स्मर्तव्यम् । इदं च=जयन्तीव्रतं च । काम्यमेवेति । शूद्रान्नेनेत्यादिपापक्षयरूपफलश्रवणात् । न च तन्मात्रेण नित्यत्वं त्रियुनादियागानामपि तत्त्वापत्तेः । तद्दूषणमिति । अवश्यापेक्षितफलसाधनत्वं=नित्यत्वम् । तच्च पापक्षयस्यावश्यत्वादक्षतम् । अन्यथा नित्यकर्मणामपि काम्यत्वापत्तेरिति । नित्येति । अकरणे प्रत्यवायजनकत्वं=नित्यत्वम् । तच्च शूद्रान्नेनेत्यादिना दर्शितम् । महाजयार्थमिति स्वतन्त्रफलश्रवणात्काम्यत्वम् । वस्तुतस्तु तत्र—

'एनसो मोक्षकामोऽस्मि यद्गोविन्द त्रियोनिजम्' ।

इतिपापक्षयकामश्रवणात्काम्यत्वमेव । कामनोपाधौ चोदितत्वात्, न तु केवलनैमित्तिकत्वं कामनोपाधावविहितानां प्रायश्चित्तादीनामेव तथात्वात् । नापि केवलकाम्यत्वम् । यत्र न निमित्तोपाधौ विधानं तत्र केवलकाम्यत्वमिति हि मीमांसकाः । यथा त्रियुनादियागेषु । प्रकृते च न तथा ।

'प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी ।
वर्षे वर्षे तु कर्तव्या तुष्ट्यर्थं चक्रपाणिनः ॥'

इति नैमित्तिकत्वेन नित्यत्वावेदकवीप्साश्रवणात्, एतच्च जय-

अत्र*निशीथवेध एव ग्राह्यः । *पूर्वोक्तवचनेषु तस्यैव मुख्यकालत्वोक्तेः ।

---

न्तीपरमेव । 'प्राजापत्यर्क्ष' इत्युक्तेः ।

नन्वत्राष्टमीविशेषावच्छिन्नजीवनं निमित्तम् ।
वीप्सायुक्तो वरान्तो हि निमित्तत्वेन गम्यते ॥'

इति न्यायात् । तुष्टिश्च फलमिति उद्देश्यद्वयान्वये वाक्यभेद इति चेन्न । चक्रपाणितुष्ट्यर्थं यद्व्रतं वाक्यान्तरविहितं तद्वर्षे वर्षे कार्यमित्यर्थात् । परे तु एवं सति निमित्तस्य विधेयत्वं स्यादतो यथाश्रुतमेव सम्यक् । तथा हि यथा जातेष्टिविधौ जननं निमित्तं पूतत्वादिकं फलमन्वेति तथा प्रकृतेऽपि प्रोक्तमेव निमित्तं फलं च। तत्कस्य हेतोरिति चेत् यत एकरूपमुद्देश्यद्वयं निमित्तरूपं फलरूपं वा एकस्मिन् विधौ नान्वेति एकेनैव नैराकाङ्क्ष्यात् । यस्य पिता पितामह इतिवत्, भिन्नरूपं त्वन्वेत्येव । अस्मिन्निमित्ते अनेनेदं फलं भावयेदिति वचनव्यक्तिसंभवादित्याहुः । निबन्धेषु प्रायशः कृष्णजन्माष्टमीव्रतप्रकरणे एतद्वाक्यस्य दर्शनात्तत्रैव नित्यत्वसाधकत्वं नान्यत्रेत्यरुचिः ।

ननु प्रायश्चित्तादीनां केवलनैमित्तिकत्वम्, एतद्व्रतस्य तु काम्यत्वमिति कथमिति चेत् ।

'एनसो मोक्षकामोऽस्मि यद्गोविन्द ममार्जितम् ।'

इत्यतीतप्रत्ययात्कामनोपाधौ चोदितत्वाच्च व्रतस्य काम्यत्वम् । प्रायश्चित्तस्य तु कामनोपाधावचोदितस्य एनोनिवर्तकतया नैमित्तिकत्वमित्याहुः ।

*निशीथवेध एवेति । एवकारोऽप्यर्थकः । तेन वेध्याया अष्टम्या दिवापि वेधः समुच्चीयते । *पूर्वोक्तेति ।

'*अष्टमी शिवरात्रिश्च ह्यर्धरात्रादधो यदि।
दृश्यते *घटिका या सा पूर्वविद्धा प्रकीर्तिता॥'

इति माधवीये पुराणान्तरात्।

'*अर्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत्।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्॥'

इति भविष्योक्तेः।

'अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि।
मुख्यकाल इति ख्यातस्तत्र जातो हरिः स्वयम्॥'

इति वसिष्ठसंहितोक्तेश्च॥

तत्राष्टमी द्वेधा। रोहिणीरहिता तद्युता च। आ-

---

'रोहिणीसंयुतोपोष्या सर्वाघौघविनाशिनी।
अर्धरात्रादधश्चोर्ध्वं कलया वा यदा भवेत्॥'

इत्यनेन खण्डातिथौ नवमीयुक्तायां रात्रिपूर्वार्धावसानिककला-सद्भावमनूद्य तत्पश्चार्द्धे तद्विधिवत् सप्तमीयुक्तायां रात्रिपूर्वार्द्धा-वसाने कलासद्भावो विधीयते तदुत्तरार्धे तस्य सिद्धत्वादिति तत्र सप्तमीप्रवेशो वेधः। "नक्तादिव्रतयोगेषु" इति सामान्यवाक्याच्च। अस्यातिदुर्लक्ष्यत्वेऽप्याह—*अष्टमीति। *घटिकेति।

'अर्धरात्रादधश्चोर्ध्वमेकार्धघटिकाऽन्विता।
रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिषु॥'

इति स्मृत्यन्तरे एका चार्धघटिका चेति व्युत्पत्त्या पूर्वोत्तर-निशीथांशयोरेकेति घटीद्वयं मुख्यतमः काल इति माधवेनोक्तेः।

'त्रिकालं पूजयेद्देवं दिवारात्रौ विशेषतः।
अर्धरात्रावपि तथा पुष्पैर्नानाविधैरपि॥'

इति भविष्योक्तेः। कालान्तरस्यापि मुख्यत्वमित्यत्राह—*अर्धरात्रे त्विति। मुख्यकालः=मुख्यस्य पूजादिप्रधानस्य कालः, अङ्गकालानुरोधेन तु न वेधो युक्त इति भावः।

ष्याऽपि चतुर्धा । *पूर्वेद्युरेव निशीथयोगिनी परेद्युरेवो-भयेद्युरनुभयेद्युश्चेति । तत्राद्ययोरसन्देह एव कर्मकाल-व्याप्तेः ।

'जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
*पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम् ॥'

इति भृगूक्तेश्च । *अस्मात्केवलरोहिण्युपवासोऽपि सिद्धः । अन्त्ययोः परैव । प्रातःसङ्कल्पकालव्याप्तेरा-धिक्यात्* ।

'*वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।'

इति ब्रह्मवैवर्ताच्च । एवमंशतः समव्याप्तावपि ।

विषमव्याप्तौ त्वाधिक्येन*निर्णयः ।

रोहिणीयुतापि चतुर्धा । *पूर्वेद्युरेव निशीथे रोहि-

---

*पूर्वेद्युरेवेति । इयं शुद्धा विद्धा चेति द्वेधा । परं तु तत्र न विशेषः । परेद्युः कर्मकालेऽसत्त्वात् ।

*पूर्वविद्धैवेति । दिनवेध एव, न रात्रिवेधे । केचित्तु रो-हिणीपदं जयन्तीपरं जन्माष्टमीरोहिणीभ्यां जयन्तीलाभो वेत्या-हुः । तत्र द्वितीयपक्षे केवलाष्टमीपरत्वं नास्तीति तन्निरस्य-ति—*अस्मादिति । 'ऋते वै रोहिणीव्रतात्' इत्यादेरुपलक्षण-म् । *आधिक्यादिति । आद्ये विशेषेणेन्दुसंयुतामिति मुख्य-कालव्याप्तेः । अन्त्ये 'रात्रियुक्तां प्रकुर्वीत' इति गौणकालव्याप्तेः । *वर्जनीयेति ।

'विना ऋक्षं न कर्तव्या सप्तमीसंयुताऽष्टमी ।'

इति वचनमपि द्रष्टव्यम् । *आधिक्येन=निशीथेऽष्टम्या आधिक्यव्याप्त्या ।

*पूर्वेद्युरेवेति । इयं च विना निशीथं प्रवृत्तया सप्तम्या विद्धाधिका शुद्धाधिका चेति द्वेधा, न तु विद्धानधिका शुद्धानधि-

णीयुता परेद्युरेवोभयेद्युरनुभयेद्युश्च । अत्राद्ययोः*र-सन्देहः ।

'कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी ।'

इति पाद्मोक्तेः

'जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।'

इति गारुडाच्च ।

'*सप्तमीसंयुताष्टम्यां निशीथे* रोहिणी यदि ।
भविता साष्टमी पुण्या यावच्चन्द्रदिवाकरौ ॥'

इति वह्निपुराणाच्च । द्वितीयेऽसन्देह एव । तृतीय-पक्षे परैव ।

---

का वा परेद्युरष्टम्यभावेनासन्देहात् । *आद्ययोरिति । योग-वत्या एव ग्राह्यत्वात् ।

'प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्तमपि लभ्येत सैवोपोष्या महाफला ॥'

इति वाक्यात् । अत्र वर्जनीया प्रयत्नेनेति निषेधात् प्रतिप्र-सवमाह—*सप्तमीति । *निशीथे इति । एतेन दिनद्वये रो-हिणीयोगे यदि पूर्वेद्युर्निशीथे रोहिणी तदा पूर्वैवेति ध्वनितम् । द्वितीये तु—

'अविद्धायां तु सर्क्षायां जातो देवकिनन्दन ।'

इति बोध्यम् । तत्र जन्मश्रवणादर्धरात्रे ऋक्षसाहित्यप्रत्ययात् । *वर्जनीयेति । इदं च परदिने निशीथे रोहिणीसत्त्वे एव । अन्यथा—

'जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।
कृत्वोपवासं तिथ्यन्ते तदा कुर्याच्च पारणम् ॥'

इति विष्णुधर्मोक्तिरोधात् ।

'जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।

'*वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।
सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी ॥'

इति ब्रह्मवैवर्तात् । चतुर्थेऽपि त्रेधा । पूर्वेद्युर्निशीथेऽष्टमी परेऽह्नि रोहिणी, परेऽह्न्यष्टमी पूर्वेऽह्नि रोहिणी, उभयेद्युरुभयस्य निशीथासम्बन्धो वेति । आद्ये *परेद्युर्जयन्तीयोगस्य सत्त्वात्परैवेति माधवः । तदुक्तं तेनैव—

'यस्मिन्वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा ।
अन्तर्भूता जयन्त्यां स्यादृक्षयोगप्रशस्तितः ॥' इति ।
'*पूर्वविद्धाऽष्टमी या तु उदये नवमीदिने ।
मुहूर्तमपि*संयुक्ता सम्पूर्णा साष्टमी भवेत् ॥
कला काष्ठा मुहूर्तोऽपि यदा कृष्णाष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता नहि ॥'

इति पाद्मोक्तेश्च । *केचित्तु हेमाद्रौ—'अष्टम्याः प्राधान्यात्तस्याश्च पूर्वेद्युः *कर्मकालव्यापित्वात्पूर्वैव । पाद्मं तु पूर्वेऽह्नि निशीथेऽष्टम्यभावे ज्ञेयम् । अन्तर्भावोक्तिस्तु मूर्ख*दम्भणामात्रम्' इति आहुः । *अन्ये तु 'पूर्वविद्धाष्टमी' इति वाक्येन जन्माष्टम्यां*सूर्योदये सप्तमीवेधानिषेधात्कलाघटीमात्राप्यौदयिकी ग्राह्या । 'कार्या

---

तिथ्यन्ते चोत्सवान्ते च व्रती कुर्वीत पारणम् ॥'

इति गारुडादिविरोधात् । माधवाचार्य मतं दर्शयति—*परेद्युरिति । परेद्युरष्टम्या अल्पत्वात्कथं ग्राह्यत्वमित्यत्राह—*पूर्वविद्धेति । *संयुक्ता=रोहिण्या । माधवमतस्य प्राग्दूषितत्वादाह—*केचित्त्विति । *कर्मेति । अबाधेनोपपत्तौ कर्मकालशास्त्रबाधस्यान्याय्यत्वादिति भावः । *दम्भणा=प्रतारणा । माधवहेमाद्र्युभयविरुद्धं मतमाह—*अन्ये त्विति । *सूर्योदये इति । काकाक्षिगोलकन्यायेनोदयान्वय इत्यभिमानः ।

विद्धाऽपि सप्तम्या' इति जयन्तीपरम् ।

'जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।'

इत्येकवाक्यत्वात् । तत्रापि द्वयोर्नित्यत्वात्कालभेदाच्चोपवासद्वयं* भवत्येव । यदा तु केवलाष्टमी शुद्धाधिका तदा त्यागहेतोः सप्तमीवेधस्याभावात्पूर्वैव । यदि वा विद्धन्यूना तदा परदिने ग्राह्यतिथेरभावात्पूर्वैव । एवं सर्वाण्यौदयिकवाक्यानि सप्तमीवेधपराणि । ये तु—

'जन्माष्टमीं पूर्वविद्धां सऋक्षां सकलामपि ।
विहाय नवमीं शुद्धामुपोष्य व्रतमाचरेत् ॥'

इति व्यासोक्तेर्विद्धायाः क्षये शुद्धनवम्यामुपवासः । दशमीवेधे द्वादश्युपवासवदित्याहुः, ते निर्मूलत्वादुपेक्ष्याः । 'मुहूर्तमपि संयुता' इति रोहिणीयोगे *त्याज्यत्वोक्तेः *तिथ्यन्तपारणवाक्यानां निर्विषयत्वापत्तेः । न च जयन्तीपराणि शुद्धाधिकापराणि वा तानि ।

---

*उपवासद्वयम्=पूर्वेद्युर्जयन्तीप्रयुक्तमुत्तरेद्युर्जन्माष्टमीप्रयुक्तम् । औदयिकवाक्यानि='उदये चाष्टमी किंचित्' इत्यादीनि रोहिणीयोगे इति संयुक्तत्वं च नाष्टम्याः, दिनद्वये रोहिणीराहित्ये परामसङ्गात्, किन्तु रोहिण्या एव अष्टम्यास्तथात्वं तत्रार्थिकं पूर्वविद्धाष्टमीत्युक्त्या तल्लाभात् । तथा च तत्कथमष्टम्याः कर्मकालत्वं साधयेदिति भावः । *त्याज्यत्वेति । दिनद्वये जयन्तीयोगे तेन जयन्तीप्रयुक्तोपवासे पूर्वदिने त्याज्यत्वं बोध्यते, न तु ग्राह्यत्वम् । यत्र पूर्वेद्युरेव जयन्ती तत्र 'जयन्त्यां पूर्वविद्धायाम्' इत्यस्य सावकाशत्वादिति भावः । सप्तमीपदस्याष्टमीसंयुक्तार्थत्वे प्रतिकूलमप्याह—*तिथ्यन्तेति । आञ्जस्येनैव तिथ्यन्तलाभात् ।

भृग्वाद्यैः *पूर्वविद्धाष्टम्यामपि तिथ्यन्ते पारणोक्तेः। *तेन 'कला काष्ठा' इति *वाक्यान्तरवशाज्जयन्तीपरमेतत्*।

*तत्त्वं तु अष्टम्याः कर्मकालव्याप्तेः

'दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला।

रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम्॥'

इति पूर्वोक्तवाक्यैः रोहिणीयोगाभावे *ग्राह्यत्वोक्तेर्वचनात्कर्मकालव्यापिनीं त्यक्त्वा पूर्वा परा वाऽल्पापि रोहिणीयुता ग्राह्या। माधवमदनरत्ननिर्णयामृतानन्तभट्टगौडमैथिलग्रन्थादिष्वप्येवमिति। *युक्तं तु उपवासद्वयं कार्यं द्वयोर्नित्यत्वादिति तु वयम्। अन्त्ययोः परैव।

'सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम।

---

*पूर्वविद्धाष्टम्यां=पूर्वविद्धाष्टम्युपवासे। *तेन=जयन्तीव्रतपार्थक्यस्थापनेन। *वाक्यान्तरवशात्=तादृशोत्तरवाक्यवशात्। *एतत्=पाद्मवाक्यम्। तत्र 'सप्तमीसंयुता न हि' इति दर्शनात्। पारिशेष्याज्जयन्त्युपवासे पूर्वदिनहेयत्वबोधनात्। दूषणान्तरमाह—*तत्त्वं त्विति। *ग्राह्यत्वोक्तेरिति। तेन उदयः कर्मकाल इति न सिद्ध्यतीत्याशयः। अत्रैवान्तर्भावो न श्रद्धेय इति स्मारयति—*युक्तं त्विति। यद्वा—उक्तस्थलेऽन्तर्भावं निरसितुं पूर्वैवेति निर्धारितम्, इदानीं प्राचीनबहुग्रन्थमतमाह—*तत्त्वं त्विति। त्यक्त्वा परेति अन्वयः। तत्र पूर्वेति दृष्टान्तः। अथवा यत्र पूर्वा रोहिणीयुता परदिने च रोहिणी नास्ति निशीथोत्तराष्टमिका तत्परं पूर्वापदम्। अत्र दिवावेत्यनेन केवलाष्टमी प्रतिपादिता तां रात्रियुक्तां निशीथव्यापिनीं प्रकुर्वीत एवमेव समव्याप्तौ वचनान्तरानुग्रहात्परेति सिद्धौ विषमव्याप्तौ विशेषेणेत्यादिनाऽधिकनिशीथव्यापिनी पूर्वा परा वा इति कर्मकाल-

प्राजापत्यं द्वितीयेऽह्नि *मुहूर्तार्धं भवेद्यदि ।
तदाष्टयामिकं पुण्यं प्रोक्तं व्यासादिभिः पुरा ।

इति स्कान्दात् ।

'मुहूर्तेनापि*संयुक्ता संपूर्णा साऽष्टमी भवेत् ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥'

इति पाद्माचेति दिक् । निम्बादित्योपासकास्तु जन्माष्टमीरामनवमीशिवरात्र्यादौ पूर्वेऽह्नि कर्मकालीनां तिथिं त्यक्त्वा *द्वित्रिमुहूर्ता परैव तिथिर्ग्राह्या ।

'उदयव्यापिनी ग्राह्या कुले तिथिरुपोषणे ।
निम्बार्को भगवान्येषां वाञ्छितार्थफलप्रदः ॥'

इति (१)हेमाद्रौ मात्स्योक्तमुक्तिसमीवृते भविष्योक्तेरित्याहुः । तन्न ।

'यदि द्वितीये दिवसे तु ऋक्ष
तिथ्योर्युतिः स्यान्न तदोपवासः ।
पूर्वं प्रकुर्याद्दिवसे द्वितीये ।
दिनेशभक्तोऽथ तदा व्रताद्यम् ॥'

इति मात्स्यवाक्येन तत्रैव उपसंहारात्सर्वार्थत्वेन मानाभावात् । ऋक्षतिथ्योः=हस्तसप्तम्योः । अन्यथा

---

शास्त्राबाधेनोपपत्तेर्न तद्बाधो युक्तः । एवं च यत्र पूर्वेऽह्नि निशीथेऽष्टमी तत्रापि पूर्वैव युक्ता न परेत्यरुचिः । *मुहूर्तार्धमिति । तत्र वाचानिकं संपूर्णत्वमित्याशयः । *संयुक्ता=रोहिण्या । दिगर्थस्तु योगस्त्रिविध उक्तः । तेन शुद्धाधिकाऽपि त्रिविधा रोहिण्याः साम्येन, निशीथात् प्रागारभ्य प्रवृत्त्या, तदुत्तरं प्रवृत्त्या च । तत्र सर्वत्रापि पूर्वैव । आद्ययोर्निशीथे जयन्तीयोगात् अन्त्ये प्रधानीभूताष्टम्याः कर्मकालव्यापित्वादिति । *द्वित्रीति । उदिते

---

(१) 'हेमाद्रौ' इत्यादर्शपुस्तके नास्ति ।

अर्धरात्रेऽथवा कुर्यात्पारणं त्वपरेऽहनि ॥'

इति हेमाद्रौ वचनाच्चार्धरात्रेऽप्युभयान्तेऽन्यतरान्ते वेति मुख्यः पक्षः।

'सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते।'

इति ब्रह्मवैवर्ते त्वन्यविषयम्। दिने*मुख्यकाला- लाभेऽन्यतरान्ते वा ज्ञेयम्। *गौडास्तु—

'न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात्*।

तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम्॥'

इति ब्रह्माण्डपुराणाद्रात्रौ सार्धप्रहरमध्ये कार्यम्।

'महानिशा तु विज्ञेया मध्यमं मध्ययामयोः।'

तथा—

'मध्यमप्रहरे रात्रेर्विज्ञेया तु महानिशा।'

इति स्मृत्यन्तरात्। कल्पतरौ मदनरत्ने चैवम्। काम- धेनौ गर्गस्तु—

'महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम्।'

इत्याह। वृद्धशातातपस्तु—

---

तत्रैव पारणं कुर्यादिति वेदविदो विदुः॥'

इति सामान्यत उक्तेश्च। *अथेति। प्रतिपदाद्युपवासेत्यर्थः। अन्यतिथ्यागम इत्यपि द्रष्टव्यम्। *मुख्येति। उक्तदिवापारणवि- धिरात्रिनिषेधयोरेकवाक्यतया दिवान्यतरान्तलाभे तत्रैव अनु- कल्पत्वेनानुज्ञातस्य मुख्यतयैवोपादानात् न तूभयान्तप्रतीक्षया रा- त्रावपीति मदनरत्नादयः। एवमेव दिवान्यतरान्तस्यालाभे महानिशातः प्राक्तल्लाभे तत्रैव, इतरथा महानिशायामपीति द्रष्टव्य- म्। तिथ्यृक्षयोरित्यस्य—

'अर्धरात्रे ततः कुर्यात्पारणं त्वपरेऽहनि।'

इत्युत्तरार्धं वदतां मतमाह—*गौडास्त्विति। *रोहिणी-

'महानिशा द्वे घटिके रात्रौ मध्यमयामयोः ।'

इत्याह । वेदपाठपरमे*तदित्यन्ये । *महानिशाया-मन्यतरान्ते तृतीयदिने पारणम् । 'अपरेऽहनि' इति पारणोत्तरदिनपरत्वात् उभयान्तापेक्षणादित्याहुः । *तत्त्वं तु महानिशातोऽर्वागन्यतरान्तलाभे महानिशानिषेधः महानिशायामेव लाभे*तत्रैव पारणमिति ।

दिवोदासस्तु—

'रजनीप्रहरं यावत्प्रवृत्तिः कर्मणो मता ।
पारणं तावदेवेष्टं प्रमादान्न भवेद्यदि ॥'

इति स्कान्दादूर्ध्वं निषेधमाह । तन्निर्मूलम् ।

अशक्तौ तु वह्निपुराणे—

'भान्ते कुर्यात्तिथेर्वापि शस्तं भारत पारणम् ।' इति ।

गारुडे विष्णुधर्मे च—

'जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।
तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम् ॥'

---

व्रतादिति । तद्युक्ताष्टमीव्रतादित्यर्थः । *एतदिति । सुबुद्धिदुर्बुद्धि-भेदेन वाक्यद्वयमित्यर्थः । स्वापादिपरमस्तु, प्रकृते तु नैतद्द्वयं प्रवर्तते ।

'मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।'

इत्यादिवदिति भावः । *महानिशायामिति । वर्जयित्वा महानिशामिति तत्र भोजननिषेधात् । अत्र तादृशपाठ-कल्पने वर्जयित्वा महानिशामित्येतदेव बीजम् । अर्धरात्रेऽथ-वेति पाठे विरोधात् । तच्चायुक्तं तृतीयदिनपारणेऽनौ-चित्यात् । महानिशातोऽव्यवहितप्राक्क्षणे सन्देहतादवस्थ्याच्च महा-निशोत्तरमन्यतरान्ते तत्रैव पारणं तदुत्तरान्निषेधस्य रागप्राप्त-गोचरत्वेन वैधेऽप्रवृत्तेः, महानिशायां तु परेद्युरित्यनौचित्याच्चे-त्यरुचिः । स्वयं विरोधं परिहरति—*तत्त्वं त्विति । *तत्रैवेति ।

अर्धरात्रेऽथवेत्युक्तेः । तथा च न द्वयोर्विरोध इति भावः । न रात्रौ पारणं कुर्यादिति निर्मूलमेव । दाक्षिणात्यनिबन्धे ऽदर्शनात् । अस्तु वा समूलं, तथापि तिथ्यृक्षयोरिति वाक्यार्थो न तद्विरुद्धः ।

'आततायिनमायान्तमपि वेदान्तगं रणे ।'

इत्यादावपिशब्दवत् । अथवापदस्यापि स्वार्थत्यागेनान्यार्थतात्पर्यावगमात् । व्रतनिषिद्धरात्रिपारणप्रतिप्रसवार्थत्वेनार्धरात्रेऽपि पारणं सुकरं किमुत ततः प्रागरात्राविति व्याख्येयम् । यदि तु रोहिणीव्रतं नक्षत्रमात्रव्रतं तदाऽपि रात्रौ मुख्यगौणपक्षाश्रयेण पारणं कैमुतिकन्यायव्याख्यानात् । महानिशातः प्रागन्यतरान्तालाभे तु रात्रिपारणनिषेधातिक्रमस्य निर्बीजत्वात् 'तिथ्यन्ते चोत्सवान्ते च' इति वाक्याज्जागरान्ते दिवैवेति न द्वयोर्विरोध इति तु केचित् । वस्तुतस्तु रात्रिपारणनिषेधवाक्याविरोधेनैव व्याख्यानं सम्भवति । अर्धरात्रे यदा तिथ्यृक्षयोश्छेदस्तदाऽपरेऽहनि पारणमिति ह्यन्वयः । अर्धरात्रेऽपरेऽहनीति तु नान्वयः । एकं पदमेकत्रान्वितं विना बलवदनुपपत्तिमन्यत्र नान्वेतीति न्यायात् । "एकैकमन्यांश्चमसांश्चमसिनो भक्षयेति अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते" इत्यत्र चमासिपदस्य हारियोजनान्वयवारणाय तन्न्यायस्य तृतीये व्युत्पादितत्वात् । तत्र निश्यपीत्यापिश्च स्वार्थत्यागेनान्यार्थपरत्वात्कैमुतिकन्यायाद् दिवैव पारणार्थः । वस्तुतो रोहिणीनक्षत्रमात्रव्रत एव तेन रात्रिपारणा बोध्यते ।

'सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।
अन्यथा पुण्यहानिः स्याद्दते धारणपारणात् ॥'

इति वचनात् । धारणपारणमिति पाठ आहारं विना शरीरस्य धारणम्=उपवासः, तदुत्तरदिने चतुर्थकालभोजनविधिना विहितं भोजनं=पारणम् । व्रतविशेष इत्यर्थ इति तु केचित् । ग्रन्थस्त्वित्थं योज्यः—परदिने अष्टम्यादिमध्ये पारणाप्राप्तौ 'अतोऽन्य-

अशक्तौ तु—

'तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम् ।
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणा ॥'

स एवोत्सवान्तः—

*'तिथ्यन्ते वो*त्सवान्ते वा व्रती कुर्वीत पारणम् ।'

इति कालादर्शोक्तेश्चेति सङ्क्षेपः ॥

अष्टम्यां विशेषो हेमाद्रौ भविष्ये—

'*ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले ।

---

था पारणायाम्' इत्यादिदर्शनादन्तापेक्षायामुभयान्तो मुख्यः । तिथिरष्टगुणमिति वचनात् । अन्यतरान्तस्तु गौणः । 'भान्ते कुर्यात्तिथेर्वापि'इति वचनात् अथ वा यदि वोभयान्तोऽन्यतरान्तो वा रात्रौ तदाऽप्यपरेऽहन्येव दिवैव तिथ्यृक्षयोरिति वचनात् । तत्रार्ध रात्रशब्दस्य रात्र्यर्थकत्वात् । तत्रापि यत्रार्धरात्रात्प्रागुभयान्तस्तत्रार्धरात्रवारणाय तथैव व्याख्येयत्वात् । सर्वेष्विति प्रतीकधारणं तेनान्यविषयमित्यस्य दर्शितश्लोकान्तर्गतम् 'ऋते धात्वृक्षपारणम्' इत्येतन्नैतदुपवास विषयं किन्तु केवलरोहिण्युपवासविषयमित्यर्थः । मुख्येति यत्रान्यतरान्ते गौणकाले दिवा उभयान्तो मुख्यकालस्तु रात्रौ तत्रान्यतरान्ते गौणकाले एकवाक्यताद्वारा मुख्यत्वप्रत्ययार्थमित्यर्थः । तत्त्वं त्वित्यादि तु मतान्तरमिति

*तिथ्यन्ते=अन्यतरान्ते । *उत्सवान्ते=जागरान्ते । एकतराविगमेऽपि शेषविरोधापत्तिवारणाय । एतदेव

'तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम् ।
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणा ॥'

इति गीयते माधवाचार्यैः । उत्सवान्तस्यैव प्रातस्त्वात् यामत्रयेत्यशक्तेर्विवरणाच्च । एतन्निर्मूलमेवेति तु विवेचने ।

*तत इति पूर्वेद्युर्नियमाश्च

**सुदेशे शोभनं कुर्याद्देवक्याः *सूतिकागृहम् ॥**
**तन्मध्ये*प्रतिमा स्थाप्या सा चाप्यष्टविधा स्मृता ।**

---

'सप्तम्यां लघुभुक्कुर्याद्दन्तधावनपूर्वकम् ।
उपवासस्य नियमं रात्रौ कृत्वा जितेन्द्रियः ॥'

इत्यादयः । परेद्युः कृतनित्यक्रियः

'सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपाः ।
पवनो दिक्पतिर्भूमिराकाशं खचरा नगाः ॥
ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिम् ॥'

इति पठेत् । एतदेव सूर्यादिदेवताभ्यो व्रतनिवेदनं गीयते । तत आचम्य प्राणानायम्य प्राङ्मुख उदङ्मुखो वा दर्भपाणिः फलपुष्पाक्षतं वारिपूर्णं ताम्रपात्रमादाय मासाद्युल्लिख्य श्रीकृष्णप्रीतये पापक्षयार्थं वा जन्माष्टमीव्रतमहं करिष्ये इति सङ्कल्पयेत् । सङ्कल्पेऽधिकरणतिथेरुल्लेखः । ततः श्लोकचतुष्टयं पठेत् —

'वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥
एनसो मोक्षकामोऽस्मि यद्गोविन्दत्रियोनिजम् ।
तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे ॥
आजन्म मरणं यावद् यन्मया दुष्कृतं कृतम् ।
तत्प्रणाशय गोविन्द प्रसीद परमेश्वर ॥' इति ।

ततः पात्रस्थं जलं क्षिपेत् । तत आह—*ततोऽष्टम्यामिति । तिलस्नानं मध्यान्हे प्रातःस्नानस्य वृत्तत्वात् । *सूतिकागृहम्= षष्ठ्या देव्या अधिष्ठितं गृहम् । *प्रतिमेति । प्रतिमायामग्न्युत्तारणसंस्कारं कुर्यात् । स च ऋग्वेदे—'अग्निः सप्तिं वाजम्भरं ददाति' इति सूक्तमग्निपदहीनं पठित्वा अग्निपदसहितं पठन् स-

काञ्चनी राजती ताम्री पैत्तली मृन्मयी तथा ॥
वार्क्षी मणिमयी चैव वर्णकैर्लिखिताऽथवा ।
सर्वलक्षणसंपूर्णा पर्यङ्के च पटावृते ॥
देवकीं तत्र चैकस्मिन्प्रदेशे सूतिकागृहे ।

---

न्ततां जलधारां पातयेदिति । प्रतिमापूजनं चाकृतप्राणप्रतिष्ठाया-स्तस्याः प्राणप्रतिष्ठां कृत्वा कार्यम् ।

'प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना ।
प्राणप्रतिष्ठां कुर्वीत तस्यां देवस्य वा हरेः ॥
अकृतायां प्रतिष्ठायां प्राणानां प्रतिमासु च ।
यथापूर्वं तथा भावः स्वर्णादीनां न देवता ॥
अन्येषामपि देवानां प्रतिमास्वपि पार्थिव ।
प्राणप्रतिष्ठा कर्त्तव्या तस्यां देवत्वसिद्धये ॥
वासुदेवस्य बीजेन तद्विष्णोरित्यनेन च ।
तथैव हृदयेऽङ्गुष्ठं दत्त्वा शश्वच्च मन्त्रवित् ॥
एभिर्मन्त्रैः प्रतिष्ठां तु हृदयेऽपि समाचरेत् ।
अस्मै प्राणाः प्रतिष्ठन्तु अस्मै प्राणाः क्षरन्तु च ॥
अस्मै देवत्वसङ्ख्यायै स्वाहेति यजुरीरयेत् ।
अङ्गमन्त्रैरङ्गिमन्त्रैर्वैदिकैरित्यनेन च ॥
प्राणप्रतिष्ठां सर्वत्र प्रतिमासु समाचरेत् ।'

बीजेन=मूलमन्त्रेण ।

'प्रणवादिनमोऽन्तं च चतुर्थ्यन्तं च सत्तम ।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्तितः ॥'

इति तल्लक्षणम् । यदा स्वहृदये पूजा क्रियते तदा हृदयेऽङ्गुष्ठं द-त्त्वा मन्त्राः पठनीयाः । प्रतिमायां तु कपोलौ स्पृष्ट्वेति विशेषः । एतच्च श्रीकृष्णमभिप्रेत्य देवक्यादिप्रतिमासु अग्न्युत्तारणान्तरं तत्तन्मूलमन्त्रान् वैदिकमन्त्रांश्च पठेत् । अस्मैइत्यस्य स्थाने चतु-

*अर्धरात्रे वसोर्धारां पातयेद् गुडसर्पिषा ।
*नाडीवर्धापनं षष्ठी नामादेः करणं मम ॥
*ततो मन्त्रेण वै दद्याच्चन्द्रायार्घ्यं समाहितः ।
शङ्खे तोयं समादाय सपुष्पकुशचन्दनम् ॥
जानुभ्यां धरणीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ॥
क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव ।
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ॥
ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषां पते ।
नमस्ते रोहिणीकान्त अर्घ्यं नः प्रतिगृह्यताम् ॥
यथा पुत्रं हरिं लब्ध्वा प्राप्ता ते निर्वृतिः परा ।
तामेव निर्वृतिं देहि सुपुत्रं दर्शयस्व मे ॥'

इति देवक्यर्घ्यः ।

'ततः पुष्पाञ्जलिं दत्त्वा यामे यामे प्रपूजयेत् ।
प्रभाते ब्राह्मणान् शक्त्या भोजयेद्भक्तिमान्नरः ॥'
'ॐ नमो वासुदेवाय गोब्राह्मणहिताय च ।
शान्तिरस्तु शिवं चास्तु इत्युक्त्वा मां विसर्जयेत् ॥'

इदं प्रतिमासकृष्णाष्टम्यामप्युक्तं मदनरत्ने वह्निपुराणे

---

पूजायां मन्त्रा उक्ताः । *अर्धरात्रे इति । ततो गव्यघृतेनाग्नौ वसोर्धारां कुर्यात् । क्वचिद्गुडसर्पिषेति पाठः । *नाडीति । जातकर्मनालच्छेदनषष्ठीपूजानामकर्मादीनि संक्षेपेण । *तत इति । चन्द्रोदये प्रतिमादौ रोहिणीसहितं चन्द्रं सम्पूज्य 'जानुभ्यां धरणीं गत्वा' शङ्खे तोयमित्यादिचन्द्रार्घ्योत्तरं च

'ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः ।
नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ॥
नमो मण्डलदीपाय शिरोरत्नाय धूर्जटेः ।

कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे' ॥

इति मन्त्राभ्यां प्रणमेत्, देवक्यर्घ्योत्तरं देवकीं च प्रणमेत् । देवक्यर्घ्यो नावश्यक इति केचित् । ततः—

'अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥
वाराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।
दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥
गोविन्दमच्युतं कृष्णमनघं चापराजितम् ।
अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारणम् ॥
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ।
नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् ॥
पीताम्बरधरं नित्यं वनमालाविभूषितम् ।
श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् ॥
प्रपद्येऽहं सदा देवं सर्वकामप्रसिद्धये ।
प्रणमामि सदा देवं वासुदेवं जगत्पतिम् ॥

इति मन्त्रैः स्वनामकीर्तनपूर्वकं प्रणम्य

त्राहि मां सर्वलोकेश हरे संसारसागरात् ।
त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो ॥
सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे ।
देवकीनन्दन श्रीश हरे संसारसागरात् ॥
त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे ।
दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत् सकृत् ॥
सोऽहं देवातिदुर्वृत्त त्राहि मां शोकसागरात् ।
पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे ॥
त्राहि मां देव देवेश त्वत्तो नाऽन्योऽस्ति रक्षिता ।
यद्बाल्ये यच्च कौमारे यौवने यच्च वार्धके ।

तत्पुण्यं वृद्धिमाप्नोतु पापं हर हलायुध ॥'

इति प्रार्थ्य रात्रिशेषं स्तोत्रपुराणश्रवणादिभिरतिवाहयेत् । ततः परदिने प्रातः स्नानादिनित्यकृत्यं कृत्वा पुनः सपरिवारं श्रीकृष्णं यथाविभवं संपूज्य यथाविभवं चण्डिकामहोत्सवं कृत्वा यथाशक्ति ब्राह्मणान्संपूज्य भोजयित्वा तेभ्यः सुवर्णमेदिनीधेनुवस्त्रादि यद्यदिष्टं तत्कृष्णो मे प्रीयतामिति दत्वा मां प्रति

यं देवं देवकी देवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ॥
ॐ नमो वासुदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥

शान्तिरस्तु शिवं चास्तु इत्युक्त्वा ब्राह्मणान् विसृज्य इष्टैः सह स्वयं पारणं कुर्यादित्यर्थः । सुजन्म वासुदेवायेति पाठान्तरम् । अङ्गदेवताविसर्जनं कार्यम् । श्रीकृष्णप्रतिमादिदानं तु विसर्जनमकृत्वैव । एवं श्रीकृष्णप्रतिमाया अधार्यत्वे 'ॐ कृष्णाय नमः' इति मन्त्रेण 'ॐ वासुदेवाय' इति मन्त्रेण वा तद्विसर्जनमपि । उद्यापनं तु नैतस्यानुक्तत्वात् ।

'यदि वोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् ।'

इत्यादिप्रागुक्तत्वादुद्यापनमावश्यकमिति स्मार्ताः । व्रतभङ्गेतूक्तमथवा सम्पूर्णतानुष्ठानं कार्यम् । युधिष्ठिर उवाच—

संपूर्णतामनुष्ठानं व्रतानां च जनार्दन ।
कुरुप्रसादं गुह्यार्थमेतन्मे वक्तुमर्हसि ॥

श्रीकृष्ण उवाच—

साधु साधु महाबाहो कुरुराज युधिष्ठिर ।
रहस्यानां रहस्यं ते कथयामि व्रते तव ॥
किञ्चिद्भग्नं प्रमादेन यद् व्रतं व्रतिनां व्रतम् ।
तत्संपूर्णं भवेत्सर्वं कृतेनानेन पाण्डव ॥

काञ्चनं रूप्यकं वाऽथ शिल्पिना तु घटापयेत् ।
भग्नव्रतस्य यो देवस्तत्स्वरूपं विनिर्मितम् ॥
द्विभुजं पङ्कजारूढं सौम्यं प्रहसिताननम् ।

द्विभुजमितिचतुर्भुजादेरुपलक्षणम् ॥

निष्पादितं शिल्पिना च तस्मिन्नेव दिने पुनः ।
तन्मासे तु पुनः प्राप्ते ब्राह्मणो विधिना गृहे ॥
स्नापयेत्पयसा दध्ना घृतक्षौद्ररसाम्बुभिः ।
गन्धचन्दनपुष्पैश्च पूजां कुर्यात्समाहितः ॥

पूजा चाग्न्युत्तारणप्राणप्रतिष्ठानन्तरं कार्येत्युक्तम् ।

अर्घ्यं प्रदद्यात्तन्नाम्ना मन्त्रेणानेन पाण्डव ।
शरणं वः प्रपन्नोऽस्मि कुरुष्वाद्य दयां पुनः ॥
प्रसन्नो भवभीतस्य भिन्नचर्यव्रतस्य च ।
कुरु प्रसादं सम्पूर्णं व्रतं संजायतां मम ॥
तपश्छिद्रं जपाच्छिद्रं यच्छिद्रं यज्ञकर्मणि ।
तत्सर्वं त्वत्प्रसादेन संपूर्णं जायतां मम ॥
पूर्वदक्षिणपश्चात्सु उत्तरे च बलिं हरेत् ।
उपर्यधस्तात्सर्वेभ्यो दिक्पालेभ्यो नमो नमः ॥
इदमर्घ्यमिदं पाद्यं तेभ्यस्तेभ्यो नमो नमः ।
पादौ च जानुनी चैव कटिं शीर्षं च वक्षसि ॥
कुक्षिं तु हृदयं पृष्ठं वाक्चक्षुश्च शिरोरुहान् ।
पूजयित्वाऽस्य देवस्य ततः पश्चात् क्षमापयेत् ॥
पूजितस्त्वं यथाशक्त्या नमस्तेऽस्तु सुरोत्तम ।
ऐहिकामुष्मिकीं देव कार्यसिद्धिं दिशस्व मे ॥
एवं क्षमापयित्वा तु देवं साष्टाङ्गमानमेत् ।
तन्मूर्तिं चापि विप्राय विधिवत् प्रतिपादयेत् ॥
स्थित्वा पूर्वमुखो विप्रो गृह्णीयाद्दर्भपाणिना ।

दर्भयुक्तेन पाणिनेत्यर्थः ।

*प्रतिमासं च ते पूजामष्टम्यां यः करिष्यति ।
विप्रहस्ते प्रयच्छेत दाता चैवोत्तरामुखः ॥
मन्त्रेणानेन कौन्तेय सोपवासः प्रयत्नतः ।
इदं व्रतं मया खण्डं कृतमासीत्पुरा द्विज ॥
तत्सर्वं पूर्णमेवास्तु तव मूर्तिप्रदानतः ।
वाक्यं पूर्णमतो ब्रूयाद् व्रतेनानेन ते पुरा ॥
सम्पूर्णं स्यात्प्रसादेन तव पूर्णा मनोरथाः ।
ब्राह्मणा यत्प्रभाषन्ते तन्मन्यन्ते दिवौकसः ॥
सर्वदेवमया विप्रा न तद्वचनमन्यथा ।
जलधिः क्षारतां नीतः पावकः सर्वभक्षताम् ॥
सहस्रनेत्रः शक्रोऽपि कृतो विप्रैर्महात्मभिः ।
ब्राह्मणानां तु वचनाद् ब्रह्महत्या विनश्यति ॥
अश्वमेधफलं साग्रं लभन्ते नात्र संशयः ।
व्यासवाल्मीकिवचनात्पराशरवसिष्ठयोः ॥
गर्गगौतमधौम्यात्रिकश्यपाङ्गिरसस्तथा ।
वचनान्नारदादीनां पूर्णं भवतु मे व्रतम् ॥
एवं विधिविधानेन गृहीत्वा ब्राह्मणो व्रजेत् ।
दाता तत्प्रेषयेत्सर्वं ब्राह्मणस्य गृहं स्वयम् ॥
ततः पञ्चमहायज्ञान्निर्वपेद्भोजनादिकम् ।
एवं यः कुरुते भक्त्या व्रतमेतन्नरोत्तम ॥
तस्य सम्पूर्णतां याति तद्व्रतं यत्पुरा कृतम् ।
खण्डं सम्पूर्णतां याति प्रसन्ने व्रतदैवते ॥
भग्नानि यानि मदमोहवशाद् गृहीत्वा
जन्मान्तरेष्वपि नरेण समत्सरेण ।
सम्पूर्णपूजनपरस्य पुरो भवन्ति
सर्वव्रतानि परिपूर्णफलप्रदानि ॥' इति ।

*प्रतिमासं चेति । चण्डिकां प्रति श्रीकृष्णवाक्यम् । आर-

मम चैवाखिलान्कामान्स संप्राप्स्यत्यसंशयम् ॥'

तथा—

'अनेन विधिना यस्तु प्रतिमासं नरेश्वर।

करोति वत्सरं पूर्णं यावदागमनं हरेः॥

दद्याच्छय्यां सुसंपूर्णां गोभी रत्नैरलंकृताम् ॥'

इति जन्माष्टमीव्रतम् ॥

भाद्रामावास्यायां कुशग्रहणमुक्तं हेमाद्रौ हारीतेन-

'*मासे नभस्यमावास्या, तस्यां दर्भोच्चयो मतः।

---

नभस्त्वस्य रोहिणीयुताष्टम्याम्। अत्रोत्सङ्गावस्थितचतुर्भुजबालस्वरूपश्रीकृष्णाया देवक्याः प्रतिमा, तत्र श्रीकृष्णपूजादि, देवक्यर्घ्यः, प्रतिमादानादि।

'ततः पुष्पाञ्जलिं दत्त्वा यामे यामे प्रपूजयेत्।' इति।

सुवासिनीनामपि एतद्व्रते अधिकारः। अयं विशेषः—उक्तपूजोत्तरमरुणोदये रक्तवस्त्रं परिधाय स्वां स्वां प्रतिमां गृहीत्वा नदीतीरं, महत्सरो वा गत्वा तत्र स्वयं स्नात्वा प्रतिमां स्नापयित्वा किञ्चिद्विहृत्य सह प्रतिमया स्वं स्वं गृहमागत्य मध्वाज्यमरिचेक्षुविकारसंस्कृतं यवान्नं बन्धुभिः सह भुञ्जीरन्निति। पञ्चमृत्तिकापूजायां जन्माष्टम्यां मृत्तिकागोकुलपूजा कार्या। इति जन्माष्टमी।

*मासे इति। यत्तु शङ्खः—

'अमायां चैव न च्छिन्द्यात्कुशांश्च समिधस्तथा।'

इति, तत्तत्कालकर्मातिरिक्तपरम्।

'कुशान् काशांश्च दूर्वाद्यान् गवार्थं च तृणादिकम्।

निषिद्धे चापि गृह्णीयादमावास्याहनि द्विज॥'

इति जाबाल्युक्तेः। वनस्पतिसंज्ञकमुहूर्ते च निषेधः 'वनस्पतिगते सोमे' इति वक्ष्यमाणवचनात्। मरीचिः—

'आर्द्रान् लुनीयाद्रात्रौ च लुनीयाद्वापि सन्ध्ययोः।'

*अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥'

नभः=श्रावणः। तेन दर्शान्तमासे जन्माष्टम्यनन्तरं दर्शो लभ्यते। *मदनरत्ने तु-

'मासे नभस्येऽमावास्या, तस्यां दर्भोच्चयो मतः।'

इति मरीचिवाक्यमुक्तम्। नभस्यो=भाद्रपदः। तेन महालयान्तर्गतदर्शो लभ्यते। गौणमुख्यचान्द्राभ्यामेक एव दर्श इत्यन्ये॥

भाद्रपदशुक्लतृतीयायां हरितालि(१)काव्रतम्। तत्र परा ग्राह्या।

'मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे।
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात्॥'

---

पाद्मे—

'न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः।'

*अयातयामाः=उपयुक्ता अपि अपवादं विहायान्यत्र प्रयोज्याः।

समित्पुष्पकुशादीनां द्वितीयः प्रहरो मतः।

इत्युक्तेस्तद्व्यापिनी अमा ग्राह्या, अधिकमग्रे। *मदनरत्ने त्विति तु नाऽस्मरुचिः। शुक्लादिकृष्णादिमासभेदेन एकस्यैव चान्द्रस्य ग्रहीतुं शक्यत्वात्।

भाद्रशुक्लप्रतिपदि रुद्रव्रतं, तत्र पूर्वविद्धा ग्राह्या।

'रुद्रव्रतेषु सर्वेषु कर्तव्या सम्मुखी तिथिः।

---

(१) हरितालिकेति। एतदन्वर्थकं नाम 'आलिभिर्हरिता यस्मात्तस्मात्सा हरितालिका।' इति वचनात्। अत्र च भवानीशिवयोः पूजा, मन्त्रः 'मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय। दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय॥' इति तत्कथायामुक्तः।

इति माधवोक्तेः । चतुर्थीयुक्तायां फलाधिक्यम् ।
माधवीये आपस्तम्बः—

'चतुर्थीसहिता या तु सा तृतीया फलप्रदा ।
अवैधव्यकरा स्त्रीणां पुत्रपौत्रप्रवर्धिनी ॥'

द्वितीयायोगे प्रत्यवायमाह स एव—

'द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥' इति ।
'आद्या मधुस्रावणिका कज्जली हरितालिका ।
चतुर्थीमिश्रिता स्त्रीभि*र्दिवानक्ते विधीयते ॥
तृतीया नभसः शुक्ला मधुस्रावणिका स्मृता ।
भाद्रस्य कज्जली कृष्णा, शुक्ला च हरितालिका ॥'

इति दिवोदासोदाहृतवचनाच्च ॥

*भाद्रशुक्लचतुर्थी मध्याह्नव्यापिनी ग्राह्या ।
'प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ।'

इति हेमाद्रौ भविष्ये तत्रैव पूजोक्तेः । मदनरत्नेऽप्येव-

---

अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत् ॥'

इति ब्रह्मवैवर्तात् । आद्या=परेद्युरौदयिकी, मधुस्रावणिकेत्यत्र दन्त्यः सकारो न तु तालव्यः शकारः । मधुस्रवाख्येत्युक्तेः । *दिवानक्ते=अहोरात्रसाध्ये व्रते । *भाद्रस्येति 'नभसः कज्जली कृष्णा' इति दिवोदासपाठाच्छ्रावणकृष्णतृतीया कज्जलीति कृत्यरत्नावली ।

वरदेति ।

'सुरासुरानाप्नुवतो गणेशं बुद्धिपूर्वकम् ।
तस्यां प्रादाद्वरं यस्मात्तस्माद्वरचतुर्थिका ॥'

इति पुराणान्तरे तद्विवरणात् ।

*अंशेनेति । परेद्युरधिकव्याप्तौ परेद्युराधिक्यादिति के-

म् । परदिने एकदेशेन*साकल्येन वा मध्याह्नव्याप्त्यभावे सर्वपक्षेषु पूर्वा ग्राह्या । तथा च बृहस्पतिः—

'चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि ॥' इति ।
'मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके ।
मध्याह्ने परतश्चेत्स्यान्नागविद्धा प्रशस्यते ॥'

इति माधवीये स्मृत्यन्तराच्च । तत्र गणेशरूपं स्कान्दे—

'एकदन्तं शूर्पकर्णं नागयज्ञोपवीतिनम् ।
पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिवि(१)नायकम् ॥' इति ।

इयं रविभौमयोरतिप्रशस्ता ।

'भाद्रशुक्लचतुर्थी या भौमेनार्केण वा युता ।
महती साऽत्र विघ्नेशमर्चित्वेष्टं लभेन्नरः ॥'

इति निर्णयामृते वाराहोक्तेः ।

अत्र चन्द्रदर्शनं निषिद्धम् । तथा चापरार्के मार्कण्डेयः—

'*सिंहादित्ये शुक्लपक्षे *चतुर्थ्यां चन्द्रदर्शनम् ।

---

चित् । या तु पूर्वेद्युः किंचिन्मध्याह्नं व्याप्य परेद्युः कृत्स्नं मध्याह्नं व्याप्नोति सा परा; संपूर्णकर्मकालव्याप्तेः । संदिग्धे हि 'मातृविद्धा प्रशस्यते' 'मातृविद्धा प्रशस्ता स्यात्' इत्यादीनि प्रवर्तन्ते ।

*सिंहादित्ये इति । कन्यादित्यसिंहादित्यशब्दयोः चान्द्रो भाद्रपद इत्यर्थः । *चतुर्थ्यामिति । अत एव कृत्यरत्नाव-

---

(१) अत्र 'मृन्मयादिमूर्तौ प्राणप्रतिष्ठापूर्वकं विनायकं षोडशोपचारैः संपूज्यैकमोदकेन नैवेद्यं दत्त्वा सगन्धा एकविंशतिदूर्वा गृहीत्वा-'गणाधिपायोमापुत्रायाघनाशनाय विनायकायेशपुत्राय सर्वसिद्धिदायैकदन्तायेभवक्त्राय मूषकवाहनाय कुमारगुरवे' इति दशनामभिर्दूर्वयोर्द्वयं द्वयं समर्प्यावशिष्टामेकां दूर्वामुक्तदशनामभिः समर्पयेत् । दश मोदकान् विप्राय दत्त्वा दश स्वयं भुञ्जीत' इति संक्षेपतः पूजाविधिर्धर्मसिन्धावुक्तः । विस्तरस्तु व्रतराजादिग्रन्थेभ्योऽवगन्तव्यः ।

मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥'

चतुर्थ्यां न पश्येदित्यन्वयः । प्रधानक्रियान्वयलाभात् । तेन चतुर्थ्यामुदितस्य पञ्चम्यां न निषेधः । गौडा अप्येवमाहुः । पराशरोऽपि—

'कन्यादित्ये चतुर्थ्यां तु शुक्ले चन्द्रस्य दर्शनम् ।
मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥
तद्दोषशान्तये सिंहः प्रसेनामिति वै पठेत्' । इति ।

श्लोकस्तु विष्णुपुराणे—

'सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥' इति ॥

भाद्रपदशुक्लपञ्चमी=ऋषिपञ्चमी । सा मध्याह्नव्यापिनी ग्राह्या ।

'पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।'

इति माधवीये हारीतोक्तेः । दिनद्वये तत्त्वे *हेमाद्रिमते परा । 'सिता परयुता स्यात्पञ्चमी' इति दीपि-

---

ल्याम्—

'पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥'

इति तिथितत्त्ववाक्ये चतुर्थ्यां नेक्षितव्य इति सम्बन्ध इति व्याख्यातम् । दिवादर्शने च न दोषः । सकृत्पाठेऽपि तन्निवृत्तिः । पाठश्च प्राङ्मुखेनोदङ्मुखेन वा कार्यः । तथा च पुराणान्तरम्—

'ततश्चतुर्थ्यां रात्र्यां तं प्रमादाद्वीक्ष्य मानवः ।
पठेत्पौराणिकं वाक्यं प्राङ्मुखो वाऽप्युदङ्मुखः ॥' इति ।

सिंहः प्रसेनमिति मन्त्रेणामन्त्रितं जलं पिबेत, स्यमन्तकोपाख्यानं च श्रोतव्यमाचारादिति स्मार्ताः ।

*हेमाद्रीति । तत्त्वं तु सामान्यनिर्णये दर्शितम् । वस्तुत-

कोक्तेः। माधवमते पूर्वा। 'सर्वत्र पञ्चमी पूर्वा' इत्युक्तेः। युग्मवाक्यान्निर्णयस्तु युक्तः। ऋषिपञ्चमी षष्ठीयुतैवेति दिवोदासः। *अत्र ऋषीन्प्रतिमासु पूजयित्वाऽकृष्टभू-

---

स्तु मध्यान्हव्यापिनी ग्राह्या।

'पूजाव्रतेषु सर्वेषु मध्यान्हव्यापिनी तिथिः।'

इतिवचनात् मनुष्यदैवत्यत्वाच्च। मध्याह्नव्याप्त्या निर्णयाभावे तु पूर्वविद्धा ग्राह्या युग्मवाक्यात्। *अत्रेति।

'नभस्ये शुक्लपक्षे तु यदा भवति पञ्चमी।
नद्यादिषु तदा स्नानं कृत्वा नियममेव च॥
विधाय नित्यकर्मादि गत्वा द्वारवतीमृषीन्।

(द्वारवती=अग्निहोत्रशाला धूमनिर्गमनद्वारैर्बहुभिर्वृतत्वात्।)

स्नापयेद्विधिवद्भक्त्या पञ्चामृतरसैः शुभैः॥
चन्दनागरुकर्पूरैर्विलिप्य च सुगन्धिभिः।
पूजयेद्विविधैः पुष्पैर्गन्धधूपादिदीपकैः॥
समाच्छाद्य तथा वस्त्रैः सोपवीतैर्यथाविधि।
ततो नैवेद्यसंपन्नमर्घ्यं दद्याच्छुभैः फलैः॥
कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः।
जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः॥
गृहीतार्घ्यं मया दत्तं तुष्टा भवत सर्वदा।' इति।

'अकृष्टपृथिवीजातशाकाहारं प्रकल्पयेत्।
शयीत ब्रह्मचर्येण ऋषीन् ध्यात्वा समाहितः॥
अनेन विधिना सप्त वर्षाणि व्रतमाचरेत्॥'

इति च ब्राह्मात्। अत्र ब्राह्मण्यादीनां सर्वासामधिकारः।

'ब्राह्मणी क्षत्रिया वैश्या शूद्रा वाऽपि वरानने'।

इति ब्राह्मात्।

भाद्रशुक्लषष्ठी=सूर्यषष्ठी।

मिजशाकेन वर्तनम् । एवं सप्तवर्षाणि कृत्वा सप्तकुम्भेषु प्रतिमाः सम्पूज्य परेऽह्नि तत्तन्मन्त्रेणाष्टोत्तरशतं तिलाञ्हुत्वा सप्त ब्राह्मणान्भोजयेत्' इति निर्णयामृते ॥

भाद्रशुक्लषष्ठी=सूर्यषष्ठी । सा सप्तमीयुतैवेति दिवोदासः ।

'शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् ।
प्राशनं पञ्चगव्यस्य अश्वमेधफलाधिकम् ॥'

इति वचनात् । कल्पतरौ भविष्ये—

'येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ ।

---

'शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् ।
प्राशनं पञ्चगव्यस्य अश्वमेधशताधिकम् ॥'

भविष्ये—

'येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ ।
योऽस्यां पश्यति गाङ्गेयं दक्षिणापथवासिनम् ॥
ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः ।'

गाङ्गेयं=स्वामिकार्तिकम् ।

इयमेव भौमवारे विशाखावैधृतियोगे चम्पाषष्ठी । तदुक्तं स्कान्दे—

'षष्ठी भाद्रपदे शुक्ला वैधृतेन समन्विता ।
विशाखाभौमवाराभ्यां सा चम्पेतीह कीर्तिता ॥
पञ्चम्यामेकभक्ताशी चम्पाषष्ठ्यामुपोषितः ।
रथे दलद्वादशके पूजयेत्सूर्यदेवताम् ॥
आदित्यस्तपनः पूषा भानुमान् भानुरर्यमा ।
विश्वचक्रोऽंशुमान् देवः सहस्रांशुर्विनायकः ॥
सूरः सूर्यः खगः कर्ण्यामादित्यः प्राग् दलादिषु ।
तपनादींश्च संपूज्य सप्तम्यां जुहुयात्तिलान् ॥' इति ।

देव इति विशेषणम् । रोगनिवृत्त्यर्थमिदं व्रतमिति प्रतीमः ।

योऽस्यां पश्यति गाङ्गेयं दक्षिणापथवासिनम् ॥
ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः ॥'
गाङ्गेयः=स्वामिकार्तिकेयः ॥

भाद्रपदशुक्लसप्तम्यां=मुक्ताभरणव्रतम्। तत्र सप्तमी पूर्वयुता ग्राह्या। 'षण्मुन्योः'इति युग्मवाक्यात्।

भाद्रपदशुक्लाष्टमी=दूर्वाष्टमी। सा पूर्वा ग्राह्या।
'श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ॥
*पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥'
इति हेमाद्रौ बृहद्यमोक्तेः।
'शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत्।
दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते ॥'
इति पुराणसमुच्चयाच्च। *यत्तु—
'मुहूर्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा।
दूर्वाष्टमी तु सा कार्या ज्येष्ठां मूलं च वर्जयेत् ॥'
इति लक्ष्म्यापरार्के उक्तम्, तत् पूर्वदिने* ज्येष्ठादियोगे द्रष्टव्यम्।
'दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता।'

---

*पूर्वेति। 'शुक्लपक्षेऽष्टमी चैव'इत्यस्यापवादः। हुताशनी=होला, वह्निव्रततिथिर्वा; रम्भा तृतीयेत्यन्ये। दूर्वाव्रते भाद्रशुक्लाष्टमी पूर्वा ग्राह्येत्युक्तं तत्रैव। भाद्रशुक्लाष्टमी ज्येष्ठामूलशून्यरौहिणमुहूर्तव्यापिनी ग्राह्येति दर्शयति—*यत्तु मुहूर्ते इति। विवेचनकृतस्तु दूर्वाव्रतं ज्येष्ठामूलयोगरहितायां सिंहस्थे सूर्येऽगस्त्येऽनुदिते मध्यान्हव्यापिन्यां कार्यमित्याहुः। *पूर्वदिने इति। रौहिणे मुहूर्ते इति शेषः। यत्र दिनद्वये रौहिणे मुहूर्तेऽष्टमी पूर्वदिने च ज्येष्ठादियोगस्तत्रेति यावत्। दिनद्वये रौहिणे ज्येष्ठादियोगे पूर्वैव 'श्रावणी दुर्गनवमी'इति वचनात्। एवं परदिने

तथा—

'ऐन्द्रर्क्षे पूजिता दूर्वा हन्त्यपत्यानि नान्यथा ।
भर्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेत् ॥'

इति तत्रैव तन्निषेधात् । इदमगस्त्योदये कन्यार्के च न कार्यम् ।

'शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाऽष्टमी ।
सिंहार्क एव कर्तव्या न कन्यार्के कदाचन ॥
सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तम ॥'

---

कर्मकालस्पर्शाभावे ज्येष्ठादियोगेऽपि पूर्वैव । कर्मकालशास्त्रादिति भावः । 'कन्यार्के च' इति निषेधो व्यर्थः । "न कन्यार्के कदाचन' इति तु 'नान्तरिक्षे न दिवि' इतिवत् । यथा कन्यार्के न कदाचन तथा सिंहार्केऽपि अगस्त्योदयानन्तरं नेति वाऽर्थः । लौगाक्षिस्त्वन्यत्राप्याह—

'उद्यानिकाशिवपवित्रकमघपूजा-
दूर्वाष्टमीव्रतविरूढकजागराणि ।
स्त्रीणां व्रतानि निखिलान्यपि वार्षिकाणि
कुर्यादगस्त्य उदिते न शुभानि लिप्सुः ॥' इति ।

अस्यार्थः—उद्यानिका=उद्याने स्वेष्टदेवतापूजादि, तत्प्रीत्यर्थं ब्राह्मणभोजनादिरूपव्रतविशेषः । शिवपवित्रकम्=आषाढ-श्रावण-भाद्रपदान्यतमचतुर्दशीविहितं शिवपवित्रारोपणम् । मघपूजा=व्रतविशेषः । दूर्वाष्टमी=भाद्रशुक्लाष्टमी । व्रतविरूढकं=भाद्रशुक्लचतुर्दशीविहितं पालीसंज्ञं कदलीव्रतम् । जागरम्=आश्विनपूर्णिमाविहितं कोजागरम्, कार्तिकशुक्लचतुर्दशीविहितं जागरं वा । अत्रोभयत्रापि अगस्त्योदयस्यावश्यतया विध्यनवकाशापत्तेर्विकल्पः । वार्षिकाणि=वर्षासु भवन्ति, न तु वर्षासु भवानि इति । शरदादि-ग्रीष्मान्तमगस्त्योदयानुवृत्तेस्तत्र स्त्रीव्रतानामनारम्भापत्तेर्विध्यन-

इति तत्रैवोक्तेः । *अस्यापवादः—

'यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः ।

तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे ॥' इति ।

*इदं केवलतिथौ नक्षत्रे चोक्तम् । तत्राद्यं केवलतिथौ कार्यम् । अन्त्यं केवलर्क्षे । तदुक्तं मात्स्ये-

'प्रत्याब्दिकं तिथावुक्तं यज्ज्येष्ठादैवतव्रतम् ।

प्रतिज्येष्ठाव्रतं यच्च विहितं केवलोडुनि ॥

तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षतः ॥' इति ।

अत एव मदनरत्ने भविष्ये नक्षत्रमात्रे उक्तम्-

'मासि भाद्रपदे पक्षे शुक्ले*ज्येष्ठा यदा भवेत् ।

रात्रौ जागरणं कृत्वा एभिर्मन्त्रैश्च पूजयेत् ॥' इति ।

दाक्षिणात्यास्त्वृक्ष एव कुर्वन्ति । हेमाद्रौ स्कान्देऽपि-

'मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुते ।

यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ॥' इति ।

---

प्रमाणं रात्रीति । सामान्यवाक्यापवादः । *अस्य=रात्रियोगस्य ।

'तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव च ।

नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकी ॥'

इति तु स्तावकम् । एतच्च तिथिसापेक्षमेव व्रतं ज्येष्ठादिवशेन पूर्वं परं वा भवतीति माधवः । स्वसम्मतं मतमाह—*इदमिति ।

*ज्येष्ठा यदेति । अष्टमीसम्बन्धव्युदासः । एवम्—

'मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते ।

यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ॥' इति ।

'कृतस्नानो नरः कुर्यात्तस्यामन्यत्र वा दिने ।

भक्तियुक्तः शुचिर्भूत्वा ज्येष्ठायाः परिपूजनम् ॥'

इति च । अत्र नाष्टमीसंबन्धः । नक्षत्रमात्रापेक्षे 'यस्मिन् कस्मिन् दिने' 'तस्यामन्यत्र वा दिने' इत्यस्य यस्यां कस्यां चित्तिथावित्य-

# चौखम्बासंस्कृतसीरीज़ ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादि-कार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः १० आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... " " १ " ८

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता ३)
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् ३३)
(३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १५)
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचित-भाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) ३)
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः ... १॥)
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचित तर्कपादः (मीमांसा) ... ... ३)
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा ३)
(८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्र-श्रीमद्विज्ञानभिक्षुकृतव्याख्यानं । सम्पूर्णम् । (वेदान्तः) ९)
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा । ... ३)
(१०) सिद्धित्रयम्—विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । १॥)
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ६)
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ७॥)
(१३) विधिरसायनम् । श्रीमदप्पय्यदीक्षितकृतं सम्पूर्णम् ३)
(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । ( मीमांसा ) ... ... ... २४)
(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता श्रीक्षेमराजविरचितवृत्तिसमेता ( वेदान्तः ) ... ... ३)
(१६) मीमांसाबालप्रकाशः । जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) ३)
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ५)
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्वकृतव्याख्यासमलङ्कृतः । (वेदान्तः) ४॥)
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् ( यन्त्रस्थः ) ... ३०)
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं ४॥)
(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । ( वेदान्तः ) २१)
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ... १॥)
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ... ... ... १२)
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ३)
(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ... ... ७॥)
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकम् ... ... ... ३)
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः ... ... ... १॥)
(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्नार्णव १॥)
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका ... ... ३०)
(३०) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च १६॥)
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाशः ... ... .. ९)
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलित ६)
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता ३)

जयकृष्णदास-हरिदासगुप्तः-चौखम्बासंस्कृतसीरीज़ आफिस बनारस सिटी ।

# चौखम्बासंस्कृतसीरीज़ ।

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... ... ... ३)

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् ... ... ... १॥)

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया [illegible]लितम् ... ... ... ... ३)

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्द-[illegible]लितम् ... ... ... ... ६)

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः ३)

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरण श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्री पुरुषोत्तमजीमहाराज विरचितः ... ४॥)

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः .. ... ... ६)

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गि-ण्याख्य टीकया सहिता ... ... ४॥)

(४२) स्वात्मानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः स्वकृतटीकाविभूषितः ... ... ... ... ३)

(४३) याज्ञवल्क्यस्मृतिः । [illegible]कृतमिताक्षरासहिता । व्यवहाराध्यायः ... १६॥)

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गे-[illegible]मण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ... १६॥)

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्रप्रणीता । रामकृ-[illegible] सहिता [illegible] कपादः ... ... ... ... ५)

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भटाभ्यां [illegible] ... ११)

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः खण्ड १० का ... ... १५)

(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः खण्ड ७ का ... १०॥)

(४९) बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः । [illegible]लंकृतः १५)

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः... ... ... ७॥)

(५१) पूर्वमीमांसाअधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता नेने इत्युपाख्य गोपालशास्त्रिणा परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृता । ... ... ... १॥)

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् ... ... ३)

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेता ... ... ... ... ४॥)

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः खण्ड ६ का ... ... ९)

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भावगणेशविरचितम् । समाससूत्रव्याख्या सर्वोपकारिणी च खण्ड २ का ... ... ... २)

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ... ... ... ६)

(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टकृतव्याख्यासहितः खण्ड ६ का ... ... ९)

(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः । श्रीमदनन्तदेवविरचितया "भाट्टालङ्काराख्य" व्याख्ययासहिता ६)

(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमिश्रविरचिता । पण्डितराड्—वंशीधरमिश्रविरचित "तत्त्वविभाकर" टीकासहिता खण्ड ३ ... ... ४॥)

(६०) न्यायदर्शनं सभाष्यसटीकं खद्योत सहितम्-खण्ड २ ३)

—:०:—

जयकृष्णदास गुप्तः सेक्रेटरी
चौखम्बासंस्कृतसीरीज़ आफिस
बनारस सिटी ।

April 1923.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

## NO. 304.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं० व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा तदीयगुरुवर म० म० पं० पर्वतीयनित्यानन्द-पन्तप्रदर्शितरीतिमनुसृत्य संशोधितो टिप्पण्या परिष्कृतश्च ।

NIRNAYA SINDHU;
of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Vyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS VI-६

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS· PANDITA JYESHTHÂRAMA MUKUNDAJI. BOMBAY:
OTTO HARRASSOWITZ. LEIPZIG: GERMANY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1923.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।

सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥

चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥

रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३०४

तथा—

'*मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत् ।
मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तमम् ॥' इति ।

मन्त्रस्तु—

'एह्येहि त्वं महाभागे सुरासुरनमस्कृते ।
ज्येष्ठे त्वं सर्वदेवानां मत्समीपगता भव ॥

(इत्यावाह्य 'तामग्निवर्णाम्' इति संपूज्य)

ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमो नमः ॥
शर्वायै ते नमस्तुभ्यं शांकर्यै ते नमो नमः ।
ज्येष्ठे श्रेष्ठे तपोनिष्ठे ब्रह्मिष्ठे सत्यवादिनि ॥
एह्येहि त्वं महाभागे अर्घ्यं गृह्ण सरस्वति ॥'

इत्यर्घ्यः ॥

भाद्रपदशुक्लद्वादश्यां श्रवणयोगरहितायां पारणं कुर्यात् । 'आभाकासितपक्षेषु' इति दिवोदासोदाहृतवचनात् ।

'उपोष्यैकादशीं मोहात्पारणं श्रवणे यदि ।

---

र्थात् । तत्र नक्षत्रस्य खण्डत्वेऽष्टमीभानुवारयुक् तदन्यतरयुग्वा नक्षत्रं ग्राह्यम् ।

"तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव च ।
नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकी ॥"

इति स्कान्दात् । नीलज्येष्ठेति नक्षत्रनामैव । न च 'नीलज्येष्ठेति सा'इति गुणभूताष्टमीपरामर्शः, तस्या एवाधेयव्याप्यत्वेन प्राधान्यात्सा वैश्वदेवीतिवदिति वाच्यम् । तत्र देवताऽन्वयद्वारैव प्राधान्यं न त्विह तथेति वैषम्यात् । अन्यतरयोगस्याप्यभावे मध्याह्नादूर्ध्व मनुवर्तमानं ग्राह्यम् । "यस्मिन्दिने भवेत् ज्येष्ठा" इति वचनादिति ।
*मैत्रेणेति । निर्णीतपूजादिनात् पूर्वेद्युरनुराधायामावाहनमुत्तरे-

करोति हन्ति तत्पुण्यं द्वादशद्वादशीभवम् ॥'

इति तत्रैव स्कान्दाच्च । अस्य तत्रैव प्रतिप्रसवः । मार्कण्डेयः—

'विशेषेण महीपाल श्रवणं वर्धते यदि ।
*तिथिक्षयेन भोक्तव्यं *द्वादशीं लङ्घयेन्न हि ॥' इति ।

*केचित्तु—

'यदा त्वपरिहार्यो योगस्तदा श्रवणनक्षत्रे त्रेधाविभक्ते मध्यमविंशतिघटिकायोगं त्यक्त्वा पारणं कार्यम् । तदुक्तं *विष्णुधर्मे—

श्रुतेश्च मध्ये परिवर्तमेति
सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यम् । इति ।

केचिच्चतुर्धा विभज्य मध्यपादद्वयं वर्ज्यमाहुः । अत्र मूलं चिन्त्यम् ॥

अत्रैव विष्णुपरिवर्तनोत्सवं कुर्यात् । सन्ध्यायां विष्णुं सम्पूज्य प्रार्थयेत् । मन्त्रस्तु तिथितत्त्वे उक्तः—

'ॐ वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।
पार्श्वेन परिवर्तस्व सुखं स्वपिहि माधव ॥' इति ।

अत्रैव शक्रध्वजोत्थापनमुक्तमपरार्के गर्गेण—

'द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा ।
शक्रमुत्थापयेद्राजा विश्वश्रवणवासवे ॥'

---

युश्च मूले विसर्जनामित्यर्थः ।

*तिथिक्षये=एकादशीक्षये । अत्र हेतुमाह—

*द्वादशीमिति । विवेचनमतमाह—*केचित्त्विति । वस्तुत 'आभाकानित'इति 'मैत्राद्यपादे स्वपितीह'इति च निर्मूलम् । तदाऽप्युपोष्यैकादशीमित्यादि बोध्यम् । *विष्णिवति । "श्रुतेश्च मध्ये परिवर्तमेति"इति "सन्ध्यायां परिवर्तनम्"इति चोक्तेः ।

इयमेव श्रवणद्वादशी* । तत्रैकादश्यां*द्वादशीश्रवणयोगे सैवोपोष्या ।

'एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् ।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ॥'

इति विष्णुधर्मोक्तेः । नारदीयेऽपि—

'संस्पृश्यैकादशीं राजन्द्वादशीं यदि संस्पृशेत् ।
श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति ॥
द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुशृङ्खलसञ्ज्ञितः* ॥'

इति हेमाद्रौ मात्स्योक्तेश्च । *दिनद्वये द्वादशीश्रवणयोगेऽपि पूर्वा । निर्णयामृते त्वस्य पूर्वार्धमन्यथा पठितम्—

'द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि ।' इति ।

तेन हेमाद्रिमते एकादश्याः श्रवणयोगाभावेऽपि तद्युक्तद्वादशीयोगमात्रेण विष्णुशृङ्खलं भवति । निर्णया-

---

*श्रवणद्वादशीति । अस्यां चाल्पश्रवणयोगेऽपि तन्निमित्तमुपवासादि कार्यम् ।

'द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः' ।

इति मात्स्यात् । तत्र एकस्मिन्नेव दिने श्रवणयोगवती शुद्धाधिका विद्धाधिका वा, तत्र न सन्देहः । *एकादश्यामित्यादि योगे इत्यन्तम् । एकादशीदिन एव एकादशीद्वादश्योरुभयोः श्रवणयोगे इत्यर्थः । *संज्ञित इति ।

'उपोष्य तस्मिन्नहनि नरः संक्षीणकिल्बिषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥' इति,

तत्र एकादशीद्वादशीप्रयुक्तोपवासद्वयं तन्त्रेण भवति । *दिनद्वय एवेति । विद्धाधिकाया दिनद्वये श्रवणयोगे एकादशीयुता ग्राह्येत्यर्थः । 'द्वादशी श्रवणस्पृष्टा' इत्युक्तेरिति भावः । अत्रो-

मृतमते* तु-'श्रवणस्यैकादशीद्वादशीभ्यां योग एव विष्णुशृङ्खलं नान्यथेति । *यदा निशीथानन्तरं सूर्योदयावधि द्विकलामात्रमपि श्रवणर्क्षं भवति तदाऽपि पूर्वैव । तदुक्तं तत्रैव नारदीये इमां प्रकृत्य—

'तिथिनक्षत्रयोर्योगो*योगश्चैव नराधिप ।
द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः ॥' इति।

योगः शिवरात्र्यादौ शिवयोग आदिः ।

*'द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः ।
*न तु सा तेन संयुक्ता तावत्येव प्रशस्यते ॥'

इति मदनरत्ने मात्स्याच्च । दिवोदासीये तु—

'रात्रेः प्रथमपादे चेच्छ्रवणं हरिवासरे ।
तदा पूर्वामुपवसेत्प्रातर्भान्ते च पारणम् ॥'

इत्युक्तम् । इदं तु निर्मूलत्वात्पूर्ववचोविरोधाच्चोपेक्ष्यम् । इयं बुधवारेऽतिप्रशस्ता ।

'बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अत्यन्तमहती सा स्याद्दत्तं भवति चाक्षयम् ॥'

इति हेमाद्रौ स्कान्दात् । यानि तु पठन्ति—

---

भयत्र तन्त्रेणैकादशीद्वादशीप्रयुक्तमुपवासद्वयं वक्ष्यति । *मते त्विति । तुनाऽरुचिः । सकलधार्मिकसंमतपाठपरित्यागात् । शुद्धाधिकामधिकृत्याह—*यदा निशीथेति । *योगश्चेति । शिवयोगादेः=शिवचतुर्दश्यादेः पुण्यतमत्वप्रयोजको योगश्चैवेत्यर्थः । अत्र यथा व्यतीपातादियोगो दानादिविषयस्तथाऽयमपि, उपवासे तु अन्तत उदयास्तमयान्तत्वमपेक्षितमहोरात्रसाध्यत्वानुरोधादित्यत्राह—*द्वादशीति । *न त्विति ।

'यावती तेन संयुक्ता तावत्येव प्रशस्यते' ।

इति तु न । तेन तावत्यां यत्कर्तुं शक्यं स्नानादि तद्योगका-

*'उत्तराषाढसंयुक्ता श्रोणामध्याह्नगाऽपि वा ।
आसुरी सैव तारा स्याद्धन्ति पुण्यं पुराकृतम् ॥
उदयव्यापिनी ग्राह्या श्रोणा द्वादशिकायुता ।
विश्वर्क्षसंयुता सा च नैवोपोष्या शुभेप्सुभिः ॥'

इत्यादीनि विष्णुधर्मस्कान्दभविष्यादिवचनानि तानि निर्मूलानि । यदपि स्मृत्यर्थसारे 'उदयव्यापिनी ग्राह्या' इत्युक्तम्, यच्च बृहन्नारदीये—

'उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रते ।' इति,

तद्यदा शुद्धाधिका द्वादशी परदिन एवोदये श्रवणयोगः, पूर्वेह्नि च तद्भिन्ने काले योगस्तत्परम् । दिनद्वये उदययोगे पूर्वैव बहुकर्मकालव्याप्तेरित्युक्तं मदनरत्ने । यदा त्वेकादश्येव श्रवणयुता न द्वादशी तदापि पूर्वैव । श्रवणद्वादशीव्रतं तु द्वादश्याः श्रवणयुक्ताया अलाभे एकादश्याश्च तद्युक्ताया लाभे तत्रैव कार्यम् ।

*'यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥'

इति मदनरत्ने नारदीयोक्तेः । यदा परैवर्क्षयुता तदा परा । तत्र शक्तेनोपवासद्वयं कार्यम् ।

'एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।

---

लिकं तदेव स्यात् । इह तु श्रवणसंबन्धेन पूर्वोत्तरयोरपि कालत्वादुपवासादि सुकरमित्यर्थः । *उत्तराषाढेति । उक्तस्थले पूर्वेत्युक्तमसङ्गतम्, उत्तराया औचित्यादिसभिमानः । *यदा नेति । श्रवणद्वादशीप्रयुक्तमुपवासादि सर्वमप्येकादश्यां कार्यमित्यर्थः । विद्धाधिकाया अपि परदिने श्रवणयोगाभावे श्रवणयोगवती विद्धाऽपि प्राप्ता(१) ।

(१) 'ग्राह्या' इति कपुस्तके पाठः ।

न चात्र *विधिलोपः स्यादुभयोर्दैवतं हरिः ॥'
इति भविष्योक्तेः। यत्तु विष्णुधर्मे-
'पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम्।
असमाप्ते व्रते पूर्वे नैव कुर्याद् व्रतान्तरम् ॥'
इति, तदे*तद्भिन्नपरम्। अत्र गौडाः—
'शृणु राजन्परं काम्यं श्रवणद्वादशीव्रतम्।'
इति स्थूलशीर्षवचनात्काम्यमेवेदम्। तेनाशक्तस्य नित्यैकादशीव्रतमेवेति मन्यन्ते।
'द्वादश्यामुपवासेन शुद्धात्मा नृप सर्वशः।
चक्रवर्तित्वमतुलं संप्राप्नोत्युत्तमां श्रियम् ॥'
इति गौडनिबन्धे मार्कण्डेयोक्तेश्च। दाक्षिणात्यास्तु-
'एकादश्यां नरो भुक्त्वा द्वादश्यां समुपोषणात्।
व्रतद्वयकृतं पुण्यं सर्वं प्राप्नोत्यसंशयम् ॥'
इति वराहवामनपुराणोक्तेः श्रवणद्वादशीव्रतमेवे-

---

'दशम्येकादशी यत्र सा नोपोष्या भवेत् तिथिः।
श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा ॥'
इति वह्निपुराणात्, तदापि एकादश्युपवासस्य तेन सह तन्त्रमेव। *विधिलोपः=एकादशीपारणाहानिप्रयुक्तः। *एतद्भिन्नेति। भिन्नदैवत्यव्रतमित्येकोऽर्थः। वस्तुतस्तु चतुर्थी-पञ्चम्यादौ स्वस्वपारणाकालमालोच्य भिन्नदैवत्योपवासोपक्रमतः कदाचित्क्रमेणोपवासद्वयं प्राप्तं तत्र शेषिलोपापत्त्या पारणाङ्गा-बाधवदिहापि तत्सिद्धेर्न चात्रेत्यर्थवादः किं तु कुर्यादित्यस्य प्रारभे-दित्यर्थः। तेनानुवृत्तं व्रतं कार्यमिति सिध्यति। यत्रैकादशी शुद्धा द्वादशी त्वधिका परोदये श्रवणयोगवती च तत्र स्मार्तानामेका-दशीपारणानन्तरमौदयिकश्रवणद्वादश्यामुपवासः, वैष्णवानां तु तत्रापि द्वादश्यामेवोपवास इति स्वस्वपारणाकालमालोच्य एका-

त्याहुः । *भुक्त्वेति फलाद्याहारपरं न त्वन्नपरम् 'अन्नाश्रितानि पापानि' इति निषेधात् ।

'उपवासद्वयं कर्तुं न शक्नोति नरो यदि ।
प्रथमेऽह्नि फलाहारी निराहारो ऽपरेऽहनि ॥'

इति दिवोदासीये भविष्योक्तेश्च । *अशक्तौ तु *गृहीतैकादशीव्रतो यस्तं प्रति उक्तं मात्स्ये–

'द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।
उपोष्यैकादशीं तत्र द्वादश्यां *पूजयेद्धरिम् ॥' इति ।

पूजयेन्न*तूपवसेदित्यर्थः । *अगृहीतैकादशीव्रतश्चेदेकादश्यां भुक्त्वा द्वादश्यामुपवसेत् ।

*'एवमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् ।
पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयम् ॥'

---

दशीश्रवणोपवासयोरुपक्रम एव न सम्भवतीत्याशयेन एतद्भिन्नेति । श्रवणद्वादशीव्रतमेवेत्येवकारादरुचिः । एकादश्यां नरो भुक्त्वेत्यस्याशक्तौ गौणमुख्योपवासाभ्यामुपवासद्वयमर्थ इत्याह–*भुक्त्वेति । *अशक्तौ=गौणमुख्योपवासद्वयेऽप्यशक्तौ । *गृहीतैकादशीव्रतः=कृतैकादशीव्रतसंकल्पः । *पूजयेदिति । संकल्पितमेकादश्युपवासं विधाय श्रवणद्वादशीप्रयुक्तं विष्णुपूजादि कुर्यादित्यर्थः । तेन एकादश्युपवासहानौ संकल्पबाधापत्तिः । विष्णुपूजादेरकरणे शेषिविरोधश्च समाहितः । ननूपवासाङ्गहरिपूजायाः प्राप्तत्वादेव तद्विधिर्व्यर्थ इत्यत्राह–* नतूपवसेदिति । पूजयेदिति सावधारणमिति भावः । *अगृहीतेति । प्रागेवोपवासद्वयासामर्थ्यादसंकल्पितेत्यर्थः । उपक्रान्तश्रवणद्वादशीव्रतप्रयोगे इति शेषः । यद्यप्यत्र काम्यं नित्यस्य बाधकमिति न्यायेन एकादश्युपवासत्यागे दोषो नास्तीति सिद्धमेव तथापि तं स्पष्टीकर्त्तुमाह–*एवमिति । एतच्च मयूखे न दृश्यते । उभयान्ते इति

इति नारदीयोक्तेः। पारणं तूभयान्तेऽन्यतरान्ते वा कुर्यात्।

'तिथिनक्षत्रनियमे तिथिभान्ते च पारणम्।'

इति स्कान्दात्।

'तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्।
पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः॥'

इति नारदीयादिति हेमाद्रिः। यद्यप्यत्र नक्षत्रमात्रान्तेऽपि पारणं प्रतिभाति, तथापि तिथिमात्रान्ते ज्ञेयम्, न त्वृक्षान्ते। तिथिमध्येऽपि—

'याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम्॥'

इति विष्णुधर्मे श्रवणान्तमात्रे पारणानिषेधात्। रोहिण्यां तु—'भान्ते कुर्यात्तिथेर्वापि' इति वह्निपुराणात् तदन्तेऽप्यस्तु, न त्वत्रैवमस्तीति न ऋक्षान्तोऽनुकल्प इति। मदनरत्ने असंभवे तु—

'तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम्।
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणा॥'

इति ज्ञेयम्। यत्तु मदनरत्ने—'द्वादशीवृद्धौ श्रवणवृद्धौ वा श्रवणान्त एव पारणं कुर्यात्।

'पारणं तिथिवृद्धौ तु द्वादश्यामुडुसंक्षयात्।
वृद्धौ कुर्यात्त्रयोदश्यां तत्र दोषो न विद्यते॥'

इति वह्निपुराणादित्युक्तम्। तत्प्रकरणादेतस्यामेव

---

मुख्यः कल्पः। यत्तु पारणादिने तिथ्यपेक्षया ऋक्षस्याधिक्ये तिथ्यन्ते पारणे कृते द्वादश्यामनिवृत्त्या एकादश्युपवासासिद्धिरतस्तत्र द्वादशीमध्य एव पारणं कार्यम्। तन्त्रिमासाङ्गिनोर्विरोधे तन्त्रिणो बलीयस्त्वात्। दिनत्रयसाध्यमेकादशीव्रतं हि तन्त्रि, तत्त-

श्रवणयुक्तैकादश्यां *विहिताविजयैकादशीव्रतपरं *न तु श्रवणद्वादशीपरमिति मदनरत्ने। गौडास्तु श्रवणद्वादशीपरमाहुः। अत्र विधिर्मदनरत्ने विष्णुधर्मे—

*'तस्मिन्दिने तथा स्नानं यत्र क्वचन संगमे।'

---

न्त्रिमध्यपातिश्रवणद्वादशीव्रतं तु प्रासङ्गि पशुपुरोडाशवदिति, तत्तु च्छम्। न्यायादपि वचनप्राबल्यात्। मदनरत्ने इत्यरुचिः। सा च विना श्रवणरोहिणीमिति पर्युदासः रोहिणीनिमित्तके इव श्रवणनिमित्तकेऽप्युपवासे उभयान्तपक्षस्य मुख्यत्वार्थः। एवं चोभयत्राप्यन्यतरपक्षो गौण इति सिध्यति। अन्यथा रोहिण्यामृक्षान्तपारणस्य सर्वथा निषेद्धुमशक्यतया वैरूप्यापत्तेरिति। अत्रासम्भवे तु—

'तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम्।
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणम्।'

इति पाठं कल्पयन्ति केचित्। उडुवृद्धाविति पाठः। वृद्धौकुर्यादिति पाठे वृद्धावुडुवृद्धावित्येवार्थः। *विहितेति। 'एकादशी यदा सा स्यात्' इत्यग्रिमवचनात्। *नत्विति। तत्र तिथ्यन्तपक्षस्यापि सत्त्वात्। वस्तुतस्तु विजयैकादशीव्रतं भिन्नमिति प्रमादात् 'द्वादश्यास्ते विधिः'इत्यादिना पूजाप्रकारभेदस्य एषा व्युष्टिः इत्यादिना तत्प्रयुक्तफलभेदस्यैव चाभिधानात्। तस्मात् पारणातिथिवृद्धावित्येतद्विष्णुश्रृङ्खलं पारणापरमिति। *तस्मिन्निति। भविष्ये—

'मासि भाद्रपदे शुक्लद्वादशी श्रवणान्विता।
सर्वकामप्रदा पुण्या उपवासो महाफलः॥
श्रवणे सङ्गमाः सर्वे परव्युष्टिप्रदाः स्मृताः।
विशेषा द्वादशीयुक्ते बुधयुक्ते विशेषतः॥
सङ्गमे सरितां स्नात्वा द्वादशीं समुपोषितः।
समग्रं समवाप्नोति द्वादशद्वादशीफलम्॥'

तथा—

'दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे ।
वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च ॥
न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति ।'

मन्त्रस्तु भविष्ये घटे जनार्दनपूजामभिधाय—

'नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक ।
अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ॥
प्रीयतां देवदेवेशो मम संशयनाशनः ॥' इति ॥

वामनावतारनिमित्तोपवासस्तु व्रतहेमाद्रौ भविष्ये—

'द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन युधिष्ठिर ।
सर्वपापप्रशमनः सर्वसौख्यप्रदायकः ॥
एकादशी यदा सा स्याच्छ्रवणेन समन्विता ।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा ॥'

इत्युपक्रम्य—

'अथ काले बहुतिथे गते सा गुर्विणी भवेत् ।
सुषुवे नवमे मासि पुत्रं सा वामनं हरिम् ॥'

इत्युक्त्वा—

'एतत्सर्वं समभवदेकादश्यां युधिष्ठिर ।

---

वरुणासङ्गमे स्नानमुक्तं लैङ्गे—

'अतः परं तु संसेव्यं गङ्गावरुणसङ्गमम् ।' इति ।

भविष्ये—

'सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीम् ।
चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत् ॥
अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः ।
पादमूले तु दद्याद्वै मन्त्रेणानेन पाण्डव ॥
क्षीरोदार्णवसम्भूते सुरासुरनमस्कृते ।

तेनेष्टा देवदेवस्य सर्वथा विजया तिथिः ॥
एषा व्युष्टिः समाख्याता एकादश्यां मया तव ।
पूर्वमेव समाख्याता द्वादशी श्रवणान्विता ॥'

इत्युपसंहारादेकादश्यामेव* । व्युष्टिः फलम् । भागवतेऽष्टमस्कन्धे तु द्वादश्यां वामनोत्पत्तिरुक्ता—

'श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ।
ग्रहनक्षत्रताराद्याश्चक्रुस्तज्जन्मदक्षिणम् ॥
द्वादश्यां सविता तिष्ठन्मध्यंदिनगतो नृप ।
विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥

श्रोणायां चन्द्रे, अभिजित्=श्रवणप्रथमोंऽशः । गौडा अप्येवम् । अत्र कल्पभेदाद्व्यवस्था । तद्विधिश्च हेमाद्रौ वह्निपुराणे—

'नदीनां सङ्गमे स्नायादर्चयेदत्र वामनम् ।
सौवर्णवस्त्रसंयुक्तं द्वादशाङ्गुलमुच्छ्रितम् ॥'

---

सर्वदेवमये मातर्गृहाणार्घ्यं नमो नमः ।
ततो माषादिसंसिद्धान् वटकान्विनिवेदयेत् ॥
सुरभित्वं जगन्मातर्देवि विष्णुपदे स्थिता ।
सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस ॥'

ततः—

'सर्वदेवमये देवि सर्वदेवैरलंकृते ।
मातर्ममाभिलषितं सफलं कुरु नन्दिनि ॥'

इति प्रार्थयेत् ।

'तत्रैव तद्दिने तैलस्थालिपक्वं युधिष्ठिर ।
गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् ॥' इति ।

*एकादश्यामेवेति । श्रवणसाहित्यात् । श्रवणसाहित्यं तु प्राशस्त्यार्थम् । 'भृङ्गारः=कनकालुका ॥'

'दध्यादिषु तु तदभावादवर्जनम्' इति ।

एवं=दध्यादिव्रते न तक्रादीनां निषेधः । उक्तोभय-हेत्वभावादिति केचित् । पूर्वोक्तशङ्खवचनात्सर्वविकार-निषेध इति युक्तं प्रतीमः ॥ इति दुग्धव्रतम् ॥

भाद्रपदशुक्लचतुर्दश्यामनन्तव्रतम् । तत्र *त्रिमुहूर्ता-प्यौदयिकी ग्राह्येति माधवः । तदुक्तम्—

'उदये त्रिमुहूर्तापि ग्राह्याऽनन्तव्रते तिथिः ।' इति ।

*'मध्याह्ने भोज्यवेलायाम्' इति कथायां श्रवणात् 'उपरि हि देवेभ्यो धारयति' इतिवद्विधिकल्पनात् ।

'पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ।'

इति माधवीये वचनात् मध्याह्नव्यापिनी ग्राह्येति तु दिवोदासः । प्रतापमार्तण्डेऽप्येवम् । इदमेव च युक्तम् । निर्णयामृते तु घटिकामात्राऽप्यौदयिकीत्युक्तम् ।

'तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम ।
पौर्णमास्याः समायोगे व्रतं चानन्तकं चरेत् ॥'

इति भविष्योक्तेः ।

"मुहूर्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी ।
सम्पूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥"

इति स्कान्दाच्चेति । *अत्र मूलं चिन्त्यम् । *द्व्यहेऽप्यौ-

---

*त्रिमुहूर्ताऽपीति । अपिस्त्याज्यः । पूजा तु तत्र मध्याह्न एव । साकल्यवचनापादिततिथिसत्त्वात् । मतान्तर-माह-*मध्याह्न इति । 'उपरि हि'इत्याद्यर्थवादो विधिसा-पेक्ष इति युक्तं तत्र विधिकल्पनम् । प्रकृते च साकल्यवच-नानुगृहीततिथिमादाय पूजोपपत्तेर्न तदित्यरुचिः । *अत्र मूलं चिन्त्यमिति । योगमुहूर्तादिवचनानां त्रिमुहूर्तस्ताव-कत्वेनोपपत्तेः स्वार्थमात्रे मानाभावात् । *द्व्यहेऽप्यौदयिकत्वे

दयिकत्वे पूर्वत्वात्पूर्वेति युक्तम् । ( तत्त्वं तु विध्यर्थवादयोर्भिन्नार्थत्वे एकवाक्यत्वायोगात् 'सन्दिग्धेषु एकवाक्यत्वात्' इति न्यायेन पूर्वा परा वा मध्याह्नव्यापिन्येव मुख्या । माधवस्तु सामान्यवाक्यान्निर्णयं कुर्वन् भ्रान्त एव । अनन्तव्रतस्य पुराणान्तरेऽवभावान्निबन्धान्तरेऽवभावाच्च वचनं निर्मूलमेवेति ॥ )

अथागस्त्यार्घ्यः । तत्कालो व्रतहेमाद्रौ भविष्ये—

"कन्यायामागते सूर्ये अर्वाग्वा सप्तमे दिने ।
कन्यायां समनुप्राप्ते ह्यर्घकालो निवर्तते ॥"

तेन उदयोत्तरमपि सप्तदिनमध्ये इत्यर्थः । यत् पाद्मे—

"आ सप्तरात्रादुदयाद्यमस्य दातव्यमेतत्सकलं नरेण ।
यावत्समाः सप्तदशाऽथ वा स्युरथोर्ध्वमप्यत्र वदन्ति॥
केचित् ॥"

यमस्य=अगस्त्यस्य । उदयकालश्च दिवोदासीये उक्तः—

"उदेति याम्यां हरिसंक्रमाद्रवे-
रेकाधिके विंशतिमे ह्यगस्त्यः ॥
स सप्तमेऽस्तं वृषसंक्रमाच्च
प्रयाति गर्गादिभिरभ्यमाणि ॥"

अत्र विधिर्विष्णुरहस्ये—

"काशपुष्पमयीं रम्यां कृत्वा मूर्तिं तु वारुणेः ।
प्रदोषे विन्यसेत्तां तु पूर्णकुम्भे स्वलङ्कृताम् ॥
कुम्भस्थां पूजयेत्तां तु पुष्पधूपविलेपनैः ।
दध्यक्षतबलिं दद्याद्रात्रौ कुर्यात्प्रजागरम् ॥"

पूजा च वक्ष्यमाणार्घ्यमन्त्रेण कार्या—

"प्रभाते तां समादाय यायात्पुण्यं जलाशयम् ।

---

इति । यत्र परेऽह्नि न त्रिमुहूर्ता तत्र विद्धापि पूर्वा बोध्या ।

निशावसाने तां पश्यन् जलान्ते प्रतिमां मुनेः ॥
अर्घ्यं दद्यादगस्त्याय भक्त्या सम्यगुपोषितः ।"

मात्स्ये तु—

"अङ्गुष्ठमात्रं पुरुषं तथैव सौवर्णमत्यायतबाहुदण्डम्।"

पूर्वं काशमयीत्वशक्तौ—

"चतुर्भुजं कुम्भमुखे निधाय धान्यानि सप्ताङ्कुरसंयुतानि ।
सकाशपुष्पाक्षतशुक्तियुक्तं मन्त्रेण दद्याद्द्विजपुङ्गवाय'
धेनुं बहुक्षीरवतीं च दद्यात्सवस्त्रघण्टाभरणां द्विजाय।'

भविष्ये—

"विरूढैः सप्तधान्यैश्च वंशपात्रे निधापितैः ।
सौवर्णरूप्यपात्रेण ताम्रवंशमयेन वा ॥
मूर्ध्नि स्थितेन नम्रेण जानुभ्यां धरणीं गतः ।"

विष्णुरहस्ये—

*"अगस्त्यः खनमानेति पठन्मन्त्रमिमं मुनेः ।
अर्घ्यं दद्यादगस्त्याय, शूद्रे मन्त्रविधिस्त्वयम् ॥
काशपुष्पप्रतीकाश वह्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥
विन्ध्यवृद्धिक्षयकर मेघतोयविषापह ।
रत्नवल्लभ देवेश लङ्कावास नमोऽस्तु ते ॥
वातापी भक्षितो येन समुद्रः शोषितः पुरा ।
लोपामुद्रापतिः श्रीमान्योऽसौ तस्मै नमो नमः ॥
येनोदितेन पापानि विलयं यान्ति व्याधयः ।
तस्मै नमोऽस्त्वगस्त्याय सशिष्याय च पुत्रिणे ॥
अगस्त्यः खनमानेति विप्रोऽर्घ्यं विनिवेदयेत् ।
राजपुत्रि महाभागे ऋषिपत्नि वरानने ॥

---

*अगस्त्य इति । "अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं

लोपामुद्रे नमस्तुभ्यमर्घ्यं मे प्रतिगृह्यताम् ।
दत्त्वैवमर्घ्यं कौरव्य प्रणिपत्य विसर्जयेत् ॥
अर्चितस्त्वं यथाशक्त्या नमोऽगस्त्यमहर्षये ।
ऐहिकामुष्मिकीं दत्वा कार्यसिद्धिं व्रजस्व मे ॥
विसर्जयित्वाऽगस्त्यं तं विप्राय प्रतिपादयेत् ।
अगस्त्यो मे मनस्थोऽस्तु अगस्त्योऽस्मिन्घटे स्थितः ॥
अगस्त्यो द्विजरूपेण प्रतिगृह्णातु सत्कृतः ।"

दानमन्त्रः—

"अगस्त्यः सप्तजन्माघं नाशयत्वावयोरयम् ।
अतुलं विमलं सौख्यं प्रयच्छ त्वं महामुने ॥"

प्रतिग्रहमन्त्रो विष्णुरहस्ये—

"त्यजेदगस्त्यमुद्दिश्य धान्यमेकं फलं रसम् ।
होमं कृत्वा ततः पश्चाद्वर्जयेन्मानवः फलम् * ॥"

होमश्चार्घ्यमन्त्रेणाज्येन । भविष्ये—

"दत्वाऽर्घ्यं सप्तवर्षाणि क्रमेणानेन पाण्डव ।
ब्राह्मणः स्याच्चतुर्वेदः क्षत्रियः पृथिवीपतिः ॥

बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम" इति मन्त्रः । (१) *वर्जयेन्मानवः फलमिति । अगस्त्यार्घ्यदानं काम्यं न कुर्यादित्यर्थः । अधिकमन्यतोऽवगन्तव्यम् ।

---

१—अयं मन्त्रो ऋग्वेदसंहितायां द्वितीयाष्टके चतुर्थाध्याये । अस्य व्याख्या च श्रीमत्सायणाचार्यकृता—'अयमगस्त्यो मद्गुरुः खनित्रैः=फलस्योत्पादसाधनैः यज्ञस्तोत्रादिभिः खनमानः=फलमभिमतमुत्पादयन् प्रजां प्रकर्षेण पुनःपुनर्जायमानमपत्यं=कुलस्यापतनसाधनं पुत्रादिकं बलं चेच्छमानः सन्, यद्वा प्रजां=भृत्यादिरूपां चेच्छन् ऋषिः=अतीन्द्रियद्रष्टा महानुभावः उग्रः=उद्गूर्णः संसारे संचरन्नव्यपापः सन्नुभौ वर्णौ=वर्णनीयाकारौ कामं च तपश्च पुपोष । सत्या आशिषो देवेषु=देवेभ्यो जगाम=प्राप्तवान् । यतोऽयं महानुभावस्तस्मादस्मान् पातीत्यर्थः इति ।

वैश्ये च धान्यनिष्पत्तिः शूद्रश्च धनवान्भवेत् ।
यावदायुश्च यः कुर्यात्स परं ब्रह्म गच्छति ॥"
इत्यगस्त्याद्यर्घः ॥

*भाद्रपौर्णमास्यां प्रपितामहात्परांस्त्रीनुद्दिश्य श्राद्धं कार्यम् । तदुक्तं हेमाद्रौ ब्राह्मणमार्कण्डेययोः—

*"नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ॥" इति ।
नान्दीमुखत्वं चोक्तं ब्राह्मे—
"पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥
तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः ।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥"

एतच्च प्रत्यब्दमित्युक्तेः पक्षश्राद्धपक्षे सकृन्महाल-

---

*भाद्रेति । भाद्र्यां कन्यार्कयोगाभावे तद्युक्तायामाश्विन्यां पूर्णिमायां कार्यमिति तु रामचन्द्रः, तदसत् । वर्जयित्वा प्रौष्ठपदीमिति भाद्र्या एव पर्युदासात्कन्यार्कयोगः स्तावक इति । तदलाभेऽपि भाद्र्या एवाग्राह्यत्वात् । प्रौष्ठपदीनं श्राद्धमिति शिष्टव्यवहाराच्च । अत्र धूरिलोचने विश्वेदेवौ कन्यानिमित्तत्वात् । *नान्दीमुखानामिति । इयं च नान्दीमुखसंज्ञा विश्वेदेवव्यावृत्ता । वृद्धिश्राद्धीयानां तु तत्साधारणी ऊर्ध्ववक्त्रपितॄणामेव ।

'ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ॥'
इत्युक्तेः ।

"नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् ।
पितृभ्यस्तन्मुखेभ्यश्चाऽप्रदक्षिणमिति स्थितिः ॥"
इति पराशराच्च । एषामेव प्रसन्नमुखसंज्ञाऽप्यधिका ।
'प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते' ।

यपक्षे चावश्यकमिति प्रयोगपारिजाते । *अत्र मातामहा अपि कार्याः ।

"पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।"

इति धौम्योक्तेः । पितृशब्दस्य च जनकपरत्वे बहुवचनविरोधेन पितृभावापन्नपरत्वात् । वार्षिके तु वचनान्निवृत्तिः । नच जीवत्पितृकस्यान्वष्टकायां मातृश्राद्धे तदापत्तिः । इष्टापत्तेः । अत एव स उक्तश्राद्धेषु स्वमातृमातामहयोर्दद्यादिति मदनरत्नकालादर्शौ । एतच्च जीवत्पितृकश्राद्धे वक्ष्यामः । केचित्तु अजहल्लक्षणया पित्रादयो यत्र तत्र मातामहास्तेनात्र नेत्याहुः । न चात्र नाम्ना नान्दीश्राद्धधर्मातिदेशः । वैष्णवादिशब्दवद्देवतापरस्य कर्मनामत्वाभावात् । नापि नान्दीमुखत्वं पितृविशेषणं पारिभाषिकत्वादिति दिक् । तथा निर्णयदीपे गार्ग्यः—

"पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।
वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा ॥" इति ॥

इति श्रीमीमांसकरामकृष्णभट्टात्मजभट्टकमलाकरकृते निर्णयसिन्धौ भाद्रपदमासः समाप्तः ॥

---

इति वचनात् वृद्धिश्राद्धस्य नान्दीमुखश्राद्धमिति नामधेयं च । एतेनात्र नाम्ना नान्दीश्राद्धधर्मातिदेशः प्रत्युक्तः । विष्णवादिशब्दवदस्य देवतापरत्वेन कर्मनामत्वाभावाच्च । नापि पित्रादेर्नान्दीमुखत्वम् । अश्रुमुखत्वात् । अन्यत्र पारिभाषिकत्वाच्च । 'पूर्वतरा' इति बहुवचनात् सपत्नीकत्वादिपार्वणविधानं च बोध्यम् । अविरोधात् । केषाञ्चिन्मतमाह—*अत्रेति । दिगर्थस्तु पित्रापितृसमुदाये पितृशब्दलक्षणायामनङ्गीकारापत्तिमपेक्ष्य उक्तार्थस्यौचित्यमिति अत्रेदं दूषणम् । अतोऽत्र

मातामहा न कार्याः प्रापकाभावात् । न च 'पितरो यत्र पूज्यन्ते' इति वाक्यं प्रापकम् । तत्र हि पितृशब्दो न सपिण्डीकरणान्तश्राद्धजन्यपितृभावापन्नपरः । तथा सति—

"कर्षूसमान्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥"

इति परिशिष्टे षोडशश्राद्धपर्युदासानुपपत्तेः । तत्र भवद्रीत्या मातामहाप्राप्तेः, किन्तु जनकादिसमुदायपरः । लिङ्गसमवायन्यायात् । 'प्राणभृदुपदधाति' इति बहुवचनान्तप्राणभृच्छब्दस्य प्राणभृदप्राणभृत्समुदायार्थकत्ववत् । न चैवं तवापि षोडशश्राद्धपर्युदासानुपपत्तिः । पितॄणामुद्देश्यत्वेन तद्गतसंख्याया अविवक्षितत्वात् । नापि चतुर्दश्यां मातामहप्राप्तिः । 'श्राद्धं शस्त्रहतस्यैव' इत्येवकारेण तथा वृत्तेः । न च 'पितरो यत्र' इत्यादिना तदप्राप्तावपि सर्वश्राद्धानां दर्शविकृतित्वात् "मातामहानामप्येवम्" इति वाक्याद्वा तत्प्राप्तिरिति वाच्यम् । वैकृतदेवतान्तरविधिना प्राकृतदेवताबाधात् । यत्र हि सङ्क्रान्त्यादिश्राद्धे न देवतोद्देशस्तत्रैव प्राकृतदेवताप्राप्तिर्न तु प्रौष्ठपद्यादिश्राद्धे इति । एवम्—

"आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं पुनः कुर्यात्पितर्यपि च जीवति ॥"

इति जीवत्पितृकस्यान्वष्टक्यश्राद्धे मातुः सपिण्डनान्तश्राद्धजन्यपितृत्वेऽपि न मातामहाः कार्याः । पितरो यत्रेत्योदरप्रापकत्वस्यावेदितत्वादिति । विष्णुधर्मे—

'गोदाने प्रौष्ठपद्यां च पौर्णमास्यां महाफलम् ।'

मदनरत्ने मात्स्ये—

"यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।

कन्यासंक्रमे पराः षोडश घटिकाः पुण्याः, शेषं प्राग्वत् ।
अथ महालयः । तत्र पृथ्वीचन्द्रोदये वृद्धमनुः—
*"आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ॥"

---

पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् ॥
अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम् ।" इति ॥
ननु 'आश्विने श्राद्धं कुर्यात्' इत्यादौ आश्विनः सौर एव ।
"कन्यागते सवितरि पितृराजानुशासनात् ।
भवेत् प्रेतपुरी शून्या यावद् वृश्चिकदर्शनम् ॥"
इति कन्यासम्बन्धेन श्राद्धविधानात् । एवं नभस्योऽपि सौर एव 'मीनमेषयोर्मेषवृषयोर्वसन्तः' इति सर्वमासानां द्वैविध्येन कन्यायां भाद्रत्वस्यापि सम्भवात् ।
"मासः कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयम् ॥"
इति वचनादनुकल्पत्वेन तुलोक्तेश्चेत्यत्राह-*आषाढीमिति ।
इदं पक्षपदम् 'आश्वयुक्कृष्णपक्षे तु' इति पक्षपदं चाश्विनादेश्चान्द्रत्वे लिङ्गम् । 'मासः कन्यागते भानौ' इति तु न महालयपरमित्युक्तं प्राक् । महालयश्राद्धं च नित्यं काम्यं च ।
'आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति ।
शाकेनापि दरिद्रोऽपि सोऽन्यजन्मनि दुःखभाक् ॥'
इति नागरखण्डात् ।
"शक्रध्वजनिपाताद्यो यः स्यात्पक्षस्तु पञ्चमः ।
स विज्ञेयोऽपरः पक्षः श्राद्धं तत्र विधीयते ॥
पुत्रानायुस्तथारोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमं दत्त्वा श्राद्धकामांस्तु पुष्कलान् ॥"
इति कार्ष्णाजिन्युक्तेः ।

कन्यायोगे पुण्यतमत्वमाह शाट्यायनिः—

"कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्यमुच्यते।"

इति।

अत्र विशेषमाह वृद्धमनुः—

*"मध्ये वा यदि वाऽप्यन्ते यत्र कन्यां व्रजेद्रविः।

स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति॥"

तथा ब्रह्माण्डमार्कण्डेययोः—

"कन्यागते सवितरि*दिनानि दश पञ्च च।

पार्वणेनेह विधिना श्राद्धं तत्र विधीयते॥"

तथा च तत्रैव षोडशदिनान्युक्तानि—

"कन्यागते सवितरि यान्यहानि तु षोडश।

क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत्॥"

अत्र हेमाद्रिः षोडशत्वं त्रेधा व्याचख्यौ। तिथिवृद्ध्या पक्षस्य षोडशदिनात्मकत्वे श्राद्धवृद्ध्यर्थमेकः पक्षः,

---

*मध्ये वेति।

"आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः।

श्राद्धं तत्र प्रकुर्वीत कन्यां गच्छतु वा न वा॥"

इति आदित्यपुराणे। 'सूर्यः पक्षोपक्रमे' इति शेषात्सर्वस्य पक्षस्य कन्यायोगो नापेक्षित इत्यर्थः। कन्यायोगनैयत्येन यथाश्रुतासङ्गतेः। *दिनानीति। दिनपदं चान्द्रदिनपरतया तिथिपरम्।

'तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्तितः।'

इति विष्णुधर्मात्। एवम् 'अहानि' इत्यत्राहःपदमपि तिथिपरमेव।

'आश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने।'

इति पक्षप्रक्रमेण दिनपदस्य तिथिपरतया तदेकवाक्यत्वात्।

भाद्रपदपूर्णिमया सहेति द्वितीयः, आश्विनशुक्लप्रतिपदा सहेति तृतीयः। *अन्त्य एव तु युक्तः।

"अहःषोडशकं यत्तु शुक्लप्रतिपदा सह।
*चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता॥"

इति देवलोक्तेः। तत्र पञ्च पक्षाः। तदुक्तं हेमाद्रौ ब्राह्मे—

*"आश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं *दिनेदिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा॥"

दिने दिने इति पक्षपर्यन्तत्वमुक्तम्। त्रिभागहीनमिति पञ्चम्यादिपक्षः,

'नौजङ्गीं तिथिमारभ्य यावच्चन्द्रार्कसङ्गमम्।'

इति वाक्यात्। अर्धमित्यष्टम्यादिपक्षः। त्रिभागमिति दशम्यादिपक्षः। त्रिभागहीनमिति चतुर्दशीसहितप्रति-

---

अत्र तिथिवृद्ध्येति पक्षो न युक्तः षोडशत्वस्य नित्यवच्छ्रवणविरोधात्। नापि पूर्णिमासाहित्येनेति पक्षः। अपरपक्षश्रुतिविरोधादत आह—*अन्त्य एवेति। *चन्द्रेति। न दृश्यते चन्द्रोऽस्यामिति व्युत्पत्त्या धातोरचाक्षुषज्ञानार्थकतया तदुभयदर्शत्वेन शुक्लप्रतिपदोऽप्येकीकारान्नापरपक्षत्वविरोध इत्यर्थः। पञ्चसु पक्षेषु षोडशतिथिपक्षः पञ्चदशतिथिपक्षश्चोक्तौ, शेषान् दर्शयितुमाह—*आश्वयुगिति। दिनपदं तिथिपरमित्युक्तं न तु—

'अहोरात्रेण चैकेन सावनो दिवसः स्मृतः।'

इति सावनदिनपरः पक्षोपक्रमात्। नन्वेवं पक्षस्य चतुर्दशसावनात्मकत्वे षोडशतदात्मकत्वे वा कथं पञ्चदशैव श्राद्धानीत्यत्राह—*दिनेदिनेइति। ह्रासे तिथिद्वयप्रयुक्तप्रयोगद्वयस्य तन्त्रं वृद्धौ च यद्यप्येकादिनच्छेद एव प्राप्नोति गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् सकृत्करणादेव पञ्चदशश्राद्धसिद्धेः तथाऽपि 'अन्नमप्यन्वहं जलम्' इति वाक्यादविच्छेदेनानुष्ठानलाभायाचारादेकतिथिप्रयुक्तं श्राद्ध-

पदादिचतुष्टयवर्जनाभिप्रायेणेति कल्पतरुः । *अत्र दिन-पदं तिथिपरं वीप्सया तत्पक्षीयतिथित्वं श्राद्धव्याप्यतावच्छेदकम् । तेन पञ्चदशतिथिष्वपि श्राद्धं सिद्ध्यति । तेन चतुर्दशीनिषेधोऽन्यकृष्णपक्षपर इति गौडाः । तन्न ।

'श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये ।'

इत्यादिविरोधात् । यच्च कश्चित्पूरणप्रत्ययलोपेन तृतीयभागहीनं षष्ठ्यादिपक्षं तृतीयभागमेकादश्यादि तदर्धं त्रयोदश्यादि, *उत्तरोत्तरं लघुकालोक्तेरिति । तन्न । *गौतमादिवचनेन मूलकल्पनालाघवात् पक्षमित्यनन्वयापत्तेश्च ।

---

मावर्तनीयम् । तत्रापि यस्यां तिथौ कर्मकालव्याप्तिर्दिनद्वये तत्प्रयुक्तस्य श्राद्धस्यावृत्तिः एवमग्रिमपक्षेष्वपि पञ्चम्यादीति त्रिभागस्तृतीयो भागः पक्षस्य पञ्चदशतिथयस्तेन हीनमित्यर्थात् । एवमर्धपक्षस्यैव । उक्तपक्षयोः पक्षस्यैव विशेषत्वादत्रापि तदन्वयात् । एवं तृतीयो भागो दशम्यादिः । एषु पक्षेषु चतुर्दशी वर्ज्या । प्रतिपदादिपक्षयोरेव तद्ग्रहणेनान्यत्र तद्वर्जनप्रतीतेः । ननु नन्दादिसङ्ख्याहानिप्रसङ्गात दिने दिने इत्यस्य सकृत्पक्षाभिप्रायकत्वं वदतां गौडानां मतमाह-*अत्रेति । *उत्तरेति ।

"उत्तरादयनाद्राजन् श्रेष्ठं स्याद्दक्षिणायनम् ।
याम्यायनाच्चतुर्मासं तत्र सुप्ते तु केशवे ॥
प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।
पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वन्ततोऽप्यति ॥
मघायुक्ता तु तत्रापि श्रेष्ठा राजन् त्रयोदशी ।"

इति नागरखण्डाच्चेति शेषः । *गौतमादीति । अग्निमेसादिः । एवं च त्रिभागहीनमिति पञ्चम्यादिपक्षः, त्रिभागमिति दशम्यादिः, अर्धमित्रष्टम्यादिरित्यर्थः । स्वयमधिकं पक्षद्वयमाह—

*'पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वं ततोप्यति ।'

इति विष्णुधर्मोक्तेः । षष्ठ्याद्येकादश्यादिपक्षावपि ज्ञेयाविति तत्त्वम् । कालादर्शेऽपि—

"पक्षाद्यादि च दर्शान्तं पञ्चम्यादि दिगादि च ।
अष्टम्यादि यथाशक्ति कुर्यादापरपक्षिकम् ॥"

पक्षादिः=प्रतिपत्, दिक्=दशमी, दर्शान्तमिति सर्वत्र । गौतमोऽपि—'अथापरपक्षे श्राद्धं पितृभ्यो दद्यात् पञ्चम्यादि दर्शान्तमष्टम्यादि दशम्यादि सर्वस्मिन्श्च'इति । तथैकस्मिन्नपि दिने श्राद्धमुक्तं हेमाद्रौ नागरखण्डे—

"आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत्संतृप्ताः पितरो ध्रुवम् ।"इति ।

अत्र शक्ताशक्तपरा व्यवस्थेति प्राञ्चः । तन्न । तद्वाचकपदाभावात् । *त्रयोदश्यादिपक्ष एव नित्यः । तत्रैव निन्दाश्रुतेः । श्राद्धे एवकारेण तस्यैव पञ्चमपक्षायोगव्यवच्छेदोक्तिः इति गौडाः । तन्न । एकस्मिन्नपीति *विरोधात् । तेन फलभूमार्थिनाऽन्यानि कार्याणीति तत्त्वम् । तत्र चतुर्दशीश्राद्धाभावे पञ्चम्यादिदशम्यादिपक्षौ । तत्सत्त्वे षष्ठ्याद्येकादश्यादिकौ । एवं चतुर्दश्यभावे द्वादश्यादिः । तत्सत्त्वे त्रयोदश्यादिरिति व्यवस्था ॥

तिथ्याद्यास्तु विशेषः । स्मृतिसंग्रहे—

---

*पञ्चम्यूर्ध्वमिति । तथा च विष्णुधर्मगौतमाभ्यां स्पष्टमुक्ताः प्रतिपत्पञ्चमीषष्ठीअष्टमीदशमीएकादशीप्रभृति षट् पक्षाः, तदेकवाक्यतया वाक्यान्तरं योज्यमिति बोध्यम् । गौडमतमाह—*त्रयोदश्यादीति । *एवकारेण=अर्धमेवेत्येवकारेण । *विरोधा-

*"चत्वारः पार्वणाः प्रोक्ता विधवायाः सदैव हि ।
स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्राद्धदानमुपक्रमेत् ।"

तथा—

'श्वश्रूणां च विशेषेण मातामह्यास्तथैव च ।' इति ।

अशक्तौ तु स्मृतिरत्नावल्याम्—

"स्वभर्तृप्रभृति त्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ॥"

विधवा स्वयं संकल्पं कृत्वाऽन्यब्राह्मणद्वारा कारयेदित्युक्तं प्रयोगपारिजाते ।

---

दिति । सकृत्पक्ष एव नित्यो नान्य इति भावः । *चत्वार इति । विधवायाः पार्वणचतुष्टयं पार्वणषट्कं पार्वणद्वयमिति पक्षत्रयम् । पक्षत्रयेऽपि श्वात्राद्येकोद्दिष्टानि भवन्ति । पार्वण एव तन्नियमात् । अत्रेदं बोध्यम् । विधवाया दर्शश्राद्धे पुत्राभावे तद्देवोधिकारः ।

'अपुत्रा पुत्रवत्पत्नी पुत्रकर्म समाचरेत् ।'

इति वचनात् पुत्रवदिति वतिना प्रकरणानुरोधात् श्राद्धक्रियातुल्यतोक्त्या पुत्रकर्तृकश्राद्धवदेव देवताः, उद्देश्यत्वं तु पित्रादीनां भर्तृत्वादिना तन्मातामहानां च पितृत्वादिना । यं प्रति येन रूपेण सम्बन्धिता तं प्रति तेनैव रूपेणोद्देश्यत्वात् । अत एव स्मृतिदर्पणे 'स्वभर्तृप्रभृतित्रिभ्यः' इत्यादि । भर्तृपित्रोश्च यथायोग्यं सपत्नीकत्वमपि । इदं षड्दैवत्यं दर्शश्राद्ध एव । स्वपितरि जीवति तु द्वारलोपात्पार्वणलोपः । तीर्थमहालयादिश्राद्धे तु मृतश्वश्र्वादेः श्वश्र्वादिपार्वणमपीति नवदैवत्यम् । तच्च कृताकृतमित्येके । केचिन्मृतमातृकायाः स्वमात्रादिपार्वणमपीति द्वादशदैवत्यमाहुः । अपरे स्वमातामहपार्वणेन पञ्चदशदैवत्यमाहुः । अन्ये स्वमातामह्यादिपार्वणेन अष्टादशदैवत्यमाहुः । अत्र सर्वत्राप्याद्यजीवने द्वारलोपः । एवं

*सकृन्महालये च वर्ज्यतिथ्याद्युक्तं पृथ्वीचन्द्रोदयप्रयोगपारिजातादिषु । वसिष्ठः—

"नन्दायां भार्गवदिने *चतुर्दश्यां त्रिजन्मसु ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥"

*जन्मभं तत्पूर्वोत्तरे च त्रिजन्मानि । वृद्धगार्ग्यः—

"प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा ।

---

च चत्वारः पार्वणा इति । श्वश्रूणां विशेषेणेति च निर्मूलं प्रतिभाति । एकोद्दिष्टानि च तीर्थमहालयादौ स्वसम्बन्धेनास्याः पुत्रवद्भवन्त्येव । यत्तु—

"भर्त्तुः श्राद्धे तु या नारी मौढ्यात्पार्वणमाचरेत् ।
न तेन तृप्यते भर्त्ता स्वयं च नरकं व्रजेत् ॥" इति,

तत्क्षयाहे एकोद्दिष्टपक्षप्रशंसार्थं न तु सर्वथा पार्वणनिषेधार्थमिति । *सकृन्महालये इति । कृष्णपक्षसामान्यनिमित्तकश्राद्धं हेमाद्रिमते आवृत्त्या, विवेचनकारादिमते तु सकृत् । तत्र यद्यपि काम्ये श्राद्धे याज्ञवल्क्येन चतुर्दशी वार्जिता तथाऽपि नित्येऽपि तत्र 'नभस्यस्यापरे पक्षे' इति कार्ष्णाजिनिना भाद्रपदापरपक्षे चतुर्दशीवर्जननिषेधादन्यत्र प्रतिपदादिपक्षे तद्वर्जनावगमात् । दशम्यादिपक्षे च—

"कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥"

इति मनुवचनात् सुतरां च पञ्चम्यादिप्रतिपदादिपक्षयोस्तद्वर्जनावगमाच्च कृष्णपक्षसामान्ये एव तद्वर्जनं नन्दादिकं च तद्वर्ज्यम् । इदं च चतुर्दशीनन्दादिवर्जनं भाद्रपदकृष्णपक्षेऽपि सकृत्करणपक्षे तदप्रवृत्तेर्निर्बीजत्वात् । पक्षान्तरेषु तु न नन्दादि वर्ज्यं संकल्पाद्यनापत्तेः, षोडशपञ्चदशपक्षयोस्तु न चतुर्दश्यपीत्यर्थः । *चतुर्दश्यामिति । त्रयोदश्यामिति विवेचने । *जन्मभामिति ।

यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति ॥"

प्राजापत्यं=रोहिणी, पौष्णं=रेवती, पित्र्यं=मघा। अन्यान्यपि प्रत्यरादीनि तत्रैव ज्ञेयानि। केचित्तु—

"नन्दाश्वकामरव्यारभृगुत्र्यग्निपितृकालभे।

गण्डे वैधृति*पाते च पिण्डास्त्याज्याः सुतेप्सुभिः॥"

इति सङ्ग्रहात्। नन्दाः=प्रतिपत्षष्ठ्येकादश्यः, अश्वाः=सप्तमी, कामः=त्रयोदशी, आरो=भौमः, भृगुः=शुक्रः, अग्निभं=कृत्तिका, पितृभं=मघा, कालभं=भरणी, अत्र पिण्डास्त्याज्या इत्याहुः। तत्र*मूलं मृग्यम्। एतच्च सकृन्महालयविषयम्।

"सकृन्महालये काम्ये पुनः श्राद्धेऽखिलेषु च।

अतीतविषये चैव सर्वमेतन्न चिन्तयेत्॥"

इति पृथ्वीचन्द्रोदये नारदोक्तेः।

अस्यापवादो हेमाद्रौ पृथ्वीचन्द्रोदये च—

---

आत्मभार्यापुत्राणां जन्मभानीति। जन्मदशमैकोनविंशतिभानीति रघुनाथः। एवञ्च—

"भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च।

पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥"

इति स्मृत्यन्तरे पिण्डदानपदं श्राद्धोपलक्षणं बोध्यम्। अन्ये पिण्डदाने कालविशेषनिषेधास्तु प्रेतकृत्यविषया इति विवेचने। प्रत्यरादीत्यादिना त्रिपादादयः। एतत्प्रेतकृत्यविषयमित्यन्ये। *पाते इति। पातभरण्यादावपि सकृन्महालये पिण्डदानं कार्यम्। पातादिनिमित्तकश्राद्ध एव तन्निषेधात्। 'अमापाते भरण्यां च' इत्यग्रिमवचनादिति बोध्यम्। *मूलं मृग्यमिति। सप्तमीरविभौमभरणीगण्डवैधृतिव्यतिपातेष्विति मयूखः। पुनःश्राद्धे=आवृत्त्या क्रियमाणे श्राद्धे। *अखिलेषु=व्रीहिपाकादिश्राद्धेषु। तत्र कालान्त-

'अमापाते भरण्यां च द्वादश्यां पक्षमध्यके ।
तथा तिथिं च नक्षत्रं वारं च न विचारयेत् ॥'

पराशरमाधवीये मदनपारिजातादिषु चैवम् । निर्णयदीपिकायां तु—*'पितृमृताहे निषिद्धदिनेऽपि सकृन्महालयः कार्यः' इत्युक्तम् ।

'आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः ॥
तस्य संवत्सरं यावत्सन्तृप्ताः पितरो ध्रुवम् ॥'

इति नागरखण्डोक्तेः ।

'या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते ।
सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः ॥
तिथिच्छेदो न कर्तव्यो विनाऽशौचं यदृच्छया ।
पिण्डश्राद्धं च कर्तव्यं विच्छित्तिं नैव कारयेत् ॥
अशक्तः पक्षमध्ये तु करोत्येकदिने यदा ।
निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि ॥'

इति कात्यायनोक्तेश्च । *अत्र मूलं चिन्त्यम् ।

तथा पक्षश्राद्धकरणेऽपि न नन्दादिषु पिण्डनिषेध इत्याह पराशरमाधवीये कार्ष्णाजिनिः—

'नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने ।
नैव नन्दादि वर्ज्यं स्यान्नैव निन्द्या चतुर्दशी ॥' इति ।

अत्र श्राद्धमित्ये*कवचनाद् *दिने दिने इति वीप्साव-

---

रसम्भवात् । *पितृमृताह इति । शिष्टाचारसिद्धोऽयं पक्ष इति रघुनाथः । नन्वेवं 'नैव निन्द्या चतुर्दशी' इति चतुर्दशीग्रहणं वर्जयित्वा चतुर्दशीमिति तन्निषेधश्चेति विकल्पः स्यादित्यत्राह—*अत्रेति । एकेति । प्रकृत्यर्थानामिति व्युत्पत्त्या अत्यन्तसंयोगार्थक-

शाच सोमयागवदेकस्याभ्यासेनैकप्रयोगपरमिदम्। अत

---

द्वितीयातश्च एकत्वविशिष्टश्राद्धस्य भाद्रपदापरपक्षीयतिथित्वनियमो लभ्यते। ततश्चतुर्दशीलाभात्तद्वर्जनं पक्षान्तरम्। न च—

'स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति।'

इति दर्शनात्संख्यया श्राद्धानां भेदो दुर्वारः। तत्र च काभ्यासः?। 'नैव निन्द्या चतुर्दशी' इति च चतुर्दशीग्रहणार्थमिति वाच्यम्। संख्याया अनुत्पत्तिवाक्यगतत्वात्। वचनस्यैकदेशकन्यासम्बन्धमात्रेण सकलपक्षपूज्यत्वमात्रप्रतिपादकत्वेनोत्पत्तिविधित्वासम्भवात्। श्राद्धषोडशकमिति द्वितीयानिमित्तभूतकर्मप्रवचनीयप्रतियोगेन श्राद्धानामुद्देश्यत्वप्रतीतेश्च पक्षरूपकालविधौ तत्सम्बन्धित्वेनोपादेयानामपि कर्मणामनुवाद्यत्वे बाधकाभावात्। 'यदि ब्राह्मणो यजेत' इत्यादौ हि स्वरूपेण यागस्योपादेयतयाऽनुवाद्यत्वं दूषितमतो न तद्विरोधः। तस्मात् 'नभस्यस्यापरे पक्षे' इति श्राद्धोत्पत्तिविधौ संख्यायुक्ततिथिसमुच्चयेन यावत्तिथिसिद्धानामभ्यासानां श्राद्धषोडशमिति संख्येत्यर्थः। यद्यपि पक्षस्य पञ्चदशतिथ्यात्मकत्वात् कृष्णपक्षसामान्येऽपि प्रतितिथि श्राद्धावृत्तिः प्राप्नोति न तु सकृत्करणम्, तथापि तत्र पक्षस्याखण्डस्यैवायोगव्यावृत्त्याऽङ्गत्वम्, अयनर्तुमासादिविशेषवत्, न तु स्वरूपेण तिथीनाम्। अत एवेदं कर्मास्मिन्नयनेऽस्मिन्नृतावस्मिन्मासेऽस्मिन्पक्षे इति सम एव व्यपदेशः तस्य सकृत्करणेऽप्यव्याहतः। महालयापरपक्षे तु यावत्तिथ्यभ्यास इति विशेष बीजमाह— *दिने दिने इति। *एकप्रयोगेति। यत्त्वत्र हेमाद्रेरन्त्यदिने दक्षिणादानं तद्वशाच्च पात्रैक्यमिति मतं, तदयुक्तम्। निमन्त्रणादिविसर्जनान्तश्राद्धप्रयोगस्यैवावृत्तेः कालस्य प्रयोगानुबन्धत्वेन तत्समुच्चयवशात्प्रयोगावृत्तेरेवौचित्यात्। किञ्च दक्षिणादानमात्रस्यैव कुतः सकृत्करणं प्रधानमात्राभ्यासोपगमे सर्वेषामपि प्रधानपूर्वोत्तरभाविनामङ्गानां [illegible] चाभ्यासस्यैवौचित्यात्।

'प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।'

इति याज्ञवल्कीयं प्रयोगभेदपरं न तु पञ्चम्यादिपक्ष-विषयम् । 'प्रतित्प्रभृतिषु' इति विशिष्योक्तेः । निर्णय-

---

एवं निमन्त्रणादिविसर्जनान्तश्राद्धप्रयोगस्य भेदे यदि ब्राह्मणालाभस्तदाऽस्तु तैरेव ब्राह्मणैः सः ।

'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः ।
न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥'

इति ब्राह्मणानां विनियुक्तविनियोगाविरोधात् । वरणभरणरूपे तु निमन्त्रणदक्षिणादाने प्रतिश्राद्धप्रयोगं भिन्ने एवानुष्ठेये । अत एव पक्षश्राद्धार्थं ब्राह्मणैः सह सकृदेवोपसंवादेऽपि तेषामाशौचेऽभ्यासान्तरे त्यागोऽन्येषामुपादानम् ।

'निमन्त्रितस्य विप्रस्य स्वाध्यायाद्विरतस्य च ।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥'

इति वाक्यस्य शास्त्रीयनिमन्त्रणाभावेनाप्रवृत्तेः । प्रयोगसङ्घस्य सम्भूयैकफलजनकत्वं सायंप्रातरग्निहोत्रवत् । 'प्रतिपदि महालयापरपक्षश्राद्धं करिष्ये' 'द्वितीयायां महालयापरपक्षश्राद्धं करिष्ये' 'तृतीयायां महालयापरपक्षश्राद्धं करिष्ये' इत्यादिप्रतितिथि सङ्कल्पभेदाच्च पाकभेदाच्चान्तरा प्रतिबन्धानिश्चयेन केनचिदभ्यासपक्षेणारब्धे महालयश्राद्धे यद्यन्तरा श्राद्धकर्तुराशौचपातः, तदा 'श्राद्धे पाकपरिक्रिया' इत्युक्तस्तुल्यमारम्भाभावात्सङ्कल्पाभावाच्च 'प्रारब्धे सूतकं नास्ति' इत्यस्याप्रवृत्तेरनधिकारात्तत्र प्राप्ताः श्राद्धप्रयोगा नानुष्ठेयाः । न चैवं सायमग्निहोत्रपौर्णमासानन्तराशौचपाते प्रातरग्निहोत्रदर्शयोराशौचमध्येऽनुष्ठानं न स्यादिति वाच्यम् । तत्र—

'वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात् ।'

इत्यधिकारप्रतिप्रसवात्तदनुष्ठानोपपत्तेः । न च यथा कृष्णपक्षे यजमानमरणसम्भावनायां दर्शेष्टिपर्यन्ताग्निहोत्रहोमपूर्वकं तदानी-

दीपे मदनपारिजाते चैवम्। *अन्यकृष्णपक्षपरं याज्ञवल्कीयम्। एतत्परत्वे नैवनिन्द्याचतुर्दशीविरोधात् इति गौडाः। तन्न—

'श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये।'

इति विरोधात्। तत्त्वं तु—

---

मेव दर्शानुष्ठानम्। तथा प्रकृते शुद्धिपर्यन्तश्राद्धप्रयोगाणामशौचपातात्पूर्वमेवानुष्ठानं स्यादिति वाच्यम्। तत्राग्निहोत्रहोमदर्शेष्ट्योर्वाचनिकत्वादिह वचनाभावात्। आशौचमध्ये श्राद्धप्रयोगाणामकरणे च कृतानां प्रयोगाणां न फलम्। सहकार्यन्तराभावात् एकदेशादेव फलस्य कल्पयितुमशक्यत्वाच्च। एवंविधस्थले चाशौचापगमोत्तरं सकृदादिपक्षेण यावद्दीपावलि पुनर्महालयश्राद्धं कर्तव्यम्। प्रतिबन्धान्तरे तु तद्दशायां प्रतिनिधिना कार्यम्। सोमयागवदिति अभ्यासमात्रेण दृष्टान्तः। तत्र प्रधानस्वरूपानुबन्धभूतदेवतासमुच्चयवशात् प्रधानस्यैवावृत्तेः। प्रधानमात्रावृत्तिश्च देवतादिसमुच्चयकृता सोमयागग्रहयज्ञादिषु, उत्पन्नगतसंख्याकृता वा एकादशप्रयाजलक्षहोमकोटिहोमादिषु; प्रकृते तु तयोरेकविधाऽपि न सा, किन्तु कालवशात्प्रयोगावृत्तिरेव। सायंप्रातरग्निहोत्रहोमदर्शपौर्णमासिकाग्नेयादीनामिवेति विशेषः। याज्ञवल्कीयं पञ्चम्यादिपक्षविषयमिति पाठः। यद्यपि याज्ञवल्कीयं काम्यश्राद्धपरमित्यग्रे स्पष्टम्, तथापि 'नैव निन्द्या चतुर्दशी' इति कार्ष्णाजिनिज्ञापितं तत्सदृशं तच्छब्देन ग्राह्यम्। तत्पञ्चम्यादिपक्षविषयमित्यर्थः। याज्ञवल्कीयं प्रयोगभेदपरम्, न तु पञ्चम्यादिपक्षविषयम्। प्रतिपत्प्रभृतिष्विति विशिष्योक्तेरिति पाठान्तरम्। काम्यश्राद्धप्रकरणस्थं याज्ञवल्कीयं कृष्णपक्षश्राद्धस्य सकृत्कर्तव्यपरं न तु महालयस्य पञ्चम्यादिपक्षपरमिति तदर्थः। आश्विनापरपक्षे कस्मिन्नपि पक्षे चतुर्दशीवर्जनं नास्ति इति मतं निरस्यति—*अन्यकृष्णपक्षपरमिति। केचित्तु—

*'तिथिनक्षत्रवारादिनिषेधो य उदाहृतः ।
स श्राद्धे तन्निमित्ते स्यान्नानुषङ्गकृते ह्यसौ ॥'

इति दिवोदासीये वृद्धगार्ग्योक्तेस्तन्निमित्ते *पक्षान्तरे

'कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।'

इति मनूक्तेश्चतुर्दशीवर्जनं दशम्यादिपक्षे । अन्यथा महालयश्राद्धगता षोडशत्वसंख्या व्याहन्येत । अत एव 'नैव निन्द्या चतुर्दशी' इत्यस्यापि सङ्गतिरित्याहुः । वस्तुतस्तु—

'शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ।'

इति इतरदेवताबाधेन शस्त्रहतानां देवतात्वविधानात्तदभावो लुप्यते । यथाऽभ्युदयेष्टौ प्रकृतदेवताबाधाद्देवतान्तरविधानाच्चोपांशुयाजः । मानवकार्ष्णाजिनीये अपि शस्त्रहतपितृकं प्रत्येव सङ्गच्छेते । मानवे दशम्यादावित्यादिपदेन पक्षान्तराणामपि ग्रहणम् । जीवत्पितृकाजीवत्पितृकाऽमावास्यायां तत्तिथितदुत्तरप्रतिपदादिष्विव शस्त्राशस्त्रमृतपितृकरूपभिन्नाधिकारिकश्राद्धेष्वेव श्राद्धगता षोडशत्वसंख्योपपद्यते । अतो देवताविरहेण चतुर्दशीश्राद्धं लुप्यत एवेति युक्तमुत्पश्यन्ति । तत्त्वं त्विति क्वचित्पाठः । *तिथीति । तिथ्यादौ पिण्डदानादिनिषेधो 'नन्दाश्वकामरव्यार'इत्यादिकः । तन्निमित्ते=नन्दादिनिमित्तके । अनुषङ्गकृते=नन्दादिसम्बन्धेन कृते महालयादौ नेत्यन्वयः । यद्वा नन्दादेर्निषेध इत्येवार्थः । 'नन्दायां भार्गवदिने' इत्यादिपुत्रवद्गृहिणो निषेधो नन्दादिनिमित्तक एव न तु नन्दादौ पञ्चम्यादिपक्षेण क्रियमाणे महालये इत्यर्थः । *पक्षान्तरे इति । कृष्णपक्षान्तरे इत्यर्थः ।

'न नन्दासु भृगोर्वारे रोहिण्यां च त्रिजन्मसु ।
रेवत्यां च मघायां च कुर्यादापरपाक्षिकम् ॥'

इति नारदसंहितावचनात् । एवञ्च नन्दाश्वकामेत्यपि आपरपाक्षिकपरमेव एकवाक्यत्वात् । नन्वेवं सकृन्महालयेऽपि 'नन्दादि-

च ज्ञेयः । *सकृन्महालये तु वचनान्निषेधः । अन्यत्र *न कोऽपि निषेधः कार्ष्णाजिनिस्मृतेरिति । *अतो *नन्दादौ सपिण्डकश्राद्धे पुत्रवतोऽप्यधिकारः । अत्रिरपि—

'महालये क्षयाहे च दर्शे पुत्रस्य जन्मनि ।
तीर्थेऽपि निर्वपेत्पिण्डान् रविवारादिकेष्वपि ॥'

*पूर्वोक्तनन्दानिषेधस्तु *मृताहातिक्रमे सकृन्महालये*पौर्णमास्यादिमृतश्राद्धे तन्निमित्ते च ज्ञेयः । यत्तु स्मृत्यर्थसारे—

'विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥' इति ।

तस्यात्रापवादो दिवोदासीये बृहस्पतिः—

'तीर्थे संवत्सरे प्रेते पितृयागे महालये ।

---

निषेधो न स्यात्तस्य नन्दाद्यनिमित्तकत्वादत आह—*सकृदिति । *अन्यत्र=पञ्चम्यादिप्रभृतिपक्षेषु । *न कोपीति । पञ्चदशषोडशपक्षयोरेव चतुर्दशीग्रहात्तदन्यपक्षे तन्निषेधः स्मर्तव्यः । एतावता प्रथममतमुपपादितम् । इदानीं निर्णयदीपमनुरुध्याह—*अत इति । *नन्दादाविति । पुत्रगृहिणो निषेधस्य नन्दादिनिमित्तश्राद्ध एव प्राप्तेर्महालयनिमित्तके तदप्राप्तिरित्यर्थः । सकृन्महालयेऽपीति शेषः । एतेन 'तिथिच्छेदो न कर्तव्यः' इति युक्तिर्दृढीकृता । महालये इति सामान्यत उपादानात्सकृन्महालयेऽपि प्रवृत्तेरिति भावः । एवं सति सकृन्महालये इत्यस्य को विषय इत्यत्राह—*पूर्वोक्तेति । *मृताहेति । केन चिद्धेतुना मृताहस्य सकृन्महालयकालस्यातिक्रमे इत्यर्थः । *पौर्णमास्यादीति । पौर्णमास्यां मृतस्य महालये तिथिर्नास्ति अतः तस्य सकृन्महालयः नन्दादिनिषिद्धकालं विहाय कस्याञ्चित्तिथौ कार्य इत्यर्थः । आदिना चतुर्दशीग्रहः ।

पिण्डदानं प्रकुर्वीत *युगादिमरणीमघे ॥
महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा ॥' इति ।

निर्णयदीपे तु नन्दादिनिषेधः प्रत्यहं भिन्नश्राद्धविषयः । षोडशाहव्यापिश्राद्धप्रयोगैकत्वे तु प्रत्यहं पिण्डदानं कार्यमेवेत्युक्तम् । तदयमर्थः सम्पन्नः-षोडशाहव्यापिश्राद्धैक्ये न पिण्डनिषेधः । मृताहे सकृन्महालयेऽपि तथेति केचित् । तत्रापि निषेधस्तु युक्तः, प्रत्यहं श्राद्धभेदेऽपि व्यतीपातादौ तथा । अन्यत्र *मृताहातिक्रमे महालये च पिण्डनिषेध इति ।

संन्यासिनां तु द्वादश्यां श्राद्धं कार्यम् ।

*'यतीनां च वनस्थानां वैष्णवानां विशेषतः ।
द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषतः ॥'

इति पृथ्वीचन्द्रोदये सङ्ग्रहोक्तेः ।

अत्र पक्षे श्राद्धाकरणे गौणकालमाह हेमाद्रौ यमः—
'हंसे कन्यासु वर्षास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः ॥'

आश्विनकृष्णशुक्लपञ्चम्योर्मध्य इत्यर्थः । *तत्राप्यसम्भवे भविष्ये—

---

तन्निमित्ते=महालयनिमित्ते। पितृयागे=पित्र्येष्ट्याम्। *युगादीति। सति सप्तमी, मृताहे इत्यधिकरणसप्तमी, तथा च न पिण्डनिषेधः। 'अमापाते' इत्युक्तेः । एवं च श्राद्धभेदे कदाचित्सपिण्डं कदाचिदपिण्डमित्यत्रेष्टापत्तिर्बोध्या । *अन्यत्र=अपरपक्षे पौर्णमास्यादिमृतश्राद्धे वा । *मृताहेति। सकृन्महालये इति शेषः। *यतीनाञ्चेति। सकृन्महालये नियमः। तेन तेषां पक्षान्तराण्यपि भवन्त्येव। *तत्राप्यसम्भवे इति । आश्विनशुक्लपञ्चम्यन्तं कस्मिंश्चिद्दिने

'येयं दीपान्विता राजन्ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये ॥'

*तत्राप्यसम्भवे भारते—

---

श्राद्धस्याकरणे तुलासंक्रान्तिं यावत् कस्मिंश्चिद्दिने, तत्राप्यसम्भवे वृश्चिकसंक्रान्तिं यावत् ।

"न ददाति नरः श्राद्धं पितॄणां चन्द्रसंक्षये ।
क्षयिताशाः परीताङ्गाः पितरस्तस्य दूषिताः ॥
प्रेतपक्षं प्रतीक्षन्ते गुरुवाञ्छासमन्विताः ।
कर्षका जलदं यद्वद्दिवानक्तमतन्द्रिताः ॥
प्रेतपक्षेऽप्यतिक्रान्ते यावत्कन्यागतो रविः ।
तावच्छ्राद्धं प्रवाञ्छन्ति दत्तं वै पितरः सुतैः ॥
ततस्तुलागतेऽप्येके सूर्ये वाञ्छन्ति पार्थिव ।
श्राद्धं स्ववंशजैर्दत्तं क्षुत्पिपासासमाकुलाः ॥
तस्मिन्नपि व्यतिक्रान्ते काले वृश्चिकगे रवौ ।
निराशाः पितरो दीनास्ततो यान्ति निजालयम् ॥
मासद्वयं प्रतीक्षन्ते गृहद्वारं समाश्रिताः ।
वायुभूताः पिपासार्ताः क्षुत्क्षामाः पितरो नृणाम् ।
यावत् कन्यागतः सूर्यस्तुलास्थश्च महीयते ॥

इति नागरखण्डे कन्यामपेक्ष्य तुलायाः स्फुटमनुकल्पत्वेनोक्तेः । तत्र दीपावली अतिप्रशस्तेत्यर्थः । पञ्चदशी=कार्तिकामावास्या । तत्र 'दीपमाला च कर्तव्या' इति बहुदीपदानविधानात्, न तु कार्तिकपौर्णमासी । तत्र दीपदानविधानेऽपि ख्यातेत्युक्तेः अमावास्याया एव दिपावलीत्वेन ख्यातत्वात् पित्र्ये प्रशस्तत्वाच्च । तस्यां च तत्प्रयुक्तश्राद्धप्राप्तावपि महालयप्रयुक्तमप्राप्तं विधीयते । तत्र दर्शे सपत्नीकस्य पित्रादेर्देवतात्वं महालये सपत्नीकस्य तस्येति विशेषः । *तत्रापि=कन्यायामपि, यद्वा दीपावल्यामपीत्यर्थः ।

'यावच्च कन्यातुलयोः क्रमादास्ते*दिवाकरः ।
शून्यं प्रेतपुरं तावद्वृश्चिकं यावदागतः ॥'

ब्राह्मे—

'वृश्चिके *समतिक्रान्ते पितरो दैवतैः सह ।
निःश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम् ॥'

यत्तु जातूकर्ण्यः—

'आकाङ्क्षन्ति स्म पितरः पञ्चमं पक्षमाश्रिताः ।
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ॥'

इति, तत्फलातिशयहानिपरम् । 'कन्यां गच्छतु वा न वा' इति तुरीयपादे वा पाठः । तेन कन्यायोगे प्राशस्त्यमात्रम् । अतः श्राद्धविवेकोक्तं श्राद्धद्वयं ज्ञेयम् । इदं च श्राद्धमन्त्रेनैव कार्यं नाऽमान्नादिना ।

'मृताहं च सपिण्डं च गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ॥'

इति स्मृतिदर्पणे गालवोक्तेः ।

अथात्र देवताः । सङ्ग्रहे —

'तातम्बात्रितयं, सपत्नजननी, मातामहादित्रयं
सस्त्रि, स्त्रीतनयादि, तात-जननी-स्व-भ्रातरः सस्त्रियः ।
ताताम्बात्मभगिन्यपत्यधवयुक्, जायापिता, सद्गुरुः,

---

तदुत्तरतुलादीनां तदनुकल्पत्वात् । *दिवाकर इति ।

'तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा ।'

इत्युत्तरार्द्धे ब्राह्मपाठानुसारेण रवेः कन्यातुलयोः क्रमावस्थानात्क्रमाच्छ्राद्धस्य कालः स्यादित्यर्थः । *समतिक्रान्ते=प्राप्तवृश्चिके महालयश्राद्धं लुप्यते मोहादिना तत्करणेऽपि कर्तुः प्रत्यवायानुद्धारात् इत्यत्र तात्पर्यम् ।

शिष्यासाः पितरो महालयविधौ, तीर्थे, तथा *तर्पणे ॥'

---

*तर्पणे इति । तर्पणस्य मध्यान्ह एव मुख्यः कालः । कात्यायनादिसूत्रे माध्यान्हिकादिकर्मसु तत्पाठात् ।

"स्नानं माध्यान्हिकं कृत्वा सन्ध्याकर्म निवर्त्य च ।
ब्रह्मयज्ञं विधायाथ गृहमेत्याचरेत्परान् ॥"

इति आत्रेयवाक्ये मध्यान्हे तदुक्तेश्च । ब्रह्मयज्ञाङ्गं च तर्पणम् ।

'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।'

इति वाक्यात् मध्याह्नसंध्यानन्तरं कार्यम् ।

"उपास्य विधिवत्संध्यामुपस्थाय च भास्करम् ।
गायत्रीं शक्तितो जप्त्वा तर्पयेद्देवताः पितॄन् ॥"

इति वृद्धपराशरोक्तेश्च, इति अन्यत्र विस्तरः ।

यत्तु तर्पणं प्रकृत्य—

"तस्मात्सदैव कर्तव्यमकुर्वन्महतैनसा ।
युज्यते ब्राह्मणः कुर्वन विश्वमेतद्बिभर्त्ति च ॥" इति,

तत्र सदापदस्य यावज्जीवमित्यर्थः ।

"प्रहराभ्यन्तरे पित्रोः पुत्रो दद्यात जलाञ्जलीन् ।
द्वितीये तु पयो देयं तृतीये जलमेव च ॥"

इति त्वनुकल्पः ।

यत्तु 'यत्रोषः स्नात्वोदयात् प्रागेव तर्पणं कृतं तत्र मध्याह्ने स्नानाकरणेऽपि पुनस्तर्पणं कार्यम् । अहःकालिकतर्पणस्यावश्यकस्याकरणात् । उदयोत्तरं प्रातः स्नाने तु तर्पणे कृते पुनस्तन्न कार्यम् । तेनैव सिद्धेः । मध्याह्नस्नानस्य वैधत्वमते तु तदनन्तरं पुनः कार्यम्'इति, तन्न । उदयात्पूर्वं तर्पणविध्यविध्योरभावात् । विधानाभावे चोदयात् प्रागनुष्ठानायोगात् ।

अथाधिकारिणः । मनुः—

"चतुर्णामपि वर्णानां तर्पणं तु भवेत्सदा ।"

अस्यार्थः-तातत्रयी=पितृत्रयी । अम्बात्रयी च । स्मृत्यर्थसारेऽपि-'महालये मातृश्राद्धं *पृथक् प्रशस्तम्' इति । अत्र विशेषः स्मृतिदर्पणे गालवः—

*'अनेका मातरो यस्य श्राद्धे चापरपक्षिके ।
अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् ॥'

जीवन्मातृकस्तु सापत्नमातुरेकोद्दिष्टं कुर्यान्न पार्व-

---

वर्णानामिति न कर्मषष्ठी । सवर्णेभ्यो जलं देयम् । 'सवर्णेभ्य एव च' इति योगियाज्ञवल्क्यात् । एतच्च मातापितृव्यतिरेकेणेति प्राञ्चः । जीवत्पितृकस्यापि तर्पणं भवत्येव । 'जीवत्पितृकोऽप्येतान्' इति कात्यायनोक्तेः । एतान्=देवऋषिदिव्यपितृसनकादिमनुष्यान् । पितुर्जीवनेन तर्पणाधिकारात्

संन्यस्तपितृकादौ—

"येभ्य एव पिता दद्यात्तेभ्य एव प्रदापयेत् ।"

इति वचनात् तस्य । तीर्थेऽप्येतत् जीवत्पितृकश्राद्धवत् । मातृमरणेऽपि न तर्पणम्, उद्वाह इत्यादिवत् प्रतिप्रसवाभावात् 'सपितुः पितृकृत्येषु' इति निषेधाच्च । *पृथगिति ।

"अन्वष्टकासु वृद्धौ च प्रतिसम्वत्सरं तथा ।
महालये गयायां च सपिण्डीकरणात्पुरा ॥
मातुः श्राद्धं सुतः कुर्यादन्यत्र पतिना सह ।"

इति वाक्यात् 'नवदैवतमत्रेष्टम्' इति वचनाच्च । *अनेका मातर इति । सापत्नमातुर्मात्रा सहैकतन्त्रेण द्विपितृकश्राद्धवदित्यर्थः । इदमशुद्धम् । यत इदं वचनमान्वष्टक्य एव प्रवर्तते न तु तद्भिन्ने महालयादावपि सङ्ग्रहे मातृत्रयानन्तरं सापत्नमातुरुक्तेः । जीवदजीवन्मातृकयोः प्रकारभेदं नोचितमाह । अस्माकं तूभयत्रापि सापत्नमातुरेकोद्दिष्टमेवेति तदभेदात् । आधिकमन्यतोऽवगन्त-

णम् । श्राद्धदीप*कलिकायां तु पार्वणमुक्तम् ।

'आन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालयम् ।
पितृपत्नीषु च श्राद्धं कार्यं पार्वणवद्भवेत् ॥'

इति बृहन्मनूक्तेः । सपत्नीति मातामहानां सपत्नीकत्वेऽपि विभवे सति मातामहीनां पृथक्कार्यम् ।

'महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रौष्ठे मघासु च ॥'

इति निगमोक्तेः । हेमाद्रिमते त्वत्र नवदैवत्यमेव ।

'महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवत्यमत्रेष्टं शेषं षट्पौरुषं विदुः ॥'

इति विष्णुधर्मोक्तेः । तातभ्राता=पितृव्यः, जननीभ्राता=मातुलः, तत्स्त्रियः=पितृव्यस्त्रीमातुलानीभ्रातृजायाः । पितृष्वसृमातृष्वसृस्वभगिन्योऽपत्यभर्तृयुक्ताः । तेन सापत्यायै सधवायै इति प्रयोगो ज्ञेयः । एतासु सर्वासु न तद्भर्त्रादेर्दानम् । द्वारलोपात् । जायापिता=श्वशुरः ।

---

न्यम् । *कलिकायां त्विति । तुनाऽरुचिः

"सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ॥"

इत्यनेन विरोधात् । तस्मात् 'पितृपत्नीषु च' इत्यत्रान्वष्टक्यादेर्नान्वयः किं तु श्राद्धमित्यस्याऽऽब्दिकं श्राद्धमित्यर्थात् । तच्च ज्येष्ठापरम् । आब्दिकं प्रकृत्य—

'पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत् ।'

इति वचनात् । यद्वा कलिकामते सर्वासामेवाब्दिकं पार्वणमिति । वस्तुतस्तु कलिकावचनं निर्मूलमिति । 'प्रौष्ठे' इत्यादिसप्तिसप्तम्यौ तत्र षड्दैवत्यस्यैव भावात् ।

मते त्विति तुनारुचिः । विभवे द्वादशदैवत्यन्तदभावे तु

श्वश्रूरप्यत्रोपलक्ष्या । अत्र *मूलं स्मृतिचान्द्रिकायां ज्ञेयम् । अत्र पार्वणैकोद्दिष्टयोर्व्यवस्थोक्ता हैमाद्रौ पुराणान्तरे—

*'उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः ।
श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विक्शिष्यपोषकाः ॥
भगिनीस्वामिदुहितृजामातृभगिनीसुताः ।
पितरौ पितृपत्नीनां पितुर्मातुश्च या स्वसा ॥

नवदैवत्यामिति व्यवस्थासम्भवात् । 'सस्त्रियः' इतिपाठः 'तत्स्त्रियः' इति पाठो न युक्तः, पितृव्यादेः सपत्नीकत्वस्यैवौचित्यात् पितृष्वस्रादीनां सधवात्ववत् । सापत्यत्वं तु पूरणीयम् । सतीषु=विद्यमानासु । *मूलमिति ।

"आदौ पिता ततो माता सापत्नजननी तथा ।
मातामहाः सपत्नीकाः स्वपत्नी तदनन्तरम् ॥
सुतभ्रातृपितृव्याश्च मातुलाश्च सपत्नयः ।
दुहिता भगिनी चैव दौहित्रो भागिनेयकः ॥
पितृष्वसा मातृष्वसा श्वशुरो गुरुरर्थिनः ।" इति ।

अस्यार्थः—सुतान्तानां क्रमो विवक्षितः । ततः तदनन्तरपदसत्त्वात् । ततो दुहितैव सापत्या सधवा । संबन्धासत्तेः दौहित्रभावुकयोस्तत्र विशेषणत्वम् । सुते पत्नीपुत्रयोरिव ।

'सुतस्तत्पुत्रदुहितृदौहित्रा भावुकः स्नुषा ।'

इति वचनान्तरेऽपि तथैव । गयायां तु केचित् पृथग्गणं कुर्वन्ति । पितृव्यमातुलयोरन्ते भ्राता पितृष्वस्रोरन्ते भगिनी सम्बन्धासत्तेरिति । *उपाध्यायेति । श्वशुरः सपत्नीकः, न तु पृथक् श्वश्रूः, सापत्यश्च । नापि श्वशुरे जीवति सा । भ्राता सापत्यो न तु पृथक् तत्पुत्रः, सपत्नीकश्च । भगिनीदुहितरौ सधवे सापत्ये न तु भगिनीसुतः तत्स्वामी जामाता च पृथक् । 'पितरौ पितृ[illegible]'

सखिद्रव्यदशिष्याद्यास्तीर्थे चैव महालये ।
*एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नतः ॥' इति ।

इतरेषां पित्रादीनां पार्वणमर्थसिद्धम् । अत्र क्रमान्यत्वेप्याचाराद्व्यवस्था । अशक्तौ तु पृथिवीचन्द्रोदये चतुर्विंशतिमते-

'एकस्मिन्ब्राह्मणे सर्वानाचार्यादीन्प्रपूजयेत् ।
*दश द्वादश वा पिण्डान्दद्यात्करणं न तु ॥'

एकोद्दिष्टस्वरूपं चाह याज्ञवल्क्यः-

'एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥' इति ।

---

इति सापत्नमातामहौ । तत्राचारविसंवादे आचारपक्षे सापत्नभ्राता प्रपूर्यः पित्रादिस्वस्रोः सापत्यसधवात्वं बोध्यम् 'शिष्यपोषकाः' 'शिष्याद्यपोषकाः' इति पाठौ पोषकद्रव्यदाववान्तरभेदमालक्ष्य 'शिष्यपोषकम्' इत्येकं वा, विद्याकलाभेदेन शिष्यौ वा, पोषकादीनामत्राभावः । आद्यपदेन सतीर्थ्यः । *एकोद्दिष्टेति ।

"तेन प्रदानं यत्र स्यात्सपिण्डीकरणात्परम् ।
तत्र पार्वणवत् कुर्यादेकोद्दिष्टं त्यजेद् बुधः ॥"

इति गालवं बाध्यते इति सूचितम् । अत्र प्रत्येकोद्दिष्टं ब्राह्मणभेदः । *दशेति । पत्नीप्रभृतिगुर्वन्ता दश आचार्यान्तास्तु द्वादशेत्यर्थः । वक्ष्यति च—

"सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ॥'

हेमाद्रौ—

"सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ॥" इति ।

अत्रै*कपाको *वैश्वदेवतन्त्रं पिण्डं बर्हिश्च *एकमिति स्मृत्यर्थसारे उक्तम् । अत्र *पाणिहोमः *पिण्डश्चात्र द्विजान्तिक इत्याह प्रयोगपारिजाते आचार्यः—

'काम्यमभ्युदयेऽष्टम्या*मेकोद्दिष्टमथाष्टमम् ।
चतुर्ष्वेषु करे होमः पिण्डश्चात्र द्विजान्तिके ॥' इति ।

पार्वणैकोद्दिष्टयोः समानतन्त्रत्वे तु अग्निसमीप एव । अत्र धुरिलोचनौ वैश्वदेवौ ।

---

पार्वणैकोद्दिष्टयोः क्रममाह मरीचिः—

"यद्येकत्र भवेत्स्थानमेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वभिनिर्वृत्त्य एकोद्दिष्टं समारभेत् ॥" इति ।

एकपवित्रकम्=एका शलाका। अग्निकमत्र । *एकपाक इति ।

"महालये गयाश्राद्धे गतासूनां क्षयेऽहनि ।
तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्प्रयत्नतः ॥"

इति पौलस्त्यात् । *वैश्वदेवेति । 'यद्येकत्र भवेत्स्थानम्' इति वाक्यात्तादृशश्राद्धस्य पार्वणपूर्वकत्वादसञ्जातविरोधितयोपक्रमप्राबल्यादेव वैश्वदेवसिद्धेः 'देवहीनम्'इति निषेधो न प्रवर्तते । *एकमिति । 'एकत्र भवेत् स्थानम्' इत्यस्यान्यथाऽनुपपत्तेः । प्रधानानुरोधेन गुणावृत्तिश्च तत्रैव यत्र तां विना न प्रधानासिद्धिरिति । *पाणिहोम इति । पार्वणे इत्यादिः न त्वेकोद्दिष्टे इत्यर्थः । *पिण्डश्चेति । पिण्डपितृयज्ञकल्पाभावात् । पार्वणैकोद्दिष्टयोः समानतन्त्रत्वे त्वग्निसमीप एवेति पाठः । तत्र प्रामाण्ये यद्याग्रहः तदाऽमावास्यायां महालयकरणे(१) (कथं विरोधोऽयः । यद्वा बह्वृचगृह्यभाष्यकारैरेकोद्दिष्टे पाणिहोमाङ्गीकारात्तत्र तन्मते तन्निषेधो न प्रवर्तते इत्याशयेन ) *एकोद्दिष्टमिति । आन्वष्टक्यातिदेशेन यस्यां कस्यां चित्तिथौ श्रा-

---

(१) कंसान्तर्गतो ग्रन्थः क्वचित् पुस्तके नास्ति ।

'अपि *कन्यागते सूर्ये काम्ये च धुरिलोचनौ।'

इति हेमाद्रावादित्यपुराणात् । *अत्र *प्रति दिनं भिन्नप्रयोगत्वाद्दक्षिणाभेदो वा *प्रयोगैक्यादन्ते एव वा दक्षिणेति हेमाद्रौ उक्तम्। एतच्च संन्यस्तपितृकादिना जीवत्पितृकेणापि कार्यम् ।

---

द्धे पितृयज्ञकल्पमन्त्वाच्चतुर्थ्यावेति वचनादग्नौ होमः अग्निसमीपे पिण्डदानमिति पाठान्तरं नेयम् । *कन्यागते=कन्यागतसूर्यनिमित्तके भाद्रपदापरपक्षश्राद्धे इत्यर्थः । कन्यासंक्रान्तिनिमित्तके श्राद्धे इति वर्णयतां मते तु पुरूरवार्द्रवौ, तच्चिन्त्यम् । धर्मिणः सूर्यस्य शाब्दनिमित्तत्वमुपेक्ष्य तद्धर्मस्य संक्रमणस्य अशाब्दनिमित्तताया आश्रयणासम्भवात् । हेमाद्रिमतमाह—*अत्रेति । *प्रतिदिनमिति ।

"आदौ मध्येऽवसाने वा यत्र कन्यां रविर्व्रजेत् ।
सपक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति ॥"

इति कार्ष्णाजिनिवाक्यात्कर्मभेदः "तिस्र आहुतीर्जुहोति" इतिवत् । यदि वाक्यान्तरप्राप्तमेकं श्राद्धमनूद्य तिथिसमुच्चयो विधीयेत तदा न भेदः स्यात् । प्रकृते तु न तथा । तेन ब्राह्मणभेददक्षिणानां भेदेऽपि न दोषः । अमावास्यात्वेन प्रतिपद एकाकाराभिप्रायेण पक्षपदम् । तेन न षोडशत्वबाधः । *प्रयोगैक्यादिति ।

"नभस्यस्यापरे पक्षे तिथिषोडशकं तु यत् ।
कन्यास्थार्कान्वितः श्रेयान्स कालः श्राद्धकर्मणि ॥"

इति शाट्यायनिवचने 'संख्यायुक्तेषु समुच्चयः स्यात्' इति न्यायेन तिथीनां श्राद्धे समुच्चयावगमात् तस्य श्राद्धावृत्तिं विनाऽनुपपत्तेरेकस्यैव श्राद्धस्य सायंप्रातरग्निहोत्रहोमस्येवावृत्तिः । तत्रानेकदिनसाध्य एक एव श्राद्धप्रयोगः । अतो ब्राह्मणदेशदक्षिणाना-

'वृद्धौ तीर्थे च *संन्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥'

इति कात्यायनोक्तेः । यत्तु कौण्डिन्यः—

'दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव च ॥' इति,

तत्संन्यस्तापित्राद्यतिरिक्तविषयम् *काम्यश्राद्धपरं वा । *अत्र बहु वक्तव्यं श्रीपितृकृतजीवत्पितृकनिर्णये ज्ञेयम् । एतच्च जीवत्पितृकेण पिण्डरहितं कार्यम् ।

*'मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।

---

मेक्यमिति । अत्रेदमरुचिबीजम् । शाट्यायनिवाक्यस्योत्पत्तिपरतया क्वोत्पत्तिः क्व गुणविधिरिति विनिगमनाविरहात् समुच्चितानेकतिथिविशिष्टश्राद्धविधौ 'यदाऽऽग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यत्रेव समुच्चितानेककालविशिष्टकर्मविधिकृतभेदवदिहाऽपि श्राद्धभेदस्यैवौचित्यात् । *संन्यस्ते इति । पितृयज्ञे होमान्तमनारम्भो वेति पक्षद्वयम् । आरम्भपक्षे होमान्तः पित्रादिदेवतानां वा पिण्डदानमित्यग्रे स्पष्टम् । सर्वस्मिन्नपि पक्षे संन्यस्तादिपितृकस्यामावास्याश्राद्धं स्मृत्युक्तं भवति स्मृतीनां सर्वसाधारणत्वात् । *काम्येति । नित्यनिषेधबाधेन काम्यस्य प्रवृत्तेः। ननु वृद्धौ चेति सर्वश्राद्धप्रतिषेधकत्वादपरपाक्षिकनिषेधो बाधकोऽस्त्वित्यत आह—*अत्रेति । सामान्यतः—

'सपितुः पितृकृत्येषु अधिकारो न विद्यते ।'

इति सामान्यतोऽपरपक्षे श्राद्धनिषेधे सिद्धे कौण्डिन्यनिषेधस्य वैयर्थ्यवारणाय कृष्णपक्षान्तर्गतमध्यन्वष्टकाश्राद्धं पिण्डपितृयज्ञकल्पेन न कार्यमिति व्याख्येयम् । न चानेन तदुपसंहारः । तथा [illegible] जीवत्पितृकस्य [illegible] वैयर्थ्यात् ।
*मुण्डनमिति । वस्तुतस्तु मृतस्य [illegible] अन्वयेन ।

न जीवत्पितृकः कुर्याद् गुर्विणीपतिरेव च ॥'

इति दक्षेण तस्य पिण्डनिषेधात् । अन्वष्टकयमातृ-वार्षिकादौ तु वचनाद्भवतीति वक्ष्यामः । तथा छागलेयः-

'पिण्डो यत्र निवर्तेत मघादिषु कथंचन ।
सांकल्पं तु तदा कार्यं नियमाद्ब्रह्मवादिभिः ॥'

सांकल्परूपं च वक्ष्यते ।

अत्र श्राद्धाङ्गतर्पणं पक्षश्राद्धे प्रतिदिनं श्राद्धोत्तरम् । सकृन्महालये तु परेऽह्नि कार्यम् ।

तदुक्तं नारदीये—

'पक्षश्राद्धं यदा कुर्यात्तर्पणं तु दिने दिने ।
सकृन्महालये चैव परेहनि तिलोदकम् ॥'

गर्गोऽपि-

'पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ॥' इति ।

तथा प्रयोगपारिजाते गर्गः—

'कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।
पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ॥
सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि ॥'

इदं निषिद्धदिनेपि कार्यम् ।

'तिथितीर्थविशेषेषु कार्यं प्रेते च सर्वदा ।'

इति स्मृत्यर्थसारोक्तेः ।

'तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥'

इति स्मृतिरत्नावल्यां वचनाच्च ॥

एतच्च श्राद्धं मलमासे न कार्यम् । तदाह भृगुः—

'वृद्धिश्राद्धं तथा सोमममग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते ॥' इति ।

हेमाद्रौ नागरखण्डे—

*'नभो वाथ नभस्यो वा मलमासो यदा भवेत्।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः॥'

एतच्च पित्रोर्मरणे प्रथमाब्दे *कृताकृतमिति त्रिस्थलीसेतौ भट्टाः।

इदं च नित्यं काम्यं च।

'पुत्रानायुस्तथारोग्यमैश्वर्यमतुलं तथा।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामान्सुपुष्कलान्॥'

इति(१) जाबाल्युक्तेः।

'वृश्चिके समतिक्रान्ते पितरो दैवतैः सह।
निःश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम्॥'

इति काष्र्णाजिनिवचनाच्च। तदतिक्रमे प्रायश्चित्तमुक्तमृग्विधाने—

(२)'दुरोअश्वस्य' मन्त्रं च दशवारं द्विमासयोः।

---

*नभोवेति। नन्वत्र यदाऽऽश्विनोऽधिकमासस्तदा तत्र कन्यार्कसत्त्वात् श्राद्धप्रसङ्गः। अत्र नव्याः—

'यातुधानप्रियो मासः कन्यार्के जायते यदा।
दैवं पित्र्यं तदा कर्म उत्तरे मासि युज्यते॥'

इति वचनात्तुलार्के कार्यमित्याहुः। *कृताकृतमिति। कृ-

---

(१) 'याज्ञवल्क्युक्तेः' इति पुस्तकान्तरे पाठः।

(२) स मन्त्रो ऋग्वेदसंहितायां प्रथमाष्टके चतुर्थाध्याये—'दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः। शिक्षानरः प्रदिवो अकामकर्शनः सखा सखिभ्यस्तमिदं गृणीमसि॥' इति। अस्य व्याख्या—'हे इन्द्र, त्वम् अश्वस्य दुरो दाताऽसि, तथा गोः पश्वादेर्दुरो दाताऽसि, तथा यवस्य यवादेर्धान्यजातस्य दुरो दातासि। वसुनः निवासहेतोर्धनस्येनः स्वामी पतिः सर्वेषां पालयिता। शिक्षानरः शिक्षतिर्दानकर्मा। शिक्षाया दानस्य नेताऽसि। प्रदिवः=पुराणः प्रगता दिवो

महालयं यदा न्यूनं तदा संपूर्णमिति तत् ॥' इति ।
द्विमासयोः कन्यातुलयोर्महालयश्राद्धं यदा हीनमित्यर्थः ॥
अत्र भरण्यां श्राद्धमतिप्रशस्तम् । तदुक्तं पृथिवीचन्द्रोदये मात्स्ये—

*'भरणी पितृपक्षे तु महती परिकीर्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥'

पृथिवीचन्द्रोदये श्रीधरीये बृहस्पतिः—

'नभस्यापरपक्षस्य द्वितीया यदि याम्यभे ।
तृतीया वाग्नितारामिः सहिता प्रीतिदा पितुः ॥'

एतत्पक्षे षष्ठी योगविशेषेण कपिलासंज्ञा । तदुक्तं वाराहे—

'नभस्यकृष्णपक्षे तु रोहिणीपातभूसुतैः ।
युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता ॥
व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् ।
कपिलां च द्विजाग्र्याय दत्त्वा क्रतुफलं लभेत् ॥'

पुराणसमुच्चये—

'भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते ।
पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ॥'

अत्र दर्शान्तत्वेन महालयो भाद्रपदकृष्णपक्षो

तेऽभ्युदयः, अकृते तु न दोषः । द्विमासयोर्महालयं यदा न्यूनमिति सम्बन्धः । *भरणीति । इदं च पिण्डरहितं कार्यम् ।

---

दिवत्ता यस्मिन् स तथोक्तः । अकामकर्शनः कामान् कर्शयति नाशयतीति कामकर्शनः न कामकर्शनः अकामकर्शनः हविर्दत्तवतां यजमानानां कामानभिमतफलप्रदानेन पूरयतीत्यर्थः । सखिभ्यः समानाख्यानेभ्य ऋत्विग्भ्यः सखा सखिवदत्यन्तं प्रियः, एवंभूतो य इन्द्रस्तं प्रति इदं स्तोत्रलक्षणं वचः गृणीमसि ब्रूमहे ।' इति श्रीमत्सायणाचार्याणाम् ।

ज्ञेय इत्युक्तं निर्णयामृते, हेमाद्रौ च। *हस्तार्कस्तु फ-लातिशयार्थः।

'संयोगे तु चतुर्णां वै निर्दिष्टा परमेष्ठिना।'

इति तत्रैवोक्तेः। अत्र विशेषो हेमाद्रौ स्कान्दे—

*'देवदारुं तथोशीरं कुङ्कुमैलामनःशिलाम्।
पत्रकं पद्मकं यष्टिं मधु गव्येन पेषयेत्॥
क्षीरेणालोड्य कल्केन स्नानं कुर्यात्समन्त्रकम्।
आपस्त्वमसि देवेश ज्योतिषां पतिरेव च॥
पापं नाशय मे देव वाङ्मनःकायकर्मजम्।
पञ्चगव्यकृतस्नानः पञ्चभङ्गैस्तु मार्जयेत्॥'

पञ्चभङ्गैः=पञ्चपल्लवैः। तथा—

'रत्नैर्नानाविधैर्युक्तं सौवर्णं कारयेद्रविम्।
शक्तितस्तु पलादूर्ध्वं तदर्धं कर्षतोपि वा॥
सौवर्णमरुणं कुर्यान्नौकां चैव तथा रथम्॥'

तथा—

'अल्पवित्तोपि यः कश्चित्सोपि कुर्यादिमं विधिम्।'

प्रभासखण्डे—

'स्थापयेदव्रणं कुम्भं चन्दनोदकपूरितम्।
रक्तवस्त्रयुगच्छन्नं ताम्रपात्रेण संयुतम्॥

---

"अयनद्वितये श्राद्धं विषुवद्द्वितये तथा।
भरणीषु च सर्वासु पिण्डनिर्वपणं न हि॥"

इति पुलस्त्यनिषेधात्। 'कन्यादिभरणिमघे' इति प्रोक्तं तु सति सप्तम्या व्याख्यातम्। 'तिथिनक्षत्रवारादि' इति वचनात्। ननु वाराहे योगचतुष्टयं पुराणसमुच्चये च तत्पञ्चकमिति कथं कपि-लाषष्ठीवत्सविशेषात्—*हस्तार्कस्त्विति। इयं च षष्ठी योग-विशेषेण पूर्वा वा परा वा ग्राह्या। *देवदार्विति।

रथो रौक्मपलस्यैव एकचक्रः सुचित्रितः ।
सौवर्णपलसंयुक्तां मूर्तिं सूर्यस्य कारयेत् ॥'

ततः सूर्यं कपिलां च षोडशोपचारैः संपूज्य दद्यात् ।

'दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मा दिवाकरः ।
कपिलासहितो देवो मम मुक्तिं प्रयच्छतु ॥
यस्मात्त्वं कपिले पुण्या सर्वलोकस्य पावनी ।
प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भव ॥' इति ।

विशेषान्तरं तत्रैव ज्ञेयमिति दिक् ॥

इयमेव चन्द्रषष्ठी । सा चन्द्रोदयव्यापिनी ग्राह्या । उभयत्र तथात्वे पूर्वा । तदुक्तं भविष्ये—

'तद्वद्भाद्रपदे मासि षष्ठ्यां पक्षे सितेतरे ।
चन्द्रषष्ठीव्रतं कुर्यात्पूर्वविधः प्रशस्यते ॥
चन्द्रोदये यदा षष्ठी पूर्वाह्णे चापरेऽहनि ।
चन्द्रषष्ठ्यसिते पक्षे सैवोपोष्या प्रयत्नतः ॥' इति ।

अष्टम्यामाश्वलायनेन मघावर्षसंज्ञं श्राद्धमुक्तम् ॥

'एतेन माघ्यावर्षं प्रौष्ठपद्या अपरपक्षे' इति । *इदं

---

"पञ्चम्यामेकभक्तं तु कुर्यात्तत्र विचक्षणः ।
षष्ठ्यां प्रातः समुत्थाय कृत्वाऽऽदौ दन्तधावनम् ॥"

दन्तधावनमिति नित्यकर्मोपलक्षणम् । दन्तधावनं च काष्ठं विनेति स्मर्तव्यम् ।

"जलपूर्णाञ्जलिं कृत्वा इमं मन्त्रमुदीरयेत् ।
निराहारोऽद्य देवेशस्त्वद्भक्तस्त्वत्परायणः ॥
पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर ।
अर्घ्यं दत्त्वाऽथ सङ्कल्पं कृत्वा स्नात्वा शुचिस्मितः ॥"

इत्यनन्तरमिदम् । गव्येन=क्षीरेण । कपिलां=गाम् । विशेषान्तरं कपिलाषष्ठीव्रतान्तरम् । *इदमिति । अष्टका=अन्वष्टका, पूर्वेद्युःश्राद्धा-

सप्तम्यादिषु त्रिष्वहःसु कार्यम्' इति नारायणवृत्तिः । हरदत्तस्तु मघायुक्तवर्षासु भवं त्रयोदशीश्राद्धमिति व्याचख्यौ । पृथ्वीचन्द्रोदये ब्राह्मे—

'आषाढ्याः पञ्चमे पक्षे गया माघ्याष्टमी स्मृता ।
त्रयोदशी गजच्छाया गयातुल्या तु पैतृके ॥

आश्विनकृष्णाष्टम्यां *महालक्ष्मीव्रतम् । तत्र निर्णयामृते पुराणसमुच्चये—

'श्रियोऽर्चनं भाद्रपदे सिताष्टमीं
प्रारभ्य *कन्यामगते च सूर्ये ।
समापयेत्तत्र तिथौ च यावत्
सूर्यस्तु पूर्वार्धगतो युवत्याः ॥' इति ।

तत्रैव—

'कन्यागतेऽर्के प्रारभ्य कर्तव्यं न श्रियोऽर्चनम् ।
हस्तप्रान्तदलस्थेऽर्के तद्व्रतं न समापयेत् ॥
पूजनीया गृहस्थानामष्टमी प्रावृषि श्रियः ।
दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करी तिथिः ॥,

तथा—

---

न्युक्ता एतेनेत्युक्तेः । माघ्यावर्षामिति पठित्वा मघ्ये वर्षासु भवमिति केचिदाहुः । *महालक्ष्मीव्रतमिति । तदनुरोधेन पूर्वाणि पञ्चदश दिनानि ग्राह्याणीति भावः । अत्र भाद्रशुक्लाष्टमीमारभ्याश्विनकृष्णाष्टमीपर्यन्तं षोडशदिनेषु महालक्ष्मीयात्रा कार्या ।

( (१)'महालक्ष्म्यष्टमीं प्राप्य तत्र यात्रा कृता नृणाम् ।
संपूजीतेह विधिवत् पद्मा स च न मुञ्चति ॥'

इति काशीखण्डात् । महालक्ष्म्यष्टमी=भाद्रशुक्लाष्टमी । तत्र [illegible] प्रारभ्य महालक्ष्म्यष्टमी=आश्विनकृष्णा-

---

(१) कंसान्तर्गतो ग्रन्थः क्वचित्पुस्तके नास्ति ।

दीपिकायां तु मातृश्राद्धमादौ कार्यमित्युक्तम्। मातृयजनं त्वन्वष्टकास्यादिति इति हेमाद्रौ। ब्राह्मेऽपि—

*'अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते।' इति।

अत्र *शाखाभेदेन व्यवस्थेति पृथ्वीचन्द्रोदयः। *जीवत्पितृकाविषयमिति निर्णयदीपः। इदं च जीवत्पितृकेणापि कार्यम्। तदुक्तं निर्णयामृते मैत्रायणीयपरिशिष्टे—

'आन्वष्टक्यं गयाप्राप्तौ मृतां यच्च मृतेऽहनि।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति॥'इति।

*यद्यपि जीवत्पितृकस्य पश्चाद्यन्वष्टका अवश्यंकर्तव्याः, *तथाप्यशक्तस्येयमावश्यकी।

'प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति।'

इति हेमाद्रौ पाद्मोक्तेः।

*'सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ।
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः॥'

इति सूतेनावश्यकत्वोक्तेश्च। अत्र *'सर्वासाम्' इत्युक्तेः स्वमातरि जीवन्त्यामपि सपत्नमातृभ्यो दद्यात्। तन्मरणे सति तस्यै ताभ्यश्च दद्यादित्युक्तं जीव-

---

*शाखेति। बह्वृचानां पितृपूर्वम्। तत्सूत्रे तथोक्तेः। अन्येषां मातृपूर्वम्। *जीवदिति। तस्य पितृतर्पणाभावात्। अत्र कल्पानुपपत्तेररुचिः। आन्वष्टक्यं=भाद्रकृष्णा नवमी। श्राद्धमात्राभिप्रायेण शङ्कते— *यद्यपीति। तदेवाहृत्य समाधत्ते— *तथापीति। अन्वष्टकाश्राद्धोत्तरश्राद्धमन्वष्टक्यम्। 'अपरेद्युरन्वष्टक्यम्'इत्युक्तेरिति अष्टकामालम्ब्य शङ्कोत्तरे कृते। द्वितीये जीवत्पितृकस्य मृतमातृकस्य तत्रापीति। *सर्वासामिति। अत्र ग्रन्थकृन्मतेऽपि मातामहा न कार्याः। श्रुतदेवतयैवाकाङ्क्षानिवृत्तेः। अत्र त्वित्युक्तं [illegible] ऽऽत्रेति।

त्पितृकनिर्णये गुरुभिः । अत्र सर्वासां नामनिर्देशेनै*को ब्राह्मणो*ऽर्घः पिण्डश्च । नामैक्ये तु *द्विवचनादिप्रयोग इत्युक्तं नारायणवृत्तौ । अन्वष्टकाश्राद्धं *तद्यागश्च गोभिलीयानां मध्यमायामेव, न सर्वासु* ।

'अन्वष्टक्यं मध्यमायामिति गोभिलगौतमौ ।'

इति छन्दोगपरिशिष्टात् । अत्र भर्तृमरणोत्तरं पूर्वमृतमातृश्राद्धं न कार्यमिति केचिदाहुः । पठन्ति च—

'श्राद्धं नवम्यां कुर्यात्तन्मृते भर्तरि लुप्यते ।' इति ।

तदेतन्निर्मूलत्वान्मूर्खप्रतारणमात्रम् । श्राद्धदीपकलिकायां ब्राह्मे—

*'पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः ।
श्राद्धार्हा मातरो ज्ञेयाः श्राद्धं तत्र प्रदीयते ॥' इति ।

*अत्र देशाचाराद्व्यवस्था ।

---

आन्वष्टक्यमधिकृत्यैवेयं वृत्तिः मातृश्राद्धेऽप्यालम्बनीया बाधकाभावात् । तत्र ब्राह्मणभेदेऽर्घदानभेदवाक्यं व्यर्थमित्यत उक्तम्—*एक इति । *अर्घ इति । अर्घदानं तु पृथक् । 'अनेका मातरो यस्य' इत्युक्तगालववाक्यात् । *द्विवचनादीति । एकशेषोत्तरमित्यादि । नामभेदे द्वन्द्वोत्तरम् । द्विवचनादेः सत्त्वात् । एतच्च सधवाया एव मातुर्मरणे अविधवानवमीसमाख्यानात् इत्येके । 'अविधवाद्विधवाया अपि'इति मयूखः । तद्यागो=मातृयागः । न सर्वासु=न पूर्वपरयोः 'स्त्रीशूद्रौ नाधीयातामू'इतिवद्विशेषतः प्रान्तरनिषेधात् । *पितृमिति । प्रत्यासत्तिविशेषपरिचयायेदम् । याः काश्चिदिति दर्शनात् । तेनापुत्रपत्न्यादेरपि श्राद्धसिद्धिः । पितृष्वस्रादेः श्राद्धपरमिति वदतां मते त्वाह—*अत्रेति । यस्तु जीवन्त्यां मातरि पितृष्वस्रादिभिः पालितः तद्धनग्राही वा तत्परमिति तु प्रतीमः । अत्र भार्याविरहितः=अविवाहि-

इदं चानुपनीतेनापि कार्यम् । तदुक्तं श्राद्धशूलपाणौ मात्स्ये—

'अमावास्याष्टकाकृष्णपक्षपञ्चदशीषु च ।'

इत्यभिधाय—

'एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ॥
भार्याविरहितोप्येतत् *प्रवासस्थोपि नित्यशः ।
शूद्रोप्यमन्त्रवत् कुर्यादनेन विधिना बुधः ॥' इति ।

तेन* साग्नेरेवेदमिति *परास्तम् । *अन्वष्टकातः पृथगेवेदं मातुः श्राद्धमित्यपि परास्तम् । *लाघवेन *मूलैक्यादष्टकापवादाविशेषाच्च ।नेनान्यत्रान्वष्टकाश्राद्धस्य

---

तः, मृतभार्यश्च । *प्रवासस्थ इति । पत्न्यभावाभिप्रायम् । तेन= भार्याविरहितात्युक्त्या । *साग्नेरेवेति । अन्वष्टकायां पिण्डपितृयज्ञकल्पसत्त्वात् तस्य साग्निकमात्रविषयत्वात् । *परास्तमिति । निरग्न्यादेस्तु पाणिहोमः । आपस्तम्बीयानां तु लौकिकाग्नौ होम इति स्मर्तव्यम् । नन्वत्र सर्वेषां साग्न्यनग्निजीवदजीवत्पितृकाणामधिकारे 'मातुः श्राद्धं सुतः कुर्यात्'इति कुत इत्यत्र केषां चित्समाधानमुत्थापयति-*अन्वष्टकात इति । *लाघवेनेति । अन्वष्टकाश्राद्धं नवदैवत्यं च मृतपितृकं प्रत्येव सम्भवतीयतस्तदन्तर्गतमातृश्राद्धे एव जीवत्पितृकस्याधिकारो 'मातुः श्राद्धं सुतः कुर्यात्'इत्यनेन बोध्यते । इतोऽपि च न मातामहचर्चाऽपि । तदेतदुक्तम्— *मूलैक्यादिति । अयं भावः—भवद्रीत्या श्राद्धद्वये भिन्नैव श्रुतिः कल्प्या स्यात् । मम तु सर्वाधिकारिकं श्राद्धं मूलभूतश्रुत्या बोध्यम् । तत्र मृतपितृकस्य प्रधानत्रयम् । जीवत्पितृकस्य त्वेकं प्रधानमिति विशेषव्युत्पादकं 'मातुः श्राद्धं सुतः कुर्यात्'इति वचनम् ।

"पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।"

*अङ्गस्याप्य*त्र प्रधानत्वं वचनात्। *(१)अवेष्टेरिव राजसूयान्तर्गताया 'एतयान्नाद्यकामं याजयेत्' इति फलार्थ-

---

इति बहुवचनवशेन पितृपदस्य जनकपरत्वादिह तदभावादपि न मातामहानां प्रसक्तिरिति भावः । *अङ्गस्येति । तावताऽपि तदन्तर्गतमातृश्राद्धे स्वप्राधान्यमस्त्येवेत्यप्याहुः । वस्तुतस्तु 'अमावास्याष्टका'इति विधिः साग्निकपर एव । अन्वष्टक्यस्य पितृयज्ञकल्पनियतत्वात् । अनुपनीतादीनां च तत्कल्पासम्भवेनाप्राप्तमेव श्राद्धमन्वष्टक्यातिदेशेन विधीयते इति मतमुत्थापयति—तेनेति । मूलैक्यादिति । यानि कल्पसूत्राणि पुराणानि च तेषां सर्वेषां एकैव श्रुतिर्मूलत्वेन कल्प्यते । साग्निनिरग्निभेदेन पितृयज्ञभावाभावौ तु प्रयोगविधेरेव भेदकौ नोत्पत्तिविधेरिति भावः । ननु कश्चन प्रयोगः पितृयज्ञकल्पेन कश्चित्तु तं विनापीति कथमुत्पत्तिविधेर्न भेद इत्यत्राह—अष्टकेति । न चायमभ्यासः । अन्यपरपुनःश्रवणं हि अभ्यासः । न चान्यपरतेति भावः । मूलैक्येपि प्रयोगभेदं दृष्टान्तमुक्त्वा व्युत्पादयति—तेनेति । *अन्यत्र=साग्निप्रयोगे । *अत्र=निरग्निप्रयोगे । वचनात्=एतच्चानुपनीतोऽपीति वाक्यात् । वस्तुतस्तु

"अष्टकान्वष्टकास्तिस्रस्तथैव च नृपोत्तम ।
एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ॥"

इति वाक्यभेदेन निर्देशादन्वष्टकाश्राद्धं स्वतन्त्रमेव न च कस्याप्यङ्गं न च बृहस्पतिसववदस्यापि प्रयोगबहिर्भूतगतत्वमस्तु बृहस्पतिसवस्य पृथक् निर्देशाभावेन विशेषादिति ।

नन्वेवं कथं तस्येह [illegible]- *अवेष्टेरिवेति । राजाधि-

---

(१) अवेष्टिः राजसूयान्तर्गतेष्टिः ।

कारिकराजसूयान्तर्गताया अवेष्टेरप्राप्तौ "यदि ब्राह्मणो यजेत*।एत-
यान्नाद्यकामं याजयेत्"इति एतच्छब्देनोपादानं तद्वत् मृतपितृकाधि-
कारिकान्वष्टक्यान्तर्गतस्य मातृश्राद्धस्याप्राप्तौ एनच्चेत्येतच्छब्देनो-
पादानमित्यर्थः । एवमवेष्टौ विप्रो राजा चाधिकारिणौ मातृश्राद्धे-
ऽपि जीवदजीवत्पितृकौ तथैव तुल्यमेवेत्युभयत्राप्युत्पत्तिविधेर्न भेद
स इत्यपि बोध्यम् । ननु जीवत्पितृकस्य 'सपितुः' इतिनिषेधेनान-
धिकारे प्राप्ते

"मातुः श्राद्धं सुतः कुर्यात् पितर्यपि च जीवति ।"

इति तत्प्राप्तिफलकोऽयमपूर्वविधिरेव स्यात् । ब्राह्मणस्य
'राजाधिकारिकराजसूयाप्राप्तौ 'यदि ब्राह्मणो यजेत'इति विधि-
वत् 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति ज्ञानार्थतया काम्ये सं-
न्यासे सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारादतथाभूतस्यातुरस्याधिका-
राप्राप्तौ 'यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत्' इति तत्प्राप्ति-
फलकविधित्वादिति मैवम् । यदि ब्राह्मणो यजेतेत्याद्यवेष्टि-
प्रयोगविधायकवाक्ये तस्या राजसूयान्तर्गतत्वेनेतरसापेक्षतयै-
व साधनत्वावगमाद्राजसूयसाध्यत्वेनावगतस्य स्वाराज्यस्यावेष्टि-
साध्यत्वेनोपस्थानासम्भवाद्विश्वजिदादिन्यायेन फलापरिहारणाय
'एतयान्नाद्यकामम्' इत्येतेन फलं समर्प्यते आतुरवाक्ये तु यदहरेवे-
ति संन्यासस्य निरपेक्षसाधनत्वावगमात्प्रागेव तत्साध्यत्वेनाव-
गतस्य ज्ञानस्याप्रत्यूहहेतुसिद्धस्य फलान्तरोपस्थापकापेक्षैव नास्ती-
ति प्रकृतज्ञानमेव फलमन्वेति तद्वदष्टकान्तर्गतस्य मातृश्राद्धस्येतर-
सापेक्षत्वेन साधनतया तत्साध्यत्वेनावगतस्य प्रत्यवायानुत्पाद-
स्यैव जीवत्पितृकाधिकारिकमातृश्राद्धेऽपि फलत्वं न तु स्व-
र्गस्यान्यस्य वा कस्यचित् । यथा यावज्जीवादिवाक्यस्य उपस्थित-
मपि स्वर्गं विहाय निष्कामं प्रति प्रयोगनिर्वाहार्थं पापक्षयार्थत्वन्त-
द्वत् । न चाङ्गत्वे फलसम्भवात्पर्णतादिवदिति प्राधान्यं नापि प्रत्यवा-

त्त्वम् । *अत्राष्टका=अन्वष्टका *पूर्वानुरोधात् । तथा-ग्निपुराणे—

'अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥'

आपस्तम्बानां तु 'अष्टकासु च वृद्धौ च' इति भाष्यकारैः पाठादष्टकायां मातृश्राद्धम् *(१)छन्दोगैस्त्वत्र मातृमातामहश्राद्धं न कार्यं किन्तु त्रिपुरुषमेव ।

'न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
(२)कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ॥
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥'

इति छन्दोगपरिशिष्टात् । 'अन्वष्टकासु तेषां कर्षूविधानात्' इति शूलपाणिः । यत्तु—

'*नभिस्यपक्षे नवमी पुण्या भाद्रपदे हि या ।
चत्वारः पार्वणाः कार्याः पितृपक्षे मनीषिभिः ॥'

इति, तद्देशाचारतो व्यवस्थितं ज्ञेयम् । इदं जीवत्पि-

---

यानुत्पादस्य फलत्वम् क्षेमत्वादिति विशेषणमभिप्रेत्य दार्ष्टान्तिकं प्रधानत्वं, दृष्टान्ते च फलार्थत्वमित्येवोक्तम् । अन्यथा दार्ष्टान्तिके फलार्थत्वं ब्रूयात् । एतावताऽयमधिकारविधिविशेषमात्रं नोत्पत्तिविधिभेद इति भावः । एवं यथाऽऽतुरस्य मनसा वाचा वेत्युक्त्या कथंचित्प्रधानमात्रेण फलसिद्धिः । तथा जीवत्पितृकस्य मातृश्राद्धमात्रेणेति न कोऽपि दोषः । ननु अमावास्याष्टकेति अष्टकायामेवानुपनीतादेरधिकारः स्यादित्यत्राह—*अत्रेति । *पूर्वेति । प्रौष्ठपद्यष्टकेत्यर्थः । *छन्दोगैरिति । मृतमातृकैरपीत्यादि । *नभिस्येति

---

(१) छन्दोगाः सामवेदिनः ।
(२) कर्षू[illegible] पिण्डोपचारार्थं द्रष्टव्यः ।

नृकेणापि सपिण्डं कार्यम् । हेमाद्रौ विष्णुधर्मोत्तरे—

'अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च ।'

इत्युपक्रम्य—

'पिण्डनिर्वपणं कार्यं तस्यामपि नृसत्तम ।'

इति वचनं श्राद्धविधिना पिण्डदाने प्राप्ते पुनस्तत्कीर्तनं यस्य जीवत्पितृकगर्भिणीपतित्वादिना पिण्डदानं निषिद्धं तस्य तत्प्राप्त्यर्थमिति श्रीतातचरणाः ।

अत्र सुवासिनीभोजनमुक्तं मार्कण्डेयपुराणे—

'मातुः श्राद्धे तु सम्प्राप्ते ब्राह्मणैः सह भोजनम् ।
सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् ॥
*(१)भर्तुरग्रे मृता नारी सह दाहेन वा मृता ।
तस्याः स्थाने नियुञ्जीत विप्रैः सह सुवासिनीम् ॥'

तत्रैव मदालसावाक्यम्—

स्त्रीश्राद्धे पुत्र देयाः स्युरलङ्काराश्च योषिते ।
मञ्जीरमेखलादानकर्णिकाकङ्कणादयः ।' इति ।

अत्राशक्तावनुकल्पमाहाश्वलायनः—

'अनडुहो यवसमाहरेदग्निना वा कक्षमुपोषेदेषा मेऽष्टकेति न त्वेवानष्टकः स्यात' इति ।

हेमाद्रौ पितामहः—

'अमावास्या व्यतीपातपौर्णमास्यष्टकासु च ।

---

निर्मूलमिति नव्याः । *भर्तुरिति । विधवाश्राद्धे सुवा-

---

(१) धर्मसिन्धौ तु-'अत एवास्या अविधवानवमीत्वप्रसिद्धिः । अतः पत्न्या अपि नवमीश्राद्धं कार्यम् । अस्याविधवानवमीश्राद्धस्य महालयवद्यावद्दार्श्विकदर्शनं गौणकालः' इत्युक्तम् ।

विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते॥'

अकरणे च प्रायश्चित्तमुक्तमृग्विधाने—

'एभि(१)र्द्युभिर्जपेन्मन्त्रं शतवारं तु तद्दिने ।
आन्वष्टक्यं यदा न्यूनं संपूर्णं याति सर्वथा ॥' इति॥

एतत्पक्षे द्वादश्यां विशेषः पृथ्वीचन्द्रोदये वायवीये—

'संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।
महालये तु यच्छ्राद्धं *द्वादश्यां पार्वणं तु तत् ॥' इति ।

---

सिन्यनावश्यकत्वार्थम् । एतदेव मातुराब्दिकादिसमस्तश्राद्धे सुवासिनीप्रापकम् । भोजनं=भोज्यमन्नम् । सहदाहेनेति । एतच्च सहदग्धाया मातुराब्दिकादाविव नवमीश्राद्धे सुवासिनीप्रापकं नवमीश्राद्धमपि प्रापयति । यवसम्=आर्द्रतृणम्, कक्षं=शुष्कतृणम् । उपोषेत्=दहेत् । अयं च—

अग्निना वा दहेत्कक्षं श्राद्धकाले उपागते ।
तृणानि वा गवे दद्यात्पिण्डान्वाऽप्यथ निर्वपेत् ॥

इत्यग्रे वचनात्सर्वश्राद्धानुकल्पः । 'अष्टकासु च' इति चकारादन्वष्टकाग्रहः । अस्यामेव नवम्यां बिल्वशाखायां देवीबोधनं वक्ष्यति । *द्वादश्यामिति । सकृत्करणपक्षे वानप्रस्थादेरपि उक्तं

---

(१)—तत्र पूर्वं ममान्वष्टक्याकरणजनितप्रत्यवायपरिहारार्थं शतवारमेभिर्द्युभिः सुमना इति मन्त्रजपं करिष्ये इति संकल्प्य तज्जपं कुर्यात् । मन्त्रस्तु—"एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना । इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥" इति । ऋ० सं० अ० १ अ० ४ । अस्य—'हे इन्द्र, एभिरस्माभिर्दत्तैर्द्युभिर्दीप्तैश्चरुपुरोडाशादिभिः एभिरिन्दुभिः पुरोवर्तिभिस्तुभ्यं दत्तैः सोमैश्च प्रीतस्त्वं अस्माकममतिं दारिद्र्यं गोभिस्त्वया दत्तैः पशुभिरश्विनाऽश्वयुक्तेन धनेन च निरुन्धानो निवर्तयन् सुमनाः शोभनमना भव । वयमिन्दुभिरस्माभिर्दत्तैः सोमैः प्रीतेनेन्द्रेण दस्युं उपक्षपयितारं शत्रुं दरयन्तो हिंसन्तः अत एव युतद्वेषसः पृथग्भूतशत्रुकाः भूत्वा इषा इन्द्रदत्तेनान्नेन संरभेमहि संरब्धा भवेम । संगच्छेमहीत्यर्थः ।' इति श्रीमत्सायणाचार्यकृता व्याख्या ।

अथ त्रयोदशीश्राद्धम् । तत्र चन्द्रिका—

*'त्रयोदशी भाद्रपदी कृष्णा *मुख्या पितृप्रिया ।
तृप्यन्ति पितरस्तस्यां स्वयं पञ्चशतं समाः ॥
मघायुतायां तस्यां तु जलाद्यैरपि तोषिताः ।
तृप्यन्ति पितरस्तद्वद्वर्षाणामयुतायुतम् ॥'

प्रयोगपारिजाते शङ्खः—

'प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं तु कर्तव्यं मधुना पायसेन च ॥
प्रजामिष्टां यशः स्वर्गमारोग्यं च धनं तथा ।
नृणा श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः ॥'

एतन्नित्यमपि । पृथ्वीचन्द्रोदये विष्णुधर्मे—

'प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी ।

---

प्राक् । अत्र—

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षय्यमेव स्याद्वर्षासु च मघासु च ॥

इति मानवे मघासु चेति पृथक् चकारात् त्रयोदशीश्राद्धमघाश्राद्धयोर्भेदः । "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इत्यत्र चकारादाग्नेयभेदवत् । तेन दिनान्तरगासु मघासु मघाश्राद्धं भवति । एवं च मघात्रयोदश्योर्योगे फलाधिक्यं दर्शयति—*त्रयोदशीति । अत्र

"आषाढ्याः पञ्चमे पक्षे मघामध्याष्टमी स्मृता ।
त्रयोदशीगजच्छाया गयातुल्ये तु पैतृके ॥"

इत्यादितोऽपरपक्षनिमित्तकमेव सकृत्पक्षाभिन्नेन पक्षेण महालयत्रयोदश्यां क्रियमाणं श्राद्धं त्रयोदशीश्राद्धमिति प्रतीयते । अतः महालयत्रयोदशीश्राद्धस्य अपरपक्षश्राद्धाद्भेदं व्युत्पादयति—त्रयोदशीति । *मुख्या पितृप्रियेति । मघायुक्तां त्रयोदशीं प्राप्येति तथा कृष्णा त्रयोदशीति चोक्तेः अपरपक्षश्राद्धस्य

इत्युक्त्वा—

'एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥'

इत्युक्तेः । एतच्चाऽविभक्तैरपि पृथक्कार्यम् । तथा च हेमाद्रौ—

'विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं पृथक् सुताः ।
मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना ॥' इति ।

अपरार्के वायवीये—

*'हंसे हस्तास्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु ॥'

*अत्र च—

---

प्रत्यभिज्ञानाच्च महालयत्रयोदशीश्राद्धमपरपक्षश्राद्धाद्भिन्नम् । अत एव तद्विशेषान्महालयश्राद्धादपि भिन्नम् । एतत्त्रयोदश्याः कृष्णपक्षाविनाभूतत्वेऽपि न त्रयोदशीश्राद्धं कृष्णपक्षश्राद्धाविनाभूतं सकृत्करणपक्षे त्रयोदश्यां तदभावात् । अस्य नित्यत्वाच्च काम्यकृष्णपक्षश्राद्धादपि भेदः । युगादिश्राद्धात्तु त्रयोदशीश्राद्धं न भिद्यते, त्रयोदशीविशेषस्य युगादित्वाविनाभावात् । युगादिश्राद्धं विधाय त्रयोदशीश्राद्धविधानं तु अयनादिश्राद्धविधानवदावश्यकत्वार्थम्, फलातिशयार्थञ्च । *हंसे इति । पारिभाषिकी गजच्छाया । उक्तवचनेषु क्वचिन्मघायोगः स्मर्यते क्वचित्तु नेत्यतो विचारमारभते—*अत्र चेति । केवलमघावाक्यानां केवलत्रयोदशीवाक्यानां चार्थवादत्वोपरामादर्थवादानां विधिशेषत्वेन तदनुरोधेन नेयत्वादिति भावः । अत्रेदमरुचिबीजम्—लाघवमात्रेणैकविधिकल्पनास्वीकारे गजच्छायाख्ययोगयुक्तायामेव त्रयोदश्यां कुञ्जरप्राक्छाये एव श्राद्धं स्यान्नान्यत्रेति । अत्र च केवलापि त्रयोदशी कालः तद्वाक्ये त्रयोदशीपदस्य यथाश्रुतार्थकत्वेनैवोपपत्तेर्मघायुक्ततत्परत्वे मानाभावात् ।

'अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥'

इति विष्णुमनुवचने केवलत्रयोदशीश्रुतेर्मघा गुण इति कल्पतरुः । शूलपाणिस्तु—'केवलवाक्यानामर्थवादत्वाद्विधौ च मघायोगश्रुतेर्विधिलाघवाद्विशिष्टमेव(१)

---

"अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्काले सिते पक्षे त्रयोदश्यां समाहितः ॥
मधुप्लुतेन यः श्राद्धं पायसेन समाचरेत् ।
कार्तिकं सकलं चाऽपि प्राक्छाये कुञ्जरस्य च ॥"

इति मन्वादिस्मृतौ त्रयोदशीमात्रप्रशंसनाच्च । कार्तिकं सकलं चापीति च पृथगेव मंत्रसो ज्ञेया । सकलकार्तिकव्यापिनः मधुप्लुतपायसद्रव्यकस्य श्राद्धस्य विधिः। प्राक्छाये कुञ्जरस्य चेति च पृथगेव आपराह्णिकहस्तिच्छायारूपदेशाङ्गस्य । अत एव महाभारते—

"अपि नः स कुले जायात् यो नो दद्यात् त्रयोदशीम् ।
मघासु सर्पिषा युक्तं पायसं दक्षिणायने ॥
अनेन सर्वलोकेन मघासु च यतव्रतः ।
हस्तिच्छायासु च तथा कर्णव्यजनवीजिनम्" ॥ इति ।

"परमान्नं तु यो दद्यात्पितॄणां मधुना सह ।
छायायां कुञ्जरेन्द्रस्य पूर्वस्यां दक्षिणामुखः ॥"

इति विश्वामित्रोक्तेश्च । एवं महालयपक्षदिनान्तरगताकेवलमघापि पृथक्कालः । 'मधुमांसैश्च' इतिवचने

यत् किञ्चिन् मधुना मिश्रं प्रदद्यातु त्रयोदशीम् ।
तदप्यक्षय्यमेव स्याद्वर्षासु च मघासु च ॥"

इति मानवे च पृथक् मघासु चेति चकाराच्च । मधु च कलौ-

---

[१] विशिष्टशब्देन मघाविशिष्टं ज्ञेयम् ।

निमित्तम्' इत्याह । *वस्तुतस्तु—

'मधुमांसैश्च शाकैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं *वर्षासु च मघासु च ॥'

इति वासिष्ठवचने केवलमघाश्रुतेर्विनिगमकाभावा- दुभयं भिन्नं निमित्तं, पूर्वोक्तवचनाच्च योगाधिक्ये फला- धिक्यम् । अत एव याज्ञवल्क्यः ।

'तथा वर्षात्रयोदश्यां मघासु च विशेषतः ।' इति ।

त्रयोदशीश्राद्धं नित्यम् । अन्यत्काम्यम् ।

*अत्र 'त्रयोदश्यां *बहुपुत्रा युवमारिणस्तु भवन्ति'

---

वर्ज्यम्'श्राद्धे मांसं तथा मधु'इति वाक्यात् इत्यभिप्रेत्याह—*व- स्तुतस्त्विति । तस्य परस्परनिरपेक्षैकक्रियान्वयलक्षणसमुच्चयार्थ- त्वात् । अत एव न गुणः । आश्रयीभूतायास्त्रयोदश्या अत्रा- श्रवणाच्च । *वर्षास्विति । ऋतुसंवत्सराभिप्रायेण । मासचतु- ष्कात्मकवर्षर्तुमभिप्रेत्य—

"चतुरो वार्षिकान्मासान् यो मांसं परिवर्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ॥"

इत्यादितद्व्यवहारात् । एतच्च त्रयोदशीविशेषणम् ।

"प्रावृट्काले ऽसिते पक्षे त्रयोदश्याम्" "तथा वर्षात्रयोदश्याम्"

इत्यादिवचनात् । योगाधिक्ये मघात्रयोदश्युभययोगे—

"यो नो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञितः ।
भवेन्मघायां सिंहे च शशिन्यर्के करे स्थितः ॥"

इति ब्राह्मे कुञ्जरच्छाययोगे प्राशस्त्यातिशयात् । अत्र सा- मान्यकृष्णपक्षत्रयोदश्यां ज्ञातिश्रैष्ठ्यादिफलकं काम्यमेव श्राद्धम् । महालयापरपक्षत्रयोदश्यां तु पक्षश्राद्धाभ्यां भिन्नं युगादित्वानिमि- त्तकमितरयुगादिश्राद्धापेक्षया ऽत्यावश्यकमिति स्थिते त- न्निषेधं विचारयति—*अत्रेति । कृष्णत्रयोदशीश्राद्धप- क्षेऽयं ग्रन्थः । त्रयोदश्यामित्येतावन्मात्रोक्तेः । हेमाद्रिप्रमुखा

इत्यापस्तम्बोक्तेर्युवमारित्वमपत्यदोषं सहिष्णोरपत्यमात्रार्थिनः स्मृत्यन्तरोक्तधनार्थिनो वाधिकार इति कल्पतरुः। *अपत्यनिन्दया तदर्थिनोऽनधिकारात् फलान्तरकामस्यैवाधिकार इति हलायुधः। एतत्पिण्डरहितं कार्यम्।

'मघायुक्तत्रयोदश्यां पिण्डनिर्वपणं द्विजः।
ससंतानो नैव कुर्यान्नित्यं ते कवयो विदुः॥'

इतिबृहत्पराशरोक्तेः। इदं मलमासेपि कार्यम्।

'मघात्रयोदशीश्राद्धं प्रत्युपास्थितिहेतुकम्।
अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे॥'

---

इत्याद्यग्रिमग्रन्थस्तु महालयत्रयोदशीश्राद्धपरः। तत्र निषेधोन्नायकनिन्दामाह—*बाह्विति। युवानः समनन्तरजानिष्यमाणापेक्षया पूर्वोत्पन्ना इति यावत्। ते म्रियन्ते इति व्युत्पत्त्या पुत्रवद्गृहिणोऽन्यबहुपुत्रलाभार्थं तच्छ्राद्धनिषेधोयम्। अत एवैतत्सामान्यतोदृष्टमूलक एव शिष्टानामेकमात्रपुत्रवतो बहुपुत्रकामनया पुत्रार्थविहितहरिवंशश्रवणादिकर्मानाचारः सङ्गच्छते। अत एव संतानरहितस्य तद्वतोऽपि वा तदतिरिक्तमोक्षादिफलार्थिनः न त्रयोदशीसामान्यश्राद्धनिषेधः।

"यो वाञ्छति नरो मुक्तिं पितृभिः सह चात्मनः।
असन्तानश्च यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी॥"

इत्यादिस्कान्दात्। चकारः असन्तानस्याधिकारान्तरार्थः। तदेवाह—*अपत्येति। तस्मादयमर्थः। सामान्यकृष्णत्रयोदशीश्राद्धमेव पुत्रवता बहुपुत्रेच्छया न कर्तव्यम्। महालयत्रयोदशीश्राद्धं च पितृवर्गमात्रस्य न कर्तव्यं किन्तु मातामहवर्गस्यापि। तत्रापि पिण्डदानं न कर्तव्यं, किन्तु मधुघृतप्लुतपायसादिना ब्राह्मणभोजनमात्रमिति। पूर्वोत्तरग्रन्थस्तु सुमतिमिलापनीयः। प्रतीत्यादिप्रतीकाभ्यां केवलमघाश्राद्धं केवलत्रयोदशीश्राद्धं च

इति काठकगृह्योक्तेः। यानि तु अङ्गिराः—

'त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम् ॥'

वामनपुराणे—

त्रयोदश्यां तु वै श्राद्धं न कुर्यात्पुत्रवान् गृही।'

इत्यादीनि वचनानि तानि पुत्रवद्विषयाणि वा, (१)(महालयस्थभिन्नत्रयोदशीविषयाणि वा, काम्यश्राद्धविषयाणि वा,) सपिण्डकश्राद्धविषयाणि वेति केचित्। हेमाद्रिप्रमुखास्त्वेकवर्गश्राद्धविषयाणि।

---

विशिष्टनिमित्तकत्वेन सगतिकत्वेन च शुद्धमास एव कार्यं न मले इति सूचितम्। ज्येष्ठपुत्रस्येति। समनन्तरजानिष्यमाणापेक्षया पूर्वोत्पन्नो ज्येष्ठ इति केचित्।

"ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्रो विवर्जयेत्" ॥

इति वत्सर्वज्येष्ठ एवेत्यन्ये। पुत्रवदिति। पुत्रवत्पदश्रवणात्। महालयेति। गजच्छायायाः श्राद्धकालत्वात्। काम्येति। नित्यस्य निषेद्धुमशक्यत्वात्। सपिण्डकेति। उक्तवचने कृष्णपक्षत्रयोदशीमात्रप्रतीतावपि—

"ऋक्षे पैत्रे यदा चन्द्रो हंसश्चैव करे स्थितः।
त्रयोदश्यां तु सा छाया विज्ञेया कुञ्जराभिधा॥
श्राद्धेष्वतिप्रशस्ता सा पितॄणां तृप्तिकारिणी।
अतो मघात्रयोदश्यामेतैरेव हि साधनैः॥
करोति श्रद्धया श्राद्धं तत्प्रभावमनुस्मरन्।
तस्य तद्वचनं श्रुत्वा ये चान्येऽपि जना भुवि॥
नभस्यस्य त्रयोदश्यां श्राद्धं चक्रुर्मुदान्विताः॥ इति।
अद्यप्रभृति यः श्राद्धं त्रयोदश्यां करिष्यति।
कन्यासंस्थे सहस्रांशौ तस्य स्याद्वंशसंक्षयः॥

---

[१] कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति।

'श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते ॥'
इति कार्ष्णाजिनिस्मृतेः । यद्यपि

---

इति मध्ये महालये त्रयोदशीपरामर्शादुपक्रमेप्यविरोधेन तत्परत्वात्तत्रापि श्राद्धं प्रतीयते । तस्य बहुफलार्थितया विहितस्यात्यन्तं निषेधायोगात् षोडशिग्रहणवद्विकल्पासंभवेन निषेधे कस्मिंश्चिद्विषये वाच्ये सपिण्डकत्वं विषय उपेयते ।

अतः श्राद्धं विना देयं तद्दिने मधुपायसम् ।
खड्गमांसं कालशाकं मांसं वार्ध्राणसस्य तु ॥
तस्याभावेऽपि दातव्यं क्षीरोदनमनुत्तमम् ।
तस्मिन्नहनि विप्रेभ्यः पितॄणां तुष्टये नृप ॥
तस्याभावेऽपि दातव्यं जलं तिलविमिश्रितम् ।

इति नागरखण्डात् । अत्र श्राद्धं पिण्डदानम् । अग्रे ब्राह्मणभोजनस्योक्तत्वेन तन्निषेधासंभवादिति भावः । न च—

"अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते ॥"

इति सामान्यतो युगादिश्राद्धत्वात् पिण्डदाननिषेधे सिद्धे विशेषतस्तन्निषेधो व्यर्थ इति वाच्यम् । प्रागुक्तवचनैरेतत्त्रयोदशीश्राद्धस्यात्यावश्यकत्वात् क्षयपितृतृप्तिहेतुत्वयोरवगमात् । पिण्डदानस्य चात्यन्ततृप्तिहेतुत्वात्सत्यपि युगादिश्राद्धत्वे सामान्यनिषेधबाधेन पिण्डदानं भविष्यतीति शङ्कानिवृत्त्यर्थत्वात् ।

असन्तानस्तु यः श्राद्धे तस्य प्रोक्ता त्रयोदशी ।
सन्तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत् ॥"

इत्यनेन असन्तानस्याधिकारो न बाध्यते किन्तु मघायुक्तत्रयोदश्यामित्याद्येकवाक्यतया ससन्तानस्य पिण्डवर्जनम् । असन्तान इत्यर्धं तु स्तावकम् । तस्मादिमानि सर्वाण्यपि पुत्रवद्गृहस्थस्य सपिण्डकश्राद्धविषयाणीति मयूखः । एकवर्गस्य=पितृपितामह-

'पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।'

इति धौम्योक्तेर्न केवलपितृवर्गस्य प्राप्तिस्तथापि व्यामोहादिप्राप्तनिषेधोऽयमित्या*हुः । वयं तु पश्यामः—पुत्रवद्विषयाण्येवेति ।

'असंतानस्तु यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी ।
संतानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत् ॥'

इति हेमाद्रौ नागरखण्डोक्तेः । पूर्ववाक्यमप्यसंता-

---

नस्य । *आहुरिति । येषां सूत्रे मातामहा नाम्नातास्तान्प्रति सामान्यत एकपार्वणमेव प्राप्नोति

"यावत्किञ्चित्स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥"

इति वचनात् ,तन्निषेधार्थत्वसम्भवाद्व्यामोहानुसरणं व्यर्थम् । यत्तु उभयवर्गप्राप्तनिषेध वचोवैयर्थ्यापत्त्या जीवन्मातृमातामहवर्गकं प्रत्ययं निषेधस्तस्यैकवर्गप्राप्तेरिति, तन्न न तृप्ता इत्याद्यौत्तराधिकार्थवादासंगतेरिति । वस्तुतस्तु दर्शश्राद्ध एव मातामहानावश्यकत्वस्य मिताक्षरायां दर्शनात्त्रयोदश्यामेकवर्गश्राद्धप्रसक्तौ तन्निषेधो युज्यते । एवंवृद्धिश्राद्धादौ

षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।

इति मातामहश्राद्धपुनर्वचनवादिति । मवेत्यादि (१)महालयश्राद्धकरणे तु तेन त्रयोदश्यादिश्राद्धानां प्रसङ्गसिद्धिः । बहुदैवत्यसपिण्डत्वादिभिर्विशेषग्रहणात् । तेन महालयश्राद्धस्य तन्त्रतोक्तिश्च नादेया । तत्राऽपत्नीकस्य पित्रादेः, त्रयोदश्यादौ तु सपत्नीकस्य तस्येति देवताभेदे तु न प्रसङ्गसिद्धिरपीति ।

---

(१) बहुदैवतमहालयकरणे तु महालये पितृव्यादेरेकोद्दिष्टस्यापि सत्त्वाद्बहुदैवत्यत्वं, द्वादशदेवताकमहालये तु अपत्नीकपित्रादेर्दैवतात्वं, त्रयोदश्यादौ तु सपत्नीकस्येति भेदे न प्रसङ्गोऽपि तु पृथक् ।

नस्यैवैकवर्गनिषेधकमिति । अत्र मघात्रयोदशीमहालय-युगादिश्राद्धानां तन्त्रेण (१) प्रयोगे न तु प्रसङ्गसिद्धिरित्यन्यत्र विस्तरः ॥

अथ चतुर्दशी । पृथ्वीचन्द्रोदये प्रचेताः—

*'वृक्षारोहणलोहाद्यैर्विद्युज्जलविषाग्निभिः ।
नाखिदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी ॥'

ब्राह्मे—

* 'युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता ॥'

नागरखण्डे—

'अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा ।
श्राद्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप ॥'

एतच्च प्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छ

---

यद्यपि कन्यां कन्यावेदिनश्चेति काम्यकृष्णपक्षश्राद्धे—

"प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥"

इति याज्ञवल्क्येन सर्वकृष्णपक्षचतुर्दशीमुक्तं, तथापि—

'श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये ।'

इति कालादर्शान्महालयचतुर्दश्यामप्यावश्यकम् । तत्र शस्त्रहतपदं येषामुपलक्षणं, तानाह—*वृक्षेत्यादि । अपमृत्युः=अकालमृत्युः, तदाह—*युवान इति । अपमृत्युरुपसर्गमृत्युर्द्रष्टव्यः । उपसर्गो ग्रहभूताद्यावेशस्तेन मृत्युः ।

---

[१] अङ्गानामैक्यं प्रधानमात्रभेदस्तन्त्रम् । तेन विश्वेदेवपाकाद्यङ्गानामैक्यं विप्रार्घ्यपिण्डादेर्भेद एव । प्रसङ्गसिद्धिस्थले तु प्रधानमपि न भिद्यते इति । त्रयोदशीश्राद्धेऽपरपक्षत्वाद् धूरिलोचना विश्वेदेवाः श्राद्धसारे उक्ता इति धर्मसिन्धुः ।

तामिति गौतमोक्तदुर्मरणोपलक्षणम् । एकयोगनिर्देशात्

'सर्वेषां तुल्यधर्माणामेकस्यापि यदुच्यते ।
सर्वेषां तत्समं ज्ञेयमेकरूपा हि ते स्मृताः ॥

इत्युशनसोक्तेश्च । तच्च कृताक्रियाणामेवेति वक्ष्यामः ।
मरीचः—

'विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रियाः कार्या अन्येषां तु विगर्हिताः ॥'

अत्र *ब्राह्मणघाती तेन हतो न तु ब्रह्महा, तस्य पतितत्वादिति शूलपाणिः । अत्रोद्देश्यविशेषणस्याविवक्षितत्वात्स्त्रीणामपि शस्त्रादिहतानामेकोद्दिष्टं कार्यं (१)(न पार्वणमिति) श्रीदत्तोपाध्यायः । इदं विषादिहतानामेव न प्रसवादिमृतानामिति वाचस्पतिः । यत्तु शाकटायनः—

'जलाग्निभ्यां विपन्नानां संन्यासे वा गृहे पथि ।
श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्दशीम् ॥' इति,

तत्*प्रायश्चित्तार्थजलादिमृतविषयमित्याकरे उक्तम् ।

---

"उपसर्गमृतानां च विषमृत्युमुपेयुषाम् ।
श्राद्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप ॥"

इति वाक्यात् । *ब्राह्मणेति । विषादिभिर्घातो येषामिति विग्रहः । एतच्च मायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतामिति गौतमोक्तदुर्मरणोपलक्षणम् । एकयोगनिर्देशात् ।

"सर्वेषां तुल्यधर्माणामेकस्यापि यदुच्यते ।
सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृताः ॥"

इत्युशनसोक्तेः । इच्छयेत्युक्तेः प्रसवादिमृतानां नैतत् । *प्रायश्चित्तेति । सर्पादेः साहचर्याज्जलाग्न्यादयोऽननुज्ञाता एव

---

[१] कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

अत एव वैधत्वात्सहगमनेऽपि न कार्यमिति हेमाद्रिः।
एतच्च दैवयुक्तमेकोद्दिष्टं कार्यमित्युक्तं प्रयोगपारिजाते—

'प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टं विधानतः।
दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत्॥
तच्छ्राद्धं दैवहीनं चेत्पुत्रदारधनक्षयः।
एकोद्दिष्टं दैवयुक्तमित्येव मनुरब्रवीत्॥'

भविष्येऽपि—

'समत्वमागतस्यापि पितुः शस्त्रहतस्य च।
चतुर्दश्यां तु कर्तव्यमेकोद्दिष्टं महालये॥
चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः॥'इति।

संवत्सरप्रदीपे हारीतः—

'विश्वेदेवांश्च तत्रापि पूजयित्वा दितोऽमरान्।
ये वै शस्त्रहतास्तेषां श्राद्धं कुर्यादतन्द्रितः॥'

अत्रैकोद्दिष्टवचनानां निर्मूलत्वं, समूलत्वेऽपि पार्वणशक्तपराणि। *विष्ण्वादिवचनैः प्रकरणात् कृष्णपक्षीयपार्वणावगतेरिति शूलपाणिः। तन्न। *वाक्येन प्र-

---

ग्राह्याः। अतः असाध्यव्याध्यादिपीडितानां जलाग्न्यादिप्रवेशेन भर्तृमरणनिमित्तकाग्निप्रवेशेन च मृतानां नेदं श्राद्धमित्यर्थः। युद्धमृतौ प्रायोनाशके च वैधत्वेऽपि वचनाद्भवतीति बोध्यम्। एवं च—

"ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः।
प्रीयन्ते पितरश्चास्य ये वै शस्त्रहता रणे॥"

इत्यादिकं त्ववैधमृतिविषयम्। पितरित्यादि पितृसुतपद श्राद्ध देवता तदधिकारिपरम्। *विष्ण्वादीति। कृष्णपक्षप्रकरणे "संभूते पार्वणं कुर्यात्"इत्यादीत्यर्थः। *वाक्येनेति। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थ-

करणस्य बाधात् । पित्रादीनां पार्वणं भ्रात्रादीनामेकोद्दिष्टमिति गौडार्वाञ्चः । तन्न, पितुरित्यनेन विरोधाद् *विशेषवाक्यवैयर्थ्यापत्तेश्च । अत्र शस्त्रहतस्यैव चतुर्दश्यामिति नियमो न तु चतुर्दश्यामेव शस्त्रहतस्येति ।

'श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये ।'

इति कालादर्शाद् वार्षिकादीनामकरणापत्तेश्च । तेन महालये एव दिनान्तरे पार्वणं मातामहादितृप्त्यर्थं

---

विप्रकर्षादिति बलाबलाधिकरणसूत्रम् । दर्शपूर्णमासप्रकरणे 'इदं द्यावापृथिवी भद्रमभूत्' इति सूक्तवाकनिगदे "इद्राग्नी इदं हविरजुषेतामवीवृधेतांमहोज्यायोऽक्राताम्, अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्" इतिवाक्यद्वयं श्रूयते । तत्र पौर्णमास्याम् इद्राग्नी न देवते इति तत्पदमपनीयते असमवेतार्थत्वात् । एवं च येन सह यदेकवाक्यतापन्नं तेनैव सह तदपयनयौचित्यात् वाक्येन 'अवीवृधेताम्' इत्यादीन्यप्यपनेयानि । अथासमवेतार्थतया देवतापात्रापनयेऽपि 'अवीवृधेताम्' इत्यादेरितिकर्तव्यताकाङ्क्षारूपप्रकरणाद् प्रयोगो दुर्वार इति चेत् । न, यतः प्रकरणस्य विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य न विनियोजकत्वम् । अत एव दर्शपूर्णमासप्रकरणपठितोऽपि 'पूष्णोऽहं देवयज्यायै' इति पूषानुमन्त्रणमन्त्रस्तद्देवताविरहिणोस्तयोर्न प्रवर्तते । एवं तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति एकाहसाध्यसोमयागरूपे साह्ने द्वादशोपसत्त्वं न बोधयति सा पुनर्नानादिनसाध्यसोमयागरूपाहीनं नीयते तस्मात्प्रकरणेनाकाङ्क्षावशात् संबन्धं कल्पयित्वा तेन क्रमेण कल्पिताभ्यां सामर्थ्यश्रुतिभ्यां चतुर्थकाले विनयोगो भवेत् । अतः प्रागेव च वाक्येन सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्येति तृतीयकाले विनियोग इति बलीयसा वाक्येन प्रकरणं बाध्यते । एवं च लिङ्गेन यथा—'इन्द्राग्निभागोऽपनीयते' एतद्वा-

कार्यमेव। पितामहोऽपि—शस्त्रहतश्चेदेकोद्दिष्टद्वयं कार्यम्। तदुक्तं हेमाद्रौ स्मृत्यन्तरे—'एकस्मिन्द्वयोर्वैकोद्दिष्टम्' इति। त्रिषु शस्त्रहतेषु पार्वणमेव कार्यम्।

यत्तु देवस्वामिनोक्तं त्रिष्वपि शस्त्रहतेषु पृथगेकोद्दिष्ट*त्रयं कार्यं न तु पार्वणमाहत्यवचनाभावादिति, तदयुक्तम्।

*'पित्रादयस्त्रयो यस्य शस्त्रैर्घातास्त्वनुक्रमात्।
स भूते पार्वणं कुर्यादाब्दिकानि पृथक् पृथक्॥'

इति बृहत्पराशरोक्तेः

---

क्येन तच्छेषभागः, तत्र पदानां संबन्धस्य प्रत्यक्षसिद्धत्वात्। प्रकृते च 'समत्वमागतस्य' इति वाक्यस्य झटिति प्रकृतस्तेन कृष्णपक्षप्रकरणं बाध्यते इत्यर्थः। *विशेषेति।

"सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम्।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम्" ॥

इति पार्वणेत्यादिसामान्यवाक्यैरेव सिद्धेः समत्वमागतस्यापीत्यादिवाक्यानां वैयर्थ्येत्यर्थः।

*एकोद्दिष्टत्रयमिति। 'एकस्मिन् द्वयोः' इत्येतद्यथाश्रुते वाक्यभेदभयेन तस्योपलक्षणत्वात् शस्त्रहनने निमित्ते एकोद्दिष्टविधिमात्रपरम् 'एकस्मिन्, द्वयोः' इति तु 'एकं वृणीते, द्वौ वृणीते' इत्यादिवदनुवाद इत्यर्थः। एकोद्दिष्टद्वयादिकं तन्त्रेणेति बोध्यम्। *पित्रादय इति। 'शस्त्रेण तु हता ये वै' इति शस्त्रहतदेवतानियमबलादेकस्य द्वयोर्वा शस्त्रादिमरणेऽन्यथानुपपत्त्या प्राप्तमेकोद्दिष्टम् एकस्मिन् इत्यादिनाऽनूद्यते न तु विधीयते। एवमेव विश्वेदेवस्यापि सिद्धेः 'पितृपक्षे चतुर्दश्याम्' इत्यादिरनुवादः। एवं नाप्यपराह्णिकत्वभङ्गः। एकोद्दिष्टस्य विधाने हि तदङ्गतया मध्याह्नोऽपेक्ष्येतापि, न त्विह तथा। एवं च त्रिषु मृतेषु 'ऊर्ध्वं पा-

'एकस्मिन्वा द्वयोर्वापि विद्युच्छस्त्रेण वा हते।
एकोद्दिष्टं सुतः कुर्यात्त्रयाणां दर्शवद्भवेत् ॥'

इति स्मृत्यन्तराच्चेति पृथिवीचन्द्रोदये उक्तम्। अपरार्के हेमाद्रौ चैवम्। यस्तु अत्रैव शस्त्रादिना हतस्तस्य वार्षिकमेव पार्वणमे*कोद्दिष्टं वा कार्यं न तु श्राद्धद्वयं *प्रसङ्गसिद्धेरिति पृथिवीचन्द्रोदये। अत्र*श्राद्धाकरणेऽग्रिमापरक्षे दिनान्तरे*पार्वणेनैव कार्यमिति तत्रैवोक्तम्। यदपि—

'शस्त्रविप्रहतानां च शृङ्गिदंष्ट्रिसरीसृपैः।
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् ॥'

---

र्वणवत्कुर्यात्' इति सपिण्डनोत्तरभावित्वेन सामान्यवाक्यप्राप्तपार्वणस्याबाधात् पार्वणमेव भवति। तथा च प्रोक्तवाक्यानां निर्मूलत्वं वदतामपि नैकोद्दिष्टसिद्धिरिति तु वस्तुगतिः। *एकोद्दिष्टं वेति। यथाचारमिति शेषः। *प्रसङ्गसिद्धेरिति। चतुर्दशीश्राद्धं न भवतीति भावः। संक्रान्तिव्यतीपातादिनिमित्तकं तु चतुर्दश्यां पार्वणमेव। चतुर्दशीनिमितकं तु पृथक् कार्यं सपिण्डकस्वरूपविरुद्धधर्मसत्त्वात्। *श्राद्धाकरणे इति। यदि महालये चतुर्दशीश्राद्धं न कृतं तदा वृश्चिकदर्शनपर्यन्तं कस्मिंश्चिद्दिने कार्यमित्यर्थः। *पार्वणेनैवेति।

"संक्रान्तावुपरागे च पर्वोत्सवमहालये।
निर्वपेदत्र त्रिन्पिण्डानिति प्राह प्रजापतिः ॥"

इतिवाक्यस्य शस्त्रहतानां दिनान्तरे पार्वणप्रापकत्वादिति मयूखभावः। एकोद्दिष्टविधिनैव अन्तरितं कार्यम्। यथाप्राप्त एव गौणकालविधानात् न तु पार्वणं देवताविरहादिति नव्याः। चतुर्दश्यां पार्वणे प्राप्ते देवताभूतपित्रादिदुर्मरणनिमित्तक एकोद्दिष्टेतिकर्तव्यताकः प्रयोगो विधीयते न त्विदं कर्मान्तरं पार्वणत्वादग्रे पार्वणं का-

इति छागलेयाद्यैः शस्त्रादिहतानां श्राद्धं निषिद्धं तथापि प्रमादमृतानां श्राद्धार्हत्वात्कार्यं, बुद्ध्यादिभिन्नबुद्धिपूर्वमृतानां तु न कार्यम्। यत्तु—

'चतुर्दश्यां तर्पणीया लुप्तपिण्डोदकक्रिया:।'

इति ब्राह्मे, तद्गौ*णमिति शूलपाणिः। *लक्षणायां मानाभावात्।

*'पतितेनापि कर्तव्यं कर्तव्यं*पतितस्य च॥'

इति गयादिवद्विशेषविधिबलात्पतितानामपि कार्यमिति नव्यगौडाः। तत्त्वं तु*समत्वमागतस्येत्यादिवशात्कृताक्रियाणां कार्यं नान्येषामिति वयं प्रतीमः। यत्तु मनुः—

'न पैतृयज्ञियो होमो लौकिकाग्नौ विधीयते।
न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः॥' इति,

अत्र पूर्वार्धं *हेतुत्वेनोक्तम्। *तद्यथाश्रुतमेवमन्यथा

---

र्थमित्यर्थ इत्यन्ये। *गौणमिति। श्राद्धं निषिद्धमेवातस्तदभावात्तर्पणमेव कार्यमित्यर्थः। *लक्षणायामिति। लुप्तपदस्य निषिद्ध इत्यादिः। यथाश्रुतार्थत्वे तु शस्त्रादिहतानां श्राद्धं मुख्यं तर्पणमनुकल्प इति लभ्यते इत्यर्थः। *पतितेनापीति। अपतितस्येति शेषः। *पतितस्येति। अपतितेनापीति शेषः। *समत्वमिति। दुर्मरणमृतानामौर्ध्वदेहिकं वर्षोर्ध्वं तत्कालं वा कार्यम्। तत्र यावदौर्ध्वदेहिकं न कृतं तावत्पर्यन्तमिदं न कार्यम्। कृतक्रियाणां तु कार्यं 'समत्वमागतस्य' इति विशेषणादित्यर्थः। दर्शितच्छागलेयवचनं तु दुर्मरणमृतानां प्रायश्चित्तं विना तत्कालमौर्ध्वदेहिकं न कार्यमित्येतदर्थकम्। *हेतुत्वेनेति। 'न दर्शेन' इति वाक्यं कृष्णपक्षश्राद्धविषयम्। आहिताग्निना सर्वाधानिना श्राद्धरूपपितृयज्ञाङ्गभूतो होमः 'कर्ममात्रं विवाहाग्नौ' इति विहित औपासने दुष्करः। लौकिके तु स न विधीयते। अग्नेः श्रुतिविहित

भावात् । प्रत्युत

"साग्निरग्नावनग्निस्तु द्विजपाणावथाप्सु वा ।
कुर्यादग्नौ क्रियां नित्यं लौकिकेनेति निश्चितम् ॥"

इति स्मृत्या तत्र निषेधः । नाप्यनग्निकविहिते पाण्यादौ साग्नित्वात् । तस्मात् परिशेषात्त्रेतायामेव कार्यः । तत्रापि दाक्षिणाग्नावेव पित्र्यकर्माधिकरणत्वेन दृष्टत्वात् "अयं पितॄणामग्निः" इत्यादिमन्त्रवर्णाच्च । स च दर्शान्यदिने न लभ्यते । यदि हि श्राद्धीयहोमेऽपि स्वार्थतया तस्य विहरणमाहरणं वा प्रयुञ्जीत ततस्तत्रापि स लभ्येत । स च तदा तत्प्रयुञ्जीत यदि क्वापि तत्प्रयुक्तिं विना तन्न लभेत । शक्नोति तु दर्शे तां विनापि दर्शयागार्थं विहरणादेरेव तं लब्धुम् । तस्मात्सर्वाधान्याहिताग्निना दर्श एव कृष्णपक्षश्राद्धं कार्यं नान्यदिने इति । अत्रेदमस्वरसबीजम् । साक्षाद्वचनं विना श्राद्धीयहोमः श्रौताग्नौ कर्तुमशक्यः । तथा हि श्रौतानामग्नीनां प्रयोजनाकाङ्क्षया स्मार्त्ते कर्मणि विनियोगः । असंयुक्तोत्पन्नानामपि तेषां वाचनिकैर्होमादिभिरेव प्रयोजनाकाङ्क्षाशान्तेः । 'हुत्वाग्नौ पितृयज्ञवत्' इति च अग्निपदं न श्रौताग्निपरं 'गृह्याणि वक्ष्यामः' इति प्रतिज्ञा नागृह्यगतस्याग्निपदस्य 'कर्म स्मार्तं विवाहाग्नौ' इत्युक्तेः । स्मृतिगतस्य च तस्यौपासनाग्निपरत्वात् ।

नापि पितृयज्ञवदित्यतिदेशाद्दक्षिणाग्निप्रगतिः । अग्नेरुपदेशसिद्धत्वेनातिदेशस्य तद्भिन्नधर्मविषयत्वात् । अन्यथा 'अग्नौ' इत्यस्य वैयर्थ्यात् । न च तस्य दक्षिणाग्निपरत्वं तथात्वेऽतिदेशाद्दक्षिणाग्निरेव प्राप्नुयादिति तन्निवृत्त्यर्थं तस्यौपासनाग्निपरत्वात् । एकस्यैवाग्निशब्दस्य गृह्याग्निमन्तं प्रति तत्परत्वं सर्वाधानिनं च प्रति दक्षिणाग्निपरत्वं च कथं स्यात् ? तस्माद् गृह्येषु स्मृतिषु चाग्निपदेन गृह्याग्नेरेव [illegible]भावे निरग्नेरिव पाणाव श्राद्धीयो होम उचितः ।

*न्ते पृथ्वीचन्द्रोदयादयः। आहिताग्नेः पिण्डपितृयज्ञकल्पेन श्राद्धनिषेधार्थमि*दं *न तु साकल्यादेरपीत्यस्मद्गुरु-

'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्' ।

इति मनुवचनात् । अत एव होमस्याधिकरणाकाङ्क्षया दक्षिणाग्निप्राप्तिरित्यपि न वाचनिकेन पाणिनैवाकाङ्क्षानिवृत्तेः संभवात् । यदि च—

'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः' ।

इत्यादि वक्ष्यमाणवचनमेव सर्वाधानिनामाहिताग्नेः श्राद्धीयहोमे दक्षिणाग्निप्रापकमिति मन्यते तदा श्रौतेष्ट्यादिभिरिव श्राद्धीयहोमेनापि तस्य विहरणादिप्रयुक्तिसंभवाद् दर्शान्यदिनेऽपि दक्षिणाग्निः सुलभ एव स्यात् । तस्मान्न दर्शेनेत्यत्र न पैतृयज्ञिय इत्यस्य हेतुत्वेन व्याख्यानमसंगतमेवेति गुरुमतमाह—*ते इति । अयं भावः-द्वयोरप्याहिताग्न्योः 'न दर्शेन विना श्राद्धम्' इति वाचनिक एवार्थः । 'न पैतृयज्ञिय' इति वाक्यं तु पृथगेव

"आरुह्य दक्षिणाग्निन्तु होमार्थं वै प्रयत्नतः ।
अग्न्यर्थं लौकिकं वाऽपि जुहुयात्कर्मसिद्धये ॥"

इति पुराणोक्तलौकिकनिषेधार्थम् । निषिध्यते च ऋष्यन्तरोक्तमप्यन्तरेण यदुच्यते द्विजातीनामितिवत् । न च वायुपुराणे—'अग्न्यर्थं दक्षिणाग्निकार्यार्थं लौकिकं गृह्यम्' इत्युक्त्याऽग्नौकरणहोमे दक्षिणाग्निर्मुख्यस्तदभावे गृह्याग्निरित्येवास्त्विति वाच्यम् । स्ववाक्यगतप्रकृतपरामर्शस्य सर्वनाम्ना तत्तद्विशेषशब्देनैव वा दृष्टत्वात्सामान्यवाचिनाऽग्निशब्देन दक्षिणाग्निपरामर्शानुपपत्तेरिति । *इदानीमिति । न दर्शेत्यस्य यथाश्रुतार्थो न ग्राह्यः, तथा सति मृतपितृकेऽप्यान्वष्टक्याद्यकरणप्रसङ्गात् , किंतु अग्निसाध्येषु दर्शं विना पिण्डपितृयज्ञकल्पं विना साग्निको नाधिकारीत्यर्थः । अग्निसाध्येष्वित्यध्याहारफलमाह—*न त्विति ।

षः । *कृष्णपक्षश्राद्धमन्यदिनेषु प्राप्तमाहिताग्नेर्दर्शे नियम्यत इति तु वयम् । *दर्शेन पार्वणेन विना श्राद्धं न । तेन क्वापि वार्षिकादावेकोद्दिष्टं नेति हरिहरः ॥

इति चतुर्दशी ॥

अमायां विशेषमाहापरार्के यमः-

*"हंसे करस्थिते या तु अमावास्या *करान्विता ।

---

अत्र दर्शपदे लक्षणापत्तिरग्निसाध्यानामनग्निसाध्यानां च सर्वेषामनुवादत्वे पर्यवसानं चास्वरसः । सिद्धान्तमाह—*कृष्णपक्षेति । न दर्शेनेति वाक्यं नाहिताग्नेर्दर्शश्राद्धातिरिक्तश्राद्धनिषेधार्थं प्रतिसांवत्सरिकादेरकरणप्रसङ्गात् , दर्शपदे श्राद्धलक्षणापाताच्च, नियममात्रपरत्वे सम्भवति अपूर्वनिषेधपरत्वे गौरवाच्च, किन्तु कृष्णपक्षश्राद्धे यस्यां कस्यां चित्तिथौ कर्तव्ये दर्शकालनियमार्थम् । एवं महालयापरपक्षश्राद्धमपि सकृत्पक्षे दर्शे एवाहिताग्नेर्भवति । प्राप्ते सामान्यतः सकृत्त्वे तत्र कालविशेषनियममात्रकरणे लाघवेन तत्रैव पक्षे पूर्ववचनप्रवृत्तेः । पक्षान्तराण्यप्याहिताग्नेरपि संभवन्त्येव, यथा महालयश्राद्धस्य सकृत्करणपक्षे संन्यासिनः कस्यचित्तिथौ कर्तव्ये द्वादशीकालो नियम्यते तस्य महालये पक्षान्तराणि भवन्त्येव, तद्वदिति । एतेनाहिताग्नेर्दर्शश्राद्धमेव नियतं तेन विनाऽन्यच्छ्राद्धं तु न तस्य नियतमिति नियतपदाध्याहारेण मेधातिथिविधानं प्रत्युक्तं, वार्षिकादेरनियतप्रसङ्गात् । *दर्शेनेति । सपत्नमात्रादेरेकोद्दिष्टविधिना वार्षिकाकरणापत्तिस्वरसः ।

*हंसे इति । करो हस्तः । रवीन्द्वोर्हस्तस्थयोरिति फलितार्थः । गजच्छाया द्विविधा—यौगिकी पारिभाषिकी च । तत्रेयमन्त्या

"यथेन्दुः पितृदैवत्यो हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणीया च गजच्छाया प्रकीर्तिता ॥"

इति स्कान्दोक्तापि सैव । पितृदैवत्यं मघा, वैश्रवणीया तिथिः

सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥
*वनस्पतिगते सोमे छाया या प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता*तस्यां श्राद्धं प्रकल्पयेत् ॥"

भारते-

*"अजेन सर्वलोहेन *वर्षासु नियतव्रतः ।
हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम् ॥"
श्राद्धं दद्यादिति शेषः ॥

आश्विनशुक्लप्रतिपदि दौहित्रस्य मातामहश्राद्धमुक्तम् । हेमाद्रौ संग्रहे च-

*"जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले ।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥" इति ।

---

त्रयोदशी । तथा च रवौ हस्तर्क्षे द्वादश्यां मघासत्त्वं ग्रन्थोक्ता, त्रयोदश्यां मघासत्त्वे चेयमिति फलितम् । इदं कालाङ्गकम् । यौगिकीमाह-*वनस्पतीति । अपराह्णोपलक्षणम् । हस्तिनइति शेषः । *तस्यामिति । अपराह्णे गजच्छायायामित्यर्थः । इदं च देशाङ्गकमिति विशेषः । *अजेनेति । *वर्षास्विति त्रयोदशीश्राद्धपरम् । मघास्विति पाठान्तरं प्रागुक्तम् । हस्तीति देशाङ्गत्वलाभः । कर्णेत्युपादानात् कर्णो मुखावयवविशेषः । अथ वानस्पतिरश्वस्य सोमवारः तथा च सोमवासरयुक्तामावास्यायां प्राङ्मुख्यामश्वस्य छायायां श्राद्धं कुर्यादित्यर्थः । कर्णः पल्लव इति । आपराह्णिकं गजच्छायारूपदेशाङ्गकं चेदम् । कर्णशब्दस्य यथाश्रुतार्थकत्वात् ।

*जातमात्र इति । जातमात्रोऽपीत्यविवक्षितार्थम् । अपिपदोपादानात् । एवं च

इयं संगवव्यापिनी ग्राह्या इति निर्णयदीपे उक्तम् ।
"प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राद्धं मातामहं कुर्यात्सपिता संगवे सदा ॥
जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले ।
प्रातः संगवयोर्मध्ये*आर्यस्य प्रतिपद्भवेत् ॥"
इति वचनात् । अत्र*समूलत्वं विमृश्यम् । *इदं च मलमासे न कार्यम् ।
'स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।'
इति निषेधात् । इदं च*जीवत्पितृकेणैव कार्यमिति

---

"पुत्रः स्वोत्पत्तिमात्रेण संस्कुर्याद्दणमोचनात् ।
पितरं नाब्दिकाचौलात्पैतृमेधेन कर्मणा ॥"

इति वचनात्प्रथमवर्षचूडाया असत्त्वे यथा पितृश्राद्धेऽनाधिकारस्तथाऽस्मिन्मातामहश्राद्धेऽपीति प्रतिभाति । मयूखकृतस्तु जातमात्र इति अधिकारी जात इत्येवार्थः । तस्मादुपनयनोत्तरमेवाधिकारो न ततः प्राक् इत्याहुः । *आर्यस्य=मातामहस्य । अत्र सपत्नीकानामेव देवतात्वम् । अमाश्राद्धान्तर्गतमातामहपार्वण इवेहापि सत्यपि पितृपारणाविकृतित्वे सपत्नी[illegible]णस्य

'स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ।'

इति वचसः प्रतिबन्धासम्भवात् । *समूलत्वमिति । सङ्गवव्यापिनीग्राह्यत्वाद्येकवचनस्य निर्मूलत्वात् पार्वणत्वादपराह्णव्यापिनी ग्राह्येत्यर्थः । *इदञ्चेति । मातामहश्राद्धस्य कन्योपलक्षितापरपक्षनिमित्तकत्वात्कन्यायामधिमासे तदुत्तरप्रतिपद्येव कन्यायुक्तायामपरपक्षव्यवधानेनैव कार्यमिति भावः । तत्र कथंचिदन्तराये तु शुक्लपञ्चम्यादिगौणगौणोत्तरकाले कार्यम् । एवमेव जीवत्पितृकस्य मातृनवमीश्राद्धान्तरायेऽपीति । *जीवत्पितृकेणैवेति । ननु सपितेत्युक्ते शिष्टा इति किमेतद् ? शृणु ।

शिष्टाः। इदं च शिष्टाचारात्सपिण्डकं कार्यमिति केचित्। पिण्डरहितं तु युक्तम्। जीवत्पितृकस्य-

"मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः।
न जीवत्पितृकः कुर्याद् गुर्विणीपतिरेव च ॥"

इति दक्षेण पिण्डनिषेधात्। आन्वष्टक्यवद्विशेषवचनाभावाच्चेति संक्षेपः ॥ इति श्रीकमलाकरभट्टकृते निर्णयसिन्धौ महालयनिर्णयः ॥

अथाश्विनशुक्लप्रतिपदि नवरात्रारम्भः। तन्निर्णयः। तत्र भार्गवार्चनदीपिकायां देवीपुराणे। सुमेधा उवाच-

"शृणु राजन् प्रवक्ष्यामि चण्डिकापूजनक्रमम्।

---

"कन्यागते सवितरि पितरो यान्ति वै सुतान्।
शून्या प्रेतपुरी तावत् यावद्वृश्चिकदर्शनम् ॥"

इत्यर्थवादेनैषां श्राद्धे ये अधिकारिणस्तेषां कन्योपलक्षितापरपक्षश्राद्धं कर्तव्यमिति विधिः कल्प्यते। पितृसुतपदं श्राद्धे देवतातदधिकार्यर्थकम्।

"ततस्तुलागतेऽप्येके सूर्ये वाञ्छन्ति पार्थिव।
श्राद्धं स्ववंशजैर्दत्तं क्षुत्पिपासासमाकुलाः ॥"

इति सामान्येन नागरखण्डाभिधानात्। तत्र मृतपितृकस्य पितृश्राद्धेन सहैव मातामहश्राद्धं, जीवत्पितृकस्य तु तेन विनेति, प्रतिपदि तत्करणं तु केवलमाचारात्। कल्पितेनोक्तविधिना च

"दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षकम्।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥"

इति जीवत्पितृकस्यापरपक्षकसामान्यनिषेधो बाध्यते, एवं मातृनवमीश्राद्धेऽपि तद्बाध इति क्रमेण सपितेति सिद्धेरिति। 'मुण्डनम्' इति वाक्यस्य निर्मूलत्वं वदतां मते तु सपिण्डमिति।

इति महालयनिर्णयः ॥

आश्विनस्य सिते पक्षे प्रतिपत्सुशुभे दिने ॥"

इत्युपक्रम्योक्तम्।

*"शुद्धे तिथौ प्रकर्तव्यं*प्रतिपच्चोर्ध्वगामिनी।
आद्यास्तु नाडिकास्त्यक्त्वा षोडश द्वादशापि वा॥
अपराह्णे च कर्तव्यं शुद्धसंततिकाङ्क्षिभिः॥"

इदं*चापराह्णयोगिन्याः प्राशस्त्यं द्वितीयदिने प्रतिपदोऽभावे ज्ञेयम्। तथा तत्रैव देवीपुराणे डामरतन्त्रे च देवीवचः—

*"अमायुक्ता न कर्तव्या प्रतिपत् पूजने मम।
मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता॥
*आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः।
कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम्॥"

मार्कण्डेयदेवीपुराणयोः—

"पूर्वविद्धा तु या शुक्ला भवेत् प्रतिपदाश्विनी।
नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता॥
देशभङ्गो भवेत्तत्र दुर्भिक्षं चोपजायते॥
नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनम्॥" इति।

स्कान्देपि—

"प्रतिपद्याश्विने मासि सा शुद्धा शुभदा भवेत्।
भाद्रपश्चदर्शा कृष्णा तया युक्ता न शस्यते॥
विरुद्धफलदा सा हि पुत्रदारभयावहा॥" इति।

---

*शुद्धे=अमास्पर्शरहिते। अमास्पर्शे त्वाह—*प्रतिपच्चेति। ऊर्ध्वगामिनी अमोर्ध्वगा। *इदञ्चेति। एतावताऽमायुतायाः क्षयवृद्धिभ्यां क्रमेण ग्राह्यत्वाग्राह्यत्वे दर्शिते, तदनुरोधेन स्फुटममायुक्तान् निषेधांस्तद्विधींश्च व्यवस्थापयितुं तन्निषेधानाह—*अमायुक्तेति। *आद्या इति। परेद्युः प्रतिपदः द्वौ१ एतदेव स्पष्टयति—

तथा-

"वर्जनीया प्रयत्नेन अमायुक्ता तु पार्थिव ।
द्वितीयादिगुणैर्युक्ता प्रतिपत्सर्वकामदा ॥'

तथा देवीपुराणे-

"यो मां पूजयते नित्यं द्वितीयादिगुणान्विताम् ।
प्रतिपच्छारदीं ज्ञात्वा सोऽश्नुते सुखमव्ययम् ॥
यदि कुर्यादमायुक्तां प्रतिपत्स्थापने मम ।
तस्य शापायुतं दत्त्वा भस्मशेषं करोम्यहम् ॥
आग्रहात्कुरुते यस्तु कलशस्थापनं मम ।
तस्य संपद्विनाशः स्याज्ज्येष्ठः पुत्रो विनश्यति ॥
अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने ।
धनार्थिभिर्विशेषेण वंशहानिश्च जायते ॥
न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने
उदये द्विमुहूर्तापि ग्राह्या सोदयदायिनी ॥' इति ।

देवीपुराणे-

"या चाश्वयुजि मासे स्यात्प्रतिपद्भद्रयान्विता ।
शुद्धा ममार्चनं तस्यां शतयज्ञफलप्रदम् ॥"

रुद्रयामले-

"अमायुक्ता सदा चैव प्रतिपन्निन्दिता मता ।
तत्र चेत्स्थापयेत्कुम्भं दुर्भिक्षं जायते ध्रुवम् ॥
प्रतिपत्सद्वितीया तु कुम्भारोपणकर्मणि ॥" इति ।

यद्यपि रुद्रयामलं डामरं च निर्मूलं तथाप्यविरोधात् प्रचाराच्च तद्वचनानि लिख्यन्ते । तिथितत्त्वे देवीपुराणेऽपि-

---

'प्रतिपत्सद्वितीया तु कुम्भारोपणकर्मणि ।' इति ।

"*प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत् ॥"

तत्रैव—

*"शरत्काले महापूजा क्रियते या च वार्षिकी ।
सा कार्योदयगामिन्यां *न तत्र तिथि(१)युग्मता ॥"

तथा—

"कुहूकाष्ठोपसंयुक्तां वर्जयेत्प्रतिपत्तिथिम् ।
राज्यनाशाय सा प्रोक्ता *निन्दिता चाश्वपूजने ॥" इति ।

एषु वचनेषु कलशस्थापनग्रहणात्तदेव प्रथमदिने निषिध्यते, न तूपवासादि । तस्य 'प्रतिपद्यप्यमावास्या' इति युग्मवाक्यात्, 'शुक्ला स्यात्प्रतिपत्तिथिः प्रथमतः' इति दीपिकोक्तेः, 'शुक्लपक्षे दर्शविद्धा' इति माधवोक्तेश्च पूर्वदिने प्राप्तस्य बाधे मानाभावादिति केचित् । वस्तुतस्तु पूर्वोक्तवाक्येषु चण्डिकार्चनपूजाग्रहणादुपवासादेश्च *ङ्गत्वात्

---

प्रतिपत्सद्वितीया चेत्तदावाहनकालात्तमाह—*प्रातरिति । यद्यपीदं पत्रपूजाविषयमेव तथापि देवीपूजायामपि योजितं बाधकाभावात् । एवञ्च प्रातस्तदभावे पूजा न, किन्तु तल्लाभ एवेत्यर्थतोऽमायुक्ताव्यावृत्तिः । *शरत्काल इति । वार्षिकी वर्षादौ संवत्सरादौ चैत्रशुक्लप्रतिपदमुपक्रम्य नवम्यन्ता पूजा विधीयते । शरद्वसन्तयोस्तुल्य एव दुर्गोत्सवः कार्य इत्यर्थः । *न तत्र तिथियुग्मेति । युग्मवाक्यानुरोधेन दुर्गापूजायां न निर्णय इत्यर्थः । *निन्दिता चेति । लोहाभिसारिकाभिप्रायम् । यद्वा अश्वपूजनम् आश्विनमासीयदेवीपूजनं, रेवन्तनामा देवानामश्वः अश्वपीडाशान्त्यर्थंक्रियमाणं तत्पूजनं वा । *अङ्गत्वादिति ।

'आश्विनस्य सिते पक्षे नवरात्रमुपोषितः ।

---

(१)युग्मवाक्यानुसरणमत्र नेष्टमित्यर्थः ।

प्रधानदेवीपूजादावपि परेति युक्तम् । कलशस्थापनग्रहणं तूपलक्षणम् । अत एव देवलः—

"व्रतोपवासनियमे घटिकैकापि या भवेत् ।
सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृके ॥" इति ।

अत्र घटिका मुहूर्त इति गौडाः । यदा तु पूर्वदिने संपूर्णा शुद्धा च भूत्वा परदिने वर्धते तदा संपूर्णत्वादमायोगाभावाच्च पूर्वैव । यानि च*द्वितीयायोगनिषेधकानि वचनानि केचित्पठन्ति तान्यपि शुद्धाधिकानिषेधपराणि । परदिने प्रतिपदोऽत्यन्तासत्त्वे तु दर्शयुताऽपि पूर्वैव ग्राह्या । तदाह लल्लः—

तिथिः शरीरं तिथिरेव कारणं
तिथिः प्रमाणं तिथिरेव साधनम् । इति ।

यानि तु*'अमायुक्ता प्रकर्तव्या'इत्यादीनि नृसिंहप्रसादे वचनानि तानि समूलत्वे सत्येतद्विषयाणि । अत्रेदं तत्त्वम्—पूर्वोक्तवाक्यानां सर्वेषां हेमाद्र्याद्यलिखितत्वेन निर्मूलत्वात्तैश्चान्यनिर्णयस्यानुक्तेः *सामान्यनिर्णयात्पूर्व-

---

सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम्' ॥

इति देवीपुराणे । गौडा इत्यरुचिः, अनुपदं तद्बीजं स्फुटम् । *द्वितीयेति ।

'द्वितीयाशेषसंयुक्ता प्रतिपच्चण्डिकार्चने ।
मोहादथोपदेशाच्चेत्कुर्यात्पुत्रविनाशनम् ॥'

इत्यादीनीत्यर्थः । इदानीममायुक्तविधीन्व्यवस्थापयति—*यानि त्विति । *अमेति ।

"अमायुक्ता प्रकर्तव्या प्रतिपच्चण्डिकार्चने ।
न ग्राह्या परसंयुक्ता शुद्धसन्ततिकाङ्क्षिभिः ॥"

इत्यादीनीत्यर्थः । *सामान्यनिर्णयात् युग्मादिवाक्यात् ।

प्राप्तावपि गौडनिबन्धेषु *विशेषनिर्णयादौदयिकी ग्राह्या। तत्रापि घटिकैकेत्यस्य द्विमुहूर्तस्तुतित्वोक्तेर्द्विमुहूर्ता ग्राह्या । (१)'उदिते दैवतं भानौ' इत्यत्र 'द्विमुहूर्तं त्रिरह्नश्च' इति औदयिक्या द्विमुहूर्तत्वनियमात् । तेन*'उदये द्विमुहूर्तापि' इत्याद्यनुसारोपि 'मुहूर्तमात्रा कर्तव्या' इति द्विमुहूर्तस्तुतिः । अन्यथा द्विमुहूर्तविधिवैयर्थ्यात् । केचित्तु मुहूर्तमात्रेति वचनात्ततो न्यूनत्वे परा नेत्याहुः ।

---

*विशेषनिर्णयात् 'सा कार्योदयगामिन्याम्' इति देवीपुराणात् । *उदये इति ।

'उदये द्विमुहूर्ताऽपि ग्राह्या सोदयगामिनी ।

इत्यर्थः । *गौडा अपीति ।

'सुस्नातास्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम्' ।

इत्युक्तवचनात्पूर्वाह्णः कर्मकालः । कर्मकालशास्त्राच्च पूर्वाह्णव्यापिनी प्रतिग्राह्या ।

'शरत्काले महापूजा क्रियते या च वार्षिकी । '

'सा कार्योदयगामिन्याम्' इत्यादि समस्तमुदयव्यापित्वं पूर्वाह्णव्यापित्व एवेति तत्रैव तात्पर्यं न तु द्विमुहूर्तव्यापित्वे । 'प्रातरावाहयेद्देवीम्' इति प्रातःशब्दोऽपि पूर्वाह्णपर एव ।

'सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात् ।
उपचारांस्तथा दातुं, पञ्चैतान्वितरेत्तदा ॥''
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ।
अभावे पुष्पतोयाभ्यां तदभावे तु भक्तितः ॥''

इति संक्षेपपूजोपदर्शनात् विस्तारपूजायाः पूर्वाह्णं विना दु-

---

(१)एतद्वचनं तु—

'उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥'इति ।

*गौडा अप्येवम् । अत्र *देवीपूजैव प्रधानम्, उपवासादि त्वङ्गम् ।

*'अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाऽऽश्विने मासि विशोको जायते नरः ॥'

इति हेमाद्रौ भविष्ये तस्या एव फलसंबन्धात्,

'नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम् ।'

इति तत्रैव देवीपुराणात्,

'शरत्काले महापूजा क्रियते या च वार्षिकी ।'

इति मार्कण्डेयपुराणाच्च । पूर्ववचनादष्टमीनवमीपूजैव प्रधानमन्यत्सर्वमङ्गमिति गौडाः । एकाहपक्षोऽपि(१) कालिकापुराणे—

---

ष्करत्वादिति नव्यगौडास्तदनुयायिनो दाक्षिणात्याश्च । *देवीपूजैवेति । एवकारेण 'एवञ्च विन्ध्यवासिन्याम्' इत्याद्यग्रिमवाक्येनोपवासादिनानाकर्माभिधानात्तेषां प्राधान्यमिति शङ्कानिरासः । *अष्टम्यामिति ।

"आश्विने मासि मेघान्ते महिषासुरमर्दिनीम् ।
देवीं संपूजयित्वाऽग्रे अर्द्धरात्रेऽष्टमीषु च ॥
क्रीडन्ति विविधैर्भोगैर्देवलोकेषु दुर्लभैः ।
नाधयो व्याधयस्तेषां न च शत्रुभयं भवेत् ॥"

इति स्कान्दे नवरात्रपूजाया अपि फलसम्बन्धावगमादित्यपि द्रष्टव्यम् । यद्वा कुलाचारभेदेनाष्टम्यां वा पूजयित्वा पूजां समाप्येत्यर्थात् प्रकृतसङ्गतिः । नवमीत्यादि च न प्राधान्यबोधकं, किन्तु पूजादिवृद्धिविधायकमिति तु वस्तुगतिः । गौडा इत्यरुचिः । एवञ्च विन्ध्यवासिन्यामित्यादिना नवरात्रपूजाया एव मुख्यकल्पत्वावगमात्सप्तम्यादिरनुकल्पो वक्ष्यते । तदनुकल्पो वैकल्पिकः ।

---

(१)'देवीपुराणे' इति पाठान्तरम् ।

'यस्त्वेकस्यामथा*ष्टम्यां नवम्यामथ साधकः ।
पूजयेद्वरदां देवीं महाविभवविस्तरैः ॥' इति ।

*तत्त्वं तु राजसूयेऽन्ययागैः समप्रधानायाः सहितायाः अप्यवेष्टेः "एतयान्नाद्यकामं याजयेत्" इत्येकत्वान्मध्ये विधानाच्च यथा फलार्थो बहिःप्रयोगस्तथा नवरात्र-मध्यस्थाया अष्टम्या नवम्या वा फलार्थः पृथक्प्रयोगः ।
रूपनारायणधृतदेवीपुराणे—

'महानवम्यां पूजेयं सर्वकामप्रदायिका ।
सर्वेषु चैव वर्णेषु तव भक्त्या प्रकीर्तिता ॥
कृत्वाप्नोति यशोराज्यपुत्रायुर्धनसंपदः ॥'

सा च काम्या नित्या च ।

'एवमन्यैरपि तथा देव्याः कार्यं प्रपूजनम् ।
विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम् ॥' इति,
'यो मोहादथवाऽऽलस्याद्देवीं दुर्गांमहोत्सवे ।
न पूजयति दम्भाद्वा द्वेषाद्वाऽप्यथ भैरवी ॥
क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ॥'

इति कालिकापुराणे फलनिन्दाश्रुतेः

'वर्षे वर्षे विधातव्यं स्थापनं च विसर्जनम् ।'

इति तिथितत्त्वे देवीपुराणाच्च ।

---

*अष्टम्यां नवम्यामिति । षष्ठ्यादिपक्षस्तु पत्रीपूजायामेव ।
*तत्त्वन्त्विति । इदन्तु चिन्त्यम् । एतयेति सर्वनाम्ना प्रकृतप-रामर्शाद्युक्तोऽवेष्टेरेव बहिः प्रयोगः, न त्विह तथा परामर्शकं किञ्चिदस्ति अष्टमीनवम्योः पृथगग्रे पूजाविधानादेतद्वचनस्य तदेकवा-क्यता सम्भवति ।

'शरत्काले महापूजा क्रियते या च वार्षिकी' ।

इति मार्कण्डेयन्तु न नित्यत्वव्यञ्जकं वीप्साभावात् ।

युक्ता परैवेति माधवेनोक्तम्, तथाऽत्रापि। *वस्तुतस्तु रात्रेः कर्मकालत्ववचसां हेमाद्याद्यलिखनात्समूलत्वं विमृश्यमेव, 'त्रिकालं पूजयेत्' इत्यादिपूर्वविरोधाच्च। माधवोक्तिस्तु पाक्षिकनक्तानुवाद इत्युक्तम्। तस्मात्सर्वपक्षेषु परैव प्रतिपदिति सिद्धम्। अत्र केचित् *नवरात्रशब्दो नवाहोरात्रपरः।

'वृद्धौ समाप्तिरष्टम्यां ह्रासे वा प्रतिपन्निशि।
प्रारम्भो नवचण्ड्यास्तु नवरात्रमतोऽर्थवत्॥'

इति देवीपुराणादित्याहुः। तन्न। *अतिह्रासवृद्ध्यो-

---

तत्र चेत्स्थापयेत्कुम्भं दुर्भिक्षं जायते ध्रुवम्॥
प्रतिपत्सद्वितीया तु कुम्भारोपणकर्मणि।'

इति रुद्रयामलात्। एवं पूर्वदिने चित्रावैधृतिमात्रसत्त्वेऽपि न दोषः। 'त्वाष्ट्रवैधृतियुक्ता चेत्' इति वाक्ये 'कलशारोपणं गृहे' इत्युक्तेः। एतच्च माधवाद्यनुसारेण। वस्तुतः परदिने द्विमुहूर्ताग्राह्यत्वोक्तिस्तदनुसारेणाह-*वस्तुतस्त्विति। पूर्वाह्णव्यापिनीग्राह्यत्वमते तु या पूर्वदिने पूर्णा सती परेद्युर्वृद्ध्या त्रिमुहूर्ता, सा पूर्वैव ग्राह्या। सम्पूर्णत्वात्।

'आदित्योदयवेलायामारभ्य षष्टिनाडिकाः।
तिथिस्तु सा हि शुद्धा स्यात्सार्वतिथ्यो ह्ययं विधिः॥"

इति वचनात्। खण्डा प्रतिपत्पूर्वाह्णव्यापिनी द्वितीयाविद्धैव ग्राह्या।

'या चाश्वयुजि मासे स्यात्सा प्रतिपद्मान्विता।'

इत्युक्तवाक्यात्पूर्वाविद्धानिषेधबाहुल्याच्च। एतन्मते 'त्रिकालं पूजयेद्देवीम्' इत्युक्तावपि प्रातःपूजैव प्रधानं 'प्रातरावाहयेद्देवीम्' इति पूर्वोक्तवचनात्। पूजात्रयं प्रधानमिति तु युक्तम्। सा च त्रिकालं, प्रदोषे विशेषेण षोडशोपचारैः छत्रचामरादिनीराजनोपचारैश्च। *नवरात्रशब्दः नवरात्रोपवासव्रत इत्यादौ। *अतिह्रासवृ-

र्न्यूनाधिकत्वापत्तेः अत्र मूलाभावाच्च । तेन तिथिवाच्येवायम् । तदुक्तम्—

"तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम् ।
*अष्टरात्रे न दोषोऽयं नवरात्रतिथिक्षये ॥" इति ।

स च नवरात्रशब्दः क्वचि*ल्लक्षणया कर्मवाची । यथा 'प्रारम्भो नवरात्रस्य' इत्यत्रेति दिक् ॥

प्रतिपदि च वैधृत्यादियोगनिषेधो भार्गवार्चनदीपिकायां देवीपुराणे—

---

द्धयोरिति । अमावास्यारात्रौ प्रतिपत्प्रवेशाभावेऽपि प्रतिपत्प्रभृत्येवात्यन्तापचयेनाऽष्टरात्रमतिवृध्याऽष्टम्यहोरात्रास्पर्शिनीं नवमीं गृहीत्वा दशरात्रं तिथिवृद्धाविति शङ्कायामाह—*अष्टरात्रे इति । रात्रिशब्दस्य तिथिवाचित्वादिति भावः । *लक्षणयेति । 'रथन्तरसामा सोमः' इत्यादौ सोमादिपदवत् । दिगर्थस्तु 'नवरात्राभिधं कर्म' इत्यादौ अभिधापदं न शक्त्यर्थकम् । 'सुरा वै वाजिनं सुरा सोमः' इति नामातिदेशोक्तिवत् संज्ञासंज्ञिसम्बन्धस्य शास्त्रप्रमेयत्वाभावात् तद्बोधकस्य सामानाधिकरण्यादेरभावस्योक्तप्रायत्वात्, किन्तु प्रतिपत्त्यर्थकमिति । अत्र एकमपि पूजाद्यात्मकं प्रधानमसम्भवात्समुच्चयकालत्वाच्चानातिथिष्वावर्तते, दिनन्यूनतायां तन्त्रेण, तदाधिक्ये तु व्रतप्रयोगस्य सकलतिथिव्याप्त्यर्थमावृत्तिः । अत एव भविष्ये—

'व्रती सम्पूजयेद्देवीं सप्तम्यादिदिनत्रये ।
द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः ॥"

इत्युक्तम् । न चैवं ह्रासे वृद्धौ वा उपवासादिकर्मणो नवत्वनियमभङ्गप्रसङ्ग इति वाच्यम्, इष्टत्वात् । यथा एकदिने क्रियमाणे षोडशप्रेतश्राद्धे प्रधानानामेकदेशकालकर्तृत्वादङ्गवत्तन्त्रेणानुष्ठाने प्रसक्ते सम्बुद्धिभेदेनानुष्ठानं तथेह न, उपवासादिकर्मगतनवत्व-

*"त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकाऽर्चने ।
तयोरन्ते विधातव्यं कलशारोपणं गृहे ॥" इति ।

चित्रावैधृतियुक्तापि द्वितीयायुता चेत्सैव ग्राह्येत्युक्तं दुर्गोत्सवे—

"भद्रान्विना चेत्प्रतिपत्तु लभ्यते
विरुद्धयोगैरपि संगता सती ।
सैवापराह्णे विबुधैर्विधेया
श्रीपुत्रराज्यादिविवृद्धिहेतुः ॥" इति ।

यदा तु वैधृत्यादिपरिहारेण प्रतिपन्न लभ्यते तदोक्तं तत्रैव कात्यायनेन-

'प्रतिपद्याश्विने मासि भवेद्वैधृतिचित्रयोः ।
आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकम् ॥'इति ।

भविष्येऽपि—

"चित्रावैधृतिसंपूर्णा प्रतिपच्चेद्भवेन्नृप ।
त्याज्या ह्यंशास्त्रयस्त्वाद्यास्तुरीयांशे तु पूजनम् ॥"इति

रुद्रयामलेऽपि-

"वैधृतौ पुत्रनाशः स्याच्चित्रायां धननाशनम् ।
तस्मान्न स्थापयेत्कुम्भं चित्रायां वैधृतौ तथा ॥
संपूर्णा प्रतिपद्देव चित्रायुक्ता यदा भवेत् ।
वैधृत्या वापि युक्ता स्यात्तदा मध्यंदिने रवौ ॥
अभिजित्तु मुहूर्तं यत्तत्र स्थापनमिष्यते ॥" इति ।

चित्रादिनिषेधे मूलं चिन्त्यम् । इदं कलशस्थापनं रात्रौ न कार्यम् ।

---

संख्याद्यश्रवणात् । 'नवरात्रोपवासतः' इत्यादेरेव तिथिगणनतत्त्वश्रवणादिति ।

*त्वाष्ट्रेति । देवीपूजनादौ कलशस्थापनमात्रे वा निषेध इ-

'न रात्रौ स्थापनं कार्यं न च कुम्भाभिषेचनम् ।'

इति मात्स्योक्तेः ।

*"भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।

प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥"

इति विष्णुधर्मोक्तेश्च । रुद्रयामले—

*"स्नानं माङ्गलिकं कृत्वा ततो देवीं प्रपूजयेत् ।

शुद्धाभिर्मृत्तिकाभिश्च पूर्वं कृत्वा तु वेदिकाम् ॥

यवान्वै वापयेत्तत्र गोधूमैश्चापि संयुतान् ।

तत्र संस्थापयेत्कुम्भं विधिना मन्त्रपूर्वकम् ॥

सौवर्णं राजतं वापि ताम्रं मृन्मयजं तु वा ॥" इति ॥

अथ पूजाविधिः—सा च जयन्तीमन्त्रेण नवाक्षरेण वा कार्या । तदुक्तं दुर्गाभक्तितरङ्गिण्यां देवीपुराणे—

"कुर्याद्देव्यास्तु मन्त्रेण पूजां क्षीरघृतादिभिः ।

(इत्युक्त्वा–)

जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥

दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते ।

अनेनैव तु मन्त्रेण जपहोमौ तु कारयेत् ॥" इति ।

*'ॐ दुर्गे दुर्गे रक्षिणि स्वाहा' इति*नवाक्षरः ।

---

ति मतभेदः । *भास्करोदयमिति । पूर्वाह्णस्य कर्मकालत्वपक्षे एतदप्यनुकूलम् : एतत्परिभाषावशात् 'प्रातरावाहयेद्देवीम्' इत्यादौ प्रातःकालः पूर्वाह्णः । कलशस्थापनं च सति सम्भवे प्रातिपद आद्यनाडीषोडशकं त्यक्त्वा कार्यम् । 'आद्याः षोडशनाडीस्तु'इति प्रागुक्तवचनात् । *स्नानमिति । तच्च 'सुस्नातस्तिलतैलेन' इत्युक्तेस्तिलतैलेन कार्यम् ।

*दुर्गे दुर्गे इति द्विरुक्तं, प्रणवस्तु नवाक्षरानन्तर्गतइति बोध्यम् । *नवाक्षर इति ।

'तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्समाहितः' ।

इत्याग्नेयात् । यथा-एतद्वाक्याहुर्गालिङ्गक आगमक एवमादिः तथैव वैदिकोऽपि 'जातवेदसे सुनवाम सोमम्' इत्यादिस्तादृशो ग्राह्यः । प्रणवादिचतुर्थ्यन्तं नमोऽन्तं नाम वा 'नाम्ना सर्वं समापयेत्' इति वाक्यात् । पूजा च कुम्भस्थप्रतिमायां कार्या । 'पूज्या मण्डलकुम्भस्था' इति वचनात् सर्वतोभद्रमण्डलदेवतावाहनमपि कार्यम् । तत्र स्थापयितुमशक्या मृन्मयादिका तु प्रतिमा पश्चादासने स्थाप्या । आचाराद्वेदिकोणेषु चत्वारः कलशा विधिना स्थाप्याः ।

"चतुरः कलशान् यस्तु दद्याद्देवगृहे नरः ।
चतुःसमुद्रवलयां स तु भुङ्क्ते वसुंधराम् ॥"

इति विष्णुधर्मोत्तरात् । सर्वतोभद्रं स्कान्दे-

"प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिः ।
खण्डेन्दुस्त्रिपदः कोणः शृङ्खलाः पञ्चभिः पदैः ॥
एकादशपदा वल्ली भद्रन्तु नवभिः पदैः ।
चतुर्विंशत्पदा वाऽपि चतुर्विंशतिभिः पदैः ॥
मध्ये षोडशभिः कोष्ठैः पंद्ममष्टदलं स्मृतम् ।
श्वेतेन्दुः शृङ्खला कृष्णा वल्ली नीलेन पूरयेत् ॥
भद्रारुणा सिता वापि परिधिः पीतवर्णकः ।
बाह्यान्तरदले श्वेता कर्णिका पीतवर्णिका ॥
परिध्या वेष्टितं पद्मं बाह्ये सत्त्वं रजस्तमः ।
तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरानिति ॥
आवाह्य मध्ये ब्रह्माणं लोकपालानुदग् यजेत् ।
सोम ईशान इन्द्रोऽथ वह्निर्धर्मश्च निर्ऋतिः ॥
वरुणश्चापि वायुश्च लोकपालाः क्रमान्मताः ।
वायुसोमान्तर्वसवो रुद्राः सोमेशमध्यगाः ॥
ईशेन्द्रान्तरथादित्या महेन्द्राग्न्यन्तरश्विनौ ।

तत्र प्रतिपदि *प्रातरभ्यङ्गं कृत्वा देशकालौ संकीर्त्य ममेह

---

यमाग्न्यन्तः सपितृकान् विश्वान्देवान्यजेद्बुधः ॥
यमनिर्ऋतिमध्ये तु सप्तयक्षानथो यजेत् ।
रक्षोवरुणयोर्मध्ये भूतनाथानथो यजेत् ॥
गन्धर्वाप्सरसो देवान्मध्ये वरुणवातयोः ।
स्कन्दनन्दीश्वरौ शूलमहाकालौ च सोमतः ॥
ब्रह्मणः सप्तयक्षादीनीशानादिन्द्रतो यजेत् ।
(ब्रह्मसोममध्ये ईशानसोममध्ये इत्यादिरर्थः ।)
दुर्गाविष्णू स्वधामग्नेर्यमाद्वै मृत्युरागकान् ॥
निर्ऋतेः श्रीगणपतिं वरुणादय एव च ।
वायुतो मरुतश्चैष्ठा ब्रह्मपादे धरां यजेत् ॥
कर्णिकाधश्च तत्रैव नदीर्गङ्गादिका यजेत् ।
तत्रैव सागरान्सप्त पूजयेद्वरुणालयात् ॥
(ब्रह्मपादमूले कर्णिकाधः पृथ्वीं नदीः सागरांश्च यजेदित्यर्थः ।
एतदन्तो वैदिको वा नाममन्त्रो वा पूजाहोममन्त्रः ।)
तस्योपरि सुमेरुं च मण्डलाद्बाह्यतोऽप्युदक् ।
(उदीचीक्रमेण सोमादि क्रमेणेति यावत् ।)
गौतमश्च भरद्वाजो विश्वामित्रश्च कश्यपः ॥
जमदग्निर्वसिष्ठोऽत्रिररुन्धत्या च नित्यशः ।
पूर्वादितश्च तद्बाह्ये ऐन्द्रीं कौमारिकामपि ॥
ब्राह्मीं तथा च वाराहीं चामुण्डां वैष्णवीं तथा ।
माहेश्वरीं वैनायकीं चाष्टशक्तीः समर्चयेत् ॥" इति ।
"सोमादेरायुधानीह क्रमेण स्थापयेद्बुधः ।
गदाशूले वज्रशक्ती दण्डखड्गे तथैव च ॥
पाशाङ्कुशौ च तद्बाह्ये क्रमेणाथ यजेदपीन् ।"

*प्रातरिति । प्रातःकालीनव्रतादिसंकल्पस्तु प्रातःसन्ध्यां

जन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छान्तिपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यनवच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं शारदनवरात्रप्रतिपदि विहितकलशस्थापनदुर्गापूजाकुमारीपूजादि करिष्ये इति*संकल्प्य 'मही द्यौः'इति भूमिं स्पृष्ट्वा 'ओषधयः सम्'इति यवान्निक्षिप्य 'आकलशेषु'इति कुम्भं संस्थाप्य 'इमं मे गङ्गे' इति जलेनापूर्य 'गन्धद्वाराम्' इति गन्धं 'या ओषधीः' इति *सर्वौषधीः,'काण्डात् काण्डात्'इति दूर्वाः, 'अश्वत्थेव'इति *पञ्चपल्लवान्'स्योना पृथिवी'इति *सप्तमृदः 'याः फलिनीः'इति फलं 'स हि रत्नानि'इति *पञ्चरत्नानि हिरण्यं क्षिप्त्वा 'युवा सुवासाः' इति वस्त्रेणावेष्ट्य

कृत्वैव कार्यः ।

'प्रातःसन्ध्यां बुधः कृत्वा संकल्पं तत आचरेत् ।'

इति वचनात् । *संकल्प्येति । कदलीस्तम्भवस्त्रादिमण्डिते गृहे चतुर्हस्तवेदिकोपरि सर्वतोभद्रदेवता आवाह्य गणेशकलशं संस्थाप्य दुर्गाकलशं संस्थापयेदिति । तत्र दुर्गाकलशस्थापनमाह— 'महीद्यौः'इत्यादिना । *सर्वौषधीः—

"कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।
वचा चम्पकमुस्ता च सर्वौषध्यो दश स्मृताः" ॥

इत्युक्ताः । *पञ्चपल्लवान्—

"अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः ।
पंचभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥"

इत्युक्तान् । सप्तमृदः—

"गजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलात् ।
राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥"

इत्युक्ताः । *पञ्चरत्नानि आदित्यपुराणे—

१ अस्य चौखम्बा–संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता [illegible] ग्रन्थ एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्ट्यो विद्वांस एतत्परिशोधनादि-कार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, [illegible] वार्षिकमग्रिमं मूल्यम्—मुद्राः १० आणकाः ८

५ देशान्तरीयैरतद्ग्राहकैर्देयं वार्षिकमग्रिमं ... ... ... ... ... मूल्यम्—मुद्राः १० " ०

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ... ... ... ... ...

७ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... ... ... ... ... " " १ " ८


(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खं० २ ३)

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य [illegible] ३३)

(३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथि-मिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १५)

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचित-भाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) ३)

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः ... १॥)

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविर-चित तर्कपादः (मीमांसा) ... ... ३)

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा ३)

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्र-[illegible] । सम्पूर्णम् । (वेदान्तः) ५)

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा । ... ३)

(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृता परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । १॥)

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । [illegible] (वेदान्त) ३)

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिवि-[illegible] म० म० श्रीगिरिधरोपाध्यायविरचित सम्पूर्णः (न्याय) .. ... ... ७॥)

(१३) विधिरसायनम् । श्रीमदप्पय्यदीक्षितकृतं सम्पूर्णम् ३)

(१४) [illegible] (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । (मीमांसा) .. ... .. [illegible])

(१५) [illegible] । [illegible] (वेदान्त) ... ३)

(१६) मीमांसाबालप्रकाशः । जैमिनीयद्वादशाध्यायार्थसंग्रहः [illegible] विरचितः । (मीमांसा) [illegible])

(१७) [illegible] । महामहोपाध्यायश्रीकृष्णतार्किकविरचितम् । [illegible] सम्पूर्णं (मीमांसा) [illegible])

(१८) अद्वैतब्रह्मसिद्धान्तसारः । [illegible] (वेदान्तः) ४॥)

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायकर्काचार्य-

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविर-चितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः) २१)

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ... १॥)

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ... ... ... १२)

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ३)

(२५) कौण्डभट्टसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीश-विरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाध-र्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि खं० ७ ... ... १०॥)

(२६) अणुभाष्यम्, शुद्धाद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धा-न्तजाह्नवीयुतम् ... ... ... ३)

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिक-जैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः ... ... ... १॥)

(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्नार्णवः१॥)

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका ... ... ... ३०)

(३०) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवत-[illegible] टिप्पणीसहित । श्रीमद्भागवतदशमस्कन्धजन्म-प्रकरण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्री पुरुषोत्तमजीमहाराज विरचितः .. ४॥)

(३१) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ६)

(३२) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता ३)

(३३) [illegible] । गोस्वामिश्रीपुरुषोत्तमजीमहाराज विरचित .. .. ... ... ३॥

(३४) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बा-र्काचार्यविरचितम् .. ... ... १॥)

(३५) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थ-विरचित योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया [illegible] ३)

(३६) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्द-[illegible]

(३८) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा-संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च१६॥)

(३९) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ... ... ... ९)

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ६)

(४१) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः खण्डा ७ ... १०॥)

(४२) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः... ... ... ७॥)

(४३) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः खण्डा ६ ... ... ९)

(४४) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता ... ... ४॥)

(४५) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः स्वकृतटीकाविभूषितश्च ... ... ... ... ३)

(४६) याज्ञवल्क्यस्मृतिः । [illegible] कृतमिताक्षरासहिता । व्यवहाराध्यायः ... १६॥)

(४७) गादाधरी । [illegible] । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ख०१४ २१)

(४८) शास्त्रदीपिका । श्रीपार्थसारथिमिश्रप्रणीता । रामकृष्णविरचितयुक्ति[illegible] सहिता तर्कपादः ... ... ... ... ९)

(४९) वैयाकरणसिद्धान्तलघुमञ्जूषा म० म० श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्चिकाकलाटीकाभ्यां संवलिता । ख० ११ ११)

(५०) [illegible] । पद्मतीर्थ [illegible] विरचितः खण्डा १२ ... ... १८)

(५१) बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः । [illegible] ३५)

(५२) पूर्वमीमांसाअधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता नेने इत्युपाख्य गोपालशास्त्रिणा परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृता । ... ... ... १॥)

(५३) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् ख० २ ... ३)

(५४) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोद[illegible] वरणोपेता ... ... ... ... ४॥)

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भावगणेशविरचितम् । समासमूत्रव्याख्या सर्वोपकारिणी । [illegible] । तत्त्वसमाससूत्रविवर-

च खण्डे ३ ... ... ... ३)

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यविरचिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ख० ५ ... ... ७॥)

(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टकृतव्याख्यासहितः खण्डा १२ ... ... १२)

(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः । श्रीमदनन्तदेवविरचितया "भाट्टालङ्काराख्य" व्याख्ययासहिता ९)

(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमिश्रविरचिता । पण्डितराड्—वंशीधरमिश्रविरचित "तत्त्वविभाकर" टीकासहिता खण्डे ९ ... ... ६।)

(६०) न्यायदर्शनं सभाष्यसटीकं खद्योत सहितम्-खण्डे ६ ९)

(६१) साङ्ख्यकारिका ईश्वरकृष्णविरचिता । माठराचार्यविरचित [illegible] । ... ... १॥)

(६२) पुष्पसूत्रं । सामप्रातिशाख्यं पुष्पर्षिप्रणीतम् श्रीमदजातशत्रुकृतभाष्यसहितम् ख० ३ ४॥)

## मुद्र्यमाणा ग्रन्थाः ।

(६३) मीमांसाकौस्तुभः-श्रीखण्डदेवविरचितःखण्डाः ४ ६)

(६४) वीरमित्रोदयः । व्यवहारप्रकाशः । महामहोपाध्याय श्रीमन्मित्रमिश्रविरचितः । खण्डाः ४ ... ६)

(६५) प्रशस्तपादभाष्यटीकासंग्रहः ( तत्र व्योमशिवाचार्यकृता व्योमवती—पद्मनाभमिश्रकृतः सेतुः—जगदीशभट्टाचार्यकृता-सूक्तिश्च ) । खण्डाः ४ ... ६)

(६६) आत्मतत्त्वविवेकः उदयनाचार्यकृतः । शङ्करमिश्रविरचित कल्पलता व्याख्ययासमन्वितः । खण्डाः ४ ६)

(६७) श्रीमच्छङ्कराचार्यकृता-जयमङ्गलाख्या सांख्यकारिकायाष्टीका । खण्डः १ ... ... १॥)

(६८) न्यायचन्द्रिका । श्रीनारायणतीर्थ विरचिता-भागपरिच्छेदव्याख्या । खण्ड १ ... ... १॥)

(६९) याज्ञवल्क्यस्मृतिः । श्रीमन्मित्रमिश्रविरचित, 'वीरमित्रोदया'ख्यटीकया च सहिता । खण्डाः ४ ६)

(७०) काव्यप्रकाशः श्रीभीमसेनविरचितया 'सुधासागर' टीकया विशद टिप्पणेन च सहितः । खण्डाः ४ ६)

(७१) संस्कारगणपतिः । पण्डितवर श्रीरामकृष्ण विरचितः । खण्डाः ४ ... ... ... ६)

## अग्रे मुद्र्यमाणा ग्रन्थाः ।

( १ ) अनुमानखण्डालोकः । महामहोपाध्याय श्रीजयदेवमिश्रविरचितः । ... ... ... ...

( २ ) वीरमित्रोदयः । समयप्रकाशः श्रीमन्मित्रमिश्रविरचितः ।

( ३ ) वीरमित्रोदयः । शुद्धीप्रकाशः श्रीमन्मित्रमिश्रविरचितः ।

( ४ ) अलङ्कारकौस्तुभः । श्रीकविकर्णपूर विरचितः लोचनकृतया टीकया च सहितः । ... ... ...

( ५ ) धर्मसंग्रहः । ... ... ... ...

( ६ ) वादार्थसंग्रहः । ... ... ... ...

( ७ ) कालमाधवः । श्री'लक्ष्मी' अपरनामधेय बालम्भट्टी टीकया सहितः

May 1923.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

## NO. 305.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं०
व्याकरणोपाध्याय नेने—इत्युपाख्यगोपालशास्त्रिणा
तदीयगुरुवर म० म० पं० पर्वतीयनित्यानन्द-
पन्तप्रदर्शितरीतिमनुसृत्य संशोधितो
टिप्पण्या परिष्कृतश्च ।

---

NIRNAYA SINDHU;
of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Vyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS VII —७

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS. PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG: GERMANY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1923.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥

सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥

चौखम्बा–संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥

रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२०५

'पूर्णा दर्वि' इति पूर्णपात्रं निधाय तत्र वरुणं संपूज्य जीर्णायां नूतनायां वा प्रतिमायां दुर्गामावाह्य पूजयेत् । तद्यथा—*पूर्वोक्तं मन्त्रमुक्त्वा—

"आगच्छ वरदे देवि दैत्यदर्पनिषूदनि ।
पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये ॥
सर्वतीर्थमयं वारि सर्वदेवसमन्वितम् ।
इमं घटं समागच्छ तिष्ठ देवगणैः सह ॥
दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय ।
बलिं पूजां गृहाण त्वमष्टाभिः शक्तिभिः सह ॥"

इत्यावाह्य पूर्वोक्तमन्त्रेण षोडशोपचारैः पूजयित्वा माषभक्तबलिं कूष्माण्डादिबलिं वा निवेदयेत् ।

"सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम् ।
पञ्चरत्नं समाख्यातं पावनं पावनेषु तत् ॥"

कालिकापुराणे—

"कनकं हीरकं नीलं पद्मरागं च मौक्तिकम् ।
एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुः ॥"

जीर्णां प्रतिमाञ्च कुम्भे ततः पश्चाद्वा स्थाप्य नूतनायां तु धातुमय्यामग्न्युत्तारणं कार्यम् । ततः प्राणप्रतिष्ठा कार्या । मृदादिमय्यां च केवलप्राणप्रतिष्ठैव नाऽग्न्युत्तारणमिति विशेषः । *पूर्वोक्तं 'जयन्ती मङ्गला काली' इति, नवाक्षरं वा । 'आगच्छ' इत्यादि अयं घटे दुर्गावाहनप्रकारः । प्रतिमायां तु—

"एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा ।
आवाहयाम्यहं देवि सर्वकामार्थसिद्धये ॥
अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु ।
रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोऽस्तु ते ॥"

'भगवति दुर्गे इहागच्छ इह तिष्ठ इह सन्निधेहि स्थिरा भव सु-

प्रसन्ना भव' इत्यावाह्य पूर्वोक्तमन्त्रेण वैदिकेन वा प्रणवादिनमोन्तनाम्ना वा षोडशोपचारैश्छत्रचामरादिराजोपचारैश्च संपूज्य प्रणम्य महिषघ्नीत्यादिवक्ष्यमाणमन्त्रैः प्रार्थयेत्। यदि षष्ठ्यादिपक्षस्तदा प्रतिमास्थापनं प्रतिपदि न कार्यं किन्तु षष्ठ्यामेवेति। स्कान्दे—

"दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम्।
पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम्॥
अनेनैव तु मन्त्रेण जपहोमादि कारयेत्॥"

इत्युक्तम्। गौडास्तु प्रतिमापुरः अष्टपत्रे कमले अष्टशक्तिस्थापनादिकं कुर्वन्ति। ताश्च—

"उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका।
चण्डा चण्डवती चैव चण्डरूपाऽतिचण्डिका॥" इति।

तत्र पूर्वपत्रे उग्रचण्डा अष्टादशभुजा। तद्ध्यानं यथा—

"उग्रचण्डां धूम्रवर्णामष्टादशभुजैर्युताम्।
खेटकं कार्मुकं घण्टां दर्पणं तर्जनीं ध्वजम्॥
कपालमङ्कुशं चर्म बिभ्रती वामबाहुषु।
दक्षेषु धारिणीं खड्गं बाणं शूलं गदां तथा॥
शङ्खं डमरुकं चक्रं मुसलं पट्टिशं तथा।"

इति ध्यात्वा 'ॐ उग्रचण्डे इहागच्छ' इत्यावाह्य 'ॐ ह्रीं श्रीं उग्रचण्डायै नमः' इति यथाशक्त्युपचारैः संपूज्य प्रणमेत्—

ॐ "उग्रचण्डे नमस्तुभ्यं चण्डवैरिविनाशिनि।
सर्वपापहरे देवि वरदा भव सर्वदा॥" इति।

ततोऽग्निपत्रे प्रचण्डा षोडशभुजा। तद्ध्यानं यथा—

"रुद्रचण्डां नीलवर्णां बाहुषोडशशालिनीम्।
खेटकं कार्मुकं घण्टां दर्पणं तर्जनीं ध्वजम्॥
कपालमङ्कुशं वामे दक्षिणे धारिणीमसिम्।

बाणं शूलं गदां शङ्खं डमरुं चक्रमूसलम् ॥"

इति ध्यात्वा प्रचण्डां पूर्ववदावाह्य 'ॐ ह्रीं श्रीं प्रचण्डायै नमः' इति मन्त्रेण पूर्ववत् पूजयेत् प्रणमेच्च—

"प्रचण्डे पुत्रदे नित्यं प्रचण्डगणसंस्थिते ।
सर्वानन्दकरे देवि तुभ्यं नित्यं नमो नमः ॥" इति ।

प्रणवः ह्रीं श्रीं सर्वत्र तत्तच्छक्तिनाम चतुर्थ्यन्तं तत्र तत्र बोध्यम् । ततो याम्यपत्रे चतुर्दशभुजा चण्डोग्रा । तद्ध्यानम् ।

"चामुण्डां घोरमेघाभां चतुर्दशभुजान्विताम् ।
खेटकं कार्मुकं घण्टां कपालं फलकं ध्वजम् ॥
दर्पणं वामतो दक्षे धारिणीं खड्गशूलके ।
बाणं शङ्खं डमरुकं चक्रं मुसलमेव च ॥"

इति ध्यात्वा चण्डोग्रामावाह्य संपूज्य प्रणमेत्—

धात्री त्वं सर्वभूतानां सर्वभूतभयंकरी ।
देवि त्वं सर्वकार्येषु वरदा भव सर्वदा ॥" इति ।

निर्ऋतिपत्रे द्वादशभुजा चण्डनायिकाध्यानम्—

"ॐ चण्डनायिकां कृष्णां भुजैर्द्वादशभिर्युताम् ।
खेटकं कार्मुकं घण्टां कपालं फलकं ध्वजम् ॥
वामेषु धारिणीं दक्षे खड्गं बाणं त्रिशूलकम् ।
शङ्खं च मुसलं चक्रं सर्वशत्रुविनाशिनीम् ॥

चण्डनायिकाऽऽवाहनादि कृत्वा प्रणमेत्—

"या सिद्धिरिति नाम्ना च देवेशवरदायिनी ।
कलिकल्मषनाशाय नमामि चण्डनायिकाम् ॥" इति ।

वारुणपत्रे दशभुजाचण्डाध्यानम्—

"तमालाभां चण्डरूपां दशहस्तां च खेटकम् ।
कार्मुकं फलकं घण्टां कपालं वामबाहुषु ॥
दक्षिणे खड्गशूले वै चक्रं डमरुमूसले ॥"

इत्यावाहनादि प्रणमेत्-

"देवि चण्डाम्बिके चण्डे चण्डारिविजयप्रदे ।
धर्मार्थमोक्षदे देवि नित्यं मे वरदा भव ॥" इति ।

वायव्यपत्रे अष्टभुजां चण्डवतीं ध्यायेत्-

चण्डवतीं घनश्यामामष्टबाहुं च खेटकम् ।
कार्मुकं च कपालं च ध्वजं वामेषु धारिणीम् ॥
दक्षे खड्गं च त्रिशूलं च बाणं चक्रं च मुद्गरम् ।

ततश्चण्डवतीं मावाह्य प्रणमेत्-

"या सृष्टिस्थितिसंहारगुणत्रयसमन्विता ।
या पराः शक्तयस्तस्यै चण्डवत्यै नमो नमः ॥" इति ।

सौम्यपत्रे षड्भुजाचण्डरूपाध्यानम्—

"षड्भुजां चण्डमथिनीं कपालं खेटकं धनुः ।
वामेन बिभ्रती दक्षे खड्गं बाणं त्रिशूलकम् ॥"

आवाहनं पूजनं च कृत्वा प्रणमेत्—

"चण्डरूपात्मिके चण्डे चण्डनायकनायिके ।
सर्वसिद्धिप्रदे देवि नित्यं तुभ्यं नमो नमः ॥" इति ।

ईशानपत्रे चतुर्भुजाऽतिचण्डाध्यानम्—

"चण्डाऽसुरस्य मथिनीं कृष्णवर्णां चतुर्भुजाम् ।
चापं कपालं वामे त्वै दक्षिणे शूलसायके ॥"

अतिचण्डिकामावाह्य संपूज्य प्रणमेत्—

"बालार्कारुणनेत्रा या सर्वदा भक्तवत्सला ।
चण्डाऽसुरस्य मथिनी वरदा त्वतिचण्डिका ॥" इति ।

येषां कुले कुम्भस्थापनं बलिदानादि नास्ति तैस्तन्न कार्यम् । दुर्गा प्रतिमा महिषघ्नीत्यादि प्रार्थना प्रतिमाया अभावे प्रकारश्चाग्र बोध्यः ।

ततः कुमारीपूजा । तदुक्तं हेमाद्रौ स्कान्दे—

*"एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च ।
द्विगुणं त्रिगुणं वाऽपि प्रत्येकं नवकं तु वा ॥"

तथा—

"नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन तु ।
एकवृद्ध्या लभेत्क्षेममेकैकेन श्रियं लभेत् ॥
एकवर्षा तु या कन्या पूजार्थे तां विवर्जयेत् ।
गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते ॥"

तेन*द्विवर्षामारभ्य दशवर्षापर्यन्ता एव पूज्या न त्वन्याः । तासां च क्रमेण—कुमारिका, त्रिमूर्तिः, कल्याणी, रोहिणी, काली, चण्डिका, शाम्भवी, दुर्गा, सुभद्रा इति नामभिः पूजा कार्या । आसां च प्रत्येकं पूजामन्त्राः फलविशेषाश्च तत्रैव ज्ञेयाः ।

---

*एकैकामिति पञ्च पक्षाः । देव्युपासकस्तु शुक्लाष्टम्यादावपि कुमारीं भोजयेत् ।

"शुक्लाष्टमीचतुर्दश्योर्नवम्यां च विशेषतः ।
कृष्णपक्षे विशेषेण भोजयेत्तु कुमारिकाम् ॥"

इति देवीपुराणात् । *द्विवर्षामिति ।

"द्विवर्षकन्यामारभ्य दशवर्षावधिक्रमात् ।
कुमारिका द्विवर्षा च त्रिवर्षा च त्रिमूर्तिनी ॥
चतुर्वर्षा तु कल्याणी पंञ्चवर्षा तु रोहिणी ।
षड्वर्षा तु भवेत्काली सप्तवर्षा तु चण्डिका ॥
अष्टवर्षा शाम्भवी तु (१)कन्या तु नवभिः स्मृता ।
दशवर्षा सुभद्रेति नामभिः परिकीर्तिता ॥"

---

(१)यद्यप्यत्र सर्वेष्वादर्शपुस्तकेषु 'कन्या' इत्येव पाठो दृश्यते तथाऽपि मूले, पूजामन्त्रेषु चात्र दुर्गाया एव दर्शनात् 'दुर्गा तु नवभिः स्मृता' इत्येव पाठोऽपेक्ष्यते इति बोध्यम् ।

"जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि ।
पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥"

इति कुमार्याः पूजामन्त्रः ।

"त्रिपुरां त्रिपुराधारां ज्ञानमार्गस्वरूपिणीम् ।
त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥"

इति (१)त्रिमूर्त्याः ।

"कालातीतां कालमूर्तिं करुणाहृदयां शिवाम् ।
कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहम् ॥"

इति कल्याण्याः ।

"अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ।
अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥"

इति रोहिण्याः ।

"कामचारीं कालरात्रिं कालचक्रस्वरूपिणीम् ।
कामदां करुणाधारां कालीं संपूजयाम्यहम् ॥"

इति काल्याः ।

"चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जनीम् ।
पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ॥"

इति चण्डिकायाः ।

"सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम् ।
सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ॥"

इति शाम्भव्याः ।

"दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् ।
पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् ॥"

इति दुर्गायाः ।

"सुन्दरीं स्वर्णवर्णाभां सर्वसौभाग्यदायिनीम् ।
सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥"

---

(१)अत्र सर्वत्र पूजामन्त्र इत्यनुषज्यते ।

इति सुभद्रायाः। अथ पूजाफलानि।

"आयुष्यबलवृद्ध्यर्थं कुमारीं पूजयेन्नरः।
आयुष्कामस्त्रिमूर्तिन्तु त्रिवर्गस्य फलाप्तये॥
अपमृत्युव्याधिपीडादुःखानामपनुत्तये।
सौख्यधान्यधनारोग्यपुत्रपौत्रादिवृद्धये॥
कल्याणीं पूजयेद्धीमान्नित्यं कल्याणसिद्धये।
आरोग्यसुखकामी च जयकामी तथैव च॥
यशःकामी नरो नित्यं रोहिणीं परिपूजयेत्।
विद्यार्थी विजयार्थी च राज्यार्थी च विशेषतः॥
शत्रूणां च विनाशार्थी कालिकां पूजयेन्नरः।
ऐश्वर्यशुभकामी च स्वर्गकामी च यो नरः॥
संग्रामे जयकामी च चण्डिकां परिपूजयेत्।
दुःखदारिद्र्यनाशाय नृपसंमोहनाय च॥
महापापविनाशाय शाम्भवीं च प्रपूजयेत्।
सर्वोत्कटानां शत्रूणामुग्रसाधनकर्म्मणि॥
दुर्गां दुर्गार्त्तिनाशाय पूजयेद्यत्नतो बुधः।
सौभाग्यधनधान्यादिवाञ्छितार्थफलाप्तये॥
सुभद्रां पूजयेन्मर्त्यो दासादीनां विवृद्धये॥" इति।

अलाभे तु देवीपुराणे—

"तावत्संपूजयेत्कन्यां यावत्पुष्पं न दृश्यते।"

पूजाप्रकारो देवीपुराणे—ब्रह्मोवाच—

"न तथा तुष्यते शक्र होमदानजपेन तु।
कुमारीभोजनेनात्र यथा देवी प्रसीदति॥
(अत्र नवरात्रे)
प्रक्षाल्य पादौ सर्वासां कुमारीणां च वासव।

*सामान्यतस्तु—

"मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥"
"एवमभ्यर्चनं कुर्यात्कुमारीणां प्रयत्नतः ।
कञ्चुकैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः ॥
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः ॥"

तथा—

"*ग्रन्थिस्फुटितशीर्णाङ्गीं रक्तपूयव्रणाङ्किताम् ।
सुलिप्ते भूतले रम्ये तत्र चासनसंस्थिताः ॥
पूजयेद्गन्धपुष्पैश्च स्रग्भिश्चापि मनोरमैः ।
पूजयित्वा विधानेन भोजनं तासु दापयेत् ॥
खण्डलड्डुगुडं सर्पिर्दधि क्षीरं समाक्षिकम् ।
तासां देयं कुमारीणां शनैर्भुञ्जापयेत्तु ताः ॥
पानीयं याचितं देयमन्नं वा याचितं शुभम् ।
तास्तृप्तास्तु यदा सर्वास्ततस्त्वाचमनं ददेत् ॥
आचम्य चाक्षतान् दत्त्वा तया क्षन्तव्यमित्युत ।
दातुः शिरसि दातव्याः कन्यकाभिरथाक्षताः ॥
तेनापि प्रणिपातस्तु कर्तव्यो भक्तिपूर्वकः ।
अनेन विधिना शक्र देवी क्षिप्रं प्रसीदति ॥" इति ।

*सामान्यतः सर्वासामेक एव मन्त्र इत्यर्थः ।

"प्रातःकाले विशेषेण कृताभ्यङ्गो विशेषतः ।
आवाहयेत्ततः कन्यां मन्त्रेणानेन भार्गव ॥"

इति वचनात् । अयं च विशेषमन्त्रैर्व्यवस्थितः । *ग्रन्थयः कूर्पराद्याः ।

"हीनाधिकाङ्गीं कुष्ठीं च विनाशिकुलसम्भवाम् ।"

इति पूर्वार्द्धं । विनाशि सन्ततिशून्यम् । 'कुष्ठादिविकारां कु-

जात्यन्धां केकरां काणीं कुरूपां*तनुरोमशाम् ॥
संत्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम् ॥"

तथा—

'ब्राह्मणीं सर्वकार्येषु जयार्थे नृपवंशजाम् ।
लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम् ॥
दारुणे चान्त्यजातानां पूजयेद्विधिना नरः ॥' इति ॥

अत्र वेदपारायणमप्युक्तं रुद्रयामले—

"एवं चतुर्वेदविदो विप्रान्सर्वान् प्रसादयेत् ।
तेषां च वरणं कार्यं वेदपारायणाय वै ॥" इति ।

तथा—

*एकोत्तराभिवृद्ध्या तु नवमी यावदेव हि ।

---

कुलां तथा' इति पाठान्तरम् । *तनुरोमशामिति कर्मधारयः ।

*एकोत्तरेति । प्रदोषे विशेषतः पूजानन्तरं रात्रौ चण्डीपाठः, तदसम्भवे प्रातर्गीतवादित्रनिर्घोषैः पूजाऽनन्तरं कार्यः । जपो जापश्च नारायणादीन्नमस्कृत्य कार्यः ।

"नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥"

इति भविष्यात् । जयश्च—

"अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णश्च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
शैवधर्माश्च राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम चैतेषां प्रवदन्ति मनीषिणः ॥"

इति भविष्ये विवृतः । देवीगृहेऽहोरात्रं दीपाश्च ज्वालनीयाः । वाचकोऽपि ब्राह्मण एव कार्यः ।

"ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् ।

चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः ॥'

तिथितत्त्वे वाराहीतन्त्रे—

'प्रणवं चादितो जप्त्वा स्तोत्रं वा संहितां पठेत् ।
अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः ॥
आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः ।
हस्तसंस्थापनादेव यस्माद्वै विफलं भवेत् ॥

---

श्रुत्वाऽन्यवर्णजाद्राजन् वाचकान्नरकं व्रजेत् ॥"

इति भविष्यात् । एवम्—

"अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन ।
कृते मध्ये विरामे तु अध्यायादि पठेत् पुनः ॥"

इति द्रष्टव्यम । कामपाठफलं च देवीपुराणे—

"चण्डीपाठफलं देवि शृणुष्व गदतो मम ।
एकावृत्तादिपाठानां यथावत्कथयामि ते ॥
संकल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून् सकृत् ।
पाठात्बलिप्रदानाच्च सिद्धिमाप्नोति मानवः ॥
उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः ।
ग्रहोपशान्तौ कर्तव्यं पञ्चावृत्तं वरानने ॥
महाभये समुत्पन्ने सप्तावृत्तं समुन्नयेत् ।
नवावृत्ताद्भवेच्छान्तिर्वाजपेयफलं लभेत् ॥
राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् ।
अर्कावृत्ते कामसिद्धिर्वैरहानिश्च जायते ॥
मन्वावृत्ताद्रिपुर्वश्यस्तथा स्त्री वश्यतामियात् ।
सौख्यं पञ्चदशावृत्ताच्छ्रियमाप्नोति मानवः ॥
कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः ।
राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च ॥
कुर्यात्सप्तदशावृत्तं तथाऽष्टादशकं प्रिये ।

स्वयं च लिखितं यच्च*शूद्रेण लिखितं भवेत् ।
*अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् ॥
ऋषिच्छन्दादिकं न्यस्य पठेत्स्तोत्रं विचक्षणः ।
स्तोत्रे न दृश्यते यत्र प्रणवं तत्र विन्यसेत् ॥
सर्वत्र पाठो विज्ञेयस्त्वन्यथा विफलं भवेत् ॥'

एवं नवमीपर्यन्तं प्रत्यहं कुर्यात् । अत्र विशेषो हेमाद्रौ-देवीपुराणे—

'यदाद्ये दिवसे कुर्याच्चण्डिकापूजनादिकम् ।

---

महारणविमोक्षाय विंशावर्तं पठेत्सुधीः ॥
पञ्चविंशावर्तनात्तु भवेद्बन्धविमोक्षणम् ॥
संकटे समनुप्राप्ते दुश्चिकित्स्यामये तथा ॥
जातिध्वंसे कुलोच्छेद आयुषो नाश आगते ।
वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥
तथैव त्रिविधोत्पाते तथा चैवातिपातके ।
कुर्याद् यत्नाच्छतावृत्तं ततः संपद्यते शुभम् ॥
श्रियो वृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथा परा ।
मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् ॥
शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ।
सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥
भुक्त्वा मनोरथान्कामान् नरो मोक्षमवाप्नुयात् ।
यथाऽश्वमेधः क्रतूनां देवानां च यथा हरिः ॥
स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ।
अथवा बहुनोक्तेन किमेतेन वरानने ॥
चण्ड्याः शतावृत्तिपाठात्सर्वाः सिद्ध्यन्ति सिद्धयः ॥'' इति ।

*शूद्रेणेति । 'कृतिना' इति वा पाठः । कारुणा लेखोपजीविनेति यावत् । *अब्राह्मणेनेति । तदनुपजीव्यर्थकं भवेदिति ।

द्विगुणं तद् द्वितीयेऽह्नि त्रिगुणं तत् परेऽहनि ॥

नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम् ॥' इति ।

एतेन नवरात्रे पूजैव प्रधानमुपवासादि त्वङ्गमिति गम्यते । तिथिह्रासे तु तिथिद्वयनिमित्तं पूजादि *महालयश्राद्धवदेकादिने *आवृत्त्या कार्यम् । वृद्धौ *तद्वदेवावृत्तिः । ततो नवरात्रोपवासादिसंकल्पं कुर्यात् । स्वस्याशक्तावन्येन वा पूजादि कारयेत् ।

'स्वयं वाऽप्यन्यतो वाऽपि पूजयेत्पूजयीत वा ।'

इति तरङ्गिण्यां देवीपुराणात् । इदं च देवीपूजनं शुक्रास्तादावपि कार्यम् । तदुक्तं धर्मप्रदीपे—

'नष्टे शुक्रे तथा जीवे सिंहस्थे च बृहस्पतौ ।

कार्या चैव स्वदेव्यर्चा*प्रत्यब्दं कुलधर्मतः ॥' इति ।

मलमासे तु वचनाभावान्न भवति ॥

अत्र साश्वस्याश्वपूजनमुक्तं मदनरत्ने देवीपुराणे—

'आश्वयुक्शुक्लप्रतिपत्स्वातीयोगे शुभे दिने ।

पूर्वमुच्चैःश्रवा नाम प्रथमं श्रियमावहत् ॥

तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया सह ।

पूजनीयाश्च तुरगा नवमी यावदेव हि ॥

---

"शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः ।

न कार्यासक्तमनसा कार्यं स्तोत्रस्य वाचनम् ॥" इति ।

*महालयेति । एकस्मिन्दिने *आवृत्त्या एकेन अनुष्ठानेन, तन्त्रेणेति यावत् । तथा च महालये यथा तन्त्रं तथा देवीपूजायामपीत्यर्थः । *तद्वत् महालयवत् । *प्रत्यब्दमिति आरम्भनिषेधार्थम् ।

"अस्तंगते गुरौ शुक्रे सिंहस्थे वसुधाधिपे ।

देवीपूजनमुद्दिष्टं स्थविरे बालके तथा ॥

*शान्तिः स्वस्त्ययनं कार्यं तदा तेषां दिने दिने ।
धान्यं भल्लातकं कुष्ठं वचा सिद्धार्थकास्तथा ॥
पञ्चवर्णेन सूत्रेण ग्रन्थिं तेषां तु बन्धयेत् ।
*वायव्यैर्वारुणैः सौरैः शाक्तैर्मन्त्रैः सवैष्णवैः ॥
वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने ॥'

कल्पतरौ त्वेतदग्रेऽन्यदपि—

'ज्येष्ठायोगे पुरा तत्र गजाश्चाष्टौ महाबलाः ।
पृथिवीमावहन्पूर्वं सशैलवनकाननाम् ॥
कुमुदैरावतौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नीलस्तस्मात्तांस्तत्र पूजयेत् ॥
शाकादृक्षात्समारभ्य नवम्यन्तं च पूर्ववत् ॥'
अश्ववद्धोमादीत्यर्थः ॥

अथ प्रतिपदादिषु विशेषो दुर्गाभक्तितरङ्गिण्यां भविष्ये—

'केशसंस्कारद्रव्याणि प्रदद्यात् प्रतिपद्दिने ।
*पक्वतैलं द्वितीयायां केशसंयमहेतवे ॥
(पट्टदोरमिति गौडपाठः ।)
दर्पणं च तृतीयायां सिन्दूरालक्तकं तथा ।

---

आद्यारम्भे विरामः स्याद् द्वितीयादौ न चिन्तयेत् ।
मलमासे न कर्तव्यं नवदुर्गोत्सवव्रतम् ॥"
इति देवीपुराणात् ।

*शान्तिः=अश्वशान्तिर्गजशान्तिश्च शान्तिमयूखादौ प्रसिद्धा । *वायव्यैरिति । वैदिकैर्नाममन्त्रैर्वाऽष्टोत्तरशतं होमः ।

*पक्वतैलमिति । 'पट्टदोरम्' इति वा पाठः । सिन्दूरं भाले, अलक्तकं पादयोः । दिवेति बोधने नवमीपूर्वाह्णःकालः दिनद्वययोगे तु आर्द्रायोगः । उपवासोऽप्यस्यामुक्तः ।

"तस्मादियं महापुण्या नवमी पापनाशिनी ।

मधुपर्कं चतुर्थ्यां तु तिलकं नेत्रमण्डनम् ॥
पञ्चम्यामङ्गरागं च शक्त्यालंकरणानि च ।
षष्ठ्यां बिल्वतरौ बोधं सायंसंध्यासु कारयेत् ॥
सप्तम्यां प्रातरानीय गृहमध्ये प्रपूजयेत् ।
उपोषणमथाष्टम्यामात्मशक्त्या च पूजनम् ॥
नवम्यामुग्रचण्डायाः पूजां कुर्याद्बलिं तथा ।
संपूज्य प्रेषणं कुर्याद्दशम्यां शाबरोत्सवैः ॥
अनेन विधिना यस्तु देवीं प्रीणयते नरः ।
स्कन्दवत्पालयेद्देवी तं पुत्रधनकीर्तिभिः ॥'

कृत्यतत्त्वार्णवे लैङ्गे—

'कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभेऽपि वा ।
नवम्यां बोधयेद्देवीं महाविभवविस्तरैः ॥
शुक्लपक्षे चतुर्थ्यां तु देवीकेशविमोचनम् ।
प्रातरेव तु पञ्चम्यां स्नापयेत्सुशुभैर्जलैः ॥
षष्ठ्यां सायं प्रकुर्वीत बिल्ववृक्षेऽधिवासनम् ।
सप्तम्यां पत्रिकापूजा अष्टम्यां चाप्युपोषणम् ॥
पूजा च जागरश्चैव नवम्यां विधिवद्बलिः ।
विसर्जनं दशम्यां तु क्रीडाकौतुकमङ्गलैः ॥'

*'अत्र नवम्यां बोधनासामर्थ्ये षष्ठ्यां बोधनमिति स्मार्ताः । फलभूमार्थिनः समुच्चय इत्यन्ये । नवम्यां मन्त्रः कालिकापुराणे—

*'इषे मास्यसिते पक्षे नवम्यामार्द्रभे दिवा ।
श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहम् ॥'

---

उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः ॥"

इति भविष्यात् । बोधने षष्ठीनवमीविरोधादाह—*अत्रेति । *इषे इति । पूर्णिमान्तमानेन । दानं पूजासमकल्पं बलिदाना-

अत्र स्त्रीव्रते विशेषः परिभाषायां ज्ञेयः ॥
अत्राशौचे विशेषो निर्णयामृते विश्वरूपनिबन्धे—

'आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके ।
शावाशौचे समुत्पन्ने क्रिया कार्या कथं बुधैः ॥
सूतके वर्तमाने च तत्रोत्पन्ने सदा बुधैः ।
देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः ॥
सूतके पूजनं प्रोक्तं दानं चैव विशेषतः ।
देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यते ॥' इति ।

कालादर्शे विष्णुरहस्येऽपि—

'पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ।
तत्कर्तव्यं नरैः शुद्धं *दानार्चनविवर्जितम् ॥' इति ।

*गौडनिबन्धे तिथितत्त्वेऽप्युक्तम्—'आश्विनकृष्णनवम्यादि शुक्लप्रातिपदादि षष्ठ्यादि सप्तम्यादि चैकं कर्म । अतश्च मध्ये आशौचपातेऽपि न दोषः, *'संकल्पो व्रतसत्रयोः' इति विष्णूक्तेः इति । *आरब्धं स्वयमेव कार्यम्, अनारब्धं त्वन्येन कारयेदिति दिवोदासः । रजस्वला त्वन्येन कारयेत् । सूतकादिवद्विशेषवचनाभा-

---

द्यङ्गमधिकृत्याह—*दानार्चनेति । नन्वस्तु प्रधानयोरप्यर्चनदानयोर्निषेध इत्यत्राह—*गौडेति । *संकल्प इति । एतच्चाशौचेन संकल्पत्यागो मा प्रसाङ्क्षीत् इत्येवमर्थम् । आशौचं निमित्तीकृत्यापूर्वसंकल्पविधौ गौरवात् । ततश्च कर्तव्यत्वेन साङ्गप्रधानं प्राप्नुयात् । तत्र दानार्चनविवर्जितमित्यङ्गयोरेव दानार्चनयोर्निषेधो न तु प्रधानयोस्तयोः । अन्यथा व्रतान्तरेऽङ्गयोरत्र तु प्रधानयोरिति वैरूप्याद् अत्र प्रधानयोस्तयोर्निषेद्धुमशक्यत्वाच्च । एवञ्च व्रतशब्देन प्रधानभूतपूजाबलिदानादिव्रतस्यापि ग्रह इति भावः । वर्तमाने तत्रोत्पन्ने इत्यनयोः फलमाह—*आरब्धमिति । पूर्वसंकल्पितत्वाविशेषणाच्च ।

त्। स्त्रीणां च नवरात्रे ताम्बूलादिचर्वणं भवति। तदु-क्तं व्रतहेमाद्रौ गारुडे—

'गन्धालंकारताम्बूलपुष्पमालानुलेपनम्।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्॥' इति।

एतत्सभर्तृकोपवासविषयम्। अन्यश्चात्र विशेषः परिभाषायामुक्तः।

आश्विनशुक्लपञ्चम्यामुपाङ्गललिताव्रतं महाराष्ट्रेषु प्र-सिद्धम्। तत्र यद्यपि कथायां कालविशेषो नोक्तस्तथापि—

'रात्रौ जागरणं कुर्याद्गीतवादित्रनिःस्वनैः।'

इति रात्रौ जागरोक्तेः शक्तिपूजाया रात्रौ *प्राश-स्त्याच्च रात्रिव्यापिनी ग्राह्येति केचित्। वस्तुतस्तु वच-नं विना रात्रिपूजायां मानाभावाज्जागरस्य चा*ङ्गत्वाद्यु-ग्मवाक्यात्

'भुक्त्वाजागरणे नक्ते चन्द्रार्घ्यार्घ्यव्रते तथा।
ताराव्रतेषु सर्वेषु रात्रियोगो विशिष्यते॥'

इति कालहेमाद्रौ वचनाच्च पूर्वविद्धा ग्राह्या। रात्रि-शब्दः पूर्वविद्धावचन इति हेमाद्रिः। अस्य च भुक्त्वाजागरणरूपत्वादिति साधु प्रतीमः। भुक्त्वा जागरणं यत्रेत्येकं पदम्, तस्मिन्व्रते इत्यर्थः। अन्यथा भुक्त्वेत्यसंगतेः। दिवोदासीयेऽप्येवम्।

आश्विनशुक्लपक्षे मूलनक्षत्रे पुस्तकेषु सरस्वतीस्था-पनम्। यथोक्तं निर्णयामृते देवीपुराणे—

'मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम्।
उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत्॥' इति।

---

*प्राशस्त्यादिति। निशि भ्रमन्तीत्युक्तेः। *अङ्गत्वा-दिति। न च—

रुद्रयामलेऽपि—

'मूलऋक्षे सुराधीश पूजनीया सरस्वती ।
पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम् ॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन ।
पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः ॥'

(१)(संग्रहे—
'आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम् ।
मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ॥' )

मूलस्याद्यपादे आवाहनमिति शिष्टाः । श्रवणाद्यपादे च विसर्जयेत् ।

'आदिभागो निशायां तु श्रवणस्य यदा भवेत् ।
संप्रेषणं तदा देव्या दशम्यां च महोत्सवः ॥'

इति चिन्तामणौ ब्रह्माण्डपुराणात् ॥

अथ षष्ठी । गौडनिबन्धे देवीपुराणे—

'व्रतस्यास्य फलं प्रोक्तं जागरे मुनिसत्तम' ।

इति जागरस्य फलसम्बन्धात् प्रधानमिति वाच्यम् । करण्डपिधानं प्रकृत्य—

'तत्पूजयन्निजगृहे परां वृद्धिमवाप्स्यति ।'

इति फलसम्बन्धात् पूजैव प्रधानं "धातुसम्बन्धे प्रत्ययाः" ( पा० सू० ३-४-१ ) इति पाणिनिस्मरणात्, जागरस्तु वायनदानादिवदङ्गम् । फलवत्सन्निधावफलं तदङ्गमिति न्यायात् व्रतस्यास्येति तु जागरभिन्नत्वेन प्रतीतेस्तस्यैव जागरे सति फलसम्बन्धबोधकं न तु जागरप्राधान्यबोधकमिति भावः । वस्तुतस्तु भुक्त्वा-जागरणवाक्यं तत्प्रधानकव्रतपरम् । अङ्गानुरोधेन निर्णयस्याप्रासिद्धत्वात् । तस्मादिह मध्याह्नव्याप्त्यैव निर्णयः । पूजाव्रतेऽप्यित्युक्तेः ।

(१) कंसान्तर्गतो ग्रन्थ आदर्शपुस्तके नास्ति ।

दिनद्वये सत्त्वेऽसत्त्वे च युग्मवाक्यादिति । स्कान्दे—

"शुक्लपक्षस्य पञ्चम्यामिषे मासि चरेद्व्रतम् ।
गर्जितं सन्ध्ययोस्त्याज्यं दिनवृद्धौ क्षये तथा ॥
निर्वर्त्यावश्यकं कर्म शुची रागविवर्जितः ।
चत्वारिंशत्तथा चाष्टौ कल्पितानि विधानतः ॥
दन्तकाष्ठान्युपादाय तडागं वा नदीं व्रजेत् ।
दन्तधावनपूर्वाणि मज्जनानि समाचरेत् ॥
"आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते ॥
मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये ।
ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् ॥"
[इति]मन्त्रः ।
ततो यथाविधि स्नात्वा शुक्लवासाः गृहं व्रजेत् ।
शुचौ देशे मण्डपिकां कृत्वा चातिमनोहराम् ॥
सौवर्णीं प्रतिमां कृत्वा स्थापितां तत्र पूजयेत् ।
(प्रतिमा च पिधानकं, सौवर्णीत्युपलक्षणम् ।)
अथ दूर्वाङ्कुरान्साग्रांश्चत्वारिंशत्तथाष्टभिः ।
अधिकान्हस्त आदाय मन्त्रमेतं जपेद्बुधः ॥
'बहुप्ररोहा सततमसृता हरितालिका ।
यथेऽयं ललिते मातस्तथा मे स्युर्मनोरथाः ॥'
(दूर्वापूजामन्त्रः ।)
इत्युक्त्वा पूजयेद्देवीमेवमेवंविधां सुधीः ।
चत्वारिंशातिकृत्वस्तु अष्टकृत्वः समाचरेत् ॥"

एवं विधां पूजामष्टाचत्वारिंशद्वारं समाचरेदित्यर्थः । एवमष्टचत्वारिंशद्दूर्वा विज्ञायन्ते ।

"ततो वाणकमादाय विंशत्या वटकादिकम्" ।

घटकोदुम्बरादिकमिति वा । पठ्यमानेन मन्त्रेण आचार्याय नि-

*'ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् ।
सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ॥
पूर्वाषाढायुताष्टम्यां पूजाहोमाद्युपोषणम् ।
उत्तरेण नवम्यां तु बलिभिः पूजयेच्छिवाम् ॥
श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत् ।'

कालिकापुराणे—

*बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च ।

वेदयेत् । तत्र मन्त्रः—

"पक्वान्नं फलसंयुक्तं सघृतं दक्षिणान्वितम् ।
द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे ॥"

अथवा—

"उपाङ्गललिते देवि व्रतसंपूर्तिहेतवे ।
वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥"
"ततः कथां समाकर्ण्य वाणकान्नस्य संख्यया ।
स्वयमद्यात्तदेवान्नं वाग्यतस्सह बान्धवैः ॥"

तदेवान्नमित्यत्रान्तरपरिसंख्या न च त्रैदोष्यमेवकारेणाऽन्यनिवृत्तेरुक्तत्वात् । "अत्र ह्येवावपन्ति" इतिवत् । सप्तम्यां बिल्वशाखापूजा कार्या ।

"आश्विनस्य सिते पक्षे सुमुहूर्त्तेन सप्तमी ।
तस्यां च पत्रिकापूजा कर्त्तव्या नरनायकैः ॥
प्रशस्तां सफलां बिल्वशाखामारुह्य पूजयेत् ॥"

इति वचनात् । तत्र बोधनकालः कृष्णनवमी तदुत्तरषष्ठी वा, तत्र षष्ठीप्रभृति पत्रिकापूजाविधानं प्रपञ्चयति—*ज्येष्ठेति । तिथिनक्षत्रयोगलाभार्थमाश्विनकृष्णनवम्यादिशुक्लप्रतिपदादिपक्षौ निरूपितौ, तत्राशक्तस्य षष्ठ्यादिपक्षान्तरमाह—*बोधयेदिति । पूर्वकल्पयोरपि षष्ठ्यां बोधनं पूर्वमेवोक्तम् । एतत्कल्पे त्वत्र कर्मार-

सप्तम्यां बिल्वशाखां तामाहृत्य प्रतिपूजयेत् ॥
पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत् ।
जागरं च स्वयं कुर्याद्बलिदानं महानिशि ॥
प्रभूतबलिदानं तु नवम्यां विधिवच्चरेत् ।
विसर्जनं दशम्यां तु कुर्याद्वै शाबरोत्सवैः ॥
धूलिकर्दमनिक्षेपैः क्रीडाकौतुकमङ्गलैः ॥'

अत्र सर्वत्र तिथिनक्षत्रयोगादरो मुख्यः कल्पः । तदभावे तु तिथिरेव ग्राह्या ।

'तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम् ।
तस्मात्तिथिं प्रशंसन्ति नक्षत्रं न तिथिं विना ॥'

इति विद्यागतिलिखितवचनात् ।

'तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम् ।
योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि ॥'

इति तत्रैव देवलोक्तेश्च ।

अत्र च*पत्रीप्रवेशात्पूर्वेद्युः सायंकाले षष्ठ्यभावे पूर्वदिनेऽधिवासनं कार्यम् । *सायंकालेऽस्यन्तासत्त्वे त्वधिवासनलोपः ।

---

क्रम इति भेदः ।

*पत्रीप्रवेशात् औदयिकसप्तमीप्रातःकालरूपतत्कालत्वात् । अत्रारुचिं दर्शयन्नेवाह—*सायमिति । अयमर्थः—यद्यपि

'षष्ठ्यां बिल्वतरोर्बोधं सायंसन्ध्यासु कारयेत् ।'

इति वाक्यात् षष्ठी सायंसन्ध्याव्यापिनी पूर्वा परा वा प्राप्नोति तथाप्यामन्त्रणं पत्रीप्रवेशाऽव्यवहिते पूर्वदिने कार्यम् ।

''पत्रीप्रवेशात्पूर्वेद्युः सायाह्ने बिल्ववासिनीम् ।
चण्डीमामन्त्रयेद्विद्वान्नात्र षष्ठी पुरस्क्रिया ॥''

इति वाक्यात् ।

'षष्ठ्यां सायं प्रकुर्वीत बिल्ववृक्षेऽधिवासनम् ।'
इति पूर्ववचनादिति कल्पतरुः । सायंश्रुतिः फलातिशयमात्रार्था न तु कर्मलोप इत्याचार्यचूडामणिः । अत्र क्रमः—बिल्वसमीपं गत्वा*देवीं बिल्वं च संपूज्य प्रार्थयेत् । तत्र मन्त्रः—

'रावणस्य वधार्थाय रामस्यानुग्रहाय च ।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥
*अहमप्याश्रितः षष्ठ्यां सायाह्ने बोधयाम्यतः ।
*श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः ॥
नेतव्योऽसि समागच्छ पूज्यो दुर्गास्वरूपतः ॥' इति

"ज्येष्ठा वाप्यथवा षष्ठी सायंकाले न चेद्भवेत् ।
सायमेव तथापि स्याद्बिल्वशाखाभिमन्त्रणम् ॥
पूर्वां षष्ठीं सनक्षत्रां सायं प्राप्तमपि त्यजेत् ।
यदा तु पत्रिकापूजा परेद्युर्न भविष्यति ॥
सान्निकृष्टं तु यत्पूर्वं पत्रिकादिवसस्य तु ।
तद्दिने वरणं कृत्वा परशाखांप्रपूजयेत् ॥"

इति मत्स्यसूक्तादिति । *देवीं बिल्वं चेति । आर्थक्रमानुरोधाच्छाब्दक्रमत्यागः । तथा च—'बिल्ववृक्षाय नमः' इति बिल्वतरुं संपूज्य बिल्ववृक्षे 'जयन्ती' इत्यादि 'दुर्गे इहागच्छ' इत्यादि च दुर्गामावाह्य पूजयित्वा गीतवाद्यपुरःसरं देवीं बोधयेदित्यर्थः । *अहमपीति । नवमीबोधनपक्षे—

"इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः ।
श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहम् ॥"

इति मन्त्रः स्मर्तव्यः । *श्रीशैलेति ।

"मेरुमन्दरकैलासहिमवच्छिखरे गिरौ ।
जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रियः ॥"

एवं देवीमधिवास्य परदिने निमान्त्रितबिल्वशाखापत्री-प्रवेश*पूजां कुर्यात्। तदुक्तं हेमाद्रौ लैङ्गे-

*'मूलाभावे तु सप्तम्यां केवलायां प्रवेशयेत्।
युग्माभ्यां नवबिल्वस्य फलाभ्यां शाखिकां तथा॥
*तथैव प्रतिमां देव्याः*स्नात्वाभ्युक्ष्य प्रवेशयेत्।'

अत्र चोपवासपूजादावौदयिकी सप्तमी ग्राह्या, न तु युग्मवाक्यात्पूर्वा।

'युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता॥'

इति कृत्यतत्त्वार्णवोदाहृतवचनात्

*'भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः॥'

इति तिथितत्त्वे नन्दिकेश्वरपुराणाच्च। दुर्गाभक्तिनरङ्गिण्यामप्येवम्। तत्रापि घटिकातो न्यूनत्वे परा कार्या।

'व्रतोपवासनियमे घटिकैकापि या भवेत्।'

---

इत्यादि। *पूजां कुर्यादिति। तदुत्तरकृत्यं चाग्रे पूर्वनिमान्त्रितबिल्वसमीपं गत्वेत्यादि वक्ष्यति।

'सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम्।'

इत्युक्तम्। मूलासत्त्वेऽप्याह-*मूलाभावे त्विति। *तथैवेति। केशसंस्कारद्रव्यादिदानप्रभृति षष्ठीपूजान्तं बहिः कार्यमिति लब्धं, तच्च षष्ठ्यामारम्भपक्षे तस्यामेव समुच्चयेन भवति। *स्नात्वेति प्रवेशकानां स्नानादिनित्यकृत्यलाभार्थम्। पत्रिकाप्रवेशे देवीप्रवेशो युज्यते। *भगवत्या इति। आद्यन्तपदाभ्यां पत्रिकापूजायां सप्तम्यादितिथित्रयमुत्तरोत्तरातिथिवदौदयिकं ग्राह्यमिति लभ्यते। प्रातःकालीनमिति।विवेचने गौरीतृतीयावदौदयिकीति

इतिदेवलोक्तेरिति गौडाः । *दाक्षिणात्यास्तु पूर्ववचनमदृष्ट्वा युग्मवाक्यात्पूर्वां कुर्वन्ति । पत्रिकापूजा च *पूर्वाह्ण एव कार्या न तु मूलानुरोधान्मध्याह्नादाविति कृत्यतत्त्वार्णवे उक्तम् । पत्रिकास्तु—

'रम्भा कवी हरिद्रा च जयन्ती बिल्वदाडिमौ ।
अशोको मानवृक्षश्च धान्यादिनवपत्रिकाः ॥'

इति तत्रैवोक्ताः ।

अस्यामेव सप्तम्यां देवीत्रिरात्रमुक्तं हेमाद्रौ । प्रतिपदादिनवतिथिषु उपवासकरणासामर्थ्ये सप्तम्यादिदिनत्रये वा कुर्यात् । तदाह धौम्यः—

आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥
त्रिरात्रं वाऽपि कर्तव्यं सप्तम्यादि यथाक्रमम् ॥'

अत एव हेमाद्रौ देवीपुराणे मङ्गलाव्रते—

'आश्विने वाथवा माघे चैत्रे वा श्रावणेऽपि वा ।
कृष्णाष्टम्यादि कर्तव्यं व्रतं शुक्लावधिं हरेः ॥
यावच्छुक्लाष्टमी शक्र उपोष्या तु विधानतः ।
दानं होमो जपः पूजा कन्या भोज्यास्तथान्वहम् ॥

---

केचित् । *दाक्षिणात्यास्त्विति । अरुचिः स्पष्टैव । 'पूर्वाह्णे पूजयेच्छिवाम्' इत्युक्तेः । *पूर्वाह्ण एवेति । तदुक्तम्—

"पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा
आरोग्यं धनदा करोति विजयं चण्डीप्रवेशे शुभा ।
मध्याह्ने जनपीडनक्षयकरी संग्रामघोरावहा
सायाह्ने वधबन्धनादिकलहं सर्वं कृतं सर्वदा ॥
सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका श्रीफलाढ्या
राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति मूलानुरोधात् ।

महाभैरवरूपेण अस्थिमालाधराश्च ये ।
पूजनीया विशेषेण वस्त्रैर्ग्रामपुरादिषु ॥'
इति मासचतुष्टयेऽभिधाय । अन्यत्रापि-
'अथवा नवरात्रं च सप्त पञ्च त्रिकं दिवा ।
एकभक्तेन नक्तेनायाचितोपोषितैः क्रमात् ॥' इति ।
'पूजयेताश्विने शक्र यावच्छुक्लाष्टमी भवेत् ।
सर्वकार्याणि सिध्यन्ति शक्र नास्त्यत्र संशयः ॥'
इत्युक्तम् । दिवेत्ये*करात्रमुक्तम् । गोविन्दार्णवे देवीपुराणे-
'नवरात्रव्रतेऽशक्तास्त्रिरात्रं चैकरात्रकम् ।
व्रतं चरति यो भक्तस्तस्मै दास्यामि वाञ्छितम् ॥"
इति ।

*तत्रापि सप्तम्याः पूजने पूर्वोक्तो निर्णयः । *अत्र तिथियौगपद्ये तन्त्रेणोपवासः । तिथिद्वयनिमित्तं पूजादिकं तु भेदेन ।

---

तस्मात्सूर्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीं
भूपालो वेशयेत्तां सकलजनहितां राक्षसघ्नीं विहाय ॥"
"प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत् ॥"
इति वाक्यस्य पत्रीपूजापरत्वात् । प्रातः प्रपूजयेत् इति पाठान्तरम् । प्रातःशब्दश्चेह पूर्वाह्णपर इत्युक्तम् ।

*एकरात्रमिति । अष्टम्यामेव नवम्यामेव वेत्यर्थः । *तत्रापीति । त्रिरात्रेऽपीत्यर्थः । 'शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्योदयगामिन्याम्' इति वचनात् । औदयिकत्वं द्विमुहूर्तमिति ग्रन्थकृतः । पूर्वाह्णव्यापित्वमिति वस्तुगतिः । माधवमते तु नक्तव्रतत्वात्प्रदोषव्यापित्वं निर्णायकम् । *अत्र पत्रीप्रवेशे ।

अत्र विशेषो निर्णयामृते भविष्ये—

"सप्तम्यां नव गेहानि दारुजानि नवानि च ।
एकं वा *वित्तभावेन कारयेत्सुसमाहितः ॥
दुर्गागृहं प्रकर्तव्यं चतुरस्रं सुशोभनम् ।
तन्मध्ये वेदिकां कुर्याच्चतुर्हस्तां समां शुभाम् ॥
तस्यां सिंहासनं क्षौमं कम्बलाजिनसंयुतम् ।
तत्र *दुर्गां प्रतिष्ठाप्य सर्वलक्षणसंयुताम् ॥
भुजैश्चतुर्भी रुचिरैर्दशभिर्वा विभूषिताम् ।
तप्तहाटकवर्णाभां त्रिनेत्रां शशिशेखराम् ॥

"व्रती संपूजयेद्देवीं सप्तम्यादिदिनत्रये ।
द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः ॥"

इति भविष्यात् । त्रिरात्रव्रते तु मुख्यकल्पवदत्र निर्णयस्यान्नाकाङ्क्षा । *वित्तभावेनेति । वित्तासत्त्वे तु पूर्वगृहमेव वस्त्रादिभिः, कदलीस्तम्भादिभिश्च भूषणीयमिति सूचितम् । *दुर्गामिति । सर्वलक्षणानि सामुद्रशास्त्रोक्तानि मात्स्ये—

"जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम् ।
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।

('तप्तकाञ्चनवर्णाभाम्' इति प्रमाणान्तरादतसीपुष्पं शणपुष्पं ग्राह्यं, तच्च पीतम् । )

नवयौवनसंपन्नां सर्वाभरणभूषिताम् ॥
सुचारुदशनां तद्वत्पीनश्रोणिपयोधराम् ।
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥
त्रिशूलं दक्षिणे दद्यात्खड्गं चक्रं क्रमादधः ।
तीक्ष्णं बाणं तथा शक्तिं वामतोऽपि निबोधत ॥
खेटकं पूर्णचापं च पाशमङ्कुशमूर्द्ध्वतः ।

अनेककुसुमाकीर्णां कपर्देन सुशोभिताम् ।
नितम्बबिम्बसंनद्धकिङ्किणीक्वाणनादिनीम् ॥
*शूलचक्र*दण्डशक्तिवज्रचापासिधारिणीम् ।
घण्टाक्षमालाकरकपानपात्रलसत्कराम् ॥
तदग्रे छिन्नशिरसं माहिषं रुधिराप्लुतम् ।
निःसृतार्धतनुं कण्ठनाले चर्मासिधारिणम् ॥

---

घण्टां वा परशुं वाऽपि वामतः सन्निवेशयेत् ॥
(दशभुजेऽयं देवी ।)

अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ।
शिरच्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ॥
हृदि शूलेन निर्भिन्नं तिर्यग्दन्तविभूषितम् ।
रक्तरक्तीकृताङ्गं च रक्तविस्फारितेक्षणम् ॥
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ।
सपाशवामहस्तेन धृतकेशं च दुर्गया ॥
वमद्रुधिरवक्त्रं च, देव्याः सिंहं प्रदर्शयेत् ।
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ॥
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयमानं च तद्रूपममरैः सन्निवेशयेत् ॥" इति

ध्यानमप्येवमेव कर्तव्यम्---

"प्रसन्नवदनां देवीं दैत्यदानवदर्पहाम् ।
शत्रुक्षयकरीं चैव सर्वकामप्रदां शुभाम् ॥
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चैव चण्डरूपाऽतिचण्डिका ॥
अष्टाभिः शक्तिभिस्ताभिः सततं परिवेष्टिताम् ।
विजयेज्जगतां धात्रीं धर्मकामार्थमोक्षदाम् ॥"

इत्युक्तेः । *शूलेति । *दण्डः बाणः । इयमपि एकभुजे

देवीधृतकरग्रीवं शूलेनोरसि ताडितम् ।
नागपाशेन विक्षिप्तं हर्यक्षेणापि विद्रुतम् ॥
वमद्रुधिरवक्त्रेण धुन्वतोर्ध्वं सटान् रुषा ।
सर्वतो मातृचक्रेण सेव्यमानां सुरैस्तथा ॥" इति ।
"तत्र देवी प्रकर्तव्या हैमी वा राजती तथा ।
मृद्वार्क्षी लक्षणोपेता खड्गशूले च*पूजयेत् ॥"
वार्क्षी=दारुमयी ।

देवीमूर्तिस्थापने विशेषो दुर्गाभक्तितरङ्गिण्यां देवीपुराणे—

'याम्यास्या शुभदा दुर्गा पूर्वास्या जयवर्धिनी ।
पश्चिमाभिमुखी नित्यं, न स्थाप्या सौम्यदिङ्मुखी ॥'

प्रतिमाऽभावे विशेषस्तत्रैव—

"हैमराजतमृद्धातुशैलचित्रार्पितापि वा ।
खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा ॥
यद्यदस्यायुधं प्रोक्तं तस्मिंस्तां प्रतिपूजयेत् ।
देवी भक्त्यार्चिता पुंसां राज्यायुःसुतसौख्यदा ॥"

कृत्यतत्त्वार्णवे कालिकापुराणे—

"लिङ्गस्थां पूजयेद्देवीं मण्डलस्थां तथैव च ।
पुस्तकस्थां महादेवीं पावके प्रतिमासु च ॥
चित्रे च त्रिशिखे खड्गे जलस्थां वापि पूजयेत् ।
बिल्वपत्रैर्यजेद्देवीं तथा जातीप्रसूनकैः ॥
नानापिष्टकनैवेद्यैर्धूपदीपैर्मनोहरैः ॥

---

आयुधद्वयधारणेन दशभुजा । *पूजयेदिति ।
"मृन्मयीं प्रतिमां कृत्वा बिल्वे वा यस्तु पूजयेत् ।
आत्मवित्तानुसारेण स लभेन्मौक्तिकं फलम् ॥"

*भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः ॥
भगलिङ्गक्रियाभिश्च प्रीणयेद्वरचाण्डिकाम् ।
परैर्नाक्षिप्यते यस्तु यः परान्नाक्षिपत्यपि ॥
यस्य क्रुद्धा भगवती शापं दद्यात्सुदारुणम् ॥"

चित्रमृन्मयादौ स्नानाद्यसंभवे तत्रैवोक्तम्—

'अन्तिके स्थापिते खड्गे स्नापयेद्दर्पणेऽथवा ।' इति ॥

अथ सप्तमीपूजाविधिः । *प्रतिपद्युक्तविधिना फलसंकीर्तनान्ते नवपत्रिकापूजनमृन्मयदुर्गापूजाबलिदानानि करिष्य इति संकल्प्य पूर्वनिमन्त्रितबिल्वसमीपं गत्वा*संपूज्य—'आगच्छ सर्वकल्याणि' इति पूर्वोक्तमन्त्रं पठित्वा—

"बिल्ववृक्ष महाभाग सदा त्वं शङ्करप्रिय ।
गृहीत्वा तव शाखां च देवीपूजां करोम्यहम् ॥
शाखाछेदोद्भवं दुःखं न च कार्यं त्वया प्रभो ।
गृहीत्वा तव शाखां च पूज्या दुर्गेति च स्मृतिः ॥
*उत्तिष्ठ पत्रिके देवि सर्वकल्याणहेतवे ।
पूजां गृहाण सकलामस्माकं वरदा भव ॥
मेरुमन्दारकैलासहिमवच्छिखरे गिरौ ।
(१) जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रियः ॥"

इति*संप्रार्थ्य—'ॐ छिन्धि फट् फट् ॐ हुं फट् स्वाहा' इति

---

इति च बोध्यम् । शाबरोत्सवैरित्युक्तं, तानुत्सवानाह—*भगेति । शबराणामिमे शाबराः ।

*प्रतिपदीति । प्रतिपदि दुर्गाप्रतिष्ठापने तत्समीप एव पत्रीस्थापने सहैव इति संप्रदायः । *संपूज्येति । 'बिल्वं दुर्गां च' इति शेषः । *उत्तिष्ठेति पत्रिकायाः प्रार्थना पूजां कृत्वा कार्या । *संप्रार्थ्येति । 'कृताञ्जलिः' इत्यादिः । ॐ इति छेदनम-

---

(१) 'जातः श्रीवृक्षबिल्व त्वम्' इति पाठान्तरम् ।

**छित्त्वा*संपूज्य—'ॐ चामुण्डे चल चल' इति*वाद्यघोषेण देवीं तां च*गृहं प्रवेश्य—**

---

न्त्रः । उपदेशादिहीनानान्तु वानस्पत्यमन्त्रः । स च 'वानस्पत्योसि बार्हस्पत्योसि' इत्यादिः । फलद्वययुतामपराजितां दिगन्तां शाखां च्छेदयेत् । *संपूज्येति । नाममन्त्रेण बिल्वशाखां तत्र प्रतिमां देवीं चावाहनपूर्वकं संपूज्य माषभक्तादिबलिं दत्त्वा दोलनादिना शाखां देवीं च गृहमानयेत् । तत्राह—*वाद्येति ।

"गीतवादित्रनिर्घोषं देव्या अग्रे च कारयेत् ।
घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः" ॥

इति मात्स्यात् । गृहाङ्गणे पीठावस्थितां शुद्धोदकेन स्नापयित्वा माषभक्तादिबलिं च दत्त्वा पूजागृहस्थानि भूतानि नाममन्त्रेण गन्धादिभिः संपूज्य बलिं दद्यात् । तत्र मन्त्रः—

भूताः प्रेतपिशाचाश्च ये वसन्त्यत्र भूतले ।
ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः ॥
पूजिता गन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा ।
देशादस्माद्विनिष्क्रुत्य पूजां पश्यन्तु मत्कृताम् ॥"

भूतेभ्य एष माषभक्तबलिर्नमम इति । ततः सर्षपान्विकिरेत्—

"अपसर्पन्तु ते भूता ये भूता भूमिपालकाः ।
भूतानामविरोधेन देवीपूजां करोम्यहम् ॥"

'फट्' इति तान्यपसारयेत् । एतच्चावश्यकम् ।

"स्थितेषु तत्र भूतेषु नैवेद्यं मण्डलं तथा ।
विलुम्पन्ति महालुब्धा न च गृह्णन्ति देवताः ॥
तस्मात्प्रयत्नेन कर्तव्यं भूतानामपसारणम् ॥"

इति कालिकापुराणात् ।

"लाजचन्दनसिद्धार्थ फलपुष्पकुशाक्षताः ।
विकिरा इति संप्रोक्ताः सर्वविघ्नविनाशकाः ॥

"आरोपिताऽसि दुर्गे त्वं मृन्मय्यां श्रीफलेऽपि च ।
स्थिरा नितान्तं भूत्वा च गृहे त्वं कामदा भव ॥"

इति स्थिरीकृत्य रम्भादिपत्रिकाः पञ्चगव्येन पञ्चामृतेन च स्नापयित्वा वस्त्रेणावेष्ट्य स्थापयेत् । ततः पूर्ववत्संकल्पं कृत्वाऽक्षतानादाय देवीमावाहयेत् । तत्र मन्त्रः—

"आवाहयाम्यहं देवीं मृन्मय्यां श्रीफले तथा ।
कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात् ॥
आगत्य बिल्वशाखायां चण्डिके कुरु*सन्निधिम् ।
स्थापिताऽसि मया दुर्गे पूजये त्वां प्रसीद मे ॥
आयुरारोग्यमैश्वर्यं देहि देवि*नमोऽस्तु ते ।
दुर्गे दुर्गस्वरूपाऽसि सुरतेजोमयेऽर्चिते ॥
सदानन्दकरे देवि प्रसीद मम सिद्धये ।
एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे ॥
भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते ।
पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः ॥
पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे ।
दुर्गे देवि इहागच्छ सान्निध्यमिह कल्पय ॥

---

विकिरान्विकिरेत्तत्र सप्त जप्तान् शराणुना ॥"

इति रुद्रयामलात् । पुनः शाखायां प्रतिमायां च देवीं संपूज्य पूजागृहं प्रवेशयेत् । *गृहं पूजागृहम् । आवाहनं च प्राणप्रतिष्ठानन्तरं कार्यम् । *सान्निधिमिति । 'भगवति दुर्गे इहागच्छ' इत्युभयोरावाहाति शेषः ।

'स्थापिताऽसि मया देवि मृन्मये श्रीफलेऽपि वा ।'

इति पाठान्तरम् । *नमोस्तुते इति । 'भगवति दुर्गे इह तिष्ठ इति स्थापयित्वा' इति शेषः । 'एह्येहि' इति कु-

यज्ञभागान् गृहाण त्वं योगिनीकोटिभिः सह॥" इति।

ततो मूलमन्त्रेण पाद्यादिगन्धान्तोपचारैः—

"अमृतोद्भवं च श्रीवृक्षं शंकरस्य सदा प्रियम्।

बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि॥"

इति बिल्वपत्रम्।

"ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम्।

तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये॥"

इति द्रोणपुष्पं निवेद्य*धूपादिदक्षिणान्तां पूजां मूलेन कृत्वा प्रार्थयेत्—

"ॐमहिषघ्नि महामाये चामुण्डे मुण्डमालिनि।

आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते॥

कुङ्कुमेन समालब्धे चन्दनेन विलेपिते।

बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः॥

रूपं देहि यशो देहि भगं भवति देहि मे।

पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे॥"

*'सर्वमङ्गलमाङ्गल्ये' इति च संप्रार्थ्य पत्रिकाः पूज-

---

ताञ्जलिः पठेत्। मूलमन्त्रेण जयन्तीमन्त्रेण 'दुर्गायै नमः' इत्यनेन वा पुष्पगन्धाक्षतकुङ्कुमदधिदूर्वाकुशातिलबिल्वपत्रयुतजलेनार्घ्यमाचमनं पञ्चामृतं स्नानादि पुनराचमनीयम्। वस्त्रयुगमाचमनं गन्धपुष्पाञ्जलित्रयं मयूखे। *धूपादीति। पुष्पधूपदीपनैवेद्याचमनताम्बूलदक्षिणाः मूलेन जयन्तीमन्त्रेण 'दुर्गायै नमः' इत्यनेन वा समर्प्य स्तुतिभिः स्तुत्वा प्रणम्य बद्धाञ्जलिः प्रार्थयेदित्यर्थः। *सर्वमङ्गलेति।

"सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके।

शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते॥"

इति श्लोकेन।

येत् । कदल्यां ब्रह्माणीं, दाडिमे रक्तदन्तिकाम्, धान्ये लक्ष्मीं, हरिद्रायां दुर्गाम्, (१)माने चामुण्डाम्, कचौ कालिकाम्, बिल्वे शिवाम्, अशोके शोकरहिताम्, (२)जयन्त्यां कार्तिकीं चा*वाह्य संपूज्य दुर्गायै बलिं दद्यात् ।

"भूतप्रेतापिशाचेभ्यो रक्षोभ्यश्च महेश्वरि ।
देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥"

इति श्लोकानन्तरं संप्रार्थयेत्यर्थः । *आवाह्येति । पूजा चेत्थं कार्या—अञ्जलिं बध्वा

"एहि दुर्गे महाभागे पत्रिकारोहणं कुरु ।
तत्र स्थानमिदं मन्ये शरणं त्वां व्रजाम्यहम् ॥"

इत्यावाह्य तत्र पाद्यादिदशोपचारैर्गन्धादिभिः पञ्चोपचारैर्गन्धपुष्पाभ्यां वा संपूज्य 'कदलीस्थे ब्रह्माणि इहागच्छ' इत्यावाह्य एष गन्धः 'ह्रीं कदलीस्थब्रह्माण्यै नमः' इत्यादि संपूज्य प्रणमेत्—

"दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय ।
रम्भारूपेण सर्वत्र शान्तिं कुरु नमोऽस्तु ते ॥" इति ।

एवमग्रेऽपि 'कचिस्थकालिके इहागच्छ' इत्यावाह्य 'ह्रींकचिस्थकालिकायै नमः' इति संपूज्य प्रणमेत्—

"महिषासुरयुद्धेषु कचिभूतासि सुव्रते ।
मनुष्याऽनुग्रहार्थाय आगतासि हरप्रिये ॥" इति ।

हरिद्रास्थदुर्गे इत्याद्यावाह्य—'ह्रीं हरिद्रास्थदुर्गायै नमः' इति संपूज्य प्रणमेत्—

"ॐहरिद्रे वरदे देवि उमारूपासि सुव्रते ।
मम विघ्नविनाशाय पूजां गृह्ण प्रसीद मे ॥"

'जयन्तीस्थकार्तिकि' इत्याद्यावाह्य—'ह्रीं जयन्तीस्थकार्तिक्यै

---

(१)'मान'इति वङ्गदेशे माननाम्ना प्रसिद्धः कन्दः । 'कचि' इति तु मृग्यम् ।
(२) जयन्ती टाहाकला अमरसिंहटीकायाम् ।

नमः' इत्यादि संपूज्य प्रणमेत्—

निशुम्भशुम्भमथने सेन्द्रैर्देवगणैः सह।
पूजिताऽसि जयन्ती त्वमस्माकं वरदा भव॥"

'बिल्वस्थशिवे' इत्याद्यावाह्य—'ह्रीं बिल्वस्थशिवायै नमः' इति संपूज्य प्रणमेत्—

"महादेवप्रियकरो वासुदेवः प्रियस्सदा।
उमाप्रीतिकरो वृक्षो बिल्ववृक्ष नमोऽस्तु ते॥"

'दाडिमस्थरक्तदन्तिके' इत्याद्यावाह्य—'ह्रीं दाडिमस्थरक्तदन्तिकायै नमः' इति संपूज्य प्रणमेत्—

"दाडिम त्वं पुरा युद्धे रक्तबीजस्य सम्मुखे।
उमाकार्यं कृतं तस्मादस्माकं वरदा भव॥"

'अशोकस्थशोकरहिते' इत्याद्यावाह्य—'ह्रीं अशोकस्थशोकरहितायै नमः' इत्यादि संपूज्य प्रणमेत्—

"हरप्रीतिकरो वृक्षो अशोकः शोकनाशनः।
दुर्गाप्रीतिकरो यस्मान्मामशोकं सदा कुरु॥"

'मानस्थचामुण्डे(१)'इत्याद्यावाह्य—'ह्रीं मानस्थचामुण्डायै नमः' इत्यादि संपूज्य प्रणमेत्—

"यस्य पत्रे वसेद्देवी मानवृक्ष शचीप्रिय।
मम चाऽनुग्रहार्थाय पूजां गृह्ण प्रसीद मे॥"

'धान्यस्थलक्ष्मि इहागच्छ' इत्याद्यावाह्य 'ह्रीं धान्यस्थलक्ष्म्यै नमः' इत्यादि संपूज्य प्रणमेत्—

"जगतः प्राणरक्षार्थं ब्रह्मणा निर्मितं पुरा।
उमाप्रीतिकरं धान्यं तस्मात्त्वं रक्ष मां सदा॥" इति।

एवं संपूज्यापराजिताख्यलतया ता आवेष्ट्य 'अपराजितान-

(१) चण्डिके इति पाठान्तरम्।

*अत्र शस्त्रादिपूजा वक्ष्यते। ततः स्तुतिं पठेत्। तदुक्तं शिवरहस्ये—

"दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्राह्मणप्रियाम्।
सर्वलोकप्रणेत्रीं च प्रणमामि सदाशिवाम्॥
मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम्।
विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम्॥
सर्वदेवमयीं देवीं सर्वरोगभयापहाम्।
ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम्॥

---

वपत्रिकास्थदुर्गे इहागच्छ' इत्याद्यावाह्य एष गन्धः 'ह्रीं अपराजितानवपत्रिकास्थदुर्गायै नमः' इत्यादि संपूज्य [ प्रणमेत् ]

"पत्रिके नवदुर्गे त्वं महादेवमनोरमे।
पूजां समस्तां संगृह्य रक्ष मां त्रिदशेश्वरि॥"

ततः कृताञ्जलिः पठेत्—

"धन्योऽहं कृतकृत्योऽहं सफलं जीवितं मम।
आगताऽसि यतो दुर्गे माहेश्वरि मदाश्रमम्॥"

ॐनवपत्रिकाभ्यो नमः इति दुर्गया सहेति। ततो वैदिक(१) मागमकं वा दुर्गामन्त्रं जपेत्।

'दुर्गाग्रतो जपेन्मन्त्रमेकचित्तःसमाहितः।'

इति देवीपुराणात्। अथवा पूर्वमनारम्भे मार्कण्डेयपुराणोक्तं चण्डीपाठं कुर्यात्।

"माहात्म्यं भगवत्यास्तु पुराणादिषु कीर्तितम्।
पठेच्च श्रुणुयाद्वापि सर्वकामसमृद्धये॥"

इति वचनात्। *अत्र शस्त्रादीति। यद्दिने देवीपूजारम्भस्तद्दिने लौहाभिसारिकारम्भः। तत्र प्रतिपत्प्रभृतीत्युपादानं नवरात्रपक्षाभिप्रायम्। त्रिरात्रपक्षे तु सप्तम्यामारम्भ इत्याशयः।

---

(१) आगमकं तन्त्रोक्तमित्यर्थः।

विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम् ।
योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम् ॥
ईशानमातरं देवीमीश्वरामीश्वराप्रियाम् ।
प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् ॥
य इदं पठते स्तोत्रं शृणुयाद्वापि यो नरः ।
स मुक्तः सर्वपापैस्तु मोदते दुर्गया सह ॥”

अथ महाष्टमी । सा च*परयुता ।

“शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥”

इति ब्रह्मवैवर्तात् । मदनरत्ने स्मृतिसंग्रहे—

“शरन्महाष्टमी पूज्या नवमीसंयुता सदा ।
सप्तमीसंयुता नित्यं शोकसंतापकारिणी ॥
जम्भेन सप्तमीयुक्ता पूजिता तु महाष्टमी ।
इन्द्रेण निहतो जम्भस्तस्माद्दानवपुङ्गवः ॥
तस्मात्सर्वप्रयत्नेन सप्तमीमिश्रिताष्टमी ।
वर्जनीया प्रयत्नेन मनुजैः शुभकाङ्क्षिभिः ॥
सप्तमीं शल्यसंयुक्तां मोहादज्ञानतोऽपि वा ।
महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते ॥
सप्तमी कलया यत्र परतश्चाष्टमी भवेत् ।
तेन शल्यमिदं प्रोक्तं पुत्रपौत्रक्षयप्रदम् ॥”

तथा—

“पुत्रान्हन्ति पशून्हन्ति हन्ति राष्ट्रं सराजकम् ।
हन्ति जातानजातांश्च सप्तमीसहिताष्टमी ॥”

*तेन नात्र त्रिमुहूर्तवेधः । तदा [illegible]

---

*परयुतेति । पत्रीपूजाऽतिरिक्ते देवीपूजायामित्यादिः । शुद्धाधिका तु पूर्वैव संपूर्णत्वात् । *तेन ‘सप्तमी कलया’ इति

यिकी ग्राह्या ।

'व्रतोपवासनियमे घटिकैकापि या भवेत् ।'

इति देवलोक्तेः । *गौडा अप्येवमाहुः । अत एवोक्तं भोजराजेन—'नच सप्तमी शल्यसमोपहता' इति । इयं भौमेऽतिप्रशस्ता ।

"अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ।
कुजवारो भवंस्तत्र पूजनीया प्रयत्नतः ॥"

इति मदनरत्ने वचनात् ।

"सप्तमीशल्यसंविद्धा वर्जनीया सदाष्टमी ।
स्तोकापि सा महापुण्या यस्यां सूर्योदयो भवेत् ॥"

इति मदनरत्ने स्मृतिसमुच्चयवचनात् ।

*'अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता ।'

इति पाद्मवचनाच्च । इयमेव मूलयुक्ता चेन्महानवमीसंज्ञा ।

"आश्वयुक्शुक्लपक्षे याऽष्टमी मूलेन संयुता ।
सा महानवमी प्रोक्ता त्रैलोक्येऽपि सुदुर्लभा ॥"

इति हेमाद्रौ स्कान्दात् । मूलयुक्तापि सप्तमीयुता चेत्त्याज्यैवेत्युक्तं निर्णयामृते दुर्गोत्सवे-

"मूलेनापि हि संयुक्ता सदा त्याज्याऽष्टमी बुधैः ।

---

कलापदोपादानेन । *गौडाइति । नव्यगौडास्तु सूर्योदये कलाकाष्ठादियुतामपीच्छन्ति । 'यस्यां सूर्योदयो भवेत्' इति क्षयेणाष्टम्याः सूर्योदयाभावे तु सप्तमीविद्धा ग्राह्येति सूचयति । *अष्टमीति । एवञ्च नवम्याः पूर्वविद्धात्वाद्रात्रिपूजायामष्टम्यभावेऽपि वा तन्त्रमेव सन्धिपूजाभ्यामष्टमीनवमीपूजाभ्यां तन्त्रम् । यत्तु—

'उपोषिता द्वितीयेऽह्नि पूजयेत्पुनरेव ताम् ।'

इति उपवासपरदिने विहितपूजा, सा प्रातरनुवृत्तनवम्यामेव,

लेशमात्रेण सप्तम्या अपि स्याद्यदि दूषिता ॥" इति ।

महाष्टमी पूर्वेद्युः पूर्वाह्णव्यापित्वे पूर्वाऽन्यथा परैवेति निर्णयदीपमतम् । एतच्च*तुच्छत्वादुपेक्ष्यम् । रूपनारायणधृते देवीपुराणे—

"सप्तमीवेधसंयुक्ता यैः कृता तु महाष्टमी ।
पुत्रदारधनैर्हीना भ्रमन्तीह पिशाचवत् ॥"

यत्तु—

"सप्तम्यामुदिते सूर्ये*परतो याऽष्टमी भवेत् ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥"

इति निश्वरूपनिबन्धवचनं तदाश्विनकृष्णाष्टमीविषयम् ।

"कन्यायां कृष्णपक्षे तु पूजयित्वाष्टमीदिने ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः ॥"

इति देवीपुराणे तत्रापि*पूजोक्तेरिति हेमाद्रौ निर्णयामृते चोक्तम् । यानि तु—

*"भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया ।
तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः ॥" इति,

यच्च मोहचूलोत्तरे ब्राह्मे च—

*"आश्विनस्य सिताष्टम्यामर्धरात्रे तु पार्वती ।
भद्रकाली समुत्पन्ना पूर्वाषाढासमायुता ॥" इति,

---

सम्भवात् ।

*तुच्छत्वादिति । ऋक्षयोगेऽप्यनादरवचनात् । *परत इति । 'वृद्धौ' इति शेषः । अत एव 'न कुर्यात्' इत्यादि । एतेनेदं परदिने वृद्ध्यभावे सप्तमीविद्धाग्राह्यत्वार्थकमिति शङ्काऽपास्ता । *पूजोक्तेरिति । नवमीप्रबोधनाङ्गपूजायां कृष्णपक्षाष्टम्याः पूर्वविद्धात्वस्य युक्तत्वात् । *भद्रायां सप्तम्याम् । *आश्विनस्येति । निशीथो जन्मकालः । स एव कर्मकाल इति सप्तमीयोगो

तथा-

"तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह॥" इति,

यच्च मदनरत्ने-

"महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी।
सप्तम्यापि युता कार्या मूलेन तु विशेषतः॥" इति,

तानि परदिनेऽष्टम्यभावविषयाणीति मदनरत्ने उक्तम्। यत्तु तत्रैव परदिनेऽष्टमीसत्त्वेऽपि पूर्वाविद्धाविधायकं वचनम्—

"यदाष्टमीं तु संप्राप्य ह्यस्तं याति दिवाकरः।
तत्र दुर्गोत्सवं कुर्या*न्न कुर्यादपरेऽहनि॥
दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूज्यते॥" इति,

तत् परदिने दशम्यां नवम्यभावविषयम्।

'यदा सूर्योदये न स्यान्नवमी चापरेऽहनि।
तदाष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप॥"

इति तत्रैव स्मृतिसंग्रहोक्तेः

"उत्तरास्तिथयो यत्र क्षयं यान्ति नराधिप।
पूर्वाष्टमीं तदा कुर्यादन्यथा त्वशुभं भवेत्॥"

इति दुर्गोत्सवोक्तेश्चेति मदनरत्ने। *वस्तुतस्तु इदं वचनद्वय*मष्टमीनवम्योः सूर्योदयद्वयासंबन्धपरम्। अत एव 'नवमी च' इति चकाराद*ष्टमी च। तिथय इति

---

युक्त इति भावः। *न कुर्यादिति। एतेन परदिने द्वाद्धिर्लभ्यते। नन्वत्राद्यवाक्ये नवमीक्षयो न प्रवर्तते, द्वितीयवाक्ये च दशमीक्षये च पूर्वाष्टम्यापत्तिरित्यत आह-*वस्तुतस्त्विति। *अष्टमीति। नवमी चेति चकारादष्टमी ग्राह्या। उत्तरास्तिथय इति

बहुवचन।ऽष्टमी नवमी दशम्युक्ता । अन्यथा*पूर्वोक्तवि-रोधादिति दिक् ।

यत्तु-

"अहं भद्रा च भद्राहं नावयोरन्तरं क्वचित् ।
सर्वसिद्धिं प्रदास्यामि भद्रायामर्चिता ह्यहम् ॥"

इति देवीपुराणे, तद्वि*ष्टिकरणमध्ये पूजाविधानार्थम् ।

"विष्टिं त्यक्त्वा महाष्टम्यां मम पूजां करोति यः ।
तस्य पूजाफलं न स्यात्तेनाहमवमानिता ॥"

इति तत्रैवोक्तेरिति निर्णयामृते । तथा कालिकापुराणे-

*"सप्तम्यां पत्रिकापूजा अष्टम्यां चाप्युपोषणम् ।
पूजा च जागरश्चैव नवम्यां विधिवद्बलिः ॥" इति ।

---

बहुत्वं तन्त्रम् । अष्टमीक्षये तात्पर्यात् । *पूर्वोक्तेति । 'सप्तमीशल्य-संविद्धा' इति प्रकृत्य—'यस्यां सूर्योदयो भवेत्' इत्युक्तेरित्यर्थः । तेनाष्टमीक्षये सप्तमीग्राह्यत्वव्यञ्जनात् । दिगर्थस्तु—

"महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी ।
सप्तम्याऽपि युता कार्या मूलेन तु विशेषतः" ॥

इत्यपि अष्टमीक्षय एव सप्तमीविद्धाग्रहार्थम् । किन्तु मूलवैशि-ष्ट्यविधौ सप्तमीयुतत्वमपिशब्दश्रवणादर्थवादः 'वैश्वेदेवे तु न-क्षत्रे' इति निषेधे विश्वयुक्तापीत्यपिशब्दवदिति ।

*विष्टीति । निर्णीताष्टम्यां विष्टिभागे पूजेत्यर्थः । *सप्त-म्यामिति दिवापूजाभिप्रायम् । अयं च नवरात्रपक्षः । व-स्तुतस्त्वयं षष्ठ्यादिपक्षः पत्रिकापूजापदात् । सप्तम्यादित्रिदिन-देवीपूजापक्षोऽपि—

'व्रती संपूजयेद्देवीं सप्तम्यादिदिनत्रयम् ।'

इति भविष्योत्तरे चोक्तः । अष्टमीनवम्योरेव वा देवी पूज्या ।

*अष्टम्युपवासश्च पुत्रवता न कार्यः ।

"उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ।
यथा तथा वा पूतात्मा व्रती देवीं प्रपूजयेत् ॥"

इति तत्रैवोक्तेः । रूपनारायणीये ब्राह्मे—

*"अत्यर्थं पूजनीया सा तस्मिन्नहनि मानवैः ।

---

"अष्टम्यां च नवम्यां च जन्ममोक्षप्रदां शिवाम् ।
पूजयित्वाऽऽश्विने मासि विशोको जायते नरः ॥"

इति वचनात् । केवलाष्टमीपूजोक्ता ब्राह्मे—

"तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽर्थं यजनीया सा तस्मिन्नहनि मानवैः ।
उपोषितैर्धूपदीपैर्वस्त्रैर्माल्यानुलेपनैः ॥" इति ।

*अष्टम्युपवास इति । केवलाष्टम्युपवास इत्यर्थः । अन्यथा नवरात्रोपवास इत्यनेन विरोधात् सप्तम्यादिपक्षेष्वपि पूर्वोत्तरादिनसमानव्रतानुरोधेनाष्टम्युपवासप्राप्तेश्च । केवलनवमीपूजा च भविष्ये—

"लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च ।
तस्मात्सा तत्र संपूज्या नवम्यां चण्डिका बुधैः ॥" इति ।

*अत्यर्थमिति । अष्टम्यां विष्टिसत्त्वे तद्धत्यां तद्भागे, तदसत्त्वे शुद्धायाम् । दिवसे विशेषपूजाविधायकम् । अर्द्धरात्रेऽपि विशेषेण देवीपूजनं कार्यम् ।

"पुनः पूजां तथाऽष्टम्यां विशेषेण समाचरेत् ।
जागरं च स्वयं कुर्याद्बलिदानं महानिशि ॥"

इति कालिकापुराणाच्च । राजा तु विजयकामोऽर्द्धरात्रे विशेषपूजापूर्वकं बलिं दद्यात्—

"तदर्धयामिनीशेषे विजयार्थं नृपोत्तमः ।

उपोषितैर्वस्त्रधूपमाल्यरत्नानुलेपनैः ॥
पशुभिः पानकैर्हृद्यै रात्रौ जागरणेन च ।
*दुर्गागृहे च शस्त्राणि पूजितव्यानि पण्डितैः ॥
वाद्यभाण्डानि चिह्नानि कवचान्यायुधानि च ॥"

अत्र *विशेषो हेमाद्रौ निर्णयामृते च भविष्ये—

"आश्वयुक्शुक्लपक्षस्य अष्टमी मूलसंयुता ।
सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा ॥
कन्यागते सवितरि शुक्लपक्षेऽष्टमीयुता ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
नवम्यां पूजिता देवी ददात्यभिमतं फलम् ।
सा पुण्या सा पवित्रा च सा धन्या सुखदायिनी ॥
तस्यां सदा पूजनीया चामुण्डा मुण्डमालिनी ॥

(सदेत्युक्तेर्नित्यतापि ।)

तस्यां ये ह्युपयुज्यन्ते प्राणिनो महिषादयः ।
सर्वे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते ॥
यावन्न चालयेद्गात्रं पशुस्तावन्न हन्यते ।
न तथा बलिदानेन पुष्पधूपविलेपनैः ॥
यथा संतुष्यते मेषैर्माहिषैर्विन्ध्यवासिनी ।
एवं च विन्ध्यवासिन्या नवरात्रोपवासतः ॥
एकभुक्तेन नक्तेन स्वशक्त्यायाचितेन च ।
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ॥

---

पञ्चाब्दं लक्षणोपेतं गन्धधूपस्रगार्चितम् ॥
विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत् ॥"

इति देवीपुराणात् । पञ्चाब्दं महिषमजं वा । अष्टम्यां होमो वक्ष्यते । *दुर्गागृहे इति । अष्टम्यामस्त्रादिपूजा । लोहाभिसारिकापूजा त्वन्यैव तस्याः प्रतिपद्येवारम्भात् । *विशेषो द्विवापू-

गृहे गृहे भक्तिपरैर्ग्रामे ग्रामे वने वने ।
स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ॥
वैश्यैः शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च मानवैः ।
स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ॥
*जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् ।
(१)लौहाभिसारिकं कर्म कारयेद्यावदष्टमी ॥" इति ।

लौहाभिसारिककर्मविधानं तत्रैवोक्तम् ।

"प्रागुदक्प्रवणे देशे पताकाभिरलंकृतम् ।
मण्डपं कारयेद्दिव्यं नवसप्तकरं परम् ॥

(षोडशहस्तमित्यर्थः ।)

आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् ।
मेखलात्रयसंयुक्तं योन्याऽश्वत्थदलाभया ॥
राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ।
आनीय मण्डपे तानि सर्वाण्यत्राधिवासयेत् ॥
ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः ।
ॐकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद्घृतम् ॥
शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ।

---

जानन्तरबलिदानरूपः । ब्राह्मणस्यात्रैवाधिकार इति वक्ष्यते । तेन ब्राह्मणेन माषभक्तादिबलिः कूष्माण्डादिबलिर्वा कार्य इति स्मर्तव्यम् । अष्टमीकृत्यं दर्शयित्वा नवरात्रोपवासादीन्देवीपूजां च 'एवञ्च' इत्यादि 'शृणु' इत्यन्तेन स्मारयित्वा तत्र प्रतिपदाद्यष्टमीपर्यन्तं जयार्थिना राज्ञा लौहाभिसारिकाख्यं कर्म कार्यमित्याह—*जयाभिलाषीति । प्रतिपच्चामावास्यायुता निषिद्धा ।

"कुहूकाष्ठोपसंयुक्तां वर्जयेत्प्रतिपत्तिथिम् ।
राज्यनाशाय सा प्रोक्ता निन्दिता चास्त्रपूजने" ॥

---

(१)लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ।' इत्यमरः ।

हुतशेषं*तुरङ्गाणां राजानमुपहारयेत् ॥
लोहाभिसारिकं कर्म तेनैव ऋषिभिः स्मृतम् ।
धृतपल्ययनानश्वान् गजांश्च समलंकृतान् ॥
भ्रामयेन्नगरे नित्यं बन्दिघोषपुरःसरम् ।
प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः ॥
पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः ।
तस्याभिसरणाद्राज्ञो विजयः समुदाहृतः ॥
पूजामन्त्रान्प्रवक्ष्यामि पुराणोक्तानहं तव ।
यैः पूजिताः प्रयच्छन्ति कीर्तिमायुर्यशो बलम् ॥"

अथ मन्त्रा विष्णुधर्मोत्तरोक्ताः । छत्रस्य—

"यथा ऽम्बुदश्छादयति शिवायेमां वसुन्धराम् ।
तथाऽऽच्छादय राजानं विजयारोग्यवृद्धये ॥"

चामरस्य—

"शशाङ्ककरसंकाश क्षीरडिण्डीरपाण्डुर ।
प्रोत्सारयाशु दुरितं चामरामरदुर्लभ ॥"

अश्वानां वृद्ध्यर्थं रेवन्तपूजनमहं करिष्ये ।

---

इति वचनात् ।

*तुरङ्गाणामिति । हुतशेषदानं च श्रेष्ठे गजेऽपि—
'हुतशेषं प्रदातव्यमौपनायनिके गजे ।'
इति वाक्यात् । तत्र प्रथमतः पूजको ब्राह्मणः प्रार्थयेत्—
यथा चन्द्रश्छादयति शिवामेतां वसुन्धराम् ।
तथाऽऽच्छादय राजानं विजयारोग्यवृद्धये ॥" इति ।

पूजा च षोडशोपचारा पदार्थाऽनुसमयेन काण्डाऽनुसमयेन वा सहैव कार्या । तत्र छत्रादिमन्त्रैः छत्रादिदेवता आवाह्य गन्धादिपञ्चोपचारानन्तरं फलताम्बूलदक्षिणान्ता, विसर्जनस्थाने च पुष्पाञ्जलिः कार्या । ततश्चामरमन्त्रेण चामरानन्यादिक्रमेणेति ।

"सूर्यपुत्र महाबाहो छायाहृदयनन्दन ।
शान्तिं कुरु तुरङ्गाणां रेवन्ताय नमो नमः ॥"

अनेन मन्त्रेण पूजा । अथाश्वस्य—

"गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
प्रभावाच्च हुताशस्य वर्धय त्वं तुरङ्गमान् ।
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रं त्वं कौस्तुभं च मणिं स्मर ॥
यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा ।
भ्रूणहाऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥
सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ।
व्रजाश्व तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥
निष्कृतो यदि गच्छेथा युद्धाध्वनि तुरङ्गम ।
रिपून्विजित्य समरे सह भ्रात्रा सुखी भव ॥" इति ।

अथ ध्वजस्य—

"शक्रकेतो महावीर्य श्यामवर्णाचयाम्यहम् ।
पक्षिराज नमस्तेऽस्तु तथा नारायणध्वज ॥
काश्यपेयारुणभ्रातर्नागारे विष्णुवाहन ।
अप्रमेय दुराधर्ष रणे देवारिसूदन ॥
गरुत्मान्मारुतगतिस्त्वयि सन्निहितो यतः ।
(१)साश्ववर्मायुधान्योधान् रक्ष त्वं च रिपून्दह ॥"

अथ पताकायाः—

"हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ।
नागकिन्नरगन्धर्वयक्षभूतगणग्रहाः ॥
प्रमथास्तु सहादित्यैर्भूतेशो मातृभिः सह ।

---

(१) साश्ववन्त्यायुधान्यश्च इति कुत्रचित्पुस्तके पाठः ।

शक्रः सेनापतिः स्कन्दो वरुणश्चाश्रितास्त्वयि ॥
प्रदहन्तु रिपून्सर्वान्राजा विजयमृच्छतु ।
यानि प्रयुक्तान्यरिभिरायुधानि समन्ततः ॥
पतन्तूपरि शत्रूणां हतानि तव तेजसा ।
हिरण्यकशिपोर्युद्धे युद्धे दैवासुरे तथा ॥
कालनेमिवधे यद्वद्यद्वत्त्रिपुरघातने ।
शोभितासि तथैवाद्य शोभयास्मांश्च संस्मर ॥
नीलाञ्श्वेतानिमान्दृष्ट्वा नश्यन्त्वाशु नृपारयः ।
व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥
पूतना रेवती नाम्ना कालरात्रिश्च या स्मृता ।
दहत्वाशु रिपून्सर्वान्पताके त्वं मयार्चिता ॥"

अथ गजस्य—

"कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ।
तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ।
मन्दोभद्रो मृगश्चैव गजः संकीर्ण एव च ।
वने वने प्रसूतास्ते *यूथानि सुमहान्ति च ।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ।
भर्तारं रक्ष नागेन्द्र स्वामिवत्प्रतिपाल्यताम् ॥
अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ।
श्रीस्ते सोमाद्बले विष्णोस्तेजः सूर्याज्जवोऽनिलात् ॥
स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात्पुरंदरात् ।
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ॥
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतः सदा॥" इति।

---

*यूथानि सुमहान्तिचेति । 'समरयोनि महागज' इति वा

अथ खड्गमन्त्रः—

"असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मधारस्तथैव च ॥
एतानि तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका ते तु गुरुर्देवो महेश्वरः ॥
रोहिण्यश्च शरीरं ते दैवतं च जनार्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥
नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रः कृशोदरः ।
भावशुद्धो मर्षणश्च अतितेजास्तथैव च ॥
इयं येन धृता क्षोणी हतश्च महिषासुरः ।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥"

अथ छुरिकायाः—

"सर्वायुधानां प्रथमं निर्मितासि पिनाकिना ।
शूलायुधाद्विनिष्कृत्य कृत्वा मुष्टिग्रहं शुभम् ॥
चण्डिकायाः प्रदत्तासि सर्वदुष्टनिबर्हिणी ।
तया विस्तारिता चासि देवानां प्रतिपादिता ॥
सर्वसत्त्वाङ्गभूतासि सर्वाशुभनिबर्हिणी ।
छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते ॥"

अथ कट्टारकपूजा—

'रक्षाङ्गानि गजान् रक्ष रक्ष वाजिधनानि च ।
मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते ॥'

कट्टारको मध्यदेशे 'कटारी' इति प्रसिद्धा ।

अथ धनुःपूजा —

"सर्वायुधमहामात्र सर्वदेवारिसूदन ।
चाप मां समरे रक्ष साकं शरवरैरिह ॥
धृतं कृष्णेन रक्षार्थं संहाराय हरेण च ।

त्रयीमूर्तिगतं देवं धनुरस्त्रं नमाम्यहम् ॥"

अथ कुन्तपूजा—

"प्रास पातय शत्रूंस्त्वमनया नाकमायया ।
गृहाण जीवितं तेषां मम सैन्यं च रक्षताम् ॥"

अथ चर्मपूजा—

"शमप्रदस्त्वं समरे चर्म सैन्ये यशोऽद्य मे ।
रक्ष मां रक्षणीयोऽहं तापनेय नमोऽस्तु ते ॥"

अथ कनकदण्डमन्त्रः—

"प्रोत्सारणाय दुष्टानां साधुसंरक्षणाय च ।
ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये ॥
यशो देहि सुखं देहि जयदो भव भूपतेः ।
ताडयस्व रिपून्सर्वान्हेमदण्ड नमोऽस्तु ते ॥"

अथ दुन्दुभिमन्त्रः—

"दुन्दुभे त्वं सपत्नानां घोरो हृदयकम्पनः ।
भव भूमिपसैन्यानां तथा विजयवर्धनः ॥
यथा जीमूतघोषेण प्रहृष्यन्ति च बर्हिणः ।
तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः ॥
यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ।
तथात्र तव शब्देन त्रस्यन्त्वस्मद्द्विषो रणे ॥"

अथ शङ्खमन्त्रः—

"पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् ।
विष्णुना विधृतो नित्यमतःशान्तिप्रदो भव ॥"

अथ सिंहासनमन्त्रः—

"विजयो जयदो जेता रिपुघाती शुभङ्करः ।

---

पाठः । हृदयवर्धनः हृदयच्छेदनः, हृदयकम्पनइति वा पाठः । विजयवर्धनः विना ? । पुण्यशङ्खानां शङ्खपुण्यानामिति वा पाठः ।

दुःस्वप्नहा धर्मदः शान्तः सर्वारिष्टविनाशनः ॥
एते वै संनिधौ यस्मात्तव सिंहा महाबलाः ।
तेन सिंहासनेति त्वं देवैर्मन्त्रैश्च गीयसे ॥
त्वयि स्थितः शिवः शान्तस्त्वयि शक्रः सुरेश्वरः ।
नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः ॥
त्रैलोक्यजयसर्वस्व सिंहासन नमोऽस्तु ते ।
तथैव कर्मचिह्नानि स्वानि पूज्यानि शिल्पिभिः ॥
लौहाभिसारिकं कर्म कृत्वैवं *मन्त्रपूर्वकम् ।
*नित्यं कृत्वा तथाष्टम्यां पूर्वाह्णे स्नानमाचरेत् ॥
कुङ्कुमचन्दनचम्पकचतुःसमैः *शैलपिष्टैश्च ।
चर्चितगात्रीं देवीं कुसुमैरभ्यर्चयेद्बहुभिः ॥

"महेन्द्रनिर्मिते दिव्ये देवराजादिसेविते ।
शिबिके पाहि मां नित्यं सदा त्वं सन्निधौ भव ॥"

इति शिबिकाम् । दोलयोर्मन्त्रः क्वचिन्न दृश्यते ।

*मन्त्रपूर्वकमिति ।

'जयं प्राप्नोति नृपतिस्सर्वान्कामान्समश्नुते ।' इति ।

उत्तरार्धेन तदन्वयः । 'अत्यर्थं रञ्जनीया सा' इत्युक्तम् । तत्राष्टमीकृत्यं विशेषतस्त्रिकालदिवापूजाहोमबलिदानानि, रात्रिपूजा निशीथपूजा बलिदानानि सन्धिपूजाश्चेति । तत्र विशेषेण त्रिकालपूजा प्रोक्तप्रायैव । तत्र पूर्वाह्णपूजायां स्नानविशेषादिकमाह—*नित्यं कृत्वेति । स्नानं देव्याः । चतुःसमं गारुडे—

"कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च ।
कुङ्कुमस्य त्रयश्चैकः शशिनः स्याच्चतुःसमम् ॥

शशी कर्पूरः ।

कर्पूरं चन्दनं दर्पं कुङ्कुमं च समांशकम् ।
सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥"

कुमुदैः सपद्मपुष्पैः सधूपदीपैः सनैवेद्यैः ।
मांसैर्बल्युपहारैर्मङ्गलशब्दैः समुच्छालितैः ॥
विहितच्छत्रैर्यानैः स्यन्दनसितशस्त्रधारिजनलोकैः ।
तुष्टैः पश्चवस्त्रादि तु निवेद्यते सर्वमेव भगवत्यै ॥
दुर्गा सा पूजनीया च तद्दिने द्रोणपुष्पकैः ।
ततः खड्गं नमस्कृत्य शत्रूणां वधसिद्धये ॥
इच्छेत विजयं राज्यं सुभिक्षं चात्मने नृपः ।
पुनः पुनः प्रणम्यार्यां संस्मरन्हृदये शिवाम् ॥
सर्वं कृत्वेति कौरव्य*अष्टम्यां जागरं निशि ।
नटनर्तकगीतैश्च कारयेच्च महोत्सवम् ॥
एवं हृष्टैर्निशां नीत्वा प्रभाते अरुणोदये ।
घातयेन्महिषान्मेषानग्रतो नतकन्धरान् ॥
शतमर्धशतं वापि तदर्धं वा यथेच्छया ।
सुरासवभृतैः कुम्भैस्तर्पयेत्परमेश्वरीम् ॥
कापालिकेभ्यस्तद्देयं दासीदासजने तथा ।
ततोऽपराह्णसमये नवम्यां वै रथे स्थिताम् ॥
भवानीं भ्रामयेद्राष्ट्रे स्वयं राजा सशब्दवान् ।

---

दर्पः=कस्तूरी । *शैलं शैलेयम् । साऽत्रमान्येति कुत इत्यत्राह-*सुरेशान्या इति ।

यतस्तस्याः सुरेशान्या अग्रेऽयं साधको रुद्र इत्यन्वयः । अवमाने तु तमेव नाशयेत् इति भावः । प्रसिद्धश्च श्रीमद्भागवते जडभरतबलिदानार्थं प्रवृत्तानां शूद्राणामेव नाशो देवीकृतः । सर्वादिवाकृत्यं सायंपूजान्तम् । निशीथकृत्यमाह -*अष्टम्यामिति ।

"पुनः पूजा तथाऽष्टम्यां विशेषेण समाचरेत् ।
जागरं च स्वयं कुर्याद्बलिदानं महानिशि ॥"

इति कालिकापुराणसम्वादात् । पुनः सायंपूजानन्तरं

कश्चिच्चोपोषितो वीरो*विधूतोऽन्येन खड्गवान् ॥
भूतेभ्यस्तु बलिं दद्यान्मन्त्रेणानेन सामिषम् ।
सरक्तं सजलं चान्नं गन्धपुष्पाक्षतैर्युतम् ॥
त्रींस्त्रीन्वारान्समूलेन दिग्विदिक्षु किरेद्बलिम् ॥'

मन्त्रश्च—'बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा ।
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥
असुरा यातुधानाश्च पिशाचोरगराक्षसाः ।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥
जृम्भकाः सिद्धगन्धर्वा (१)माला विद्याधरा नगाः ।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः ।
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ॥
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥' इति ।

इति महाष्टमी ।

महानवमी तु पूर्वयुता ग्राह्या । पूर्वोक्तवचनात् । 'नवमी दुर्गाव्रते श्रावणी' इति दीपिकोक्तेः ।
'श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ॥'
इति हेमाद्रौ पाद्मोक्तेश्च । भविष्येऽपि—
*आश्वयुक्शुक्लपक्षे तु अष्टमीमूलसंयुता ।

---

स्वयमपि वक्ष्यति—अष्टमीमूले भवसेनेत्यादिना । राज्ञश्च विजयार्थं निशीथबलिरुक्तः । सुरासवौ ब्राह्मणस्य निषिद्ध इति वक्ष्यामः । *विधूतोऽन्येनेति ।

उपवासैः पतनभयवारणाय महानवम्यां पूजाबलिदानं होमश्चेति त्रयं कृत्यम्, तत्र पूजामुपक्रमते—*आश्वयुगिति । अष्टमीमूलाभ्यां

---

१—'नागा विद्याधरा' इतिपाठः ।

सा महानवमी प्रोक्ता त्रैलोक्येऽपि सुदुर्लभा ॥' इति ।

मूलमुपलक्षणम् ।

'दुर्गापूजासु नवमी *मूलाद्यृक्षत्रयान्विता ।

महती कीर्तिता तस्यां दुर्गा महिषमर्दिनी ॥'

इति मदनरत्ने लैङ्गात् । अत्र पूजयेदित्यग्रे शेषः । यानि तु—'सा (१)कार्योदयगामिन्याम्' इत्यादि प्रागुक्तानि तानि नवमीभिन्नतिथिपराणि । नवम्यां विशेषोक्तेः । वेधश्च मुहूर्तत्रयेणैव ज्ञेयः । यद्यपि हेमाद्रिमते मुहूर्तद्वयात्माऽपि वेधोऽस्ति, तथापि सूर्योदय एव सः । सायं तु त्रिमुहूर्त एव । तदुक्तं दीपिकायाम्—'त्रिमुहूर्तगा तु सकला सायम्' इति । माधवोऽपि—

'सायं तूत्तरया तद्वन्न्यूनया न तु विध्यते ।' इति ।

तेन त्रिमुहूर्तयोगे पूर्वा नवमी, पूर्वोक्तवचनात्

'न कुर्यान्नवमीं तात दशम्यां तु कदाचन ।'

इति स्कान्दे परानिषेधाच्च । त्रिमुहूर्तयोगाभावे तु निषिद्धाऽपि परैव कार्येति *निष्कर्षः ।

---

संयुता नवमीत्यर्थः । *मूलादीति । आदिना पूर्वाषाढापरिग्रहः ।

"पूर्वयाऽषाढया वाऽपि ऋक्षद्वययुताऽथ वा" ।

इति वचनात् ।

"मूलाभावे तु कर्तव्या अष्टमी नोपसंयुता ।

विश्वयुक्ताऽपि कर्तव्या अष्टमी नवमीयुता ॥"

इत्युत्तराषाढावाक्यं त्वनर्थकम् ।

"मूलेन पूजयेद्देवीं तथा सलिलदैवते ।

वैश्वदेवे तु नक्षत्रे पूजिता दुःखदा भवेत् ॥"

इति वचनात् । *निष्कर्ष इति । पूर्वविद्धायां नवम्यां

---

१—एतदग्रे—'तिथावुत्तरगामिन्याम्' इत्यधिकः क्वचित्पाठः ।

*यत्तु—

'नवम्यां च जपं होमं समाप्य श्रवणेऽपि वा ।'

इति संग्रहोक्तेः,

'व्रतं च जागरश्चैव नवम्यां विधिवद्बलिः ।'

इति देवीपुराणाच्च नवम्यां होमबल्यादि विहितं, तत्र—

'आश्वयुक्शुक्लनवमी मुहूर्तं वा कला यदि ।
सा तिथिः सकला ज्ञेया लक्ष्मीविद्याजयार्थिभिः ॥'

इति सौरपुराणात्,

'सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि ।
बलिदानं प्रकर्तव्यं तत्र देशे शुभावहम् ॥
बलिदाने कृतेऽष्टम्यां पुत्रभङ्गो भवेन्नृप ॥'

इति मदनरत्ने देवीपुराणाच्च*बल्यादौ परा कार्या । उपवासादौ तु पूर्वेति मदनरत्ने उक्तम् । प्रतापमार्तण्डेऽ-

---

पूजाहोमादि कृत्वा नवम्यां प्रभूतबलिदानं कार्यम् ।

'प्रभूतबलिदानं च नवम्यां विधिवच्चरेत् ।'

इति कालिकापुराणात् । यदा तु नवमी अष्टमीविद्धा भूत्वा द्वितीयादिने कियती वर्धते तदा नवमीप्रयुक्तस्य पूजादेः पूर्वदिनेऽ-नुष्ठानेऽपि महाबलिदानमात्रं द्वितीयदिने कार्यमित्याह—*यत्त्वि-त्यादिना । आद्ये समाप्येत्युक्त्या द्वितीये व्रतजागरोत्तरं बल्यु-क्त्या च सन्देहः ।

*बल्यादाविति । यद्यप्यादिपदं चिन्त्यं होमस्यापि पूर्वे-द्युरेवोक्तेः, तथाऽपि [illegible] तेन ग्राह्यः ।

''अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ।
प्रभाते बलिदाने तु कियन्मात्रापि लभ्यते ॥

ष्येवम् । *यत्तु—

'अष्टम्यां बलिदानेन पुत्रनाशो भवेद् ध्रुवम् ।'

इति कालिकापुराणं, तत्संधिपूजापरम् ।

'अष्टमीनवमीसन्धौ*तृतीया खलु कथ्यते ।'

इति तत्रैव तदुक्तेः । कामरूपनिबन्धे—

*'अष्टम्याः शेषदण्डश्च नवम्याः पूर्व एव च ।
तत्र या क्रियते पूजा विज्ञेया सा महाफला ॥'

अष्टमीमात्रे*भवत्येव ।

'आश्विने पूजयित्वा तु अर्धरात्रेऽष्टमीषु च ।
घातयन्ति*पशून्भक्त्या ते भवन्ति महाबलाः ॥'

तथा—

'कन्यासंस्थे रवावीषे शुक्लाष्टम्यां प्रपूजयेत् ।
सोपवासो निशार्धे तु महाविभवविस्तरैः ॥'

तथा—

'पशुघातश्च कर्तव्यो गवयाजवधस्तथा ।'

---

नवम्यां तत्र सम्पूज्या दुर्गा दुर्गार्तिनाशिनी ।"

(इति) प्रातर्नवम्यां बल्यर्थपूजाविधानात् परेद्युर्नवमी, तदभावे तु पूर्वेद्युर्नवमीमध्य एव बल्यादि कार्यम् ।

"दशम्यां बलिदानन्तु दीयते यत्र मानवैः ।
तद्राष्ट्रं नाशमायाति मारकोपद्रवैः समम् ॥"

इति शुद्धदशम्यां नवमीप्रयुक्तबलिदानकरणे दोषोक्तेः । *यत्त्विति । अष्टमीप्रयुक्तबलिदानस्य तत्रैव कर्तव्यत्वात्कथमेतत् ? *तृतीयेति । सायंपूजा प्रथमा निशीथपूजा द्वितीया सन्धिपूजा तृतीयेत्यर्थः । सन्धिपूजाविधिमाह—*अष्टम्या इति । *भवत्येवेति । बलिदानमित्यादि । *पशूनिति । बहुकुलाचाराभिप्रायं काम्यं वा । राजा तु महानवम्यामुपवास-

इति रूपनारायणीये देवीपुराणात् । तत्रैव भाविष्ये-

*'तस्मादियं महापुण्या नवमी पापनाशिनी ।
उपोष्या *सुप्रयत्नेन सततं सर्वपार्थिवैः ॥'

निर्णयदीपे तु महानवमी परदिनेऽपराह्णव्यापित्वे परा, अन्यथा पूर्वा ।

'आवर्तनात्पूर्वकाले नवमी स्यात्परेऽहनि ।
दुर्गार्चा तत्र पूर्वेद्युः पूर्वाह्णे त्वष्टमी यदि ॥'

इति धौम्यवचनादित्युक्तम् । अस्य तु शारदानवमीविषयत्वं समूलत्वं च विमृश्यम् । यानि तु—

'नन्दायां ज्वलते *वह्निः पूर्णायां *पशुघातनम् ।
*भद्रायां गोकुलक्रीडा तत्र राज्यं विनश्यति॥'इति,
'नवम्यामपराह्णे तु बलिदानं प्रशस्यते ।
दशमीं वर्जयेत्तत्र नात्र कार्या विचारणा ॥' इति,
'नन्दाया दर्शने *रक्षा बलिदानं दशासु च ।
भद्रायां गोकुलक्रीडा देशनाशाय जायते ॥'

इति ब्रह्मवैवर्तनारदादिवचनानि, तानि*शुद्धाधिकनिषेधपराणि इति मदनरत्ने । तथा कालिकापुराणे—

'नवम्यां बलिदानं तु कर्तव्यं वै यथाविधि ।
जपं होमं च विधिवत्कुर्यात्तत्र विभूतये ॥'

केचित्तु—

'पूर्वाषाढायुताष्टम्यां पूजाहोमाद्युपोषणम् ।'

इति पूर्वोक्तदेवीपुराणादष्टम्यां होममाहुः । अन्ये तु द्विविधवाक्यवशादष्टम्यामारभ्य नवम्यां समापय-

---

मेव कुर्यादित्याह—*तस्मादिति । *सुप्रयत्नेनेति । एकभक्तादिनिवृत्तिः । *वह्निः होला । *पशुघातनं बलिदानम् । *भद्रायाम् कार्तिकशुक्लद्वितीयायाम् । *रक्षा रक्षाबन्धनम् ।

न्ति। *समुच्चयस्तु युक्तः। रुद्रयामले तु विकल्प उक्तः, तत्तु निर्मूलम्। दुर्गाभक्तितरङ्गिण्यादिगौडग्रन्थेष्वपि नवम्यां होम उक्तः।

*होमे च विशेष उक्तो डामरतन्त्रे—

'पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रित

होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तम ॥

*रुद्राध्याये यथा होमं मन्त्रेणैकेन साधयेत्

तथा*स्तोत्रजपे होमं श्लोकेनैकेन साधयेत् ॥

---

*शुद्धाधिकेति। नन्दापूर्णाभद्रात्रयेति शेषः। *समुच्चयस्त्विति। वस्तुतस्तु यद्यपि

'जपहोमसमायुक्तः कन्यकां भोजयेन्मुदा।'

इति वचनात् प्रत्यहं होमः प्रतीयते तथापि अष्टम्यामेव नवम्यामेव वा कार्यः। 'तत्राष्टम्यां भद्रकालि' इत्युपक्रम्य 'होमैर्ब्राह्मणतर्पणैः' इति ब्राह्मे अष्टमीकृत्यमध्ये पाठात् नवमीकृत्यमध्ये—'नवम्यां बलिदानं च' इति कालिकापुराणाच्च। अथ वा—

'पूर्वाषाढायुताऽष्टम्यां पूजाहोमाद्युपोषणम्'।

इत्यष्टम्याम्

'नवम्यां बलिदानं च कर्तव्यं वै यथाविधि।

जपं होमं च विधिवत्' इति नवम्यां च विधानात्तथा शिष्टाचाराच्चाष्टम्यामारभ्य नवम्यां समापनीयः। होमद्रव्यं च तिलाज्यादि।

'पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः।'

इति देवीपुराणात्। होमश्च गुरूपदिष्टमन्त्रेण सप्तशतीमन्त्रेण जयन्तीमन्त्रेण इति मन्त्रत्रयम्। तत्राद्यमभिप्रेत्याह—*होमे चेति। कात्यायनीतन्त्रोक्तमार्गेणार्धं होम इति मान्त्रिकाः। द्वितीयमभिप्रेत्याह—*रुद्राध्याये इति। रुद्राध्याये मन्त्रविभागो बौधायनाद्युक्तः, अत्र तु कात्यायनीतन्त्रोक्तः। *स्तोत्रज-

यद्वा सप्तशतीं जप्य होममन्त्रो नवाक्षरः।"

*'ऐं ह्रीं क्लीं चामुण्डायै विच्चे' इति नवाक्षर इति केचित्। *पूजोक्तो ग्राह्य इति तु युक्तम्। रुद्रयामलेऽपि-

*'प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा।
किंशुकैः सर्षपैः पूगैर्लाजादूर्वाङ्कुरैरपि॥
यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा।
रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः॥
*प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि च क्रमात्।
*नवाक्षरेण वा हुत्वा नमो देव्या इतीति च॥' इति।

---

पे इति। सप्तशतीस्तोत्रजपे इत्यर्थः। तृतीयं वक्ष्यति। सप्तशतीपक्षान्तरं सप्तशतीपाठे आद्यन्तजप्यो यो नवाक्षरस्तावन्मात्र एव होममन्त्र इत्यर्थः। स च—

"ऐं बीजमादीन्दुसमानदीप्ति ह्रीं सूर्यतेजोद्युतिमद्द्वितीयम्।
क्लीं मूर्तवैश्वानरतुल्यरूपं तृतीयमानन्त्यसुखाय चिन्त्यम्॥
चा शुद्धजाम्बूनदकान्तितुर्यं मु पञ्चमं रक्ततरं प्रकल्प्यम्।
ण्डा षष्ठमुग्रार्तिहरं सुनीलं यै सप्तमं कृष्णतरं रिपुघ्नम्॥
वि पाण्डुरं त्वष्टममादिसिद्धं च्चे धूम्रवर्णं नवमं विशालम्॥"

इति डामरतन्त्रोक्त एवेति मतमाह-*ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे इति। *पूजोक्त इति।

'कथितं पूजनाध्याये तद्वद्धोमो भवेदसौ'।

इति वचनात्। *प्रधानेत्यादि सप्तशतीस्तोत्रहोमपरम्। *प्रतिश्लोकं प्रतिमन्त्रं च कात्यायनीतन्त्रे तन्मन्त्रविभागो नागोजीभट्टप्रकाशितो ग्राह्यः। तेन दशांशहोमः प्रत्यहमेकपाठे अन्ते एकावृत्तिहोमः प्रत्यहमेकैकपाठावृत्तिवृद्धौ चोह्यम्। *नवाक्षरेण सप्तशतीस्तोत्रपूर्वोत्तरस्थानजप्तनवाक्षरेण।

"नमो देव्यै महादेव्यै शिवायै सततं नमः।

*रहस्ये तु—

'प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा ।'

इत्युक्तम् । *दुर्गाभक्तितरङ्गिण्यां तु *तिलैर्जयन्ती-मन्त्रेण च होम उक्तः ।

'पुरश्चरणकार्ये तु बिल्वपत्रयुतैस्तिलैः ।'

इति कालिकापुराणाद्बिल्वपत्रैश्चेति स्मार्ताः, तन्न । अन्यत्र मानाभावात् ॥

अथ बलिदानम् । तत्राश्वमेषच्छागमाहिषस्वमांसा-नामुत्तरोत्तरप्राशस्त्यं फलविशेषश्चान्यतोऽवसेय इति दिक् । बलिप्रकारस्तु देवीपुराणे—

'कन्यासंस्थे रवौ शक्रः शुक्लाष्टम्यां प्रपूज्य तु ।
द्रोणपुष्पैश्च बिल्वाम्रजातीपुन्नागचम्पकैः ॥

---

नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्मृताम् ॥"

*रहस्ये त्विति । तिलसर्पिर्मात्रोपादानं वचनान्तरोक्त-दध्यादेरुपलक्षणं तदावश्यकत्वार्थं वा । तृतीयमाह—*दुर्गाभक्तीति । *तिलैरिति । तिलाज्यादिभिरित्यर्थः ।

'पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः ।'

इति देवीपुराणात् । मन्त्रश्च जयन्तीत्यादिः ।

'अनेनैव तु मन्त्रेण जपहोमादि कारयेत् ।'

इति देवीपुराणात् । होमद्रव्यप्रमाणन्तु सिद्धान्तशेखरे—

'होमद्रव्यप्रमाणानि वक्ष्यन्तेऽथ यथाक्रमम् ।
कर्षप्रमाणमाज्यं स्यान्मधुक्षीरं च तत्समम् ॥
तण्डुलानां शुक्तिमात्रं पायसं प्रसृतेः समम् ।
कर्षमात्राणि भक्ष्याणि लाजा मुष्टिमिता मताः ॥
अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकम् ।
मूलानान्तु त्रिभागः स्यात्कन्दानामष्टमोऽशकः ॥

इक्षुः पर्वप्रमाणं स्यादङ्गुलद्वितयं लता ।
प्रादेशमात्राः समिधो व्रीहीणां मञ्जरीसमाः ॥
तिलसक्तुकणादीनां मृगीमुद्राप्रमाणतः ।
पत्रपुष्पफलानान्तु समानाहुतिरिष्यते ॥
चन्द्रश्रीखण्डकस्तूरीकुङ्कुमागरुकर्दमाः ।
हरिमन्थसमाः प्रोक्ता गुग्गुलुर्बदरीसमः ॥
आहूतीनामिदं मानं कथितं वेदवेदिभिः ॥" इति ।

हरिमन्थःचणकः । मृगीमुद्रालक्षणमनुपदं वक्ष्यामः । गारुडे-

"कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा ।
कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥" इति ।

पदार्थादर्शे—

"घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा ।
शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य तु ॥
खण्डत्रयन्तु मूलानां फलानां स्वप्रमाणतः ।
ग्रासमात्रन्तु होतव्या इतरेषां च तण्डुलाः ॥
अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृताः ।
तदभावे तु गोधूमा न तु खण्डिततण्डुलाः ॥
सर्वप्रमाणमाहुत्या पञ्चाङ्गुलगृहीतया ।
कर्षमात्राणि भक्ष्याणि खाद्यानां खण्डपञ्चकम् ॥
चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान् ।
कलापसंमितानेतान् गुग्गुलं बदरास्थिवत् ॥
द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः ।
[illegible]चूर्णा द्रवा प्रोक्ताः कठिना ग्रा[illegible] ।
व्रीहयो यवगोधूमप्रियङ्गुतिलशालयः ।
स्वरूपेणैव होतव्या इतरेषां च तण्डुलाः ।
होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च सूकरी ।
[illegible] यद्धोमस्तत्सर्वं निष्फलं लभेत् ॥

सूकरी सर्वाङ्गुलयो हंसी मुक्तकनिष्ठिका ।
मृगी कनिष्ठतर्जन्यौ मुद्रात्रयमुदाहृतम् ॥
आभिचारिकहोमे च सूकरी कथ्यते बुधैः ।
यज्ञे शान्तिककल्याणे मृगी हंसी प्रकीर्तिते ॥
स्यात् त्रिमुद्रा मृगी मुद्रा होमे सर्वफलप्रदा ।" इति ।

शारदायाम्—

"अथात्र होमद्रव्याणां प्रमाणमभिधीयते ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥
उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः ।
तत्समं मधु दुग्धान्नमक्षमात्रमुदाहृतम् ।
दधि प्रसृतिमात्रं स्यात् लाजाः स्युर्मुष्टिसम्मिताः ।
पृथुकास्तत्प्रमाणाः स्युः सक्तवोऽपि तथोदिताः ।
गुडं पलार्धमानं स्याच्छर्कराऽपि तथा स्मृता ।
ग्रासार्धं चारुमानं स्यादिक्षुः पर्वावधिः स्मृतः ॥
एकैकं पत्रपुष्पादि तथा धूपादि कल्पयेत् ।
कदलीफलनारङ्गफलान्येकैकशो विदुः ।
मातुलुङ्गं चतुःखण्डं पनसं दशधा स्मृतम् ॥
अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ।
त्रिधा कृतं फलं बैल्वं कपित्थं खण्डितं द्विधा ।
उर्वारुकफलं होमे चोदितं खण्डितं त्रिधा ॥
फलान्यन्यान्यखण्डानि समिधः स्युर्दशाङ्गुलाः ।
दूर्वात्रयं समुद्दिष्टं गुडुची चतुरङ्गुला ॥
व्रीहयो मुष्टिमात्राः स्युर्मुद्गमाषयवा अपि ।
तण्डुलास्तु तदर्धांशाः कोद्रवा मुष्टिसम्मिताः ।
गोधूमा रक्तकलमा विहिता मुष्टिमानतः ॥
तिलास्तुलुकमात्राः स्युः सर्षपास्तत्प्रमाणतः ।
शुक्तिप्रमाणं लवणं मरीचान्येकविंशतिः ।

*पशुश्छागं लक्षणोपेतं गन्धपुष्पसमन्वितम् ।
विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत् ॥
('ॐ कालि कालि वज्रेश्वरि लोहदण्डायै नमः' इति मन्त्रः ।)
तदुत्थरुधिरं मांसं गृहीत्वा पूतनादिषु ।
(आदिशब्दाच्चरकीविदारीपापराक्षस्यः ।)
नैर्ऋतेभ्यः प्रदातव्यं महाकौशिकमन्त्रितम् ॥'
मन्त्रस्तु वक्ष्यते । तथा—
*'तस्याग्रतो नृपः स्नायात्कृत्वा शत्रुं तु पैष्टिकम् ।
खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः ॥'
अशक्तौ *ब्राह्मणेन च कूष्माण्डादिभिर्बलिदानं कार्यम् । तदुक्तं कालिकापुराणे-

---

पुरं बदरमानं स्याद्रामठं तत्समं स्मृतम् ॥
(पुरम् गुग्गुलुः ।)
चन्दनागरुकर्पूरकस्तूरीकुङ्कुमानि च ।
तिन्तिणीबीजमानानि समुद्दिष्टानि दैशिकैः ॥
वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु देशिकः ।
शयानमाज्यहोमेषु नियम्यं शेषवस्तुषु ॥' इति ।
"उत्तमोऽरणिजो वह्निर्मध्यमः सूर्यकान्तजः ।
उत्तमः श्रोत्रियागारान्मध्यमः स्वगृहाद् द्विजः ॥"
इति च प्रयोगरत्ने ।

*पशुश्छागं महिषमजं मेषं वा । *तस्याग्रतो नृप इति । अत्र पशुबलिदानानन्तरं तद्रक्तं सर्वाङ्गे लेपयित्वा अशक्तौ तिलकादिकं वा कृत्वा स्नानं कार्यमित्येके । अन्ये तु शत्रुर्मृत इति भावनया स्नानमिच्छन्ति । *ब्राह्मणेन चेति । यद्यपि अग्नीषोमीयपशुहिंसावत् पशुबलिदानं धर्म्यं तथापि तत् क्षत्रियादिविषयम् ।

'कूष्माण्डमिक्षुदण्डं च*मांसं सारघमेव च ।
एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा ॥'

रुद्रयामलेऽपि—

'छागाभावे तु कूष्माण्डं श्रीफलं वा मनोहरम् ।
वस्त्रसंवेष्टितं कृत्वा छेदयेच्छुरिकादिना ॥'

तथा—

'ब्राह्मणेन सदा देयं कूष्माण्डं बलिकर्मणि ।
श्रीफलं वा सुराधीश छेदं नैव तु कारयेत् ।'
(छेदे विकल्पः ।)
*माषान्नेन बलिर्देयो ब्राह्मणेन विजानता ।'

कालिकापुराणे—

---

ब्राह्मणस्य तु—

'सात्त्विकी जपहोमाद्यैर्नैवेद्यैश्च निरामिषैः ।'

इति वचनात् सात्त्विक्यामेवैतत्पूजायामधिकारात् श्रीमद्भगवद्गीतादिषु ब्राह्मणस्य सात्त्विक्यामेवाधिकारात् । एवं सुरया स्वगात्ररुधिरेण च पूजाऽपि न ब्राह्मणस्य ।

'मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ।
स्वगात्ररुधिरं दत्त्वा ब्रह्महत्यामवाप्नुयात् ।"

इति कालिकापुराणे एव तन्निषेधात् । मयूखे तु—

पशुबली राज्ञैव देयः "विजयार्थं नृपोत्तम" इति वचनादित्युक्तम् । *मांसं सारघमेव चेति । 'मद्यमांसवदेव च' इति पाठः । तत्र सारघं मद्यम् । मद्यं मांसं च ब्राह्मणस्य वर्ज्यम् ।

'राजसी बलिदानाद्यैर्नैवेद्यैः सामिषैस्तथा ।'

इति मांसबलिदानादे राजसत्वोक्तेर्मद्यनिषेधाच्च । *माषान्नेनेति ।

'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः ।'

*'उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा ॥
निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत् ॥
'पशुस्त्वं बलिरूपेण मम भाग्यादुपस्थितः ।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् ।
चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते ॥
*यज्ञार्थे बलयः सृष्टाः स्वयमेव स्वयंभुवा ।
अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः ॥'
ऐं ह्रीं श्रीमिति मन्त्रेण तं बलिं मत्स्वरूपिणम् ।
चिन्तयित्वा न्यसेत्पुष्पं मूर्ध्नि तस्य तु*भैरव ॥
रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः ।
ह्रीं ह्रीं खड्गेतिमन्त्रेण ध्यात्वा खड्गं च पूजयेत् ॥
पूजयित्वा ततः खड्गं ॐ हुंफडिति मन्त्रकैः ।
गृहीत्वा विमलं खड्गं छेदयेद्बलिमुत्तमम् ॥
*ॐ ह्रीं ऐं ह्रीं कौशिकीति रुधिरेणाप्यायतामिति ।

---

इति कोषान्माषभक्तेनेत्यर्थः । कुल्माषभक्तोपलक्षणम् ।

'माषं कुल्माषमांसाद्यैर्देयो दिक्षु बलिर्निशि ।'

इति कालिकापुराणात् । बलिदानप्रकारमाह-*उत्तरेति *यज्ञार्थं पशव इति । *घातयामि घातयिष्यामि क्वचिदयं पाठः । *भैरवेति ।

'अभिषिच्य बलिं पश्चात्करवालं तु पूजयेत् ।'

इति बोध्यम् । ॐ क्रीं फडिति वा पाठः । छेदनमन्त्रमाह-*ॐमित्यादि आप्यायतामित्यन्तम् । रुधिरं च स्थाने पात्यम् ।

'स्थाने नियोजयेद्रक्तं शिरसश्च प्रदीपकम् ।'

इति वचनात् । राजा त्वश्वपीडाशान्तये नवम्यां रेवन्तपूजां कुर्यात् । रेवन्तश्च वडवारूपायां छायायां [illegible]

बलिदाने तु दुर्गायाः सर्वत्रायं विधि स्मृतः ॥'

मत्स्यसूक्ते—

*'नवम्यां *पूर्ववत्पूजा कर्तव्या भूतिमिच्छता ।
दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥'

अथात्र प्रसङ्गाच्छतचण्डीविधानमुच्यते । रुद्रयामले—

'शतचण्डीविधानं च प्रोच्यमानं शृणुष्व तत् ।
सर्वोपद्रवनाशार्थं शतचण्डीं समारभेत् ॥

---

पतिः । पूजामन्त्रः शालिहोत्रे—

"नमो देवाधिदेवाय तुरङ्गबलधारिणे ।
सूर्यपुत्राय देवाय तुरङ्गसहिताय च ॥
तुरङ्गपरिषद्यस्य नृगजोपरि धावति ।
सोऽत्रमश्वाधिपं त्वद्य स तूर्णं त्वां व्रजाम्यहम् ॥
मन्त्रेणानेन रेवन्तं पाद्याद्यैरर्चयेत्सुधीः ॥" इति ।

ततः—

'सूर्यपुत्र महाबाहो [illegible] ।
शान्ति कुरु तुरङ्गाणां रेवन्ताय नमो नमः ॥"

इति मन्त्रेण प्रार्थयेत् । एवं नवम्यां होमादि कृत्वाऽनन्तरं स्तु-

(कृ)त्यमाह—*नवम्यामिति । *पूर्ववत्पूजेति । कुमारीपूजा इत्यर्थः । अत्र ब्राह्मणपूर्वकं ब्राह्मणभोजनादि द्रष्टव्यम् ।

"अभोजयित्वा विप्राग्र्यानसम्पूज्य च तानपि ।
अदत्त्वा दक्षिणां तेभ्यो भूयसीं चापि पापकृत् ॥
यो मां पूजयते हृष्टः स मां द्वेष्टि नराधमः ।"

इति वचनात्

'गजाश्वशय्यावस्त्रादि दद्याद्धर्मादि वा पुनः ।'

इति वचनात् 'व्रतान्ते विप्रभोजनम्' इति वचनात्

'तदन्ते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः ।'

*षोडशस्तम्भसंयुक्तं मण्डपं पल्लवोज्ज्वलम् ।
वसुकोणयुतां वेदीं मध्ये कुर्यात्त्रिभागतः ॥
पक्वेष्टकचितां रम्यामुच्छ्राये हस्तसंमिताम् ।
पञ्चवर्णरजोभिश्च कुर्यान्मण्डलकं शुभम् ॥
पञ्चवर्णवितानं च किङ्किणीजालमण्डितम् ।
आचार्येण समं विप्रान्वरयेद्दश सुव्रतान् ॥
ईशान्यां स्थापयेत्कुम्भं पूर्वोक्तविधिना चरेत् ।
वारुण्यां च प्रकर्तव्यं कुण्डं लक्षणलक्षितम् ॥
मूर्तिं देव्याः प्रकुर्वीत सुवर्णस्य पलेन वै ।
तदर्धेन तदर्धेन तदर्धेन महामते ॥
*अष्टादशभुजां देवीं कुर्याद्वाऽष्टकरामपि ।

---

इत्यग्रिमवचनाद्विप्रभोजनदानादेरावश्यकत्वाच्च तत आचार्याय दक्षिणादि दद्यादित्यर्थः ।

*षोडशेति । सर्वग्रन्थमतेन षोडशमहादानेषु रुद्रे तथा—
"वापीकूपतडागपूजनविधौ स्यान्मण्डपोक्तो विधि-
र्वेदास्त्रादिसमस्तकुण्डसहितो देवप्रतिष्ठाविधौ ।
आरामोत्सवलक्षहोमविधिषु प्रोक्तश्च चण्डीद्वये"
इत्यभियुक्तसिद्धान्तात्कुण्डमण्डपो ह्यावश्यकः । तत्र च—
"पूर्वमेव विभक्तव्याः स्वस्वकुण्डेऽग्नयो बुधैः ।
तथा स्विष्टकृदाद्यन्ते समारोप्य समित्सु च ।
मुख्याग्नौ मेलनं कार्यमिति वह्निविनिर्णयः ॥ इति च ।
*अष्टादशभुजा यथा—
'आयुधान्यत्र वक्ष्यन्ते दक्षिणाधः करक्रमात् ।
अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा ॥
चक्रं त्रिशूलं परशुः शङ्खो घण्टा च पाशकः ।
शक्तिर्दण्डश्चर्म चापं पानपात्रं कमण्डलुः ।

पट्टकूलयुगच्छन्नां देवीं मध्ये निधापयेत् ॥
देवीं संपूज्य विधिवज्जपं कुर्युर्दश द्विजाः ।
शतमादौ शतं चान्ते जपेन्मन्त्रं नवार्णवम् ॥
चण्डीं सप्तशतीं मध्ये संपुटोऽयमुदाहृतः ।
एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम् ॥
रूपाणि क्रमशस्तद्वत्पूजनादिकमाचरेत् ।
पञ्चमे दिवसे प्रातर्होमं कुर्याद्विधानतः ॥
गुडूचीं पायसं दूर्वां तिलान्शुक्लान्यवानपि ।
चण्डीपाठस्य होमं तु*प्रतिश्लोकं दशांशतः ॥
होमं कुर्याद्ग्रहादिभ्यः समिदाज्यचरून्क्रमात् ।
हुत्वा पूर्णाहुतिं दद्याद्विप्रेभ्यो*दक्षिणां क्रमात् ॥
कपिलां गां नीलमणिं श्वेताश्वं छत्रचामरे ।
अभिषेकं ततः कुर्युर्यजमानस्य ऋत्विजः ॥

अलङ्कृतभुजामेभिरायुधैः कमलासनाम् ।
सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप ॥
पूजयेत्सर्वलोकानां स देवानां प्रभुर्भवेत् ॥" इति ।

*अष्टभुजा यथा—

"दद्यौ चाष्टभुजा बाणमुसले शूलचक्रभृत् ।
शङ्खं घण्टां लाङ्गलं च कार्मुकं वसुधाधिप ॥
एषा सम्पूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति ॥" इति ।

अत्र—

"खड्गबाणगदाशूलशङ्खचक्रभुशुण्डिभृत् ।
परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं दधत् ॥"

इति दशभुजा च नोक्ता । स्फुरद्दशनदंष्ट्राया भीमरूपत्वा-द्युक्त्या तस्या अत्युग्रत्वात् । *प्रतिश्लोकमिति । श्लोको मन्त्र-स्तद्विभागो नागोजीभट्टोक्तः । *दक्षिणामिति ।

एवंकृतेऽमरेशान सर्वसिद्धिः प्रजायते ॥'

अथ सहस्रचण्डी । सा च तन्त्रैवोक्ता-

'सहस्रचण्डीं विधिवच्छृणु विष्णो महामते ।
राज्यभ्रंशे महोत्पाते जनमारे महाभये ॥
गजमारेऽश्वमारे च परचक्रभये तथा ।
इत्यादिविविधे दुःखे क्षयरोगादिजे भये ॥
सहस्रचण्डिकापाठं कुर्याद्वा कारयेत्तथा ।
जापकास्तु शतं प्रोक्ता विंशद्धस्तश्च मण्डपः ॥
भोज्याः सहस्रं विप्रेन्द्रा गोशतं दक्षिणां दिशेत् ।
गुरवे द्विगुणं देयं शय्यादानं तथैव च ॥
ससधान्यं च भूदानं श्वेताश्वं च मनोहरम् ।
पञ्चनिष्कमिता मूर्तिः कर्तव्या वाऽर्धमानतः ।
अष्टादशभुजा देवी सर्वायुधविभूषिता ॥
अवारितान्नं दातव्यं सहस्रं प्रत्यहं प्रभो ।
शतं वा नियताहारः पयःपानेन वर्तयेत् ॥
एवं यश्चण्डिकापाठं सहस्रं तु समाचरेत् ।
तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्या विचारणा ॥'

इति, एतद्द्वयं यद्यपि महानिबन्धेषु नास्ति तथापि प्रचरद्रूपत्वादुक्तमिति दिक् ।

वाराहीतन्त्रे—

'संकटे समनुप्राप्ते दुश्चिकित्स्यामये तथा ।

---

"दद्याद्गोमिथुनान्यष्टौ आचार्याय सुभक्तितः ।
चतुर्विंशतिसंख्याकैर्हेमगद्याणकैः सह ॥
एकैकां दश विप्रेभ्यो दद्याद्गोमिथुनं समाम् ।
निष्कत्रयसमायुक्तां वस्त्रालङ्कारभूषिताम् ॥"

इति अभियुक्ताः । शतचण्डीसहस्रचण्डीप्रयोगोऽन्यत्र द्रष्टव्यः ।

जातिभ्रंशे कुलोच्छेदेऽप्यायुषो नाश आगते ॥
वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ।
तथैव त्रिविधोत्पाते तथा चैवोपपातके ॥
कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभम् ।
श्रेयोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथापरा ॥
मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् ।
सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥
भुक्त्वा मनोरथान्कामान्नरो मोक्षमवाप्नुयात् ।
चण्ड्याः शतावृत्तिपाठात्सर्वाः सिद्ध्यन्ति सिद्धयः ॥'

इति शतचण्डीसहस्रचण्डीविधिः ॥

अथ नवरात्रपारणानिर्णयः । *सा च दशम्यां कार्या ।
*'आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥
त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथाक्रमम् ॥'

इति हेमाद्रौ धौम्यवचनात् ।

*'नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम् ।'

इति प्रागुक्तवचनैर्नवमीपर्यन्तं प्रधानभूतपूजायुक्तेरुपवासादेश्चाङ्गत्वेन तत्पर्यन्तत्वादादिशब्देनोपवासोक्तेः *पूर्वोक्तात्रिरात्रव्रते नवम्या अप्युपोष्यत्वाच्च ।

---

*सा चेति । विसर्जनं दशम्यां संपूज्य प्रेषणं कुर्यात् । 'दशम्यां शारदोत्सवैः' इत्युक्तभविष्यात् पारणस्य नियमत्यागरूपस्य विसर्जनोत्तरकालत्वात्तदपि विसर्जनोत्तरं दशम्यामेव कार्यमित्यर्थः । तत्र नियमं नवमीपर्यन्तं दर्शयति—*आश्विने इति । यावच्छब्दो न मर्यादार्थः किन्त्वभिविद्ध्यर्थः । अत एवाह—*नवमीति । परिशब्दोऽनर्थकः, नवमीतिथ्यन्तमित्यर्थः । नन्वङ्गभूत उपवासो नवम्यां न कार्य इत्यत्राह—*पूर्वोक्तेति । त्रिरा-

*न च पारणान्तत्वेन त्रिरात्रत्वम् । विष्णुत्रिरात्रादौ तथा प्रसक्तेः । *न चात्रोपवासे मानाभाव इति वाच्यम् ।

'एवं च विन्ध्यवासिन्या नवरात्रोपवासतः ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ॥'

इति हेमाद्रौ भविष्योक्तेः, *नवरात्रसमाख्यातो नवम्या अप्युपोष्यत्वाच्च । ननु तिथिह्रासेऽष्टावप्युपवासा भवन्तीति कथं समाख्या । तेन कर्मविशेषे नवरात्रशब्दो रूढः । अत एवोक्तं देवीपुराणे—

'तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम् ।'

इति चेन्न । तिथिह्रासेऽपि नवतिथीनामुपोष्यत्वान्नवरात्रत्वाक्षतेः । एतेन रात्रीणां प्राधान्यात् ह्रासे अमामादाय नवत्वमिति मूर्खोक्तिः परास्ता । *यत्तु देवीपुराणे—

'कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाची ह्यथवैकाशी नक्ताशी अथवाऽब्भदः ॥'

इति व्रतचतुष्टयमुक्तं, त*ल्लौहाभिसारिकाविषयम् । तस्य—

---

त्रेऽपि नवम्यां नोपवास इत्यत्राह—*न चेति । अस्तु त्रिरात्रे नवम्यामुपवासः न तु नवरात्रे इत्याशङ्क्याह—*न चेति । उपपत्तिमप्याह—*नवरात्रेति । *त्वाच्चेति । उपवासादेरङ्गत्वे कथमित्यभिमानः । अङ्गानां हि प्रधानकालतयोपवासो नवम्यां भवेत् तस्याः पूजनरूपप्रधानकालत्वात् उपवासस्य पृथक् प्रधानत्वे च नवम्यां न तत्प्राप्तिरित्याशयः । अत्र 'नवरात्रोपवासतः' इति-दुर्गानवरात्रोपवासप्रवेशे विकल्पापत्तिरतस्तद्विषयमाह—*लौ-

'जयाभिलाषी नृपतिः प्रतिपत्प्रभृतिक्रमात् ।
लौहाभिसारिकं कर्म कारयेद्यावदष्टमी ॥'

इति भविष्येऽष्टमीपर्यन्तमेवोक्तेः । रूपनारायणेन तु नन्दादिव्रतप्रयोगं पृथगेवोक्त्वा तस्य नवम्यां पारणमुक्तम् । यदपि निर्णयदीपे—

'आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः ।
नवम्यां पारणं कुर्याद्दशमीमिश्रिता न चेत् ॥
दशमीमिश्रिता यत्र पारणे नवमी भवेत् ।
दुःखदारिद्र्यदा ज्ञेया तथा व्रतविनाशिनी ॥'

इति ब्राह्मनाम्ना लिखितं वचनम्, यच्च रुद्रयामले इति वदन्ति—

'अष्टम्या सह कार्या स्यान्नवमी पारणादिने ।
यो मोहाद्दशमीवेधे नवम्यां चण्डिकां यजेत् ॥
पारणं च प्रकुर्याद्वै तस्य पुण्यं निरर्थकम् ।
नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति ॥
दशम्यां पारिता देवी कुलनाशं करोति वै ।
तस्मात्तु पारणं कुर्यान्नवम्यां विबुधाधिप ॥'

इत्यादीनि, तानि यदि समूलानि तदा लौहाभिसारिकनन्दादिव्रतचतुष्टयविषयाणि । तस्याऽष्टमीपर्यन्तमेवोक्तेरित्युक्तं प्राक् । अन्यथा महाष्टम्यां परविद्धायां पारणाविधाने पूर्वनिबन्धैः*र्विरोधो दुर्वारः स्यात् । यानि तु कैश्चिल्लिखितानि नवम्यां पारणाविधायकानि वचनानि तानि हेमाद्र्यादिविरुद्धत्वान्निर्मूलानि । समूलत्वेऽपि यदा*दिनद्वये नवमी, तदा*द्वितीयदिन उपोष्य

---

हाभीति । *विरोध इति । अष्टमीविद्धायां नवम्यामष्टम्युपवासविधानादिति भावः । *दिनद्वये नवमीति । अष्टमीविद्धा नवमी

तिथ्यन्ते पारणा न, किन्तु*नवमीमध्ये कार्येत्येवं नेयानि शिवरात्रिपारणावत् ।

अत्र केचित्पारणाहे सूतकादिप्राप्तौ तदतिक्रम्य पारणां कुर्यादित्याहुः । तन्मन्दम् ।

'काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् ॥

इति माधवीये कौर्मोक्तेः ।

---

त्रिमुहूर्ता परेद्युश्च नवमीत्यर्थः । *द्वितीयेति । दशमीमिश्रिता न चेदित्यनेन उत्तरनवम्यां नवम्यन्ते प्राप्तायाः पारणाया बाधस्यैवोक्तेरिति भावः । *नवमीति । 'नवम्यां पारणं कुर्यात्' इत्येवोक्तेः । वस्तुतस्तु अष्टरात्रादिपक्षा अपि वर्तन्ते ।

"अथवा नवरात्रं च सप्तमं च त्रिकादि वा ।
एकभक्तेन नक्तेनायाचितोपोषितैः क्रमात् ॥"

इति धौम्यवचने आदिपदेनाष्टरात्रद्विरात्रैकरात्रपक्षोपग्रहात् । तत्राष्टरात्रं भविष्ये—

"प्रथमा द्वितीया तृतीया च चतुर्थी च नराधिप ।
एतास्तु एकभक्तेन प्रवदन्ति मनीषिणः ॥
(नेया इति शेषः ।)
पञ्चमी च तथा षष्ठी सप्तमी चाष्टमीषु च ।
उपवासपरो भूत्वा पूजयेत् चण्डिकां बुधः ॥"

प्रथमादिचतुष्टये ऽप्युपवासादिर्विकल्पितो धौम्यवचनात् । सप्तरात्रपक्षो रुद्रयामले—

"दुर्गोत्सवे स्मृतं देव उपवासस्य सप्तकम् ।
अष्टमे दिवसे होमस्ततः किंचित्तु भक्षयेत् ॥" इति ।

पञ्चरात्रपक्षो भविष्ये—

"एकभक्तस्तु पञ्चम्यां षष्ठ्यां नक्तं प्रवर्तयेत् ।

'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥'

इति विष्णुवचनाच्चाशौचमध्येऽपि तत्कर्तव्यतावगतेः । पारणान्तत्वाद्*व्रतस्य । प्रारम्भस्तु तेनैवोक्तः—

'प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥' इति ।

रुद्रयामलेऽपि—

'सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम् ।
तदन्ते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः ॥' इति ।

तदन्ते*सूतकान्ते । एवं स्त्रीभिरपि*रजोदर्शनमध्ये क-

---

अयाचितं तु सप्तम्यामष्टम्यां समुपोषितः ॥
नवम्यां पारणं कुर्यादित्येवं पञ्चरात्रकम् ॥"

इति द्वैतनिर्णये विस्तरः । तथा चाष्टरात्रादिपक्षाभिप्रायेण नवमीपारणविधिः सार्थकः । किं च येषां द्वितीयायुक्तप्रतिपदि घटस्थापनं तद्दिनमारभ्यैव जपपूजाद्युपवासश्च नवमीपूर्वदिनपर्यन्तमिति कुलाचारस्तेषां नवम्यां पूजाहोमब्राह्मणभोजनादि कृत्वा पारणं भवत्येव कुलाचारादिति ।

*व्रतस्येति । व्रतशब्देन पारणाया अपि ग्रहणमिति भावः । *सूतकान्त इति । ब्राह्मणभोजनं भूयस्यादिदानं च सूतकान्ते इत्यर्थः । रामचन्द्रभट्टास्तु—'नवरात्रे होमस्य पूजारूपत्वेन प्रधानत्वात् तस्य चानन्यसाध्यत्वेनाशौचेऽसम्भवात् 'न तु [illegible]' इति निषेधात्तत्समाप्तिं विना च नियमरूपोपवाससमाप्त्यसम्भवादाशौचान्ते होमादि कृत्वा पारणं कुर्यात् । यैस्तु होमो न क्रियते तेषां सूतकादिमध्ये पारणं भवत्येवेत्याहुः । *रज इति । पूजा त्वन्येन कार्या ।

त्यमेव पारणम् ।

'संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ।'

इति माधवीये ऋष्यशृङ्गवचनात् । द्वादशीव्रतमित्युपलक्षणम् ।

*'प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।

न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥'

इति तत्रैव सत्यव्रतवचनात् । किंच एकादश्यादौ (१)पञ्चषाशौचपाते मासान्ते पारणापत्तिः, मासोपवासान्ते पञ्चषाशौचपाते जीवनासंभवश्च । यत्तु-

'नियमस्था यदा नारी प्रपश्येदन्तरा रजः ।

उपोष्यैव तु ता रात्रीः स्नात्वा शेषं चरेद् व्रतम् ॥'

इत्यङ्गिरोवचनम्, यच्च हारीतवचनम्-

'नियमस्थव्रतस्था स्त्री रजः पश्येत्कथंचन ।

त्रिरात्रं तु क्षिपेदूर्ध्वं व्रतशेषं समापयेत् ॥'

तद्विधवोपवासविषयम् । तासां तत्र भोजननिषेधादिति केचित् । वयं तु प्रागुक्तसत्यव्रतवचने दीर्घतपसामिति विशेषणोपादानात् द्वादशीव्यतिरिक्त[illegible]काहोपवासविषयोऽयं निषेधः । त्रिरात्रनवरात्रादिदीर्घव्रतेषु तु रजोमध्ये पारणेति ब्रूमः । आशौचमध्ये तु सर्वापि पारणा भवति प्रागुक्तकौर्मवचनादिति सिद्धम् । अयं [illegible] पारणानिर्णयः सर्वव्रतेषु बोद्धव्य इत्यलं भूयसा ॥

दशम्यां देवीं विसर्जयेत् । तदुक्तं दुर्गाभक्तितरङ्गिण्यां देवीपुराणे-

---

'अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।'

इत्युक्तमात्स्यात् । *प्रारब्धेति । यद्यपीदं दीर्घकाल-

---

(१) पञ्चवारं षड्वारं वाऽशौचप्राप्तौ इत्यर्थः ।

'ततः प्रातः पूजयित्वा दशम्यां विधिपूर्वकम् ।
संप्रेषणं तु कर्तव्यं गीतवादित्रनिःस्वनैः ॥
रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ॥
महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥
इति *संप्रार्थ्य देवीं तु तत उत्थापयेद्बुधः ।
उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च ॥
कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ।
गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके ॥
व्रज स्रोतोजलं वृद्ध्यै स्थीयतां च जले त्विह ॥'

इति उत्थाप्य जलं नीत्वा—

'दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते ।
संवत्सरे व्यतीते तु पुनरागमनाय वै ॥
इमां पूजां मया देवि यथाशक्त्योपपादिताम् ।
रक्षार्थं त्वं समादाय व्रज स्वस्थानमुत्तमम् ॥'

---

त्यापिमासोपवासाद्येकप्रयोगविषयं तथाऽपि वर्षादिपर्यन्तम-भ्यासेन फलसाधनेष्वपि प्रारब्धेषु योजयितुं शक्यमिति भावः । रजःपदमाशौचोपलक्षणम् । केचिदित्यरुचिः । निषेधस्य रागप्राप्तगोचरत्वेन वैधपारणगोचरत्वायोगात् । विधवाया भोजन-निषेधादर्शनाच्चेति । तत इत्युपलक्षणम् ।

'ततः संप्रेषणं कुर्याद्दशम्यां शाबरोत्सवैः ।'

इत्यपि द्रष्टव्यम् । शाबरोत्सवाः प्रागुक्ताः । एवं पूजां विधाय प्रणम्य 'दुर्गां शिवां शान्तिकरीम्' इति पूर्वोक्तं स्तोत्रं पठेत् ।

*संप्रार्थ्येति ।

'विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।

इति जले*प्रवाहयेत्।

इयमेव विजयादशमी। सा च द्वितीयदिने श्रवणयोगाभावे पूर्वा ग्राह्या। तदुक्तं हेमाद्रौ स्कान्दे—

'दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः॥
या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता।
क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः॥
नवमीशेषयुक्तायां दशम्यामपराजिता।
ददाति विजयं देवी पूजिता जयवर्धिनी॥'

तथा—

'आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः।
एकादश्यां न कुर्वीत पूजनं चाऽऽपराजितम्॥' इति।

यदा तु पूर्वदिने श्रवणयोगाभावः, परदिने चाल्पाऽपि तद्योगिनी, तदा परैव। तथा च हेमाद्रौ व्रतकाण्डे कश्यपः—

'उदये दशमी किंचि*त्संपूर्णैकादशी यदि।
श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा॥
श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः।
उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः॥' इति।

काले अपराह्णे। परदिनेऽपराह्णे श्रवणाभावे तु सर्वप-

---

पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि॥"

इति निगमय्य [illegible] एकं पुष्पमीशान्याम् 'ॐ दुर्गायै नमः' इति निक्षिपेत्। *प्रवाहयेदिति। ततो गृहमागत्य ब्राह्मणैः शान्तिकलशोदकेनाभिषिक्तो यजमानो दुर्गापूजाप्रतिष्ठासिद्ध्यर्थं ब्राह्मणेभ्यो दक्षिणां दत्त्वा ब्राह्मणान् भोजयित्वा बन्धुभिः सह भुञ्जीतेति प्रयोगशेषो बोध्यः।

*सम्पूर्णैकादशी यदीति कर्मकाले दशम्यनादरार्थम्।

क्षेषु पूर्वैव । मदनरत्नेऽप्येवम् । ज्योतिर्निबन्धे रत्नकोशे च नारदः—

*'ईषत्संध्यामतिक्रान्तः किंचिदुद्भिन्नतारकः ।
विजयो नाम कालोऽयं सर्वकार्यार्थसिद्धिदः ॥
इषस्य दशमीं शुक्लां पूर्वविद्धां न कारयेत् ।
श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचने ॥
सूर्योदये यदा राजन्दृश्यते दशमी तिथिः ।
आश्विने मासि शुक्ले तु विजयां तां विदुर्बुधाः ॥'

*अत्रायं निर्गलितोऽर्थः—अपराह्णो मुख्यः कर्मकालः, तत्रैव पूजाद्युक्तेः । प्रदोषो गौणः । तत्र दिनद्वयेऽपराह्णव्यापित्वे पूर्वा । प्रदोषव्याप्तेराधिक्यात् । दिनद्वये प्रदोषव्यापित्वे परा । अपराह्णव्याप्तेराधिक्यात् । श्रवणस्तु (१)रोहिणीवदप्रयोजकः । दिनद्वयेऽपराह्णास्पर्शे तु पूर्वा । तत्रापि परादिनेऽपराह्णे श्रवणसत्त्वे परैवेति दिक् ।

---

इदानीं मतान्तरमवतारयितुं प्रदोषरूपं कालान्तरमाह—*ईषदिति । *अत्रायमिति । इदं पुनरिह विधातव्यम्—दशमी शमीपूजायां रात्रौ नक्षत्रोदयव्यापिनी, 'ईषत्संध्यामतिक्रान्तः' इति वचनात्

"आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकामार्थसिद्धये ॥"

इति चिन्तामणावुक्तेश्च । दिनद्वये तद्व्याप्तौ पूर्वैव । 'या पूर्णा नवमीयुक्ता' इति वचनात्

"दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नरः ।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् ॥"

---

(१) रोहिणीवदिति यथा जन्माष्टमीनिर्णये रोहिणी अप्रयोजिका तद्वदित्यर्थः ।

अत्र विशेषो भार्गवार्चनदीपिकायां भविष्ये

'शमीयुक्तं जगन्नाथं भक्तानामभयंकरम् ।
अर्चयित्वा शमीवृक्ष*मर्चयेच्च ततः पुनः ॥'

शमीमन्त्रस्तु हेमाद्रौ गोपथब्राह्मणे—

'अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।
दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥'

तथा भविष्ये—

'शमी शमयते पापं शमी लोहितकण्टका ।
धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥
करिष्यमाणयात्रायां यथाकालं सुखं मया ।
तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥
गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति ॥
ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह ॥' इति ।

---

इति एकादश्यां यात्रानिषेधाच्च । दिनद्वये तारकोदयकालालाभे एकादशे मुहूर्ते परदिने यात्रा कार्या ।

"आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु ।
सायंकाले शुभा यात्रा दिवा विजयलक्षणः ॥
एकादशो यो मुहूर्तो विजयः परिकीर्तितः ।
तस्मिन्सर्वैर्विधातव्या यात्रा विजयकाङ्क्षिभिः ॥"

इति भृगूक्तेः। परदिने एकादशमुहूर्तव्याप्त्यभावेऽपि श्रवणयोगश्चेत्तदैव यात्रा कार्या । 'श्रवणर्क्षे तु पूर्णायाम्' इति वाक्यादिति । तस्माद्ग्रन्थो मतान्तरपर इति दिक् ।

*अर्चयेदिति । शमी चैशानीगता ।

"शमीं सल्लक्षणोपेतामीशानाशामतिष्ठिताम् ।
संप्रार्थ्य तां च संपूज्य त्वीशानीं सुमुखो भवेत् ॥"

इति भविष्यात् । शमीरहितदेशे तु अश्मन्तकं पूजयेत् समाचारात् ।

"अश्मन्तक महावृक्ष महादोषनिवारण ।
इष्टानां दर्शनं देहि शत्रूणां च विनाशन ॥"

इति प्रार्थयेत् । राजा तु विजयकामो विजयमुहूर्ते प्रस्थानं कृत्वा अपराजितापूजां कुर्यात् । प्रस्थानं तु प्रास्थानिकविधिं कृत्वा कार्यम् । प्रास्थानिकविधिश्च गोपथब्राह्मणे विवाहमुद्दिश्योक्तः । स यथा—जन्येषु गमिष्यत्सु पार्थिवा वानस्पत्यदुन्दुभयःस्युः, वीणाश्चोपवादयेरन्, हृष्टाश्चालंकृताश्चारुवदनाः केशश्मश्रुलोमनखानि वापयित्वा सम्भारानुपकल्प्य मैत्रं मुहूर्तमुपसमाधाय शान्तिप्रतिसरं कारयित्वा वासो गन्धान् स्रजश्चाबध्य पुरःस्थातारं स्थापयित्वा कर्ताऽन्वालभ्य जुहोति—अभयैः, अपराजितैः, आयुष्यैः, स्वस्त्ययनैः, शर्मवर्मभिः, जनवेदनैश्च हुत्वा 'पार्थिवस्य' इति 'माद्रगाम' इति च हुत्वा 'आगच्छतागम्य' इतीन्द्रं स्थालीपाकेनेष्ट्वा 'आतिष्ठजिष्णुः' 'अनृक्षरा ऋजवः सन्तु पन्था' इति पन्थानमास्थाय जपेत् । इमौ पादौ "यत इन्द्र" "त्रातरमिन्द्र" "माविदन्नभयं" "सोमो बृहस्पतिर्नः परिपातु पश्चात्" इति त्रीन् विष्णुक्रमान् क्रान्त्वेति प्रस्थानम् । यथा—

"अलंकृतो भूषितभृत्यवर्गः परिष्कृतो तुङ्गतुरङ्गनागः ।
वादित्रनादप्रतिनादिताशः सुमङ्गलाचारपरम्पराशीः ॥
राजा निर्गत्य भवनात्पुरोहितपुरोगमः ।
प्रास्थानिकविधिं कृत्वा प्रतिष्ठेत्पूर्वतो दिशि ॥
गत्वा नगरसीमान्तं वास्तुपूजां समारभेत् ।
संपूज्य चाऽथ दिक्पालान् पूजयेत्पथि देवताः ॥
मन्त्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम् ।
अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ॥
दुःस्वप्नशमनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ।
ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमान् क्रमेत् ॥

रिपोः प्रतिकृतिं कृत्वा ध्यात्वा च मनसा च तम् ।
शरेण स्वर्णपुङ्खेन विध्येद् हृदयमर्माणि ॥
दशाविजयमन्त्राश्च पाठितव्याः पुरोधसा ।
एवमेव विधिं कुर्याद्दक्षिणादिदिशास्वपि ॥
पूज्यान् द्विजांश्च सम्पूज्य सांवत्सरपुरोहितौ ।
गजवाजिपदातीनां प्रेक्षाकौतुकमाचरेत् ॥
जयमङ्गलशब्देन ततः स्वभवनं विशेत् ।
नीराज्यमानः पुण्याभिर्गणिकाभिः सुमङ्गलम् ॥
य एवं कुरुते राजा वर्षे वर्षे सुमङ्गलम् ।
आयुरारोग्यमैश्वर्यं विजयं च स गच्छति ॥
नाधयो व्याधयस्तस्य भवन्ति न पराजयः ।
श्रियं पुण्यमवाप्नोति विजयं च सदा भुवि ॥" इति ।

ततोऽपराजितां पूजयेत् । सा यथा—आश्विनशुक्लदशम्यां क्षेमसिद्ध्यर्थं यात्रायां विजयसिद्ध्यर्थं चाऽपराजितापूजामहं करिष्ये इति सङ्कल्प्य चन्दनादिना लिखिताऽष्टदलमध्ये 'अपराजितायै नमः' इत्यपराजितां तद्दक्षिणतः 'ॐक्रियाशक्त्यै नमः'इति जयां तद्वामतः 'ॐउमायै नमः' इति विजयां प्रतिष्ठाप्य ॐअपराजितायै ॐजयायै ॐविजयायै इत्यावाहनाद्युपचारैः सम्पूज्य प्रणम्य—

"चारुणा मुखपद्मेन विचित्रकनकोज्ज्वला ।
जयादेवी शिवे भक्त्या सर्वान्कामान्ददातु मे ॥
काञ्चनेन विचित्रेण केयूरेण विभूषिता ।
जयप्रदा महाभागा शिवभावितचेतसा ॥
विजया च महाभागा ददातु विजयं मम ।
हारेण सुविचित्रेण भास्वत्कनकमेखला ॥
अपराजिता रुद्ररता करोतु विजयं मम ॥"

इति प्रार्थ्य हरिद्रारक्तवस्त्रे दूर्वायुक्तसिद्धार्थान् प्रदक्षिणं वलयाकारेणाऽऽबध्य—

अत्रैव बलिनीराजनमुक्तं कृत्यरत्ने। तत्र मन्त्रः—

'चतुरङ्गबलं मह्यं निरारित्वं व्रजात्विह।

सर्वत्र विजयो मेऽस्तु त्वत्प्रसादात्सुरेश्वरि॥' इति।

गौडनिबन्धे ज्योतिषे—

'कृत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमम्।

शोभनं *खञ्जनं पश्येज्जलगोगोष्ठसंनिधौ॥'

---

"सदाऽपराजिते यस्मात्त्वं लतासूषमा स्मृता।

सर्वकामार्थसिद्ध्यर्थं-तस्मात्त्वां धारयाम्यहम्॥

भवापराजिता देवी मम सर्वसमृद्धये।

पूजितायां त्वयि श्रेयो ममास्तु दुरितं हतम्॥"

इति तद्वलयमभिमन्त्र्य—

"जयदे वरदे देवि दशम्यामपराजिते।

धारयामि भुजे दक्षे जयलाभाभिवृद्धये॥

बलमाधेहि मयि च मम शत्रौ पराजयम्।

त्वद्धारणाद्भवेयुर्मे धनधान्यसमृद्धयः॥"

इति मन्त्रेण दक्षिणबाहौ धृत्वा—

"इमां पूजां मया देवि यथाशक्त्या निवेदिताम्।

रक्षार्थन्तु समादाय व्रज स्वस्थानमुत्तमम्॥"

इति विसर्जयेत्। सर्वे च जनास्तस्यामपराण्हे ग्रामसीमामुल्लङ्घ्य अपराजितां पूजयेयुः। तदुक्तं ग्रन्थ एव 'दशम्यां च जनैः सम्यक्' इत्यादि। *खञ्जनमिति। तत्र मन्त्रास्थिततत्त्वे—

"नीलग्रीव शुभग्रीव सर्वकामफलप्रद।

पृथिव्यामवतीर्णोऽसि खञ्जरीट नमोऽस्तु ते॥"

वसन्तराजे—

त्वं योगयुक्तो मुनिपुत्रकस्त्वं संदृश्यतामेषि शिखोद्गमेन।

संदृश्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्य नमो नमस्ते॥"

*अस्य फलानि शुभाशुभदेशाश्च तत्रैव ज्ञेयाः ।
आश्विनपौर्णमासी*परा ग्राह्या ।

'सावित्रीव्रतमन्तरेण भवतोऽमापौर्णमास्यौ परे' ।

इति दीपिकोक्तेः । अत्र विशेषस्तिथितत्त्वे लैङ्गे—

'आश्विने पौर्णमास्यां तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्या लोकैर्विभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् ।
सुगन्धिर्निशि सद्वेष*अक्षैर्जागरणं चरेत् ॥'

---

*अस्येति । तद्दर्शनफलं तिथितत्त्वे—

"अब्जेषु गोषु गजवाजिमहोरगेषु
राज्यप्रदः, कुशलदः शुचिशाद्वलेषु ।
भस्मास्थिकेशनखलोमतुषेषु दृष्टो
दुःखं ददाति बहुशः खलु खञ्जरीटः ॥"

किं च—

"वित्तं ब्रह्मणि, कार्यसिद्धिरतुला शक्रे, हुताशे भयं,
याम्यामाग्निभयं सुरद्विषि कलेर्लाभः समुद्रालये ।
वायव्यां वरवस्त्रगन्धसलिलं, दिव्याङ्गना चोत्तरे
ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने ॥"

*परेति । कोजागरव्रते पूर्णिमा प्रदोषनिशीथोभयव्यापिनी । यदा पूर्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्याप्तिस्तदा परेद्युः कार्या पूजारूपप्रधानकालव्याप्तिसत्त्वात् । यदा पूर्वेद्युर्निशीथव्याप्तिः परेद्युश्च न प्रदोषव्याप्तिस्तदा पूर्वा ।

'नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते' ।

इति वचनात् । अन्ये तु 'निशीथे' इत्युक्तेः पूर्वदिन एव निशीथव्याप्तौ पूर्वा, उत्तरेद्युरेव दिनद्वये वा निशीथव्याप्तौ निशीथाऽस्पर्शे चोत्तरेत्याहुः । *अक्षैरिति ।

तथा—

'निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी ।
तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः ॥' इति॥

अत्रैवाश्वयुजीकर्मोक्तमाश्वलायनेन—'आश्वयुज्यामाश्वयुजीकर्म' इति, तच्छेषपर्वणि कार्यम् । विकृतित्वात् । तत्र*पूर्वाह्णव्यापिनी ग्राह्या । दैवकर्मत्वात् । आग्रयणं तु पर्वणि कार्यम् ।

"नारिकेलोदकं पीत्वा अक्षैः क्रीडां समारभेत् ।
नारिकेलैश्च पिटकैः पितॄन्देवान्समर्चयेत् ॥
बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत् ॥"

इति च द्रष्टव्यम् । अत्र नारिकेलोदकपानमप्युक्तं, तच्च निन्द्यम् ।

"पात्रान्तरगतं यत्तु नारिकेलाम्बुसेवनम् ।
तालाहिंतालमधुकफलानां रसमेव च ॥
खरोष्ट्रमानुषं क्षीरं सुरापानसमानि वै ॥"

इति हारीतस्मृतौ षष्ठाध्याये आकरे तत्पाने प्रायश्चित्तोक्तेः । यद्यपि निषेधो रागप्राप्तनारिकेरोदकपानपरस्तथापि निशि अक्षद्यूतजागरणं लक्ष्म्यादिपूजनं च प्रधानम् । नारिकेलपिटकभोजनादिनारिकेलोदकपानं चाङ्गम् । तथा च येषां तत्पानेऽधिकारस्तैरेवेदृशं व्रतं कार्यं नान्यैः । अत एव 'उद्यानिका शिवपत्रिका' इति श्लोके जागरव्रते विहितप्रतिषिद्धत्वाद्विकल्प इत्युक्तम् । स च विकल्पो व्यवस्थित एवेत्यभिप्रेत्य ग्रन्थे नारिकेलोदकपानस्मरणं नोल्लिखितम् । अस्यां च पौर्णमास्यां दीपदानारम्भः ।

"लक्षं तदर्धमयुतं सहस्रं शतमेव वा ।
घृतेन दीपयेद्दीपांस्तिलतैलेन वा पुनः ॥"

इति वाक्यात् । *पूर्वाह्णेति । 'शेषपर्वणि कार्यं विकृतित्वात्' इति पाठो नारायणवृत्तिसम्मतः । आश्वयुजीकर्मणाऽऽग्रयणस्य

*'शारद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते ।'

इति शौनकोक्तेः । तत्रापि *शेषपर्वणि कार्यमिति प्रागुक्तम् । *तच्च-'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव यजेत व्रीहिभ्यः' इति श्रुत्या दर्शपूर्णमासयोरेककर्मत्वेनैकद्रव्यनियमाद्दर्शेष्ट्याः परं पौर्णमासेष्ट्याश्च प्राग्भवतीति हेमाद्र्यादयः ।

'दर्शेष्ट्याः परमुक्तमाग्रयणकं प्राक्पौर्णमासाच्च तत् ।'

इति दीपिकोक्तेश्च । तच्चाग्रयणं त्रेधा । व्रीह्याग्रयणं यवाग्रयणं श्यामाकाग्रयणं चेति । एषां कालः श्रुतौ—

---

समानाङ्गतन्त्रतायास्तत्संमतत्वात् । अन्ये तु एवं सत्यङ्गभूतक्रमलोपेऽङ्गिनोऽपि वैगुण्यापत्तेराग्रयणस्य कालान्तरसम्भवेन तदङ्गीकारस्यानुचितत्वात् पर्वान्तरे शुक्लपक्षे देवनक्षत्रे वा तत्कार्यमित्याहुः । तत्तु वृत्तिकारानुयायिभिर्हेयमेव । *शारदीति । केवलस्मार्ताग्निमतां बह्वृचानामाश्विनपौर्णमास्यामेवाग्रयणं नान्यदेत्यर्थः । शारदीति आश्वयुजकार्तिकयोः पौर्णमास्याममावास्यायां वा शुक्लपक्षरेवत्यां वेति सागरे । *शेषपर्वणीति । अपराह्णसन्धौ तद्दिन एव पूर्वाह्णसन्धौ तु तद्दिन एव शेषपर्व परन्तु क[illegible] तस्याग इति स्फुटमग्रे । इदानीं [illegible] [illegible]भिन्नानां च [illegible] *तच्चेति । ननु विकृत्यन्तरवदाग्रयणस्य आवर्तनात्प्राक् सन्धौ [illegible] तदुत्तरसन्धौ च प्रकृतिपूर्वत्वं कुतो न स्यात् । "यस्मिन्काले अमावास्या सम्पद्यते तदिष्ट्वा एतया यजेत यदि पौर्णमासी स्यादेतया इष्ट्वा अथ पौर्णमासेन" इति श्रुतिविरोधात् । यदि च पौर्णमास्यामेवाग्रयणं क्रियते तदा एतत्[illegible]ग्रयणं ततः सद्यस्काला प्रकृतिरिति केचित् । यदि तु एतद्दर्शपौर्णमासाभ्यां समानतन्त्रं कुरुते "अपि वा पौर्णमासे अमावास्ये वा हविषि अनु-

'गृहमेधी व्रीहियवाभ्यां*शरद्व*सन्तयोर्यजेत श्यामाकैर्नीवारैर्वा*वर्षास्वापत्कालेनान्येन पुराणैर्वा' इति । आपस्तम्बोऽपि—'वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवै*र्यथर्तु वेणुयवैः' इति । तत्रापि श्यामाका-

---

वर्त्तयेत् देवतानां स्वस्वनामपरिहाणाय'' इति श्रुतेः, तदाग्रयणह-विःषु प्राकृतहविरुत्तरकालत्वमेव पशुपुरोडाशकर[वद्?]प्रसङ्गित्वात् । प्राकृतस्यैव तन्त्रस्य भावादिति देवयाज्ञिकादयः । वस्तुतस्तु यदि 'वपया प्रचर्य पुरोडाशमनु निवर्तयेत्' 'जपमनु प्रावर्षत्'इतिवत् 'पौर्णमासेन प्रचर्याग्रयणहविषि निर्वपेत् पौर्णमासमनुनिर्वपेत्''इति षत्वाकर्मप्रवचनीयानुयोगानिमित्ताद्वितीयान्यस्माद्भि तदा तत्र पूर्व-श्रुतिबाधेनोत्तरकालत्वप्रत्ययः । तदेव तु न 'अनुवर्तयेत्' इत्येव श्रुतेः । अयं ह्यनुरुपसर्ग एव सङ्कल्पप्रभृत्यालम्भनादि सम्बन्धे ता-त्पर्यग्राहक एव 'सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयम्' इत्यादिव-त् । नन्वत्रापि 'अनु अन्ते वर्तनीयम्'इति एव कुतो नार्थः ? आदौ-मध्ये चानुवृत्तिदर्शनात् । अत एव श्रुतिहृदयज्ञेन सूत्रे तत्तत्प्र-मानतन्त्रा वा दर्शपूर्णमासाभ्यामिति तन्त्रपदमेवोक्तम् । यानि प्रकृतिसाधारणान्यनानि विहरणादीनि [illegible] । [illegible] प्रकृतेर्यथायथं भवति इति कौ-स्तुभकारादयः । *शरत् आश्विनकार्तिकौ, *वसन्तः चैत्रवै-शाखौ, *वर्षा श्रावणभाद्रपदौ । नन्वत्र '[illegible]' इति न्यायेन मासान्तरमपि ग्रहीतुं शक्यम् । शास्त्रान्तरे [illegible] तत्तन्मासग्र-हणात् । *यथर्त्तु वेणुयवैरिति । कात्यायनेन तु वैणवो ग्रीष्म इति वेणुयवाग्रयणे ग्रीष्म एवोक्तः । एषां चाग्रयणानां [illegible]-गः । 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव यजेत व्रीहिभ्यः' इति श्रुतेः । दर्शपूर्णमासयोरेककर्मत्वेन द्रव्यैक्य-नियमात् । परिशिष्टेऽपि—

ज्य—' इति सूत्रे स्पष्टमुक्तम् । तस्या*करणे प्रायश्चित्त-
मुक्तं स्मृतिचन्द्रिकायां कात्यायनेन—

'नित्ययज्ञात्यये चैव वैश्वदेवद्वयस्य च ।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ॥
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ॥'

कारिकाऽपि—

'अकृताग्रयणोऽश्नीयान्नवान्नं यदि वै नरः ।
वैश्वानराय कर्तव्यश्चरुः पूर्णाहुतिस्तु वा ॥' इति ।

ऋग्विधाने तु—

(१)समिन्द्ररायामन्त्रं च वर्षे वर्षे जपेच्छतम् ।
आग्रयणं यदा न्यूनं तदा संपूर्णमेति तत् ॥'

इत्युक्तम् । एतच्चापादि मलमासे कार्यमन्यथा नेति प्रा-
गुक्तम् । अन्योऽप्याहिताग्न्यादि*विशेषः शौनकादेर्ज्ञेय
इत्यलं बहुना ।

इति कमलाकरभट्टकृते निर्णयसिन्धौ आश्विनमासः ॥

इत्यादि । *अकरणे इति । गौणकालेऽपीत्यादिः ।
*विशेषः आहिताग्निविशेषः । आहिताग्न्यादेराग्रयणप्रयोगकर्तृकः
इत्याश्विनः ।

---

(१)अयं मन्त्रो यथा—"समिन्द्र राया समिषा रभेमहि सं वाजे-
भिः पुरुश्चन्द्रैरभिद्युभिः । सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाऽश्वा
वत्या रभेमहि ॥" इति । ऋ० अ० २ अ० १ । अस्यार्थः—'हे इन्द्र, राया
धनेन वयं संरभेमहि संगच्छेमहि । तथा इषा अन्नेन संरभेमहि । तथा
वाजेभिर्बलैः संरभेमहि । कीदृशैर्वाजैः ? पुरुश्चन्द्रैः पुरूणां बहूनामाह्लाद-
कैः अभिद्युभिः अभितो दीप्यमानैः । किंच देव्या द्योतमानया प्रमत्या
त्वदीयया प्रकृष्टबुद्ध्या संरभेमहि । कीदृश्या ? वीरशुष्मया वीरं विशेषेण
शत्रूणां क्षेपणसमर्थं शुष्मं बलं यस्याः सा तथोक्ता (तया) गोअग्रया
स्तोतृभ्यो दानार्थमग्रे प्रमुखत एव गावो यस्याः सा तथोक्ता (तया)
अश्वावत्या अश्वैरुपेतया ।' इति ।

## अथ कार्तिकमासः

तुलासंक्रमे प्रागपरा दश घटिकाः पुण्याः । रात्रौ तु प्रागुक्तम् ।

अथ कार्तिकस्नानम् । तत्र पृथ्वीचन्द्रोदये विष्णुस्मृतिपाद्मयोः—

'तुलामकरमेषेषु प्रातःस्नानं विधीयते ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥'

इति सौरमास उक्तः । प्राच्याश्चैतदेवाद्रियन्ते । दाक्षिणात्यास्तु—

'आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।
कार्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीः ॥'

इति पाद्मोक्तेः । भार्गवार्चने च—

'प्रारभ्यैकादशीं शुक्लामाश्विनस्य तु मानवः ।
प्रातःस्नानं प्रकुर्वीत यावत्कार्तिकभास्करः ॥'

इति विष्णुरहस्योक्तेः । हेमाद्रावादित्यपुराणे—

'पूर्णे आश्वयुजे मासि पौर्णमास्यां समाहितः ।'

इत्युक्त्वा—

'मासं समग्रं परया च भक्त्या
समाप्यते कार्तिकपौर्णमास्याम् ।'

इत्यन्तेऽभिधानाच्चाश्विनशुक्लैकादश्यां पौर्णमास्यां वाऽऽरभ्य कार्तिकशुक्लद्वादश्यां पौर्णमास्यां वा समापयेदित्याहुः । मदनपारिजाते विष्णुः—

*'कार्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।

---

[illegible] । तानि दर्शयति—*कार्तिकमित्यादिना ।

*जपन्हविष्यभुक् शान्तः सर्वपापैः प्रमुच्यते ॥'

अत्र देशविशेषः पाद्मे कार्तिकीं प्रक्रम्य—

'कुरुक्षेत्रे कोटिगुणो गङ्गायामपि तत्समः ।
ततोऽधिकः पुष्करे स्याद्द्वारवत्यां च भार्गव ॥
पुण्याः पुर्यश्च सप्तैवं मुनयो मथुराऽधिका ।
दुलभः कार्तिको विप्रा मथुरायां नृणामिह ॥
यत्रार्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छति ॥' इति ।

इदं च स्नानं काशिस्थपञ्चनदेऽप्यतिप्रशस्तम् ।

'शतं समास्तपस्तप्त्वा कृते यत्प्राप्यते फलम् ।
तत्कार्तिके पञ्चनदे सकृत्स्नानेन लभ्यते ॥
कार्तिके*बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः ।
स्नास्यत्यनुदिते भानौ भानुजात्तस्य भीः कुतः ॥'

इत्यादिकाशीखण्डोक्तेः । भानुजो यमः ।

इदं च प्रातःस्नानं संध्यां च कृत्वा कार्यम् । तेन विनेतरकर्मानधिकारादिति वर्धमानः । यद्यपि प्रातःसंध्यायाः सूर्योदये समाप्तिः, तथापि वचनबला(१)दनुदितहोमवद्भविष्यति । स्नानमन्त्रश्च तत्रैव—

'कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ।
प्रीत्यर्थं तव देवेश दामोदर मया सह ॥'

---

*जपन्निति । जपश्चेष्टदेवतामन्त्रस्य गायत्र्या वा । सम्पूर्णस्नानाशक्तौ ब्राह्मे कार्तिकाधिकारे—

''एकादश्यादिषु तथा तत्र पञ्चसु रात्रिषु ।
दिने दिने च स्नातव्यं शीतलासु नदीषु च ॥
वर्जयित्वा तथा हिंसां मांसभक्षणमेव च ॥'' इति ।

*बिन्दुतीर्थे बिन्दुमाधवतीर्थे ।

---

(१) यथा 'अनुदिते जुहोति' इति उदयात्पूर्वं होमः प्राप्नोति तद्वत् ।

इमं मन्त्रं समुच्चार्य मौनी स्नायाद्व्रती नरः ॥' इति ।
अर्घ्यमन्त्रोऽपि तत्रैव-

व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम ।
गृहाणार्घ्यं मया दत्तं दनुजेन्द्रनिषूदन ॥
*नित्यनैमित्तिके कृष्ण कार्तिके पापनाशने ।
गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥
इमौ मन्त्रौ समुच्चार्य योऽर्घ्यं मह्यं प्रयच्छति ।
सुवर्णरत्नपुष्पाम्बुपूर्णशङ्खेन पुण्यवान् ॥
सुवर्णपूर्णा पृथिवी तेन दत्ता न संशयः ॥' इति ।

एवं संपूर्णस्नानाशक्तौ त्र्यहं स्नायात् ।

'वाराणस्यां पञ्चनदे त्र्यहं स्नातास्तु कार्तिके ।
अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः ॥'

इति काशीखण्डोक्तेः ।

अथ मालाधारणम् । तत्र स्कान्दे द्वारकामाहात्म्ये-

'निवेद्य केशवे मालां तुलसीकाष्ठसंभवाम् ।
वहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ॥
न जह्यात्तुलसीमालां धात्रीमालां विशेषतः ।
महापातकसंहर्त्रीं धर्मकामार्थदायिनीम् ॥'

विष्णुधर्मे-

'कण्ठस्थानि यानि लोमानि धात्रीमाला कलौ नृणाम् ।
तावद्वर्षसहस्राणि वैकुण्ठे वसतिर्भवेत् ॥
मालायुग्मं तु यो नित्यं धात्रीतुलसिसंभवम् ।
वहते कण्ठदेशे तु कल्पकोटिर्दिवं वसेत् ॥

---

*नित्यनैमित्तिके इति।स्नाने नैमित्तिके इति वा पाठः ।
कार्तिकस्नानं च प्रातःस्नानसन्ध्यावन्दनादि कृत्वा कार्यं तेन [illegible] । न च प्रातःसन्ध्यायाः सूर्योदयानन्तरं

तुलसीकाष्ठसंभूते माले कृष्णजनप्रिये ।
बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभम् ॥
एवं संप्रार्थ्य विधिवन्मालां कृष्णगलेऽर्पिताम् ।
धारयेत्कार्तिके यो वै स गच्छेद्वैष्णवं पदम् ॥' इति ।
*अत्र मूलं चिन्त्यम् । तथा काशीखण्डे—
'कार्तिके मासि मे यात्रा यैः कृता भक्तितत्परैः ।
बिन्दुतीर्थकृतस्नानैस्तेषां मुक्तिर्न दूरतः ॥'
भार्गवार्चनदीपिकायां नृसिंहपुराणे—
'अगस्तिकुसुमैर्देवं योऽर्चयेच्च जनार्दनम् ।
दर्शनात्तस्य देवर्षेर्नरकं नाश्नुते नरः ॥
विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् ।
कार्तिके योऽर्चयेद्भक्त्या वाजपेयफलं लभेत् ॥'
स्कान्दे कार्तिकमाहात्म्ये—
'मालतीमालया विष्णुः केतक्या चैव पूजितः ।

---

समाप्त्या 'स्नास्यत्यनुदिते भानौ' इत्यनेन विरोध इति वाच्यम् । वचनबलादनुदितहोमवदुदयात्प्रागेव सन्ध्यासमाप्तेरुपगमात् । वस्तुतस्तु प्रातःस्नानं कृत्वा प्रातःसन्ध्यातः पूर्वमेव कार्तिकस्नानं कार्यम् । अनुदिते भानौ विहितस्य तस्य प्रातःसंध्योत्तरमनुष्ठानानुपपत्तेः । तस्या उदयोत्तरं समाप्यमानत्वात् । होमस्य तु श्रौतत्वेन युक्तं स्मार्तसन्ध्यासंकोचकत्वं न तु कार्तिकस्नानस्य, स्मार्तत्वाविशेषात् । न च तन्मध्ये कार्यं 'न कर्माणि कर्मारम्भः' इति निषेधात् सन्ध्यामध्ये करणाभावेऽप्युपपत्तेश्चेति। तुलामकरेष्विति प्रातःस्नानं त्वनुकल्पः । प्रत्यहं स्नानाशक्तौ सकृत्स्नानं कार्यम् । 'पञ्चनदे सकृत्स्नानेन लभ्यते' इत्युक्तेः । *अत्र मूलं चिन्त्यमिति संप्रदायानुसारेण वैष्णवैरेव तुलसीकाष्ठमाला धात्रीकाष्ठमाला च धार्या न सर्वैरित्यत्र तात्पर्यम् ।

समाः सहस्रं सुप्रीतो भवेत्तु मधुसूदनः ॥'

पृथ्वीचन्द्रोदये पाद्मे—

'कार्त्तिके नार्चितो यैस्तु कमलैः कमलेक्षणः ।
जन्मकोटिषु विप्रेन्द्र न तेषां कमला गृहे ॥'

तथा—

'कार्त्तिके केशवे पूजा येषां नाम्ना सुतैः कृता ।
ते निर्भर्त्स्य रवेः पुत्रं वसन्ति त्रिदिवे सदा ॥
तुलसीदललक्षेण कार्त्तिके योऽर्चयेद्धरिम् ।
पत्रे पत्रे मुनिश्रेष्ठ मौक्तिकं लभते फलम् ॥'

तथा स्कान्दे कार्त्तिकमाहात्म्ये—

'धात्रीच्छाये तु यः कुर्यात्पिण्डदानं महामुने ।
मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य तु ॥
धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः ।
*धात्रीफलकृताहारो नरो नारायणो भवेत् ॥
धात्रीच्छायां समाश्रित्य योऽर्चयेच्चक्रधारिणम् ।
पुष्पे पुष्पेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥'

तथा स्कान्दे—

'कार्त्तिके मासि विप्रेन्द्र धात्रीवृक्षोपशोभिते ।
वने दामोदरं विष्णुं चित्रान्नैस्तोषयेद्विभुम् ॥

---

"श्रुतयो विभिन्नाः स्मृतयो विभिन्ना
नानार्षीणां च मतं विभिन्नम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥"

इति माधवोक्तेः । समूलत्वेत्यादिग्रन्थस्तु केनाचिदुत्तानेन प्रक्षिप्तो न तु प्राचीनपुस्तके दृश्यते । *धात्रीफलकृताहारः जीर्णधात्रीफलविषयः, चातुर्मास्ये नूतनस्य वर्जितत्वात् ।

मूलेन पायसेनाथ होमं कुर्याद्विचक्षणः ।
ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुञ्जीत बन्धुभिः ॥' इति ।

तथा कार्तिके द्विदलवर्जनं प्रागुक्तम्-'कार्तिके द्विदलं त्यजेत्' इति । पाद्मेऽपि कार्तिकमाहात्म्ये—

'राजिकामाढकं चैव नैवाद्यात्कार्तिकव्रती ।
द्विदलं तिलतैलं च तथान्यन्मतिदूषितम् ॥'

स्कान्देऽपि-

'कार्तिके वर्जयेत्तद्वद् द्विदलं बहुबीजकम् ।
माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः ॥
निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् ।
नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् ॥'

अत्र केचिदुत्पत्तिसमये दलद्वयं यस्य भवति तद् भूतपूर्वगत्या द्विदलमित्युच्यत इत्याहुः । उदाहरन्ति च-

'बीजमेव समुद्भूतं द्विदलं चाङ्कुरं विना ।
दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यते ॥' इति ।

अन्ये तु लक्षणायां मानाभावाद्वचनस्य निर्मूलत्वाद् द्विदलात्मकं यस्य स्वरूपं तदेव वर्जयेदित्याहुः । तथा नारदीये-

'कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु ।
कार्तिके वर्जयेत्कांस्यं कार्तिके शुक्तसंधितम् ॥'

कांस्यं तत्पात्रभोजनम्, शुक्तं (१)पर्युषितं, संधितं लवणशाकः । तत्रैव रामः—

---

(१) एतद्व्याख्यानमयुक्तमिति भाति । 'अरण्यानां च सर्वेषां मृगाणां माहिषं विना । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥' इति मनुवचनव्याख्यानावसरे 'स्वभावतो मधुरादिरसानि यानि कालवशेनोदकादिना चाम्लीभवन्ति तानि शुक्तशब्दवाच्यानि' इति मन्वर्थमुक्तावल्यामुक्तत्वात् 'शुक्तं पर्युषितं चैव' इत्यत्र मनुस्मृतिवचने च पर्युषितशब्दस्य पृथग्ग्रहणाच्च ।

'कार्तिके विष्णुमूर्त्यग्रे दीपदानाद्दिवं व्रजेत् ॥'

तथा—

'कार्तिके तु कृता दीक्षा नृणां जन्मविमोचनी ॥'

तथा—

'कार्तिके*कृच्छ्रसेवी यः प्राजापत्यपरोऽथवा।
एकान्तरोपवासी वा त्रिरात्रोपोषितोऽपि वा ॥

---

*कृच्छ्रसेवीति। तप्तकृच्छ्रातिकृच्छ्रकृच्छ्रातिकृच्छ्रान्यतमसेवीत्यर्थः। पञ्चेति षट् चेति वा पाठः। उपोषित इत्यस्य सम्बन्धः। यथा च द्वादश्यां पारणा संपद्यते तथा त्रिरात्रादि कार्यम्। पञ्चेत्यादावेकभक्ताद्यभावेऽपि तत्पारणा द्वादश्यामेव मासोपवासव्रतपारणाया द्वादश्यामेव सत्त्वेन तत्समभिव्याहारात्। तद्वदेव कृच्छ्राद्यारम्भोऽप्याश्विनशुक्लैकादश्यामेव, तस्यामेव सर्वकार्तिकव्रतारम्भाच्च। काशीखण्डेऽपि—

"कृच्छ्रं वाऽप्यतिकृच्छ्रं वा प्राजापत्यमथाऽपि वा।
संप्राप्ते कार्तिके मासि कुर्याच्छक्त्याऽतिपुण्यवान् ॥
एकान्तरं व्रतं कुर्यात्त्रिरात्रव्रतमेव वा।
पञ्चरात्रं सप्तरात्रं सम्प्राप्ते कार्तिके व्रती ॥
पक्षव्रतं वा कुर्वीत मासोपोषणमेव वा।
शाकाहारं पयोहारं फलाहारमथापि वा ॥
ब्रह्मचर्यं चरेदूर्जे महाव्रतफलाप्तये।
पत्रभोजी भवेदूर्जे कांस्यं त्याज्यं प्रयत्नतः ॥
कांसस्य नियमे दद्यात्कांस्यं सर्पिःप्रपूरितम् ॥"

अत्र कृच्छ्रादीनि शक्त्या व्रतान्यन्यान्यानि वा बोध्यानि। मासोपवासव्रतं यथा विष्णुरहस्ये। "नारद उवाच—

भगवन् श्रोतुमिच्छामि व्रतानामुत्तमस्य च।
मासोपवासस्य फलं विधिं चास्य यथोदितम् ॥

षड् वा द्वादश पक्षं वा मासं वा वरवर्णिनि ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन भैक्षेण व्रजते परमं पदम् ॥'

यथाविधा नरैः कार्या व्रतचर्या यथा भवेत् ।
आरभ्यते यथा पूर्वं समाप्यं हि यथाविधि ॥
यावत्संख्यं हि कर्तव्यं तावद् ब्रूहि पितामह ।

ब्रह्मोवाच—

साधु नारद यच्चैतत्पृष्टं वर तपोधन ॥
यादृङ् मतिमतां श्रेष्ठ तच्छृणुष्व ब्रवीमि ते ।
सुराणां च यथा विष्णुस्तपतां च यथा रविः ॥
मेरुः शिखरिणां यद्वद्वैनतेयश्च पक्षिणाम् ।
तीर्थानां च यथा गङ्गा प्रजानान्तु यथा वणिक् ॥
श्रेष्ठं सर्वव्रतानान्तु तद्वन्मासोपवासकम् ।
सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु तेन तु॥
सर्वदानोद्भवं चापि लभेन्मासोपवासकृत् ।
अग्निष्टोमादिभिर्यज्ञैर्विविधैर्भूरिदक्षिणैः ॥
न तत्पुण्यमवाप्नोति यन्मासपरिलङ्घनात् ।
तेन जप्तं हुतं दत्तं तपस्तप्तं कृतं स्वधा ॥
यः करोति विधानेन नरो मासमुपोषणम् ।
प्रविश्य वैष्णवं यज्ञं तेनाभ्यर्च्य जनार्दनम् ॥
गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासनम् ।
वैष्णवानि यथोक्तानि कृत्वा सर्वव्रतानि तु ॥
द्वादश्यादीनि पुण्यानि ततो मासमुपावसेत् ।
अतिकृच्छ्रं पराकं च कृत्वा चान्द्रायणं ततः ॥
मासोपवासं कुर्वीत ज्ञात्वा देहबलाबलम् ।
वानप्रस्थो यतिर्वाऽपि नारी वा विधवा मुने ॥

अन्येऽपि नियमाः प्रागुक्ताः ।

ग्राह्यमुक्तं स्कान्दे—

'व्रीहयो यवगोधूमाः प्रियङ्गुतिलशालयः ।
एते हि सात्त्विकाः प्रोक्ताः स्वर्गमोक्षफलप्रदाः ॥'

---

मासोपवासं कुर्वीत गुरुविप्राज्ञया ततः ।
आश्विनस्यामले पक्षे एकादश्यामुपोषितः ॥
व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ।
वासुदेवं समभ्यर्च्य कार्तिकं लङ्घयेन्नरः ॥
मासं चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् ।
अच्युतस्यालये भक्त्या त्रिकालं कुसुमैः शुभैः ।
मालामिन्दीवरैः पद्मैः कुसुमैस्तु सुगन्धिभिः ॥
कुङ्कुमोशीरकर्पूरैर्विलिप्य वरचन्दनैः ।
नैवेद्यं धूपदीपाद्यैरर्चयेत जनार्दनम् ॥
मनसा कर्मणा वाचा पूजयेद्गरुडध्वजम् ।
कुर्यान्नरस्त्रिषवणं बृहद्भक्तिर्जितेन्द्रियः ॥
नाम्नामेव तथाऽऽलापं विष्णोःकुर्यादहर्निशम् ।
भक्त्या विष्णोः स्तुतिं वाऽपि मृषा वादं विवर्जयेत् ॥
सर्वसत्त्वदयायुक्तः शान्तवृत्तिरहिंसकः ।
सुप्तो वाऽऽसनसंस्थो वा वासुदेवं प्रकीर्तयेत् ॥
स्मृत्यालोकनगन्धादिस्वादनं परिकीर्तितम् ।
अन्नस्य वर्जयेत्सर्वं ग्रासानां चाधिकाङ्क्षणम् ॥
गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं सविलेपनम् ।
व्रतस्थो वर्जयेत्सर्वं यच्चान्यत्र निराकृतम् ॥
न व्रतस्थः स्पृशेत्किंचिद्विकर्मस्थान्न चालयेत् ।
देवतायतने तिष्ठन् गृहस्थश्चरेद् व्रतम् ॥

कृत्वा मासोपवासन्तु संयतात्मा जितेन्द्रियः ।
ततोऽर्चयीत वै पुण्यं द्वादश्यां गरुडध्वजम् ॥
पूजयेत्पुष्पमालाभिर्गन्धधूपविलेपनैः ।
वस्त्रालङ्कारवाद्यैश्च तोषयेदच्युतं नरः ॥
स्नापयीत हरिं भक्त्या तीर्थचन्दनवारिणा ।
चन्दनेनानुलिप्ताङ्गं पुष्पधूपैरलंकृतम् ॥
वस्त्रदानादिभिश्चैव भोजयीत द्विजोत्तमान् ॥
दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् ।
विप्रान्क्षमापयित्वा तु विसृज्याभ्यर्च्य पूज्य च ।
एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः ।
एवं मासोपवासं तु कृत्वा ऽभ्यर्च्य जनार्दनम् ।
भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते ॥
एवं मासोपवासान् हि सम्यक्कृत्वा त्रयोदश ।
निर्वापयेत्ततस्तान्वै विधिना येन तच्छृणु ॥
कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः ।
पूजयित्वा तु देवेशमाचार्यानुज्ञया हरिम् ॥
अर्चयित्वा हरिं भक्त्या अभिवाद्य गुरुं तथा ।
तथा ऽनुभोजयेद्विप्रान्भोजयित्वा यथाविधि ॥
विशुद्धकुलचारित्रान् विष्णुपूजनतत्परान् ।
पूजयित्वा द्विजान्सम्यक्भोजयित्वा त्रयोदश ॥
तावन्ति [illegible] [illegible] च ।
योगपट्टानि शुभ्राणि ब्रह्मसूत्राणि चैव हि ॥
दद्याच्चैव द्विजाग्रेभ्यः पूजयित्वा प्रणम्य च ।
ततोऽनुकल्पयेच्छय्यां श्रेष्ठास्तरणसंस्कृताम् ॥
साच्छादनां शुभां श्रेष्ठां [illegible] ।
कारयित्वात्मनो मूर्तिं काञ्चनीं तु स्वशक्तितः ॥

न्यसेत्तस्यान्तु शय्यायामर्चयित्वा स्रगादिभिः ।
आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ ॥
पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् ।
एवं शय्यां तु संकल्प्य प्रणिपत्य च तान् द्विजान् ॥
प्रार्थयेच्चानुमोदार्थं विष्णुलोकं व्रजाम्यहम् ।
एवमभ्यर्चिता विप्रा वदेयुर्व्रतिनं तदा ॥
व्रज व्रज नरश्रेष्ठ विष्णोः स्थानमनामयम् ।
विमानं वैष्णवं दिव्यं शय्यया परिकल्पितम् ।
तेन विष्णुपदं याहि सदानन्दमनामयम् ।
ततो विसर्जयेद्विप्रान् प्रणिपत्यानुगम्य च ॥
ततस्तु पूजयेद्भक्त्या गुरुं ज्ञानप्रदायकम् ।
तां शय्यां कल्पितां सम्यक् गुरुं ज्ञानप्रदायकम् ॥
प्रणम्य शिरसा शान्तो गुरवे प्रतिपादयेत् ।
कृत्वा मासोपवासन्तु नरो विष्णुतनुं विशेत् ॥
कुर्वन्मासोपवासन्तु विष्णुपूजनतत्परः ।
नयेच्छान्तमनाः कालं धर्मस्य प्रयतेन्द्रियः ॥
कृत्वा मासोपवासांश्च निर्वाप्य विधिवन्मुने ।
कुलानां शतमुद्धृत्य विष्णुलोकं व्रजेन्नरः ॥
यस्मिञ्जातो महापुण्ये कुले मासेऽथवा सकृत् ।
[illegible] विष्णुलोके महीयते ॥
नरो मासोपवासानां कर्त्ता पुण्यवतां वरः ।
पितृमातृकुलाभ्यां च समं विष्णुपुरीं व्रजेत् ॥
नारी तासु [illegible] यथोक्तव्रत[illegible] ।
कृत्वा मासोपवासांश्च [illegible] ।

नारद उवाच—

सुदुष्करमिदं देव मूर्च्छाग्लानिकरं नृणाम् ।
व्रतं मासोपवासाख्यं भक्तिं जनयदच्युते ।

पीडितस्य भृशं देव मुमूर्षोर्व्रतिनस्तथा ।
त्यागो वाऽनुग्रहो वा ऽथ किन्तु कार्यं पितामह ॥

ब्रह्मोवाच—

व्रतस्थं कर्षितं दृष्ट्वा मुमूर्षुं वा तपोधन ॥
दृष्ट्वा तु ब्राह्मणस्तस्य कुर्यात्सम्यगनुग्रहम् ।
अमृतं पाययेत्क्षीरमिच्छमाने सकृन्निशि ॥
यथेह न वियुज्येत प्राणैः क्षुत्पीडितो व्रती ।
अतिमूर्छान्वितं क्षीणं मुमूर्षुं क्षुत्प्रपीडितम् ॥
पाययित्वा शतं क्षीरं रक्षेद्दत्त्वा फलानि च ।
अहोरात्रं च यो नित्यं व्रतस्थं परिपालयेत् ।
पयोमूलफलं दत्त्वा विष्णुलोकं व्रजेत सः ॥
एवं मासोपवासस्थमारूढं प्राणसंशये ।
अव्रतघ्नगुणैर्दिव्यैः परीप्सेद् ब्राह्मणाज्ञया ।
नैते व्रतं विनिघ्नन्ति हविर्विप्रानुमोदितम् ।
क्षीरौषधे गुरोराज्ञा आपो मूलं फलानि च ।
एवं कृत्वाऽभिरक्षेत सगुडं पायसं तथा ।
पाययेद्रक्षितो यस्मात्समाप्नोति पुनर्व्रतम् ।
अथ विष्णुर्व्रतं विष्णुर्दाता विष्णुर्व्रती तथा ।
सर्वं विष्णुमयं ज्ञात्वा व्रतस्थं क्षीणमुद्धरेत् ।
यदा मुमूर्षुर्निश्चेष्टः परिम्लानोऽतिमूर्छितः ।
तदा समुद्धरेत्क्षीणमिच्छन्तं विमुखे स्थितम् ।
परिपाल्य व्रती देहं व्रतशेषं समापयेत् ।
यथोक्ताद्द्विगुणं तस्य फलं विप्रमुखोदितम् ॥
इन्द्रियार्थेष्वसंसक्ता सदैव विमला मतिः ।
परितोषयते विष्णुं नोपवासो जितात्मनाम् ॥
किं तस्य बहुभिस्तीक्ष्णैः स्नानहोमजपव्रतैः ।
यतेन्द्रियगणो घोरो निर्जितो [illegible] ॥

काशीखण्डे—

*'ऊर्जे यवान्नमश्नीयादेकान्नमथवा पुनः ।
वृन्ताकं सूरणं चैव शूकशिम्बीश्च वर्जयेत् ॥'

जितेन्द्रियः सदा शान्तः सर्वभूतहिते रतः ।
वासुदेवपरो नित्यमक्लेशं कर्तुमर्हति ।
कृत्वा व्रतं यथोक्तं तु वैष्णवं पुरुषो व्रतम् ।
विष्णुलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ।
ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ॥
ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयम् ।
प्रभाते चार्धरात्रे च मध्याह्ने दिनसंक्षये ।
अच्युतं येऽनुकीर्तन्ति ते तरन्ति भवार्णवम् ।
आनन्दितोऽथ दुःखार्त्तः क्रुद्धः शान्तोऽथवा हरिम् ।
यो ऽनुकीर्तयते भक्त्या स गच्छेद्वैष्णवीं पुरीम् ।
गर्भजन्मजरारोगदुःखसंसारबन्धनैः ।
निवार्यते नरो नित्यं वासुदेवमनुस्मरन् ॥
स्थावरे जङ्गमे चैव स्थले सूक्ष्मे शुभाशुभे ।
विष्णुं पश्यति सर्वत्र यः स विष्णुः स्वयं नरः ॥
सर्वविष्णुमयं ज्ञात्वा त्रैलोक्यं सचराचरम् ।
यस्य शान्ता मतिस्तेन पूजितो गरुडध्वजः ।
इति कल्पाऽनुकल्पानां व्रतानामुत्तमस्य च ।
स विष्णुलोकमाप्नोति प्रसादाच्चक्रपाणिनः ॥
विधिर्मासोपवासस्य यथा तत्परिकीर्तितः ॥
सूत स्नेहान्मुनिश्रेष्ठ सर्वलोकहिताय च ।
श्रुत्वा श्रुत्वा च यो भक्त्या नरो विष्णुपुरीं व्रजेत् ।
नाभक्ताय प्रदातव्यं न देयं दुष्टचेतसे ॥' इति ।

*शूकशिम्बीः कपिकच्छूः । नन्दिपुराणे—

"यो नरः कार्तिके मासि मांसन्तु परिवर्जयेत् ।

संवत्सरस्य लभते पुण्यं मांसाविवर्जनात् ।"

भारते—

'कार्तिके वर्जयेन्मांसं वर्जयेत्कार्तिके मधु ।'

काशीखण्डे—

"मधुत्यागे घृतं दद्यात्पायसं च सशर्करम् ।
कार्तिके मांसनियमे प्रदद्यात्कार्तिकव्रती ॥
कूष्माण्डानि समाषाणि दशस्वर्णयुतान्यपि" ।

ब्राह्मे—

"विष्णुवेश्मनि यो दद्यात्कार्तिके मासि दीपकम् ।
अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः ॥"

विष्णुइति उपलक्षणम् । शिवादेर्विप्रादेश्च वेश्मनोऽपि ग्रहणात् ।

"चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ।
दीपदानाद्धि सर्वत्र महाफलमवाप्नुयात् ।"

स्कान्दे—

प्रदीपमालां यः कुर्यात्कार्तिके मासि वै मम ।
अवसानेषु दीपानां ब्राह्मणान् भोजयेच्छुचिः ॥"

वाराहे—

"न गृहे कार्तिकं कुर्याद्विशेषेण तु कार्तिकीम् ।
तीर्थे तु कार्तिकं कुर्यात्सर्वयत्नेन भामिनि ।"

काशीखण्डे—

"कार्तिके मौनभोजी यः सोऽश्नात्यमृतमेव हि ।
स घण्टां सतिलां मौनी सहिरण्यां प्रदापयेत् ॥
कार्तिके लवणं त्यक्तं येन व्रतवता सता ।
त्यक्ताः सर्वे रसास्तेन तत्त्यागी गां प्रदापयेत् ॥
भूशय्यां कार्तिके कुर्वन् न भद्रं संस्पृशेद्व्रती ।
पर्यङ्कं सुस्थिरं दद्यात्सतूलं सोपधानकम् ॥"

(३८) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा–संस्कारप्रकाशात्मकः। सापिण्ड्यदीपकश्च१६॥)

(३९) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ... ... ... ९)

(४०) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ६)

(४१) वीरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः खण्डा ७ ... १०॥)

(४२) वीरमित्रोदयः। राजनीतिप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः... ... ७॥)

(४३) वीरमित्रोदयः। तीर्थप्रकाशः। महामहोपाध्याय श्रीमित्रमिश्रविरचितः खण्डा ६ ... ... ९)

(४४) वेदान्तसिद्धान्तसंग्रहः। श्रुतिसिद्धान्तापरनामकः। श्रीब्रह्मचारिवनमालिमिश्रविरचितः। वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता ... ... ४॥)

(४५) स्वानुभवादर्शः। श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः स्वकृतटीकाविभूषितश्च ... ... ... ... ३)

(४६) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता। व्यवहाराध्यायः ... १६॥)

(४७) गादाधरी। श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता। श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ख०१४ २१)

(४८) शास्त्रदीपिका। श्रीपार्थसारथिमिश्रप्रणीता। रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः ... ... ... ... ९)

(४९) वैयाकरणसिद्धान्तलघुमञ्जूषा म० म० श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाटीकाद्वयसंवलिता ख० ११ ११)

(५०) व्याकरणसिद्धान्तसुधानिधिः। पर्वतीय विश्वेश्वरसूरिविरचितः खण्डाः १२ ... ... १८)

(५१) [illegible] मिश्रविरचितः। महेश्वरतीर्थकृत [illegible] ख्याय टीकया समलंकृतः १५)

(५२) पूर्वमीमांसाधिकरणकौमुदी। श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता [illegible] गोपालशास्त्रि परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृता। ... ... ... १॥)

(५३) प्रशस्तपादभाष्यटीकासंग्रहः। तत्र कणादरहस्यम्। श्रीशंकरमिश्रविरचितम् ख० २ ... ३)

(५४) क्रमदीपिका। श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता। विद्याविनोदगोविन्दभट्टाचार्यकृतविवरणोपेता ... ... ... ... ४॥)

(५५) सांख्यसंग्रहः। तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम्। सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम्। समाससूत्रव्याख्या सर्वोपकारिणी। कपिलसूत्रसंक्षिप्तवृत्तिः। तत्त्वसमाससूत्रविवरणम्। तत्त्वसमाससूत्रवृत्तिः। सांख्यतत्त्वप्रदीपिका। [illegible]

च खण्डे २ ... ... ... ३)

(५६) न्यायपरिशुद्धिः। श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता। श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ख० ५ ... ... ७॥)

(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टकृत व्याख्यासहितः खण्डा १२ ... ... १२)

(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः। श्रीमदनन्तदेवविरचितया "भाट्टालङ्काराख्य" व्याख्ययासहिता २)

(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमिश्रविरचिता। पण्डितराड्—वंशीधरमिश्रविरचित "तत्त्वविभाकर" टीकासहिता खण्डे ९ ... ... ३॥)

(६०) न्यायदर्शनं सभाष्यसटीकं खद्योत सहितम्-खण्डे ६ ९)

(६१) साङ्ख्यकारिका ईश्वरकृष्णाविरचिता। माठराचार्यविरचिता—माठरवृत्तिसहिता। ... ... १॥)

(६२) पुष्पसूत्रं। सामप्रातिशाख्यं पुष्पर्षिप्रणीतम् श्रीमदजातशत्रुकृतभाष्यसहितम् ख० ३ ४॥)

## मुद्यमाणा ग्रन्थाः।

(६३) मीमांसाकौस्तुभः-श्रीखण्डदेवविरचितःखण्डाः ४ ६)

(६४) काव्यप्रकाशः श्रीभीमसेनविरचितया 'सुधासागर' टीकया विशद टिप्पणेन च सहितः। खण्डाः ४ ६)

(६५) प्रशस्तपादभाष्यटीकासंग्रहः (तत्र व्योमशिवाचार्यकृता व्योमवती—पद्मनाभमिश्रकृतः सेतुः—जगदीशभट्टाचार्यकृता-सूक्तिश्च)। खण्डाः ४ ... ६)

(६६) आत्मतत्त्वविवेकः उदयनाचार्यकृतः। शङ्करमिश्रविरचित कल्पलता व्याख्ययासमन्वित। खण्डाः ४ ६)

(६७) याज्ञवल्क्यस्मृतिः। श्रीमन्मित्रमिश्रविरचिता 'वीरमित्रोदया'ख्यटीकया च सहिता। खण्डाः ४ ६)

(६८) वीरमित्रोदयः। व्यवहारप्रकाशः। महामहोपाध्याय श्रीमन्मित्रमिश्रविरचितः। खण्डाः ४ ... ६)

(६९) श्रीमच्छङ्कराचार्यकृता-जयमङ्गलाख्या सांख्यकारिकायाष्टीका। खण्डः १ ... ... १॥)

(७०) न्यायचन्द्रिका। श्रीनारायणतीर्थ विरचिता—भाषापरिच्छेदव्याख्या। खण्डः १ ... ... १॥)

(७१) संस्कारगणपतिः। पण्डितवर श्रीरामकृष्ण विरचितः। खण्डाः ४ ... ... ... ६)

## अग्रे मुद्यमाणा ग्रन्थाः।

( १ ) अनुमानखण्डालोकः। महामहोपाध्याय श्रीजयदेवमिश्रविरचितः। ... ... ... ...

( २ ) वीरमित्रोदयः। समयप्रकाशः श्रीमन्मित्रमिश्रविरचितः।

( ३ ) वीरमित्रोदयः। शुद्धीप्रकाशः श्रीमन्मित्रमिश्रविरचितः।

( ४ ) अलङ्कारकौस्तुभः। श्रीकविकर्णपूर विरचितस्तेनैवकृतया टीकया च सहितः। ... ... ...

( ५ ) वादार्थसंग्रहः। ... ... ... ...

( ६ ) कालमाधवः। श्री'लक्ष्मी' अपरनामधेय बालम्भट्टी टीकया सहितः—

—:०:—

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

## NO. 307.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

[illegible]रिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं०
व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा
तदीयगुरुवर म० म० पं० [illegible]-
पन्तप्रदर्शितरीतिमनुसृत्य संशोधितो
टिप्पण्या परिष्कृतश्च ।

---

NIRNAYA SINDHU;
of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Vyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS VIII -८

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY.
OTTO HARRASSOWITZ, LEIPZIG: GERMANY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1924.

पृथ्वीचन्द्रोदये पाद्मे—

'नोर्जो वन्ध्यो विधातव्यो व्रतिना केनचित्क्वचित् ।'

तथा नारदीये—

'अव्रतेन क्षिपेद्यस्तु मासं दामोदरप्रियम् ।
तिर्यग्योनिमवाप्नोति नात्र कार्या विचारणा ॥'

अन्यान्यपि ताम्बूलतैलकेशकर्तनादिवर्जनसंकल्परूपाणि*प्रागुक्तानि ।

तथा कार्तिके आकाशदीप उक्तो निर्णयामृते पुष्करपुराणे —

'तुलायां तिलतैलेन सायंकाले समागते ।
आकाशदीपं यो दद्यान्मासमेकं हरिं प्रति ॥
महतीं श्रियमाप्नोति रूपसौभाग्यसंपदम् ॥' इति ।

तद्विधिश्च हेमाद्रावादित्यपुराणे—

'दिवाकरेऽस्ताचलमौलिभूते गृहाददूरे पुरुषप्रमाणम् ।
यूपाकृतिं यज्ञियवृक्षदारुमारोप्य भूमावथ तस्य मूर्ध्नि ॥
यवाङ्गुलच्छिद्रयुतास्तु मध्ये द्विहस्तदीर्घा अथ पट्टिकास्तु ।
कृत्वा चतस्रोऽष्टदलाकृतीस्तु याभिर्भवेदष्टदिशानुसारी ।
तत्कर्णिकायां तु महाप्रकाशो दीपः प्रदेयो दलगास्तथाष्टौ ।
निवेद्य धर्माय हराय भूम्यै दामोदरायाप्यथ धर्मराज ॥
प्रजापतिभ्यस्त्वथ सत्पितृभ्यः
प्रेतेभ्य एवाथ तमःस्थितेभ्यः ॥' इति ।

अपरार्के त्वन्यो मन्त्र उक्तः । यथा—

'दामोदराय नभसि तुलायां लोलया *सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥' इति ।

कार्तिककृष्णचतुर्थी करकचतुर्थी । सा चन्द्रोदयव्या-

---

*प्रागुक्तानीति । [illegible] चतुर्ष्वसम्भवे

पिनी ग्राह्या। *दिनद्वये तत्त्वे पूर्वा, तत्रैव पूजाद्याम्नानात्।

कार्तिककृष्णद्वादशी गोवत्ससंज्ञा। सा *प्रदोषव्यापिनी ग्राह्या। दिनद्वये तत्त्वे पूर्वा। युग्मवाक्यात्

'*वत्सपूजा वटश्चैव कर्तव्या प्रथमेऽहनि ॥"

इति निर्णयामृतेऽभिधानाच्च। अत्र विशेषो मदनरत्ने भविष्ये—

'सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीम्।
चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत् ॥
अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैः *स्तिलैः।

कार्तिके एव कार्याणि।

चतुर्ष्वपि च मासेषु न सामर्थ्यं व्रते यदि।
तदोर्जे व्रतिना भाव्यमप्यब्दफलमिच्छता ॥"

इति काशीखण्डात्। *-लोलयेति। 'ते मया' इति वा पाठः।
*दिनद्वये तत्त्वे पूर्वेति।

'नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते।'

इत्युक्तेः। 'सङ्कल्पकालमारभ्य संकल्पात्परा' इति केचित्। कार्तिककृष्णाष्टमी महाराष्ट्रादिप्रसिद्धा कराष्टमी। सा चन्द्रोदयव्यापिनी ग्राह्या, दिनद्वये तत्त्वे परा।

*प्रदोषेति।

'नरो वा यदि वा नारी नक्तं सङ्कल्प्य चेतसि।'

इत्युपक्रमे—

'माषान्नं कामतोऽश्नीयाद्रात्रौ विगतमत्सरः।'

इत्यन्ते च नक्तभोजनोक्तेः।

'प्रतीक्षेतागमं भक्त्या गवां गोध्यानतत्परः।'

इति गोष्ठागतासु सन्ध्यायां गोपूजाविधानाच्च। *वत्सपूजेति। 'वत्सस्यपूजाशिवरात्रिरेताः परान्विता घ्नन्ति सराष्ट्रम्' इति निषेधोऽपि बोध्यः। *तिलैरिति।

पादमूले तु दद्याद्वै*मन्त्रेणानेन पाण्डव ॥
'क्षीरोदार्णवसंभूते सुरासुरनमस्कृते ।
सर्वदेवमये मातर्गृहाणार्घ्यं *नमो नमः ॥'
ततो माषादिसंसिद्धान् वटकान्विनिवेदयेत् ।
सुरभि त्वं जगन्मातर्देवि विष्णुपदे स्थिता ॥
सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस ।
ततः सर्वमये देवि सर्वदेवैरलंकृते ॥
मातर्ममाभिलषितं सफलं कुरु नन्दिनि ॥'

इति प्रार्थयेत्। तथा—

'तद्दिने *तैलपक्वं च स्थालीपक्वं युधिष्ठिर ।
गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् ॥'

ज्योतिर्निबन्धे नारदः—

'आश्विने कृष्णपक्षे तु द्वादश्यादिषु पञ्चसु ।
तिथिषूक्तः पूर्वरात्रे नृणां नीराजनो विधिः ॥
नीराजयेयुर्देवांस्तु विप्रान् गाश्च तुरङ्गमान् ।
ज्येष्ठाञ्छ्रेष्ठाञ्जघन्यांश्च मातृमुख्याश्च योषितः'॥इति

निर्णयामृते स्कान्दे—

'कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ॥'

---

'चन्दनैः कुङ्कुमैर्गन्धैः पुष्पैः कालोद्भवैस्तथा ।'

इति पाठः । *मन्त्रेणेति ।

''माता रुद्राणामित्येष मन्त्रः प्रोक्तो द्विजन्मनाम् ।
स्त्रीशूद्राणां महाबाहो मन्त्रोऽयं परिकीर्तितः ॥''

इति व्यवस्था तु सम्भवाभिप्रायेत्यभिप्रेत्य सर्वेषां पौराणमन्त्र एवाङ्गीकृतः । *नमोनमइति । नमोऽस्तु [ ते ] इति वा पाठः ।

'दत्वार्घ्यं तज्जलं पुण्यं साक्षतं मूर्ध्नि विक्षिपेत् ।' इति ।

मन्त्रस्तु—

'मृत्युना पाशदण्डाभ्यां*कालेन श्यामया सह ।
त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम ॥' इति ।

कार्तिककृष्णचतुर्दश्यां प्रभाते चन्द्रोदये*ऽभ्यङ्गं कुर्यात् । तदुक्तं हेमाद्रौ निर्णयामृते च भविष्योत्तरे—

'कार्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये ।
अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः ॥'

इनः चन्द्रः । मदनरत्ने कालादर्शे च 'विधूदये' इति पाठः । 'दिनोदये' इति पाठात्सूर्योदयोत्तरं त्रिमुहूर्ते स्नानं वदतां गौडानां तदनुसारिणां चाज्ञतैव ।

'पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे ।
पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः ॥'इति ।

स्मृतिदर्पणेऽपि—

'चतुर्दशी चाश्वयुजस्य कृष्णा
स्वात्यर्क्षयुक्ता च भवेत्प्रभाते ।
स्नानं समभ्यज्य नरैस्तु कार्यं
सुगन्धतैलेन विभूतिकामैः ॥' इति ।

पृथ्वीचन्द्रोदये पाद्मे—

---

*तैलपक्वञ्चेति । 'तापिकापक्वम्' इति वा पाठः । *कालेन श्यामया सहेति । 'कालेनामलया सह' इति वा पाठः । हेमाद्रावाग्नेये—

'कार्तिकः खलु मासो वै सर्वदेवमयो महान् ।
कृष्णपक्षे विशेषेण तत्र पञ्चदिनानि तु ॥
पुण्यानि तेषु तद्दत्तमक्षयं सर्वकामिकम् ॥"

*अभ्यङ्गं कुर्यादिति । अभ्यङ्गं कृत्वा स्नानं कुर्यादित्यर्थः । अभ्यङ्गस्नाने चन्द्रोदयकालिकी चतुर्दशी ग्राह्येति भावः ।

'आश्वयुक्कृष्णपक्षस्य चतुर्दश्यां विधूदये ।
तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा ॥' इति ।
'कर्तव्यं मङ्गलस्नानं नरैर्निरयभीरुभिः॥'

इति कालादर्शे पाठः । उभयत्राश्वयुगित्यमावास्यान्तं मासमभिप्रेत्योक्तम् । तथा—

'तैले लक्ष्मीर्जले गङ्गा दीपावल्याश्चतुर्दशीम् ।'
(प्राप्येति शेषः ।)
प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यति ॥' इति ।

दिनद्वयेऽपि चन्द्रोदये चतुर्दशीसत्त्वे तदभावेऽप्यरुणोदये संपूर्णे खण्डे वा दिनद्वये चतुर्दशीसमत्वे च पूर्वदिनेऽभ्यङ्गं कुर्यात् । 'पूर्वविद्धचतुर्दश्याम्' इति वचनात् । पूर्वदिने *परादिन एव वा सत्त्वे सैव ग्राह्या । दिनद्वयेऽप्यसत्त्वे अरुणोदयव्यापिनी ग्राह्या । 'पक्षे प्रत्यूषसमये' इत्युक्तः, वक्ष्यमाणवचनाच्च । तदभावे तु चतुर्दशीह्रासं पूर्वेद्युः प्रवेश्य पूर्वेऽह्नि*त्रयोदशी-

---

चतुर्दशीसत्त्वे पूर्वदिने इति, अग्रे चासत्त्वे चतुर्दशीह्रासमिति च पाठः। अयं मयूखविवेचनाद्यनुसारी। चन्द्रोदये इत्यस्याभ्यङ्गेऽप्यन्वयः। ततः प्रदोषे दीपदानादि तत्रैव । एवं पूर्वदिन एव चन्द्रोदये तत्सत्त्वेऽपि । *परादिन एवेति । अत्र दीपदानादि पूर्वेद्युरिति वक्ष्यति । *त्रयोदशीमध्ये एवेति । चन्द्रोदये इत्यनुवर्तते । "तिथ्यादौ तु"इति अग्रिमवचनेन शास्त्रतश्चतुर्दशीसत्त्वात् । एवमेव 'इनश्च' इति व्याख्यानं व्यर्थम् । इनः सूर्य इत्यस्यैव सम्यक्त्वादिति । सूर्योदयो गौणकालः ।

'स्वकालादुत्तरः कालो गौणः सर्वस्य कर्मणः ।'

इति वचनादिति, तत्रापिलाभाच्चेति । अत्र 'चतुर्दशीसत्त्वे तदभावेऽप्यरुणोदये सम्पूर्णे खण्डे वा दिनद्वये चतुर्दश्याः साम्ये' इति

मध्य एवाभ्यङ्गं कुर्यादिति दिवोदासः। *केचिदत्र वचनमपि साधकत्वेन वदन्ति—

*'तिथ्यादौ तु भवेद्यावान्ह्रासो वृद्धिः परेऽहनि ।
तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥' इति ।

---

क्वचित्पाठः । तदभावेऽपि चन्द्रोदये चतुर्दश्यभावेऽपि । अत्र स्मृतिष्वेव प्रत्यूषप्रभातादिशब्दानां चन्द्रोदये तात्पर्यं कैव कथा ग्रन्थस्थारुणोदये इत्यस्य । चन्द्रोदये सम्पूर्णे चतुर्दशीसत्त्वेन, तत्र खण्डे वा तत्सत्त्वेनेति पूर्वोक्तदिनद्वयसत्त्वं विवृतमिति नातीत्रोपयुज्यते । वस्तुतः स पाठोऽशुद्ध एव । असत्त्वे चतुर्दशीह्रासमिति पाठस्थाने 'असत्त्वेऽरुणोदयव्यापिनी ग्राह्या । 'पक्षे प्रत्यूषसमये' इत्युक्तेः वक्ष्यमाणवचनाच्च । तदभावे तु चतुर्दशीह्रासम्' इति पाठः, स त्वशुद्धः । अथवा पाठविशेष इत्थं व्याख्येयः—ननु दिनद्वये चन्द्रोदयव्याप्त्यभावे का ग्राह्या इत्यत्राह—तदभावेऽपीति । अरुणोदये इति । पूर्वदिने अभ्यङ्गमित्यनेनान्वयः । चन्द्रोदयरूपमुख्यकालाभावे प्रत्यूषो ग्राह्यः । व्यापककालेनापि कर्मणो निर्वर्तनसम्भवादित्यर्थः । एतच्च परदिने प्रत्यूषेऽसत्त्वे । तत्र तत्सत्त्वे तु चन्द्रोदयविरहे पूर्वैव असन्देहात् । चन्द्रोदयसत्त्वे तु अन्यतरस्याप्यनिर्णायकत्वादाह—संपूर्णे खण्डे वेति । अरुणोदये इति वर्तते । एतेन चन्द्रोदयस्यैव दिनद्वयसत्त्वमुक्तं, साम्यन्तु दृष्टान्तः । इदानीं प्रत्यूषस्य कर्मकालत्वं साधयति—दिनद्वयेऽपीति । तदभावे त्विति । पूर्वाह्णेऽपि प्रत्यूषव्यापित्वे विध्यर्थ इति । विवेचनानुयायिनस्तु या पूर्वेद्युरेव परेद्युरेव वा प्रातश्चन्द्रोदये वा वर्तते सा पूर्वेद्युरेव परेद्युरेवेति गौणकालमतमादाय सर्वं निर्णयमाहुः । दाक्षिणात्यशिष्टाचारसंवादिदिवोदासमतं खण्डयतां मतमाह-*केचिदिति । *तिथ्यादाविति । पूर्वेद्युः पूर्वतिथ्यादिषु स्वकर्मणि उत्तरतिथ्यादिप्रयुक्तकर्मानुष्ठाने ह्रासवृद्धिसाम्यानि च षष्टिघटि-

तन्मन्दम् । न हीदं वचनं पूर्वदिनस्यापूर्वं ग्राह्यत्वं विधत्ते । नक्तैकभक्तजन्माष्टम्यादौ दिनद्वये कर्मकालव्याप्त्यभावे सर्वत्र पूर्वदिनस्य ग्राह्यत्वप्रसङ्गात् । किं तु यत्रैकभक्तादौ दिनद्वये कर्मकालव्याप्त्यभावे वाक्यान्तरेण न्यायेन वा पूर्वदिनस्य ग्राह्यत्वमुक्तं, तत्र मुख्यकाले तत्तिथेरभावेऽपि तत्रैवानुष्ठानबोधकमिदम् । न चात्र तदस्तीति *यत्किञ्चिदेतत । *तेन चतुर्थयामगामिनी ग्राह्या । अत एव सर्वज्ञनारायणः—

'तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा ।
यामिन्याः पश्चिमे यामे तैलाभ्यङ्गो विशिष्यते ॥' इति ।
मृगाङ्कोदयवेलायां त्रयोदश्यां यदा भवेत् ।
दर्शे वा मङ्गलस्नानं दुःखशोकभयप्रदम् ॥'

इति कालादर्शे त्रयोदशीनिषेधाच्च । *तेनायमर्थः—'यथाऽग्निहोत्रे यावज्जीवं सायंप्रातःकालेषु व्याप्यका-

---

कापेक्षया त्रिंशच्चतुर्विंशत्यष्टादशद्वादशघटिकादिक्रमेण सूर्योददयतिथीनां चतुःपञ्चाशद्घटिकासत्त्वेऽपि ह्रासाव्यवहारात्साम्यव्यवहाराच्च । *यत्किञ्चिदेतदिति । इदमापाततः । पूर्वविद्धचतुर्दश्यामिति पूर्वदिनग्राह्यताबोधकवचनसत्त्वात् सूर्योदयरूपगौणकालव्याप्तिलाभाच्च । एवञ्च चन्द्रोदयरूपे मुख्यकाले तत्तिथ्यभावेऽपि तत्रैवानुष्ठानबोधकतया तिथ्यादाविति वाक्यप्रवृत्तेरव्याघाताच्च । स्वमते चन्द्रोदयव्यापिनी ग्राह्येति निष्टङ्कितम् । इदानीं मतान्तरमादर्शयति—*तेनेति । एतच्च स्त्रैणपुरुषाणामनुकूलम् । नन्वेवं चन्द्रोदयादेः स्नानकालत्वोक्तिविरोध इत्यत आह—*तेनेति । अत्र तेनायमर्थः—यथाऽग्निहोत्रे यावज्जीवं सायंप्रातःकालेषु व्याप्यकालस्य गुरुत्वं, तथाऽत्र चतुर्दशीचतुर्थयामारुणोदयचन्द्रोदयानामुत्तरोत्तरस्य व्याप्यत्वाद् गुरुत्व-

लस्य गुरुत्वं तथाऽत्र चतुर्दशीचतुर्थयामारुणोदयचन्द्रोदयानामुत्तरोत्तरस्य व्याप्यत्वाद् गुरुत्वमिति । *यदपि दिवोदासीये—

*'त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी ।
रात्रिशेषे त्वमावास्या तदाऽभ्यङ्गे त्रयोदशी ॥'

इति वचनं, तद्धेमाद्रिनिर्णयामृताद्यलिखितत्वेन निर्मूलम् । समूलत्वेऽपि न चतुर्दश्याः सूर्योदयासंबन्धित्वरूपः क्षयोऽत्र विवक्षितः। सूर्योदयात्प्राक् समाप्तौ चन्द्रोदयकालसत्त्वे च त्वयैवाङ्गीकारात् । किं तु अभ्यङ्गकालात्प्राक् समाप्तिरूपोऽत्र ह्रासः क्षयशब्देन विवक्षितः । स चारुणोदयाच्चतुर्थयामाद्वा प्राक् यदा ह्रासस्तत्परमिदम् । अत एव सर्वज्ञनारायणेन चतुर्थयाममात्रे स्नानमुक्तम् । तथा चोदाहृतम्–'तथा कृष्णचतुर्दश्याम्' इति । ज्योतिर्निबन्धे नारदोऽपि—

*'इषासितचतुर्दश्यामिन्दुक्षयतिथावपि ।

---

मिति पाठो यदि नास्ति तदा सम्यगेव । यद्यस्ति तदा प्रतिकूलः । यथा यावज्जीवकालः सायंप्रातःकालेतरकाले परिसंख्यायते इति तत्राग्निहोत्रं नानुष्ठीयते तथैव चन्द्रोदयेतरभागपरिसंख्यानात्तत्र स्नानाननुष्ठानं स्यात् । अत एव चन्द्रोदयस्यैव कालत्वं वदतां त्वनुकूल इति । *यदपीत्यादिरभ्युपगमवादः । *त्रयोदशी यदा प्रातरिति । अत्र हि चतुर्दशीक्षयो दिनद्वये चन्द्रोदयास्पर्शरूपः । *इषासितेति । अत्रापिः समुच्चायकः । दिनत्रये संलग्नं दीपोत्सवमित्यभिधानाच्चत्र चाभ्यङ्गस्नानचर्चापि नास्ति । 'अरुणोदयतोऽन्यत्र' इति वाक्येऽपि अरुणोदयपदं चन्द्रोदयपरमिति सर्ववचनाविरोधः । गौडास्तु—

"कार्तिके कृष्णपक्षे तु चतुर्दश्यां दिनोदये ।

ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत् ॥
कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयम् ॥'

ये तु त्रयोदशीमध्ये स्नानमाहुस्तेषामाशयं न विद्म इत्यलं भूयसा । यदपि—

'अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः ।
तस्याब्दिकभवो धर्मो नश्यत्येव न संशयः ॥'

इति दिवोदासीये भविष्यवचनं, तन्मुख्यकालेऽरुणोदये चतुर्दश्यभावेऽपि तत्रैव स्नातव्यमित्येवंपरमिति सर्वं सिद्धम् । चतुर्घटिकात्मकोऽरुणोदय इति तत्रैवोक्तम् । मदनरत्ने पाद्मे—

*'अपामार्गमथा तुम्बीं प्रपुन्नाटमथापरम् ।
भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ॥'

प्रपुन्नाटः चक्रमर्दः । मन्त्रस्तु—

'सीतालोष्टसमायुक्त सकण्टकदलान्वित ।
हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥' इति ।

अस्यामेव प्रदोषे दीपान्दद्यादित्युक्तं हेमाद्रौ स्कान्दे—

---

अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः ॥"

इति वचनात्प्रातःकालव्यापिनी ग्राह्या । सूर्योदयदिनोदयप्रातःशब्दानां पर्यायत्वादित्याहुः । दीपावलीत्वात्प्रातरभ्यङ्गस्नानपक्षो युक्तः । दीपावलीं प्रकृत्य भविष्ये—

'अलक्ष्मीपरिहारार्थमभ्यङ्गस्नानमाचरेत् ।'

इति वचनात् । दिनद्वयेऽप्यभ्यङ्गे न दोषः । 'इन्दुक्षयेऽपि संक्रान्तौ' इत्यग्रिमवचनात् ।

*अपामार्गमिति अपामार्गशाखां सकण्टकपत्रतुम्बीचक्रमर्दसीतालोष्टयुतां स्नानमध्ये शिरस उपरि पुनः पुनर्भ्रामयेदित्यर्थः । सीतालोष्टयोगादि च भ्रामणमन्त्रालिङ्गात् । सीता

'ततः प्रदोषसमये दीपान्दद्यान्मनोरमान् ।
ब्रह्मविष्णुशिवादीनां भवनेषु *मठेषु च ॥' इति ।

दिवोदासीये ब्राह्मे—

'अमावास्याचतुर्दश्योः प्रदोषे दीपदानतः ।
यममार्गाधिकारेभ्यो मुच्यते कार्तिके नरः ॥'

*खण्डतिथौ तु पूर्वेऽह्नि प्रदोषे दीपान्दत्त्वा परेद्युः स्नायादिति दिवोदासीये उक्तम् । अत्र नरकोद्देशेन चतुर्वर्तियुक्तं दीपदानं कार्यम् । तत्र मन्त्रः—

'दत्तो दीपश्चतुर्दश्यां नरकप्रीतये मया ।
चतुर्वर्तिसमायुक्तः सर्वपापापनुत्तये ॥'

तत्रैव लैङ्गे—

*'माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः ।
प्रेताख्यायां चतुर्दश्यां सर्वपापैः प्रमुच्यते ॥'

अत्र यमतर्पणमुक्तं मदनपारिजाते वृद्धमनुना—

'दीपोत्सवचतुर्दश्यां कार्यं तु यमतर्पणम् ।'

---

लाङ्गलपद्धतिः, तल्लोष्टः मृत्पिण्डः । कण्टकयुक्तदलं कण्टकदलं बृहतीपत्रादि । चक्रमर्दः पवार इति, तरोडा इति प्रसिद्धः ।

*मठेषु चेति ।

"प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च ।
मन्दुरासु विविक्तासु हस्तिशालासु चैव हि ॥"

इत्युत्तरः श्लोकः । *खण्डतिथौ परदिन एव चन्द्रोदये चतुर्दशीसत्त्वे । यद्यपि—

'इति स्नात्वा प्रदातव्या दीपाः संपूज्य देवताः ।'

इति स्नानानन्तरमेव दीपदानं विहितं तथापि 'ततः प्रदोषसमये' इत्यादिना स्वतन्त्रकर्मविधानात् क्रमानुरोधेन कालबाधस्यासम्भवात् पूर्वद्युरेव प्रदोषे दीपदानमात्रं कार्यमित्यर्थः । *माषे-

मदनरत्ने ब्राह्मे—

'अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि ।
*ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥' इति ।

तर्पणप्रकारस्तु हेमाद्रौ—

'एकैकेन तिलैर्मिश्रान्दद्यात्त्रींस्त्रीञ्जलाञ्जलीन् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥'

तथा मदनरत्ने स्कान्दे—

'दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः ।
देवतीर्थेन देवत्वात्तिलैः प्रेताधिपो यतः ॥'

तथा—

*यज्ञोपवीतिना कार्यं प्राचीनावीतिनाथवा ।' इति

---

ति । अन्यदप्युक्तम्—

"ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् ।
शैवान्विप्रान्धर्मपरान् शिवलोके महीयते ॥
दानं प्रदाय तेभ्यस्तु यमलोकं न पश्यति ।
नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिवतुष्टये ॥
न तत्क्रतुशतेनापि प्राप्यते पुण्यमुत्तमम् ॥"

इति लैङ्गात् । *ततश्चेति । स्नानानन्तरं यमतर्पणं कार्यम् । स्नानानन्तरमेव यमतर्पणविधानात्तस्य कालविशेषानुक्तेश्च । *यज्ञेति ।

'देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता ।'

इति हेतूक्तिबलात् ।

"दक्षिणाभिमुखो भूत्वा शुक्लैः सव्यं समाहितः ।

इदं जीवत्पितृकेणापि कार्यम् ।

'जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः ।'

इति पाद्मोक्तेः । *अत्र भीष्मतर्पणमप्युक्तं दिवोदासीये । तत्प्रकारस्तु *माघे वक्ष्यते । इति नरकचतुर्दशी ।

कार्तिकामावास्यायां प्रातरभ्यङ्गं कुर्यात् । तदुक्तं कालादर्शे-

*प्रत्यूष आश्वयुग्दर्शे कृताभ्यङ्गादिमङ्गलः ।

देवतीर्थेन देवत्वात्तिलैः प्रेताधिपो यतः ॥"

इति स्कान्दात् ।

'पृथक्पृथक् तिलैर्मिश्रान्दद्यात्त्रींस्त्रीन् जलाञ्जलीन् ।

पितृत्वात्पितृतीर्थेन कृष्णैः प्रेताधिपो यतः ॥"

इति वचनात् । शुक्लकृष्णतिलसकृत्करात्र्यादिदैवापितृधर्मविकल्पो द्रष्टव्यः । अत्र जीवत्पितृकस्य सव्यादि, मृतपितृकस्यापसव्यादीत्यप्युचितम्भाति । भविष्ये—

"यां काञ्चित्सरितं प्राप्य कृष्णपक्षचतुर्दशीम् ।

यमुनायां विशेषेण नियतस्तर्पयेद्यमम् ॥"

अत्र सरित इत्युपलक्षणम् । अस्यां चित्रानक्षत्रभौमवारयोगः प्रशस्तः ।

"कार्तिके भौमवारे तु चित्रा कृष्णचतुर्दशी ।

तस्यामाराधितः स्थाणुं नयेच्छिवपुरं ध्रुवम् ॥"

इति भाविष्यात् । *अत्रेति । पाद्मवाक्य इत्यर्थः । *माघ इति । कार्तिककृत्यत्वाभावादिति भावः ।

*प्रत्यूष इति । चतुर्दशीस्नानमुक्त्वा—

"एवं प्रभातसमये त्वमावास्यां नराधिप ।

स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च ॥"

इति भविष्योत्तरात् । नारदेनापि तिथित्रयं दीपावलीत्वेन

भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये ॥'

अस्य व्याख्याने आदिशब्दात् *पञ्चत्वगुदकस्नाना-देरुपसंग्रहः। तदुक्तं पुष्करपुराणे—

'स्वातिस्थिते रवाविन्दुर्यदि स्वातिगतो भवेत्।
पञ्चत्वगुदकस्नायी कृताभ्यङ्गविधिर्नरः॥
नीराजितो महालक्ष्मीमर्चयन् श्रियमश्नुते॥'

आश्वयुग्दर्श इति दर्शशब्दः प्रत्यूषे स्वातियुक्ततिथि-परः। तदुक्तं ब्राह्मे—

'ऊर्जे शुक्लाद्वितीयायां तिथिषु स्वातिऋक्षगे।
मानवो मङ्गलस्नायी नैव लक्ष्म्या वियुज्यते॥'

तत्रैव—

*'इषे भूते च दर्शे च कार्तिकप्रथमे दिने।
यदा स्वातिस्तदाभ्यङ्गस्नानं कुर्याद्दिनोदये॥'

कश्यपसंहितायां तु दीपावलिदर्शं प्रक्रम्य—

'इन्दुक्षयेऽपि संक्रान्तौ रवौ पाते दिनक्षये।
तत्राभ्यङ्गो न दोषाय प्रातः पापापनुत्तये॥'

इति स्वातियोगं विनाऽप्यभ्यङ्ग उक्तः। मात्स्ये—

'दीपैर्नीराजनादत्र सैषा दीपावली स्मृता॥'

अत्र विशेषो हेमाद्रौ भविष्ये—

'दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात्।
*प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात्॥

---

अभिधाय 'तैले लक्ष्मीः' इत्यादिना प्रातरभ्यङ्गस्नानोक्तेश्च। *पञ्च-त्वचः—अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधत्वचः। सा च तिथिः चतुर्द-शीअमावास्याप्रतिपदन्यतमेत्याह—*इषे इति अमान्तमानेन। 'रवौ आरे' इति पाठे भौमः। *प्रदोषेति। प्रदोषे 'लक्ष्म्यै नमः' इति नाममन्त्रेण लक्ष्मीं संपूज्य दीपदानं कार्यमित्यर्थः। ततः क्रमा-

*दीपवृक्षाश्च दातव्याः शक्त्या देवगृहेषु च ॥'

*तत्रैवाभ्यङ्गमभिधाय-

'एवं प्रभातसमये त्वमावास्यां*नराधिप ।

कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः ॥

दीपान्दत्त्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि ।

---

देतिपदात् लक्ष्मीपूजानन्तरं प्रार्थना कार्या—

"नमस्ते सर्वदेवानां वरदाऽसि हरिप्रिया ।

या गतिस्त्वत्प्रसन्नानां सा मे भूयात्त्वदर्चनात् ॥" इति ।

कुबेरपूजापि कार्या—

'सुखरात्र्याः प्रदोषे तु कुबेरं पूजयन्ति वै ।'

इति वाक्यात् । तत्र मन्त्रः-

"धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।

भवन्तु त्वत्प्रसादान्मे धनधान्यार्थसम्पदः ॥" इति ।

केचित्तु धनदपूजां त्रयोदशीप्रदोषे कुर्वन्ति, तन्निर्मूलम् । *दीपवृक्षाश्चेति । चकारेण दीपदानसमुच्चयः । ननु पार्वणश्राद्धं कदा कर्तव्यमित्यत्राह—*तत्रैवेति । *नराधिपेति । यद्यपि 'स्नात्वा देवान्' इत्यादिप्रागुक्त्या प्रातःसमये स्नानमेव लभ्यते । प्रभातप्रातःशब्दयोरेकार्थत्वात् तथापि पार्वणश्राद्धे अमावास्यामात्रान्वयः तस्यापराह्णिकत्वात् न तु प्रभातान्वयः, बाधात् एतद्वाक्यस्य क्रममात्रविधायकत्वाच्च ।

'दीपान्दत्त्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि ।'

इत्यत्र दीपदानलक्ष्मीपूजनयोः क्रमो न विवक्षितः । 'लक्ष्मीं पूजयित्वा ततः क्रमात्' इत्येनेन विरोधात् विकल्पस्याष्टदोषत्वाच्च । किन्तु दीपदानलक्ष्मीपूजनयोः स्वभोजनपूर्वत्वमिति न विरोधः । दीपदानमन्त्रः—

"अग्निर्ज्योती रविर्ज्योतिश्चन्द्रो ज्योतिस्तथैव च ।

*स्वलंकृतेन भोक्तव्यं सितवस्त्रोपशोभिना ॥'

*अयं प्रदोषव्यापी ग्राह्यः ।

'तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।
उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥'

इति ज्योतिषोक्तेः । दिनद्वये सत्त्वे परः ।

*'दण्डैकरजनीयोगे दर्शः स्यात्तु परेऽहनि ।
तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिके ॥'

इति तिथितत्त्वे ज्योतिर्वचनात् । दिवोदासीये तु प्रदोषस्य कर्मकालत्वात्

---

उत्तमः सर्वज्योतीनां दीपोऽयं प्रतिगृह्यताम् ॥" इति ।

*स्वलङ्कृतेनेति । एवं दीपदानादि कृत्वा ब्राह्मणानन्यांश्च बुभुक्षितान्भोजयित्वा स्वयमलङ्कृतो बन्धुभिः सह भुञ्जीतेत्यर्थः ।

'ब्राह्मणान् भोजयित्वाऽऽदौ सम्भोज्य च बुभुक्षितान् ।
स्वलङ्कृतेन भोक्तव्यं नववस्त्रोपभोगिना ॥
स्निग्धैर्मुग्धैश्च निर्वृत्तैः [ सुवेषै ] र्बान्धवैः सह ॥'

इत्यादित्यपुराणात् । नन्वत्र 'श्राद्धानन्तरकर्तव्यं दीपदानं प्रतीयते, सम्भवति च श्राद्धदिनेऽमावास्यायाः प्रदोषे सत्त्वे, तत्र तदसत्त्वे तु कथमित्यत्राह—*अयमिति । दर्श इत्यर्थः । तथा च यदा पूर्वेद्युरेव प्रदोषे दर्शः श्राद्धार्हस्तु परेद्युस्तत्र पूर्वेद्युरेव प्रदोषे लक्ष्मीपूजादीपदाने कार्ये, श्राद्धं तु परेद्युः कालविरोधे क्रमस्यानादरात्, स्वकालप्राप्तश्राद्धानुवादेनाप्युपपत्तेः, क्रमस्यात्राविधानाच्च, औत्सर्गिकाऽखण्डतिथिमालम्ब्य 'कृत्वा तु पार्वणश्राद्धम्' इतिक्त्वाव्यवहाराच्च । यत्र दिनद्वये प्रदोषव्यापिनी अमावास्या तत्रोत्तरामाह—*दण्डैकेति । एतदेव निष्कृष्टं द्रढयति—दिवोदासीये त्वित्यादिना इत्युक्तमित्यन्तेन । अत्र प्रदोषस्य कर्मकालत्वेऽपि अर्द्धरात्रस्य न कर्मकालत्वमित्यरुचिः । अत्र राजकृत्यं भविष्योत्तरे—

'अर्धरात्रे भ्रमत्येव लक्ष्मीराश्रयितुं गृहान् ।
अतः स्वलङ्कृता लिप्ता दीपैर्जाग्रज्जनोत्सवाः ॥
सुधाधवलिताः कार्याः पुष्पमालोपशोभिताः ॥'

इति ब्राह्मोक्तेश्च प्रदोषार्धरात्रव्यापिनी मुख्या । एकैकव्याप्तौ परैव । प्रदोषस्य मुख्यत्वादर्धरात्रेऽनुष्ठेयाभावाच्च । यत्तु—

'अपराह्णे प्रकर्तव्यं श्राद्धं पितृपरायणैः ।
प्रदोषसमये राजन्कर्तव्या दीपमालिका ॥'

इति क्रमः स संपूर्णतिथावेव प्राप्तेरनुवादो न विधिः । तत्तत्कर्मकालव्याप्तेर्बलवत्त्वात्संपूर्णतिथौ प्राप्त्या खण्डतिथावप्राप्त्या विध्यनुवादविरोधाच्चेत्युक्तम् । अत्रैव दर्शे परात्रेऽलक्ष्मीनिःसारणमुक्तं मदनरत्ने भविष्ये—

'एवं गते निशीथे तु जने निद्रार्धलोचने ।
तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः ॥
निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ॥'

---

"ततोऽपराह्णसमये घोषयेन्नगरे नृपः ।
अर्द्धराज्यं बलेर्लोका यथेष्टं चेष्टतामिति ॥
लोकैश्चापि पुरे हृद्ये सुधाधवलिताजिरे ।
वृक्षचन्दनमालाद्यैरर्चिते च गृहे गृहे ॥
गीतवादित्रसंघुष्टे प्रज्वालितसुदीपके ।
दुकूलपटने मध्ये रङ्गमाणिक्यभूषणे ॥
युवतीजनसंकीर्णे वस्त्रोज्ज्वलाविहारिणि ।
दीपमालाकुले रम्ये विध्वस्तध्वान्तसञ्चये ॥
प्रदोषे दोषरहिते शस्ते दोषागमे शुभे ।
यात्राविहारसम्भार जय जीवेतिवादिभिः ॥
मित्रस्वजनसम्बन्धिस्वजातिगोत्रपूजिते ।

ततोऽर्द्धरात्रसमये स्वयं राजा व्रजेत्पुरम् ॥
अवलोकयितुं रम्यं पद्भ्यामेव शनैः शनैः ।
महता तूर्यघोषेण ज्वलद्भिर्हस्तदीपकैः ॥
हर्म्यशोभां तु सम्पश्यन् कृतरक्षः स्वकैर्नरैः ।
तद्दृष्ट्वा महदाश्चर्यं ऋद्धिं चैवात्मनः शुभाम् ॥
बलिराज्यप्रमोदं च ततः स्वगृहमाचरेत् ॥" इति ।

एवं गते निशीथे त्विति कृत्यानन्तरं भविष्ये—

"सुखरात्रेरुषःकाले प्रदीपो ज्वलनालये ।
सर्वान्बन्धूनबन्धूंश्च वाचा कुशलयाऽर्चयेत् ॥
प्रदीपमङ्गलं कार्यं लक्ष्मीमङ्गलहेतवे ।
गोरोचनाक्षतं चैव दद्यादङ्गेषु सर्वतः ॥
विश्वरूपस्य भार्याऽसि पद्मे पद्मालये शुभे ।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ॥
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम् ।
सुखरात्रि प्रभातेऽद्य तन्मेऽलक्ष्मीर्व्यपोहतु ॥
या रात्रिः सर्वभूतानां या च देवेष्ववस्थिता ।
संवत्सरं प्रिया या च सा ममास्तु सुमङ्गला ॥
माता त्वं सर्वभूतानां देवानां सृष्टिसम्भवा ।
आख्याता भूतले देवि सुखरात्रि नमोऽस्तु ते ॥" इति ।

उल्कादानमपि प्रदोषे कार्यम् ।

"तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।
उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥"

इति ज्योतिषोक्तेः । तत्रोल्काग्रहणे मन्त्रः—

"शस्त्राशस्त्रहतानां च भूतानां भूतदर्शयोः ।
उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना ॥" इति ।

*कार्तिकशुक्लप्रतिपदि गोक्रीडनमुक्तं निर्णयामृते। अस्यामेव रात्रौ बलेः पूजोक्ता हेमाद्रौ भविष्ये—

'कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः।
पूजां कुर्या*न्नृपः साक्षाद्भूमौ मण्डलके शुभे॥
बलिमालिख्य दैत्येन्द्रं वर्णकैः *पञ्चरङ्गकैः।

---

तद्दानमन्त्रः—

"अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्॥" इति।

तद्विसर्जने मन्त्रः—

"यमलोकं परित्यज्य आगता ये महालये।
उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते॥" इति।

अत्र प्रदोषस्य कर्मकालत्वादेकैकादिने प्रदोषे चतुर्दश्यमावास्ययोः सत्त्वे एते एव, दिनद्वये प्रदोषे तत्सत्त्वे परेद्युरेव, असत्त्वे तु पूर्वेति। गौणकालसत्त्वात् स्वकालादुत्तरस्यैव गौणत्वात् ततो लक्ष्मीपूजादिः।

*कार्तिकेति। एतत्प्रतिपद्यपि प्रातरभ्यङ्गं कुर्यात् दीपावलीत्वात्।

"वत्सरादौ वसन्तादौ बलिराज्ये तथैव च।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते॥"

इत्युक्तेश्च। परन्तु बलिराज्यं पूर्वेद्युरेव बल्युत्सवमित्यर्थो वा। प्रातरभ्यङ्गस्नानं कृत्वा गोवर्धनं संपूज्य द्यूतादि कार्यम्। *नृप इति। राजकर्तृकपूजायां रात्रेरभिधानेन अन्यकर्तृकपूजायामपि सैव ग्राह्या। रात्रेः कर्मकालत्वाभिधानात्। *पञ्चरङ्गकैरिति। ततः—

"सर्वाभरणसम्पूर्णं विन्ध्यावल्या सहासितम्।

गृहस्य मध्ये शालायां विशालायां ततोऽ*र्चयेत् ॥
*लोकश्चापि गृहस्यान्तः *शय्यायां शुक्लतण्डुलैः ।

---

कूष्माण्डबाणजम्भोरुमुरुदानवसंकृतम् ॥
संघूर्णहृष्टवदनं किरीटोत्कटकुण्डलम् ।
द्विभुजं दैत्यराजानं कारयित्वा नृपः स्वयम् ॥"

इति बोध्यम् । *अर्चयेदिति । राजकर्तृकपूजायां मद्यमांससुरादिकं भवति ।

"गन्धपुष्पान्ननैवेद्यैरक्षतैर्गुडधूपकैः ।
मद्यमांससुरालेह्यदीपबल्युपहारकैः ॥
मन्त्रेणानेन राजेन्द्र समन्त्री सपुरोहितः ।
एवं पूजां ततः कृत्वा रात्रौ जागरणं ततः ॥
कारयेत्प्रेक्षणीयादि नरनर्तकनाटकैः ॥"

इति भविष्यात् । *लोकश्चापीति । अत्रेदं बोध्यम्—

भविष्योत्तरे—

"यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर ।
हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि ॥" इति ।
"रुदिते रोदनं वर्षं हृष्टे वर्षं प्रहृष्यति ।
भुक्तौ भोक्ता भवेद्वर्षं स्वस्थे स्वस्थो भविष्यति ॥
तस्मात्प्रहृष्टैस्तुष्टैस्तु कर्तव्या कौमुदी नरैः ।
वैष्णवी दानवी चेयं तिथिः पौत्री युधिष्ठिर" ॥ इति ।

*शय्यायामिति । शुक्लतण्डुलनिर्मेया प्रतिमापि तादृशलक्षणवती शय्यायां निर्मातव्येत्यर्थः । बल्युद्देशेन दीपादिदानमपि आवश्यकम् ।

"वीर प्रतिपदं प्राप्य तव भावी महोत्सवः ।
तत्र त्वां नरशार्दूल हृष्टाः पुष्टाः स्वलङ्कृताः ॥
अर्घ्यदीपप्रदानैश्च अर्चयिष्यन्ति मानवाः ॥"

संस्थाप्य बलिराजानं फलैः पुष्पैस्तु पूजयेत् ॥'

मन्त्रस्तु पाद्मे—

'बलिराज नमस्तुभ्यं दैत्यदानववन्दित ।
इन्द्रशत्रोऽमराराते विष्णुसान्निध्यदो भव ॥' इति ।

तथा—

'बलिमुद्दिश्य दीयन्ते दानानि कुरुनन्दन ।
यानि तान्यक्षयाण्याहुर्मयैवं संप्रदर्शितम् ॥' इति ।

तदेतत्पूर्वविद्धप्रतिपदि कर्तव्यम् ।

'पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ।'

इति हेमाद्रौ पाद्मोक्तेः । माधवोपि—

'बल्युत्सवं च पूर्वेद्युरुपवासवदाचरेत् ।' इति ।

निर्णयामृतेपि—

*'या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप ।
पूजनात् त्रीणि वर्धन्ते प्रजा गावो महीपतिः ॥' इति ।

तथा—

'भद्रायां गोकुलक्रीडा स देशो वै विनश्यति ॥'
भद्रायां द्वितीयायाम् ।

था—

'प्रतिपद्य*ग्निकरणं द्वितीयायां तु गोर्चनम् ।
क्षेत्रच्छेदं करिष्येते वित्तनाशं कुलक्षयम् ॥' इति ।

तथा—

'प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतम् ।
परविद्धेषु यः कुर्यात्पुत्रदारधनक्षयः ॥'

---

इति वामनपुराणे वामनेन वरदानात् । गोपूजनादि तत्र पूर्वविद्धां प्रतिपदमाह-*या कुहूरिति । *अग्निकरणम्-होलादीपनम् । ननु 'पूर्वाह्णे क्रीडनं गवाम्' इति वचनाद्गोक्रीडादौ प्रातःकाल-

इति देवलवचनाच्च । *एते च विधिप्रतिषेधाः पूर्वदिने प्रतिपदः सायाह्नव्यापित्वे द्वितीयदिने चन्द्रदर्शनसंभवे च ज्ञेयाः ।

'गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः ।
सोमो राजा पशून्हन्ति सुरभिः पूजकांस्तथा ॥'

इति पुराणसमुच्चयात् । दिनद्वये सायाह्नव्यापित्वे तु *परैव ग्राह्या ।

'वर्धमानतिथौ नन्दा यदा सार्धत्रियामिका ।
द्वितीयावृद्धिगामित्वादुत्तरा तत्र चोच्यते ॥'इति ।

तथा—

'त्रियामगा दर्शतिथिर्भवेच्चेत्सार्धत्रियामा प्रतिपद्विवृद्धौ।
दीपोत्सवे ते मुनिभिः प्रदिष्टे अतोऽन्यथा पूर्वयुते विधेये॥'

इति पुराणसमुच्चयादिति निर्णयामृतकारः । सार्धत्रियामिकेत्यनेन चन्द्रदर्शनाभाव उक्तः । द्वितीयायाः पञ्चधाविभक्तदिनचतुर्थांशरूपापराह्णव्याप्तावेव चन्द्रदर्शनसंभवात् । *वयं त्वेनद्वचनद्वयं पूर्वविद्धासंभवे वेदित-

---

व्यापिनी परैव युक्तेत्यत्राह—*एते चेति । *परैवेति । तत्र चन्द्रदर्शनाभावात् । तत्र गोक्रीडनादौ दीपोत्सवः गोपूजादिः कालानुग्रहात् , न तु वलिपूजादिः कालबाधापत्तेः चन्द्रदर्शनाभावप्रयोजकसार्द्धत्रियामोक्तिवशाच्च पूजायां दीपदानसत्त्वे तदीयोत्सवशब्दस्य तत्र सम्भवाच्च । ननु 'दीपोत्सवे ते मुनिभिः प्रदिष्टे' इति द्विवचनानुपपत्तिः । यदा त्रियामगो दर्शस्तदा पूर्वद्युरेव दीपदानविधानादिति चेच्छृणु । अस्ति हि

'स्त्रियः क्रीडन्त्यमावास्यां गात्रो नन्दासु कार्तिके ।'

इति वचनम् । तेन च स्त्रीक्रीडनं स्त्रीनीराजनं विधीयते । तत्र दीपसम्बन्धात् दीपोत्सवपदेन तदुपादानात्तत्रायं दर्शो ग्राह्य इति । *वयं त्विति । तथा च दिनद्वये सायाह्नव्यापित्वे पूर्वग्राह्येत्यभि-

व्यमिति ब्रूमः। दिनद्वये प्रतिपदः सायाह्नव्याप्त्यभावे तु *पूर्वैव। रात्रौ बलिपूजाविधानेन कर्मकालव्याप्तित्वात् परदिने चन्द्रोदये तन्निषेधादिति दिक्।

*मदनरत्ने तु पूर्वविद्धायां गोक्रीडा। नीराजनमङ्गलमालिके *तूत्तरत्र कार्ये।

'कार्तिके शुक्लपक्षे तु विधानद्वितयं भवेत्।
नारीनीराजनं प्रातः सायं मङ्गलमालिका॥
यदा च प्रतिप*त्स्वल्पा नारीनीराजनं भवेत्।
द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम्॥'

इति ब्राह्मोक्तेः—

'लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयम्।
तस्यां नीराजनं कार्यं सायं मङ्गलमालिका॥'

इति भविष्योक्तेः।

'प्रातर्वा यदि लभ्येत प्रतिपद्घटिका शुभा।
द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम्॥
*कार्तिके शुक्लपक्षादौ त्वमावास्या घटीद्वयम्।
देशभङ्गभयान्नैव कुर्यान्मङ्गलमालिकाम्॥'

इति देवीपुराणाच्चेत्युक्तम्। अत्र विशेषो हेमाद्रौ ब्राह्मे बलिप्रतिपदं प्रक्रम्य—

---

मानः। नन्दायाः सार्द्धत्रियामकत्वोक्तिवैयर्थ्यात्। *पूर्वैवेति। 'बलिपूजायां गोक्रीडायां च इति शेषः। रात्राविति क्रमेण हेतू परदिने चन्द्रोदयासत्त्वे परेति दिगर्थः। अत्र अन्यदपि कृत्यद्वयं स्थलतो दर्शयति—

*मदनरत्ने त्विति। *उत्तरत्रेति। द्वितीयाविद्धायां प्रतिपदीत्यर्थः। *स्वल्पेति। तत्र प्रतिपदस्त्रिमुहूर्तव्यापित्वबोधार्थम्। *कार्तिके इति। नारीनीराजने अमायुक्तानिषेधः

*'तस्माद्द्यूतं प्रकर्तव्यं प्रभाते तत्र मानवैः ।
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरं जयः ॥
पराजयो विरुद्धश्च लाभनाशकरो भवेत् ।
*दयिताभिश्च सहितैर्नेया सा च भवेन्निशा ॥' इति ।

अत्र गोवर्धनपूजादि मार्गपालीपूजनादि चोक्तं हेमाद्रौ निर्णयामृते च स्कान्दे—

'प्रातर्गोवर्धनं पूज्य द्यूतं चापि समाचरेत् ।
भूषणीयास्तथा गावः पूज्याश्चा*वाहदोहनाः ॥'

गोवर्धनश्च गोमयेन कार्यश्चित्रेण वा । मन्त्रस्तु—

'गोवर्धन धराधार गोकुलत्राणकारक ।
बहु*बाहुकृतच्छाय गवां कोटिप्रदो भव ॥'

---

*तस्मादिति । शिवाभ्यां द्यूताऽऽचरणादित्यर्थः ।

"शङ्करस्तु पुरा द्यूतं ससर्ज सुमनोहरम् ।
कार्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवान् ॥
जितश्च शङ्करस्तत्र जयं लेभे च पार्वती ।
अतोऽर्थं शङ्करो दुःखी उमा नित्यं सुखोचिता ॥"

इति आदित्यपुराणात् । *दयिताभिरिति । कृत्यान्तरम् ।

"श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलङ्कृतैः ।
विशेषवच्च भोक्तव्यं प्रशस्तैर्बान्धवैः सह ॥
तस्यां रात्रौ प्रकर्तव्यं शय्यास्थानं सुशोभनम् ।
गन्धैर्वस्त्रैस्तथा पुष्पै रत्नैर्माल्यैरलङ्कृतम् ॥
दीपमालापरिक्षिप्तं तथा धूपेन धूपितम् ।
दयिताभिश्च सहितैर्नेया सा च भवेन्निशा ।
ते वै वस्त्रैश्च संपूज्या द्विजसम्बन्धिबान्धवाः ॥"

इति आदित्यपुराणात् ।

*आवाहदोहना इति । 'त्याज्ये वाहनदोहने' इति

*गोमन्त्रस्तु—

'लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता ।
घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ॥'

तत्रैव स्कान्दे—

*'ततोऽपराह्णसमये पूर्वस्यां दिशि भारत ।
मार्गपालीं प्रबध्नीयात्तुङ्गे स्तम्भेऽथ पादपे ॥
कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्मुने ।
दर्शयित्वा गजानश्वान्सायमस्यास्तले नयेत् ॥

---

आम्नात् । *बाहवः वृक्षाः *गोमन्त्रस्त्विति ।

"अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥"

इत्यभिलषितं प्रार्थ्य गोपूजां कुर्यात् । *तत इति ।

"प्रभातसमये राज्ञा तोषणीयास्तु ते जनाः ।
सुवासिनीभ्यो देयानि वस्त्राण्याभरणानि च ॥
सद्भावेन च सन्तोष्या दानेन च तथा द्विजाः ।
वस्त्रैस्ताम्बूलदानैश्च पुष्पकर्पूरकुङ्कुमैः ॥
भोजयेत्पूजयेद्यत्नादन्तःपुरनिवासिनीः ॥

(यद्यपि सुवासिनीशब्द ऊढासु कन्यासु भगिनीषु रूढः । तथापि विप्रादयोऽपीह ग्राह्याः आचारात् ।)

पदातिजनसंघातान् ग्रैवेयैः कञ्चुकैः शुभैः ।
स्वनामाङ्कैः स्वयं राजा तोषयेत्स्वजनान्पृथक् ॥
तथा गणाधिपत्यांश्च तथा मल्लान् नटान् भटान् ।
वृषभान्महिषांश्चैव युद्ध्यमानान्परस्परान् ॥
गजानश्वांश्च योधांश्च पदातीन्समलंकृतान् ।
मञ्चारूढः स्वयं पश्येन्नटनर्तकचारणान् ॥
कुद्दापयेत्त्रासयेच्च गोमहिष्यादिकं ततः ।

कृतहोमे द्विजेन्द्रैस्तु बध्नीयान्मार्गपालिकाम् ।
नमस्कारं ततः कुर्यान्मन्त्रेणानेन सुव्रत ॥
'मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे ।
विधेयैः पुत्रदाराद्यैः पुनरेहि व्रतस्य मे ॥'
नीराजनं च तत्रैव कार्यं राष्ट्रजयप्रदम् ।
राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः ।
मार्गपालीं समुल्लङ्घ्य नीरुजः स्युः सुखान्विताः ॥'

तत्रैवादित्यपुराणे—

'कुशकाशमयीं कुर्या (१) द्वाष्टिकां सुदृढां नवाम् ।
तामेकतो राजपुत्रा हीनवर्णास्तथान्यतः ॥
गृहीत्वा कर्षयेयुस्तां यथासारं मुहुर्मुहुः ।
जयेऽत्र हीनजातीनां जयो राज्ञस्तु वत्सरम् ॥'इति ॥

यमद्वितीया तु प्रतिपद्युता ग्राह्येत्युक्तं निर्णयामृतादौ । यमद्वितीया मध्याह्नव्यापिनी पूर्वविद्धा चेति हेमाद्रिः । अत्र विशेषो हेमाद्रौ स्कान्दे—

'ऊर्जे शुक्लद्वितीयायाम*पराह्णेऽर्चयेद्यमम् ।
स्नानं कृत्वा भानुजायां, यमलोकं न पश्यति ॥'इति ।
'ऊर्जे शुक्ले द्वितीयायां पूजितस्तर्पितो यमः ।
वेष्टितः किन्नरैर्हृष्टैस्तस्मै यच्छति वाञ्छितम् ॥'

---

वृषान्कर्षापयेद्गोभिरुक्तिप्रत्युक्तिवादिभिः ॥"
इत्युक्तं प्रातःकृत्यानन्तरमित्यर्थः ।

*अपराह्णे इति । अपराह्णव्यापिनी ग्राह्या, अपराह्णस्य कर्मकालत्वात् । दिनद्वये तद्व्याप्तावव्याप्तौ परा युग्मवाक्यात् । अपराह्णः पञ्चधाविभागपक्षेणेति सम्प्रदायः । द्विधापक्षेणेति न

---

(१)वष्टिका सूक्ष्मा रज्जुः ।

*तथा भविष्ये—

'प्रथमा श्रावणे मासि तथा भाद्रपदेऽपरा ।
तृतीयाऽश्वयुजे मासि चतुर्थी कार्तिके भवेत् ॥
श्रावणे कलुषा नाम तथा भाद्रे च निर्मला ।
आश्विने प्रेतसंचारा कार्तिके याम्यका मता ॥'

इत्युक्त्वा प्रथमायां*व्रतं(२)द्वितीयायां सरस्वतीपूजा तृतीयायां श्राद्धमुक्त्वा चतुर्थ्यामुक्तम्—

'कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ॥
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ।
अस्यां निजगृहे विप्र न भोक्तव्यं ततो नरैः ॥
स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः ॥
स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः ।
सर्वा भगिन्यः संपूज्या अभावे (१)प्रतिपन्नकाः ॥'

प्रतिपन्नाः मातृभगिन्य इति हेमाद्रिः ।

'पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर ।
मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप ॥
पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् ।

---

व्याः । *तथेति । यमद्वितीयाव्रतं द्वितीयाचतुष्टयसापेक्षं तत्र प्रथमादिक्रमेण कर्तव्यं प्रायश्चित्तादिकमित्यर्थः । *व्रतं किञ्चित्प्रायश्चित्तम् । पितृव्यसम्बन्धेन भगिनी पितृव्यपुत्री । मातुलस्य सुतेति दर्शनात् । प्रथमायां कलुषायां,द्वितीयायां निर्मलायां, तृतीयायां प्रेतसंचारायां, सर्वत्रापि भोक्तव्यमित्यस्यानुष-

---

(१)भगिनीत्वेन प्रतिपन्ना अन्याः प्रतिपन्नकाः ।

(२)द्वितीयायां श्राद्धं तृतीयायां सरस्वतीपूजेति पाठान्तरम् ॥

भोक्तव्यं*सहजायाश्च भगिन्या हस्ततः परम् ॥
*सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्धनम् ।
यस्यां तिथौ यमुनया यमराजदेवः
संभोजितः प्रतिजगत्स्वसृसौहृदेन ।
तस्यां स्वसाकरतलादिह यो भुनक्ति
प्राप्नोति रत्नसुखधान्यमनुत्तमं सः ॥'

*गौडास्तु—

'यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत् ।
अर्घ्यश्चात्र प्रदातव्यो यमाय*सहजद्वयैः ॥'

मन्त्रः—

'एह्येहि मार्तण्डज पाशहस्त यमान्तकालोकधरामरेश।
भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते॥'
*'भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् ।
प्रीतये यमराजस्य यमुनायां विशेषतः ॥'

ज्येष्ठाग्रजातेति वदेदिति स्मार्ताः इत्यन्नदानमित्य

---

ङ्गः । याम्यायामाह—*सहजाया इति । भोक्तव्यमिति वर्तते । *सर्वासु द्वितीयासु । स्वसायाः करतलादिति विग्रहः । आदन्तः स्वसाशब्दो द्रष्टव्यः । यमद्वितीया विधिमुक्त्वा भातृद्वितीयाविधिमाह -*गौडास्तु इति । आहुरिति सम्बन्धेनान्येषामप्यस्य कृत्यस्यावश्यकत्वं लभ्यते । *सहजद्वयैरिति । भातृभागिनीभिरित्यर्थः । पूजानन्तरं प्रणाममन्त्रः—

"धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज ।
पाहि मां किङ्करैः सार्द्धं सूर्यपुत्र नमोऽस्तु ते ॥
यमस्वसर्नमस्ते ऽस्तु यमुने लोकपूजिते ।
वरदा भव मे नित्यं सूर्यपुत्रि नमोऽस्तु ते ॥" इति ।

भ्रातुर्भोजनदाने मन्त्रमाह—*भ्रातरिति । 'ज्येष्ठा तु तवा*

प्याहुः । ब्रह्माण्डपुराणेपि—

'*या तु भोजयते नारी भ्रातरं युग्मके तिथौ ।
अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् ॥
भ्रातुरायुःक्षयो राजन्न भवेत्तत्र कर्हिचित् ॥' इति ॥

कार्तिकशुक्लनवमी युगादिः । सा पौर्वाह्णिकी ग्राह्या । शुक्लपक्षस्थत्वात् । अत्रापि पिण्डरहितं श्राद्धं कर्तव्यम् । अन्यत्प्रागुक्तम् । अत्रैव विष्णुत्रिरात्रमुक्तं हेमाद्रौ पाद्मे—

'कार्तिके शुक्लनवमीमवाप्य विजितेन्द्रियः ।
हरिं विधाय सौवर्णं तुलस्या सहितं विभुम् ॥
पूजयेद्विधिवद्भक्त्या व्रती तत्र दिनत्रयम् ।
एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम् ॥' इति ॥

कार्तिकशुक्लैकादश्यां भीष्मपञ्चकव्रतमुक्तं नारदीये-

---

ग्रजाता' इति पाठः । 'ज्येष्ठाग्रजाता' इति तु काल्पनिकः पाठः ।

*या त्विति ।

'कार्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् ।
या न कुर्याद्विनश्यन्ति भ्रातरः सप्तजन्मसु' ॥

इति शेषः । भगिनीं प्रति भ्रातुर्वाक्यम्—

'भद्रे भगिनि भो मात स्त्वदङ्घ्रिसरसीरुहे ।
श्रेयसे ऽद्य नमस्तुभ्यं मामतो ऽस्मि तवान्तिके ॥
भ्रातुर्वाक्यं ततः श्रुत्वा सत्वरं क्रियते तदा ।
अद्य भ्रातृमती भ्रातस्त्वया धन्या ऽस्मि मानद ॥
भोक्तव्यं ते ऽद्य मद्गेहे स्वायुषे मम मानद ॥' इति ।
सर्वा भगिन्यः संपूज्या ज्येष्ठा अपि कनिष्ठिकाः ।
वस्त्रादिना नमस्कार्या निजवित्तानुसारतः ॥
भ्रातुरायुष्यवृद्ध्यर्थं भगिनीभिर्यमस्य वै ।

'अतोऽ*नरैः प्रयत्नेन कर्तव्यं भीष्मपञ्चकम् ।

---

प्रतिमा पूजनीया च प्रयत्नेन विधानतः ॥
मार्कण्डेयो बलिर्व्यासो हनुमांश्च विभीषणः ।
कृपो द्रौणिः पर्शुराम अष्टैते चिरजीविनः ॥
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
चिरञ्जीवी यथा त्वं भो तथा मे भ्रातरं कुरु ॥" इति ।

कार्तिकशुक्लचतुर्थ्यां नागव्रतं 'युगं मध्यं दिनं यत्र' इत्यादि प्रागुक्तकार्तिकशुक्लषष्ठ्यष्टमीनवमीकृत्यं कृत्यरत्नावल्यादौ द्रष्टव्यम् । कार्तिके कूष्माण्डदानं कुर्यात् ।

"कार्तिके मासि कूष्माण्डं सहिरण्यं सरत्नकम् ।
गुप्तदानेन सहितं दीयते मुनिपुङ्गव ॥
ते धन्या कृतकृत्यास्ते तैरात्मा तारितो मुने ॥"

इति पाद्मात् । नवम्यां तद्दानं ह्याचारात् । तत्र मन्त्रः—

"ब्रह्महत्यादिपापानां ब्रह्मणा निर्मितं पुरा ।
कूष्माण्डं बहुबीजाढ्यमतः शान्तिं प्रयच्छ मे ॥" इति ।

क्षयार्थमिति शेषः । न चेदं पठनीयम् । अनाम्नातेष्वमन्त्रत्वमि-ति वाक्यात् । कूष्माण्डस्तु स्त्रिया न च्छेद्यः ।

"दीपप्रशमनं पुंसः कूष्माण्डच्छेदनं स्त्रियः ।
अचिरेणैव कालेन तस्य वंशक्षयो भवेत् ॥"

इति दोषश्रवणात् । विष्णुत्रिरात्रमिति पाठः । तुलस्यपि सौवर्णी इति केचित् ।

*नरैरिति । सर्वेषामधिकारः ।
"ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः ।
प्राप्नोति वैष्णवं स्थानं तत्कृत्वा भीष्मपञ्चकम् ॥
ब्रह्महा मद्यपःस्तेयी गुरुगामी सदाऽनृती ।
मुच्यते पातकान्मर्त्यः कृत्वेदं भीष्मपञ्चकम् ॥"

कार्तिकस्यामले पक्षे*स्नात्वा सम्यग् यतव्रतः ॥
एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ॥' इति ।
तद्विधिस्तु गोमयेन स्नात्वा मौनी पञ्चामृतैः पञ्चगव्यैर्विष्णुं संस्नाप्य*संपूज्य पायसं निवेद्य द्वादशाक्षरमष्टोत्तरशतं जप्त्वा-'ॐ नमो विष्णवे' इति षडक्षरेण घृताक्तान्यवान्व्रीहींश्चाष्टोत्तरशतं हुत्वा भूमौ स्वपेत् । ए-

---

इत्युक्तेश्च । *स्नात्वेति प्रातःस्नानादिनित्यकृत्योपलक्षणम् । अत्र—

'व्रती स्नात्वा विधानेन मध्याह्ने च तथा पुनः ।'

इति वचनाद्व्रताङ्गं प्रातर्मध्याह्ने च मृद्गोमयाभ्यां स्नानमावश्यकम् । नद्यां गोमयेन स्नात्वेति ग्रन्थोऽप्येतत्परः । गोमयपदं मृदोऽप्युपलक्षणम् । ततो देवर्षिपितृतर्पणं कार्यम् ।

'यवव्रीहितिलैः सम्यक् पितॄंसन्तर्पयेत्क्रमात् ।'

इति वाक्याद् यवाद्युक्त्या देवर्षिलाभः । *संपूज्येति । पूजा चोक्ता नारदीये—

"स्नापयेत्परया भक्त्या गन्धचन्दनवारिणा ।
चन्दनेन सुगन्धेन कुङ्कुमेनाथ केशवम् ॥
कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजम् ।
अर्चयेदुचितैः पुष्पैर्गन्धधूपसमन्वितैः ॥
गुग्गुलुं घृतसंयुक्तं दददक्षयभक्तिमान् ।
दीपकन्तु दिवा रात्रौ दद्यात्पञ्चदिनानि तु ॥
नैवेद्यं देवदेवस्य परमान्नं निवेदयेत् ।
(परमान्नं हविष्यान्नं पायसं वा ।)
एवमभ्यर्च्य देवेशं स्तुत्वा चैव प्रणम्य च ॥
द्वादशाक्षरमन्त्रं च जपेदष्टोत्तरं शतम् ।
('ॐनमो भगवते वासुदेवाय इति द्वादशाक्षरमन्त्रः ।)
जुहुयात्तु घृताभ्यक्तं तिलव्रीहियवं व्रती ॥

वं पञ्चदिनेषु कुर्यात्। विशेषस्त्वा*द्येह्नि हरेः पादौ कमलैः संपूज्य त्रिर्गोमयं प्राश्यम्, द्वितीयेह्नि बिल्वपत्रैर्जानुनी संपूज्य गोमूत्रम्, त्रयोदश्यां भृङ्गराजेन नाभिं संपूज्य क्षीरम्, चतुर्दश्यां करवीरैः स्कन्धं संपूज्य दधि, पौर्णमास्यां होमान्ते लौहीं पापप्रतिमां खड्गचक्रहस्तां कृष्णवस्त्रेण वेष्टितां प्रस्थतिलोपरिस्थां कृत्वा धर्मराजनामभिः करवीरैः संपूज्य—

'यदन्यजन्मनि कृतमिह जन्मनि वा पुनः।
तत्सर्वं प्रशमं यातु मत्पापं तव पूजनात्॥'

इति पुष्पाञ्जलिं क्षिप्त्वा कृष्णप्रतिमां च संपूज्य विप्राय दत्त्वा विप्रान्संभोज्य दक्षिणां दत्त्वा पञ्चगव्यं प्राश्य पौर्णमास्यां नक्तं भुञ्जीतेति लघुनारदीये। पञ्चग-

---

षडक्षरेण होमस्तु स्वाहाकारान्वितेन च।"
'ॐनमो विष्णवे'इति षडक्षरः। ग्रन्थे च तिलहोमोऽपि बोध्यः।

*आद्येऽह्नीति।

"प्रथमेऽह्नि हरेः पादौ पूजयेत्कमलैर्द्विजः।
द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत्॥
पूजयेच्च तृतीयेऽह्नि नाभिंभृङ्गारकेण तु।
(भृङ्गारकं भृङ्गराजः इति मयूखः।)
बाणबिल्वजपाभिस्तु ततः स्कन्धौ समर्चयेत्॥
अर्चयित्वा हृषीकेशमेकादश्यां विशेषतः।
त्रिः प्राश्य गोमयं सम्यक् गोमूत्रमपरेऽहनि॥
क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि।
संप्राश्य कायशुद्ध्यर्थं लङ्घनीयं च तुर्दिनम्॥
पञ्चमे तु दिने स्नात्वा विधिवत्पूज्य केशवम्।
पापस्य प्रतिमा कार्या रौद्र[illegible]॥

व्यप्राशनं षडक्षरेणेति हेमाद्रिः। हेमाद्रौ भाविष्ये तु*शाकैर्मुन्यन्नैर्वा*पञ्चाहं वर्तनमुक्तम् । अन्तेऽप्युक्तम्-

'यद्भीष्मपञ्चकमिति प्रथितं पृथिव्या-
मेकादशीप्रभृतिपञ्चदशीनिरुद्धम् ।
मुन्यन्नभोजनपरस्य नरस्य तस्मि-
न्निष्टं फलं दिशति पाण्डव शार्ङ्गधन्वा ॥' इति ।

तथा पाद्मे-

'पञ्चाहं पञ्चगव्याशी भीष्मायार्घ्यं च पञ्चसु ।
अहःस्वपि तथा दद्यान्मन्त्रेणानेन सुव्रत ॥'

---

इत्यादि । कृष्णप्रतिमादानानन्तरम् ।

दद्याद्धिरण्यं गां चैव कृष्णो मे प्रीयतामिति ।
भोजयेद्ब्राह्मणान्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥
व्रतोपदेष्टारमपि पूजयेद्वस्त्रभूषणैः ।
ततो नक्तं समश्नीयात्पञ्चगव्यपुरःसरम् ॥
एवं सम्यक् समाप्यं स्याद्यथोक्तं व्रतमुत्तमम् ॥"

इति लघुनारदीयोक्तं पाञ्चाह्निकम् । *शाकैरिति । इदं चाशक्तस्य ।

"एकादशीं समारभ्य विज्ञेयं भीष्मपञ्चकम् ।
दुष्करं सत्त्वहीनानामशक्यं बालचेतसाम् ॥
शाकाहारेण मुन्यन्नैः कृष्णार्चनपरैर्नरैः ।
पत्याज्ञया सधवया विधवाभिः पराज्ञया ॥
नित्यं स्नानेन दानेन कार्तिकीं यावदेव तु ।
वैश्वदेवस्तु कर्तव्यो विष्णुध्यानपरायणैः ॥"

वैश्वदेवः सर्वदेवस्य व्याहृतिहोमः।अत्रापि पापप्रतिमा श्रीकृष्णप्रतिमा चावश्यं पूज्या देया च। अनयोः पक्षयोः भीष्मार्घ्यदानमिच्छन्ति । *पञ्चाहमिति । एतच्च षडहसाध्यम्। आद्ये पद्मैः पादौ,

'सत्यव्रताय शुचये गाङ्गेयाय महात्मने ।
भीष्मायैतद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे ॥'
('वैयाघ्रपद्यगोत्राय' इति च ।)
सर्घ्येनानेन मन्त्रेण तर्पणं सार्ववर्णिकम् ।' इति ॥

*कार्तिकशुक्लद्वादश्यां रेवतीनक्षत्रयोगरहितायां पारणं कार्यम् । तदुक्तम्—

आभाकासितपक्षेषु मैत्रश्रवणरेवती ।
संगमे नहि भोक्तव्यं द्वादश द्वादशीर्हरेत् ॥' इति ।

यदा तु रेवतीयोगरहिता द्वादशी सर्वथा न लभ्यते तदा रेवत्याश्चतुर्थपादं वर्जयेत् । वचनं तु प्रागुक्तम् । ल-

---

द्वितीये बिल्वैर्जानुनी, तृतीये जानुजघनानि तुलसीपत्रैः, चतुर्थे जात्यादिपुष्पैः स्कन्धौ, पञ्चमे मालतीपुष्पैः शिरः संपूज्य भीष्मार्घ्यं दत्वा गोमयगोमूत्रपयोदधिघृतानि क्रमेण पञ्चसु दिनेषु पिबेत् । रात्रौ च सन्ध्यामुपास्य मूलमन्त्रजपः । एवं पञ्चदिनानि उपोष्य षष्ठदिने विधिवत्स्नात्वा पक्वान्नेन पञ्च ब्राह्मणान्संभोज्य बन्धुभिः सह रात्रौ भुञ्जीत । अत्र एकादश्यां सुवर्णं, द्वादश्यां वस्त्रं, त्रयोदश्यां गौः, चतुर्दश्यां घृतपायसं, पूर्णिमायां श्वेतकृष्णतिला वस्त्रं च देयम् । मैथुनानृतमधुमांसताम्बुलाभ्यङ्गादि वर्जयेत् । पाद्मे पापादिप्रतिमा नोक्ता ।

"वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम् ॥
अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे ।
वसूनामवताराय शन्तनोरात्मजाय च ॥
अर्घ्यं ददामि भीष्माय सोमवंशोद्भवाय च ॥" इति ।

*कार्तिकशुक्लद्वादश्यामिति । द्वादशीकृत्यमेकादशीकृत्यानन्तरं द्रष्टव्यम् । अग्रे च न लिखति 'आचार्याः 'कृत्वा

घुनारदीये—

'कार्तिके शुक्लपक्षस्य कृत्वा चैकादशीं नरः ।
प्रातर्दत्त्वा शुभान्कुम्भान्प्रयाति हरिमन्दिरम् ॥'

मदनरत्ने वाराहे—

'एकादशी सोमयुक्ता कार्तिके मासि भामिनि ।
उत्त(१)राभाद्रसंयोगे अनन्ता सा प्रकीर्तिता ॥
तस्यां यत्क्रियते भद्रे सर्वमानन्त्यमश्नुते ॥'

अस्यामेव*रात्रौ देवोत्थापनमुक्तं हेमाद्रौ ब्राह्मे—

'एकादश्यां च शुक्लायां कार्तिके मासि केशवम् ।
प्रसुप्तं*बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥' इति ॥

मदनरत्ने भविष्ये—

'कार्तिके शुक्लपक्षे तु एकादश्यां पृथासुत ।
मन्त्रेणानेन राजेन्द्र देवमुत्थापयेद्द्विजः ॥'

रामार्चनचन्द्रिकादौ तु द्वादश्यामुक्तम् ।

---

न निवर्तन्ते' इति न्यायात् । *रात्राविति प्रमादात् रात्रौ प्रसुप्त-मित्यन्वयात् । अन्यथा

'निशिस्वापो दिवोत्थानं सन्ध्यायां परिवर्तनम् ।'

इत्यनेन विरोधात् । अन्ये तु यथाश्रुतानुरोधेन रात्रावेव बोधनमाहुः । *बोधयेदिति । बोधनप्रकारश्च ब्राह्मे—

"नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममङ्गलैः ।
वीणापणवशब्दैश्च पुराणश्रवणेन च ॥
वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः ॥"

इति तत्रैव । इत्युत्थापनविधिः । द्वादश्यां प्रबोधे रेवत्यन्तपादो ग्राह्यः ।

"आभाकासितपक्षेषु मैत्रश्रवणरेवती ।
आदिमध्यावसानेषु प्रस्वापावर्तनोत्सवाः ॥"

---

(१) उत्तराषाढ इति क्वचित्पुस्तके पाठः ।

'पारणाहे पूर्वरात्रे घण्टादीन्वादयेन्मुहुः ।' इति ।
अत्र देशाचारतो व्यवस्था ।

'तत्रैव देवदेवस्य स्नानं पूर्वं महद्भवेत् ।

---

इति वचनात् । मात्स्ये—

'निशिस्वापो दिवोत्थानं सन्ध्यादौ परिवर्तनम् ।'

निशादौ नक्षत्रपादयोगाभावे नक्षत्रमात्रयोगो ग्राह्यः ।

"पादयोगो यदा न स्यादृक्षेणापि तदा भवेत् ॥"

इति वाराहात् ।

"विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥"

इति विष्णुधर्माच्च । द्वादश्यामेकदेशेनापि ऋक्षयोगाभावे एकादश्यां त्रयोदश्यां वा तत्तदृक्षयोग एव निशादिवेलानादरेण प्रस्वापादि कार्यम् ।

"अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरेः ।
पादयोगेन कर्तव्ये नाहोरात्रं विचिन्तयेत् ॥"

इति जीमूतवाहनोक्तवचनात् । एवञ्च द्वादश्यां निशादिवेलादरेऽन्यतिथौ च नक्षत्रपादयोगादरे नियते सति यदा द्वादशीषु निशादेरन्यत्र तत्तदृक्षमात्रयोगः अन्यतिथौ च तदितरनक्षत्रस्य योगः तदा द्वादशीषु सन्ध्यायां प्रस्वापादिः ।

"द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
आभाकासितपक्षेषु शयनावर्तनादिकम् ॥"

इति वाराहात् । सन्धिसमयः सायंसन्ध्यैव शयनादौ तदन्वयः । प्रबोधोऽपि तत्रैव कार्यः ।

"रेवत्यन्तो यदा रात्रौ द्वादश्यां च समागतः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥"

इति जीमूतधृतवाक्यात् । अत्र 'मैत्राद्यपादे' इत्यादिबहुषु च-

महापूजां ततः कृत्वा देवमुत्थापयेत्सुधीः ॥'

मन्त्रास्तु वाराहपुराणे उक्ताः—

'ॐ ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दित वन्दनीय ।
बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव ॥

इयं तु द्वादशी देवप्रबोधार्थं विनिर्मिता ।
त्वयैव सर्वलोकानां हितार्थं शेषशायिना ॥
उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् ॥
उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव ।
*गता मेघा वियच्चैव निर्मलं निर्मला दिशः ॥
शारदानि च पुष्पाणि गृहाण मम केशव ॥
इदं विष्णुरिति प्रोक्तो मन्त्र उत्थापने हरेः ॥' इति ।

एवं देवमुत्थाप्य तदग्रे चातुर्मास्यव्रतसमाप्तिं कुर्यात् ।

तदुक्तं भारते—

'चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समपयेत् ॥'

लघुनारदीये—

'चातुर्मास्यव्रतानां च समाप्तिः कार्तिके स्मृता ॥'

मन्त्रश्च निर्णयामृते सनत्कुमारेणोक्तः—

'इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।

---

तुर्थभागवाचिपादपदोपादानाच्चतुर्धा अनुराधारेवत्यौ विभज्य आद्यन्तपादयोरेव स्वापबोधौ कार्यौ । न चादिमध्यावसानेष्विति वाक्ये 'समं स्यादश्रुतत्वात्' इति न्यायेन त्रेधा विभागः प्रतीयते इति वाच्यम् । वचनान्तरेषु पादपदरूपविशेषश्रवणेनाऽश्रुतत्वादिति हेतोरसिद्धेः । श्रवणस्य तु त्रेधाविभक्तस्य मध्यभाग एव ग्राह्यः 'श्रुतेश्च मध्ये परिवर्तमेति' इति मध्यपदोपादानादिति । *गता मेघा

न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ॥' इति ।

अथ वाराहोक्तो बोधनीविधिः । एकादश्यां रात्रौ कुम्भे घृतपात्रोपरि हैमं माषमितं मत्स्यं पञ्चामृतेन संस्नाप्य कुङ्कुमपीतवस्त्रयुगपद्माद्यैः संपूज्य मत्स्यादिदशावतारान्संपूज्य जागरं कृत्वा प्रातर्देवमाचार्यं च वस्त्राद्यैः संपूज्य—

'जगदादिर्जगद्रूपो जगदादिरनादिमान् ।
जगदाद्यो जगद्योनिः प्रीयतां मे जनार्दनः ॥'

इति नत्वा दक्षिणां दत्त्वा ब्राह्मणान्भोजयेदिति । तथा ब्राह्मे—

'महातूर्यरवे रात्रौ भ्रामयेत्स्यन्दने स्थितम् ।
उत्थितं देवदेवेशं नगरे पार्थिवः स्वयम् ॥
चतुरो वार्षिकान्मासान्नियमं यस्य यत्कृतम् ।
कथयित्वा द्विजेभ्यस्तद्द्याद्भक्त्या*सदक्षिणम् ॥'

---

इति मन्त्रेण प्रबोधानन्तरं पुष्पाञ्जलिर्देयो मन्त्रलिङ्गात् । अत्र पूर्वदिने रात्रौ दशावतारान्सम्पूज्य जागरणं कृत्वा प्रातर्देवमाचार्यञ्च वस्त्राद्यैः सम्पूज्य—

"जगदादिर्जगद्रूपो जगदादिरनादिमान् ।
जगदाद्यो जगद्योनिः प्रीयतां मे जनार्दनः ॥"

इति तान् नत्वा दक्षिणां दत्त्वा ब्राह्मणान्सम्भोज्य स्वयं भुञ्जीतेति विधिमप्याहुः । चतुर्द्धा एकादशीद्वादशीपौर्णमासीसङ्क्रान्त्यन्यतमपक्षेण । एवं "चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि" इत्यनियमपक्षेऽपि उत्थापनावधीत्यभिधानात् ।

*सदक्षिणमिति ।
'दत्त्वा विसर्जयेद्विप्रं ततो भुञ्जीत च स्वयम् ।'
इत्युत्तरार्द्धम् । 'निद्रां त्यजति कार्तिक्याम्' इति पूर्णिमा-

यस्य भक्ष्यस्य नियमः कृतस्तद्द्रव्यं दद्यादित्यर्थः । *इदं शुक्रास्तादावपि कार्यम् । आशौचे तु पूजामन्येन कारयेत् । कार्तिकशुक्लद्वादशी पौर्णमासी च मन्वादिः । सा पौर्वाह्णिकी ग्राह्या । अन्यत्प्रागुक्तम् ॥

कार्तिकशुक्लचतुर्दशी वैकुण्ठसंज्ञा । सा विष्णुपूजायां रात्रिव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तौ निशीथप्रदोषोभयव्यापिनी ग्राह्या । तदुक्तं हेमाद्रौ भविष्ये-

'कार्तिकस्यासिते पक्षे चतुर्दश्यां नराधिप ।
सोपवासस्तु संपूज्य हरिं रात्रौ जितेन्द्रियः ॥' इति ।

अस्या एव*विश्वेश्वरप्रतिष्ठादिनत्वात्तत्प्रीत्यर्थं यदोपवासादि क्रियते तदाऽरुणोदयव्यापिनी ग्राह्या । तदुक्तं त्रिस्थलीसेतौ सनत्कुमारसंहितायाम्—

'वर्षे च हेमलम्बाख्ये मासे श्रीमति कार्तिके ।
शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति ॥
महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके ।
*स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत् ॥'

इति ।

---

प्रबोधपक्षेऽपि व्रतसमाप्तिर्द्वादश्यामेवेति बोध्यम् । *इदं चातुर्मास्यव्रतसमापनम्, नियतकालत्वादिति शेषः ।

*विश्वेश्वरेति ।

"संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाऽकरोत् ।
स्वयमेव स्वमात्मानं चरन्पाशुपतव्रतम् ॥
जपन्वै शतरुद्रीयं पूजयंस्तमहर्निशम् ।
स्वयमेव स्वमात्मानं तत्रैवोवास शंकरः ॥"

इति वचनात् । *स्नात्वेति ।

'निवासस्थानतोऽभ्येत्य सार्द्धं विश्वगणेश्वरैः ।'

*तत्पूर्वदिने चोपवासः कार्यः ।

'ततः प्रभाते विमले कृत्वा पूजां महाद्भुताम् ।
दण्डपाणेर्महाधाम्नि वनेऽस्मिन्कृतपारणः ॥'

इति तत्रैवोक्तेः । शिवरहस्येऽपि पूजाजागराद्युक्त्वोक्तम्—

'ततोऽरुणोदये जाते स्नात्वा स्नात्वा च भस्मना ।
संध्यां समाप्य विश्वेशं मामभ्यर्च्य यथाविधि ॥
मद्भक्तान्भोजयामासुर्ऋषयो बुभुजुस्ततः ॥' इति ।

अत्र कार्तिकव्रतोद्यापनं पाद्मे कार्तिकमाहात्म्ये उक्तम्—

'अथोर्जव्रतिनः सम्यगुद्यापनविधिं शृणु ।
ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती ॥
तुलस्या उपरिष्टात्तु कुर्यान्मण्डपिकां*शुभाम् ।

इति पूर्वार्द्धम् । देव्या सह अत्र प्रकृतिस्वरूपेणार्थवादेन कृतोपवासोऽरुणोदये मणिकर्ण्यां स्नात्वा विश्वेश्वरं पूजयेत् । तस्य विश्वेश्वरप्रतिष्ठादिनत्वादित्यर्थः । *तत्पूर्वदिने चेति । प्राभातिकपारणाविधेश्च पूर्वदिने उपवासः चतुर्दशीयुक्ताऽरुणोदयवत्यहोरात्रे कार्य इत्यर्थः । पूजादावरुणोदयव्यापिनी ग्राह्या, 'कर्मणो यस्य यः कालः' इति वचनात् । अत्र चतुर्दश्यामरुणोदये मणिकर्णिकायां स्नात्वा विश्वेश्वरपूजां कृत्वोपवासं सङ्कल्पयेत् । ततो रात्रिपूजाजागरणानन्तरं द्वितीयेऽह्नि अरुणोदयस्नानं महापूजां कृत्वा पारणं कुर्यादित्यर्थं जनेष्वात्मानं विशेषयन्कश्चिज्जानाति न तु हेमाद्रिमारभ्यान्यः कश्चनेति उज्झितः । तत्फलं तु काशीखण्डे—

"कार्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् ।
स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरावृत्तिः ॥" इति ।

उद्यापनं च व्रतसम्पूर्णतार्थम् ।

'व्रतसम्पूर्णतार्थाय विष्णुप्रीत्यर्थमेव च ।'

इति वचनात् ।

तुलसीमूलदेशे च*सर्वतोभद्रमेव च ॥
तस्योपरिष्टात्कलशं पञ्चरत्नसमन्वितम् ।
पूजयेत्तत्र देवेशं सौवर्णं गुर्वनुज्ञया ॥
रात्रौ जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः ।
ततस्तु पौर्णमास्यां वै सपत्नीकान्द्विजोत्तमान् ॥
त्रिंशन्मितानथैकं वा स्वशक्त्या वा *निमन्त्रयेत् ।
अतोदेवा इति द्वाभ्यां जुहुयात्ति*लपायसम् ॥

*शुभामिति ।
'सुतोरणां चतुर्द्वारां पुष्पचामरशोभिताम् ।
द्वारेषु द्वारपालाँश्च पूजयेन्मृन्मयान्पृथक् ॥
पुण्यशीलं सुशीलं च जयं विजयमेव च ॥'
*सर्वतोभद्रमिति ।
'चतुर्भिर्वर्णकैः सम्यक् शोभाढ्यं समलङ्कृतम् ।' इति ।

एतेन सर्वतोभद्रमण्डलदेवताऽऽवाहनादि सूचितम् । तच्च नवरात्रे दर्शितम् । कलशश्च सपिधानः कार्यः । पिधानं च महाफलादि । तत्र पिधानोपरि सौवर्णं विष्णुं षोडशोपचारैः पूजयेदित्यर्थः । विष्णुश्च केशवादीनां चतुर्विंशतीनां मध्येऽन्यतमः ।

"पूजयेत्तत्र देवेशं शङ्खचक्रगदाधरम् ।
पीतकौशेयवसनं युक्तं जलधिकन्यया ॥"
इति वाक्यात् । शङ्खादेः क्रमविवक्षायां तु केशव एव ।
'इन्द्रादिलोकपालांश्च मण्डपे पूजयेद्व्रती ।'
वाद्यादीत्यादिना नृत्यादिग्रहः । *निमन्त्रयेदिति ।
'ततस्तान्भोजयेद्विप्रान्पायसान्नादिना व्रती ।'
*तिलपायसमिति ।
"प्रीत्यर्थं देवदेवस्य देवानां च पृथक्पृथक् ।
दक्षिणां च यथाशक्ति प्रदद्यात्प्रणमेच्च तान् ॥

ततो गां कपिलां दद्यात्पूजयेद्विधिवद्*गुरुम् ॥' इति ।

देवदेवं समभ्यर्च्य देवीं च तुलसीं तथा ॥"

*गुरुमिति । वस्त्रालङ्कारादिभिरिति शेषः ।

"सपत्नीकं समभ्यर्च्य तांश्च विप्रान्समर्चयेत् ।
युष्मत्प्रसादाद्देवेश प्रसन्नो भव सर्वदा ॥
व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया ।
तत्सर्वं नाशमायातु स्थिरा मे चास्तु सन्ततिः ॥
इति क्षमाप्य तान् विप्रान्प्रसाद्य च विसर्जयेत् ।
तामर्चां गुरवे दद्याद्वस्त्रयुक्तां तदा व्रती ॥
ततः सुहृद्गुरुयुतः स्वयं भुञ्जीत भक्तिमान् ॥" इति ।

कृत्यरत्नार्णवे—

"पौर्णमास्यां तु सम्पूज्यो भक्त्या दामोदरः सदा ।
तस्मिन्नहनि यत्नेन कर्तव्यं नक्तभोजनम् ॥"

अत्र तुलसीविवाहविधिर्विष्णुयामले—

"आदात्रेत्राथ तुलसी वने वा स्वगृहेऽपि वा ।
मासत्रयेण संवर्द्ध्या ततो यजनमारभेत् ॥
सौम्यादाने प्रकर्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्तिके मासि भीष्मपञ्चादिनेऽथवा ॥
वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डं वेदीं विवाहवत् ॥
ब्राह्मणान्दैशिकं चैव चतुरश्च तथा द्विजः ।
गृहयज्ञं पुरः कृत्वा मातॄणां यजनन्ततः ॥
कृत्वा नान्दीमुखश्राद्धं सौवर्णं स्थापयेद्धरिम् ।
कृत्वा च रौप्यतुलसीं लग्ने त्वस्तमिते रवौ ॥

(गोधूलिलग्ने इत्यर्थः ।)

सम्पूज्यालङ्कृतां तां च प्रदद्याद्विधिना हरेः ।

वासश्रुतेन मन्त्रेण कङ्कणं पाणिपल्लवे ॥
विवाहकर्मवत्सर्वं कर्तव्यं दैशिकोत्तमैः ।
को अदादिति मन्त्रेण करग्राहो विधीयते ॥
कर्तव्यश्च ततो होमो विशेषाद्विधिपूर्वकम् ।
आचार्यो वेदिका कुण्डे जुहुयाच्च नवाहुतीः ॥"

स्विष्टकृतोऽनन्तराः । ॐनमो भगवते केशवाय स्वाहा, ॐनारायणाय, माधवाय, गोविन्दाय, विष्णवे, मधुसूदनाय, त्रिविक्रमाय, वामनाय, श्रीधराय, हृषीकेशाय, पद्मनाभाय, दामोदराय, उपेन्द्राय, वासुदेवाय, अनिरुद्धाय, अच्युताय, अनन्ताय, गदिने, चक्रिणे, विश्वक्सेनाय, वैकुण्ठाय, जनार्दनाय, मुकुन्दाय, अधोक्षजाय ।

"यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः ।
प्रदक्षिणाः प्रकुर्वीत चतस्रो विष्णुना सह ॥"

तुलस्या इति शेषः ।

"तुलसीपाणिग्रहणे वेदिकायां विभावसौ ।
शतकुम्भं जपेत्सूक्तं पावमानीर्विशेषतः ॥
जीवसूक्तं पुनर्जप्त्वा नवसूक्तं तथैव च ।
पठेयुः शान्तिकाध्यायान् तथा वैष्णवसंहितान् ।
गायन्ति मङ्गलं नार्यो भेरितूर्यादिनिःस्वनैः ।
शङ्खदुन्दुभिनिर्घोषैर्मङ्गलं विधिमाचरेत् ॥
दद्यात्पूर्णाहुतिं पश्चादभिषेकविधिं ततः ।
ब्रह्मणे वृषभं दद्यादाचार्यं परिधाप्य च ॥
गोपदं च तथा शय्यामाचार्याय प्रदापयेत् ।
आजन्मोपार्जितं पापं दर्शनेन प्रणश्यति ॥
वापयेत्तुलसीं यस्तु सेवयेच्च प्रयत्नतः ।
प्रतिष्ठाप्य यथोक्तेन विष्णुना सह माधवः ॥

कार्त्तिकी पौर्णमासी परा ग्राह्या । 'अमापौर्णमास्यौ परे' इति दीपिकोक्तेः । अत्र विशेषो हेमाद्रौ ब्राह्मे—

'पुण्या महाकार्तिकी स्याज्जीवेन्दोः कृत्तिकासु च ।'

तथा—

'आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥
यदा तु याम्यं भवति ऋक्षं तस्यां तिथौ क्वचित् ।
तिथिः सापि महापुण्या मुनिभिः परिकीर्तिता ॥
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा ॥' इति ।

पाद्मे—

'विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वतिदुर्लभः ॥
पद्मकं पुष्करे प्राप्य कपिलां यः प्रयच्छति ।
स हित्वा सर्वपापानि वैष्णवं लभते पदम् ॥'

यमः—

'कार्तिक्यां पुष्करे स्नातः सर्वपापैः प्रमुच्यते ।
माघ्यां स्नातः प्रयागे तु मुच्यते सर्वकिल्बिषैः ॥'

अस्यामेव सायंकाले मत्स्यावतारो जात इत्युक्तं पाद्मे कार्तिकमाहात्म्ये—

'वरान्दत्त्वा यतो विष्णुर्मत्स्यरूप्यभवत्ततः ।
तस्यां दत्तं हुतं जप्तं तदक्षय्यफलं स्मृतम् ॥' इति ।

---

स मोक्षं लभते जन्तुर्विष्णुलोकं तथाऽक्षयम् ।
प्राप्नोति विपुलान्भोगान् विष्णुना सह मोदते ॥
प्रतिष्ठा श्रीतुलस्यास्तु इत्युक्ता [illegible] ॥"

इति कार्तिकमासः ।

अत्र त्रिपुरोत्सव उक्तो भार्गवार्चनदीपिकायाम्—

'पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः ।
दद्यादनेन मन्त्रेण प्रदीपांश्च सुरालये ॥
कीटाः पतङ्गा मशकाश्च वृक्षा
जले स्थले ये विचरन्ति जीवाः ।
दृष्ट्वा प्रदीपं न च जन्मभागिनो
भवन्ति नित्यं श्वपचा हि विप्राः ॥'

अत्र वृषोत्सर्गोऽतिप्रशस्तः । तदुक्तं मात्स्ये—

'कार्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ।
शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम् ॥' इति ।

अत्र कार्तिकेयदर्शनमुक्तं काशीखण्डे—

'कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥'

इति श्रीकमलाकरभट्टकृते निर्णयसिन्धौ द्वितीयपरिच्छेदे कार्तिकमासः ॥

वृश्चिके पूर्वाः षोडश घटिकाः पुण्याः (१)(शेषं प्राग्वत्) । मार्गशीर्षकृष्णाष्टमी कालाष्टमी । सा च रात्रिव्यापिनी ग्राह्या ।

'मार्गशीर्षसिताष्टम्यां कालभैरवसन्निधौ ।
उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते ॥'

इति काशीखण्डाद्रात्रिव्रतत्वावगतेः ।

'रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः ।'

इति ब्रह्मवैवर्ताच्च । *दिनद्वयेंऽशतो रात्रिव्याप्तावुत्तरैव । भैरवोत्पत्तेः प्रदोषकालीनत्वादिति केचित । तन्न,

---

अथ कालाष्टमीनिर्णयः । केषांचिन्मतमाह—*दिनद्वये इ-

---

(१) कंसान्तर्गतं क पुस्तके नास्ति ।

शिवरहस्ये*मध्याह्ने भैरवोत्पत्तेः श्रवणात् । तथा च तत्रैव—

'नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ ।'

इत्युपक्रम्य ब्रह्मणा रुद्रेऽवज्ञाते उक्तम्—

'तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः ।
आविरासीत्तदा लोकान्भीषयन्नखिलानपि ॥' इति ।

अत्रो*पवास एव प्रधानमित्युक्तं तत्रैव—

'उपोषणस्याङ्गभूतमर्घ्यदानमिह स्मृतम् ।
तथा जागरणं रात्रौ पूजा यामचतुष्टये ॥'

संध्यायामपि पूजैवोक्ता । (तेन(१)मध्याह्नव्यापिनी युक्ता ।) दिनद्वयेऽशतः संपूर्णायां वा*तद्व्याप्तौ पूर्वैव । पूर्वोक्तवचनात् । पारणा तु प्रातरेव ।

---

ति । *मध्याह्ने इति । नत्वेतावता जन्मकालव्यापित्वान्मध्याह्नव्यापिनीति भ्रमः कार्यः । शिवरहस्ये मध्याह्नानन्तरम्—

'कृत्तिवासेश्वरं प्रापुर्देवा बिल्वादिसाधनाः ।'

इति बहुकृत्यकलापमुक्त्वा भैरवाविर्भावमुक्त्वा 'सूर्योऽस्तमुपागमत्'इत्यभिधानेन मध्याह्ने तदाऽऽविर्भावानिश्चयात् । अस्तु वा मध्याह्ने तदाविर्भावः । तथापि तत्कालीनतिथिर्ग्राह्येत्यत्र न किञ्चिन्मानमस्ति । जन्माह्नव्यादौ तु पूजारूपकर्मकालत्वेनैव तिथिर्व्याप्तिर्गृह्यते न तु जन्मकालत्वेनेति । अत एव यामचतुष्टयपूजासन्ध्यापूजेत्यादिकर्मकालत्वेन रात्रिव्यापिनीमङ्गीकृत्य मध्याह्नव्यापिनीं परित्यक्ष्यति न चेत्यादिना । *उपवास एवेति । उपवासजागरणे प्रधानमिति अपरं मतम् । पूजोपवासजागरणानि प्रधानानीत्येकम् । *तद्व्याप्तौ रात्रिव्याप्तौ । अत्रोपवासादेः प्राधान्याद्दिवारात्रिव्रतमिदम् । ततश्चाहोरात्रव्याप्तिरेव ग्राह्या ।

---

(१) कंसान्तर्गतं क पुस्तके नास्ति ।

'यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणा ।'

इति वचनात् । अत्र च कालभैरवपूजोक्ता त्रिस्थलीसेतौ—

'कृत्वा च विविधां पूजां महासंभारविस्तरैः ।
नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ॥'

तथा—

'तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्वरः ।
विलोक्य कालराजानं निरयादुद्धरेत्पितॄन् ॥' इति ।

इयं च कार्तिक्यनन्तरा गौणचान्द्राभिप्रायेण ।

मार्गशीर्षशुक्लपञ्चम्यां नागपूजोक्ता हेमाद्रौ स्कान्दे—

'शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी ।
स्नानदानैर्बहुफला नागलोकप्रदायिनी ॥' इति ।

इयं नागपूजायां षष्ठीयुतैव ग्राह्या ।

---

"दिवारात्रिव्रतं यच्च एकमेव तिथौ गतम् ।
तस्यामुभययोगिन्यामारभेत्तद्व्रतं व्रती ॥"

इति वाक्यात् । यदा पूर्वदिने सायाह्ने उत्तरेद्युश्च प्रदोषे तदा पूर्वैव 'रुद्रव्रतेषु' इति वचनात् । पूजा तु काशीवासनिर्विघ्नतासिद्ध्यर्थतया काम्यैव इति मयूखः । मार्गशीर्षशुक्लतृतीया रम्भातृतीया, तस्यामुपवासः कार्यः ।

"मार्गशुक्लतृतीयायां दन्तधावनपूर्वकम् ।
उपवासस्य नियमं गृह्णीयात्पतिदैवतम् ॥
सौभाग्यार्थं पुरा चीर्णं रम्भया राजसत्तम ।
तेन रम्भा तृतीयेऽयं परसौभाग्यदायिनी ॥"

इति वचनात् । दन्तधावनं च काष्ठं विना कार्यम् । इयं पूर्वविद्धा ग्राह्या । 'बृहत्तपा तथा रम्भा' इति वचनात् । श्रावणकृष्णतृतीया बृहत्तपा ।

'पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।
तस्यां तु तुषिता नागा (१)इतरा सचतुर्थिका ॥'
इति मदनरत्ने वचनात् ॥

मार्गशीर्षशुक्लषष्ठी चम्पाषष्ठीति महाराष्ट्रेषु प्रसिद्धा । सो*त्तरयुता ग्राह्या । 'षण्मुन्योः' इति युग्मवाक्यात । 'पूर्वाह्णे दैविकं कुर्यात्' इति वचनादस्य च दैवकर्मत्वात् । इयमेव योगविशेषेण चम्पेत्युच्यते । तदुक्तं ब्रह्माण्डपुराणे मल्लारिमाहात्म्ये—

'मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता ।
रविवारेण संयुक्ता सा चम्पेतीह कीर्तिता ॥' इति ।
'विशाखाभौमयोगेन सा चम्पेतीह (२)कीर्तिता'
इति मदनरत्ने पाठः ।

'मार्गशीर्षेऽमले पक्षे षष्ठ्यां वारेंऽशुमालिनः ।
शततारागते चन्द्रे लिङ्गं स्याद् दृष्टिगोचरम् ॥' इति ।

इयं च योगवशेन पूर्वा परा वा कार्या । 'चम्पाषष्ठी सप्तमीयुता' इति दिवोदासः । इयमेव *स्कन्दषष्ठी । सा पूर्वयुता ।

'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥'
इति भृगूक्तेः । परेऽह्नि रात्रावा*द्ययाममध्ये पारणासं-

---

*उत्तरयुतेति । वक्ष्यमाणयोगविशेषेण मल्लारिपूजायां पूर्वा परा वा ग्राह्या, तदभावे तूत्तरविद्धेत्यर्थः ।

*स्कन्दषष्ठीति ।
"येयं मार्गशिरे मासि षष्ठी भवति सत्तम ।
पुण्या पापहरा धन्या शिवा शान्ता गुहप्रिया ॥"

---

(१) क पुस्तके 'इतरे' इति पाठः ।
(२) 'विश्रुता' इति क पुस्तके पाठः ।

भवे इदम्, अन्यथोत्तरैवेति दिवोदासः । *अब्दपर्यन्तं षष्ठीषु—

'सेनाविदारक स्कन्द महासेन महाबल ।
रुद्रोमाग्निज षड्वक्त्र गङ्गागर्भ नमोऽस्तु ते ॥'

इति राजनं स्कन्दं संपूज्य विप्राय दद्यादिति दिवोदासः

मार्गशीर्षशुक्लचतुर्दश्यां पिशाचविमोचनीतीर्थे श्राद्धं त्रिस्थलीसेतौ भट्टचरणैरुक्तम् । तस्य प्रासपैशाच्यस्वपित्राद्युद्देश्यकत्वे पार्वणत्वाद्*पराह्णव्यापिनी ग्राह्या, अज्ञातनामपिशाचाद्युद्देश्यकत्वे त्वेकोद्दिष्टत्वान्मध्याह्नव्यापिनीति । कुलधर्मव्रतादौ तु*त्तरैव । 'चैत्रनभोगतेतरसिता स्यादूर्ध्वम्' इति दीपिकोक्तेः ॥

मार्गशीर्षपौर्णमास्यां दत्तात्रेयोत्पत्तिः । तदुक्तं स्कान्दे सह्याद्रिखण्डे—

'मार्गशीर्षे तथा मासि दशमेऽह्नि सुनिर्मले ।
मृगशीर्षयुते पौर्णमास्यां ज्ञस्य च वासरे ॥
जनयामास देदीप्यमानं पुत्रं सती शुभम् ।
तं विष्णुमागतं ज्ञात्वा अत्रिर्नामाऽकरोत्स्वयम् ॥
दत्तवान्स्वस्य पुत्रत्वाद्दत्तात्रेय इतीश्वरः ॥' इति ।

*इयं प्रदोषव्यापिनी ग्राह्येति वृद्धाः ॥

---

इति भविष्यात् । *आद्येति पारणानुरोधेन तिथिग्राह्यत्वापत्त्याऽरुचिः । प्रतिमासपक्षद्वयषष्ठीषु व्रतान्तरमाह--*अब्दपर्यन्तमिति।

*अपराह्णेति । मध्याह्नव्यापिनीमप्यत्र केचिदाहुः ।

*उत्तरैवेति । 'शुक्लपक्षे चतुर्दशी' इत्युक्तेः ।

"मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी ।
सा रात्रिव्यापिनी ग्राह्या नान्या कृष्णा कदाचन ॥"

"परा पूर्वाह्णगामिनी" इति वचनाच्च ।

मार्गशीर्षपौर्णिमानन्तराष्टमी अष्टका । एवं पौषादिमासत्रयेऽपि । 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वा' इत्याश्वलायनोक्तेः । 'एकस्यामष्टम्यां वैका कार्या' इति हरदत्तः । कश्चित्पञ्चम्यप्युक्ता ।

'प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति ।'

इति पाद्मवचनात् । तत्पूर्वसप्तमीषु पूर्वेद्युः तत्परनवमीष्वन्वष्टकाश्राद्धमुक्तं कालादर्शे—

*'मार्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुने ।

कृष्णपक्षे च पूर्वेद्युरन्वष्टक्यं तथाष्टका ॥' इति ।

*इयमिति । पूर्वविद्धेत्यन्ये । मार्गशीर्षचतुर्दश्यां पौर्णमास्यां वा प्रत्यवरोहणं कार्यम् ।

*मार्गेति अमान्तमानेन । मार्गशीर्षादिचतुष्टयं भाद्रकृष्णाष्टमी च कालः । एतेन माघ्या वर्षमिति सूत्रात् अष्टकाशब्दः परं तत्र ? नास्ति । माघ्यावर्षशब्देन व्यवहारात् भाद्रपदकृष्णाष्टमीनाम्ना । अष्टकात्वमिति पदं च तादृशकर्मलाभार्थम् । गौणमुख्याभिप्रायेण पञ्चाष्टका इति व्यवहारः । न त्वेतावता माघ्यावर्षं षष्ठम् इति भ्रमः कार्यः, नापि संकल्पादावष्टकापदप्रयोगः । अथवा पुराणमते पञ्चम्यष्टकैव ।

"प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति ।

आयुरारोग्यमैश्वर्यं सर्वकामफलप्रदा ॥"

इति पाद्मे वसुनाम्नः पितुः शापोत्तराऽनुग्रहोक्तेः । हेमन्तशिशिरौ चामान्तमानेन मार्गशीर्षादिमासद्वयात्मकतया मासचतुष्टयरूपौ, चतुर्णामित्यभिधानात् । अष्टकापदं यद्यपि कर्मपरम् 'अष्टका पितृदैवत्ये' इति पाणिनिस्मृतेः । तथापि लक्षणया कालपरमपीति समुचितकालानुरोधेन कर्मण आवृत्तावप्यैक्यम् आग्नेयवत् । तथाऽऽश्वलायनानां [illegible] रूपं कात्यायनादीनां तु [illegible] ।

*यत्तु विष्णुः—

'अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः' इति,

यच्च कौर्मे—

'अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।' इति,

तच्चतु*र्थ्या अनावश्यकत्वार्थम् ।

*'या चाप्यन्या चतुर्थी स्यात्तां च कुर्यात्प्रयत्नतः ।'

इति वायुब्रह्माण्डपुराणात् ।

'श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ।'

इति विष्णूक्तेरिति शूलपाणिः । *शाखाभेदाद्व्यवस्थेति तत्त्वम् । वायुब्रह्माण्डयोः—

*'आद्याऽपूपैः सदा कार्या मांसैरन्या सदा भवेत् ।
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः ॥'

---

'एकस्यां वा' इति पक्षेऽपि माघ्यावर्षमात्रश्यकं पृथक्तदुक्तेः । *यत्त्विति । चतुरष्टकत्वविरोध इत्यभिमानः । *चतुर्थ्या इति । अत्र पौर्णमास्यन्तमानेन पौषमाघफाल्गुनेषु मासेषु तिस्रोऽष्टकाः कार्याः । 'आग्रहायण्या ऊर्ध्वं तिस्रोऽष्टकाः'इति विष्णुधर्मात् । चतुर्थ्याश्चैत्र्यास्त्वनावश्यकत्वमित्यर्थः । एतत्पक्षे प्रौष्ठपदी आवश्यकीत्याह— *या चाप्यन्येति । न च चतुर्थी चैत्र्येवेति वाच्यम् । तिस्र इत्यनेन तद्व्यावृत्तेः । अन्याचतुर्थीति अन्यपदाच्च प्रौष्ठपद्यष्टकाया एव प्राप्तेः । *शाखाभेदादिति । एवं चाश्वलायनभिन्नानां केषांचित्फाल्गुनाष्टम्यां सर्वासु सप्तमीषु श्राद्धाकरणेऽपि न दोषः ।

"स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ।
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥"

इत्युक्तेः । *आद्येति । अष्टकापक्षे द्रव्यविधिः । ननु—

"कृष्णपक्षे वरिष्ठादि पूर्वा चैन्द्री विभाव्यते ।
प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदेविकी ॥"

*पौषादिक्रमः । अन्वष्टका तु प्रागेव निर्णीता । तत्राष्टम्यपराह्णव्यापिनी ग्राह्या।

'अथाच्छादनपर्यन्तं श्राद्धं पार्वणवद्भवेत् ।'

इत्याश्वलायनकारिकोक्तेरपराह्णकालत्वाच्च पार्वणस्य ।पूर्वेद्युरन्वष्टकाश्राद्धयोस्तु अष्टम्यनुरोधेन निर्णयः । अत एव सूत्रम्—'पूर्वेद्युः पितृभ्यो दद्यात् अपरेद्युरन्वष्टक्यम्' इति च । अत्र कामकालौ विश्वेदेवौ 'इष्टिश्राद्धं क्रतूदक्षावष्टम्यां कामकालौ' इति सायणीये शाङ्खोक्तेः । अत्र श्राद्धाकरणे प्रायश्चित्तमुक्तमृग्विधाने—

'एभिर्द्युभिर्जपेन्मन्त्रं शतवारं तु तद्दिने ।

---

इतिश्लोकानन्तरं 'आद्यापूर्वैः' इति श्लोकः । तदनन्तरं च 'या चाप्यन्या'इत्यर्द्धम् । एवं ब्राह्मे—

"ऐन्द्यान्तु प्रथमायान्तु शाकैः सन्तर्पयेत्पितॄन् ।
प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत् ॥
(शुद्धैः अदिग्धायुधहतैः । दिग्धः विषाद्यक्तः ।)
वैश्वदेव्यां तृतीयायां मयूखैश्च यथाक्रमम् ।
वर्षासु मेध्यशाकैश्च चतुर्थ्यामेव सर्वदा ॥"

अत्रोभयत्रापि मासो नोपात्त इत्यत्राह—*पौषेति ।

'पौषे कृष्णाष्टकायान्तु शाकैः सन्तर्पयेत्पितॄन् ।'

इति ब्राह्म एव शाकाष्टकात्वेन पौषमासीयत्वोक्तेः ।

'शाकं तु फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत् ।
वास्तुशाकादि होमश्च कार्यः पूषाष्टकाहृता ॥'

इति छन्दोगपरिशिष्टे । वायुपुराणे–शाकाष्टकात्वेनोक्तायास्तृतीयाया एव फाल्गुनमासीयत्वेनोक्तेश्च ।

"अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।
तिस्रश्चान्वष्टकाः पुण्या माघी पञ्चदशी तथा ॥"

*आन्वष्टक्यं यदा न्यूनं संपूर्णं याति सर्वथा ॥' इति ।
अशक्तौ त्वाश्वलायनः—'अथ श्वोभूतेष्टकाः पशुना स्थालीपाकेन वाप्यनडुहो *यवसमाहरेदग्निना वा *कक्षमु*पोषेदेषा मेऽष्टकेति नत्वेवानष्टकः स्यात्' इति । मार्गशीर्षादिषु मलमासे सति तत्राष्टका न कार्या । चतुर्णामिति ग्रहणादित्युक्तं नारायणवृत्तौ । तथा काठकगृह्येऽपि—

'महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् ।
स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ॥' इति ।

मार्गादिरविवारेषु काम्यं व्रतमुक्तं हेमाद्रौ । तत्र भक्ष्याण्युक्तानि संग्रहे ( सौरधर्मे )(१)—

'पत्रत्रित्वं तुलस्यास्त्रिपलमथ घृतं
मार्गशीर्षादि भक्ष्यं

इति कौर्माच्च । एतेन प्रोक्तपुराणेषु छन्दोगपरिशिष्टे च 'पौषादित्रयममान्तमानेन' इति मार्गशीर्षाष्टका हेया । अथवा—

'आग्रहायण्यामतीतायां कृष्णास्तिस्रोऽष्टकास्तथा ।'

इति विष्णुधर्मात्फाल्गुनाऽष्टकात्यागपक्षः । स च 'पौषमासादिषु त्रिषु' इति मार्गशीर्षाष्टकात्यागपक्षेण विकल्पते इति परास्तम् । उक्तसकलवचनानां कृष्णादिमासपरत्वेनैकपक्षप्रतिपादकत्वसम्भवे नानापक्षपरत्वे मूलश्रुतिनानाकल्पनागौरवात् । शाकादिद्रव्यव्यवस्था च प्राधान्याभिप्रायात्तीर्थश्राद्धे घृतवत् । 'मुन्यन्नं ब्राह्मणस्योक्तम्' इत्यादिवत् च । शाकादीनां केवलानां [illegible] शाकादिद्रव्यभेद इन्द्रादिदेवतानां भेदश्चाश्वलायनान्यविषयः । आश्वलायनानान्तु पञ्चस्वपि द्रव्यदेवतयोरभेद एव । *आन्वष्टक्यमिति । अष्टकोपलक्षणम् । *यवसम्—आर्द्रतृणम् । *कक्षं शुष्कतृणम् । *उपोषेत् दहेत् । इति मार्गशीर्षः ।

(१) धनुश्चिन्हान्तर्गतं क पुस्तके नास्ति ।

मुष्टीनां त्रिस्तिलानां त्रिपलदधि तथा
दुग्धकं गोमयं च ।
त्रित्वं तोयाञ्जलीनां त्रिमरिचकमथो
त्रिःपलाः सक्तवः स्युः
गोमूत्रं शर्करा सद्भविरिति विधिना
भानुवारे क्रमेण ॥' इति ॥

इति श्रीकमलाकरभट्टकृते निर्णयसिन्धौ द्वितीयपरिच्छेदे मार्गशीर्षमासः समाप्तः ॥

धनुःसंक्रमे पराः षोडश घटिकाः पुण्याः । अन्यत्प्राग्वत् । अत्रोत्सर्जननिर्णयो वक्तव्योऽप्युपाकर्मप्रसङ्गात्प्रागेवोक्तः । कल्पतरौ भविष्ये—

'पौषे मासे यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ॥
मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् ॥'

अत्रैव रोहिण्यार्द्रायोगे पुण्यतमत्वं तत्रैव ज्ञेयम् । पौषशुक्लैकादशी मन्वादिः । सा चोक्ता प्राक् । पौषपौर्णिमानन्तराः सप्तम्यष्टमीनवम्योऽष्टकाद्याः प्रागुक्ताः ।

पौषामावास्यायामर्धोदयो योगविशेषः । तदुक्तं मदनरत्ने महाभारते—

'अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥'

इति पौषमाघयोर्मध्यवर्तिनी*पौषीपौर्णमास्युत्तरामावास्येत्यर्थ इति भट्टाः । मदनरत्ने पौषस्य च माघस्य चेत्यर्थ उक्तः । तन्न । हेमाद्रिविरोधात् । तत्र हि माघ एवोक्तः । तथा—

---

*पौषी पौर्णमास्युत्तरेति । 'माघामायां व्यतीपाते' इत्य-

'दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन।' इति।

इदमर्धमन्यनिबन्धेष्वभावान्निर्णयामृतमात्रोक्तेर्निर्मूलमेव। तेन*हेमाद्र्यादिमते रात्रावर्धोदयो भवत्येव। कश्चित्तु—'किंचिदूनो महोदयः' इत्याहुस्त*न्निर्मूलम्। हेमाद्रौ मदनरत्ने च स्कान्दे—

'माघामायां व्यतीपाते आदित्ये विष्णुदैवते।
अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समम्॥'

तत्रैव—

'माघमासे कृष्णपक्षे पञ्चदश्यां रवेर्दिने।
वैष्णवेन तु ऋक्षेण व्यतीपाते सुदुर्लभे॥'

व्रतं कुर्यादित्यग्रेऽन्वयः। तत्रैव—

'ब्रह्मविष्णुमहेशानां सौवर्णीः पलसङ्ख्यया।
प्रतिमास्तु प्रकर्तव्यास्तदर्धेन द्विजोत्तम॥
(१)*साग्रं शतत्रयं शम्भोर्द्रोणानां तिलपर्वतः।

---

ग्रिमवाक्यात्। अत एव हेमाद्र्यादिविरोधादित्यपि। *हेमाद्र्यादिमते इति। वस्तुतस्तु—

"दिवैव योगः शस्तोयमुषःकालेऽपि वा यदि।
न तु रात्रौ स विज्ञेयो नरैर्धर्मपरायणैः॥"

इति नागरखण्डाद्रात्रौ योगो निर्मूल एवेति नव्याः। *तन्निर्मूलमिति।

"पातस्यान्ते पूर्वभागे त्वमायाः श्रोणामध्ये भास्करस्योदये च।
भानोर्वारे ह्यर्द्धमित्याहुरार्याश्चेन्दोर्वारे तन्महत्पूर्वमाहुः॥"

इति धर्मप्रवृत्तिवाक्यविरोधात्। अत्र पूर्णिमान्तमानेन माघाऽमा ग्राह्या। 'माघे भानौ पुण्य अर्द्धोदयः स्यात्' इति तृतीयपादपाठे माघः पूर्णिमान्तः। *साग्रं शतत्रयमिति। अत्र द्रोणानामिति द्रो-

---

(१)'सार्धम्' इति ग पुस्तके।

कर्तव्यौ पर्वतौ विष्णुरुद्रयोः पूर्वसंख्यया ॥'
शम्भुरत्र ब्रह्मा ।
'शय्यात्रयं ततः कुर्यादुपस्करसमन्वितम् ।'
तिलैर्होमं कृत्वा प्रतिमां दद्यादित्युक्तं स्कान्दे—
'अर्धोदये तु सम्प्राप्ते सर्वं गङ्गासमं जलम् ।
*शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसम्मिताः ॥
यत्किञ्चिद्दीयते दानं तद्दानं मेरुसन्निभम् ।' इति ।
अत्र दानविशेषो निर्णयामृते स्कान्दे—
'चतुःषष्टिपलं मुख्यममत्रं तत्र कारयेत् ।
चत्वारिंशत्पलं वाथ पञ्चविंशतिरेव वा ॥'
अमत्रं पात्रम् । तच्च *कांस्यमयमित्युक्तं तत्रैव ।

---

णो भविष्ये—
"पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैश्च चतुर्भिश्च द्रोणस्तु कथितो बुधैः ॥
कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणैस्तु षोडश ॥"
कुम्भः शूर्पश्चेत्यर्थः । पक्षान्तरे—
"पलं च कुडवं प्रस्थ आढको द्रोण एव च ।
धान्यमाने तु विज्ञेयाः क्रमशोऽमी चतुर्गुणाः ॥
द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते ।
कुम्भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्तिता ॥"
कुम्भैर्विंशत्येत्यन्वयः । द्रोणाढकयोः परिमाणान्तरमाह
पराशरः—
'प्रस्थद्वाविंशतिर्द्रोणः स्मृतो द्विकप्रस्थ आढकः ।' इति ।
एतेषां च पक्षाणां शक्त्यादिना व्यवस्था । ब्राह्म इति पाठः ।
*शुद्धात्मान इति । पात्रापात्रपरीक्षानियमः । *कांस्य-

'एवं सुघटितं कार्यं कांस्यभाजनमुत्तमम् ।' इति ।

तथा—

'निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ।
पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकम् ॥
तदभावे तदर्धं वा तदर्धं वापि कारयेत् ।
भूमौ तु तण्डुलैः शुद्धैः कृत्वाष्टदलमुत्तमम् ॥
अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम् ।
तेषां पूजा ततः कार्या श्वेतमाल्यैस्तु शोभनैः ।
वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत् ॥'

मन्त्रस्तु—

'सुवर्णपायसामत्र यस्मादेतत्त्रयीमयम् ।
आ(१)पत्तेस्तारकं यस्मात्तद् गृहाण द्विजोत्तम ॥
समुद्रमेखलां पृथ्वीं सम्यग्दातुश्च यत्फलम् ।
तत्फलं लभते मर्त्यः कृत्वेदं दानमुत्तमम् ॥' इति ।

इति श्रीकमलाकरभट्टकृते निर्णयसिन्धौ द्वितीयपरिच्छेदे पौषमासः ।

अथ माघस्नानम् । तत्र विष्णुः-

'तुलामकरमेषेषु प्रातः स्नायी सदा भवेत् ।
हविष्यं ब्रह्मचर्यं च माघस्नाने महाफलम् ॥'

इति सौरमास उक्तः । ब्राह्मे तु सावन उक्तः-

*'एकादश्यां शुक्लपक्षे पौषमासे समारभेत् ।
*द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापनम् ॥' इति

---

मयमिति । अशक्तस्य, शक्तस्य सुवर्णादिमयमपीति ।

इति पौषमासः ।

स्नानारम्भकालमाह—*एकादश्यामिति । *द्वादश्यामि-

---

(१)'आवयोस्ता' इति कपुस्तके ।

पाद्मेऽपि—

'पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः ।
माससमात्रं निराहारस्त्रिकालं स्नानमाचरेत् ॥
त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेन्द्रियः ।
माघस्यैकादशीं शुक्लां यावद्विद्याधरोत्तम ॥' इति ।

त्रिकालस्नानं मासोपवासविषयम् । निराहार इत्युक्तेः । पृथ्वीचन्द्रोदये त्वन्यथोक्तम् । विष्णुः—

*'दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् ।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे ॥' इति ।

अत्र दर्शमिति शुक्लादिमुख्यचान्द्राभिप्रायेण । अयं तु पक्षो नेदानीं प्रचरति । अत्राधिकारिणो भविष्ये—

'ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।
बालवृद्धयुवानश्च नरनारीनपुंसकाः ॥
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥'

पाद्मे—

'सर्वेधिकारिणो(१)ह्यत्र विष्णुभक्तौ यथा नृप ।'

ब्राह्मे—

'उष्णोदकेन वा स्नानमशक्ये सति कुर्वते ।
दृढेषु सर्वगात्रेषु उष्णोदं न विशिष्यते ॥'

वैष्णवामृते गौडनिबन्धे च स्कान्दे—

'पौष्यां तु समतीतायां यावद्भवति पूर्णिमा ।
माघमासस्य तावद्धि पूजा विष्णोर्विधीयते ॥
पितॄणां देवतानां च मूलकं नैव दापयेत् ।
ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम् ॥
अन्यथा याति नरकं क्षत्रविट् शूद्र एव च ।

---

(१)'ब्रह्मन्' इति कपुस्तके ।

वर्जनीयं प्रयत्नेन मूलकं मदिरोपमम् ॥'

यदा तु माघो मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधान्मासद्वये स्नानं तन्नियमाश्च कार्याः। मासोपवासचान्द्रायणादि तु मलमास एव समापयेत्। तदुक्तं दीपिकायाम्—'नियतत्रिंशद्दिनत्वाच्छुभे मास्यारभ्य समापयेत मलिने *मासोपवासव्रतम्' इति। मासोपवासपदं चान्द्रायणादेरुपलक्षणम्। स्नानारम्भे च मन्त्रो विष्णुनोक्तः—

'तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्वकम्।
माघमासमिमं पूर्णं स्नास्येहं देव माधव॥
तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि॥' इति।

प्रत्यहं मन्त्रश्च पाद्मे—

'दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च।
प्रातःस्नानं करोम्यद्य माघे पापविनाशनम्॥
मकरस्थे रवौ माघे गोविन्दाच्युत माधव।
स्नानेनानेन मे देव यथोक्तफलदो भव॥
इमं मन्त्रं समुच्चार्य स्नायान्मौनसमन्वितः॥' इति।

प्रत्यहं सूर्यायार्घ्यम्। मन्त्रस्तु पृथ्वीचन्द्रोदये पाद्मे-

'सवित्रे प्रसवित्रे च परं धाम जले मम।
त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा॥' इति।

स्नानकालश्च*सूर्योदयः। त्रिस्थलीसेतौ—

---

ति। 'माघे' इति शेषः। *दर्शं चेत्यादि पक्षान्तरम्।

"तुलामकरमेषेषु प्रातः स्नायी सदा भवेत्।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम्।"

इति च पक्ष उक्तः। *मासोपवासेति। चान्द्रायणादेरुपलक्षणम्।

'संप्राप्ते माघमासे तु तपस्विजनवल्लभे ।
क्रोशन्ति सर्ववारीणि समुद्गच्छति भास्करे ॥
पुनीमः सर्वपापानि त्रिविधानि न संशयः ॥'

इति नारदीयोक्तेः ।

'यो माघमास्युषसि सूर्यकराभितप्ते
स्नानं समाचरति चारुनदीप्रवाहे ।
उद्धृत्य सप्तपुरुषान्पितृमातृवंश्यान्
स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ॥'

इति भविष्योत्तरवचनाच्च । ब्राह्मे त्व*रुणोदय उक्तः ।

'अरुणोदये तु संप्राप्ते स्नानकाले विचक्षणः ।
माधवाङ्घ्रियुगं ध्यायन्यः स्नाति सुरपूजितः ॥' इति

तथा—

'अरुणोदयमारभ्य प्रातःकालावधि प्रभो ।
माघस्नानवतां पुण्यं क्रमात्तत्रावधारणा ॥
*उत्तमं तु सनक्षत्रं मध्यमं लुप्ततारकम् ।
सवितर्युदिते भूप ततो हीनं प्रकीर्तितम् ॥' इति ।

तेनात्र शक्त्यपेक्षया व्यवस्था । इदं च स्नानं प्रयागेऽतिप्रशस्तम् ।

'काश्याः शतगुणं प्रोक्तं गङ्गायमुनसङ्गमे ।
सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी ॥

---

*सूर्योदय इति । अयमशक्तपरः । शक्तस्य त्वाह—*अरुणोदय इति । शक्ताशक्तभेदेन व्यवस्थापकमप्याह—*उत्तमं त्विति ।

"संप्राप्ते माघमासे तु तपस्विजनवल्लभे ।
क्रोशन्ति सर्ववारीणि समुद्गच्छति भास्करे ॥
पुनीमस्तस्य पापानि त्रिविधानि न संशयः ॥"

पश्चिमाभिमुखी गङ्गा कालिन्द्या सह संगता ।
हन्ति कल्पकृतं पापं सा माघे नृप दुर्लभा ॥'

इत्यादि*पाद्मादिवचोभ्यः । विस्तरस्तु मत्पितामहकृतप्रयागसेतौ ज्ञेयः । ब्राह्मे—

'यत्र कुत्रापि यो माघे प्रयागस्मरणान्वितः ।
करोति मज्जनं तीर्थे स लभेद्गाङ्गमज्जनम् ॥'

तथा समुद्रेऽप्यतिप्रशस्तम् । तदुक्तं पृथ्वीचन्द्रोदये प्रभासखण्डे—

'माघ मासि च यः स्नायान्नैरन्तर्येण भावतः ।
पौण्डरीकफलं तस्य दिवसे दिवसे भवेत् ॥'

माघस्नानं काम्यमेवेति भट्टाः । विष्णवादिवाक्ये सदावश्यशब्दान्नित्यत्वावगतेर्नित्यकाम्यमिति तु युक्तम् । मासपर्यन्तं स्नानासंभवे तु त्र्यहमेकाहं वा स्नायात् ।

'महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम् ।'

इति लिङ्गात् ।

'अस्मिन्योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् ।
प्रयागे माघमासे तु त्र्यहं स्नातस्य यत्फलम् ॥
नाश्वमेधसहस्रेण तत्फलं लभते भुवि ॥'

इति पाद्मादिवचनात् । अत्र मकरसंक्रमो रथसप्तमी माघीति त्र्यहमित्येके । माघशुक्लदशम्यादीत्यन्ये । मकराद्यत्र्यह इत्यपरे । माघमासाद्यत्र्यह इति केचित् । त्रयोदश्यादीति बहवः ।

'महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम् ।'

इति पाद्मोक्तेः । एतस्यार्थवादत्वाद्यत्किंचिद्दिनत्रय-

---

इति तु नारदीयं स्नानाभिप्रायगर्भम् । *पाद्मादीति । आदिना 'महामाघीं पुरस्कृत्येत्यत्र्यहः । तथोक्त्या अनुकल्पतया माघीलाभात् ।

मिति भट्टाः । तत्त्वं तु 'संदिग्धेषु वाक्यशेषात्' इति न्यायात्त्रयोदश्याद्येवेति । *प्रयागं विनापि पाद्मे—

'अस्मिन्योगे त्वशक्तोपि स्नायादपि दिनत्रयम् ।' इति ।

माघस्नाने नियमास्तु नारदीये—

'न वह्निं सेवयेत्स्नातो ह्यस्नातोऽपि वरानने ।
होमार्थं सेवयेद्वह्निं शीतार्थं न कदाचन ॥
अहन्यहनि दातव्यास्तिलाः शर्करयान्विताः ।
त्रिभागस्तु तिलानां हि चतुर्थः शर्करान्वितः ॥
अनभ्यङ्गी वरारोहे सर्वमासं नयेद् व्रती ॥'

तथा—

'अप्रावृतशरीरस्तु यः कुर्यात्स्नानमाचरेत् ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥'

तथा—

*'शङ्खचक्रधरं देवं माधवं नाम पूजयेत् ।
वह्निं हुत्वा विधानेन ततस्त्वेकाशनो भवेत् ॥
भूशय्याब्रह्मचर्येण शक्तः स्नानं समाचरेत् ।

---

*प्रयागं विनापीति ।

"तडागेषु तु वा स्नायात्कूपे भाण्डादिके तथा ।
माघमासे वरारोहे शस्तं वै निम्नगाजलम् ॥
( भाण्डाश्रिते त्वयं विशेषः) ।
सरित्तोयं महावेगं नवकुम्भस्थितं तथा ।
वायुना ताडितं रात्रौ गङ्गातोयसमं स्मृतम् ॥"

विष्णुः—

"ततः स्नात्वा शुभे तीर्थे दत्त्वा शिरसि वै मृदम् ।
वेदोक्तविधिना राजन् सूर्यायार्घ्यं निवेदयेत् ॥
पितॄणां तर्पणं कृत्वा ह्यवतीर्य ततो जलात् ॥"

*अशक्तौ ब्रह्मचर्यादौ स्वेच्छा सर्वत्र कथ्यते ॥

तथा—

(१)'तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ।

तिलभुक् *तिलदाता च षट्तिलाः पापनाशनाः ॥'

इति ।

तथा प्रयागासंभवे काश्यां दशाश्वमेधोत्तरस्थप्रयाग-तीर्थे स्नानमुक्तं काशीखण्डे—

'काश्युद्भवे प्रयागे ये तपसि स्नान्ति मानवाः ।

दशाश्वमेधजनितं फलं तेषां भवेद् ध्रुवम् ॥' इति ।

स्नानोत्तरं मदनपारिजाते विष्णुः—

'काष्ठमौनान्नमस्कृत्य पूजयेत्पुरुषोत्तमम् ।

अवश्यमेव कर्तव्यं माघस्नानमिति श्रुतिः ॥'

भविष्ये—

'तैलमामलकाश्चैव तीर्थे देयास्तु नित्यशः ।

ततः प्रज्वालयेद्वह्निं सेवनार्थं द्विजन्मनाम् ॥

एवं स्नानावसाने तु भोज्यं देयमवारितम् ।

भोजयेद् द्विजदाम्पत्यं भूषयेद्वस्त्रभूषणैः ॥

कम्बलाजिनरत्नानि वासांसि विविधानि च ।

चोलकानि च देयानि प्रच्छादनपटास्तथा ॥

उपानहौ तथा गुल्फमोचकौ पापमोचकौ ।

अनेन विधिना दद्यान्माधवः प्रीयतामिति ॥'

पाद्मे—

---

एतदनन्तरं माधवपूजामाह—*शङ्क्वित्यादि । *अशक्तौ ब्रह्म-चर्यादाविति । 'अशक्तस्य धनाढ्यस्य' इति पठित्वा धनाढ्यस्य बहुदानं कुर्वीत इत्यर्थ इति रामचन्द्रः । *तिलदातेति ।

---

(१) तिलस्नायीत्यनेन तिलयुक्तोदकेन स्नानं विहितम् ।

'भूमौ शयीत होतव्यमाज्यं तिलसमन्वितम्।'

तथा—

'अन्नं चैव यथाशक्त्या देयं माघे नराधिप।
सुवर्णरक्तिकामात्रं दद्याद्वेदविदे तथा॥'

माघान्ते तु विशेषो नारदीये—

'माघावसाने सुभगे षड्रसं भोजनं *स्मृतम्।
सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरञ्जनः।'
दम्पत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते।
त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः॥ इति।

अत्र—

'एकादशीविधानेन व्रतस्योद्यापनं तथा।'

इति पाद्मवचनात् पूर्वेऽह्नि उपवासपूजनादि कृत्वा 'परेऽह्नि तिलचर्वाज्यैरष्टोत्तरशतं होमं कृत्वा—सवित्रे प्रसवित्रे'—इति पूर्वोक्तं मन्त्रमुक्त्वा—

'दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते।
परिपूर्णं कुरुष्वेह माघस्नानमुषःपते॥'

इति समापयेदिति संक्षेपः।

मकरसंक्रान्तौ हेमाद्रिमते परतश्चत्वारिंशद्घटिकाः पुण्याः।

'त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः।'

इति ब्रह्मवैवर्तात्। माधवमते तु विंशतिः।

'त्रिंशत्कर्कटके पूर्वा मकरे विंशतिः पराः।'

---

"अहन्यहनि दातव्यास्तिलाः शर्करयान्विताः।
त्रिभागस्तु तिलानां हि चतुर्थः शर्कराकृतः॥"

*स्मृतमिति।

'सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरञ्जनः'।

इति वृद्धवसिष्ठोक्तेः। यदा तु सूर्यास्तात्पूर्वं संक्रान्तिर्भवति तदोभयमते पूर्वमेव पुण्यकालः। रात्रौ तु प्रदोषे निशीथे वा मकरसंक्रमे माधवमते द्वितीयदिन एव पुण्यम्।

'यद्यस्तमयवेलायां मकरं याति भास्करः।
प्रदोषे वार्धरात्रे वा स्नानं दानं *परेऽहनि।'

इति वृद्धगार्ग्यवचनात्। अस्तमयं प्रदोषः। प्रदोषे पूर्वरात्रे।

'कार्मुकं तु परित्यज्य झषं संक्रमते रविः।
प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि।'

इति भविष्योक्तेश्च। 'तदा भोगः परेऽहनि' इति हेमाद्रौ पाठः। कालादर्शनिर्णयामृतमदनपारिजातादयोप्येवमूचुः। दाक्षिणात्याश्चैतदेवाद्रियन्ते। यत्तु हेमाद्रिणाऽऽद्यो वाशब्दो यथार्थे द्वितीयस्तथार्थे। यथा प्रदोषे पूर्वेद्युस्तथार्धरात्रे परेऽह्नीत्युक्तं तस्मै नमोऽस्तु। तेन परेऽह्नि पुण्यं वक्तुं प्रदोषे इति। दिनद्वये पुण्यनिरासार्थमर्धरात्रग्रहणम्। हेमाद्रिस्मृत्यर्थसारानन्तभट्टादिमते तु निशीथात्पूर्वं पश्चाच्च संक्रान्तौ पूर्वदिने परदिने वा पुण्यम्।

'धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा।
*पूर्वापरविभागेन रात्रौ संक्रमणं यदा॥
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः।
उदयेऽपि तथा पञ्च दैवे पित्र्ये च कर्मणि॥'

---

इत्युत्तरार्द्धम्। *परेऽहनीति।
'आसन्नसंक्रमं पुण्यं दिवार्द्धं स्नानदानयोः।'
इति बोध्यम्। *पूर्वापरविभागेनेति। पुण्यत्वमभिप्रायः।

इति स्कान्दवचनात् । पूर्वापरविभागेनेति *मकरकर्कभिन्नविषयम्, पूर्वोक्तवचोविरोधादिति मदनरत्ने उक्तम् ।

'षडशीतिमुखेऽतीते अतीते चोत्तरायणे ।'

इत्यादिविरोधाच्च । तेन पूर्वैकवाक्यतयाऽयमर्थः—रात्रौ पूर्वभागे मकरसंक्रमे परेऽह्नि उदये पञ्च नाड्यः पुण्याः, रात्रावपरभागे कर्कसंक्रमे पूर्वदिनान्ते पञ्च नाड्य इति । एवं सर्वेषामविरोधः । मकरे सामान्येन परदिने पुण्यत्वेपि पुण्यातिशयार्थमिदम् । यत्तु देवलयज्ञपार्श्वौ—

'आसन्नसंक्रमं पुण्यं दिनार्धं स्नानदानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिवा ॥' इति ।

अत्र माधवः । अयने दिवा जाते तदर्धं पुण्यम् । कर्के पूर्वं मकरेऽन्त्यम् । एतन्मध्यंदिनायनपरमिति । हेमाद्रिस्तु रात्रौ विषुवत्यासन्नदिनार्धं पुण्यम् । अयने त्वासन्नादिनं पुण्यम् । दिने इति पाठे उभयत्र दिनार्धं पुण्यमित्याह । एतदेवोक्तं दीपिकायाम्—'अथायनमधः पश्चान्निशीथाद्र्ध्वेयद्यासन्नमहस्तदर्धमथवा पुण्यम्' इति । तत्त्वं तु आसन्नसंक्रममित्यस्य विषुवत्येवान्वयः । अयने रात्रौ सति दिने पुण्यम् । कस्मिन्नित्यपेक्षायां कर्के पूर्वेऽह्नि मकरे परेऽह्नि इति वाक्यान्तरवशादर्थे उच्यमाने न कोपि विरोधः । यत्त्वनन्तभट्टः—

'अथ संक्रमणं भानोर्निशीथात्प्राग्यदा भवेत् ।
अयनं विषुवं तत्र प्राग्दिनान्तिमनाडिकाः ॥
पञ्च पुण्यतमाः पश्चान्निशीथाचेदूर्ध्वेत्तथा ।
आद्याः परदिनस्यापि तद्वदित्येष निर्णयः ॥' इति ।

अपरार्केप्येवम्—

'अस्तं गते यदा सूर्ये झषं याति दिवाकरः ।

प्रदोषे वार्धरात्रे वा तदा पुण्यं दिनद्वयम् ॥'

इति बौधायनवचनाद्दिनद्वयं वा पुण्यकालः । 'तदा पुण्यं दिनान्तरम्' इति मदनरत्ने पाठः । गुर्जरप्राच्योदीच्यास्त्विदमेवाद्रियन्ते । अत्रापि पूर्ववद्व्याख्येयम् । तिथितत्त्वादयो गौडग्रन्थास्तु प्रदोषार्धरात्राभिन्ने रात्रेः पूर्वभागे पूर्वदिने परभागे च परदिने पुण्यमन्यसंक्रान्तिवत्, विशिष्य (१)तयोर्निर्देशात् । प्रदोषश्च—

'प्रदोषोस्तमयादूर्ध्वं घटिकाद्वयमिष्यते ।'

इति वत्सोक्त इत्याहुः । तन्न । 'अस्तं गते' इति त्रितयवैयर्थ्यापत्तेः ।अतः प्रदोषपदेन तद्भिन्नैव रात्रिरुच्यते । अत एव—'यावन्नोदयते रविः' इति वृद्धगार्ग्यादिभिर्दक्षिणायने पूर्वरात्रौ संक्रमे पूर्वदिनमुक्तम् । वत्सोक्तिरध्ययनादिपरा । इह तु त्रिमुहूर्त एव प्रदोषः ।

मकरे दानविशेषो हेमाद्रौ स्कान्दे—

'धेनुं तिलमयीं राजन्दद्याद्यश्चोत्तरायणे ।
सर्वान्कामानवाप्नोति विन्दते परमं सुखम् ॥'

विष्णुधर्मे—

'उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम् ।
तिलपूर्णमनड्वाहं दत्त्वा रोगैः प्रमुच्यते ॥' इति ।

शिवरहस्येऽपि—

'तस्यां कृष्णतिलैः स्नानं कार्यं चोद्वर्तनं शुभैः ।
तिला देयाश्च विप्रेभ्यः सर्वदैवोत्तरायणे ॥
तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः ॥'

कल्पतरौ कालिकापुराणे—

'होमं तिलैः प्रकुर्वीत सर्वदैवोत्तरायणे ।

---

(१) तयोः प्रदोषार्धरात्रयोः ।

*तान्यो*देवाय विप्रेभ्यो हाटकेन समं ददेत् ॥
उत्तरायणमासाद्य नरः कस्मात्स शोचति ॥'
तथा मकरे रात्रावपि श्राद्धादि भवतीत्युक्तं प्राक् ।
माघामायां योगविशेषोऽर्धोदयः प्रागेवोक्तः । माघकृष्णचतुर्दश्यां यमतर्पणमुक्तं हेमाद्रौ यमेन—
'अनर्काभ्युदिते काले माघकृष्णचतुर्दशीम् ।
स्नातः संतर्प्य तु यमं सर्वपापैः प्रमुच्यते ॥' इति ।
*माघशुक्लचतुर्थी तिलचतुर्थी । सा*प्रदोषव्यापिनी ।
माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।
ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥'
इति काशीखण्डात् ।
'माघमासे चतुर्थ्यां तु*तस्मिन्काल उपोषितः ।
अर्चयित्वा तु यो देवि जागरं तत्र कारयेत् ॥'
इति त्रिस्थलीसेतौ लैङ्गाच्च । इयमेव कुन्दचतुर्थी ।

---

*मकरकर्कभिन्नेति । तथा मकरे परेद्युरेव पुण्यं कर्के तु पूर्वेद्युरेव तुलामेषयोश्च पूर्वेद्युः परेद्युश्चेत्यर्थः ।
*तान्य इति । तान् तिलान् दहत् तिलहोमं कुर्यादित्यर्थः ।
*देवायेति । देवं विप्रं चोद्दिश्य स्वर्णदानं च कुर्यादित्यर्थः ।
वैष्णवामृते—
''पौष्यां तु समतीतायां यावद्भवति पूर्णिमा ।
माघमासस्य तावद्धि पूजा विष्णोर्विधीयते ॥
पितॄणां देवतानां च मूलकं नैव दापयेत् ।
ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणव्रतम् ॥
अन्यथा याति नरकं क्षत्रविट्शूद्र एव च ।
वर्जनीयं प्रयत्नेन मूलकं मदिरोपमम् ॥'' इति ।
*प्रदोषेति । नक्तव्रतत्वात् । *तस्मिन्काले प्रदोषकाले ।

सा*प्रदोषव्यापिनी ग्राह्या ।

'माघशुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम् ।
संपूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नरः ॥'

इति कालादर्शे कौर्मोक्तेः ।

माघशुक्लपञ्चमी*श्रीपञ्चमी । तदुक्तं हेमाद्रौ वाराहे-

'माघशुक्लचतुर्थ्यां तु*वरमाराध्य च श्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजां कुर्यात्समृद्धये ॥'

इयं माधवमते पूर्वा, हेमाद्रिमते परा । चैत्रशुक्ले श्रीपञ्चमीति दिवोदासः ॥

माघशुक्लसप्तमी रथसप्तमी । सा अरुणोदयव्यापिनी ग्राह्या ।

'सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥'

इति चान्द्रिकायां विष्णुवचनात् ।

अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।

---

विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तामसीम् ।
शुक्लान्शुक्लतिलान् बध्वा प्राश्नीयाल्लड्डुकान्व्रती ॥
तां यात्रां नात्र यः कुर्यान्नैवेद्यं तिललड्डुकैः ।
उपसर्गसहस्त्रैस्तु स हन्तव्यो ममाज्ञया ॥"

इत्यादि काशीखण्डे विस्तरः । *प्रदोषव्यापिनीति । नक्ताशीत्युक्तेः । वस्तुतस्तु मध्याह्नव्यापिनीति बहुपुस्तकपाठो युक्तः पूजाव्रतत्वात्, नक्तन्त्वनिर्णायकम् । अङ्गत्वात् । *श्रीपञ्चमीति । तत्र श्रीपूजा कार्या ।

"चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता ।
सौभाग्यं मङ्गलं कुर्यात्पञ्चम्यां श्रीरपि श्रियम् ॥"

इति भविष्ये ऽभिधानात् । *वरमाराध्येति ।

प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समा ॥'

इति वचनाच्च । यत्तु दिवोदासीये-

*'अचलासप्तमी दुर्गा शिवरात्रिर्महाभरः ।

द्वादशी वत्सपूजायां सुखदा प्राग्युता सदा ॥'

इति षष्ठीयुतत्वमुक्तम् , तद्यदा पूर्वेद्युर्घटिकाद्वयं षष्ठी,

---

श्रियो वरं सलक्ष्मीकं विष्णुम् । व्यहसाध्यमिदं व्रतम् । एवं-माघशुक्लपञ्चम्यां रतिकामपूजादिवसन्तोत्सवः कार्यः ।

"माघमासे सुरश्रेष्ठ शुक्लायां पञ्चमीतिथौ ।

रतिकामौ तु सम्पूज्य कर्तव्यः सुमहोत्सवः ॥

दानानि च प्रदेयानि तेन तुष्यति माधवः ॥"

इति पुराणसमुच्चयात् । मध्याह्नः कर्मकालः पूजाव्रतत्वात् । श्रीकृष्णभक्तैस्त्वत्र सलक्ष्मीको भगवान् श्रीकृष्णः पूज्यः । 'वर-माराध्य च श्रियः' इत्युक्तेः । तत्र त्रेधाविभागेन पूर्वाह्णो ग्राह्यः ।

"त्रेधाविभक्तदिवसे प्रातःकाले सुरार्चनम् ।

मध्याह्ने तीर्थकार्यं च सायं रक्षाकरी क्रिया ॥"

इति दिनकरोद्योतवचनात् । दिनद्वये तदेकदेशव्याप्तौ सम्पूर्णव्याप्तौ च परा ।

'शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।'

इति वाक्यात् । युग्मभूतानामिति युग्मवाक्यं तु नेह प्रवर्त्तते तस्योदयकाले सावकाशत्वात् । दिनक्षये तु पूर्वा ।

"तिथ्यादौ च भवेद्यावान् ह्रासो वृद्धिः परेऽहनि ।

तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥"

इति वचनात् । तत्र रतिकामपूजा अङ्गम् । महोत्सवादिकं तु श्रीकृष्णप्रीतये एव । 'तेन तुष्यति माधवः' इत्युपसंहारादिति ।

*अचलासप्तमी रथसप्तमी । अचलाव्रतस्य तत्र सत्त्वात् ।

सप्तमी च परेद्युः क्षयवशादरुणोदयात्पूर्वं समाप्यते तत्परं ज्ञेयम्। तत्र षष्ठ्यां*सप्तमीक्षयं प्रवेश्यारुणोदये स्नानं कार्यम्। मदनरत्ने भविष्योत्तरे-

'माघे मासि सिते पक्षे सप्तमी कोटिभास्करा।
कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः॥'

अत्र विधिर्भविष्ये-

(१)'स्नात्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम्।
रात्र्यन्ते चालयेथास्त्वं* दत्त्वा शिरसि दीपकम्॥'

तथा जलं प्रक्रम्य-

'न केन चाल्यते यावत्तावत्स्नानं समाचरेत्।
सौवर्णे राजते पात्रे भक्त्यालाबुमयेऽथ वा॥
तैलेन वर्तिदीप्तिंव्या महारजनरञ्जिता।
(महारजनं कुसुम्भम्।)
समाहितमना भूत्वा दत्त्वा शिरसि दीपकम्॥
भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत्।
'नमस्ते रुद्ररूपाय रसानां पतये नमः॥
वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते।'
जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः॥' इति।
'चन्दनेन लिखेत्पद्ममष्टपत्रं सकर्णिकम्।
मध्ये शिवं सपत्नीकं प्रणवेन च संयुतम्॥'

*पूर्वादिदलेषु रविभानुविवस्वद्भास्करसवित्रर्कसहस्र-

*महाभरः दुर्भरः। *सप्तमी क्षयं प्रवेश्येति। 'तिथ्यादौ तु भवेद्यावाम्' इत्युक्तेः। दिनद्वये अरुणोदयेऽपि पूर्वैव युग्मवाक्यात्। *त्वमिति। अरुन्धतीं प्रति वसिष्ठवाक्यतया अरुन्धत्यर्थकम्। *पूर्वादिदलेष्विति।

(१) 'कृत्वा' इत्यादर्शपुस्तके पाठः।

किरणसर्वात्मकान् संपूज्य गृहं गच्छेदिति । स्नानमन्त्रश्च काशीखण्डे–

'यद्यज्जन्मकृतं पापं मया जन्मसु सप्तसु ।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ॥
एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् ।
मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः ॥
इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके ।
सप्तव्याधिसमायुक्तं हर माकरि सप्तमि ॥
एतन्मन्त्रत्रयं जप्त्वा स्नात्वा पादोदके नरः ।
केशवादित्यमालोक्य क्षणान्निष्कलुषो भवेत् ॥'

दिवोदासीये मदनरत्ने च इक्षुदण्डेन जलं चालयित्वा*सप्तार्कपत्राणि बदरीपत्राणि च शिरसि निधाय पूर्वोक्तैर्मन्त्रैः*स्नात्वा तिलपिष्टमयापूपैर्हैमं सूर्यं संपूज्य विप्राय दद्यात् । *अर्घ्यमन्त्रो मदनरत्ने–

'सप्तसप्तिवह प्रीत सप्तलोकप्रदीपन ।
सप्तमीसहितो देव गृहाणार्घ्यं दिवाकर ॥'

---

"शाक्रे दले रविः पूज्यो भानुश्चैवानले तथा ।
याम्ये विवस्वान्नैर्ऋत्ये भास्करं पूजयेद्बुधः ॥
पश्चिमे सविता पूज्यः पूज्योऽर्कश्चानिले दले ।
सौम्ये सहस्रकिरणः शैवे सर्वात्मकस्तथा ॥
पूज्याः प्रणवपूर्वास्तु नमस्कारान्तयोजिताः ।
पुष्पैश्च गन्धधूपाद्यैः पृथक्त्वेन युधिष्ठिर ॥
विसर्ज्य वस्त्रसंवीतः स्वस्थानं गन्तुमर्हति ॥"

इति वचनात् ।

*सप्तार्केति । अत्र प्रमाणं मदनरत्न एव बोध्यम् । इदानीन्तनाश्चाचरन्ति । *स्नात्वेति । स्नानानन्तरमर्घ्यं दद्यात् ।

ततः–

'जननी सर्वलोकानां सप्तमी सप्तसप्तिके ।
सप्तमीसहितो देव गृहाणार्घ्यं दिवाकर ॥'

इति प्रार्थयेत् । सौरागमे–

'अर्कपत्रैः सबदरैर्दूर्वाक्षतसचन्दनैः ।
*अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये ॥'

अत्र दानविशेषो मदनरत्ने भविष्ये–

'ताम्रपात्रे यथाशक्त्या मृन्मये वाथ भक्तिमान् ।
स्थापयेत्तिलपिष्टं च सघृतं सगुडं तथा ॥
काञ्चनं तालकं कृत्वा अशक्तस्तिलपिष्टजम् ।
संछाद्य रक्तवस्त्रेण पुष्पैर्धूपैरथार्चयेत् ॥'

दानमन्त्रस्तु—

'आदित्यस्य प्रसादेन प्रातःस्नानफलेन च ।
दुष्टदौर्भाग्यदुःखघ्नं मया दत्तं तु तालकम् ॥'

तालकं कर्णाभरणमिति तत्रैवोक्तम् । दीपपात्रमिति हेमाद्रौ । तत्रैव भविष्योत्तरे—

एवंविधं रथवरं रथवाजियुक्तं
हैमं च हैमशतदीधितिना समेतम् ।
दद्याच्च माघसितसप्तमिवासरे यः

---

तत्र मन्त्रमाह–*अर्घ्यमन्त्र इत्यादिना । *अष्टाङ्गविधिनेति ।

"आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा ।
यवाः सिद्धार्थकाश्चेति अर्घ्योऽष्टाङ्गः प्रकीर्तितः ॥"

अर्कपत्रपदमर्कपुष्पोपलक्षणम् । अक्षताः–यवाः । प्रणवादिरादित्याय नम इति मन्त्रः । केचित्तु ऋग्विधानोक्तप्रकारेण अर्घ्यदानक्रममपि कुर्वन्ति । ऋग्विधाने—

"उद्यन्नद्येति मन्त्रोऽयं सौरः पापप्रणाशनः ।

सोऽसङ्गचक्रगतिरेव महीं भुनक्ति ॥'

इयं मन्वादिरपि । इयं च शुक्लपक्षस्थत्वात्पौर्वाह्णिकी ग्राह्या । यदा माघो मलमासो भवति तदा मासद्वये मन्वादिश्राद्धं कुर्यात् ।

'मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ।'

इति स्मृतिचन्द्रिकोक्तेः ॥

माघशुक्लाष्टमी भीष्माष्टमी । तदुक्तं हेमाद्रौ पाद्मे—

'माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्ते स्युः संततिभागिनः॥'इति ।

भारतेऽपि—

'शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥'

इति धवलनिबन्धे स्मृतिः ।

'अष्टम्यां तु सिते पक्षे भीष्माय तु तिलोदकम् ।

---

मन्त्रो दिवाकराद् दृष्टः कण्वेन मुनिना पुरा ॥
पुत्रस्य रोगनाशार्थं ख्यातो लोकहिताय च ।''

इत्यादिः । तत्र पादशो द्वादशमन्त्राः, अर्द्धर्चशः षट्, ऋक्शः त्रय ऋक्शस्त्रय इति चतुर्विंशतिमन्त्राः प्रणवादयः । मित्रः रविः सूर्यः भानुः खगः पूषा हिरण्यगर्भः मरीचिः आदित्यः सविता अर्कः भास्कर एतानि द्वादशनामानि पादान्ते योजयेत्। 'ॐउद्यन्नद्यमित्र-महः ॐमित्राय नमः इत्यादि १२, ततः अर्द्धर्चान्ते ॐमित्रर-विभ्यान्नमः इत्यादि षट्, तत ऋगन्ते ॐमित्ररविसूर्यभानुभ्यो नम इत्यादि त्रयः । ततः ऋक्त्रयान्ते ॐमित्ररविसूर्यभानुख-गपूषहिरण्यगर्भमरीचिआदित्यसवित्रर्कभास्करेभ्यो नम इति त्रय इति चतुर्विंशतिरावर्तनं भवति । एवमग्न्यादि । तदुक्तम्—

''चतुर्विंशत्यर्घदानैरेकमावर्तनं स्मृतम् ।

अन्नं च विधिवद्दद्युः सर्वे वर्णा द्विजातयः ॥'

सर्ववर्णोक्तेर्द्विजातय इति संबोधनम् । तर्पणमन्त्रस्तत्रैव ।

'भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोति पुत्रपौत्रोचितां क्रियाम् ॥
वैयाघ्रपदगोत्राय सांकृत्यप्रवराय च ।
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥
वसूनामवताराय शन्तनोरात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे ॥' इति ।

एतज्जीवत्पितृकस्यापि भवति ।

---

आवर्तनं चतुर्विंशत्यर्घिणीति प्रकीर्तिता ॥
चतुर्विंशत्यर्घिणीभिर्लघ्वर्घश्च प्रजायते ।
लघ्वर्घैश्च चतुर्विंशैरर्घश्चैकः प्रजायते ॥
चतुर्विंशतिरर्घैश्च महार्घः सम्प्रकीर्तितः ।
महदर्घैश्चतुर्विंशैरत्यर्घः परिकीर्तितः ॥"

अथवा—

"आवृत्तिरेका मेक्षपाश्चतुर्विंशतिरीरिताः ।
तावतीभिरिहैकांशस्तावद्भिस्तैर्लघुर्भवेत् ॥
तावद्भिरेव लघुभिरेकोऽर्घ्यः स्यादसंशयम् ।
तावद्भिरर्घ्यैरेकोऽत्र महार्घ्यः परिकीर्तितः ॥
षट्सप्ताधिकैः पञ्चशतैरंशः प्रकीर्तितः ।
एकोनाशीतिलक्षैर्द्विःषष्टिभिश्च सहस्रकैः ॥
महार्घ्यश्च चतुर्विंशत्यधिकैः षट्शतैर्भवेत् ।"

अथवा—

रसर्तुसम्मितक्षेपैरावृत्तिः परिकीर्तिता ।
युगाष्टबाणचन्द्रैस्तैरंशोऽप्यत्र प्रकीर्तितः ॥

'जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः ।'

इति पाद्मोक्तेरिति जीवत्पि(१)तृकानिर्णये पितृचरणै-रुक्तम् । एतच्चापसव्येन कार्यमिति दिवोदासीये । अत्र श्राद्धं काम्यं, तर्पणं च नित्यम् ।

*ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् ।
संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ॥'

इति मदनरत्ने वचनात् ।

---

आवृत्तिरेका षट्षष्टिप्रक्षेपैः परिकीर्तिता ।
चतुर्विंशतिसंख्याभिस्ताभिरंशः प्रकीर्तितः ॥
ऋत्विन्दुशून्यचसुवह्निमितैर्लघुस्तै-
र्वेदाष्टवह्निनयनेन्दुनवान्वितैस्तैः ।
अर्घ्यो भवेदपि महान् रसचन्द्रनेत्र-
पातालनाथरसदिःकरिचन्द्रनेत्रैः ॥'' इति ।

एवं साष्टाङ्गनमस्कारा अपि कार्याः । साष्टाङ्गलक्षणं च—

''उरसा मनसा दृष्ट्या शिरसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥'' इति ।

अत्र केचित् आगमानुसारेण ह्राँ ह्रीं ह्रूँ ह्रैं ह्रौं ह्रः इति बीजान्यपि विभागादिना लापयन्ति । तद्विस्तारः पद्धतौ बोद्धव्यः । आवृत्तिः २४ । अंश ५७६ । लघु १३८२४ । अर्घ ३३१७७६ । महार्घ्य ७९६२६२४ । अथवा आवृत्ति ६६ । अंश १५८४ । लघु ३८०१६ । अर्घ्य ९१२३८४ । महार्घ्य । २१८९७२१६ ।

*ब्राह्मणाद्या इति । केचित्तु 'वर्मत्वं क्षत्रिये प्रोक्तम्' इति वचनात्तर्पणादिके वर्मशब्दसत्त्वाद्भीष्मस्य क्षत्रियत्वेन तदुद्देशक-श्राद्धतर्पणे ब्राह्मणेन न कार्यं ।

''ब्राह्मणो हीनवर्णस्य यः करोत्यौर्ध्वदेहिकम् ।

---

(१) 'अत्र जीवत्पितृकस्य नाधिकारः' इति कौस्तुभे ।

*माघशुक्लद्वादशी भीष्मद्वादशी ।

'त्वया कृतमिदं वीर तव नाम्ना भविष्यति ।
सा भीष्मद्वादशीत्येषा सर्वपापहरा शुभा ॥'

इति हेमाद्रौ पाद्मवचनात् । इयं पूर्वयुता युग्मवाक्यात् । माघी पूर्णिमा परेत्युक्तं प्राक् । तथा हेमाद्रौ ब्राह्मे—

'मघास्थयोश्च जीवेन्द्वोर्महामाघीति कथ्यते ॥'

तत्रैव ज्योतिषे—

---

स तां गतिमवाप्नोति इहलोके परत्र च ॥"

इति मरीचिवचनात् । एवञ्च ब्राह्मणाद्या इत्यतद्गुणसंविज्ञानबहुव्रीहिणा तत्र क्षत्रियादेरेवाधिकार इत्याहुः । नव्यास्तु मरीचिवाक्यानुरोधेन वर्मशब्दयुक्तमन्त्रं विहाय 'वसूनामवताराय' इत्येकेनैव मन्त्रेण तर्पणं कार्यम् । अत एव ब्राह्मणाद्या इति तद्गुणसंविज्ञानबहुव्रीहिरित्याहुः । तदुभयमप्यसत् । भीष्मस्य वसुत्वेन देवत्वात् मरीचिवाक्यस्य मनुष्यपरत्वाद् हीन[वर्ण]स्येत्यत्र वर्णत्वस्य मनुष्यत्वगर्भत्वात् ।

"अष्टम्यां च सिते पक्षे भीष्माय तु तिलोदकम् ।
अन्नं च विधिवद्दद्युः सर्वे वर्णा द्विजातयः ॥"

इति वाक्यान्तरे सर्वशब्दोपादानात् । द्विजातय इति सम्बोधनम् । तस्मात्सर्वैर्मन्त्रैः सर्वैर्ब्राह्मणादिभिश्च भीष्मतर्पणादिकं कार्यम् । परन्तु ब्राह्मणैः सव्येनेतरैस्तु अपसव्येनेति । ब्राह्मणानामौर्ध्वदेहिकधर्मत्यागोऽपीत्यपि वदन्ति ।

*माघशुक्लद्वादशीति । माघशुक्लैकादशीत्यर्थः । वाक्ये द्वादशीपदस्यैकादश्यर्थत्वात् ।

"एकादश्यां निराहारः समभ्यर्च्य च केशवम् ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥"

इति संकल्पमन्त्रदर्शनात् । इयं परविद्धा ग्राह्या । 'रुद्रेण द्वा-

*'मेषपृष्ठे तथा *सौरिः सिंहे च गुरुचन्द्रमाः।
भास्करः श्रवणर्क्षे च *महामाघीति सा स्मृता॥'

तथा भविष्ये—

'वैशाखी कार्तिकी माघी तिथयोऽतीव पूजिताः।
स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन॥'

तथा—

*'तिलपात्राणि देयानि कञ्चुकाः कम्बलास्तथा।' इति॥

माघपूर्णिमानन्तराऽष्टमी माघी अष्टका, तन्निर्णयः पूर्वेद्युरन्वष्टकानिर्णयश्च पूर्वमुक्तः। मलमासे चैता न भवन्तीत्येतत्सर्वं मार्गशीर्षप्रकरणेऽभिहितम्। तथा चतसृष्वष्टकास्वशक्तावेषा आवश्यकी। 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वा' इत्याश्वलायनोक्तेः। तथा माघाष्टकां प्रक्रम्य—'तामेकाष्टकेत्या-

---

चक्षते' इति श्रुतेश्च। ऋत्विजामपि ...

दशी युक्ता' इति वाक्यात् इति नव्याः। *मेषपृष्ठे मेषराशौ। *सौरिः शनिः। *महामाघीति। इयं च प्रयागेऽतिप्रशस्ता।

"महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा।
शालग्रामे महाचैत्री कृताः पुंसां महाफलाः॥"

इति गार्ग्योक्तेः। *तिलपात्राणीति। तिलपात्रदानमन्त्रः—

"देवदेव जगन्नाथ वाञ्छितार्थफलप्रद।
तिलपात्रं प्रदास्यामि तवाग्रे संस्थितेरहम्॥
तिलाः काश्यपसम्भूतास्तिलाः पापहराः स्मृताः।
तिलपात्रप्रदानेन मम पापं व्यपोहतु॥"

तिलदानमन्त्रः—

"तिलाः स्वर्णसमायुक्ता दुरितक्षयकारकाः।
विष्णुप्रीतिकरा नित्यमतः शान्तिं प्रयच्छ मे॥"

चक्षते' इत्यापस्तम्बवचनाच्चेत्यादि प्रयोगपारिजाते ज्ञेयम् । इति श्रीकमलाकरभट्टकृते निर्णयसिन्धौ द्वितीयपरिच्छेदे माघमासः समाप्तः ।

कुम्भे षोडश घटिकाः पुण्याः । शेषं प्राग्वत् । फाल्गुनकृष्णाष्टम्यां विशेषः कल्पतरौ—

'फाल्गुनस्य च मासस्य कृष्णाष्टम्यां महीपते ।'

इत्युपक्रम्य—

'जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी ।
उपोषितो रघुपतिः समुद्रस्य तटे तदा ॥
रामपत्नी च संपूज्या सीता जनकनन्दिनी ॥

फाल्गुनकृष्णचतुर्दशी*शिवरात्रिः । सा च केषु-

---

गोदानमन्त्रः—

"गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥"

अथ कम्बलमन्त्रः—

"और्णं पदमनुध्येयं स्वर्णबीजं तव प्रभो ।
दत्तं गृहाण देवेश पापं संहर सत्वरम् ॥"

इति माघः ।

*शिवरात्रिरिति । शिवरात्रिशब्दो योगरूढः । शिवरात्रिस्तिथिरिति योगः । तद्विशेषे च रूढिः । 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यादौ निर्मन्थ्यशब्दस्य अचिरनिर्मथिताख्याग्निवत् । अन्यथा योगमात्रेण चिरनिर्मथिताग्नेरपि प्रतीत्यापत्तेः । एतेन शिवव्रतयोग्या काचन तिथिरेव शिवरात्रिः योगात् । 'प्रोक्षणीरासादयति' इत्यादौ प्रकर्षेणोक्ष्यतेऽनेनेति योगेन सेचनसाधनमात्रवदिति द्वयं परास्तम् । किं च—

चिद्वचनेषु प्रदोषव्यापिनी ग्राह्येत्युक्तं, केषुचिन्निशीथ-व्यापिनी । तत्राद्या माधवीये—

'त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ॥'

स्मृत्यन्तरेऽपि—

'प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥'

अत्र प्रदोषो रात्रिः । उत्तरार्धे तस्या हेतुत्वोक्तेः । कामिकेऽपि—

---

"माघस्य कृष्णपक्षे या तिथिः सैव चतुर्दशी ।
शिवरात्रिस्तु सा ख्याता सर्वपापनिषूदनी ॥"

इति वाक्यं रूढिव्युत्पादकम् । अन्यथा माघादिपदानामुपलक्षणत्वापत्तेः ।

'तस्माच्छिवस्य या रात्रिः समाख्याता शिवप्रिया ।
तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः ॥'

इति तु योगस्येति । अत एव रूढैव शिवरात्रिः । 'रूढिर्योगमपहरति' इति न्यायात् । अत एव 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यादौ 'न हीनोऽङ्गप्रधानाभ्याम्' इति योगेनाहीनशब्दात्प्रकृतेरेव लाभात् तत्र विकल्पेन द्वादशोपसदन्वय इत्याशङ्कायामहीनशब्दस्य "अह्नः खः क्रतौ" इति व्याकरणस्मृत्या व्युत्पादनेन रात्रादिक्रतुषु रूढतया द्विरात्रादावेव द्वादशोपसद उत्कृष्यन्ते, प्रोक्षणीशब्दादौ तु गोशब्दादिवद् वृद्धव्यवहारस्याहीनशब्दवत्तन्त्रसूत्रादेश्चाऽसत्त्वान्न रूढिः, किन्तु योगमात्रमिति देश्यान्तरं [illegible] । योगव्युत्पादनवैयर्थ्यापातात् । व्रते तु शिवरात्रिशब्दो लाक्षणिक एव, नवरात्रादिशब्दवत् । अत्र निशीथव्याप्तिरेव निर्णायिका । पूर्वेद्युरेव

'आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी ।
तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमा ॥' इति ।

द्वितीयापि तत्रैव नारदसंहितायाम्—
'अर्धरात्रियुता यत्र माघकृष्णचतुर्दशी ।
शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥'

स्मृत्यन्तरेऽपि—
'भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ।
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा ॥' इति ।

ईशानसंहितायाम्—
'माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।
शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ॥' इति ।
'अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी ।
तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती ॥
नार्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी ।
नैव तत्र व्रतं कुर्यादायुरैश्वर्यहानितः ॥'

अर्धरात्रश्च द्वितीययामान्त्यतृतीययामाद्यघटीद्वयरूप इति माधवः । वचनं तूक्तं प्राक् । एवं सति पूर्वेद्युरेवोभयव्याप्तौ पूर्वैव ।
'त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥'
इति स्कान्दोक्तेः । दिनभुक्तिरस्तमयः ।

---

निशीथव्याप्तिः परेद्युरेवोभयेद्युरेवानुभयेद्युरिति चत्वारः पक्षाः । ग्रन्थस्तु निशीथप्रदोषोभयव्याप्तिनिर्णायक इत्याशयेन भाति । परन्तु

'जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।'

इति स्कान्दाच्च । दिनद्वये(१)निशीथव्याप्तौ हेमाद्रिमते पूर्वा ।

'अर्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ।
पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैः ॥'

इति पाद्मवचनात् । मदनरत्नेऽप्येवम् । गौडा अप्येवमाहुः ।

निर्णयामृते तु सर्वापि शिवरात्रिः प्रदोषव्यापिन्येव । अर्धरात्रवाक्यानि(२)कैमुतिकन्यायेन प्रदोषस्तावकानीत्युक्तम् । तन्न, अर्धरात्रस्य पूर्वं कर्मकालत्वोक्तेः । *परदिने प्रदोषनिशीथोभयव्याप्तिसत्त्वात्परैवेति तु माधवः । इदमेव च युक्तं प्रतीमः । परेद्युः प्रागुक्तार्धरात्रस्यैकदेशव्याप्तौ पूर्वेद्युः संपूर्णतद्व्याप्तौ च सत्यपि परेद्युः प्रदोषनिशीथोभययोगे पूर्वेद्युः संपूर्णव्याप्तेः पूर्वैव ।

'व्याप्यार्धरात्रं यस्यां तु लभ्यते या चतुर्दशी ।
तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः ॥

---

पूर्वमतान्न विशेषः । हेमाद्रिमते इत्यरुचिः । सा च 'अर्द्धरात्रात्पुरस्ताच्चेत्' इति वाक्यस्य परेद्युर्निशीथव्याप्त्यभावेऽप्युपपत्तेः । तस्माद्यत्र पूर्वेद्युर्निशीथे परेद्युश्च प्रदोषे तत्र पूर्वेद्युरेव । 'अर्द्धरात्रात्पुरस्ताच्चेत्' इत्युक्तवाक्यात् ।

दिनद्वये निशीथव्याप्तौ त्वाह—*परदिने इति । परेद्युरित्यादिपाठोऽपि समञ्जसः । स्फुटश्च पूर्वेद्युरेव । निशीथव्याप्तौ त्वाह—

---

(१) रात्रेरष्टमो मुहूर्तो निशीथः ।

(२) कैमुतिकन्यायस्तु—यदि अर्धरात्रव्यापिन्या अपि ग्रहणं तदा किमु प्रदोषव्यापिन्याः शङ्का इति ।

तदूर्ध्वाधोन्विता भूता सा कार्या व्रतिभिः सदा ॥'
इति माधवधृतेशानसंहितोक्तेः *पूर्वेद्युर्निशीथस्य परेद्युः प्रदोषस्येत्येकैकव्याप्तौ तु पूर्वैव । जयायोगस्य प्राशस्त्यात् । तदुक्तं नागरखण्डे—

'माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी ।
अनङ्गेन समायुक्ता कर्तव्या सा सदा तिथिः ॥'इति ।

पाद्मे—

'अर्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ।
पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैः ॥' इति ।

स्कान्देऽपि—

'भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ।
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा ॥' इति ।
'महतामपि पापानां दृष्टा वै निष्कृतिः परा ।
न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं शिवाम् ॥'

इति स्कान्दे दर्शयोगस्य निन्दितत्वाच्च । *यदा चतुर्दशी पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता परेद्युश्च निशीथादर्वागेव तदा परेद्युरेकव्याप्तिसत्त्वात् परैव ।

'माघासिते भूतदिनं हि राज-
न्नुपैति योगं यदि पञ्चदश्याः ।
जयाप्रयुक्तां न तु जातु कुर्या-
च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥'

इति वचनात् । एवं दिनद्वये प्रदोषव्याप्त्यभावे निशीथव्याप्तिसत्त्वात्पूर्वैव । *तेन दिनद्वये*निशीथव्या-

---

*पूर्वेद्युरित्यादि । दिनद्वये निशीथव्याप्त्यभावे त्वाह—*यदेति।

णौ*प्रदोषव्याप्त्या निर्णयः । दिनद्वये प्रदोषव्याप्तौ*नि-
शीथेन निर्णयः । एकैकव्याप्तौ तु निशीथेन निर्णय इ-
ति । इयं च*रविभौमसोमवारेषु शिवयोगे चातिप्रश-
स्ता । हेमाद्रौ तीर्थखण्डे लैङ्गे—

'फाल्गुनस्य चतुर्दश्यां कृष्णपक्षे समाहिताः ।
कृत्तिवासेश्वरं लिङ्गमर्चयन्ति शिवं शुभे ॥
ते यान्ति परमं स्थानं सदाशिवमनामयम् ॥'

[अथ]शिवरात्रिपारणानिर्णयः । शिवरात्रिपारणे तु
विरुद्धवाक्यानि दृश्यन्ते । स्कान्दे—

'कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।

---

तदेतदुपसंहरति—*अनेति । *निशीथव्याप्ताविति । नि-
शीथास्पर्शे चेति शेषः । *प्रदोषव्याप्त्येति । परेद्युरेवेत्यर्थः ।
*निशीथेनेति । पूर्वेद्युरेवेत्यर्थः । ईदृशोपसंहारफलं च प्रतिमास-
शिवरात्रौ एतन्निर्णयसंचारार्थमित्यग्रे स्पष्टीकरिष्यति । नव्यास्तु
शिरात्रिव्रते रात्रिः प्रधानम् ।

"उदये अन्विता ग्राह्याः क्वचिदस्तमयेऽन्विताः ।
व्रतिभिस्तिथयो यस्माद्वर्जयित्वा त्विदं व्रतम् ॥"

इति वचनाद्रात्रियोग एव प्रधानमित्याहुः । *रवीति ।

"माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् ।
भौमो वाऽथ भवेद्देवि कर्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगे तु तद्भवेदुत्तमोत्तमम् ॥"

इति स्कान्दात् । त्रिस्पृश्याऽपि प्रशस्ता ।

"त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी ।
अन्ते चैव सिनीवाली त्रिस्पृश्यामर्चयेद्धरम् ॥"

इति वचनात् । प्रारम्भे एतदुपयोगः ।

एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम् ॥' इति ।

तिथिमध्येऽपि पारणं स्कान्दे उक्तम्—

'उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाथवा न वा ॥
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
संस्नातानि भवन्तीह भूतायां पारणे कृते ।
तिथीनामेव सर्वासामुपवासव्रतादिषु ॥
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम् ॥' इति ।

अत्र यामत्रयादर्वाक् चतुर्दशीसमाप्तौ तदन्ते तदूर्ध्वगामिन्यां तु प्रातस्ति*थिमध्य एवेति हेमाद्रिमाधवादयो व्यवस्थामाहुः । तन्न ।

'तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम् ।
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणा ॥'

इत्यादिसामान्यवचनैरेव व्यवस्थासिद्धेरुभयविधवाक्यवैयर्थ्यापत्तेः । वयं तु 'तिथ्यन्ते पारणं भवेत्'इति कृष्णाष्टम्यादिविषयमेव, न तु शिवरात्रिविषयम् । तदुपादानं तु पूर्वयुतत्वमात्रकथनार्थम् । कथमन्यथा स्कान्दे एव शून्यहृदयवाक्यवत्तिथिमध्ये पारणविधानं घटते । तस्मात् 'विना शिवचतुर्दशीम्' इति पर्युदस्तत्वाच्छिव-

---

*तिथिमध्ये एवेति । ननु तिथिमध्ये यदि कदाचित्पारणा न जाता तदा व्रतहानिप्रसङ्ग इति चेच्छृणु ।

"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥"

रात्र्याः सर्वप्रकारेषु तिथिमध्य एव पारणेति ब्रूमः । शिष्टाचारोऽप्येवमेव । *दीपिकायां तु रात्रावपि तिथ्यन्त एवोक्तम्—'व्रततिथेरन्ते निशीथेऽपि वाश्नीयात्' इति । मदनरत्नकालादर्शयोस्तु—

'सा ह्यस्तमयपर्यन्तं व्यापिनी चेत्परेऽहनि ।
दिवैव पारणं कुर्यात्पारणे नैव दोषभाक् ॥'

इत्युक्तम् । *तन्न । तिथिमध्ये पारणविधानान्निषेधे फलायोगाच्च तिथ्यन्तानपेक्षणा*द्दोषाप्रसक्त्या चतुर्थपादासंगतेः । तेनेदं शिवरात्रिभिन्नव्रतपरं ज्ञेयम् ।

इदं च व्रतं(१)संयोगपृथक्त्वन्यायेन नित्यं काम्यं च । तथा च माधवीये स्कान्दे—

---

इत्यादिवचनैर्गौणकालो विधीयते न तु शिवरात्रिविषयं तदुपादानं तु पूर्वयुतत्वमात्रकथनार्थमिति । फक्किकाद्वये तु ग्रन्थकृतो निर्भरः । केचित्तु यदि नित्यकृत्यपूर्वकपारणसमाप्ता चतुर्दशी नास्ति यदि वा पारणदिने श्राद्धादिप्रसक्तिः तदा तिथ्यन्ते पारणविधिः सार्थकः । अन्यथा 'संकटे विषमे प्राप्ते' इत्यादि वाक्याज्जलपारणापत्तेरित्याहुः । *दीपिकायां त्विति । तुनाऽरुचिः स्पष्टा । मदनरत्नमतं दूषयति—*तन्नेति । अत्र 'तन्न । तिथिमध्ये पारणाविधानान्निषिद्धे फलायोगाच्च । तिथ्यन्तानपेक्षणाद्दोषाप्रसक्तौ चतुर्थपादासङ्गतेः । तेनेदं शिवरात्रिभिन्नव्रतपरं ज्ञेयम्' इति पाठः, तस्यायमर्थः—तिथिमध्ये इति । 'चतुर्दश्यां तु पारणम्' 'भूतायां पारणे कृते'इति वचनात् । निषिद्धे इति । 'विना शिवचतुर्दशीम्'इति पर्युदासस्य निषेधे पर्यवसानात् । दूषणान्तरमाह—*दोषाप्रसक्ताविति ।

---

(१)—एकस्योभयार्थत्वे संयोगपृथक्त्वन्यायः ।

'परात्परतरं नास्ति शिवरात्रिव्रतात्परम् ।
न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ॥
जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः ॥'

इत्यकरणे प्रत्यवायश्रवणात्

'वर्षे वर्षे महादेवि नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेत् ॥'

इति वीप्साश्रुतेः

'अर्णवो यदि वा शुष्येत्क्षीयते हिमवानपि ।
चलन्त्येते कदाचिद्वै निश्चलं हि शिवव्रतम् ॥'

इति वचनाच्च नित्यता ।

'मम भक्तस्तु यो देवि शिवरात्रिमुपोषकः ।
गणत्वमक्षयं दिव्यमक्षयं शिवशासनम् ॥
सर्वान्भुक्त्वा महाभोगांस्ततो मोक्षमवाप्नुयात् ॥'

इति स्कान्दात् ।

'द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वा ।'

इति तत्रैवेशानसंहितावचनात् [च] काम्यता । तत्रैव—

'शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् ।
*आचण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् ॥'

अत्र जागरोपवासपूजाः समुदिताः व्रतं, न तु प्रत्येकम् । समुदितानां*फलसम्बन्धात् । यत्तु—

---

*आचण्डालेति । शिवरात्रिव्रते चण्डालपर्यन्तमधिकार इति भावः । *फलसम्बन्धादिति ।

"उपवासप्रभावेन बलादपि च जागरात् ।

'अथ वा शिवरात्रिं च पूजाजागरणैर्नयेत् ।'

तथा—

'अखण्डितव्रतो यो हि शिवरात्रिमुपोषयेत् ।
सर्वान्कामानवाप्नोति शिवेन सह मोदते ॥
कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् ।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥'

इत्यादि स्कान्दं, तदू अनुकल्पत्वादशक्तपरम् ।

*माघेतरप्रतिमासशिवरात्रिस्तु—शिवरात्रिशब्दस्य माघकृष्णचतुर्दश्यामेव रूढत्वात्,

---

शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया ॥
अक्षयान्लभते लोकान् शिवसायुज्यमाप्नुयात् ।"

इति नागरखण्डात्

"स्वयं च लिङ्गमभ्यर्च्य सोपवासः सजागरः ।
अजानन्नपि निष्पापो निषादो गणतां गतः ॥ "

इति परकृतिस्वरूपार्थवादाच्च । अत्र परस्परमङ्गाङ्गीभावे मानाभावेन आग्नेयादिषड्यागवत्समप्राधान्यम् । क्वचित्केवलोपवासादिश्रवणं त्ववयुत्यानुवादः । वैश्वानरविद्युन्न्यायात् । तत्र विद्युल्लोकादित्यवाय्वाकाशोदकपृथिवीरूपाऽवयवषट्कयुक्तो विराट् वैश्वानरः । तत्र प्रत्येकं प्राचीनादिषड्क्रतुभिर्विद्युदाद्युपासनमभिधाय शेषे 'वैश्वानरमुपासीत' इति समुदायोपासनाम्नानाद्विकल्पो मा प्रसाङ्क्षीदिति विद्युदुपासनादिवाक्यानां अवयुत्यानुवादकत्वाङ्गीकारात् ।

प्रतिमासशिवरात्रिमधिकृत्याऽऽह—*माघेतरेति । नैत्यकं नित्यभवं, द्वादशमासान् । एतच्च व्रतं चतुर्दशाब्दं कार्यमित्यनुपदम-

'माघमासस्य शेषे या प्रथमा फाल्गुनस्य च ।
कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्तिता ॥'

इति हेमाद्रौ वचनाच्च नायं निर्णयस्तत्रेति रात्रौ यामचतुष्टये पूजाविधानाद्यस्मिन्दिने अधिका रात्रिव्याप्तिः–सा ग्राह्या, साम्ये तु पूर्वैवेति हेमाद्रिरूचिवान् । वस्तुतस्तु प्रतिमासकृष्णचतुर्दश्यामपि—

'सर्वकामप्रदं कृष्णचतुर्दश्यां शिवव्रतम् ।'

इत्युपक्रम्य—

'चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम् ।'

इति हेमाद्रौ कालोत्तरे शिवरात्रिशब्दप्रयोगात् कौण्डपायिनामयनाग्निहोत्रे नैत्यकाग्निहोत्रधर्मा इव तद्धर्मप्राप्तिः स्यादेव । अतः प्रदोषनिशीथोभयव्याप्त्यैव निर्णय इति वयं प्रतीमः । अस्यारम्भो हेमाद्रौ स्कान्दे—

'आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि वा ।
गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत् ॥'

तथा—

'दीपोत्सवे तथा माघे कृष्णा या तु चतुर्दशी ।
द्वादशस्वपि मासेषु प्रकुर्यादिह जागरम् ॥'
"*एवं द्वादशवर्षेषु द्वादशैव तपोधनान् ॥

वरयेदिति शेषः । चतुर्दश वा विप्रान् आचार्यं च वृत्वा—

---

ग्रे स्पष्टम् । द्वादशवर्षमित्यनुकल्पः । पूजामाह–*एवमिति । एतच्च प्रतिमासशिवरात्रिपूजनमुक्तम् । अथ वर्षशिवरात्रिव्रतप्रयोगः—

'कुम्भोपरि न्यसेद्देवमुमया सहितं शिवम् ।
सौवर्णेप्यथ वा रौप्ये वृषभे संस्थितं शुभे ॥"

इत्युक्तम् । हैमीं मूर्तिं संपूज्य स्थिरं चरं वा लिङ्गं पञ्चामृतसहस्रशतपञ्चाशत्तदर्धान्यतमकुम्भैः संस्नाप्य संपूज्य जागरं कृत्वा परेद्युस्तिलान्सहस्रं शतं वा हुत्वा विप्रेभ्यो वस्त्राणि द्वादश गाश्च दत्त्वा आचार्याय धेनुं शय्यां च दत्त्वा विप्रान्भोजयेदिति मदनरत्ने उक्तम् ।

'विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥
तस्मान्मृदापि कर्तव्यं ललाटे वै त्रिपुण्ड्रकम् ।'

इति लैङ्गात् त्रिपुण्ड्रं रुद्राक्षमालां च धृत्वा 'सूर्यसोमौ समः कालः सन्ध्ये भूतान्यहः क्षपा ।' इति सूर्यादिभ्यो व्रतं निवेद्योदङ्मुखो वारिपूर्णं ताम्रपात्रं गृहीत्वा तिथ्याद्युल्लिख्य शिवप्रीत्यर्थं—

'शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम् ।
निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते ॥
चतुर्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं भव चेश्वर ॥'

इति जलमुत्सृजेत् । ततो नित्यकर्म विधाय रात्रौ प्रथमप्रहरे 'शिवपूजां करिष्ये' इति संकल्प्य, प्रतिष्ठिते लिङ्गे अप्रतिष्ठिते तु तदैव कृतप्राणप्रतिष्ठे, शिवपञ्चाक्षरेण मन्त्रेण वैदिकैर्वा पौराणिकैर्वा मन्त्रैर्नाममन्त्रेण वा प्रणवादिनमोन्तेन आवाहनादिषोडशोपचारैः पूजयेत् । 'ॐ ह्रौं ईशानाय नमः' इति प्रथमप्रहरे क्षीरेण स्नपनम् ।

'शिवरात्रिव्रतं देव पूजाजपपरायणः ।
करोमि विधिवत्तत्र गृहाणार्घ्यं महेश्वर ॥'

इत्यर्घ्यश्च कार्यम् । ततस्तन्मन्त्रजपेन तत्कथाश्रवणादिवता वा जागरणं कुर्यात् ।

'तज्जप्यजपनध्यानतत्कथाश्रवणादिकम् ।
उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः ॥'

इति वचनात् । एवं द्वितीयप्रहरे 'ॐ ह्रौँ अघोराय नमः' इति दध्ना स्नपनम् ।

'नमः शिवाय शान्ताय सर्वपापहराय च ।
शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह ॥'

इत्यर्घ्यदानं कार्यं, पूर्वोत्तरपूजादि पूर्ववत् । एवं तृतीयप्रहरे 'ॐ ह्रौँ वामदेवाय नमः' इति घृतेन स्नपनम् ।

'दुःखदारिद्र्यशोकेन दग्धोऽहं पार्वतीपते ।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे ॥'

इत्यर्घ्यं च दद्यात् । शेषं प्राग्वत् । एवं चतुर्थप्रहरे 'ॐ ह्रौँ सद्योजाताय नमः' इति मधुस्नपनम् ।

'मया कृतान्यनेकानि पापानि हर शङ्कर ।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे ॥'

इत्यर्घ्यं च दद्यात् शेषं प्राग्वत् । ततः प्रभाते–

'अविघ्नेन व्रतं देव त्वत्प्रसादात्समापितम् ।
क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर ॥
यन्मयाऽद्य कृतं पुण्यं तद् रुद्रस्य निवेदितम् ।
त्वत्प्रसादान्महादेव व्रतमद्य समापितम् ॥
प्रसन्नो भव मे श्रीमन्सद्गतिः प्रतिपाद्यताम् ।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ॥'

इति व्रतं समर्पयेत् । परदिने यथाशक्ति ब्राह्मणान्भोजयित्वा

'संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर ।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥'

इति संप्रार्थ्य बन्धुभिः सह पारणं कुर्यादिति ।

*माघामावास्या युगादिः । तदुक्तम्—'माघमासे त्वमावास्या' इति । अन्यत्प्राग्वत् । तथान्योऽपि विशेषो विष्णुपुराणे—

'माघासिते पञ्चदशी कदाचित्
उपैति योगं यदि वारुणेन ।
ऋक्षेण, कालः स परः पितॄणां
न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥' इति ।

*वारुणं शतभिषक् । इदं च कुम्भादित्ये ज्ञेयमिति हेमाद्रिः । भारते—

'काले धनिष्ठा यदि नाम तस्मिन्
भवेत्तु भूपाल तदा पितृभ्यः ।
दत्तं तिलान्नं प्रददाति तृप्तिं
वर्षायुतं तत्कुलजैर्मनुष्यैः ॥' इति ।

---

*माघेति । अमान्तमानेन ।

*वारुणमिति । पूर्वाभाद्रपदोपलक्षणम् ।

'तत्रैव चेद्भाद्रपदास्तु पूर्वाः कालस्तदा यत्क्रियते पितृभ्यः ।
श्राद्धं परां तृप्तिमवाप्नुवन्ति युगान्सहस्रं पितरश्च तेन ॥'

इति तत्रैवोक्तेः । अत्रैव वारुण्यादिपर्व प्राग्ग्रन्थे प्रदर्शितम् । ब्राह्मे—

'फाल्गुनस्यापरे पक्षे कुम्भस्थे दिवसाऽधिपे ।
जीवे धनुषि योगे च शोभने रविवासरे ॥
पुष्यर्क्षे यदि सम्पूर्णा गोविन्दद्वादशी मता ।'

तिथितत्त्वे—

'फाल्गुने शुक्लपक्षस्य पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥

फाल्गुनपौर्णमासी होलिका । सा च सायाह्नव्यापि-
नी ग्राह्या ।

'सायाह्ने होलिकां कुर्यात्पूर्वाह्ने क्रीडनं गवाम् ।'

इति वचनादिति निर्णयामृते उक्तम् । ज्योतिर्निबन्धे
तु—

'प्रतिपद्भूतभद्रासु याऽर्चिता होलिका*दिवा ।
संवत्सरं च तद्राष्ट्रं पुरं दहति साद्भुतम् ॥

---

गोविन्दद्वादशीं प्राप्य गच्छेच्छ्रीपुरुषोत्तमम् ।
विनायासेन राजेन्द्र मुक्तः सायुज्यमाप्नुयात् ॥'

'कुम्भेऽर्के देवपूज्ये यदि धनुषि गते शीतगौ कर्कटस्थे
पुष्यर्क्षे फाल्गुने मास्य[पि] शुभफलदे शोभने शुक्लपक्षे ।
चेत्स्यात्भाग्यातिरेकादिह जलधितले द्वादशी विष्णुतीर्थे
गोविन्दद्वादशीयं कलिकलुषहरा कृष्णसायुज्यदात्री ॥'

पाद्मोत्तरखण्डे तु—

'जीवे चापगते रवौ कलशगे चन्द्रे कुलीरस्थिते
मासे फाल्गुनसंज्ञके सिततरे पक्षे यदा द्वादशी ।
पुष्यर्क्षेण च शोभनेन च तथा युक्ता कथंचिद्भवेत्
क्षेत्रे श्रीपुरुषोत्तमे सुविमले गोविन्दनामा हि सा ॥''

अत्र श्रीगोविन्दं संपूज्योपवासं कुर्यात् ।

''गोविन्दद्वादशीं प्राप्य महत्या पूजयाऽर्चयेत् ।
उपोष्य च जगन्नाथं नमेच्छ्रीपुरुषोत्तमम् ।''

इत्युक्तेः । गङ्गास्नाने च मन्त्रः पाद्मे—

'महापातकसंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जान्हवि ॥' इति ।

प्रदोषव्यापिनी ग्राह्या पौर्णिमा फाल्गुनी सदा ।
तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ॥'

इति नारदवचनात्प्रदोषव्यापिनीत्युक्तम् । हेमाद्रौ मदनरत्ने च भविष्ये—

'अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे ।
गोमयेनोपलिप्ते च सचतुष्के गृहाङ्गणे ॥'

इत्यादिना तत्रैव तद्विधानाच्च । तेनेयं*पूर्वविद्धा—

'श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥'

इति बृहद्यमब्रह्मवैवर्तोक्तेश्च । दिनद्वये प्रदोषव्याप्तौ परैव । पूर्वदिने भद्रासत्त्वात्तत्र च होलिकानिषेधात् । तदुक्तं निर्णयामृते मदनरत्ने च पुराणसमुच्चये—

'भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै ।
नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत् ॥'

तथा—

'भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ॥'

तथा—

*'दिनार्धात्परतोपि स्यात्फाल्गुनी पूर्णिमा यदि ।

---

*दिवेति । 'सायान्हे होलिकां कुर्यात्' इत्यत्र सायान्हे अतीते इत्यर्थात्तद्विरोधः । इयमेव निर्णयामृतोऽपर्यहाचिः । *पूर्वविद्धेति । पूर्वेद्युरेव प्रदोषव्याप्तौ इति शेषः । दिनद्वये इत्याद्यग्रे उक्तेः । *प्रदोषव्याप्तौ । साकल्येनैकदेशेन वेत्यादि । अव्याप्तौ त्वाह—*दिनार्द्धादिति । अत्र—

रात्रौ भद्रावसाने तु होलिका दीप्यते तदा ॥' इति ।
यदा तु पूर्वदिने*चतुर्दशी प्रदोषव्यापिनी परदिने च क्षयवशात्सायाह्नात्प्रागेव पूर्णिमा समाप्यते, तदा पूर्वदिने संपूर्णरात्रौ भद्रासत्त्वात्तत्र च तन्निषेधात्परेऽहनि प्रतिपद्येव कुर्यात् ।

*'सार्धयामत्रयं वा स्याद्द्वितीयदिवसे यदा ।
प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता ॥'

इति भविष्यवचनादिति निर्णयामृतकारः । मदनरत्नेऽप्येवम् । यत्तु—'वह्नौ वह्निं परित्यजेत्' इति भविष्यम् । वह्नौ होलिकायां वह्निं प्रतिपदं वर्जयेदित्यर्थः । तदुक्ताभिन्नविषयमिति तत्रैवोक्तम् । *अन्ये तु तस्यां भद्रा-

---

"पञ्च पञ्च उषःकालः, सप्त पञ्चारुणोदयः ।
अष्ट पञ्च भवेत्प्रातः, शेषः सूर्योदयः स्मृतः ॥"

इति लक्षितः सूर्योदयो वर्ज्य इति सम्प्रदायात्तत्पूर्वं भद्रान्तं प्रतीक्ष्य होलादीपनं कार्यमित्यर्थः । अत्र प्रदोषातिक्रमो भवत्येव । *चतुर्दशीति । भद्रारहितकालालाभे तात्पर्यम् । *सार्द्धेति । वाकारस्तत आधिक्यार्थः । तथा च यदोत्तरदिने सार्द्धयामत्रयं ततोऽधिकं वा पूर्णिमा न तु प्रदोषे, परेद्युश्च प्रतिपद्वृद्धिस्तदा पूर्णिमोत्तरं प्रतिपदि प्रदोषे होलिका कार्या न तु पूर्वेद्युर्विष्टिपुच्छे इत्यर्थः । एवं सति योत्तरादिने प्रदोषैकदेशेऽस्ति पूर्वरात्रौ च न भद्रारहिता, तदा सुतरामुत्तरेति । अत्र यदा पूर्वदिने सार्द्धयामत्रयं ततोऽधिका वा पूर्णा न तु प्रदोषे, परदिने च प्रतिपदो न वृद्धिः किन्तु साम्यं क्षयो वा, तत्र पूर्वेद्युरेव होलिका कार्येत्यर्थसिद्धम् । तत्र पूर्वदिने संपूर्णरात्रौ भद्रासत्त्वात्क्व कार्येत्यत्राह—*अ-

मुखं त्यक्त्वेत्यर्थः ।

'प्रदोषव्यापिनी चेत्स्यात्तदा पूर्वदिने तदा ।
भद्रामुखं वर्जयित्वा होलिकायाः प्रदीपनम् ॥'

इति नारदवचनात्

'निशागमे प्रपूज्येत होलिका सर्वदा बुधैः ।
न दिवा पूजयेत् ढुण्ढां पूजिता दुःखदा भवेत् ॥'

इति दिवोदासीये वचनात्

'यामत्रयोर्ध्वंयुक्ता चेत्प्रतिपत्तु भवेत्तिथिः ।
भद्रामुखं परित्यज्य कार्या होला मनीषिभिः ॥'

इति विद्याविनोदेऽभिधानाच्च भद्रामुखं विहाय पूर्वदिन एव कार्येत्याहु*ः । (१) भद्रामुखं तु—'नाड्यस्तु पञ्च

---

न्ये त्विति । *आहुरिति अरुचिः । सा च भद्रामुखमात्रपरित्यागो न प्रामाणिक इति । अत्र पूर्वेद्युर्विष्टिपुच्छे कार्या ।

'पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि तु ।
तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशयः ॥'

इति लल्लवचनात् । विष्टिपुच्छं तु ज्यौतिषे—

'मेषार्कनखनाडीभ्यो भद्रापुच्छं घटीद्वयम् ।
क्रमेण धवले पक्षे व्युत्क्रमेण सितेतरे ॥'

म २७, इष ५, अर्क १२, नख २० । पूर्वमते स्वरसं सूचयन्नेत्रा-

---

(१) भद्रामुखपुच्छलक्षणं धर्मसिन्धौ—पूर्णिमायां भद्रायास्तृतीयपादान्ते घटीत्रयं पुच्छं, चतुर्थपादाद्यघटीपञ्चकं मुखम् । तथा च मध्यममानेन षष्टिघटीमितायां पूर्णिमायां पूर्णिमाप्रवृत्त्युत्तरं सार्धैकानविंशतिघटिकोत्तरं घटीत्रयं पुच्छं, सार्धद्वाविंशतिघटिकोत्तरं घटीपञ्चकं मुखम् । तिथेश्चतुःषष्टिघटिकामितत्वे पूर्णिमाया एकविंशतिघटिकोत्तरं पुच्छं, चतुर्विंशतिघटिकोत्तरं मुखम् । एवं तिथेर्मानान्तरेऽप्यूह्यम् ।

वदनं गलकस्तथैका' इति रत्नमालोक्तं ज्ञेयम् । शिष्टाचारोऽप्येवमेव ।

अत्र चेच्चन्द्रग्रहणं तदा ततोर्वाङ्निशि भद्रावर्ज्यपौर्णमास्यां होलिकादीपनम् । अथ परेऽह्नि ग्रस्तोदयस्तदा पूर्वदिने भद्रावर्जं रात्रौ चतुर्थयामे विष्टिपुच्छे वा होलिका कार्या । ग्रहोत्तरं प्रतिपत्सत्त्वात्तत्पूर्वं च दिवा होलानिषेधादिति दिवोदासचन्द्रप्रकाशौ । *वस्तुतस्तु परदिने प्रदोषे पौर्णमासीसत्त्वे कर्मकालस्पर्शे चतुर्थयामादिगौणकालग्रहणे मानाभावाद्भद्राभावाच्च ग्रहणकाल एव होला कार्या । न च—

'सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥'

इति निषेधात् कथं सूतके होलेति वाच्यम् । तस्यो*त्तरार्धशेषत्वात् । पूजामन्त्रस्तु—

'असृक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः ।
अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा(१) भव॥'इति ।

---

ह—*वस्तुतस्त्विति । *उत्तरार्द्धशेषत्वादिति । स्नानपर्यन्तमशुचित्वम् । स्नानोत्तरं तु नित्यनैमित्तिकयोरधिकार इति भावः।

---

(१) अत्र धर्मसिन्धौ तु पूर्वं संकल्पादि उक्त्वा शुष्काणां काष्ठानां गोमयपिण्डानां च राशिं कृत्वा वह्निना प्रदीप्य तत्र मन्त्रस्तु—

'अस्माभिर्भयसंत्रस्तैः कृता त्वं होलिके यतः ।
अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव ॥'

इत्युक्तः । तत्र पूर्वार्धे भेददर्शनान्मन्त्रस्य सत्यता संदिग्धा भवति । परं तत्र सत्यासत्यनिर्णये सर्वथा सुधिय एव प्रभवन्ति । अन्योऽपि पूजोत्तरं विशेषस्तत्रोक्तः । यथा—

( यत्तु(१)वार्तिककारैर्होलिका आचारप्राप्तेत्युक्तम्। तत्र हेमाद्र्याद्युदाहृतभविष्यवचनानि असिद्धानि कृत्वा चिन्ता ज्ञेया। आर्त्यधिकरणवत्।) हुताशनी मलमासे न भवति। इयं मन्वादिरपि। सा तु पौर्वाह्णिकी ग्राह्या। मलमासे सति मन्वादिश्राद्धं मासद्वये कार्यमित्युक्तं प्राक्। कृत्यचिन्तामणौ ब्राह्मे—

'नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम्।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥'

---

'तमग्निं त्रिः परिक्रम्य गायन्तु च हसन्तु च।
जल्पन्तु स्वेच्छया लोका निःशङ्का यस्य यन्मतम् ॥'

ज्योतिर्निबन्धे—

'पञ्चमीप्रमुखास्तासु तिथयोऽनन्तपुण्यदाः।
दश स्युः शोभनास्तासु काष्ठस्तेयं विधीयते ॥
चाण्डालसूतिकागेहाच्छिशुहारितवह्निना।
प्राप्तायां पूर्णिमायां तु कुर्यात्तत्काष्ठदीपनम् ॥
ग्रामाद्बहिश्च मध्ये वा तूर्यनादसमन्वितः।
स्नात्वा राजा शुचिर्भूत्वा स्वस्तिवाचनतत्परः ॥
दत्त्वा दानानि भूरीणि दीपयेद्धोलिकाचितिम्।
ततोऽभ्युक्ष्य चितिं सर्वां साज्येन पयसा सुधीः ॥
नारिकेलानि देयानि बीजपूरफलानि च।
गीतवाद्यैस्तथा नृत्यै रात्रिः सा नीयते जनैः ॥
तमग्निं त्रिः परिक्रम्य शब्दैर्लिङ्गभगाङ्कितैः।
तेन शब्देन सा पापा राक्षसी तृप्तिमाप्नुयात् ॥' इति।

होलिकादिनं, करिसंज्ञकं तदुत्तरदिनं च शुभे वर्ज्यम्।

'होलिकाग्रहणमातुकाय्यनं प्रेतदाहदिवसोऽत्र पञ्चमः।
तत्परं च करिसंज्ञकं दिनं वर्जितं सकलकर्मसु भयम् ॥'

इति वचनादित्यपि विशेषस्तत्रैव।

(१) अत्रायं धनुश्चिह्नान्तर्वर्ती भागः प्राचीनपुस्तकेष्वनुपलम्भात्प्रक्षिप्त इति गम्यते।

चैत्रकृष्णप्रतिपदि वसन्तोत्सवः । सा चौदयिकी ग्राह्या ।

'प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।'

इति भविष्योक्तेः । दिनद्वये तथात्वे पूर्वा ।

'वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ॥'

इति वृद्धवसिष्ठवचनात् । अत्र विशेषो हेमाद्रौ भविष्ये—

'चैत्रे मासि महाबाहो पुण्ये तु प्रतिपद्दिने ।
यस्तत्र श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः ॥
न तस्य दुरितं किंचिन्नाधयो व्याधयो नृप ॥' इति ।

तथा—

'प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।
कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः ॥
वन्दयेद्धोलिकाभूमिं सर्वदुःखोपशान्तये ॥'

मन्त्रश्च—

'वन्दितासि सुरेन्द्रेण ब्रह्मणा शंकरेण च ।
अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव ॥' इति ।

अत्र चूतकुसुमप्राशनमुक्तं तत्रैव पुराणसमुच्चये-

'वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च ।

---

चैत्रकृष्णप्रतिपदि वसन्तोत्सवः । अत्र तैलाभ्यङ्ग उक्तः । तत्र सचन्दनं चूतपुष्पं प्राश्नीयात् ।

'ये पिबन्ति वसन्तादौ चूतपुष्पं सचन्दनम् ।
सुसंहृत्स्थस्य कामस्य पूजनं क्रियते नरैः ॥'

इति भविष्यात् ।

संप्राश्य चूतकुसुमं सह चन्दनेन
सवत्सं हि पार्थ पुरुषोऽथ समाः सुखी स्यात् ॥'

मन्त्रस्तु—

'चूतमग्र्यं वसन्तस्य भाकन्दं कुसमं तव ।
सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये ॥' इति ।

चैत्रामावास्या मन्वादिः । सा चापराह्णव्यापिनी ग्राह्या कृष्णपक्षस्थत्वात् ॥ इति फाल्गुनमासः समाप्तः ॥

एवं निरूपितमिदं गहनं तु काल-
तत्त्वं विचार्य वचनैश्च नयैश्च सम्यक् ।
तद्दोषदृष्टिमपहाय विवेचनीयं
विद्वद्भिरित्यविरतं प्रणतोऽस्मि तेषु ॥ १ ॥

मया सद्वाऽसद्वा यदिह गदितं मन्दमतिना
किमेतच्छक्यं वाऽध्यवसितुमपि स्वल्पमतिना ।
तदेवं यत्किञ्चिद्गदितमिह विख्यातमहिमा
प्रतापोऽयं सर्वो विक्रमति तु पित्रोश्चरणयोः ॥ २ ॥

यो भाट्टतन्त्रगहनार्णवकर्णधारः
शास्त्रान्तरेषु निखिलेष्वपि मर्मभेत्ता ।
योऽत्र श्रमः किल कृतः कमलाकरेण
प्रीतोऽमुनाऽस्तु सुकृती बुधरामकृष्णः ॥ ३ ॥

इति श्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टसुतदिन-
करभट्टानुजभट्टकमलाकरकृते निर्णयसिन्धौ
संवत्सरकृत्यनिरूपणं नाम द्वितीयः
परिच्छेदः समाप्तः ॥

---

एवं चैत्रकृष्णद्वितीयायां [illegible]ऽवगन्तव्यम् ।

इति द्वितीयः परिच्छेदः समाप्तः ॥

—:०:—

सटीके

# निर्णयसिन्धौ

## तृतीयः परिच्छेदः ।

### अथ प्रकीर्णकनिर्णयः ।

श्रीरामकृष्णतनयः कमलाकरसंज्ञितः ।
निरूप्य तिथिकृत्यं तु प्रकीर्णं वक्तुमुद्यतः ॥ १ ॥

तत्रादौ संस्कारेषु गर्भाधानम् । तत्र प्रथमरजोदर्श-ने दुष्टमासग्रहणं, *संक्रमादिफलं, तत्र शान्त्यादि च पि-तृकृतप्रयोगदीपिकायां भट्टकृतप्रयोगरत्ने [च] ज्ञेयम् । किं-च्यते । मदनरत्ने नारदः-

टिप्पण्या परिष्कृतश्च । ...निपत्स्वपि ।

NIRNAYA SINDHU;
of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Vyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS IX -९

*PUBLISHED & SOLD BY THE SECRETARY*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG: GERMANY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1924.

पतिव्रता क्लेशभागी सूर्यवारादिषु क्रमात् ।'
'वैधव्यं सुतलाभश्च मैत्रं शत्रुविवर्धनम् ॥
मित्रलाभः शत्रुवृद्धिः कुलार्द्धिर्बन्धुनाशनम् ।
मरणं वंशवृद्धिश्च निराहारः कुलक्षयः ॥
तेजश्च सुतनाशश्च कुलहानिस्तिथिक्रमात् ॥'

गर्गः—

'सुभगा चैव दुःशीला वन्ध्या पुत्रसमन्विता ।
धर्मयुक्ता व्रतघ्नी च परसन्तानमोदिनी ॥
सुपुत्रा चैव दुःपुत्रा पितृवेश्मरता सदा ।
दीना प्रजावती चैव पुत्राढ्या चित्रकारिणी ॥
साध्वी पतिप्रिया नित्यं सुपुत्रा कष्टचारिणी ।
स्वकर्मनिरता हिंस्रा पुण्यपुत्रादिसंयुता ॥
नित्यं धनचयासक्ता पुत्रधान्यसमन्विता ।
मूर्खा चाऽज्ञा पुण्यवती दस्रक्षादेः क्रमात्फलम् ॥'

नारदः—

'कुलीरवृषचापा*न्त्य*नृयुक्कन्यातुलाघटाः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥'

गर्गः—

'सुभगा श्वेतवस्त्रा स्याद्, दृढवस्त्रा पतिव्रता ।
क्षौमवस्त्रा क्षितीशा स्यात्, नववस्त्रा सुखान्विता ॥
दुर्भगा जीर्णवस्त्रा स्याद्, रोगिणी रक्तवाससा ।
नीलाम्बरधरा नारी पुष्पिता विधवा ततः ॥
वस्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् ।
समाश्चेत्कन्यकाश्चेति फलं स्यात्प्रथमार्तवे ॥'

---

[illegible] । *अन्त्यो मीनः । *नृयुक्

अथ स्त्रीसंसर्गवर्जनमाह वसिष्ठः—

'प्रभूतदोषं यदि दृश्यते तत्
पुष्पं तदा शान्तिककर्म कार्यम् ।
विवर्जयेदेव तदैकशय्यां
यावद्रजोदर्शनमुत्तमेऽह्नि ॥'

ज्योतिर्निबन्धे वसिष्ठः—

'*आद्यतौ पौषशुक्रोर्जमधुशुचिनभस्याश्वयुक्पापवारा रिक्तामा(१)र्काष्टषष्ठ्यः पितृपरसदने रात्रिसंध्यापराह्णे । मिश्रोग्रा मूलतीक्ष्णं विवरमनरुणाल्पाधिकास्त्रं गराष्टो-त्पातः पापस्य लग्नं न सदरुणजरन्नीलरक्ताम्बरं च ॥'

मिथुनम् । *आद्यर्ताविति । मासादिफलोक्तिः । शुक्रो ज्येष्ठः । ऊर्जः कार्तिकः । मधुश्चैत्रः । शुचिराषाढः । नभस्यो भाद्रपदः । आश्वयुगाश्विनः । पापवाराः रविभौमशनयः । पितृपरसदने इति दोषाधिक्यार्थम् । मिश्रेत्याद्यग्रे स्पष्टम् । विवरं गण्डान्तम् । अनरुणादित्रयद्वन्द्वानन्तरं कर्मधारयः । अस्त्रं रजः । गराष्टं गरमारभ्याष्टकरणानि । पापस्य लग्नं ज्योति-र्विद्भ्यो ज्ञेयम् । *आद्यर्ताविति । योगफलोक्तिः ।

"ग्रामाद्बहिः परग्रामे नारी स्याद्व्यभिचारिणी ।
पतिव्रता पतिस्थाने, शुभगा गृहमध्यतः ॥
ग्राममध्ये तु॰ वृद्धिश्च, विधवा च दिगम्बरा ।
उपरागे च दुःशीला, आयुष्यं जलसंनिधौ ॥
धनमध्ये तु कन्या या धनधान्यसमृद्धिदा ॥"

वसिष्ठः—

"वैधव्यमष्टमस्थेऽर्के, चन्द्रे क्षीणरुचिर्भवेत् ।
अङ्गारके भर्तृहीना, बुधे चेदनपत्यता ॥

---

(१) 'रिक्तापर्वाष्ट क०

*'आद्यर्तौ दुर्भगा नारी विष्कम्भे चेद्रजस्वला ।
वन्ध्या चैवातिगण्डे च, शूले शूलवती भवेत् ॥
गण्डे तु पुंश्चली नारी, व्याघाते चात्मघातिनी ।
वज्रे च स्वैरिणी प्रोक्ता, पाते च पतिघातिनी ॥
परिघे मृतवन्ध्या च, वैधृतौ पतिमारिणी ।
शेषाः शुभावहा योगा यथानामफलप्रदाः ॥'

शान्तिमाह प्रयोगपारिजाते शौनकः—

'सार्तवानां तु नारीणां शान्तिं वक्ष्यामि शौनकः ।
(१) पञ्चमेऽह्नि चतुर्थे वा (२)ग्रहयज्ञपुरःसरम् ॥
(३) (तस्मिन्नहनि कर्तव्य ऋतुहोमो विधानतः ।

---

* दौर्भाग्यमिन्द्रसचिवे, सापत्यं भार्गवे भवेत् ।
प्रव्रज्या सूर्यपुत्रे तु, राहौ तु कलहः सदा ॥
अशुभं चैव केतौ स्याज्जामित्रे शुभदाः शुभाः ॥"

जामित्रे सप्तमस्थाने । नरसिंहः—

"लग्नस्य प्रथमस्थाने सूर्यो वैधव्यकारकः ।
पुत्रहानिकरस्त्वारो, बुधः सत्पुत्रदो भवेत् ॥
बृहस्पतिर्धनायुष्ये, शुक्रः साफल्यमेव च ।
शनैश्चरे तु वन्ध्या स्याद् राहौ तु मरणं ध्रुवम् ॥
चन्द्रे सद्गुणसंयुक्ते देवरातमताच्छुभम् ॥"

अन्यदपि शुभाशुभं प्रयोगरत्नोक्तं बोध्यम् ।

---

(१) प्रथमदिननिर्णयस्तु पारिजाते चतुर्विंशतिमते—'पूर्वाशयोस्तु रात्रौ चेज्जननं मरणं रजः । दृष्टं पूर्वदिनादित्वं, तृतीये तूत्तरेऽहनि ॥ केचिद्दिवोदिते सूर्ये जननं मरणं तथा । रजो वा दृश्यते स्त्रीणां यस्याहस्तस्य शर्वरी ॥ अपरे त्वर्धरात्रात्प्राङ्मृतौ रजसि सूतके । पूर्वमेव दिनं प्राहुरूर्ध्वं चेदुत्तरेऽहनि ॥' इति । अत्र देशाचारतो व्यवस्था ॥

(२) 'ग्रहातिथ्यपुरःसरम्' इति कपुस्तके ।

(३) धनुश्चिन्हान्तर्गतो ग्रन्थः कखपुस्तकयोर्नास्ति ।

आचार्यं वरयेत्प्राज्ञो भुवनेश्वरितुष्टये ॥
होमार्थं च जपार्थं च वरयेदृत्विजो बहून् ।
यजमानो द्विजैः सार्धं शान्तिहोमं समाचरेत् ॥
गृहादीशानदिग्भागे देवतापूजनाय च ।)
द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत् ॥
कुम्भत्रयं न्यसेद्राशौ तन्तुवस्त्रादिवेष्टितम् ।
(१) ( पूरयेत्तीर्थसलिलैः प्रतिकुम्भं पृथक्पृथक् ॥)
सूक्तेनाथ नवर्चेन प्रसुव आप इत्यथ ।
ऋचा याः प्रवतस्तद्वद्गायत्र्या च ततः क्रमात् ॥
मध्यकुम्भे क्षिपेद्धान्यमौषधानि च हेम च ।
(२) (ततश्च पञ्चरत्नानि गन्धपुष्पाक्षतादिकान् ॥
औषधानि च वक्ष्यन्ते मुनिभिः शान्तिकारणात् ।)
उदुम्बरः कुशो दूर्वा राजीववटबिल्वकाः ॥
विष्णुक्रान्ताऽथ तुलसी बर्हिषं शङ्खपुष्पिका ।
शतावर्यश्वगन्धा च निर्गुण्डी सर्षपद्वयम् ॥
अपामार्गः पलाशश्च पनसो जीवकस्तथा ।
प्रियङ्गवश्च गोधूमा व्रीहयोऽश्वत्थ एव च ॥
क्षीरं दधि च सर्पिश्च पद्मपत्रं तथोत्पलम् ।
कुरण्टकत्रयं गुञ्जा वचाभद्रकमुस्तकाः ॥
द्वात्रिंशदौषधानीह यथासंभवमाहरेत् ।
मृत्तिकाश्चौषधादीनि तन्मन्त्रेण क्षिपेत्क्रमात् ॥
कुम्भोपरि न्यसेत्पात्रं कांस्यं मृद्वेणुताम्रजम् ।
भुवनेश्वरीं न्यसेत्तत्र इन्द्राणीं च पुरन्दरम् ॥
जपेद्गायत्रिमाहोमाच्छ्रीसूक्तं च जपेत्ततः ।

---

(१) अयं कंसान्तर्गतो ग्रन्थः खपुस्तके नास्ति ।
(२)धनुश्चिन्हान्तर्गतो ग्रन्थः कखयोर्नास्ति ।

स्पृशन्वै दक्षिणं कुम्भं ऋत्विगेको जपेदथ ॥
चत्वारि रुद्रसूक्तानि चतुर्मन्त्रोत्तराणि च ।
संस्पृशन्नुत्तरं कुम्भं श्रीरुद्रं रुद्रसंख्यया ॥
शन्न इन्द्राग्नीसूक्तं च तत्रैव संस्पृशञ्जपेत् ।
कुम्भस्य पश्चिमे देशे शान्तिहोमं समाचरेत् ॥
दूर्वाभिस्तिलगोधूमैः पायसेन घृतेन च ।
तिसृभिश्चैव दूर्वाभिरेकैका चाहुतिर्भवेत् ॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयम् ॥
ततः स्विष्टकृतं हुत्वा समुद्रादूर्मिसूक्ततः ।
संततामाज्यधारां तां पूर्णाहुतिमथाचरेत् ॥
अथाऽभिषेकं कुर्वीत प्रतिकुम्भस्थितोदकैः ।
आपोहिष्ठेति नवभिः सूक्तेन च ततः परम् ॥
इन्द्रो अङ्ग तृचेनैव पावमानैः क्रमेण तु ।
उभयं शृणवच्चनः स्वस्तिदाविश एकया ॥
त्रैयम्बकेन मन्त्रेण जातवेदस एकया ।
समुद्रज्येष्ठा इत्यादि त्रायन्तां च त्रिभिः क्रमात् ॥
इमा आपस्तृचेनैव देवस्यत्वेति मन्त्रतः ।
मन्त्रेणाथ तमीशानं त्वमग्ने रुद्र इत्यथ ॥
तमुष्टुहीति मन्त्रेण भुवनस्य पितरं तथा ।
याते रुद्रेति मन्त्रेण शिवसंकल्पमन्त्रतः ॥
इन्द्र त्वा वृषभं पञ्चमन्त्रैश्चैवाभिषेचयेत् ।
धेनुं पयस्विनीं दद्यादाचार्याय च भूषणैः ॥
सदक्षिणमनड्वाहं प्रदद्याद्रुद्रजापिने ।
महाशान्तिं प्रजप्याथ ब्राह्मणान्भोजयेत्ततः ॥' इति ।

---

शौनकोक्तशान्तिमूलपाठोऽन्यतोऽपि बोध्यः । इदं तु बोध्य-

नारदः—

*'तत्र शान्तिं प्रकुर्वीत घृतदूर्वातिलाक्षतैः ।
प्रत्येकाष्टशतं चैव गायत्र्या जुहुयात्ततः ॥
स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये ॥'

*प्रकारान्तरं मदनरत्ने ज्ञेयम् । विस्तरभयान्नोच्यते ।
ग्रहणे रजोदर्शने तु जातकर्मप्रस्तावे शान्तिं वक्ष्यामः ।

---

मू—अनेककर्तृके होमे त्यागस्य भिन्नकालत्वेन तत्कालज्ञानासंभवात् प्रत्याहुति त्यागो न संभवतीति होमोपक्रमकाल एव यष्टव्या देवताः यजनीयद्रव्यं च हृदि कृत्वा इदं यथादैवतमस्तु न ममेति त्यजेदिति संप्रदायः । "होमे त्यागोऽङ्गं जुहोतिरासेचनाधिकः स्यात्" इति जैमिनिसूत्रात् । स च सर्वत्रापि होमे एकद्व्याद्याहुतिरूपे शतसहस्रादिके च आदौ सकृत्तन्त्रेणैव न प्रत्याहुति । अत एव सर्वतोमुखे विहारचतुष्के अनेककर्तृकप्रयाजेषु अग्नये अग्निभ्यो वा एतानि त्यजामि इत्येव कपर्दिप्रभृतिभिस्त्याग उक्तः । स्वकर्तृकहोमे तु

'मन्त्रेण देवतां स्मृत्वा द्रव्येऽवतानवर्तके (?) ।
निर्दिश्य क्षेपकाले वा तत्पूर्वं वा समाचरेत् ॥

क्षेपकाले प्रक्षेपकाले ।

त्यागं न तु तदूर्ध्वं तामित्याहुर्याज्ञिकं मतम् ।'

त्यागश्च'इन्द्रायेदं न मम'इति शब्द इति केचित् । 'इदमिन्द्राय न मम'इति कात्यायनः।नन्विदमयुक्तम्-इदमिति द्रव्यस्य न ममेति त्यागस्य च मध्ये बहिरङ्गदेवताव्यवधानायोगादिति चेत्।न,कात्यायननिर्देशेन व्यवधानस्यादोषत्वात् । वस्तुतस्तु उभयविधोऽपि त्यागो न युक्तः क्रियाया अभावात्। तस्माद्'इन्द्रायेदं त्यजामि'इति'इदमिन्द्राय त्यजामि'इति वा त्यागः कार्य इति । शौनकोक्तशान्तिर्बह्वृचानामेव। कुतश्चिद्धेतोस्तदसंभवे त्वाह—*तत्र शान्तिमिति ।*प्रकारान्तरं ऋग्विधानसंहितोक्ता बौधायनोक्ता च शान्तिः । एते च कौस्तुभे

अथ प्रथमर्तौ विशेषः स्मृतिचन्द्रिकायाम्—

'*प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवती स्त्रियः ।
अन्तैरासनं कृत्वा तस्मिंस्तामुपवेशयेत् ॥
हरिद्रागन्धपुष्पादि दद्युस्ताम्बूलकं स्रजम् ।
दीपैर्नीराजनं कुर्यात्सदीपे वासयेद् गृहे ॥
लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः ॥' इति ।

द्वितीयाद्यृतुषु तन्नियममाह पारिजाते दक्षः-

'अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् ।
न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा ॥'

अत्रिरपि-

'वर्जयेन्मधु मांसं च पात्रे खर्वे च भोजनम् ।
गन्धमाल्ये दिवास्वापं ताम्बूलं चास्यशोधनम् ॥
दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् ॥'

मदनरत्ने हारीतः—"रजःप्रासावधः शयीत भूमौ, काष्र्णायसे पाणौ मृन्मये वाऽश्नीयात्" इति । विष्णुधर्मे—

'आहारं गोरसानां च पुष्पालंकारधारणम् ।

---

स्पष्टं । कालनिर्णयप्रकाशे च ऋषिपुत्रसंहितोक्ता शान्तिर्लिखिता । वसिष्ठः-

प्रभूतदोषं यदि दृश्यते तत् पुष्पं तदा शान्तिककर्म कार्यम् ।
विवर्जयेदेव तदैकशय्यां यावद्रजोदर्शनमुत्तमेऽह्नि ॥

एकशय्यां मैथुनम् ।

'भर्त्ता तत्रापि गमनं वर्जयेत्तद्दर्शनात् ।'

इति शौनकोक्तेः । दर्शनं शास्त्रम् । अत्रैकस्मिन्नशुभे यथोक्ता शान्तिः कार्या । द्वित्राद्यशुभसान्निपाते तु आहुतिसंख्याद्वैगुण्यादि बोध्यम् ।

*प्रथमर्त्ताविति । यदि प्रथमरजोदर्शनं दुष्टमासादौ तदाऽथ-

अञ्जनं *कङ्कतं गन्धान्पीठशय्याधिरोहणम् ॥
अग्निसंस्पर्शनं चैव वर्जयेत्सा दिनत्रयम् ॥' इति ।
तथा प्रथमर्तोः पूर्वं स्त्रीगमनं न कार्यम् ।
'प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।
व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् ॥'
इति तत्रैवाश्वलायनोक्तेः । (१) ( एतत्तु दशवर्षात्प्राग्ज्ञेयम् । प्रथमर्तौ गमने गौतमेन विशेषो दर्शितः—
'गौरीमपि च रत्यर्थं गच्छेत्पुरुष आकुलः ।
अन्यथा वीर्यपातो हि सहस्रकुलपातकः ॥'
अन्यथापि तदिच्छया भवतीति विज्ञानेश्वरः । ) तत्र ऋतौ गमनमाह याज्ञवल्क्यः—

---

माचारो द्वितीयरजोदर्शने कार्य इति केचित् । *कङ्कनमिति तालपत्रादेरुपलक्षणम् ।
'नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम् ।'
इति वर्ज्यानुवृत्तौ दक्षोक्तेः । वसिष्ठः—"त्रिरात्रं रजस्वला स्नानात् शुचिर्भवति नाञ्ज्यात् नाभ्यञ्ज्यात् नाप्सु स्नायात् न दिवा स्वप्यात् न रज्जुं सृजेत् न मांसमश्नीयात्" इति । योगी—
"स्त्री धर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।
स्ववाक्यं श्रावयेन्नापि यावत्स्नानान्न शुध्यति"(२) ॥
स्मृत्यर्थसारे—"ब्राह्मणी रजस्वला चतुर्थेऽहनि षष्टिमृत्तिकाभिः शौचं कृत्वा क्षत्रियादिश्च पादपादन्यूनं मृत्तिकाभिर्विधवा द्विगुणाभिः शौचं कृत्वा मलं प्रक्षाल्य सचैलं संगव स्नायात्" इति । अतः सूर्योदयात्प्राक् स्नानं दुराचार एव । *निशा इति दिवस-

---

(१) धनुश्चिह्नान्तर्गतो ग्रन्थः कपुस्तके नास्ति ।
(२) सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्यचित् । अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥' इति श्लोकोऽग्रेऽस्य शेषः ।

'षोडशर्तुर्निशाः*स्त्रीणां तस्मिन्*युग्मासु*संविशेत्।'
इति। अनृतावप्याह गौतमः-*'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम्' इति। मनुः—

---

निषेधार्थम्। "नार्तवेऽपि दिवा व्रजेत्" इति शङ्खोक्तेः। अत्र सचैलस्नानोत्तरं प्राणायामः प्रायश्चित्तम्।

"प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम्॥"

इति योगीश्वरोक्तेः।

"दिवा तु मैथुनं कृत्वा नग्नः स्नात्वा तथाम्भसि।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकमभोजनम्॥"

इति शङ्खोक्तं वा कार्यम्। *युग्मास्विति पुत्रार्थम्। बहुवचनमफलमग्रे। *संविशेदिति। तत्प्रकारो हिरण्यकेशिसूत्रे-"चतुर्थ्यां प्रयतवस्त्रालंकारां कृतब्राह्मणसंभाषामाचम्योपह्वयते" इति। प्रशस्तब्राह्मणेन कृतसंभाषाम्। *ऋताविति। भार्यामिति वर्त्तते। भार्यामेव ऋतावुपेयादित्यर्थः। पारदार्ये प्रायश्चित्तोपदेशात् (१)('ऋतुस्नातां तु यो भार्याम्' इत्यग्रिमपराशरवचनात्) एवं ऋतौ भार्यामुपेयादेवेत्यर्थः।

"ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति।
तुल्यमाहुस्तयोः पापमयोनौ यश्च सिञ्चति॥"

इतिवचनाच्च। एवं भार्यामृतावेवोपेयात् ऋतुभिन्ने नोपेयादिति नार्थः "सर्वत्र वा प्रतिषिद्ध" इति गौतमविरोधाद् ऐच्छिकविकल्पायोगाच्च। किं त्वकामां भार्यामृतावेवोपेयात्। अनृतौ स्त्रीकामनाविरहे नोपेयादित्यर्थः। एवं च सकामां भार्यामुपेयादिति विध्यन्तरं सिध्यति।

'यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्।'

---

(१) धनुश्चिह्नान्तर्गतो ग्रन्थो घपुस्तके एव वर्तते।

'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा ॥
त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः ॥'

मदनरत्ने देवलः—

'तस्मात्त्रिरात्रं*चाण्डालीं पुष्पितां परिवर्जयेत् ।' इति ।

तत्र तिथ्यादीनाह श्रीधरः—

'षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं
चतुर्दशीमप्युभयत्र हित्वा ।
शेषाः शुभाः स्युस्तिथयो निषेके
वाराः शशाङ्कार्यसितेन्दुजानाम् ॥'

उभयत्र पक्षद्वये । आर्यो गुरुः, सितः शुक्रः, इन्दुजो बुधः ।

'विष्णुप्रजेशरविमित्रसमीरपौष्ण-
मूलोत्तरावरुणभानि निषेककार्ये ।
पूज्यानि पुष्पवसुशीतकराश्विचित्रा-
दित्याश्च मध्यमफला, विफलाः स्युरन्ये ॥'

विष्ण्वादिदैवत्यनक्षत्राण्युक्तानि रत्नमालायाम्—

'भेशा दस्रयमाग्निधातृशशिनः शर्वो दितिर्वाक्पतिः
कद्रूजाः पितरो भगोऽर्यमरवी त्वष्टाह्वयो मारुतः ।
शक्राग्नी त्वथ मित्र इन्द्रनिर्ऋती तोयं च विश्वे विधि-
र्गोविन्दो वसवोऽम्बुपाजचरणाहिर्बुध्न्यपूषाभिधाः ॥'

---

इति वाशब्दयुक्तयोगीश्वरोक्तेः । तथा चानृतावपि स्त्रीकामनायां स्त्रियं रमयेदेवेत्यर्थः । *चाण्डालीमिति । माधवीये स्मृत्यन्तरे च

"प्रथमेऽहनि चाण्डाली, द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता, चतुर्थेऽहनि शुध्यति ॥" इति ।

यद्यप्यत्र माधवाचार्यैश्चाण्डाल्यादिगमने यावान् प्रत्यवाय·

उत्तराशब्देनोत्तरात्रयम् । अत्र मूलस्य पूज्यत्वमुक्तम् । याज्ञवल्क्येन तु—

'एवं गच्छन् स्त्रियं *क्षामां मघां मूलं च वर्जयेत् ।'

इत्युक्तम् । तेन *पूर्वत्र मूलं चिन्त्यम् । अत्र *समासु पुत्राः, विषमासु कन्याः इति ज्ञेयम् ।

---

तावानुदक्यागमने इत्युक्तं तथापि अग्रे कुण्डपायिनामयने "मासमग्निहोत्रं जुहोति" इति वाक्यस्याग्निहोत्रनामनिर्देशेन नित्याग्निहोत्रधर्मातिदेशस्तद्वदिति युक्त्याभिधानेन चाण्डालादेर्धान्यवस्त्रपात्रादिस्पर्शे दर्शनसंभाषणादौ पङ्क्तिभोजनादौ च यावान् दोषस्तावानुदक्याया अपि लभ्यते । श्राद्धादावुदक्यानिमन्त्रणे च सहनिमन्त्रितब्राह्मणानां चाण्डालादिपङ्क्तिभोजनप्रत्यवायः, यजमानस्य तु तन्निमन्त्रणप्रत्यवायोऽपीति तत्र सर्वत्र प्रायश्चित्तं महानिबन्धोक्तं विस्तरभयान्नोच्यते ।

(१)(अथ रजस्वलायाश्चतुर्थदिनकृत्यम् । योगी—

"सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्यचित् ।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥"

*क्षामामिति । क्षामता च रजस्वलाव्रतादिना स्निग्धभोजनादिना वा कार्या ।

'लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतम् ।'

इति बृहस्पत्युक्तेः ।) *पूर्वत्रेति । ज्यौतिषस्य [illegible]षानवधानेनापि ग्रहणसंभवात्, न तु विकल्पः । शास्त्रयोरसाम्यात् । किञ्च मूलत्यागे शुभपुत्राप्तिरूपोऽभ्युदयः तदत्यागे तु पुत्राप्तिमात्रमिति ह्यर्थः, स च निषेधे पर्यवस्यति ।

* समास्विति । यदा युग्मासु रात्रिषु शोणिताधिक्यं तदा स्त्र्येव पुरुषाकृतिः, अयुग्मास्वपि शुक्राधिक्ये पुमानेव स्त्र्याकृ-

---

(१) धनुश्चिह्नान्तर्गतो ग्रन्थो घपुस्तके नास्ति ।

'युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।'

इति हेमाद्रौ शङ्खोक्तेः । तत्राप्युत्तरोत्तराः प्रशस्ताः । तदाहापस्तम्बः—'तत्राप्युत्तरोत्तराः प्रशस्ताः' इति । तत्रैव व्यासः—

'रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः ।
पञ्चम्यां पुत्रिणी नारी, षष्ठ्यां पुत्रस्तु मध्यमः ॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमान् ।
नवम्यां सुभगा नारी, दशम्यां प्रवरः सुतः ॥
एकादश्यामधर्मा स्त्री, द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां सुता पापा वर्णसंकरकारिणी ॥
धर्मज्ञश्च कृतज्ञश्च आत्मवेदी दृढव्रतः ।
प्रजायते चतुर्दश्यां, पञ्चदश्यां पतिव्रता ॥
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥' इति ।

अत्र चतुर्थदिननिषेधेऽपि—

'*स्नातां चतुर्थदिवसे रात्रौ गच्छेद्विचक्षणः ।'

---

तिः, कालस्य निमित्तत्वात् शुक्रशोणितयोरुपादानत्वात् ।

'पुमान् पुंसोऽधिके शुक्रे, स्त्री भवत्यधिके स्त्रियाः ।'

इत्युक्तेः । एतदर्थं च क्षामताऽपि कर्तव्यतयोक्ता । *स्नातामिति । यद्यपि—

"शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ॥
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥"

इति मरीचिना चतुर्थेऽहनि दैवकर्मार्हता नेति ध्वनितं, तथापि पञ्चमेऽहनीत्यस्य साध्वाचारेत्यग्रिमवाक्येन रजोनिवृत्तिकालार्थकतया

'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ।'

इति मनुवचने साध्वी गर्भाधानादिदेवकर्मयोग्येति व्या-

इति महाभारतोक्तेः 'चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भं संदधाति' इति हारीतोक्तेर्विकल्पो ज्ञेयः ।

तत्रापि—

'स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते ।
गम्या*निवृत्ते रजसि नानिवृत्ते कथंचन ॥'

इत्यापस्तम्बोक्तेर्व्यवस्था ज्ञेया ।

अत्र सर्वासु युग्मासु गमनमावश्यकम् । युग्मास्विति बहुवचननिर्देशादिति विज्ञानेश्वरः । तच्चैकस्यां रात्रौ सकृदेव कार्यम् ।

*'सुस्थे इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ।'

इति याज्ञवल्क्योक्तेः। इदं चर्तौ गमनमन्यकाले प्रतिबन्धादिना गमनासंभवे श्राद्धैकादश्यादावपि कार्यम् । 'ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्'(अ० १ श्लो० ७९) इति याज्ञ-

---

ख्यानात् न दोषः । एवं च तत्र चतुर्थेऽह्नि गर्भाधानवत्तदङ्गभूतशान्तिरपि तत्रैवानायत्या कार्या । एवं श्रौतकर्मण्यपि रजस्वलायाश्चतुर्थेऽह्नि अधिकारः । "अथ यदा त्रिरात्रिणी स्याद्थैनामुपह्वयेत" इत्यापस्तम्बसूत्रात् 'चतुर्थेऽह्नि गोमूत्रमिश्राभिरद्भिः स्नाता वासोयोक्त्रजालानि मन्त्रैर्धारयेत्'इति सोमे आपस्तम्बोक्त्या तद्वत्सर्वत्रापि श्रौतकर्माणि अविशेषणाधिकारसिद्धेः । एवमुपनयनादौ श्रीसूक्तहोमादिना चतुर्थेऽह्नि अधिकारं वक्ष्यति । अत एव गर्भाधानादीत्यादिपदेन साध्वीपद्व्याख्यानं संगच्छते। तथा च 'गम्या निवृत्ते रजसि' इत्यस्य प्रथमऋतुपरत्वेऽपि न क्षतिः । *निवृत्ते रजसीति । निःसरणाद्नुपरते रजसि तु रजस्वला स्नानेन स्पर्शादौ योग्या न तु गर्भाधानोपनयनादिस्मार्ते श्रौते वेत्यर्थः ।

*सुस्थे एकादशस्थानस्थे । सकृदिति नियमविधिः । पर्व

वल्क्योक्तेः। व्याख्यातं चेदं मिताक्षरायाम्—'यत्र श्राद्धादौ ब्रह्मचर्यं विहितं तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलनदोषः' इति । *पर्वाणीति बहुत्वेनाष्टमीचतुर्दश्योर्ग्रहणमिति च । मदनरत्नेऽप्येवम् । यत्तु हेमाद्रौ शिवरहस्ये—

'दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती ।
श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोऽर्थी न च पर्वसु ॥'

इति, तदनृतुविषयम् ।

'*ब्रह्मचार्येव भवति (१)यत्र तत्राश्रमे वसन् ।'

इति मनूक्तेः । दर्शादौ तु न भवत्येव, पर्वणां पर्युदस्तत्वात् । माधवीये तु

'ऋतुकालं नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित् ।
तत्र गच्छन्समाप्नोति ह्यनिष्टफलमेव तु ॥'

इति वृद्धमनूक्तेः*श्राद्धे ब्रह्मचर्यं नियतमित्युक्तम् । पू-

---

अमावास्या, तस्यैकत्वात्पर्वाणीति कथं बहुत्वमित्यत्राह—*पर्वाणीति ।

"अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥"

इति मानवात्

"चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रमणं तथा ॥"

इति विष्णुपुराणाच्च । *ब्रह्मचार्येवेति । एतच्च ब्रह्मचारित्वं विवृतं श्रुतौ "प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्रात्रौ संयुज्यन्ते" इति । *श्राद्ध इति । तथा

---

१—'यत्र तत्राश्रमे वसन्निति वानप्रस्थापेक्षया । तस्य हि भार्यया सह गमनपक्षे ऋतुगमनं प्रसक्तम् । न च वनस्थभार्याया ऋतुर्न भवतीति वाच्यम् । 'वनं पञ्चाशतो व्रजेत्' इति, 'वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः पुमान्' इत्यादिशास्त्रपर्यालोचनया तत्सम्भवादिति मन्वर्थमुक्तावली ।

र्त्रीचन्द्रोदयेऽप्येवम्। *एतत्सति संभवे ज्ञेयम्। अनेकभार्यस्यर्तुयौगपद्ये हेमाद्रौ कश्यपः—

'यौगपद्ये तु*तीर्थानां विवाहक्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा॥' इति।

ग्रहणम् ऋतुग्रहणम्। ऋग्विधाने—

'विष्णुर्योनिं जपेत्सूक्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती।
गर्भाधानं ततः कुर्यात्सुपुत्रो जायते ध्रुवम्॥'

अगमने दोषमाह पराशरः—

'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः॥'

अस्यापवादमाह मदनरत्ने व्यासः—

'व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु।
ऋतुकालेऽपि नारीणां भ्रूणहत्या प्रमुच्यते॥

---

च श्राद्धकर्तृभोक्त्रोर्ब्रह्मचर्यमृतावप्यावश्यकमित्यर्थः। ननु एतन्मते विज्ञानेश्वरेण श्राद्धकर्तृभोक्त्रोर्ऋतौ ब्रह्मचर्यमनावश्यकमित्युक्ते विरोध इत्यत आह—*एतदिति। विज्ञानेश्वरीयं तु अगतिकगतिरिति बोध्यम्। *तीर्थानाम् ऋतूनां, क्षेत्रवाचिनस्तीर्थशब्दस्य क्षेत्रपर्याययोनिसमुद्भूतत्वेन च ऋतुरर्थः। तथा च सकृदेवेति नियमविधेर्निर्वाहः। स्त्रीणामप्यगमने दोषः।

"ऋतुस्नाता च या नारी भर्त्तारं नोपगच्छति।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत्"॥

इति हेमाद्रावुक्तेः। अत्र प्रायश्चित्तमाह बौधायनः—

"ऋतौ न गच्छेद्यो भार्यां नियतां धर्मचारिणीम्।
नियमातिक्रमे तस्य प्राणायामशतं स्मृतम्॥" इति।

कृच्छ्रार्द्धमित्यर्थः। प्राणायामशतद्वयस्य कृच्छ्रप्रत्याम्नायत्वात्।

'ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत्।'

वृद्धां वन्ध्यामसद्वृत्तां मृतापत्यामपुष्पिणीम् ।
कन्यास्त्रं बहुपुत्रां च वर्जयेन्मुच्यते भयात् ॥'

वृद्धां गतरजस्काम् । गर्भाधानाङ्गहोमाकरणे प्राय-श्चित्तमाह—पारिजाते आश्वलायनः—

'गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति ।
अकृत्वा गां द्विजे दत्त्वा कुर्यात्पुंसवनं पतिः ॥'

गर्भाधानं मलमासगुरुशुक्रास्तादावपि कार्यम् ।

'उत्सवेषु च सर्वेषु सीमन्ते ऋतुजन्मसु ।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते ॥'

इति ज्योतिर्निबन्धे भृगूक्तेः । ऋतुगमने पराशरः—

'ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम् ।

---

इति बृहस्पत्युक्तेश्च । तादृश्याः स्त्रिया अप्येतदेव, दोषसाम्यात् । भर्तुरवमाने तु कृच्छ्रं 'भर्तुर्व्यतिक्रमे कृच्छ्रम्' इत्यापस्तम्बोक्तेः । अवधिश्च मनुनोक्तः—

'ऋतुकालाभिगामी स्याद्यावत् पुत्रोऽभिजायते ।' इति ।

यत्तु एकपुत्रोत्पादनेन शास्त्रार्थस्य कृतत्वादानृण्याच्च पुत्रान्तरोत्पादनं न कार्यमिति, तत्तुच्छम् । एकपुत्रोत्पत्त्यनन्तरम् 'ऋतुस्नाताम्' इति वचनप्रवृत्तेर्निष्प्रत्यूहत्वात् ।

"चक्षुरेकं च पुत्रश्च अस्ति नास्ति च भारत! ।
चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥"

इति भारतात् 'एष्टव्या बहवः पुत्राः' इत्यर्थवादाच्च । परमावधिमाहात्रिः—

"षण्मासान् कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि ।
आदन्तजननादूर्ध्वमेवं धर्मो न हीयते ॥" इति ।

आदन्तजननादिति मर्यादायामाङ् ।

अनृतौ तु यदा गच्छेच्छौचं *मूत्रपुरीषवत् ॥'

स्त्रीणां तु न स्नानम्,

'उभावप्यशुची स्यातां दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥'

इति वृद्धशातातपोक्तेः ।

---

*मूत्रपुरीषवदिति । शौचद्वयं कार्यमित्यर्थः । तच्च वसिष्ठः-

"एका लिङ्गे, करे तिस्र, उभयोर्मृत्तिकाद्वयम् ।
एकैकया मृदा पादौ, प्रक्षाल्य तु शुचिर्भवेत् ॥
मूत्रशौचं समाख्यातं, शुक्रे तु द्विगुणं स्मृतम् ।

भृगुः—

द्वे लिङ्गे मृत्तिके देये, गुदे पञ्च, करे दश ।
उभयोः सप्त दातव्या विट्शौचे मृत्तिकाः स्मृताः ॥

शङ्खः—

तिस्रस्तु पादयोर्देयाः शौचकामस्य नित्यशः ।
शौचे तु वामपूर्वं स्यादन्यत्र स्यात्तु दक्षिणम् ।
शौचादृते वामपादपूर्वप्रक्षालनं न हि ॥ इति ।

इदं तु बोध्यम्—

चौलकर्मोपनयने विवाहः प्रथमस्तथा ।
व्रतानि स्नानमित्येषां लौकिकोऽग्निरिति स्थितिः ॥

इत्यभियुक्तवाक्यात्तद्भिन्नानां गर्भाधानादीनां होमो गृह्याग्नौ कार्यः । तन्नाशे तु तदर्थं द्वादशरात्रात्पूर्वं स्थण्डिलादावग्निं प्रतिष्ठाप्य 'अयाश्च' इत्यग्निरुत्पाद्यः । तदूर्ध्वं तु प्रमादादिनाऽग्निविच्छेदेन लुप्तानां सायंप्रातर्होमानां दर्शपूर्णमासस्थालीपाकारम्भे सति लुप्तानां दर्शपूर्णमासस्थालीपाकानां पिण्डपितृयज्ञादिनित्यक्रियाणां च पर्याप्तं साज्यं होमद्रव्यं तन्निष्क्रयं वा दत्त्वा प्रत्यब्दमेकैकं कृच्छ्रं कुर्यात्,

यावन्त्यब्दान्यतीतानि निरग्नेश्च द्विजन्मनः ।

अत्र कश्चिद्विशेष उच्यते । तत्र *रात्रौ रजसि जननादौ च रात्रिं त्रिभागां कृत्वा आद्यभागद्वये चेत्पूर्वदिनं ग्राह्यं, परतस्तूत्तरादिनमिति मिताक्षरायाम् । यत्तु—*'प्रागर्धरात्रात्प्राग्वा सूर्योदयात्पूर्वदिनं ग्राह्यम्' इत्युक्तं, तत्र देशाचाराद्व्यवस्था । तथा *सप्तदशादि-

तावन्ति कृच्छ्राणि चरेद्धौम्यं दद्याद् द्विजातये ॥

इति वचनात्,

यावत्कालमहोमी स्यात्तावद् द्रव्यमशेषतः ।
तद्दानं चैव विप्रेभ्यो यथैवाग्निस्तथैव सः ॥

इति भरद्वाजगृह्याच्च । अर्धाधानिनश्च औपासनहोमाद्यकरणपक्षे प्रायश्चित्तमात्रं न तु द्रव्यदानं, सर्वाधानिनस्तु न प्रायश्चित्तं नापि द्रव्यदानम् । एतैरपि गर्भाधानादिहोमार्थं तदनन्तरं पुनःसंधानेन गृह्याग्निरुत्पाद्यः । तत्र सर्वाधानिनो गर्भाधानहोमान्ते गृह्याग्नित्यागः । द्विभार्येण तु अग्निद्वयसंसर्गात् प्राक् एकाग्न्यनुगमे प्रायश्चित्तमौपासनहोमीयद्रव्यमात्रदानं च कार्यं, न तु स्थालीपाकादिद्रव्यदानम् । परं तु यस्या अग्निरनुगतः तस्या गर्भाधाने इदं, न त्वन्यस्या गर्भाधाने । एवं गृह्याग्निसाध्यसंस्कारेषु बोध्यम् । *रात्रावित्यादि ।

''रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ।
उत्तमोंऽशः प्रभातेन युज्यते ऋतुसूतके ॥

इति कश्यपोक्तेः । *प्रागर्धरात्रादित्यादि ।

उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥
अर्धरात्रावधिः कालः सूतकादौ विधीयते ।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥

इति वचनात् । *सप्तदशेति ।

रजस्वला यदि स्नाता पुनरेव रजस्वला ।

नपर्यन्तं पुना रजोदर्शने स्नानमात्रम् , अष्टादशे एक-रात्रं, एकोनविंशे द्व्यहः, विंशतिप्रभृति त्रिरात्रमिति तत एव ज्ञेयम् । यत्तु—

'चतुर्दशदिनादर्वागशुचित्वं न विद्यते ।' इति,

तत्र स्नानप्रभृतित्वमभिप्रेतम् । एतच्च यस्या विंशतिदिनोत्तरं प्रायशो रजस्तत्रैव । यस्यास्त्वर्वाक् प्रायशो रजस्तत्रोक्तं स्मृत्यर्थसारे-'त्रयोदशदिनादूर्ध्वं प्रायो रजोवतीनामेकादशादिनात्प्रागशुचित्वं नास्ति, एकादशादिन एकरात्रं, द्वादशे द्विरात्रम्, ऊर्ध्वं त्रिरात्रम्' इति । प्रयोगपारिजातेऽप्येवम् । रोगजे तु तत्रैव विशेषः संग्रहे—

*'रोगेण यद्रजः स्त्रीणामन्वहं हि प्रवर्तते ।

---

अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥
एकोनविंशतेरर्वागेकाहः स्यात्ततो द्व्यहम् ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥

इत्यत्रिस्मरणात् । अत्र माधवः—रजः कालजं, द्रव्यजं, रागजं, रोगजं चेति चतुर्धा । तत्र कालजं स्फुटमेव, ऋतुकाले जायमानत्वात् । द्रव्यजं भक्ष्यविशेषभक्षणजम् । तत्राङ्गिराः—

आऽष्टादशाहान्नारीणां मूत्रवच्छौचमिष्यते ।
अष्टादशाहात्स्नानं स्यात्त्रिरात्रं परतोऽशुचिः(१) ॥ इति ।

रागजम्—

अर्वाक् प्रसूतेरुत्पन्नं मेदोवृध्द्याङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं मेदोच्छेदसमुद्भवम् ॥

इति लक्षयित्वा तत्र त्रिदिनमुक्तम् । रोगजे त्वाह-*रोगेणेति । तस्यास्पृश्यत्वरूपाशुचित्वाभावेऽपि कर्माधिकारो रजोनिवृत्तावेव ।

---

(१) परतोऽशुचीरिति घपुस्तके ।

नाशुचिस्तु भवेत्तेन यस्मादैकारिकं मतम् ॥' इति ।
कर्माधिकारस्तु रजोनिवृत्तावेव ।

'साध्वाचारा न तावत्स्यात्स्नाताऽपि स्त्री रजस्वला ।
यावत्प्रवर्तमानं हि रजो नैव निवर्तते ॥'

इति श्राद्धहेमाद्रौ शङ्खोक्तेः । तत्रापि स्वकालेऽशुचिरेवेत्याह ऋष्यशृङ्गः—

'रोगजे वर्तमानेऽपि काले निर्याति कालजम् ।
तस्मात्कालेऽप्रमत्ता स्यादन्यथा संकरो भवेत् ॥'

तथा*रजस्वलाया रजस्वलान्तरस्पर्शेऽकामतः स्ना-

---

साध्वाचारा न तावत्स्यात्स्नाताऽपि स्त्री रजस्वला ।
यावत् प्रवर्तमानं हि रजो नैव निवर्त्तते ॥

इति शङ्खोक्तेः ।

रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि । इति च ।

गृहकर्माणि पाकादावित्याह ।

*रजस्वलाया इति ।

उदक्या तु सवर्णाया स्पृष्टा चेत्स्यादुदक्यया ।
तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्यसंशयम् ॥

इति मार्कण्डेयात् । इदमकामतः स्पर्शे । कामतःस्पर्शे तु—

रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥

इति काश्यपाच्च । इदं चैकरात्रं तावन्निराहारोत्तरमित्यनुपदं स्पष्टम् । कामतोऽभ्यासे सहशय्यादिचिरस्पर्शे च पराशरः—

स्पृष्ट्वा रजस्वलाऽन्योऽन्यं ब्राह्मण्या ब्राह्मणी यदि ।
(१)तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुद्ध्यति ॥

स्पर्शमारभ्य पञ्चमदिनपर्यन्तमाहारत्यागः, ततस्त्रिरात्रोपवास

---

(१) 'एकरात्रं निराहारा' इति घ पुस्तके ।

नं, कामत उपवासः पञ्चगव्याशनं च। असवर्णानां तु ब्राह्मण्याः क्षत्रियादिस्पर्शे क्रमेण कृच्छ्रार्धपादोनकृकृच्छ्राः* क्षत्रियादीनां तु कृच्छ्रपाद एव। *क्षत्रियादीनां

---

इत्यर्थः। पञ्चमदिनं चात्र रजोनिवृत्तिकालः। तावत्तिष्ठेन्निराहारेति सद्यःस्नानातिरिक्तपूर्वोक्तरसकलप्रायश्चित्ते बोध्यम्। सवर्णसपत्नीविषये तु वृद्धवसिष्ठः—

स्पृष्टे रजस्वलेऽन्योन्यं सवर्णे त्वेकभर्तृके।
कामतोऽकामतो वाऽपि सद्यः स्नाने विशुध्यतः॥ इति।

सगोत्रे त्विति मयूखः। असवर्णानां त्विति पराशरः।

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा॥
अर्धकृच्छ्रं चरेत् पूर्वा पादमेकमनन्तरा।
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजाऽपि च।
पादहीनं चरेत् पूर्वा पादमेकमनन्तरा॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्री दानेन शुद्ध्यति॥

दानेनेत्यस्य कृच्छ्रप्रत्याम्नायचतुर्थांशदानेनेति मिताक्षरादर्शनात्सर्वत्रापि कृच्छ्रपाद एव पर्यवस्यति। वृद्धवसिष्ठोऽपि—

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा।
कृच्छ्रार्द्धाच्छुध्यते पूर्वा उत्तरा तु तदर्धतः॥

तदर्धतः पादकृच्छ्रात्।

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजाऽपि च।
पादहीनं चरेत् पूर्वा कृच्छ्रपादं तथोत्तरा॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजाऽपि च।
कृच्छ्रेण शुद्ध्यते पूर्वा कृच्छ्रपादमथोत्तरा॥

*क्षत्रियादीनामिति। वृद्धवसिष्ठः-

स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया वैश्यजाऽपि च।

हीनवर्णास्पर्शे त्रिरात्रमुपवासः, वैश्याशूद्र्योः पूर्वया स्पर्शेऽहोरात्रं द्विरात्रं च । एतच्च कामतः । *अकाम-

त्रिरात्रात् शुध्यते पूर्वा अहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजाऽपि च ।
उपवासैस्त्रिभिः पूर्वा अहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्री तथैव च ।
त्रिरात्राच्छुध्यते पूर्वा उत्तरा तु दिनद्वयात् ॥
वर्णानां कामतः स्पर्शे विधिरेष सनातनः ॥ इति ।

*अकामतश्चेति(१) । वृद्धविष्णुः—"रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावदश्नीयात्, यावन्न शुद्धिः स्यात् । सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा शुध्यति" इति । इदं तु बोध्यम् असवर्णास्पर्शे मार्कण्डेयः—

रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी च या ।
त्रिरात्रेण विशुद्धिः स्यात् व्याघ्रस्य वचनं यथा ॥
रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी च या ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥
रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी तथा ।
षड्रात्रेण विशुद्धिः स्याद् ब्राह्मण्याः कामकारतः ॥
अज्ञानतश्चेदर्धं ब्राह्मणी सर्वजातिषु ॥

पञ्चगव्यं तु सर्वत्रापि बोध्यम् । इदं चात्रावधातव्यम्—अत्र यथा ब्राह्मणीरजस्वलयोः स्पर्शे उपवासः पञ्चगव्यं च, कामतोऽभ्यासे सहशयनादिचिरस्पर्शे च त्रिरात्रम्; तथाऽन्यासामपि सवर्णरजस्वलास्पर्शे तादृशविषये तदेव, यथा च ब्राह्मण्याः क्षत्रियास्पर्शे त्रिरात्रं, तथा क्षत्रियाया वैश्यास्पर्शे, वैश्यायाः शूद्रास्पर्शेऽपि

(१) अत्र यद्यपि 'अकामतश्च' इति पाठः सर्वेषु पुस्तकेषूपलभ्यते तथापि मूलानुरोधेन 'अकामतस्तु' इत्यपेक्षितमिति बोध्यम् ।

तस्तु प्राक्शुद्धेरनशनम् । *अकामतश्चाण्डालादिस्पर्शे-ऽवनशनमेव प्राक् शुद्धेः । *कामतस्तु प्रथमेऽह्नि त्र्यहः

---

तदेव न्यायात्,

रजस्वला तु या नारी अन्योन्यमुपसंस्पृशेत् ।
सवर्णे पञ्चगव्येन त्रिरात्रमसवर्णके ॥

इति स्मृतेः । पञ्चगव्येनोपवाससहितेनेत्यर्थः ।

रजस्वले उभे नार्यावन्योन्यं स्पृशतो यदि ।
सवर्णे पञ्चगव्यं च ब्रह्मकूर्चमतः परम् ॥

इति शातातपाच्च । अत्रापि 'पञ्चगव्यं च' इति चकारादुपवासो द्रष्टव्यः । 'त्रिरात्रमसवर्णके' इत्यत्र 'अन्योन्यम्' इत्यस्य न संबन्धः । तथा चासवर्णास्पर्शे रजस्वलाया अनन्तरासवर्णास्पर्शे त्रिरात्रमित्यर्थः । 'ब्रह्मकूर्चमतः परम्' इत्यस्य ब्राह्मण्यां रजस्वलायां वैश्यास्पर्शे यत् क्षत्रियायां रजस्वलायां शूद्रास्पर्शे तदेवेति एकान्तरासवर्णास्पर्शे तत्र ब्रह्मकूर्चमित्यर्थः । *अकामत इति ।

रजस्वला तु संस्पृष्टा चण्डालान्त्यश्ववायसैः ।
तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यति ॥

इति बौधायनवचनात् । यावत्कालेन पितृकर्माधिकारयोग्यकालेन, पञ्चमदिनेनेति यावत् । एतदशक्ताया अपि बोध्यम् । अशक्तायाः प्रायश्चित्तान्तरं वा ।

चाण्डालः श्वपचो वाऽपि यद्यात्रेयीं स्पृशेद्यदि ।
अफालकृष्टैर्वर्त्तेत पञ्चगव्येन शुध्यति ॥

पञ्चगव्याशनन्तु पञ्चमेऽह्न्येव चतुर्थेऽनधिकारात् । *कामत इति ।

पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रं स्यात्, द्वितीये द्व्यहमेव तु ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥

इति वृद्धवसिष्ठोक्तेः।'तान्यहानि' इत्यनेन शेषदिनानीत्यर्थात्पञ्च-ममहर्लभ्यते । अयं चानुवादः । उक्तं वक्ष्यमाणं तावत्प्रायश्चित्तं पञ्चमेऽह्न्येव कार्यं चतूरात्रं कर्मानधिकारात् । सद्यःस्नानं तु सद्यः-पदात्सद्य एव भवति । परतश्चतुर्थेऽह्नि पञ्चगव्याशनं च कार्यम् ।

चण्डालेन तु संस्पृष्टा कदाचित् स्त्री रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शोधनम् ।

इति काश्यपात् । यद्यपीदं प्रथमदिनस्पर्शपरमेव त्रिरात्रोक्तेः, तथापि द्वितीयादिदिनस्पर्शेऽपि पञ्चगव्याशनमावश्यकं तुल्यत्वात् । चण्डालेति तत्तुल्यपतितादिग्राहकम् ।

बहूनामेकधर्माणामेकस्यापि यदुच्यते ।
सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृताः ॥

इत्युशनसो वचनात् । एवं वायसेत्यत्रापि तत्तुल्याः कङ्कादयो-ऽस्पृश्याः पक्षिणो ग्राह्याः । अन्त्यानाहाऽङ्गिराः—

चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवौ चेति सप्तैतेऽन्त्यावसायिनः ॥

यमः—

रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैतेऽन्त्यावसायिनः ॥

शौनकः—

अयस्कारस्वर्णकारौ तथा पाषाणवर्धकी ।
कांस्यताम्रकरास्तन्तुवायाश्च ध्वजिनोऽन्त्यजाः ॥

स्मृत्यन्तरोक्तश्च चण्डालो बोध्यः ।

आरूढपतिताज्जातो ब्राह्मण्यां शूद्रजस्तु यः ।
चाण्डालौ तौ समाख्यातौ सगोत्राद्यश्च जायते ।
समप्रवराज्जातोऽपि चण्डाल एव, "असमानार्षगोत्रजाम्" इति

द्वितीये त्र्यहस्तृतीये एकाहः। *श्वस्पर्शे तु त्र्यह एकाहो वा। *भुञ्जानायाश्चाण्डालादिस्पर्शे षड्रात्रम्।

(१)एकयोगनिर्देशनिषेधात्। एवं च

उदक्या सूतिका वाऽपि शवान्त्यं संस्पृशेद्यदि।
त्रिरात्रेणैव शुध्येत इति शातातपोऽब्रवीत्॥

इति त्रिरात्रं प्रथमदिनपरम्। एवञ्च शवस्पर्शे प्रथमेऽन्ह्येव त्र्यहः, द्वितीये त्र्यहः, तृतीये एकाह, इति द्रष्टव्यम्। शवस्य चण्डालादितुल्यत्वात्। *श्वस्पर्शे त्विति।

"रजस्वला तु संस्पृष्टा शुना जम्बुकवायसैः।
निराहारा भवेत्तावद्यावत्कालेन शुध्यति॥

इति यमोक्तेः। इदमकामतः। कामतस्तु बृहस्पतिः—

शुना चोच्छिष्टया शूद्रा संस्पृष्टा त्र्यहमाचरेत्।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत्॥

इति प्रथमद्वितीयदिनस्पर्शे त्र्यहं, परतश्चतुर्थे। "तान्यहानि व्यतिक्रम्य"इतीहापि योज्यम्।

रजस्वला तु संस्पृष्टा ग्रामकुक्कुटसूकरैः।
श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनम्॥

इति बौधायनोक्तं नक्तं स्वशक्तापरं, चतुर्थदिनपरं वा। रजकादिस्पर्शे तु श्वस्पर्शसमं तेषां तत्समत्वादिति शूलपाणिः।

रजस्वला तु संस्पृष्टा शुना चण्डालरासभैः।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति॥

इति तु कामतोऽभ्यासे। *भुञ्जानाया इति।

रजस्वला च भुञ्जाना श्वान्त्यजादीन् स्पृशेद्यदि।
गोमूत्रयावकाहारा षड्रात्रेण विशुध्यति॥
अशक्तौ काञ्चनं दद्याद् विप्रेभ्यो वाऽपि भोजनम्॥

---

(१)'एकयोगनिषेधदर्शनात्' इति घ पुस्तके।

*उच्छिष्टयोः स्पर्शे तु कृच्छ्र इत्यादि मिताक्षरायां ज्ञेयम्।
स्मृत्यर्थसारे तु सर्वत्र बालापत्यायाः स्पर्शे स्नाने कृते

इति बौधायनोक्तं दानमपि पञ्चमेऽन्ह्येव, ब्रतः प्रागनधिकारात्।
*उच्छिष्टयोरिति।

उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित् स्त्री रजस्वला।
कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानैरुपोषिता॥

इत्यत्रिवचनात्। पूर्वेति ब्राह्मणक्षत्रियवैश्यास्तिस्रः स्त्रियो ग्राह्याः। तासां मध्ये समानजातीययो रजस्वलयोः परस्परं स्पर्शे प्राजापत्यः, स्वस्वानन्तरस्पर्शे त्वेकैकप्राजापत्यवृद्धिः, तादृशशूद्रयोः स्पर्शे तु परस्परमुपवाससहितप्राजापत्यप्रत्याम्नायेन दानेनेत्यर्थः। एतच्च कामतः, अकामतस्तदर्धम्। आदिनोच्छिष्टद्विजस्पर्शादिग्रहः। तत्रोच्छिष्टद्विजस्पर्शे मार्कण्डेयः—

द्विजान् कथञ्चिदुच्छिष्टान् रजस्था यदि संस्पृशेत्।
अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं क्षिपेत्॥ इति

अत्र यद्यपि द्विजानिति सामान्यत एवोक्तं तथापि उच्छिष्टक्षत्रियादिस्पर्शे ब्राह्मण्या अधिकं कल्प्यं हीनाया उच्छिष्टोत्तमस्पर्शे तु न्यूनमिति। चण्डालेन सह एकवृक्षारोहणे पराशरः—

एकवृक्षसमारूढश्चाण्डालोऽथ रजस्वला।
अहोरात्रोषिता भूत्वा पञ्चगव्येन शुध्यति॥

वृक्षेत्युपलक्षणम्। यदि रजस्वला भोजनकालेऽन्यां रजस्वलां दृष्ट्वा भुङ्क्ते तदाहापस्तम्बः—

'उदक्या यदि वा भुङ्क्ते दृष्ट्वान्यां तु रजस्वलाम्।
आस्नानकालं नाश्नीयात् ब्रह्मकूर्चं ततः पिबेत्॥

एतच्च कामतः। चण्डालदर्शने त्वत्रिः—

रजस्वला तु भुञ्जाना चण्डालं यदि पश्यति।
उपवासत्रयं कुर्यात् प्राजापत्यं तु कामतः॥

अकामतस्त्वफालकृष्टान्नभक्षणम् । रजस्वलायाः श्वादिदर्शने व्यासः—

रजस्वला यदा दृष्टा शुना जम्बुकरासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥

रजस्वलाया आशौचिस्पर्शे शातातपः—

आर्त्तवाभिप्लुता नारी स्पृशेच्चेच्छवसूतकम् ।
ऊर्ध्वं त्रिरात्रात् स्नातां तां त्रिरात्रमुपवासयेत् ॥

स्पृष्ट्वा भोजनादौ त्वत्रिः—

आर्त्तवाभिप्लुता नारी मृतसूतकयोः स्पृशेत् ।
भुक्त्वा पीत्वा चरेत् कृच्छ्रं, स्पृष्ट्वा तु त्र्यहमेव तु ॥

स्पृष्ट्वेति भोजनपानयोरकरणे । आशौचिस्पर्शे स्नानात्प्राग्रजोदर्शने तु मार्कण्डेयः—

मृतसूतकसंस्पर्शे ऋतुं दृष्ट्वा कथं भवेत् ।
नास्नानकालमश्नीयात् भुक्त्वा चान्द्रायणं चरेत् ॥

आस्नानकालं चतुर्थदिनपर्यन्तम् । रजस्वलायाः शावाशौचप्रसक्तौ व्यासः—

मलवद्वसनायास्तु अमापत्य(?) भवेद्यदि ।
अभिषेकेण शुद्धिः स्यादिनत्रयमभोजनम् ॥

अमापत्यं बन्धुभृत्यादि । एतच्छक्तायाः, अन्यस्या बाऽल्पापत्यायाश्च मदनरत्ने स्मृत्यन्तरम्—

अमापत्ये समुत्पन्ने मलवद्वसना यदि ।
अभिषेकेण मुक्तिः स्यान्नाशनं वा दिनत्रयम् ॥

त्रिरात्रम् अत्राशिष्टकालपर्यन्तम् । अभिषेकेण मुक्तिः सद्यःस्नानेन भोजनमित्यशक्ताद्विपरमुक्ता शक्तायां नाशनं चेत्कुर्यात् । पश्चात् पञ्चमेऽन्हि अशनस्य कृतभोजनस्य प्रत्याम्नायः [illegible]

भुक्तिः पश्चादनशनप्रत्याम्नाय इति ॥ स्नानविधिं चाह पराशरः—

'स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
*पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथंचन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥'

अथ *रजस्वलास्नानम् । दैवज्ञवल्लभः—

'ब्रह्मानुराधाश्विनसौम्यभेषु
हस्तानिलाखण्डलवासवेषु ।
विश्वार्यमर्क्षोत्तरभाद्रभेषु
वराङ्गनास्नानविधिः प्रदिष्टः ॥'

ज्वरे तूशनाः—

'ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ? ॥
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दश द्वादशकृत्वो वा आचामेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥' इति ।

---

स्नानविधिभोजनादिः कृच्छ्रादिश्च दक्षिणादिरूपः । *पात्रान्तरितेति ।

आर्तवाभिप्लुता नारी नावगाहेत् कदाचन ।
उद्धृतेन जलेनैव स्नात्वा शेषं समापयेत् ॥

इति व्यासोक्तेः । व्रतं रजस्वलाधर्मम् । रजस्वला तु ग्रहनक्षत्रनिरीक्षणदिवास्वापमधुमांसताम्बूलनखनिकृन्तनदन्तधावनप्रवासस्नानाभ्यञ्जनानि वर्जयेदित्यादि स्मृत्युक्तम् ।

*रजस्वलास्नानमिति । चतुर्थ्यां स्नातामिति विहितं स्नानं

इदं चातुरमात्रे ज्ञेयम् ।

'*आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ॥'

इति पराशरोक्तेः । रजसोऽज्ञाने तु पराशरमाधवीये प्रजापतिः—

'अविज्ञाते मले सा च मलवद्वसना यदि ।

कृतं गृहेषु दुष्टं स्या*च्छुद्धिस्तस्यास्त्रिरात्रतः ॥'

शुद्ध्यर्थम् । एतच्च पुंजननादिनिमित्तभूतातिशयाधायकम् । एवं सूतिकास्नानमपि । एतच्च चतुर्थदिवसासम्भवे तदग्रे कार्यम् । एतेन चतुर्थदिने नक्षत्राभावे स्नानं न स्यादिति न शङ्क्यम् । *आतुरे इति ।

स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत ततः शुद्ध्येत्स आतुरः ।

इत्युत्तरार्द्धम् । तत्र प्रतिस्नानं रजस्वलादेर्वासोविपरिवर्तनं कार्यम् ।

आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।

स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत एवं शुध्येत्स आतुरः ॥

वासोभिर्दशभिश्चैव परिधाय यथाक्रमम् ।

दद्यात्तु शक्तितो दानं पुण्याहेन विशुध्यति ॥

इत्यत्रिवचनात् । *शुद्धिस्तस्यास्त्रिरात्रत इति । यदा ज्ञायते ततस्त्रिरात्रादित्यर्थः । शुद्धिर्न स्यादिति वा पाठः । तदा प्राजापत्यादिकमधिकं कल्प्यमित्यभिप्रायः । गर्भाधाने शतं ब्राह्मणा भोज्याः, दश वेति प्रयोगरत्ने । पूर्वोक्तानि व्रतादीनि गर्भाधानहोमादीनि कृच्छ्रादीनि च सर्वाणि कर्माणि विष्णोरर्पयेत् ।

विष्ण्वर्पितानि कर्माणि सकलानि भवन्ति हि ।

अनर्पितानि कर्माणि भस्मनि न्यस्तहव्यवत् ॥

नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ।

विष्णोः समर्पितं सर्वं सात्त्विकं सफलं भवेत् ॥

इतिनारदीयात् ।

'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।

देवजानीये कारिकायाम्—

'उच्छिष्टा तु द्विजातीनां रजः स्त्री यदि पश्यति ।
उपवासम(१)धोच्छिष्टे ऊर्ध्वोच्छिष्टेऽग्रहं क्षिपेत् ॥' इति ।

अथ पुंस(२)वनम् । प्रयोगपारिजाते जातूकर्ण्यः—

'*द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।
व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथवा ॥'

---

यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
इति गीतोक्तेश्च । विहितमिति शेषः ।

*द्वितीये वेति । गर्भाभिव्यक्तौ, अन्यथा तृतीये इत्यर्थः । वस्तुतस्तु गर्भधारणमासादिति शेषेण तृतीये, गर्भाधानाभिव्यक्तौ तु चतुर्थे इत्यर्थः । तथा च गर्भमासप्रभृति तृतीये चतुर्थे षष्ठेऽष्टमे वा मासि अरिक्तादितिथौ पुष्यादिपुन्नक्षत्रे सोमबुधगुरुशुक्रवारेषु विष्ट्यादिरहिते दैवज्ञोक्ते काले पुंसवनानवलोभने कार्ये । गुरुशुक्रास्तबाल्यवार्धक्यमलमासादिरहितकाललाभे गुरुशुक्रास्तादावपि न कार्ये । तदलाभे तु गुरुशुक्रास्तादावपि, नियतकालत्वात्; सीमन्तादिने वा कार्ये इति प्रघट्टकार्थः । अत्र शतं

---

(१) मूत्रपुरीषोत्सर्गोत्तरमकृतप्रक्षालनादिशौचात्पूर्वावस्था अधरोच्छिष्टं, भोजनोत्तरं मुखप्रक्षालनादितः प्राक्तन्यवस्था ऊर्ध्वोच्छिष्टमिति ज्ञेयम् ।

(२) एतदादिसंस्काराणां वेदविहितत्वमाह—आश्वलायनः—'उपनिषदि गर्भलम्भनपुंसवनमनवलोभनं च' इति । अस्य व्याख्यामाह वृत्तौ नारायणभट्टः—'गर्भो लभ्यते येन कर्मणा निषिक्तं वीर्यममोघं च भवति तद्गर्भलम्भनम् । पुमाँल्लब्धो जायते येन तत्पुंसवनम् । पुमांस्तु सन् येन नावलुप्यते तदनवलोभनम् । वर्णविकारो द्रष्टव्यः पृषोदरादित्वात् । एतानि कस्यांचिदुपनिषद्याम्नातानि । न केवलमेतानि, किं तर्हि ? गर्भाधानादय आत्मज्ञानपर्यन्ता आम्नाताः । ' इति । विशेषाविधिश्च तत एव ज्ञेयः ।

बृहस्पतिः—

'तृतीये मासि कर्तव्यं*गृष्टैरन्यत्र शोभनम् ।

गृष्टेश्चतुर्थे मासे तु षष्ठे मास्यथ वाष्टमे ॥'

सकृत्प्रसूता गृष्टिः । *एतेन प्रतिगर्भमपि भवतीति ज्ञायते । बह्वृचकारिकाऽपि—

'कर्ता स्याद्देवरस्तस्या यस्याः पत्युरसम्भवः ।

आवर्तत इदं कर्म प्रतिगर्भमिति स्थितिः ॥'

ब्राह्मे—

गर्भाधानादिसंस्कर्ता (१)पतिः श्रेष्ठतमः स्मृतः ।

अभावे स्वकुलीनः स्याद्बान्धवो*ऽन्यत्र *गोत्रजः ॥

---

ब्राह्मणा भोज्याः । *गृष्टैरिति । सामुद्रादिशास्त्रेणैव प्राग्गृष्टित्वनिर्णयः । *एतेन गृष्टितदन्ययोर्व्यवस्थोक्त्या गृष्टेरेकवारं तदन्यस्या वारं वारमित्यर्थसूचनात् पुमान् सूयतेऽनेनेति व्युत्पत्त्या कर्मणः पुंप्रसवसाधनत्वलाभादिति शेषः। एतेन नावलुप्यते गर्भोऽनेनेति व्युत्पत्त्या अनवलोभनकर्मणो गर्भाविनाशकत्वलाभात् प्रतिगर्भमावृत्तिर्लभ्यते ।

सकृत्तु संस्कृता नारी सर्वगर्भेषु संस्कृता ।

इतिदेवलवाक्यं तु सीमन्तविषयमिति तदाशयः । विज्ञानेश्वरादिभिरनयोः सकृत्करणस्य सिद्धान्तितत्वादेते सकृदेव कुर्वन्ति । तदग्रे चिन्तयामः । *अन्यत्र स्वकुलीनाभावे । *गोत्रज इति तदन्यव्यावृत्तये। अनयोः कर्त्ता पतिर्मुख्यः। तदभावे तु देवरादिः । तदभावश्च विवृतः प्रयोगपारिजाते—

पत्यौ मृते वा पतिते सन्न्यस्ते वा विदेशगे ।

तद्गोत्रजेन ज्येष्ठेन कार्याः पुंसवनादिकाः ॥ इति ।

गर्भाधानं देवरादिना न कार्यं, कलिवर्ज्यत्वात्तः पुंसवना-

---

(१)'पिता श्रेष्ठतमः' इति खपुस्तके पाठः ।

मदनरत्ने सत्यव्रतः—

मृतो देशान्तरगतो भर्ता स्त्री यद्यसंस्कृता ।
देवरो वा गुरुर्वाऽपि वंश्यो वाऽपि समाचरेत् ॥

हेमाद्रौ यमः—'प्रथमे मासि द्वितीये वा यदा पुंनक्षत्रेण चन्द्रमा युक्तः स्यात्' इति । वराहः—

हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरस्तथा पुष्यः ।
पुंसञ्ज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ॥

अनूराधाऽपि पुंनक्षत्रम् 'अनूराधान् हविषा वर्धयन्तः' इति श्रुतेः । गर्गोऽपि—

पुन्नामा श्रवणस्तिष्यो हस्तश्चैव पुनर्वसुः ।
अभिजित्प्रौष्ठपाच्चैव अनूराधास्तथाश्वयुक् ॥

नृसिंहः—

रिक्तां पर्व च *नवमीं त्यक्त्वा पुंसवने शुभाः ।

ज्योतिर्निबन्धे वसिष्ठः—

मृत्युश्च सौरेस्तनुहानिरिन्दो-
र्मृतप्रजा पुंसवने बुधस्य ।
काकी च वन्ध्या भवतीह शुक्रे
स्त्रीपुत्रलाभो रविभौमजीवैः ॥

अनवलोभनस्याप्ययमेव* कालः । दीपिकायां तु चतुर्थेऽनवलोभनम्' इत्युक्तम् ।

---

दिपदम् । *नवमीं त्यक्त्वेति । अन्यरिक्ताया अनुकल्पत्वार्थं नवम्यामधिकदोषत्वार्थं वा । अत्र च—

बलोपपन्ने दम्पत्योश्चन्द्रतारावलान्विते ।
कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः ॥

इत्यादिकमपि द्रष्टव्यम् । *अयमेवेति । अस्य पुंसवनसहकार्यत्वात् ।

*अथ सीमन्तः । हेमाद्रौ बैजवापः—'अथ सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे च' इति । वसिष्ठः—

चतुर्थे*सप्तमे मासि षष्ठे वाप्यथ वाऽष्टमे ।

हेमाद्रौ शङ्खः-'गर्भस्पन्दने सीमन्तोन्नयनं, यावद्वा न प्रसवः' । कार्ष्णाजिनिः—

गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा ।
सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा ॥

मासश्चात्र सौरः सावनो वा । कालविधाने—

चतुर्थषष्ठाष्टममासभाजि-
सौरेण गर्भे प्रथमे विधेयम् ।
सीमन्तकर्म द्विजभामिनीनां
मासेऽष्टमे*विष्णुबलिं च कुर्यात् ॥

वसिष्ठः—

चतुर्थे सावने मासि षष्ठे वाप्यथवाऽष्टमे ।

ज्योतिर्निबन्धे नारदः-

---

*अथेत्यादि । तथा च गर्भमासप्रभृतिचतुर्थे षष्ठेऽष्टमे वा केषांचिन्मते पञ्चमे सप्तमे नवमे वा मासे यावत्प्रसवं वा शुक्लपक्षे षष्ठ्यष्टमीद्वादशीचतुर्थीनवमीचतुर्दश्यमावास्याभिन्नतिथौ पुंनक्षत्राणां मध्यदपादद्वये भौमगुरुरविवारेषु चन्द्रानुकूल्ये शुभलग्नादौ विष्टयादिदोषरहिते कार्यमित्यर्थः । मलमासगुरुशुक्रास्तादीनां कालान्तरासम्भवे पूर्ववत् न दोषः नियतकालत्वात् । शतं ब्राह्मणा भोज्याः । *सप्तमे इति । नवमोऽपि द्रष्टव्यः ।

आधानादष्टमे मासि सीमन्तोन्नयनं भवेत् ।
नवमे मासि वा कुर्याद्यावद्गर्भविमोचनम् ॥

इत्यात्रेयात् । *विष्णुबलिमिति ॥ अयं सूत्रानुक्तेः कृता-

अरिक्तापर्वदिवसे *कुजजीवार्कवासरे ॥

कालविधाने—

सीमन्ते *तिष्यहस्तादितिहरिशशभृत्
पौष्णाविध्यु त्तराख्याः
पक्षच्छिद्रं च रिक्तां *पितृतिथिमपहा-
यापराः स्युः प्रशस्ताः ॥

आदितिः पुनर्वसुः । पक्षच्छिद्रं चाह वसिष्ठः-

चतुर्दशी चतुर्थी च अष्टमी नवमी तथा ।
षष्ठी च द्वादशी चैव पक्षच्छिद्रा(१)ह्वयाः स्मृताः ।
*क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः ॥

---

कुतः । *कुजेति सोमबुधगुरुशुक्रवाराः प्रयोगरत्ने उक्ताः । कालनिर्णयप्रकाशे व्यासः—

पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि ।
मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ ॥

बृहज्जातके—

बुधसूर्यसुतौ नपुंसकाख्यौ
शशिशुक्रौ युवती नराश्च शेषाः' ॥ इति ।

*तिष्येति । पुष्यहस्तपुनर्वसु श्रवणं मृगशिररेवतीरोहिण्युत्तरात्रयमित्यर्थः । पुनर्वसु पुष्याभिजिद्धस्तप्रोष्ठपदानुराधाश्विनीमूलश्रवणरेवतीरोहिणीमृगाशिरःसंज्ञकानि पूर्वोक्तानिपुन्नक्षत्राणीति जयन्तः । कारिकाऽपि—

ऋक्षस्य मध्यमे पादद्वये कर्मेदमिष्यते ।

उक्तनक्षत्रं चतुर्धा विभज्याद्यान्त्यभागौ त्याज्यौ, मध्यमौ भागौ ग्राह्यावित्यर्थः । *पितृतिथिम् अमावास्यां पितृमरण-

---

(१) छिद्राः प्रकीर्तिताः इति खपुस्तके पाठः ।

भूताष्टमनुतत्त्वाङ्कदशशेषास्तु शोभनाः ॥

कालनिर्णये—

*शुभसंस्थे निशानाथे चतुर्थीं च चतुर्दशीम् ।
पौर्णमासीं प्रशंसन्ति केचित्सीमन्तकर्मणि ॥

बृहस्पतिः—

पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
चतुर्दशी चतुर्थी च शुक्लपक्षे शुभप्रदं ॥

नारदः—

'विप्रक्षत्रिययोः कुर्याद्दिवा सीमन्तकर्म तत् ।
वैश्यशूद्रकयोरेतद्दिवा निश्यपि केचन ॥

वाराः पूर्वोक्ता एव । *एतच्च*सकृदेव कार्यमिति वि-

ति।थिं च । *क्रमादिति अत्यावश्यकार्थम् । एवं *शुभसंस्थ इत्याद्यपि । बृहस्पतिः—

सिंहाली वर्जयेत् लग्ने ग्रहैरष्टमवर्जितैः ।
(ग्रहाः क्रूरग्रहाः, चन्द्रोऽपि बोध्यः) ।
व्रतबन्धे च सीमन्ते जन्मन्यापि शुभा ग्रहाः ।
अष्टमे चन्द्ररहितास्तदायुर्वृद्धिरीरिता ॥

इति भारद्वाजात्। अलिः वृश्चिकः, शेषं दैवज्ञोक्तं ग्राह्यम्। *ए-तच्चेति। एतच्च पतिरेव कुर्यान्नान्यः। एतच्च वृत्तौ स्पष्टम्। *सकृ-दिति। अयमत्र सिद्धान्तः—सीमन्तोन्नयनस्य सीमन्त उन्नीयतेऽस्मि-न्निति व्युत्पत्त्या स्त्रीसंस्कारत्वमेव। न चैवं पुंसवनस्य दधिप्राशन-स्यानवलोभनस्य हृदयालम्भस्य च स्त्रीसंस्कारत्वं स्यात् : "पत्नीं-प्राशयेत्" "दक्षिणस्यां नासिकायामजितामोषधीं नस्तःकृत्वा हृदयदेशमस्या आलभेत" इति तस्या एव कर्मत्वावगमादिति वाच्यम्। वेदवित्सम्प्रदानकगोकर्मकदानस्य स्वर्गार्थत्वात् पत्नीकर्मकप्राशना-देर्गर्भसंस्कारकत्वसम्भवात् । प्राशनस्य गर्भगतपुंस्त्वोत्पत्त्यर्थकर-

ज्ञानेश्वरः ।

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।

इति देवलोक्तेः । सकृत्प्रतिगर्भं वा कार्यमिति हेमाद्रिः ।

सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥

इति हारीतोक्तेः,

सीम(१)न्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते ।
केचिद्गर्भस्य संस्कारात्प्रतिगर्भं प्रयुञ्जते ॥

इति हेमाद्रौ विष्णुवचनाच्च । स एव—

स्त्री यद्यकृतसीमन्ता (२)प्रसूयेत कथञ्चन ।
गृहीतपुत्रा विधिवत् *पुनः संस्कारमर्हति ॥

सीमन्ते भोजने प्रायश्चित्तमुक्तं पराशरमाधवीये धौम्येन—

ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातकर्मनवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥

ऋग्विधाने तु—

(३)अराइवे जपेन्मन्त्रं शतवारं न संशयः ।

---

त्वात् । अस्यानवलोभनस्य च तदुत्पन्नपुंस्त्वलोपकारणदुरितनाशार्थत्वात् । "माघं(?)पौत्रमघं नियाम्" इति मन्त्रलिङ्गात् । प्रतिगर्भकरणं तु सीमन्तोन्नयनस्य गर्भसंस्कारत्वं यस्यां शाखायामुक्तं तत्परमिति ।
*पुनरिति । यो यःसंस्कारोऽतिक्रान्तः तं तं कुर्यादित्यर्थः ॥

---

(१) कात्यायनानां तु प्रतिगर्भमावर्तनीयमिति धर्मसिन्धुः ।

(२) 'प्रसवेत्तु' इति कखयोः ।

(३) स तु मन्त्रो यथा—"अरा इवेदचरमा अहेव प्रप्र जायन्ते अकवा महोभिः । पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या संमिमिक्षुः ॥" इति ( ऋ० सं० अ० ४ अ० ३. ) । अस्यार्थः—'अरा इवेत् रथशङ्कव इव अचरमा अनिकृष्टाः सर्वसमाः सहैवोत्पन्नाश्चेत्यर्थः । अहेव

सीमन्ते च यदा भुङ्क्ते मुच्यते किल्बिषात्तदा ॥ इति ।

अथ गर्भिणीतत्पतिधर्माः । वराहः—

सामिषमशनं यत्नात्प्रमदा परिवर्जयेदतः प्रभृति ।

गृह्यकारिका—

अङ्गारभस्मास्थिकपालचुल्ली-
शूर्पादिकेषूपविशेन्न नारी ॥
सोलूखलाद्ये दृषदादिके वा
यन्त्रे तुषाद्ये न तथोपविष्टा ।
नो मार्जनीगोमयपिण्डकादौ
कुर्यान्नवारिण्यवगाहनं सा
अङ्गारभूत्या न नखैर्लिखेत्क्ष्मां
कलिं वपुर्भङ्गमथो न कुर्यात् ।

गार्ग्यः—

यदि सीमन्ततः पूर्वं प्रसूता स्याच्च भामिनी ।
तदानीं पेटके बालं स्थाप्य संस्कारमाचरेत् ॥ इति ।

तथा च सीमन्तोन्नयनं कृत्वा द्वादशेऽन्हि जातकर्म कार्यम् । आशौचे सीमन्तस्य दुष्करत्वात् । यदि चाकृत एव सीमन्ते जातकर्म कृतं तदा व्यत्ययदोषपरिहारार्थं व्याहृतिहोमरूपं प्रायश्चित्तं कुर्यात् ।

---

अहानि दिवसा यथा षष्टिघटिकात्मकाः तद्वत्सप्तसंख्योपेतसप्तगणरूपेण समा इत्यर्थः । अनेन दृष्टान्तद्वयेन वै सादृश्याभावः प्रतिपादितः । एवमुक्तलक्षणा महोभिस्तेजोभिः प्रप्रजायन्ते प्रकर्षेण प्रादुर्भवन्ति । ते चाकवाः अनल्पाः । यद्वा महोभिरित्यस्य विशेषणम् । पृश्नेर्मध्यमिकाया वाचो गोरूपाया अन्तरिक्षस्य वा (पुत्राः) पुत्रस्थानीयाः उपमासः प्रत्येकं समानाः रभिष्ठाः प्रकृष्टवेगाः । एवं महानुभावा मरुतः स्वया मत्या स्वकीययैवानुग्रहबुद्ध्या संमिमिक्षुः वृष्ट्या सम्यक् सिञ्चन्ति' इति । अस्य मन्त्रस्य [illegible] रणे शुद्धिकरणसामर्थ्यमिति गम्यते ।

नो मुक्तकेशी विवशाथ वा स्याद्
*भुङ्क्ते न संध्यावसरे न शेते ॥
नामङ्गलं वाक्यमुदीरयेत्सा
शून्यालयं वृक्षतलं न यायात् ॥

विष्णुधर्मोत्तरे—

कटुतीक्ष्णकषायाणि अत्युष्णलवणानि च ।
आयासं च व्यवायं च गर्भिणी वर्जयेत्सदा ॥

हेमाद्रौ कौण्डिन्यः—

मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।

---

'आरभ्याधानमाचौलात्कालेऽतीते तु कर्मणाम् ।
व्याहृत्याऽऽज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥

इतिवाक्यप्रवृत्तेर्निष्प्रत्यूहत्वात् । ततः सीमन्तोन्नयनमेव कार्यं, न तु प्रायश्चित्तमात्रेण निर्वाहः । तस्य वैपरीत्यदोषपरिहारे उपक्षीणत्वात् । व्याहृतिहोमश्च गृह्याग्नेरभावे लौकिकाग्नौ कार्यः । न च सीमन्तोन्नयनं कुतः कार्यम् पादकृच्छ्राद्याचरणेन निर्वाहादिति वाच्यम् । तत्र स्त्रीसंस्कारानिर्वाहेण द्वितीयादिगर्भे गार्भिकदोषानुवृत्तिप्रसङ्गात्, प्रतिगर्भं पादकृच्छ्रादिप्रायश्चित्तापेक्षापत्तेश्च । एतदेवाभिप्रेत्य 'हुत्वा कर्म यथाक्रमम्' इति सङ्गच्छते।

कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ।

इति तु व्यत्ययाभावस्थलपरम् । एवं च

अकृत्वा गां द्विजे दत्त्वा कुर्यात्पुंसवनं पतिः ।

इति वाक्यस्य क्रमपरत्वाद्यत्र गोदानमप्यकृत्वा पुंसवनं कृतं तत्र व्यत्ययप्रायश्चित्तं कृत्वा गर्भाधानं गोदानं वा कार्यम् । आरभ्याधानमित्यारभ्यपदोपादानस्वारस्यात् । एवं पुंसवनादेरप्यूह्यम् । ब्रह्मौदने आधानोपनयनयोः प्रसिद्धेः ।

न जीवत्पितृकः कुर्याद्[१]गुर्विणीपतिरेव च ॥
मिताक्षरायाम्-
उदन्वतोम्भसि स्नानं नखकेशादिकर्तनम् ।
अन्तर्वत्न्याः पतिः कुर्यान्न प्रजा जायते ध्रुवम् ॥
पृथ्वीचन्द्रोदये गारुडे-
गयायां पिण्डदानस्य*न कदाचिन्निराक्रिया ॥'
अत्र कालेदामत्ययस्मृतेर्निषिद्धकालस्यैवापवादो न तु जीवत्पितृकगर्भिणीपत्याशौचादि[२]निमित्तस्य । निमित्तसंयोगस्य कालसंयोगाद्भेदेनापवादाभावात् । अग्निहोत्रवद्यावज्जीवपरत्वाभावात । अन्यथाशौचेऽपि गयायात्रा श्राद्धं च स्यात् । यत्र निमित्तसंयोगस्यापवादो यथाशौचेऽग्निहोत्रादेः, यथा वा जीवत्पितृकस्यापवादो मातुर्गयान्वष्टकादौ तदेव भवति नान्यदिति संक्षेपः ।
प्रयोगपारिजाते कश्यपः-
'गर्भिणी कुञ्जराश्वादिशैलहर्म्याधिरोहणम् ।
व्यायामंशीघ्रगमनं शकटारोहणं त्यजेत् ।

---

*भुङ्क्ते इति । संध्यावसरे न भुङ्क्ते संध्यावसरे न शेते इत्यन्वयः । न शेते इति शयालुत्वस्यापि निषेधः सामान्यतः शयननिषेधासम्भवात् । अथवा कश्यपः-
न शयालुः सदा तिष्ठेत् खट्वाछायां विवर्जयेत् ।
न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् ॥
न वस्त्रहीनानोद्विग्ना न चार्द्रावरणा सती ॥' इति ।
*न कदाचिन्निराक्रियेति । अत्र कालेदामत्ययस्मृतेरित्यादिपाठः समञ्जसः । अधिकं तीर्थश्राद्धे वक्ष्यामः ।

---

( १ ) 'गर्भिणीपति' इति कपुस्तके ।
( २ ) 'निमित्तस्य । अग्निहोत्रे यावज्जीववत्कालपरत्वाभावात्' इति कं

शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनम् ।
व्यवसायं दिवास्वापं रात्रौ जागरणं त्यजेत् ॥
मदनरत्ने स्कान्दे—
हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
केशसंस्कारकबरी करकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती वर्जयेद्गर्भिणी नहि ॥
बृहस्पतिः—
चतुर्थे मासि *षष्ठे वाऽप्यष्टमे गर्भिणी यदा ।
यात्रा नित्यं विवर्ज्या स्यादाषाढे तु विशेषतः ॥
याज्ञवल्क्यः—
*दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥
दोहृदं गर्भिणीप्रियम् ) तत्रैवाश्वलायनः—
वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः ।
*श्राद्धं च सप्तमान्मासादूर्ध्वं(१)नान्यत्र वेदवित् ॥
श्राद्धं तद्भोजनमिति प्रयोगपारिजातः । कालविधाने मुहूर्तदीपिकायां च--
क्षौरं शवानुगमनं नखकृन्तनं च
युद्धादि वास्तुकरणं त्वतिदूरयानम् ।
उद्वाहमौपनयनं जलधेश्च गाह—

*षष्ठे वेति । शक्ताशक्तभेदेन विकल्पः । *दौहृदस्येति । गर्भस्यैकं हृत् गर्भिण्याश्चैकमिति द्विहृदा, तस्या इदं दौहृदम् । औत्व आगमः, दौवारिकवत् । दर्शाब्दिकादिश्राद्धस्य निषेधायोगादाह—*श्राद्धमिति ।

(१)'ऊर्ध्वं चान्यच्च वेदवित्' इति कपुस्तके ।

मायुःक्षयार्थमिति गर्भिणिकापतीनाम् ॥

रत्नसङ्ग्रहे गालवः—

दहनं वपनं चैव चौलं वै गिरिरोहणम् ।
नाव आरोहणं चैव वर्जयेद्गर्भिणीपतिः ॥

अन्यत्रापि--

प्रव्यक्तगर्भापतिरब्धियानं
मृतस्य वाहं क्षुरकर्मसङ्गम् ।
तस्यां तु यत्नेन गयादितीर्थं
यागादिकं वास्तुविधिं न कुर्यात् ॥

प्रव्यक्तगर्भा वनिता भवेन्मासत्रयात्परम् ।
षण्मासात्परतः सूतिर्नवमेऽरिष्टवासिनी ॥

अथ सूतिकागृहप्रवेशः । गर्गः-

रोहिण्यैन्दवपौष्णेषु स्वातीवरुणयोरपि ।
पुनर्वसौ पुष्यहस्तधनिष्ठास्वुत्तरासु च ॥
मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम् ॥

एतच्च सम्भवे ।

प्रसूतिसमये काले सद्य एव प्रवेशयेत् ।

इति वसिष्ठोक्तेः । तच्च नैर्ऋत्यां कार्यम् ।

वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् ।

इति वसिष्ठोक्तेः । विष्णुधर्मे-

दशाहं सूतिकागारमायुधैश्च विशेषतः ।

---

पाद्मे—

प्रविशेत् सूतिकागारं कृतरक्षं समन्ततः ।
प्राग्द्वारमुत्तरद्वारमथवा सुहृदं शुभम् ॥
देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् ।
एरण्डमूलचूर्णेन सघृतेन तथैव तु ॥

वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः ।
मुसलेन तथा वारिवर्णकैश्चित्रितेन च ॥ इति ।

अथ जातकर्म । पारिजाते वसिष्ठः—

*श्रुत्वा जातं पिता*पुत्रं सचैलं स्नानमाचरेत् ॥

---

सुखप्रसवनार्थाय पश्चाद कार्येऽनुलेपयेत् ॥ इति ।

ऋग्विधाने—

प्रमांदिने प्रसूयन्त्यां जपेद्गर्भविमोचनीम् ।
इन्द्रं च मनसा ध्यायेन्नारी गर्भं विमुञ्चति ॥

"विजिहीष्व वनस्पते" इति मन्त्रोदकं वा पाययेद् । अन्यत्रापि— महिषीदुग्धमिश्रमेरण्डतैलम्—

"हिमवत्युत्तरे पार्श्वे शबरी नाम पक्षिणी ।
तस्या नूपुरशब्देन विशल्या भवतु गर्भिणी ॥ स्वाहा"

इति मन्त्रेण पाययेदिति । रक्षा च विष्णुधर्मे—

दशाहं सूतिकागारमायुधैश्च विशेषतः ।
वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः ॥
मुसलेन तथा वारिवर्णकैश्चित्रितेन च ॥ इत्यादि ।

*पुत्रमिति । पुंस्त्वमविवक्षितम् । अनुवाद्यविशेषणत्वात् । श्रुत्वेति असन्निधौ श्रवणानन्तरं स्नानं, सन्निधौ तु तज्ज्ञानमात्रं विवक्षितम् ।

जातमात्रकुमारस्य मुखमस्यावलोकयेत् ।
पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात् ॥

इति तु सम्भवाभिप्रायम् । कदाचित्पुत्रमुखादर्शने स्नाने विलम्बापत्तेः । इदञ्च स्नानं शीताद्भिः कार्यम् ।

कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।

इति जाबाल्युक्तेः । एवमिद रात्रावपि कार्यम्—

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।

मनुः-

*प्राङ्नाभिवर्धनात्पुंसो जा(१)तकर्म विधीयते ।

स्नानं नैमित्तिकं कार्यं रात्रावपि न दुष्यति ॥

इति व्यासोक्तेः । ततः पिता स्पृश्यः,

माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥

इति संवर्त्तोक्तेः। *प्रागिति। आशौचन्तु नाडीच्छेदानन्तरम् । 'प्राक् नाडीच्छेदात्संस्कारपुण्यार्थान् कुर्वन्ति, नाड्यां छिन्नायामाशौचम्' इति हारीतोक्तेः । पुण्यार्थो दानादिः । स्मृतिपुराणसदाचारप्राप्तः स नाडीच्छेदात् प्रागेव कार्य इत्यर्थः । प्रतिग्रहोऽपि नाडीच्छेदात् । "प्रागेव कुमारप्रसवे नाड्यामच्छिन्नायां प्रतिग्रहे न दोषः" इति शङ्खोक्तेः । तत्र विशेषः—

तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत् ।

भक्षयित्वा तु तन्मोहाद् द्विजश्चान्द्रायणं चरेत् ॥

सूतके तु सकुल्यानामदोषं मनुरब्रवीत् ।

इति स्मृतेः । दानं च रात्रावपि कार्यम् ।

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।

नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु ॥

इति व्यासोक्तेः। यद्यपि सूतकं जननोत्तरमेव प्रवर्त्तते हारीतोक्तौ अशौचपदोत्तरं पूर्णमित्यध्याहारात् , तथापि वृद्धिश्राद्धजातकर्मदानादावधिकारोऽस्ति, तत्र 'सूतके तु समुत्पन्ने' इति प्रजापतिना तात्कालिकशुद्धेरुक्तेः । एवं च स्नानोत्तरं संध्यादि न भवति, दानार्थं दिनमनुज्ञातमादित्यपुराणे—

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।

(१)अत्र विशेषमाहाश्वलायनः । यथा-'कुमारं जातं पुराऽन्यैरालम्भात्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्-'प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् । आयुष्मान् गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्निति ।' इति ।

वर्धनं छेदनम् । हेमाद्रौ बैजवापः—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥

पृथ्वीचन्द्रोदये विष्णुधर्मे—

अच्छिन्ननाभि कर्तव्यं*श्राद्धं वै पुत्रजन्मनि ॥

पुत्रपदेन कन्यापि गृह्यते । तदाह तत्रैव कार्ष्णाजिनिः—

प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वाऽनन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् ॥

एतच्च रात्रावपि कार्यम् ।

पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् ।

इति तत्रैव व्यासोक्तेः । बैजवापः—

जातमात्र*कुमारस्य जातकर्म विधीयते ।
स्तनप्राशनतः पूर्वं नाभिकर्तनतोऽपि वा ॥

एतेन नैमित्तिकमपीदं जातेष्टिवदाशौचान्ते कार्यमिति शङ्का परास्ता । 'जाते कुमारे पितॄणामामोदात्पुण्यं तदहः' इति हारीतोक्तेश्च । अत्र श्राद्धमामेन हेम्ना वा

---

आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वतः ॥
तत्र दद्यात्सुवर्णं तु भूमिं गां तुरगं रथम् ।
छत्रं छागं च माल्यं च शयनं चासनं गृहम् ॥
तिलपूर्णानि पात्राणि सहिरण्यानि पैत्रकम् । इति ।

*श्राद्धमिति । एकपुत्रोत्पत्त्यनन्तरं स्नानादौ क्रियमाणे पुत्रान्तरोत्पत्तौ जातकर्मभेदेऽपि श्राद्धं तन्त्रेणैव विशेषाग्रहणात् । निमित्तपौर्वापर्ये तु निमित्तक्रमानुरोधेन श्राद्धभेदः,

द्विबहूनि निमित्तानि जायन्ते एकवासरे ।
तत्र नैमित्तिकं कार्यं निमित्तानुक्रमोदयम् ॥

इति वचनात् । *कुमारस्येति । पुंस्त्वाविवक्षया 'तूष्णीमेताः

कार्यमित्युक्तं पृथ्वीचन्द्रोदये आदित्यपुराणे—

(१)जातश्राद्धे तु पक्वान्नं*न दद्याद्ब्राह्मणेष्वपि। इति ।

हेमाद्रिस्तु—

पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्वेन न चामेन कल्याणान्यभिकामयन् ॥

इति संवर्तोक्तेर्हेम्नैवेत्याह । एतच्च जननाशौचे मरणाशौचे च कार्यमित्याह मिताक्षरायां प्रजापतिः—

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥
मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।

केचित्तु—

आशौचापगमे कार्यं जातकर्म यथाविधि ॥

इति स्मृतिसंग्रहोक्तेराशौचान्ते कार्यमित्याहुः । स्मृत्यर्थसारेऽपि विकल्प उक्तः ।

---

क्रियाः स्त्रीणाम्' इति वाक्यान्तराद्वा कन्याया अपि जातकर्म कार्यम्, न तु नपुंसकस्येति मेधातिथिः । *न दद्यादिति । नचेदं पक्वान्ननिषेधमात्रम्,

स्त्री शूद्रः स्वपचश्चैव जातकर्माणि वाऽथवा ।
आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु ॥

इति प्राचेतसात् । स्वपचः स्वयंपचः । (२)अत्रामश्राद्धं नैमित्तिकं, हेमश्राद्धं तु काम्यमित्येके । हेमश्राद्धमेव नैमित्तिकं तदसंभवे आमश्राद्धमित्यन्ये । नैमित्तिकमप्याहाचार्यः—

जातं कुमारं दृष्ट्वा तं स्नात्वाऽऽनीय गुरून् पिता ।
नान्दीश्राद्धावसानं तु जातकर्म समाचरेत् ॥ इति ।

---

(१) 'जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि' इति कपुस्तके पाठः ।
(२) 'अत्रामश्राद्धमित्यन्ये । नैमित्तिक' इत्येतावानेव पाठो 'घ'पुस्तके ।

*मृदुध्रुवचरक्षिप्रभेष्वेषामुदयेषु च ।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च ॥

मृद्वादिलक्षणमाह श्रीधरः—

रोहिण्युत्तरभं स्थिरं गिरिशमूलेन्द्रोरगा दारुणं

---

*मृद्वित्यादि । जन्मकालातिक्रमे । तत्र जाबालिः—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥ इति ।

पितरि ग्रामान्तरगते संन्यस्तादौ वा पितृव्यादिर्गोत्रजो ज्येष्ठक्रमेण जातकर्म कुर्यात् ।

पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे ।
तद्गोत्रजेन ज्येष्ठेन कार्याः पुंसवनादयः ॥
दीक्षान्ते दीक्षिता भर्त्ता जातकर्मादिकं चरेत् ।
पुंसवादीनि कर्माणि त्रीणि ज्येष्ठेन कारयेत् ॥
अकृतेऽन्यकृते कर्मण्यापत्सु स्वास्थ्यमागतः ।
दाने ब्राह्मणवाक्यैश्च पुत्रकर्म समाचरेत् ॥

इत्याश्वलायनोक्तेः । ज्येष्ठेनेति ज्येष्ठ एव प्रतिनिधिरित्येतदर्थम् । दीक्षितेन तु दीक्षाकाले स्वयमपि जातकर्म न कार्यं, नापि प्रतिनिधिद्वारा, किन्त्ववभृथान्ते दीक्षाविमोके स्वयमेव कार्यम् । 'ज्येष्ठः कनिष्ठद्वारा पुंसवनादीनि त्रीणि न कारयेत्' इत्युक्त्या जातकर्म तु कारयेदिति सूच्यते । स्वयमकृतं निषिद्धप्रतिनिधिना कृतमप्यकृततामापन्नं कर्मातिक्रान्तं स्वयं कर्तुमसामर्थ्येऽपि नान्येन कारयेत्, किन्तु स्वास्थ्योत्तरं दानसहितब्राह्मणाशीर्भिः सोत्कर्षं पुत्रसंस्कारं कुर्यादित्यर्थः । एवं महारोगार्त्तः सत्यपि सामर्थ्ये स्वयं जातकर्म न कुर्यात् ।

[illegible] तत्कालं [illegible] कारयेत्,

क्षिप्रं चाश्विदिनेशपुष्यमनलेन्द्राग्नी तु साधारणम् ।
उग्रं पूर्वमघान्तकं मृदु गाति त्वाष्ट्रान्त्यमैत्रं चरं
विष्णुस्वातिशतोडुवस्वदितयः कुर्युः स्वसंज्ञाफलम् ॥
अत्र सर्वत्र जातकर्मनामकर्मादावुक्तकालातिक्रमे नक्षत्रादिकं ज्ञेयम् ।

देशकालोपघाताद्यैः कालातिक्रमणं यदि ।
अनस्तगेऽज्येन्दुसिते तत्कार्यं चोत्तरायणे ॥

इति मदनरत्ने नारदोक्तेः । बृहस्पतिरपि—

मुख्यालाभे विधिज्ञेन विधिश्चिन्त्योऽप्रमादतः ।
नक्षत्रतिथिलग्नानां विचार्यैवं पुनः पुनः ॥

सूतके सन्ध्यादौ विशेषं वक्ष्यामः ।

*अथ जन्मनि दुष्टकालाः । तत्र गण्डान्तो ज्योतिर्निबन्धे नारदः—

*पूर्णानन्दाख्ययोस्तिथ्योः संधिर्नाडीद्वयं तथा ।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥
*कुलीरसिंहयोः *कीटचापयोर्मीनमेषयोः ।

---

यावत्स्वास्थ्यं भवेत्तावन्नाचरेज्जातकक्रियाम् ॥

इत्याश्वलायनोक्तेः । एतत्पूर्वोक्तं चाश्वलायनवचनं शिष्टपरिग्रहादिह दर्शितम् । जातकर्मानन्तरं कर्त्तव्यमाह वसिष्ठः—

दत्त्वा गोभूहिरण्यादि ततो लग्नं निरीक्षयेत् ।
अरिक्तपाणिर्दैवज्ञात् शृणुयात् पुत्रजन्मनि ॥ इति

'देशकालोपघाताद्यैः' इत्यत्र कालोपघातस्य दुष्टकालत्वोक्तेर्दुष्टकालमाह*—अथेति । *पूर्णेति । तिथिगण्डान्तलक्षणम् ॥ पूर्णाः पञ्चमी–दशमी–पूर्णिमाः, नन्दाः षष्ठी–एकादशी–प्रतिपदः । *कुलीरेति । लग्नगण्डान्तलक्षणम् । *कुलीरः कर्काटकः । *कीटः वृश्चिकः ।

गण्डान्तमन्तरालं स्याद्घटिकार्धं मृतिप्रदम् ॥

*सार्पेन्द्रपौष्णभेष्वन्त्यषोडशांशा भसंधयः ।

तदग्रभेष्वाद्यपादा भानां गण्डान्तसंज्ञकाः ॥

रत्नमालायाम्—

पौष्णाश्विन्योः सार्पपित्र्यर्क्षयोश्च

यच्च ज्येष्ठामूलयोरन्तरालम् ।

---

*सार्पेति । नक्षत्रगण्डान्तलक्षणम् । सार्पम् आश्लेषा, ऐन्द्रं ज्येष्ठा, पौष्णं रेवतिः । प्रयोगपारिजाते गर्गः—

अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः ।

रेवतीसार्पशाक्रान्ते मासाश्वऋतुसायकाः ॥

अश्विनीमघमूलादौ नाडिकाद्वितयं तथा ।

अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता ॥

पूषाहिशाक्रे पश्चार्धे जननी बाध्यते शिशोः ।

पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा ॥

(दिवाजातः दिवसगण्डान्तजातः, एवं रात्रिजात इत्यादावपि)

आत्मघ्नः सन्ध्ययोर्जातो नास्ति गण्डे निरामयः ॥ इति ।

अश्विन्यादेरादिभागे त्र्यादिसंख्याका रेवत्यादेरन्त्यभागे तु द्वादशादिसंख्याका घटिका दुष्टाः । तत्तदाद्यन्तभागस्थे द्वे द्वे घटिके दुष्टतरे । अश्विन्यादिभागो दिवा रेवत्याद्यन्तभागश्च रात्रौ दुष्टतमौ, तत्रापि द्वे द्वे घटिकेऽतिदुष्टतमे इत्यत्र तात्पर्यम् । अत एव नक्षत्रगण्डान्तशान्तौ निमित्ततारतम्येन नैमित्तिकतारतम्यम्—

कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवम् ।

अष्टाभिश्च चतुर्भिर्वा द्वाभ्यां वा शोभनं तथा ॥

इति कांस्यपात्रपरिमाणन्यूनत्वकथनादुपपद्यते । एवं [illegible]रप्रतिमादावपि कर्षादिपरिमाणतारतम्यं बोध्यम् । ग्रन्थे तु 'अन्त्यषोडशांशा' 'आद्यपादा' इत्यभिधाना[illegible] गण्डान्तः प्रतीयते,

त(१)द्गण्डान्तं स्याच्चतुर्नाडिकं हि
यात्राजन्मोद्वाहकालेष्वनिष्टम् ॥

रत्नसंग्रहे नवनीतारिष्टे—

सर्वेषां गण्डजातानां परित्यागो विधीयते।
वर्जयेद्दर्शनं श्रावं तच्च षाण्मासिकं भवेत् ॥
तिथ्यर्क्षगण्डे पितृमातृनाशो
लग्ने तु संधौ तनयस्य नाशः ।
सर्वेषु नो जीवति हन्ति बन्धून्
जीवन्पुनः स्याद्बहुवारणाश्वः ॥

अथैषां दानमुत्तरगार्ग्ये—

*तिथिगण्डे त्वनड्वाहं*नक्षत्रे धनुरुच्यते ।

---

तत्रापि दुष्टगण्डान्तशान्तिः कार्या । अत्र गोमुखप्रसवो नित्यः ।

पित्ररिष्टे सुतारिष्टे मात्ररिष्टे तथैव च ।
प्रायश्चित्तं ततः कुर्यात्तद्दोषस्य शान्तये ॥

इति गर्गोक्तेः । यन्नक्षत्रादावुत्पत्त्या पित्राद्यरिष्टं सूच्यते तद्दोषशान्तये गोमुखप्रसवसंज्ञं प्रायश्चित्तं कुर्यादित्यर्थः । एवं सति

पूषाश्विनोर्गुरौ सर्पमघाचित्रेन्द्रमूलभे ।
एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥

इति गर्गवाक्येन 'पित्ररिष्टे' इत्यनेन प्राप्तस्य मूलादौ पुनर्विधानं यत्र मूलादेश्चतुर्थपादादौ न दोषस्तत्रापि तत्प्राप्त्यर्थम् । तथाशब्दश्च तत्तन्नक्षत्रादिशान्तिसमुच्चायकः । पुष्यनक्षत्रे तु गोप्रसवमात्रं 'गुरौ' इत्युक्तेः, न तु तदन्या काचन शान्तिरनुक्तत्वात् । "उत्तरातिष्यचित्रासु" इति वाक्ये तिष्यपदं गोमुखप्रसवमात्रार्थम् । *तिथिगण्डे त्विति ।

अभुक्तेतरजातस्य सूतकान्त्यदिनेऽथवा ।

---

(१) 'स्याद्गण्डान्तम्' इति खगपुस्तकयोः ।

काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥
*उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते ।
अजाप्रदानं त्वाष्ट्रे स्यात्पूर्वाषाढे च काञ्चनम् ॥
उत्तरापुष्यचित्रासु पूर्वाषाढोद्भवस्य च ।
कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकारजं बुधः ॥

अथाश्लेषाफलम् ।

मूर्धास्यनेत्रगलकांसयुगं च बाहु-
हृज्जानुगुह्यपदमित्यहिदेहभागः ।
बाणाद्रिनेत्रहुतभुक्श्रुतिनागरुद्र-
षण्नन्दपञ्चशिरसः क्रमशस्तु नाड्यः ॥

---

शान्तिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत् ॥

इति श्लोकोऽस्ति । तथा चायमर्थः—यद्यप्युदाहृतोत्तरगार्ग्यस्मृतौ तिथिगण्डादावुत्तरादिचतुष्टये च दानशान्ती कर्तव्यत्वेन प्राप्ते, तथाऽपि सर्वेषामेतत्कालानामुत्तरार्धजन्मनि शान्तिरेव कार्या, न तु बहिःप्रयोगं दानमपि, 'अभुक्तेतरजातस्य' इति वचनात् , तिथिगण्डादिरुत्तरादिश्च यः कालस्तेषां योऽभुक्तः पूर्वार्ध इति यावत् , तदितर उत्तरार्धस्तज्जातस्य शान्तिमेव कुर्यादिति ह्यर्थः । पूर्वार्धजन्मनि दोषाधिक्याद्दानमप्याह—तिथिगण्डे त्विति । *नक्षत्रे नक्षत्रगण्डे ज्येष्ठामूलादिसन्धौ । एतच्चाग्रिमं च दानं निमित्तानन्तरं नालच्छेदात्पूर्वं गण्डोत्तरार्धाद्यधिकरणकं, सप्तमीनिर्देशात् । शान्तिरपि सूतकानन्तरं कार्या उत्तरार्द्धजन्मनि तु केवलशान्तिः। *उत्तरे इति । उत्तरादेः पूर्वार्द्धजन्मनि दानानि कार्याणि उत्तरार्द्धापेक्षया पूर्वार्द्धे गण्डवद्दोषाधिक्यात् । शान्तिश्च पूर्वोत्तरार्द्धयोर्जन्मनि 'प्रयत्नेन'इत्युक्तेः । नक्षत्राकारजं 'रूपं कृत्वा' इति शेषः । एवं सति या—

'चित्राद्यार्द्धे पुष्यमध्यद्विपादे पूर्वाषाढाधिष्ण्यपादे तृतीये ।

राज्यं पितृक्षयो मातृनाशः कामक्रियारतिः ।
पितृभक्तो बली स्वघ्नस्त्यागी भोगी धनी क्रमात् ॥

अथ ज्येष्ठाफलम् । ब्रह्मयामले—

ज्येष्ठादौ जननीमाता द्वितीये जननीपिता ।
तृतीये जननीभ्राता स्वयं माता चतुर्थके ॥
आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् ।
सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ॥
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ॥ इति ॥

अथ मूलफलम् । भल्लादः-

अभुक्तमूलसम्भवं परित्यजेत्तु बालकम् ।
समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ॥
तदाद्यपादके पिता द्वितीयके जनन्यथ ।
धनक्षयस्तृतीयके चतुर्थकः शुभावहः ॥
प्रतीपमन्त्यपादतः फलं तदेव सार्पभे ।

अभुक्तमूलं त्वाह वृद्धवसिष्ठः--

ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम् ।
अभुक्तमूलमित्याहुस्तत्र जातं शिशुं त्यजेत् ॥

केचिज्ज्येष्ठान्त्यं मूलाद्यं च पादमभुक्तमूलमाहुः ।
कश्यपसंहितायां त्वन्यथोक्तम्—

मूलाद्यपादजो हन्ति पितरं तु द्वितीयजः ।
मातरं स्वां तृतीयोऽर्थान् सुहृदं तत्तुरीयजः ॥
फलं तदेव सार्पर्क्षे प्रतीपं त्वन्त्यपादतः ॥

अथ मूलवृक्षः । जयार्णवे-

मूलं स्तम्भं त्वचा शाखा पत्रं पुष्पं फलं शिखा ।

---

जातःपुत्रश्चोत्तराद्ये विधत्ते पित्रोर्भ्रातुः स्वस्य चापि प्रणाशम् ॥
इति नृसिंहप्रसादे उत्तरादीनां [illegible] सा-
पि प्रतिमापरिमाणवृद्धिहोमसंख्यावृद्ध्यर्था ।

वेदाश्च मुनयश्चैव दिशश्च वसवस्तथा ॥
नन्दा बाणा रसा रुद्रा मूलभेदः प्रकीर्तितः ।
मूले मूलविनाशाय स्तम्भे हानिर्धनक्षयः ॥
त्वचि भ्रातृविनाशाय शाखा मातृविनाशकृत् ।
पत्रे सपरिवारः स्यात्पुष्पेषु नृपवल्लभः ॥
फलेषु लभते राज्यं शिखायामल्पजीवितम् ॥

अन्यत्र त्वन्यथोक्तम्--

'मूले सप्तघटीषु मूलहननं, स्तम्भेऽष्टसु स्वक्षयम्
त्वग्दिग्बन्धुविनाशनं, च विटपे रुद्रैर्हतो मातुलः ।
पत्रेऽर्कैः सुकृती, तु बाणकुसुमे मन्त्री, फले सागरै
राजा, वह्निशिखाल्पमायुरिति सन्मूलाङ्घ्रिपे स्यात्फलम्॥

भूपालवल्लभः—

वृषालिसिंहेषु घटे च मूले
दिवि स्थितं, युग्मतुलाङ्गनान्त्ये ।
पातालगं, मेषधनुःकुलीर-
नक्रेषु मर्त्येष्विति संस्मरन्ति ॥

स्वर्गे मूले भवेद्राज्यं पाताले चेद्धनागमः ।
मर्त्यलोके यदा मूलं तदा शून्यं समादिशेत् ॥

वसिष्ठः--

नैर्ऋत्यभोद्भूतसुतः सुता वा
क्षिप्रादवश्यं श्वशुरं निहन्ति ।
तदन्त्यपादे जनितो न हन्ति
तस्योत्क्रमेणाहिभवे कलत्रम् ॥

सुरेशताराजनिता धवाग्रजं
[illegible] तु देवरम् ।

पुरन्दरर्क्षे जनितः सुतस्तथा
स्वस्याग्रजं हन्ति न पुत्रिका यदि ॥

प्रयोगपारिजाते—

मूलजा श्वशुरं हन्ति *व्यालजा च तदङ्गनाम् ।
*माहेन्द्रजाऽग्रजं हन्ति देवरं तु *द्विदैवजा ॥

नृसिंहप्रसादे—

धवाग्रजं हन्ति सुरेन्द्रजाता
तथैव पत्न्या भगिनीं पुमांश्च ।
द्विदैवजा देवरमाशु हन्या-
दर्यानुजामाशु निहन्ति सूनुः ॥

पत्न्यग्रजामग्रजं वा हन्ति ज्येष्ठर्क्षजः पुमान् ।
तथा भार्यास्वसारं वा शालकं वा द्विदैवजः ॥
कन्यका देवरं हन्ति विशाखान्त्यसमुद्भवा ।
आद्यपादत्रये नैव आद्यभे तु पुमान् भवेत् ॥
न हन्याद्देवरं कन्या तुलामिश्रा द्विदैवजा ।
तद्दन्तोद्भवा वर्ज्या दुष्टा वृश्चिकपुच्छवत् ॥

चित्राद्यर्धे पुष्यमध्ये द्विपादे
पूर्वाषाढाधिष्ण्यपादे तृतीये ।
जातः पुत्रश्चोत्तराद्ये विधत्ते
मा(१)तापित्रोर्भ्रातरं बालनाशम् ॥

द्विमासं चोत्तरादोषः पुष्ये चैव त्रिमासकः ।
पूर्वाषाढाष्टमे मासि चित्रा षाण्मासिकं फलम् ।
नवमासं तथाश्लेषा मूले चाष्टाकवर्षकम् ।

---

*व्याल आश्लेषा । *माहेन्द्रं ज्येष्ठा । *द्विदैवं विशाखा ।

---

(१) 'पित्रोर्भ्रातुः स्वस्य चापि प्रणाशम्' इति पाठान्तरम् ।

ज्येष्ठा पञ्चदशे मासि पुत्रदर्शनवर्जिता ॥

वसिष्ठः—

*व्यतीपातेऽङ्गहानिः स्यात्परिघे मृत्युमादिशेत् ।
वैधृतौ पितृहानिः स्यान्न*ष्टेन्दावन्धतां व्रजेत् ॥
मूले समूलनाशः स्यात्कुलनाशो धृतौ भवेत् ।
विकृताङ्गश्च हीनश्च संध्ययोरुभयोरपि ॥
पर्वण्यपि प्रसूतौ च सर्वारिष्टभयप्रदः ।
तद्वत्सदन्तजातश्च पादजातस्तथैव च ॥
विपरीतप्रसूतौ तु नाभिनालेन वेष्टितः ।
राष्ट्रस्य नृपतेश्चैव स्वस्यापि च विनाशकः ॥
तस्माच्छान्तिं प्रकुर्वीत ग्रहाणां क्रूरचेतसाम् ॥

गर्गः—

*कृष्णां चतुर्दशीं षोढां कुर्यादादौ शुभं स्मृतम् ।

---

*व्यतीपाते इति । व्यतीपातवैधृतिसंक्रमजन्मानि गोमुखप्रसवं कृत्वा शान्तिः कार्या,

अथातः संप्रवक्ष्यामि शौनकः शान्तिमुत्तमाम् ।
कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः ॥
संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः ।
गोमुखप्रसवं कृत्वा कुर्यात् शान्तिं प्रयत्नतः ॥

इति शौनकोक्तेः । *नष्टेन्दाविति । चतुर्दशीविद्धा अमा सिनीवाली, प्रतिपद्विद्धा कुहूः, वेधद्वयरहितो दर्शः, पृथक्शान्तिनिमित्तप्रविष्टानि । तदुक्तम्—'खण्डामायां सिनीवाली–कुहू–जननशान्तिः, अखण्डायां तु दर्शजननशान्तिः' इति । ज्यौतिषे तु—

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूः स्मृता ।

इति वाक्ये नष्टचन्द्रेत्यस्यादृष्टचन्द्रेत्यर्थः । तथा च दर्शनयोग्यचन्द्रोपलक्षिता कुहूः । सूर्योदयोत्तरं प्रतिपद्घटीषु(?) प्रवृत्त्या दर्श इति भेद उक्तः । *कृष्णामिति । कृष्णचतुर्दशीजनने ।

द्वितीये पितरं हन्ति तृतीये हन्ति मातरम् ॥
चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ।
षष्ठे तु धननाशः स्यादात्मनो वंशनाशनम् ॥
तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ॥

अथ पित्रोर्नक्षत्रे जन्मदोषः । तत्र देवकीर्तिः—

यद्येकस्मिन्धिष्ण्ये जायन्ते दुहितरोऽथ वा पुत्राः ।
पितुरन्तकरा ह्येते यद्यपरे प्रीतिरतुला स्यात् ॥

गर्गः—

एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चितम् ॥

शौनकः—

ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥
इत्थं संजायते यस्य तस्य मृत्युर्न संशयः ॥

शान्तिस्तु-

तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् ।
सूर्यग्रहे सूर्यरूपं हैमं, चन्द्रे तु राजतम् ॥
राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः ।
( नागः सीसम् । )
त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् ॥
'आकृष्णेन' 'आप्यायस्व' 'स्वर्भानोः' इति पूजामन्त्राः ।

नक्षत्रदेवतायास्तन्मन्त्रेण ।

संपूज्य तु यजेत्सूर्यं समिद्भिश्चार्कसंभवैः ।
चन्द्रग्रहे च पालाशैर्दूर्वाभी राहुमेव च ॥
समिद्भिर्बिल्ववृक्षस्य मेशाय जुहुयाद्बुधः ।

आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः ॥
पञ्चगव्यैः पञ्चरत्नैः पञ्चत्वक्पञ्चपल्लवैः ।
जलैरोषधिकल्कैश्च अभिषेकं समाचरेत् ।
मन्त्रैर्वारुणसंभूतैरापोहिष्ठादिभिस्त्रिभिः ॥
इमं मे गङ्गे पुरतस्तत्त्वायामीति मन्त्रकैः ।
यजमानस्ततो दद्याद्भक्त्या प्रतिकृतित्रयम् ॥ इति ।

मात्स्ये—

*अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव *युग्मप्रसवकास्तथा ॥
अमानुषा अमुण्डाश्च अजातव्यञ्जनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
निर्वासयेत्तान् नगरात्ततः शान्तिं समाचरेत् ॥

पाद्मे—

*उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ।
दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ! ॥
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ।

---

*एकस्मिन्नेवेत्येकनक्षत्रजनने । *ग्रहणे इति । ग्रहणजनने ।

*अकालप्रसवा इति । अत्र देशनाशं कुलनाशं च वारयितुं शान्तिरित्यर्थः । प्रसववैकृतानां कौस्तुभादौ विस्तरः । *युग्मप्रसवका इति । यमलजनने । *उपरीति । प्रथममुपरिदन्तोत्पत्तौ । सदन्तजनने च पारिजाते वृद्धगार्ग्यः—

त्रिपनाडीषु सञ्जातः पितृमातृधनात्मनाम् ।
[illegible]ः क्रूरे लग्नेंऽशगेऽपि वा ॥
त्रिपघटीश्च—

यदा दन्ताश्च जायन्ते मासे चैव महद्भयम् ॥
मातरं पितरं वाऽथ खादेदात्मानमेव च ।
गजपृष्ठगतं बालं नौस्थं वा स्थापयेद् द्विज ! ॥
तदभावे तु धर्मज्ञ काञ्चने वा वरासने ।
सर्वौषधैः सर्वगन्धैर्बीजैः पुष्पैः फलैस्तथा ॥
पञ्चगव्येन रत्नैश्च पताकाभिश्च भार्गव ! ।
स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् ॥
सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् ।
भद्रासने निवेश्यैनं मृद्भिर्मूलैः फलैस्तथा ॥
सर्वौषधैः सर्वगन्धैः सर्वबीजैस्तथैव च ।
स्नापयेत्पूजयेच्चात्र वह्निं सोमं समीरणम् ॥
पर्वतांश्च तथा ख्यातान् देवदेवं च केशवम् ।
एतेषामेव जुहुयाद् घृतमग्नौ यथाविधि ॥
ब्राह्मणानां तु दातव्या ततः संपूज्य दक्षिणा ॥

ब्रह्मयामले—

प्रथमं दन्तनिर्मुक्तिरूर्ध्वं बालस्य चेद्भवेत् ।
क्लेशाय मातुलस्येह तदा प्रोक्ता मनीषिभिः ॥
सौवर्णं राजतं वापि ताम्रं कांस्यमयं तु वा ।

---

तिथीषुनागाद्रिगिरीशवारिधि-
गजाद्रिदिक्पावकादिक् च भास्करः ।
मुनीभसङ्ख्या प्रथमातिथेः क्रमात्
परं विषाख्यं घटिकाचतुष्टयम् ॥ इति ।

अस्यार्थः—तिथि १५, इषु ५, नाग ८, अद्रि ७, गिरि ७, ईश ११, वारिधि ४, गज ८, अद्रि ७, दिक् १०, भास्कर १२, मुनि ७, इभ ८ । एवञ्च प्रतिपत्तिथौ पञ्चदशघटिकोत्तरं घटिकाचतुष्टयं विषम् । द्वितीयायां पञ्चघटिकोत्तरमित्यादि ।

दध्योदनेन संपूर्णं पात्रं दद्याच्छिशोः करे ॥
समन्त्रं भाजनं दत्त्वा स पश्येन्मातुलः शिशुम् ॥

तत्र मन्त्रः—

रक्ष मां भागिनेय ! त्वं रक्ष मे सकलं कुलम् ।
गृहीत्वा भाजनं सान्नं प्रसन्नो भव सर्वदा ॥
निर्विघ्नं कुरु कल्याणं निर्विघ्नां च स्वमातरम् ।
मय्यात्मानमधिष्ठाप्य चिरं जीव मया सह ॥
एवं कृते विधाने तु विघ्नः कोऽपि न जायते । इति ॥

---

विंशच्चतुर्द्वादशदिक् (१)च शैला
बाणश्च तत्त्वानि यथाक्रमेण ।
सूर्यादिवारेषु भवन्त्यनन्तरं
नाड्यो विषाख्यं घटिकाचतुष्टयम् ॥
(२)खमार्गणा वेदपक्षाः खरामा व्योमसागराः ।
वार्धिचन्द्रा रूपदस्राः खरामा व्योमबाहवः ॥
द्विरामा खाग्नयः शून्यदस्राः कुञ्जरभूमयः ।
रूपपक्षा व्योमदस्रा वेदचन्द्राश्चतुर्दश ॥
शून्यचन्द्रा वेदचन्द्रा षडक्षा वेदबाहवः ।
शून्यदस्रा शून्यचन्द्रा पूर्णचन्द्रा गजेन्दवः ॥
तर्कचन्द्रा वेदपक्षाः खरामाश्चाश्विनीक्रमात् ।
एभ्यः पराः स्युर्घटिकाश्चतस्रो विषसंज्ञिताः ॥ इति ।

पारिजाते गार्ग्यः—

---

(१) दिक् १०, शैल ७, बाण ५, तत्त्व २५ ।

(२) खमार्गण ५०, वेदपक्ष २४, खराम ३०, व्योमसागर ४०, वार्धिचन्द्र १४, रूपदस्र २१, खराम३०, व्योमबाहु २०, द्विराम३२, खाग्नि ३०, शून्यदस्र २०, कुञ्जरभूमि १८, रूपपक्ष २१, व्योमदस्र २० वेदचन्द्र १४, शून्यचन्द्र१०, वेदचन्द्र १४, षडक्ष ५६, वेदबाहु२४, शून्यदस्र२०, शून्यचन्द्र१०, पूर्णचन्द्र१०, गजेन्दु१८, तर्कचन्द्र १६, वेदपक्ष २४, खराम३०।

अथ (१)त्रिकप्रसवशान्तिः । शान्तिसर्वस्वे—

सुतत्रये सुता चेत्स्यात् तत्त्रये वा सुतो यदि ।
मातापित्रोः कुलस्यापि तदाऽनिष्टं महद्भवेत् ॥
ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत् ।
तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः
जातस्यैकादशाहे वा द्वादशाहे शुभे दिने ।
आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरम् ॥
ब्रह्मविष्णुमहेशेन्द्रप्रतिमाः स्वर्णतः कृताः ।
पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः ॥
पञ्चमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया ।
रुद्रसूक्तानि चत्वारि शान्तिसूक्तानि सर्वशः ॥

अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डान्तानां च नामानि महादोषकराणि च ॥
दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥
कामगण्डे मृत्युरोगे दग्धयोगे च दारुणे ।
तस्मिन् गण्डादिने प्राप्ते प्रसूतिर्यदि जायते ॥
अतिदोषकरी प्रोक्ता तस्मिन् पापयुते सति ।

'पापयुते सति' इत्युक्तेः विष्ट्यादौ निषिद्धांशयुक्ते जन्मनि दोषाधिक्यम्, भद्रापुच्छादौ च दोषोऽल्प इत्यर्थः । योगानां निषिद्धांशाः मलमासशेषे प्रथमे ग्रन्थ एवोक्ताः—"विरुद्धसंज्ञा इह योगा" इत्यादिः ।

अथ यमघण्टकः ।

अर्कारतमसौम्यार्यमन्दा यद्येकराशिगाः ।
कण्टकाख्यो महादोषः सर्वकर्मविनाशनः ॥

आरो भौमः, तमो राहुः, आर्यो गुरुः, मन्दः शनिः । कौस्तुभे विस्तारः ।

---

(१) त्रिकशान्तिरिति पाठो घ पुस्तके

द्विज एको जपेद्धोमकाले शुचिसमाहितः ।
आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुम् ॥
अष्टोत्तरसहस्रं वा शतं वा त्रिशतं तु वा ।
देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरम् ।
ब्रह्मादिमन्त्रैरिन्द्रस्य यतइन्द्र भयामहे ।
ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः ॥
अभिषेकं कुटुम्बस्य कृत्वाचार्यं प्रपूजयेत् ।
हिरण्यं धेनुरेका च ऋत्विजां दक्षिणा ततः ॥
आज्यस्य वीक्षणं कृत्वा शान्तिपाठं तु कारयेत् ।
प्रतिमा गुरवे दत्त्वा उपस्करसमन्विताः ।
ब्राह्मणान् भोजयेच्छक्त्या दीनाऽनाथांश्च तर्पयेत् ।
एवं शान्तिविधानेन सर्वारिष्टं प्रलीयते ॥ इति ।

अन्येषु मूलावृक्षेषु शान्त्यादि प्रयोगपारिजाते मत्कृते शान्तिरत्ने च ज्ञेयम् ॥

मिताक्षरायां मार्कण्डेयः—

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥

व्यासः—

सूतिकावासनिलया जन्मदा नाम देवता ।
तासां [illegible] तु शुद्धिर्जन्मनि कीर्तिता ॥
प्रथमे दिवसे षष्ठे*दशमे चैव सर्वदा ।

---

*दशमे चैवेति । चकारेण पञ्चमाष्टमौ ग्राह्यौ ।
दद्यात्तु प्रथमे हेम षष्ठे वा सप्तमेऽपि वा ।
बलिदानं च दशमे ह्यन्नदानं प्रशस्यते ॥

त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥

अपरार्के ब्राह्मे—

कन्याश्चतस्रो राकाद्या वासघ्नी चैव पञ्चमी ।
क्रीडनार्था च बालानां षष्ठी च शिशुरक्षिणी ॥
खड्गे तु पूजनीया वै वैश्यैर्ब्रात्यैर्द्विजातिभिः ॥

राका,अनुमतिः,सिनीवाली,कुहूरिति चतस्रःकन्या इत्यर्थः।
अथ दत्तपुत्रपरिग्रहविधिः । पारिजाते शौनकः—

*अपुत्रो मृतपुत्रो वा*पुत्रार्थं समुपोष्य च ।

इति वाक्याच्च ।

*अपुत्रो मृतपुत्रो वेति उद्देश्यविशेषणतया उपादेयमपि राजत्ववदधिकारिसंकोचकम् ।

वन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य च ।

इति वाक्यान्तरे वन्ध्यात्वाद्यपि तथा । *पुत्रार्थमिति । अत्र चास्मदादीनाम् अस्य पुत्रस्य च विद्यमानपितृपुत्रभावादिसम्बन्धनिमित्तककार्यनिवृत्तये अस्मै अमुकशर्मणे अमुकगोत्राय इमं पुत्रं दास्यामीति दातुरुल्लेखः । प्रतिग्रहीतुस्तु पूर्वदिने उपवासं कृत्वा परदिने बन्धूनाहूय प्रतिग्रहं राज्ञे कथयित्वा ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च पितृपुत्रभावादितत्तत्सम्बन्धनिवृत्तिद्वारा तत्प्रयुक्तकार्यनिवृत्तिपूर्वकमस्मदादीनां तस्य च परस्परं पितृपुत्रभावादितत्तत्सम्बन्धप्रवृत्तिद्वारा तत्प्रयुक्तकार्यप्रवृत्तये पुत्रं प्रतिग्रहीष्ये इति । इदं केवलदत्तके । द्व्यामुष्यायणे त्वस्मदादीनामस्य पुत्रस्य च पितृपुत्रभावादिसम्बन्धसत्त्वेऽप्यस्य पितृपुत्रभावादिसम्बन्धसिद्धये इमं पुत्रं दास्यामि, इति दातुरुल्लेखः । एवम् अस्य पुत्रस्य तज्जनकादीनां च पितृपुत्रभावादिसम्बन्धसत्त्वेऽप्यस्मदादीनां पितृपुत्रभावादिसम्बन्धसिद्ध्यर्थं पुत्रं प्रतिग्रहीष्ये इत्युल्लेखः । दातृप्रतिग्रहीत्रोः स्वस्य प्रतिग्रहीतृदात्रोश्च नामगोत्राद्यु-

*वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम् ॥
बन्धूनन्नेन संभोज्य *ब्राह्मणांश्च विशेषतः ।
*अन्वाधानादि यत्तन्त्रं कृत्वाज्योत्पवनान्तकम् ॥
*दातुः समक्षं गत्वा तु पुत्रं देहीति*याचयेत् ।
*दाने*समर्थो दाताऽस्मै ये यज्ञेनेति पञ्चभिः ॥

---

ल्लेख उभयत्रापि द्रष्टव्यः । 'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य' इति वासिष्ठात् । 'राजा च ग्रामपालः' इत्याहुः । गणेशार्चनादि नान्दीश्राद्धान्तं तूभयोरपि । *वाससी कुण्डले दत्त्वेति । प्रयोगपारिजाते नन्दपण्डितीये चायमेव पाठः । इदं वरणविधिना वृताचार्याय दानम् । 'दत्त्वा' इत्यस्य 'आदाय' इत्यनेन समानकर्तृकत्वात्, न तु प्रतिग्रहीष्यमाणपुत्राय दातृसमक्षमेवेदानीमगमनात् । आचार्याय तद्दानं च धृतवासोद्वयोष्णीषकुण्डलस्याचार्यस्य दातुर्गृहे नयनार्थम्, तेन प्रतिग्रहीतुरापत्तिशून्यत्वं व्यज्यत इत्यप्याहुः । पुत्रार्थमपि वाससी कुण्डले उष्णीषमङ्गुलीयकं च सम्पाद्य मूर्द्धनीत्यनन्तरम्—

वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतम् ।
नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ॥

इति ग्रन्थावधृतशौनकवाक्यात् । छायावहं सदृशम् । तत्र 'वस्त्रादिभिः' इति आदिना कुण्डलादिग्रहः । दत्त्वेत्यस्याचार्याधीनं कृत्वेत्यर्थे तु आचार्याय तद्दानं लुप्यते,

वाससी कुण्डले छत्रमुष्णीषं चाङ्गुलीयकम् ।

इति पठतां मते इव । *ब्राह्मणान् त्रीन्, बहुवचनात् । *अन्वाधानादीति । आचार्यकृत्यम् । *दातुरिति । ग्रहीतृकृत्यम् । *याचयेदिति । णिजविवक्षितः । आचार्यादिरन्य एव कश्चन याचेत् । अयं तु याचयेदिति स विवक्षित इत्यन्ये । *दाने इति दातृकृत्यम् । दत्त्वेति क्त्वाप्रत्ययः, दातेति तृच्पाठे दद्यादिति

*देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥
गृहमध्ये त*मादाय *चरुं हुत्वा विधानतः ।
*यस्त्वाहृदेत्यृचा चैव तुभ्यमग्न ऋचैकया ॥
सोमो ददादित्येताभिः प्रत्यृचं पञ्चभिस्तथा ।
स्विष्टकृदादिहोमं च कृत्वा शेषं समापयेत् ॥

*स च—

---

शेषः । *दाने समर्थ इति च पत्न्या अनुमत्यनपेक्षाव्यञ्जकम् । पञ्चऋगन्ते—'इदं पुत्रं तुभ्यमहं सम्प्रददे न मम' इति दद्यादित्यर्थः । 'प्रतिगृण्हीत मानवं सुमेधसः' इति मन्त्रलिङ्गात् । द्व्यामुष्यायणे च 'न मम' इत्यस्य त्यागः । *देवस्य त्वेति । प्रतिग्रहीतृकृत्यम् । चकारेण स्वशाखोक्तकामस्तुतिसमुच्चयः । *आदाय धृतवस्त्रद्वयकुण्डलोष्णीषादि वाद्यादिघोषपूर्वकमानीय । *चरुमिति । आचार्यकृत्यम् । होममन्त्रानाह-*यस्त्वाहृदेत्यृचा चैवेति । एवं सप्तभिर्मन्त्रैः सप्तचर्वाहुतीर्हुत्वेत्यर्थः । अत्र बह्वृचानां शौनकोक्त एव विधिः । तत्र 'यस्त्वा हृदा' इत्येकया ऋचा होमः । अन्येषान्तु बौधायनोक्तः । अत्र दातुः समक्षं गत्वा 'पुत्रं मे देहि' इति भिक्षिते ददामीति इतर आह । तं प्रतिगृण्हामि 'सन्तत्यै त्वा गृण्हामि' इति । अथैनं कुण्डलाभ्यामङ्गुलीयकेन चालङ्कृत्य परिधानप्रभृत्यग्निमुखान्तं कृत्वा पक्वान् जुहोति । 'यस्त्वा हृदा कीरिणा मन्यमानः' इति पुरोनुवाक्यमनूच्य 'यस्मै त्वं सुकृते जातवेदः' इति याज्यया जुहोति । अथवा "आहुतीर्हुत्वा स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात्" इति बौधायनोक्तः प्रतिग्रहविधिः । तत्र 'यस्त्वा हृदा' इत्यादिना द्वयेन होमः तत्र स्फुट एव शौनकोक्ताद्भेदः । 'तुभ्यमग्ने' इत्यादिमन्त्रैर्होमाभावात् । एवं च शौनकोक्ते यस्त्वा हृदादृग्यृचा चैव' इति पठित्वा 'ऋक्द्वयकरणको होमः' इति वदतां महासाहसम् । आज्योत्पवना-

ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेत् ॥

मिताक्षरादौ तु *व्याहृतिभिराज्येन होम उक्तः । स च होमोत्तरं जलपूर्वकं देयः, न वाङ्मात्रेण, "व्याहृतिभिर्हुत्वा प्रतिगृह्णीयात्" इति वसिष्ठोक्तेः ।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
*सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥

इति मनूक्तेः ।

---

दिकमित्यादिना बर्हिषि हविरासादनान्तं लभ्यते । मिताक्षरामते तु व्याहृतिहोमान्तमित्याह—*स चेति । *व्याहृतिभिरिति । 'निवेशनस्य मध्ये' इति प्रकृतम् । केचित्तु होमोत्तरमित्यस्य होमात्पूर्वमित्यर्थः, होम उत्तरो यस्मादिति व्युत्पत्तेः । होमव्यवधानवारणार्थं "निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा" इति वासिष्ठेन व्याहृतिहोमस्य प्रतिगृहीतशिशोर्गृहानयनोत्तरभावित्वप्रतीत्याऽर्थादेव क्त्वार्थपूर्वकालत्वाविवक्षणादित्याहुः, तच्चिन्त्यम् । *सदृशमिति । सदृशं प्रतिग्रहीतृसवर्णम् । कौस्तुभे तु त्रयाणां वर्णानां ब्राह्मणत्वादिना तत्रापि देशभेदप्रयुक्तगुर्जरत्वादिजात्या च समानजातीयमित्युक्तम् । एतच्च प्रतिग्रहीतुरेव पुत्रत्वार्थम् । यत्तु गुणैः सदृशं, ततश्च ब्राह्मणादेः क्षत्रियादिरपि भवत्येवेति, तदशुद्धम्,

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।

इत्युपसंहारविरोधात् । माता पिता वेति । मातापितृभ्याम् अन्यतराभावे अन्यतरेण विधिपूर्वकं दत्त इत्यर्थः । मात्रादिग्रहणं च पालकाभ्यां पालितस्य दत्तकस्यान्यस्मै दानवारणार्थं, पितामहादेर्दातृत्वस्य वारणार्थं च । अद्भिरिति वासिष्ठाद्युक्तविध्युपलक्षणम् । प्रीतिसंयुक्तमिति देयपुत्रविशेषणम् ।

'विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।

दाराः पुत्रश्च' इति वचनात्। स ज्ञेयो दत्त्रिम इति संज्ञासंज्ञि-संबन्धबोधकगतेन 'स' इति सर्वनाम्ना मातापितृकर्तृकप्रीतिजलगुण-कापन्निमित्तकदानकर्मीभूतसजातीयपुंस एव परामर्शः, यथा 'अष्टवर्षं ब्राह्मणमुपनयीत, (१.)तमध्यापयीत' इति तच्छब्देनाष्टवर्षत्व-ब्राह्मणत्वपुंस्त्वोपनयनसंस्कारविशिष्टस्य। तेन स्त्रियो न दत्तक-त्वप्रसङ्गः। आपदीति। तथा चानापदि न देय इत्यर्थः। अयं च प्रतिषेधो दातुरेव पुरुषार्थः, न क्रत्वर्थ इति प्राञ्चः। अस्य वाक्यादट्टष्टार्थताऽवगमात्। कथञ्चिद् दृष्टार्थत्वेऽपि नि-यमादृष्टस्यावश्यकत्वान्न तदतिक्रमे कार्यविशेषप्रयोजकदत्तकत्व-रूपादृष्टसिद्धिः। एतेन विवाहे रोगिण्यादिनिषेधातिक्रमे दृष्टविरोध एव, भार्यात्वं तूत्पद्यत एवेत्यपास्तमिति नव्याः। आपदीत्यस्य नाऽनापत्परिसंख्यायकत्वं त्रैदोष्यात्, किन्त्वाप-न्निमित्तमात्रम्। न चापदो निमित्तत्वे तस्यां तददाने प्रत्यवायाप-त्तिः, एतद्वचनस्य संज्ञासंज्ञिसंबन्धमात्रबोधकत्वेन दानाबोधकत्वा-दित्यन्ये। यदपि 'पुत्रसंग्रहः' इति वाक्ये पुत्रपदं[पुत्र]पुत्रीसाधारणा-र्थकम्, 'पुमान् पुत्रो जायते' इति श्रुतौ वृत्तिकारेण तथोक्तेः। तेन पुत्र्या अपि स्वीकार उक्तविधिना कार्यः। ((२) दानप्रतिग्रह-विधिषूद्देश्यविशेषणपुंस्त्वाविवक्षणात्, इतिहासपुराणादौ कुन्त्या-दत्तकत्वोक्तेश्च। किञ्च "क्त्रेर्मम्नित्यम्" (अष्टा० सू० ४-४-२०) इति मप्रन्तो दत्त्रिमशब्दः) दानकर्मत्वाविशेषाद्राघायान्यस्मै वा दत्तां कन्यामप्याचष्टे इति संज्ञासंज्ञिभावनिर्वाह इति; तदप्यनादेयम्,

> क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
> पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥

इति मनुना दत्तकस्य क्रियालोपभयेनौरसप्रातिनिधित्वोक्तरौरस

---

(१) 'तमध्यापयीत' नास्ति घ०

(२) कंसान्तर्गतो ग्रन्थः घ पुस्तके नास्ति

**तत्रैव वासिष्ठः— 'न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा, न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा, अन्यत्रानुज्ञानाद्भ-**

---

इव तत्प्रातिनिधिष्वपि पुंस्त्वविवक्षाया आवश्यकत्वात् । अन्यथौरसेऽपि पुंस्त्वाविवक्षणापत्त्या औरसकन्ययाश्च (१)प्रथमम् और्ध्वदेहिकाधिकारप्रसङ्गेन बहुव्याकोपः स्यात्, कुन्त्याश्च दत्तकत्वं विधिं विनैव[ स्यात् ],

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्मेण विधिना दानमसगोत्रेऽपि युज्यते ॥

इत्यत्र सुवर्णशब्दस्य प्रलोभनोपायपरत्वात्,

ऋष्युक्तमेव कर्तव्यं न तु तत्कृतमाचरेत् ।

इति न्यायाच्च । 'पुमान्पुत्रो जायते' इति श्रुतौ च पुंशब्दवैयर्थ्यवारणाय वृत्तिकारेण तथोक्तम्, न च बुधैस्तत्र निर्भरः कार्यः । पूर्वयुगेष्वपि पुंसवनोत्तरं क्वचित्प्रथमकन्योत्पत्तिदर्शनेन ऋष्युक्ततन्मन्त्रस्याप्यसमवेतार्थत्वात् । वृत्तावपि पुंशब्दस्य नपुंसकान्यपरत्वात् । अपत्यार्थकपुत्रशब्देन नपुंसकस्यापि प्रसयापत्तेस्तत्सार्थकयाच्च । किञ्च सुत इत्यनेन कन्याया अव्यावृत्तौ प्रकृते नपुंसकापत्ये लक्षणापत्तिः । मम तु पुंस्त्वविशिष्टापत्यलाभेन नपुंसकस्येव कन्याया अपि व्यावृत्तिरित्याद्यन्यतोऽवसेयम् । सुत इति । अनेकपुत्रसत्त्वेऽपि ज्येष्ठो न देयः ।

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥

इति मनुना तस्यैव पैत्रर्णापाकरणादिपुत्रकार्यकरणे मुख्यत्वकथनात् । स्वं द्रव्यम् । अत एवायमपि दातुरेव निषेधः, आहर्त्यैव ज्येष्ठप्रतिग्रहनिषेधाभावात् । मातापित्रोश्चायं (२)विशेषः—

---

(१) दत्तकादिभ्य इति शेषः ।
(२) निषेध इति घ पुस्तके पाठः

र्तुः' इति । इदं च भर्तृसत्त्वे । अन्यथा—

दद्यान्माता पिता वा यं स पुत्रो दात्रिमः स्मृतः ।

इति वत्सव्यासवचोविरोधः स्यात् । दानं प्रतिग्रहोपलक्षणम् । यत्तु समन्त्रकहोमस्य पुत्रप्रतिग्रहाङ्गत्वात्

---

उभयोर्जीविनोः पत्युरपि पत्न्यनुमत्यैव दातृत्वं ग्रहीतृत्वं च, कथञ्चिदपि तदनुमत्यभावे अत्यन्तापदि पत्युः स्वातन्त्र्यमपि । पत्न्यास्तु पत्यौ जीवति सन्निहिते प्रोषिते वा तदनुमत्यैव दातृत्वं,मृते तु स्वातन्त्र्यं, तद्वक्ष्यति—इदं च भर्तृसत्त्वे इति । 'स्त्री'इति स्त्रीग्रहणात्पत्युः पूर्वोक्त एव विषये स्वातन्त्र्यं,न तु सर्वदा,"शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः, तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः" इति वासिष्ठे 'मातापितरौ' इत्युक्तेः । एतदेवाभिप्रेत्य 'दाने समर्थे' इति दातृविशेषणम् । कदाचिदनुमतिं विनापि स्वातन्त्र्यव्यञ्जकं दद्यादिति । सधवायां मातृपदवैयर्थ्येन तस्य विधवापरत्वात्तत्रानुज्ञाया अश्रवणादिति भावः । वस्तुतस्तु "अन्यत्रानुज्ञानाद्भर्तुः" इत्येतत्सधवाया एव, दृष्टार्थत्वात् । विधवायास्तु भर्त्रनुज्ञासत्त्वे सम्यगेव, तदभावे पितुस्तदभावे ज्ञातीनां वाऽनुज्ञया दानप्रतिग्रहौ भवतः,

नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा ।

विफलं तद्भवेत्तस्या यत्करोति व्रतादिकम् ॥

इति वचनात् । किञ्च 'अन्यत्रानुज्ञानाद्भर्तुः' इत्यनेनापूर्वा भर्त्रनुज्ञा न विधीयते, किन्तु

रक्षेत्कन्यां पिता, विन्नां पतिः, पुत्रास्तु वार्धके ।

अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियः ॥

इति योगीश्वरवचनेनावस्थाविशेषप्राप्ता साऽनूद्यते, लाघवात् । तथा च भर्त्राज्ञां विनापि विधवाया अधिकारः । केचित्तु 'यत्करोति व्रतादिकम्' इत्यादिपदेनादृष्टार्थकदानादौ पित्राद्यनुमत्यपेक्षा प्रतीयते, ततश्च 'प्राप्ते पुनर्वचनं नियमार्थम्' इति न्यायेनाऽनुज्ञाया

**व्याहृत्यादिमन्त्रपाठे च स्त्रीशूद्रयोरनाधिकारात् तयोर्दत्तकः पुत्रो न भवत्येवेति शुद्धिविवेके रुद्रधरेणोक्तम्। वाचस्पतिश्चैवमेवाह। तन्न, भर्तुरनुज्ञया स्त्रिया अपि**

---

भर्त्रीयत्वं नियम्यते, वैयर्थ्यापरपर्यायानुवादापेक्षया सार्थक्यस्य सम्भवत्वात्। एवं चानुज्ञादानानन्तरजाताया विधवाया एव तयोरधिकारः, न त्वतथाभूतायास्तस्याः, इत्याहुः, तदसत्, यत्र पुत्रकार्यकरणानुरोधेन विधवायाः तद्व्याघातके कर्मणि प्रवृत्तिर्मा प्रसाङ्क्षीदिति अनुज्ञा स्वाभाविकप्रवृत्तिविमुखीकरणार्थैव। किञ्च पुत्रदानं नादृष्टार्थमिति स्पष्टमेव,

पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः।

इति वाक्ये क्रियालोपभयात्मकहेतूपादानात्। नियमादृष्टन्तु दूरेऽस्ति। तस्मात् 'व्रतादिकम्' इत्यादिपदेन नैतत्प्राप्तिः। अपिचास्तु पुत्रदानाद्यधीनमादृत्याप्यदृष्टं,तथापि तदजानानाया अनुज्ञाविरहस्थलीयदानादौ पुत्रत्वापत्तिरतो वासिष्ठे अनुज्ञा नि(१)बद्धा। न "स्वातन्त्र्यं क्वचित् स्त्रियः" इति याज्ञवल्क्येन च विधवा यदधीना सामान्यतस्तदनुज्ञाऽप्यभ्यनुज्ञातेति कथञ्चिदनुज्ञा परतन्त्राया आवश्यकी, न तु याज्ञवल्क्योक्तिमनादृत्य स्वतन्त्रायाः। अथ तत्रापि प्रशस्तब्राह्मणानुज्ञया दानादिकं भवेदित्येतावता तुष्यतु भवानिति। केचित्तु—इदं दत्तकपुत्रलक्षणम्, तथा च पितामहादिदत्तेऽतिव्याप्तिरतो माता पिता वेति। तत्र वाकारोऽव्याप्तिनिरासार्थः। विधिं विना मात्रादिदत्तेऽतिव्याप्तिः, अतोऽद्भिरिति वासिष्ठोक्तविध्यर्थकम्। एवमनापदि असवर्णे वा दत्तेऽतिव्याप्तिः, अतः आपदीति, सदृशमिति च। (२) पितृवियोगमसहमाने दत्तेऽतिव्याप्तिः, अतः प्रीतीत्यादि। प्रतिग्रहीत्रा सह प्रीतियुक्तामित्यर्थः, इत्याहुः, तन्न, ध-

---

(१) 'आभिबद्धा' इति घपुस्तके।

(२) 'पितृवियोगासहमाने' इति घ पुस्तके।

प्रतिग्रहोक्तेः। यद्यपि मेधातिथिना भार्यात्ववददृष्टरूपं दत्तकत्वं होमसाध्यमुक्तम्। स्त्रियाश्च होमासंभवस्तथापि ब्रनादिवाह्निप्रद्वारा होमादि कारयेदिति हरिनाथादयः। संबन्धतत्त्वेऽप्येवम्। एवं शूद्रस्यापि, 'स्त्रीशूद्रा-

---

मेशास्त्रे तल्लक्षणे प्रयोजनाभावात्,

क्षत्रियाणां क्षत्रजातौ गुरुगोत्रसमेऽपि वा।

इति शौनकवाक्यविरोधाच्च गुरुगोत्रसमेऽव्याप्तेः। अन्ये तु ब्राह्मणाय क्षत्रियेण दत्ते क्षत्रिये दत्तक इति लौकिकानामस्ति व्यवहारः, अतो लक्षणस्य व्यवहारफलकत्वमते नेदं लक्षणं, किन्तु दत्तकपदप्रवृत्तिनिमित्तम्, तेनानापदि असवर्णे वा दत्ते न तत्प्रसङ्गः। यथा---

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥
आगर्भसंभवाद्गच्छेत् पतितस्त्वन्यथा भवेत्।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः॥

इति सर्वविशेषणवत्त्वं क्षेत्रजपदप्रवृत्तिनिमित्तं,न तु नियोगाभावे, सत्यपि नियोगे घृताभ्यङ्गाभावे वा क्षेत्रोत्पत्तिमात्रेण तत्। अन्यथा—

अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्।
उभौ तौ नार्हतो भागं कामजातकतस्करौ॥
नियुक्तायामपि पुमान्नार्यां जातोऽविधानतः।
नैवार्हः पैतृके रिक्थे पतितोत्पादितो हि सः॥

इति मनुविरोधात्। (१)न चोक्तवचनवशादङ्गाभावे प्रधानमात्रेण क्षेत्रजत्वं नास्तीति सिद्धम्, दत्तके तु आपस्याद्यङ्गाभावेऽपि प्रधानमात्रेण दत्तकत्वं भविष्यतीति वाच्यम्।

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्,

---

(१) 'नचोक्तवचनवदङ्गाभावे' इति घ पुस्तके।

श्च सधर्माणः' इति स्मृतेः। अत एव शूद्रकर्तृकहोमो विप्रद्वारैव पराशरेणोक्तः।

दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः।
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥

---

पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति मनुना यथोक्तानामेव क्षेत्रजादित्वोक्तेरङ्गसाकल्यस्यावश्यकत्वात्। तस्मादनापत्तावसवर्णे च प्रवृत्तिनिमित्तमेव नास्तीत्याहुः। परे तु अविधिदत्ते—

अविधाय विधानं यं परिपुष्णाति पुत्रकम्।
विवाहविधिभाजं तं न कुर्याद्धनभाजनम् ॥
स्वगोत्रेण कृता ये स्युर्दत्तकक्रीतकादयः।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

इति वृद्धगौतमात्। असवर्णग्रहणे—

यदि स्यादन्यजातीयो गृहीतोऽपि च नन्दनः।
अंशभाजं न कुर्वीत मन्वादीनां मतं हि तत् ॥

इति शौनकात्। अनापदि दाने—

विक्रयं चैव दानं च न नेयास्युरनिच्छवः।
दाराः पुत्राश्च सर्वस्वं स्वात्मनैव तु योजयेत् ॥
आपद्येव तु कर्त्तव्यं दानं विक्रय एव च।
अन्यथा तु न कर्तव्यमिति शास्त्रस्य निश्चयः ॥

इति माधवोदाहृतवचनाच्च। विशेषणाभावे रिक्थनिषेधमुखेन दत्तपुत्रत्वाभावो भवन् विशेषणवति विशिष्टाभावः पुत्रत्वरूपविशेष्याभावे पर्यवस्यतीत्याहुः। नन्वसन्तदौर्गत्या भरणासामर्थ्यमेवाऽऽपत्, न तु ग्रहीतुरपुत्रत्वमपीति। कुत इति चेत्?

अन्याहितं याचितकमाधिः साधारणं च यत्।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥

**अत्र माधवाचार्यः—'यो विप्रः शूद्रदक्षिणामादाय तदीयं हविः शान्तिपुष्ट्यादिसिद्धये वैदिकैर्मन्त्रैर्जुहोति तस्य विप्रस्यैव दोषः। शूद्रस्तु होमफलं लभेतैव' इति व्याचचक्षे।**

---

आपद्यपि च कष्टायां वर्तमानेन (१)देहिना।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्॥

इति नारदवचनदर्शनाद् 'यमाद्भिःपुत्रमापदि'इत्यादौ विरोधो मा प्रसाङ्क्षीत् इति।

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः।

इति दानेष्वनिच्छुपरतया तत्परिहारस्यापि पर्यालोचनया पुत्रपालनासामर्थ्यस्यैवापत्तित्वरूपत्वात्। अन्यथा दातृग्रहीत्रोरापत्तिभेदेन विरोध एव न स्यात्। तस्मात् प्रतिग्रहीतुरपुत्रत्वं नापत्तिरिति। अथ 'दद्यात्' इति वत्सवचने आपन्नोपात्तैव, तथा च मातापितृभ्यां तदन्यतरेण वाऽपत्तिं विनाऽप्यपुत्राय स्नेहविशेषादिना पुत्रदानं स्यात्। न च मन्वादिभिरापदीत्युपात्तमेवेति वाच्यं, ज्येष्ठैकपुत्रयोर्दानादौ द्वयोर्दोषः, अनापदि दाने दातुर्दोष इत्यादिग्रन्थपर्यालोचनया केनचित्कारणेन दोषमङ्गीकृत्यैव दानादौ क्रियमाणे पुत्रत्वस्य दुर्निवारत्वात्। सत्यम्। अस्ति हि—

आपद्येव च कर्तव्यं दानं विक्रय एव च।
अन्यथा तु न कर्तव्यमिति शास्त्रस्य निश्चयः॥

इति कात्यायनेन स्पष्टमेवैवकारमभिधायान्यथा तु न कर्तव्यमित्यभिधानम्। तेन तदतिक्रमे तत्राऽदृष्टविशेषात्सकपुत्रत्वानुत्पत्तेर्ध्वननात्। अन्यथा दुष्टरत्नादे रत्नत्वाद्यपरिहारवदापत्त्यसत्त्वे दत्ते पुत्रे पुत्रत्वात्यागः शङ्क्येतेति तथाऽभिधानसाफल्यात्। एवम्—

अदेयं यश्च गृह्णाति, यश्चादेयं प्रयच्छति।

---

(१) 'देहिनाम्' इति घ पुस्तके।

तावुभौ चोरवच्छास्यौ दण्ड्यौ चोत्तमसाहसम् ॥

इति वचनात् प्रतिग्रहीत्रादेश्चोरतुल्यतया चोरगृहीत इव स्वत्वानुदयाच्च । किञ्च आपदीति नैमित्तिके निमित्तवत एवाधिकारः । तथा चानापदि दाने दानस्वरूपासिद्धिः, दत्ताप्रदानिके भर्त्राद्यनुमतिं विना स्त्र्यादिकृते दाने (१)दानस्वरूपासिद्धिवत् । एवमापत्तिं विना विक्रयेऽपीति तदुपादानम् । सदृशं सवर्णम् । नचैवम् असवर्णदाने दातुर्दोष इत्येव स्यादिति वाच्यम् । 'आपद्येव च कर्तव्यम्' इत्यनेनानापदि दानं निषिध्यते, न त्वसवर्णस्य तेनान्येन वा केनचित् । तस्मात्तत्र निषेधाभावेन दोषकल्पनाऽनवकाशेऽपि तस्य विशेषणतावच्छेदकत्वपर्यालोचनया विवक्षितत्वादेतादृशस्य पुत्रत्वाभावसमर्थकत्वात् । भर्त्रनुज्ञयेति निषादस्थपतिवत्स्त्रीशूद्रयोः प्रतिग्रहेऽधिकारः । तत्र 'न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद् वाऽन्यत्रानुज्ञानाद्भर्तुः' इतिनिषेधस्थस्य 'अन्यत्रानुज्ञानाद्भर्तुः'इत्यस्य 'न प्रतिगृह्णीयात'इत्यत्रान्वय इति भावः । केचित्तु सत्यमेव 'न प्रतिगृह्णीयाद्' इत्यनन्तरम् 'अन्यत्रानुज्ञानाद्भर्तुः'इति स्मर्यते, तथापि तस्य 'न स्त्री पुत्रं दद्यात्' इत्यत्रैव सम्बन्धः 'माता पुत्रं दद्यात्' इति विधेः सत्त्वात् 'न स्त्री पुत्रं दद्यात' इति निषेधे च विकल्पापत्तिरतस्तदन्वयेऽनुज्ञाता माता पुत्रं दद्यादित्यर्थात् , 'स्त्री पुत्रं प्रतिगृह्णीयात्'इतिविध्यभावेन तदन्वयस्य निष्फलत्वात् । न च 'न स्त्री पुत्रं प्रतिगृह्णीयात्' इतिनिषेधवैयर्थ्यमिति वाच्यम् , 'अपुत्रः पुत्रं प्रतिगृह्णीयात' इति विधिसत्त्वेन तस्सार्थक्यात् । न च सामान्यतः प्राप्तस्य विशेषतो निषेधेऽपि विकल्पो दुर्वार इति वाच्यम, 'न रात्रौ श्राद्धं कुर्यात्' इत्यत्रापि विकल्पापत्तेः । यदि, वस्तुतस्ते पर्युदासा एव 'रात्रिभिन्ने श्राद्धं कुर्यात्' इति सामान्यविध्येकवाक्यतापन्नास्तदाऽयमपि 'स्त्रीभिन्नोऽपुत्रः पुत्रं गृह्णीयात्' इति सामान्यविध्येकवाक्यतापन्नैव

---

( १ ) दानस्वरूपामितिवत् इति ख पुस्तके ।

निषेधः। वस्तुतो रागप्राप्त्यैव निषेधः। न चैवं व्यवहितान्वयप्रसङ्ग इति वाच्यम्,

भर्त्रा प्रीतेन यद्दत्तं मृते तस्मिन् स्त्रियोऽपि तत्।
सा यथाकाममश्नीयाद्द्याद्वा स्थावराद्दते॥

इति वचने 'स्थावराद्दते दत्तम्' इत्यन्वये तात्पर्यसत्त्वे व्यवहितयोजनोपगमात्। न च तत्र तस्य 'तत्' इत्यत्रान्वयेन 'स्थावराद्दते तदश्नीयात्' इत्यन्वयः सुकर इति वाच्यम्, तथा सति स्थावरे स्त्रीसत्त्वापत्तेः, स्थावरे प्रीतिदत्तेऽपि पुत्रस्वत्वस्यैवेष्टत्वात्। एवं च स्त्रियोऽग्निविद्याकल्पनमपि नास्ति, अन्यथा प्रतिग्रहाङ्गहोमानुरोधेनाग्निमन्त्रपाठयोरपि रथकारवत्कल्पनापत्तेः। न च तत्र विप्रद्वारा होमः सुकर इति वाच्यम्, एवमपि

देवस्यत्वेति मन्त्रेण हस्ताभ्यां (१)परिगृह्य च।
अङ्गादङ्गेत्यृचं जप्त्वा आजिघ्रेच्छिशुमूर्धनि॥

इति प्रतिग्रहाङ्गमन्त्रपाठबाधापत्त्या विप्रद्वारा तत्कल्पनापत्तेः। न चैवं-

पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च।

इत्यस्य हेतोः पुरुषमिव स्त्रियं प्रत्यविशेषात् तस्याः [illegible]धिकारः सेत्स्यतीति वाच्यम्, "तेन हि अन्नं क्रियते" इति हेतुर्यथा 'शूर्पेण जुहोति' इत्यनेन बाधात्स्थालीपिठरादौ न प्रवर्त्तते, तथोक्तहेतुरविद्यत्वादिना बाधात्स्त्रियां न प्रवर्त्तते इत्यस्यैव युक्तत्वात्। न च कलावन्येषां पुत्राणां वर्जितत्वाद् अनाथस्याः दत्तकः स्वीकार्य एवेति वाच्यम्, भवन्मते पत्युरनुज्ञया सधवाया दत्तको वाच्यः, स व्यर्थः;

अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्॥

---

(१) 'प्रगृह्य' घ०

मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥

इति मनुनाऽपुत्राया अपि स्वर्गप्राप्तेरभिधानात्,

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तं पिण्डं कृत्स्नमंशं लभेत च ॥

इति वाक्ये अपुत्रेत्यधिकारिसंकोचकविशेषणोपादानेन पुत्रप्रतिग्रहव्यावृत्तेर्गर्भीकृतत्वाच्च । ननु 'अन्यत्रानुज्ञानाद्भर्त्तुः' इत्यस्य 'न स्त्री पुत्रं दद्यात्' इत्येतावन्मात्रान्वयित्वे 'प्रतिगृह्णीयाद्वा' इति वाशब्दान्वयोऽनुपपन्नः, विकल्पासंभवात् । न च वाशब्द उपमार्थकः तथा सति यथा भर्त्रनुज्ञया प्रतिगृह्णीयात्तथा भर्त्रनुज्ञया दद्यादित्यर्थे स्त्रियाः प्रतिग्रहाधिकारापत्तेरिति चेत्? न, वाशब्दस्योपमानार्थकत्वात् । यथा स्त्री न प्रतिगृह्णीयात्तथाऽननुज्ञाता स्त्री न दद्यादित्यर्थसंभवात् । अथवा, वाशब्दः समुच्चये । स्त्री न प्रतिगृह्णीयादननुज्ञाता स्त्री न दद्याच्चेत्यर्थादित्याहुः । तदेतदरमणीयमेव । अस्ति हि 'न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषाम्' इति वासिष्ठे स हि सन्तानाय पूर्वेषामिति हेतुः । तत्र 'तेन ह्यन्नं क्रियते' इत्यादिहेतुःस्थालीपिठरादिसाधारण्यात्कर्तृत्वेण बाधान्न विवक्षार्हः । अयन्तु विवक्षितो[illegible]ण्यादिति । भर्त्तुः स्वस्य च संतानानुवृत्तयेऽपुत्रायाः प्रतिग्रह आवश्यकः स्मर्यते । पठन्ति च

'अपुत्रा मृतपुत्रा वा पुत्रार्थं समुपोष्य च ।'

इत्यादिप्रयोगविधिमपि । गान्धार्याः पेशीप्रसवानन्तरं व्यासवचनेन [illegible]भागे दौहित्रजलोकावाप्त्यर्थं तत्प्रार्थनया कन्याभागो व्यासेनानुज्ञातः । प्रकृते च संतानजन्यलोकावाप्त्यर्थं सकलपदैकवाक्यतया सधवाया विधवाया वा पुत्रप्रतिग्रहेऽधिकारः । न हि [illegible]संभवः । यदपि तन्मात्राद्भर्त्रा सह [illegible]णं, तदपि भर्त्तुः सांतानिकलोकासत्त्वे कथं त-

स्मापकम् ? तस्माद्भर्तुः तल्लोकार्थं स्त्रियः प्रतिग्रहविधिः । वाशब्दश्च विकल्पार्थं एतान्यतरार्थपर्यवसायी, तस्य क्रियायामेवान्वयः । तथाच यथा 'माता पिता वा दद्याताम्' इत्यत्र मातृपित्रन्यतरासत्त्वे तदन्यतरो दद्यादित्यर्थः । तथा स्त्री दानप्रतिग्रहयोरन्यतराभावे तदन्यतरद् भर्त्रनुज्ञां विना न कुर्यादित्यर्थः । तस्मादापत्तियुक्तो मातापित्रन्यतरः पुत्रदानं कुर्यादिति न एक एव विधिः, गौरवात् , न स्त्री पुत्रमिति निषेधपर्यालोचनया विकल्पापाताच्च; किन्तु 'आपत्तियुक्तः पिता पुत्रं दद्यात्' 'आपत्तियुक्ता माता पुत्रं दद्यात्' इति द्वौ दानविधी । एवम् 'अपुत्रः पुमान् ब्राह्मणादिः पुत्रं प्रतिगृह्णीयात्' 'अपुत्रा ब्राह्मण्यादिः पुत्रं प्रतिगृह्णीयात्' इति द्वौ प्रतिग्रहविधी ।

अपुत्रो ब्राह्मणः कुर्यात् पुमान् पुत्रप्रतिग्रहम् ।
सपत्नीकक्रियार्थे च न कान्ता केवला क्वचित् ॥

इति मानवे 'पुमान्' इति दर्शनात् सपत्नीकक्रिया पुत्रोत्पत्तिः। अत्र भर्तृसान्निध्ये कान्तायाः प्रतिग्रहासम्भवान्न कान्ता केवलेति यथाश्रुतनिषेधो नोपपद्यतेऽतो भर्त्रनुज्ञातैव केवला कान्ता प्रतिग्रहं कुर्यात् नाननुज्ञातेति 'न स्त्री पुत्रं प्रतिगृह्णीयाद् अन्यत्रानुज्ञानाद्भर्तुः' इति विधिलाभः । 'आपत्तियुक्ता माता पुत्रं दद्यात्' इत्येतावन्मात्रोक्तौ भर्तृसान्निध्यादावपि स्वातन्त्र्येण केवलायास्तस्या दातृत्वापत्तिरतः 'भर्त्रनुज्ञातैव केवला माता पुत्रं दद्यात्' इति तान्निष्कर्षः स्वीकार्यः, अतो न विकल्पप्रसङ्गः । अत्र एवकारस्यान्ययोगव्यवच्छेदोऽर्थः, स एव 'न स्त्री पुत्रं दद्यात् अन्यत्रानुज्ञानाद्भर्तुः' इत्यनेन विवृतः । उक्तं च दीधितिकृता 'चैत्रेणैव पच्यते तेमनम्' इत्यादौ चैत्रान्यकर्तृकपाककर्मत्वशून्यं तेमनं चैत्रकर्तृकपाककर्मेत्यर्थः । 'चैत्रेणैव पच्यते गगनम्' इत्यादिप्रयोगवारणाय विशेष्योपादानमिति । न स्वयोगव्यवच्छेदोऽर्थः, तथा सत्येवकारवैयर्थ्यप्रसङ्गात् ।

एतेन 'न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद् वा अन्यत्रानुज्ञानाद् भर्त्तुः' इत्यत्र नञ्द्वयं व्यर्थम्, 'अनुज्ञाता स्त्री दद्यात् प्रतिगृह्णीयाच्च' इत्यस्यैव सम्यक्त्वादिति न शङ्क्यं, नञ्द्वयत्यागे सामान्यवाक्यलब्धाननुज्ञातस्त्रीकर्तृकदानादेर्दुर्वारत्वात् । अन्यथा सामान्यवाक्यस्य निर्विषयत्वापत्तेः, अननुज्ञातैवेत्येवकारासत्त्वे निषेधागर्भतया दोषापुत्रत्वयोरलाभाच्च । न च 'न स्त्री पुत्रं दद्यात् अन्यत्रानुज्ञानाद्भर्त्तुः' इत्यादिवाक्येतरसामान्यवचनानुपगमे स्त्रियः दानप्रतिग्रहयोरविधानप्रसङ्गः,इष्टापत्तौ च स्त्रियस्तत्कर्मणो लौकिकत्वापत्त्या दत्तकत्वरूपादृष्टानुत्पादप्रसङ्ग इति वाच्यम्, तर्हि अननुज्ञातमातृत्वाभावविशिष्टमातृपितृगतापत्तिमात्रस्यैव दानाधिकारितावच्छेदकत्वोपगमेनैतद्दोषस्य वारणीयत्वात् । एवं प्रतिग्रहवाक्येऽपि ऊह्यम् । अथवा यथा 'दीक्षितो न ददाति, न जुहोति' इति सामान्यतः प्राप्तानुवादेनापि निषेधः, तथा इहापि सामान्यतः प्राप्तानुवादेनैव 'न स्त्री पुत्रं दद्यात्' इत्यादिनिषेध इति । अत्र विशेषणे निषेधसंक्रमाद्दान इव प्रतिग्रहेऽपि स्त्रिया अधिकार इत्यभिप्रेत्यैव भर्त्रनुज्ञया स्त्रिया अपीत्युक्तम् । अदृष्टरूपामिति । पुत्रं प्रतिग्रहीष्यामीत्यादिके पुत्रप्रतिग्रहविधौ पुत्रमिति द्वितीयावशात्पुत्रस्य भाव्यत्वे जन्यपुंस्त्वरूपपुत्रत्वस्य भाव्यत्वासम्भवाद्दृष्टं भाव्यमङ्गीकार्यम् । तदेव च श्राद्धादिसकलपुत्रकार्यप्रयोजकमित्यर्थः । स्त्रियाश्चेति । तथा च तस्याः प्रतिग्रहे कथमधिकार इत्यभिमानः । अत्र च दत्तके पितृश्राद्धाधिकारितावच्छेदकमदृष्टम्, औरसे तु जन्यपुंस्त्वमेवेति प्रसिद्धम् । अथवा औरसेऽप्यदृष्टमेव तथा, अन्यथौरसपौनर्भवाऽविनियुक्तासुतानामविशेषापत्तेः, जन्यपुंस्त्वस्य समत्वात्, गर्भाधानस्याकरणात् 'तस्यां जातस्तु दुष्यति' इत्यादिवचनाद्गर्भाधानादिकर्माधीनादृष्टसत्त्वाच्च । एवमेव होमातिरिक्तः सर्वोऽपि ग्रहणापादानग्रहीतृगोचरो नियमः क्रीत-

स्वयंदत्तकृत्रिमापविद्धेष्वपि यथासम्भवं द्रष्टव्योऽदृष्टार्थस्याहिति त्रिंशत्श्लोकीटीकायां लिखद्भिर्विवेचनकारैः क्रीतादिषु अदृष्टस्य प्रापणाच्च। पुत्रिकापुत्रेऽपि अदृष्टं सुप्रसिद्धमेव। एवमेव क्षेत्रजगूढज-कानीनपौनर्भवस्वयंकृतसहोढजेष्वदृष्टं क्षेत्राद्यधीनमस्त्येव। अत एव द्वादशविधपुत्रेतरस्य लौकिकपुत्रत्वेऽपि नाधिकार इति। वस्तु-तस्तु जन्यपुंस्त्वमेव पितृश्राद्धाद्यधिकारितावच्छेदकम्। अन्यथा गर्भाधानं विना जातस्य तल्लोपापत्तेः। अत्र च क्षेत्रजत्वादिकं नैव तथेति व्रतादिवदिति। स्त्रिया व्रतादिहोमादौ ब्राह्मणेन वैदि-कमन्त्रः पठनीयः, बाधकाभावात्, स्त्रीशूद्रयोरेवाध्ययननिषेधात्। एतावता स्त्रिया दान इव प्रतिग्रहेऽधिकारं प्रसाध्य शूद्रस्यापि तदुभयत्र तमाह—एवमिति। शूद्रस्यापीति। प्रतिग्रहोक्ते-रित्यनुवर्त्तते, 'अधिकार' इति शेषः। अत एव शूद्रस्य प्रतिग्रहोक्ते-रेव। कर्तृकहोम इति समन्त्रकपदगर्भम्। पराशरेणेति।

> उपवासो व्रतं होमस्तीर्थस्नानजपादिकम्।
> विप्रैः संपादितं यस्य सम्पन्नं तस्य तत्फलम्॥

इति वदता इति शेषः। वाक्यान्तरमपि दर्शयति—दक्षिणा-र्थमिति। अत्र विप्रो दाक्षिणार्थं शूद्रस्य होमं कुर्यात् इत्यपि लभ्यते, तत्र निन्दायामाह—अत्रेति। प्रतिग्रहादिमन्त्रोऽपि ब्राह्मणे-नैव पठनीय इत्यपि बोध्यम्। न च स्त्रीशूद्रयोर्होमस्य व्यवस्था-पनं व्यर्थं तेन विना अदृष्टरूपदत्तकत्वासम्भवात्, तयोः प्रतिग्रह-मन्त्रस्याप्यभावात्। तस्य ब्राह्मणद्वारा सम्पादने तु होमस्यापि तथा सम्पादनसम्भवात्। इत्थमेव च 'धार्मिकाणां होमसाध्यं दत्त-कत्वम्' इति धण्टाघोषः। वासिष्ठः "पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयात्। संदेहे चोत्पन्ने दूरे शूद्रमिव स्थाप-येत्। विज्ञायते हि एकेन बहूंस्त्रायते" इति। बंधुसन्निकृष्टं भ्रातृ-

पुत्रादिकम् अदूरबान्धवं संहितदेशवर्तिपित्रादिकं ज्ञातकुलशील-मन्यमपि । परीक्षितस्यापि कथञ्चिद्ब्राह्मण्यादिसंदेहे उत्पन्ने यावत्तन्निवृत्ति दूरे स्थापयेत् तेन न व्यवहरेत् । अपुत्रस्य पुत्रकरणावश्यकत्वं द्योतयति—विज्ञायते इति । श्रूयते इत्यर्थः । एकेन अनौरसेनापि पुत्रेण बहून् पित्रादीन् नरकात् त्रायते इति श्रुत्यर्थ इति । अत्रादूरबान्धवमित्यनेन भ्रातृपुत्रादिरुक्तः । केचित्तु एक-भ्रातुः सपुत्रत्वे द्वितीयभ्रातुः पुत्रप्रतिग्रहे नाधिकारः ।

'अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।'

इति बौधायनेनैवकारदानात् । न चैतावताऽपुत्रत्वं कथं नास्ति इति वाच्यम् ,

बहूनामेकपुत्राणामेकश्चेत्पुत्रवान् भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इति मनुना भ्रातृपुत्रस्य पुत्रत्वोक्तेः,

येऽप्येकजाता बहवो भ्रातरस्तु सहोदराः ।
एकस्यापि सुते जाते सर्वे ते पुत्रिणो मताः ॥

बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत् पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥

इति बृहस्पतिवचनाच्च । अत्र यथा सपत्नीपुत्रस्याकृतस्यापि पिण्डदानाद्यधिकारात् पुत्रत्वं निर्विवादं, तद्वद् अकृतस्यैव भ्रातृपुत्रस्य [illegible] पुत्रत्वमपि

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाः ॥

इति [illegible] । यत्तु एतन्मन्वादिवचनं भ्रातृपुत्रस्य सपत्नीपुत्रस्य च पुत्रीकरणसम्भवे अन्येषां तन्निषेधार्थं न त्वकृतयोस्तयोः पुत्रत्वप्रतिपादकम् । पुत्रो हि सर्वेभ्यः प्राक्

पिण्डदानरिक्थग्रहणयोरधिकारी। न च भ्रातृपुत्रस्य पत्न्यादिभ्यः प्राक् श्राद्धे रिक्थग्रहणे वाऽधिकारः।

पुत्रः कुर्यात् पितुः श्राद्धं पत्नी च तदसन्निधौ ।
धनहार्यथ दौहित्रस्ततो भ्राताऽथ तत्सुतः ॥

इत्यादिकालादर्शोक्तसङ्ग्रहवाक्येन श्राद्धे,

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥

इति याज्ञवल्क्येन रिक्थे च व्यवहिताधिकारोक्तेरिति, तन्न सम्यक् । कालिकापुराणे—

अपुत्रस्य गतिर्नास्ति श्रूयते लोकवेदयोः ।

इति ऋषीणां प्रश्ने

अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमाः ।
स्वपुत्रैर्भ्रातृपुत्रैश्च पुत्रवन्तो हि सम्मताः ॥

इति मार्कण्डेयोत्तरवाक्ये भ्रातृपुत्रेण पुत्रित्वोक्त्या तत्सत्त्वे अपुत्रत्वविरोधात् । न च पिण्डदानादौ व्यवहिताधिकारविरोध इति वाच्यम्, मनुना बृहस्पतिना च भ्रातुः पुत्रस्य सपत्नीपुत्रस्य च पुत्रत्वमतिदिश्यते, अतिदेशविषयश्चाव्यवहितोपस्थितो भवति इति भ्रातृपुत्रस्य सपत्नीपुत्रस्य च और्ध्वदेहिके अव्यवहिताधिकारात्,

विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम् ।
तदभावे सपत्नीजः क्षेत्रजाद्यास्तथावृता ॥
तदभावे पतिस्तस्यास्तदभावे सपिण्डकः ॥

इति कालादर्शे कात्यायनोक्तेश्च । तत्तुल्यन्यायेन भ्रातुः पुत्रस्याप्यव्यवहिताधिकारासिद्धेः तस्य व्यवहिताधिकारबोधकवाक्यं त्वनौरसभ्रातृपुत्रविषयम् । तथा च सर्वज्ञनारायणः—भ्रातृजा...

कजातानाम्' इति मनुवचनं भ्रातृपुत्रसत्त्वेऽन्येषां पिण्डदानाधिकार-निषेधपरमित्याह। नचैवं 'पुत्रं प्रतिग्रहीष्यन्' इत्यादि 'निवेशनमध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव गृह्णीयाद्' इति वासिष्ठेन बन्धुसन्निकृष्टं बन्धुद्वारा सपिण्डमिति भ्रातृपुत्रस्य पुत्रीकरणोक्तिविरोध इति वाच्यम् । मिताक्षरादौ 'बन्धुसन्निकृष्ट एव गृह्णीयात्' इति प्रथमान्तपाठात् तथापाठिनां च भ्रातुः समक्षं प्रतिग्रहे सति ग्रहीतृमरणानन्तरं निर्विवादमंशलाभसिद्धेः, हेमाद्र्यादौ च 'बन्धुसन्निकृष्टमेव गृह्णीयात्' इति द्वितीयान्तपाठात् । तत्रापि क्रियाविशेषणतया बन्धुसन्निकृष्टं यथा स्यात्तथा पुत्रं प्रतिगृह्णीयाद् इत्यर्थादुक्तार्थपर्यवसानात् । न हि एतावता भ्रातृपुत्रस्य पुत्रीकरणप्राप्तिः सम्भवति । वस्तुतस्तु बन्धुश्चासौ सन्निकृष्टश्च तमित्यर्थः। बन्धुत्वं गोत्रजत्वम्, तथा च गोत्रजत्वेन सन्निकृष्टो मुख्यः, तदभावेऽसगोत्र इति विवक्षितम् ।

स्वगोत्रजसुतालाभे कारयेदन्यगोत्रजम् ।

इति(१)शाकलवाक्यात् । यत्तु 'अदूरबान्धवमसन्निकृष्टमेव गृह्णीयात्' इति माधवादिपाठः, तत्रासन्निकृष्टं भ्रातृपुत्रादिव्यतिरिक्तमिति तद्व्याख्यानम् , असम्बन्धिनमिति अपरार्कव्याख्यानं चेति न कश्चिद्विरोधः । न चापुत्रीकृत एव भ्रातृपुत्रश्चेत् पिण्डदस्तदा तस्य रिक्थहारित्वापत्तिः सपत्नीपुत्रवत् इति वाच्यम् , इष्टापत्तेः। अथवा 'यश्चार्थहरः स पिण्डदायी' इति प्रायिकं, राजादौ व्यभिचारात्, न तु नियमः । एवञ्च भ्रातृपुत्रस्य स्वस्थानमस्तु रिक्थहारित्वं पिण्डदत्वं चौरसाभाव एव पुत्रीकरणं विनापीति । यत्र च भ्रात्रा पुत्रग्रहणानन्तरं तद्भ्रातुः पुत्र उत्पन्नः भ्रातृपुत्रमननुरुध्य वा पुत्रग्रहणे कृते तत्र दत्तकस्यैव पिण्डदत्वमिति, तदेतन्न श्रद्दधीमहि;

(१) 'शाकल्यात्' इति घ पुस्तके ।

अपुत्रस्यैव भ्रातृपुत्रस्य पुत्रत्वे(१)पुत्रत्रयोदशत्वापत्तेः,

पुत्रान् द्वादशधानाह नृणां स्वायम्भुवो मनुः ।
तेषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥

इति तद्द्वादशत्वविरोधात् । 'भ्रातॄणामेकजातानाम्' इति वाक्यमालम्ब्योक्तं च विज्ञानेश्वरेणापि "इदं भ्रातृपुत्रस्य पुत्रीकरणसम्भवेऽन्येषां पुत्रत्वनिषेधार्थं न पुनः पुत्रत्वप्रतिपादनाय 'तत्सुताः' इत्यनेन विरोधाद्" इति । न च व्यवहिताधिकारबोधकवाक्यमनौरसभ्रातृपुत्रविषयमित्युक्तमिति वाच्यम्, तथा वक्तुमशक्यत्वात् । तथा हि किमौरसाभावे औरसो भ्रातृपुत्रः, ततः पुत्रिकापुत्रादिः, क्षेत्रजादिर्वा ? किं वा द्वादशविधपुत्राभावे सः, ततः पत्न्यादिः ? आद्ये—

पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ।

इत्यनेन विरोधः। द्वितीयेऽपि 'अविभक्तस्य भ्राता, विभक्तस्य पत्नी' इत्यनेन विरोधः । न च तर्हि भ्रातृपुत्रस्य पुत्रत्वप्रतिपादकवाक्यविरोधः 'नापुत्रस्य लोकोऽस्ति' इत्युपक्रम्य "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, ब्रह्मचर्येण ऋषिभ्यः" इत्यादिशास्त्रबोधितस्याप्रजत्वप्रयुक्तदोषस्य भ्रातृपुत्रेणाऽपि निवृत्तिबोधकत्वात् । युक्तं चैतत्, स्वपुत्रेणेव भ्रातृपुत्रेणाऽपि वंशविच्छेदपरिहारसम्भवात् । 'पत्न्यादिभ्यः पूर्वं कश्चित् सपिण्डदानरिक्थाधिकारी भवेत्' इति कामनया भ्रातृपुत्रस्य दत्तकविधिना स्वीकारस्यौचित्याद्वर्जितत्वाच्च । किञ्च सदृश एव प्रतिनिधिरिति षाष्ठप्रतिनिधिन्यायः। तेन च पुत्रसदृश एव पुत्रप्रतिनिधिः सिध्यति। तथा च न मन्वादिवाक्येष्वश्रुतप्रतिग्रहादिकल्पनाक्लेशः, नापि

(१) 'पुत्रत्वे' घपुस्तके नास्ति ।

मिताक्षरादिविरोधः, नापि भ्रातृपुत्रस्य याज्ञवल्क्याद्युक्तपञ्चम-स्थाननिवेशभङ्गः, पुत्रीकृतस्य प्रथमस्थाननिवेशेऽप्यतथाभूतस्य तदुक्तेः। किञ्च कालिकापुराणे एव शंकरसुतयोर्वेतालभैरवयोर्मध्ये भैरवपुत्रस्य तद्भ्रात्रा नन्दिवाक्येन पुत्रार्जने प्रवृत्तेन वेतालेन पुत्री-करणं स्मर्यते ।

> ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः ।
> तस्यां संजनयामास सुवेशं नाम पुत्रकम् ॥
> तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम् ॥ इति ।

न चात्र पुत्रीकरणं न प्रतीयते इति वाच्यं, तस्य भ्रातृपुत्रत्व-मात्रेण स्वीयत्वसिद्धेः 'तमेव तनयं स्वकं सुतं चक्रे' इत्युपादान-विरोधात् , स्वीयसुतानुष्ठानस्यैव शब्दार्थत्वादिति । 'भ्रातृणामेक-जातानाम्' इत्यत्र भ्रातृपदं भ्रातृभगिन्योः परस्परपुत्रवारणार्थम् । अ-ग्रिमभागिनेयनिषेधेन तुल्यन्यायेन भ्रात्रीयनिषेधस्यापि लाभादिति केचित् । एकजातपदं च भिन्नोदराणामेकपितृकाणामपि सपि-ण्डान्तरलाभसत्त्वे पुत्रवारणार्थं, न तु सर्वथा भिन्नोदरभ्रातृपुत्रस्या-ग्राह्यत्वार्थं तन्निषेधस्यानुपलम्भात् । एक इति एकोऽपीत्यर्थः, तेन द्वयोः पुत्रवत्त्वे अन्येषामपुत्राणां न भ्रातृपुत्रग्रहणासम्भवः । 'पुत्रवान्' इत्यत्र पुत्रे कापि संख्या न प्रतीयते 'राजपुरुषः' इत्यादौ राज्ञि तत्प्रतीतेरभेदैकत्वसंख्याप्रस्तावे शाब्दिकैर्निराकरणात् । एतेन पुत्रौ पुत्रा वा विद्यन्ते यस्येति विग्रहाद् द्व्यादिसंख्याप्रतीत्या 'न त्वे-व एकं पुत्रं दद्यात्' इति निषेधोऽनर्थक इति प्रत्युक्तम् । संख्यांशे उदासीनतया तन्निषेधोपपत्तेः । पुत्रपदं चौरसपरं, तेन न दत्तकादेः पुत्रीकरणापत्तिः । अत्र तेनेत्येकवचनं पुत्रिण इति बहुवचनं च न विवक्षितम् । अन्यथा तद्बलाद् बहवोऽप्येकं पुत्रं युगपत्प्रतिगृह्णीयुः इति विधिकल्पनापत्तेः, यत्र द्वौ एकपुत्रौ द्वौ च भ्रातरौ तदनुरोधेन तद-

बाधेन पुत्रत्वमेव न स्यात् । केचित्तु दत्तके पुत्रप्रतिनिधित्वं पालके च पितृप्रतिनिधित्वमित्याहुः । दत्तके पुत्रत्वं पालके पितृत्वमिति मिताक्षरा । मतद्वयेऽपि जनको यथा पुत्रस्य पोषणसंस्कारादिकं करोति तथा पालकोऽपि दत्तकस्य तत्कुर्यात् । यथा चौरसः पितुराज्ञादि पालयति, तच्छ्राद्धादिकं च करोति, तद्रिक्थं च गृह्णाति, तत्सपिण्डादिविवाहं न करोति, तथा दत्तकोऽपि पालकस्याज्ञां पालयेत, तच्छ्राद्धं कुर्यात् , तद्रिक्थं गृह्णीयात् , तद्गोत्रसपिण्डयोः कन्यां च वर्जयेत् इति । अयं तु विशेषः—दत्तकानन्तरम् औरसे उत्पन्ने चतुर्थांशं दत्तको गृह्णीयात् ।

उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः ।
सवर्णा, असवर्णास्तु ग्रासाच्छादनभाजनाः ॥

इति कात्यायनोक्तेः । 'सवर्णाः क्षेत्रजदत्तकादयः' इति मिताक्षरा । कौस्तुभे तु—

दत्तपुत्रे यदा जाते कदाचित्त्वौरसो भवेत् ।
पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ ॥
अविधानं विधानं वा यदि प्राप्नोति नन्दनः ।
विवाहविधिभाजं तु न कुर्याद्धनभाजनम् ॥
तस्मिन्जाते सुते दत्ते न कृते च विधानके ।
तत्सर्वस्यैव वित्तस्य स स्वामी पितुरञ्जसा ॥
जातेष्वन्येषु पुत्रेषु ज्येष्ठपुत्रप्रतिग्रहात् ।
पिता चेद्विभजेद्वित्तं नैवासौ ज्येष्ठभाग्भवेत् ॥ इति ।

प्रथमश्लोको जातकर्मादिसंस्कृतदत्तकस्यौरसेन समांशलाभपरः, द्वितीयश्लोकस्य यदि प्रतिग्रहीत्रा जातकर्माद्युपनयनान्तसंस्कारो न कृतः, दत्तकविधानं तु कृतं, तदा तस्य विवाहमात्रलाभः, नत्वन्यधनलाभ इत्यर्थः । यदि प्रतिगृहीतस्यापि दत्तकविधानं न कृतं, किन्तु जातकर्माद्युपनयनान्तसंस्कारमात्रं, तदा तस्य दत्तक-

त्वाभावादौरसस्यैव सर्वधनलाभः न केवलसंस्कृतस्येति तृतीयश्लोकार्थः । एवञ्च यदा कतिपये संस्कारा दत्तकविधानं च कृतं तदा चतुर्थांशलाभो द्रष्टव्यः । चतुर्थश्लोकस्तु यदा समांशः क्रियते तदा तस्य ज्येष्ठत्वेऽपि ज्येष्ठांशनिषेधार्थ इत्युक्तम् । तन्मिताक्षरानादरणेनानादरणीयम् । दत्तकपुत्रीस्वीकुर्वतां तु तस्याः पत्न्यभावे धनग्रहणेऽधिकारो दुहितृत्वात् इति । शौनकः—

ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ।
तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेत् ॥
क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमोपि वा ।
वैश्यानां वैश्यजातौ वा शूद्राणां शूद्रजातिषु ॥
सर्वेषां चैव वर्णानां जातिष्वेव न चान्यतः ।
दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते ॥
नैकपुत्रेण कर्त्तव्यं पुत्रदानं कदाचन ।
बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः ॥
दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ।
नृपो राष्ट्रार्धमेवापि वैश्यो वित्तशतत्रयम् ॥
शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ॥ इति ।

ब्राह्मणानामिति । सपिण्डेष्वपि भ्रातृपुत्रो मुख्यः, तदभावे सगोत्रः सन् सपिण्डो यः कश्चित् । तदभावे त्वसगोत्रः सपिण्डः, तदभावे त्वसपिण्डः सगोत्रः, तदभावेऽसपिण्डः सन्नसगोत्र इति । तत्र भ्रातृपुत्रस्य पुत्रीकरणं प्रपञ्चितम् । तदभावे सपिण्ड एव सगोत्रः,

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

इति वृद्धगौतमात् । गोत्रतां संततित्वम् । तदभावे केवलसपिण्डोऽपि, शौनकेन तदभाव एवासपिण्डोक्तेः । [illegible]

सगोत्रो मुख्यः 'न सापिण्ड्यं विधीयते' इति शेषबलेनासपिण्डसगोत्रलाभात् । तदभावे असगोत्रः,

दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥

इति कालिकापुराणात्,

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।

इति मनुनाऽसगोत्रस्य ध्वननाच्च । प्रयत्नत इति आपदुद्धारार्थमित्यर्थः । अत्र दत्तकपुत्रीस्वीकर्तृमते भिन्नभिन्नगोत्रजातौ परस्परमसपिण्डौ कन्यापुत्रौ यत्र परस्परमसपिण्डाभ्यामेकगोत्राभ्यां प्रतिगृहीतौ तत्र तयोः कन्यापुत्रयोः परस्परं विवाहो न जायते एकगोत्रत्वादिति केचित् । अन्ये तु तयोर्विवाहो भवति । एकगोत्रसम्बन्धमात्रस्याविवाहप्रयोजकत्वाभावात्, किन्तु एकगोत्रजन्यत्वस्य 'असमानार्षगोत्रजाम्' इत्युक्तेः । अन्यथा असमानार्षगोत्राम्' इत्येव ब्रूयात् । तेन तस्या मातापितृगोत्रोद्भूतो निषिध्यते न त्वेष इति । एवं माध्यन्दिनीयानाम् 'अमातृगोत्रप्रभवाम्' इति प्रभवपदप्रयोजनमूह्यमित्याहुः । राष्ट्रार्धमिति । अर्धराज्योत्पन्नमित्यर्थः । तच्च एकवर्षीयम् । यद्वर्षे पुत्रो गृहीतः तद्वर्षीयमिति यावत् ।

प्रदद्यादर्धराज्योत्थमेकवर्षाहृतं धनम् ।

इति वृद्धगौतमोक्तेः । यस्य क्षत्रियस्य यत्र स्वाम्यं तत् तद्राज्यं, तेन एकग्रामाधिपक्षत्रियादिनैकग्रामाद्यर्धधनमेव देयमित्यर्थः । वित्तेति ।

शतत्रयं नाणकानां सौवर्णमथ राजतम् ।
प्रदद्यात्ताम्रमथवा उत्तमादिव्यवस्थया ॥

इति वृद्धगौतमस्मरणं द्रष्टव्यम् । सर्वस्वमिति । एकवर्षीयभृतिलब्धं द्रव्यम् 'एकवर्षाहृतं धनम्' इत्युक्तेः, 'सर्वस्वं चान्वये सति' इति निषेधाच्च । यथाबलमिति । एकवर्षभृतिद्रव्ये पात्रदातुं

शक्यं ततः किञ्चिदधिकं दद्यादित्यर्थः । दत्तकपुत्रमरणे तत्प्रतिग्रहीतृतत्पत्नीतत्पुत्रान्तरादीनां सर्वेषां सापिण्ड्याद्दशाहाशौचं, पालकमरणे दत्तकाद्दशाहं सपिण्डसगोत्रत्वात् । जनकमरणे तु न दशाहमित्याद्यग्रे बोध्यम् ।

दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते ।

इत्यत्रोक्तं कौस्तुभे शौनकः—

दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥ इति ।

पूर्वार्धे भागिनेयस्य दौहित्रसाहचर्यादुत्तरार्धे भागिनेयपदं दौहित्रोपलक्षणं, पुत्रत्वबुद्ध्यनर्हभ्रातृपितृव्यमातुलाद्युपलक्षणं चेति । अन्ये त्वाहुः—अपेः अवधारणमर्थः, तथा च जातित्वेन दौहित्रभागिनेयावुद्दिश्य शूद्रकर्तृकतानियमविधानादन्येषां तत्पुत्रनिषेधः फलति । न च तत्र चकारादन्येषामपि समुच्चयः कुतो न भवति ? एवञ्च तत्राऽपेरवधारणार्थकत्वमपि न कल्प्यते इति वाच्यं, तथा सति एतद्वाक्यवैयर्थ्यापत्तेः सर्वेषामेव जातित्वेन तदुभयप्राप्तेरिति । ननु एकस्यां दानक्रियायां दौहित्रभागिनेयकर्मकत्वशूद्रकर्तृकत्वयोर्विधाने वाक्यभेदः । न च तदुभयविशिष्टैकदानविधानान्न वाक्यभेदः, विशिष्टविधाने वाक्यभेदविरहादिति वाच्यम् । "माता पिता वा" इति दर्शनादापन्निवृत्तिरूपदृष्टप्रयोजनवत्त्वेन विशिष्टदानविधानासम्भवात् , दानभावनाया भाव्यसाकाङ्क्षतया श्रुतस्य शूद्रस्यैव भाव्यत्वेनान्वयसम्भवेनाश्रुतस्य तादृशप्रयोजनस्यान्वयासम्भवाच्च । तस्मात् 'दौहित्रभागिनेयौ शूद्राय दद्यात्' इत्यर्थः । ततश्च शूद्रकर्मकदानोद्देशेन दौहित्रभागिनेयौ नियम्येते शूद्रस्य द्वावेव दत्तपुत्रौ नान्ये इति, ब्राह्मणादीनां तु सर्वेऽपीति । न च शूद्रस्य स्वतःसिद्धत्वेन कुतो दानभाव्यत्वमिति वाच्यं, 'व्रीहीनवहन्ति' इत्यत्र व्रीहीणां स्वरूपेणाभाव्यत्वेऽपि संस्कारवत्तयाऽवहननभाव्यत्ववच्छू-

द्रस्य स्वरूपेण दानाभाव्यत्वेऽपि पितृत्वरूपसंस्कारवत्तया तद्भा-व्यत्वादिति चेत्? न, 'दीयते' इति हि कर्मणि यक्, कर्मत्वेन च दौहित्रभागिनेययोः प्रतीत्या तयोरेव भाव्यत्वं लभ्यते। ततश्च शूद्रस-म्बन्धिदानेन दौहित्रं भागिनेयं च पुत्रं कुर्यादित्यर्थः। तथा च प्रोक्तरीत्या कर्तृनियमाद् ब्राह्मणादेः तन्निषेधे पर्यवसानम्। पठन्ति च—

ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्।
दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः॥

इति वृद्धगौतमवचनम्,

सगोत्रजसुतालाभे पालयेदन्यगोत्रजम्।
दौहित्रं भागिनेयं वा मातृष्वसृसुतं विना॥

इति शाकलसंहितावचनं चेति। अन्ये तु दौहित्रभागिनेययोः शूद्राणां पत्युरेवाधिकारः,

दौहित्रं भागिनेयं च शूद्राणां च पतिर्यदि।

इति वचनात्; शेषं प्राग्वदित्याहुः। भट्टास्तु शूद्रस्यैव दौहित्रभागिने-यौ द्वौ नेतरस्येति न नियमः यथा 'दण्डी प्रैषानन्वाह' इति दण्डित्वेन प्रैषानुवचने मैत्रावरुणस्य विनियोगात् प्रैषानुवचनकर्तृत्वेन भा-व्युपयोगिनो मैत्रावरुणस्यैव 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र द-ण्डितया भाव्यत्वं, 'यजमानः स्वदण्डदानेन मैत्रावरुणं भावयेत्' इत्य-र्थात्, तथा इहाप्यनपाकृतर्णत्वेन चतुर्थ्यर्थषष्ठ्या दौहित्रभागि-नेयदानेन शूद्रं भावयेदित्यर्थः। एवञ्च दौहित्रभागिनेययोर्विधेय-त्वेन नियमविधिविषयत्वं युक्तं, शूद्रस्य तु शेषितया तन्नियमे परि-संख्यापत्तेः, यथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति, सा च त्रिदोषेति। तस्माद्दौहित्रभागिनेयावेव शूद्रस्य मुख्यौ, तदभावे तु अन्योऽपि सजातीयः 'शूद्राणां शूद्रजातिषु' इति तेनै-

दत्तके विशेषः कालिकापुराणे—

*पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥
चूडोपायनसंस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥
ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ॥
*गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥

---

वोक्तेः । नचेदं जातिपदं दौहित्रभागिनेययोरुपसंह्रियते इति वाच्यं, तथा सत्येकस्मृतौ सामान्यवाक्यवैयर्थ्यापत्तेः । एवञ्च ब्राह्मणादिभिरपि दौहित्रभागिनेयौ ग्राह्यौ बाधकाभावादिति वदन्ति । *पितुर्गोत्रेणेति । आचूडान्तं संस्कृत इत्यन्वयः । अभिविधावाङ् । स पुत्रोऽन्यतोऽन्यस्य ब्राह्मणादेः पुत्रतां न यातीति निषिध्यते । अत्र प्रतिग्रहीतुरेव जातकर्मादिविधानाज्जातमात्रप्रतिग्रहो मुख्यः, इहाऽपि 'आचूडान्तम्' इत्युक्तेश्च । पञ्चवर्षान्तं गौणः 'ऊर्ध्वन्तु पञ्चमाद्वर्षात्' इत्युक्तेः । *गृहीत्वेति । पुत्रेष्टिस्तस्य दासभावापनायिका । एतच्च विप्रादेरपि,

ऊर्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ।

इति सामान्यतो निषेधादिति यथाश्रुतानुरोधिनः । तदसत्, उक्तकालिकापुराणस्य राज्यार्हपुत्रपरत्वात् । तस्यैव च प्रतिग्रहीतृकर्तृकसंस्कार आवश्यकः । एवं हि कालिकापुराणम्—

न क्षेत्रजादितनयं राजा राज्येऽभिषेचयेत् ।
पित्रर्णमोचने नित्यमौरसे तनयेऽसति ॥ ( असतीति च्छेदः )
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च दासश्च षडेते पुत्रपांसनाः ॥

अलाभे पूर्वपूर्वेषां परान् समभियोजयेत् ।
पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत् ॥
दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः ।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥
पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥
चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दासतोऽच्यते ॥
ऊर्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥
पौनर्भवं तु तनयं जातमात्रं समानयेत् ।
कृत्वा पौनर्भवस्तोमं जातमात्रे तु तस्य वै ॥
सर्वांस्तु कुर्यात्संस्कारान् जातकर्मादिकानथ ।
कृते पौनर्भवस्तोमे सुतः पौनर्भवस्ततः ॥
एकोद्दिष्टं पितुः कुर्यान्न श्राद्धं पार्वणादिकम् ।
क्रीता या रमिता मौल्यैः सा दासीति निगद्यते ॥ इति ।

अस्यार्थः—दत्ताद्या इति । पुत्राः प्रतिग्रहीतृकर्तृकजातकर्मादिसकलसंस्कारसंस्कृता एव राज्यार्हाः, नाऽन्ये, सम्यक् पुत्रतां राज्यार्हतामित्यर्थात् । अन्यथा 'पुत्रमायान्ति' इत्येव ब्रूयात्, न तु सम्यगित्यपि । 'अन्यथा दास उच्यते' इत्यत्रापि अन्यथा(प्रति)ग्रहीतृकर्तृकचूडान्तसंस्काराभावे दासः तद्वद्राज्यभागानर्हः अन्यत्रान्यशब्दप्रयोगस्य "मासमग्निहोत्रं जुहोति" इति वत्तद्धर्मातिदेशार्थत्वात् । एवमेव 'दासं राज्ये न योजयेत्' इत्यभिधाय दत्तकराज्याधिकारं प्रकृत्य 'अन्यथा दासतोच्यते' इत्येतस्य संगतेरिति । पौनर्भवस्तोमः सोमयागप्रभेदः, तस्य सुतसंस्कारार्थत्वम् । अनाहिताग्नीनां तु तादृशयागासम्भवेऽपि तद्दैवताकचरुर्द्रष्टव्यः । ब्राह्मणादेस्तु न जन्मतः प्रति-

ग्रहेऽधिकारः,

> सदृशं तु प्रकुर्याद्यं गुणदोषे विचक्षणम् ।
> पुत्रं पुत्रगुणैर्युक्तं स ज्ञेयः कृत्रिमः सुतः ॥

इति मनूक्तकृत्रिमपुत्रलक्षणे गुणदोषविचक्षणं प्राकृतव्यवहारं न तु बालमिति मेधातिथिविरोधात्, श्राद्धाकरणे दोषः, तत्करणे गुण इति गुणदोषावधारणकुशलमिति सर्वज्ञनारायणविरोधात् । "सदृशं तुल्यम्, 'इमं पुत्रं करोमि' इति एकस्य पुत्रचिकीर्षावदन्यस्य 'अहमस्य पुत्रो भवामि' इति तद्बुभूषया प्रतिग्रहीतृसादृश्यवन्तम्; सकामं यं कुर्यात्" इतिबौधायनसंवादात्, 'अहमस्य पुत्रो भवामि' इति मतिश्च न जातमात्रादाविति रत्नाकरविरोधाच्च । तस्मात्पञ्चाधिकवर्ष एव प्रतिग्रहार्ह इत्येके । अन्ये तु एतत्सर्वमसगोत्रदत्तकपरमित्याहुः। परे तु असगोत्रोऽपि उपनयनान्तसंस्कारोत्तरमपि परिणीतोऽपि उत्पन्नपुत्रोऽपि च दत्तको भवति बाधकाभावात्, "शुनःशेपो विश्वामित्रपुत्रः स्वयमेवाभवत्" इति बह्वृचब्राह्मणसंवादाच्च। शुनःशेपश्चोपनीतः । अनुपनीतस्य वेदाध्ययनासम्भवेन वैदिकमन्त्रैः प्रजापत्यादिस्तुतौ इन्द्रदत्तहिरण्मयरथप्रतिग्रहे च मन्त्रस्यनुपपत्तेः। न च स स्वयंदत्त इति वाच्यम् 'दत्ताद्यास्तनयाः'इत्यत्राद्यपदेन कृत्रिमादीनामपि ग्रहणेन भवन्मते तस्यापि निषेधात् । न च श्रुतिवशाज्जातोपनयनः स्वयंदत्त एव स्वीकार्य इति वाच्यं, तर्हि जातोपनयनस्य दत्तकस्यापि दुर्वारत्वात्, श्रुत्या दत्ताद्या इत्यस्याप्रामाण्योन्नयनात्, 'पितुर्गोत्रेण' इत्यादेश्च प्रायशः कालिकापुराणादावदर्शनाच्च । अथवाऽस्तु'दत्ताद्याः' इत्यस्य प्रामाण्यं, परन्तु 'अन्यबीजसमुद्भवाः' इति यथाश्रुतं व्यर्थम् दत्तादेरन्योत्पन्नत्वनैयत्यात् । अतस्तेनान्यकृतगर्भाधानादि उपनयनान्तसंस्कारयुक्तत्वं बोध्यते, बीजिनः पितुरुपनयनेऽधिकारात् । अन्यकृतोपनयनान्तसंस्कारा अपि दत्ताद्यास्तनयाः संस्कृताः कृतदत्रिमादि-

विधानाः निजगोत्रेणैव पुत्रतां सम्यक् यान्ति प्राप्नुवन्ति, दात्रिम-संस्कारवशेन पितृगोत्रत्यागस्य मनुनोक्तेः। एवं 'पितुर्गोत्रेण' इत्या-द्यप्यस्तु, परन्तु "न पुत्रः स पुत्रतां याति चान्यत" इत्यस्य अ-न्यस्य पितृभिन्नस्य प्रतिग्रहीतुः पितृगोत्रेण पुत्रतां न याति किन्तु पितृगोत्रं विहायैव पुत्रतां यातीत्यर्थः। चूडेति। 'अन्यथा दास उच्यते' इति चतुर्थपादवशात् निजगोत्रेण प्रतिग्रहीतृगोत्रेण अन्यथा दातृगोत्रेण वा चूडादिसंस्काराः कृताश्चेत्तदा ते तनया दत्ताद्या भवन्ति, तेषामदासता दासभिन्नता उच्यते इत्यर्थः। ऊर्ध्वं त्विति। एतच्च यथाश्रुतमलग्नकम् 'गृहीत्वा पञ्चवर्षीयम्' इत्यनेन विरोधात्, किन्तु न हि निन्दान्यायेन पञ्चवर्षप्रतिग्रह-स्तावकम्, तत्र प्रथमं पुत्रेष्टिः कार्या। तत्र दातृगोत्रेणोपनयन-परिणयान्तसंस्काराणां संजातत्वात् पुत्रपूतत्वार्था पुत्रेष्टिः पालकेन विहितकर्मान्तरानुष्ठानात्प्रथमं कार्या इत्यर्थः। यच्च–

> अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः।
> स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक्॥

इति वाक्यं, तत्प्रतिवेदमुपनयनपरमिति।

केचित्तु 'दत्ताद्याः' इत्यादिपद्यपञ्चकानि द्व्यामु-ष्यायणपराणि। तथाहि—दत्ताद्या इति अन्यबीजसमु-द्भवा अपि दत्ताद्यास्तनयाः प्रतिग्रहीत्रा स्वगोत्रेण संस्कृता एव कृतजातकर्मादिसंस्कारा एव प्रतिग्रहीतुः सम्यक् पु-त्रतां प्राप्नुवन्तीत्यर्थः। द्व्यामुष्यायण एकगोत्रः स इति भावः। पितुर्गोत्रेणेति। आचूडान्तं जनकगोत्रेण यः संस्कृतः सोऽ-न्यस्यैव पुत्रतां न याति, किन्तु द्व्यामुष्यायणो द्विगोत्र इत्यर्थः। चूडेति। चूडान्ताः प्राक्तनाः संस्काराश्चेत् पितृगोत्रेण जातास्तदा चूडाप्रभृति निजगोत्रेण कृता एव चेत्तदा दत्ताद्यास्तनया भवन्ति द्व्यामुष्यायणा अप्येकगोत्रा इति भावः, चूडायां निजगोत्रानुष्ठान-

स्यैकगोत्रत्वप्रापकत्वात्। चूडायां तत्तद्गोत्रिणां प्रत्यार्षेयशिखाकरणोक्तेः। अन्यथाऽदासता दासवैलक्षण्यमात्रमुच्यते, एतस्य रिक्थग्राहित्वात्, न तु पुत्रत्वमित्यर्थः। ऊर्ध्वं त्विति स्तावकं, संस्कारेभ्यः प्रथमं पुत्रेष्टिः कार्येत्यर्थः। यथा च प्रतिग्रहीतृगोत्रेण चूडाकर्म समानगोत्रत्वप्रापकं, तथा तद्गोत्रे एतच्छाखोक्तविधिनोपनयनं तत्समानशाखीयत्वप्रापकमित्याह 'अन्यशाखोद्भवो दत्त' इतीत्याहुः। परन्तु एतेषां द्व्यामुष्यायणपरत्वेऽपि न केवलदत्तके विरोध इति शिवम्। वस्तुतस्तु दत्तको द्विविधः केवलो द्व्यामुष्यायणश्च। तत्र संविदं विना दत्त आद्यः। आवयोरसाविति संविदा दत्तोऽन्त्यः। तत्र दत्तकत्वस्य होमसाध्यादृष्टविशेषरूपताया उपपादितत्वात् तादृशादृष्टवशादेव प्रतिग्रहीतृकुले पुत्रपित्रादिसम्बन्धविशेषप्रयुक्तानि कार्याणि भवन्ति।

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥

इति मनुना दत्तकस्य जनकगोत्ररिक्थे निराकृत्य पुत्रं ददतो जनकस्य गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः पिण्डः सापिण्ड्यं स्वधा श्राद्धौर्ध्वदेहिकादि च व्यपैतीति गोत्रादिसत्त्वे श्राद्धादिसत्त्वं, तदसत्त्वे च श्राद्धाद्यभाव इत्यन्वयव्यतिरेकाभ्यां जनकश्राद्धादावधिकारनिराकरणात्। वस्तुतस्तु यथा 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यादौ वयोऽवस्थाविशेषः, यथा वा 'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि मिनोति' इत्यादौ सन्धिदेशो लक्ष्यते, तद्वत् गोत्ररिक्थपिण्डस्वधाशब्दैः जनकादिसम्बन्धप्रयुक्तं (१)कार्यं लक्ष्यते। व्यपैतीत्यनेन च तन्निवृत्तेरभिधानात्सोदरपितृव्यादिसम्बन्धनिवृत्तिरपि सिध्यति। तथा च केवलदत्तकस्य प्रतिग्रहीतुरेवौर्ध्वदेहिकश्राद्धादावधिकारः। तत्पुत्रस्य पितुः सपिण्डीकरण-

१ 'कार्यमात्रं' घपुस्तके।

पार्वणश्राद्धादि प्रतिग्रहीत्रैव सह कुर्यात्, एवं तत्पुत्रोऽपि। उभयोः पुत्राभावे त्वनायत्या सपिण्डान्तरवत् पूर्वपितुरपि और्ध्वदेहिकादि कार्यम्। यत्तु केवलदत्तके मानाभावः तदविधानादिति, तन्न, केवलदत्तकस्य कस्यचिदपि क्वचिदपि व्यवहाराभावेऽपि प्रोक्तमनुना जनकादिसम्बन्धनिवृत्तेरभिधानात्, द्व्यामुष्यायणे च तदबाधादेव दुर्वारत्वात्, "ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्"इति गौतमकृतो बीजिकुले सप्तपुरुषं विवाहनिषेधो द्व्यामुष्यायणे सापिण्ड्यसद्भावेन व्यर्थ इति तत्सिद्धेश्च, तस्य जनकसापिण्ड्यासत्त्वेन विवाहप्राप्तेस्तत्सार्थक्यात्। किञ्च-

> द्व्यामुष्यायणका ये स्युर्दत्तक्रीतादयः सुताः।
> गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा॥

इति वचनेन द्व्यामुष्यायणस्य गोत्रद्वयं मनुना च पितृगोत्रनिवृत्तिरिति विरोधस्य परिहारार्थं सोऽपि स्वीकार्यः। एवमेव शूरेण कुन्तिभोजाय केवलदत्त्रिमत्वेन दत्तायाः कुन्त्याः पुत्रस्यार्जुनस्य शूरपुत्रवसुदेवदुहित्रा सुभद्रया सापिण्ड्यनिवृत्तिरुक्ता भट्टसोमेश्वरेण, सापि च केवलदत्तकास्वीकारे कथं सङ्गच्छेदिति। अस्य च केवलदत्तकस्य पालकपितृकुले एव साप्तपौरुषं, पालयितृमातृकुले एवञ्च पाञ्चपौरुषं सापिण्ड्यम् दर्शितगौतमवचनात्, मनुना जनककुले तन्निवृत्तेरुक्तत्वाच्च। यत्तु, जनकगोत्रेणोपनयनादिसंस्कृतस्य जनककुले पितृतः साप्तपौरुषं मातृतश्च पाञ्चपौरुषं, सापिण्ड्यं प्रतिग्रहीतृकुले तु त्रिपुरुषं प्रतिग्रहीतरि गौणपितृत्वप्रयोजकस्योत्पादकत्वस्योपनेतृत्वस्य चाभावात्। जनकगोत्रेणासंस्कृतस्य तु प्रतिग्रहीत्रादिभिरेव साप्तपौरुषं पाञ्चपौरुषं च सापिण्ड्यमिति सापिण्ड्यमीमांसामतं, तद्ग्रन्थकार एवाग्रे दूषयिष्यति। द्व्यामुष्यायणस्य श्राद्धेऽधिकारो ग्रन्थ एव व्यक्तीभविष्यति। अन्ये तु दत्तको द्विविधः केवलो द्व्यामुष्यायणश्च। तत्र केवलः प्रतिग्रहीतुरेव पुत्रः संपादितप्रतिग्र-

हीतृगोत्रसापिण्ड्यादिः सन्निवृत्तजनकगोत्रसापिण्ड्यादिः । व्याप्य-पुत्रत्वविधायकवचनैरेव व्यापकगोत्रसापिण्ड्यादिसिद्धेः 'गोत्ररिक्थे जनयितुः' इति वाक्याच्च । अत्र पिण्डः सापिण्ड्यं न तु श्राद्धं 'ददतः स्वधा' इत्यनेन पौनरुक्त्यापत्तेः । न च प्रतिग्रहीतृसंस्कारेण तद्गोत्रादिसम्बन्धसिद्धावपि जनकगोत्रस्य तज्जन्यसंस्कारस्य च सत्त्वात्कथं तन्निवृत्तिरिति वाच्यं, निरुपाधिकदानादेव तन्निवृत्तेर्मनोरभिप्रेतत्वात् । अत एव तस्य प्रतिग्रहीतृगोत्रेणैव सर्वक्रियानुष्ठानं प्रतिग्रहीतृसपिण्डा एव तज्जननादौ दशाहाद्याशौचं प्रतिग्रहीतृकुल एव च तत्सपिण्डीकरणादि कुर्वन्ति । नचास्य जनकगोत्रसापिण्ड्याद्यभावे जनकसगोत्रासपिण्डाविवाहप्रसङ्ग इति वाच्यम्, 'असगोत्रा च या पितुः' इतिनिषेधात् । चकारेणासपिण्डा गृह्यते ।

ये द्व्यामुष्यायणा ये च दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाह्याः शौङ्गशैशिरयोर्यथा ॥

इति सङ्ग्रहाच्च । नचैवं तत्पुत्रस्य दत्तककन्याया विवाहः स्यादिति वाच्यम्, तस्याः पितृष्वसृत्वात्,

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥

इति याज्ञवल्क्योक्तेः । तत्पौत्रस्य च जनकपौत्र्या विवाहो भवत्येव, बाधकाभावात् । दत्तकानन्तरमौरसे जाते तु समरिक्थं गृह्णीयात,

दत्तपुत्रे यदा जाते कदाचित्त्वौरसो भवेत् ।
पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ ॥

इति वचनात । आवयोरयमिति संविदा दत्तस्तु द्व्यामुष्यायणः, 'एकपिण्डे द्वावनुकीर्तयेत् प्रतिग्रहीतारं चोत्पादयितारं च' इति

वचनात् । न च संविदि मानाभावः,

तथैवाक्षेत्रिणो बीजं परक्षेत्रे प्रवापिणः ।
कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥
क्रियाभ्युपगमात्त्वेतद् बीजार्थं यत्प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्री तथैव च ॥

इति मनुवाक्यस्यैव संविदि प्रमाणत्वात् । यदत्रापत्यं भावि तदावयोरिति संविदा यत्क्षेत्रं क्षेत्रस्वामिना बीजवापार्थं दीयते तत्रोत्पन्नस्यापत्यस्य द्वावपि पितरौ भागिनावित्यर्थात् । नचास्त्वयं क्षेत्रजादौ द्व्यामुष्यायणत्वप्रयोजकोऽभिसन्धिः, दत्तके तु तत्सत्त्वे मानाभाव इति वाच्यम्, एकवस्तुनि लोके एवाभिसन्धिनोभयस्वामिकत्वसिद्धेः । न च दातुः पुत्रान्तरसत्त्वे संवादो व्यर्थः एकपुत्रस्य तु, 'न त्वेवैकं पुत्रं दद्यात्'इति वसिष्ठेन निषेध एवेति वाच्यं, प्रीत्यतिशयेनानेकपुत्रस्यैव संवादसम्भवात् । एवं यः कृतोपनयनो दत्तः प्रतिग्रहीत्रा कृतविवाहादिः तत्र प्रतिग्रहीतृगोत्रसम्बन्धे जातेऽपि न जनकगोत्रसम्बन्धनिवृत्तिः,

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वगृह्योक्तविधिना स स्वशाखभाक् ॥

इति वसिष्ठेनोपनयनोत्तरगृहीतस्य शाखाद्वयभागित्वोक्तेर्गोत्रद्वयभागित्वस्याप्यौचित्यात, स्वगोत्रेणेति सहार्थतृतीयासत्त्वाच्च । अयमपि द्व्यामुष्यायणः । द्व्यामुष्यायणत्वं हि तत्तच्छाखाद्वयगोत्रभागित्वम । एतेन चूडान्तकनसंस्कारानन्तरं दत्ते प्रतिग्रहीत्रा चूडायां कृतायां द्व्यामुष्यायणत्वं प्रत्युक्तम वसिष्ठेन शाखाद्वयभागित्वोक्तेस्तस्य जनककृतोपनयन एव भावात् । यत्तु 'दत्ताद्या अपि तनयाः' इति कालिकापुराणं, तद्

अभावे पूर्वपूर्वेषां परान् समभिषेचयेत् ।

इति पूर्वोपक्रमादनेकदत्तकसमवाये राज्याधिकारयोग्यता-

तारतम्यबोधकम् । अन्यथा 'गृहीत्वा पञ्चवर्षीयम्' इति कृतचूड-स्यापि परिग्रहार्थकवाक्यविरोधात् । एवं यः सोपाधिकदानेन दत्तः प्रतिग्रहीत्रा जातकर्मादिभिः संस्कृतः सोऽपि द्व्यामुष्यायणः, निरुपाधिकदानाभावेन स्वगोत्रनिवृत्त्यभावात् । एवञ्च केवलदत्तकस्य जनककुले सापिण्ड्याभावेऽपि द्व्यामुष्यायणस्य सर्वस्यापि तत्सन्तते-श्च गोत्रद्वयेऽप्यविवाहः, गोत्रद्वयसम्बन्धात्, कुलद्वयेऽपि त्रिपुरुष-सापिण्ड्याच्च । द्वे श्राद्धे कुर्यात्, एकश्राद्धं वा; 'पितॄनुद्दिश्य एक-पिण्डे द्वावनुकीर्तयेत् प्रतिग्रहीतारं चोत्पादयितारं चातृतीयात्' इति वचनात्,

दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपूरुषम् ।
जनकस्य कुले तद्वद् ग्रहीतुरिति धारणा ॥

इति एतद्विषयकसङ्ग्रहोक्तेश्च । एतन्मते शुद्धदत्तपुत्रस्य जनकगो-त्रे विवाहो न कार्यः । न च

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः ।

इत्यनेन जनकगोत्रनिवृत्तिरुक्तैवेति वाच्यम्,

असपिण्डा च या मातुरसगोत्रा च या पितुः ।

इति तदुद्वाहनिषेधादिति स्मृतिचन्द्रिकाप्यनुकूलैव, यत्तु इदम-पेशलमेव । 'संविदा तूभयोः' इति द्व्यामुष्यायणदत्तकोऽपि गौतमा-दिसम्मतः तत्र जनकगोत्रानिवृत्तेर्गोत्रद्वयेऽप्यविवाहः, न च केवल-दत्तकपुत्रस्य,

असपिण्डा च या मातुरसगोत्रा च या पितुः ।

इति मनूक्तेः । तथा वरस्य पितुर्मातुर्वाऽसपिण्डा असगोत्रा चेति न तदर्थः, मातृपितृद्वारकसापिण्ड्यशून्या वरस्यासगोत्रा चेति 'असमानार्षगोत्रजाम्' इति याज्ञवल्क्यैकवाक्यत्वात् एकमूलकल्प-नालाघवात् । तथा च केवलदत्तकस्य जनकगोत्रेण विवाहे बाध-काभाव इति, तदशुद्धतरम्, मनुना 'असगोत्रा च याऽऽत्मनः' इति

विहाय 'असगोत्रा च या पितुः' इत्यभिधानविरोधात्, असपिण्डा च या मातुः पितुश्च वरस्यासगोत्रेत्यन्वयासम्भवाच्च ।

अभोज्या च महाश्वस्य अभेद्या च द्विपस्य च ।

इत्यादौ अश्वगजयोरभोज्या बालस्याभेद्या चेत्यन्वये सिद्धान्तविरोधादित्याहुः । अयन्तु विशेषः, एतन्मते पूर्वसिद्धान्तसंवादः प्रायशोऽस्त्येव । परन्तु शुद्धदत्तकस्योभयकुले साप्तपौरुषं सापिण्ड्यमिति कौस्तुभकृतां ग्रन्थकृतां च स्वरसः । शङ्करभट्टप्रभृतीनां तु ग्रहीतुः कुले साप्तपौरुषं सापिण्ड्यं जनककुले च तदभावेऽपि साप्तपौरुषमविवाह इति विशेषः । प्राञ्चस्तु भट्टसोमेश्वरादिभिरनेकैर्दत्त्रिमा पुत्री मन्यते । अङ्गराजाय लोमपादाय दशरथेन शान्ता नाम्नी कन्या दत्ता,

अयं राजा दशरथः सखा मे दयितः सुहृत् ।
अपत्यार्थे ममानेन दत्तेयं वरवर्णिनी ॥
याचमानस्य मे ब्रह्मन् शान्ता प्रियतरा मम ।
सोऽयं ते श्वशुरो वीर यथैवाहं तथा नृपः ॥

इत्यादिरामायणे ऋष्यशृङ्गं प्रति लोमपादवाक्यात् । क्रीता च स्कान्दे—

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्म्येण विधिना दानमसगोत्रेऽपि युज्यते ॥

कृत्रिमा च हरिवंशे—

पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत् । इति ।

अत्र वसुदेवभगिनीं पृथां कुन्तिर्दुहितरं चक्रे इति चक्रेपदोक्तेः तस्याः कृत्रिमत्वम् । अपविद्धा चादिपर्वणि शकुन्तलोपाख्याने—

जनयामास स मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥

*पञ्चमोर्ध्वं तु स्वदानेच्छोरेव दानं, नान्यथा ।
विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मनैव तु *योजयेत् ॥

इति हेमाद्रिमाधवधृतव्यासदक्षादिवचनात् । यच्च याज्ञवल्क्यः—

स्वकुटुम्बाविरोधेन देयं दारसुतादृते । इति,

तदूर्ध्वं स्वदानानिच्छुपुत्रपरम् । तेन *सर्वस्वदाने स्वदानेच्छुदारपुत्रदानं सिद्धम् । *यत्तु विश्वजिदधिकरणं षष्ठे,तत्र *पुत्रादीनां ज्ञातित्वेन स्वशब्दवाच्यत्वात्पुत्रत्वेन

---

इत्याद्युक्त्वा—
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ।
निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ॥
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ।

इत्यभिधानादित्याहुः । ग्रन्थकृतोऽप्येतत्सर्वं सम्मतमेव । अत्र 'स ज्ञेयो दत्रिमः सुतः' इत्यत्र सुतपदोपादानात्कन्या न दत्रिमा भवितुमर्हति । न च तत्र सुतशब्दस्य नपुंसकेतरापत्यमर्थः, लक्षणापत्तेः । नापि कन्यायास्तथात्वं वदतां मतेऽपि पत्नीतः प्राक् पिण्डदानरिक्थादानयोरधिकारः । तस्मादौपाख्यानिकरीत्यनुरोधेन कन्यासु विधिप्रवृत्त्यङ्गीकारे मानाभावः । उपाख्यानोक्तास्वेव कन्यासु शौनकवसिष्ठाद्यन्यतरोक्तविधिर्नेति इत्यत्रापि मानाभावादितिवृद्धानामभिप्रायः । प्रीतिसंयुक्तामित्युक्तं स्पष्टयति—*पञ्चमोर्ध्वमिति । *योजयेत् सम्बध्नीयात्, दद्यादित्यर्थः । *सर्वस्वदाने "विश्वजिति सर्वस्वं ददाति" इत्यादौ । मीमांसाविरोधमाशङ्क्य निराकरोति—*यत्त्विति । *पुत्रादीनामिति । सर्वस्वशब्दे स्वशब्दो ज्ञातिवचनः,तथा च पुत्रत्वेन ज्ञातित्वात्तद्दानापत्तिरिति शङ्कार्थः ।

दानमाशङ्क्य निराकृतम्, *जन्यपुंस्त्वस्य दानेनानिष्पत्तेः। दासत्वेन दानं भवत्येव। *तस्माद्यथेष्टविनियोगार्हत्वं स्वत्वं भवत्येव। *पुत्रे स्वत्वाभावं वदन् पुत्रक्रयविक्रयादि *शुनःशेपविक्रयादिश्रौतलिङ्ग*दासक्रयविक्रयादिव्यवहारायोगात् मूर्ख एव। (१)*योऽपि 'न(२)हि ग्रभायाा*रणः सुशेवोऽन्योदर्यो*मनसा मन्तवा उ' इति श्रुतौ दत्तकनिषेधः, सोप्यौरसातिशयार्थः। अन्यथा शुनःशेपादिप्रतिग्रहश्रौतलिङ्गविरोधापत्तेः। 'उपेयां तव पुत्रताम्'

---

निराकरणहेतुमाह—*जन्येति। पुत्रत्वं जन्यपुंस्त्वं, तच्च दानेन नोत्पद्यते, तस्य प्रागेव सिद्धत्वादित्यर्थः। दासत्वेन दाने बीजमाह—*तस्मादिति। सर्वस्वशब्दे स्वपदमीदृशस्वत्वार्थकमिति भावः। पुत्रदानाभावे केनचिद्बीजान्तरमुक्तं तदुपन्यस्य दूषयति—*पुत्रे इति। *शुनःशेपेति। बह्वृचब्राह्मणे कथाप्रसिद्धिः। तत्र शुनःशेपविक्रयोक्तिर्विश्वामित्रपुत्रत्वेन स्वत्वान्न विरुध्यते। *दासेति। दासत्वेन क्रयविक्रयव्यवहारः शुनःशेपे न युज्यते, दासत्वस्यैवाभावादित्यर्थः। दत्तकसामान्यनिषेधमाशङ्क्य निराकरोति—*योऽपीति। *अरणः अपार्णः अपगतोदकसम्बन्धः, अन्यकुलजः, यश्चान्योदर्यः अन्येनोदीरिताद्रजसो जातः, अनेन क्षेत्रजो लब्धः, अथवाऽन्यजायोदरसम्भूतः यः स्वीयायां जायायां जातः स स्वीये एवोदरे जातः 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः। सुशेवः सुष्ठु शेवं सुखं यस्मात्सः हितैषी, तथापि न हि ग्रभाय ग्रहणाय योग्यः। किञ्च *मनसा न मन्तवा मनसाऽपि ममायं पुत्र इति न मन्तव्य इत्यर्थः। ननु श्रौतं लिङ्गं क्रीतं स्वयंदत्तञ्च संस्कारानन्तरमपि दत्तकं साधयेदिति, तत्राह—

---

(१) 'योऽपि' नास्ति ख०

(२) ऋ० सं० पञ्चमाष्टके द्वितीयेऽध्यायेऽयं मन्त्रः।

## परिशिष्टदीपकः=संस्कारदीपकस्य परिशिष्ट-विषयाणां निरूपणात्मकः ।

---

अस्मिन् ग्रन्थे विषयाः—

दानस्वरूपादिकं, दानविधिः, प्रतिग्रहविधिः, देयद्रव्यदेवताः, द्रव्य-धान्य-भूमानानि, कुण्डमण्डपनिर्माणप्रकारः, सहोमतुलादानप्रयोगः, होमरहिततुलादानप्रयोगः, बृहद्गोदानप्रयोगः, गवा-दि[illegible], संक्षिप्तगोदानप्रयोगः, वृषदान—महिषीदान-त्रिविधविद्यादान—सुवर्णदान—भूम्यादिदशदानानि । सर्वप्राय-श्चित्तप्रयोगः, कृष्णधेन्वादिपञ्चधेनुदानानि । अश्वदान—हस्ति-दान—रथदान—गृहदानानि । सवास्तुशान्तिशिलान्यासप्रयोगः । शय्या[illegible]दानानि । सुवर्णादिदानमन्त्राः । गोमुखप्रसवशान्तिः । मूलाश्लेषादिशान्तयः । जलाशयोत्सर्गप्र-योगः । लघुजलाशयोत्सर्गप्रयोगः । मू० २।)

[illegible]दीपकः—यन्त्रस्थः ।

हर तरह के संस्कृत ग्रन्थ तथा भाषा भाष्य पुस्तकों के मिलने का पता—

[illegible]दास—ह[illegible]ः

चौखम्बासंस्कृतसीरीज आफिस,

विद्याविलास प्रेस, गोपालमन्दिरलेन,

बनारस सिटी ।

August 1924.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

## NO. 320.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं०
व्याकरणोपाध्याय नेने—इत्युपाख्यगोपालशास्त्रिणा
तदीयगुरुवर म० म० पं० पर्वतीयनित्यानन्द-
पन्तप्रदर्शितरीतिमनुसृत्य संशोधितो
टिप्पण्या परिष्कृतश्च ।

# NIRNAYA SINDHU;

of Kamalakara Bhatta

With Commentary of Krishnam Bhatta.

Edited With Notes by Vyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS X –१०

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG: GERMANY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1924.

इत्युक्तेः । *इदं च श्रौतलिङ्गं स्वयंदत्तक्रीतपरं न दत्तकपरम् । द्वादशविधपुत्रमध्ये 'दत्तात्मा तु स्वयंदत्तः, क्रीतश्च ताभ्यां विक्रीतः' इति याज्ञवल्क्येन तयोर्दत्तकाद्भेदोक्तेः । तयोश्च 'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः'

---

*इदञ्चेति । तथाच श्रौतं लिङ्गं क्रीतं स्वयन्दत्तञ्च संस्कारानन्तरं साधयति, न तु दत्तकम्, तदंशे लिङ्गाभावादिति भावः । एतच्च यथाश्रुताभिप्रायेण । यथेष्टविनियोगयोग्यत्वमिति । अत्रनिष्कर्षानुसारिणः । "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु, ब्राह्मणस्याधिकं लब्धं, विजितं क्षत्रियस्य, निर्विष्टं वैश्यशूद्रयोः" इति गौतमसूत्रादेर्लोकसिद्धकारणानुवादत्वं वदतां विज्ञानेश्वरादीनामयमाशयः—स्वत्वमतिशयविशेषः, तत्कारणता क्रयपरिग्रहादीनां लोकव्यवहारादेव, न शास्त्रात्, तमविदुषामपि तद्दर्शनात् । अत एव संविभागेन समुदितद्रव्यगतस्यापि पूर्वस्वत्वस्य नाशः, स्वत्वान्तरोत्पत्तिश्चेति प्राञ्चः । पूर्वस्वत्वनाशस्वत्वान्तरोत्पत्तिकल्पने गौरवात् पूर्वस्वत्वमेव संविभागेन तत्तन्निष्ठतया ज्ञाप्यते इति नव्याः । अत एव क्षत्रियस्य विजयेऽपि जितस्य यत्र ग्रहादौ स्वत्वं स्थितं तत्रैव जेतुरपि स्वत्वं । जितस्य करग्राहितायान्तु जेतुरपि तन्मात्रं न तु स्वत्वं, लोके तथैव कार्यकारणभावात् । तादृशस्वत्वाभावादेव च सार्वभौमेन सम्पूर्णा पृथिवी न देया, माण्डलिकेन तु सम्पूर्णमण्डलं न देयमिति षाष्ठसिद्धान्तः सङ्गच्छते । तत्तद्ग्रामक्षेत्रादौ स्वत्वं तु तत्तद्भौमिकानामेव, राज्ञां तु करग्रहमात्रम् । अत एवेदानीन्तनक्षेत्रदानेऽपि न भू*मिदानसिद्धिः, किन्तु तत्र वृत्तिकल्पनमात्रम् । भौमिकेभ्यः क्रीते तु तत्सिद्धिः । अत एव क्रीतगवादिजातवत्सादौ स्वीयगवादिषु तत्कर्तृकस्य शास्त्रेणाबोधनेऽपि स्वत्वव्यवहारः । नन्वेवं स्वीयभार्योत्पन्नपरपुत्रजन्यादौ स्वत्वं स्यात् । न चेष्टापत्तिः, त-

---

* भूदान इति घ पुस्तके ।

इति कलौ निषेधात्। तेन संस्कारोत्तरं स्वयं क्रीतौ न
था सति 'विश्वजिति सर्वस्वं ददाति' इति विहितसर्वस्वदाने तेषां
दानापत्त्या कन्यापुत्रादि न देयमिति षाष्ठसिद्धान्तभङ्गापत्तिरि-
तिचेत्? न, भार्यायां स्वत्वानुपगमात्। विप्रभार्यायां प्रतिग्रहेण
स्वत्वमिति चेत्?तथापि क्षत्रियभार्यायां तदभावात्। एवञ्च भार्यो-
त्पन्नेऽपत्ये न स्वत्वम्, लोके स्वत्वास्पदीभूतादुत्पत्तेरेव स्वत्वप्रयो-
जकत्वात्। एवं च क्षत्रियादिदत्तकप्रतिग्रहो गौण एवेति क्वा-
पि दत्ते न स्वत्वम्। 'सजातीयेष्वयं प्रोक्तः' इति सजातीयेनैव
सजातीयस्यैव प्रतिग्रहविधानात्। न चैवमपि विप्रान् प्रत्येव स
मुख्योऽस्तु, तद्विधौ युगपद्वृत्तिद्वयविरोधापत्तेः। न च पुत्रप्रतिग्रह-
विधिर्विप्राधिकारिक एव न क्षत्रियाद्यधिकारिक इति सुवचम्।

दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते।

इति वचनेनेतरेषामप्यधिकारात्। तथाच न षाष्ठसिद्धान्तभङ्गः।
एवं ब्राह्मविवाहविधिना विप्रस्य क्षत्रियकन्याविवाहे दानप्रतिग्रह-
योर्गौणत्वादन्यत्र मुख्यत्वाच्च युगपद्वृत्तिद्वयविरोधः, क्षत्रियादीन्
प्रति ब्राह्मादिविवाहप्रवृत्तिस्तु सर्वसंमतैव। एवञ्च तादृशाविवाहो-
ढायां विप्रायामपि न स्वत्वमिति भार्याप्यदेयैव।

स्वकुटुम्बाविरोधेन देयं दारसुतादृते।

इति याज्ञवल्क्यवचनस्तु 'नान्तरिक्षे' इति वदनुवादमा-
त्रम्। यत्तु षष्ठे गर्भदासदानमुक्तम् तत्तन्मातरि दानप्रतिग्रहक्रयवि-
क्रयाद्यभावेन तदुत्पन्नेऽपि तत्र तदभावाच्चिन्त्यमिति। 'सजातीये-
ष्वयं प्रोक्तः' इति ब्राह्मादिविवाहवचांसि च विधिसमाहारमात्रम्।
तथा च दत्तके भार्यायां च विप्रादिभेदाद्विधिभेदः तेन विप्रदत्त-
को विप्रभार्या च मुख्या, तत्पर एव 'दारसुतादृते' इति निषेधः।
लोकसिद्धं स्वत्वं च गर्भदासेऽपि कार्यकारणभावान्तरमुपेत्योपे-

भवतः, तदुत्तरे दत्तको *न भवत्येवेति सिद्धम् ॥

अथ यमलयोः संस्कारक्रमार्थं ज्येष्ठकनिष्ठभाव उच्यते। मनुः—

पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्वजः।
कथं तयोर्विभागः स्यादिति चेत्संशयो भवेत् ॥
सदृशः स्त्रीप्रजातानां पुत्राणामविशेषतः।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥

तेन कनिष्ठायां पूर्वजात एव ज्येष्ठो न ज्येष्ठायां पश्चाज्जात इत्यर्थः। स एव श्राद्धाधिकारी।

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता ॥

देवलः—

यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्।
संतानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् ॥

भागवते तु—

द्वौ तदा भवतो गर्भौ सूतिर्वंशविपर्ययात्।

इत्युक्तेःपश्चादुत्पन्नस्य ज्यैष्ठ्यमुक्तम्। अत्र देशाचारतो व्यवस्था। पूर्वमेव तु युक्तम्। 'गर्भाष्टमे' इत्यादौ विशेषनिर्देशे एव गर्भग्रहणं नान्यत्र। अन्यथा तद्वैयर्थ्यात् ॥

अथ सूतिकास्नानम्। ज्योतिषे—

करेन्द्रभाग्यानिलवासवान्त्य-
मैत्रेन्दवाश्विध्रुवभेऽह्नि पुंसाम्।
तिथावरिक्ते शुभमामनन्ति
प्रसूतिकास्नानविधिं मुनीन्द्राः ॥

---

त्यादित्यपि केचित्। *न भवत्येवेति। संस्कारोत्तरं द्व्यामुष्यायण इति मतान्तरं स्मर्तव्यम्। केवलदत्तकश्च व्यवस्थापित एवेति शिवम्।

अथ नामकर्म। मदनरत्ने बृहस्पतिः—

*द्वादशे दशमे वाऽपि जन्मतोऽपि त्रयोदशे।
षोडशे विंशतौ चैव द्वात्रिंशे वर्णतः क्रमात्॥

याज्ञवल्क्यः—'अहन्येकादशे नाम'। हेमाद्रौ भविष्ये—

नामधेयं दशम्यां तु द्वादश्यां मासि केचन।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः॥

*दशम्यामतीतायामिति ज्ञेयम् 'आशौचापगमे नामधेयम्' इति विष्णूक्तेः। गृह्यपरिशिष्टेपि—'जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणम्'। व्युष्टे- अतीते। ज्योतिर्निबन्धे गर्गः—

*अमासंक्रान्ति* विष्ट्यादौ प्राप्तकालेऽपि नाचरेत्।

---

*द्वादशे इति। ब्राह्मणस्य एकादशाहद्वादशाहौ, क्षत्रियस्य त्रयोदशाहः, वैश्यस्य षोडशाहविंशत्यहौ, 'षोडशैकोनविंशे वा' इति पाठे षोडशाहैकोनविंशत्यहौ, शूद्रस्य द्वात्रिंशे इत्यर्थः। *दशम्यामिति। एतेन—

दशमे द्वादशे वापि जन्मतो दिवसे शुभे।
षोडशे विंशतौ चैव द्वादशे वर्णतः क्रमात्॥

इति पठित्वा 'आशौचमध्ये नामकर्म' इति प्रजल्पन्तः परास्ताः। 'यथाचारं नियतदिने वा' इति प्रयोगरत्ने। तदुक्तं 'शतरात्रे संवत्सरे वा' इति। अत्र मुख्यकालादौ व्यतीपातादिसत्त्वे उत्तरेषु कालेषु कार्यम्, व्यतीपातादौ कर्मणो निषेधात्। तमेव निषेधमाह—*अमेति। *विष्ट्यादाविति। आदिना—

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि।
श्राद्धं कुर्यात्, शुभं नैव प्राप्तकालेऽपि मानवः॥

इति गर्गोक्तवैधृतिव्यतीपातग्रहणानां ग्रहः। गुरुशुक्रास्तबाल्यवार्धक्यवक्रातिचारमलमासादिनिषेधस्तु नास्ति। उक्तकाला-

श्रीधरः—

*मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युत-
प्राजेशाश्विशशाङ्कपौष्णदिनकृत्पुष्येषु राशौ स्थिरे ।
छिद्रां पञ्चदशीं विहाय नवमीं शुद्धेऽष्टमे भार्गव-
ज्ञाचार्यामृतपादभागदिवसे नामानि कुर्याच्छिशोः ॥

मनुः—

शर्मान्तं ब्राह्मणस्य स्याद्वर्मान्तं क्षत्रियस्य तु ।
वैश्यस्य धनसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥

मदनरत्ने नारदीये--

सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् ।
नाम पूर्वं तु मासस्य मङ्गलं सुसमाक्षरैः ॥

तत्रैव गार्ग्यः—

मासनाम गुरोर्नाम दद्याद् बालस्य वै पिता ॥

स्मृतिसङ्ग्रहे--

कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥

---

तिक्रमे तु ज्योतिःशास्त्रोक्ते शुभे काले कार्यम्,

नामधेयं दशम्यां तु द्वादश्यां वाऽपि कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥

इति यमोक्तेः,

देशकालोपघाताद्यैः कालातिक्रमणं यदि ।
अनस्तगे इज्यासिते तत्कार्यञ्चोत्तरायणे ॥

इति नारदोक्तेश्च । तमेव शुभकालमाह—*मित्रेति । बृहस्पतिः ।

पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः ।
अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ॥

अत्र *मार्गशीर्षादिश्चैत्रादिर्वा क्रम इति मदनरत्ने ।
तन्मासनाम प्रथमं दद्यात्सम्बुद्ध्य चैव हि ।

---

अत्रकुलदेवतासम्बद्धं नाम प्रथमं कुर्यात् । वचनन्त्वग्रे । तच्च 'श्रीमहालक्ष्मीभक्तः' इत्यादि । ततो मासनाम 'पूर्वं तु मासस्य' इति-पूर्वशब्ददानात् 'तन्मासनाम प्रथमं दद्यात्' इति वाक्याच्च । *मार्गेति । अत्र मार्गशीर्षादिरेव क्रमो न च चैत्रादिः,

चैत्रादिमासनामानि वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ।
चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥

इति गार्ग्योक्तेरित्यर्थः । यदि मलमासे जन्म तदोत्तरमासनाम 'षष्ट्या तु दिवसैर्मासः' इत्युक्तवाक्यात् । ततो नाक्षत्रं नाम कृत्वा व्यावहारिकं नाम कार्यम् । अत्र 'नामकर्म करिष्ये' इत्येव संकल्पः, कुलदेवतादिनामकरणस्यापि प्रधानत्वात् । यद्यपि तदाश्वलायनगृह्यसूत्रे नास्ति तथापि 'पारक्यमविरोधि यत्' इत्युक्तेरावश्यकम् । अन्यथा मातामहानां तत्रानुक्तेर्दर्शादौ प्राधान्यानुपपत्तेः । किञ्च तेषां करणं भवन्मतेऽङ्गम्, तथा अङ्गप्रधानेतरकर्मणोऽतिरिक्तत्वात् । तल्लोपे च प्रायश्चित्तं भवन्मतेऽपि, अन्यथा तत्राङ्गापूर्वानुदयेन प्रधानापूर्वानुपपत्तेः । तस्मादमुकनाम्ने स्वस्तीति पुण्याहवाचनादौ प्रयोगो न युक्तः । किञ्च यत्र पूर्वं व्यावहारिकस्थाप्यनामनिश्चयो नास्ति तत्र कथं स्यादिति । अत्र व्यावहारिकं नाम 'शर्मान्तं ब्राह्मणस्य' इत्यादिना दर्शितं, तच्च त्रिपुरुषवाचि वा देवतावाचि स्वेष्टं वा कार्यम्,

देवतानां विशेषेण पित्रोर्वा नाम शस्यते ॥

इति कापिलसंहितावाक्यात् । पित्रोः कर्तुः पित्रोः । सोऽष्टमाह-पारस्करः 'दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता ना-

*देवालयगजाश्वानां वृक्षाणां वापिकूपयोः ॥
सर्वापणानां पण्यानां चिह्नार्थं योषितां नृणाम् ।

---

म करोति द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितमयुजाक्षरमीकारान्तं स्त्रियै तद्धितमिति' । घोषवदक्षराण्यादौ यस्य तद् घोषवदादि। घोषवन्ति अक्षराणि च वर्गाणां तृतीयचतुर्थपञ्चमानि हकारश्चेत्येतानि । अन्तर्मध्ये अन्तस्था यरलवा यस्य तत् । दीर्घाक्षरमभिष्ठाने समाप्तौ यस्य तत् । कृतं 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति परिभाषया कृदन्तम् । तद्धितं तद्धितान्तम् । अयुग्माक्षरमीकारान्तं च न कुर्यात् । तदेतत्त्रयं स्त्रियै हितमित्यर्थः । आश्वलायनः 'नाम चास्मै दद्युः घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः युग्मानि त्वेव पुंसामयुग्मानि स्त्रीणाम्' इति । घोषवदादि अन्तरन्तस्थमिति प्राग्वत् । अभिनिष्ठानो विसर्गः अन्ते यस्य तत् । अक्षरम् स्वरः । व्यञ्जनेषु न संख्यानियमः । युग्मानि त्वेवेति तदन्यलक्षणासत्त्वेऽपि न दोष इत्यर्थः। तेन देव इत्यादिवद् रुद्र इत्यादि । षडक्षरादिकं वा भवति । महाभाष्ये 'घोषवदाद्यन्तरन्तस्थमवृद्धमनरिप्रतिष्ठितं कुर्यान्न तद्धितं त्रिपुरुषानूकमिति । अवृद्धं वृद्धिर्यस्याचामादिस्तद्वृद्धम्, तद्भिन्नम् । अनरिप्रतिष्ठितमिति। एवं —

नैव कार्यं नृपादीनां नाम जीवनहेतुतः ।
पूर्वः परस्य वर्णस्य हीनस्यापि न धारयेत् ॥

इत्यपि बोध्यम् । त्रिपुरुषाननुकायति अभिधत्ते तत् । "अन्येषामपि" इति दीर्घः । अयुग्मानीति । विशेषमाह गोभिलः 'अयुग्दान्तं स्त्रीणाम्' इति 'यशोदा' 'शर्मदा' इत्यादि। केचित्तु यन्नाम तद्दान्तं कार्यं यथा 'पार्वतिदा' इत्यादि इत्याहुः।तन्मते 'यशोदादा' इत्येव स्यात् । *देवालयेत्यादि । देवालयादीनां नाम कार्यमित्यर्थः । वासिष्ठः ।

काव्यानां च कवीनां च पर्ववादीनां च सर्वशः ॥
राजप्रासादवास्तूनां नामकर्म विशिष्यते ॥

*नाक्षत्रमपि नाम कार्यम्। 'अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्' (१)इत्याश्वलायनोक्तेः। *'कुलदेवतानक्षत्रसम्बद्धं पिता नाम कुर्यात्' इति मदनरत्ने शङ्खोक्तेः। तच्च नक्षत्रपादाक्षराद्याक्षरं कुर्यादित्युक्तं परिशिष्टे—

तदक्षरादिकं नाम यस्मिन् धिष्ण्ये यदक्षरम्।

इति। सुदर्शनभाष्ये तु—

*रोरेममृज्येचिषु वृद्धिरादौ

---

तद् द्व्यक्षरं वा चतुरक्षरं वा विवर्जयेदन्त्यलकाररेफौ।
तन्मासनामादिकमेव चिन्त्यं स्फुटं वदेद्दक्षिणकर्णरन्ध्रे ॥

नाक्षत्रं व्यावहारिकं च कार्यमित्याह—*नाक्षत्रमपीति। अभिवादनीयम् उपनयने यन्नाम्नाऽभिवादनं कर्त्तव्यं तत् व्यावहारिकम्। *कुलेति। कुलसम्बद्धं देवतासम्बद्धं नक्षत्रसम्बद्धं चेत्यर्थः। *रोरे इति। रोहिणीमघारेवतीमृगशीर्षज्ये-

---

(१) एतत्पूर्वमन्योऽपि विशेषस्तेनोक्तः-'द्व्यक्षरं चतुरक्षरं वा, द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः युग्मानि त्वेव पुंसामयुजानि स्त्रीणाम्' इति। अत्र नारायणीयवृत्तिः—द्वे अक्षरे यस्य तत् द्व्यक्षरं व्यञ्जनमपरिमितं, चतुरक्षरं वा उक्तलक्षणं नाम कुर्युः। भद्रः देवः भवः भवनाथः नागदेवः रुद्रदत्तः देवदत्तः इत्येवंलक्षणानि नामानि भवन्ति। द्व्यक्षरं चतुरक्षरं वेति यदुक्तं तत्काम्यमपीत्याह-(द्व्यक्षरमिति)प्रतिष्ठाब्रह्मवर्चसे च कुमारस्य, तत्संस्कारत्वात्, न कर्तुः। अथवा युग्मानि युग्माक्षराणि पुंसां नामधेयानि भवन्ति। एवकारोऽवधारणार्थः। कथं युग्ममेवाद्रियेत न पूर्वाणि लक्षणानीति। तेन शिवदत्तः नागदत्तः देवस्वामी वसुशर्मा रुद्रः जनार्दनः वेदघोषः पुरन्दरः विष्णुशर्मा इत्यादि सिद्धम्। अयुजान्ययुग्माक्षराणि स्त्रीणां नामानि भवन्ति। सुभद्रा सावित्री सत्यदा वसुदा इत्यादि' इति।

ठात्पे च वान्त्यश्रवशाश्वयुक्षु ।
शेषेषु नाम्र्वोः कपरः स्वरोन्त्यः
स्वाप्वोरदीर्घः सविसर्ग इष्टः ॥

इत्युक्तम् । ठात्पे इति प्रोष्ठपदेत्यत्रादौ ठात्परे च वृद्धिः प्रौष्ठपाद इति । अन्त्यमपभरणीशब्दः श्रुतावुक्तः । तत्र श्रवणादौ च वादिवृद्धिः । अपभरणः आपभरण इत्यादि* । मदनरत्ने वसिष्ठः—

जन्माह्रे द्वादशाह्रे वा दशाहे वा विशेषतः ।
उत्तरारेवतीहस्तमूलपुष्याः सवारुणाः ॥
श्रवणादितिमैत्रं च स्वाती मृगशिरस्तथा ।
प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि ॥

अथ दोलारोहः । पारिजाते बृहस्पतिः—

दोलारोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा ।
षोडशे दिवसे वाऽपि द्वाविंशे दिवसेऽपि वा ॥

---

ष्ठाचित्राशब्देषु आदिवृद्धिः । रौहिणः, रैवतः, माघः, मार्गशीर्षः, ज्यैष्ठः, चैत्रः । *ठात्पे इतीति । ठकारात्पकारे परे वृद्धिः चकारादौ च, प्रौष्ठपादः 'जे प्रोष्ठपदानाम्' इति सूत्रात् । श्रवशाश्वेति । श्रवः, शतभिषक्, अश्वयुक् एषु वा आदिवृद्धिरित्यर्थः । *इत्यादीति । आदिना श्रवणः श्रावणः, शतभिषक् शातभिषजः, अश्वयुक् आश्वयुजः । "जातार्थेऽण् ङिद्वा वक्तव्यः" इति वार्तिकात् शतभिषज इत्यपि बोध्यम् । शेषेषु उक्तादन्येषु आदिवृद्धिर्न । कृत्तिकः, तिष्यः, आश्लेषः, पूर्वाफल्गुनः, उत्तराफल्गुनः, हस्तः, विशाखः, अनुराधः, पूर्वाषाढः, उत्तराषाढः, धनिष्ठः, पूर्वाभाद्रपदः, उत्तराभाद्रपदः, इति । अाम्र्वोः आर्द्रामूलयोः अन्त्यस्वरः कपरो भवति । आर्द्रकः, मूलकः । स्वाप्वोः स्वातीपुनर्वस्वोः अन्त्यः स्वरः अदीर्घः दीर्घरहितः, ह्रस्व इति यावत् । सविसर्गश्च इष्टः, स्वातिः पुन-

ज्योतिर्निबन्धे—

करत्रये वैष्णवरेवतीष्वदितिद्वये वाऽऽश्विनध्रुवेषु ।
कुर्याच्छिशूनां नृपतेश्च तद्वदान्दोलनं वै सुखिनो भवन्ति ॥

तत्रैव--

आन्दोलाशयने पुंसो द्वादशो दिवसः शुभः ।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा ॥
अन्यस्मिन्दिवसे चेत्स्यात्तिथिगाऽऽद्ये प्रशस्यते ॥

अथ दुग्धपानम् । नृसिंहः--

एकत्रिंशद्दिने चैव पयः शङ्खेन पाययेत् ।
अन्नप्राशननक्षत्रे दिवसोदयरात्रिषु ॥

अथ कर्णवेधः । मदनरत्ने वसिष्ठश्रीधरौ--

मासे षष्ठे सप्तमे वाऽष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि ।
मध्येनाह्नः पूर्वभागे न रात्रौ *नक्षत्रे द्वे द्वे तिथी वर्जयित्वा ॥

अत्र *जन्ममासो वर्ज्यः । ज्योतिर्निबन्धे गर्गः—

मासे षष्ठे सप्तमे वाऽप्यष्टमे मासि वत्सरे ।
कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये ॥

मदनरत्ने--

प्रथमे सप्तमे मासि अष्टमे दशमेऽथ वा ।
द्वादशे च तथा कुर्यात्कर्णवेधं शुभावहम् ॥

---

वसुरिति ग्राह्यम् । अधिकारिणमाह–शङ्खः 'पिता वा कुर्यादन्यो वा कुलवृद्धः' । इति नामकरणमिति ।

मञ्चतण्डो(?)लारोहणादि ज्योतिर्विदादिष्टे मुहूर्ते कार्यम् ।
*नक्षत्रे द्वे इत्यादि । यस्मिन् दिने नक्षत्रद्वयं तिथिद्वयं वा तद्दिनं वर्जयेदित्यर्थः ।

*जन्ममास इति । प्रथमाब्दे विहितत्वेन निषेधानवकाशादिदं द्वितीयाद्यब्दपरम् ।

---

(१) खट्वारोहणादि इति घ पुस्तके ।

हेमाद्रौ व्यासः—

कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥

श्रीधरः—

हरिहयकरचित्रासौम्यपौष्णोत्तरार्या-
दितिवसुषु घटालीसिंहवर्ज्ये सुलग्ने ।
शशिगुरुबुधकाव्यानां दिने पर्वरिक्त-
रहिततिथिषु शुद्धे नैधने कर्णवेधः ॥

मदनरत्ने बृहस्पतिः—

द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ।
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥
सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः ।
शूद्रस्य चायसी सूची मध्यमाऽष्टाङ्गुलात्मिका ॥

हेमाद्रौ देवलः—

कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः ।
तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः ॥

शङ्खः—

अङ्गुष्ठ(१)मात्रसुषिरौ कर्णौ न भवतो यदि ।
तस्मै श्राद्धं न दातव्यं दत्तं चेदासुरं भवेत् ॥

अथ ताम्बूलभक्षणम् । चण्डेश्वरः—

सार्धमासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः ।
कर्पूरादिकसम्मिश्रं विलासाय हिताय च ॥

---

(१) इदं च वाक्यं परिसंख्याविधया । 'शिशोर्विवर्धनं कार्यं यावदाभरणक्षमम् ।' इति संस्कारकौस्तुभोक्तविष्णुधर्मोक्तवाक्यतो यथेच्छाभरणानुकूल्येनाङ्गुष्ठाधिकच्छिद्रनिरासार्थम् । न तु विधयाऽङ्गुष्ठमात्रच्छिद्रविध्यर्थम् । तथा सति सूर्यच्छायाप्रवेशानुकूलच्छिद्रनियामकदेवलवाक्यवैयर्थ्यापत्तिः ।

मूलार्कचित्रकरातिष्यहरीन्द्रभेषु
पौष्णे तथा मृगशिरोदितिवासवेषु ।
अर्केन्दुजीवभृगुबोधनवासरेषु
ताम्बूलभक्षणविधिर्मुनिभिः प्रदिष्टः ॥

अथ निष्क्रमणम् । ज्योतिर्निबन्धे—

तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् ॥

यमः—

ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥

अत्र—

सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।

इति छन्दोगपरिशिष्टात् 'छन्दोगानां निष्क्रमणे वृद्धिश्राद्धं नास्ति' इति कल्पतरुः ।

व्यासः—

मैत्रे पुष्यपुनर्वसुप्रथमभे पौष्णेऽनुकूले विधौ
हस्ते चैव सुरेश्वरे च मृगभे तारासु शस्तासु च ।
कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ शुक्रे विरिक्ते तिथौ
कन्याकुम्भतुलामृगारिभवने सौम्यग्रहालोकिते ॥

मदनरत्ने—

अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् ।

विष्णुधर्मे—

दिगीशानां दिने तत्र तथा चन्द्रार्कयोर्द्विजः ।
पूजनं वासुदेवस्य गगनस्य च कारयेत् ॥
बहिर्निष्कासयेद्गेहात् शङ्खपुण्याहनिस्वनैः ।
चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च ॥
निक्षेपार्थमिमं दद्मि ते मे रक्षन्तु सर्वदा ।

अप्रमत्तं प्रमत्तं वा दिवारात्रमथापि वा ॥
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ।

माधवीये मार्कण्डेयः—

अग्रतोऽथ प्रविन्यस्य शिल्पभाण्डानि सर्वशः ।
शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ॥
प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥ इति ।

अथोपवेशनम् । प्रयोगपारिजाते पाद्मे विष्णुधर्मे च—

पञ्चमे च तथा मासि भूमौ तमुपवेशयेत् ।
तत्र सर्वे ग्रहाः शस्ता भौमोऽप्यत्र विशेषतः ॥
उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ।
प्राजापत्यं च हस्तश्च शस्तमाश्विनमित्रभम् ॥
वाराहं पूजयेद्देवं पृथिवीं च तथा द्विजः ।
रक्षैनं वसुधे देवि सदा सर्वगतं शुभे ॥
आयुःप्रमाणं सकलं निक्षिपस्व हरिप्रिये ।
अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः ॥
जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ।
वरेण्याशेषभूतानां माता त्वमसि कामधुक् ॥
अजरा चाप्रमेया च सर्वभूतनमस्कृता ।
चराचराणां भूतानां प्रतिष्ठानाऽव्यया ह्यसि ॥
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥

अथान्नप्राशनम् । पारिजाते नारदः—

जन्मतो मासि षष्ठे स्यात्सौरेणान्नाशनं परम् ।
संवत्सरे वा संपूर्णे केचिदिच्छन्ति पण्डिताः ॥

मदनरत्ने लौगाक्षिः 'षष्ठेऽन्नप्राशनं जातेषु दन्तेषु वा' इति । शङ्खः—'संवत्सरेऽन्नप्राशनमर्धसंवत्सरे वा' इति ।

ज्योतिर्निबन्धे नारदः—

षष्ठे वाप्यष्टमे मासि पुंसां, स्त्रीणां तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥
रिक्तां दिनक्षयं नन्दां द्वादशीमष्टमीममाम् ।
त्यक्त्वाऽन्यतिथयः प्रोक्ताः सितजीवज्ञवासराः ॥
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ।

श्रीधरः—

आदित्यतिष्यवसुसौम्यकरानिलाश्वि-
चित्राजविष्णुवरुणोत्तरपौष्णमित्राः ।
बालान्नभोजनविधौ दशमे विशुद्धे
छिद्रां विहाय नवमीं तिथयः शुभाः स्युः ॥

वसिष्ठः—

बालान्नभुक्तौ व्रतबन्धने च
राजाभिषेके खलु जन्मधिष्ण्यम् ।
शुभं त्वनिष्टं सततं विवाहे
सीमन्तयात्रादिषु मङ्गलेषु ॥

मार्कण्डेयविष्णुधर्मयोः—

ब्रह्माणं शङ्करं विष्णुं चन्द्राकौं च दिगीश्वरान् ।
भुवं दिशश्च संपूज्य हुत्वा वह्नौ तथा चरुम् ॥
देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलङ्कृतस्य दातव्यमन्नं पात्रे सकाञ्चनम् ॥
मध्वाज्यदधिसंयुक्तं प्रा(१)शयेत्पायसं तु वा ॥ इति।

अथाब्दपूर्तिः । व्यवहारनिर्णये—

नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ।

---

(१) प्राशनमन्त्रस्तु आश्वलायनोक्तः—'अन्नपतेऽन्नस्य नो देह्य-नमीवस्य शुष्मिणः । प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतु-ष्पदे ॥' इति ।

मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा ॥
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ।
प्रह्लादं च हनूमन्तं विभीषणमथार्चयेत् ॥
स्वनक्षत्रं जन्मतिथिं प्राप्य संपूजयेन्नरः ।
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ॥

तिथितत्त्वे एतन्नामभिस्तिलहोमोऽप्युक्तः । आदित्य-पुराणे—

सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलवारिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥
स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं यत्नात्कर्तव्यश्च महोत्सवः ॥

कृत्यचिन्तामणौ—

गुडदुग्धतिलान्दद्याद्धस्ते ग्रन्थौ च बन्धयेत् ।
गुग्गुलं निम्बसिद्धार्थदूर्वागोरोचनादिकम् ॥
संपूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम् ।
चिरंजीवी यथा त्वं भो भविष्यामि तथा मुने ॥
रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा ।
मार्कण्डेय नमस्तेऽस्तु सप्तकल्पान्तजीवन ॥
आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने ।
चिरंजीवी यथा त्वं तु मुनीनां प्रवर द्विज ॥
कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् ।
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ॥
सतिलं गुडसंमिश्रमञ्जल्यर्धमितं पयः ।
मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुर्विवृद्धये ॥

इति पयः पिबेत् । तिथितत्त्वे स्कान्दे—

खण्डनं नखकेशानां मैथुनाध्वागमौ तथा ।

आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥

तत्रैव दीपिकायाम्—

कृतान्तकुजयोर्वारे यस्य जन्मतिथिर्भवेत् ।
अनृत्तयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे ॥
(कृतान्तः शनिः )
तस्य *सर्वौषधिस्नानं गुरुदेवाग्निपूजनम् ॥

वृद्धमनुः—

मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

अत्र *जन्मतिथिरौदयिकी ग्राह्या ।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥

इति कृत्यतत्त्वार्णवे वचनात् । विशेषो मत्कृतशूद्रधर्मे ज्ञेयः॥

अथ कटिसूत्रम् । प्रयोगपारिजाते ब्राह्मे—

प्रतिसंवत्सरान्तर्क्षे वक्ष्ये नृणां विधिं परम् ।
दत्त्वा गोभूहिरण्यादि तथा स्वर्णादिनिर्मितम् ॥

---

*सर्वौषधीति । छन्दोगपरिशिष्टे-

कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दने ।
वचाचम्पकमुस्ताश्च सर्वौषध्यो दश स्मृताः ॥

अपरार्के—

वला च शंखपुष्पी च कुष्ठं चैव वचा तथा ।
नागकेशरचूर्णं च सर्वौषधिगणो मतः ॥

महार्णवे—

मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
सटी चम्पकमुस्ता च सर्वौषधिगणो मतः ॥ इति ।

*जन्मतिथिरिति । तद्वृद्धे राजमार्त्तण्डः—

बध्नीयात्कटिसूत्रं च वासः संगृह्य नूतनम् ।
दूर्वाङ्कुरैरथाज्येन चरुणा वा पिनाकिनम् ॥
आयुष्यहोमं कृत्वा च तर्पयेत्पितृदेवताः ।

अथ चौलम् । प्रयोगपारिजाते षड्गुरुशिष्यः—

*जाताधिकाराज्जन्मादितृतीयेऽब्दे तु चौलकम् ।
आद्येऽब्दे कुर्वते केचित्पञ्चमेऽब्दे द्वितीयके ॥
*उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ।

बृहस्पतिः—

तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः ।
पञ्चमे सप्तमे वापि स्त्रियाः पुंसोऽपि वा समम् ॥

तत्रैव नारदः—

जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः ।
पञ्चमे सप्तमे वापि जन्मतो मध्यमं भवेत् ॥
अधमं गर्भतः स्यात्तु नवमैकादशेऽपि वा ॥ इति ।

पारिजाते बृहस्पतिः—

उत्तरायणगे सूर्ये विशेषात्सौम्यगोलके ।
शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरत् ॥
अशुभोऽन्त्यस्त्रिभागः स्यात्कृष्णपक्षे त्रिधाकृते ।

तत्रैव वसिष्ठः—

द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैव च ।

---

घस्रद्वये जन्मतिथिर्यदि स्यात् कुर्यात्तदा जन्मभसंयुतां च ।
असंगता तेन दिनद्वये चेत् पूज्या परा या भवतीह यत्नात् ॥ इति ।

खट्वारोहदुग्धपानकर्णवेधनिष्क्रमणजीविकापरीक्षोपवेशनव-राहादिपूजान्नप्राशनाऽब्दपूर्तिकटिसूत्राणि मयूखादौ कौस्तुभादौ प्रयोगपारिजातादौ च विस्तृतानि बोध्यानि ।

*जातेति । तृतीयाब्दे । *उपनीत्या सहेति कालः । प्रथ-

दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता ॥

नृसिंहीये—

षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
द्वादशी दर्शपूर्णे द्वे प्रतिपच्चैव निन्दिताः ॥

वसिष्ठः—

रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैव हि ।
निन्दिता दिवसाः क्षौरे शेषाः कार्यकराः स्मृताः ॥

ज्योतिर्निबन्धे बृहस्पतिः-

*पापग्रहाणां *वारादौ विप्राणां शुभदं रवौ ।
क्षत्रियाणां क्षमासूनौ विट्शूद्राणां शनौ शुभम् ॥
हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् ।
सौम्यचित्रे नवक्षौरे उत्तमा नव तारकाः ॥
त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा ।
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः ॥
निधने जन्मनक्षत्रे वैनाशे चन्द्रमेऽष्टमे ।

---

माद्वितीयतृतीयपञ्चमसप्तमाः कुलधर्ममनुसृत्य कालाः, ते च जन्मतो मुख्याः, गर्भतो गौणाः । उदगयनमावश्यकं, शुक्लपक्षश्च मुख्यः, कृष्णपक्षोऽन्त्यतृतीयभागं विना गौणः, 'उदगयने आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' इत्याश्वलायनसूत्रात् । गुरुशुक्रयोर्बाल्यवार्धक्यास्तमयाः मलमासश्च वर्ज्याः ।

चण्डेश्वरः—

मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोश्च यत्नेन परिवर्जयेत् ॥

वृत्तशते-

न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीनदिने विदध्यात् ।
ज्येष्ठे न मासि प्रथमस्य सूनोस्तथा सुताया अपि मङ्गलानि ॥

जन्मदिने विशेषः । *पापग्रहाणामिति निर्धारणे षष्ठी । *वा-

त्रिपत्करे वधे क्षौरं प्रत्यरे च विवर्जयेत् ॥

अथ लग्नशुद्धिरन्ये च योगा ज्योतिर्विद्भ्यो ज्ञेयाः । *अन्ये च विशेषाः श्मश्रुकर्मनिर्णये वक्ष्यन्ते ।

एतच्च शिशोर्मातरि गर्भिण्यां न कार्यम् । तदाह ज्योतिर्निबन्धे मदनरत्ने च वृद्धगार्ग्यः—

पुत्रचूडाकृतौ *माता यदि सा गर्भिणी भवेत् ।
शस्त्रेण मृत्युमाप्नोति तस्मात्क्षौरं विवर्जयेत् ॥

अस्यापवादमाह तत्रैव नारदः—

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चाब्दात्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥
यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं यदि ।
*सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते ॥

बृहस्पतिः—

गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत् ।
व्रताभिषेकेऽप्येवं स्यात्कालो वेदव्रतेष्वपि ॥

*अभिषेकः समावर्तनम् । 'गर्भिण्यामपि पञ्चममासपर्यन्तं न दोषः' इत्युक्तं मुहूर्तदीपिकायां गर्गेण—

पञ्चममासादूर्ध्वं मातुर्गर्भस्य जायते मृत्युः । इति ।

---

रादिः सूर्यः । रात्र्यादिनिषेधानामग्रे विस्तरं सूचयति—*अन्ये चेति ।

*मातेति जनयित्र्यर्थकम् । तेन सपत्नमातुर्गर्भेऽपि न दोषः । तदुक्तं भट्टोजिना—

भिन्नभार्यासुतस्येह न दोषश्चौलकर्मणि । इति ।

*सहोपनीत्येति । यत्तु—

सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत् । इति,

तत् प्रत्येकं निषेधकं, न तु सहितस्येति । *अभिषेकः

मदनरत्ने बृहस्पतिः-

पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत् ।
विपद्यते गुरुस्तत्र दम्पती शिशुरन्दनः ॥
गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु ।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥

गर्गः--

ज्वरस्योत्पादनं यस्य लग्नं तस्य न कारयेत् ।
दोषनिर्गमनात्पश्चात्स्वस्थो धर्मं समाचरेत् ॥

लग्नमिति मङ्गलोपलक्षणम् । ज्योतिर्गर्गः--

विवाहोत्सवयज्ञेषु माता यदि रजस्वला ।
तदा स मृत्युमाप्नोति पञ्चमं दिवसं विना ॥

वसिष्ठः---

यस्य माङ्गलिकं कार्यं तस्य माता रजस्वला ।

अर्धं तदेव । तत्रैव बृहस्पतिः---

प्राप्तमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि ।
पत्नी रजस्वला चेत्स्यान्न कुर्यात्तत्पिता तदा ॥

पितेति कर्तृमात्रोपलक्षणम् । *संकटे तु *वाक्यसारे उक्तम्--

अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते ।
श्रियं संपूज्य *विधिवत्ततो मङ्गलमाचरेत् ॥

एतच्च मण्डनोत्तरं न कार्यम् ।

न मण्डनाच्चापि हि मुण्डनं च
गोत्रैकतायां यदि *नाब्दभेदः ।

---

स्नानं समावर्तनम् । *संकटे इति । मुहूर्तान्तराभावे नान्दीश्राद्धानन्तरं चौलप्रयोगसमाप्तेः पूर्वं चेत्यर्थः । *वाक्यसारे इति । चतुर्थदिनेऽपीति शेषः । *विधिवदिति विवाहे स्पष्टम् । *नाब्दभेद इति । अब्दभेदे न दोष इत्यर्थः

इति मदनरत्ने वसिष्ठोक्तेः । तत्रैव कात्यायनः-

*कुले ऋतुत्रयादर्वाङ् मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥

तथा वृद्धमनुः-

एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥

आशौचे तु संग्रहे--

संकटे समनुप्राप्ते सूतके समुपागते ।
कूष्माण्डीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीम् ॥
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् । इति ।

ज्योतिर्निबन्धे--

षष्ठेऽब्दे षोडशे वर्षे विवाहाब्दे तथैव च ।
अन्तर्वत्न्यां च जायायां नेष्यते मुण्डनं क्वचित् ॥

अन्योऽपि विशेषो विवाहप्रकरणे वक्ष्यते । दीपिकायाम्-

न चूडा जन्मभाग्नेयदारुणेषु शनौ कुजे ।
प्रतिपद्भद्ररिक्तासु विद्यारम्भस्तु पञ्चमे ॥

प्रयोगरत्ने--

*मध्ये शिरसि चूडा स्याद्वासिष्ठानां तु दक्षिणे ।
उभयोः पार्श्वयोरात्रिकश्यपानां शिखा मता ॥

माधवीयेऽप्येवम् । आपस्तम्बस्त्वाह-"तूष्णीं केशान्विनीय यथर्षि शिखा निदधाति" । यथर्षि प्रवरसंख्यया । तासां मध्यशिखावर्जमुपनयने वपनं कार्यम्, "प्रतिदिशं प्रवपाति" इत्युपनयने तेनैवोक्तेः । "रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्मै तदपिधानं यच्छिखा" इति श्रुतेः,

---

सूचितः. *कुलं त्रिपुरुषम्, 'पुरुषत्रयपर्यन्तम्' इत्यग्रे वचनात् । '[illegible]' इत्यपि अभिन्नमिह स्मर्त्तव्यम् ।

*मध्ये इति । मध्यशिखायाश्चोपनयने वपनं न कार्यमिति

विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ।

इति निषेधाच्च । सत्रे तु वचनात्सशिखं वपनमिति सुदर्शनभाष्ये उक्तम् । यत्तु— "कुमारा विशिखा इव" इति लिङ्गं, त*च्छन्दोगपरम् । अपरार्के मदनरत्ने च लौगाक्षिः—"दक्षिणतः कमुञ्जा वसिष्ठानामुभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूडा आङ्गिरसो वाजिमेके मङ्गलार्थं शिखिनोऽन्ये यथाकुलधर्मं वा" इति । कमुञ्जा शिखा । वाजिः केशपङ्क्तिः । स्मृतिदर्पणे—

एका शिखा दक्षिणतो वसिष्ठ-
गोत्रस्य पञ्चाङ्गिरसो भृगोस्तु ।
नैका शिखा कश्यपगोत्रजानां
शिखोभयत्रापि यथाकुलं च ॥

एतच्छूद्रातिरिक्तविषयम् । "शूद्रस्यानियताः केशवेशाः" इति वसिष्ठोक्तेः । यत्तु पाद्मे—

न शिखी नोपवीती स्यान्नोच्चरेत्संस्कृतां गिरम् ।

इति शूद्रमुपक्रम्योक्तम्, तदसच्छूद्रस्येति केचित् । विकल्प इति तु युक्तम् । अत एव हारीतः—

स्त्रीशूद्रौ तु शिखां छित्वा क्रोधाद्वैराग्यतोऽपि वा ।
प्राजापत्यं प्रकुर्यातां निष्कृतिर्नान्यथा भवेत् ॥

एतत्परिग्रहपक्षे । अत्र देशभेदाद्व्यवस्थेति दिक् । ज्योतिर्निबन्धे—

नर्मदोत्तरदेशे तु सिंहस्थे देवमन्त्रिणि ।
शुभकर्म न कुर्वीत निषेधो नास्ति दक्षिणे ॥

---

बोध्यम् । *छन्दोगेति । यत्तु मनुः-

मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः । इति,

अत्र भोजने प्रायश्चित्तमुक्तं पराशरमाधवीये—

निवृत्ते चूडहोमे तु प्राङ् नामकरणात्तथा ।
चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥
अतोऽन्येषु तु संस्कारेषूपवासेन शुद्ध्यति ।

एते संस्काराः स्त्रीणाममन्त्रकाः कार्याः । होमस्तु समन्त्रक इति प्रयोगपारिजाते । आश्वलायनोऽपि—

होमकृत्यं तु पुंवत्स्यात्स्त्रीणां चूडाकृतावपि । इति ।

मनुरपि—

अमन्त्रिका तु कार्येयं स्त्रीणामा*वृदशेषतः । इति ।

होमोऽप्यमन्त्रक इत्येके । 'संस्काराः स्त्रीणामहोमकास्तूष्णीं स्युः' इति स्मृत्यर्थसारे । होमो नेति वृत्तिकृत् ।

---

कात्यायनः—

सशिखं वपनं कार्यमास्नानाद्ब्रह्मचारिणा ।

इति [च] सर्वमुण्डत्वं, तत्सामगानामेव ।

एते लूनशिखास्तस्य दर्शनैरविरोद्धतैः ।
कुशाः काशा विराजन्ते बटवः सामगा इव ॥

इति विष्णुपुराणादित्यर्थः ।

कौथुमिः—

शिखिवच्छिखया भाव्यं ब्रह्मावर्तं निबद्धया ।
प्रदक्षिणं द्विरावृत्य पाशान्तः सकमेशनात् ॥
प्रथमं द्विगुणं कृत्वा ब्रह्मग्रन्थिरितीरितम् ।
गायत्रीजपनं कार्यं शिखाया विनिबन्धने ॥ इति ।

'मण्डलोर्ध्वशिखिनः' इति पाठः । जातकर्मादीनां लोपे प्रायश्चित्तमारभ्याधानमाचौलादित्युपनयने वक्ष्यति । *आवृत् अनुष्ठानपद्धतिः ।

अथ विद्यारम्भः। मदनरत्ने नृसिंहः---

*अक्षरस्वीकृतिं कुर्यात्प्राप्ते पञ्चमहायने।
उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत्॥

दीपिकायाम्---

वर्षे पर्जन्यके काले षष्ठीं रिक्तां शनिं कुजम्।
अनध्यायान्विना नत्वा देवं ग्रन्थकृतं गुरुम्॥

श्रीधरः---

हस्तादित्यसमीरमित्रपुरजित्पौष्णाश्विचित्राच्युते-
ष्वारार्कयशदिनोदयादिरहिते राशौ स्थिरे चोभये।
पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं
षष्ठीमष्टमशुद्धभाजि भवने प्रोक्ताक्षरस्वीकृतिः॥

विष्णुधर्मोत्तरे---

पूजयित्वा हरिं लक्ष्मीं तथा देवीं सरस्वतीम्।
(१)स्वविद्यं सूत्रकारांश्च स्वां विद्यां च विशेषतः॥
एतेषामेव देवानां नाम्ना तु जुहुयाद् घृतम्।
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यं चात्र पूजनम्॥ इति।

अथ धनुर्विद्या। दीपिकायाम्---

अदितिगुरुयमार्कस्वातिचित्राग्निपित्र्य-
ध्रुवहरिवसुमूलेष्विन्दुभागान्त्यभेषु।
शनिशशिबुधवारे विष्णुबोधे विपौषे
सुसमयतिथियोगे चापविद्याप्रदानम्॥

---

*अक्षरेति। विद्यारम्भश्च गुरुं पूजयित्वा कार्यः,

प्राङ्मुखो गुरुरासीत वारुण्याभिमुखः शिशुः।
अध्यापयीत प्रथमं ज्ञातिभिश्च सुपूजितः॥

इति वचनात्।

---

(१) 'स्वविद्यां सूत्रकारान्' ख०

अथानुपनीतस्य विशेषः । गौतमः—

*"प्रागुपनयनात्कामचारवादभक्षाः" इति । भक्षणं लशुनादेरपि इति हरदत्तः । अपरार्के वृद्धशातातपः—

शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादिसंस्पर्शे स्नानमेव कुमारके ॥
प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥

आपस्तम्बोऽपि—"अन्नप्राशनात्प्रयतो भवत्यासंवत्सरादित्येके" इति । गौतमोऽपि—"न तदुपस्पर्शनादाशौचम्" । तस्यानुपनीतस्य चाण्डालादिस्पृष्टस्यापि स्पर्शान्न स्नानम् । इदं च षष्ठवर्षात्प्राक्, ऊर्ध्वं तु स्नानं भवत्येव ।

बालस्य पञ्चमाद्वर्षाद्रक्षार्थं शौचमाचरेत् ।

---

गणेशं च सलक्ष्मीकं हरिं देवीं सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वविद्यांश्च प्रपूजयेत् ॥

धात्रीपूजनमपि केचिदिच्छन्ति । स्वविद्यांस्तु शक्तितो वस्त्रालङ्कारबहुदक्षिणाभिरिति । नृसिंहः—

ततः प्रभृत्यनध्यायान् वर्जनीयान्विवर्जयेत् ।
अष्टमीद्वितयं चैव पक्षान्ते च दिनत्रयम् ॥ इति ।

*प्रागुपनयनादिति । एतेन वृन्दावने श्रीहरेर्विहारेऽनुमतिर्लभ्यते । न हीशत्वात्तदनुमतिर्युक्ता, 'वर्त्त एव च कर्मणि' इति विरोधात् । एतेन—

कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत् ।

इति प्रायश्चित्तं कामचाराद्विनिमित्तमिति न भ्रमः कार्यः, तस्य प्रागुपनयनादनुज्ञातत्वात् । किन्तु उपनेतृत्वाधिकारार्थम् । इदं च महापापातिरिक्तविषयम्,

स्यात्कामचारभक्षोक्तिर्महतः पातकादृते ।

इति स्मृतेः । कामचारादिकेऽप्येवम् ।

*ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च ।
चरेद्गुरुः सुहृच्चैव प्रायश्चित्तं विशुद्धये ॥
अतो बालतरस्यास्य नापराधो न पातकम् ।

इति स्मृतेरिति हरदत्तः । स्मृत्यर्थसारेऽप्येवम् ।

अथोपनयनम् । आश्वलायनः—

*गर्भाष्टमेऽष्टमे वाऽब्दे पञ्चमे सप्तमेऽपि वा ।
द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ॥

---

इति पारिजाते स्मृत्यन्तरात् । महापापन्तु पञ्चवर्षात्प्रागपि वर्ज्यम्,

अनुपेतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कार्यं पित्रा भ्रात्राऽपि चान्यतः ॥

इति माधवीये जातूकर्ण्योक्तेः । गौतमः—'यथोपपादितमूत्रपुरीषो भवति न तस्याचमनकल्पो विद्यते' इति । यथोपपादितेत्युक्त्या

दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।

इत्यादिनियमाभावः, कल्पेत्युक्त्या च 'द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्' इत्यादेर्निषेधश्च लभ्यते । एवं मातापित्रोर्और्ध्वदैहिकाधिकारो वक्ष्यते । *एवमिति । लशुनादिभक्षणमपि षष्ठवर्षात्प्रागेवेत्यर्थः । उत्तरं तु तत्र बालस्य प्रायश्चित्तं कार्यं, तच्च पित्रादिभिरेवेत्याह— *ऊनेति । एवं महापापेऽपि पित्रादिभिरेव प्रायश्चित्तं कार्यम्, एतद्वचनात् । पञ्चवर्षात्प्राक् महापापे तु कैमुतिकन्यायेनैव प्रायश्चित्तेऽपि पित्रादेरधिकारः । आचार्यस्य त्वयं विशेषः । विष्णुः—

सहस्रं द्वादशाख्यं च सावित्रीं प्रजपेद्बुधः ।
स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम् ॥ इति ।

*गर्भाष्टमे इति । याज्ञवल्क्यः—

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।

मनुः—

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ॥

विष्णुः—

षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे ।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः ॥

आपस्तम्बः—"गर्भाष्टमेषु ब्राह्मणमुपनयीत" *बहुवचनं गर्भषष्ठगर्भसप्तमयोः प्राप्त्यर्थमिति सुदर्शनभाष्ये। केचित्तु विप्रस्य षष्ठं न मन्यन्ते। आपस्तम्बः—"अथ काम्यानि सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकाममुपनयेत्"। गौणकालमाह मनुः—

*आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आद्वाविंशात्क्षत्त्रबन्धोराचतुर्विंशतेर्विशः ॥

---

राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥

अत्र विज्ञानेश्वरः—'अष्टमे जन्मतोऽष्टमे, एकादशे गर्भपदस्याब्दपदस्य चानुवृत्त्या गर्भादेकादशेऽब्दे जन्मतो वा एकादशेऽब्दे, सैके एकादशे द्वादशे इति यावत्, तथा च गर्भाद् द्वादशेऽब्दे जन्मतो वा द्वादशेऽब्दे क्रमेण ब्राह्मणक्षत्रियवैश्यानामुपनयनं कार्यमित्यर्थः ।

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ।

इति स्मृत्यन्तरात्। पञ्चमाब्दाद्युपनयनानि तु काम्यानि । तत्र गर्भपञ्चमादीन्यपि केचिन्मन्यन्ते, तदनुसारेणाह—*बहुवचनमिति । *आषोडशादिति मर्यादायामाङ्,

सावित्री पतिता यस्य दशवर्षाणि पञ्च च ।
सशिखं वपनं कृत्वा व्रतं कुर्यात् समाहितः ॥

ज्योतिर्निबन्धे—

अग्रजा बाहुजा वैश्याः स्वावधेरूर्ध्वमब्दतः ।
अकृतोपनयाः सर्वे*वृषला एव ते स्मृताः ॥

---

इति प्रोक्तप्रायश्चित्तानुरोधात् । एवं चाऽऽद्वाविंशादाचतुर्विंशतेरिति मर्यादायामेवाङ् , समभिव्याहारात् । एवं च

आ षोडशाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥

इति याज्ञवल्क्यवाक्येऽपि मर्यादार्थकस्याङो द्वाविंशाच्चतुर्विंशादित्यत्र सम्बन्धः । यत्तु—

औपनायनिकः कालः परः षोडशवार्षिकः ।
द्वाविंशतिः परोऽन्यस्य चतुर्विंशतिमः परः ॥

इति व्यासवाक्यं तद्गर्भाधानाभिप्रायेणेति न विरोधः । यथा

अष्टादशादिनादर्वागशुचित्वं न विद्यते ।
चतुर्दशादिनादर्वागशुचित्वं न विद्यते ॥

इत्यत्र प्रथमं रजोदर्शनदिनात्प्रभृति, द्वितीयं तु स्नानादिनादिति । *वृषला एवेति । न चेत्प्रायश्चित्तमनुतिष्ठन्तीति शेषः । विप्रक्षत्रियविशां क्रमात् पञ्चदशैकविंशतित्रयोविंशतिवर्षसमाप्त्युत्तरमेव पातित्यम् ,

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥

इति याज्ञवल्क्यवचनात् । पातित्ये तु असमर्थस्य मनुः—

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन्कृच्छ्रान् यथाविध्युपनाययेत् ॥

शक्तस्य सामग्रीवैकल्येन पञ्चदशवर्षातिक्रमे तु यमः—

सावित्री पतिता यस्य दश वर्षाणि पञ्च च ।
सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥

गर्गः—

विप्रं वसन्ते क्षितिपं निदाघे
वैश्यं घनान्ते व्रतिनं विदध्यात् ।
माघादिशुक्लान्तिकपञ्चमासाः
साधारणा वा सकलद्विजानाम् ॥

हेमाद्रौ ज्योतिषे—

माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते ।

कालादर्शे वृद्धगार्ग्यः—

माघादिमासषट्के तु मेखलाबन्धनं मतम् ।
चूडाकरणमन्नं च श्रावणादौ विवर्जयेत् ॥

मैत्रेयसूत्रेऽपि—"वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण माघादिषण्मासा वा सर्ववर्णानामेतदुदगयनमनयोर्विकल्पः" इति । अत्रेदं तत्त्वम्—नात्र वसन्तेनोत्तरायणस्य संकोचः श्राद्धे दर्शस्यापराह्णविधिनेवाधाने वसन्तादेः कृत्तिकादिनेव सायंप्रातर्विधिना यावज्जीवविधेरिव युक्तः। आद्ययोः परस्परव्यभिचारान्नियमः, अन्त्ये निमित्ते साङ्गकर्मोक्तेः कालापेक्षा; इह तूत्तरायणं विना

---

एकविंशतिरात्रं तु पिबेत्प्रसृतियावकम् ।
हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च च ॥
( द्वादशेत्यर्थः )
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥ इति ।

उपनेत्रादिसकलसामग्रीसत्त्वेऽपि कामतो गौणकालातिक्रमे तु उद्दालकव्रतं चरेत् "पतितसावित्री उद्दालकव्रतं चरेत्, द्वौ मासौ यावकेन वर्तयेत्, मासं पयसा, अर्द्धमासमामिक्षया, अष्टरात्रं घृतेन, षड्रात्रमयाचितं हविष्यं भुञ्जीत,

वसन्तस्याभावान्न नियमः, न वा निमित्तत्वम् । न च 'एकं वृणीते' इतिवद(१)वयुत्यानुवादः तद्वद्वाक्यभेदापरिहारात् । उत्तरायणविधिवैयर्थ्यात्त्वनुकल्पोऽयमिति । माघ आदिर्येषां पञ्चानाम्, एवं षट् । पारिजाते बृहस्पतिः—

झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥

---

त्रिरात्रमभक्षोऽहोरात्रमुपवसेत् व्रात्यस्तोमेन वा यजेत" इति वसिष्ठोक्तेः । तथाच याज्ञवल्क्योक्तो व्रात्यस्तोमः सकलसामग्रीसत्त्वेऽपि अकृतोपनयने बोध्यः । उद्दालकव्रताशक्तस्य तु आपस्तम्बः- 'अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्ययनम्' इति । ऋतुं मासद्वयं, त्रैविद्यकं ब्रह्मचर्यं वेदत्रयार्थं भैक्षाशनगुरुशुश्रूषादिकमिति । वस्तुतस्तु व्रात्यस्तोमं विनोपनयने नाधिकारः—

सावित्री पतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ।

इति वचनात् । स चानुपनीतेनानाहिताग्निनाऽविदुषाऽपि अवकीर्णिपशुवत् कार्यः । यागोपयुक्ताध्ययनमगत्या कार्यम् । ततः स्मृत्युक्तं प्रायश्चित्तं कृत्वोपनयनं कार्यमिति । केचित्तु गौणकालानन्तरे संवत्सरे यमोक्तं यावकव्रतं, तदुत्तरोत्तरोत्तरं संवत्सरेषु क्रमेण मनूक्तं कृच्छ्रत्रयं, आपस्तम्बोक्तमृतुत्रैविद्यकं ब्रह्मचर्यम्, उद्दालकव्रतं व्रात्यस्तोमो वेत्याहुः । गुरुशुक्रादिग्रहबलासत्त्वे मासिकादेरपकर्षाभावादाचार्योपनेत्रभावादौ वा गौणकाले उपनयनं कार्यम् । बुद्ध्या मुख्यकालत्यागे तु "त्रीन् कृच्छ्रान् वटुश्चरेत्" इति वटुप्रायश्चित्तं द्विगुणमिति विशेषः ।

---

(१) अवयुत्य पृथक्कृत्य

वृत्तशते—

न जन्मधिष्ण्ये न च *जन्ममासे
न जन्मकालीनदिने विदध्यात् ।
ज्येष्ठे न मासि प्रथमस्य सूनोः
तथा सुताया अपि मङ्गलानि ॥

राजमार्तण्डः—

*जातं दिनं दूषयते वसिष्ठो
ह्यष्टौ च गर्गो नियतं दशात्रिः ।
जातस्य पक्षं किल भागुरिश्च
शेषाः प्रशस्ताः खलु जन्ममासि ॥

जन्ममासे *तिथौ भे च *विपरीतदले सति ।
कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः ॥
जन्ममासनिषेधेऽपि दिनानि दश वर्जयेत् ।
आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे ॥

ग्रन्थान्तरे—

व्रते जन्मत्रिखारिस्थो जीवोऽपीष्टोऽर्चनात्सकृत् ।
शुभातिकाले तुर्याष्टव्ययस्थो द्विगुणार्चनात् ॥
*शुद्धिर्नैव गुरोर्यस्य वर्षे प्राप्तेऽष्टमे यदि ।

*जन्ममासे इति । जन्ममासश्च—

आरभ्य जन्मदिवसं यावत्रिंशद्दिनं भवेत् ।
जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु ॥

इति द्रष्टव्यः । यदि जन्ममासस्त्यक्तुं न शक्यते तदाऽऽह —*जातमिति । *तिथौ जन्मतिथौ, भे जन्मनक्षत्रे । *विपरीतदले उत्तरभागे । *शुद्धिरिति । शुद्धिर्गोचराष्टकवर्गाभ्याम् । वसन्तः प्रशस्तः,

मृगकुम्भगते भानौ मध्यमं, मीनमेषयोः ।
उत्तमं, गोयुगस्थेऽर्के ह्यधमं चोपनायनम् ॥

चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ॥
जन्मभादष्टमे सिंहे नीचे वा शत्रुभे गुरौ ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥

नारदः–

बालस्य बलहीनोपि शान्त्या जीवो बलप्रदः ।
यथोक्तवत्सरे कार्यमनुक्ते चोपनायनम् ॥

शान्तिश्चाग्रे वक्ष्यते । ज्योतिर्निबन्धे नृसिंहः–

तृतीया पञ्चमी षष्ठी द्वितीया चापि सप्तमी ।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिताः ॥
*धर्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा ।
शुक्लत्रयोदशीं केचिदिच्छन्ति मुनयस्तथा ॥

टोडरानन्दे वसिष्ठः–

नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।
मेखलाबन्धने शस्तं चौले वेदव्रतेऽष्वपि ॥
प्रशस्ता प्रतिपत्कृष्णे न पूर्वा परसंयुता ॥

*एतदतीतकालस्यार्तस्य बटोरुपनयनविषयम् ।

---

इति बृहस्पत्युक्तेः । तत्रापि मीनार्कयुक्तश्चैत्रः प्रशस्ततमः, अनेकनिषेधापवादकत्वात् । अत्र—

शुक्रे नष्टे तथा जीवे दुर्बले चन्द्रभास्करे ।
तदोपनयनं कार्यं चैत्रे मीनगते रवौ ॥
जीवभार्गवयोरस्ते सिंहस्थे देवतागुरौ ।
मेखलाबन्धनं शस्तं चैत्रे मीनगते रवौ ॥

इत्यादयोऽपि द्रष्टव्याः । *धर्मकामौ दशमीत्रयोदश्यौ,

कृष्णे पञ्च प्रशंसन्ति तिथयश्चोपनायने ।

इति वचनात् पञ्चमीपर्यन्ताः प्रशस्ताः, षष्ठ्यादयोऽप्रशस्ता इत्यर्थः ।

*एतदिति । इदमुपलक्षणम्, प्रायश्चित्तार्थोपनयनविषयतायाः

**प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे विधौ ।**
**चन्द्रे बलयुते लग्ने वर्षाणामपि लङ्घने ॥**

**इति व्यासोक्तेरित्याहुः । *एवं सप्तम्यपि, तस्य गलग्रहत्वोक्तेः । बृहस्पतिः—**

**शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।**

**तथा—**

**मिथुने संस्थिते भानौ ज्येष्ठमासो न दोषकृत् ।**

---

अपि "स्वाध्यायवियुजो घस्राः" इत्यत्र वक्तव्यत्वात् । प्रतिपत्पदं सप्तम्यादेरुपलक्षणमित्याह—*एवमिति ।*सप्तम्यपीति । अपिना त्रयोदशीसमुच्चयः, तस्यापि गलग्रहत्वात् । अतीतकालस्येत्यादि वर्त्तते । एवं "माघादिमासषट्केषु" इति "षष्ठ आषाढो माघादिशुक्रान्तकपञ्चमासाः" इत्यनेन विरोधात्, पञ्चम्यन्तकृष्णपक्षश्च "आपूर्यमाणपक्षे" इत्यनेन विरोधादधार्यविषयकः । एवं 'सार्वकालमेके विवाहम्' इति चाधार्यकन्याविषयकमिति बोध्यम् । यत्तु—

चैत्रे कृष्णद्वितीयायां तिसृष्वेवाष्टकासु च ।
मार्गे च फाल्गुने चैव आषाढे कार्तिके तथा ॥

इति अनध्यायवचनं, तत्र कृष्णद्वितीयायामित्यनुषङ्गाच्चैत्रादिपञ्चकृष्णद्वितीयालाभात्तदन्यकार्तिकमार्गशीर्षयोरुपनयनाभ्यनुज्ञा वैश्यपरा,

विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे ।
दक्षिणे च विशां कार्या नानध्यायेऽपि संक्रमे ॥

इति वचनात् । विप्रक्षत्रिययोः प्रायश्चित्तार्थोपनयनपरा च,

अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत् ।

इति वचनात् । अनध्यायेऽपीत्यपिना वैश्योपनयनसंग्रहात् । एवं च

रात्रिभागः समाख्यातः खरांशोर्दक्षिणायने ।
व्रतबन्धादिकं तस्मिंश्चूडाकर्म च वर्जयेत् ॥

मदनरत्ने नारदः—

*विनर्तुना *वसन्तेन कृष्णपक्षे गलग्रहे ।
अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ॥

अपराह्णस्त्रेधाविभक्तदिनतृतीयांश इत्युक्तं तत्रैव । *वसन्ते गलग्रहो न दोषायेत्यर्थः । नारदः-

कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् ।
त्रयोदशीचतुष्कं च अष्टावेते गलग्रहाः ॥

---

इति दक्षिणायननिषेधो न तत्र प्रवर्त्तते । एवं—

चन्द्रे बलयुते लग्नाच्छुभभावे शुभे स्थिते ।
चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके ॥

इति च अधार्यविषयं प्रायश्चित्तोपनयनविषयं चेति रामचन्द्रः ।

*विनर्तुनेति । वसन्तेन वर्णभेदेन विहितेन तत्तदृतुना विना कृष्णपक्षे गलग्रहे उपनीत इति अन्वयफलमाह—*वसन्ते इति । वसन्ते गलग्रहो न दोषायेत्येकोऽन्वयः । वसन्तपदं च तत्तद्वर्णविहिततत्तदृतुपरम् । ऋत्वन्तरीयशुक्लपक्षे च गलग्रहो न दोषायेत्यपरः । अपराह्ण इति ।

ऊर्ध्वं सूर्योदयात्पूर्वं मुहूर्तानां तु पञ्चकम् ।
पूर्वाह्णः प्रथमः प्रोक्तो मध्यान्हस्तु ततः परम् ॥
अपराह्णस्ततः प्रोक्तो मुहूर्तानां तु पञ्चकम् ॥

इति स्कान्दात् । तत्र पूर्वाह्णो मुख्यः, मध्याह्नोऽनुकल्पः ।

सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे तु गर्हितम् ॥

इति ज्योतिर्मानवात् । एवं च मध्याह्नोऽनुकल्पतयाऽधार्योपनये नवाब्दाद्युपनये वोपादेयः । गौणाब्दमपेक्ष्य मुख्याब्दस्य न्याय्यतया व्रात्यस्तोमादिगुरुप्रायश्चित्तभयेन च तत्र गौणदिनभागस्योपादानात् । केचित्तु अष्टमाब्दादावपि गौणतया मध्याह्न-

वसिष्ठः—

पापांशकगते चन्द्रे अरिनीचस्थितेऽपि च ।
*अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥
*अनध्यायस्य पूर्वेद्युस्तस्य चैवापरेऽहनि ।
व्रतबन्धं विसर्गं च विद्यारम्भं न कारयेत् ॥

---

मङ्गीकुर्वन्ति । यत्र पूर्वाह्णादौ गुरुशिष्यविरोधनिवारकं निरीक्षणं जातम्, उपनयनं तु तदुत्तरमुहूर्तादिव्यवधानेन मध्याह्ने, तत्र पूर्वाह्णोपनयनभ्रमो न कार्यः । एवं क्रमेण यद्यपराह्णं जातं तदा पुनः संस्कारः कार्य इति । *अनध्याये चेति । इदमनध्यायपदं नित्यनैमित्तिकानध्यायपरम् । अनध्यायपदस्य नित्यानध्यायपरत्वे नैमित्तिकानध्याये, नैमित्तिकानध्यायपरत्वे च नित्यानध्यायेऽपूर्वोपनयापत्तेः ।

नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।

इति नैमित्तिकानध्यायानां कृष्णप्रतिपदादिनित्यानध्यायानां चाधार्योपनयनपरतेव 'स्वाध्यायवियुजो घस्राः' इति वाक्यात् प्रायश्चित्तोपनयनपरताऽपि, न त्वपूर्वोपनयनपरता । अन्यथा नैमित्तिकानध्याये प्रतिपदि चापूर्वोपनयनापत्तेः । एतेन पुनःसंस्कारविधिगतानध्यायपदं नित्यानध्यायमात्रपरं, न त्वनित्यानध्यायपरमपीत्यपास्तम् । पुनःसंस्कारः पुनरुपनयनमेव न जातकर्मादि उपेतपूर्वस्य विशेषणोपनयनस्यैवाचार्येण विधानात् । *अनध्यायस्येति । इदमनध्यायपदं नित्यानध्यायपरं न त्वनित्यानध्यायपरम्, तेषामनित्यत्वेन नित्यानित्यसंयोगविरोधात् । अत्रानध्यायात्परं दिनं द्वितीयाभिन्नं ग्राह्यम्, द्वितीयाया विहितत्वात् । ननु गलग्रहेषु [illegible] अनध्यायोत्तरदिननिषेधो व्यर्थः । मैवं, निषेधद्वयेन दोषाधिक्यकल्पनात् । यद्वा नवमी यत्र पञ्चमुहूर्त्ता ततो न्यूना वा, तत्र गलग्रहनिषेधो नवम्यनन्तरं न प्रवर्त्तते, "निषेधः कालमात्रके"

राजमार्तण्डः—

*आरम्भानन्तरं यत्र प्रत्यारम्भो न सिध्यति।
गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम् ॥

ज्योतिर्निबन्धे-

अष्टकासु च सर्वासु *युगमन्वन्तरादिषु।
अनध्यायं प्रकुर्वीत तथा सोपपदास्वपि ॥

सोपपदास्तु स्मृत्यर्थसारे--

सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥

एवं प्रदोषादिनं वर्ज्यम्। प्रदोषस्वरूपमाह गोभिलः-

*षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका।
प्रदोषमिह कुर्वीत तृतीया तूनयामिका ॥

---

इत्युक्तेः। तत्रायं निषेधः सार्थकः। *आरम्भेति। बह्वृचाभिन्नानामुपनयनादिने वेदारम्भः। तदनन्तरदिनेऽनध्यायवशात्प्रत्यारम्भो न जायते इत्यर्थः। अनेन छलेन सप्तमीत्रयोदश्यावुक्तौ। *युगेति।

"वैशाखमासस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥
एता युगाद्याः कथिताः पुराणे" ॥ इति।
"आश्वयुक्शुक्लनवमी द्वादशी कार्तिके तथा।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा।
आषाढस्यापि दशमी तथा माघस्य सप्तमी।
श्रावणे चाष्टमी कृष्णा तथाऽऽषाढे च पूर्णिमा।
कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ॥
मन्वन्तरादयश्चैताः ॥" इति।

*षष्ठी चेति।

ज्योतिर्निबन्धे व्यासः—

*या चैत्रवैशाखसिता तृतीया
माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णे (१)द्वितीयोपनये प्रशस्ता
प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥

*अत्रापि कृष्णप्रतिपद्वज्ज्ञेयम् । यत्तु बृहद्गार्ग्यः—

आदित्यास्तमयादूर्ध्वमर्द्धरात्रात्त्रयोदशी ।
सप्तमी च चतुर्थी च नवनाडीषु चेद्विशेत् ॥
तत्र किञ्चन नाध्येयं प्रदोषे पारिभाषिके ॥

इति निष्कर्षानुरोधेन षष्ठ्यादिः सायंकालान्तं ग्राह्यः । तथा च बृहन्मनुः—

चतुर्थ्यां च त्रयोदश्यां सप्तम्यामर्द्धरात्रतः ।
अर्वाक् नाध्ययनं कुर्याद्यदीच्छेत्तस्य धारणम् ॥

स्मृत्यर्थसारे—

चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने ।
नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥
अर्द्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके ॥ इति ।

वक्ष्यति चाग्रे 'रात्रौ यामत्रयादर्वाक्' इति । *येति । चैत्रशुक्लतृतीयाया रथसप्तम्याश्च मन्वादित्वेन वैशाखशुक्लतृतीयाया युगादित्वेन फाल्गुनकृष्णद्वितीयायाश्चातुर्मास्यद्वितीयात्वेन निषेधे प्राप्तेऽयं प्रतिप्रसवः । नन्वस्याऽप्रशस्ता इति च्छेदान्निषेधपरता युक्तेतिचेत् ? न,

चातुर्मास्यद्वितीया या तृतीया चाक्षया तथा ।
उपनीतो यतः श्रीमान् विद्यावान् धनवान् भवेत् ॥

इति वासिष्ठात् । *अत्रापीति । वक्ष्यमाणप्रायश्चित्तार्थोपन-

(१) 'तृतीयो' इति पाठान्तरम् ।

अनध्याये प्रकुर्वीत यस्तु नैमित्तिको भवेत् ।
सप्तमी माघशुक्ले तु तृतीया चाक्षया तथा ॥
बुधत्रयेन्दुवाराश्च शस्तानि व्रतबन्धने ॥ इति,

तत् प्रायश्चित्तार्थोपनयनविषयम् ।

*स्वाध्यायावियुजो घस्राः कृष्णप्रतिपदादयः ।
प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः ॥

इति तेनैवोक्तेरिति निर्णयामृतकालादर्शौ । यद्यपि 'अथोपेतपूर्वस्य' इत्युक्त्वा 'अनिरुक्तं परिदानं कालश्च' इत्याश्वलायनेन पुनरुपनयने कालनियम उक्तस्तथापि निमित्तान्तरमेव सः । तदानीमकरणे तु पूर्वोक्तकालो ज्ञेयः । प्रतिवेदमुपनयने कालानियम इति तु युक्तम् । गर्गः—

ग्रहे रवीन्द्वोरवनिप्रकम्पे
केतूद्गमोल्कापतनादिदोषे ।
व्रते *दशाहानि वदन्ति तज्ज्ञा-
स्त्रयोदशाहानि वदन्ति केचित् ॥

संकटे तु चण्डेश्वरः—

दाहे दिशां चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे च ।
केतौ तथोल्कांशुकणप्रपाते त्र्यहं न कुर्याद्व्रतमङ्गलानि ॥

तत्रैव—

वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।

---

यनेऽपीत्यर्थः । *स्वाध्यायवियुजो घस्राः स्वाध्यायवर्जितदिनानि । *दशाहानीति । तानि च—

चन्द्रसूर्योपरागे तु त्र्यहं प्रागशुभं भवेत् ।
सप्ताहमशुभं पश्चात्स्मृतं ग्रहणसूतकम् ॥

इति गर्गोक्तानि । स्मृत्यन्तरे—

सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् ।

न दोषो यजुषां सोपपदास्वध्ययनेऽपि च ॥

हेमाद्रौ ज्योतिषे—

हस्तत्रये पुष्यधनिष्ठयोश्च
पौष्णाश्विसौम्यादितिविष्णुभेषु ।
शस्ते तिथौ चन्द्रबलेन युक्ते
कार्यौ द्विजानां व्रतबन्धमोक्षौ ॥

ज्योतिर्निबन्धे नारदः—

श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च ।
विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने ॥

बृहस्पतिः—

त्रिपूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे ।
त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तमं ह्युपनायनम् ॥

ज्योतिर्निबन्धे—

*पूर्वाहस्तत्रये सार्पश्रुतिमूलेषु बह्वृचाम् ।
यजुषां पौष्णमैत्रार्कादित्यपुष्यमृदुध्रुवैः ॥
सामगानां हरीशार्कवसुपुष्योत्तराश्विभैः ।
धनिष्ठादितिमैत्रार्केष्विन्दुपौष्णेष्वथर्वणाम् ॥

---

त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेकं तु वर्जयेत् ॥
पञ्च दिनानि वासिष्ठास्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् ।
च्यवनाचार्यस्य मते पञ्चमुहूर्त्तं दूषयति राहुः ॥ इति ।

*पूर्वाहस्तत्रये पूर्वाहस्तयोस्त्रये—

मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा ।
ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥

( शैवम् आर्द्रा । )

पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे ।
ध्रुवेषु च प्रशस्तं स्याद् यजुषां मौञ्जिबन्धनम् ॥

राजमार्तण्डस्तु *ब्राह्मणस्य पुनर्वसुं निषेधति ।

ताराचन्द्रानुकूलेषु ग्रहाब्देषु शुभेष्वपि ।
पुनर्वसौ कृतो विप्रः पुनःसंस्कारमर्हति ॥

ज्योतिर्निबन्धे नारदः—

सर्वेषां जीवशुक्रज्ञवाराः प्रोक्ता व्रते शुभाः ।
चन्द्रार्कौ मध्यमौ ज्ञेयौ सामबाहुजयोः कुजः ॥
शाखाधिपतिवारश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते ॥

शाखाधिपाश्च रत्नसंग्रहे—

ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ।
*जीवसितौ विप्राणां, क्षत्रस्यारोष्णगू, विशां चन्द्रः ॥

---

पुष्यत्रासवहस्ताश्विशिवविष्णूत्तरात्रयम् ।
प्रशस्तं मेखलाबन्धं बटूनां सामगायिनाम् ॥
मृगनेत्राश्विनीहस्तरेवत्यदितिवासवम् ।
अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥ इति ।

*ब्राह्मणस्येति । अत्र हेमाद्र्यादिधृतानां पुनर्वसूपनयविधा-शुक्लसामान्यवाक्यानां व्यवस्थावाक्यानां च द्विजपदस्वारस्येन या-जुषादिपदस्वारस्येन च याजुषाथर्वणक्षत्रियवैश्यपरतैव । राजमा-र्त्तण्डवाक्यगतविप्रपदवशात्तु सर्वेषां ब्राह्मणानामुपनयने पुनर्वसुनि-षेध इति भावः । तुना चारुचिः, सा च विप्राणामपि पुनर्वसूपनय-नाचारात्पुनर्वसुः पुनरुपनयनकाल इत्यर्थोपगमादिति । न च तादृ-शक्षत्रियादौ मानाभावः, उपनीतानां क्षत्रियादीनामपि ब्राह्मण-वत् 'स्वाध्यायोऽध्येतव्यः' इति विधिना परम्परागतस्वस्वशाखा-ध्ययनविधानात् ।

*जीवेति । वर्णाधिपाः ।

इति । पारिजाते बृहस्पतिः—

बह्वृचानां गुरोर्वारे यजुर्वेदजुषां बुधे ।
सामगानां धरासूनोरथर्वविदुषां रवेः ॥

अत्र लग्नशुद्ध्यादि दैवज्ञेभ्यो ज्ञेयम् । विस्तरभयान्नोच्यते ।

लल्लः—

व्रतेऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति ।
तद्दिने स्यादनध्यायो व्रतं तत्र *विवर्जयेत् ॥

ज्योतिर्निबन्धे—

*नान्दीश्राद्धं कृतं चेत्स्यादनध्यायस्त्वकालिकः ।
तदोपनयनं कार्यं वेदारम्भं न कारयेत् ॥

एतद् बह्वृचातिरिक्तानाम्, *तेषां तद्दिने वेदारम्भाभावात् । अतस्तेषामुपनयनं *न भवत्येव । ऐतरेयोपनिषदि—"मृगादिज्येष्ठान्तं वर्षर्तुः, तं विना वर्षादौ त्रिरात्रमनध्यायः" इति वेदभाष्ये उक्तम् । एतच्च प्रातःस्तनिते, सायं स्तनिते तु दिवैव चरुं श्रपयित्वा सायंसन्ध्योत्तरं

---

*विवर्जयेदिति । विशेषेण वर्जयेदित्यर्थः । पूर्वसन्ध्यागर्जने दोषोऽधिक इति भावः । *नान्दीश्राद्धमिति । बह्वृचातिरिक्तानां यजुर्वेदिनाम् । *तेषां बह्वृचानाम् । एवमग्रेऽपि । *न भवत्येवेति । लल्लेन निषेधात् । कौस्तुभे तु कार्यमित्यन्तं सावधारणं, "वेदारम्भं न कारयेत्" इति निषेधस्तु संभवत्प्राप्तिकविशेषविषय इत्युक्तं, तत्तु नूतनोपनयनादुत्तरब्रह्मचारलाभाय एवकारपूरणं, न तु तज्जन्यबाटुसंस्कारलाभायेति वदन्ति । आश्वलायनानां तु तद्दिन उपनयनाकरणेऽपि वृद्धिश्राद्धदिनाद्दिनषट्कमध्ये मुहूर्तान्तरसत्त्वे तेनैव, ऊर्ध्वं मुहूर्ते च वृद्धिश्राद्धान्तरेणैवोपनयनं यथाकालं कार्यमिति प्रयोगरत्ने । प्रातःस्तनिते उपनयनकरणे तु पुनरुपनयनं कार्यम् ।

अनध्याये कृतो विप्रः पुनःसंस्कारमर्हति ।

होमं कुर्यात् ।

न सन्ध्यागर्जिते काले न वृष्ट्युत्पातदूषिते ।
ब्रह्मौदनं पचेदग्नौ पक्कं चेन्न निवर्तते ॥
ब्रह्मौदनं पचेदग्नौ पक्कमन्नं न दुष्यति ॥

इति संग्रहोक्तेः इति प्रयोगरत्ने भट्टचरणाः ॥

अत्र शान्तिरप्युक्ता नृसिंहप्रसादे—

*ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं यदि ।
तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् ॥
तस्य शान्तिप्रकारं तु वक्ष्ये शास्त्रानुसारतः ।
प्रधानं पायसं साज्यं द्रव्यं शान्तियजौ भवेत् ॥
सूक्तं बृहस्पतेर्विद्वान्पठेत्प्रज्ञाविवृद्धये ।
गायत्री चैव मन्त्रः स्यात्प्रायश्चित्तं तु सर्पिषा ॥
धेनुं सवत्सकां दद्यादाचार्याय पयस्विनीम् ।
ब्राह्मणान्भोजयेत्पश्चात्ततो ब्रह्मौदनं चरेत् ॥

उपनयने चाधिकारिणो माधवीये वृद्धमनुनोक्ताः—

---

इति वाक्यात् । उपनयनचरुश्रपणयोरन्तरानध्याये पुनरुपन-यनम् इति प्रयोगरत्ने भट्टाः । ते त्वग्रिमां शान्तिं न मन्यन्ते ।

*ब्रह्मौदनेति । अथैतत्प्रयोगः—अस्योपनीतस्यामुकशर्मणो ब्रह्मौदनविधेः प्राग्गर्जितादिसूचिताध्ययनविघ्ननिरसनद्वारा श्रीपर-मेश्वरप्रीत्यर्थं शान्तिं करिष्ये इति सङ्कल्प्य गणेशार्चनस्वस्तिवाचने कृत्वा आचार्यवरणादि, स्थण्डिलेऽग्निं प्रतिष्ठाप्य चक्षुषी आज्येनेत्य-न्ते अत्र प्रधानं सवितारम् अष्टोत्तरशतमाज्यपायसाहुतिभिः शेषेणे-त्यादिहस्तेन गायत्रीमन्त्रेण १०८ प्रधानहोमः । तत आचार्यो यस्त-स्तम्भेति बृहस्पतिसूक्तं पठेत् । ततः स्विष्टकृदादिकर्मशेषं समापये-त् । ततो यजमान आचार्याय सवत्सां धेनुं दद्यात् । अष्टोत्तरशतं ब्रा-

पिता पितामहो*भ्राता *ज्ञातयो *गोत्रजा *ऽग्रजाः ।
उपायनेऽधिकारी स्यात्पूर्वाभावे परः परः ॥

प्रयोगरत्ने—

पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥

पितेति विप्रपरं न क्षत्रियादेः । तेषां पुरोहित एव उपनयनस्य दृष्टार्थत्वात, तेषां चाध्यापनेऽनधिकारात् । *अत्र पितृव्यस्य ज्येष्ठभ्रात्रभावेऽधिकारः ।

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

---

ह्मणभोजनं सङ्कल्प्य ब्रह्मौदनं पचेदिति । *भ्राता पितुरेव अग्रिमवाक्यात् न तु सोदरः, तस्याग्रिमवाक्येऽन्ते निवेशात । *ज्ञातयः असगोत्रसपिण्डाः मातामहादयः। *गोत्रजाः सगोत्रसपिण्डाः पितृव्यपुत्राद्याः। गोत्रजाऽग्रजा इति सन्धिरार्षः। *अग्रजाः बटोरधिकवयसः। एतच्च पितृव्यमारभ्य सर्वत्र विशेषणम् । पितृव्याभावे एव ज्येष्ठभ्रातुरधिकारः "तदभावे तु सोदरः" इत्युक्तेः। मतान्तरमाह—*अत्रेति। इदं हि मतं कौस्तुभकृतामपि विमतम्। याज्ञवल्क्यवचनेऽपि पितृव्यात्पूर्वत्वाप्रतीतेश्च । मयूखकृद्भिस्तु तद्वचनस्य भगिनीविवाहविषयकत्वमुक्तम्। केचित्तु अविभक्तस्य भ्राता, विभक्तस्य सोदर इत्याहुः। तन्न, "तदभावे तु सोदरः" इत्यनेन विरोधात् । तदभावेपीति पाठं कल्पयित्वा अपिशब्दात्तत्सत्त्वसमुच्चय इति तु केचित् । उक्ताऽधिकार्यभावे तु व्यासः—

वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् ।
स्वशाखीयमनालस्यं विप्रं कर्तारमीप्सितम् ॥

शौनकः—

कुमारस्योपनयनं श्रुताभिजनवृत्तवान् ।
तपसा धूतनिःशेषपाप्मा कुर्याद् द्विजोत्तमः ॥ इति ।

इति याज्ञवल्क्योक्तेः । तेनेदमविभक्तपरम्, पूर्वं तु विभक्तपरम् । मातृ रजोदोषे तु प्रागुक्तम् ।

अथ षण्ढमूकादीनां विशेषः । प्रयोगपारिजाते ब्राह्मे—

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।
*तस्माच्च *षण्ढबधिरकुब्जवामनपङ्गुषु ॥
जडगद्गदरोगार्तशुष्काङ्गविकलाङ्गिषु ।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्यु*र्यथोचितम् ।
मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते ॥
कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ।
तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा ॥
संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु ।
उपनेयांश्च विधिवदाचार्यस्य समीपतः ॥
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ।
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत् ॥

---

*तस्माच्चेति । अस्य 'तदपत्यं च संस्कार्यम्' इत्यन्तं सम्बन्धः । तस्मादुक्तश्रुत्या ब्राह्मणत्वात् । *षण्ढेति । अन्धादीनामुपलक्षणम् । *यथोचितम् । अशक्याङ्गं विहाय । अन्यथा मत्तोन्मत्तौ संस्कार्यौ । संस्कारमन्त्रा उपनयस्य वासःपरिधानादौ ये मन्त्रास्तानाचार्य एव पठेत् । होमादीनाचार्य एव कुर्यात् । आचार्यसमीपम् अग्निसमीपं वा नयनं सावित्रीवाचनं वा, एषां पक्षाणामन्यतमेन प्रधानसिद्धिरित्यर्थः । मूकबधिरादेः सावित्रीवाचनासम्भवात् स्पृष्ट्वा सावित्रीजपः कार्यः । वस्तुतस्तु आचार्यः स्वसमीपमग्निसमीपं वा बटुमानीय सावित्रीं वाचयेत्, अथवा बटुं संस्पृश्य सावित्रीं जपेदित्यर्थः । तथाचाचार्यसमीपनयनाङ्गको गायत्र्युपदेशः प्रधानम्, मूकादेस्तु तादृशो गायत्रीजप इति । एतेषां विवाहाभावात्तदनुजस्य न परिवेद-

एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ॥ इति ।

स्मृत्यर्थसारेऽप्येवम् । *कुण्डगोलकयोः संस्कार्यत्वं श्राद्धे निषेधश्च *क्षेत्रजपुत्रविषयः । *अन्यस्य "विप्रास्त्वेष विधिः स्मृतः" इति वचनात् अब्राह्मण्येनोपनयनाद्यप्राप्तेरित्यपरार्कः ।

उपनयनं च कुमारं भोजयित्वा कार्यम् "प्रागेवैनं तदहर्भोजयन्ति" इति मदनपारिजाते गोभिलोक्तेः । गायत्र्युपदेशश्चोत्तरतोऽग्नेः कार्यः "उत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरोऽधीहि भोः" इति शाङ्खायनसूत्रोक्तेः । यद्यपि कात्यायनेन "अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखाय" इत्युक्त्वा "दक्षिणत-

---

नदोष इति भावः । *कुण्डेति ।

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥

इत्यस्य वेत्तृभ्यः सवर्णेभ्यः अनिन्द्यविवाहोढायां सवर्णायां जातः तत्समानजातीय इत्यर्थः "विप्रास्त्वेष विधिः स्मृतः" इत्युपसंहारे विप्रपदोपादानात् । *क्षेत्रजेति । सवर्णजेत्यर्थः । *अन्यस्येति । तेषां शूद्रधर्मेषु द्विजशुश्रूषादिषु साधारणधर्मेष्वहिंसादिषु चाधिकारः । वस्तुतस्तु कुण्डगोलककानीनादीनां विज्ञानेश्वरमते असवर्णत्वमेव । नन्वेवं कुण्डगोलकयोरब्राह्मण्ये श्राद्धे प्रतिषेधो व्यर्थः, किञ्च ब्राह्मण्यां ब्राह्मणादुत्पन्नस्याब्राह्मण्यमपि विरुद्धम् 'तज्जातीयात्तज्जातीयायामुत्पन्नस्य तज्जातीयत्वम्' इति न्यायात् ; यथा गवि गोरुत्पन्नो गौरिति । मैवम्, लिङ्गादिविरहदर्शनेन तस्याब्राह्मणत्वाद् अत्यन्ताप्राप्तप्रतिनिषेधवच्छ्राद्धे तन्निषेधः । उक्तन्यायश्च प्रत्यक्षगम्यमनुष्यत्वगोत्वादिष्वेव न तु ब्राह्मणत्वादौ तस्य स्मृतिगम्यत्वादिति ।

स्तिष्ठत आसीनाय वैके" इति विकल्प उक्तः, तथापि कातीयानामेव सः। बह्वृचानां तूत्तर एव *वेदैक्यात्।

उपनयनं च कुमारं भोजयित्वा कार्यं "प्रागेवैनं तदहर्भोजयन्ति" इति गोभिलोक्तेः। उत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायेत्येकः पक्षः। दक्षिणतोऽग्नेस्तिष्ठत आसीनाय वेत्यपरः पक्षः। एके इति पूजार्थम्।

*वेदैक्यादिति। वस्तुतस्तु गायत्र्युपदेशोऽग्नेरुत्तरत इत्येतच्छाखान्तरीयाणामेव, न त्वाश्वलायनानां, तेषां नारायणवृत्तौ प्रयोगपारिजाते जीर्णप्रयोगरत्नपुस्तके च गायत्र्युपदेशार्थमग्नेरुत्तरतो गमनस्यानुक्तेः। तथाहि प्रथमतः अवक्षरणार्थं वटुनाऽग्नेरुत्तरदेशे गन्तव्यम् "समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते पुरस्तात्प्रत्यङ्मुख इतर:" इत्याश्वलायनोक्तेः। अवक्षारणानन्तरम् अग्निकार्यं गुरुदक्षिणत एव स्वस्थाने उपविश्य कार्यम्।

ततः पूर्ववदासीत गुरुः शिष्योऽपि चात्मना।
व्यवधानं परिहरन्नग्नेर्गत्वाऽन्तिकं गुरोः॥
आसित्वा दक्षिणे तस्य वह्निं परिसमुह्य च॥

इति शौनकोक्तेः। आश्वलायनः—'अग्नये समिधम्' इत्यादि 'हरस्वी भूयासम्' इत्यन्तमग्निकार्यमुक्त्वाऽऽह "जान्वाच्योपसंगृह्य ब्रूयादधीहि भोः सावित्रीं भोः अनुब्रूहि" इति। शौनकोऽपि—

मयि मेधां मयीत्याद्यैः षड्भिर्मन्त्रैर्विभावसुम्।
उपतिष्ठेद् गुरुरपि अग्नेः पश्चिमभूतले॥
आसीत प्राङ्मुखः शिष्योऽप्याचार्याभिमुखो भवेत्।
भूतले दक्षिणं जानुं पातयित्वाऽभिवादयेत्॥ इति।

जयन्तोऽप्याह—"अथोभयोरप्यग्नेः पश्चाद्यथोपदेष्टुं शक्यते तथोपविशत्याचार्यः" इति। जीर्णप्रयोगरत्नेऽपि "मयि-मेधामित्याद्यैः षण्मन्त्रैरग्न्युपस्थानं कृत्वा दक्षिणं जान्वाच्य विधि-

भिक्षायां विशेषमाह कात्यायनः *"मातरमेवाग्रे भिक्षेत"। पराशरमाधवीये—

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत्॥

अथ संस्कारलोपे शौनकः—

*आरभ्याधानमाचौलात्कालेऽतीते तु कर्मणाम्।
व्याहृत्याग्निं तु संस्कृत्य हुत्वा कर्म यथाक्रमम्॥

वदुपसंगृह्याचार्यं ब्रूयात्—अधीहि भोः" इत्याद्युक्तम्। तस्मादाश्वलायनस्योत्तरतो गायत्र्युपदेशार्थं गमनं प्रमाद एवेति। *मातरमेवेति। यद्यपि 'अप्रत्याख्यायिनमग्रे भिक्षेत' इति सूत्रे पुंभिक्षाया एव प्राथम्यं प्रतीयते तथापि एतत्कात्यायनवाक्याद्वाक्यान्तराच्च मातृभिक्षाया एव प्राथम्यम् अविशेषप्रवृत्तस्य सूत्रस्य स्त्रीभिक्षाप्राथम्येऽपि अविरोधात्। यद्यपि "भिक्षां भवान् ददातु अनुप्रवचनीयमिति वा" इति सूत्रे भिक्षाया भवन्मध्यतोक्ता तथापि "भवत्पूर्वां ब्राह्मणो भिक्षेत, भवन्मध्यां राजन्यः, भवदन्त्यां वैश्यः" इति वचनात्

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।
ब्राह्मणक्षत्रियविशां भिक्षा चर्या यथाक्रमम्॥

इति याज्ञवल्क्योक्तेश्च, "भवत्पूर्वामिति शास्त्रान्तरोक्तो विधिर्द्रष्टव्यः" इति वृत्तिग्रन्थाच्च भवत्पूर्वकतैव। एवं च सूत्रे कारिकायां यद् भवन्मध्यत्ववचनं, तत् क्षत्रियपरम्। अथवा, 'अनुप्रवचनीयभिक्षायाम् अप्रत्याख्यायिनम्' इत्यादिसूत्रोक्तायां भवन्मध्यतैव, अनुप्रवचनीयं भवान्ददात्विति पक्षान्तरे तथैवोक्तेः। अन्यथा वैरूप्यं स्यात्। भवत्पूर्वामित्यादिवृत्तिग्रन्थस्य याज्ञवल्क्यवचसां च सायंप्रातर्भिक्षापरत्वेनोपपत्तेरिति।

*आरभ्येति। गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलि-

एतेष्वेकैकलोपे तु पादकृच्छ्रं समाचरेत् ।
चूडायामर्धकृच्छ्रं स्यादापदि त्वेवमीरितम् ॥
अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेत् ॥

पारिजाते कात्यायनः—

लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विधीयते ।
प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत् ॥

स्मृत्यर्थसारे चैवम् । कारिकायां तु—

प्रायश्चित्ते कृतेऽतीतं लुप्तं कर्म कृताकृतम् ।

इत्युक्तम् ।

प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।
कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ॥ इति ।

*त्रिकाण्डमण्डने तु—

कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च ।
कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ॥

तत्र सर्वेषां तन्त्रेण नान्दीश्राद्धं कुर्यात्, देशकालकर्त्रैक्यात् ।

---

जातकर्मनामकर्मनिष्क्रमणान्नप्राशनचौलकर्मान्तनवसंस्काराणां प्रतिसंस्कारं समस्ताभिर्व्याहृतिभिरेकैकाज्याहुतिरूपं कालात्ययनिमित्तकप्रायश्चित्तं कुर्यात् । चौलातिरिक्तानां संस्काराणां प्रमादादकरणे प्रत्येकं पादकृच्छ्रं, चौलाकरणेऽर्द्धकृच्छ्रं, बुद्धिपूर्वकं चौलातिरिक्ताकरणे प्रत्येकमर्द्धकृच्छ्रं, चौलाकरणे कृच्छ्रं बटुना कारयेत् , ततश्चौलहोमः कार्य इत्यर्थः । लुप्तसंस्कारकरणपक्षं द्रढयति-*त्रिकाण्डेति । प्रायश्चित्तमात्रेण स्त्रीसंस्कारोत्पत्तौ मानाभावात, शिश्वभ्युदयार्थत्वाच्चेति भावः। एते च संस्कारा ज्येष्ठस्य कृत्वैव कनिष्ठस्य कार्याः, त्रिकाण्डमण्डनवचनस्तादृशाविषयेऽपि कालातीतेषु ज्येष्ठसंस्काररूपकार्येष्वित्यादिक्रमेण योजनासंभवात् ।

गणशः क्रियमाणानां मातॄणां पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

इति छन्दोगपरिशिष्टात् । *एतद्बहूनामपत्यानां युगपत्संस्कारकरणविषयमिति बोपदेवः । अतीतसंस्काराणां युगपत्करण इत्यन्ये । तत्रापि चौलस्योपनीत्या सहेति पक्षे उपनीतिदिन एवानुष्ठानं न पूर्वदिने, सहत्वस्य दिवसैक्ये सन्निकृष्टतरत्वात् । वृद्धाचारोऽप्येवम् ।

उपनीतिदिने मध्याह्नसन्ध्यामाह पारिजाते जैमिनिः—

यावद्ब्रह्मोपदेशस्तु तावत्संध्यादिकं च न ।
ततो मध्याह्नसन्ध्यादि सर्वं कर्म समाचरेत् ॥ इति ।

ब्रह्म गायत्री । यत्तु वचनम्—

उपायने तु कर्तव्यं सायंसन्ध्ये उपासनम् ।
आरभेद्ब्रह्मयज्ञं तु मध्याह्ने तु परेऽहनि ॥ इति,

तत् शाखान्तरविषयमिति पारिजातः । विकल्प इति युक्तं पश्यामः । उपनयनाग्निस्त्रिरात्रं *धार्यः 'त्र्यहमेतमग्निं धारयन्ति' इत्यापस्तम्बोक्तेः । बौधायनसूत्रे तु सदा धारणमप्युक्तम्—'उपनयनादिरग्निस्तमौपासनमित्याच-

---

ज्येष्ठे त्वकृतसंस्कारे गर्भाधानादिभिः क्वचित् ।
कनिष्ठो नैव संस्कार्य इति शातातपोऽब्रवीत् ॥

इति धर्मसारसिंधौ वचनाच्च । ज्येष्ठकनिष्ठपुत्रयोरुपनयने ज्येष्ठदुहितृकनिष्ठपुत्रयोश्च विवाहोपनयनयोः तपोऽग्निहोत्रमन्त्रेष्वित्यत्र वक्ष्यामः । पारिजाते—

एकमातृप्रसूतेषु कन्ये वा पुत्रकौ तयोः ।
सहोद्वाहं न कुर्वीत तथैव व्रतबन्धनम् ॥

*एतदिति । मतद्वयं नान्दीश्राद्धे निराकरिष्यामः ।

*धार्य इति । तदग्रे लक्षणे मेधाजननात्पूर्वकालीनाग्निकार्यस्य

क्षते, पाणिग्रहणादित्येके, नित्यो धार्योऽनुगतो निर्मन्थ्यः' इति । इदं जातारणिपक्षे । अन्यथा मन्थनासम्भवात् । ब्रह्मयज्ञे विशेषमाह तत्रैव जैमिनिः—

अनुपाकृतवेदस्य कर्तव्यो ब्रह्मयज्ञकः ।
वेदस्थाने तु सावित्री गृह्यते तत्समा यतः ॥ इति ।

*येषां तद्दिन एव वेदारम्भस्तेषां नेदमिति दिक् ॥

अथ ब्रह्मचारिधर्माः । याज्ञवल्क्यः—

*मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
*भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥

---

तत्रैवोक्तेः, अग्न्यन्तरे तस्य कर्तुमशक्यत्वात् । उपनेतोपनयनाज्याहुतिभिः पुनरग्निमुत्पाद्य तस्मिन्मेधाजननात्प्राक्कालीनमग्निकार्यं कारयित्वा मेधाजननं कुर्यात् । कटिसूत्रवस्त्राजिनोपवीतावक्षारणाग्निकार्यगायत्र्युपदेशादि तु पुनर्न भवति, बटुसंस्कारत्वात् । नाप्यनुप्रवचनीयः तस्योपनयनाङ्गत्वात् अग्निकार्यस्यानुप्रवचनीयाद् भूतपूर्वत्वात् ।

सायं सन्ध्याविधिं कृत्वा अथोपनयनानले ।
आधाय समिधं पूर्वं ततोऽन्वाधानपूर्वकम् ॥

इति शौनकोक्तेः । एवं च यत्र सायमग्निकार्यस्योत्तरं वा तदग्निनाशः तत्र तमुत्पाद्यैवानुप्रवचनीयहोम इति । अथ तत्प्रयोगः—प्रमादान्नष्टस्योपनयनाग्नेः पुनरुत्पत्तिविधिं करिष्ये । अन्वाधाने चक्षुषीवर्जमुक्त्वा पूर्ववदाज्यं संस्कृत्य 'अग्न आयूंषि' इति तिसृणामृषिदैवतच्छन्दांसि उक्त्वा नष्टस्योपनयनाग्नेः पुनरुत्पत्तिहोमे विनियोगः । अग्नआयूंषि इति तिसृभिः प्रजापते इति च हुत्वा स्विष्टकृदादि कुर्यादिति । *येषामिति । अनुपाकृतवेदस्येत्यस्य फलम् । *मधु क्षौद्रम् । शुक्तं निष्ठुरवाक्यम् ।

*भास्करेति । ब्रह्मचारिणः सदा सूर्यदर्शननिषेधः, स्नातक-

मनुः—

अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।

वर्जयेदिति प्रकृतम् । पारिजाते कौर्मे—

नादर्शं चैव वीक्षेत नाचरेद्दन्तधावनम् ।
गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत, न कामतः ॥

एतन्निषिद्ध*मध्वादिविषयम् , अन्यस्य गुरूच्छिष्टस्य सर्वदा प्राप्तेः । 'स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीयात्' इति वसिष्ठोक्तेः । ज्येष्ठभ्रातुरित्यपि ज्ञेयम् 'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यम्' इत्यापस्तम्बोक्तेः । गुरुपुत्रे तु स्मृत्यन्तरे उक्तम्—

गुरुवद् गुरुपुत्रः स्यादन्यत्रोच्छिष्टभोजनात् ।

प्रचेताः—

ताम्बूलाभ्यञ्जनं चैव *कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥

यमः—

मेखलामजिनं दण्डमुपवीतं च नित्यशः ।
कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥

---

स्य 'नेक्षेतोद्यन्तमादित्यम्' इत्यादिरुदितास्तमयगोचरो निषेध इति भेदः । ब्रह्मचारिणोऽभ्युदितास्तमयगोचरो निषेध इत्यन्ये ।

*मध्वादीति । मधु क्षौद्रम् । *व्याधीयीत व्याधिमान् स्यात् । एतच्च तदेकापनोद्ये व्याधौ ।

*कांस्यपात्रे इति । लोहमृन्मययोरपि "लोहे मृन्मये वा न भुञ्जीत" इति हारीतात् ।

स्त्रीणां तु प्रेक्षणालम्भात्ताभिः संकथनादपि ।

विपद्यते ब्रह्मचर्यमिति वर्त्तते । तत्र "प्रेक्षणालम्भने मैथुनशङ्कायाम्" इति गौतमोक्तेः पतिव्रतानां न निषेधः । आल-

अग्नीन्धनं भैक्ष्यचर्यामधःशय्यां गुरोर्हितम् ॥

*कुर्यादिति शेषः ।

मेखलामाह आश्वलायनः "तेषां मेखला मौञ्जी ब्राह्मण-

---

म्भः स्पर्शः । भाषणोपलक्षणमेतत् । *कुर्यादितीति ।

आसमालम्भनात् कुर्याव कृतोपनयनो द्विजः ।
भैक्षेण वर्त्तयेन्नित्यं नैकादी तु भवेद्व्रती ॥
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ।
न भैक्षं परपाकः स्यान्न च भैक्षं प्रतिग्रहः ॥
सोमपानसमं भैक्षं तस्माद् भैक्षेण वर्त्तयेत् ।
नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ॥
देवताभ्यर्चनं चैव संध्योपासनमेव च ।

इत्यर्थः । व्यासः—

जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि । इति ।

मनुः—

गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

मनुः—

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
गुरुपुत्रेषु पत्नीषु गुरोश्चै(१)वास्य बन्धुषु ॥
उन्मर्दनं तु गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥
अभ्यञ्जनं स्नापनं च गात्रोद्वर्तनमेव च ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥
मनसाऽपि न चोल्लङ्घ्या गुरोराज्ञा कथंचन ।
गुरुवद्गुरुपत्नीषु तत्पुत्रादिषु सर्वदा ॥

---

(१) 'गुरोश्चैव स्वबन्धुषु' इत्यपि पाठान्तरम् ।

स्य धनुर्ज्या क्षत्रियस्याऽऽवी वैश्यस्य" इति । आचार्यः—

त्रिवृता मेखला कार्या त्रिवारं स्यात्समावृता ।
तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः ॥

मनुः—

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥
मौञ्ज्यभावे तु कर्त्तव्या कुशाश्मन्तकबल्वजैः ॥

अत्र*प्रवरसंख्यानियम इति वृद्धाः ।

---

प्रत्यक्षे वा परोक्षे वा चरेत प्रथमाश्रमी ।
वेदोदितव्रतैरन्यव्रतानन्यान्न सञ्चरेत् ॥
न स्नायात्सर्वतीर्थेषु न भुञ्जीयादितस्ततः ।

तीर्थयात्रां न कुर्यात्,

भैक्षादन्यन्न भुञ्जीयादित्यर्थः ।
न भक्षयेच्च ताम्बूलं श्राद्धान्नं न च भक्षयेत् ॥

याज्ञवल्क्यः—

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥

एकमिति । एकसम्बन्धि अन्नम् । एकस्यान्नं न भक्षयेत्, किन्तु बहूनाम् । श्राद्धे त्वेकस्यापीत्यर्थः । अन्ये च ब्रह्मचारिधर्मा अन्यतो बोध्याः । *आवी अव्यूर्णाकृता । मनुः—

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ।
मौञ्ज्यभावे तु कर्त्तव्या कुशाश्मन्तकबल्वजैः ॥

चर्मसम्बद्धज्याधारणाय—मौर्वीति । मूर्वा तृणभेदः । ज्यायां त्रिवृत्त्वमस्ति, नास्ति, इति मतद्वयं बोध्यम् । मौञ्ज्यलाभे उक्तमेखलानामभावे क्रमेण कुशाश्मन्तकबल्वजा ग्राह्येत्यर्थः । *प्रवरेति ।

अथ दण्डाः। मनुः—

> ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ।
> पैप्पलौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः॥

एषामभावे गौतमः—"याज्ञियो वा सर्वेषां मूर्धललाट*नासा[ग्र]प्रमाणः" इति। अजिनमाहाश्वलायनः *"अहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम्" इति। यद्यप्यै*णेयशब्देन मृगीचर्मैवोच्यते "एण्या ढञ्" इति पाणिनिस्मृतेः,

> ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु।

इति अमरकोशाच ; तथापि*"कृष्णरुरुवस्तान्यजिनानि" इति शङ्खोक्तेः, "सर्वेषां वा रौरवम्" इति यमोक्तेश्च मृगचर्मणा सह विकल्पो ज्ञेयः। *वस्त्राजिनयोस्तु विक-

---

एकप्रवरस्य एको ग्रन्थिः, त्रिप्रवरस्य त्रयः, पञ्चप्रवरस्य पञ्च, सप्त-वेत्यर्थः। *बैल्वपालाशौ इत्यादिर्विकल्पः 'दण्डं प्रदाय' इत्येकत्वोक्तेः। *नासाग्रम् भ्रूमध्यम्।

*अहतेनेति।

> ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
> अहतं तद्विजानीयात्सर्वकर्मसु पावनम्॥

*एणी सबिन्दुर्मृगी। विकल्प इति। प्रावरणे वासः साधारणं, यदि तु न प्रावरणं तदा ब्राह्मणादीनामजिनानीत्यर्थः। *कृष्णेति। मनुः—

> कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः।
> वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि वा॥

वस्तः अजः। शाणेत्याद्यन्तरीयाणि। पारस्करः—'गव्यं वा वैश्यस्य सर्वेषां वा गव्यम्' इति। *वस्त्रेति। सर्वेषां वासोऽथवा ब्राह्मणादीनां यथाक्रममजिनानीत्यर्थः। गौतमः—"शाणक्षौमचीर-

त्पः "कार्पासं *वाऽविकृतम्" इति*गौतमोक्तेः ।

अथ यज्ञोपवीतम् । मनुः—

कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं*त्रिवृत् ॥

पारिजाते देवलः—

*कार्पासक्षौमगोवालशणवल्व*तृणोद्भवम् ।
यथासंभवतो धार्यमुपवीतं द्विजातिभिः ॥
शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके ।
आवर्त्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः ॥
अब्लिङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं *त्रिवृत् ।

---

कुतपाः सर्वेषां वासांसि अन्तरीयाणि" । शणविकारं शाणम् । अतसीविकारं क्षौमम् । श्वेतप(१)द इत्यन्ये । पश्चिमदिशि तृणभेदः क्षुमेति स्मार्त्ताः । दर्भादिनिर्मितं चीरम् । ऊर्णानिर्मितः कम्बलः कुतपः । चत्वार्येतानि सर्वेषां वासांसीत्यर्थः । स एव-"काषायमप्येके वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारीते इतरयोः" इति । वार्क्षमिति नियम्यते । वृक्षकषायेण रक्तं वार्क्षम् । इतरयोः क्षत्रवैश्ययोरित्यर्थः । *अविकृतम् अहतम् । *गौतमोक्तेरिति । ऐणेयेन वेति वाशब्दाच्च ।

*त्रिवृदिति ।

शणसूत्रमयं राज्ञो वैश्यस्याविकमुच्यते ॥

इत्युत्तरार्द्धम् । शणसूत्रमयं क्षौमम् । पैठीनसिः-*"कार्पासमुपवीतं ब्राह्मणस्य, क्षौमं राजन्यस्य, आविकं वैश्यस्य" इति । क्षौममिति । क्षुमा अतसी, पश्चिमस्यां दिशि तृणभेदो वा, तदुत्थमित्युक्तम् । तदसम्भवे त्वाह—*कार्पासेति । *तृणोद्भवमिति । तृणादिकमिति पाठे आदिना दर्भग्रहः । असम्भवतः असम्भवे । *त्रिवृदिति । वामावर्त्तवलितं त्रिगुणं कृत्वा दक्षिणावर्त्तवलितं

---

(१) श्वेत सदृशा इति घ पुस्तके पाठः ।

अप्रदक्षिणमावृत्य सावित्र्या त्रिगुणीकृतम् ॥
ततः प्रदक्षिणावर्तं समं स्यान्नवसूत्रकम् ।
त्रिरावेष्ट्य दृढं बद्ध्वा ब्रह्मविष्ण्वीश्वरान्नमेत् ॥

तन्नवतन्तु कार्यम्

सावित्र्या त्रिगुणं कुर्यान्नवसूत्रं तु तद्भवेत् ।

इति तेनैवोक्तेः । छन्दोगपरिशिष्टे—

त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥

*ऊर्ध्ववृतं दक्षिणं करमूर्ध्वं कृत्वा वलितम् ।

भृगुः—वामावर्तवलितं त्रिगुणं कृत्वा दक्षिणावर्तवलितं त्रिगुणं कार्यम् । स एकस्तन्तुरेवं त्रितन्तुकमित्यर्थः ।

कात्यायनः—

*पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥

वसिष्ठः—

*नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः ।

---

त्रिगुणं कार्यं, स एकस्तन्तुः, एवं त्रितन्तुकमित्यर्थः । *ऊर्ध्ववृतमिति । दक्षिणेन करेणोर्ध्ववृतेन त्रिगुणीकृतम् ,

वलितं मानवे शास्त्रे सूत्रमूर्ध्ववृतं स्मृतम् ।

इति संग्रहोक्तेः । स्मृत्यन्तरे—

शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके ।
आवर्त्य षण्णवत्या तत्त्रिगुणीकृत्य धारयेत् ॥
अब्लिङ्गकैश्च मन्त्रैस्तत्प्रक्षाल्योर्ध्ववृतं त्रिवृत् ।
अप्रदक्षिणमावर्त्य सावित्र्या त्रिगुणीकृतम् ॥
ततः प्रदक्षिणावर्त्तं समं स्यान्नवसूत्रकम् ।
त्रिरावेष्ट्य दृढं बध्वा ब्रह्मविष्ण्वीश्वरान्न्यसेत् ॥ इति ।

*पृष्ठदेशे चेति प्रमाणम् । *नाभेरिति धारणम् ।

तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥

पारिजाते देवलः—

उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते ।

एकमेव*यतीनां स्यादिति शास्त्रस्य निश्चयः ॥

स एव—*'बहूनि वाऽऽयुष्कामस्य'। तत्र मन्त्रमाह स एव—

यज्ञोपवीतमिति वा व्याहृत्या वापि धारयेत् ॥

हेमाद्रौ—

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।

तृतीयमु*त्तरीयार्थे वस्त्राभावे तदिष्यते ॥(१)

---

*यतीनां त्रिदण्डिनाम् । *बहूनीति । कश्यपः—

त्रीणि चत्वारि पञ्चाष्ट गृहिणः स्याद्दशापि वा ।

अथ चत्वारिंशदपि क्वचित् । मनुः—

उद्धृते दक्षिणे हस्ते उपवीत्युच्यते द्विजः ।

सव्ये च प्राचीनावीती निवीती कण्ठसज्जने ॥

*उत्तरीयार्थेइति। उत्तरीयं च जातूकर्ण्येनोक्तम्-"सग्रन्थि परिमण्डलमुत्तरीयं कुर्यात्, वस्त्रोत्तरीयाभावे त्वेकाङ्गुलं द्व्यङ्गुलं वा सूत्रैरेव कृतं परिमण्डलमुत्तरीयं कुर्यात्"इति। जीवत्पितृकस्य तु उत्तरीयं निषिद्धम्

पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणम् ।

न जीवत्पितृकः कुर्याज्ज्येष्ठे भ्रातरि जीवति ॥

इति स्मृतेः। तस्य इदमपि निषिद्धं तत्स्थानापन्नत्वात् । उपरिवस्त्रमात्रं तु भवत्येवेत्यन्यत्र विस्तरः। भृगुः—

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।

विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

---

(१) 'सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् । इत्यधिकं कस्मिंश्चित्पुस्तके ।

देवलः—

सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत् ।
विच्छिन्नं चाप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत् ॥

---

अत्र पूर्वार्द्धेन पुरुषार्थत्वम् उत्तरार्द्धेन क्रत्वर्थत्वं चेति । अलाभे तु स्मृतिसारे—

छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम् ।
विधवाद्याभिरथवा सूत्रं गृह्णीत वै शुचिः ॥ इति ।

ब्रह्मग्रन्थ्यादि अन्यतो बोध्यम् । बटुर्यज्ञोपवीतं धृत्वाऽऽचमनं कुर्यात् "यज्ञोपवीतिनं कृत्वा यथाशास्त्रमाचामयति" इति स्मृतेः । आचमने देशश्च कारिकायाम्—

आचान्तमुत्तरेणेति यज्ञपात्राणि चानयेत् ।
अन्तरेणाग्निमात्मानं दक्षिणे चोपवेशयेत् ॥ इति ।

आचमनोत्तरं दक्षिणे उपवेशनं कार्यमित्यर्थः । एवं होमोत्तरमुत्तरदेशे अवक्षारणं कृत्वा दक्षिणदेशे अग्निकार्यं कार्यम् । एतच्चाग्निकार्यं तदनन्तरं प्रत्यहं सायंप्रातः कुर्यात् "सायंप्रातरसमिधमादध्यात्" इति गृह्यात्,

अग्निकार्यं ततः कुर्यात्सन्ध्ययोरुभयोरपि ।

इति याज्ञवल्क्याच्च । ततः सन्ध्योत्तरम् । सायमेवाग्निकार्यं कुर्यात् 'सायमेवाग्निमिन्धीतेत्येके' इति लौगाक्षिवाक्यात् । गौणकालमाह स एव—

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया । इति ।

समिदाहरणं मनुः—

दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।
(विहायसि दण्डपादौ) ।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥

आपस्तम्बः—"नास्तमिते समिधमाहरेत्" । तत्परिमाणं का-

मनुः—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।

अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि*मन्त्रतः ॥

अथैतल्लोपे प्रायश्चित्तम् । मनुः—

अकृत्वा भैक्ष्यचरणम*समिध्य च पावकम् ।

अनातुरः सप्तरात्रम*वकीर्णिव्रतं चरेत् ॥

अमत्या *आपदि त्यागे तु याज्ञवल्क्यः—

भैक्ष्याग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।

कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम् ॥

उपस्थानं ततः कुर्यात्स(१)मासिञ्चन्त्वनेन तु ।

मन्त्रास्तु मिताक्षरायां ज्ञेयाः । सकृल्लोपे तु ऋग्विधाने—

---

त्यायनः—

नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् ।

न विहीना त्वचा चैव न सकीटा न पाटिता ॥

प्रादेशान्नाधिका नोना तथा न स्याद् द्विशाखिका ।

विशीर्णा विदला ह्रस्वा वक्रा ससुषिरा कृशा ॥

दीर्घा स्थूला च समिधो वर्जनीयाः प्रयत्नतः ॥ इति ।

*मन्त्रत इति । मन्त्राश्चोपनयनोक्ताः ।

*असमिध्येति । समिदाधानमकृत्वेत्यर्थः ।

*अवकीर्णिव्रतमिति । व्रतानि चाह बौधायनः—

'अथ व्रतानि अहिंसासत्यमस्तेयं मैथुनवर्जनम्, अक्रोधो गुरुशुश्रूषा, अप्रमादः, शौचमाहारशुद्धिः' इति ।

*आपदीति । 'कार्यव्यासङ्गेन' इति मयूखः । गुरुशुश्रूषा-

---

(१) समा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । समायमग्निः सिञ्चतां यशसा ब्रह्मवर्चसा ॥ इति मन्त्रः ।

मानस्तोके जपेन्मन्त्रं शतसंख्यं शिवालये ।
अग्निकार्यं विना भुक्तौ न पापं ब्रह्मचारिणः ॥

स्मृत्यर्थसारे तु संध्याग्निकार्यलोपे स्नात्वाऽष्टसहस्र जपः । भिक्षालोपे*ऽष्टशतम् । अभ्यासे द्विगुणं पुनःसंस्कारश्चेत्युक्तम् । अपरार्के संवर्तः—

यः सन्ध्यां चैव नोपास्ते अग्निकार्यं यथाविधि ।
गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ॥
अग्निकार्यं सन्ध्याद्वये कार्यम्
अग्निकार्यं ततः कुर्यात्सन्ध्ययोरुभयोरपि ॥

इति याज्ञवल्क्योक्तेः । सायमेव वा 'सायमेव वाग्निमिन्धीतेत्येके' इति लौगाक्षिणोक्तेः । पारिजाते वृद्धशातातपः—

ब्रह्मचारी तु योऽश्नीयान्मधु मांसं तथैव च ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥

ऋग्विधाने—

*तं वो धिया जपेन्मन्त्रं लक्षं चैव शिवालये ।
ब्रह्मचारी स्वधर्मेषु न्यूनं चेत्पूर्णमेति तत् ॥

---

दिनेति मुक्तावली । *अष्टशतं अष्टोत्तरशतम् । एवमष्टसहस्रमित्यत्र । अत्र ब्रह्मचारिणोऽल्पधर्मलोपे प्रायश्चित्तं समावर्त्तने वक्ष्यति । बहुधर्मलोपे तु प्रायश्चित्तमाह ऋग्विधाने—*तं वो धियेति । स्थालीपाकविधानम् 'अथ पशुकल्प'इत्याद्याश्वलायनोक्तं गर्दभयागश्चामावास्यायां कार्यः 'यो ब्रह्मचारी अवकिरेदमावास्यायां रात्र्याम्' इति तैत्तिरीयकश्रुतेः । 'पशोरभावे चरुः' इति विज्ञानेश्वरः । 'श्रोत्रियस्य चरुः' इति माधवः । इदमवकीर्णिप्रायश्चित्तं ब्राह्मणक्षत्रियविशां समानमेव ।

अवकीर्णी द्विजो राजा वैश्यश्चापि खरेण तु ।
इष्ट्वा भैक्षाशिनो नित्यं शुद्ध्यन्त्यब्दात्समाहिताः ॥

इति शाण्डिल्येन त्रयाणामपि तुल्यप्रायश्चित्तोक्तेः। मिताक्षरायाम्—

यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः ।
सद्यः स्नानं प्रकुर्वीत सोऽन्यथा प्रयतो भवेत् ॥

जमदग्निः—

संध्याकाले त्वतिक्रान्ते स्नात्वाचम्य यथाविधि ।
जपेदष्टशतं देवीं ततः सन्ध्यां समारभेत् ॥

अकामतस्तु गौतमः—

सन्ध्याकाले त्वतिक्रान्ते त्रिसन्ध्यमपि सर्वदा ।
चतुर्थार्घ्यं प्रकुर्वीत शिखाव्याहृतिसंपुटम् ॥

यमः—

प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा ॥
मौनव्रतं समाश्रित्य आसीनो न वदेद्द्विजः ।
भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेत् ॥

मिताक्षरायाम्—

विना यज्ञोपवीतेन यस्तूच्छिष्टो भवेद् द्विजः ।
प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा ॥

ऊर्ध्वोच्छिष्टे उपवासः, अधरोच्छिष्टे गायत्रीजपः । अज्ञाने आपदि च तत्रैव ।

पिबतो मेहतश्चैव भुञ्जतोऽनुपवीतिनः ।
प्राणायामत्रयं षट्कं नक्तं च त्रितयं क्रमात् ॥

उपवीतं विना पाने त्रयः, मेहने षट्, भोजने नक्तमित्यर्थः ।

स्त्रीसङ्गे तु मनुः—

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
स्थालीपाकविधानेन यजेद्वै निर्ऋतिं निशि ॥

विस्तरस्तु मिताक्षरादौ ज्ञेयः । उपवीतनाशे तु हा-

---

आङ्गिराः—

कृते मूत्रपुरीषे तु यदा नैवोदकं भवेत् ।
स्नात्वा लब्धोदकं पश्चात्सचैलस्तु विशुध्यति ॥

शातातपः—"अनुदकमूत्रपुरीषकरणे सचैलं स्नानं महाव्याहृतिहोमश्च" इति । कामतस्तु यमः—

आपद्गतो विना तोयं शारीरं सन्निषेव्य तु ।
एकाहं क्षपणं कृत्वा सचैलं स्नानमाचरेत् ॥

जले मूत्रादिकरणे—

विनाऽद्भिरप्सु वाप्यार्त्तः शारीरं सन्निषेव्य च ।
सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति ॥

शूलपाणिः—

विना यज्ञोपवीतेन भुङ्क्ते च ब्राह्मणो यदि ।
स्नानं कृत्वा जपं कृत्वा उपवासेन शुध्यति ॥

भरद्वाजः—

मलमूत्रे त्यजेद्विप्रो विस्मृत्यैवोपवीतधृक् ।
उपवीतं तदुत्सृज्य दध्यादन्यन्नवं तदा ॥

मण्डनः—

यज्ञोपवीतस्याभावे वस्त्रोपव्यानमाचरेत् ।
तदभावे तु सूत्रेण त्रिवृतोपवीती सः ॥

रीतः—*मनोव्रतपतीभिश्चतस्र आज्याहुतीर्हुत्वा पुनः प्रतीयात् । तत्रैव मरीचिः—

ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रे कुरुतेऽथवा ।
गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति ॥

मनुः—

भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ॥
अकारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥

शर्मन्निति नकारात्पूर्व इत्यर्थः । अभिवादनप्रत्यभिवा-

---

*मन इति । मनोज्योतिरित्येका, 'त्वमग्ने व्रतपा असि' इति तिस्र इत्यर्थः, यथार्हं समन्त्रा इत्यर्थः । उपनयनानन्तरमनुप्रवचनीयपर्यन्तं ब्रह्मचारी तिष्ठेव 'तिष्ठेदहःशेषमस्तमिते ब्रह्मौदनम्' इति आश्वलायनोक्तेः । अतिष्ठतस्तु—

विहितं वा निषिद्धं वा पालयन्त्रिदिवं व्रजेत् ।
अपालयन्पुनर्मोहादपवित्रं पदं व्रजेत् ॥

इति व्यासेन दोषोक्तेः तत्र प्रायश्चित्तमुपन्यामः,

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥

इति मनूक्तेः । तत्र सद्यःकालं तस्य दुष्करत्वात्तत्प्रत्याम्नायरूपमेकब्राह्मणभोजनं कार्यम् ।

उपवासस्तु गायत्र्याः सहस्रं विप्रभोजनम् ।
प्राणायामा दशाष्टौ च समनेतच्चतुष्टयम् ॥

इति षट्त्रिंशन्मतात् । तत्प्रयोगः—मम उपनयनोत्तरमनुप्रवचनीयादर्वाक् विहितास्थितिलोपजनितप्रत्यवायपरिहारार्थमुपवासप्रत्या-

दनादौ विशेषः स्मृत्यर्थसारे पारिजातादौ *ज्ञेयः।
यमः—

---

श्राथविप्रभोजनं करिष्ये। *ज्ञेय इति। किंचित्तूच्यते, अत्रिः—

दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत्।
श्रोत्रिये त्वञ्जलिः कार्यः पादोपग्रहणं गुरोः॥

उपग्रहणं स्पर्शः। मनुः—

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः॥

गुरुपाद इति शेषः, बौधायनः—श्रोत्रे संस्पृशेदिति। अथ प्रत्यभिवादने मनुः—

भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने॥
अकारश्चास्य नाम्नोन्ते वाच्यः सर्वाक्षरः प्लुतः॥

अत्र नामान्ते अकारो न विधीयते, किन्तु नामान्ते योऽकारः तस्य प्लुतमात्रं, ततः शर्मशब्दः 'शर्मान्तं ब्राह्मणस्योक्तम्' इति वचनात्। तेन आयुष्मान् भव राम ३ शर्मन् इत्येव प्रयोगः। न तु राम शर्मा३न्निति शर्मन्शब्दस्य नामानन्तर्गतत्वात्। क्षत्रियादीनामभिवादने प्रायश्चित्तमाह शातातपः—

क्षत्रं वैश्यं चाभिवाद्य प्रायश्चित्तं कथं भवेत्।
ब्राह्मणानां दशाष्टौ वा अभिवाद्य विशुध्यति॥
अभिवाद्य द्विजः शूद्रं सचैलं स्नानमाचरेत्।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुध्यति॥ इति।

स्मृत्यर्थसारे—

मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिन्तरम्।
वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम्॥

*ज्यायानपि कनीयांसं संध्यायामभिवादयेत् ।
विना शिष्यं च पुत्रं च दौहित्रं दुहितुः पतिम् ॥

अथ पुनरूपनयनम् । पारिजाते शातातपः—

---

अभ्यक्तशिरसं स्नानं कुर्वन्तं नाभिवादयेत् ।
जपयज्ञगणस्थं च समित्पुष्पकुशानलान् ॥
उदपात्रार्घभिक्षान्नं वहन्तं नाभिवादयेत् ।
अभिवाद्य द्विजश्चैतानहोरात्रेण शुध्यति ॥
देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् ।
नमस्कारं न कुर्याच्चेदुपवासेन शुध्यति ॥

भट्टोजी—

सर्वेऽपि वा नमस्कार्याः सर्वावस्थासु सर्वदा ।

विष्णुः—

सभासु चैव सर्वासु यज्ञे राजगृहेषु च ।
नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत ॥

एतेन नमस्काराभिवादनयोर्भेद उक्तः । शातातपः—

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुध्यति ॥

मनुः—

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥

'ज्यायांसमभिवादयेत्' इति स्मृतेरपवादमाह—*ज्यायानपीति । तेन कनीयांसः पितृव्यादयः संबन्धिनः अन्नदाः केवलं प्रत्युत्थेया एव नाभिवाद्या इत्यर्थः ।

लशुनं *गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनः ।
उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् ॥
उपायनं पुनः कुर्यात्तसकृच्छ्रं चरेन्मुहुः ॥ इति ।

हेमाद्रौ वृद्धमनुः—

जीवन्यदि समागच्छेद् घृतकुम्भे निमज्य च ।
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥

तत्रैव पाद्मे—

प्रेतशय्याप्रतिग्राही पुनः संस्कारमर्हति ।

चन्द्रिकायां बौधायनः—

*सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गान्ध्रान् गत्वा संस्कारमर्हति ॥

हेमाद्रौ प्रायश्चित्तकाण्डे वृद्धगौतमः—

खरमुष्ट्रं च महिषमनड्वाहमजं तथा ।
बस्तमारुह्य मुखजः क्रोशे चान्द्रं विनिर्दिशेत् ॥

---

*गृञ्जनं लशुनानुकारी कन्दभेदः, पलाण्डुर्वा । अथवा गृञ्जनं पत्रविशेषः यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति, 'तमाखू' इति प्रसिद्धमित्यादि अग्रे विस्तरः । अत्र क्वचित्केवलं पुनरुपनयनं, क्वचित्तु जातकर्मादिसहितं तत् । तत्र आद्यन्तावत् विनर्तुना वसन्तेन पापांशकगते अनध्याये चोपनीतः, कर्मनाशाजलस्पर्शात् अपराह्णे चोपनीतः । *सिन्धुसौवीरसौराष्ट्रान्

सौराष्ट्रसिन्धुसौवीरानावन्त्यं दाक्षिणापथम् ।
एतान्देशान् द्विजो गत्वा पुनःसंस्कारमर्हति ॥

अत्र तीर्थयात्रार्थं गमने तु न दोषः—

अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रान्मगधांस्तथा ।
तीर्थयात्रां विना गच्छन् पुनःसंस्कारमर्हति ॥

मार्कण्डेयः—

खरमारुह्य विप्रस्तु योजनं यदि गच्छति ।
तप्तकृच्छ्रत्रयं प्रोक्तं शरीरस्य विशोधनम् ॥
पुनर्जन्म प्रकुर्वीत घृतगर्भविधानतः ॥

मदनरत्ने मिताक्षरायां च स्नानमात्रमुक्तम् । मनुः—

*अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥

मिताक्षरायां पराशरः—

यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः ।
अनाशकानिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥

---

इति श्लोकगौतमात् । यद्यप्येषु प्रायश्चित्तं नोक्तं तथापि कृच्छ्रं कृच्छ्रार्द्धं वा कार्यं 'चीर्णान्ते' इति अग्रिमवाक्यात् । 'लशुनं गृञ्जनं जग्ध्वा' शुनमिति पाठे जग्ध्वा इत्यत्रान्वयः, शुनः इति पाठे क्षीरभोजनादित्यत्र । एषु तप्तकृच्छ्रमत्रैवोक्तम् । *अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टं न तु सुरामिश्रम् । अत्र स्मृत्युक्तं मलभक्षणादेः सुरासंसृष्टभक्षणादेश्च प्रायश्चित्तं कार्यम् । मिताक्षरायाम्—

अज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥

अत्रापि स्मृत्युक्तं रेतोभक्षणादिप्रायश्चित्तम् । पैठीनसिः—अविखरोष्ट्रमानुषीक्षीरप्राशने तप्तकृच्छ्रं पुनरुपनयनं च कुर्यात् । विष्णुः—विड्वराहग्रामकुक्कुटनरगोमांसभक्षणेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यात् । प्रजापतिः—

मांसं भुक्त्वा ब्रह्मचारी पुनःसंस्कारमर्हति ।

अत्र स्मृत्युक्तं मांसभोजनप्रायश्चित्तं कुर्यात् । संवर्त्तः—

ब्रह्मचारी तु योऽश्नीयान्मधु मांसं कथंचन ।

स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ।
जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् ॥

बौधायनसूत्रे—अथोपनीतस्य व्रतानि भवन्ति—नान्यस्योच्छिष्टं भुञ्जीतान्यत्र पितृज्येष्ठाभ्यां, न स्त्रिया सह भुञ्जीत, मधुमांसश्राद्धसूतकान्नानि, दशाहसन्धिनीक्षीरं, छत्राकनिर्यासौ, विलापनं, गणान्नं, गणिकान्नमिति । एतेषु पुनःसंस्कारः । प्रतिषिद्धदेशगमनमित्येके । अथाप्युदाहरन्ति—

सुराष्ट्रसिन्धुसौवीरमवन्तीं दक्षिणापथम् ।
एतानि ब्राह्मणो गत्वा पुनःसंस्कारमर्हति ॥

अथ पुनःसंस्कारं व्याख्यास्यामो देवयजनप्रभृत्याग्निमुखात्कृत्वा पालाशीं समिधमाज्येनाङ्क्त्वाऽभ्याधाय

---

प्राजापत्यं च कृत्वाऽसौ मौञ्जीहोमेन शुध्यति ॥

मधु क्षौद्रं, मौञ्जीहोमः पुनरुपनयनं मांससाहचर्यात् । कौर्मे—

चण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् ।
बुद्धिपूर्वं तु कृच्छ्राब्दं पुनःसंस्कारमेव च ॥

हेमाद्रिः—एकादशाहे चान्द्रं पुनःसंस्कारश्चेति । देवलः—

ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः ।
यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमेव च ॥

एतत्पित्रादिभिन्नविषयम् । "प्रेतशय्याप्रतिग्राही" अत्र शय्याग्रहणं घोरप्रतिग्रहोपलक्षणम् । एवमादिषु तत्तद्विहितप्रायश्चित्तं कृत्वा केवलं पुनरुपनयनं कुर्यात् । द्वितीयं तावत् 'खरमुष्ट्रं च माहिषम्' 'खरमारुह्य विप्रस्तु' 'यः प्रत्यवसितो विप्रः' । वसिष्ठः—

संन्यस्य दुर्मतिः कश्चित्प्रत्यापत्तिं व्रजेद्यदि ।
स कुर्यात्कृच्छ्रमश्रान्तः षण्मासात्प्रत्यनन्तरम् ॥

वाचयति—पुनस्त्वादित्या रुद्रा वसवः० कामाः स्वाहा इति। अथ व्रात्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाभूत्०पुनरग्निश्चक्षुरदादिति द्वाभ्यामथ पक्वाज्जुहोति—सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त०घृतेन स्वाहा इति। अथाज्याहुतीरुपजुहोति—येन देवाः पवित्रेण० इति तिसृभिरनुच्छन्दसं स्विष्टकृत्प्रभृति सिद्धमाधेनुवरदानादथापरमा परिदानात्कृत्वा पालाशीं समिधमाधायाथ व्रात्यप्रायश्चित्ते जुहोत्यथ व्याहृतीर्जुहोति। अथापरो ब्राह्मणवचनादेव सावित्र्या शतकृत्वो घृतमभिमन्त्र्य प्राश्य कृतप्रायश्चित्तो भवति। गुरोर्वाप्युच्छिष्टं भुञ्जीत। अथाप्युदाहरन्ति वपनं दक्षिणादानं मेखलादण्डमाजिनभैक्ष्यचर्याव्रतानि च निवर्तन्ते पुनःसंस्कारकर्मणि इति।

आश्वलायनगृह्येपि—अथोपेतपूर्वस्य इत्यादिना पुनःसंस्कार उक्तः। तथा [illegible]व्यतिरेकेण ब्रह्मचारिणः प्रेतकर्मकरणे पुनरुपनयनमित्यपरार्कादयः। त्रिस्थलीसेतौ—

कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात्।
गण्डकीबाहुतरणात्पुनःसंस्कारमर्हति॥

गौडास्तु—

करतोयाजलस्पर्शात्कर्मनाशाविलङ्घनात्।

इति पठन्ति। तन्न, दानधर्मेषु करतोयास्नाने प्राशस्त्योक्तेः।

करतोये सदानीरे सरिच्छ्रेष्ठेऽतिविश्रुते।
आप्लावयासि पौराणां पापं हरकरोद्भवे॥

इति स्मृतिदर्पणचन्द्रिकालिखितस्नानमन्त्राच्च। पराशरः—

अजिनं मेखला दण्डो भैक्ष्यचर्या व्रतानि च।
निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि॥

हरदत्तस्तु—य एकं वेदमधीत्यान्यं वेदमध्येतुमिच्छति तस्य पुनरुपनयनम्, तेन प्रतिवेदमुपनयनं कर्तव्यम् इत्याह। अन्ये नैतन्मन्यन्ते। *"सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते" इत्यापस्तम्बोक्तेः। तद्विधिः कारिकायाम्—

*वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते।

---

अत्र षाण्मासिकं विप्रस्य, चांद्रायणत्रयं क्षत्रियस्य, कृच्छ्रत्रयं वैश्यस्येति विज्ञानेश्वरः। देशान्तरगतस्यौर्ध्वदेहिककरणानन्तरं पुनरागमने जीवन् यदि समागच्छेत्। एवमादिषु उक्तप्रायश्चित्तानन्तरं जातकर्मादिकं कृत्वा पुनरुपनयनं कुर्यात् इति मघट्टकार्थः। *सर्वेभ्य इति—

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तादित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥

इति स्मृतेश्च। तथाचोपनयने सावित्र्या अनुवचने सर्वे वेदा अनूक्ता भवन्तीत्यर्थः। अथर्वणवेदाध्ययनार्थं तु पृथगुपनयनं कार्यं, नान्यत्र 'संस्कृतोभृग्वङ्गिरसमधीयीत' इति श्रुतेः। भृग्वङ्गिरसम् आथर्वणम्। *वेदान्तरमिति। तथा च शौनकः—

यो वेदान्तरमध्यैत तत्सूत्रविधिना ततः।
कृतोपनयनोऽधीत्य तं वेदं सकलं द्विजः॥
द्वितीयमिममृग्वेदमध्येतुमभिवाञ्छया।
एतद्गृह्योक्तविधिना पुनरप्युपनीयते॥
केशानां वपनं तत्र न क्रियेत क्रियेत वा।
मेधाजननकर्मापि विज्ञेयं च कृताकृतम्॥
कर्तव्यपक्षाश्रयणे मेधाजननकर्मणः।
ब्रह्मौदनस्य होमस्य त्रिरात्रादिव्रतं तथा॥
कस्य ब्रह्मादिमन्त्रेण परिदानं च नेष्यते।

उपनीतिरियं तेषामलंकरणवर्जिता ॥
*यद्वैतदुपनीतस्य प्रायश्चित्तं यदा भवेत् ।
कृताकृतं च वपनं मेधाजननमेव च ॥

---

तत्रोदगयनादिश्च कालो नापेक्ष्यते । तत्र तु—

तत्सवितुर्वृणीमहे वयमित्येवमादिका ।
ऋक् सावित्री परिग्राह्या यद्यदन्यत्समीरितम् ॥
अन्योपनयने तत्तदलंकारविवर्जितम् ।
इहापि सर्वं कुर्वीत उपनीतं पुनर्भवेत् ॥ इति ।

वसिष्ठः—

एकवेदस्य शाखानां मध्ये योऽन्यां समाश्रयेत् ।
स्वशाखां संपरित्यज्य शाखारण्डः स उच्यते ॥
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।

इति शाखारण्डस्य पुनरुपनयनमित्यर्थः ।

*यद्वेति । पुनरुपनयनात्मकप्रायश्चित्तं स्मृत्युक्तप्रायश्चित्तं कृत्वैव कार्यम् । "चीर्णान्ते प्राच्यामुदीच्यां वा दिशि गत्वा ग्राम्यपशूनां शब्दो न श्रूयते तस्मिन् देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक्प्रणीतेन विधिना पुनः संस्कारमर्हति" इति ।

अथाश्वलायनानां पुनरुपनयनप्रयोगः—विष्ट्यादिरहिते काले पूर्वाण्हे प्राचीमुदीचीं वा दिशं गत्वा यत्र ग्राम्यपशूनां शब्दो न श्रूयते तस्मिन्देशे कर्ता प्राङ्मुखः ममामुकदेशगमनसूचितैनोनिबर्हणार्थं पुनरुपनयनं कारिष्ये इति संकल्प्य गणेशपूजनाद्याचार्यवरणान्तं कुर्यात् । तत आचार्योऽस्य पुनरुपनयनं कारिष्ये इति संकल्प्य पुनरुपनयनं कर्तुं स्थण्डिलादि करिष्ये इति संकल्प्याग्निप्रतिष्ठापनान्तं कृत्वा देवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्यास्मिन्नन्वाहितेऽग्नावित्यादि आज्यभागवर्जमुक्त्वा अत्र प्रधानं त्रिरग्निं पवमानं प्रजापतिं चाज्येन शेषेणेत्यादि आज्यसंस्कारान्तं

मेधाजननसद्भावे व्रतचर्या भवेदिह ।
अनुप्रवचनीयश्च तदभावे द्वयं न हि ॥
*परिदानं न कार्यं स्यान्निमित्तानन्तरं त्विदम् ।
*पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे ॥ इति ।

कुर्यात् । ततः पञ्चाशता कुशैर्निर्मिते आसने संस्कार्यमुपवेश्य समन्त्रं वासः परिधाप्यापरं प्रावारयेत् । नात्राजिनम् । ततः समन्त्रं यज्ञोपवीतं धारयित्वा तीर्थप्रवेशेनोत्तरं भागं गमयित्वा तत्र विधिवदाचमय्य पुनः स्वस्थानं नीत्वा बर्हिरास्तरणादि आज्यभागवर्जम् 'अग्न आयूंषि' इति तिसृभिः "प्रजापते न त्वद्" इत्ययनया च हुत्वा उत्तरभागे उपनयनवदक्षारणं कृत्वाऽऽदित्यमीक्षयेत् । 'कस्य ब्रह्मचार्यसि' इति तु न भवति "मेधाजननं चानिरुक्तं परिदानं कालश्च" इत्याश्वलायनोक्तेः । ततो 'युवा सुवासा' इत्यर्द्धर्चेन संस्कार्यं प्रदक्षिणमावर्त्योत्तरेण तस्यांसयोः पाणी गमयित्वा एनं दक्षिणं भागं निनयेत् । ततः संस्कार्योऽग्निकार्यमुपनयनवत्कुर्यात् । ततोऽग्नेः पश्चिमतः प्रत्यङ्मुख आचार्यपादावुपसंगृह्याधीहि भोः सावित्रीं भो अनुब्रूहीति वदेत् । आचार्यः तत्सवितुरित्यस्य श्यावाश्वः सवितानुष्टुप् पुनरुपनयने विनियोगः । प्रथमं स्वयं पादश उक्त्वा वाचयेत् । ततोऽर्धर्चशः, ततः सर्वाम् । अनन्तरं 'मम व्रते' इत्यनेन संस्कार्य हृदये ऊर्ध्वाङ्गुलिं पाणिं निधाय स्विष्टकृदादिहोमशेषं समापयेत् । संस्कार्य आचार्याय गोनिष्क्रयं दत्त्वा त्र्यवरान्ब्राह्मणान् भोजयेत् । नात्र मेखलादण्डभिक्षाः "अजिनं मेखला दण्डः" इत्युक्तवचनात् । अत्र स्वस्तिवाचनादिकं न कार्यं प्रायश्चित्तार्थेतद्विधानात् । दृष्टश्च प्रायश्चित्तान्तरे नान्दीश्राद्धाद्यभावः ।
*परिदानं कस्य ब्रह्मचार्यसीत्यादेः परिददामीत्यन्तमन्त्रस्योच्चारणम् । *पूर्वस्या इति । पुनरुपनयन एव गायत्रीस्थान एषा ऋक् भवति, न तु तदनन्तरभाविषु [illegible] पूर्वविहि-

यत्तु हारीतः—द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्ष्यचर्या इति, 'सद्योवधूनामुपनयनं कृत्वा विवाहः कार्यः'—इति, तद् युगान्तरविषयम् ।

पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥

इति यमोक्तेः ।

अथानध्यायाः । पारिजाते (१)बृहस्पतिः—

प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः ।
श्वोऽनध्यायेऽद्यशर्वर्यां नाधीयीत कदाचन ॥

नारदः—

अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥

निर्णयामृते—

चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु ।
अनध्यायस्तु कर्तव्यो या च सोपपदा तिथिः ॥

गर्गः—

शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ॥

---

तगायत्रीबाधे मानाभावात् । केचित्तु स्त्रीणां कर्मनाशा जलस्पर्शादौ उपनयनाभावे न पापकल्पनाया असम्भवात् न पुनरुपनयनस्थानिकप्रायश्चित्तकल्पना सम्भवतीत्याहुः । अन्येतु उपनयनस्थानिकविवाहसत्त्वाद्धिरण्यगर्भदानवत्पुनर्विवाहः कार्यः । विवाहासम्भवेतु संस्कारकारणीभूतविवाहमन्त्रपाठमात्रं कार्यमित्याहुः । वस्तुतस्तत्रानादिष्टप्रायश्चित्तं कार्यम् ।

---

(१) 'हारीतः' क०

स्मृत्यर्थसारेऽपि-'आषाढीकार्तिकीफाल्गुनीसमीपस्थद्वि(१)तीयासु च' इति । मनुः—

उपाकर्मणि चोत्सर्गे त्रि(२)रात्रं क्षपणं स्मृतम् ।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥ इति ।

उत्सर्गे तु-*'मनूक्तपक्षिण्यहोरात्राभ्यां त्र्यहस्य विकल्पः' इति विज्ञानेश्वरः ।*अष्टकाशब्देन सप्तम्यादि त्रयं ज्ञेयम् । 'तिस्रोऽष्टकास्त्रिरात्रम*न्त्यामेके'(३) (इति गौतमोक्तेः । 'ऋत्वन्तास्विति सौरऋत्वन्तासु, चाद्रान्तस्य पर्वत्वेनैव निषेधसिद्धेः') इति सर्वज्ञनारायणः । एते नित्याः ।

---

'प्राणायामशतं कृत्वा सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥'

इति योगीश्वरवचनादिति । शुचिः आषाढः, ऊर्जः कार्तिकः, तपस्यः फाल्गुनः, एता द्वितीयाश्चतुर्षु चतुर्मासेषु भवन्तीति (४)चातुर्मास्य द्वितीया इत्युच्यन्ते ।

*मनूक्तेति ।

'यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रीं यद्वाप्येकमहर्निशम्' ॥ इति ।

मनुः—

'उत्सर्गे प्रथमेऽध्याये त्वनध्यायस्त्र्यहं भवेत् ।
धारणाध्ययनादौ तु पक्षिणी दिनमेव वा ॥'

इति तु कालादर्शः । नन्वष्टकापदं व्यर्थमष्टमीत्वादित्यत्राह-*अष्टकेति । त्रिरात्रशब्देन पूर्वोत्तरदिनलाभः। अष्टकास्विति बहुत्वात्सर्वा ग्राह्याः । *अन्त्यामिति । अन्त्यामपीत्यर्थः । नाधी-

---

(१) 'द्वितीया च' क०    (२) 'त्रिरात्रलक्षणं' क०
(३) कंसान्तर्गतं नास्ति क०
(४) 'चातुर्मास्यद्वितीया' क० ख० ।

नैमित्तिकानप्याह याज्ञवल्क्यः—

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
*उपाकर्मणि चोत्सर्गे*स्वशाखाश्रोत्रिये तथा ॥
सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
*समाप्य वेदं*द्युनिशमारण्यकमधीत्य च ॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां*राहुसूतके ।
ऋतुसंधिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं*शक्रपाते तथोच्छ्रये ॥

---

धीतेति शेषः 'एकस्यामेव' इति सूत्रात् । *उपाकर्मणि चेति । मनूक्तत्र्यहेण विकल्पः । गौतमः—'प्राधीतस्य निशायां चतुर्मुहूर्त्तम्' इति । उपाकृत्याध्येतुं प्रवृत्तः प्राधीतः । आदिकर्मणि क्तः । तस्य प्रदोषेऽष्टघटीरनध्यायः 'मासं प्रदोषे नाधीयीत' इत्युक्तेः । *स्वशाखेति । प्रेते इति विपरिणतं वर्त्तते । संध्या गर्जितेति च्छेदः । विशेषोग्रोनिर्घातः आकाशे उत्पातध्वनिः । *समाप्येति ।

'समाप्य वेदं त्रिदिनं (न)वेदाध्ययनं भवेत् ।'

इति विश्वामित्रोक्तत्रिदिनेन विकल्पः । *द्युनिशम् अहोरात्रम् । *राहुसूतके ग्रहणे । अत्र द्युनिशेति प्रकृते पुनरहोरात्रग्रहणं संध्यागर्जितनिर्घातभूकम्पोल्कापतनेषु अनध्यायस्याऽऽ(१)कालिकत्वार्थम् । *शक्रपाते शक्रध्वजस्याधःपतनदिने तस्योच्छ्रयदिने च । तत्पातकाल आग्नेये ।

मासि भाद्रपदे राजन् शक्रयष्टिनिपातनम् ।
पौर्णमास्यां तु कर्त्तव्यम् ॥

इति शङ्खः । शक्रध्वजपतने त्रिरात्रम् । तदुच्छ्रयदिनमाह गार्ग्यः—

द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा ।

---

(१) तावन्मात्रकालपर्यन्तमित्यर्थः ।

ग्रहणे द्युनिशोक्तावपि ग्रस्तास्ते*त्र्यहमित्युक्तं प्राक्। स्मृत्यर्थसारे तु–'रात्रौ तु (१)*ग्रहे तिस्रो रात्रीः, दिवा च त्र्यहम्' इत्युक्तम्। ऋतुः सौरः। भुक्त्वेत्युत्सवविषयम् 'ऊर्ध्वं भोजनादु*त्सवे' इति गौतमोक्तेः। *आह्निकं महैकोद्दिष्टभिन्नम्। तत्र तु त्र्यहमिति मनुः। स्मृत्यर्थसारे चैवम्। यत्तु–*'पश्वाद्यन्तराये त्र्यहमुपवासो विप्रवासश्च' इति गौतमोक्तं, तत् प्रथमाध्ययने।

---

शक्रमुत्थापयेद्राजा विश्वश्रवणवासवैः॥

विश्वमुत्तराषाढा, वासवं धनिष्ठा। *त्र्यहमिति।

त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके।

इति मनूक्तेः।

राजा चन्द्रः, चकारात्सूर्यः। सूतकं बहुच्छायाभिभवः, न तु राज्ञः सूतकं मरणं, लक्षणापत्तेः। तत्र सज्योतिरनाध्यायः 'सज्योतिः प्रेते विषयस्थे राजनि' इति गौतमोक्तेः। अहोरात्रं वा, अहोरात्रानुवृत्तौ 'सब्रह्मचारिणि प्रेते भूमिपतावपि' इति गोभिलोक्तेः। इदं च ग्रस्तास्ते। खण्डग्रहे तु द्युनिशम्, आकालिकमित्यर्थः। *ग्रहे सम्पूर्णग्रहे। दिनं नान्तरीयकम्। एवमग्रे रात्रिर्नान्तरीयका बोध्या। 'सम्पूर्णग्रहे त्रिरात्रं, खण्डग्रहे आकालिकः' इति मयूखः। *उत्सवे विवाहोपनयनादौ। अत्र प्राधीतस्येति वाक्यशेषात् प्रथमाध्ययनेऽनुत्सवेऽपि भोजनोत्तरमनध्यायः। *आह्निकं पार्वणश्राद्धसम्बन्धि महत्पदं संपातायातम्।

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्।

त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके॥

इति एकोद्दिष्टस्य मनूक्तेः। नवश्राद्धेऽ[illegible] इति केचित्। एकोद्दिष्टपदेन नवश्राद्धमपि ग्राह्यमित्यन्ये। *पश्वा-

---

(१) 'ग्रहणे तिस्रो' ख०

याज्ञवल्क्यः—

श्वक्रोष्टृगर्दभोलूक*सामबाणार्तनिःस्वने।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे।
*भुक्त्वार्द्रपाणिर*म्भोन्तरर्धरात्रे*ऽतिमारुते॥
पांसुप्रवर्षे *दिग्दाहे* सन्ध्यानीहारभीतिषु।

दीति.। त्र्यहम् अनध्याय इति प्रकृतम्। श्वादीनां सप्तानां निःस्वनेऽन्वयः। *सामेति। सामवेदपठनकाले वेदान्तरानध्यायः।

सामध्वनावृग्यजुषी नाधीयीत कदाचन।

इति वचनात्,

ऋग्वेदो देवदेवत्यो यजुर्वेदस्तु मानुषः।
सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः॥

इति निन्दार्थवादाच्च। आपस्तम्बः—'शाखान्तरध्वनौ साम्नामनध्यायः' इति। अमेध्यादिसप्तानामन्तिके इत्यनेनान्वयः। पतितेत्युपलक्षणं "पतितचण्डालशवसूतिकाश्रावणे त्रिरात्रं वाग्यता आसीरन्" इति वासिष्ठेन प्रायश्चित्ताम्नानात्। अशुचौ देशेऽशुचावात्मनि च। *भुक्त्वार्द्रपाणिरित्येकम्। *अम्भोन्तः जलमध्ये। *अतिमारुते विशेषमाह गौतमः—'नाधीयीत वायौ पांसुहरे कर्णस्राविणि नक्तम्' इति। *दिग्दाहे अग्न्युत्पाते तु आपस्तम्बः—'उल्कायामग्न्युत्पाते सर्वासां विद्यानामाकालिकोऽनध्यायः'। अग्न्युत्पातश्च सप्तानग्रावभावः। *सन्ध्येति। बौधायनः—

प्रातः सन्ध्या त्रिनाडी स्यात्सायंसन्ध्या तथाविधा।
सायंप्रातःसन्ध्ययोश्च नाधीयीत कदाचन॥

*पूतिगन्धे मनुः—

नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च।
धर्मनैपुण्यकामानां पूतिगन्धे च सर्वतः॥

धावतः *पूतिगन्धे च*शिष्टे च गृहमागते ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्ता*त्कालिकान्विदुः ॥

बाणो वंशः । *शततन्तुर्वीणेति हरदत्तः । अमेध्याः सूतिकादयः । स्तानितं गर्जः ।*वर्षातोऽन्यत्र गर्ज-

---

नैपुणं पूर्णता । वसिष्ठः–'नगरेषु कामं गोमयपर्युक्षिते परिकिखिते वा' इति । तेन पूतिगन्धहानेर्नानध्याय इत्यर्थः । *शिष्टे चेति । शिष्टाज्ञायां तु नानध्यायः ।

स्वागतं चातिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान् ।
अप्यनुज्ञापिते तस्मिन्नध्येतव्यं प्रयत्नतः ॥

इति यमोक्तेः । खराद्यष्टानां रोहणेऽन्वयः । यानं रथादि, खरोष्ट्राभ्यां युक्तं यानं शकटादीत्यन्ये । ईरिणमूखरं मरुभूमिर्वा । *तात्कालिकान् निमित्तसमकालिकान् । वीणेति पठतां मतमाह–*शतेति । एतच्च नृत्यगीतवादित्राद्युपलक्षणं "नृत्यगीतवादित्ररुदितशब्देषु तावत्कालम्" इति बौधायनात् । "बाणभेरीमृदंग (१)गर्दाभ्रशब्देषु" इति गौतमात् । गर्दः शकटः । गर्तेति पाठे रथः । "आरोहथोवरुणमित्रगर्त्तम्" इति श्रुतेः 'गर्त्तो हि रथ उच्यते' इति यास्कात् । *वर्षात इति । मनुः—

विद्युत्स्तनितगर्जेषु महोल्कानां च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत ॥ इति ।

अनध्यायहेतुर्यत्र काले जातः परेद्युस्तत्पर्यन्तकाल आकालः, तत्र भव आकालिकः विद्युदादित्रयसाहित्यं विवक्षितं द्वन्द्वनिर्देशात् । विद्युदादीनां निमित्तत्वं सन्ध्यायामेव ।

एतांस्त्वभ्युदितान्विद्याद्यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥

---

(१) 'गर्ताभ्र' ख०

वृष्टिविद्युतां यौगपद्ये आकालिकः वर्षासु तात्कालिक इति*नारायणः । (१ऐतरेयोपनिषदि अपर्त्तौ वर्षे त्रिरात्रमिति मृगादिज्येष्ठान्तं वर्षर्तुः तं विना वर्षादौ त्रिरात्रमनध्याय इति वेदभाष्ये उक्तम् ।) संध्यागर्जे तु हारीतः *सायंसंध्यास्तनिते रात्रिः, प्रातःसंध्यास्तनितेऽहोरात्रं, रात्रौ विद्युत्यप(२)ररात्र्यवधिः, 'विद्युति नक्तं चापररात्रात्' इति गौतमोक्तेः । 'तृतीयदिनांशोत्तरं तु विद्युति सर्वरात्रम्' इत्याह स एव । त्रिभागादिप्रवृत्तौ सर्वमिति, अर्धरात्रे *मध्यया(३)मद्वयमिति विज्ञाने-

इति मनूक्तेः । अभ्रदर्शनेऽपि प्रादुष्कृताग्न्वयः । अनृतौ प्रावृड्भिन्नर्त्तौ । *नारायण इति । वस्तुतस्तु 'अयमाकालिको वर्षासु । वर्षातोऽन्यत्र तु त्र्यहम् "विद्युत्स्तनयित्नुवृष्टिषु अपर्त्तौ त्र्यहम्" इति आपस्तम्बोक्तेः । स्तनयित्नुः तद्गार्जितम् । अपर्त्तुमाह गार्ग्यः—

अनूराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः ।
यावत्प्रवर्त्तते तावदकालं मुनयो विदुः ॥ इति ।

एवं चार्द्रादिविशाखान्तः कालः । एतेन माघादिषु वृष्टेर्नियतत्वान्नासावपर्त्तुरिति प्रत्युक्तम् । *सायमिति । यत्तु मनुः—

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने ।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥ इति ।

तत्रायमर्थः—विद्युत्स्तनितवर्षाणि प्रक्रान्तानि, तत्र विद्युत्स्तनितनिःस्वने अग्निषु प्रादुष्कृतेषु सत्सु सायंसन्ध्यायां जाते सज्योतिः रात्रावनध्यायः, शेषे वर्षे सायं जाते यथा दिवा तथा रात्रौ, अहोरात्रमित्यर्थः । एतत्सर्वं वर्षास्वेव । 'यदा वर्षासु विद्युत्स्तनितं वा तदा सज्योतिः' इति पैठीनस्युक्तेः । अपर्त्तौ त्र्यहमुक्तं

(१) कंसान्तर्गतं नास्ति ख० (२) 'पररात्रावधिः' क० (३) 'यामद्वयं' क०

श्वरः । *मध्यदण्डचतुष्टय इति निर्णयामृते । मनुः—

न विवादे न कलहे न सेनायां न सङ्गरे ।
न*भुक्तमात्रे ना*जीर्णे न*वमित्वा न*सूतके ॥
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ॥

कौर्मे—

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥

---

प्राक् । *मध्येति ।

महानिशा तु विज्ञेया मध्यं मध्यमयामयोः ।
तस्यां स्नानं न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥

इति स्मृतेः । दक्षः—

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

(१)*मध्येति ।

महानिशा तु विज्ञेया चतस्रो घटिकास्तथा ।

इति वचनात् । अत्र दोषाधिक्यं कल्प्यम् । *भुक्तमात्रे भुक्त्वार्द्रपाणिरित्येतत्समानार्थम् । *अजीर्णे जरणोचितकालेऽपि अन्नस्याजरणे । *वमित्वेति । गौतमः—"संकलोपाहितवेदसमाप्तिछर्दिश्राद्धमनुष्ययज्ञभोजनेषु अहोरात्रम्" इति । संकलोपाहितोऽग्न्युत्पातः । छर्दौ विशेषमाहापस्तम्बः—"छर्दयित्वा स्वप्नान्ते घृतं वा प्राश्य" अधीयीतेत्यर्थः । स्वप्नान्तमोदयादनध्यायः । *सूतके 'सुक्तके' इति पाठे अम्लोद्गारे इत्यर्थः । हेमाद्रौ—

सर्वकुत्सितगन्धे च परिखाते सभासु च ।
गोविप्ररोधने सर्वराष्ट्रेषु श्राद्धपङ्क्तिषु ॥

---

(१) 'मध्यमिति' ख०

मनुः—

शयानः प्रौढपादश्च कृत्वा चैवा*व(१)सक्थिकाम्।
नाधीयीतामिषं जग्ध्वा*सूतकान्नाद्यमेव च॥

प्रौढपादः*पादोपरि पाददाता आसनारूढपादो वेति हरदत्तः। सोपपदास्वपि प्रागुक्तम्। स्मृत्यर्थसारे—श्रवणद्वादशी*महाभरण्योः प्रेतद्वितीयायां रथसप्तम्यामाकाशे शवदर्शने चाहोरात्रम्। असपिण्डे *गुरौ (२)मृते त्रिरात्रम्। आचार्ये उपाध्याये च पक्षिणी। आचार्यभार्यापुत्रशिष्येष्वहोरात्रम्। अग्न्युत्पातेन गोविप्रमृतौ त्रिरात्रम्। अयने विषुवे च पक्षिणी*अकालवृष्टौ

---

श्राद्धपङ्क्तिषु विहितमन्त्रभिन्नेषु वेदभागेषु इत्यर्थः। विहितमन्त्रा 'उपह्वये' इत्यादयः। *आवसक्थिका वस्त्रादिना जानुनोः पृष्ठेन सह बन्धः। *सूतकेति। आप्रायश्चित्तमेतत्। *पादेति। प्रसारितपादोऽपि बोध्य इत्यर्थः। *महेति। स्मृतिचन्द्रिकायाम्—

महानवम्यां द्वादश्यां भरण्यां वा महाद्युते।
तथाऽक्षयतृतीयायां शिष्यान्नाध्यापयेद्बुधः॥
माघमासस्य सप्तम्यां रथाख्यायां विवर्जयेत्॥

महच्छब्दस्य द्वादश्यादिष्वपि सम्बन्धः। महानवमी आश्विनशुक्लनवमी। महाद्वादशी कार्तिकशुक्लद्वादशी। महाभरणी प्रौष्ठपद्यनन्तरा भरणी। *गुराविति। महागुरुमृतौ द्वादशरात्रं बोध्यम्। *अकालेति। पक्षिणीति वर्तते। 'विद्युत्स्तनयित्नुवृष्टिष्वपर्त्तौ एकेन द्वाभ्यां वा आकालम्' इत्यापस्तम्बः। हेमाद्रौ—'गजगण्डसारससिंहव्याघ्रमहापातिकुक्कुटावेक्षणमन-

---

(१) 'वसक्थिका' क०   (२) 'मृते' नास्ति क०

च । आरण्यमार्जारसर्पनकुलपञ्चनखादेरन्तरागमने त्रिरात्रम् । आरण्य*श्वशृगालादिवानररजकादौ द्वादशरात्रम् । खरवराहोष्ट्रचाण्डालसूतिको*दक्याशवादौ मासम् । *गोगवयाजानास्तिकादौ त्रिमासम् । *शशमेषश्वपाकादौ षण्मासम् । गजगण्डसारससिंहव्याघ्रम(१)हापापिकृतघ्नादावब्दमनध्यायः । शोभन*दिने चान-

ध्यायः'। एतेषां यावदवेक्षणं तावदनध्याय इत्यर्थः । प्रचेताः—'चतुष्पथमहापथराजोद्यानेषु नाधीयीत' । शङ्खः—

नाधीयीताभियुक्तोऽपि यानगो न च गोगतः ।
देवायतनवल्मीकश्मशानवनसन्निधौ ॥

गौतमः—'ग्रामान्तमहापथाशौचेष्वनध्यायः'। स्मृत्यर्थसारे—'काकोलूकमूषककुक्कुटमण्डूकादेरन्तरागमने दिने चेद्दिनान्तं रात्रौ चेद्रात्र्यन्तमनध्यायः ।

*श्व[शृगाल]दीरिति । आदिना वनमूषकादिग्रहः । एवं रजकादावित्यादिना तत्समानधर्मचर्मकारादिग्रहः । एवमग्रेऽपि आद्यर्थो बोध्यः । अन्तरागमने इति च वाक्यपञ्चके वर्त्तते । *उदक्या आपस्तम्बस्तु'—ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन्सम्भाषितुं ब्राह्मणेन सम्भाष्य तया सम्भाषेत, ब्राह्मणेनैव सम्भाष्याधीयीत' इतिब्राह्मणसम्भाषणपर्यन्तमनध्यायमाह । *गविति । अविगवयाजव्याघ्रनास्तिकादाविति पाठान्तरम् । *शशेति उपलक्षणम् ।

गुर्वन्तेवासिनां चैवमध्येतॄणां च मध्यतः ।
ययुः शशश्वपाकाजा नाधीयीतार्द्धवत्सरम् ॥ इति ।

एतच्च प्रथमारम्भेऽजगमने । व्याघ्रेऽपि प्रथमारम्भ एवाब्दम् । अन्यदा तु उभयत्रापि त्रिमासमुक्तम् । *दिनं तिथिः । अनध्याय-

(१) 'महापातकी' क०

ध्यायः । विवाहप्रतिष्ठोद्यापनादिष्वासमाप्तेः सगोत्राणामनध्यायः ।

उदयेऽस्तमये (१)वापि मुहूर्तत्रयगामि यत् ।
तद्दिनं तदहोरात्रं चानध्यायविदो विदुः ॥
केचिदाहुः क्वचिद्देशे यावत्तद्दिननाडिकाः ।
तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे ॥

प्रदोषं त्वाह प्रजापतिः—

*षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका ।
प्रदोषे न त्वधीयीत तृतीया नवनाडिका ॥

निर्णयामृते गर्गः—

रात्रौ यामद्वयादर्वाक् सप्तमी वा त्रयोदशी ।
प्रदोषः स तु विज्ञेयः (२)सर्वविद्याविगर्हितः ॥

---

तिथेः प्रातः सायं वा द्विमुहूर्त्तत्वेऽपि अनध्यायः 'यद्यनध्यायतिथिर्द्विमुहूर्ताऽपि दृश्येत तमप्यनध्यायं कुर्वीत' इतिबौधायनात् । स्मृत्यन्तरे—

प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी ।
दिनं दूषयते सर्वं सुरा गव्यघटं यथा ॥

लेशादिमत्त्वं सूर्योदयोत्तरं न तु प्राक् । दिनम् अस्तात्पूर्वमाचारात् । हेमाद्रौ—

प्रदोषेषु त्रयोदश्यां नाध्येयं प्रतिपत्सु च ।

त्रयोदश्यनध्यायं शाब्दिका मन्यन्ते । *षष्ठी चेति । व्याख्यातम् । बृहन्मनुः—

चतुर्थ्यां च त्रयोदश्यां सप्तम्यामर्द्धरात्रतः ।
अर्वाग् नाध्ययनं कुर्याद्यदीच्छेत्तस्य धारणम् ॥

---

(१) 'चापि' क० (२) 'वेदाध्ययनगर्हितः' क०

रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते ।
प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ॥

कौर्मे-

*अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् ॥

शौनकः-

*नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः ॥

इत्यनध्यायाः ॥

---

स्मृत्यर्थसारे—

चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने ।
नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥
अर्द्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके ।
यामद्वयादर्वागिति पाठः, यामत्रयादर्वागिति त्वशुद्धः।

*अनध्यायस्त्विति ।

चतुर्दश्यष्टमीपर्वप्रातिपद्वर्जितेषु च ।
वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत् ॥

*नित्ये इति ।

नित्ये नैमित्तिके काम्ये व्रते यज्ञे क्रतौ तथा ।
प्रवृत्ते काम्यकार्ये च नानध्यायाः स्मृतास्तथा ॥
देवतार्चनकार्ये नानध्यायः कदाचन ॥

क्रतुः अहर्गणसाध्यः । ग्रहणग्राहणयोरेवानध्यायः, 'सर्वं वाक्यं सावधारणम्' इतिन्यायात् । ग्रहणं गुरुमुखोच्चारणानूच्चारणं, ग्राहणं धारणम् । शौनकः—

नानध्याये जपेद्वेदान् रुद्रांश्चैव विशेषतः ।
पौरुषं पावमानं च गृहीतनियमाहते ॥

अथ महानाम्न्यादिव्रतम् ।

श्रीधरः—

तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।
चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ॥

---

स्मृत्यर्थसारे—

चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा ।
दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च ॥
तथा विस्मृतिशीलानां बहुवेदप्रपाठिनाम् ॥

एतेषामन्यत्र नानध्यायः । मनुः—

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ इति ।

आपस्तम्बः—'ब्राह्मणेन निष्कारणो वेदः षडङ्गोऽध्येयो ज्ञेयश्च' । स्वशाखामपरित्यजन् परशाखां पठेत् ।

यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥

इति वचनात् । मनुः—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।

स्ववेदमधीत्य वेदान्तराध्ययनं कुर्यात्, शाखावचनस्येहापि-प्रवृत्तेः । व्यासः—

अनध्यायेष्वधीतं यद् यच्च शूद्रस्य सन्निधौ ।
प्रतिग्रहनिमित्तं यन्नरकार्थं तदुच्यते ॥

यमः—

योऽर्थार्थीमां द्विजे दद्यात्पठेच्चैवाविधानतः ।
अनध्याये च तं प्राहुर्वेदविप्लावकं द्विजम् ॥

ए(१)षां लोपे शौनकः—

*व्रतानि विधिना कृत्वा स्वशाखाध्ययनं चरेत्।
अकृत्वाऽध्ययते येन स पापी विधिघातकः॥

---

नारदः—

द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव च।
स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट्॥

पुस्तकस्य पुराणादेः शुश्रूषा श्रोतुमिच्छा। ब्रह्मचारी द्विविधः—उपकुर्वाणो नैष्ठिकश्च। आद्यः द्वादशाब्दानि पञ्च वा वेदग्रहणान्तं गुरुसन्निधौ वसेत्। नैष्ठिकस्तु देहान्तम्। तत्समये समावर्तनं कुर्यादित्याद्यन्यत्र विस्तरः।

*व्रतानीति। स्मृतिः—

प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतम्।
तृतीयं स्यादुपनिषद्गोदानाख्यं ततः परम्॥ इति।

उद्द्योते—यजुर्वेदिनां प्राजापत्यैन्द्राग्नेयसौम्यानि,सामवेदिनां केशान्तगोदानमाहानाम्नीजेष्ठसामव्रतानि, अथर्वणानां गोदानसावित्रीव्रतवेदव्रतविसर्जनव्रतानि, इमानि व्रतानि त्रयोदशवर्षमारभ्य ब्राह्मणेन, एकोनविंशमारभ्य क्षत्रियेण, एकविंशमारभ्य वैश्येन कार्याणि।

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥

इति मनुना षोडशादिवर्षस्य केशान्तकालत्वेनोक्तेः तदनुरोधेन वर्षग्रहणात्। केशान्तो गोदानम्। एषां कालातिक्रमे देवलः—

कृच्छ्रं द्वादशरात्रं ( वै ) चरित्वाऽऽज्याहुतीः शतम्।
अष्टाविंशतिरष्टौ वा क्रमात्कुर्याद्व्रतानि च॥ इति॥

---

(१) 'एतेषां' क०

*प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ॥

स्मृत्यर्थसारे तु–'त्रीन्षड् द्वा(१)दश वा कृच्छ्रान्कृत्वा पुनर्व्रतं चरेत्' इत्युक्तम् ।

अथ समावर्तनम् । सुरेश्वरः—

भौमभानुजयोर्वारे *नक्षत्रे च श्रुतोदिते ।
ताराचन्द्रविशुद्धौ च स्यात्समावर्तनक्रिया ॥

बौधायनसूत्रे तु–'रोहिण्यां तिष्ये उत्तरयोः (२)फल्गुन्योर्हस्ते चित्रायामैन्द्रे वि(३)शाखायां वा स्नायात्'

---

एषां लोपे त्वाह–*प्रत्येकमिति । इदं तु बोध्यं–द्वादशवर्षाणि अध्ययनव्रतचर्ये विधाय यः स्नाति स विद्याव्रतोभयस्नातकः । व्रतमात्रं चेद्व्रतस्नातकः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

इति याज्ञवल्क्यात् । वरमभिलषितार्थम् । "विद्यान्ते स्नायात्" इति वचनं तु विद्यामध्ये स्नानं न कार्यमित्येतदर्थं, विद्याया अन्तमारण्यकमिति वार्थः । अत्र चोपनयनान्तानां संस्काराणामावश्यकत्वं, न स्नानादीनाम् । तेन "यमिच्छेत् तमावसेत्" "ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादि सङ्गच्छते ।

*नक्षत्रे चेति । बौधायनः—'रोहिण्यां तिष्ये उत्तरयोः फल्गुन्योर्हस्ते चित्रायामैन्द्रे विशाखयोर्वा स्नायात्' इति । समावर्त्तनं च स्वयमेव कुर्यात् "समावर्त्यमानः" इति सूत्रात् । एवं च वृद्धिश्राद्धमपि स्वयमेव कुर्यात् ,

कुर्वीत स्वयमेवेदं कर्माचार्यानपेक्षकः ।

---

(१) 'दश' क०
(२) 'फाल्गुन्योर्ह' ख० (३) 'विशाखयोर्वा' ख०

इत्युक्तम् । वसिष्ठः-

स्नानं मध्याह्नकाले तु होरायां कारयेच्छुभम् ।
पूर्वाह्णे तदभावे तु कुर्यात्स्नानं यथाविधि ॥

'सर्वऋतवो विवाहस्य' इति सूत्रात् यदा दक्षिणायने विवाहस्तदा समावर्तनमपि तत्रैव । अन्यथोदगयने समावर्तने 'अनाश्रमी न तिष्ठेत' इति विरोधः स्यादित्युक्तं सुदर्शनभाष्ये । *एतच्च ब्रह्मचारिव्रतलोपप्रायश्चित्तं कृत्वा कार्यम् । तदाह-बौधायनः-'शौचसंध्याद(१)र्भभिक्षाग्निकार्यराहित्यकौपीनोपवीत(२)मेखलादण्डाजिनाधारणदिवास्वापच्छत्रपादुकास्रग्विधारणाभ्यङ्गोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याभिरतौ ब्रह्मचारी कृच्छ्रत्रयं चरेत्, महा(३)व्याहृतिहोमं च कुर्यात्। समावर्तनोत्तरं पूर्वमृतानां त्रिरात्रमाशौचं कार्यम् ।

---

विधायाऽभ्युदयश्राद्धं पूर्वेद्युरपरेऽहनि ॥

इति शौनकोक्तेः । हारावल्यां तु विवाहात्प्राचीनसुतसंस्कारत्वान्नान्दीश्राद्धं पितैव कुर्यात्, तदभावे भ्रात्रादिः, तदभावे स्वयं कुर्यादित्युक्तं, तच्चिन्त्यं शौनकविरोधात् । व्रतचतुष्टयलोपे प्रायश्चित्तमुक्त्वाऽऽह-*एतच्चेति । 'पाहीति दशहोमम्' इति पाठः । प्रयोगरत्ने प्रयोगः । यदि ब्रह्मचारिण आतुरदशायामुक्तप्रयोगो न सम्भवति तदाऽऽपस्तम्बोक्तः समावर्तनानुकल्पः कार्यः । ब्रह्मचारी संकल्प्य स्वचिन्हानि मेखलादीनि त्यक्त्वा केशश्मश्रुवपनादि नखकृन्तनं च कृत्वा तीर्थे तूष्णीं स्नात्वा वासोन्तरपरिधानद्विराचमनतिलकधारणानि कृत्वा श्रोत्रियागारादग्निमाहृत्योपसमाधाय तत्र प्रजापतिं मनसा ध्यायन् तूष्णीमेव समि-

---

(१) 'दर्भा' क० (२) 'मेखलाजिनाधारण' क०
(३) 'व्याहृतिहोमं पाहित्रयोदशहोमं च कुर्यात्' ख० ग०

आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् ।
समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत् ॥

इति मनूक्तेः । आदिष्टी ब्रह्मचारीति विज्ञानेश्वरः । ब्रह्मचर्ये यदि कश्चिन्न मृतस्तदा त्रिरात्रमध्ये विवाहः कार्योऽन्यथा नेति सिध्यति । जनने तु सत्यपि न त्रिरात्रम्, तत्रातिक्रान्ताशौचाभावादुदकं दत्त्वेति वचनाच्चेति दिक् । तत्रापि विकल्पः ।

पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ।
आशौचं कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम् ॥

इति छन्दोगपरिशिष्टात् ।

स्नातकव्रतान्याह व्यासः—

यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ।
छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ॥
रौक्मे च कुण्डले वेदः कृत्तकेशनखः शुचिः ॥

वेदो दर्भबटुः । मनुः—

उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलंकारं स्रजं करकमेव च ॥

अन्यान्यपि बह्वृचगृह्यस्मृत्यादिभ्यो ज्ञेयानि ।

अथ छुरिकाबन्धः । ज्योतिर्निबन्धे नारदः—

छुरिकाबन्धनं वक्ष्ये नृपाणां प्राक्करग्रहात् ।
विवाहोक्तेषु मासेषु शुक्लपक्षेष्वनस्तगे ॥

---

धमादधातीति कौस्तुभादौ बोध्यम् । उपाकर्मस्नानविवाहानां क्रमिकत्वादुपाकर्माकृत्वा विवाहो न कार्यः,

अनारभ्योक्तकाले तु वेदान्कन्यां य उद्वहेत् ।
नूतनो ब्रह्मचारी स्यात्सर्वधर्मबहिष्कृतः ॥

इत्याश्वलायनोक्तेश्च,

जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते ।
मौञ्जीबन्धर्क्षतिथिषु कुजवर्जितवासरे ॥

सङ्ग्रहे—

शूद्राणां राजपुत्राणां मौञ्ज्यभावेऽस्त्रबन्धनम् ।
मौञ्जीबन्धोक्ततिथ्यादौ कार्यं भौमदिनं विना ॥

अथ विवाहः । याज्ञवल्क्यः—

*अविप्लुतब्रह्मचर्यो लक्षण्यां *स्त्रियमुद्वहेत् ।
*अनन्यपूर्विकां *कान्तामसपिण्डां यवीयसीम् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥

ग्रहदोषादुपाकर्म प्रथमं न भवेद्यदि ।
उक्तकालेऽथवाषाढे कुर्याच्छरदि वाऽपि च ॥
अकाले नैव तत्कुर्यादुपाकर्म कथञ्चन ॥
अकृत्वा नोद्वहेत्कन्यां मोहाच्चेत्पतितो भवेत् ॥

इति स्मृत्यन्तराच्च ।

*अविप्लुतेति । खण्डितब्रह्मचर्यस्तु प्रायश्चित्तं कृत्वोद्वहेदिति स्मृत्यर्थसारः । *स्त्रियमिति । सिद्धाया एव स्त्रियः कर्मत्वोक्त्या भार्यात्वलक्षणसाध्यरूपेण तद्वाच्यतयोद्वाहः स्त्रीसंस्कारार्थत्वेन विधेयः । न च तस्य पुरुषसंस्कारार्थत्वं प्रतिग्रहमात्रेण संस्कारोपगमे गोकाञ्चनादिप्रतिग्रहेऽपि पुंसः संस्कारप्रसङ्गात् । पुंसस्तु नैष्ठिकब्रह्मचर्यादिनाप्यायुःक्षपणस्य सुकरत्वादुद्वाहस्य संवेशार्थिनो रागप्राप्तत्वेऽपि तदाश्रितं स्वस्तिवाचनादिकं वैधमेव, भोजनाद्याश्रयेण प्राङ्मुखत्वादिवत् । एवञ्च वरपितुः पुत्रविवाहं करिष्ये इति संकल्पोऽशुद्ध एव । *अनन्येति । या दानेनोपभोगेन वा पुरुषान्तरपूर्विका न भवति तामित्यर्थः । एतेन मनोदत्ता वाग्दत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्त पुनर्भुवो व्यावर्त्यन्ते । *कान्तां वोढुर्मनोनय-

लक्षण्यां (१)बाह्याभ्यन्तरलक्षणैर्युक्ताम् । बाह्यानि *काशीखण्डादौ प्रसिद्धानि । आन्तराण्याश्वलायनोक्तानि*'अष्टौ पिण्डान्कृत्वा' इत्यादीनि ।

मनुः—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

दत्तिममातुर्गृहीता (२)असपिण्डा सगोत्रा । तत्कुलनिवृत्तये चकारान्मा(३)तुरसगोत्रा दत्तस्य पितुर्जनककुले पितुरसगोत्रापि सपिण्डत्वान्निषिद्धेत्यन्यश्चकारः । असपिण्डां सापिण्ड्यरहिताम् ।

---

नानन्दकारिणीम् । *काशीखण्डादाविति । काशीखण्डं प्रसिद्धम् । आदिना—

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् ॥

इत्यादिग्रहः । विष्णुपुराणे—

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ॥

इत्यादयो निषेधा अपि द्रष्टव्याः । प्रयोगपारिजातादौ तद्विस्तरः। *अष्टौ पिण्डानिति । "अष्टौ पिण्डान्कृत्वा ऋतमग्रे प्रथमं जज्ञे ऋतं सत्ये प्रतिष्ठितं यदि यं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानाभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा(४)भविष्यतीति विद्यात् , गोष्ठात् पशुमती, वेदिपुरीषाद्ब्रह्मवर्चस्विनी, अविदासिनो ह्रदात्सर्वसंपन्ना, देवनात्कितवी, चतुष्पथाद्द्विप्रव्रा-

---

(१) 'बाह्यान्तरलक्षणैर्यु' क० (२) 'असपिण्डोऽपि सगोत्रः' क० ख०
(३) 'मातुरगोत्रा दत्तकस्य' क० (४) 'भविष्यामि' ख०

*तच्चै*कशरीरावयवान्वयेन भवति । *एकस्य हि पितुर्मातुर्वा शरीरस्थावयवाः पुत्रपौत्रादिषु साक्षात्परम्परया वा शुक्रशोणितादिरूपेणानुस्यूताः । यद्यपि पत्न्याः पत्या सह भ्रातृपत्नीनां च परस्परं नैतत्सम्भवति तथापि *आधारत्वेनैक(१)शरीरावयवान्वयोऽस्त्येव 'अस्थिभिरस्थीनि' इति मन्त्रलिङ्गात् । एकस्य हि पितृशरीरस्थावयवाः पुत्रद्वारा तास्वाहिता इति मदनरत्नपारिजातविज्ञानेश्वरादयः । वाचस्पतिशुद्धिविवेक-

---

जिनी, ईरिणादधन्या, श्मशानात्पतिघ्नी" इत्याश्वलायनसूत्रम् । अविदासिनः अनुपक्षयवतः । नारायणवृत्तौ प्रयोगो बोध्यः । इयं च परीक्षा कन्यावरयोः कुलपरीक्षोत्तरं कार्या 'कुलमग्रे परीक्षेत' इत्याश्वलायनोक्तेः ।

*तच्च सापिण्ड्यं च । *एकेति । समानः एकः पिण्डो देहो देहावयवो यस्याः सा सपिण्डा, न सपिण्डा असपिण्डेति विग्रहात् । *एकस्येति । पुत्रस्य साक्षाज्जनकशरीरावयवान्वयः पुत्रशरीरे पितुरवयवानामस्थिमज्जादीनां मातुरवयवानां रक्तमांसादीनां साक्षात्प्रवेशात् । "एतद्व षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतः, अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृतः" इति श्रुतेः । पितामहादिभिः साकं तु पितृद्वारा पितामहादिशरीरावयवान्वयात् "प्रजामनु प्रजायसे" इति श्रुतेः । एवं पितृव्यपितृष्वसृमातृष्वस्रादिभिरपीति । *आधारत्वेनेति । आरभ्यारम्भकभावेन हि एकशरीरावयवान्वयो विवक्षितः । तथाच भ्रात्रोरारम्भकैकपितृ(२)शरीरावयवान्वयः । भर्तृभार्ययोरपि आरभ्यैकपुत्रशरीरावयवद्वारा तत्पितामहशरीरावयवान्वयः । क्वचिच्चैकावयवाधारत्वेनापि, यथा

---

(१) 'शरीरान्वयोऽस्त्येव' क० (२) 'शरीरान्वयः' ख०

शूलपाण्यादिगौडमैथिलादयोऽप्येवम् । (१)श्रुतावपि—एतस्माद्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः इति, ‘प्रजामनु प्रजायसे’ इति च ।

चन्द्रिकापरार्कमेधातिथिमाधवादयस्तु एकपिण्डदानक्रियान्वयित्वं सापिण्ड्यम् ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

इति मात्स्योक्तेः । नच पितृव्यादिष्वेतन्नास्तीति वाच्यं, तत्कर्तृकश्राद्धे दैवतैक्येन तत्सत्त्वात् । देवदत्तकर्तृकश्राद्धे हि ये देवताभूतास्तेषां मध्ये यः कश्चिदन्यकर्तृकश्राद्धेऽनुप्रविशति तेषां सापिण्ड्यम् । तद्भार्याणामपि भर्तृकर्तृकश्राद्धे सहाधिकारित्वेन तदन्वयात् ।

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।

इति स्मृतेश्च । श्रुतीनां च वैराग्यार्थत्वात्त(२)स्याः सापिण्ड्यनिमित्तत्वे मानाभावात् । नच मातुलादिष्वेतन्नास्तीति वाच्यं, मातामहरूपदैवतैक्यात् । ननु गुरुशिष्यादेरपि श्राद्धदेवतात्वात्सापिण्डत्वं स्यात् । किं बहुना ?

सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थतः ।

इति मार्कण्डेयपुराणाद्राज्ञोऽपि श्राद्धकर्तृत्वात्सापिण्ड्यप्रसङ्गः । सत्यम्,

---

मात्रोर्भर्तृद्वारा श्वशुरावयवाधारत्वमित्यादि अन्यत्राप्यूह्यम् । न-[illegible]मनेऽपि गन्तृगम्ययोरेकशरीरारम्भकत्वात्सापिण्ड्यापत्तिः । न चानिषिद्धत्वं विशेषणं रजस्वलानाम्भार्याणामपि नि-

---

(१) ‘श्रुतिरपि’ क०  (२) ‘तस्य’ ख० ग०

*पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।
इति याज्ञवल्क्यवचनेन मातापितृसंबन्ध एव त-त्सत्त्वात्। ऊर्ध्वं 'सापिण्ड्यं निवर्तते' इति शेषः। ननु पञ्च-मत्वाद्यत्र नियम्यते, *न मातृत इत्यादि, वाक्यभेदात्। मैवम्, *मातृकुले पञ्चमत्वस्य पितृकुले सप्तमत्वस्य च बोधने*तुल्यत्वात्। *पौरुषेयत्वाददोष इति चेत् तु-ल्यम*न्यत्रापि, अन्यकर्तृके राज्ञस्तत्पितॄणां वा दे-वतात्वाभावाच्च । किञ्च अवयवान्वयपक्षे*यथा योग-

षधात; इति चेत् ? न, निषिद्धव्यभिचारकान्यत्वेन विशेषणात्। व्यभिचारश्च भार्यान्यस्त्रीगमनम्। तथाच यः शरीरावयवान्वयो विवक्षितः स निषिद्धभार्याभिन्नस्त्रीगमनक इति न दोषः। निषि-द्धत्वं च वेदमेयाभावप्रतियोगिकृतिसाध्यत्वं, तादृशानिवर्त्तनागो-चरत्वं वेत्यन्यदेतत्। मातापितृसम्बन्ध एवेत्यर्थः। राजादेर्निर्वा-प्यपिण्डान्वयस्य सापिण्ड्यप्रयोजकत्वानुपगमादिति भावः। तत्कु-त इत्यत्र वक्ष्यति-(१)किञ्चेति। *पञ्चमादिति। मातृतः पञ्च-मादेवोर्ध्वं सापिण्ड्यं निवर्त्तते न चतुर्थादपीत्यर्थः। *न मातृत इत्यादि। नियम्यते इति वर्त्तते। मातृत एव पञ्चमादूर्ध्वं सापिण्ड्यं निवर्त्तते इति नेत्यर्थः, *मातृकुले इति। मातरमादाय कुले समुदाये इत्यर्थः, एवं पितृकुले इत्यत्रापि, ल्यब्लोपपञ्चम्याः पञ्च-म्याद्यन्वयस्वीकारात्। *तुल्यत्वादिति। वाक्यभेदाभावेत्या-दि, उभयत्राप्यर्थभेदाभावात। अन्यथा घटमानय कलशमानये-त्यत्रापि वाक्यभेदापत्तेरित्यर्थः। वाक्यभेदोद्धारवैयर्थ्यं शङ्कते-*पौरुषेयत्वादिति। *अन्यत्रापीति। तन्मूलभूतश्रुतावपी-पीत्यर्थः। याज्ञवल्क्यवाक्याच्छ्रुतावपौरुषेयत्वमेव विशेषः। वा-क्यभेदतदुद्धारौ तूभयत्रापि समावेवेत्यर्थः। *यथेति। साक्षात्प-

(१) किञ्चेति नास्ति घ० ङ०

रूढ्या परिहारस्तथे*हापि । तेन मातृकुले पितृकुले चैकपिण्डदानक्रियान्वयित्वं सापिण्ड्यमित्याहुः । तेनैकस्य पित्रादयः षट् पुत्रादयश्च षट् सपिण्डा भवन्ति ।

अत्र केचिदुभयतः सापिण्ड्यानिवृत्तावेवोद्वाहो नान्यथेत्याहुः । शुद्धचिन्तामणिवाचस्पतिहरदत्तादयस्तु सगोत्रत्ववत्सापिण्ड्यस्य सप्रतियोगिकत्वेन संयोगवदु*भयनिरूप्यत्वात् एकतो निवृत्तावन्यतो निवृत्तेरावश्यकत्वान्मूलपुरुषमारभ्या(१)ष्टमो वरो मूलपुरुषमारभ्य द्वितीयतृतीयादिकां (२)कन्यामुद्वहेदित्याहुः । शिष्टास्तु न वधूवरयोः*स्वतः सापिण्ड्यं, किंतु कूटस्थसंततित्वात्तत्सापिण्ड्यमेव । अतोऽष्टमवरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात्तत्संततिस्थत्वाद्वरस्तां प्रति सपिण्ड एवेत्यविवाहः । सापिण्ड्यासापिण्ड्ययोः प्रतियोगिभेदेनाविरोधादित्याहुः । *इदमेव च युक्तम् । आशौचेऽप्ये*वं सापिण्ड्यं ज्ञेयम् ।

---

रम्परयाऽवयवानुवृत्तेर्निर्मर्यादत्वाद्याज्ञवल्क्येन दर्शितायां मर्यादायां रूढिः । *इहापीति । तादृशमर्यादायां रूढिरित्यर्थः । अत्र मूलपुरुषादेकतः कन्या तत्कन्या तत्कन्या तत्कन्येत्येवं पञ्चम्यां कन्यायामव्याप्तेररुचिर्बोध्या । *उभयनिरूप्यत्वात् उभयान्यतरप्रतियोग्यनुयोगित्वात् ।

*स्वत इति । वधूप्रतियोगिकं वरे, वध्वां च वरप्रतियोगिकमित्यर्थः, तथा सति दीर्घत्वादिवत्तत्प्रत्यक्षापत्तेः । तत्सापिण्ड्यमेवेति तृतीयार्थो भेदः । तथाच स्व(३)(सपिण्डकूटस्थ) संततित्वं सापिण्ड्यमिति भावः । *इदमेव चेति । पञ्चमादूर्ध्वं वधूवरा-

---

(१) 'अष्टमो वरो मूलपुरुषमारभ्य' नास्ति क०

(२) 'कन्यां' नास्ति क०　　(३) कंसान्तर्गतं नास्ति घ०

न्यतरमातृतः तत्सापिण्डकूटस्थसन्ततित्वात्मकं विवाहप्रतिबन्धकं सापिण्ड्यं वधूवरयोर्निवर्त्तते इत्यर्थः । एवं पितृतः सप्तमादित्यत्रापि । यत्र च वरोऽष्टमादिः कन्या तु द्वितीयादिका, तत्र (१)कूटस्थस्य वधूपित्रादिसप्तमादूर्ध्वत्वाभावेन विवाहप्रतिबन्धकसापिण्ड्यसद्भाव इति भावः । अन्ये त्वाहुः—यत्र वृक्षे प्रथमतो मूलाग्रयोः कपिसंयोगः, ततो मूले तदभावः, तत्र तदानीं मूलस्य नावच्छेदकत्वं कालानवच्छिन्नदेशादेरवच्छेदकत्वानुपगमात् । यथाऽवान्तरकालावच्छिन्न एव स्थूलकालोऽवच्छेदकः, तथा तत्कालावच्छिन्नदेश एव तथेति । इदानीं मूले वृक्षः कपिसंयोगीति प्रत्ययो न प्रमा किन्तु मूले वृक्षः कपिसंयोगीत्यादिरेव तथा तद्वत् अयं वंशो वरावच्छेदेन सापिण्ड्यवानिति प्रत्ययो न प्रमा किन्तु कन्यावच्छेदेन सापिण्ड्यवानिति प्रत्यय एव तथा । तादृशप्रमाविषयकन्यायाश्च शुद्धवरेणापि न विवाहः ।

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया।
क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥

इति प्रयोगपारिजाते मरीचिना दोषोक्तेः । पञ्चमे सप्तमे इत्येतत्कैमुतिकन्यायेन द्वितीयातृतीयादिकन्यासङ्ग्राहकम् । क्रियापराः स्वतः शुद्धाः, असपिण्डा इति यावदित्याहुः । वस्तुतस्तु यथाऽसपिण्डामिति कन्याविशेषणं तथाऽसपिण्ड इति वरविशेषणम् ।

एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥

इति वचनेनानन्यपूर्विकात्व-यवीयस्त्व—भ्रातृमत्त्व-रूपगुणान्वितकन्यानिरूपितासापिण्डत्वलाभात् । तच्च सापिण्ड्यं कन्यायां वरनिरूपितं वरे च कन्यानिरूपितं पृथगेव, न तूभयनिरूपितं वरे

(१) 'कूटस्थवधू' ख०

यत्र तु मध्ये विच्छिन्नमपि सापिण्ड्यं मण्डूकप्लुतिवत्पुनरनुवर्तते। यथा कूटस्थात्पञ्चम्योः कन्ययोः *पुत्रौ तत्र निवृत्तिः, तदपत्ययोस्त्वनुवृत्तिस्तत्रापि न सापिण्ड्यासापिण्ड्ययोर्दोषः; *संबन्धिभेदात्। तेन तत्र न विवाहः।

---

तदतिदेशवैयर्थ्यात्। एवञ्चोक्तस्थले वरवध्वोरुभयत्र सापिण्ड्यशून्यत्वाभावान्न विवाहः। न च सपिण्डशब्दस्य ससम्बन्धिकत्वादेव तल्लाभे अन्यत्र तदतिदेशे मानाभाव इति वाच्यं बाधाभावस्यैव तदतिदेशे मानत्वादिति। अधिकमन्यतोऽवगन्तव्यम्। *एवं सापिण्ड्यमिति। एकतः सप्तमपर्यन्तानामन्यतोऽष्टमादिजननादौ दशरात्रम्, अष्टमादीनां च सप्तमपर्यन्तजननादौ त्रिरात्रमाशौचमित्यर्थः। एकतो निवृत्तौ निवृत्तिमते चोभयत्रापि त्रिरात्रमेव। *पुत्राविति। पुत्रश्च पुत्री चेति विग्रहः। ननु कूटस्थात्पञ्चमीसन्तानभूते निवृत्तस्यापि तत्मातृकुलसापिण्ड्यस्य सप्तमेऽनुवृत्त्या प्रवृत्तिः पितुः सप्तमत्व एव सापिण्ड्यनिवृत्तेरिति न युक्तं, यद् गतं तद्गतमेवेति न्यायात्। किञ्च तर्हि याज्ञवल्क्येन पञ्चम्या मातुरित्येवोक्तं भवेदित्यत्राह—*सम्बन्धीति। पञ्चमादूर्ध्वमित्याद्यन्वयार्थमेव हि पञ्चमादिष्वभिहितम्। तथा च मातृतः सापिण्ड्यं पञ्चमादूर्ध्वं निवर्त्तते पितृतः सापिण्ड्यं सप्तमादूर्ध्वं निवर्त्तते इत्यर्थः। तत्र मातृद्वारकं सापिण्ड्यं षष्ठे निवृत्तं पितृद्वारकं सापिण्ड्यं च सप्तमेऽस्ति। सम्बन्धिनोर्मातापित्रोर्भेदात्सापिण्ड्यभेदात्। तत्र मण्डूकप्लुतिवदिति दृष्टान्तः। प्लुतिघटकौ पूर्वोत्तरसंयोगौ द्वौ, अत्र सापिण्ड्ये द्वे एतावन्मात्रे बोध्यः। दृष्टान्ते सम्बन्धी मण्डूक एकः दार्ष्टान्तिके तु सम्बन्धिनौ मातापितरौ भिन्नौ इति विशेषः। नहि दृष्टान्ते सर्वसाम्यमिति न्यायात्।

केचित्तु सोदकत्ववत्सापिण्ड्यवदङ्गमेव तत्र दीर्घत्वादिवत्

*अत्र कूटस्थमारभ्य गणना कार्या। तदुक्तम्—

बध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥ इति।

कूटस्थो *मूलपुरुषः।

---

सप्रतियोगिकं। तच्चैकगोत्रे सप्तमपर्यन्तं, भिन्नगोत्रे पञ्चमपर्यन्तमिति वदन्ति। तदसत्, भिन्नगोत्रे सप्तमपर्यन्तं सापिण्ड्यासत्त्वप्रसङ्गात्। इष्टापत्तिस्तु धार्मिकाणामनुचितेति।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा।

इति याज्ञवल्क्यवाक्ये कस्मात्पञ्चमादिति सप्तमादिति चेत्तत्राह-*अत्रेति।*मूलपुरुष इति। यतः सन्तानभेद इति यावत्। तदाह—संतानो भिद्यते यस्मात्पूर्वजादिति। तथाच मातृद्वारकं सापिण्ड्यं कूटस्थात्पञ्चमादूर्ध्वं, पितृद्वारकं सापिण्ड्यं कूटस्थात्सप्तमादूर्ध्वं निवर्त्तते इत्यर्थः। कूटस्थात्पञ्चम्या मातुरनुपादाने सापिण्ड्यस्य मातृद्वारकत्वभङ्गः स्यात्। मातृद्वारकत्वं च स्वाश्रयीभूतान्त्यमातृघटितसन्तानवृत्तित्वमित्यर्थतो मातृलाभः। एवं कूटस्थात्सप्तमस्य पितुः प्रवेशो बोध्यः। पञ्चमादित्यत्र पूरणप्रत्ययात् पञ्चानां पूरणोऽन्त्यो लभ्यते। न च पञ्चम्या मातृत इत्येव कुतो नोक्तमिति वाच्यम्, तथा सति कूटस्थात्पञ्चम्या मातुरूर्ध्वं सापिण्ड्यं नास्तीत्यर्थः स्यात्। तथाच कूटस्थात् षष्ठ्यां सापिण्ड्यसामान्यनिवृत्त्यापत्त्या अष्टमवराविवाह्यत्वप्रसङ्गः। अतः पञ्चमादित्युक्तं, तत्श्लोक्त एवार्थः। तथाच तत्र मातृद्वारकं सापिण्ड्यं नास्ति पितृद्वारकं तु वर्त्तते, अतो ज्ञायते एकतो निवृत्तावुद्वाहो न भवतीति। अथवा मातृतः पितृत इति सप्तम्यौ, वृत्तित्वं तदर्थः, सापिण्ड्ये तदन्वयः। तथाच मातृनिष्ठं सापिण्ड्यं कूटस्थाद्गणनायां सन्तानघटकात्पञ्चमादूर्ध्वमित्यर्थः। अथवा मातृतो यः सन्तानभेदप्रतियोगी अथ तस्मात्पञ्चमादित्यादिरर्थः।

विश्वरूपनिबन्धे—

*एवमुक्तप्रकारेण पितृबन्धुषु सप्तमात् ।
ऊर्ध्वमेव विवाह्यत्वं पञ्चमान्मातृबन्धुतः ॥
संतानो भिद्यते यस्मात्पूर्वजादुभयत्र च ।
तमादाय गणेद्धीमान्वरं यावच्च कन्यकाम् ॥

---

*एवमिति। पितृबन्धुषु बन्धुत्वं ज्ञातित्वं, तच्च कूटस्थतदपत्यषट्कान्यतमत्वम्। पितरमादाय तादृशज्ञातित्वाश्रयेषु पितृकुले पितृपक्षे इत्यादावप्ययमेवार्थः।वृत्तित्वं सप्तमत्वान्वितं सप्तम्यर्थः। तथाच तादृशज्ञातित्वाश्रयवृत्तिकूटस्थावधिकसप्तमत्ववत ऊर्ध्वमित्यर्थः। एवं मातृबन्धुषु पञ्चमादित्यत्र कूटस्थतदपत्यचतुष्टयान्यतमत्वाश्रयवृत्तितादृशपञ्चमत्ववत ऊर्ध्वमित्यर्थः। माता च जननी। केचित्तु मातृपदं कूटस्थतदपत्यचतुष्टयरूपपञ्चके पारिभाषिकम्

तिस्रः पूज्याः पितुः पक्षे, तिस्रो मातामहे तथा ।
इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी ॥

इति चतुर्विंशतिमते मातामह्यादौ मातृशब्दप्रयोगात् । एवं पितृशब्दोऽपि सप्तसाधारणपितृत्वेन बोधकः। ताभ्यां सप्तम्यन्ताप्तिः। एवञ्च मातृघटितसंताने सापिण्ड्यं संतानभेदावधि कूटस्थमारभ्य गणनायां संतानघटकान्त्यपञ्चमादूर्ध्वं निवर्त्तते इत्यर्थः। एवं पितृत इत्यत्रापि बोध्यम्। पितृबन्धुष्वित्यादौ सन्तानभेदारम्भकप्रथमादिसप्तमान्तः समुदायो बन्धुः। उद्भूतावयवभेदविवक्षया बहुवचनम्। सप्तमत्वादौ वृत्तित्वरूपसप्तम्यर्थान्वयः। अर्थ ऊह्यः। एवं पितृबन्धुभ्यः सप्तमीं मातृबन्धुभ्यः पञ्चमीमिति वासिष्ठे वन्ध्वन्तं प्राग्वत्। तादर्थ्ये चतुर्थी। तथाच तादृशसप्तमान्तसमुदायार्थां सप्तमीं कूटस्थादष्टमीमिति तादृशपञ्चमान्तसमुदायार्थां पञ्चमीं कूटस्थात षष्ठीमिति वार्थ इत्याहुः।

पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ।

*स्मृतितत्त्वे नारदः—

आ सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।
अविवाह्या सगोत्रा च समानप्रवरा तथा ॥

अत्र बन्धुभ्य इति पञ्चमीनिर्देशात्पितुः पितृष्वसृपुत्रात्सप्तमीं, मातुः म(१)ातृष्वसृपुत्राच्च पञ्चमीमपि त्यजेत् । एवमन्यबन्धुषु ज्ञेयम् । तत्रापि त्रिगोत्रात्पर्येऽर्वागि विवाहं कुर्यात् वक्ष्यमाणवचनात् । त्रिगोत्रगणना च मातामहगोत्रापेक्षया, नतु स्वापेक्षया । अन्यथा पितुः *पितामहदुहितुर्दौहित्री(२)पुत्री परिणेया स्यात् ।

इत्यत्र मातृतो यः सन्तानभेदप्रतियोगी प्रथमः ततः पञ्चमीमित्यर्थः ।

पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम् ।

इत्यादावप्येवमेव । 'सप्त पितृतः परिहरेत् पञ्च मातृतः' इत्यत्र पितृसंताने कूटस्थात्सप्त मातृघटितसन्ताने कूटस्थात् पञ्च परिहरेदित्यर्थः । एवमन्यत्राप्यूह्यम् । गौडमतमाह—*स्मृतितत्त्वे इत्यादि । एतन्मतेऽपि बन्धुपदमाशौचप्रकरणस्थबन्धुत्रयान्तर्गतबन्धुपरं, तत्रात्मबन्धुर्न ग्राह्यः 'पितृमातृतः' इत्येवोक्तेः । तस्य-बन्ध्वन्वयः पञ्चम्यर्थ ऊह्यः । तेन पितृबन्धुमातृबन्ध्वोर्लाभः । पितृबन्धुर्मातृबन्धुश्च त्रेधा—

पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबन्धवः ॥

इत्युक्तेः । तेनान्यबन्धुष्वियस्य सङ्गतिः । *पितामहदुहितुर्दौहित्रीपुत्रीति । पितामहकन्या तत्कन्या तत्कन्या तत्कन्येत्यर्थः, स्वगोत्रापेक्षया गणनायां पितामहस्य स्वगोत्रत्वात् । तदुक्-

(१) 'पितृष्वसृ' ख० ग० (२) 'पुत्राः' क०

# परिशिष्टदीपकः=संस्कारदीपकस्य परिशिष्ट-विषयाणां निरूपणात्मकः ।

अस्मिन् ग्रन्थे विषयाः—

दानस्वरूपादिकं, दानविधिः, प्रतिग्रहविधिः, देयद्रव्यदेवताः, द्रव्य-धान्य-भूमानानि, कुण्डमण्डपनिर्माणप्रकारः, सहोमतुलादानप्रयोगः, होमरहिततुलादानप्रयोगः, बृहद्गोदानप्रयोगः, गवादिमूल्यनिरूपणम, संक्षिप्तगोदानप्रयोगः, वृषदान-महिषीदान-त्रिविधविद्यादान-सुवर्णदान-भूम्यादिदशदानानि । सर्वप्रायश्चित्तप्रयोगः, ऋणधेन्वादिपञ्चधेनुदानानि । अश्वदान-हस्तिदान-रथदान-गृहदानानि । सर्वास्तुला[illegible]प्रयोगः । शय्यादान-हिरण्याश्वदान-नवग्रहदानानि । सुवर्णादिदानमन्त्राः । गोमुखप्रसवशान्तिः । मूलाश्लेषादिशान्तयः । जलाशयोत्सर्गप्रयोगः । लघुजलाशयोत्सर्गप्रयोगः । मू० २।)

कार्तीयेष्टिदीपकः-यन्त्रस्थः ।

January 1925.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NO. 325.

कमलाकरभट्टविरचितो-

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः।

श्रीधर्माधिकारिपाठशालायां प्रधानाध्यापकेन श्रीयुत पं० व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा तदीयगुरुवर म० म० पं० पर्वतीयनित्यानन्द-पन्तप्रदर्शितरीतिमनुसृत्य संशोधितो टिप्पण्या परिष्कृतश्च।

# NIRNAYA SINDHU;

of Kamalakara Bhatta
With Commentary of Krishnam Bhatta.
Edited With Notes by Vyakaranopadhyaya
Gopala shastri Nene.

FASCICULUS XI–११.

*PUBLISHED & SOLD BY THE SECRETARY*
CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES.
AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHÂRAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1924.

*यद्वाः मातामहगोत्रापेक्षया तु त्रिगोत्रान्तर्गतेन वि-
वाहप्रसङ्ग इति संबन्धतत्त्वादयो गौडग्रन्थाः । संबन्ध-
विवेके शूलपाणिरप्याह—*पञ्चमात्सप्तमाद्वार्वागपि
त्रिगोत्रान्तरिता विवाह्या ।

*असंबद्धा भवेन्मातुः पिण्डेनैवोदकेन वा ।
सा विवाह्या द्विजातीनां* त्रिगोत्रान्तरिता च या ॥

इति बृहन्मनूक्तेः,

सन्निकर्षेऽपि कर्तव्यं त्रिगोत्रात्परतो यदि ।

इति देवलोक्तेश्चेति । *एतच्च दाक्षिणात्या न मन्यन्ते ।

---

हितुर्द्वितीयं गोत्रं तद्दौहित्र्यां तच्चतुर्थमिति तत्पुत्र्याः त्रिगोत्रान-
न्तर्गतत्वापत्तिः । विवक्षयोक्तापत्तिं वारयति—*यद्वा इति ।
मातामहगोत्रापेक्षया त्रिगोत्रात्यये इत्यस्य गोत्रत्रयातिरिक्ताना-
श्रयमातामहगोत्रका वधूर्विवाह्येत्यर्थः । प्रकृते च पितामहदौ-
हित्र्या गोत्रं तृतीयं तदेव च वधूमातामहगोत्रमिति न तद्विवा-
हप्रसङ्गः । याज्ञवल्क्यवचनेऽप्याह—*पञ्चमादिति । गोत्रै-
क्ये सप्तपुरुषपर्यन्तं सापिण्ड्यं, तद्भेदे तु त्रिगोत्रं, तस्य सापि-
ण्ड्यसङ्कोचकत्वात् । तच्चाशौचोपयोगि,

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।

इति शङ्खोक्तेः । विवाहप्रतिबन्धके पितृसापिण्ड्ये त्रिगोत्रान्त-
रितत्वं तदनन्तरितत्वं च स्फुटम् । मातृसापिण्ड्ये त्वाह—*असं-
बद्धेति । मातुः पिण्डेनासम्बद्धेत्यन्वयः । पिण्डो देहः, मातृदेह-
सम्बन्धशून्या । मातुरुदकेनेति मातृबन्धुनेत्यर्थः, असम्बद्धेत्यत्रा-
न्वयः । *त्रिगोत्रेति । [illegible]संबन्धकं, स्वगोत्र-
साधारणत्रिगोत्रान्तरितेत्यर्थः । अयमनुकल्पः, कूटस्थमारभ्य स-
प्तमीपञ्चम्यनाश्रयाविवाहो मुख्यकल्पः, सन्निकर्षेऽपीति निकृष्टत्वात् ।
*एतच्चेति । सम्बन्धतत्त्वमते पितुरष्टमीं मातृतश्च षष्ठीमु-

यत्तु वसिष्ठः—

*पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा । इति,

यच्च विष्णुपुराणम्—

पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।

गृहस्थ उद्वहेत्कन्यां न्यायेन विधिना नृप ॥ इति,

तत्पञ्चमीं सप्तमीमतीत्येति व्याख्येयम् ।

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।

क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥

इत्यपरार्के मरीचिवचनात् । हारलतायां शङ्खलिखितौ—

*सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।

पिण्डश्चोदकदानं च आशौचं च तदानुगम् ॥

गोत्रं संतानम् । आशौचं तानाभिव्याप्य गच्छतीत्यर्थः ।

---

द्वहेत्, पितृष्वसुर्नवमीं मातुः पितृष्वसुः सप्तमीं च त्यजेदित्यनौचित्यापत्तेः। तस्मान्नारदवाक्ये मर्यादायामाङ्, सन्तानादिति शेषः । सन्तानं मर्यादीकृत्येत्यर्थः । तथाच पितृमातृसन्तानभेदारम्भकप्रथमादिसमुदायात् तत्समुदायमादाय सप्तमत्वपञ्चमत्वकल्पनासन्तानपर्यन्तमविवाहेत्येवार्थः । शूलपाणिमते कैमुतिकन्यायेन पञ्चमे सप्तमे चैवेति वाक्यविरोध इति । *पञ्चमीमिति । उद्वहेदिति वर्त्तते । पञ्चमे इत्यादेः कूटस्थात्पञ्चमे इत्यादिरर्थः, कूटस्थाच्चतुर्थी माता षष्ठश्च पिता भवतीत्यभिप्रायः । नन्वत्र पञ्चमे इति कूटस्थभिन्नगोत्रघटितपञ्चान्तर्गतविवाहनिन्दा, सप्तमे इति च कूटस्थसमानगोत्रसप्तान्तर्गतविवाहनिन्दा चेति वाग्मिनः परिष्कुर्वन्तीत्यलम्— *सपिण्डतेति । सर्वेषां ब्राह्मणादीनां, गोत्रतः कूटस्थसमानगोत्रगर्भे, पिण्डश्चेत्यादि और्ध्वदेहिकोपलक्षणं, तदानुगं ता-

शुद्धिविवेके शुद्धिचिन्तामणौ च ब्राह्मे—

सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी ।
सपिण्डता ततः पश्चात्समानोदकधर्मता ॥
ततः कालवशात्तत्र विस्मृतौ नामगोत्रतः ।
समानोदकसंज्ञा तु तावन्मात्रापि नश्यति ।

सप्तोर्ध्वं त्रयः सोदकाः, ततो गोत्रजाः । तत्रैव ब्राह्मे—

अविभक्तधनास्त्वेते सपिण्डाः परिकीर्तिताः ।

तेनाविभक्तधनाभावे विभक्तः सपिण्डो धनहारी, नान्यथेत्यर्थः । तेन विवाहे आशौचे धनग्रहणे च त्रिधा सापिण्ड्यं सिद्धम् । यत्तु—'पञ्चमीं मातृतः परिहरेत्सप्तमीं पितृतस्त्रीॐन्मातृतः, ॐपञ्च पितृतो वा' इति पैठीनसिस्मृतौ 'त्रीनित्यनुकल्पः' इति माधवोक्तेः,

---

इशापिण्डतानुसारि । तथाच कूटस्थसमानगोत्रसप्तपुरुषनिष्ठसापिण्ड्यमौर्ध्वदेहिकादावनुकूलमित्यर्थः । सापिण्ड्यमौर्ध्वदेहिकादावनुकूलं विवाहप्रतिबन्धकं च । तत्र एतस्यैव विवाहप्रतिबन्धकत्वे यत्र कूटस्थात्षष्ठी पञ्चममातृककन्या, षष्ठः पञ्चमपितृकवरः, तौ च भिन्नगोत्रान्तर्गतौ तत्र तयोर्विवाहप्रसङ्ग इत्यर्थः । यदि च गोत्रतः सन्तानात् । एवञ्च कूटस्थसन्ताने साप्तपौरुषी सपिण्डता इत्यर्थ आद्रियते तदा कूटस्थकन्यातत्कन्यादिक्रमेण षष्ठी कन्यैव सप्तमश्च पुरुषः, तत्राप्येतत्सत्त्वेन कूटस्थकन्यान्तरमादाय पञ्चम्यां कन्यायां च तत्सत्त्वेन न तयोर्विवाहः । शङ्खादिवचनवशात्तु समानगोत्रसप्तपुरुषव्याप्तित्वेनाशौचाद्यानुकूल्यमिति बोध्यम् ।

ॐत्रीनिति । चतुर्थीं कन्यामुद्वहेदित्यत्र तात्पर्यम् । ॐपञ्चेति । षष्ठीमुद्वहेदित्यर्थः । यद्यपि त्रीन् परिहरेत् पञ्च परिहरेत् इत्युक्त्या तदत्यागे दोष गौरवमिति लभ्यते तथापि अनुकल्पत्वेन

पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ।
*दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात् ॥
[illegible]र्वीं तदभावे तु सप्तमीम् ।
*पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः ॥
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च ।
एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।
नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रदृश्यते ॥

इति चतुर्विंशतिमतात्,

चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा ।
पराशरमते षष्ठीं पञ्चमो* न तु पञ्चमीम् ॥

इति पराशरोक्तेश्चानुकल्पत्वेनापदि *पञ्चम्यादिपरिणयनं कार्यमिति प्रतीयते । *अत्र हि तदभावे इति स्पष्टमेवानुकल्पत्वमुक्तम्, तन्न यथाश्रुतं ज्ञेयं, *पूर्वोक्त-

---

के[illegible]-*दशभिरिति । 'कुलमग्रे परीक्षेत' इति कुलस्यैव गौरवात्तदनुसारेण [illegible]पुरुषसंकोचः, न तु तत्क्रियाऽ[illegible]स्वीकार इत्याशयः। *पञ्चमीं तदभावे त्विति मातृपक्षे। अयं क इत्यत्राह-पञ्चमीमिति । *न तु पञ्चमीमिति । पञ्चमः पञ्चमीं नोद्वहेदित्यर्थः । *पञ्चम्यादीति । यद्यपि तृतीयादिपरिणयनमिति वाच्यं 'तृतीयां च' इत्युक्तेः, तथापि 'वेदाच्चैव' इत्यनेन तस्य दृढीकारात्तस्य स्वान्तरेण निराकरणीयतया न तथोक्तम् । अनुकल्पत्वं कुत इत्यत्राह-*अत्र हीति । *पूर्वोक्तेति । पञ्चमे सप्तमे चैवेत्यादि । अत्रानुकल्पोऽपि विकल्प

मरीचिवचोविरोधात् । *वस्तुनि विकल्पासम्भवात् ।

*पञ्चमात्सप्तमाद्वीमान्यः कन्यामुद्वहेद्द्विजः ।
गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥

इति विष्णूक्तेः, पराशरस्य (१.)मूलाभावाच्च । तस्मान्मदनपारिजाताद्युक्तादिशा *दत्तकसापत्नसम्बन्धाद्यनुप्रवेशे *ब्राह्मणादीनां क्षत्त्रियादिसपिण्डविषये वा पूर्वोक्तानि *नेयानि, *न त्वनुकल्प इति भ्रमितव्यम् । *यत्तु

---

एव सप्तमोर्ध्वां सप्तमीं चोद्वहेदित्यर्थादित्याशयेन दूषयति-*वस्तुनीति । क्रियाभिन्ने इत्यर्थः । नन्वेवं चेत्तदा सप्तमोर्ध्वोद्वाहं वा कुर्यादित्यस्तु क्रियाविकल्प इत्यत्राह—*पञ्चमादिति । कुलहीनतायां तादात्म्येन पञ्चमादिर्हेतुः कुललक्षण एव पञ्चमाद्यन्यत्वं विवाहप्रयोजकविशेषणमिति पञ्चमत्वादिना कुलहीनेत्यर्थः । एतद्वचन एव निर्भरः न तु मरीचिवाक्येऽपि, क्रियापराः विप्रसेवादिरूपविहितपरा अपि शूद्राः पतिता इति शूद्रमात्रपरत्वसम्भवात् । *दत्तकेति । द्व्यामुष्यायणदत्तकस्य मातृकुले सपत्नमातामहकुले च त्रिपुरुषं सापिण्ड्यम् । आदिना—

पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते ।

इत्यस्य परिग्रहः । तथाविधसापिण्ड्यशून्यायाः पञ्चम्यादेः परिणयनकार्यताबोधकानीत्यर्थः । *ब्राह्मणादीनामिति । तत्रापि त्रिपुरुषमेव सापिण्ड्यादिति भावः । *नेयानीति । एतेन मदनपारिजाताद्युक्तादिक् क्षोदक्षमाऽस्तु वा, मा वा, तदनुसरणे भवतां न दोष इति सूचितम् । *न त्विति । अयमभिप्रायः—दशभिरित्यादिना वस्तुतो महापापातिपापोपपापादिरहितत्वश्रोत्रियत्व-

---

[१] 'मूलाभावश्च' क०

स्मृतिचन्द्रिकामाधवादय आहुः—*"तृतीये सङ्गच्छावहै, चतुर्थे सङ्गच्छावहै" इति शतपथश्रुतेः, *'तृसां जुहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव' इति, 'ग-

---

दानादिकर्मत्रयकर्तृत्वसपरिहारयागाद्यकर्तृत्वादियुक्तमहाकुलीनानां सप्तमीमुद्वहेदित्यभिधानेन तादृशगुणाधिक्ये एव न दोषः, अन्यथा तु दोष इति रीत्या सप्तमोद्वाहनिन्दनात् शाकटायन इत्यभिधानेन च स्वरूपव्याक्रियैव पराक्रियेति न्यायात् जर्त्तिलयवाग्वा वा जुहुयादित्यादेः पयोहोमस्तुत्यर्थत्ववत्कैमुतिकन्याये-नाद्वाहविधिस्तुत्यर्थत्वमेव पञ्चम्याद्युद्वाहविधीनामुपेयं, न तु अनुकल्पतयापि न्यायविकलाधिकरणं सगोत्रां चैवमुद्वहन्निति दृष्टान्तेन बलवदनिष्टसाधनत्वावेदनादिति । .

इदानीं तृतीयोद्वाहमुत्थापयति—*यत्त्विति । *तृतीये इति । दर्शपूर्णमासप्रकरणे स्रुग्व्यूहनार्थवादः एकस्मात् मिथुनाद्वावुत्पन्नौ मिथः सङ्कल्पयतः—तृतीये वा चतुर्थे वा विवहावहै इति तदर्थः । अत्र प्रमाणान्तराविरोधादर्थवादाद्विधिः कल्प्यः । *तृसामिति । "आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व" इति पूर्वार्धम् । ततश्चायमर्थः—हे इन्द्र त्वमीळितैः प्रशस्तैः पथिभिः मार्गैः नोऽस्माकं यज्ञमायाहि आगच्छ । आगत्य च तृप्ताज्यप्लुतां वपां भागधेयं जुषस्व सेवस्व, तत्र द्वौ दृष्टान्तौ । मातुलस्य जुहुः अपत्यं योषा स्त्री भागिनेयस्य भाग इव, पैतृष्वसेयी च मातुलपुत्रस्य भाग इव चेति । गर्भे तु नौ जनिता दम्पतीकर्देवस्त्वष्टा सविता विश्वरूप इति । अयमर्थः—यमी यमं स्वभ्रातरं मैथुनार्थं याचितवती ततो यमेन प्रत्याख्याता वदति—कः प्रजापतिः विश्वरूपो विश्वात्मा सविता त्वष्टा नौ आवयोर्गर्भे दम्पती

र्भे तु नौ (१)जनिता दम्पतीकः' इति च मन्त्रवर्णात्,

*मातृष्वसृसुतां केचित्पितृष्वसृसुतां तथा ।
विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम् ॥

इति शातातपोक्तेश्च मातुलकन्योद्वाहः कार्यः । यद्यपि पितृष्वसृकन्योद्वाहोऽपि प्राप्तस्तथापि ।

अस्वर्ग्यं*लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।

इति निषेधाद्वचनान्तरेण तदुद्वाहस्याविधानाच्च न कार्यः । अयं तु*दाक्षिणात्यशिष्टाचारात्कार्य इति । नच पूर्वोक्तश्रुतीनामर्थवादमात्रता मानान्तरेणा*सिद्धौ*'उपरि हि देवेभ्यो धारयति' इतिवदनुवादानुपपत्त्या विधिकल्पनात् । यत्तु शातातपः—

---

जनिता । तथाचा[illegible]योरपत्ययो(२)(र्भाविदम्पत्यनिश्चयात्तद्वरमावामेव दम्पतीभावाय इति । *मातृष्वसृसुतामिति । माता स्वसा यस्य स मातृष्वसा [illegible] ) मातुलस्य सुतामिति पाठान्तरात् । *लोकविद्विति । लोचृ दर्शने । लोक्यते इति लोकम् इष्टानिष्टसाधनतया ज्ञायमानं सदसत्कर्म, तद्वेदिभिर्द्विष्टं द्वेषविषयीकृतं [illegible] नाचरेदित्यर्थः, द्विष्टसाधनतया द्वेषोदयादिति भावः । *दाक्षिणात्येति ।

उद्वहेद्दक्षिणे विद्वान्मातुलस्य च वै सुताम् ।
उत्तरे नोद्वहेद्विप्रो ह्येष धर्मः सनातनः ॥
मातुलस्य सुतां विप्रो दक्षिणे तां समुद्वहेत् ।
वर्जनीया प्रयत्नेन सैव वाजसनेयिभिः ॥

इति आचारानुरोधिवाक्यात् । *असिद्धाविति । अप्राप्तार्थस्य [illegible]। *उपरि हीति । "अधस्तात्समिधं धारयन्ननुद्रवेत्" इत्यस्योपरि हीति न स्तावकम्, अप्रसिद्धत्वात् । अतो यथा

---

[१] 'जानिना' ग०    (२) कक्षान्तर्गतं नास्ति ख० ।

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

यच्च मनुः—

पैतृ(१)ष्वसेयीभगिनीं स्वस्रीयां (२)मातुरेव च ।
मातुश्च भ्रातुरा*प्तस्य गत्वा चान्द्रायणं चरेत् ॥
एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत् बुद्धिमान् ॥

यच्च व्यासः—

मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः । इति,

तद्*गान्धर्वादिविवाहोढमातृविषयम् । तत्र*पितृगोत्रानिवृत्तेः । अत एव मार्कण्डेयपुराणम्—

गान्धर्वादिविवाहेषु पितृगोत्रेण (३)धर्मवित् । इति ।

---

उपरि समिधं धारयन्ननुद्रवेदिति विधिः कल्प्यते, तथा मातुलसुतामुद्वहेदिति विधिः कल्प्य इत्यर्थः । *आप्तस्य सन्निकृष्टस्य सपिण्डस्य मातुलस्येति यावत् । *गान्धर्वादीति ।

ब्राह्मादिषु विवाहेषु ऊढा कन्या यदा भवेत् ।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥

इति प्रकृत्येत्यादि ।

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः ।

इति मनुवाक्ये [illegible] पुंस्त्वस्याविवक्षितत्वेन कर्मणो जनककुले सम्बन्धनिवृत्तेः साम्पिण्ड्यस्यापि निवृत्तिरुक्ता। एवञ्च ब्राह्मादिविवाहे कन्याया दानसत्त्वेन साम्पिण्ड्यनिवृत्तेस्तत्परं मातुलकन्यापरिणयनवचनम् । आसुरादिषु तदभावान्न साम्पिण्ड्यनिवृत्तिरिति [illegible] तद्वचांसीत्यर्थः । *पितृगो-

---

(१) 'पितृष्वसेयीं' क०
(२) 'मातुलस्य' क०
(३) 'धर्मवत्' क०

*ब्राह्मादिविवाहे तु परिणेयैवेति। भट्टसोमे(१)श्वरोऽपि तृतीयेऽध्याये वाक्यपादे मातुलकन्योद्वाहमुदाहृत्य स्मृतिविरोधेनाचारप्रामाण्यस्य वार्तिके बाधोक्तावपि पूर्वोक्तश्रौतलिङ्गबलीयस्त्वादस्य कर्तव्यतामाह। तदेतद्दत्तकस्य पालकद*त्रिममातृसोदरकन्याविषयत्वेनासवर्णमातुलकन्याविषयत्वेन युगान्तर(२)परत्वेन चोपपन्नमपि*अविचारितरमणीयं यथा, तथास्तु; तथा(३)पि कलौ तावन्निषिद्धमेव।

---

ऽति। पितृसापिण्ड्येत्यर्थः। यथाश्रुते ब्राह्मादिविवाहे पितृसापिण्ड्यानिवृत्त्यनभिधानेन हेतुन्यूनताप्रसङ्गात्। वस्तुतस्तु प्रागुक्तरीत्या दत्रिमवाक्ये पुंस्त्वविवक्षाया आवश्यकतया 'स्वगोत्राद्भ्रश्यते नारी' इत्येव गोत्रनिवृत्तिरिति सगोत्रत्वविशिष्टसापिण्ड्याभावान्मातुलकन्याविवाहो भवत्येवेत्याह-*ब्राह्मादीति। दत्तकस्य पालकेऽन्वयः। संबन्धिकतया देवदत्तस्य गुरुकुलमितिवत् दत्तकस्येति षष्ठीमतः (४)*कृत्रिमेति। तत्र पालिके ये दत्तकृत्रिमे मातरौ तयोः सोदर इत्यर्थः। दत्तकस्य पालकमातृकुले त्रिपुरुषं पाञ्चपुरुषं वा सापिण्ड्यं, परन्तु माता दत्तेति तत्प्रतिगृहीतृकुले एव तत् न तु तस्या जनककुले, एवं कृत्रिमाया मातुर्जनककुले तन्नास्तीति भावः। *अविचारितरमणीयमिति। विचार्यमाणे तु न रमणीयम्। तथाहि "गर्भे तु नौ" इति मन्त्रो मातुलकन्या परिणयवि-

---

(१) 'सोमश्वरेणापि' ख०।

(२) 'युगान्तरत्वेन' ख०।

(३) संस्कारकौस्तुभे तु-'कलावपि येषां कुले देशे अनुकल्पत्वेन सापिण्ड्यसंकोचः परंपरया समागतः, तेषां तादृशसंकोचेन विवाहे न दोषः। अस्ति च भार्यात्वोपपत्तिः। अन्येषां तैः सह व्यवहारे नैव दोषः। हेमाद्र्यादौ श्राद्धनिषेधोऽपि स्वकुलदेशे परंपरयाऽनागतसापिण्ड्यसंकोचेन कृतविवाहविषय एवेति बोध्यम्।' इत्युक्तम्।

(४) 'षष्ठीमतो कृत्रिमेति' ख० घ०ङ०।

धिं कल्पयितुं नालं, तथा सति "प्रजापतिरुषस्यभ्यैत् स्वां दुहितरम्" इत्यादावपि अन्योऽपि स्वदुहितरं गच्छेदिति विधिकल्पनापत्तेः। प्रत्यक्षस्मृत्यन्तरानुमितश्रुतिविरोधान्न तत्कल्पनमिति चेन्मातुलकन्यापरिणये किमयं पाणिपिहितः? तस्मात् पूर्वाचरितमत्र कीर्तितमित्येतावन्मात्रं ( (१)विधिं कल्पयितुं नालम्। ) वस्तुतस्तु नौ आवां जनिता जनकः गर्भे तु गर्भ एव कः कृतवान् इत्येवार्थः। करिति रेफान्तदर्शनात्, जनितेत्यस्य अन्तोदात्तत्वेन तृजन्तत्वाच्च। लुङन्तत्वे तु "तिङ्ङतिङः"(अष्टा०सू०८-१-२८) इति निघातापत्तेः तस्मात् जनितेत्यस्य जनयिष्यतीति व्याख्यानमयुक्तम्। अत एव "नवा उ ते तन्वा तन्वं संपपृच्यां पापमाहुर्यः स्वसारं निगच्छत्। अन्येन मत् प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत्" इति यमोक्तमत्याख्यानं संगच्छते। अस्या अर्थः—हे सुभगे ते तव तन्वा शरीरेण तन्वं स्वां तनुं नवा उ नैव संपपृच्यां संपर्कयिष्यामि। कुतः? यः स्वसारं निगच्छत् गच्छति तं लोका देवाश्च पापिष्ठमाहुः। तर्हि मत्संतोषः कथं स्यात्तत्राह—मत् मत्तः जायमानः प्रमुदः त्वम् अन्येन पुंसा कल्पयस्व अर्जयस्व। ते भ्राता यमः एतत्कर्म न वष्टि न काङ्क्षति इति। 'आयाहीन्द्र' इत्यपि च रागप्राप्तानुवादः। अप्राप्तार्थस्य हि "उपरि हि" इत्यादिवद्विधिकल्पकत्वं, न तु रागप्राप्तार्थकस्येति। यत्तु दानेन सापिण्ड्यं निवर्तते इत्युक्तं, तन्न, "दद्यान्माता पिता वा" इति हि पुंस्त्वविशिष्टमनूद्यैव संज्ञा कन्याया दत्त्रिमसंज्ञाविरहात्। दत्त्रिममनूद्य च सापिण्ड्यनिवृत्तिर्विधीयमाना न कन्याया भवति। नन्वेवं दत्त्रिमस्य सापिण्ड्यनिवृत्तौ जनककन्यादिपरिणयनं स्यात् "ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो मातृबन्धुभ्यश्च पञ्चमाद्बीजिनश्च सप्तमात्" इति वचनेन जनककुलेऽपि आसप्तमं विवाहनिषेधात्।

(१) कंसान्तर्गतं नास्ति घ०।

गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ।

इत्या(१)दिपुराणात् । *माधवीये बौधायनोऽप्यस्य निन्दामाह—'पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथो(२)त्तरत ऊर्णाविक्रयोऽनुपेतेन स्त्रिया च सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनम्' इति । 'अथोत्तरतः (३)सीधुपानादिकमुक्त्वा इतर इतरस्मिन्कुर्वन्दुष्यति इतर इतरस्मिन्' इति । *भट्टसोमेश्वरेणापि स्मृतिविरुद्धानां मातुलकन्योद्वाहादीनामस्माद्वचनादप्रामाण्यमि-

स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे ।

इति वचनात्तु गोत्रनिवृत्तिरिति । (४)(नचासुरादिविवाहेऽपि सप्तपद्यादेः सत्त्वाद्गोत्रनिवृत्तिप्रसङ्ग इति वाच्यं पूर्वोत्तराङ्गसहितदानमेव तन्निवर्त्तकम् । असुरादिषु) दानाभावान्न तन्निवृत्तिरिति(५) (माधवाचार्याणामपि मातुलकन्यापरिणये निर्भरो नास्तीत्याह—*माधवीये[ऽपि]इति । दक्षिणतः तथोत्तरतः यानि दक्षिणतस्तान्यनुव्याख्यास्यामः । यथाऽनुपेतेन स्त्रिया च सहभोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति । अथोत्तरत ऊर्णाविक्रयः, शीधुपानं, उभयतोदद्भिर्व्यवहारः, आयुधीयकं समुद्रयानमिति पाठः । मातुलदुहितृगमनमित्यन्वयः । शीधु मद्यम् उभयतो दन्ता येषां तैः व्यवहारः क्रयविक्रयादिः, आयुधीयकम् आयुधेन जीवनम् । न च तदनन्तरम् 'इतरस्मिन्कुर्वन् दुष्यति' इति बौधायनवाक्याद्दाक्षिणे मातुलकन्यापरिणये कथं दोष इति वाच्यम् । विप्रतिपत्तिपदेनाचारत्वोक्तेः दुष्यतीत्यनेनापाङ्क्तत्वाविशिष्टपातकोक्तेः । *भट्टसोमेश्व-

(१) 'इत्यादित्यपु' क० ।

(२) 'तथोत्तरतः यानि दक्षितसस्तान्यनुव्याख्यास्यामः यथैतदनुपेतेन स्त्रिया च' क० ।

(३) 'सिंधु' क० ।

(४) कंसान्तर्गतं नास्ति घ० ।

(५) कंसान्तर्गतं नास्ति घ० ।

त्युक्तम् । बृहस्पतिरपि—

उद्धृह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मत्स्यादाश्च नराः पूर्वे, व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपाश्चैव स्पृश्या नृणां*रजस्वला: ॥

इत्यनाचारत्वमाह । अत एव हेमाद्रौ मात्स्ये कर्णाटकादीनां तत्कारिणां श्राद्धे निषेधः । बोपदेवेनापि लिखितं ब्राह्मम्—

यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः ।
श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषम् ॥ इति ।

तस्मान्मातृतः पञ्च, पितृतः सप्त त्यक्त्वोद्वहेदिति रेखापीति । प्राग्भट्टसोमेश्वरेण (१) ( कर्तव्यत्वोक्तिविरोधस्तु न )

वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते ।

इति भट्टपादैस्तदकर्तव्यत्वोक्तेस्तट्टीकायां भट्टसोमेश्वरेणापि तथोक्तेः । (नच सकललोकादर्शभूतस्य भगवतोऽर्जुनप्रद्युम्नादेर्मातुलकन्योद्वाहरूपदुराचारप्रवर्तकत्वं कथमिति वाच्यं युगान्तरीयत्वेनादोषात् । वस्तुतस्तु भगवतो नारायणत्वादर्जुनस्य नरत्वेन नारायणांशत्वाद्रुक्मिण्यंशभूतसुभद्राविवाहो न मानुषः । शास्त्रस्य मनुष्याधिकारत्वाच्च तत्र न प्रवृत्तिः । किञ्च देवादिभिः कृतं मनुष्यैर्न कार्यम् ।

अनुष्ठितं च यद्देवैर्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठेयं मनुष्यैस्तत्तदुक्तं धर्ममाचरेत् ॥

इति बौधायनोक्तेः । *रजस्वला इति ।

सनाताश्चापि गृह्णन्ति भ्रातृभार्यामभर्तृकाम् ।
सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणम् ॥

इत्युत्तरश्लोकेनानाचारत्वं प्रतिपाद्यते । तस्य ईदृशकर्माणि प-

(१) कंसान्तर्गतं नास्ति घ० ।

*सिद्धम् ।

संबन्धविवेके सुमन्तुः—'ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति, आसप्तमाद्रिक्थविच्छित्तिर्भवति, आतृतीयात्पिण्डविच्छित्तिः, अन्यथा (१)पिण्डशौचक्रियाविच्छेदाद्ब्र(२)ह्महतुल्यो भवति ।' अस्यार्थमाह शूलपाणिः—'जीवत्पित्रादित्रिकस्य वृद्धप्रपितामहादयस्त्रयः श्रा(३)द्धदेवतात्वात्पिण्डभाजो भवन्ति, तदूर्ध्वं त्रयो नवपुरुषपर्यन्ता लेपभाजः, श्राद्धकर्ता च दशम इति दशमादूर्ध्वं*सापिण्ड्यनिवृत्तिः । दशमादित्युपलक्षणम् । तेन पितृपि(४)तामहजीवने नवपुरुषपर्यन्तं, पितृजीवने चाष्टपुरुषपर्यन्तं सापिण्ड्यमिति ज्ञेयम् । अपुत्रधनग्रहणे संनिहिताभावे सप्तपुरुषपर्यन्तमधिकारः धनग्राहिणमारभ्य तृतीयः पौत्रः तदूर्ध्वं श्राद्धविच्छेदः । अन्यथा धनहारित्वेऽपुत्रश्राद्धाद्यकरणे ब्रह्म-

---

रलोकभयमात्रं न त्वैहिकभयमिति तात्पर्यम् ।*सिद्धमिति ।(५)(नन्वसपिण्डापर्युदासेन सपिण्डोद्वाहनिवृत्तिर्न लभ्यते) इति चेत् ? न, सपिण्डोद्वाहे प्रायश्चित्ताम्नायेन सपिण्डोद्वाहनिषेधे पर्युदासपर्यवसानात्, प्रायश्चित्तस्य वा पर्युदासातिक्रमनिमित्तकत्वात् ।

"दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात् ।

उद्वहेत्सप्तमादूर्ध्वम्" इत्यत्र तादृशमहाकुलादूर्ध्वं तदभावे सप्तमादूर्ध्वमुद्वहेदिति मतमाह—सम्बन्धेति । धर्मविच्छित्तिपदार्थमाह—*सापिण्ड्यनिवृत्तिरिति । इत्यर्थ इत्यन्तः शूलपा-

---

(१) 'पिण्डाशौच' क० ।
(२) 'ब्रह्महत्यातुल्या भवन्ति' क० ।
(३) 'श्राद्धदैवता' क० ।
(४) 'पितृमातामह' क० । (५) कंसान्तर्गतं नास्ति ख० ।

भागिनेयानि' इति पृथङ्निषेधाच्च। अन्यथा सपिण्डत्वेन निषेधात्सापत्नमातुलत्वादिनिर्देशो व्यर्थः। अत एव तेन स्मृतिकौमुद्यां सवर्णसापत्नमातामहकुलपरत्वेन तथैव शङ्खवचनं व्याख्यातम्। तेन वासिष्ठं 'पञ्चमीं सप्तमीमतीत्य' इति व्याख्येयम्। तस्मात्प्राच्यैव व्याख्या युक्ता। *प्रयोगरत्ने भट्टैः स्मृतितत्त्वादिगौडग्रन्थेषु च सपत्नमातामहकुले यावदुक्तं वाचनिकमेव सापिड्यमुक्तम्। यथाह सुमन्तुः—*'मातृपितृसं(१)बद्धा आ सप्तमादविवाह्या भवन्ति, *आ पञ्चमादन्येषां, पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्त*द्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि; अन्यथा संकरकारिणः स्युस्तथाध्यापयितुरेतदेव' इति।

---

मातृष्वसृत्वस्यार्थसिद्धत्वेन वसिष्ठवाक्यस्य विवाहसापिण्ड्यपरत्वमेव, पञ्चमीत्यादिस्त्रीलिङ्गनिर्देशात्। तस्याशौचसापिण्ड्यपरत्वं तु कल्पितमित्यर्थः। ग्रन्थान्तरमिति। तत्र त्रिपुरुषं सापिण्ड्योक्त्या चतुःपुरुषे तद्विरोधः। अत्र पाठान्तरं फल्गुत्वान्नादृतम्। तत् मातामहसंततौ कियद्दूरमविवाह इत्यत्राह—*प्रयोगेति। *मात्रिति। पिता च माता च इति विग्रहः। अन्येषां मातृसंबन्धात् आपञ्चमादविवाह्याः। मातरमारभ्य पञ्चमं विना चतुर्थपर्यन्तं ये संबन्धास्ते विवाहप्रतिकूला इत्यर्थः। तत्र वरकन्यान्यतरस्य वैमातृकाणां त्वाह—*आपञ्चमादिति। एवमन्येषां पितृसंबन्धा आसप्तमादविवाह्या इत्यत्रापि भ्रातॄणां मातुलत्वे भगिनीनां मातृष्वसृत्वस्यार्थसिद्धत्वेन 'तद्भगिन्यो मातृष्वसारः' इत्यस्य पाठाभावेऽपि न कश्चिद्दोषः। *तद्दुहितर इति। तयोः तद्भ्रातृतद्भगिन्यो-

---

(१) 'सम्बन्धा' क०।

दुहितर इत्यर्थः, तदपत्यानीति सामान्योपादानात् । अत्र केचित्—यावद्वचनं वाचनिकमिति न्यायेन परिगणितेष्वेव सापिण्ड्यं न तु सप्तमादिपर्यन्तमित्यर्थमाहुः । वस्तुतस्तु यावदुक्तं वाचनिकमित्यस्यायमभिप्रायः—वाक्यभेदपरिहाराय सपत्नमातामहात्कूटस्थाच्चतुःपुरुषं सापिण्ड्यमातिदेशिकमनेन विधीयते । अतो मातुलदुहितृष्विव तत्पुत्रेष्वपि ( सा (१)पिण्ड्यात्कन्यायाः ) सपत्नमातुलपुत्रेण न विवाहः । तद्दुहितर इत्यत्र तत्पदं मातुलतद्भगिन्योः परामर्शार्थम् । दुहितृपदं पुत्राणामप्युपलक्षणम् । तदपत्यानीति तत्पदं च दुहितृपुत्रयोः परामर्शार्थम् । तेन तदपत्यानीत्यस्य दुहित्रपत्यानि पुत्रापत्यानि चार्थः । तदयमर्थः—मातृभगिनीदुहित्रपत्यशब्दोऽसपत्नमातामहात्कूटस्थात् चतुर्थमभिव्याप्य सपत्नमातामहकुलं लक्षयित्वा तेन सह यस्य सपत्नमाता तस्य मातुलमातृष्वसृभागिनीभागिनेयपदैर्लक्षितं ( सा (२)पिण्ड्यं विधीयते । एवञ्च यस्य सपत्नमाता तदपत्यस्यासापिण्ड्येऽपि निषेधः, )

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

इति मानवनिषेधात् । अत्र चकारेण पितुरसपिण्डापि ग्राह्या, एवं चकारेण मातुरसगोत्रापि ग्राह्या । तेन दत्त्रिमस्य यः प्रतिग्रहीता स तज्जनन्या असपिण्डोऽपि सगोत्र इति तत्कुलनिवृत्तिः । दारकर्मणि दारत्वसंपादके विवाहादौ । मैथुने मिथुनसाध्येऽग्न्याधानादौ । नन्विदं 'पञ्चमात्सप्तमादूर्ध्वम्' इत्यनेन समानार्थमेवास्तु, लक्षणापत्तेः । नचैवं मातृतः षष्ठे पितृतोऽष्टमे वा विवाहो न स्यात् कन्याया मात्रादिसापिण्डत्वादिति वाच्यं, मातुः पितुर्वा सगोत्रां सपिण्डां च नोद्वहेदिति हि मनुवचनं पर्यवसन्नं, तच्च नौपदेशिकसापिण्ड्येन प्रवर्त्तते षष्ठाष्टमयोः पञ्चमात्सप्तमादूर्ध्वमित्यभ्यनुज्ञाना-

( १ ) कंसान्तर्गतं नास्ति घ० ( २ ) कंसान्तर्गतं नास्ति घ०

त्, तादृशीमपि वैधीं प्राप्तिमुपजीव्य निषेधप्रवृत्तौ विकल्पापत्तेः; किन्त्वातिदेशिक एव । तत्र कस्यचिदुद्वाहविधेरभावाद्रागप्राप्तस्यैवायं निषेध इति न कस्यापि बाधः । अन्ये तु एवंविधलक्षणाङ्गीकारो व्यर्थः । यत्रैकरूपेण बुबोधयिषा 'काकेभ्यो दधि'इत्यादौ तत्रैव हि लक्षणा, न तु प्रकृते, सपत्नमातरि विवाहप्रसक्त्यभावेनेदृशसापिण्ड्यातिदेशवैयर्थ्यात् । तस्मात् पितृपत्नीत्वावच्छेदेन मातृत्वमतिदिश्यत इत्येक एवायमतिदेशविधिः । तद्वशाच्च तद्भ्रात्रादिसन्ताने भगिनीत्वादिकथनं मुख्यभ्रात्रादिसंतानवद्विवाहवत्प्रतिबन्धकतापरम् । एवञ्च तदपत्यानां भागिनेयत्वातिदेशेऽपि तत्कन्यानां न भागिनेयकन्यात्वापत्तिः मातुलकन्यानां भगिनीत्वातिदेशेऽपि तत्सुतानां न भ्रातृत्वातिदेश इति परिगणितेष्वेव सापिण्ड्यमिति पक्षं समर्थयन्ते । तदेतदपेशलम् । एवं हि लोभेन विवाह्यानां कन्यानां बहुतरत्वं संपादयसि, सपत्नमातुलदौहित्र्या अविवाह्यत्वे सपत्नमातुलपौत्र्या विवाह्यत्वे इष्टापत्तिं च करिष्यसि, तदेतत्सर्वमनुचितमिति । तस्मात्पितृपत्न्यां मातृत्वोक्तिः तद्भ्रातरि मातुलोक्तिश्च तत्पितुः कूटस्थत्वप्रकाशार्था । मातुलाद्युपादानं च द्वितीयतृतीयजन्मनार्थम् । मातृष्वसार इति च सन्तानभेदप्रदर्शनं कूटस्थत्वदृढीकाराय । तत्पाठाभावे तु मातृमातुलाभ्यामेव तद्व्यक्तिः । भगिनीत्वादिकथनं च तदुद्वाहस्यात्यन्तनिन्द्यत्वार्थम् । व्यक्तिचतुष्टयगणनञ्च तदग्रे उद्वाहप्रतिबन्धवारणाय । किञ्च मातृत्वातिदेशोऽपि तत्पुत्रादौ भ्रातृत्वाद्यतिदेशाभावे तत्पौत्रीदौहित्र्योर्विवाहः प्रसज्येत । लोकविद्विष्टत्वात्तद्वारणमिति चेत् ? तर्हि (मा(१)तुलपुत्र्यादिविवाहस्यापि तथैव सुवारत्वाद्भगिनीत्वाद्यतिदेशमपि त्यजेः । तस्मात्तादृश ) कूटस्थात्पञ्चमीमुद्वहेदित्यर्थः । आतिदेशिकसापिण्ड्यमिति च विवाहप्रतिबन्धकतायां परिभाषामात्रम् तादृशपरिभाषा च "अस-

---

[१] कंसान्तर्गतं नास्ति घ०

आ पञ्चमादिति मातृकुले त्रिगोत्रान्तरितविषयं वेति *प्राच्याः। मात्स्ये—

समानप्रवरा चैव*शिष्यसन्ततिरेव च।
*ब्रह्मदातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते॥

तद्भगिन्यो मातृष्वसार इति तु आकरे न पठितम्। क्वचिद्वचनादविवाहः। (१)यथा गृह्यपरिशिष्टे–'अविरुद्ध-सम्बन्धामुप(२)गच्छेत इत्युक्त्वा विरुद्धसम्बन्धः स्वयमेवोक्तः। यथा*'भार्यास्वसुर्दुहिता पितृव्यपत्नी स्वसा च' इति। बौधायनः—

मातुः सपत्न्या भगिनीं तत्सुतां च विवर्जयेत्।
((३)पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत्)॥

अतो मातृष्वसुः*सापत्नपुत्रकन्याप्यविवाह्या। 'सा-

पिण्डा च या मातुः" इत्यादावुपयोगिनी। अन्यथा वरकन्यान्यतरस्य पितृमातृसम्बन्धिसप्तमपञ्चमान्तर्गतस्य सपत्नमातृसम्बन्धिचतुर्थान्तर्गतस्य च विवाहे इत्यर्थोपगमान्न कोपि विरोध इति। *प्राच्या इत्यरुचिः स्पष्टैव। अध्यापयितुरेतदेवेत्युक्तं स्पष्टयति—*शिष्येति। *ब्रह्म गायत्री। केचित्तु पुरुषत्रयमित्यग्रेऽनुपदं स्पष्टम्। *भार्येति। अत्र वध्वा वरो भ्रातृस्थानीयः। अत्र भार्यास्वसानिषेध आर्थिकः। एतदर्थकमेव"मातुः सपत्न्या" इति बौधायनवाक्यं, मातुः सपत्न्या अपि भार्यात्वेन सङ्ग्रहात् पितृव्यपत्नीस्वसुः सुताया वारणार्थं तत्। अतो विरुद्धसम्बन्धस्य हेयत्वात्। *सापत्नेति। मातृष्वसुः सपत्नी सापत्नमातृस्थानीयेत्यर्थः। पितृव्येति। अत्र वरस्य वधूर्मातृस्थानीयेति (स(४)म्बन्धविशेषः।)

---

(१) 'तथा च' क० (२) 'मुपयच्छेत' क० ख०
(३) कंसान्तर्गतं नास्ति क० (४) कंसान्तर्गतं नास्ति ख०

पत्नमातृकुलजाम्' इति मदनपारिजातोक्तेरिति केचित् ।

केचित्तु 'ज्येष्ठो भ्राता पितुः समः' इति मनूक्तेस्तत्पत्न्याः मातृत्वात्तत्पितुर्मातामहत्वाज्ज्येष्ठभ्रातृपत्नीभगिनी न विवाह्या । तथा—

उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता ।

इति मनूक्तेः*गुरुणा त्रिपुरुषं सापिण्ड्यम्, सखापि निर्वाप्यः, अतस्तेषां कन्या नोद्वाह्याः,

गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः ।
*गुरोश्च कन्यां शिष्यो वा तत्सन्तत्यापि नेष्यते ॥
पुरुषत्रयपर्यन्तं*भ्रात्रादेर्नैतदिष्यते ।

---

*गुरुणेति । गुरुणा त्रिपुरुषं सखापि निर्वाप्य इति पाठः । *गुरोरिति । गायत्र्युपदेशाकरणेऽपि चतुर्दशविद्यान्यतमस्य चतुःषष्टिकलान्यतमकलाशास्त्रस्य वाऽध्यापकस्य चेत्यर्थः । ततः तस्मात् तेन गुरुणापि पुरुषत्रयपर्यन्तमित्यन्वयः, तत्सन्तत्या चेति पाठान्तरं सुगमम् । एवञ्च शिष्यसन्ततिरपि पुरुषत्रयपर्यन्तं ग्राह्या । *भ्रात्रादेः गुर्वादिभ्रात्रादेः सन्ततौ उद्वाहनिषेधो नेत्यर्थः । (गु(१)रुणा सापिण्ड्यं सखापि निर्वाप्यः । निर्वाप्यपिण्डान्वयरूपसापिण्ड्यमित्यर्थः । गुरोः सख्युश्च त्रिपुरुषं न विवाह इति यावत् ) सर्वोपि निर्वाप्य इति पाठः सुगमः । केचित्तु गायत्रीदातृमात्रस्य कन्या त्याज्या, न तु गोत्रं कुलं च,

सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृत् ॥

इति वचनादित्याहुः । एतत्स्वगोत्राज्ञानविषयमिति नारायणः ।

गुरोः सगोत्रप्रवरा नोद्वाह्या क्षत्रवैश्ययोः ।
स्वगोत्राद्यनभिज्ञैस्तु विप्रैराचार्यगोत्रजाः ॥

---

( १ ) कंसान्तर्गतं घ पुस्तके नास्ति ।

वाक्सम्बन्धकृतानां तु स्नेहसम्बन्धभागिनाम् ॥
विवाहोऽत्र न कर्तव्यो लोकगर्हा प्रसज्यते ॥

इति वचनाच्चेत्याहुः । *तत्र मूलं चिन्त्यम् ।

दत्तकविषये तूच्यते । तत्र गौतमः—'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति । बन्धुग्रहणान्न दत्तकमात्रपरमिदं, किन्तु सन्तानेपि । एतत्क्षेत्रजादि*सर्वद्व्यामुष्यायणपरमिति हरदत्तः । अत्र

इति विशेष इत्यप्याहुराचार्याः । *तत्रेति । शाखान्तरे सखित्वदीक्षोक्तेस्तत्परमेव वाक्सम्बन्धकृतानामिति । (१)यथाश्रुतार्थे मूलमित्यर्थः ।

बन्धिवति तादर्थ्ये चतुर्थी । तथाच पालकपितृघटितसन्तानभेदारम्भककूटस्थादिसमुदायार्थः पालकपितृप्रभृतिसन्तानार्थश्च यः सप्तमस्तस्मादूर्ध्वमित्यर्थः । ) *सर्वेति । यदा क्षेत्री रुग्णो बन्धुभ्यः प्रार्थयते मम (२)क्षेत्रे पुत्रमुत्पादयेति, यदा वा सन्तानक्षये गुरवो विधवां नियुञ्जते, यथा विचित्रवीर्यक्षेत्रे सत्यवती व्यासं, तत्र जातः पुत्रः क्षेत्रिणो बीजिनश्चेति द्व्यामुष्यायणः ।

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ (३)रिक्थी पिण्डदाता च धर्मतः ॥

इति याज्ञवल्क्यात् । अत्रोभयत्रापि संवित्करणं द्व्यामुष्यायणत्वबीजम् ।

तथैवाक्षेत्रिणो बीजं परक्षेत्रे प्रवापिणः ।
कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥
क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते ।
तस्येह स्वामिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥

---

(१) गुरुणा सापिण्ड्यं सखापिनिर्वाप्यः घ०, कंसान्तर्गतंनास्ति ।
(२) क्षेत्रमुत्पादयेति घ० (३) सौरिक्थापिण्ड घ० ।

स्मृतिचन्द्रिका-'नियोगात् य उत्पादयति तस्माद्वी*जिनोप्यूर्ध्वं सप्तमादित्यर्थः' इति । *दत्तकस्य*जनकविषयमेतादिति सापिण्ड्यमीमांसायाम् । *तेन दत्तकस्य जनककुले साप्तपौरुषं, जननीकुले पा(१)ञ्चपौरुषं सापिण्ड्यम्,

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
सप्तमी पञ्चमी चैव गोत्रित्वं पालकस्य च ॥

इति बृहन्मनूक्तेः, 'बीजिनश्च' इति गौतमोक्तेश्च । पालकपितृकुले तु पञ्चपुरुषम्, पालकमातृकुले त्रिपुरुषम् । तथा चापरार्के पैठीनसिः-'त्रीन्मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेत्' इति । एतत्स एव व्याचख्यौ-'दत्तका-

---

इति मनूक्तेः । व्याख्यातं चैतत् । (२)यत्तु—

य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः ।
यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥ इति,

तत्तु सत्यौरसपुत्रे पुत्रिकायां च न ते कार्या इत्येवंपरम् । एवं स्वयंदत्ते द्व्यामुष्यायणः । यथा बह्वृचब्राह्मणे 'देवरातः यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम्' इत्यादिना 'अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः' इत्याद्यन्तेन जातोपनयनो द्व्यामुष्यायण उक्तः, "दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणार्षेण जातास्ते असम्मतकुलीना द्व्यामुष्यायणाः" इति पैठीनस्युक्तेः । नचेदं दत्तकमात्रविषयं 'गोत्ररिक्थे जनयितुः' इत्यनेन विरोधात् । एवम् अन्येतुमते प्राक् द्व्यामुष्यायणा उक्तास्ते चेह धर्तव्याः । *बीजिनोपि अपिना क्षेत्री समुच्चीयते । एतन्मते द्व्यामुष्यायणान्तरानुक्तेर्न्यूनता । *दत्तकस्येति । अयं ग्रन्थो द्व्यामुष्यायण एव दत्तकः संस्कारानन्तरं च स नास्तीति मतेन । *जनकेति । न तु पालकविषयम् ।

---

(१) 'पञ्चपौरुषं' ख० (२) यत्तु मनुः परातेऽभि घ०

दीन्पुत्रान् पितृपक्षतो निवृत्य *पिण्डगोत्रार्षेयान्प्रत्येत-दुच्यते पञ्च पितॄन इति, ना(१)न्यान्प्रति' इति। यत्तु वृद्धगौतमः—

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।
विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥

यच्च वसिष्ठः—

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः।
स्वगोत्रेण स्वशाखोक्तविधिना स्यात्स्वशाखभाक् ॥

इति। यच्च नारदः—

धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत्।
*अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥

तत् पालककुले साप्तपौरुषं सापिण्ड्यं नेत्येवंपरं, न(२)तु सर्वथा सापिण्ड्यनिषेधपरमिति सापिण्ड्यमीमांसायाम्। *मदनपारिजाता(३)दपि दत्तकानुप्रवेशोऽल्पं सापिण्ड्यं प्रतिभाति। तथाहि, तेन त्रीनतीत्येत्युदाहृत्य *यस्य माता दत्तपुत्री प्रतिग्रहीत्रा पुत्रीकृता तस्याः प्रतिग्रहीतृकुले त्रीनतीत्येति, पञ्च पितॄन इति

तत्र (४)न्यूनसापिण्ड्यादित्याह—*तेनेति। *पिण्डः सापिण्ड्यम्, आर्षेयं प्रवरः। अयं ग्रन्थः केवलदत्तकाभावात्केवलासगोत्रदत्तकपरः। स्वगोत्रेणोपनायित इत्यन्वयः। गोत्रपदात्सापिण्ड्यनिवृत्तिरित्यभिमानः? *अंशपिण्डविभागित्वम् अंशपिण्डशून्यत्वमित्यभिमानः। *मदनेति। एतन्मते जनकपरमेव पालकस्य गोत्रित्वमात्रं, तत्कथम्? पञ्च मातृत सप्त पितृतोतीत्येत्यनेन विरोधात्। अतो दत्तकानुप्रवेशोऽङ्गीकृतः। *यस्येति। दत्तस्य

(१) 'नान्यत्प्रतीतिः' क० (२) 'ननु' क०
(३) 'जातादावपि' क० (४) न्यूनतासापि घ०

यस्य दत्तपुत्रः पिता तस्य दत्तस्य यज्जनककुलं तद्विषय-मित्युक्तम्। वस्तुतस्तु पूर्ववचसां महानिबन्धेषु क्वाप्य-नुपलम्भादपरार्कादिलिखनाभावात् पूर्वोक्तव्यवस्थाया-श्च प्रातिभज्ञानतुल्यत्वाद्यैरेतल्लिखितं तेषामेव शोभते।

मम तु पालककुले एकपिण्डदानक्रियान्वयित्व-रूपं साप्तपौरुषमेव सापिण्ड्यम्। 'बीजिनश्च' इति गौत-मोक्तेर्जनककुलेपि तावदेव। 'त्रीन् मातृतः' इत्यादि तु सवर्णसापत्नमातृकुलपरं, 'यद्येकजाता बहवः' इति शाङ्खि-कवाक्यत्वादिति युक्तं प्रतिभाति। अत एवास्य द्व्यामुष्या-यणत्वं हेमाद्रिप्रवरमञ्जरीवृत्तिकृन्नारायणादिभिरुक्तम्। भट्टसोमेश्वरेणापि—'पृथायाः कुन्तिभोजस्य पालककन्या-त्वेपि ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च' इति गौत-मोक्तेर्दत्त्रिमायाः पृथायाः जनकस्य शूरसेनस्य कुलेपि साप्तपौरुषं, पालककुलेपि तावदेव सापिण्ड्यमुक्तम "अपि वा कारणाग्रहणे" (जै० सू० ४-१-३-५) इत्यत्र। सा-पिण्ड्यदीपिकायां तु दत्तक्रीतादीनां जनकगोत्रेणोपनय-ने कृते जनककुले साप्तपौरुषं सापिण्ड्यम्, पालकमाता-पितृकुले त्रिपुरुषम्, पिण्डनिर्वापान्निर्वाप्यलक्षणं त्रिपु-रुषं साापिण्ड्यम्, पालकगोत्रेणोपनयने तत्कुले साप्तपौ-रुषमित्युक्तम्। तन्न,

चूडोपायनसंस्कारा निजगोत्रेण वै कृताः।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते॥

इति कालिकापुराणादुपनयनोत्तरं दत्तकनिषेधात्। त्रिपुरुषमित्यत्रापि मूलं मृग्यमित्यलं बहुना।

मातापितृद्वारकसापिण्ड्यवतीनां कन्यानामियं संज्ञा।

रामवाजपेयिनोक्ता—

*उद्वोढुः पितरौ पितुश्च पितरौ तज्जन्मकृद्दम्पति-
द्वन्द्वं तस्य चतुष्कमष्ट च ततोऽप्यस्य क्रमात्षोडश।
वंशारम्भकदम्पतीप्रमितिरित्यासप्तकक्षं रदा
*एकैकान्वयकन्यकाः पितृकुले त्वासप्तकक्षं ब्रुवे॥
*यद्यप्येकस्य बहवः सुताः स्युस्तदपीह तु।
सम्बन्धसाम्यादेकैव गणितेत्यवधार्यताम्॥
*एकस्मान्मिथुनात्सुतोऽथ दुहिता द्वन्द्वद्वयं तद्द्वयात्
तस्माद्द्वन्द्वचतुष्कमष्ट च ततोऽतः षोडशाऽतो रदाः।
यावत्सप्तमकक्षमग्निऋतवः कन्या इहैकान्वये
ता दन्तैर्गुणिता रसैकखदृशो वंशे सपिण्डाः पितुः॥

पुत्री दत्ता तत्र प्रतिग्रहीतृकुले प्रतिग्रहीता तृतोदत्ततदत्तेति त्रि-
पुरुषस्य प्रतिग्रहीतुरित्य(१)र्थः।

*उद्वोढुरिति। वरः प्रथमः, ततो द्वितीयस्थाने स्थितं वर-
पितरौ द्वन्द्वं, तृतीयस्थाने पितुः पितरौ द्वन्द्वं, चतुर्थस्थाने तयोः
प्रत्येकं जनके द्वन्द्वे पञ्चमस्थाने द्वन्द्वद्वयघटकपुंद्वयस्त्रीद्वययोः जनक-
द्वन्द्वानि चत्वारि, षष्ठस्थाने तद्घटकाष्टसङ्ख्यस्त्रीपुंव्यक्तिजनकानि
द्वन्द्वानि अष्टौ, सप्तमस्थाने तद्घटकषोडशव्यक्तिजनकानि द्वन्द्वानि
षोडश इति। रदाः दन्ताः द्वात्रिंशत् द्वन्द्वानि। आसप्तकक्षं वंशा-
रम्भकदम्पतिप्रमितिरित्यन्वयः। इतः परं तत्कन्याः प्रतिजा-
नीते—*एकैकेति। पितृकुले आसप्तकक्षम् एकैकान्वयकन्यकाः
ब्रुवे इत्यन्वयः। एकैकस्य द्वन्द्वस्यान्वये यदि कन्याद्वयादि तत्र सं-
ख्यावृद्धिमाशङ्क्य समाधत्ते—*यद्यपीति। सुगमम्। उक्तद्वात्रिं-
शद्द्वन्द्वानां मध्ये एकद्वन्द्वं कुले उद्वोढुः सपिण्डकन्यानां (२)त्रिष-
ष्टिरूपामवान्तरसंख्यामाह—*एकस्मादिति। प्रथममेकं मिथुनं,

(१) 'रित्यर्थः। दत्तकः' ख० ङ०  (२) 'त्रिषष्टिरूपा' घ०।

*मातुर्जन्मददम्पती च मिथुनद्वन्द्वं तयोः सागराः
तस्याः पञ्चमकक्षमश्वमितिरित्येकान्वयः पुंसुते ।
द्वन्द्वाद्द्वन्द्वयुगं ततोऽब्धय इतोऽष्टौ पञ्चकक्षं शर–
क्षोण्यः सप्तगुणाः शराभ्रविधवो मातुः सपिण्डाः कुले
*कुलद्वयस्य कन्यकायुता मिथः सपिण्डकाः ।
हिमांशुदृग्धरादृशो विवाहकर्मवर्जिताः ॥ इति ।
एतच्च सर्ववर्णसाधारणं, सर्वत्र सापिण्ड्यसद्भावादिति

---

ततः पुत्रः कन्या चेति द्वन्द्वं द्वितीये स्थाने, ततः प्रत्येकं ताभ्यां पुत्रः कन्या चेति द्वन्द्वद्वयं तृतीये, ततो द्वन्द्वद्वयात्तद्रीत्यैव द्वन्द्वचतुष्टयं चतुर्थे, ततः तच्चतुष्टयात्तद्रीत्यैव द्वन्द्वाष्टकं पञ्चमे, ततः तदष्टकात्तथैवं रीत्या षोडश द्वन्द्वानि षष्ठे, तेभ्यो द्वन्द्वेभ्यो द्वात्रिंशद्द्वन्द्वानि सप्तमे, इति रीत्या एकैकस्यान्वये सप्तमकक्षं यावत् (१)अग्निऋतवः त्रिषष्टिः कन्या इत्यर्थः । ता दन्तैर्द्वात्रिंशद्भिर्गुणिताः रसैकखदृशः रसाः षट्, एक, खं शून्यं, दृक् द्विः, अङ्कानां वामतो गतिः २०१६ षोडशाधिकसहस्रद्वयम् उद्वोढुः पितुः वंशे उद्वोढुः सपिण्डा इत्यर्थः । *मातुरिति । उद्वोढुरिति वर्त्तते । वरपितरौ द्वितीयस्थानस्थं द्वन्द्वं, तृतीयस्थाने मातुः पितरौ द्वन्द्वं, चतुर्थस्थाने द्वे द्वन्द्वे, पञ्चमस्थाने सागराः चत्वारि द्वन्द्वानि इति तस्याः मातुः आरम्भकक्षम् अश्वमितिः सप्तसंख्या । प्रथमद्वन्द्वस्य प्राग्गणनात् तत्र एक द्वन्द्वस्यान्वयः पुत्रकन्ये इति एकं द्वन्द्वम् । तस्मात् द्वन्द्वात् द्वन्द्वयुगं द्वन्द्वद्वयं, ततः अब्धयश्चत्वारि द्वन्द्वानि, ततोऽष्ट द्वन्द्वानि इति आरम्भकक्षं शरक्षोण्यः शराः पञ्च, क्षोणी एकः, वामगत्या १५ पञ्चदश । ते सप्तगुणाः शराभ्रविधवः पञ्चाधिकशतम्, उद्वोढुर्मातुः कुले उद्वोढुः सपिण्डा इत्यर्थः । *कुलेति । मिथोयुताः संकलिताः हिमांशुदृग्धरादृशः, स्प-

---

(१) 'अग्निक्षणवः त्रिषष्टिः' घ० ।

विज्ञानेश्वरोक्तेः,

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ।
सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥

इति हरनाथधृतदेवलवचनाच्च । सम्बन्धतत्त्वे सुमन्तुः—'पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां *मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत्परित्यज्यैनां मातृवद् बिभृयात्' इति दिक् ।

ष्टमेकविंशत्यधिकमेकाविंशतिशतम् उद्वोढुर्विवाहकर्मणि वार्जिता इत्यर्थः । मातुलकन्यादिविवाहे तु ईदृशधार्मिकोक्तसंख्याभङ्गः स्यादिति अभिप्रायः । *मातृसगोत्रां मातुलसगोत्राम् । अधिकमग्रे । विवाहमात्रे इदं, मैथुनादौ तु सपिण्डापत्यदारेष्वित्यादि स्मृत्यन्तरोक्तं द्रष्टव्यम् । अत एव मातृवदिति दृष्टान्तः । दिगर्थस्तु सपिण्डादिषु भार्यात्वं नोत्पद्यते । रोगिण्यादौ तदुत्पद्यते इति मिताक्षरा । रोगिण्यादौ ऋक्षादिनाम्नीषु च भार्यात्वानुत्पत्तौ तज्जन्यपुत्रादेर्वर्णत्वानापत्तिभये भार्याभिन्नागमने प्रायश्चित्तापत्त्या च तत्र तदुत्पत्तिस्वीकारे सपिण्डादिष्वपि प्रत्युद्विवाहितादिवत् भार्यात्वं स्वीकार्यम् । तत्परिणेतुरिव सपिण्डादिपरिणेतुरपि निषेधबलात् पापमात्रमित्यन्ये ।

परे तु यस्या गमने मरणान्तं नैमितिकं तदुत्पन्नस्य 'पतितोत्पन्नः पतितो भवति' इति वचनेन पातित्याद् 'अनिन्द्येषु विवाहेषु' इत्यादौ राक्षसादीनामिव पातित्यप्रयोजकनरकप्रयोजकानामपि विवाहानां ग्रहणान्न वर्णत्वम् । प्रत्युद्वाहादिजन्ये रोहिण्यादिजन्ये च पातित्याभावाद्विवाहस्य तादृशनरकाप्रयोजकत्वाच्च वर्णत्वम् । अतः प्रथमे वैयर्थ्याद्भार्यात्वं नोपेयते, द्वितीये तदुपेयते इत्याहुः ।

भ्रातृमतीमिति पुत्रिकाकरणशङ्कानिरासाय,

यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता ।

*ऋषेरिदमार्षं प्रवरः, गोत्रं*प्रसिद्धम्, समाने आर्षगोत्रे यस्य तस्माज्जाता या न भवति ताम् ॥

अथ संक्षेपेण गोत्रप्रवरनिर्णयः। तौ च भिन्नौ निषेधे निमित्तं, *'सगोत्राय दुहितरं न प्रयच्छेत्' इति आपस्त-

नोपयच्छेत्तु तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥

इति मनूक्तेः। यस्याः पिता पुत्रिकाकरणाभिप्रायवान्न वेति न विज्ञायेतेत्यर्थः। अनेनापरिभाषिताऽपि पितुरभिप्रायमात्रेण पुत्रिका भवतीति गम्यते। अभिसंधेराकारमाह मनुः—

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥ इति।

वरेण सह संप्रतिपत्तौ तु पुत्रिकाकरणं स्पष्टमेव। सा च संप्रपत्तिर्द्वेधा—केवलमातामहसम्बन्धित्वेन उभयसम्बन्धित्वेन चेति। आद्ये दानमन्त्रमाह मनुः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥ इति।

अन्त्ये चाह कात्यायनः—

अपुत्रोऽहं प्रदास्यामि तुभ्यं कन्यां, भवानपि।
पुत्रार्थी चेदिहोत्पन्नः स नौ पुत्रो भवेदिति ॥

यत्र च नैतादृशशङ्का तामभ्रातृकामपि उद्वहेदिति। असमानार्षगोत्रजामिति स्त्रीविशेषणं व्याचष्टे-*ऋषेरिति। *प्रसिद्धमिति। यद्यपि पाणिनिना "अपत्यं पौत्रप्रभृतिगोत्रम्" (अष्टा० सू० ४-१-१६२) इति पारिभाषितं तथापि सा परिभाषा शब्दशास्त्र एव, इह तु पुत्रपौत्रादिपरम्परैव। सा च वक्ष्यमाणविश्वामित्रादिऋषिवंश इत्यर्थः। *सगोत्रायेति। व्यामुष्यायणादीनां संकृतीनां वसिष्ठैः सह प्रवरभेदेन विवाहे प्रसक्ते प्रथमो निषेधः, एवं वत्साष्टिषेणयोर्गोत्रभेदेऽपि विवाहे प्राप्ते

स्योक्तेः, 'असमानप्रवरैर्विवाहः' इति गौतमोक्तेश्च । तत्र गोत्रलक्षणमाह प्रवरमञ्जर्यां बौधायनः—

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥

सप्तानामृ*षीणामगस्त्याष्टमानां यदपत्यं त*द्गोत्रम्। इति । यद्यपि केवलभार्गवेष्वार्ष्टिषेणादिषु केवलाङ्गिरसेषु हरितादिषु च *नैतत्, भृग्वाङ्गिरसोरु*क्तेष्वनन्तर्गतेः; तथाप्यत्रे*ष्टापत्तिरेवेति केचित् *अ-

---

द्वितीयश्च निषेध आवश्यकः । तथाच प्रथमे सगोत्रत्वाद्द्वितीये समप्रवरत्वान्न विवाह इत्यर्थः । *ऋषीणामिति । ऋषित्वं मन्त्रद्रष्टृत्वम् 'ऋषिर्दर्शनात्' इति यास्कोक्तेः । सप्तर्षिशब्दश्च रूढः पञ्चजनशब्दवत् । *गोत्रमिति । अगस्त्याष्टमानामित्यस्यानुवृत्तिः । तेन अगस्त्याष्टमसप्तर्ष्यपत्यम् ऋषिभूतं यत्तदेतेषां गोत्रमित्यर्थः । यथा जमदग्नेर्गोत्रं वत्सादयः । तथा गौतमस्य आयास्यादयः, भरद्वाजस्य दक्षगर्गादय इत्यादि । ऋषित्वोपादानादस्मदादौ तदपत्यत्वेऽपि नातिव्याप्तिः । *नैतदिति । तेषां सप्तर्ष्यपत्यत्वाभावात् । *उक्तेषु सप्तर्षिषु । *इष्टापत्तिरेवेति । न चैवम्—"अन्यत्र भृग्वाङ्गिरो गणात्" इति बौधायनोक्ताग्रिमपर्युदासानुपपत्तिः, भृग्वाङ्गिरोगणेषु समानगोत्रत्वस्यैवाप्राप्तेः;—इति वाच्यं, तेषां हि गोत्रत्वं दुरुपपादमेव । गोत्रसंदंशपाठात्तु जामदग्न्यभृगुगणस्य गौतमभरद्वाजाङ्गिरोगणयोश्च गोत्रत्वात्तत्सादृश्येन गोत्रत्वभ्रान्त्या प्रसक्तिमपेक्ष्य पर्युदासः, श्राद्धे कुण्डगोलकवत् । एवं सति आर्ष्टिषेणगोत्रोऽयं हरितगोत्रोऽयमिति व्यवहारो गोत्रभूतभृग्वङ्गिरोगणसादृश्याद्भ्रान्त्यैव । नन्वेवं तत्र केवलाङ्गिरस्त्वे किमविवाहप्रयोजकमित्यत्राह—*अतएवेति । केचिदित्यरुचिः । सा च यद्यपि 'सगोत्राय दुहितरं न प्रयच्छेत्' इत्यत्र सप्तर्ष्यपत्यत्वमेव गो-

त एव स्मृत्यर्थसारे प्रवरैक्यादेवात्राविवाह उक्तः । य-
द्यपि वसिष्ठादीनां न गोत्रत्वं युक्तम्, तेषां सप्तर्षित्वेन
तदपत्यत्वाभावात्; तथापि *तत्पूर्वभाविवासिष्ठाद्यप-
त्यत्वेन गोत्रत्वं युक्तम् । *अत एव*पूर्वेषां परेषां चैत-

---

त्त्वम् 'असमानप्रवरैर्विवाहः' इति पृथक् निषेधात्; तथाऽपि ता-
वत्समानगोत्रत्वमित्यत्र प्रवरवत्त्वं गोत्रत्वम् 'प्रवराण्युक्तानि गोत्राणि'
इति सत्याषाढोक्तेः । इहापि 'प्रवरेष्वनुवर्त्तते' इत्युक्तेश्च । तस्य
च भृग्वाङ्गिरोगणेऽपि एकप्रवरत्वेन प्राप्तेः पर्युदासोपपत्तिरिति ।

अन्ये तु प्रवरवत्त्वं गोत्रत्वम् 'असमानप्रवरैः' इति पृथक्नि-
षेधवैयर्थ्यात् । किन्तु 'गोत्रं वंशपरम्पराप्रसिद्धम्' इति विज्ञाने-
श्वराद्युक्तेः, सगोत्रत्वेन ये पठितास्तेषां यमुपक्रम्य प्रवराम्नानं
स गोत्रम् । बौधायनोक्तिस्तूपलक्षणम् । तेन भृग्वाङ्गिरोगणेषु
सप्तर्षिभिन्नत्वेऽपि अधिकाराद्गोत्रत्वम् । एवञ्च भृग्वादेरनुवृत्त्या च
[illegible]ः सगोत्रत्वे प्रसक्ते पर्युदासोपपत्तिरित्याहुः ।

ननु—

भृग्वाङ्गिरोऽन्यं यत्किञ्चिद्दृषेर्यावत्सुवर्त्तनम् ।
तावत्समानगोत्रत्वमिति केचित्समूचिरे ॥
तन्नैवं सति सर्वत्र सगोत्रत्वानिबन्धने ।
अनुद्वाहे तु कुत्र स्यात्प्रवरैक्यं प्रयोजकम् ? ॥

वत्सत्वादिना सगोत्रत्वस्यैव सत्त्वादिति चेत् ? वत्सार्ष्टिषेण-
योर्गोत्रभेदेपि प्रवरैक्यादेवाविवाहादिति । *तत्पूर्वेति । वसि-
ष्ठादीनामिति वर्त्तते । *अत एव । युववासिष्ठस्य प्राचीनवासिष्ठा-
पत्यत्वादेव । *पूर्वेषामिति । [illegible]क्तसप्तर्षीणां
यदृषिभूतं पुत्रपौत्रादि अपत्यं तत्पूर्वभाविनामुत्तरभाविनां च गो-
त्रमित्यर्थः । तेन वत्सो जमदग्निगोत्रमिति तत्पुरुषेण, वयं वत्स-
गोत्रा इति बहुव्रीहिणा च क्रमेण व्यवहारः । वसिष्ठस्य प्राची-

दृ गोत्रम् । अत्र *विशेषोऽस्मत्कृतप्रवरदर्पणे ज्ञेयः ॥

प्रवरास्तु प्रवरणानि प्रवराः । *कल्पकारा हि 'वा-नवसिष्ठापत्यत्वाभावे तस्य गोत्रत्वाभावापत्तिरित्युपष्टंभसङ्गतिः । अगस्त्याष्टमसप्तर्षीणां तु न गोत्रत्वं, तदपत्येषु गोत्रत्वव्य-वहारानुपपत्तेः । केचित्तु वसिष्ठादेर्गोत्रत्वमौपचारिकं कुण्डिना-देः स्वगोत्रे एकगोत्रत्वेनाविवाहप्रयोजकत्ववद्वसिष्ठादेः सर्वस्वग-णेषु सदृशगोत्रत्वप्रयोजकत्वेनाविवाहप्रयोजकतया सा(१)दृश्यमि-त्याहुः, तदसत् । न ह्यघमर्षणकौशिकविश्वामित्रेति गोत्रभूतो वि-श्वामित्रो निर्दिश्यते, तथा सति तस्य द्विप्रवरत्वापत्त्या विश्वा-मित्राणां त्र्या(२)र्षेय इत्यादिनिर्देशानुपपत्तेः । नचैकस्यैव गोत्र-त्वं प्रवरत्वं च(३)सम्भवति अभेदे षष्ठ्यनुपपत्तेः । तस्माद् ऋ-ष्यपत्यभूता एव तुल्यनामानो गौतमादय ऋषयः गोत्रत्वेन प्रवरत्वे-न च स्वीकार्या इति । *विशेषः गोत्रस्य [illegible]-खण्डनम् ।

वरणानि ऋषिसम्बन्धेनाग्निप्रार्थनानि, तान्युपपादयति—*कल्पकारा हीति । कल्पसूत्रेषु आश्वलायनानां मन्त्रः(४)'अग्ने महाँ असि ब्राह्मणभारत' इत्यादिः । अग्निर्देवो होता देवानित्या-(दि(५)श्च । तत्र प्रथमो होतृमन्त्रः । तत्र हे अग्ने त्वं महाँ असीति-प्रार्थ्य वासिष्ठ इति पुनः प्रार्थ्यते । यथाऽयं यजमानो वासिष्ठः वसिष्ठवंशोत्पन्नत्वात्, तथा त्वमपि वासिष्ठः, तेनोत्पादितत्वात् । एतेन प्रसिद्धब्राह्मण्यानां वसिष्ठानां यथा हविस्त्वया देवान्प्रति नीयते, तथा [illegible] यजमानस्य प्रसिद्धब्राह्मण्यस्य हविर्दे-वान्प्रति त्वया नेयमिति प्रार्थना ध्वन्यते । द्वितीयश्चाध्वर्युमन्त्रः ।

---

(१) 'सादृश्यमि' ख० घ० (२) 'त्र्यार्षेय इ' ङ०

(३) 'सम्भवति अभवति अभेदे' घ० ङ

(४) 'अग्ने महाँ अ' घ० ङ (५) कंसान्तर्गतं नास्ति । घ० ङ

सिष्ठेति होता' 'वासिष्ठवदित्यध्वर्युः, इत्यादिना*येषां प्र-*वरणममनन्ति ते प्रवराः । तच्च वरणं यद्यपि *गोत्र-भूतस्यापि क्वचिद्दृश्यते तथापि पूर्ववदृ*षिभेदो द्रष्ट-व्यः । *अन्यथा *तेषां त्र्यार्षेये 'एकार्षे' इत्यादिनिर्देशा-नुपपत्तेः । अन्येतु तद्गोणां त्र्यार्षेय इति भेदमाहुरिति *दिक् । तत्त्वं तु गोत्रभूतस्य पितृपितामहप्रपितामहा एव प्रवराः, 'पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति शतपथश्रुतेः,

---

तत्र मन्त्रे वसिष्ठवदिसग्निः प्रार्थ्यत इत्यर्थः । आदिपदात् भार्गवच्यावनाप्नवानौर्वजामदग्न्येति अग्नन्तादिना होता, तद्वैप-रीत्येन जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युरित्य-स्य ग्रहः । एवं कात्यायनादिमन्त्रा ऊह्याः । *येषाम् । ऋषीणाम् । ) *वरणम् अग्निप्रार्थनम् । सम्बन्धः षष्ठ्यर्थः *गोत्रभूतस्यापीति । यथा वासिष्ठेति होता वसिष्ठवदित्यध्व-र्युरित्यादौ । *ऋषिभेदः वृद्धवसिष्ठोऽन्यः, युववसिष्ठो ऽन्यः । *अन्यथा ऋषिभेदानुपगमेन गोत्रभूतस्य प्रवरत्वासम्भवेन *ते-षां वसिष्ठादीनाम् । वासिष्ठेन्द्रप्रमदाभरद्वाजास्वित्यत्र वासिष्ठेत्यत्र च गोत्रभूतवसिष्ठत्यागे त्र्यार्षेयत्व एकार्षेयत्वयोर्लोपापत्तेरित्यर्थः । नन्वेवम(१)ग्नेर्वरणकर्मत्वे "मन्त्रकृतो वृणीते" इत्यृषीणां कर्मता-भङ्गापत्तिरित्यत आह—*दिगिति । ऋषीणां वरणकर्मत्वं ना-स्त्येव । तदुपगमे वासिष्ठेति वसिष्ठवदिति प्रत्ययवैयर्थ्यापत्तेः । वसिष्ठादेः प्रार्थनाकर्मत्वे सम्बुध्यन्तशब्दापेक्षणात् । तस्मादग्निरे-व प्रार्थनाकर्म । मन्त्रकृत इति षष्ठी । मन्त्रकृतश्च ऋषयः तत्सम्ब-न्धेन होत्रादयः प्रार्थनाकर्तार इति सर्वं सुस्थम् । माधवस्तु गोत्रप्रवर्तकस्य ऋषेर्व्यावर्त्तको मुनिगणः प्रवरः । यथा गोत्रप्रव-र्त्तकस्य भरद्वाजस्य व्यावर्त्तकावङ्गिरोबृहस्पती । आङ्गिरसबार्हस्प-त्यभारद्वाजेति त्रिप्रवरान्वितभारद्वाजगोत्रोऽहमिति प्रयोगादि-

'परं परं प्रथमम्' इत्याश्वलायनोक्तेश्च। *अत्र विशेषमाह बौधायनः—

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते।
तावत्समानगोत्रत्वमन्यत्र भृग्वाङ्गिरसां गणात्॥ इति

स्मृत्यर्थसारे—

*भ्रियमाणतया(१) वापि सत्तया वाऽनुवर्तनम्।

---

त्याह। तन्न, वासिष्ठेत्येकप्रवरान्वितवासिष्ठगोत्रोऽहमित्यादौ वसिष्ठभेदं(२) विनाऽगतेः। दिगर्थस्तु—गोत्रभूत(३)स्यर्षेः पितृपितामहप्रपितामहादय एव प्रवराः, तेषां च पितृपुत्रपौत्रक्रमेण(४)वरणे प्रवेशः 'पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति शतपथ श्रुतेः 'परं परं प्रथमम्' इत्याश्वलायनसूत्रौ तथोक्तेश्च। अत एवाऽऽङ्गिरसबार्हस्पत्यभारद्वाजेत्यादौ तथैव दृश्यते। आङ्गिरसेत्यादि तद्धितस्तु यजमानस्य ऋषिसम्बन्धद्योतनार्थः। गोत्रात्पूर्वेषां मन्त्रकृतामेव प्रवरत्वं 'मन्त्रकृतो वृणीते' इति सूत्रादिति। तद्गोत्राणामिति। तथाच (५)'तेषां त्र्यार्षेय' इति न निर्देशः, किन्तु तद्गोत्राणां तदपत्यानां त्र्यार्षेय इत्येव। तथाच 'वसिष्ठेन्द्रप्रमदाभरद्वाजास्विति वसिष्ठानाम्' इत्यत्र वसिष्ठापत्यानां त्रयः प्रवरा इति (५॥)अत्र वसिष्ठस्य प्रवरत्वे बाधकाभाव इत्यर्थः। (६)वयं वसिष्ठगोत्रा इत्यादि प्रयोगः। *अत्रेति। सगोत्रायेति (७)निषेधे। अविवाहप्रयोजकसमानगोत्रत्वे इत्यर्थः। भृग्वङ्गिरोभिन्नैकऋष्यनुवृत्त्यैव सगोत्रत्वं नान्यथेत्यर्थः। ननु सा कुतो ज्ञायते इत्यत आह—*भ्रियमा-

---

(१) 'भ्रीयमाणा तया' ग०।
(२) 'विनाअयगतेः' ख० घ०। (३) 'तस्यर्षे' ख०।
(४) 'वरणं प्र' घ०। (५) 'ते त्र्यार्षेय' घ०।
(५॥) एकप्रवरस्थले। (६) 'वयं वासिष्ठगोत्रा' घ० ङ०।
(७) 'निषेधः वि' घ० ङ०।

*एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥
भृग्वङ्गिरोगणेषु तु माधवीये स्मृत्यन्तरे—
पञ्चार्षे त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
(१)भृग्वङ्गिरोगणेष्वेव शेषेष्वे*कोपि वारयेत् ॥

शेषगोत्रेषु एकोऽपि समानः प्रवरो विवाहं वारयेदित्यर्थः । बौधायनोऽपि भृग्वङ्गिरसावधिकृत्य "द्व्यार्षेयसान्निपातेऽविवाहस्त्र्यार्षेयाणां, त्र्यार्षेयसान्निपातेऽविवाहः पञ्चार्षेयाणाम्" इति । *भृग्वङ्गिरोगणेष्वपि

---

णतयेति । *एकस्य अष्टान्यतमस्य । यस्य अनुवर्तनं यत्र दृश्यते तस्यर्षेः अपत्यं गोत्रमुच्यते इत्यर्थः । तयोः सगोत्रत्वमिति यावत् । सगोत्रत्वमेकसमृष्यपत्यत्वं च तदनुवृत्त्या ज्ञायते । तदनुवृत्तिश्च द्वेधा—व्रियमाणतया, सत्तया च । तत्राद्या वत्सादिषु जमदग्न्यादेः तत्प्रवरेषु जामदग्न्यादिपदसंकीर्त्तनात् । द्वितीया च कपिषु भारद्वाजस्य । तत्प्रवरेषु आङ्गिरसामहैय्यौरुक्ष(२)यसेषु भारद्वाजपदसङ्कीर्तनाभावेऽपि केवलं सूत्रादिगततदनुक्रमणेषु भारद्वाजगोत्र(३)संदंशपाठेन तदनुवृत्तिप्रतीतेः । व्रियमाणत्वं पदेन प्रार्थनाकर्मसम्बन्धितया प्रार्थनाकर्मत्वम् । व्रियमाणतया वाऽनुवृत्तिर्न सार्वत्रिकीत्यतः सत्तयेत्युक्तम् । अधिकारेण क्वचिदुत्पादकतया च । अत एव भरद्वाजस्य कप्युत्पादकत्वमपि वदन्ति । *एकोपीति । [illegible]नुवर्त्तते । भृग्वङ्गिरोगणाभिन्नेषु इति तदर्थः । भृग्वङ्गिरोगणेषु त्वेकप्रवरसाम्ये विवाहो भवत्येवेति भावः । एतच्च केवलभृग्वङ्गिरो[illegible]दम् । भृग्वङ्गिरोगणान्तर्गतगणेषु त्वाह—*भृग्विति । सप्तमीनिर्देशाज्जमदग्न्या[illegible]लाभः । एकेति जमदग्निषु भार्गवच्यावनाप्नवानेति, भार्गवौर्वजामदग्न्येति, गौतमेषु

---

(१) 'भृग्वाङ्गिरोगणेष्वेवं' क० ।
(२) 'यसेसु' ख० । (३) 'सदंशपाठेन' ख० ।

जमदग्निगौतमभरद्वाजेष्वेकप्रवरसाम्ये*सर्वेषामप्यसाम्ये वा*सगोत्रत्वादेवाविवाह इति *दिक् ।

अथ गोत्राणि प्रवराश्चोच्यन्ते । तत्र बौधायनः—

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।

---

आङ्गिरसौ(१)शिजकाक्षीवतेति, आङ्गिरसौतथ्यदैर्घतमसेति, भ(२)रद्वाजेषु आङ्गिरसबार्हस्पत्यभारद्वाजेति आङ्गिरसतैत्तिरिकापिभुवेति त्रिप्रवरेषु । *सर्वेषामिति । भरद्वाजेषु भारद्वाजगार्ग्यसैन्येति, आङ्गिरसतैत्तिरिकापिभुवेति । *सगोत्रत्वादेवेति । अविवाहप्रयोजकं सगोत्रत्वं तावद्द्वेधा—एकगोत्रत्वं सदृशगोत्रत्वं च । तत्राद्यमेकैकगणान्तःपातिषु, तत्र मूलभूतस्य वत्सादेरेकस्यैव गोत्रत्वात् । यत्रापि गणावान्तरऋषीणामेव गोत्रत्वं, तत्रापि तदपत्यानि प्रति तस्यैकत्वमेव । द्वितीयं तु भिन्नभिन्नगणान्तःपातिषु, वत्सविदयोर्भिन्नयोरपि गोत्रयोरेकसप्तर्ष्यपत्यत्वेन सादृश्यात् । [ *दिगिति । ] दिगर्थस्तु—समानप्रवरत्वं द्वेधा—एकप्रवरसाम्यं द्वि(३)प्रवरसाम्यं च । आद्यं भृग्वङ्गिरोगणव्यतिरिक्तेषु शेषेषु इति वचनात् । (४)द्वितीयं भृग्वङ्गिरोगणेषु । तत्रासङ्कीर्णं तत्राविवाहप्रयोजकं, तेषां गोत्रत्वाभावेन समानगोत्रत्वाप्रसक्तेः । अत एव च तेषु द्वित्रिप्रवरसाम्याभावे विवाह एव भवति । समानगोत्रत्वं चासङ्कीर्णं कपीनां भरद्वाजगणैः सहाविवाहप्रयोजकम् । तेषां भरद्वाजगणस्थत्वेनाङ्गिरोगणस्थत्वादेकप्रवरसाम्येऽपि अपेक्षितद्वि-

---

(१) 'क्षितकाक्षीवेति' ख० ।

(२) 'भरद्वाजेषु आङ्गिरसतैत्तिरिकापिभुवेत्यादि सगोत्रत्वादेवेति' ख० घ० ।

(३) 'द्वित्रिप्रवरसाम्यं आ' घ० ङ० ।

(४) 'द्वितीये भृ' । ङ० घ० ।

*ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥

तत्र*सप्त भृगवः। वत्सा बिदा आर्ष्टिषेणा (१)यास्का मित्रयुवो वैन्याः शुनका इति । *वत्सानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येति, भार्गवौर्वजामदग्न्येति वा, भार्गवच्यावनाप्नवानेति वा । *बिदानां पञ्च-भार्गवच्यावनाप्नवानौर्वबैदेति, भार्गवौर्वजामदग्न्येति वा। एतौ

---

त्रिप्रवरसाम्याभावादिति । अन्यत्र सर्वत्र प्रायश एते सङ्कीर्णे इति बोध्यम् ।

*ऊनपञ्चाशदिति । तथाच बौधायनमते कारिका—

सप्तेह भृगवः, सप्तदशाङ्गिरस एवच ।
ततोऽत्रयश्च चत्वारो, बोद्धव्याः (२)कश्यपास्त्रयः ॥
चत्वारोत्र वसिष्ठाः स्युर्विश्वामित्रास्ततो दश ।
अगस्तयश्च चत्वार इति संग्रहकृद्वचः ॥ इति ।

*सप्तेति । भृगवो द्विविधाः—जामदग्न्याः, केवलाश्च । तत्र द्वौ वत्सबिदौ जामदग्न्यौ । वत्सादयः षट् केवला एव । बिदा अपि केवला इति केचित् । इह तु वत्सत्वादिना एकीकृत्य दर्शिताः । *वत्सानामिति । जामदग्न्यवत्सानामाद्यद्वयं, तत्र और्वजामदग्न्यशब्दयोः सत्त्वात् । (३)तृतीयं तु अजामदग्न्यवत्सानाम् । तत्र और्वजामदग्न्यशब्दयोरसत्त्वादिति विवेकः । 'तृतीयं केवलजामदग्न्यगोत्रस्येत्याश्वलायनः' इति दर्पणः । *बिदानामिति । तत्र त्रिप्रवरेषु बिदेषु और्वजामदग्न्यशब्दयोः । सत्त्वाज्जमदग्नेर्व्रियमाणतयाऽप्यनुवृत्तिः । पञ्चप्रवरेषु बिदेषु जामदग्न्यशब्दाभावेऽपि

---

(१) 'यस्का' ग० । (२) 'कश्यपस्त्रयः' ख० ।
(३) 'तृतीयं तु तत्र' ख० ।

द्वौ जामदग्न्यसंज्ञौ । आर्ष्टिषेणानां भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति, भार्गवार्ष्टिषेणानूपेति वा । *एषां त्रयाणां परस्परमविवाहः । *वात्स्यानां भार्गवच्यावनाप्नवानेति । वत्सपुरोधसयोः पञ्च । भार्गवच्यावनाप्नवानवात्सपौरोधसेति । बैजवानिमतिथयोः पञ्च । भार्गवच्यावनाप्नवानबैजमतिथेति । एते त्रयः क्वचित् । एषामपि *पूर्वैरविवाहः । अत्र तत्तद्गणस्था ऋषयोऽन्यश्च विशेषे मत्कृते प्रवरदर्पणे ज्ञेयः । यस्कानां भार्गववै-

जामदग्न्यत्वप्रयुक्तौर्वशब्दसत्त्वाज्जमदग्नेः सत्तयाऽनुवृत्तिः, आश्वलायनसूत्रवृत्तौ "और्वजामदग्न्यशब्दौ जामदग्न्यत्वप्रयुक्तौ" इत्युक्तेः । ये तु जामदग्न्यबिदानामिदम्, "अजामदग्न्यबिदानां भार्गवौर्वबैदेति त्रय इति कात्यायनः" इति अजामदग्न्यबिदानामाहुः, तेषामौर्वशब्दसत्त्वेऽपि कात्यायनोक्त्याऽजामदग्न्यत्वमभिमतम् । आर्ष्टिषेणप्रभृतिपञ्चानां न जामदग्न्यत्वं जमदग्न्येः सत्तयाऽप्यनुवृत्त्यभावात् । *एषामिति । आर्ष्टिषेणानां वत्सबिदाभ्यां सहाविवाहः, त्रिप्रवरसाम्यात् । यद्यपि त्रिप्रवरार्ष्टिषेणानां नान्याभ्यां सह द्विप्रवरसाम्यं, तथापि पञ्चार्षेयपक्षसंमतत्वमपि प्रवरसाम्येऽत्रविवाहप्रयोजकं, (१)"वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः" इति बौधायनात् । एवञ्च जामदग्न्यवत्सविदयोः सगोत्रत्वसप्रवरत्वाभ्यामविवाहः, अजामदग्न्यवत्सार्ष्टिषेणाभ्यां तयोः सप्रवरत्वादेवेति । तदुक्तम्—

जामदग्न्यौ वत्सविदावार्ष्टिषेणाः परस्परम् ।
नान्वियुः प्रवरैक्येन, सगोत्रत्वेन चादिमौ ॥ इति ।

*वात्स्यानामिति । अत्राच्यानां भार्गवच्यावनावाच्येति दर्पणः । *पूर्वैरिति । परस्परं चेति शेषः । त्रिप्रवरत्वसाम्यादिति

(१) 'वत्साविद्दा आ' ङ० घ० ।

शारद्वन्ताः, कौमण्डाः, दीर्घतमसः, (१)औशनसाः, कारेणुपालेयाः, राहूगणाः, सोमराजकाः, वामदेवाः, बृहदुकथाश्चेति । तत्राद्यास्यानामाङ्गिरसायास्यगौतमेति । (२)शारद्वतानामाङ्गिरसगौतमशा(३)रद्वतेति । कौमण्डानामाङ्गिरसौतथ्यकाक्षीवतगौतमकौमाण्डेति वा, *आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति वा, आङ्गिरसौत-

---

थ्याः, राहूगणानां सोमराजकानां बृहदुक्थानां च बौधायनेनानुक्तेः । चत्वारो भरद्वाजाः षट् केवलाङ्गिरस इति सप्तदशेत्यर्थः । आयास्यानां गौतमेति नामान्तरम् । शरद्वन्तेत्यकारान्तं, शरद्वदिति तान्तं वा नाम पुष्पवन्तपदवत् । वर्णादिविपर्यासे च न प्रवरादिभेदो यथौतथ्य औ(४)चथ्येत्यादि । *आङ्गिरसायास्येति । पञ्च प्रवराः । आयास्यौशिजानामित्यन्ये । "आङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति पञ्चकाक्षीवतानाम्" इत्याश्वलायनः । आङ्गिरसौ शिजेति (५)त्रयः औशिजानामित्यन्ये । *वामदेव्येति । गौतमवामदेवेति वा । अत्र राहूगणादित्रयस्याश्वलायनोक्तत्वादिहोक्तिः । अयास्यबृहदुक्थकाक्षीवद्दीर्घतमऋक्षपृषदश्वोतथ्याः सप्तान्ये आश्वलायनोक्ताः तत्रा(६)द्याश्चत्वारः सङ्ग्होक्त(७)सप्ता-

---

(१) 'औशनसः' क० ख० ।

(२) 'शारद्वन्तानां' क० ख० ।

(३) 'शारद्वन्तेति' क० ख० ।

(४) 'औचथ्येत्यादि' ख० ।

(५) 'त्रयः प्रवराः औशिजानां' ङ० घ० ।

(६) तत्राद्यास्त्रयः सप्तमश्चेति चत्वार इत्यर्थः ।

(७) 'सप्तान्तर्भाविना एव' घ० ङ० ।

थ्यगौतमौशिजकाक्षीवतेति वा, आङ्गिरसौशिजकाक्षीवतेति त्रयो वा । दीर्घतमसामाङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घत(१)मसेति, आङ्गिरसौतथ्यदैर्घतमसेति त्रयो वा । औशनसानामाङ्गिरसगौतमौशनसेति त्रयः । (२)कारेणुपालेयानामाङ्गिरसगौतमकारेणुपालेति त्रयः । राहूगणानामाङ्गिरसराहूगणगौतमेति । सोमराजकानामाङ्गिरससोमराजकगौतमेति । वामदेवानामाङ्गिरस*वामदेव्यगौतमेति । बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति, आङ्गिरसवामदेवबार्हदुक्थेति वा । *उतथ्यानामाङ्गिरसौतथ्यगौतमेति । औशिजानाम्—'आङ्गिरसौशिजकाक्षीवत' इत्यापस्तम्बः, "आङ्गिरसायास्यौशिजगौतमकाक्षीवत" इति कात्यायनः । एतौ द्वौ क्वचित् । *रा(३)घुवानामाङ्गिरसराघुवगौतमेति के(४)चित् । तत्र मूलं चिन्त्यम् । एषां*सर्वेषां गौतमानामविवाहः ॥

अथ भरद्वाजाः । ते चत्वारः—भरद्वाजाः, गर्गाः,

---

न्तर्भाविता एव । ऋक्षपृषदश्वा अग्रे वाच्यौ । उतथ्यमाह—*उतथ्यानामिति । ग्रन्थान्तरे औतथ्यआयास्यौशिजराहूगणसोमराजकबृहदुक्थकक्षीवद्राघुवा उक्ताः । तत्र सप्तानामन्तर्भूतत्वाद्राघुवानाह—*राघुवानामिति । *सर्वेषामिति । गौतमस्य ध्रियमाणतया सत्तया वाऽनुवृत्तेर्गोत्रैक्यात्, प्रायेण द्वित्रिप्रवरसाम्याच्च । तदुक्तम्—

गौतमाः सप्त चायस्याः शरद्वन्तस्तथापरे ।
कौमण्डा दैर्घतमसस्तथा कारेणुपालयः ॥
वामदेवा औशनसा गोत्रैक्यान्नान्वियुर्मिथः ॥ इति ।

---

(१) 'तमसेति वा आङ्गि' क० । (२)'कारेणुपालानामाङ्गिरस' क० ख० ।
(३) 'रघुवाना' ख० । (४) 'क्वचित्' क० ।

*ऋक्षाः, कपय इति । भरद्वाजानामाङ्गिरसबार्हस्पत्यभारद्वाजेति त्रयः । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येति पञ्च, आङ्गिरससैन्यगार्ग्येति त्रयो वा *अन्त्ययोर्व्यत्ययो वा, भारद्वाजगार्ग्यसैन्येति वा । *गर्गभेदानामाङ्गिरसतैत्तिरिकापिभुवेति । ऋक्षाणां कपिलानां चाङ्गिरसबार्हस्पत्यभरद्वाजवान्दनमातवचसेति पञ्च, आङ्गिरसवान्दनमातवचसेति त्रयो वा । कपीनामाङ्गिरसामहीयवौरुक्षयसेति । आत्मभुवामाङ्गिरस*भारद्वाजबार्हस्पत्यमन्त्रवरात्मभुवेति पञ्च । अयं क्वचित् । *भरद्वाजानां सर्वेषामविवाहः ॥

---

*ऋक्षाः आश्वलायनोक्ता एव । रौक्षायणा इति बौधायनोक्ताः । *अन्त्ययोरिति । उभयत्रापीति शेषः । शैन्येति तालव्यादिः क्वचित् । *गर्गभेदानामिति । तित्तिरयः कपिभूमयः खण्डिता इतिगर्गभेदास्त्रयः । कापिभुवेत्यस्यानन्तरम् आङ्गिरससैन्यगार्ग्येति वेति पाठः । 'आमहीयवा' इत्याश्वलायनः । आमहय्येति बौधायनः । "प्रागृक्षाणां कपीनां च" इति लिखनात्पञ्चप्रवरः कपिः ऋक्षान्तर्भूतः । गर्गान्तर्भूत इत्यन्ये । तस्यानेन कपिना सगोत्रत्वान्न विवाहः । तदुक्तम्—

> भरद्वाजगणस्यापि तथा कपिगणस्य च ।
> विवाहो न विधेयः स्यादन्योऽन्यं तु कदाचन ॥ इति ।

यद्यपि चाश्वलायनेन गौतमेषु ऋक्षाः पृषदश्वाश्च पठितास्तथापि आपस्तम्बादिभिः ऋक्षाणां भरद्वाजेषु पाठात् त्रियमाणतया सत्तया वा भारद्वाजानुवृत्तेः सगोत्रत्वाम्नायेण द्वित्रिप्रवरसाम्याच्च । केचित्तु आङ्गिरसबार्हस्पत्यभारद्वाजेति, आङ्गिरसभारद्वाजकात्यैति पक्षद्वयमाहुः । *भारद्वाजेति । भारद्वाजबार्हस्पत्ययोर्व्यत्ययो वा । *भरद्वा-

अथ केवलाङ्गिरसः । (ते(१)च षट्—हारिताः, कुत्साः, कण्वाः, रथीतराः, मुद्गलाः, विष्णुवृद्धाश्चेति ) हारितानाम् आङ्गिरसाम्बरीषयौवनाश्वेति । आद्यो*मान्धाता वा । कुत्सानामाङ्गिरसमान्धातृकौत्सेति । कण्वानामाङ्गिरसाजमीढकाण्वेति, आङ्गिरसघोरकाण्वेति वा । रथीतराणामाङ्गिरसवैरूपराथीतरेति, आङ्गिरसवैरूपपार्षदश्वेति वा, *अष्टादंष्ट्रपार्षदश्ववैरूपेति वा, अन्त्ययोर्व्यत्ययो वा । मुद्गलानामाङ्गिरस (भा(२)र्म्यार्श्वमौद्गल्येति, आद्यस्तार्क्ष्यो वा, आङ्गिरसतार्क्ष्यमौद्गल्येति वा । विष्णुवृद्धानामाङ्गिरस)पौरुकुत्स्यत्रासदस्यवेति । एषां*स्वगणं विहाय*सर्वैर्विवाहो भवति । *हारितकुत्सयोस्तु

---

जानामिति । भारद्वाजाङ्गिरसामित्यर्थः । पृषदश्वानां केवलाङ्गिरोगणे रथीतरेषु पाठाच्चैतैरेव सहाविवाहः, गौतमैस्तु सह भवत्येव विवाह इति । तदुक्तम्—

> भरद्वाजाः सकपयो गर्गा रौक्षायणा इति ।
>
> चत्वारोऽपि भरद्वाजगोत्रैक्यान्नान्वियुर्मिथः ॥ इति ।

*मान्धातेति । मान्धात्राम्बरीषयौवनाश्वेतीत्यर्थः [*अष्टादंष्ट्रेति] । "अष्टादंष्ट्रेत्यष्टादंष्ट्राणाम्" इत्याश्वलायनः । *स्वगणामिति । *सर्वैरिति । परस्परं पूर्वैरङ्गिरोभिश्चेत्यर्थः सगोत्रत्वाभावात्, द्वित्रिप्रवरसाम्याभावाच्च । स्वस्वगणे तु न विवाहः । तदुक्तम्—

> केवलाङ्गिरसश्चैके विष्णुवृद्धाः सकण्वजाः ।
>
> हरिता रथीतराश्च मुद्गलाः प्रवरैक्यतः ॥
>
> स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥ इति ।

*हारितेति । आर्षेयाणां पाक्षिकद्व्यार्षेयसाम्यात् । "हरित-

---

(१) 'कंसान्तर्गतं नास्ति क० । (२) कंसान्तर्गतं नास्ति ।

न भवति ॥

अथा(१)त्रयः । ते चत्वारः–अत्रयः, वाद्भुतकाः, गविष्ठिराः, मुद्गला इति । *आद्यानामात्रेयार्चनानसश्यावाश्वेति । वाद्भुतकानाम्–आत्रेयार्चनानसवाद्भुतकेति । धनंजयानामात्रेयार्चनानसधानञ्जयेति कश्चित् । गविष्ठिराणामात्रेयार्चनानसगाविष्ठिरेति, आत्रेयगाविष्ठिरपौर्वातिथेति वा । मुद्गलानामात्रेयार्चनानसपौर्वातिथेति । वामरथ्यसुमङ्गलबैजवापानामात्रेयार्चनानसातिथेति, आत्रेयार्चनानसगाविष्ठिरेति वा । सुमङ्गलानामात्रिसुमङ्गलश्यावाश्वेति केचित् । *अत्रेः पुत्रिकापुत्राणामात्रेयवामरथ्यपौत्रिकेति । अत्रीणां*सर्वेषामविवाहः ।

---

कुत्सपिङ्गशंखदर्भभैमगवानाम्'' इत्याश्वलायनेन सर्वप्रवरसाम्योक्तेश्च ।

*आद्यानामिति । अत्रीणामाद्यात्रीति [illegible] । *अत्रेरिति । वामरथ्याः वालेयाः हालेयाः कौद्रेयाः शौभ्रेयाः गोपवना इत्यत्रेः पुत्रिकापुत्राः । एषामत्रिवसिष्ठाभ्यां न विवाहः । अत्रिविश्वामित्राभ्यामित्यन्ये । तदुक्तम्—

विश्वामित्रात्रिगोत्रेण नोद्वहेयुर्धनञ्जयाः ।
अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ॥
तथैव जातूकर्ण्याश्च वासिष्ठैरात्रिभिः सह ॥ इति ।

उक्तश्लोकस्यैवैकान्वय इति प्रथमं मतम् । प्रथमश्लोकस्यैवैकान्वय इत्युत्तरं मतम् । *सर्वेषामिति । सगोत्रत्वात्समप्रवरत्वाच्च । तदुक्तम्—

---

(१) 'अथात्रेयः' क० ख० ।

अथ विश्वामित्राः। ते दश–कुशिकाः,लोहिताः (१)रौक्षकाः, का(२)मकायनाः, अजाः, कताः, धनंजयाः, अघमर्षणाः, पूरणाः, इन्द्रकौशिका इति। कुशिकानां वैश्वामित्रदेवरातौदलेति। लोहितानां वैश्वामित्राष्टकलौहितेति, अन्त्ययोर्व्यत्ययो वा, वैश्वामित्रमाधुच्छन्दसाष्टकेति वा, (वैश्वा(३)मित्राष्टकेति द्वौ वा)। रौक्षकाणां वैश्वामित्रगाथिनरैवणेति, वैश्वामित्ररौक्षकरैवणेति वा। कामकायनानां वै(४)श्वामित्रदेवश्रवसदै(५)वतरसेति। अजानां वैश्वामित्रमाधुच्छन्दसाजेति, वैश्वामित्राश्मरथवाधूलेति वा। (ध(६)नंजयानां विश्वामित्रमाधुच्छन्दसधानंजयेति, वैश्वामित्रमाधुच्छन्दसाघमर्षणेति वा। कतानां वैश्वामित्रकात्यात्कीलेति।) अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति। पूरणानां वैश्वामित्रपौरणेति द्वौ, वैश्वामित्रदेवरातपौरणेति वा। इन्द्रकौशिकानां वैश्वामित्रेन्द्रकौशिकेति द्वौ। एते बौधायनोक्ताः। रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति। रेणूनां वैश्वामित्र(७)गाथिनरैणवेति। वेणूनां वैश्वामित्रगाथि-

> चत्वारोऽत्रय आ(८)द्यत्रिवाद्भुतकगविष्ठिराः।
> मुद्गलाश्चेति गोत्रैक्यात्प्रवरैक्याच्च नान्वियुः॥ इति।

लोहितानामष्टकेति, रौक्षकाणां रेवणेति,कामकायनानां श्रौतमतेति, अघमर्षणानां विश्वामित्रेति, रेणूनां हर्यश्वेति(९)गाधिनेति च, जन्हूनां कौशिकेति शालङ्कायनेति च, आश्मरथ्यानाम् अजेति कुशि-

(१) 'रौक्षाकाः' क०। (२) 'कामायनाः' ख०।
(३) कंसान्तर्गतं नास्ति क०। (४) 'वैश्वामित्रदैवश्रवस' क०।
(५) 'दैवतरसेति वा' ख०। (६) कंसान्तर्गतं नास्ति क०।
(७) 'गाथिनवणवेति' क०।
(८) 'आद्यात्रिवा' घ० ङ। (९) 'गाधिनेति' घ० ङ०।

नवैणवेति । जह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति । आश्मरथ्यानां वैश्वामित्राश्मरथ्यवाधूलेति । उदवेणूनां वैश्वामित्रगाथिनवैणवेति । एते आश्वलायनमात्स्योक्ताः । अन्यैस्त्वन्येपि*बहुणा उक्ताः । तेऽन्यत्र मत्कृतौ ज्ञेयाः । *एषां विश्वामित्राणामविवाहः ॥

अथ कश्यपाः । ते पञ्च—निध्रुवाः (१)कश्यपाः, रेभाः, शाण्डिलाः, लौगाक्षयश्च । निध्रुवाणां काश्यपावत्सारनैध्रुवेति । कश्यपानां काश्यपावत्सारासितेति । रेभाणां काश्यपावत्साररैभ्येति । (२)शाण्डिलानां काश्यपावत्सारशाण्डिल्येति । *अन्त्यस्थाने देवलो वा, सितो वा,

केति च नामान्तरम् । उदवेणूनां वेणूनां च प्रवरैक्यम् । *षडिति । (३)"साहुलानां वैश्वामित्रसा(४)हुलमाहुलेति, हिरण्यरेतसां वैश्वामित्रहैरण्यरेतसेति द्वौ, सुवर्णरेतसां वैश्वामित्रसौवर्णरेतसेति द्वौ, कपोतरेतसां वैश्वामित्रकापोतरेतसेति द्वौ, घृतकौशिकानां वैश्वामित्रघृतकौशिकेति द्वौ, कथकानां वैश्वामित्रकाथकक्राथकेति त्रय इत्यर्थः । "अष्टकरोहितानां विश्वामित्राष्टकेति द्वौ" इति आपस्तम्बः । *एषामिति । परस्परमिति शेषः सगोत्रत्वात् समप्रवरत्वाच्च । तदुक्तम्—

> कुशिका लोहिताश्चैव रौक्षकाः कामकायनाः ।
> (५)कता धनञ्जया अजा अघमर्षणपूरणाः ।
> इन्द्रकौशिकजाश्चेति विश्वामित्रगणा दश ।
> नोद्वहेयुः सगोत्रत्वात्कचिच्च प्रवरैक्यतः ॥ इति ।

[ *अन्त्यस्थाने इत्यादि ।] आसितो वेति च्छेदः । ऋण्य-

---

(१) 'कश्यपाः शाण्डिलाः रेभाः' क० । (२) 'शाण्डिलानां' ग० ।
(३) 'सौहुलानां ख० । (४) 'साहुलामा' ख० ।
(५) 'कता धनञ्जया अजाघमर्षणपूरणाः' ख० ।

*शाण्डिलासितदेवलेति वा, काश्यपासितदेवलेति वा, अन्त्ययोर्व्यत्ययो वा, देवलासितेति द्वौ वा । लौगाक्षीन् वक्ष्यामः । एषां कश्यपानामविवाहः ।

अथ वसिष्ठाः । ते पञ्च—वसिष्ठाः, कुण्डिनाः, उपमन्यवः, पराशराः, जातूकर्ण्याश्चेति । वासिष्ठानां वासिष्ठेन्द्रप्रमदाभरद्वस्विति, वासिष्ठेत्येको वा । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति । उपमन्यूनां वासिष्ठेन्द्रप्रमदाभ(१)रद्वस्विति, वासिष्ठभरद्वस्विन्द्रप्रमदेति वा, आद्ययोर्व्यत्ययो वा । पराशराणां वासिष्ठशाक्त्यपाराशर्येति । जातूकर्ण्यानां व(२)सिष्ठात्रिजातूकर्ण्येति । *वसिष्ठानान्तरमते काश्यपानामयं (३)प्रवरः । *शाण्डिलेति । शाण्डलेति च ऋष्यन्तरमते । आसितदैवलशाण्डिल्येति भवदेवः । शाण्डिलासितदैवलेति प्रवरपक्षे सत्तयैव कश्यपस्यानुवृत्तिः । शाण्डिलानां निध्रुवै रेभैश्चाविवाहः, काश्यपावत्सारशाण्डिल्येति पाक्षिकप्रवरमादाय सप्रवरत्वात्सगोत्रत्वाच्च । अन्येषां तु कश्यपस्य म्रियमाणतया सत्तया चानुवृत्तेः सगोत्रत्वात्सप्रवरत्वाच्च । तदुक्तम्—

त्रयश्च कश्यपगणा निध्रुवारैभशाण्डिलाः ।
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ॥ इति ।

(४)आभरद्वसव्येति अभरद्वस्विति वा । पराशराणां प्रवरा आद्यवासिष्ठानां केचिदाहुः । *वसिष्ठानामिति । गोत्रैक्यात्प्रवरैक्याच्च । तदुक्तम्—

वसिष्ठाः कुण्डिनाश्चैव उपमन्यु पराशराः ।
वसिष्ठा इति चत्वारो गोत्रैक्यान्नान्वियुर्मिथः ॥ इति ।

---

(१) 'भरद्वासव्येति वसिष्ठाभर' क० ख० ।

(२) 'वासिष्ठात्रि जातू' ख० ग० ।

(३) 'प्रवरः शाण्डिल्येति शाण्डिलेति' घ० ङ० ।

(४) 'अभरद्वसव्येति' ख० ।

**सर्वेषामविवाहः, *अन्त्यस्यात्रिभिश्च ।**

अथागस्त्याः । ते चत्वारः-इध्मवाहाः, साम्भवाहाः, सोमवाहाः, यज्ञवाहाश्चेति । आद्यानामागस्त्यदा(१)र्ढच्युतैध्मवाहेति, आग(२)स्त्येत्येको वा । सोमवाहानामागस्त्यदा(३)र्ढच्युतसोमवाहेति । सा(४)म्भवाहानां साम्भवाहोऽन्त्यः, यज्ञवाहानां यज्ञवाहोऽन्त्यः, आद्यौ पूर्वोक्तावेव । सारवाहानां तदन्तास्त्रयः । दर्भवाहानां तदन्तास्त्रयः । अगस्तीनामागस्त्यमाहेन्द्रमायोभुवेति । पूर्णमासानामागस्त्यपौर्णमासपारणेति । हिमोदकानामागस्त्यहै(५)मवर्चिहैमोदकेति । पाणिकानामागस्त्यपैनायकपाणिकेति । एते षट् क्वचित् । ***अगस्तीनां सर्वेषामविवाहः ।**

अथ *द्विगोत्राः । शौङ्गशैशिरीणामाङ्गिरसबार्हस्प-

---

*अन्त्यस्येति । द्विगोत्रत्वादिति वक्ष्यति ।

*अगस्तीनामिति । सगोत्रत्वात्सप्रवरत्वाच्च । तदुक्तम्—

अगस्तयः साम्भवाहाः सोमवाहा इति त्रयः ।
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ॥

*द्विगोत्रा इति । ते च भरद्वाजानां केवलाङ्गिरसामत्रीणां कश्यपानां वासिष्ठानां च, नान्येषाम् । तेषां त्रयो भेदाः-शौङ्गशैशिरयः, संकृतयः, लौगाक्षयश्च । तत्र भारद्वाजात् शुङ्गाद्विश्वामित्रस्य (६)शैशिरेक्षेत्रे जातः शौङ्गशैशिरिः । तदुक्तम्—

भारद्वाजेन शुङ्गेन विश्वामित्रस्य शैशिरे ।
क्षेत्रे जातो द्विगोत्रीशः प्रोच्यते शौङ्गशैशिरिः ॥

---

(१) 'दार्ढच्युतै' क० । (२) 'अगस्त्येको वा' ख० ।
(३) 'दार्ढच्युत' क० । (४) 'साम्भवानां' क० ।
(५) 'हैमवर्चि' ग० । (६) 'शैशरे' घ० ङ० ।

त्यभारद्वाजका(१)त्याक्षीलेति पञ्च, कात्याक्षीलयोः स्थाने शौङ्गशैशिरिर्वा, । *आङ्गिरसका(२)त्याक्षीलेति त्रयो वा । एषां भरद्वाजैर्विश्वामित्रैश्चाविवाहः । *एवं कपिलानां कतानां च । *संकृति*पूतिमाषादीनां आङ्गिरसगौरि(३)वीतिसांकृत्येति, शाक्त्यगौरि(४)वीतिसांकृत्येति वा, ((५)अन्त्ययोर्व्यत्ययो वा) । एषां स्वगणस्थैर्वासि-

विश्वामित्रभरद्वाजैस्तज्जानां तेन नान्वयः ॥ इति ॥

*आङ्गिरसकात्येति । आद्यो भारद्वाजो वा । *एवमिति । भरद्वाजैर्विश्वामित्रैश्चाविवाह इति सम्बध्यते । तत्र कपिलानाम् आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति पञ्चोक्ताः । न चात्र विश्वामित्रसम्बन्धे मानाभावः । विश्वामित्रं देवरातं प्रकृत्य "तस्यैते कापिलेयबाभ्रवाः" इत्यैतरेयब्राह्मणे कापिलेयोक्त्या लिङ्गविधया मानत्वात् । कपिलानां वैश्वामित्रत्वाभावे एषां वैश्वामित्रत्वानुपपत्तेः । कतानां वैश्वामित्र(६)कात्यात्कीलेति त्रय उक्ताः । न चैषां भरद्वाजसम्बन्धे मानाभावः, शौङ्गशैशिरीणां भारद्वाजकात्येति प्रवरपक्षे कतस्य भरद्वाजसम्बन्धलाभात् । अतएव कतः 'शौङ्गशैशिरिः' इत्युच्यते । *संकृतीति । संकृतीनां निर्भेदत्ववारणाय ।*पूतिमाषादीति । उभयत्रापि गौरिवीतसांकृत्ययोर्व्यत्ययो वा बोध्यः । एषां सर्वेषां वासिष्ठत्वमप्यस्ति आपस्तम्बादिभिर्वासिष्ठगणे पाठात्, वासिष्ठशक्तेः पाक्षिकवरणाच्च । एते आङ्गिरससु(७)ताः वासिष्ठैः क्रयक्रीता इति केचित् । वासिष्ठपुत्रस्य शक्तेर्दत्तपुत्रा इत्यन्ये । अत एव वासिष्ठैर्लौगाक्षिभिश्च सगोत्रत्वा-

(१) 'कात्यात्कीलेति पञ्च, कात्यात्कीलयोः' क० ।
(२) 'कात्यात्कीलेति' क० ।
(३) 'गौरिवीत' क० ।
(४) 'वीतसांकृत्येति' क० ।
(५) 'कंसान्तर्गतं नास्ति क० ।
(६) 'कात्कात्कीलेति' ख० ।
(७) 'युताः' ख० ।

ष्ठैः *शौङ्गशैशिरैर्लौगाक्षिभिश्चाविवाहः। *कश्यपैरपीति प्रयोगपारिजाते। लौगाक्षिणां काश्यपावत्सारवासिष्ठेति, काश्यपावत्सारासितेति वा। एतेऽहर्वसिष्ठा नक्तंकश्यपाः। *एषां वसिष्ठैः कश्यपैः (१)संकृतिभिस्समप्रवरत्वाच्चाविवाहः। (२)स्वगणस्थैरिति च सर्वेऽपि वासिष्ठा इत्येवमर्थम्। यद्यपि एषां केवलाङ्गिरसत्वमस्ति बौधायनेन केवलाङ्गिरोगणमध्ये पाठात्तथापि तैः सह न विवाहप्रतिबन्धः सगोत्रत्वाभावात्, द्वित्रिप्रवरसाम्याभावाच्च। *शौंगशैशिरैरिति। एषां भारद्वाजाङ्गिरसत्वमाश्रित्य भारद्वाजाङ्गिरोभिः शौङ्गशैशिरैश्च सह विवाहो न भवतीत्यभिप्रायेण। अन्ये तु केवलाङ्गिरोगणमध्ये एवैषां पाठः। भरद्वाजस्य सत्तयाऽनुवृत्तौ कपिवत् ज्ञापकाभावान्न भरद्वाजाङ्गिरसत्वं, नापि शौङ्गशै(३)शिरत्वमिति मन्यन्ते। परेतु आङ्गिरसशब्दादाङ्गिरसत्वं, शक्तिगौरिवीतशब्दाच्च वासिष्ठत्वं वासिष्ठस्य [illegible]ऽनुवृत्त्यभावेऽपि सत्तयाऽनुवृत्तेः। तदुक्तम्—

संकृतीनां द्विवंश्यत्वाद्वासिष्ठैश्च चतुर्विधैः।
स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वयः॥ इति।

अतः शौङ्गशैशिरैर्वासिष्ठैश्चाविवाहो युक्त एवेति प्राहुः। *कश्यपैरिति।

काश्यपेयगणस्यापि वासिष्ठस्य गणस्य च।
संकृतिपूतिमाषाभ्यां विवाहो न परस्परम्॥ इति।

केचित्तु तत्र एतत्कारिकामात्रं मूलं, तन्नाश्रयणीयं कश्यपगणे पाठाभावादित्याहुः। *एषामिति। सगोत्रत्वात् क्वचित्समप्रवरत्वाच्च। तदुक्तम्—

---

(१) 'संकृत्याद्यैश्च' क० ख०। (२) 'अन्ये तु स्वगणस्थै' घ० ङ०।
(३) 'शिशिरत्वमिति' ख०।

श्चाविवाहः । *देवरातस्य जामदग्न्यैर्विश्वामित्रैश्चाविवाह इति प्रयोगपारिजाते। तदयुक्तम् । ब(१)ह्वृचश्रुतौ—

यथैवाङ्गिरसरसः सन्नुपेयां तव पुत्रताम् ।

आङ्गिरसो जन्मनाऽस्याजी(२)गर्तिः श्रुतः कविः ॥

इत्यङ्गिरोगणस्थत्वेन भार्गवजामदग्न्यत्वस्मृतेर्हरिवंशादिस्मृतेश्च बाधात् । (३)तेन द्वौ देवरातौ एक आङ्गिरसः श्रुत्युक्तः, अन्यो भार्गवः । तयोः कल्पभेदेऽप्याङ्गिरसेन देवरातेन जामदग्न्यैर्भवत्येव विवाहः, भार्गवे-

वासिष्ठैः काश्यपैर्नित्यं लौगाक्षीणामनन्वयः ।

अहर्वसिष्ठतोक्तिस्तु मयाजाद्यादि गोचर ॥ इति ।

*देवरातस्येति । देवरातानां वैश्वामित्रदेवरातौदलेति त्रयः प्रवराः । तदुक्तम्—

जमदग्निगणस्यापि विश्वामित्रगणस्य च ।

न देवरातगोत्रेण विवाहः स्यात् परस्परम् ॥ इति ।

न च देवरातस्य बौधायनादिभिर्जामदग्न्येष्वकथनात् जामदग्न्यत्वे मानाभावः, तत्र जमदग्न्यनुजत्वप्रसिद्धेः । तथा च हरिवंशे—

और्वस्यैव ऋचीकस्य सत्यवत्यां महायशाः ।

जमदग्निस्तपोवीर्यो जज्ञे ब्रह्मविदां वरः ॥

मध्यमस्तु शुनःशेपः शुनःपुच्छः कनिष्ठकः ।

देवैर्दत्तः शुनः शेपो विश्वामित्राय भार्गवः ॥

देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभ(४)वत् ॥

इतिजमदग्निसम्बन्धकथनात् । न चैतावता देवरातस्य भार्ग-

---

(१) 'बह्वृच' नास्ति क० । (२) 'जीगर्तः' क० ।

(३) 'तेन प्रत्यक्षश्रुत्या हरिवंशादि द्वौ' ख० ।

(४) 'भवेत्' घ० ङ० ।

ण तु नेति तत्त्वम् । *धनंजयानां विश्वामित्रैरात्रिभिश्चाविवाहः । *जातूकर्ण्यानां वसिष्ठैरात्रिभिश्चाविवा-
वत्वं भविष्यति न जामदग्न्यत्वमिति वाच्यं, मत्स्यपुराणे जमदग्नेर्जामदग्न्यविदेषु पाठाज्जामदग्न्यत्वे तद्भ्रातुर्देवरातस्यापि तथात्वात् । एकर्ष्युत्पन्नयोर्भिन्नगोत्रप्रवरत्वासम्भवात् । न च विदान्तर्गतस्य जमदग्नेर्देवरातज्येष्ठत्वे किं मानमिति वाच्यं, भार्गवत्वस्यैव तन्मानत्वात् । यत्तु देवरातौ द्वौ एको भार्गवः, अन्य आङ्गिरसः । यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम् । आङ्गिरसो जन्मना(१)ऽस्याजीगर्त्तिः श्रुतः कविः इति श्रुतेः । तत्र हरिवंशो न प्रवर्त्तते तस्य भार्गवदेवरातत्वात् । तथाचाभार्गवेण देवरातेन जामदग्न्यैर्विवाहो भवत्येवेति । तदपि न, कल्पभेदेन तादृशश्रुत्युपपत्तेराङ्गिरसदेवरातस्यैव भार्गवत्वात्, भृग्वङ्गिरसोः पञ्चप्रवरत्वादिनाऽतिसाम्येन भार्गवेणैवाङ्गिरसेत्यभिधानसम्भवाच्च । *धनञ्जयानामिति । वैश्वामित्रमाधुच्छन्दसधानञ्जयेति त्रयः प्रवराः । आत्रेयार्चना(२)नासधानञ्जयेति पक्षान्तरे प्रवरसाम्यात् सगोत्रत्वात् विश्वामित्रानुवृत्तेश्च । तदुक्तम्—

> आत्रेयस्य गणस्यापि विश्वामित्रगणस्य च ।
> धनञ्जयाख्यगोत्रेण नान्योऽन्यं पाणिपीडनम् ॥ इति ।
> अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ।
> विश्वामित्रात्रिगोत्राभ्यां नोद्वहेयुर्धनञ्जयाः ॥ इति ।

वामरथ्या धनञ्जयाश्च विश्वामित्रात्रिभ्यां नोद्वहेयुरित्यर्थः । *जातूकर्ण्यानामिति । वासिष्ठयात्रेयजातूकर्ण्येति त्रयः प्रवराः, वासिष्ठात्र्योरनुवृत्तेः । तदुक्तम्—

> तथैव जातूकर्ण्याश्च वसिष्ठैरत्रिभिस्सह । इति

(१) 'स्याजीगर्त्तिः' घ० ङ० ।
(२) 'नानस' घ० ङ० ।

हः । एवं(१)दत्तक्रीतकृत्रिमस्वयंदत्तपुत्रिका *पुत्रादीनाम् उत्पादकपालकयोः पित्रोर्गोत्रप्रवरा वर्ज्या इति प्रवरमञ्जरीनारायणवृत्तिप्रयोगपारिजातादयः । अत्र सर्वत्रो*पपत्तयः मूलं च मत्कृते प्रवरदर्पणे ज्ञेयमिति दिक् ॥

नोद्वहेयुरितिवर्त्तते *पुत्रादीनामिति । आदिना क्षेत्रजग्रहः *उपपत्तय इति । तुल्यन्यायात् ।

द्व्यामुष्यायणका ये च दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाह्याः शौङ्गशैशिरयोर्यथा ॥

इति संग्रहोक्तेश्च, "अथ ये दत्तक्रयक्रीतकृत्रिमाः पुत्रिकापुत्राः परपरिग्रहेणार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति । यथैते शौङ्गशैशिरिणो यानि चान्यानि एवं समुत्पत्तीनि कुलानि भवन्ति" इति कात्यायनवचनाच्च । नारायणवृत्तौ जनकपालकयोर्दत्तादीनां गोत्रनिषेधः, शौङ्गशैशिरिग्रहणस्य प्रदर्शनार्थत्वादित्युक्तेश्च । यत्तु—

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ इति

मानवेन जीवद्दशायाम् आर्षिणवर्णाभिवादेषु, मृते श्राद्धदेवतात्वे, ज(२)नकगोत्रसम्बन्धानिवृत्त्यर्थम् , उत्तरार्द्धे तथैवोक्तेः । अतएव—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।

इत्यत्र पितृशब्देन दत्तकस्य जनक एवोक्तः । अन्यथा पितृशब्दवैयर्थ्यात् । अत्र चावयोरयमिति संविदं निराकृत्य केवलदत्तकनिराकरणं दिगर्थः श्राद्धे विस्तरः । वस्तुतस्तु मनुवचनमपि द्व्यामुष्यायणदत्तकपरमेव । तस्यापि च विवाहो जनकगोत्राया निषिद्ध एव । स्वस्वजनकगोत्रसम्बन्धाभावेन तस्याः स्वगोत्रत्वाभावेऽपि पितृसगोत्रत्वात् । एतदर्थमेव 'असगोत्रा च या पितुः' इ-

(१) 'दत्तकक्रीत' ख० ।
(२) 'जनकागोत्रसम्बन्धनिवृत्त्यर्थम् उत्तरार्द्धे' घ० ङ० ।

इति कश्चित् । दिवोदासीयेपि—

स्वगोत्रप्रवराज्ञाने जमदग्निमुपाश्रयेत् ।

अथ मातृगोत्रवर्जननिर्णयः । शातातपः—

मातुलस्य सुतामूढ्वा *मातृगोत्रां तथैव च ।
समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् ॥

यद्यपि—

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि ।
जन्मनाम्नोरविज्ञानेप्युद्वहेदविशङ्कितः ॥

इति व्यासोक्तेरज्ञातनामत्वे न सगोत्रत्वदोषस्तथापि नेदं कलौ प्रवर्तते ।

---

च विवाहादौ ।'अथाज्ञातबन्धुमाचार्यामुष्यायणमनुब्रवीताचार्यप्रवरं वृणीत' इति बौधायनवचनात् । यत्तु—

स्वगोत्रस्यापरिज्ञाने काश्यपं गोत्रमुच्यते । इति,

तदाचार्यगोत्राज्ञाने एव विवाहातिरिक्तश्राद्धादि परम् ।

*मातृगोत्रामिति । सगोत्रानिषेधेनैव मातृगोत्रानिषेधे सिद्धे मातुर्विवाहात् पूर्वं गोत्रमित्यर्थात् मातामहगोत्रमित्यर्थः । 'मातुलस्य सुतामूढ्वा' इति पृथङ्निर्देशस्तु दोषाधिक्यार्थम् । मातुः सगोत्रामपीति सम्बन्धः । अग्रे मातुरित्यनुवृत्त्या मातुः सगोत्रत्वदोष इति सम्बन्धः । मातुः सगोत्रामित्यस्य कन्यात्वसमये यन्मातुर्गोत्रं न तु मातृसमये, तदुत्पन्नाम् । अयं च यावदस्मन्मातृकुले जातादस्मा(१)देतन्नाम्नोऽस्या जन्मेति विशिष्य ज्ञायते तावत्पर्यन्तमेव निषेधो न तदूर्ध्वमित्यर्थः । पूर्वार्धेन सामान्यतस्तदविवाह्यत्वं मतान्तरीयत्वेनाभिधायोत्तरार्द्धेन तन्निष्कर्ष इति ।

---

(१) 'देतन्नाशेस्याजन्मेति' घ० ङ० ।

*गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा।

इति कलिवर्ज्यत्वोक्तेः। इदंमातृगोत्रवर्जनं माध्यन्दिनीयानामेव। 'मातृगोत्रं माध्यन्दिनीयानाम*पुत्रायाश्च' इति सत्याषाढोक्तेरिति क(१)श्चित्, तन्निर्मूलम्। *अत एवाह प्रवरमञ्जरीकारः—*'दोषस्यातिगुरुत्वात्सर्वेषां मातृगोत्रं वर्ज्यम्' इति। (२)यत्तु—

एकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च।
तमुद्वाहं न कुर्वीत सा कन्या भगिनी स्मृता॥

इति मातृकुले प्रवरचिन्तनमुक्तं, तदा*सुरादिविवाहोढापरमिति दिक्। विस्तरस्तु ग्रन्थान्तरेभ्यो ज्ञेयः।

सगोत्रादिविवाहे प्रायश्चित्तं स्मृत्यर्थसारे—

इत्थं सगोत्रसम्बन्धविवाहविषये स्थिते।
यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति॥

---

*गोत्रादिति। मातुर्गोत्रात् मातुः सपिण्डाच्चेति सम्बन्धः। तत्र मातुर्गोत्रमेव गोत्रं यस्य तस्मादित्यर्थः। मातृपदं च मातामहार्थकं प्राग्वत्। *अपुत्रायाश्चेति। भर्तृगोत्राज्ञाने इत्यन्यत्र विस्तरः। निर्मूलत्वे हेतुमाह—*अतएवेति। *दोषस्येति। चण्डालत्वादिदोषस्येत्यर्थः। *आसुरादीति। पुत्रिकापुत्रोपलक्षणमिदम्। पुत्रिकापुत्राणाम् आसुरादिविवाहजानां च मातुर्दानाभावेन पितृगोत्रसम्बन्धो न निवर्त्तते, अतस्तत्सुतेन मातृगोत्रा न विवाह्या।

प्रवरान् पितृगोत्रेषु मातृगोत्रे न चिन्तयेत्।
गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत्॥

---

(१)—'कश्चिन्महाराष्ट्रकल्पितम् तन्निर्मूलम्। अन्यथा गुर्जरादेः कातीयस्य कुतो न निषेधः' क०।

(२) 'यत्तु गुर्जरादीनां माध्यन्दिनीयानामप्याचरणाच्च एकस्मिन्प्रवरे' क०।

गुरुतल्पव्रताच्छुद्ध्येद्गर्भस्तज्जोऽन्त्यतां व्रजेत् ।
भोगतस्तां परित्यज्य पालयेज्जननीमिव ॥
अज्ञानादैन्दवैः शुद्ध्येत्त्रिभिर्गर्भस्तु काश्यपः ॥
एवं सापिण्ड्येऽपि-

---

इत्यभियुक्तवचनमपि तत्परमेवेत्यर्थः । दिगर्थस्तु ब्रा(१)ह्मादि विवाहचतुष्टये 'स्वगोत्राद्भ्रश्यते नारी' इति स्वगोत्रभ्रंशेऽपि तद्गोत्राविवाहः सर्वैरपि कलौ न कार्य इत्युक्तमिति । अत्राहुः-'उक्तसत्याषाढवचनस्य निर्मूलत्वमयुक्तम् । न च सत्याषाढसूत्रे तन्नोपलभ्यते इति प्रवरमञ्जर्यामुक्तमिति वाच्यम्, बहुभिः प्रामाणिकैस्तस्य तत्रोक्त एवं कातीयत्वेनाभिधानात् प्रवरमञ्जरीकारीयाऽऽग्रहस्य हेयत्वात् । गुर्जरेषु तद्वचनं कुतो न प्रवर्तते ? इत्यपि न शङ्क्यं, तेषामृग्वेदादिसम्बन्धेन तदाचाराचरणात् । एवञ्च माध्यन्दिनीयानामृग्वेद्याद्यरूढानामित्यर्थः । न च सर्वेषां तद्विवाहः कलिवर्ज्यः, तस्य द्व्यामुष्यायणपरत्वात् । 'असगोत्रा च या पितुः' इत्यत्र चकारेण मातुः समुच्चयेन मातुरसगोत्रेत्यस्य दत्तकपरत्वोक्त्या तदेकवाक्यत्वाच्च, "पुरोडाशं चतुर्धा करोति" "आग्नेयं चतुर्धा करोति" इत्यादाविव सामान्यतो मातृगोत्रानिषेधस्य माध्यन्दिनीयेषूपसंहाराच्च । एवं दोषातिगुरुत्वोक्तिरपि न समञ्जसा, प्रायश्चित्तैक्यश्रवणात् । "सगोत्रां मातुरप्येके नेच्छन्ति" इत्यत्रेच्छन्तीत्यभिधानेन तदपरिणयपक्षेऽरुचिध्वननाच्च । एवमेकगोत्रत्वमेवाविवाहप्रयोजकं, न सदृशगोत्रत्वं; मातृगोत्रमितिविशेषोपादानात् । सगोत्रामिति निषेधेऽपि सगोत्रपदेन एकगोत्रमेव ग्राह्यम् । तेन न गणैक्यप्रयुक्तदोषः, असमानगणामिति निषेधस्य क्वाप्यनभिधानाच्चेति ।

---

(१) 'ब्राह्मादि' घ० ङ०, 'माह्यादि' ख० ।

सपिण्डापत्यदारेषु *प्राणत्यागो विधीयते।

इति बृहद्यमोक्तेः। तिथितत्त्वे बौधायनः—'सपिण्डां सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात्॥'

कन्याविवाहकाल उक्तो ज्योतिर्निबन्धे—

---

*प्राणत्याग इति। गुरुतल्पव्रतमित्यर्थः। सगोत्रसमप्रवरोद्वाहे प्रायश्चित्तमाह शातातपः—

परिणीय सगोत्रां तु समानप्रवरां तथा।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत्॥

सगोत्रा पितृसगोत्रा "पितृगोत्रं कुमारीणाम्" इत्युक्तेः। एवं समानप्रवरा इत्यत्रापि। सपिण्डाऽपीह बोध्या। एतच्च प्रमादेन सगोत्रादिपरिणयमात्रे। कामतः परिणये प्रजोत्पत्तौ च (स(१)गोत्रां) समानप्रवरां च कामतः परिणीय प्रजामुत्पाद्य गुरुत(२)ल्पव्रतं चरेत्, प्रजां चण्डालेषु निक्षिपेत्। अकामतस्तु संभोगे अब्दकृच्छ्रं, कामतो गर्भाभावे गुरुतल्पव्रतार्द्धमिति हारावली। अकामतः प्रजोत्पादने चान्द्रायणम्। प्रजाया भरद्वाजगोत्रान्तर्भावः। विवाहमात्रे कृच्छ्रम्। सर्वत्र व्रतान्ते ऽष्टोत्तरशतं समिद्धोमः। तां परित्यजेदिति दैवज्ञशंकरः। मातुलसुतादिविवाहमात्रे चान्द्रं,'मातुलस्य सुता(३)मूढ्वा'इति वचनात्। एवं सगोत्रादिरपि ग्राह्या। 'परिणीय सगोत्रां तु' इति वचनात्। अत्र प्रतिगमनं चान्द्रायणावृत्तिरित्येके। अज्ञानात्सकृद्गमने चान्द्रद्वयं, ज्ञानात्तु कृच्छ्राब्दः। अज्ञानादेकादिने अभ्यासे त्रैवार्षिकं, ज्ञानतस्तु षड्वार्षिकम्। एकरात्रादूर्ध्वमकामतो ऽभ्यासे च वार्षिकं, तत्रैव कामतोऽग्निप्रवेशरूपं मरणान्तम्। एतद्बहुकालमविच्छिन्नाभ्यासे। अल्पकालाभ्यासे तु द्वादशाब्दम्। रेतःसे-

---

(१) 'सगोत्रां' नास्ति घ० ङ०।
(२) 'तल्पं' ख०।
(३) 'मुद्वेति' घ० ङ०।

कादर्वाङ् निवृत्तौ मासोपवासः, चान्द्रायणद्वयं वेति दर्पणः। अत्र त्यागं (१)कृत्वेत्यत्र भोगत इति चन्द्रिका।

समानप्रवरां कन्यामेकगोत्रामथापि वा।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम्॥
उत्सृज्यतां ततो भार्यां मातृवत् परिपालयेत्॥

इति शातातपेन मातृवदित्युक्तेः, "ब्राह्मणीं त्यजेन्मातृव-( द्भ(२)गिनीवत ) इति बौधायनोक्तेश्च।

भोगतस्तां परित्यज्य पालयेज्जननीमिव।

इति दृष्टान्तविवरणात्। धर्मकार्येऽपीत्यन्ये, 'व्रतपरिनिष्ठिते ब्राह्मणीं त्यजेत्' इति बोधायनोक्तेः। मूढपदादज्ञानतो विवाहे एतत्। ज्ञाने द्विगुणं,

विहितं यदकामानां कामात्तद्द्विगुणं भवेत्।

इति स्मृतेः। ऊढ्वोपगमने तु सगोत्रागमनप्रायश्चित्तेन समुच्चयः। निमित्तयोः परस्परं व्यभिचारात्।

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते॥

इति बौधायनात्। "अकामतः परिणयने कृच्छ्रं, प्रजोत्पादने चान्द्रायणम्" इति बौधायनोक्तेः। गमनप्रायश्चित्ते एकत्वमविवक्षितं, विज्ञानेश्वरेण अज्ञानतः सकृत्सगोत्रागमने चान्द्रद्वयोक्तेः। यद्वा चान्द्रं विवाहपरं गमनफलकस्य विवाहस्य गमनपदेनाभिधानात्। गमनप्रायश्चित्तं तु गुरुतल्प(३)समत्वप्रयुक्तं षडब्दं सगोत्रासमानयोगचाण्डाल्यादिगमने विहितम्।

बहूनामेकधर्माणामेकस्यापि यदुच्यते।
सर्वेषां [illegible] हि ते स्मृताः॥

(१) 'कृत्वेव भोगतः' घ० ङ०।
(२) कंसान्तर्गतं नास्ति घ० ङ०। (३) 'समयत्व' ख०

इति वचनात् । सगोत्रागमने तु (१)अब्दं चान्द्रद्वयादि च विज्ञानेश्वरोक्तविधया माधवाद्युक्तविधया व्यवस्थितं बोध्यम् । अधिकविस्तरे ग्रन्थान्तरतो ज्ञेयः । सगोत्राद्यपत्यानामज्ञानत उत्पत्तौ जन्यजनकभावस्य यौ न संसर्गस्य सद्यः पातित्यापादकत्वात् तत्प्रयुक्तं प्रायश्चित्तं कारयित्वा कश्यपगोत्रेण व्यवहारः कार्यः, "गर्भस्तु काश्यपः" इत्युक्तेः, "भोगेन दुष्यति (२)काश्यप इति विज्ञायते" इति बौधायनोक्तेश्च । ज्ञानत उत्पत्तौ तु चण्डालत्वमेव ।

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रतः ।
सगोत्रोढासुतश्चैवं चण्डालास्त्रय ईरिताः ॥

इति वचनादिति प्रवररत्नः । विश्वादर्शे—

अज्ञानाद्यदि वोद्वाहः प्रायश्चित्तं तथैव च ।
सगोत्रप्रवरायाश्च ततः संग्रहणे विधिः ॥

षट्त्रिंशन्मते—

समानप्रवरां मातृसगोत्रां मातृनामिकाम् ।
परिणीय सपिण्डां वा प्रायश्चित्तीयते द्विजः ॥
प्रायश्चित्तं वदन्त्यत्र युगधर्मव्यवस्थया ।
मोहोद्वाहे तु दम्पत्योरेकं चान्द्रायणं स्मृतम् ॥
द्वैगुण्यं ज्ञानतस्तत्र परिणीतौ विधीयते ।
कन्यादातुर्भवेत्कृच्छ्रं ज्ञानतो द्विगुणं भवेत् ॥
व्रतस्यकरणाशक्तौ प्रत्याम्नायं समाचरेत् ।
चीर्णव्रतां दुहितरं पिताचीर्णव्रतः शुचिः ॥
भारद्वाजेषु विप्रेषु कश्यपेष्वथवा क्षिपेत् ।
दुहितृत्वेन संगृह्य भारद्वाजोऽथ कश्यपः ॥
घृतकुम्भस्य गर्भे तु तामादध्याद्विरान्ततः ।

---

(१) 'त्र्यब्दं' घ० ङ० । (२) 'कश्यप' घ० ङ० ।

जातकर्मादिचाथान्नप्राशनं चौलमेव च ॥
विधाय मधुपर्कं च मन्त्रमात्रेण मन्त्रवित् ।
मुहूर्ते विप्रकथिते शुचि तामप्यलङ्कृताम् ॥
संस्कारार्थाय प्राताय पत्येतु प्रतिपादयेत् ।
वैवाहिकानथो मन्त्रानशेषानप्यतन्द्रितः ॥
स्वगृह्योक्तक्रमेणैव पठेद्‍धृतवधूकरः ।
चतुर्थीकर्मपर्यन्तं विधिमेवं समाप्य तु ॥
कृताशीर्वचनो विप्रैर्दक्षिणाभिः सुतोषयेत् ।
प्रणम्य विसृजेद्देवान् पश्चाद्भोजयते तथा ॥
कृ(१)त्वेत्थं पुनरुद्वाहं न किल्बिषमवाप्नुयात् ।
अन्यथा कुरुते यस्तु संग्रहं स नराधमः ॥
व्रजेत्स पितृभिः सार्द्धं नराकानेकविंशतिम् ।
मातृनाम्नीविवाहे तु विशेषोऽत्राभिधीयते ॥
परिवर्ज्यैव नामास्याः पुनरुद्वाहमाचरेत् ।
नैवं विवोढुरेनः स्यादित्येवं मुनयो विदुः ॥
त्रिरात्रं ब्रह्मचर्यं स्यात्पुनरुद्वाहकर्मणि ।
सगोत्रापरिणीतौ तु परित्यागो विधीयते ॥

सगोत्राशब्दः समानप्रवराया अप्युपलक्षकः, 'समानप्रवराम्' इत्युपक्रमबलात् । एवञ्च मातृनाम्नीविवाहे पुनरुद्वाहमात्रं, नतु तत्परित्याग इति गम्यते। तत्र—

ज्ञानाज्जातमपत्यं तु काश्यपत्वं प्रपद्यते ।
ऐन्दवद्वयतः शुध्येन्मिन्दाहुत्या च तत्पिता ॥ इति ।

दुहितृत्वेनेति । भारद्वाजाय (२)कश्यपाय वा इमां कन्यां दुहितृत्वेन संप्रददे इत्युक्त्वा दद्यादित्यर्थः । घृतकुम्भस्य गर्भे इति

---

(१) 'कृत्वेत्थं' ख०
(२) 'कश्यपाय इमां' ख० ।

सामीप्ये षष्ठी, तादृशघृतकुम्भसम्भवे त्वधिकरणत्वमेव। प्रत्याम्नायमिति।

कृच्छ्रे गामेकिकां दद्यात्तिस्रश्चान्द्रायणे तु ताः।

इति स्मृत्युक्तम्। ऐन्दवद्वयं चान्द्रायणद्वयम्। मिन्दाहुत्येति जात्यैकवचनम्। तथाच "यन्म आत्मनो मिन्दाऽभूत्" "पुनराग्निश्चक्षुरदात्" इति द्वयलाभः। (१)पाठान्तरे "निन्दा च मेऽनिन्दा च मे" "तन्म उभयव्रतम्" इत्याहुतिद्वयम्। तथाच त्रिकाण्डमण्डनः—

परिणीतसगोत्रायामज्ञानाज्जनितः शिशुः।
काश्यपो न तु चण्डालः पितुः कृच्छ्रद्वयं स्मृतम्॥
निन्दाहुती द्वे जुहुयाद्व्रन्तान्ते दीप्तपावके॥ इति।

पुनरुद्वाहे नोत्तरायणादिकालानियमः, "सार्वकालिकमेके विवाहम्" इत्याश्वलायनोक्तेः। ईदृशवचनस्येदृशस्थल एव चारितार्थ्यात्। विधान(२)परिधाने—

वसिष्ठौ द्वौ च विज्ञेयौ ब्रह्मपुत्रो ऽथ शापतः।
मैत्रावरुणिरित्येव वसिष्ठो विग्रहान्तरात्॥
ब्रह्मात्मजाच्छक्तिपराशरव्यासशुकादयः।
ज्ञेया, विवेकस्त्वनयोर्द्वितीयात्कुण्डिनादयः॥

अतएव भिन्नगोत्रत्वाद्भिन्नशरीरत्वाच्च वसिष्ठवा(३)सिष्ठगणयोर्विवाहो भवति।

वासिष्ठ इन्द्रप्रमदो भरद्वाजस्तु (४)संकृतिः।
कौण्डिन्यः प्रतिभाषश्च गौरिवीतः पराशरः॥
मैत्रावरुणिशक्तीद्वावुपमन्युगणः स्मृतः।
एकादश वसिष्ठस्य गोत्राण्यस्मिन्नदोग्रहः॥

---

(१) निन्दाहुत्येति पाठान्तरे इत्यर्थः। (२) 'पारिधाने' घ० ङ०।
(३) 'वासिष्ठ' नास्ति घ० ङ०। (४) 'संकृमिः' घ० ङ०।

*षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।
सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः ॥

राजमार्तण्डः—

अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् ।
तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥
मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेपि मासत्रयमेवयावत्
विवाहशुद्धिंप्रवदन्तिसन्तोवात्स्यादयःस्त्रीजनिजन्ममासात्

पराशरमाधवीये तु—

जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ॥

इत्युक्तम् । सम्बन्धतत्त्वे यमः—

कन्या द्वादशवर्षाणि याऽप्रदत्ता वसेद् गृहे ।
ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥

भारते—

---

मा(१)त्स्ये—मैत्रावरुणयोर्वदर्याश्रमे तपस्यतोः उर्वशीं दृष्ट्वा रेतः स्कन्नम् । तच्च ताभ्यां पापभयाज्ज(२)लकुम्भे निक्षिप्तम् । ततो वसिष्ठ अगस्तिश्चाभूत् । ततो वसिष्ठादरुन्धत्यां शक्तिरुत्पन्नः, ततः पराशरस्ततो व्यास इत्युक्तम् । निमिमुख्यवासिष्ठयो(३)र्याजनप्रसङ्गे मिथः शप्तयोर्विदेहयोर्ब्रह्मवाक्यादेव कुम्भे जन्य जातं, निमिस्तु निमेषरूपेण नेत्रयोर्जातः । एतौ द्वौ भिन्नपितृकौ पृथग्भूतानमातृकौ भिन्नजात्योरेकगृहोत्पत्तिवत् एककुम्भे जातावित्यनयोर्विवाहो भवतीति ।

*षडब्देति ।

---

(१) 'मात्स्ये तु' घ० ङ० ।

(२) 'जलपूर्णकुम्भे' घ० ङ० ।

(३) 'याजप्रसङ्गेन मिथः शप्तयोर्विदेहयोर्ब्रह्मयोर्ब्रह्म' घ० ङ० ।

त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत (१)नग्निकाम्।
अष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥
अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्।

तत्रैव—

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः।
कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः॥

राजमार्तण्डः—

राहुग्रस्ते तथा युद्धे पितॄणां प्राणसंशये।
*अतिप्रौढा च या कन्या चन्द्रलग्नबलेन तु॥

भविष्ये—

उभयस्यापि पक्षस्य मनोऽभ्युदयपूर्वकम्।
कुमार्यास्त्वष्टवर्षायाः शस्यते पाणिपीडनम्॥

गर्भाष्टमोऽपि बोध्यः।

वैवाहिको विधिः स्त्रीणामौपनायनिकः परः।

इत्युक्तेर्ये गर्भाष्टमपञ्चमवर्षादयः कालास्ते कन्याविवाहेऽपि ग्राह्याः। अत एव मनुरपि—

उत्कृष्टायानुरूपाय सदृशाय वराय च।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः॥ इति।

अप्राप्तपञ्चवर्षादिकालामप्याह। *अतिप्रौढा चेति। चकारादतिबालाऽपि, अस्याः पित्रोः प्राणसंशयानुरोधेन विवाह्यत्वात्।

---

(१) नग्निकालक्षणं तूक्तं गृह्यसंग्रहे—'नग्निकां तु वदेत् कन्यां यावन्नर्तुमती भवेत्। ऋतुमती त्वनग्निका तां प्रयच्छेत्तु नग्निकाम्॥ अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी। अव्यञ्जिता भवेत् कन्या कुचहीना च नग्निका॥' इति। तथा रजोदर्शनात्प्रागेव विवाहकारणमुक्तं तत्रैव। यथा—'व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम्। पयोधरैस्तु गन्धर्वा रजसाऽग्निः प्रकीर्तितः॥ तस्माद्व्यञ्जनोपेतामरजामपयोधराम्। अभुक्तां चैव सोमाद्यैः कन्यकां तु प्रशस्यते॥' इति।

मनुः—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

यद्यपि—

विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ।

इति संवर्तोक्तेः, 'अत ऊर्ध्वं रजस्वला' इत्यादेश्च दशवर्षादूर्ध्वं विवाहो निषिद्धः, तथापि दातुरभावे द्वादशषोडशाब्दे ज्ञेये ।

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।

इति पराशरमाधवीये बौधायनोक्तेश्च । मनुः—

स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ।
हीनक्रियं निःपुरुषं निश्छन्दोरोमशार्शसम् ॥
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ।
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ॥
न पक्ष्यहिप्रेष्यनाम्नीं(१)न बिभीषणनामिकाम् ।

यमः—

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

तथा मूलजादीनां फलं प्रागुक्तम् । तथा*वर्णवश्यग्रहमैत्र्यादिघटितविचारो ज्योतिर्विद्भ्यो ज्ञेयः । विस्तरात्तु नोच्यते ।

अथ गुर्वर्कबलम् । ज्योतिर्निबन्धे गर्गः—

स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् ॥
जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः ।
विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः ॥

---

*वर्षेति ।

(१) 'न च भीषणनासिकाम्' क० ।

देवलः—

नष्टात्मजा धनवती विधवा कुशीला
पुत्रान्विता हतधवा सुभगा विपुत्रा ।
स्वामिप्रिया विगतपुत्रधवा धनाढ्या
वन्ध्या भवेत्सुरगुरौ क्रमशोऽभिजन्मा ॥

बृहस्पतिः—

झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥

लल्लः—

द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ते पाणिग्रहणे जीवे वैधव्यमाप्नोति ॥

गर्गः—

सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः ।
पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ॥
सप्तमात्पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि ।
अशुभोऽपि शुभं दद्याच्छुभर्क्षेषु किं पुनः ॥
रजस्वलायाः कन्याया गुरुशुद्धिं न चिन्तयेत् ।
अष्टमेऽपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् ॥
अर्कगुर्वोर्बलं गौर्या रोहिण्यर्कब(१)ला स्मृता ।
कन्या चन्द्रबला प्रोक्ता वृषली लग्नतो बला ॥
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

---

विलोक्य जन्मनक्षत्रे राशिकूटादिकं शुभम् ।
सुलग्ने सुमुहूर्ते च दद्याच्चैव यथाविधि ॥

---

(१) 'बलान्विता' क० ।

अथ बृहस्पतिशान्तिः। शौनकः—

*कन्यकोद्वाहकाले तु आ(१)नुकूल्यं न विद्यते।
ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः॥
सुवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत्।
ईशान्यां धवलं कुम्भं धान्योपरि निधाय च॥

इति भविष्यात्।

*कन्यकोद्वाहकाले त्विति। प्रकारान्तरं स्कान्दे—

कन्याविवाहकाले तु शुद्धिर्यस्या न विद्यते।
ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः॥
एभिः पूजा गुरोः कार्या विधिवद्भक्तिभावितैः।
मदन्तीकामपुष्पाणि पत्रपालाशसर्षपाः॥

मदन्ती पूतिका, कामो मदनः।

गु(२)डूचीवान्यपामार्गविडङ्गं शङ्(३)खिनी वचा।
सहदेवी विष्णुक्रान्ता सर्वौषध्यः शतावरी॥
तथैवाश्वत्थभङ्गाश्च पञ्चगव्यं जलं तथा।
नूतनं सोदकु(४)म्भं च पीतवस्त्रसमन्वितम्॥
पञ्चरत्नैः समायुक्तमीशान्यां स्थापितानलात्।
या ओषधीति मन्त्रेण सर्वास्तस्मिन्विनिक्षिपेत्॥
कुम्भस्योपरिभागे तु स्थापयित्वा बृहस्पतिम्।
सुवर्णपात्रे सौवर्ण्यां प्रतिमायां युधिष्ठिर॥
कारयेत्तु यथाशक्त्या वित्तशाठ्यविवर्जितः।
पीतवस्त्रयुगच्छन्नां पीतयज्ञोपवीतिकाम्॥
पूजयेद्गन्धपुष्पाद्यैस्ततो होमं समाचरेत्।
समिधोऽश्वत्थवृक्षस्य होम्या अष्टोत्तरं शतम्॥

---

(१) 'अनुकूल्यं' क०। (२) 'गडूची' ख०।
(३) 'शङ्खनी' ख०। (४) 'कुम्भे' घ० ङ०।

दमनं मधुपुष्पं च पलाशं चैव सर्षपान् ।
मांसी गुडूच्यपामार्गो त्रिडङ्गी शङ्खिनी वचा ॥
सहदेवी हरिक्रान्ता सर्वौषधिशतावरी ।
बला च सहदेवी च निशाद्वितयमेव च ॥
कृत्वाज्यभागपर्यन्तं स्वशाखोक्तविधानतः ।
ग्रहोक्तमण्डलेऽभ्यर्च्य पीतपुष्पाक्षतादिभिः ॥

---

ततो होमावसाने तु पूजयेच्च बृहस्पतिम् ।
पीतगन्धैस्तथा पुष्पैर्धूपैर्दीपैश्च शक्तितः ॥
दध्योदनं च नैवेद्यं फलताम्बूलसंयुतम् ।
मंत्रेणानेन कौन्तेय समभ्यर्च्य पुनः पुनः ॥
नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृह(१)स्पते ।
क्रूरग्रहैः पीडितानाममृताय नमो नमः ॥
पूजयित्वा सुराचार्यं पश्चादर्घ्यं निवेदयेत् ।
गम्भीरदृढरूपाङ्ग देवेज्य सुमते प्रभो ॥
नमस्ते वाक्पते शान्त गृहाणार्घ्यं नमोऽस्तु ते ।
अर्घ्यं दत्वा सुरेशाय जपहोमं समापयेत् ॥
भक्त्या यत्ते सुराचार्य होमपूजादि (२)यत्कृतम् ।
तत्त्वं गृहाण शान्त्यर्थं बृहस्पते नमो नमः ॥
मन्त्रेणानेन सङ्कल्प्य पश्चात्सम्प्रार्थयेन्नृ(३)प ।
"जीवो बृहस्पतिः सूरिराचार्यो गुरुराङ्गिराः ॥
वाचस्पतिर्देवमन्त्री शुभं कुर्यात्सदा मम" ॥

प्रार्थनामन्त्रः ।

एवं तं प्रार्थयेद्देवमाचार्यं च प्रपूजयेत् ।
सर्वोपस्करसंयुक्तां प्रतिमां तां युधिष्ठिर ॥

---

(१) 'बृहस्पतेः' घ० ङ० ।
(२) 'मत्कृतं' घ० ङ० । (३) 'नृपः' घ० ङ० ।

देवपूजोत्तरे काले ततः कुम्भानुमन्त्रणम् ।
अश्वत्थसमिधश्चाज्यं पायसं सर्पिषा युतम् ॥
यवव्रीहितिलाः साज्या मन्त्रेणैव बृहस्पतेः ।
अष्टोत्तरशतं सर्वं होमशेषं समापयेत् ॥
पुत्रदारसमेतस्य अभिषेकं समाचरेत् ।
कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रतः ॥
प्रतिमां कुम्भवस्त्रं च आचार्याय निवेदयेत् ।
ब्राह्मणान्भोजयेत्पश्चाच्छुभदः स्यान्न संशयः ॥

इति बृहस्पतिशान्तिः ।

---

प्रणम्य च गवा युक्तामाचार्याय निवेदयेत् ।
अथाचार्यस्तु नियतो वेदवेदाङ्गपारगः ॥
यजमानं सपत्नीकं शान्तचित्तं जितेन्द्रियम् ।
कुम्भोदकं गृहीत्वा तु मन्त्रैरेतैः प्रसिञ्चयेत् ॥
(१)इदमापोऽथ मन्त्रेण तामग्निमित्यृचा तथा ।
या ओषधीरश्वावतीः कूष्माण्डैश्चा(२)भिषेचयेत् ॥
पश्चात्सम्भोजयेद्विप्रान् यथाशक्त्या युधिष्ठिर ।
एवं पूजां गुरोः कृत्वा सर्वान्कामानवाप्नुयात् ॥ इति ।

अथ

वरस्य भास्करं लग्नं कन्यायाश्च गुरोर्बलम् ।

इतिवचनाद्वरस्य रविबलाभावे कुमारस्योपनयने च दुष्टरवौ रविशान्तिमाह शौनकः—

ब्राह्मणस्योपनयने नानुकूलो भवेद्रविः ।
तस्य शान्तिं प्रवक्ष्यामि मन्त्रौषधिविधानतः ॥
उपायनात्तु पूर्वेद्युः कृत्वा पुण्याहवाचनम् ।
गृहस्येशानदिग्भागे गोमयेनोपलेपयेत् ॥

---

(१) 'इममा' घ० ङ० । (२) 'श्चाभिषिञ्चयेत्' घ० ङ० ।

शौनकः—

गुर्वादित्ये व्यतीपाते वक्रातीचारगे गुरौ ।
नष्टे शशिनि शुक्रे वा बाले वृद्धेऽथवा गुरौ ॥
पौषे चैत्रेऽथ वर्षासु शरद्यधिकमासके ।
केतूद्गमे*निरंशेऽर्के सिंहस्थेऽमरमन्त्रिणि ॥
विवाहव्रतयात्रादिपुरहर्म्यगृहादिकम् ।
क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेत् ॥

मदनपारिजाते ज्योतिःसागरे—

बाले शुक्रे वृद्धे शुक्रे वृद्धे जीवे नष्टे जीवे ।
बाले जीवे जीवे सिंहे सिंहादित्ये जीवादित्ये ॥
तथा मलिम्लुचे मासि सुराचार्येऽतिचारगे ।
वापीकूपविवाहादिक्रियाः प्रागुदितास्त्यजेत् ॥

---

कुङ्कुमेनोल्लिखेत्पद्ममष्टपत्रं सकेसरम् ।
सुवर्णेन रविं कृत्वा द्विभुजं पद्मधारिणम् ॥
कृत्वाऽऽज्यभागपर्यन्तं तन्त्रं कृत्वा तु पूर्ववत् ।
स्वशाखोक्तविधानेन आचार्यो होममाचरेत् ॥
आकृष्णेनेति मन्त्रेण समिदाज्यचरूञ्जुहुयात् ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥
तिलव्रीहींश्च हुत्वाऽथ होमशेषं समापयेत् ।
दारपुत्रसमेतस्य ऋत्विग्भिरभिषेचयेत् ॥
कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रकैः ।
ऋत्विग्भ्यो दक्षिणां दत्त्वा आचार्याय च शक्तितः ॥
प्रतिमां वस्त्रयुग्मं च आचार्याय प्रदापयेत् ।
एवं यः कुरुते शान्तिं सर्वदोषो विनश्यति ॥ इति ।

त्रिषडायस्थो रविरुत्तमः, तद्भिन्नो ऽशुभः तत्राष्टमोऽधिकाशुभः ।

सिंहस्थं मकरस्थं च गुरुं*यत्नेन वर्जयेत् ।

लल्लः—

अतिचारगतो जीवस्तं राशिं नैव चेत्पुनः ।
लुप्तः संवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः ॥

सिंहस्थगुरोर*पवादमाह पराशरः—

*गोदाभागिरथीमध्ये नोद्वाहः सिंहगे गुरौ ।
*मघास्थे सर्वदेशेषु तथा मीनगते रवौ ॥

वसिष्ठोऽपि—

विवाहो दक्षिणे कूले गौतम्यां, नेतरत्र तु ।
भागिरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ॥
विवाहो व्रतबन्धश्च सिंहस्थेज्ये न दुष्यति ।

---

*निरंशे । राशिप्रथमभागस्थे । *यत्नेनेति । प्रागुदितासु क्रियासु इति विपरिणतमनुवर्तते । विशेषतोऽपि स्कान्दे—

सिंहस्थिते गुरौ राजन् विवाहं नैव कारयेत् ।
मकरस्थे न कर्तव्यं यदीच्छेदात्मनः शुभम् ॥
व्रतबन्धं प्रतिष्ठां विवाहं मन्दिरप्रवेशं च ।
यात्रां च याम्यदेशे कुर्यादार्यो न सिंहांशे ॥

इत्यादि सिंहस्थे गुरौ सर्वदेशेषु विवाहादि सर्वमपि कर्म न कार्यमित्यर्थः । *अपवादमिति । आवश्यके कर्मणीत्यादि । *गोदेति । गङ्गागोदान्तरालं हित्वा सिंहांशोत्तीर्णे गुरौ कार्यमित्यर्थः,

नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु ।
नीचांशकगतस्त्याज्यो यस्मादंशेषु नीचता ॥

इति वसिष्ठोक्तेः । *मघास्थे इति । मघास्थे गुरौ सर्वदेशेषु नोद्वाह इत्यन्वयः ।

माघ्यां यदि मघा न स्यात्सिंहे गुरुरकारणम् ।
सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत् ॥

क(१)न्यादातृक्रममाह याज्ञवल्क्यः—

*पिता पितामहो भ्राता*सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ।
(२)गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम्॥

भ्रातॄणां संस्कृतानामेवाधिकारमाह (३)स एव याज्ञवल्क्यः—

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।
भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम्॥

*अत्र चकारेण पूर्वसंस्कृतैरित्यस्यानुवृत्तेर्विवाहपर्याप्तद्रव्यदाने (४)स्वांशचतुर्थभागदाने वा संस्कृतग्रहणं *व्यर्थं स्यात्, अतः कर्तृनियमोऽयम्। तेनानुपनीतभ्रातृमात्रादिसत्त्वे मात्रादेरेवाधिकारो न भ्रातुरित्युक्तं सं-

---

अन्यत्र सिंहभागे तु विवाहादिकमाचरेत्।

इति केचित्। मीनगते रवौ चैत्रे सर्वदेशेषु नोद्वाह इत्यन्वयः।

*पितेति। प्रकृतिस्थः। उन्मादादि दोषहीनः। *सकुल्यः पितृव्यतत्पुत्रादिः। नाशोऽसान्निध्याद्यपि। अतएव 'पिता दद्यात्स्वयं कन्याम्' इत्यादि क्रमान्तरमनुपदं वक्ष्यति। गम्यं स्वयंवरं कुर्यादित्यन्वयः। गम्यं गमनार्हं सावर्ण्यादिगुणयुक्तम्। नन्वसंस्कृता भ्रातरः पूर्वसंस्कृतैर्भ्रातृभिः संस्कार्याः, असंस्कृता भगिन्यश्च भ्रातृभिः संस्कार्या इत्यर्थे अनुपनीतभ्रातॄणां भगिनीविवाहेऽधिकारापत्तिरित्यत्राह—*अत्रेति। तुरीयांशस्यात्याधिक्येऽतिन्यूनत्वे वा दोष इति विवाहपर्याप्तपरं तुरीयपदमिति भावः। *व्यर्थं

---

(१) 'कन्यावाग्दातृक्रम' ख०। (२) 'गम्यत्वभावे' ख०।
(३) 'सएव' नास्ति क०। (४) 'स्वांशसमांशे च' क० ख०।

बन्धतत्त्वादौ। कन्यास्वयंवरे मातुर्दातृत्वे च ताभ्यामेव नान्दीश्राद्धं कार्यम्। *तत्र च स्वयं प्रधानसंकल्पमात्रं कृत्वाऽन्यद्ब्राह्मणद्वारा कारयेदिति प्रयोगपारिजाते। *वरस्तु संस्कृतभ्रात्राद्यभावे स्वयमेव नान्दीश्राद्धं कुर्यात् न माता,

पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम्।

इति निषेधात्, उपनयनेन कर्माधिकारस्य जातत्वाच्चेति पृथ्वीचन्द्रोदयः। माधवीयेऽपरार्के च नारदः--

*पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः॥
सकुल्यः पितृपक्षीयो बान्धवो मातृवंशजः।

मदनपारिजाते कात्यायनः--

*स्वयमेवौरसीं दद्यात्पि(१)त्रभावे स्वबान्धवाः।
मातामहस्ततोऽन्यां (२)हि माता वा धर्मजां सुताम्॥

---

स्यादिति। तावद्द्रव्यदातृत्वेनैवार्थतः संस्कृतत्वलाभादिति भावः। अनुकल्पमाह-*तत्र च स्वयमिति। *वरस्तु इति।

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः।

इत्यत्राधिकं स्फुटी करिष्यामः। *पितेति। पितामहादीनां कन्यादानेऽधिकारः पूर्वनाशे एव, 'पूर्वनाशे' इत्युक्तेः। प्रतिनिधित्वं च 'पितुरनुमते' इत्युक्तेः। पितृपक्षीय उक्तः। मातृवंश्यः मातुलपुत्रादिः। मातामहमातुलयोरभावे सकुल्यस्याधिकारे प्राप्ते आह-*स्वयमिति। स्वयं पिता, स्वबान्धवाः पितुर्भ्रातृपितामहा-

---

(१) 'पितृभावे' ख०। (२) 'वै' क०।

ततोऽन्यामौरसीभिन्नां धर्मजां नियोगात्क्षेत्रजां मातामहो (१) माता मातुलो वा दद्यात् । तेनौरसीदाने पितृबन्धुषु सत्सु मातामहादीनां नाधिकारः अनुमतिं विना । अस्यापवादस्तत्रैव—

दीर्घप्रवासयुक्तेषु*पौगण्डेषु च बन्धुषु ।
माता तु समये दद्यादौरसीमपि कन्यकाम् ॥

मनुः—

यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् ।

परकीयकन्यादाने विशेषो मदनरत्ने स्कान्दे—

*आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्मेण विधिना दानम*सगोत्रेऽपि युज्यते ॥

अत्र प्रकृतिस्थग्रहणादप्रकृतिस्थेन कृतमकृतमेव,

स्वतन्त्रो यदि तत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥

इत्यपरार्के नारदोक्तेः । यदि तु सप्तपदीविवाहहोमादि प्रधानं जातं तदाङ्गवैकल्येऽपि नावृत्तिर्विवाहस्य ।

---

दयः । *पौगण्डेषु पञ्चाब्दात्किञ्चिदधिकेषु ।

*आत्मीकृत्येति । इयं च कन्या क्रीतेति नन्दपण्डितोक्तं न युक्तम् ,

अनाथां (२)कन्यकां दत्त्वा सहस्राभ्यधिके वरे ।
द्विगुणं फलमाप्नोति कन्यादाने यदीरितम् ॥

इति स्कान्दे एवमन्यकन्याया धर्मार्थमन्येन दानव्यञ्जनात् । आत्मीकृत्येत्यस्यात्मन इव कृत्वेत्यर्थः । *असगोत्रेऽपीति । असपिण्डोऽप्यर्थः । कन्याया एव सगोत्रसपिण्डादि वर्ज्य-

---

(१) 'माता' नास्ति क० । (२) 'कन्यकां दृष्ट्वा' ख० ।

गौडा अप्येवमाहुः। तत्रैव मरीचिः—

*गौरीं ददन्नाकपृष्ठं, वैकुण्ठं रोहिणीं ददत्।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम्॥

अथ मासनिर्णयः। तत्र जन्ममासे विशेषः प्रागुक्तः। ज्योतिःप्रकाशे व्यासः—

माघफाल्गुनवैशाखे यव्यूढा मार्गशीर्षके।
ज्येष्ठे वाऽऽषाढमासे च सुभगा वित्तसंयुता॥
श्रावणे वापि पौषे वा कन्या भाद्रपदे तथा।
चैत्राश्वयुक्कार्तिकेषु याति वैधव्यतां*लघु॥

नारदः—

माघफाल्गुनवैशाखज्येष्ठ*मासाः (१)शुभप्रदाः।
कार्तिको मार्गशीर्षश्च मध्यमौ,*निन्दिताः परे॥

---

सु। *गौरीमिति। मनुः—

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला॥

*लघु शीघ्रम्। आषाढस्त्वार्द्राप्रवेशात्प्राक् ग्राह्यः,
न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात्॥

इत्युक्तेः। *मासाः सौराः 'सौरो मासो विवाहादौ' इत्युक्तेः। चान्द्रोऽपि कश्यपेनोक्तः—

उपवासव्रतोद्वाहयात्राक्षौरोपनायनम्।
तिथिवर्षादिनिखिलं चान्द्रमानेन गृह्यते॥ इति।

*निन्दिता इति। यत्तु—

वात्स्यो वर्षम(२)नूनमिच्छति, तथा रैभ्योऽयनं चोत्तरम्।
श्रीवासोऽस्य(३)मृतुं विहाय मुनयो माण्डव्यशिष्या जगुः॥

---

(१) 'शुभावहाः' क०।
(२) 'मनूक्तमि' ख० ङ०। (३) 'मृतुं विवाहमु' ख०।

वसिष्ठः--

*पौषेऽपि कुर्यान्मकरस्थितेऽर्के
चैत्रे भवेन्मेषगतो यदा स्याद् ।
प्रशस्तमाषाढकृतं विवाहं
वदन्ति गर्गा मिथुनस्थितेऽर्के ॥

आचार्यचूडामणौ ज्योतिर्गर्गराजमार्तण्डौ--

माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥

आपस्तम्बः-'सर्व ऋतवो विवाहस्य शैशिरौ मासौ परिहाप्योत्तमं च नैदाघम् ।' 'अत्र माघफाल्गुनाषाढवर्जं नव मासा मुख्यः कालः' इति सुदर्शनभाष्ये इडविलायां ब्रह्मविद्यातीर्थैश्चोक्तम् । बौधायनसूत्रेऽपि-'स-

---

चैत्रं प्रोज्झ्य, पराशरः परिणये पौषं च दौर्भाग्यदम् ।
आषाढादि च तुष्टयं न हि तथा कैश्चित्प्रदिष्टं बुधैः ॥ इति ।
माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥

इत्यादि, तत्सर्वं प्रत्यासन्नऋतुकालाया विवाहविषयम् ।

ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

इति वाक्यात् । पाठान्तरं काल्पनिकम् । *पौषेपीति । अपवादः ।

(१)झषो न निन्द्यो यदि फाल्गुने स्यात्
मेषस्तु वैशाखगतो न निन्द्यः ।

इत्यादिरपि द्रष्टव्यः । कृत्तिकास्थमिति, अज्येष्ठेति चात्यावश्यकविषयम् ।

---

(१) 'झषो न' ख० ।

र्वे मासा विवाहस्य, शुचितपस्तपस्यवर्जमित्येके'। तेन 'पूर्वोत्तरौ शिशिरसंबंधिनौ मासौ पौषचैत्रौ विहाय' इति निर्णयामृतव्याख्यानं मौर्ख्यकृतमित्युपेक्ष्यम्। निशि चेत्सर्वेषु द्वादशस्वपि मासेषूद्वहेदिति कालादर्शः। ये(१) तु ज्योतिषे माघादिविधयस्ते गृह्यसूत्राणां द्विजपरत्वेन प्राबल्याच्छूद्रादिपराः। ज्योतिषे—

वात्स्यो वर्षमनूनमिच्छति तथा रैभ्योऽयनं चोत्तरम्।
श्रीवासोऽन्तमृतुं विहाय मुनयो माण्डव्यशिष्या जगुः॥
चैत्रं प्रोज्झ्य पराशरः परिणये पौषं च दौर्भाग्यदम्।
ह्याषाढादि चतुष्टयं न हितदं कैश्चित्प्रदिष्टं बुधैः॥

चण्डेश्वरः—

मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम्।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत्॥
कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत्।
उत्सवादिषु कार्येषु दिनानि दश वर्जयेत्॥

रत्नकोशे—

जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत्।
ज्येष्ठे मास्याद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि॥

पराशरः—

अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि।
व्यत्ययो वा तयोस्तत्र (२)ज्येष्ठमासः शुभप्रदः॥

मिहिरः—

ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते।
तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते॥
द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकं ज्येष्ठं शुभावहम्।

---

(१) 'यत्तु ज्योतिषे' ख०। (२) 'ज्येष्ठो मासः' क०।

ज्ये(१)ष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् ॥

यत्तु–'सार्वकालमेके विवाहम्' इति, तदासुरादिविवाहविषयम्, 'धर्म्येषु विवाहेषु कालपरीक्षणं, नाधर्म्येषु' इति गृह्यपरिशिष्टात । रत्नमालायामप्येवम् । तेनासुरादयो माघचैत्रादिनिषिद्धकालेष्वपि भवन्ति । मासाः सौराः 'सौरो मासो विवाहादौ' इत्युक्तेः ।

झषो न निन्द्यो यदि फाल्गुने स्यात्
अजस्तु वैशाखगतो न निन्द्यः ।

इति त्वपवादः ॥

अथ दश दोषाः । व्यवहारोच्चये—

वेधश्च लत्ता च तथैव पातः खर्जूरवेधो दशयोगचक्रम् ।
युतिश्च जामित्रमुपग्रहश्च बाणाख्यवज्रे च दशैव दोषाः ॥

एषां लक्षणं ज्योतिषे ज्ञेयम् ।

आतिचारगे गुरौ तु वासिष्ठः—

आतिचारगते जीवे वर्जयेत्तदनन्तरम् ।
विवाहादिषु कार्येषु अष्टाविंशतिवासरान् ॥

रत्नमालायाम्—

एकपञ्चनवयुग्मषड्दशत्रीणि सप्तचतुरष्ट(२)लाभगः ।
द्वादशाजवृषभादिराशितोघातचन्द्रइतिकीर्तितो बुधैः ॥

नारदः—

भूबाणनन्दहस्ताश्च रसादिग्वह्निशैलजाः ।
वेदा वसुशिवादित्या घातचन्द्रो(३) यथाक्रमम् ॥
यात्रायां युद्धकार्येषु घातचन्द्रं विवर्जयेत् ।
विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने ॥
घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत् ।

---

(१) 'ज्येष्ठत्रये' ख० । (२) 'लाभदः' क० ।(३) 'घातचन्द्रा' क० ।

ज्योतिर्निबन्धे—

विवाहचौलव्रतबन्धयज्ञे पट्टाभिषेके च तथैव राज्ञाम् ।
सीमन्तयात्रासु तथैव जाते नो चिन्तनीयः खलु घातचन्द्रः॥

नारदः—

अकालजा भवेयुश्चेद्विद्युन्नीहारवृष्टयः ।
प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि ॥
दोषाय मङ्गले नूनं न दोषायैव (१)कालजाः ॥

अकालवृष्टिस्वरूपमाह लल्लः—

पौषादिचतुरो मासाः प्रोक्ता वृष्टिरकालजा । इति ।

शार्ङ्गधरः—

निर्घाते क्षितिचलने ग्रहयुद्धे राहुदर्शने चैव ।
आ पञ्चदिनात्कन्या परिणीता नाशमुपयाति ॥
उल्कापातेन्द्रचापप्रबलघनरजोधूमनिर्घातविद्युद्-
वृष्टिप्रत्यर्कदोषादिषु सकलबुधैस्त्याज्यमेवैकरात्रम् ।
दुःस्वप्ने दुर्निमित्ते ह्यशुभफलदृशो दुर्मनोभ्रान्तबुद्धौ
चौले मौञ्जीनिबन्धे परिणयनविधौ सर्वदा त्याज्यमेव ॥

ज्योतिः प्रकाशे—

अर्वाक् षोडश नाड्यः संक्रान्तेः पुण्यदाःपरतः ।
उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः ॥

गर्गः—

दिग्दाहे दिनमेकं च (२)ग्रहे सप्तदिनानि तु ।
भूकम्पे च समुत्पन्ने त्र्यहमेव तु वर्जयेत् ॥
उल्कापाते त्रिदिवसं धूमे पञ्च दिनानि च ।
वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु ॥
दर्शनादर्शनाद्राहुकेत्वोः सप्तदिनं त्यजेत् ।

---

(१) 'कालजः' ख० ।　　　(२) 'गृहे' ख० ।

यावत्केतूद्गमस्तावदशुभः समयो भवेत् ॥

अस्यापवादोऽद्भुतसागरे—

अथ दिवसत्रयमध्ये मृदु पानीयं यदा भवति ।

उत्पातदोषशमनं तदैव संप्राहुराचार्याः ॥

संबन्धतत्त्वे—

भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते सति ॥

अथापरिहार्ये (१)कन्यावैधव्ययोगे विशेष उच्यते ।

मार्कण्डेयपुराणे—

बालवैधव्ययोगे तु कुम्भद्रुप्रतिमादिभिः ।

कृत्वा लग्नं (२)रहः पश्चात्कन्योद्वाह्येति चापरे ॥

अत्र पुनर्भूदोषाभाव उक्तो विधानखण्डे—

स्वर्णाम्बुपिप्पलानां च प्रतिमा विष्णुरूपिणी ।

तया सह विवाहे तु पुनर्भूत्वं न जायते ॥

सूर्यारुणसंवादे—

*विवाहात्पूर्वकाले च चन्द्रताराबलान्विते ।

विवाहोक्ते च तां कन्यां कुम्भेन सह चोद्वहेत् ॥

---

*विवाहादिति । विवाहात्पूर्वकाले चन्द्रतारानुकूले नवी- नं पूर्णकुम्भं सूत्रं गन्धपुष्पादिसामग्रीं च संपाद्यास्याः कुमार्या [illegible]भौमसूचितदोषपरिहारार्थमस्याः पत्यु- र्दीर्घकालजीवनार्थं च कुम्भविवाहं करिष्ये इति संकल्प्य कुम्भं सं- पूज्य 'वरुणाङ्गस्वरूपाय कुम्भाय नमः' इति मन्त्रेण हरिद्राकुङ्कु- माभ्यां लिप्त्वा कुमारीमपि लिप्त्वा इमां कन्यां (३)काश्यपगोत्रां वरुणाङ्गस्वरूपाय कुम्भाय तुभ्यमहं सम्प्रददे इति दत्त्वा पश्चाद्दश- तन्तुसूत्रेणोभौ संवेष्ट्य "परित्वा" इति मन्त्रेण ततः [illegible]

---

(१) 'कन्याया वैधव्य'क० । (२) 'ततः'क० ख० ।

(३) 'काश्यपसगोत्रां' घ० ङ० ।

सूत्रेण वेष्टयेत्पश्चाद्दशतन्तुविधानतः ।
कुङ्कुमालंकृतं देहं तयोरेकान्तमन्दिरे ॥
ततः कुम्भं च निःसार्य प्रभज्य सलिलाशये ।
ततोऽभिषेचनं कुर्यात्पञ्चपल्लववारिभिः ॥

कुम्भप्रार्थना तत्रैव—

वरुणाङ्गस्वरूपाय जीवनानां समाश्रय ।
पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥
देहि विष्णो वरं देव कन्यां पालय दुःखतः ।
ततोऽलंकारवस्त्राद्यां वराय प्रतिपादयेत् ॥

इति कुम्भविवाहः ॥

---

कुम्भकण्ठे बद्ध्वा कुम्भं प्रार्थयेत् । तत्र मंत्रः—

वरुणाङ्गस्वरूपाय जीवनानां समाश्रय ।
पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥
देहि विष्णो वरं देव कन्यां पालय दुःखतः ॥

इति सम्प्रार्थ्य कुम्भं निःसार्य नद्यादौ भङ्क्त्वाऽऽचम्य गृहमेत्य पञ्चपल्लवैः कन्यायाः पुण्यजलैः 'शान्तिरस्तु' इति (१)पञ्चवाक्यैरभिषेकः कार्य इति कौस्तुभे । अथ प्रयोगः—विवाहकर्त्ता पित्रादिः देशकालौ संकीर्त्य कन्यावैधव्यहरं कुम्भविवाहं करिष्ये इति संकल्प्य गणेशपूजनादि नान्दीश्राद्धान्तं कृत्वा वरुणविष्णुप्रतिमयोरग्न्युत्तारणं कृत्वा महीद्यौरित्यादिक्रमेण कुम्भं संस्थाप्य तत्र वरुणं पूजयित्वा तत्र विष्णुप्रतिमां संस्थाप्य आवाहनादिषोडशोपचारैः सम्पूज्य प्रार्थयेत्—

वरुणाङ्गस्वरूपाय जीवनानां समाश्रय ।
पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥
देहि विष्णो वरं देव कन्यां पालय दुःखतः ॥ इति ।

---

(१) 'पञ्चानुवाक्यैः' ख० ।

मूर्तिदानमपि तत्रैवोक्तम्—

ब्राह्मणं साधुमामन्त्र्य संपूज्य विविधार्हणैः ।
तस्मै दद्याद्विधानेन विष्णोर्मूर्तिं चतुर्भुजाम् ॥
शुद्धवर्णसुवर्णेन *वित्तशक्त्याथ वा पुनः ।
निर्मितां रुचिरां शङ्खगदाचक्राब्जसंयुताम् ॥
दधानां वाससी पीते (१)कुमुदोत्पलमालिनीम् ।
सदक्षिणां च तां दद्यान्मन्त्रमेत (२)मुदीरयेत् ॥
यन्मया (३)प्राचि जनुषि घ्नन्त्या पतिसमागमम् ।
विषोपविषशस्त्राद्यैर्हतो वातिविरक्तया ॥
प्राप्यमानं महाघोरं यशः सौख्यधनापहम् ।
वैधव्याद्यतिदुःखौघनाशाय शुभलब्धये ॥
बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् ।
सौवर्णीं निर्मितां शक्त्या तुभ्यं संप्रददे द्विज ॥

---

ततो विष्णुरूपिणे कुम्भायेमां कन्यां श्रीरूपिणीं समर्पयामीति समर्प्य "परित्वा" इत्यादिमन्त्रैर्मन्त्रावृत्त्याऽधस्तादुपरिष्टाच्च कुम्भं कन्यां च परिवेष्ट्य ततः कुम्भं निस्सार्य सलिलाशये प्रभञ्जयित्वा 'समुद्रज्येष्ठा' इत्यादि मन्त्रैः शुद्धजलेन पञ्चपल्लवैः कन्यामभिषिच्य ब्राह्मणान् भोजयेदिति । *वित्तशक्त्येति । (४)रचितम् पलतदर्द्धतदर्धान्यितरमध्ये इति बोध्यम, दानपरिभाषायां तथा दर्शनात् । अथ प्रयोगः—कन्या स्नानाचमने कृत्वा देशकालौ संकीर्त्य मम वैधव्यहरं महाविष्णुप्रतिमादानमहं करिष्ये इति संकल्प्य गणेशपूजां कृत्वा स्वस्तिवाचनं च कृत्वाऽकृत्वा वाऽऽचार्यं कृत्वा यथाशक्ति संपूज्य विष्णुप्रतिमायास्तद्धस्तेनाग्न्युत्तारणं षोडशोप-

---

(१) 'कमलोत्पल' क० । (२) 'दुदीरयेत्' क० । (३) 'प्राञ्चजनुषि' ग० । (४) अस्याग्रे 'इतिशेषः' इत्यपेक्षितम् ।

अनघाद्याहमस्मीति त्रिवारं प्रजपेदिति ।
एवमस्त्विति तस्याशीर्गृहीत्वा स्वगृहं व्रिशेत् ॥
ततो वैवाहिकं कुर्याद्विधिं दाता मृगीदृशः ।

अन्येऽप्यश्वत्थविवाहवृक्षसेचनादयस्तत्रैव ज्ञेयाः । विस्तरभयान्नोच्यन्ते ॥

अथ (१)प्रतिकूलादि । ज्योतिर्निबन्धे गर्गः—

*कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित् ।
तदा न मङ्गलं कुर्यात्कृते वैधव्यमाप्नुयात् ॥

ज्योतिर्मेधातिथिः—

वधूवरार्थे घटिते सुनिश्चिते वरस्य गेहेऽप्यथ कन्यकायाः ।
मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मङ्गलं बुधैः ॥

मङ्गलं विवाहः । स्मृतिचन्द्रिकायाम्—

कृते वाङ्निश्चये पश्चान्मृत्युर्भवति गोत्रिणः ।
तदा न मङ्गलं कार्यं नारीवैधव्यदं ध्रुवम् ॥

भृगुः—

वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।
तदोद्वाहो नैव कार्यः स्ववंशक्षयदोषनः ॥

शौनकः—

वरवध्वोः पिता माता पितृव्यश्च सहोदरः ।

---

चारपूजनं [च] कार्यम् । तत्र पीते वाससी कुमुदोत्पलमाला च दातव्या । ततो देवं कन्या प्रणम्य यन्मयेत्यादि मन्त्रान् पठित्वा ब्राह्मणाय दद्यात् । ततः सुवर्णमितं यथाशक्ति वा हेमदक्षिणां दद्यात् । ततः "अनघाद्याहमस्मि" इति त्रिर्वदेत् । 'एवमस्तु' इति ब्राह्मणोऽपि त्रिः। ततो यथाशक्तिब्राह्मणान् भोजयित्वा विवाहयोग्या भवेत इति । *कृते त्विति । एतेन "वाग्दानादि चरेत्

---

(१) 'प्रातिकुलादिः' क० ।

एतेषां प्रतिकूलं च महाविघ्नप्रदं भवेत् ॥
पिता पितामहश्चैव माता चैव पितामही ।
पितृव्यः*स्त्रीसुतौ भ्राता भगिनी चाविवाहिता ॥
एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतम् ।
अन्यैरपि विपन्नैस्तु केचिदूचु*र्नैतद्भवेत् ॥

**माण्डव्यः**—

**वाग्दानानन्तरं माता पिता भ्राता विपद्यते ।**

---

पुनः" इत्यभिधानेन च मन्त्रवद्वाङ्निश्चयोत्तरमेव प्रतिकूलदोष इति । घटितनिश्चयोत्तरं प्रतिकूलदोष इति ज्योतिषमतम् । घटितनिश्चयश्च ज्योतिर्विदादेशेन वरपित्रादिकं प्रति फलदानादिरूपः । *स्त्रीसुताविति । एतौ न वध्वाः असम्भवात् । अतः द्वितीयादिविवाहे वरस्य पूर्वोढा स्त्री तस्यामुत्पन्नश्च सुतः । एतत्पौत्रस्योपलक्षणम्, पितृव्यपदं च तत्पुत्रस्य । एवञ्च वरमारभ्य जनकत्रिपुरुषी, जन्यत्रिपुरुषी, कूटस्थमारभ्य सन्तानभेदेन त्रिपुरुषी चात्र बोद्धव्या । *न तद्भवेदिति । तत् तादृशं महाविघ्नकरं न भवेदित्यर्थः । प्रतिकूलं चेदं विवाह एव वैधव्यपदानुरोधात् । अत्र यद्यपि "मृत्युर्भवति कस्यचित् (मनुजस्य(१) कस्यचिदित्यविशेषेणाभिधानात्, तथापि पितामह्यादीनामिव मातामह्यादीनामपि मरणस्य प्रतिकूलदोषनिमित्तत्वेन क्वचिदप्यकीर्त्त ) नादविवाहितभगिन्या इव विवाहितभगिन्या मरणस्य तथात्वानुक्तेश्च अग्रिममेधातिथिवाक्ये "स्वगोत्रि(२)णाम्" इति, चन्द्रिकावाक्ये "गोत्रिणः" इति च कीर्त्तनाद्वध्वा वरस्य वा सगोत्रसपिण्डेषु त्रिपुरुषान्तर्गते(३)मृते प्रतिकूलदोष इत्यत्र तात्पर्यम् । सङ्कटे तु किञ्चित्कालप्रतीक्षा कार्या, "तदा न मङ्गलं कार्यम्" इति तदाशब्दात् । वरवध्वोरित्यत्र पि-

---

(१) कंसान्तर्गतं नास्ति घ० ङ० । (२) 'गोत्रीणामिति' ख० ।
(३) 'मृते' नास्ति घ० ङ० ।

विवाहो नैव कर्तव्यः (१)स्ववंशस्थितिमिच्छता ॥

*संकटे तु मेधातिथिः—

वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।
तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥

स्मृतिरत्नावल्याम्—

*पितुरब्दमशौचं स्यात्तदर्धं मातुरेव च ।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥

---

त्रादिचतुष्टयमुपादाय 'महाविघ्नप्रदम्' इति विघ्नमहत्त्वोक्तेः । तत्र वक्ष्यमाणवत्सराद्यन्यतमकालं प्रतीक्ष्य विनायकशान्तिः कार्या । उभयत्रापि च तयोरेव पश्चाद्विवाहः,

विवाहस्तु ततः पश्चात्तयोरेव विधीयते ।

इति वचनात् । एतच्च मातापित्रोरेकैकमरणे, तद्वाक्ये तयोः पृथगुपादानात् । तयोर्युगन्मरणे तु कालप्रतीक्षाशान्तिभ्यामपि तद्वधूवरयोर्नैव विवाहः

कृते वाङ्निश्चये पश्चात्पितरौ निधनं गतौ ।
तयोस्तत्प्रातिकूल्यं स्यान्नान्येषां तु कदाचन ॥

इति कृष्णभट्टीयवाक्ये "नान्येषां तु कदाचन" इति कदाचनशब्दात् । अन्येषां सपिण्डानाम् । "एभिरत्र विपन्नैश्च" इत्यत्रापि मातापितरौ विहाय वक्ष्यमाणमासत्रयादिकालप्रतीक्षासहिता विनायकशान्तिरेव । *सङ्कटे इति । वरान्तरासत्त्वादिना तद्वरायैव तत्कन्याया देयत्वे । * पितुरिति । अत्र पूर्वं प्रतिकूलस्यैवोक्तेः मरणमात्रहेतुकप्रतिकूलत्वे वर्षाद्याशौचावधिव्यवस्थानर्थक्यम् । अत ( उ(२)भयत्रापि च तयोरेव पश्चाद्विवाहः ) इदमाशौचं तत्तद्वर्षाद्यवधिकं यथा प्रतिकूलवैधव्यादिसूचकं तथाऽगतौ शान्तिकादिप्रयोजकं च । एवमन्यदपि यत्संगतिकं काम्यं पञ्चवर्षाद्युपनयादि

---

(१) 'स्ववंशहितमिच्छता' क० । (२) कंसान्तर्गतं नास्ति घ० ङ० ।

अन्येषां तु सपिण्डानामाशौचं मासमीरितम्।
*तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते॥
ज्योतिःप्रकाशे—
*प्रतिकूलेऽपि कर्त्तव्यो विवाहो मासतः परः।
शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत्पुनः॥
शान्तिं विनायकशान्तिम्। तथा च मेधातिथिः—
संकटे समनुप्राप्ते *याज्ञवल्क्येन योगिना।
शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत्॥इति।

---

चौलादि च तत्राप्यधिकारप्रतिबन्धकम्। एवञ्च पित्रादिमरणोत्तरं वर्षाद्यन्तमपूर्वाधानादौ नाधिकारः। न हि तत्र विवाहवच्छान्तिरुक्ता, येन तां कृत्वा तत्राधिकारः स्यात्। एवञ्च जन्मतोऽष्टवर्षाद्युपनयनादावपि अनधिकारान्मासिकाद्यनपकर्षस्थलवन्नवमवर्ष एवाधिकार इति। *तदन्ते वर्षान्ते। *प्रतिकूले इत्यादि। प्रतिकूले सति संवत्सरोर्ध्वं शान्तिपूर्वकं विवाहः कार्य इति मुख्यः कल्पः। षण्मासोत्तरं मासोत्तरं वेति त्वनुकल्पाविति। केचित्तु एतत् पितृमरणे एव। मातृमरणे तु षण्मासं मुख्यः पक्षः, तदर्द्धं मासमात्रं वेति अनुकल्पौ, पितृमरणे मातृमरणस्थलीयषण्मासोपादानेनेह तदर्धलाभात्। एवं भार्यामरणे मासत्रयं सार्द्धमासं मासमात्रं वेति त्रयः कल्पाः। भ्रातृमरणे पुत्रमरणे च सार्द्धं मासं मासं वेति द्वौ। पितामहाद्दिसपिण्डमरणे तु मासमेव,

प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत्।

इतिवाक्यादिति युक्तमुत्प्रेक्षन्ते। *याज्ञवल्क्येनेति।

विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः।
गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा॥

इत्यादिनोपक्रम्य शान्तिविधानं प्रकृत्य,

प्रतिकूले न कर्तव्यो गच्छेद्यावदृतुत्रयम् ।
प्रतिकूलेपि कर्तव्यमित्याहुर्बहुविप्लवे ॥
प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ॥

---

एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्मणां फलमाप्नोति श्रियं माप्नोत्यनुत्तमाम् ॥

इतिसर्वकर्माङ्गत्वेनोपसंहारात् । तत्कालो यद्यपि—

स्नपनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्वकम् ।

इतिसामान्यतस्तत्र पुण्याह उक्तः, तथापि विष्णुधर्मे——

हस्तपुष्याश्वयुक्सौम्यवैष्णवान्यतमे शुभे ।
नक्षत्रे च मुहूर्त्ते च मैत्रे वा ब्रह्मदैवते ॥

भविष्ये——

शुक्लपक्षे चतुर्थ्यां तु वासरे धिषणस्य च ।
तिष्ये च वारिनक्षत्रे तस्यैव पुरतो नृप ॥

बृहत्पराशरः——

चतुर्थ्यां शुक्लपक्षे तु अयने चोत्तरे तथा ।
पुण्यार्थं सर्वसिद्ध्यर्थं कुर्याच्छान्तिं विनायकीम् ॥

द्वद्ध्यभावश्छान्दस इति पुण्यार्थं विवाहादिकर्माङ्गतया । देवनक्षत्रं कृत्तिकादिविशाखान्तं किञ्चिद्ग्राह्यं, "यत्पुण्यं नक्षत्रम्" इति श्रुतेः । अत्र सर्वेषामधिकारः,

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्वा सिद्धिकामुकैः ।
कर्मनिर्विघ्नसिद्ध्यर्थं संपूज्यश्च गजाननः ॥

इति लैङ्गात्——

यजमानस्तु शूद्रश्चेदद्विजैस्तान्नियोजयेत् ।

इति महार्णवाच्च । कुमार्यादिस्त्रीणामपि——

कुमारी न च भर्त्तारमपत्यं गर्भमङ्गना ।

इति याज्ञवल्क्यात् । अङ्गना (१)चापत्यं न लभते, नापि गर्भिणी, गर्भो न जीवतीति यावत्,

तेनोपहतपुंसां च कर्म स्यान्निष्फलं कृतम् ।
स्त्रीणामपि तथा सर्वं क्रियमाणं तु निष्फलम् ॥

इति बृहत्पराशराच्च । एवं गणेशशान्तिरप्यस्ति भविष्ये—

चतुर्थ्यां वारणं हैमं पलादूर्ध्वं सुशोभनम् ।
कारयित्वाङ्कुशयुतं तिलद्रोणोपरि न्यसेत् ॥
वस्त्रैः पुष्पैः पूजयित्वा नैवेद्यान्तान् पृथक् पृथक् ।
ततस्तु ब्राह्मणे दद्याद्गणेशः प्रीयतामिति ॥
कार्यारम्भेषु सर्वेषु तस्य विघ्नं न जायते ।
वारणाः सप्त जन्मानि भवन्ति मदविह्वलाः । इति ।

'चैत्रे श्रावणे वा कार्या विनायकशान्तिर्विकल्पिता चैव' इति हेमाद्रिः ।

"ग्रहांश्चैव विधानतः" इत्याद्यभिधानादुपनयनविवाहयोर्ग्रहशान्तिरपि कार्या । सा च याज्ञवल्क्योक्ता, गृह्यपरिशिष्टाद्युक्ता वा । तत्र स्थण्डिलं कुण्डं वा कार्यम् । तत्र एकाग्निब्रह्माचार्यपक्ष एकः । तेषां नवसंख्यां कुण्डेषु तन्नद्ग्रहाकारांश्चाह प्रयोगपारिजाते भगवान्—

मनोरमे शुचौ देशे होमशालामलंकृताम् ।
कृत्वा तु संवृतां प्राज्ञो ग्रहस्थानं प्रकल्पयेत् ॥
तन्मध्ये भास्करस्थानं भवेत्पूर्वोत्तरे बुधः ।
पूर्वस्मिन् भार्गवस्थानं सोमो दक्षिणपूर्वके ॥
दक्षिणस्यां कुजस्थानं राहोर्दक्षिणपश्चिमे ।
शनेस्तु पश्चिमे स्थानं केतोरुत्तरपश्चिमे ॥
उत्तरस्यां गुरोः स्थानमेवं च स्थण्डिलं भवेत् ॥

---

(१) 'चापत्यं लभते' ख० ।

स्थण्डिलमग्न्यर्थम्

भास्करस्य तु वृत्तं स्याच्चन्द्रस्य चतुरस्रकम् ।
कुजस्य तु त्रिकोणं स्याद्बाणाकारं बुधस्य तु ॥
गुरोर्दीर्घचतुष्कोणं पञ्चकोणं सितस्य तु ।
चापाकारं शने राहोः सूर्पं केतोर्ध्वजाकृतिम् ॥
एकस्थानप्रणीतेऽग्नौ सर्वतः परिभाविते ।
होमं कुर्युर्द्विजाः सर्वे कुण्डे कुण्डे यथोदितम् ॥
नवधा विभजेदग्निं श्रौतकर्मविधानतः ।
ऋत्विजश्च यथायोग्यं कुण्डेषु ब्राह्मणाः पृथक् ॥
अथ स्रुवेण जुहुयात्सूर्यपावकरुद्रकान् ।
ऋत्विजो जुहुयुः सर्वे स्रुवेणैव पृथक् पृथक् ॥
(१)अष्टौ च शकलान् गृह्य समारोपणमग्निषु ।
प्रधानेऽग्नौ त्रिशायेमानित्थं (२)होमं चरेदिति ॥

भास्करस्य तु वृत्तं स्यादित्यादेः स्थाने ऽन्वयः। एवं स्थण्डिलं चेति स्थण्डिलानां कुण्डानां च तत्तदाकारः तत्तद्दिङ्निवेशश्चोक्तः। ब्राह्मणाः पृथगिति नवाचार्या नवब्रह्माणश्चोक्ताः। आचार्यः मध्यकुण्डेऽग्निं संस्थापयेत्। ततोऽष्टावाचार्या (३)अष्टकुण्डेष्वग्निं प्रणयेयुः। ततो नवाचार्या आज्यभागान्तेऽर्कादिसमिद्भिर्गुडोदनादिहविर्भिराज्येन च ग्रहादिमन्त्रैर्हुत्वा व्यस्तसमस्ताभिर्व्याहृतिभिस्तिलान् हुत्वा स्विष्टकृदादिहोमान्ते पूर्णाहुतीर्जुहुयुः। ततोऽष्टाचार्याः प्रधानाग्नौ समिधा स्वस्वाग्निसमारोपणं कुर्युरित्यग्निस्थापनानन्तरमेवाचार्यकुण्डादग्निप्रणयनमुक्तम्। परंतु तत्राचार्यकुण्डे अग्निस्थापनाद्याज्यभागान्तं कृत्वा अन्यकुण्डेष्वग्निप्रणयनं कार्यम्।

---

(१) 'अष्टौ च कलशान्गृह्य समारोहणमग्निषु' घ० ङ।
(२) 'होमं समाचरेत् इति' घ० ङ०।
(३) 'अष्टसु कुण्डेषु अग्निं' घ० ङ।

तेनाज्यभागान्तं पूर्वाङ्गं स्विष्टकृदाद्युत्तराङ्गं च तन्त्रेण भवतीति वदन्ति । पीठस्य वृत्ताद्याकारो लघुपीठमालायाम्–

सूर्यस्यार्काङ्गुलं वृत्तमेकाद्रीषुचतुः कृतम् ।
तद्व्यासार्धं तेन सम्यक् जायते नेत्रसुन्दरम् ॥

एक १ अद्रि ७ इषु ५ चतु ४ र्भिः क्रमेण अङ्गुलयवयूकालिक्षाभिर्व्यासार्द्धम् । तद्द्विगुणो व्यासः । ३ । ७ । ३ ।

व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते ।

इति सूत्रेण फलं द्वादशाङ्गुलम् । यथा व्यासवर्गः १५ । ३ । ० । अयं भनवाग्नि ३९२७ निघ्न ७०६८६ । पञ्चसहस्र ५००० भक्तक्षेत्रफलं १२ जातं द्वादशाङ्गुलमिदं सूत्रस्य वर्त्तुलं पीठम् ।

चान्द्रं सिद्धाङ्गुलं वेदकोणं वेदाद्रिपक्षयुक् ।

वेद ४ अद्रि ७ पक्ष २ क्रमेणाङ्गुलादिभिः इदं कोटिमानं भुजमानं च । तदुभयघाते (१)क्षेत्रफलं २४०० ४ । ६ । सिद्धाङ्गुलं चतुर्विंशत्यङ्गुलम् । इदं चन्द्रस्य चतुरस्रं पीठम् ।

भौमस्याब्धिफलं त्र्यस्रं त्रिखाम्बुधिभिरादृतम् ॥

त्रि ३ ख० शून्य अम्बुधय ४ श्चत्वारोङ्गुलाद्याः, तैः आदृतं भौमस्य चतुरङ्गुलं फलं त्रिकोणं पीठं त्रिकोणे त्रयोभुजाःसमप्रमाणाः । तत्राधस्तना भूमिः । उपरितनौ भुजौ । तन्मानं (२) ३० । ४ । तत्र सूत्रम्–

(३)आबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः ।
लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति ॥ इति ।

भूम्यर्द्धमाबाधा १ । ४ । २ । २ । ६ । (४)भूजः । ३ । ४ । ४ । अस्य कृतिः समद्विघातः । ९ । ३ । ० । अनयोरन्तरं (५)७ ।

(१) 'क्षेत्रफलं २४० ४६ सि' घ० ङ० ।
(२) '३ । ० । ४ ।' ङ । (३) 'स्वबाधा' ख० ।
(४) 'भुजः' ३० । ० । ४ । घ० ङ० । (५) '७ । ० । २' घ० ङ ।

२ । ० । अस्य मूलं २ । ५ । १ अनेन भूम्यर्द्धे १ । ४ । २ । गुणितं ४ । ० । २ । ७ । स्पष्टं भौमत्र्यस्रक्षेत्रफलम् ।

चतुर्यवान्तरं वेदाङ्गुलं स्यात्तु भुजद्वयम् ।
ऊर्ध्वाधस्तद्द्वयर्द्धिश्च प्रत्येकं स्याच्चतुर्यवा ।
भूमिः षड्यववेदाभ्यां भुजाभ्यां षट्त्रिकोणकम् ॥
तद्युक्तं बाणसमयं बुधपीठं प्रचक्षते ॥

दीर्घचतुरस्रौ भुजौ चतुरङ्गुलौ चतुर्यवा तत्र कोटिः तत्फलं भुजकोटिघातः फलं २ । ० । ० । त्रिकोणभूमिमानं १ । ४ । ० । भुजमानं २ । ६ । ० । भूम्यर्द्धमाबाधा ० । ६ । ० । स्वाबाधाभुजकृत्योरिति क्रमेण लम्बः २ । ५ । २ । ५ । भूम्यर्द्धगुणितः त्र्यस्रे क्षेत्रफलं २ । ० । ० । जातं । उभयोरैक्ये ४ । ० । ० । बुधबाणक्षेत्रफलम् ।

तर्काङ्गुलं गुरोः पीठं दस्रानलभुजद्वयम् ।

दस्रौ द्व्यङ्गुलौ द्वौ भुजौ अनलौ त्र्यङ्गुलौ द्वौ भुजौ कोटिसंज्ञौ, तत्रैकभुजैककोट्योर्घातः फलं षडङ्गुलं गुरुपीठम् ।

शुक्रस्य पीठं पञ्चास्रं व्यासार्द्धं कुनगेषुभिः ।
व्यासेन वृत्तेपूर्वादिसमाज्याः पञ्चमन्धगाः ॥
प्रोञ्छिते बाह्यतो वृत्ते नवाङ्गुलफलं मतम् ।

कुर्भूमिः १, नगाः सप्त, इषुः पञ्च, तैः तस्य वृत्तस्य व्यासार्द्धं, तद्द्विगुणो व्यासः। तन्मध्ये पूर्वादिक्रमेण पञ्च समानि चिह्नानि कृत्वा पञ्च ज्याः (१)कार्याः । बाह्यवृत्तप्रोञ्छनेन पञ्चास्रं नवाङ्गुलक्षेत्रफलं भृगुपीठम् । तत्र पञ्च त्रिकोणानि तत्र एकस्य फलं । ज्यामिता भूमिः २ । २ । ३ । भूम्यर्द्धमा(२)बाधा १ । १ । ४ । व्यासार्द्धमितो भुजः १ । ७ । ५ । आभ्यां स्वाबाधाभुजकृत्योरित्युक्तरीत्या लम्बः १ । ४ । ५ । अनेन (३)भूम्यर्द्धे १ । १ । ४ । लम्बेन गुणितम् ।

(१) 'कार्याः' नास्ति क० । (२) 'माबाधा १।१ । १। ४। व्यासा' क० ।
(३) 'म्यर्धं १।१। १५ । लम्बेन' क० ।

एकत्रिकोणफलं १ । ६ । ४ । एतत्पञ्च(१)गुणं ९ । ० । ४ । पश्चात्स (२)शुक्रपीठक्षेत्रफलम् ।

वेदाब्धिवेदाब्धिभूमिर्धनुः पीठं शनेर्भ्रमात् ।
मध्यस्थचतुरस्रस्य मानहनिात् षडङ्गुलम् ॥
चतुरस्रे त्वपगते चतुर्दिक्षु चतुर्धनुः ।
एकं धनुः फलं तत्र ग्राह्यं हात्वा धनुस्त्रिकम् ॥

वेद ४ अब्धि ४ वेद ४ अब्धि ४ भू १ एतन्मितं व्यासार्द्धं, तद्विगुणो व्यासः । तेन भ्रमात् वृत्तं तस्य व्यासस्य वर्गे इति क्रमेण फलं ६ । ५ । ५ । ० । तत्र वृत्तमध्ये एकं चतुरस्रमस्ति तस्य(३)भुजः ६ । ३ । ५ । कोटिरपि सैव ६ । ३ । ५ । उभयोर्घातात् चतुरस्रफलं ४१ । ५ । ० । तेन फलेनोनं कार्यम् । ततोऽवशिष्टं २४ । ० । ० । अस्य चतुर्थांशः ६ । ० । ० । षडङ्गुल(४)धनुः फलम् । चतुरस्रेऽपगते चतुर्दिक्षु चतुर्धनुरवशेषस्तत्र धनुस्त्रयं त्यक्त्वा एकधनुर्ग्रहात् । शनेर्व्यङ्गुलपीठपक्षे गुरुपीठमालाऽतस्तत्प्रकारो बोध्यः ।

वेदाङ्गुलैर्वेदकोणे पूर्वतो रेखयोरिह ।
तिर्यग्द्व्यग्न्यम्भोधिवृद्धिरधोवान्हर्धमानतः ॥
वृत्तेर्द्धे राहुपीठं स्याच्छूर्पं सिद्धाङ्गुलं शुभम् ॥

प्रथमत एकं चतुरस्रं तत्र भुजमानं ४ । ० । ० । तदेव कोटिमानं ४ । ० । ० । तत्र पूर्वयो रेखयोः तिर्यग्दक्षिणोत्तरद्वि २ अग्नयः त्रयः, अम्भोधयः ४, दक्षिणे अर्द्धं १ । १ । ६ । उत्तरे अर्द्धं १ । १ । ६ । अङ्गुलयवयूकानां वृद्धिः । अधो भूमेरर्द्धं कृत्वा वृत्तद्वयं कार्यम् । एवञ्चोपरि भूमिः ६ । ३ । ४ । अधो भूमिः ४ । ० । ० । लम्बः ४ । ० । ० । लम्बेन निघ्नं कुमुखैक्यखण्डमिति रीत्या

---

(१) 'गुणं ९ । ० । ४ । पश्चात्स' ङ० । (२) 'शुक्रपीठं पीठक्षेत्र' ख० ।
(३) 'भुजः ६ । ६ । ५ । तत्र' ङ० । (४) 'धनुः २ । चतुरस्रे' ङ० ।

फलं । तत्र कुमुखैक्यखण्डं ५ । १ । ६ । लम्बेन ४ निघ्नं तत्फलं २० । ७ । ० । अधोवृत्तव्यासार्धं १ । ० । ० । तद्द्विगुणो व्यासः २ । ० । ० । व्यासस्य वर्गे भनवाग्निनिघ्ने इति क्रमेण फलं ३ । १ । १ । उभयैक्ये २४ । ० । १ । १ । राहुपीठशूर्पफलम् ।

पूर्वापरौ गतौ बाहू कोटिरर्द्धाङ्गुला भवेत् ।
ऊर्ध्वमेकाङ्गुलं हित्वा हित्वा चाधः शराङ्गुलम् ॥
चतुरेकाङ्गुलयवं लग्नास्यं त्र्यस्रमारभ ।
केतोर्ध्वजाभं कुण्डं स्याद्गजाङ्गुलमितं शुभम् ॥

पूर्वापरौ भुजौ अष्टाङ्गुलौ कोटिरर्द्धाङ्गुला । तत्फलं ४ । ० । ० । उपरिभागे एकाङ्गुलम् अधोभागे च पञ्चाङ्गुलं त्यक्त्वा एकं त्र्यस्रं ४ । १ । ० । चतुः एक १ अङ्गुलयवं लग्नास्यं त्र्यस्रं कुरु । तत्र भू २ ।०।० मानं । तदर्धमाबाधा १ । ० । ० । भुजः ४।०।१। स्वाबाधाभुजकृत्योरिति क्रमेण लम्बः ४ । ० । ० । अनेनाबाधायां गुणितायां त्रिभुजफलं ४ । ० । ० । फलद्वयै(१)क्यं ८ । एतत्केतुपीठं ध्वजाकारम् । सर्वत्रापि ग्रहमखे ग्रहपूजार्थम्,एवंक्रमेण पीठानि कार्याणि ।

अथ होमार्थं ग्रहपीठाकारकुण्डानि यथा—

मध्ये वृत्तं पूर्वतः पञ्चकोण माम्नायास्रं त्र्यस्रशूर्पं धनुश्च ।
केतुर्दीर्घाम्नायकोणं सबाण माग्नेयीतः कुण्डसंस्था क्रमेण ॥
भानुः शुक्रश्चन्द्रमाश्चापि भौमो राहुर्मन्दः केतवो गीष्पतिश्च ।
सौम्यश्चैषां स्वामिनः स्युः क्रमेण तत्रात्र्यस्रं प्राकृतं कुण्डजातम् ॥

आत्र्यस्रं त्र्यस्रमभिव्याप्य प्राकृतं पञ्चास्रं चतुरस्रं त्र्यस्रं च कुण्डार्काद्युक्तरीत्या कार्यम् ।

---

(१) 'द्वयैक्यम् एत' कु० ।

याबा भूमिः सप्तविंशाङ्गुलाऽत्र
याबा वृत्तार्द्धावृताऽन्या तिथेः स्यात् ।
त्रयोविंशस्तत्र लम्बाङ्गुलश्च
राहोः शूर्पं कुण्डमेतद्विचित्रम् ॥

यत्र एव यावः । पूर्वा भूमिः २७ स(१)प्तविंशाङ्गुली चतुर्यवा, अन्या इतरा पश्चिमा भूमिः तिथेः पञ्चदशात् स्यात् । सा च वृत्तावृत्तार्द्धेनावृता युक्ता । त्रयोविंशत्यङ्गुलश्च लम्ब इत्यर्थः । अथ फलं । पूर्वभूमिः २७ । ४ । पश्चिमभूमिः १५ । तयोरैक्यं ४२ । ४ । तदर्धं २१ । २ । लम्बः २३ । लम्बेन निघ्नं कुमखैक्यखण्डमिति क्रमेण ४ । ८८ । पश्चाद्भूमेर्व्यासः ५९ ।

व्यासस्य वर्गे भनवाग्नि निघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते ।
इति सूत्रेण फलं १७६ । तदर्धं ८८ । तयोरैक्यं ५७६ । अथवा—

सिद्धांऽङ्गुलो भवेल्लम्बः पश्चाद्भूमिर्नखाङ्गुला ।
पूर्वाऽष्टाविंशतिः प्रोक्ता शूर्पे स्यादृजुकोणके ॥

इत्यनेन पश्चाद्वृत्तं नास्तीति ध्वनितम् । चतुर्विंशत्यङ्गुलो लम्बः २४ । नखानि विंशतिः । तथाच कुमुखद्वयं २० । २८ । तयोरैक्यं ४८ तदर्धं २४ अनयोर्घातः तस्य फलं ५७६ ।

संग्राहोऽर्द्धे सार्धरामेण चापेन्तर्ज्याहः स्याद्वृत्तपादोदिगंकात् ।
सूत्राद्रौद्राद्बाह्यमौर्व्यर्हमेवं वृत्तं दद्याज्ज्यास्पृगेवं परार्द्धम् ॥

चापे यदर्द्धं तत्र सार्द्धत्र्यङ्गुलेन संग्राहः भागः कार्यः । ततः दशाङ्गुलात्सूत्रादन्तर्ज्यार्हः वृत्तपादः कर्त्तव्यः । तथा तत्र एकादशाङ्गुलेन सूत्रेण चापज्यास्पृक् बाह्यज्यार्हं वृत्तं दद्यात् । तथाच ज्यासं(२)ग्राहचिह्नयोरन्तरं २१ । एकविंशत्यङ्गुलं भवति । एवमेव द्वितीयार्द्धं भवति । अन्तर्बहिर्ज्यार्हत्वं तदसत्त्वार्थम् । अत्र फलं संग्राहार्द्धफलं ७३ । ४ । वृत्तपादफलं ७८४ ज्यास्पृक् सूत्रान्त-

(१) 'सप्तविंशाङ्गुलि' घ० ङ० ।  (२) 'संग्राहकचिह्नयो' घ० ङ० ।

चतुरस्रफलं तत्र एका कोटिः ११ परा कोटिः ११ कोणांशफलं तत्रागन्तुके चतुरस्रे कोटिः २१। भु(१)जः २१ अनयोर्घातः ४८। ४ तत्र तद्वृत्तफलस्य हानिः शेषे १०। ४। अंशत्रयं ७८ त्यक्त्वा शेषांशो ग्राह्यः २६। तथाच ७३। ४ एवं ७८। ४ एवं ११० एकत्र २८८ एवं परार्द्धस्य २८८ मिलितं ५७६।

इषुवेदमितेन दीर्घदोष्णा गजदोष्णा लघुनापि च त्रिषष्टिः।
जिनलम्बगुणेन वार्द्धषट्त्रिभुविचाघातमवदन्तिकेतुकुण्डम् ॥

इषुवेदैः ४५। गज ८ भुजकोटिघातः ३६०। जिन २४ लम्बं। षट्त्रि ३६ तदर्धं १८ भूमिस्तदर्धं ९ लम्बगुणं २१६। एकत्र ५७६ फलम्।

एकेनयुग्मत्रिभिरङ्गुलीभिः परेण धृत्या च मितेन दोष्णा।
सुदीर्घवेदास्रमुशन्तिकुण्डं निगद्यतेऽथो द्विविधं शराभम् ॥

फाले लम्बो भुश्च सिद्धाङ्गुलैस्त-
ल्लम्बा यष्टिः पार्श्वयोरङ्गुलीभिः।
वेदैर्वेदेषुभिश्चात्र भूः स्या-
द्वत्योभयत्र्यायता षट्त्रिपर्वैः ॥

(२)फाले लम्बः भूश्चतुर्विंशत्यङ्गुला तल्लम्बादुभयतः पार्श्वयोश्चतुर्भिश्चतुर्भिरङ्गुलिभिरुपलक्षिता यष्टिः। अथवा पञ्चभिः, अत्र पक्षे भूरष्टादशाङ्गुला। उभयत्रापि यष्टिः षट्त्रिंशदङ्गुलायता। अथ फलं फाले लम्बः २४। भूमिः २४ अर्द्धं १२ लंबगुणं २८८ तथा दीर्घो भुजः ह्रस्वो भुजः ८। अनयोर्घातः २८८। एकत्र ५७६। अथवा फाले लम्बः २३ भूः १८ अर्द्धं ९ लम्बगुणं भूम्यर्द्धं २१६। तथा भुजः ३६ ह्रस्वो भुजः १० अनयोर्घातः ३६०। एकत्र ५७६।

यष्टिर्बाणैः सौम्यदिश्यग्र एव न्यस्तं तादृक् शूर्पकं पश्चिमास्यम्।

---

(१) 'भुजः २२' ङ०। (२) 'फाले लम्बः' नास्ति ख०।

बार्हस्पत्यं सौम्यदीर्घं धनुस्तत् पश्चाद्दिगुन्यं शुक्रियं सौम्यकोणम् ॥
सौम्यं सौर्यं प्राकृतं चात्रमौळं कण्ठो नाभिःखातको मेखलाश्च ।
आदित्यादेर्होमकुण्डान्यवादीत् श्रीकृष्णस्य प्रीतये राज्ञनाथिः ॥
आदित्यादेः पीठमालां निरुच्य पीठान्येवं दिग्गतानि प्रयोगात् ।
पीठे पूजां कुण्डमालासु होमं कृत्वा देवं श्रीहरिं भावयाशु ॥

श्रीकामादेस्तु अयुतहोमलक्षहोमकोटिहोमाः ग्रहमखाः । तत्र कोटिहोमः शतमुखदशमुखद्विमुखैकमुखभेदैश्चतुर्धा संवरणेन पृष्टः सनत्कुमार उवाच—

शताननो दशमुखो द्विमुखैकमुखौ तथा ।
चतुर्विधो महाराज ! कोटिहोमो विधीयते ॥
कृत्वा कुण्डशतं दिव्यं यथोक्तं हस्तसंमितम् ।
एकैकस्मिंस्ततः कुण्डे दशविप्रान्निमन्त्रयेत् ॥
सद्यः पक्षे तु विप्राणां सहस्रं परिकीर्तितम् ।
अल्पैरहोभिः कार्यः स्याद्वर्षाकालादिकेऽपि वा ॥
तदा दशमुखः कार्यः कोटिहोमो महामते ।
विप्राणां द्वे शते तत्र सुविभज्य नियोजयेत् ॥
(अथ (१)कुण्डद्वयं कृत्वा विभज्य च विभावसुम् ।
शतं तत्र नियोज्यं स्याद् विप्राणां प्रविभज्य वै ॥
यदा तु स्वेच्छया यज्ञं यजमानः समापयेत् ।)
कालेन महता राजन् तदा चैकमुखो भवेत् ॥
न संख्यानियमश्चात्र ब्राह्मणानां नरोत्तम ॥

इत्यादिना भविष्योत्तरे उक्तः । तत्र एकमुखः प्रकृतिः तत्र सकलधर्माम्नायात् । अन्ये विकृतयः । अतस्तेषु एकमुखविहितकुण्डादयः कार्याः । तत्र मण्डपस्त्रिविधः—

"उत्तमं (२)शतहस्तं तु तदर्द्धेन तु मध्यमम् ।

(१) कंसान्तर्गतं नास्ति ङ० । (२) 'शतमुखं' ङ० ।

जघन्यं तु तदर्द्धेन" ।

इत्यादिः । तेषां यथा(१)सम्भवंशतमुखादौ विनियोगः । तत्र द्विमुखे—

अष्टहस्तप्रमाणेनायामेन [च] तथैव च ।
मेखला(२) त्रितयं तस्य द्वादशाङ्गुलविस्तृतम् ॥
मध्ये तु मण्डपस्यापि कुण्डं कुर्याद्विचक्षणः ॥

इति कुण्डं मध्यदेशश्च प्राप्तः । तत्र एकं दक्षिणतः अपरमुत्तरत इति कुण्डद्वयं कार्यम् तत्र—

दशलक्षमिते होमे षट्करं सम्प्रचक्षते ।

यद्वा,

कुण्डं पञ्चकरं प्रोक्तं दशलक्षाहुतौ क्रमात् ।

इति पक्षद्वयम् । तयोश्च शतपञ्चाशद्धस्तमण्डपयोः मध्यमनवमांशे सुखेन निवेशः । पञ्चविंशतिहस्ते मण्डपे तु मध्यमनवमांशे यद्यप्यष्टाङ्गुलाष्टहस्ते विनिवेशो न सम्भवति, तथापि पूर्वपश्चिमनवमभागयोः किञ्चिदंशं गृहीत्वा निवेशः कार्यः । एवं दशमुखेऽपि मध्यमनवमभागे कुण्डद्वयं कार्यम्, अवशिष्टान्यष्ट कुण्डानि पूर्वादिक्रमेण (३)एकैकाष्टनवमांशे कार्याणि । पूर्वदिक्नवमांशे प्राकृती समचतुरस्रा चतुर्हस्ता देवपूजार्था वेदिः कार्या । तत्र शतहस्ततदर्द्धमण्डपपक्षे षट्कराणि पञ्चकराणि वा यावन्ति मध्यनवमभागे भवन्ति तावन्ति तत्र कृत्वाऽवशिष्टान्यवशिष्टभागेषु यथासम्भवं कार्याणि, पूर्वदिग्गतनवम(४)भागे वेदिश्चेति । शतमुखे तु सद्यःपक्ष एव ।

कृत्वा कुण्डशतं दिव्यं यथोक्तं हस्तसंमितम् ।

इत्याद्युक्तेः । नन्वत्र एकहस्ते कथं लक्षाहुतयः ? न च शीघ्र-

---

(१) 'सम्भवं' नास्ति ङ० ।
(२) 'द्वितियं' ख० ।
(३) 'एकैकनवमांशे' ङ० ।
(४) 'भागे देहि' ख० ।

दाहिघृतेन कार्या इति वाच्यं, तस्याविधानात् तिलानां प्रकृतत्वेन तद्बाधापत्तेश्च । अत्र केचित्—

> द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् ।
> अयुते त्वथ होतव्ये कुण्डं स्याद्धस्तमात्रकम् ॥
> द्विगुणं लक्षहोमे तु कोटिहोमे चतुर्गुणम् ॥

इति वाक्याद्द्विहस्तं कार्यम् । हस्तसंमितमित्यत्र द्विवचनान्तो बहुवचनान्तो वा विग्रह इति । अन्येतु [illegible]कुण्डषट्पञ्चचतुस्त्रिद्व्यङ्गुलाभिः पञ्चभिर्मेखलाभिर्युतं कार्यम् । तच्च तिललक्षहोमोपयोगीत्याहुः । तत्र एकहस्ते पञ्चदशांशः खातः तत्फलं चतुर्विंशत्यधिकसप्ताशीतिः । एकाङ्गुलः कण्ठः । तयोः क्षेत्रफलं चतुर्विंशत्यधिकसप्तशताधिकचतुर्दशसहस्राङ्गुलानि १४७२४ एतद्द्विगुणं २९४४८ एतस्मादधिकक्षेत्रफलं पूर्वोक्ते हस्तकुण्डे इति तदेव युक्तम् । मेखलारहितसमखाते त्र्यङ्गुलसहितकण्ठेऽङ्गुलानि चतुरधिकपञ्चशतीसहितैकोनत्रिंशत्सहस्राणि । अस्मिन् पक्षे आहुतिपरिमाणं स्वल्पं कार्यं "शतं चतुःषष्टिर्वा व्रीहितुल्यानां तदर्द्धेन तिलानाम्" इति गृह्यपरिशिष्टात् । एवञ्च द्वात्रिंशत्तिलानामिति परिमाणमुपेत्य एकहस्तेऽपि द्विहस्तवदेव लक्षहोम इति । एषां च शतकुण्डानां पञ्चविंशतिहस्ते मण्डपे बाधान्न निवेशः । पञ्चाशद्धस्ते निवेशेऽपि न ब्राह्मणानां निवेशः सम्भवति । अतः शतहस्त एव मण्डपः कार्यः । अत्र केचित्—सर्वमण्डपस्य समांशेन शतं भागा कल्प्याः । तत्रैकैकभागे एकैकं कुण्डं कार्यमिति ।

तत्र बहूनां कुण्डानां प्रकृतिप्रमाणमध्यदेशबाधः स्यात्, अतः मध्यमनवमभागे विंशतिः कुण्डानि कार्याणि । यथा पञ्चकुण्डानामेका दक्षिणोत्तरा पङ्क्तिः । एवमन्यास्तिस्रः । तत्र मध्यमनवमांशस्यषष्ठाङ्गुलाधिकत्रयस्त्रिंशद्धस्तमितत्वाद्दक्षिणोत्तरयोर्द्वयोः सप्ताङ्गुलाधिकसार्द्धचतुर्हस्तात्मकमन्तरं तुल्यं भवति । प्राक्पश्चात्कुण्डमालयो-

रष्टाङ्गुलाधिकसप्तहस्तमन्तरमिति तत्रान्तरे सावकाशतया प्रतिकुकुण्डाभिमुखपङ्क्तिद्वयेन होतृब्राह्मणोपवेशनं सुखतो भवति। एवमवशिष्टान्यशीतिकुण्डानि, अवशिष्टेष्वष्टनवमांशेषु निवेश्यानि। तत्रापि मध्ये द्वे अष्टसु दिक्ष्वष्टेति रीसा दशेति।

अथवा मध्यमे नवमांशेऽष्टाविंशतिकुण्डानि निवेश्यानि। तथा सप्तानां कुण्डानां दक्षिणोत्तरा प्रथमा पङ्क्तिः। एवमेव तिस्रः पङ्क्तयः कार्याः। तत्र द्वयोर्द्वयोर्दक्षिणोत्तरयोः षडङ्गुलाधिकद्विहस्तमन्तरं समम्। अवशिष्टानि द्वासप्ततिकुण्डानि अवशिष्टेष्वष्टसु नवमांशेषु निवेश्यानि। तत्रैकैकनवमांशे नव कुण्डानि। तत्र मध्यमनवमांशस्थानामष्टाविंशतिकुण्डानां बहिः परिधिरूपेण षोडश, तद्बहिः परिधिरूपेण चतुर्विंशतिः, तद्बहिः परिधिरूपेण द्वात्रिंशदिति। न चात्र पक्षे मध्यमनवमांशे दक्षिणोत्तरयोः कुण्डयोः षडङ्गुलाधिकद्विहस्तमेवान्तरालं, तत्र स्वस्वकुण्डाभिमुख्येन ब्राह्मणपङ्क्त्युपवेशने कुण्डद्वयज्वालाक्लेशप्रसङ्ग इति वाच्यं, यदा दक्षिणामुखोपवेश्या यजुर्वेदिनो नोपलभ्यन्ते, यदा वोत्तरदिगभिमुखोपवेश्या अथर्वणा नोपलभ्यन्ते, उभये वा नोपलभ्यन्ते, तदा एतत्पक्षसौकर्यात्। चतुर्णामुपलम्भे तु प्राक्तन एव पक्षः कार्य इति। समित्तिलचर्वाज्यद्रव्येषु आदित्यादिनवग्रहा एव प्रधानदेवताः। व्यस्तसमस्तव्याहृतिभिरयुतादिहोमे तु त एव प्रधानदेवता इति तदुद्देशेनैव त्याग इत्येके। अयुतादिव्याहृतिहोमे त्वग्निवायुसूर्यप्रजापतय इति भट्टाः। इन्द्रादिलोकपालादयस्त्वङ्गदेवताः, इत्यन्तु प्रासङ्गिकम्। अधिकं शान्तिकमलाकरादिग्रन्थेभ्यो द्रष्टव्यम्।

अथ नवग्रहदानानि। तत्र सूर्यस्य—

कौसुम्भवस्त्रं गुडहेमताम्रं माणिक्यगोधूमसुवर्णपद्मम्।
सवत्सगोदानमिति प्रणीतं दुष्टाय सूर्याय मसूरिकाश्च॥
आरक्तकं चन्दनमम्बुजं च वदन्ति दानं हि दिवाकराय॥

# रामायणप्रकाश

यह पुस्तक संस्कृत जिज्ञासुओंके अत्यन्त उपयोगी है। इसमें प्रत्येक शब्द तथा धातुके सब अर्थ तथा पर्यायोंके कोशका संग्रह ग्रन्थकारने श्लोकमें किया है। धातुकोश एक नवीन ही अप्रसिद्ध वस्तु इसमें दीगई है, जो अल्पश्रममें सहस्रों पद पदार्थ मुखोद्गत रखनेका एक मात्र साधन है। पद, अन्वय, विभक्त्यर्थनिर्देश, शब्द और धातुके मूल रूप तथा उनके लिंग गण आदि, अर्थ और भावार्थ स्पष्ट तथा विस्तारसे रहनेके कारण इसके पठनमें अन्य की अपेक्षा नहीं होती है। अतः बालक युवक और वृद्ध सभी संस्कृत नवजिज्ञासुओंको इससे लाभ है।

कीमत दस आना ॥=).

अथ चन्द्रस्य—

घृतकलशसितवस्त्रं दधिशङ्खमौक्तिकं सुवर्णं च ।
रजतं च सम्प्रदद्याच्चन्द्रारिष्टोपशमनाय ॥

सद्वंशपात्रस्थिततण्डुलाश्च कर्पूरमुक्ताफलशुभ्रवस्त्रम् ।
युगोपयुक्तं वृषभं च रौप्यं चन्द्राय दद्याद्घृतपूर्णकुम्भम् ॥

अथ भौमस्य—

प्रवालगोधूममसूरिकाश्च वृषश्च ताम्रः करवीरपुष्पम् ।
आरक्तवस्त्रं गुडहेमताम्रं दुष्टाय भौमाय सचन्दनं हि ॥

अथ बुधस्य—

नीलं वस्त्रं मुद्गदानं बुधाय रत्नं पाचीदासिकाहेमसर्पिः ।
कांस्यं दन्तः कुञ्जरश्चाथ मेषो रौप्यं सर्वं पुष्पजात्यादिकं च ॥

अथ गुरोः—

रथः सुवर्णं शुभपीतवस्त्रं सपीतधान्यं लवणं सुपुष्पम् ।
सशर्करं सद्रजनीप्रयुक्तं दुष्टाय शान्त्यै गुरवे प्रणीतम् ॥

अथ भृगोः—

चित्रवस्त्रमपिदानवर्धिते दुष्टगे मुनिगणैः परिणीतम् ।
तण्डुलं घृतसुवर्णरूपकं वज्रकं परिमलो धवला गौः ॥
चित्राम्बरं शुभ्रतरस्तुरङ्गो धेनुश्च वज्रं रजतं सुवर्णम् ।
सतण्डुलाज्योत्तमगन्धयुक्तं वदन्ति दानं भृगुनन्दनाय ॥

अथ शनेः—

नीलकं महिषं वस्त्रं कृष्णं लोहं सदक्षिणम् ।
दद्याच्च दक्षिणायुक्तं शनिदोषप्रशान्तये ॥
माषाश्च तैलं त्विमलेन्द्रनीलः तिला कुलित्था महिषी च लोहम् ।
सदक्षिणं चेदमुशन्ति नूनं दुष्टाय दानं रविनन्दनाय ॥

अथ राहोः—

गोमेदरत्नं च तुरङ्गमश्च सुनीलचैलानि च कम्बलाश्च ।

तिलाश्च तैलं खलु लोहमिश्रं स्वर्भानवे दानमिदं वदन्ति ॥
राहोर्दानं बुधैर्मेषो गोमेदो लोहकम्बलौ ।
सुवर्णं नागरूपं च सतिलं ताम्रभाजनम् ॥

अथ केतोः—

वैडूर्यरत्नं सतिलं सतैलं सकम्बलश्चापि मदो मृगस्य ।
शस्त्रं च केतोः परितोषहेतोरुदीरितं दानमिदं मुनीन्द्रैः ॥
केतोर्वैडूर्यममलं तैलं मृगमदस्तथा ।
ऊर्णां तिलैश्च संयुक्तां दद्यात्क्लेशापनुत्तये ॥

संहिताप्रदीपे—

भानुस्ताम्बूलदानादपहरति नृणां वैकृतं वासरोत्थं
सोमः श्रीखण्डदानादवनितनुभुवो भोजनात्, पुष्पदानात् ।
सौम्यः, शक्रस्य मन्त्री हरिहरनमनाद्, भार्गवः शुभ्रवस्त्रै-
स्तैलस्नानात्प्रभाते दिनकरतनयो ब्रह्मनद्यापरौ च ॥ इति ।

अथ नवरत्नमुद्रिकाघट्टनम्—

माणिक्यं तरणेर्मध्ये प्राच्यां वज्रं भृगोर्विधोः ।
आग्नेय्यां मौक्तिकं याम्यां प्रवालं मङ्गलस्य तु ॥
गोमेदं राक्षसे राहोः पश्चिमे नीलकं शनेः ।
वायौ वैडूर्यके केतोरुदीच्यां पुष्पकं गुरोः ॥

हारीतः—

स्पर्शिता स्याद्यदा कन्या वाचा वाप्युदकेन वा ।
अन्तरा प्रातिकूल्यं चेत्पूर्वोढा विधवा भवेत् ॥

एतच्च विवाहानन्तरचतुर्थीकर्ममध्ये बोध्यम् ।

कार्ष्णाजिनिः—

पिता वा यदि वा भ्राता ज्येष्ठो वा म्रियते यदि ।
अतीतेऽब्देऽपि वाग्दत्तां नोद्वहेद्युवतीं पुमान् ॥

दक्षः—

(१)ज्योतिः सागरे—

*दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये ।
प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते ॥

मेधातिथिः—

*पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् ।
प्रवेशान्निर्गमस्तद्वत्तथा मण्डनमुण्डने ॥
*प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
*आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥

अथ रजोदोषे निर्णयः । माधवीये—

प्रारम्भात्प्राग्विवाहस्य माता यदि रजस्वला ।
निवृत्तिस्तस्य कर्तव्या सहत्वश्रुतिचोदनात् ॥

---

दंपत्योः पितरौ भ्राता सोपनीतः सहोदरः ।
पितृव्यस्तादृशश्चैव पितामहपितामही ॥
एषामन्यतमे नष्टे नोद्वहेत्तां वधूं वरः ॥

दम्पत्योरिति सर्वत्र सम्बध्यते । अत्र विनायकशान्त्या क्वचिद्विवाह इत्युक्तं प्राक् ।

*दुर्भिक्षे इति ।

दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च ।
उदासीनास्थितस्यापि प्रातिकूल्यं न विद्यते ॥

इतिवाक्यं प्रातिकूल्यं मरणप्रयुक्तदोष इत्येके । प्रातिकूल्ये च पुरुषत्रयावधिदोषकरमित्याह—*पुरुषत्रयेति । यथा सगोत्रसपिण्डयोः पुरुषत्रयपर्यन्तं प्रतिकूलस्य निषेधनिमित्तत्वम्, एवं प्रवेशमण्डनयोर्निर्गममुण्डननिषेधनिमित्तत्वमपि तावत्पर्यन्तमेवेत्यर्थः । *प्रेतकर्माणीति । पूर्ववाक्यात्स्वगोत्रिणामित्यनुवर्त्तते । *आचतुर्थमिति । संख्यान्तरोपादानात्प्रेतकर्मानिवृत्तेर्निमित्तस्या-

(१) 'ज्योतिः सारे' क० ख० ।

प्रारम्भात् नान्दीश्राद्धात् , 'नान्दीमुखं विवाहादौ' इत्यादिना तस्यैव प्रारम्भोक्तेः । मेधातिथिः—

चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि ।
भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥
वधूवरान्यतमयोर्जननी चेद्रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥

वृद्धमनुः—

विवाहव्रतचूडासु माता यदि रजस्वला ।
तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः ॥

गर्गः—

यस्योद्वाहादिमाङ्गल्ये माता यदि रजस्वला ।
तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः ॥

नान्दीश्राद्धोत्तरं रजोदोषे तु कपर्दिकारिकासु—

सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम् ।
*प्राप्ते कर्मणि शुद्धिः स्यादितरास्मिन्न शुद्ध्यति ॥
अलाभे सुमुहूर्तस्य रजोदोषे च सङ्गते ।

---

भ्युदयिकनिषेधस्य नैमित्तिकस्योपादानाच्च तेन स्वगोत्रिणामाचतुर्थं सपिण्डीकरणान्तप्रेतकर्मसमाप्तिं विना आभ्युदयिकं न कुर्यादित्यर्थः । तेन परगोत्रिणां (चतुःपुरुष(१)पर्यन्तं न प्रेतकर्मसमाप्त्यपेक्षाप्रसङ्गः । अत्रापि वरवध्वोः पितृचतुर्थपुरुषात्मककूटस्थमारभ्य चतुःपुरुषी) ग्राह्या । द्वादशाहादि सपिण्डीकरणपक्षे तु तदुत्तरानुमासिकान्यपि प्रेतकर्मशब्देन ग्राह्याणि उत्पत्तिवेलायां प्रेतोद्देश्यकानामेव प्रेतशब्दोल्लेखमन्तरेण पुनरावृत्तिविधानात् "नरः संवत्सरात्परं प्रेतदेहं परित्यज्य" इत्यग्रिमवाक्याच्च ।

*प्राप्ते इति । नान्दीश्राद्धप्रभृत्यारम्भकृति कर्मणि, शु-

---

(१) कंसान्तर्गतं नास्ति । घ० ङ० ।

श्रियं संपूज्य तत्कुर्यात्पाणिग्रहणमङ्गलम् ॥
हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् ।
प्रत्यृचं पायसं हुत्वा अभिषेकं समाचरेत् ॥ इति ।
सूतकादिसंकटे तु कूष्माण्डीभिर्घृतं हुत्वा पयस्विनीं गां च दत्त्वा विवाहादि कुर्यादिति (१)च वक्ष्यते ॥

अथैकक्रियानिर्णयः । ज्योतिर्निबन्धे वृद्धमनुः—

एकमातृजयोरे*क(२)वासरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥

---

द्धिः । इतरस्मिन् नान्दीश्राद्धरूपप्रारम्भाभावे तु नेत्यर्थः, 'अलाभे सुमुहूर्त्तस्य' इत्युक्त्या प्राप्तेः प्रारम्भात्मकत्वात् । यद्वा, नान्दीश्राद्धप्रारम्भोत्तरमित्यर्थः । प्राप्ते आरब्धे, इतरस्मिन्ननारब्धे । होमश्च परिभाषाप्राप्ताज्यद्रव्येण समस्तव्याहृतिभिरष्टोत्तरशतसं(३)ख्यः। शुद्धिश्चानिष्टविरहः । अ(४)निष्टं चाह बृहस्पतिः—

वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने ।
चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥ इति ।

न त्वन्यारम्भयोग्यताः स्पर्शानधिकारात् । केचित्तु विभिन्नवाक्योपात्तयोरारम्भमुहूर्त्तालाभयोर्न परस्परसापेक्षत्वम् । तेनारम्भात्प्रागपि रजोदोषे लग्नान्तराभावे शान्तिं कृत्वा विवाहादि कुर्यादित्याहुः । अन्येतु 'अलाभे सुमुहूर्त्तस्य'इत्यपि प्रारब्धपरमेव कारिकावाक्यैकवाक्यत्वादित्याहुः ।

*एकेति । वत्सरभेदेन करणे तु न दोष इति सूचितम् । अत्र पुरुषस्त्रियोरित्यत्र पुरुषयोः स्त्रियोः पुरुषस्त्रियोश्चेति विवक्षितम् ,

एकः कर्त्ता शुभं कुर्यान्न पुत्र्योः पुत्रयोरपि ।
षण्मासे वाऽष्टमासे वा पूर्णे त्वब्दे शुभावहम् ॥

---

(१) 'च प्रागुक्तं' क० ख० । (२) 'वत्सरे' ख० ।
(३) 'लक्षसंख्या' घ० ङः । (४) 'अरिष्टं' घ० ङ० ।

*एतेन एकस्य पुंसो विवाहद्वयमेकदिने निषिद्धं, मातृभेदाभावात् । नारदः—

पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये ।
*न तयोर्व्रतमुद्वाहान्मण्डनादपि मुण्डनम् ॥

वराहः--

*विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥

मदनरत्ने वासिष्ठः--

न पुंविवाहोर्ध्वमृतुत्रयेपि
विवाहकार्यं दुहितुः प्रकुर्यात् ।
न मण्डनाच्चापि हि मुण्डनं च
गोत्रैकतायां यदि नाब्दभेदः ॥
एकोदरभ्रातृवि(१)वाहकृत्यं
स्वसुर्न पाणिग्रहणं विधेयम् ।

इति वचनात् । *एतेनेति । 'द्विशोभनं त्वेकगृहेऽपि नेष्टम्' इत्याद्यग्रिमवाक्येष्वपि मातृभेदे विधीयते इत्ययमपवादः प्रवर्त्तते इति भावः । *न तयोर्व्रतमुद्वाहादिति । तयोः पुत्रपुत्र्योर्मध्ये एकस्योद्वाहानन्तरमन्यस्योपनयनं नेत्यर्थः । तथाच मिहिरः—

पुत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरे तथा ।
पुत्र्युद्वाहं न कुर्वीत विवाहाद्व्रतबंधनम् ॥ इति ।

*विवाहस्त्विति । तुशब्द एवकारार्थे अन्ययोगव्यवच्छेदस्तदर्थः । तथाचान्याब्दप्रवेशेऽपि षण्मासमध्ये एकोदरस्य विवाहभिन्नं मङ्गलं नेत्यर्थः । नारदस्तु—

मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मंगलम् ।
ऋतुत्रयं पुनर्यावन्न कुर्याल्लघुमङ्गलम् ॥

---

(१) 'विवाहकृत्यान्स्वसुर्न' क० ।

षण्मासमध्ये मुनयः समूचु-
र्न मुण्डनं मण्डनमोपि कार्यम् ॥

एतदपवादस्तत्रैव—

ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ।
तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते ॥

सारावल्याम्—

फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रयविलङ्घनम् ॥

संहिताप्रदीपे—

ऊर्ध्वं विवाहात्तनयस्य नैव
कार्यो विवाहो दुहितुः समार्धम् ।
अप्राप्य कन्यां श्वशुरालयं च
वधूः प्रवेश्या स्वगृहं च नादौ ॥

मदनरत्ने वसिष्ठः—

द्विशोभनं त्वेकगृहेपि नेष्टं
शुभं तु पश्चान्नवभिर्दिनैस्तु ।
आवश्यकं शोभनमुत्सवो वा
द्वारेथवाचार्यविभेदतो वा ॥

*एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ।
भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीत् ॥

ज्योतिर्निबन्धे कात्यायनः—

कुले ऋतुत्रयादर्वाङ् मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥

---

इत्याह—*एकोदरेति । 'एकोदरप्रसूतानाम्' इति निर्देशाद्भि-न्नोदरप्रसूतानां शोभनत्रयं भवति, भिन्नोदरप्रसूतानामपि नेति शातातप इति विकल्पः ।

कुर्वन्ति मुनयः केचिदन्यस्मिन्वत्सरे लघु ।
लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ॥
पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥
चौलं मुण्डनमेवोक्तं वर्जयेन्मण्डनात्परम् ।
मौञ्जी चो*भयतः कार्या यतो मौञ्जी न मुण्डनम् ॥
*अभिन्नवत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् ।
अभेदे तु विनाशः स्यान्न कुर्यादेकमण्डपे ॥

संकटे तु कपर्दिकारिकासु वराहमिहिरश्च—

उद्वाह्य*पुत्रीं न पिता विदध्यात्
पुत्र्यन्तरस्योद्वहनं क(१)दाचित् ।
यावच्चतुर्थं दिनमत्र पूर्वं
समाप्य चान्योद्वहनं विदध्यात् ॥

कश्यपः—

*मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि वा ।
पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत् ॥

---

*उभयतः चौलात्प्राक् परतश्च । समानक्रियानिषेधमपवदति—*अभिन्नेति । यद्यपि मौञ्जितो मौञ्जी विवाहाद्वा विवाहोऽभ्यनुज्ञातस्तथापि दिनभेदो मण्डपभेदश्चावश्यक इत्यर्थः ।

*पुत्रीमिति । इदं पुत्रस्याप्युपलक्षणं 'यावच्चतुर्थं दिनम्' इति दर्शनादेकपुत्रोद्वाहानन्तरमपरपुत्रोद्वाहश्चतुर्थीकर्मोत्तरमेव । अत एव रामायणादौ श्रीरामविवाहानन्तरमेव लक्ष्मणादीनामुद्वाहो न समकालमिति । *मौञ्जीबन्ध इति । उद्वाह्य पुत्रीमित्येतत्प्रकरणे एतल्लिखनात्,

पुत्रोद्वाहात् परं पुत्री विवाहो न ऋतुत्रये ।

---

(१) 'कदापि' क० ।

ज्योतिर्निबन्धे--

विवाहमारभ्य चतुर्थिमध्ये
*श्राद्धं दिनं *दर्शदिनं यदि स्यात् ।
वैधव्यमाप्नोति तदाशु कन्या
जीवेत्पतिश्चेदनपत्यता स्यात् ॥

तथा—

विवाहमध्ये यदि चेत्क्षयाह-
स्तत्र स्वमुख्याः पितरो न यान्ति ।
*वृत्ते विवाहे परतस्तु कुर्या-
च्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् ॥

"ये वा भद्रं दूषयन्ति स्वधाभिः" इति श्रुतेश्च । मासिकविषये कालहेमाद्रौ शाट्यायनिः—

न कार्यं त्र्यमुद्वाहान्मङ्गलेनाप्यमंगलम् ॥

इति मयूखे सामान्यतो विवाहानन्तरमुपनयननिषेधाच्च । पुत्रीविवाहोत्तरं मौञ्जीबन्धः एकविवाहानन्तरमपरविवाहश्च, षण्मासाभ्यन्तरे तं न कुर्यादित्यर्थः । 'मौञ्जीबन्धमथोद्वाहम्' इति द्वितीयान्तपाठोऽयुक्तः । पुत्रीविवाहानन्तरं मौञ्जीबन्धम् एकविवाहोत्तरमपरविवाहं च न कुर्यात् । पुत्रोद्वाहानन्तरं पुत्र्युद्वाहं च न कुर्यात् । एते त्रयो निषेधा अविभक्तपराः न तु विभक्तपरा इत्यर्थः । "कुले ऋतुत्रयाद्" इत्यपि अविभक्तपरमिति केचित् । अत्र 'विवाहस्त्वेकजातानाम्' इति निषेधो मुख्यः । "उद्वाह्य पुत्रीम्" इति निषेधो मध्यमः, "न कुर्यादेकमण्डपे" इति त्वधम इति । *श्राद्धं दिनं क्षयाहः । *दर्शदिनं स्वरूपतः । यद्यपि तत्र श्राद्धस्याकरणाच्छ्राद्धोपलक्षितदिनलाभेन दर्शदिनमित्यनर्थकं तथापि विवाहमारभ्य चतुर्थीमध्ये श्राद्धाधिकारिणां श्राद्धदिनं तदनधिकारिणां दर्शदिनमित्यर्थान्न वैयर्थ्यम् । *वृत्ते विवाहे इति । क्षयाहपरं, दर्श-

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्तुं नान्दीमुखं द्विजः ॥

वृद्धिं विनापकर्षे दोषमाह तत्रैवोशनाः—

वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ।
स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥ इति ।

मेधातिथिः—

प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आ(१)चतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥

स्मृत्यन्तरे—

*सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते *वृद्ध्युत्तरनिषेधनात् ॥

स्मृतिसारावल्याम्—

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
एकस्मिन्मण्डपे चैव न कुर्यान्मण्डनद्वयम् ॥

*सहोदरविषयमेतत् । यमः—

एकोदरप्रसूतानामेकस्मिन्वासरे पुनः ।
वि(२)वाहो नैव कुर्वीत मण्डनोपरि मुण्डनम् ॥

---

श्राद्धं तु लुप्यत एव । अनुमासिकानामप्यपकर्षमाह—*सपिण्डीकरणादिति । अत्रानुमासिकापकर्षस्य कालादर्शादिभिः मृततिथावेवाभिधानाच्चौलोपनयनविवाहाधानेष्टापूर्त्तेषु अपकर्षः, तत्कालालाभात्, न तु गर्भाधानाद्यन्नप्राशनान्तेष्विति निपुणतरमुपपादयिष्यामः । *वृद्ध्युत्तरेति । वृद्ध्युत्तरं तु प्रेतकर्माणि लुप्यन्ते । मनः समाधानाय तु रुद्रैकादशिनीपूजादिकमाचरन्ति । *सहोदरेति । तस्यैव "ज्येष्ठो भ्राता यदा तिष्ठेत्" इत्यादौ सोदरस्यैव

---

(१) 'आचतुर्थे' ख० ।   (२) 'विवाहे' ख० ।

गार्ग्यः—

*भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
न कुर्यान्मङ्गलं किंचिदेकस्मिन्मण्डपेऽहनि ॥
एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः ।
क्षौरं चैव विवाहं च मौञ्जिबन्धनमेव च ॥

ज्योतिर्विवरणे—

एकोदरयोरेकदिनोद्वहने भवेन्नाशः ।
*नद्यन्तर एकदिने केऽप्याहुः*संकटे च शुभम् ॥

ऊर्ध्वं विवाहाच्छुभदो नरस्य
नारीविवाहो न ऋतुत्रयं स्यात् ।
नारीविवाहात्तदहेऽपि शस्तं
नरस्य पाणिग्रहमाहुरार्याः ॥

भिन्नमातृजयोस्तु एकवासरे विवाहमाह मेधातिथिः—

पृथङ्मातृजयोः कार्यो*विवाहस्त्वेकवासरे ।
एकस्मिन्मण्डपे कार्यः पृथग्वेदिकयोस्तथा ॥
*पुष्पपट्टिकयोः कार्यं दर्शनं न शिरःस्थयोः ।

---

भ्रातृपदेन व्यवहारात् । *भ्रातृयुगे इति । भ्रातृयुग्मस्य स्वसृयुग्मस्य च एकस्मिन्नहनि एकस्मिन्मण्डपे वा मङ्गलं न कुर्यात् । पृथगयं निषेधः, समुच्चये मानाभावात् । यत्तु भ्रातृयुगं स्वसृयुगं च भिन्नमातृकं ग्राह्यमिति, तदसत् । भ्रात्रोर्युगमित्यत्र भ्रात्रोरित्यादि सरूपैकशेषो न स्यात् । समानार्थत्वाभावेन सारूप्याभावात् । *नद्यन्तर इति । नद्यादिव्यवधाने इत्यर्थः । आदिपदाद्देशादिव्यवधानं ग्राह्यम् । *संकटे चेति । विनायकशान्तेः संकटापहारकतया सा कार्या । *विवाहस्तु इति । पृथङ्मातृजयोरपि एकस्योपनयनमपरस्य विवाह इत्येवं जातीयास्तु संस्कारा एकस्मिन्नहनि न भवन्तीत्यर्थः । *पुष्पेति । उभाभ्यां भगिनी-

भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत् ॥

यमयोस्तु विशेषो भट्टकारिकायाम्—

एकस्मिन्वत्सरे चैकवासरे मण्डपे तथा ।
कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥

ज्योतिर्निबन्धे नारदः—

*प्रत्युद्वाहो नैव कार्यो*नैकस्मै दुहितृद्वयम् ।
न चैकजन्ययोः पुंसोरेकजन्ये तु *कन्यके ॥
*नैवं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम् ।
नैकजन्ये तु कन्ये द्वे पुत्रयोरेकजन्ययोः ॥
न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन ॥ इति ॥

---

भ्यां शिरस्थयोः पुष्पपट्टिकयोर्दर्शनं न कार्यमिति सम्बन्धः । एतावता परस्परवरशिरःस्थपुष्पपट्टिकदर्शनं परस्परकन्ययोर्निषिद्धमिति लभ्यते ।

*प्रत्युद्वाह इति । जामातुर्भगिन्याः स्वपुत्रविवाह इत्यर्थः । *नैकस्मै इति (१)देयमिति शेषः । यद्यपि यथाश्रुते दुहितृद्वयमित्युपादानान्मृतायां प्रथमदुहितरि द्वितीयदुहितृदानेऽनुमतिर्लभ्यते । तथापि द्वयस्य दुहितृनिष्ठस्य दानकर्मत्वबाधात् द्वे दुहितरौ नदद्यादित्यर्थो वाच्यः । तत्र यदि साहित्यं समासार्थो विवक्षितः तदा सहिते दुहितरौ न दद्यादित्यर्थः स्यात् । तत्र जीवत्यां प्रथमायामसाहित्येन द्वितीयादाने विरोधो न स्यात् । अथ साहित्यमतन्त्रम् । तदा कथं मृतायां दुहितरि द्वितीया दीयेत जीवनस्यानुपादात् । तस्माद्दत्तदुहितृकाय दुहितरं न दद्यादित्यर्थ इति । *कन्यके न देये इत्यर्थः । *नैवमिति सापत्नपरम् । मुण्डनद्वयं सपत्नयोरपि न भवतीत्यर्थः ।

---

(१) 'देये इति' ख० ।

*कन्याया रजोदर्शने तु अपरार्के संवर्तः—

माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

हारीतः—

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या *वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

देवलात्रिकश्यपाः-पूर्वार्धं तदेव ।

भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ।
यस्तां समुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ॥
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ।

---

यत्तु "द्वादशे वृषली भवेत्" इत्युक्तं तद्रजस्वला चेत्, 'रौरवं तु रजस्वलाम्' इत्युक्तेः । तदेव मपञ्चयति—*कन्याया इति । *वृषलीति । त्रिधाद्वृषलीदेवलोक्ता—

वन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥ इति ।

तत्र रजस्वलापरिणये दोषः । रजोदर्शनाभावे तु द्वादशाब्द्या अपि विवाहे न दोषः । यतः 'द्वादशे वृषली भवेत्' इत्यादौ वृषलीपदं रजस्वलार्थकम् । तथाच विवाहात्पूर्वं रजोदर्शनं यथा न भवति तथा कार्यमिति, न तु द्वादशे वर्षे तस्या वृषली संज्ञा, अन्यथा—

त्रिंशद्वर्षोद्वहेत्कन्यां यद्वा द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

त्र्यष्टवर्षश्चतुर्विंशतिवर्षः ।

त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम् ।
एकविंशति वर्षो वा सप्तवर्षामवाप्नुयात् ॥

इति मनुवचनाविरोधात् । तस्याश्चोद्वाहो "यस्तां समुद्वहेत्"

माधवीये बौधायनः—

*त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ॥

विष्णुः—

*ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ॥

अत्र वरस्य दोषाभावमाह यमः—

कन्या द्वादश वर्षाणि याऽप्रदत्ता वसेद् गृहे ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥

इत्यादिना निषिध्यते । यत्तु मनुः—

काममामरणात्तिष्ठेद् गृहे कन्यर्त्तुमत्यपि ।
न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् ॥ इति ।

तत् सगुणप्रशंसार्थम् ,

दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि गुणविहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

इति बौधायनेनोपरोधनेन रजस्वलात्वप्रयोजको न भवेदित्युक्तेः । यदि ऋतुदर्शनेऽपि पित्रादिर्न ददाति तदा—*त्रीणिवर्षाणीति ।

ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ।

इति वाक्यशेषात् । *ऋतुत्रयमुपास्यैवेति गुणवद्वरपरम् । इयं च प्रतीक्षा दातृसद्भावे । तदभावे तु—

यदा तु कश्चिन्नैव स्यात्कन्या राजानमा(१)व्रजेत् । इति ।

तदभावे तु "(२)गम्यंत्वभावे" इति वचनात्स्वयं गम्यं गमनार्हं वरः कार्यः कन्ययैव इति । गुणानाह यमः—

कुलंच शीलं च वयश्च रूपं विद्यां च वित्तं च सनाथतां च ।
एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ॥

सनाथता पोषकादियुक्तता । शेषम् उदारत्वबहुभार्यत्वादि ।

---

(१) 'चरेत्' घ० ङ० । (२) 'गम्यत्वभावे' घ० ङ० ।

*एवञ्चोपनतां पत्नीं नावमन्येत्कदाचन ।
न तु तां*बन्धकीं विद्यान्मनुः स्वायंभुवोऽब्रवीत् ॥

मनुः—
अलंकारं नाददीत पितृदत्तं स्वयंवरे ।
पितृदत्तं मातृदत्तं स्तेयी स्याद्यदि*तं हरेत् ॥

वरं प्रत्याह—
पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिबोधनात् ॥

---

कात्यायनः—
दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् ।
शूद्राणां निर्धनानां च न देया कन्यका बुधैः ॥

अयं च न शाकं भुञ्जीतेतिवद् दृष्टार्थो निषधः । तत्रापि निर्धनानां निषेधः कलिपुरुषाणामसन्तोत्साहहेतुः । किञ्च—
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्जयेत् ।
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ॥
क्षय्यामयाव्यपस्मारि श्वित्रिकुष्ठिकुलानि च ॥

इत्यादि । निष्पुरुषः षण्ढः,
यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् ।
पुमान्स्याल्लक्षणैरेतैर्विपरीतस्तु षण्ढकः ॥

निश्छन्दो वेदाध्ययनहीनः । *एवञ्च स्वयंवरे च । *बन्धकीं सपापां व्यभिचारिणीं च,
त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
अदीयमाना भर्तारं यदि गच्छेत्स्वयं पतिम् ।
नैनः किञ्चिदवाप्नोति न च पुंसाऽधिगच्छति ॥

इति मानवात् । अदीयमाना दात्रपेक्षणात् तदभावाद्वा । पुंसा परेणेति शेषात्, न च व्यभिचारिणीत्यर्थः । *तम् अलङ्कारम् ।

अत्र प्रायश्चित्तमुक्तमाश्वलायनेन—

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुचिं च कारयित्वा तामुद्वहेदानृशंस्यधीः ॥
पिता ऋतून्स्वपुत्र्यास्तु गणयेदादितः सुधीः ।
दानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥
दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥
दद्याद्वा *ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ।
तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥
*उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥
*तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः ॥ इति ॥

मदनपारिजाते यज्ञपार्श्वः—

*विवाहे वितते तन्त्रे *होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
*युञ्जानामाहुतिं हुत्वा तत *स्तन्त्रं प्रवर्तयेत् ॥

---

*ब्राह्मणेषु अतीत ऋतुसंख्येष्वित्यन्वयः । अयमर्थः—उक्तप्रकाराणामन्यतमाश्रयणेन दाता कन्यादाने योग्यः । *उपोष्येति । दृष्टरजस्कायाः कन्याया उपवासत्रयान्ते गोपयःपानेन अदृष्टरजसे कुमार्यै सरत्नभूषणदानेन च विवाहयोग्यता । *तामुद्वहन्निति । वरस्य कूष्माण्डहोमेन तदुद्वाहयोग्यतेति । होमकाले रजोदर्शनेत्वाह—*विवाहे इति । *होमकाले विवाहहोमकाले । *युञ्जानामाहुतिं हुत्वेति । प्रयोगरत्ने युञ्जानो मन्त्रः तैत्तिरीयप्रसिद्धः । *तन्त्रं होमतंत्रम् । यद्वा, भट्टोजी —

विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला।
त्रिरात्रं दम्पती स्यातां पृथक्शय्याशनासनौ॥
चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि।
विवाहहोमं कुर्यातामित्यादि स्मृतिसंग्रहे॥ इति॥

बौधायनसूत्रे—"अथ यदि कन्योपसाद्यमाना उह्यमाना वा रजस्वला स्यात्तामनुमंत्रयीत।

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ।
पुमानिन्द्रश्च सूर्यश्च पुमांसं च दधात्वियम्॥"इति॥

अ(१)थवा दशरात्रमलंकृत्य प्राशयेत् पञ्चगव्यम्। अथ शुद्धां कृत्वा विवहेदिति क्वचित्पाठः। एवम् अग्रेदिधिषूरपि न परिणेया, तत्परिणये प्रायश्चित्तस्मरणात्। तथाच वसिष्ठः—'अग्रे दिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा तस्मै दत्त्वा पुनर्निर्विशेत्' इति। अथवा प्रायश्चित्तान्तरं—'परिवित्ति—परिवेतृ—पर्याहित—पर्याधातृ—अग्रेदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्यम्' इति। अधिकमन्यत्र बोध्यम्। तयोः स्वरूपमाह देवलः—

ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा।
या, साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता॥ इति॥

अत्रापरार्कानुयायिनः—ज्येष्ठायामविरूपायामिति पूरणीयम्। विरूपायां तु शातातपः—

नाग्नयः परिविन्दंति न वेदा न त(२)पांसि च।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका॥ इति॥

ज्येष्ठेऽधिकारिणि श्राद्धमकुर्वत्यपि कनिष्ठः कुर्वन्न परिविद्यते, एवं विरूपायां ज्येष्ठायामनूढायामपि कनिष्ठाविवाहो न दोषायेत्यर्थः। ज्येष्ठा चेत्कुत्सितदीर्घकुत्सितरोगार्ता केनापि नोह्यते तदा रजस्वलाभयात्तत्प्रागेव ज्येष्ठायामनूढायामपि कनिष्ठां ददन् गृह्णंश्च

(१) 'अथ द्वादशरात्रमलं' घ० ङ०। (२)'तपेऽपि च' घ० ङ०।

बौधायन(१)सूत्रम्—'अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयेत् ।

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।

पुमानिन्द्रश्च सूर्यश्च पुमांसं च दधात्वियम् ॥' इति ॥

अथ द्वादशरात्रमलंकृत्य प्राशयेत्पञ्चगव्यमथ शुद्धां कृत्वा विवहेत् ॥

अत्र*गान्धर्वाद्यष्टौ विवाहाः, *तद्व्यवस्था चाकरे ज्ञेया । मनुः(२)—

---

न दोषभागिति भाव इत्याहुः ।

एवं पातित्यानन्तरोत्पन्नकन्याग्रहणे न दोषः,

कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम् ।

इति याज्ञवल्क्यात् । एषां पतितानां पातित्यानन्तरोत्पन्नां रिक्तां कन्यां स्वयमेवोद्वहेत्, न पतितहस्तादिति विज्ञानेश्वरः । "पतितोत्पन्नः पतितो भवति अन्यत्र स्त्रियाः" इति वसिष्ठेन तस्याः पातित्यनिषेधाच्च ।

*गान्धर्वादीति । तथाच मनुः—

ब्राह्मो दैवस्तथाचार्षः प्राजापत्यस्तथाऽसुरः ।

गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमो मतः ॥ इति ॥

तल्लक्षणानि सफलान्याहाश्वलायनः—"अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः, तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः । ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो, दशावरान्दश परान् पुनात्युभयतः । सहधर्मं चरतामिति प्राजापत्यः, अष्टावरानष्ट परान् पुनात्युभयतः । गोमिथुनं दत्त्वो-

---

(१) 'सूत्रे' क० ख० ।

(२) इत आरभ्य 'गर्हितः' इत्यन्तो ग्रन्थः क्वचिन्न दृश्यते । टीकायां तु व्याख्यातः परं त्वत्र न तस्यावश्यकतेति भाति । 'तद्व्यवस्था चाकरे ज्ञेया' इत्युक्तेः ।

*षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥

चतुर *आसुरगान्धर्वराक्षसपैशाचान् । *तान् राक्ष-

---

पयच्छेत स आर्षः, सप्तावरान्सप्तपरान् पुनात्युभयतः। मिथः समयं कृत्वोपयच्छेत स गान्धर्वः । धनेनोपतोष्योपयच्छेत स आसुरः । सुप्तानां प्रमत्तानां वाऽपहरेत्स पैशाचः । हत्वा भित्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः'' इति । सहधर्ममिति सहचरणस्य सिद्धत्वात्पुनर्विधानं यावज्जीवं तदर्थं, न तु मध्ये आश्रमान्तरस्य परिग्रह इत्यर्थः ।

सहोभौ चरतां धर्ममिति वाचानुभाष्यतु ।
कन्याप्रदानमुद्दिश्य प्राजापत्यो विधिः स्मृतः ॥

इति मनुवचनेऽप्येवमेव । अत्र पुनात्युक्त्यनुक्तिभ्यां गुणदोषौ सूचितौ । तत्राह मनुः—

ब्राह्मादिषु विवाहेषु चतुर्थे वाऽनुपूर्वशः ।
ब्रह्मवर्चस्विनःपुत्रा जायन्ते शिष्टसंमताः ॥
इतरेष्वेव शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥

नृशंसा हिंस्राः । ब्रह्मद्विषः वेदद्विषः । *तद्व्यवस्थेति । तथाच मनुः—

चतुरो ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुः ।
राक्षसं क्षत्रियस्यैवमासुरं वैश्यशूद्रयोः ॥ इति ।

राक्षसः क्षत्रियस्य मुख्यः । आसुरो वैश्यशूद्रयोर्मुख्यः । अनुकल्पमाह—*षडिति । ब्राह्मणस्यानुपूर्व्या क्रमेण ब्राह्मादिआसुरान्ताः षड् धर्म्याः । क्षत्रियस्य चत्वारो अवरा धर्म्याः । अवरानाह—*आसुरेति । *तानिति । अवरानित्यर्थः । तथा च वैश्यशूद्रयोरासुरगान्धर्वपैशाचास्त्रयो धर्म्या इति फलितम् ।

सवर्ज्यान्वैश्यशूद्रयोः। स एव—*'आसुरं वैश्यशूद्रयोः'। हेमाद्रौ पैठीनसिः—*'राक्षसो वैश्यस्य, पैशाचः शूद्रस्य।' प्रचेताः—'पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानां च'। मनुः—

राक्षसस्तथासुरो वैश्ये शूद्रे चा*न्त्यस्तु गर्हितः।
*क्षत्रियादेः संकटे पैशाचमाह माधवीये वत्सः—

---

मयूखकृतस्तु षडेव विप्रस्य धर्म्या नेतरौ। एवञ्च क्षत्रियादेर्ब्राह्माद्यनुज्ञा भवति। आसुरादयश्चत्वारः क्षत्रियस्य धर्म्या इति सर्वे। वैश्यशूद्रयोः(१) राक्षस वर्जमेत एव एवञ्च राक्षसः क्षत्रियस्यैवेति फलितमित्याहुः।

प्राजापत्यादि पञ्चविवाहानवधीकृत्याह मनुः—

पञ्चानां च त्रयो धर्म्या द्वावधर्म्यौ स्थिताविह।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कथञ्चन॥
पृथक् पृथग्विमिश्रौ वा विवाहौ पूर्वचोदितौ॥ इति।

*आसुरमिति मुख्यः कल्पः। *राक्षस इति अनुकल्पः।

अन्येतु आसुरं वैश्यशूद्रयोरिति मानवान्मुख्यासुरधर्मेणायं कार्यः। "आसुरो द्रविणादानात्" इति वरादुद्रविणमादाय पित्रादिभिर्यद्दानरहितं कन्यार्पणं क्रियते स आसुरो विवाह इत्यर्थमाहुः।

( पैशाच(२) इति मुख्यः आसुरो गर्हित इति सम्बन्धः। )
*अन्त्यः पैशाचः। अत्र कश्चिद्विकल्पोऽप्यूह्यः। *क्षत्रियादेरिति।

---

(१) 'राक्षसवर्जमेव तत्' घ० ङ०।
(२) कंसान्तर्गतं नास्ति घ० ङ०।

सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य या ।
*चौर्येणापि विवाहेन सा विवाह्या रहः स्थिता ॥
गन्धर्वादिविवाहेष्वप्युदकपूर्वकं दानमाह तत्रैव यमः—
(१)नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥
पराशरमाधवीये देवलोऽपि—
गन्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकः ॥
((२)त्रैवर्णोक्तेर्गान्धर्वादौ विप्रवर्जमधिकार उक्तः ।)
तत्रैव परिशिष्टे—
*गान्धर्वासुरपैशाचा विवाहो राक्षसश्च यः ।
पूर्वं(३) परिग्रहस्तेषु पश्चाद्धोमो विधीयते ॥
अतो होमादावकृते भार्यात्वाभावाद्वरान्तराय देया । तथाच तत्रैव वसिष्ठबौधायनौ—
*बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ इति ।

---

विप्रादीनां सर्वेषामित्यन्ये । सङ्कटे उक्तविवाहासम्भवे । *चौर्येणापीति । पैशाचेनापीति तात्पर्यम् । आसुरं निन्दति कश्यपः—
क्रीता द्रव्येण या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ॥ इति ।
एतच्चात्मार्थं धनग्रहणे इत्युपरिष्टात् । *गान्धर्वादीति । गान्धर्वादिविवाहचतुष्टये स्वीकारानन्तरं विवाहहोम इत्यर्थः । *बलादिति । गान्धर्वाद्युपलक्षणम् । नन्वत्र सर्वविवाहेष्वेव संस्काराभावेऽन्यस्मै दानस्य साम्याद्बलादपहारे राक्षसपैशाचयोरिति विशेषोपादानं व्यर्थमिति चेत् ? नैवम् । मन्त्रैर्यदि न संस्कृता सं-

---

(१) 'नोदके न वाचा वा' क० । (२) कंसान्तर्गतं नास्ति क० ।
(३) 'परिश्रयस्तेषु' ग० ।

अत्र मन्त्रसंस्काराभावेऽन्यस्मै दानस्य सर्वविवाहेषु साम्याद्बलादपहारे राक्षसपैशाचयोर्विशेषवचनं व्यर्थम् । तेन तयोर्यदि न संस्कृता संस्कृता वेत्यावृत्य कन्यानुमत्यभावेऽन्यस्मै देयेति व्याख्येयम् । मदनपारिजाते नारदः—

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां च निष्ठा विज्ञेया विद्वद्भिः सप्तमे पदे ॥

स्मृतिचन्द्रिकायामपरार्के चैवम् ।

आशौचे तु याज्ञवल्क्यः—

*दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥

केषामित्यपेक्षिते ब्रह्मपुराणे उक्तम्—

दातुः प्रतिग्रहीतुश्च कन्यादाने च नो भवेत् ।
विवाहयिष्णोः कन्याया लाजहोमादिकर्मणि ॥ इति ।
व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इति विष्णुवचनाच्च । प्रारम्भस्तेनैवोक्तः—

प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ इति ।

---

स्कृता वेति तन्त्रावृत्त्यादिनार्थोपगमात्कन्यानुमत्यभावेऽन्यस्मै दातव्येति व्याख्यानात् ।

*दाने इति । दाने तथाच क्रतुः—

पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति । इति ।

विवाहे पूर्वसम्भृतसम्भारे । विवाहपदं चौलोपनयनादिसंस्कारोपलक्षणम् । यज्ञे वृषोत्सर्गादौ । यज्ञपदं पूर्वप्रवृत्तप्रतिष्ठारामाद्युत्सवमात्रोपलक्षणम् । संग्रामे "संग्रामे समुपोढे राजा-

वरणमिति*मधुपर्कपरम् ।

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः ।
पश्चादशौचे पतिते न भवेदिति निश्चयः ॥

इति ब्राह्मोक्तेः । मधुपर्कात्पूर्वं तु भवत्येवाशौचमिति शुद्धिविवेकः । रामाण्डारभाष्येऽप्येवम् । नान्दीमुखावधिश्च स्मृत्यन्तरे—

*एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।
त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते ॥

आरम्भाभावेऽपि लग्नान्तराभावे गद्यविष्णुः—

*न देवप्रतिष्ठा*विवाहयोः पूर्वसंभृतयोरपि । इति ।

*अत्र प्रायश्चित्तमाह मदनपारिजाते विष्णुः—

अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयात् घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुद्ध्यति सूतकी ॥

संग्रहेऽपि—

संकटे समनुप्राप्ते सूतके समुपागते ।
कूष्माण्डीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीम् ॥
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् ।
यदैव सूतकप्राप्तिस्तदैवाभ्युदयाक्रिया ॥

---

नं संन्नाहयेत्" इति सन्नहने (१)प्रास्थानिकहोमादौ च । देशविप्लवे देशोपप्लवशमनार्थे शान्तिकर्मणि । आपदि देशपलायनादौ । *मधुपर्कोति । वरणवत्सु कर्मसु तच्छून्येषु तदीयाद्यपदार्थ इत्यग्रे स्पष्टम् । आवश्यके त्वाह—*एकविंशतीति । सूतकादिसम्भावनायां पूर्वमप्येतावति काले नान्दीश्राद्धं कार्यमित्यर्थः । *न देवेति । आशौचं नेत्यर्थः । *विवाहयोरिति, । "यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्मणि । सद्यः शौचम्" इतिस्मृत्यन्तराच्च । *अत्रेति । आरम्भाभावेऽप्य(२)ग्रे कालान्तरा-

---

(१) 'प्रास्थानिक शान्तिहोमादौ' घ० ङ० । (२) 'प्यत्र' घ० ङ० ।

अन्नादिषु विशेषः षट्त्रिंशन्मते—

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥

परैरसगोत्रैः ।

भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥

एतदाशौचात्पूर्वमपृथक्कृतान्नविषयम् । तत्र शेषमन्नं त्याज्यमित्यर्थः । पृथक्कृतेषु तु बृहस्पतिराह—

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसंकल्पितान्नेषु न दोषः परिकीर्तितः ॥ इति ॥

धर्मार्थं विवाहकरणे फलमुक्तं महाभारते—

ज्ञात्वा स्ववित्तसामर्थ्यमेकं चोद्वाहयेद्द्विजम् ।
तेनाप्याप्नोति तत्स्थानं शिवभक्तो नरो ध्रुवम् ॥

अपरार्के दक्षः—

मातापितृविहीनं तु संस्कारोद्वाहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥

मदनरत्ने भविष्ये—

विवाहादिक्रियाकाले तत्क्रियासिद्धिकारणम् ।
यः प्रयच्छति धर्मज्ञः सोऽश्वमेधफलं लभेत् ॥

कन्यागृहे भोजननिषेधोऽपि तत्रैव—

अप्रजायां तु कन्यायां न भुञ्जीत कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ॥

अपरार्के आदित्यपुराणे—

विष्णुं जामातरं मन्ये तस्य कोपं न कारयेत् ।
अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥
ब्रह्मदेयां न वै कन्यां दत्त्वाश्नीयात्कदाचन ।
अथ भुञ्जीत मोहाद्वेत्पूयाशी नरके वसेत् ॥

तत्रैव कश्यपः—

*अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा॥

यन्त्रनिर्मुक्तं नूतनम्॥

विवाहमध्ये स्त्रिया सह भोजनेपि*न दोष इत्याह हेमाद्रौ प्रायश्चित्तकाण्डे गालवः—

विवाहकाले यात्रायां पथि चौरसमाकुले।
असहायो भवेद्विप्रस्तदा कार्यं द्विजन्मभिः॥
एकयानसमारोह एकपात्रे च भोजनम्।
विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक्॥
अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत्॥

---

भावे इत्यर्थः। एतच्च जननाशौचे एव, न तु मरणाशौचे एतत्प्रायश्चित्तस्यास्पृश्यत्वावगमेऽसामर्थ्यात्। एवञ्च बहूनां सम्भाराणां सम्पादितानां साधारणशक्तावेव "नदेव" इत्यादि वाक्यमिति बोध्यम्।

*अहतमिति। तच्च प्रोक्षणेन शुद्धमिति वक्ष्यते। *न दोष इति। अन्यदा तु दोष एव। "ना(१)श्नीयाद्भार्ययासार्द्धम्" इति मनुवचनात्। तत्र सार्द्धम् (२)एकपात्रे इत्यर्थः। (३)एककाले इत्यन्ये। यत्तु—

ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन।
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः॥

इत्यङ्गिरोवाक्यं तद्विवाहपरम्। एतेन—

ब्राह्मण्या भार्यया सार्द्धं क्वचिद्भुञ्जीत वाऽध्वनि।
अधोवर्ण्या स्त्रियासार्द्धं भुक्त्वा पतति तत्क्षणात्॥

---

(१) नाश्नीयाद् भार्यया सार्धं नैनामीक्षेत चाश्नतीम्। क्षुवतीं जृम्भमाणां वा न चासीनां यथासुखम्॥ इति।

(२) 'एकरात्रे' घ० ङ०। (३) 'एककाल' घ० ङ०।

मिताक्षरायामप्येवम् । रत्नमालायाम्—

मूलमैत्रमृगरोहिणीकरैः पौष्णमारुतमघोत्तरान्वितैः ।
भौमसौररविवारवर्जिते*पाणिपीडनविधिर्विधीयते ॥

अत्रानिष्टनक्षत्रादौ दानमुक्तं ज्योतिषे—

विपत्तारे गुडं दद्यान्निधने तिलकाञ्चनम् ।
प्रत्यरे लवणं दद्याच्छागं दद्यात्त्रिजन्मसु ॥

चन्द्रे च शङ्खं (१)लवणं च तारे
तिथौ विरुद्धे त्वथ तन्दुलांश्च ।
धान्यं च दद्यात्करणे च वारे
योगे विरुद्धे कनकं (२)प्रदेयम् ॥

विवाहमण्डपमाह वसिष्ठः—

षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।
मण्डपं तोरणैर्युक्तं तत्र*वेदीं प्रकल्पयेत् ॥
अष्टहस्तं तु रचयेन्मण्डपं वा त्रिषट्करम् ॥

दैवज्ञमनोहरः—

चित्रा विशाखा शततारकाश्विनी
ज्येष्ठाभरण्यौ शिवभाचतुष्टयम् ।
हित्वा प्रशस्तं फलतैलवेदिका
प्रदानकं कण्डनमण्डपादिकम् ॥

---

इति व्याख्यातम् । क्वचिद्विवाहेऽध्वनि चेत्यर्थात् । इदमपि न सर्वथा दोषाभावपरं किन्तु दोषाल्पत्वपरमिति माधवः । *पाणिपीडनेति ।

मुख्यो विवाहः पूर्वाह्णे मध्याह्ने चोत्तमोत्तमः ।
निशायां मध्यमः प्रोक्तः अपराह्णे तु गर्हितः ॥

इत्यात्रेयवाक्यं स्मर्तव्यम् ।

*वेदीमिति । ग्रन्थान्तरे तु—

---

(१) 'लवणे च' क० । (२) 'प्रदद्यात्' क० ।

हेमाद्रौ व्यासः—

कण्डनदलनयवारकमण्डपमृद्वेदिवर्णकाद्यखिलम् ।
तत्संबन्धिगतागतमृक्षे वैवाहिके कुर्यात् ॥

यवारकं 'चिकसा' इति प्रसिद्धम् ।

वैवाहिके तु दिवसे शुभे (१)वाथ तिथौ शुभे ।
चतुर्थिकं प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

वेदिमाह नारदः—

हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनि ॥
समां तथा चतुर्दिक्षु सोपानैरतिशोभिताम् ।
प्रागुदक्प्रवणारम्भां (२)स्तम्भैर्हंसशुकादिभिः ॥
एवंविधामारुरुक्षोन्मिथुनं साग्निवेदिकाम् ॥ इति ।

सप्तर्षिमते—

मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः ।
कार्यः षोडशहस्तो वा द्वि(३)षट्हस्तो दशावधि ॥
स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता ।

हस्तो वध्वाः । सोपानं पश्चिमतः उपरिभागे उक्त-परिमाणाद्भिन्नम् ॥

अथ मृदाहरणम् । ज्योतिर्निबन्धे नारदः—

कर्तव्यं मङ्गलेष्वादौ मङ्गलायाङ्कुरार्पणम् ।
नवमे सप्तमे वापि पञ्चमे दिवसेऽपि वा ॥
तृतीये बीजनक्षत्रे शुभवारे शुभोदये ।
सम्यग्गृहाण्यलंकृत्य वितानध्वजतोरणैः ॥
सह वादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् ।
तत्र मृत्सिकतां श्लक्ष्णां गृहीत्वा पुनरागतः ॥

---

(१) 'चाथ' क० । (२) 'स्तम्भ हंसशुकादिभिः' क०ख० ।
(३) 'न्यूनहस्तो दशावधि' क० ख० ।

मृन्मयेष्वथवा वैणवेषु पात्रेषु योजयेत् ।
अनेकबीजसंयुक्तां तोयपुष्पोपशोभिताम् ॥

शौनकः—

आधानं गर्भसंस्कारं जातकर्म च नाम च ।
हित्वान्यत्र विधातव्यं मङ्गलेऽङ्कुरवापनम् ॥

बृहस्पतिः—

आत्यन्तिकेषु कार्येषु कार्यं सद्योऽङ्कुरार्पणम् ॥

तत्रैव वाग्दानं हरिद्रावन्दनं च कार्यम् ।

ज्योतिःप्रकाशे—

*चतुर्थो मण्डपः श्रेष्ठः सप्तमः पञ्चमस्तथा ।
नवमैकादशौ श्रेष्ठौ नेष्टौ षष्ठतृतीयकौ ॥
विवाहभे स्वोदये वा कन्यावरणमाचरेत् ॥

वरस्यापि वरणमाह चण्डेश्वरः—

उपवीतं फलं पुष्पं वासांसि विविधानि च ।
देयं वराय वरणे कन्याभ्रात्रा द्विजेन वा ॥ इति ।

वाग्दानोत्तरं वरमरणेऽपरार्कस्मृतिचन्द्रिकायां वसिष्ठः-

अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि ।
*न च मन्त्रोपनीता स्यात् *कुमारी पितुरेव सा ॥

---

विवाहे श्रीधरी वेदी विंशत्यस्रसमन्विता ।

इत्युक्तम् । त्रिंशतिकोण इत्यर्थः । तत्प्रकारमग्रे वक्ष्यामः ।

*चतुर्थ इति । अष्टहस्तमारभ्य विंशतिहस्तान्ताः सप्त, पञ्चविंशतिहस्तः, पञ्चाशद्धस्तः, शतहस्तः, सहस्रहस्तश्चेत्येकादश मण्डपाः । चतुर्थः चतुर्दशहस्तः । आद्यौ द्वौ अष्टमश्च न विहिता न निषिद्धाः । *न च मन्त्रोपनीता स्यादिति । मन्त्रोपनयनं पाणिग्रहणादिकं विना वाचा दानमिवाद्भिर्दानमपि न भार्यात्वोत्पादकमित्यर्थः ।

नोदकेन न वा वाचा कन्यायाः पतिरिष्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥

इति वाक्यान्तराच्च । तथाच सप्तपदीपरिक्रमणात्प्राक् वरमरणे विधवात्वं नास्तीति भावः । किन्तु मनुः--

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥

एतद्वचनेन पतिः पूर्व एव, पश्चाद्विवाहितो देवरस्तु तदीयधनान्तरवदस्या अपि भोक्तेति प्रतीयते । *कुमारी इति । सा चान्यस्मै देयेत्यभिप्रायः । तथाच पराशरः--

नष्टे मृते प्रव्राजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ इति ।

वाग्दानानन्तरं पाणिग्रहणात्प्राक् पतौ (१)सम्भावितोत्पत्तिकपतित्वके नष्टे दूरदेशगमनेनापरिज्ञातवृत्तान्ते । शेषं सुगमम् ।

स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राग्विधीयते ।
वरणाद्ग्रहणं पाणेः स संस्कारो विलक्षणः ॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ॥

इति नारदवाक्याच्च । स्त्रीपुंसयोः संसर्गात्प्राक् त्रयं क्रियते वरणं पाणिग्रहणं सप्तपदीप्रक्रमश्चेति । तत्र वरणं वरस्य सम्प्रदानत्वार्थं प्रार्थनं वाग्दानम् । तत्र तयोर्वरणपाणिग्रहणयोर्मध्ये वरणमनियतं यतस्तद्दोषदर्शनात्परावर्त्तते इत्यर्थः । अत्र वरणमनियतमित्युपादानाद्यदि पाणिग्रहणसप्तपदीक्रमणान्तं क्रियते, तदा दुष्टोढापि न परावर्त्तते इति सिद्धम् । अत एव बलादपहारप्रसङ्गे "पाणिग्रहणिका मन्त्रा" इत्युक्तम् । तथाच तत्रापि पाणिग्रहणादौ जातेन परावृत्तिः । एवं 'विकर्मस्थ' इत्यत्रापि । एवञ्च—

न एतत्तु परे चक्रुर्नापरे जातु साधवः ।
यदन्यस्याभ्यनुज्ञाता नरस्यान्यस्य दीयते ॥

सकृदंशो निपतति सकृत्कन्या प्रदीयते ॥

इति निर्दोषविषयं सदोषजातपरिग्रहणादिविषयं च । दोषदर्श-

(१) 'सम्भाविताान्तिकपातित्वके' ग० ।

यत्तु नारदः--

उद्वाहितापि सा कन्या न चेत्संप्राप्तमैथुना ।
पुनःसंस्कारमर्हेत यथा कन्या तथैव सा ॥ इति ।

यच्च कात्यायनः--

वरो यद्यन्यजातीयः पतितः क्लीब एव च (१) ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोपि वा ॥
*ऊढापि देया सान्यस्मै सहावरणभूषणा ॥ इति ।

*इदं कलौ निषिद्धम् ।

*देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयते ।

(२)इत्यादिपुराणे कलौ निषेधात् । *दत्ताशब्द ऊढापरः 'ऊढायाः पुनरुद्वाहम्' इति हेमाद्रावुक्तेः । अत एव सगोत्रासपिण्डादिविवाहेपि--

भोगतस्तां परित्यज्य पालयेज्जननीमिव ।

इत्युक्तम् ।

देशान्तरगमने तु कात्यायनः--

*वरयित्वा तु यः कश्चित् *प्रणश्येत्पुरुषो यदा ।
ऋत्वागमांस्त्रीनतीत्य कन्यान्यं वरयेद्वरम् ॥

---

नादिति वरणस्य नियामकत्वमपि पूर्ववरस्य दोषेऽसतीति भावः । *ऊढापीति । वस्तुतस्तु ऊढापीत्यपिकाराद्वाग्दत्ताया एवान्यस्मै दानमनेनोच्यते । अन्यथा (३)सगोत्रोढाया अपि विवाहप्रसक्तौ "पालयेज्जननीमिव" इत्यनेन विरोधः स्यादिति । *इदमिति । उद्वाहितादानम् । *देवरेणेति । "अपुत्रां गुर्वनुज्ञातो देवर" इति विषयो वक्ष्यते । तर्हि वाग्दत्तायाः कथं कलौ दानं स्यादित्यत्राह-*दत्ताशब्द इति । *वरयित्वेति कन्याया अधार्यत्वे, त्रिऋतुपदात् । *प्रणश्येत देशान्तरं गच्छेत् अन्यथा प्रतीक्षावैय-

(१) 'वा' क० । (२) 'इत्यादित्यपुराणे' क० ख० ।
(३) 'सगोत्राया अपि' घ० ङ० ।

अपरार्के नारदोपि—

*प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम् ॥

शुल्कदाने तु मनुवसिष्ठौ—

*कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या*यदि कन्यानुमन्यते ॥

चन्द्रिकायां कात्यायनः—

प्रदाय शुल्कं गच्छेद्यः क(१)न्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ॥
*अनेकेभ्यो हि दत्तायामनूढायां तु तत्र वै ।
*पूर्वागतश्च सर्वेषां लभेताद्यवरस्तु ताम् ॥
पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः ।
अथागच्छे*न्नवोढायां दत्तं पूर्ववरो हरेत् ॥

---

ध्यात् । ऋतुः रजोदर्शनम् । *प्रतिगृह्य वाग्दत्तामङ्गीकृत्य शुल्कं दत्त्वा मरणं देशांतरगमनं वा, तत्राद्ये *कन्यायामिति । *यदीति । कन्याचेद्देवरमनुमन्यते तदा तस्मै देया, यदि तं नानुमन्यते तदाऽन्यस्मै देया इत्यर्थः । यद्यन्यस्मै दत्तायां कन्यायां पूर्ववर आयाति तदाह—*अनेकेभ्यो हीति । एतच्च निर्दोषैर्बहुभिर्वरणे कृते । आद्यवरः प्रथमवृत्तः । *पुरागत इति । पूर्वागत इति वा पाठः । अन्येन पाणिग्रहणात्पूर्वमागत इत्यर्थः । परागत इति पाठेऽप्ययमेवार्थः । *नवोढायाम् । नवेन नूतनेन द्वितीयादिना विवाहितायां स्वदत्तं शुल्कमात्रं लभेत न तु (२)कन्याम् । अनेनैव न्यायेन यदि कांचित् कश्चित्समन्त्रमूढ्वा तां त्यक्त्वा जीवनोपायार्थं देशान्परिभ्रमन्कानिचिद्दिनानि नागतः ततः सा कन्या तत्पित्रादिभिरन्यस्मै विवाहिता तदा सा द्वितीयवोढुर्न भार्या किन्तु पूर्ववोढुरेव, यद्यदूषिता चेत् । वृथाचेष्टायाः फलाज-

---

(१) 'कन्यायां स्त्री' क० । (२) 'कन्यामित्यर्थः' ङ० ।

याज्ञवल्क्यः--

*सकृत्प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ।
दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥

पूर्वस्य दोषसत्त्वे इदमिति विज्ञानेश्वरः । सम्बन्धतत्त्वे वसिष्ठः--

कुलशीलविहीनस्य पश्चाद्धि पतितस्य च ।
अपस्मारिविधर्मस्य रोगिणां वेषधारिणाम् ॥
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च ॥

मनुः--

षण्ढान्धबधिरादीनां विवाहोऽस्ति यथोचितम् ।
विवाहासम्भवे तेषां कनिष्ठो विवहेत्तदा ॥
पितृव्यपुत्रे सापत्ने परदारसुतेषु च ।
विवाहाधानयज्ञादौ परिवेदो न दूषणम् ॥

---

नकत्वादिति बोध्यम् । *सकृदिति । पूर्वार्द्धमदोषविषयम्, उत्तरार्थं सदोषविषयम् । एवञ्च "वाग्दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा चेति सप्तपुनर्भुवस्तां गृहीत्वा धर्मं न विन्देत्" इति बौधायनवाक्यमपि पूर्ववरस्यादोषत्वे एवेति भावः । यदि दत्तशुल्कामपि पिता न ददाति सा च ऋतुमती तदा तां शुल्कं च हरेदित्याह मनुः---

पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिबोधनात् ॥ इति ।

स पिता ऋतुकार्यापत्योत्पत्तिरोधात् । इदं च कन्यापूजार्थं शुल्कग्रहणे,

यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यं तु केवलम् ॥

इति मनूक्तेः । आत्मार्थग्रहणे तु--

क्रीता द्रव्येण या नारी न सा पत्न्यभिधीयते ।

*अन्यद्वक्तव्यं विस्तरभीतेर्नोच्यते इति दिक्।
अत्र नान्दीश्राद्धे विशेषं तदधिकारिविशेषं चाग्रे

---

न सा दैवे न सा पित्र्ये दासीं तां मु(१)नयो विदुः ॥
कन्याविक्रयिणो मूर्खा रहः किल्बिषकारिणः।
पतन्ति नरके घोरे दहन्त्यासप्तमं कुलम् ॥
इति यमोक्तेः। *अन्यदिति। वाग्दानोत्तरं कन्यायां दोषोपलम्भे वरस्त्यजेदित्याह मनुः,
विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम्। इति।
दोषास्तु—
दीर्घकुत्सितरोगार्त्ता व्यङ्गा संसृष्टमैथुना।
धृष्टाऽन्याहितभावा च कन्या दुष्टा प्रकीर्त्तिता ॥
इति नारदोक्ताः। अन्यस्मिन्नाहितो भावो यया साऽन्याहितभावा। कन्यादोषमनाख्यातुः पितुर्दण्डमाह याज्ञवल्क्यः—
अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ॥ इति।
अदुष्टात्यागे वरस्य दण्डमाह स एव—
अदुष्टां तु त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम्। इति।
दिगर्थस्तु याज्ञवल्क्यः—
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम्।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ इति।
वसनस्य दशा ग्राह्या शूद्रस्योत्कृष्टवेदने।
इति च। अग्रजन्मपदात्क्षत्रियेण वैश्याविवाहे प्रतोद एवेति। मनुः—
नाग्निहोत्रादिभिस्तत् स्याद्यज्ञातो ब्राह्मणस्य वा।
यत्कन्या विधिवद्दत्त्वा फलमाप्नोति मानवः ॥
सालङ्कृतकन्यादाने तु संवर्त्तः—
कूकुदश्चाश्वमेधी च प्राणदाता भयेषु च।

---

(१) 'कवयो' ङ।

वक्ष्यामः । इदं चा*द्यविवाहे पिता कुर्याद्द्वितीयादौ वर एव,

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥

इति स्मृतेः । त्रिकाण्डमण्डनोपि--

पित्रोस्तु जीवतोः कुर्यात्पुनः पाणिग्रहं यदा ।
पितुर्नान्दीमुखश्राद्धं नोक्तं तस्य मनीषिभिः ॥

रेणुकाकारिका--

(१)उक्तकाले विवाहाङ्गं कुर्यान्नान्दीमुखं पिता ।
देशान्तरे विवाहश्चेत्तत्र गत्वा भवेदिदम् ॥

लग्नघटीस्थापनमाह नारदः--

षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ।
कुर्यात्पातालवत्ताम्रपात्रं तद्दशभिः फलैः ॥
ताम्रपात्रे जलैः पूर्णे मृत्पात्रे वाथवा शुभे ।
मण्डलार्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत् ॥

तत्र मन्त्रः--

मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा ।
भव भावाय दम्पत्योः कालसाधनकारणम् ॥ इति ॥

वरस्य मधुपर्कमाह याज्ञवल्क्यः—

---

समं यान्ति रथैरेते त्रयो वै नात्र संशयः ॥ इति ।

एवम् 'अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः' इत्युक्तेः कन्यादानं विवाहः, दानविवाहपदयोः सामानाधिकरण्यात् । 'चौलकर्मोपनयनगोदानविवाहाः' 'सार्वकालमेके विवाहम्' इत्यत्र तु पाणिग्रहणादि । अन्यथा (२)"एषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात्" इति विवाहात्प्रागुक्तहोमासङ्गत्यापत्तेः कन्यादानात्प्राग्होमासम्भवादित्यादि ।

*आद्यविवाहे इति । विशेषो वक्ष्यते । *स्वगृह्यादे-

---

(१) 'उक्ते काले' क० ख० । (२) 'एषां' नास्ति ङ ।

प्रतिसंवत्सरं त्वर्च्याः स्नातकाचार्यपार्थिवाः ।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥

अत्र विशेषो गृह्यपरिशिष्टे—

वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।
मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि ॥

अत्र (१)वरदातृशब्दौ ऋत्विगाद्युपलक्षणम् । तदाहुः—'अर्च्यशाखया मधुपर्कः' इति । 'अर्च्यस्य यच्छाखीयं कर्म तच्छाखया मधुपर्कः' इति याज्ञिकाः । जयन्तस्तु 'वरणवत्सर्वत्र यजमानशाखयैव मधुपर्कः' इत्याह । (२)तत्तु नाद्रियन्ते वृद्धाः । अत्र—

पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः ।

इत्यादिगृह्यपरिशिष्टादेर्विष्टरादिलक्षणं मधुपर्कादिविधिश्च *स्वगृह्यादेर्ज्ञेयः ॥

कन्यादाने प्रपितामहपूर्वकमित्युक्तं स्मृत्यर्थसारे—

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

नान्दीमुखे इति बह्वृचाद्यतिरिक्तविषयम्, गृह्यपरिशिष्टे पित्राद्यानुलोम्याम्नानात् । व्यासः—

भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥

भुक्त्वेति *मधुपर्कं वैधभोजनपरम् । गृह्यपरिशिष्टे—

---

रिति । वरस्य पादप्रक्षालने प्रथमतः सव्यपादो ग्राह्यः 'दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्सव्यं शूद्राय' इति सूत्रात् । यजमानपत्नी तु वामतः,

सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः स्थिता ।
विप्रपादक्षालने च अभिषेके च वामतः ॥

इतिवचनात् । इत्यादि गृह्ये द्रष्टव्यः । *मधुपर्कं वैधेति ।

---

(१) 'वरदातृशब्दो' ख० । (२) 'यत्तु' ख० ।

कन्यां वरयमाणानामेष धर्मो विधीयते ।
प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः ॥

(१)मदनरत्ने ऋष्यशृङ्गः—

वरगोत्रं स(२)मुच्चार्य प्रपितामहपूर्वकम् ।
नाम संकीर्तयेद्विद्वान्कन्यायाश्चै*वमेव हि ॥
तिष्ठेत्पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत् ।
मधुपर्कार्चितायैनां तस्मै दद्यात्सदक्षिणाम् ॥
(३)उदपात्रं ततो गृह्य मन्त्रेणानेन दापयेत् ॥
गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ॥
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ।
भूमिं (४)गां चैव दासीं च वासांसि च स्वशक्तितः ॥
महिषीं वाजिनश्चैव दद्यात्स्वर्णमणीनपि ।
ततः स्वगृह्यविधिना होमाद्यं कर्म *कारयेत् ॥
यथाचारं विधेयानि माङ्गल्यकुतुकानि च ॥

एतत्कन्यादानं*त्रिः कार्यमिति शौनकः ।
गृहप्रवेशनीयहोमे विशेषमाहाश्वलायनः—

अर्धरात्रे व्यतीते तु परेद्युः प्रातरेव हि ।

---

भोजनान्तरकल्पने मानाभावात् । वस्तुतस्तु भुक्त्वापीत्यर्थः । तेन लौकिकभोजनस्याभोजनस्य च लाभः । एतेन प्रतिग्रहान्तरस्य मध्याह्नस्नानात्प्राक्कालीनत्वं नियतमिति सूचितम् । उपोषित इति । निशीथोत्तरं कन्यादाने तु दात्रा भोजनं कार्यं, तस्य परदिनत्वात् । *एवमेवेति । दृष्टान्तात्कन्यायां गोत्रप्रपितामहादिनामकीर्त्तनं च लभ्यते । *कारयेदिति । तत्र कुशाज्यादिसामग्री कन्यादात्रा देया । गृहप्रवेशनीयहोमश्च स्वगृहे कार्यः । दातृप्रार्थनया तद्गृहे वा । *त्रिःकार्यमिति । कन्यादानमभिधाय

---

(१) 'मदनरत्ने हेमाद्रौ च ऋ' क० । (२) 'समुच्चार्य' ख० ।
(३) 'उपपात्रं' क० । (४) 'गाश्चैव' क० ।

*गृहप्रवेशनीयः स्यादिति यज्ञविदो विदुः ॥ इति ।
औपासनहोमे विशेषमाह शौनकः—
धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयात् । "एवं त्रिः प्रयुज्य 'ऋतस्य हि शुरुधः' इति तिस्रो जपेत्" इति गृह्य(१)परिशिष्टादिति,

त्रिवारमेवं कृत्वा तु कन्यां दद्यात्ततः पिता ।
दाता पठेदिमं मंत्रं कन्या तारयतु स्वयम् ॥

इत्याश्वलायनस्मृतेश्च ।

वरोऽथ प्रतिगृह्णीयात्स्पृशेत्क इति मन्त्रतः ।

इत्यत्राथपदेन त्रिर्दानानन्तरलाभाच्च । कन्याप्रतिग्रहो दक्षिणेंऽसे कार्यः, 'दक्षिणेंऽसे कन्यामभिमृश्य क इदं कस्मा अदात्' इति गृह्यपरिशिष्टात् । होमानन्तरं पाणिग्रहणादि पतित्वप्राप्त्यर्थम्,

पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ।

इति वचनात् । कांस्यपात्रस्थकन्याञ्जलेरुपरिस्थे वराञ्जलौ दातृहस्ते भार्यया जलधारादानं कार्यम् । तेन कदाचित्कन्याहस्तासन्निधानेऽपि सकृत्कन्यादानं सिध्यत्येव । ये तु कांस्यपात्रस्थवराञ्जलेरुपरि दातृहस्ते इत्यादि मन्यन्ते तेषां कन्याञ्जलेरुपरि कन्याहस्तासत्त्वे द्विःकन्यादानं स्यात् । दात्रा च स्वयं कन्यादानजलं वरहस्ते दत्तं न स्यादिति । विष्णुधर्मे तु—

करे गृहीत्वा कन्यां तु दासदास्यो द्विजोत्तमः ।
करं तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहे ॥

इत्युक्तम् । तत्राधःस्थकन्याहस्तं दाता वरहस्ते पश्चाद् दद्यादित्यर्थः । *गृहेति । संस्कारमयूखे देवस्वामिभाष्ये—"उपशान्तेऽन्यमग्निमाहृत्य नष्टाहरणप्रायश्चित्तं कृत्वा परिचरणं स्यात्" इति । अयमर्थः—गृहप्रवेशनीयहोमारम्भात्पूर्वं द्वादशरात्रमध्येऽग्न्यनुगमने श्रोत्रियागारादग्निमानीयाऽऽयतने स्थाप-

(१) 'परिशिष्टादेति' घ० ।

यित्वा परिसमूहनादि कृत्वाऽऽज्यं संस्कृत्य 'अयाश्च' इत्येकामाहुतिं हुत्वा नित्यहोमं कुर्यात् । द्वादशरात्रोत्तरमाज्याहुतयो लाजाहुतयश्चा(१)दावर्त्तनीया इति । नारायणवृत्तौ तु 'यदि विवाहाग्निर्नष्टः स्यान्नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेत्' इत्युक्त्वा 'तच्च शास्त्रान्तरदर्शनात्' इत्युक्तम् । शास्त्रान्तरं च 'उपवासश्चान्यतरस्य भार्यायाः पत्युर्वा अनुगतेऽपि वोत्तरया जुहुयान्नोपवसेत्' इत्यापस्तम्बवचनम् । अन्यतरस्य कालस्याह्नोरात्रेर्वा सम्बन्धी भार्यायाः पत्युर्वा उपवासोऽनशनम् । (२)अपिवा अथवा उत्तरया 'अयाश्च' इत्येतयाऽऽज्येन जुहुयात्,नतूपवसेदित्यर्थः। (३)गृहप्रवेशनीयहोमोत्तरं द्वादशरात्रमध्ये अनुगमने उक्तप्रायश्चित्तमेव । तदूर्ध्वं तु विवाहहोमस्य गृहप्रवेशनीयहोमस्य चावृत्तिरिति । 'विवाहाग्निमुपसमाधाय' इति सूत्रे विवाहाग्निग्रहणान्न विवाहहोममात्रेणाग्नेर्गृह्यत्वसिद्धिः, किन्तर्हि विवाहहोमगृहप्रवेशनीयहोमाभ्याम् । तेनाग्निनाशे होमद्वयं कार्यमिति नारायणवृत्तिदर्शनात्, पाणिग्रहणसूत्रे नष्टाहरणप्रायश्चित्तमुक्त्वा "यदि वा वैवाह्ये दायविभागकाले गृह्यते गृहीतो वा नष्टो द्वादशरात्रमतिक्रान्तः तत उक्तया क्रियया पश्चाद्गृहीतो भवति । विवाहाज्याहुतयो गृहप्रवेशनीयाहुतयश्च हृदयाञ्जनं च भवति, न्यायात् । होमद्वयं चात्र समानतन्त्रं स्यात्" इति द्वादशरात्रपदगर्भनारायणवृत्त्युक्तेश्च । अत्र प्रमाणं गृह्यपरिशिष्टम् ।

अथ पुनराधानम् । "अनुगतेऽग्नौ शिष्टागारादग्निमानीयोक्तवदुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्याज्यमुत्पूय 'अयाश्चाग्ने' इत्येकामाज्याहुतिं हुत्वा यथापूर्वं परिचरेदेवमाद्वादशरात्रादत ऊर्ध्वं विवाहगृहप्रवेशहोमाभ्यामेकतन्त्राभ्यामादध्यात्"इत्यादि । गृह्यकारिका च—

> औपासनोऽनुगच्छेच्चेदुपलेपादि पूर्ववत् ।
> आहृत्य श्रोत्रियागारात्प्रतिष्ठाप्य हविर्भुजम् ॥

(१) 'श्चावर्जनीया' ङ०। (२) 'अपि वा' नास्ति ङ०। (३) 'गृहोपवेशनीय' ख०।

अन्यस्माद्धोमकालात्स्त्री नाश्नीयाद्यदि वा गृही
पर्युक्षणादिकं कृत्वा संस्कृत्याज्यं च पूर्ववत् ॥
अयाश्चेत्येतया हुत्वा यथापूर्वं जुहोत्यथ ॥

सर्वप्रायश्चितं च जुहुयादिति केचित् । तथा—

उपलेपादिकं कुर्यादाघारान्तं विवाहवत् ।
विवाहाज्याहुतीर्हुत्वा लाजाहोमो भवेदथ ॥
गृहप्रवेशनीयांश्च हुत्वा स्याद्धृदयाञ्जनम् ।
परिणीत्यादि नास्त्यत्र लाजानावपते स्वयम् ॥
समानतन्त्रकं वेदं होमद्वयमिदं भवेत् ॥ इति ।

अग्नेर्नाशापहारयोरिदमेव प्रायश्चित्तम्, "यदि तूपसाम्येत्" इति सूत्रेऽस्य नाशापहारयोः प्रदर्शनार्थत्वात् । यत्तु प्रयोगपारिजाते—'एवं रक्षितोऽग्निर्गृहप्रवेशनीयहोमादर्वागेव वाऽनुगमनश्चेत्तदा विवाहहोमः पुनः कार्यः । गृहप्रवेशनीयहोमानन्तरमनुगतश्चेत्तर्हि होमद्वयमपि पुनः कार्यमिति वृत्तिकारेणोक्तत्वात्तद्वत्' इति । तत्र विवाहहोमोत्तरं गृहप्रवेशनीयहोमात्पूर्वं द्वादशरात्रमध्येऽप्यग्नेरनुगमने विवाहहोमावृत्तिः कर्त्तव्येति नार्थः, किन्तु यथा दृष्टान्ते द्वादशरात्रोत्तरमेव विवाहहोमः । तद्वद्दार्ष्टान्तिकेऽपि द्वादशरात्रोत्तरमेव सः न तु ततः प्रागित्युक्तम् । दानहीरावल्यां तु—

उद्वाहौपासनात्पूर्वमनले शान्तिमागते ।
पुनर्लाजांतरं हुत्वा कर्मशेषं समापयेत् ॥

इति वचनाद्विवाहोत्तरमौपासनारम्भात्प्रागग्निनाशे विवाहहोमावृत्तिः कार्या ।

अथ तत्प्रयोगः—मनौपासनहोमारम्भा(१)त्पूर्वं नष्टस्य विवाहाग्नेः पुनरुत्पत्तिं करिष्ये इति सङ्कल्प्य विवाहहोमं कृत्वा शक्त्या ब्राह्मणान् भोजयेदिति ।

लाजाहोमप्रकारमाह भगवान्—

वधूः स्वाञ्जलिविच्छेदमकुर्वाणा तु (२)चैव तान् ।

(१) 'पूर्वमकृष्टस्य' ङ० ।     (२) 'वैतान्' ङ० ।

लाजानञ्जलिपार्श्वेन जुहुयादवधानतः ॥ इति ।

कारिकायाम्—

वरः शूर्पगताँल्लाजानवत्तांश्चाभिघारयेत् ।
पठेच्चार्यमणं मन्त्रमथ पत्नी स्थिता सती ॥
कुर्वन्त्यञ्जल्यवच्छेदमङ्गुल्यग्रैर्जुहोति तान् ॥ इति ।

पाणिग्रहणादिसप्तपदीक्रमणादि तु न भवति, वचनाभावात्; कन्यासंस्कारत्वाच्च । अन्यत्रापि शाकलः—

आचतुर्थ्याद्विवाहाग्निरनुगच्छेत्प्रमादतः ।
स्थण्डिले श्रोत्रियागारादाहृत्याग्निं निधाय च ॥
आज्येन जुहुयात्तत्र स्वयमेव विवाहवत् ॥

इत्युक्तम् ।

तत्सर्वमप्रामाणिकमिति मयूखे । एतेन—

चतुर्थिमध्ये त्वनले विनष्टे सन्धानमग्नौ त्वथ लौकिकाग्नौ ।
औपासनात्पूर्वमथापि नष्टे विवाहहोमं विधिवच्च कुर्यात् ॥ इति ।
अर्वाक्त्रिरात्राज्जुहुयादथाश्च आसप्तरात्रात्तु मनस्वतीं च ।
एकादशाहेऽपि भवोच्चतंतुना द्वादशाहे भवदग्निनाशे ॥

इति च प्रत्युक्तम्, अप्रामाणिकत्वात् । शाकलवचनं तु येषां चतूरात्रमहूयमानोऽग्निर्लौकिको भवति तत्परमिति केचित् । एवं "यद्यग्नि अत्र चतुर्थं नश्येत्तदोद्वाहार्यं तस्य 'अपहता' इति भस्माभ्युक्ष्य 'यत्ते योनिः' इति क्षिप्रं भस्म समारोप्य 'आजुह्वान' 'उद्बुध्यस्व' इति द्वाभ्यां समिधमाधाय सम्परिश्रित्य जुहुयात् । आयाश्चाग्ने पञ्चहोता 'ब्राह्मण' एकहोतेति दश स्रुवाहुतीर्महाव्याहृतीः सर्वप्रायश्चित्तानि जुहोति" इति बौधायनोक्तं, तत्सर्वमपि याजुषपरं, बौधायनसूत्रेऽदर्शनादप्रामाणिकं वा । यत्तु औपासनात्पूर्वं यदि विवाहाग्निः शाम्येत्तदा प्रायश्चित्तं विद्वादर्शे—

उद्वाहौपासनात्पूर्वमनले शान्तिमागते ।

स्थालीपाकं ततः कृत्वा औपासनमथाचरेत् ॥
न च नाडीभ्य ऊर्ध्वं चेत्स्थालीपाको भवेन्न वा ।
औपासनं तदा कुर्यात्परेद्युः सायमेव च ॥

इति, तदाश्वलायनान्यपरम् । आश्वलायनानां प्रायश्चित्तार्थं स्थालीपाकाभावात्। वस्तुतस्त्वेतदपि निर्मूलमेव। केचित्तु अत्रोपनयने विवाहे वा त्रिरात्रात्पूर्वं तदग्नावुपशान्ते प्रायश्चित्तं देशकालौ संकीर्त्य चतुर्थीमध्ये अग्निनाशे प्रायश्चित्ताहुतीर्होष्यामीति सङ्कल्प्य आज्यं संस्कृत्य 'अयाश्च'इत्येकामाहुतिं हुत्वा अग्निर्होता अश्विनाध्वर्यू त्वष्टाग्नीत् मित्र उपवक्ता सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाःश्रातास्त इन्द्रसोमाः वातापेर्हवनश्रुतः स्वाहा, वाचस्पतये ब्रह्मण इदम् । अग्न्यश्विनत्वष्टामित्रसोमशुक्रेन्द्रवाह्निभ्य इदमित्यन्ये । अग्नये पञ्चहोत्रमिदमिति विश्वप्रकाशे । यन्म आत्मनो मिन्दाभूत् पुनरग्निश्चक्षुरदात् २ मनो ज्योतिर्जुषतां ३ त्रयस्त्रिंशत्तन्तवो येवितन्विरे ४ भूरग्नये च पृथिव्यै च ५ भुवो वायवे चान्तरिक्षाय च ६ सुवरादित्याय च (१)दिवे च ७ भूर्भुवः सुवश्चन्द्रमसे च ८ सप्त ते अग्ने समिधः ९ प्रजापते न त्वदेतान् १० इति दशाहुतीर्जुहुयादिति वदन्ति तदपि न आश्वलायनानाम्, अन्येतु—

कामान्ते दशहोमः स्यात्साग्निनाशनावथोद्गते ।
अयाश्च पञ्चहोता च यन्मे मिन्दाहुतीद्वयम् ॥
पुनर्मनस्वतीं चैव महाव्याहृतयस्तथा ।
आविवाहाच्च ब्रह्मोदनाच्चोपनयनेतथा ॥ इति ।

(२)कार्यान्ते 'अवस्यते स्तुवते कृष्णियाय' इतिमन्त्रं पठित्वा 'अयाश्च' इत्यादि दशाहुतीर्जुहुयादिति ।

आचतुर्थाद्विवाहाग्निर्नश्येद्ब्रह्मोदनावधि ।
कार्यान्ते दशभिर्मन्त्रैः प्रत्यृचं जुहुयाद् घृतम् ॥

---

(१) 'दिवे च'नास्ति ङ० । (२) 'कार्यान्ते' नास्ति ङ० ।

*यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति ।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम् ॥

यदि रात्रौ*नवनाडीमध्येऽग्न्युत्पत्तिस्तदा तदैव होमारम्भः, तदुत्तरं चेत्परादिने सायमारम्भ इति सुदर्शनभाष्ये उक्तम् ॥

---

इति वचनाच्चेति, तदपि नाश्वलायनानामिति दिक् । *यदीति । शौनकः—

यस्मिन्नह्नि विवाहः स्यात्सायमारभ्य तस्य तु ।
परिचर्या विवाहाग्नेर्विदधीत स्वयं द्विजः ॥

"पाणिग्रहणादिगृह्यं परिचरेत्" इति सूत्राच्च विवाहहोमोत्तरं सायं नित्यहोमः कार्यः । पाणिग्रहणादिति कथञ्चन गृहप्रवेशनीयहोमानामावश्यकार्थम् । तेन नित्यहोमः गृहप्रवेशनीयात्प्रागपि भवतीति । स्वयंपदोपादानादनवकाशेऽपूर्वारम्भः पत्न्यादिना न भवति, दम्पत्योर्मध्ये पुंस एव मुख्याधिकारात् । तस्मात्सायंप्रातरपूर्वहोमः स्वयं च वर एवं कुर्यात् । यानि तु—

पत्नी कुमारी पुत्रो वा शिष्यो वाऽपि यथाक्रमम् ।
पूर्वपूर्वस्य चाभावे विदध्यादुत्तरोत्तरः ॥
स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवाससी वा ।
ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतैरेव हुतं यत्तु तद्धुतं स्वयमेवहि ॥

इत्यादीनि, तानि द्वितीयादिहोमपराणि । नात्र भद्राव्यतीपातादिनिषेधः, तस्य नित्यत्वात् । *न चेति ।

प्रातर्होमे सङ्गवान्तः काले त्वनुदितेऽथ वा ।
सायमस्तमिते होमः कालस्तु नवनाडिकः ॥

इति वचनात् । इदं तु बोध्यम् । सायं नित्यहोमकालौ द्वावेव यावद्भक्तिमा नापैतीतिमुख्यः, प्रदोषान्तो गौणः । नवनाडिकाशब्देनापि कथञ्चित्प्रदोषान्ताभिधानात् । घटीत्रयस्य संध्यात्वात् ।

अथ देवकोत्थापनम् ।

समे च दिवसे कुर्याद्देवकोत्थापनं बुधः ।
(१)षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥

एवं प्रातरपि द्वौ-उदितः समयान्तश्च । तत्रोभयत्रापि कथञ्चिन्मुख्य-कालात्यये नित्यहोमस्य नापूर्वप्रारम्भः, गौणकाले तदयोगात् । यथा कृष्णाद्वितीयादौ नक्षत्राधानेऽतीतपौर्णमासस्य न प्रारम्भः । मुख्य-काले पौर्णमास्यामनाहिताग्नित्वेनानधिकारात्तथेहापीति । वस्तु-तस्तु पुनराधाने पुनः सन्धाने गौणकाले न होमप्रारम्भः । नच "आधानप्रभृति यजमान एवाग्नयः" इति श्रुतिविरोधः, आधा-नोत्पन्नानामग्नीनां नाशेऽपि अदृष्टस्य यजमाने सत्त्वात्पुनराधाना-दिनाश्रमसंपादनमात्रमिति तत्र होमस्याधानपूर्वत्वादिति वाच्यं, त-च्छ्रुतेरर्थवादत्वादिति । अधिकमन्यतोऽनुसंधेयम् । यत्तु बौधा-यनः—

आसायं कर्मणः प्रातराप्रातः सायकर्मणः ।
आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरात् ॥ इति ।

तच्छाखान्तरपरमिति प्रयोगपारिजातः ।

अत्र कुण्डसिद्धिटीका ।

वेदी चतुर्विधा प्रोक्ता चतुरस्रा च पद्मिनी ।
श्रीधरी सर्वतोभद्रा दीक्षासु स्थापनादिषु ॥
चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदा ।
तडागादिप्रतिष्ठायां पद्मिनी पद्मसन्निभा ॥
राज्ञां स्यात्सर्वतोभद्रा चतुर्भद्राऽभिषेचने ।
विवाहे श्रीधरी वेदी त्रिंशदस्रसमन्विता ।
दर्पणोदरसंकाशा निम्नोन्नतविवर्जिता ॥ इति ।

अन्यत्रापि—

कन्याहस्तैः सप्तभिः पञ्चभिर्वा कार्या वेदी श्रीधरी निम्नमेव ।

(१) 'षष्ठे च विषमे' क० ।

तत्र सप्तहस्ता त्रिविधा-एकाशीतिकोष्ठा,षष्टिकोष्ठा,एकचत्वारिंशत्कोष्ठा च ।

तत्र प्रथमा यथा—संलग्नकोष्ठत्रया प्रथमा पङ्क्तिः, तदधः उभयतोनिःसृतकोष्ठाभ्यां युक्ता संलग्नकोष्ठपञ्चका द्वितीया । तदधः उभयतोनिःसृतकोष्ठा संलग्नकोष्ठसप्तका तृतीया । तदधः उभयतोनिःसृतकोष्ठाभ्यां संलग्नकोष्ठनवका चतुर्थी । तदधः उभयतोनिःसृतकोष्ठाभ्यां संलग्नैकादशकोष्ठका पञ्चमी । तथैव षष्ठी, सप्तमी चेति । तदधोन्तर्गतकोष्ठनवकाऽष्टमी । तदधोन्तर्गतकोष्ठसप्तका नवमी । तदधोन्तर्गतकोष्ठपञ्चका दशमी । तदधोन्तःकोष्ठत्रया एकादशीति एकाशीतिकोष्ठानि । तत्र फलं कोष्ठेषु सर्वेषु भुजः कोटिश्च सम एव । तत्र भुजोऽष्टादशाङ्गुलानि पञ्च यवाः तिस्रो यूकाः १८–५–३, तावती कोटिः १८–५–३ इति । तयोर्घातः ३४८–३–४ कोष्ठै ८१ रेकाशीतिभिर्घातः । तथाच फलं २२४ अष्टाविंशतिसहस्रशतद्वयचतुर्विंशत्यङ्गुलानि ।

द्वितीया यथा द्विकोष्ठा प्रथमा पङ्क्तिः तदधः उभयतोनिःसृतकोष्ठाभ्यां चतुः कोष्ठा तदधस्तादृशी षट्कोष्ठा तदधस्तादृशी अष्टकोष्ठा तदधस्तादृशी दशकोष्ठा (१)तदधो दशकोष्ठा तदधः अन्तरष्टकोष्ठा (२)तदधोऽन्तः षट्कोष्ठा तदधोन्तश्चतुःकोष्ठा । तदधान्तो द्विकोष्ठेति । तत्र भुजः एकविंशत्यङ्गुलानि, त्रयो यवाः, षट् यूकाः २१–३–६ कोटिः २१ । ३ । ६ भुजः अटिघातः. तत्फलं ४७० । ३ । ६ षष्टि कोष्ठघातः फलं २८२२४ तदेव ।

तृतीया यथा—एककोष्ठा, तदधः उभयतो निःसृतकोष्ठाभ्यां त्रिकोष्ठा, तदधस्तादृशी पञ्चकोष्ठा तदधस्तादृशी सप्तकोष्ठा, तदधस्तादृशी नवकोष्ठा, तदधः उभयतोन्तः सप्तकोष्ठा, तदधः प-

---

(१) 'तदधो दशकोष्ठा' नास्ति ख० ।
(२) 'तदधः षट् कोष्ठा, तदधश्चतुः कोष्ठा तदधोद्वि' ख० ।

निर्णयदीपे गार्ग्यः—

*नान्दीश्राद्धे कृते पश्चा*द्यावन्मातृविसर्जनम् ।
दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥

---

श्चकोष्ठा, तदधस्त्रिकोष्ठा, तदध एककोष्ठेति एकचत्वारिंशत्कोष्ठेति । तत्र भुजः २६ । १ । ३ । कोटिः २६ । १ । ३ । भुजकोटिघातः ६८८ । १ । ७ । कोष्ठ४१घातः फलं तदेव २८२२४ ।

पञ्चभिर्हस्तैर्यथा—तत्र क्षेत्रफलं १४४०० । भुजः १५ । ४ । कोटिः १५ । ४ । तदुभयघातः फलं २५ । ३ । ३२ । षष्टिभिर्गुणने फलं १४४०० चतुःशताधिकचतुर्दशसहस्रीति दिक् । तद्बहिस्सोपानं कार्यम् ।

अथ विवाहोपनयनयोः स्वस्तिवाचनपीठं यथा—

श्रीमत्स्वस्तिकमादितो भुवि शुभं कुर्यात्सितैस्तण्डुलै-
र्द्वात्रिंशत्परितोङ्गुलानि सततं तावच्च कोष्ठैर्युतम् ।
प्राक् पश्चोत्तरतस्तु पञ्च विततो मध्ये तु रेखाद्वयं
कोणेष्वायतनेषु वाऽप्युभयतास्तिर्यक् तथैकैकिका ॥
एवं यच्चतुरस्रकं विरचयेत्कुक्ष्योः पदाकारवत् ।
प्राच्यां स्याद्गजशुण्डवत्कलशवत्कुर्यात्प्रतीच्यां तथा ॥
मध्ये स्थाप्य च तण्डुलोपरि शुभौ कुम्भौ लसत्पल्लवौ
पूर्णौ रत्नजलैस्ततो ह्युपविशेद्भद्रासने प्राङ्मुखः ॥ इति ।

नान्दीश्राद्धानन्तरं मण्डपोद्वासनावधि केषाञ्चिन्निषेधमाह-

*नान्दीश्राद्धे इति । स्वधाकारः पितृयज्ञः । न च नित्यश्राद्धनिषेधेनैव तन्निषेधः सिध्यतीति वाच्यम्,

श्राद्धं च पितृयज्ञः स्यात्पित्र्यो बलिरथापिवा ॥

इति पितृबलिवैकल्पिकपितृयज्ञनिषेधासिद्धेः । तेन तत्सहचरितवैश्वदेवस्यापि निषेधः । नियतमण्डपकमहादानादिव्यावृत्तये-*यावन्मातृविसर्जनमिति । तत्र मातृविसर्जनस्य मण्डपोद्वा-

अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च ।
ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलङ्घनम् ॥
(१)उपवासं व्रतं चैव श्राद्धभोजनमेव च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि ॥

बृहस्पतिः—

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥

योगियाज्ञवल्क्यः—

न स्नायादुत्सवेऽतीते मङ्गलं विनिवर्त्य च
अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवताम् ॥

ज्योतिषे—

स्नानं सचैलं तिलमिश्रकर्म प्रेतानुयानं*कलशप्र
अपूर्वतीर्थामरदर्शनं च विवर्जयेन्मङ्गलतोऽब्दमेक

मासषट्कं विवाहादौ (२)व्रतप्रारम्भणेऽपि च ।
जीर्णभाण्डादि न त्याज्यं गृहसम्मार्जनं तथा ॥
ऊर्ध्वं विवाहात्पुत्रस्य तथा च व्रतबन्धनात् ।
आत्मनो मुण्डनं नैव वर्षं वर्षार्धमेव च ॥
अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ।
माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम् ॥

ज्योतिर्निबन्धे—

उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका

---

सनावधिकत्वं विशेषणम् । तादृशं च तद्विवाहोपनयनयोरेव नान्यत्र । न चेदं महादानादौ मातृविसर्जनाविलम्बं विधातुं समर्थं, तथाविधप्रत्ययाभावात् । विवाहोपनयनयोरेव मातृविसर्जनमण्डपोद्वासनयोः क्रमस्य सिद्धेः । *कलशप्रदानं श्राद्धीयमुदकुम्भा-

---

(१) 'उपवासव्रतं' क० । (२) 'व्रतप्रारम्भणे न' ख० क० ।

हन्यात्तज्जननीं क्षये निजतनुं ज्येष्ठे पतिज्येष्ठकम् ।
पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये
तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेत् ॥

निबन्धे—

विवाहात्प्रथमे पौषे आषाढे चाधिमासके ।
न सा भर्तुर्गृहे तिष्ठेच्चैत्रे पितृगृहे तथा ॥

हेमाद्रौ स्मृत्यन्तरे—

*विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥
(१)(तथा अर्धं पूर्ववत् ।
सपिण्डा नैव कुर्वीरन्नद्भिः स्नानमृतुत्रये ।
तीर्थे संवत्सरे प्रेते पितृयज्ञे महालये ॥
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा ॥)

अथ वधूप्रवेशः । जयतुङ्गे—

मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके ।
सुप्रशस्ते भवेद्वेश्मप्रवेशो नवयोषिताम् ॥

नारदः—

आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यष्टमे दिने ।
वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने ॥

सङ्ग्रहे—

विवाहमारभ्य वधूप्रवेशो

---

दि । एतद्वचनबलादेवोदकुम्भश्राद्धान्यपकृष्याचरन्ति । *विवाहेति ।

उपरागे पितुःश्राद्धे पातेऽमायां च सङ्क्रमे ।
निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥

इति अपवादवाक्ये पितृपदं मात्रादेः पातपदं च वैधृतेरुपलक्षणम् ।

---

(१) कंसान्तर्गतं नास्ति क० ।

युग्मे तिथौ षोडशवासरान्तात् ।
ऊर्ध्वं ततोऽब्दे युजि पञ्चमान्ता-
दतः परस्तान्नियमो न चास्ति ॥

नारदः-

समे वर्षे समे (१)मासि यदि नारी गृहं व्रजेत् ।
आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥

प्रयोगरत्ने तु-

वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमकेऽथ वाह्नि ।
द्वितीयके वाथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यात् ॥

इत्युक्तं, तत्र मूलं चिन्त्यम् । वृद्धवसिष्ठोऽपि-

षष्ठाष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः।
पञ्चाङ्गसंशुद्धदिनं विनापि विधावसङ्कोचरगेऽपि कार्यः ॥

लल्लः—

*स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।
नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति ॥

---

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तिलैस्तर्पणमेव च ॥

इत्यपवादान्तरमपि द्रष्टव्यम् । *स्वभवनेति ।

पित्र्ये गृहे चेत्कुचपुष्पसम्भव-
स्तदा न दोषः प्रतिशुक्रसम्भवः ।
यावच्चन्द्रः पूषभात्कृत्तिकाद्ये
तावच्छुक्रोऽन्धो न दुष्टोऽग्रदक्ष ॥ इति ।

शुक्रदोषशान्त्यै कुर्याच्छान्तिं वसिष्ठोक्तां दद्याद्वै सितमश्वं सितातपत्रं सुवर्णं च । शान्तिस्तु भृगुवारे भृगूदये उपोष्य शुद्ध-रजतनिर्मितां कांस्यपात्रस्थतण्डुलोपरिस्थां शुक्रप्रतिमां सम्पूज्य

---

(१) 'मासे' क० ।

माण्डव्यः-

नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु।
वधूप्रवेशे माङ्गल्ये न मौढ्यं गुरुशुक्रयोः॥

ज्योतिः प्रकाशे-

वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे।
धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरः स्थिते॥
नवोढायास्तु वैधव्यं यदुक्तं संमुखे भृगौ।
तदेव विबुधैर्ज्ञेयं केवलं तु द्विरागमे॥
पूर्वतोऽभ्युदिते शुक्रे (१)प्रयायाद्दक्षिणापरे।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशौ॥

व्यवहारतत्त्वे——

पौष्णात्कराच्च श्रवणाच्च युग्मे
हस्तत्रयं मूलमघोत्तरासु।
पुष्ये च मैत्रे च वधूप्रवेशो
रिक्तेतरे व्यर्ककुजे च शस्तः॥

---

सेश्वतवस्त्रां विप्राय दद्यात्। 'शुक्रं ते अन्यत्' इत्यृचमष्टोत्तरशतं जपेत्। अथवाश्विनीनक्षत्रे यात्रामुहूर्त्तं दृष्ट्वा गच्छेत्।

स्वामिनीनीयमानायाः प्रतिशुक्रो न विद्यते।
प्रतिशुक्रकृतो दोषो नूतने गमने नृणाम्॥
राज्ञां विजययात्रायां नान्यदा दोषमावहेत्।
यात्रोक्ते ऋक्षलग्नादौ राहौ दक्षिणपृष्ठगे।
विवाहोक्तादिने मासे यायात्पतिनिकेतनम्॥
राहुः पूर्वादिकाष्ठासु मासैर्मार्गादिभिस्त्रिभिः।
यात्ययं दक्षिणाद्व्यस्या नेष्टः सम्मुखवामतः॥
कश्यपेषु वसिष्ठेषु भृग्वत्र्यङ्गिरसेषु वा।
भारद्वाजेषु वत्सेषु प्रतिशुक्रो न विद्यते॥

---

(१) 'प्रयायाद्दक्षिणे परे' क०।

गर्गः—

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः ॥

तथा--

अमासङ्क्रान्तिविष्ट्याद‍ौ प्राप्तकालेऽपि नाचरेत् । इति ।

अथ द्विरागमनम् । ऋक्षोच्चये--

माघफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।
गुर्वादित्यविशुद्धौ स्यान्नित्यं पत्नीद्विरागमः ॥

बादरायणः--

नीहारांशुदिनोत्तरादितिगुरुब्रह्मानुराधाश्विनी-
शुक्रे भास्करवायुविष्णुवरुणत्वाष्ट्रे प्रशस्ते तिथौ ।
कुम्भाजालिगते रवौ शुभकरे प्रासोदये भार्गवे
(१)जीवज्ञास्फुजितां दिने नववधूवेश्मप्रवेशः शुभः॥

अथ *पुनर्विवाहः । श्रीधरीये--

पुनर्विवाहं वक्ष्यामि दम्पत्योः शुभवृद्धिदम् ।
लग्नेन्दुलग्नयोर्दोषे ग्रहतारादिसम्भवे ॥
अन्येष्वशुभकालेषु (२)दुष्टरोगादिसम्भवे ।

---

इति गुरुचरणाः । चतुर्थदिवसे हस्तिपूजामाह यज्ञपार्श्वः—

चतुर्थे दिवसे रात्रौ लिखेन्मानःसरोवरम् ।
हिरण्यगर्भं तन्मध्ये गन्धपुष्पाक्षतादिभिः ॥
सम्पूज्याप्सरसश्चैव सोमगन्धर्वपावकान् ।
सम्पूज्य चाश्वहस्त्यादीनारोप्य स्वगृहं प्रति ॥
प्रवेशनादिकं कर्म अन्यथा तु भवेद्भयम् ॥ इति ।

*पुनरिति । विवाहे कृते पश्चाल्लग्नशुद्धिराहित्ये ज्ञाते

---

(१) 'जीवज्ञां' क० ।
(२) 'दुष्टयोगादि' क० ।

विवाहे चापि दम्पत्योराशौचादिसमुद्भवे ॥
तस्य दोषस्य शान्त्यर्थं पुनर्वैवाह्यमिष्यते ॥

याज्ञवल्क्यः—

*सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥

मनुः—

वन्ध्याष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

सङ्ग्रहे तु—

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

(१)याज्ञवल्क्यः—

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वार्थैः पूर्वोढामपरां(२)व्रजेत् ॥
*आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो *भरणं स्त्रियाः ॥

मनुः—

अधिविन्ना तु या नारी निर्गच्छेद्रोषिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ॥ इति।

---

तयोरेव वधूवरयोः पुनर्विवाहः कार्य इत्यर्थः । तत्कालः प्रयोगरत्ने ज्योतिषग्रन्थे च ज्ञेयः। द्वितीयविवाहमाह—*सुरापीति । सुरापी शूद्रापि—

पतत्यर्द्धं शरीरस्य यस्य भार्या सुरां पिबेत् ।

इति स्मरणात् । धूर्ता वञ्चिका, विसंवादिनी वा । अधिवेदना भार्यान्तरपरिग्रहः । *आज्ञेति । अधिवेदनकारणाभावेप्यधिवेत्तारमधिकृत्य । *भरणम् अन्नवस्त्रादिः ।

---

(१) 'याज्ञवल्क्यः' नास्ति क० । (२) 'वहेत् । याज्ञवल्क्यः' क० ।

हेमाद्रौ कात्यायनः--

अग्निशिष्टादिशुश्रूषां बहुभार्यः सवर्णया ।
कारयेत्तद्बहुत्वं चेज्ज्येष्ठया *गर्हिता न चेत् ॥

याज्ञवल्क्यः--

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।
सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥

द्वितीयविवाहहोमेऽग्निमाह कात्यायनः--

सदारोऽन्यान्पुनर्दारानुद्वोढु कारणान्तरात् ।
यदीच्छेदग्निमान्कर्तुं क होमोऽस्य विधीयते ॥
*स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन ॥

त्रिकाण्डमण्डनोपि--

आद्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि ।
तदा वैवाहिकं कर्म कुर्यादावसथेऽग्निमान् ॥

सुदर्शनभाष्ये तु-'द्वितीयविवाहहो(१)मो लौकिक एव न पूर्वौपासने' इत्युक्तम् । इदं चा*सम्भवे । *तत्र चाग्निद्वयसंसर्गः कार्यः । तदा(२)ह शौनकः—

अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः ।
सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः ॥

---

*गर्हिता पातित्यादिमती । *स्वेऽग्नावेवेति । अस्मिन्पक्षे पुनर्गृहप्रवेशनीयहोमो न भवति, तस्य गृहस्थत्वसिद्ध्यर्थत्वात्तस्य च सिद्धत्वात् । इदं च तत्राग्निसत्त्वे । *असम्भवे इति । औपासनासम्भवे इत्यर्थः । *तत्र चेति । देशान्तरेऽग्न्यसन्निधौ वा लौकिके विवाहहोमं गृहप्रवेशहोमं च कुर्यात् । तत्र च कालान्तरेऽग्निद्वयसंसर्गः कार्य इत्यर्थः । अग्निद्वयसंसर्गपर्यन्तं नित्यहोमद्वयं दर्शपूर्णमासस्थालीपाकद्वयं च कार्य-

---

(१) 'होम' नास्ति क० ।
(२) 'तत्त्वाह' क० ।

अरोगामुद्वहेत्कन्यां धर्मलोपभयात्स्वयम् ।
कृते तत्र विवाहे च व्रतान्ते तु परेऽहनि ॥
पृथक्स्थण्डिलयोरग्नी समाधाय यथाविधि ।
(१)तन्त्रं कृत्वाज्यभागान्तमन्वाधानादिकं ततः ॥
जुहुयात्पूर्वपत्न्यग्नौ तयान्वारब्ध आहुतीः ।
अग्निमीळे पुरोहितं सूक्तेन नवर्चेन तु ॥
समिध्येनं समारोप्य अयं ते योनिरित्यृचा ।
प्रत्यवरोहेत्यनया कनिष्ठाग्नौ निधाय तम् ॥
आज्यभागान्ततन्त्रादि कृत्वारभ्य तदादितः ।
समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयाद् घृतम् ॥
चतुर्गृहीतमेताभिर्ऋग्भिः षड्भिर्यथाक्रमम् ।
अग्नावग्निश्चरतीत्यग्निनाग्निः समिध्यते ॥
अस्तीदमिति तिसृभिः पाहिनो अग्न एकया ।
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ॥
गोयुगं दक्षिणा देया श्रोत्रियायाहिताग्नये ।
पत्न्योरेका यदि मृता दग्ध्वा तेनैव तां पुनः ॥
आदधीतान्यया सार्धमाधानविधिना गृही ॥ इति ।

बौधायनसूत्रे तु—

"अथ यदि गृहस्थो द्वे भार्ये विन्देत कथं तत्र कुर्यादिति, यस्मिन् काले विन्देतोभावग्नी परिचरेदपराग्निमुपसमाधाय परिस्तीर्याज्यं विलाप्य स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वारब्धायां जुहोति नमस्त ऋषेरादाव्यधायै त्वा स्वधायै त्वा मान इन्द्राभिमतस्त्वदृष्वाऽरिष्टां स एव ब्रह्मन्न वेद सुस्वाहेत्यथाऽयं ते योनिर्ऋत्विय इति समिधि समारोपयेत् । पूर्वाग्निमुपसमाधायाजुह्वान उद्बुध्यस्वाग्न इति समिधमाधाय परिस्तीर्य स्रुचि चतुर्गृहीत्वा द्वयोर्भार्ययोरन्वारब्ध-

(१) 'तत्र' ख० ग० ।

घोर्यजमानोऽभिमृशति यो ब्रह्मा ब्रह्मण इत्येतेन सूक्तेनैकं चतुर्गृहीतं जुहोत्यग्निमुखात्कृत्वा पक्वाज्जुहोति संमितं संकल्पेथामिति पुरोनुवाक्यामनूच्याग्ने पुरीष्ये इति याज्यया जुहोत्यथाज्याहुतीरुपजुहोति पुरीष्यमस्तामित्यन्तादनुवाकस्य स्विष्टकृत्प्रभृति सिद्धमाधेनुवरदानादथाग्रेणाग्निं दर्भस्तम्बे हुतशेषं निदधाति ब्रह्मजज्ञानं पिताविराजामिति (द्वा(१)भ्यां संसर्गविधिः कार्यः)" । द्वितीयादिविवाहे काल उक्तः संग्रहे—

*प्रमदामृतिवासरादितः पुनरुद्वाहविधिर्वरस्य च ।
विषमे परिवत्सरे शुभो युगले चापि मृतिप्रदो भवेत् ॥

तृतीयवि(२)वाहे निषेधो मात्स्ये—

उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ।
मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम् ॥
नश्यत्येव न सन्देहो गर्गस्य वचनं यथा । इति ।

सङ्ग्रहे—

तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् ।
चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥

मिति गर्भाधानग्रन्थादौ स्पष्टम् । अग्निद्वयसंसर्गप्रयोगः प्रयोगरत्ने बोध्यः । *प्रमदेति । अन्यत्रासावश्यके उक्तम् ।

पत्नीवियोगे प्रथमे च वत्सरे
नो चेद्द्विवर्षे पुनरुद्वहेत्सः ।
अयुग्ममासे तु शुभप्रदः स्या-
द्वसिष्ठगर्गादिभि(३)रप्यभाणि ॥

अपुत्रा चेन्मृता भार्या तस्या भर्त्तुर्विवाहकम् ।
युग्माब्दे युग्ममासे वा विवाहः शुभदो मतः ॥

---

(१) कंसान्तर्गतं नास्ति क० ।
(२) 'विवाहनिषेधो' क० ।
(३) 'पराशराद्याः' ग० टिप्पण्याम् ।

तद्विधिस्तु—'रविशन्योर्हस्ते वा*वरः संकल्प्य स्वस्तिवाचनं नान्दीश्राद्धं कृत्वाऽऽचार्यं वृत्वा आकृष्णेनेति छायायुतं सूर्यम(१)र्कं संपूज्य गुडौदनं दत्त्वा वस्त्रेण तन्तुभिरावेष्टय—

त्रिलोकवासिन्सप्ताश्व छायया सहितो रवे ।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥

इति संप्रार्थ्य जलेन त्रिः सिञ्चेत् ।

मम प्रीतिकरा येयं मया सृष्टा पुरातनी ।
अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रति रक्षतु ॥
नमस्ते मङ्गले देवि नमः सवितुरात्मजे ।
त्राहि मां कृपया देवि पत्नीत्वं म इहागता ॥
अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च ।
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ॥
तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय ॥ इति ।

तत आचार्यः 'काश्यपगोत्रामादित्यस्य प्रपौत्रीं सवितुः पौत्रीमर्कस्य पुत्रीमर्ककन्याममुकगोत्राय वराय दास्ये' इति वाग्दानं कृत्वा वरस्य मधुपर्कं कृत्वाऽन्तःपटं धृत्वा 'स्वस्तिन' इति सूक्तं जप्त्वा पूर्ववत्कन्यां दत्त्वा 'अर्ककन्यामिमां०' इत्यूहेन कन्यादानमन्त्रमुक्त्वा दक्षिणां दद्यात् । ततो गायत्र्या वेष्टितसूत्रेण बृहत्सामेति मन्त्रेण कङ्कणं बद्ध्वाऽर्कस्य चतुर्दिक्षु कुम्भेषु विष्णुं संपूज्याग्निं प्रतिष्ठाप्याघारान्ते सङ्गोभिरिति बृहस्पतये, यस्मै त्वा

---

सपुत्रायां तु भार्यायां मृतायां ब्राह्मणस्य तु ।
प्रथमे न तु कर्त्तव्यो विवाहोऽशुभदो यतः ॥

जीवन्त्यां प्रथमार्यां स्वस्य द्वितीयादिविवाहे नायं कालनियमः । *वर इत्यादि । अनावश्यकतया वरमधुपर्कादि नोक्तम् ।

---

(१) 'सूर्यमर्कं' क० ।

कामकामायेत्यृचाऽग्नये व्यस्तसमस्तव्याहृतिभिराज्यं हुत्वाचार्याय गोयुगं दत्त्वा—

मया कृतमिदं कर्म स्थावरेषु जरायुणा ।
अर्काऽपत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि ॥

इति नमेत' इति*दिक् ॥

इति निर्णयसिन्धौ विवाहप्रकरणं समाप्तम् ॥

अथाधानम् । रत्नमालायाम्—

प्राजापत्ये पूषभे सद्विदैवे
पुष्ये ज्येष्ठास्वैन्दवे कृत्तिकासु ।
अग्न्याधानं ह्युत्तराणां त्रयेपि
चित्रादित्ये कीर्तितं गर्गमुख्यैः ॥

आश्वलायनः—"अग्न्याधेयं कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोरेतेषां कस्मिंश्चिद्वसन्ते पर्वणि ब्राह्मण आदधीत ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपकृष्टा यस्मिन्कस्मिंश्चिद्दतावादधीत सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न न(१)क्षत्रम्" । सोमाधाने ऋत्वाद्यनालोचनमार्तपरम् , 'अथो खलु य दैवैनं श्रद्धोपनमेदथादधीत सैवास्यर्द्धिरिति, ( सो(२) मेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रं ) तदेतदार्तस्यातिवेलं वा श्रद्धायुक्तस्य भवति' इति बौधायनोक्तेरिति । मदनरत्ने वृद्धगार्ग्यः—

*दिगर्थस्तु—

चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च ।
विसृज्य होममग्निं च विधिना मानुषीं पराम् ॥

इत्यादि प्रयोगरत्ने ।

(१) 'कात्यायनसूत्रे श्रीकामादीनामपि वर्षासूक्तम्' इत्यधिकपाठतया निर्दिष्टं गटिप्पण्याम् । (२) कंसान्तर्गतं नास्ति क० ।

पुष्याग्नेयत्र्युत्तरादित्यपौष्ण-
ज्येष्ठाचित्रार्कद्विदैवेन्दुभेषु।
कुर्युर्वह्न्याधानमाद्यं वसन्त-
ग्रीष्मोष्मान्तेष्वेव विप्रादिवर्णाः।

कालादर्शे—

*अग्निहोत्रं दर्शपूर्णमासावप्युत्तरायणे।
उपक्रम्य यथाकालमुपासीरन्द्विजातयः॥
*सोमं च पशुबन्धं च सर्वाश्च विकृतीरपि।
सौम्यायने यथाकालं विदध्युर्गृहमेधिनः॥
अत्र विशेषः पूर्वमुक्तः।

अग्निहोत्रकाल उक्तश्छन्दोगपरिशिष्टे—

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः॥

ए(१)तेषां स्वरूपं तत्रैव—

रात्रेस्तु षोडशे भागे ग्र(२)हनक्षत्रभूषिते।
(का(३)लं त्वनुदितं ज्ञात्वा होमं कुर्याद्विचक्षणः॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।)
रविर्यावन्न दृश्येत समयाध्युषितं च तत्॥
रेखामात्रं प्रदृश्येत रश्मिभिश्च समन्वितः।
उदितं तद्विजानीयात्तत्र होमं प्रकल्पयेत्॥

आश्वलायनः—*'उपोदये व्युषिते उदिते वा'। सायं

---

*अग्निहोत्रमिति। एतेऽग्निहोत्रादय उत्तरायणे एव कार्या इति नियमः। एवञ्चाधानेऽप्युत्तरायण एव सिध्यति। *सोमं चेति। पशुर्निरूढपशुभिन्नः, तस्य "पश्विन्या संवत्सरे प्रावृषि" इति कात्यायनेन वर्षासु विधानात्। *उपोदय इति।

---

(१) 'एषां' क०
(२) 'ग्रहनक्षत्रमण्डले' क०
(३) कंसांतर्गतं नास्ति क०

तु स एव 'अस्तमिते होमः' इति। *गौणकालमाह स एव-*'प्रदोषान्तो होमकालः *सङ्गवान्तः प्रातः' इति। छन्दोगपरिशिष्टे—

---

प्रातर्होमे त्रयः प्रधानकालाः-उपोदये आदित्योदयसमीपे, व्युषिते उषसि, उदिते आदित्यमण्डले कृत्स्ने उदिते। अत्र उपोदये उदिते' इति नोक्तम्। उदिते आदित्ये सत्युदयसमीपे इत्याभ्यां पदाभ्यामेक एव कालो विहित इति भ्रमः स्यादतो मध्ये व्युषित इत्युक्तम्। तत्र रेखामात्रस्तूदितस्य पूर्वावधिः। उत्तरावधिमाह-कात्यायनः—

हस्तादूर्ध्वं रविर्यावद्गिरिं भित्त्वा न गच्छति।
तावद्धोमविधिः पुण्यो नान्योऽस्त्युदयहोमिनाम्॥ इति।

एवं यावद्रक्तिमा नापैति तावत्सायमिति। तत्रापि मुख्यकालावधिरुक्तो ग्राह्यः। *गौणकालमिति। 'तमतिनीय चतुर्गृहीतमाज्यं जुहुयात्' इति प्रायश्चित्तोक्तेः। *प्रदोषान्त इति। प्रदोषः प्रदोषान्तो यस्येति व्युत्पत्तेः। प्रदोषस्त्रिमुहूर्त्तः,

त्रिमुहूर्त्तं प्रदोषः स्याद्भानावस्तङ्गते सति।

*सङ्गवान्त इति। सङ्गवः सङ्गवादिरन्ते यस्येति स इति। प्रातरपि त्रिमुहूर्त एव गौणकालः, न तु सङ्गवान्तावधिः,

पश्चादस्तमयात्कालो यो भवेत् त्रिमुहूर्तकः।
स सायं होमकालश्च प्रदोषान्त उदाहृतः॥
यस्तु षड्नाडिकः कालः पश्चादेवोदयाद्रवेः।
स होमकालो विप्राणां सङ्गवान्त इति स्मृतः॥

इति वाक्यात्। स्मृत्यर्थसारे तु—

प्रातर्होमे सङ्गवान्तः कालस्त्वनुदिते तथा।
सायमस्तमिते होमकालस्तु नवनाडिकः॥

इत्युक्तम्। प्रादुष्करणकालमाह कात्यायनः—

सूर्ये तु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः।
प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने॥

*यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः।
न च लोहितिमापैति तावत्सायं तु हूयते॥

औपासनेऽप्ये*वम् 'तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्यातौ' इत्याश्वलायनोक्तेः॥

---

आश्वलायनः—'पाणिग्रहणाद्धि गृह्यं परिचरेत् स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा दत्तः'।

ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः।
एतैरेव हुतं यच्च तद्धुतं स्वयमेव तु॥ इति।

एतैश्च यजमानस्य पत्न्या वा तत्सन्निधौ च होतव्यम्। पर्वणि स्वयमेव होमः कार्यो नान्येन। प्रादुष्करणकालातिक्रमे व्याहृतिभिरेकाज्याहुतिः कार्या। अस्तमितावधिमाह-*यावदिति। [*एवमिति।] अग्निहोत्रधर्माणामयमतिदेशो न तु पाकयज्ञस्य, नापि प्राशनादीनाम्, प्रादुष्करणेत्यादिद्वयोरेव नियमात्।

"होम्यं च मांसवर्ज्यं कामं तु व्रीहियवतिलैः" इति गृह्यम्।

पयोदधियवागूश्च सर्पिरोदनतण्डुलाः।
सोमो मांसं तथा तैलमापस्तानि दशैव तु॥

इति होम्यानि, तत्र मांसं वर्ज्यम्। कामपदं पयोदध्याद्यलाभे व्रीह्यादिप्राप्त्यर्थम्। 'पयसा नित्यहोमः' इति सूत्रात् तदलाभे च दध्यादि। पर्वणि च पयो नित्यम्। अत्र परिसमूहनपरिस्तरणपर्युक्षणानि कृत्वा होमद्रव्यस्य तूष्णीमग्निहोत्रवत्संस्कारं कुर्यात्। तत्र दधितण्डुलसोमतैलव्रीहियवतिलादेर्नाधिश्रयणम् 'अधिश्रयणं स्मृतिसामर्थ्याभ्याम्' इतिकात्यायसूत्रात्। अतस्तदर्थं नाङ्गारपृथक्करणम्। तेन तत्र पर्यग्निकरणं प्रोक्षणं च द्वयमेव। सर्पिःपयोयवाग्वोदनादीनां तु श्रपणमितिविशेषः। सङ्ग्रहे—

द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः।
अङ्गुल्यग्रैर्न होतव्यं न कुर्वाङ्गुलिभेदनम्॥

अधिकमन्यतोऽवगन्तव्यम्।

अथावसथ्याधानम् । पारस्करः-*'आवसथ्याधानं दारकाले, *दायाद्यकाल एकेषाम्' इति । दायाद्यकालो विभागकालः । मदनरत्ने व्यासः—

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।
पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः ॥
योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स(१) स्मृतः ॥

ज्येष्ठभ्रातरि पितरि वा साग्नौ कनिष्ठस्य पुत्रस्य वाऽग्न्यभावेऽपि न दोषः । तदाह तत्रैव गार्ग्यः-

पितृपाकोपजीवी वा भ्रातृपाकोपजीविकः ।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥

गृहस्थस्याप्यध्ययनमाह सत्यव्रतः—

अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥

इदं चा*धानं ज्येष्ठेऽकृताधाने न कार्यम् ।

---

*आवसथ्याधानं स्मार्त्तविशेषः । *दायाद्यकाले इति ।

कर्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वापि, श्रौतं वैतानिकाग्निषु ॥

इति विनियोगवचने अपिशब्दात्प्रेते वा गृहपतावाहृते इत्युक्तम् । तेन स्मार्त्तकालत्रयम् । एतत्कालत्रयातिक्रमे प्रायश्चित्तं भवति । *आधानम् श्रौताधानम् । *स्मार्त्तेऽपीति । औपासनाग्निग्रहणेऽपीत्यर्थः। *आधानं गार्हपत्याधानम् । एतदेवाग्निहोत्रसंयोगः, अग्निहोत्रं संयुज्यतेऽनेनेतिव्युत्पत्तेः । 'अग्रजे सोदर्य'इत्येतत् पितृपितामहयोरुपलक्षणम् ,

ज्येष्ठो भ्राता यदा तिष्ठेत्पिता वाऽपि पितामहः ।
कनिष्ठपुत्रपौत्राणामाधानं नैव कारयेत् ॥

---

(१) 'संस्मृतः' ख०

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः, परिवित्तिस्तु पूर्वजः ॥

इति मनुशातातपोक्तेः । *स्मार्तेऽप्येवम् ।

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसङ्ग्रहम् ।
आवसथ्यं तथा*धानं (१)पतितस्तु तथा भवेत् ॥

---

इति सौमन्तवात् । अकृताधाने इति शेषः । कनिष्ठादिर्न कुर्यादित्यर्थः; आर्त्विज्यरूपकारणस्य रागप्राप्तत्वात् । एवं सति तदुपादानं तत्कर्त्तुः प्रायश्चित्तलाभार्थम् । पितृमरणे पितामहे जीवति पौत्रस्याधिकारवारणार्थं पितामहपदम् । एवञ्च यत्र ज्येष्ठभ्रातृपितृपितामहानामन्यतमस्य न विवाहहोमः तत्र कनिष्ठपुत्रपौत्राणां न विवाहहोमः । गृहप्रवेशनीयहोमे तु न दोषः, तस्य गृह्यत्वार्थत्वात् । गृह्यं परिचरेदिति परिचर्यायामेव तदुपयोगः । परिवेत्तेतिसंज्ञा पर्याधातृपारिग्रह्योः समानप्रायश्चित्तार्था,

परिवेत्ता परिवित्तिर्यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥

इति दोषस्मरणात् । याजकः विवाहहोमकारकः, आधानकारकः, यज्ञकारकादिश्च,

परीष्टिदोषसम्प्राप्तौ न यष्टव्यं कदाचन ।
दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसङ्ग्रहम् ॥
अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् ।
न कुर्याज्जनके ज्येष्ठे सोदरे वाऽप्यकुर्वति ॥

इति त्रिकाण्डमण्डनाभिधानात् । कृतपौर्णमासेष्टेर्भ्रात्रादेः कुतश्चित्प्रतिबन्धेनाकृतदर्शेष्टौ पित्रादौ जीवति पुत्रादेर्न दर्शेष्टिः । एवं कृताधानेऽकृताग्निहोत्रे च तत्र जीवति नाग्निहोत्रमित्युभयोपादानम् । एवमग्निहोत्रं सायंप्रातर्होमात्मकम्, तत्र सायंहोमोत्तरं

---

(१) 'पतितस्त्वन्यथा भवेत्' क० ।

इति तत्रैव गार्ग्योक्तेः । आज्ञायां त्वदोषमाह सुमन्तुः—

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत् ।
*अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

वृद्धवसिष्ठः—

अग्रजस्तु यदाऽनग्निरादध्यादनुजः कथम् ।
(१)अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

हारीतः—

सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

*अधिकारिणोऽपि भ्रातुरनुज्ञया कुर्यादिति मदनपारिजातः । विवाहस्त्वनुज्ञयापि नेत्यर्थः । सोदरोक्तेरसोदराणां सापत्नदत्तकादीनां *न दोषः । तदाह हेमाद्रौ वसिष्ठः—

कुतश्चित्प्रतिबन्धेन प्रातर्होमाकरणे न प्रातर्होमः । अन्यथा एककर्मत्वेऽपि दर्शपूर्णमासेष्ट्योरविशेषानुपपत्तिप्रसङ्गात् । एवञ्च विवाहोत्तरं प्रतिबन्धवशादगृहीतविवाहाग्नौ पौर्णमासस्थालीपाकोत्तरमकृतदर्शस्थालीपाकके विवाहहोमोत्तरमकृतौपासनहोमे सायमौपासनहोमोत्तरमकृतप्रातरौपासनकहोमके च न विवाहहोमदर्शस्थालीपाकौपासनहोमप्रातरौपासनहोमाः,

य आहिताग्नेर्धर्मः स्यात्स औपासनिकस्य तु ।

इति वचनात् । गृहप्रवेशनीयहोमादौ तु न ज्येष्ठकरणापेक्षेत्युक्तं 'प्रयोगं प्रथमे स्थितम्' इत्युक्तेः । पुनराधानादौ सर्वत्रापि पित्रादेरकृतपुनराधानादित्वेऽपि पुत्रादेर्न दोषः । आधानपदं विवाहोपलक्षणम् । *अनुज्ञातस्त्विति । अग्रजादेरधिकारासत्त्वे तदनुज्ञापेक्षावैयर्थ्यमालोच्याह—*अधिकारिणोऽपीति । आधानमिति शेषः । यत्र पित्रादिर्नास्तिकः अतः पुत्रादिनाऽऽधानं कृतं, पश्चादास्तिक्येन प्रायश्चित्तादि च, तत्रापि न दोष इत्येतल्लाभार्थमधिकारिण इत्युक्तम् । भार्यारहितादिर्नास्तिकश्चानधिकारी । *न दोष इति । यद्यविवाहितेन दत्तकेन औरसेन वा कथञ्चिद्दत्त-

(१) 'अग्रजानुमतं' ख० ।

पितृव्यपुत्रान्सापत्नान्परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

परनारीसुताः दत्तकादयः । देशान्तरे विशेषमाह स एव—'*अष्टौ दश द्वादश वर्षाणि (१)वा ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः *प्रायश्चित्ती भवति' इति ।

क्लीबादावप्यदोषमाह कात्यायनः—

देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्यानिष्ठांश्च पतितशूद्रतुल्यातिरोगिणः ॥
जडमूकान्धबधिरकुब्जवा(२)मन*खञ्जकान् ।
अतिवृद्धान*भार्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुटिलोन्मत्तचोरांश्च परिविन्दन्न दुष्यति ॥

आशार्केऽपि—

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा ।
राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम् ॥

---

को गृहीतः तदा तस्य तज्जीवनावधि विवाहादौ नाधिकारः, एवं क्रमेण दत्तकत्रयस्थले मध्यमे मृतेऽपि दत्तके पितामहेऽनिविष्टे जीवति पौत्रस्यापीति पित्रुपेक्षा । *अष्टाविति । धर्मार्थमर्थार्थं च द्वादशवर्षप्रतीक्षा । कार्यान्तरार्थं तु अष्ट वा दश वा ।

द्वादशैव तु वर्षाणि न्यायाद्धर्मार्थयोगतः ।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥

इति स्मृतेः । *प्रायश्चित्तीति । इदं तु बोध्यम् । कनिष्ठेन विवाहे आधानादौ वा कृते प्रायश्चित्तानन्तरं ज्येष्ठस्य विवाहे आधानादौ वा न दोष इति । *षण्डकानिति । (३)खञ्ज-

(१) 'वा' नास्ति क० ।
(२) 'कुब्जवामनसंज्ञकान्' क० ।
(३) 'खोडकान्' ङ० ।

एवं ज्येष्ठे *छिन्नहस्तादावपि न परिवेत्तृत्वम् । तदाह त्रिकाण्डमण्डनः—

दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम् ।
अग्निहोत्रं विवाहं च *प्रयोगे प्रथमे स्थितम् ॥
न कुर्याज्जनके ज्येष्ठे *सोदरे चाप्यकुर्वति ।
*क्षेत्रजादा*वनीजाने विद्यमानेऽपि सोदरे ॥
नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि चौरसे ।
पङ्ग्वन्धमूकबधिरपतितोन्माददूषणे ॥

---

कानिति वा पाठः । *अभार्यान् नैष्ठिकब्रह्मचारिणः । *छिन्न-हस्तादाविति । नन्वत्र कुतो नाधिकार इति चेत् ? आधानं हि नैमित्तिकं, तत्र 'आरोहतं दशनं शकरीरनु' इति मन्त्रे दशाङ्गुलि-भिररणिग्रहणमुक्तं तद्बाधप्रसङ्गात् । आदिना चतुरङ्गुलादिग्रहः । षडङ्गुलस्य त्वधिकारः, एकादशान्तर्दशमप्रवन्यायात् । एको हस्तः षडङ्गुलः, अपरस्तु चतुरङ्गुलः, तस्यापि नाधिकारः । यदङ्गुलित्वं, तस्या वस्तुत एकत्वाद्दशत्वापूरणात् । एवमाधानानन्तरं हस्तादि-च्छेदेऽग्निमेष्वधिकारः, नित्यत्वात् । एवं काणविकर्णादेरप्यधि-कारः, हिरण्यकेशिना कर्माशक्तिहेतोरेवाङ्गवैकल्यस्य निषेधात् , "याज्यस्य प्रथमैस्त्रिभिः" इति ऊनाङ्गस्याप्यधिकारोक्तेः । *प्र-योगे प्रथमे स्थितमिति । तेन द्वितीयदर्शेष्ट्यादौ द्वितीयविवा-हान्ते सर्वत्रापि अकृतपुनराधानादिके पित्रादौ जीवति पुत्रादेर्न दो-षः । *सोदरे चेति । चकारात् पितामहग्रहः । *क्षेत्रजादा-विति । अनौरसत्वस्य नान्वयो बाधात् । *अनीजाने यागम-कुर्वति । क्षेत्रजादौ ज्येष्ठेऽनीजाने विद्यमाने जीवति एकमातृ-कतया सोदरे तत्कनिष्ठभ्रातरि नाधिकारविघातोऽस्तीत्येकोऽन्व-यः, तेषां पितृत एवासोदरत्वात् । एवं भिन्नोदर्ये मातृतोऽप्यसो-दरे दत्तकादौ ज्येष्ठेऽनीजाने विद्यमाने तत्कनिष्ठभ्रातरि औरसे नाधिकारविघातोऽस्तीति अपरः । तथाच तयोर्दर्शेष्ट्यादिविवाहा-

संन्यस्ते छिन्नहस्तादौ यद्वा षण्ढादिदूषणे।
जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम्॥ इति
'आरोहनं दशतं शक्करीर्मम' इत्याधाने मन्त्रवर्णाच्च।

---

न्तेषु सर्वेष्वपि न दोष इत्यर्थः। यत्तु—

भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥

इति प्रयोगपारिजाते गौतमवाक्यम्, तस्य दत्तकेऽग्रजे प्रतिग्रहीतुरौरसस्य न परिवेत्तृत्वमित्यर्थः। तत्रैव ज्येष्ठे सोदरेऽकृतविवाहाधाने तदनुजस्य दत्तकस्य विवाहाधानयोः परिवेत्तृत्वमेव। नन्विदं कथं, दानेन परपुत्रतां प्राप्तौ हि दातुः पुत्रत्वप्रयुक्तकार्यव्यावृत्तौ तत्पुत्राणामपि भ्रातृत्वप्रयुक्तविधिनिषेधयोरविषयत्वादिति चेत्? न,

"सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसङ्ग्रहम्।
आवसथ्यं तथाधानम्" इति निषेधात्॥

नचेदं दत्तकातिरिक्तपरम्, दर्शितत्रिकाण्डमण्डनादिति वाच्यम्, सोदरो हि त्रिविधः—एकमातृपित्रुभयजः, एकमातृमात्रजश्च, एकपितृमात्रजश्चेति। तत्र आद्य औरसः, द्वितीयः क्षेत्रजः, तृतीयो भिन्नोदर्यः। तत्रान्त्ययोः त्रिकाण्डमण्डनेनाधिकाराविघात उक्तः। 'क्षेत्रजादौ' इति 'भिन्नोदर्ये' इति चोक्तः। न तु प्रथमे, 'सोदर्ये तिष्ठति ज्येष्ठे' इति वचने हि समानमुदरं यस्येति सोदरः; स एव सोदर्य इति व्युत्पत्तेरभिन्नोदरोत्पन्नत्वलाभात्। उदरं च मातापित्रोः, मातापित्रुभयमेव वा। एवञ्च तादृशो निषेधस्य विषयः। अन्यादृशो मण्डनकारिकाविषयः। तथाच यथा दत्तककनिष्ठस्य दत्तकविवाहाधाने विना न तत्राधिकारः, एवं दत्तकस्य कनिष्ठस्य सोदरज्येष्ठेऽकृतविवाहाधाने न तत्राधिकार इति भावः। यत्तु महाभारतादावनिविष्टे युधिष्ठिरेऽर्जुनस्य द्रौपदीविवाहविलम्बनम्, तदर्जुनस्यानौरसत्वात्। सजातीयेष्वेव लाघवेन निषेधप्रवृत्तेः।

शष्कुलीः। तन्त्ररत्नेऽप्युक्तम्–'अङ्गवैकल्यात्पूर्वमाहिताग्नित्वेऽधिक्रियेतैव नित्येषु। आधानं तु न कुर्यात्तस्य नैमित्तिकत्वात्' इति। एवं चतुरङ्गुलेऽपि (१)ज्येष्ठेऽनधिकारात्कनिष्ठस्य न दोषः षडङ्गुलकाणविकर्णादेस्त्वस्त्येवाधिकार इति (२)कनिष्ठस्य दोष एव, एकादशसु दशान्तर्गतेः। 'शारीरकार्श्यं वा विप्रतिषिद्धम्' इति हिरण्यकेशिसूत्रे कर्माशक्तिहेतोरेवाङ्गवैकल्यस्य निषेधात्। अत एव कात्यायनसूत्रे 'याज्यश्च प्रथमैस्त्रिभिर्गुणैः' इति न्यूनाङ्गस्याप्यधिकार उक्तः। अपरार्के उशनाः–

पिता *पितामहो यस्य अग्रजो वाथ कस्यचित्।
तपोऽग्निहोत्रमन्त्रेषु *न दोषः परिवेदने॥

---

*पितामह इति। तपः वानप्रस्थतासंन्यासौ आश्रमसमुच्चयपक्षे, पक्षान्तरे वानप्रस्थतैव। अग्निहोत्रं तदुपकारकमाधानं विवाहाग्निर्विवाहश्च। मन्त्रः वेदाध्ययनम्, तदुपकारकमुपनयनञ्च, एतत्रयानुरोधादनग्निमानिति त्रितयोपलक्षणम्। *न दोष इति। एतदनुज्ञापरम्, अकारणदोषाभावकथनविरोधात्सुमन्तुवाक्यैकवाक्यत्वाच्च। तथाच पित्रादिकेऽनग्निमत्यवानप्रस्थेऽनुपनीते वा जीवति पुत्रादित्रिकस्याधाने वानप्रस्थतायामुपनयने वाऽनुज्ञायां न दोष इत्यर्थः। तत्र वानप्रस्थता कलिवर्ज्यैव। पितृपितामहयोरनुपनयने व्रात्यस्तोमादिना तयोरुपनयनोत्तरं पुत्रादेरुपनयनं तद्योग्यताप्रायश्चित्तं कृत्वा कार्यम्। उपनयने वानुज्ञायाः कथमपि न सम्बन्धः, वाक्यान्तरे विवाहाधानयोरेव तत्सम्बन्धदर्शनात्तदेकवाक्यतयैव प्रकृते तयोरेव तल्लाभात्। यथा–अग्रजेऽनुपनीते कनिष्ठस्य नोपनयनं, तथा ज्येष्ठायां भगिन्यामनूढायां कनिष्ठस्य नोपनयनं कनिष्ठाया अनुद्वाहवत्, अन्यथाऽनौचित्यापत्तेः, विवाहस्यापि मन्त्रसाध्यत्वात्।

---

(१) 'ज्येष्ठेऽनधिकारात्कनिष्ठस्य न दोषः' नास्ति ख० ग०।
(२) 'इति कनिष्ठस्य दोष एव' नास्ति ख० ग०।

पितुराज्ञायामप्यदोषमाह मदनरत्ने सुमन्तुः—

**पित्रा यस्य तु नाधानं कथं पुत्रस्तु कारयेत् ।**

**अग्निहोत्रेऽधिकारोऽस्ति शङ्खस्य वचनं यथा ॥ इति ।**

नाधानं नाधानं कृतमित्यर्थः । एतदाज्ञायामेवेति हेमाद्रिः । यत्तु—

***पितुः सत्यप्यनुज्ञाने नादधीत कदाचन । इति,**

**त*त्सत्यधिकारे ज्ञेयम् ॥**

---

वैवाहिको विधिः स्त्रीणामौपनायनिकः परः ।

इति वाक्याच्चेति । अनुज्ञायामाधाने विशेषमाह पितुरित्यादिना । *पितुरिति ।

ज्येष्ठे श्रद्धाविहीने सत्याधानं तदनुज्ञया ।

इति पूर्वार्द्धम् । *सत्यधिकारे इति । पितुरधिकारे सत्यनुज्ञयाऽपि नाधिकारः, किन्त्वनधिकार एवेत्यर्थः । अत्राहुः—पित्रादि द्वेधा, अधिकारी अनधिकारी चेति । तत्र निषेधोऽविशेषात्सकलविषयः । प्रतिप्रसवस्तु अधिकारिणि पित्रादौ विशेषतो नास्त्येव । अनधिकारिण्यपि कादाचित्कनास्तिकत्वकादाचित्कान्धत्वादिके तत्र पुनःकरणसम्भावनायां पुत्रादेरनधिकार एव, अल्पबाधेनोपपत्तौ बहुबाधस्यान्याय्यत्वात् । जात्यन्धपतितादौ तु पित्रादावनधिकारिण्यपि तदाज्ञयैवाधानादावधिकारः । न्यायवचनसिद्धानधिकारोपजीवनेन तन्मनोनुकूलमात्रार्थतयाऽऽज्ञावाक्यस्यातिलाघवात् । अतिनास्तिकादौ तु पित्रादौ अत्यन्तनास्तिक्यादिना पुनः करणसम्भावनानिवृत्तावप्यग्रजाद्यनुमत्यैवाधिकारः । पितुस्त्वनुमत्यापि न, निषेधबाधकाज्ञावाक्यबाधकतया निषेधप्रतिप्रसवार्थत्वे लाघवात् । अत एव श्रद्धया विशेषेण हीने इत्युक्तम् । अत एव—

दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ।

इति हारीतमपि एतद्विषयमेव । अथवाऽनुमत्या कनिष्ठे कु-

ताधानादौ पश्चान्नास्तिक्यान्निवृत्ते प्रायश्चित्तादिपूर्वकमाधानादौ प्रवृत्तेऽग्रजे विवाहाग्निहोत्रयोर्विशेषं वक्तुमिदं, पश्चाद्विवाहे दोष एव नत्वाधानादाविति। यदा तु कादाचित्कनास्तिक्येन पित्रादावाधानादिकरणसम्भावना तदाऽनुज्ञायामपि नाधिकारः। अधिकारिणि तु पित्रादौ दूरापास्त एवाधिकार इति। यागादावप्याज्ञायां न दोष इत्याह मण्डनः—

पिता यस्याग्रजो भ्राता न कुर्याद्वा पितामहः।
तपोऽग्निहोत्रं यज्ञं वाऽऽज्ञया कुर्यात्कठाशयात्॥ इति।

क्वचित्त्वाज्ञां विनाऽप्यदोषः सुमन्तुनोक्तः—

व्यसनासक्तचित्तो वा नास्तिको वाऽथवाऽग्रजः।
कनीयान्धर्मकामस्तु आधानमपि कारयेत्॥ इति।

अग्रज इति पित्रादेः, आधानमिति यागादेः, अथवेति जात्यन्धबधिरपङ्ग्वादेश्चोपलक्षणमिति दिक्।

ननु बह्वृचादीनां याजुषमाधानमेव न स्यात्,

ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः।
तेन सन्तनुयाद् यज्ञं न कुर्यात्पारतान्त्रिकम्॥

इति पारतान्त्रिकनिषेधादिति चेत्? नैवम्, 'अनुक्तमन्यतो ग्राह्यम्' इति वचनात्,

आत्मतन्त्रेषु यन्नोक्तं तत्कुर्यात्पारतान्त्रिकम्।
विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः॥

इति कार्ष्णाजिनिना यतो वेदोक्ता विशेषाः सामान्याः सर्वानुष्ठातृपुरुषसाधारणा इत्यभिधानेन बह्वृचादीनां याजुषाधानादेः छान्दोगौद्गात्रादेराथर्वणशान्त्यादेश्चाधिकारबोधनाच्च,

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥

इति हेमाद्रौ छन्दोगपरिशिष्टे दृष्टान्तप्रदर्शनाच्च। तत्रापि बौधायनमापस्तम्बं वा ग्राह्यम्।

यजुषां बहुशाखात्वात्सन्देहे समुपस्थिते ।
कां शाखामवलम्बेरन् तादृशीं बह्वृचादयः ॥
आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम् ।
अन्यथा पतितो ज्ञेय इति बौधायनोऽब्रवीत् ॥ इति
आध्वर्यवं याजमानमाग्नीध्रं यच्च नोदितम् ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

इति च यज्ञकाण्डाभिधानात् । आग्नीध्रस्य ऋग्वेदमिश्रत्वात्तत्र याजुषभागत्यागशङ्कावारणाय तदुपादानम् ।

श्रौतं स्मार्त्तं च यत्कर्म स्वशाखायां न विद्यते ।
बौधायनोक्तं तद्ग्राह्यं बह्वृचादिभिरादरात् ॥

इति त्रिकाण्डमण्डनाच्च । स्मृतिसङ्ग्रहे—

वैतानिकाग्निकार्यं यत्स्वशाखायां न विद्यते ।
आपस्तम्बोदितं ग्राह्यं बह्वृचादिभिरादरात् ॥
बह्वृचस्सामगश्चापि कुर्यादाध्वर्यवादिकम् ।
आपस्तम्बेन वा प्रोक्तं तथा बौधायनेन वा ॥

यज्ञकाण्डे—

बह्वृचः सामगश्चापि स्वसूत्राभावतस्तथा ।
आपस्तम्बेन वा प्रोक्तमिति शातातपोऽब्रवीत् ॥

तत्र—

शाखिनामपि सर्वेषामभावे स्वप्रयोगिणाम् ।
आपस्तम्बोक्तमार्गेण कर्त्तव्यं पुनरब्रवीत् ॥

इति वचनाद्बौधायनाभावे आपस्तम्बं ग्राह्यम् । अभावे सान्निध्याभावे इत्यर्थात् अनिच्छायामित्यर्थाद्वा समविकल्पः । एतच्चोच्छिन्नपरम्परिकस्य नूतनपरिग्रहे एव

यद्यापस्तम्बशाखीयो भवेन्मातामहस्तदा ।
तत्र बौधायनाभावे तत्सूत्राधानमिष्यते ॥

इति च तादृशपरिग्रह एव । यस्यापस्तम्बीयपरम्पराऽस्ति,

परन्तु यदि तत्प्रयोक्ता न विद्यते, तदोक्तम्—

आपस्तम्बस्य चाभावे बौधायनमथापि वा ।

अन्यत्रापि—

आपस्तम्बादिभिरपि स्वसूत्राभावतस्तथा ।
बौधायनेन कर्त्तव्यमन्यथा पतितो भवेत् ॥ इति ।

एतेन—

पितृशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद् बहिष्कार्यः सर्वकर्मसु साधुभिः ॥
पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखाकर्म कुर्वीरन् तच्छाखाध्ययनं तथा ॥
न जातु परशाखोक्तं शाखारण्डादिकारणम् ।
येषां केषां च मर्त्यानां नान्यदध्वर्युरादिशेत् ॥
तेषां पुत्राश्च नप्तारः पतिताः स्युर्न संशयः ।

इति व्याख्यातम् । एतस्योक्तविषयत्वादनुक्तस्यान्यतो ग्रहे बाधकाभावात् । यस्य बह्वृचादेरापस्तम्बं पूर्वं परिगृहीतं तेन तत्प्रयोक्तृसत्त्वे बौधायनं न कार्यम्,

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥

इति मानवात् "यजनीयकल्पपरिग्रहे पूर्वपरिग्रहः प्रमाणं, तत्यागे दोषः, तदज्ञाने स्वेच्छया परिग्रहः" इति भरद्वाजसूत्रे पूर्वकल्पं परित्यज्य कल्पान्तरपरिग्रहे दोषोक्तेश्च । अस्यार्थः श्रौतसर्वस्वे ब्रह्मविद्यातीर्थकृता दर्शितः—पूर्वयोः पितृपितामहयोः पूर्वेषां त्रयाणां पित्रादीनां परिग्रहः पुत्रादेः परिग्रहे प्रमाणम् । एवं पूर्वस्य भ्रातुः पूर्वयोर्भ्रात्रोः पूर्वेषां वा भ्रातॄणामिति कनीयसः पूर्वो वा स्वस्यैव परिग्रहः, प्राथमिकस्वपरिग्रह इति यावदिति । एषां च विग्रहक्रमेणानुक्रान्तानां विरोधे सर्वेषां सम्भूय प्रामाण्यं, विरोधे तु पूर्वं पूर्वं बलीयः । तथाच ज्ञायमानप्रपितामहपरिग्रहमा-

रभ्य ज्येष्ठपरिग्रहान्तानां मध्ये प्रपितामहपरिग्रहोऽवलम्बनीयः। प्रपितामहपरिग्रहोऽपि पूर्वाविरुद्धो ग्राह्यः। एवं क्रमेण स्वपरिग्रहपर्यन्तम्,

कल्पमेकं समाश्रित्य प्रवृत्तेऽपि च कर्माणि।
न मिश्रयेत्प्रयोगांस्तान्कल्पयोरव्यवस्थयोः॥

इति विष्णुस्वामिकारिकादर्शनात्।

स्वेन पित्रादिभिर्वाऽपि कल्पादिः पूर्वमादृतः।
स तु नैव परित्याज्य इति वेदानुशासनम्॥

इति छन्दोगपरिशिष्टात्। स्वेनेति पित्रादिभिरिति च पूर्वविरुद्धपित्रादिपरिग्रहाज्ञानविषयम्। तथाच पूर्वविरुद्धः पित्रादिपरिग्रहस्त्याज्यः। एवं तद्विरुद्धो ज्येष्ठपरिग्रहस्तदुभयाविरुद्धश्च स्वपरिग्रहोऽप्येवम्। तत्त्यागे दोष इति। तयोस्तस्य वा त्यागे त्यागपूर्वकान्यपरिग्रहे दोष इत्यर्थः,

स्वशाखां यः परित्यज्य परशाखां सुवर्त्तते।
आच्छेत्ता तस्य वंशस्य पतते रौरवं महत्॥

इति यज्ञपार्श्ववचनात्,

स्वशाखायाः परित्यागात्तथा शाखान्तरग्रहात्।
यो दोषः कथितस्तद्वत्कल्पान्तरपरिग्रहे॥

इति त्रिकाण्डमण्डनाच्च, शाखारण्डकल्परण्डयोः—

यः स्वशास्त्रं परित्यज्य परशास्त्रेण वर्त्तते।
भ्रूणहत्याकृतो दोषस्तस्य स्यान्नात्र संशयः॥

इति बौधायनेन तृतीयप्रश्ने भ्रूणहत्याप्रायश्चित्तोक्तेश्च। एवमेव यश्छन्दोगादिः कातीयकल्पेन वर्त्तते तस्य तत्त्यागे दोषो बोध्यः,

गुरुणाऽनुष्ठितं तन्त्रं तत्सूत्रेण समाचरेत्।
अन्यथा कर्महानिः स्यात्प्रायश्चित्ती भवेत्तु सः॥

इति यज्ञपार्श्ववचनाच्च। एवं सोमयागादावपि,

आधानं येन सूत्रेण तेनैवेत्यादिकाः क्रियाः।

इति यज्ञपार्श्ववचनात् । एतच्च न केवलं बौधायनमात्रविषयं किन्तु यत्राश्वलायनशाङ्खायनादीनां द्राह्यायणकौथुम्यादीनां च मध्ये येन सूत्रेणाऽऽधानं तेनैव सूत्रेण सोमयाग इत्यपि । तेनाश्वलायनाद्यन्यतमानामेकतरसूत्रेणाधानानन्तरमपरसूत्रेण यागे दोषः । आध्वर्यवादि हौत्रादि औद्गात्रादि वाऽऽधानमारभ्य यज्ञान्तमेककल्पमालम्ब्य कार्यम् । यत्र तु तावत्पर्यन्तमेककल्पो नास्ति तत्र यावत्पर्यन्तमेव तत्कार्यं नाधिकमिति । तदज्ञाने स्वेच्छया परिग्रह इति, "वैकल्पिकेष्वात्मतुष्टिः" इति गौतमवचनात् । आद्याज्ञाने पूर्वपूर्वाविरुद्धप्रमाणभूतोत्तरोत्तराज्ञाने च स्वेच्छया बौधायनापस्तम्बकल्पयोरन्यतरो ग्राह्य इत्यर्थः । "ऊनो वाऽप्यतिरिक्तो वा" इति वचनं,

यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥

इति वचनं च विरुद्धानुष्ठाननिषेधार्थम् । अथवाऽयं भावः—कस्यांचिच्छाखायां बहुवित्तव्ययायाससाध्यत्वेन निर्णीतं यत्कर्म तदेव चेदन्यस्यां शाखायामल्पवित्तव्ययायाससाध्यत्वेन प्रसिद्धं, तत्र महाकर्मणः फलाधिक्यं मत्वा शाखान्तरदृष्टे तत्कर्मणि कश्चित्प्रवर्त्तेत, अलसस्तु पुनरल्पकर्मणि, तयोश्च स्वशाखोक्तकर्मपरित्यागः परोक्ताविहितकर्मनिष्पत्तिश्च स्यात् , तद्वारणाय 'ऊनो वा' इति, 'यः स्वशाखाम्' इति च । अत एव बैजवापः—

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥ इति ।

अत एव वसुधारादिकं बह्वृचैर्न क्रियते । तर्हि 'यन्नाम्नातं स्वशाखायाम्' इत्यस्य को विषयः ? यत्र प्रधानादिमात्रं किञ्चिदुक्तं तत्रावश्यकोऽङ्गकलापश्चेदविरुद्धस्तदा ग्राह्य इति । एवम्—

इष्टापूर्त्तादिकं कर्म स्वशाखोक्तं न विद्यते ।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात् ॥

इत्युक्तेः रुद्रानुष्ठानादि बौधायनोक्तं कार्यं न कात्यायनाद्युक्तमिति ।

अथ शूद्रसंस्काराः। यमः--

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।
न केनचित्समसृजच्छन्दसा तं प्रजापतिः॥

छन्दसा मन्त्रेण। व्यासोऽपि--

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च।
नामक्रिया निष्क्रमोऽन्नप्राशनं*वपनक्रिया॥
कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः।
केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः॥
त्रेताग्निसङ्ग्रहश्चैव संस्काराः षोडश स्मृताः।

इत्युक्त्वाह--

नवैताः कर्णवेधान्ता मन्त्रवर्जं स्त्रि(१)याः क्रियाः।
विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश॥ इति।

मदनरत्ने-हिरण्यगर्भदाने तु--

गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा।
कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवाः॥

इत्युक्त्वा-

जातकर्मादिकाः कुर्यात्क्रियाः षोडश चापराः।

इत्यत्र 'स्त्रियाः जातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडाविवाहाः षट्, शूद्राणां तु षडेते पञ्चमहायज्ञाश्चेत्येकादश' इत्युक्तम्। रूपनारायणहरिहरभाष्ययोरप्येवम्। शार्ङ्गधरस्तु--

---

*वपनक्रिया। चौलम् 'संस्कारा नाममन्त्रतः' इत्युक्त, तत्र स्वधास्वाहयोर्निषेधः। दिगर्थस्तु

गार्भैर्होमैर्जातकर्म चूडामौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥

इति मनुवाक्ये द्विजग्रहणाद्धोमो द्विजानामेव न शूद्राणामित्या-

---

(१) 'क्रियाः स्त्रियाः' क०।

द्विजानां षोडशैव स्युः शूद्राणां द्वादशैव हि ।
पञ्चैव मिश्रजातीनां संस्काराः कुलधर्मतः ॥
वेदव्रतोपनयनमहानाम्नीमहाव्रतम् ।
विना द्वादश शूद्राणां संस्कारा नाममन्त्रतः ॥

इत्याह । अपरार्कस्तु--

'गर्भाधानमृतौ पुंसः' इत्यत्राह-'एतच्चातुर्वर्ण्यपरं न द्विजातिमात्रपरम् । तथा सत्युपनयनं विधाय वाच्यं स्यात्' इति । तेन तन्मतेऽष्टौ भवन्ति । ब्राह्मे तु--

विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा ।

इत्युक्तम् । अत्र सदसच्छूद्रगोचरत्वेन देशभेदाद्व्यवस्था । यत्तु मनुः--

न शूद्रे पातकं किंचिन्न च संस्कारमर्हति । इति ।

तदर्थमाह मेधातिथिः-'यत्सामान्यतो निषिद्धं स्तेयानृतादि न तदतिक्रमेऽस्य पापं यथा द्विजानाम् । उपनयनरूपं संस्कारं च नार्हति' इति । ते च तूष्णीं कार्याः,

शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥

इति व्यासोक्तेः,

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ।

इति मरीच्युक्तेश्च । इयं परिभाषा सर्वार्था, तेन शूद्रधर्मेषु सर्वत्र विप्रेण मन्त्रः पठनीयः । सोपि पौराण एवेति शूलपाणिः । एवं स्त्रीणामपीति दिक् ।

इति रामकृष्णभट्टात्मजकमलाकरभट्टकृते निर्णयसिन्धौ तृतीयपरिच्छेदे पूर्वार्धे संस्कारनिर्णयः ॥

अथ क्षुद्रकालाः । तत्र जलाशयस्य वरा(१)हः--

हस्ते चाम्बुपपौष्णकेशवमघामित्रोत्तरारोहिणी-
देवेज्येषु च शुक्रसौम्यशशभृद्वागीशवारांशके ।

(१) 'वाराहः' ख० ।

रिक्तां छिद्रतिथिं विहाय वृषभे नक्रे कुलीरे घटे
मीने कूपतडागकर्म मुनयः शंसन्ति शुद्धेऽष्टमे ॥
हस्तो मृ(१)गानुराधापुष्यधनिष्ठोत्तराणि रोहिण्यः ।
शतभिषगित्यारम्भे कूपानां शस्यते भगणः ॥

हेमाद्रौ भविष्ये—

तस्मिन्सलिलसंपूर्णे कार्तिके तु विशेषतः ।
मुनयः केचिदिच्छन्ति व्यतीते चो*त्तरायणे ॥
न कालनियमस्तत्र सलिलं तत्र कारणम् ॥

दीपिकापि—

*मार्तण्डेन्दूडुशुद्धौ मुरजिदशयने माघषट्कस्य शुक्ले
मूलाषाढोत्तराश्विश्रवण *गुरुकरे पौष्णशाक्रा(२)जचान्द्रे।
मैत्रे ब्राह्मे च पूर्णा*मदनरवितिथौ सद्वितीयातृतीये
कार्या तोयप्रतिष्ठा ज्ञगुरुसितदिने कालशुद्धे सुलग्ने ॥

वराहः—

आग्नेये यदि कोणे ग्रामस्य पुर(३)स्य वा भवति कूपः ।
नित्यं स करोति भयं दाहं च स मानसं प्रायः ॥
नैर्ऋत्ये बालभयं वनिताक्षयं च वायव्ये ।
दिक्त्रयमेतत्त्यक्त्वा शेषास्तु शुभावहाः कूपाः ॥

दि । 'एनः पापं शुक्रशोणितोभयसंसर्गादशुचित्वम्' इति मेधातिथिः । 'गोत्रव्याधिसङ्क्रान्तिनिमित्तमेनः, न पतितोत्पन्नत्वादि' इति विज्ञानेश्वरः ।

*उत्तरायणे मकरसङ्क्रान्तौ । *मार्त्तण्डेति । सूर्यचन्द्रनक्षत्राणां बले, विष्णोः प्रबोधे । गुरुः पुष्यः, करो हस्तः, पौष्णं रेवती, शाक्रं ज्येष्ठा, आजं श्रवणम्, चान्द्रं मृगः, मैत्रम् अनुराधा, ब्राह्मं रोहिणी, पूर्णा पञ्चमी दशमी पूर्णिमा । *मदनेति । त्रयोदशीसप्तम्यौ ।

---

(१) 'मघा' ख० । (२) 'शाक्राप्य' ग० । (३) 'गृहस्य' क० ।

वास्तुशास्त्रे—

भूतिं पुष्टिं पुत्रहानिं पुरन्ध्री-
नाशं मृत्युं संपदं शत्रुबाधाम् ।
किञ्चित्सौख्यं शम्भुकोणादि कुर्यात्
कूपो मध्ये गेहमर्थक्षयं च ॥

उत्सर्गवि(१)धिश्चोक्तो बह्वृचपरिशिष्टे-*'अथातो वापीकूपतडागयज्ञं व्याख्यास्यामः पुण्येह्न्युदकसमीपेऽग्निं समाधाय वारुणं चरुं श्रपयित्वाज्यभागान्ते आज्याहुतीर्जुहुयात्-"समुद्रज्येष्ठा" इति प्रत्यृचं; ततो हविषाऽष्टौ-"तत्त्वायामि"इति पञ्च, "त्वं नो अग्ने" इति द्वे, इमं मे वरुण" इति च; स्विष्टकृतं नवमम् । मार्जनान्ते धेनुं तारयेत् । अव(२)तीर्यमाणामनुमन्त्रयेत—

इदं सलिलं पवित्रं कुरुष्व
शुद्धाः पूता अमृताः सन्तु नित्यम् ।
मां तारयन्ती कुरु तीर्थाभिषेकं
लोकाल्लोकं तरते तीर्यते च ॥ इति ।

पुच्छाग्रान्वारभ्य उत्तीर्य "आपो अस्मान्मातरः शुन्धयन्तु" इति । अथापराजितायां दिश्युत्थापयेत् "सूयवसाद्भगवती"इति । हिङ्कृतं चेद् 'हिं कृण्वती'इति । अलंकृतां विप्राय दद्यादितरां वा शक्त्या दक्षिणाम् । तत उत्सृजेद्देवपितृमनुष्याः प्रीयन्तामिति । ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत इति । विस्तरस्तु मात्स्योक्तोऽस्मत्कृतजलाशयोत्सर्गविधौ ज्ञेयः । *कूपादेरुत्सर्गाकरणे दोष उक्तो भविष्ये--

*अथात इति । अयं संक्षेपेण विधिः । विस्तरेण तु मात्स्यादौ पूर्त्तकमलाकरादौ च द्रष्टव्यः । *कूपादेरिति । आदिना वाप्यादिग्रहः ।

(१) 'विधि' नास्ति क० । (२) 'तार्य' क० ।

सदा जलं पवित्रं स्यादपवित्रमसंस्कृतम् ।
कुशाग्रेणापि राजेन्द्र न स्प्रष्टव्यमसंस्कृतम् ॥

तथा--

वापीकूपतडागादौ यज्जलं स्यादसंस्कृतम् ।
अपेयं तद्भवेत्सर्वं पीत्वा चान्द्रायणं चरेत् ॥

अथ वृक्षारोपणम् । चण्डेश्वरः--

आदित्यचान्द्रपितृतिष्यविशाखपौष्ण-
मूलोत्तरात्रयतुरङ्गमवारुणाश्च ।
एतेषु तारकगणेषु हितं नराणां
वृक्षादिरोपणमिहोपदिशन्ति धीराः ॥

अथ मूर्तिप्रतिष्ठा । वसिष्ठः--

हस्तत्रये मित्रहरित्रये च
पौष्णद्वयादित्यसुरेज्यभेषु ।
तिस्रोत्तराधातृशशाङ्कभेषु
सर्वामरस्थापनमुत्तमं स्यात् ॥

मात्स्ये--

चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

नारदस्तु चैत्रं निषेधति-

विचैत्रेष्वेव मासेषु माघादिषु च पञ्चसु ॥ इति ।

तेनात्र विकल्पः(१) । अत्र माघमासो विष्णुप्रतिष्ठाव्यतिरिक्तविषयः,

माघे कर्तुर्विनाशाय फाल्गुने शुभदा भवेत् ।

इति विष्णुधर्मोक्तेरिति हेमाद्रिः । मा(२)त्स्ये--

दृढा धनकरी स्फीता तथा प्रतिपदि स्मृता ।

---

(१) इतोग्रे 'कालादर्शेऽपि केचिच्चैत्रं न मन्यन्ते । कारणतन्त्रेऽपि-विना चैत्रं तु माघादौ प्रतिष्ठा मासपञ्चके' इत्यधिकं क० ।

(२) 'विष्णुधर्मोत्तरे' क० ।

द्वितीयायां धनोपेता तृतीयायां धनप्रदा ॥
चतुर्थ्यां नाशमाप्नोति यमस्य स्यात्सुखावहा ।
विनायकस्य देवस्य तथा तत्र हितप्रदा ॥
पञ्चम्यां श्रीयुता कर्तुर्वरदा च तथा भवेत् ।
षष्ठयां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी ॥
अष्टम्यां धान्यबहुला नवम्यां च विनश्यति ।
भद्रकाल्याः कृता तत्र कर्तुर्भवति तुष्टये ॥
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा तिथौ ।
एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा ॥
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ।
कृष्णपक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत् ॥
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ।
(१)आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।
ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा ।
हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा ॥
अनूराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ।

श्रीपतिः—

रोहिण्युत्तरपौष्णवैष्णवकरादित्याश्विनीवासवा-
नूराधैन्दवजीवभेषु गदितं विष्णोः प्रतिष्ठापनम् ।
पुष्यश्रुत्यभिजित्सुरेश्वरकयोर्वित्ताधिपस्कन्दयो-
र्मैत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकानां शुभम् ॥

गणपरिवृढरक्षोयक्षभूतासुराणां
प्रथमफणिसरस्वत्यादिकानां च पौष्णे ।
श्रवसि सुगतनाम्नो वासवे लोकपानां
निगदितमखिलानां स्थापनं च स्थिरेषु ॥

तेजस्विनी क्षेमकृदग्निदाह-
विधायिनी स्याद्धनदा दृढा च ।

---

(१) इतः पूर्वं–'मात्स्ये' इत्यधिकं क० ।

आनन्दकृत्कल्पविनाशिनी च
सूर्यादिवारेषु भवेत्प्रतिष्ठा ॥

माधवीये वैखानसः—

मातृभैरववाराहनरसिंहत्रिविक्रमाः ।
महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने ॥

वैशब्दोऽप्यर्थे ।

लिङ्गप्रतिष्ठायां विशेषो हेमाद्रौ लक्षणसमुच्चये—

उत्तराशागते भानौ लिङ्गस्थापनमुत्तमम् ।
दक्षिणे त्वयने पूज्य त्रिवर्षार्धे भयावहम् ॥
स्वगृहे स्थापनं नेष्टं तस्माद्वै*दक्षिणायने ।
स्थापनं तु प्रकर्तव्यं शिशिरादावृतुत्रये ॥
प्रावृषि स्थापितं लिङ्गं भवेद्वरदयो(१)गदम् ।
हेमन्ते ज्ञानदं चैव (२)शिशिरे सर्वभूतिदम् ॥

प्रवर्तयेद्देवभूतनृपितृब्रह्मपूर्वकान् ।
यज्ञान् यथोक्तविधिना ज्योतिष्टोमादिकानपि ॥

इत्युक्त्वा कूपादिलक्षणमुक्तं हरिणा—

द्वारहीनो भवेत्कूपो द्वारेणैकेन वापिका ।
नैकद्वारा पुष्करिणी दीर्घाकारा तु दीर्घिका ॥
कुल्याविस्तुततोयश्च तडागः परिकीर्तितः ।
एतदारामादिकं वा प्रपादिं वा प्रवर्त्तयेत् ॥
निन्देद्वा किन्तु तान् दृष्ट्वा नमस्कुर्यादलङ्घयन् ॥ इति ।

*दक्षिणायने इति । मुक्तिकामानां दक्षिणायने न दोषः,

श्रेष्ठोत्तरे प्रतिष्ठा स्यादयने मुक्तिमिच्छताम् ।
दक्षिणे तु मुमुक्षूणां मलमासे न सा द्वयोः ॥

इति वचनात् ।

---

(१) 'योगिदम्' क० ।

(२) 'शिशिरे सर्वभूतिदम् । लक्ष्मीप्रदं वसन्ते च ग्रीष्मे च जयशान्तिदम् । यतीनां सर्वकाले च' 'ख' 'ग' पुस्तकयोर्नास्ति ।

लक्ष्मीप्रदं वसन्ते च ग्रीष्मे च जयशान्तिदम् ।
यतीनां सर्वकाले च लिङ्गस्यारोपणं मतम् ॥

रत्नावल्याम्—

माघफाल्गुनवैशाखज्येष्ठाषाढेषु पञ्चसु ।
मासेषु शुक्लपक्षेषु लिङ्गस्थापनमुत्तमम् ॥

विष्णोरप्याह तत्रैव वैखानसः—

मार्गशीर्षादिमासौ द्वौ निन्दितौ ब्रह्मणा पुरा ।
मासेषु फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव च ॥
वृषे वाप्यश्वयुङ्मासे श्रावणे मासि वा भवेत् ।

बौधायनसूत्रे विष्णुप्रतिष्ठामुपक्रम्य—'द्वादश्यां श्रोणायां वा यानि चान्यानि पुण्यनक्षत्राणि' इति । कृत्तिकादिविशाखान्तेष्वित्यर्थः । सर्वदेवेषु मासविशेषो हेमाद्रौ विष्णुधर्मे—

माघे कर्तुर्विनाशाय फाल्गुने शुभदा भवेत् ।
लोकानन्दकरी चैत्रे वैशाखे वरसंयुता ॥
आज्ञायुता सदा ज्येष्ठे आषाढे धर्मवृद्धिदा ।
श्रावणे धनहीना स्यात्प्रोष्ठपादे विनश्यति ॥
आश्विने नाशमाप्नोति वह्निना कार्तिके तथा ।
सौम्ये सौभाग्यमतुलं पौषे पुष्टिरनुत्तमा ॥
दोषान्विताधिमासे स्यात्कर्तुरात्मन एव च ॥ इति ।

अत्र श्रावणाश्विनयोर्निषेधो मार्गशीर्षविधिश्च विष्णुव्यतिरिक्तविषयः पूर्वोक्तवचनादिति हेमाद्रिः । माघश्रावणभाद्रपदानिषेधः शिवव्यतिरिक्तविषयः, तत्र तस्योक्तेः । देवीस्थापने तत्रैव विशेषो देवीपुराणे—

देव्या माघेऽश्विने मासे उत्तमा सर्वकामदा ।

तथा—

न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ।
सर्वकालं प्रकर्तव्यं कृष्णपक्षे विशेषतः ॥

अन्यश्चात्र विचारो हेमाद्रौ ज्ञेयः । नारदः—

*हन्त्यर्थहीना कर्तारं मन्त्रहीना तु ऋत्विजम् ।
स्त्रियं लक्षणहीना तु न प्रतिष्ठासमो रिपुः ॥

अत्राधिकारिण उक्ताः कृत्यकल्पतरौ देवीपुराणे—

वर्णाश्रमविभेदेन देवाः स्थाप्यास्तु नान्यथा ।
ब्रह्मा तु ब्राह्मणैः स्थाप्यो गायत्रीसहितः प्रभुः ॥
चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः ।
भैरवोऽपि चतुर्वर्णैरन्त्यजानां तथा मतः ॥
मातरः सर्वलोकैस्तु स्थाप्याः पूज्याः सुरोत्तमाः ।
लिङ्गं गृही यतिर्वापि संस्थाप्य तु यजेत्सदा ॥

शिवसर्वस्वे भविष्ये—

यस्तु पूजयते लिङ्गं देवादिं मां जगत्पतिम् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मत्परायणः ॥
तस्य प्रीतः प्रदास्यामि शुभाँल्लोकाननुत्तमान् ।

तिथितत्त्वे स्कान्दे—

शूद्रः कर्माणि यो नित्यं स्वीयानि कुरुते प्रिये ।
तस्याहमर्चां गृह्णामि चन्द्रखण्डविभूषिते ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थश्च सुव्रते ।
एवं दिने दिने देवं पूजयेदम्बिकापतिम् ॥
संन्यासी देवदेवेशं प्रणवेनैव पूजयेत् ।
नमोन्तेन शिवेनैव स्त्रीणां पूजा विधीयते ॥

---

*हन्तीति ।

अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजम् ।
श्रद्धाविहीनः कर्त्तारं नास्ति यज्ञसमो रिपुः ॥

इत्यादिकमपि द्रष्टव्यम् । श्रद्धा चेह भूयसीदानादिरूपा शास्त्रान्तरवशात् ।

एतच्च पुराणप्रसिद्धजीर्णलिङ्गपूजाविषयम् । यानि तु त्रिस्थलीसेतौ नारदीये—

यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः ।
न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि ॥
नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा ।
स सर्वयातनाभोगी यावदाचन्द्रतारकम् ॥
पाखण्डपूजितं लिङ्गं नत्वा पाखण्डतां व्रजेत् ।
आभीरपूजितं लिङ्गं नत्वा नरकमश्नुते ॥
योषिद्भिः पूजितं लिङ्गं विष्णुं वापि नमेत्तु यः ।
स कोटिकुलसंयुक्तमाकल्पं रौरवं वसेत् ॥

इत्यादीनि, तानि नूतनस्थापितलिङ्गादिविषयाणि ।

यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।
तदाप्रभृति शूद्रश्च योषिद्वापि न संस्पृशेत् ॥

इति तत्रैवोक्तेः ।

प्रतिष्ठायां तु शूद्रादीनां नाधिकारः—

स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर ।
स्थापने नाधिकारोऽस्ति विष्णोर्वा शंकरस्य वा ॥
यः शूद्रसंस्कृतं लिङ्गं विष्णुं वापि नमेन्नरः ।
इहैवानन्तदुःखानि पश्यत्यामुष्मिके किमु ॥
शूद्रो वानुपनीतो वा स्त्रियो वा पतितोऽपि वा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥

इति बृहन्नारदीयस्कान्दोक्तेरिति त्रिस्थलीसेतौ पितामहचरणाः । चतुर्वर्णैरिति पूर्वोक्तवचनाद्विष्णवादिप्रतिष्ठायां शूद्रस्य विकल्प इति युक्तं पश्यामः । तत्रैव गौतमः—

शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ।

वाचस्पति(१)धृतम्—

प्राक्पश्चिमोदगास्यस्तु प्रातः सायं निशासु च ।

इति प्रयोगपारिजाते । गृह्यपरिशिष्टे—

प्रतिमाः प्राङ्मुखीरुदङ्मुखो यजेताऽन्यत्र प्राङ्मुखः ।

एतच्च स्थिरप्रतिमाविषयम् । अन्यत्र (२)चलार्चासु ॥

अथ प्रतिमाः भार्गवार्चनदीपिकायां भविष्ये—

सौवर्णी राजती ताम्री मृन्मयी च तथा भवेत् ।
पाषाणधातुयुक्ता वा रीतिकांस्यमयी तथा ॥
( रीतिः पित्तलम् । )

शुद्धदारुमयी वापि (३)देवतार्चा प्रशस्यते ।
अङ्गुष्ठपर्वादारभ्य*वितस्तिं यावदेव तु ॥
गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥

पञ्चरात्रे तु—

मृ*द्दारुलाक्षागोमेदमधूच्छिष्टमयी न तु ।

इति निषेध उक्तः । भागवते—

---

*वितस्तिमिति । तल्लक्षणं कोशे—

प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ।
अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ॥ इति ।

*दारुः काष्ठम्, लाक्षा प्रसिद्धा, गोमेदः प्रसिद्धः, मधूच्छिष्टं मधूत्थनाख्यं द्रव्यम् । हयशीर्षपञ्चरात्रे—

न कुर्याल्लक्षणोद्धारं रत्नजानां चलात्मनाम् ।
सुप्रभालक्षणं त्वेषां स्वर्णजानामपि द्विज ॥
तस्मान्न लक्षणोद्धारं कुर्यात्पाषाणलिङ्गवत् । इति ।

---

(१) 'धृतौ' क० 'मतम्' ख० ।
(२) 'चलनार्चासु' ख० ।
(३) देवतार्च्या' ख० ।

शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाष्ट(१)विधा स्मृता ॥
काष्ठं मधुकस्यैव,
तत्र काष्ठेषु मधुकमानीय च वसुन्धरे ।
कृत्वा तत्प्रतिमां चैव प्रतिष्ठाविधिनाऽर्चयेत् ॥

इति वाराहोक्तेः। देवीपुराणे--
सप्ताङ्गुलं समारभ्य यावच्च द्वादशाङ्गुलम् ।
गृहेष्वर्चा समाख्याता प्रासादे त्वधिका शुभा ॥

तिथितत्त्वे कालिकापुराणे--
प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना ।
प्राणप्रतिष्ठां कुर्वीत तस्य देवस्य वा हरेः ॥
अन्येषामपि देवानां प्रतिमासु च पार्थिव ।
प्राणप्रतिष्ठा कर्तव्या तस्यां देव(२)त्वसिद्धये ॥
वासुदेवस्य बीजेन तद्विष्णोरित्यनेन च ।
तथैव हृदयेऽङ्गुष्ठं दत्त्वा शश्वच्च मन्त्रवित् ॥
एभिर्मन्त्रैः प्रतिष्ठां तु हृदयेऽपि समाचरेत् ।
अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्यै देवत्वमर्चायै (३)मामहेति च कश्चन ॥

हयशीर्षपञ्चरात्रे--
अर्चकस्य तपोयोगादर्चनस्यातिशायनात् ।
आभिरूप्याच्च बिम्बानां देवः सांनिध्यमृच्छति ॥

प्रयोगपारिजाते व्यासः--
प्रतिमापट्टयन्त्राणां नित्यं स्नानं न कारयेत् ।
कारयेत्पर्वदिवसे यदा वा मलधारणम् ॥

---

(१) 'विधा मता' क० ।
(२) 'देवस्य सिद्धये' क०
(३) 'मामहेति न कश्चन' क० ।

लिङ्गे विशेषास्तिथितत्त्वे भविष्ये--

मृद्भस्मगोशकृत्पिष्टताम्रकांस्यमयं तथा ।
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि ॥
वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम् ।
कृत्वा पूजय विप्रेन्द्र लप्स्यसे वाञ्छितं फलम् ॥

तत्रैव कालकौमुद्यां स्कान्दे—

अक्षादल्पपरिमाणं न लिङ्गं कुत्रचिन्नरः ।
कुर्वीता*ङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत् ॥

अक्षोऽशीतिर्गुञ्जाः । 'गुञ्जाः पञ्चाद्यमाषकः । ते षोडशाक्षः कर्षोऽस्त्री' (अ०को०२-९-८६) इत्यमरकोशात् । प्रयोगपारिजाते क्रियासारे—

नवाष्टसप्ताङ्गुलिकं लिङ्गं श्रे(१)ष्ठमिहोच्यते ।
षट्पञ्चकचतुर्मानं मध्यमं त्रिविधं स्मृतम् ॥
त्रिद्व्येकाङ्गुलिमानं यत्त्रिविधं तत्कनीयसम् ।
एवं नवविधं प्रोक्तं चरलिङ्गं यथाक्रमम् ॥

अथ पञ्चसूत्रीनिर्णयः । गौतमीतन्त्रे—

लिङ्गमस्तकविस्तारो लिङ्गोच्छ्रायस(२)मो मतः ।
परिधिस्तत्रिगुणितस्तद्वत्पीठं व्यवस्थितम् ॥
प्रणालिका तथैव स्या*त्पञ्चसूत्रविनिर्णयः ।

---

*अङ्गुष्ठत इति । मन्त्रमहोदधौ--

अङ्गुष्ठादिवितस्त्यन्तं न न्यूनं नाधिकं क्वचित् ॥ इति ।

*पञ्चसूत्रेति ।

पञ्चसूत्रविधानं च कुर्याल्लिङ्गे शुभावहम् ।

इति वचनात्पञ्चसूत्रमावश्यकम् ।

पञ्चसूत्रविधानं च पार्थिवे न विचारयेत् ।
यथाकथञ्चिद्विधिना रमणीयं प्रकल्पयेत् ॥

---

(१) 'दीर्घमिहो' क० । (२) 'समन्वितः' क० ।

अत्रेदं तत्त्वम् । लिङ्गमस्तकविस्तारं लिङ्गोच्चतासमं कृत्वा तत्त्रिगुणसूत्रवेष्टनार्हं लिङ्गस्थौल्यं कृत्वा तत्समं वृत्तं चतुरस्रं वा पीठविस्तारमधश्चोर्ध्वं च कुर्यात् । पीठोच्चता तु लिङ्गोच्चतातो द्विगुणा । पीठमध्ये लिङ्गाद्द्विगुणस्थूलं पीठोच्चतातृतीयांशेन कण्ठं कृत्वा तस्योर्ध्वम् अधश्च समं वप्रद्वयं त्रयं वा कृत्वा लिङ्गविस्तारषष्ठांशेन पीठोपरि बाह्यमेखलां कृत्वा तदन्तःसंलग्नं तत्समं खातं कृत्वा पीठाद्बहिर्लिङ्गसमदीर्घां पीठार्धदीर्घां वा मूले दैर्घ्य(१)समविस्तारां तृतीयांशेन मध्ये खातां पीठवत्समेखलां प्रणालिकां कुर्यादिति । अत्र मूलं सिद्धान्तशेखरे शैवागमे च ज्ञेयम् ।

तिथितत्त्वे ब्राह्मे—

सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना ।

तत्रैव वाराहपाद्मयोः—

गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा ।

---

इति च । सिद्धान्तशेखरे–

लिङ्गं बाणादिकं कुर्यात्सप्तांशं वा त्रिभागकम् ।
पञ्चभागं द्विभागं वा यथायोगं यथास्थिरम् ॥
सप्तभागकृते लिङ्गे चतुरोंऽशान्निवेशयेत् ।
पीठमध्यगते गर्त्ते त्रिभागे चैकभागकम् ॥
पञ्चभागे तु भागांस्त्रीन् द्विभागेऽर्द्धं यथाक्रमम् ।
एवं बाणादिलिङ्गानां प्रवेशः श्रुतिचोदितः ॥
स्थूलं शिरः कृशं मूलमुन्नतं तन्मुखं भवेत् ।
निम्नपृष्ठमिति ख्यातं बाणरोहादिलिङ्गके ॥
अज्ञातमुखपृष्ठानां कन्यास्पृष्टं मुखं शिरः ॥ इति ।

(१) 'समविस्तरामग्रे तदर्धविस्तारां' क० ।

*द्वे चक्रे द्वारकायास्तु नार्च्ये सूर्यद्वयं तथा ॥
शक्तित्रयं तथा नार्च्यं गणेशत्रयमेव च ।
द्वौ शङ्खौ नार्चयेच्चैव भग्नां च प्रतिमां तथा ॥
नार्चयेच्च तथा मत्स्यकूर्मादिदशकं तथा ।
गृहेऽग्निदग्धा भग्नाश्च ना(१)र्चाः पूज्या वसुंधरे ॥
एतासां पूजनान्नित्यमुद्वेगं प्राप्नुयाद् गृही ।
शालग्रामाः समाः पूज्याः समेषु द्वितयं नहि ॥
विषमा नैव पू(२)ज्याः स्युर्विषमेष्वेक एव हि ।
शालग्रामशिला भग्ना पूजनीया सचक्रका ॥
*खण्डिता स्फुटिता वापि शालग्रामशिला शुभा ॥

वाराहे—

*दद्याद्भक्ताय यो देवि शालग्रामशिलां नरः ।
सुवर्णसहितां दिव्यां पृथ्वीदानफलं लभेत् ॥

तत्रैव—

यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम् ।
तत्फलं नैव शक्तोऽहं वक्तुं वर्षशतैरपि ॥

---

*द्वे चक्रे द्वारकाया इति । स्वतन्त्रपूजायाम्—'चक्राङ्कमिथुनं पूज्यम्' इत्यग्रिमवाराहात् । *खण्डितेति । 'लग्नं भग्नं न पूजयेत्' इत्यस्य लग्नं लग्नचक्रं भग्नं भग्नचक्रमित्यर्थान्न विरोधः ।

शिलारूपी रमा प्रोक्ता चक्ररूपी जनार्दनः ।

इति विष्णुपुराणेन चक्ररूपेण हरेरुक्तेः चक्रेतरप्रदेशभङ्गेऽपि पूज्यत्वाच्च । स्कान्दे—

शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ।
महापूजां तु कृत्वाऽऽदौ पूजयेत्तां ततो बुधः ॥

*दद्यादिति । दानमन्त्रः—

महाकोशनिवासेन चक्राङ्कैरुपशोभितः ।
अस्य देवस्य दानेन मम सन्तु मनोरथाः ॥ इति ।

---

(१) 'नार्च्याः' क० । (२) 'पूज्यास्तु' क० ख० ।

विष्णु(१)पुराणे--

*ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च पृथिवीपते ।
स्वधर्मतत्परो विष्णुमाराधयति नान्यथा ॥

---

*ब्राह्मण इति । अधिकारिणः । यद्यप्यत्र पञ्चायतनपूजां वक्ष्यति, तथापि विष्णुपूजैव कार्या,

न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥
कलौ कलिमलध्वंसं सर्वपापहरं हरिम् ।
येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः ॥ इति ।

आद्येन पुरुषार्थत्वं अन्त्येन समस्तपापनाशकत्वं च विष्णुपूजाया गम्यते । अथवा हरपूजा कार्या,

अथवा देवमीशानं भगवन्तं सनातनम् ।
आराधयेन्महादेवं भावपूतो महेश्वरम् ॥ इति ।
स्नानं सन्ध्यां ततो होमं गृहस्थोक्तेन वर्त्मना ।
कृत्वा सूर्यं गणपतिं दुर्गामीशं तथा हरिम् ॥
पौरुषेण तु सूक्तेन नित्यमर्चां समारभेत् ।

इति कौर्मात् पञ्चायतनपूजा वा कार्या । तत्र स्नानं शीतोदकेन नद्यादौ मुख्यम्, तदभावे उष्णोदकेन साशिरस्कम्, अशक्तस्य कण्ठस्नानम्,

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।

इति वचनात् । मन्त्रस्नानादिकं च यथा—

आपोहिष्ठादिभिर्मन्त्रं, मृदालम्भं तु पार्थिवम् ।
आग्नेयं भस्मना स्नानं, वायव्यं गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
अवगाहो वारुणं स्यान्मानसं विष्णुचिन्तनम् ॥
असामर्थ्याच्छरीरस्य वैषम्याद्देशकालयोः ।

---

(१) 'देवीपुराणे' ख० ।

स्नानान्येतानि तुल्यानि मानसं श्रेष्ठमुच्यते ॥

तत्र मानसस्नानम्—

चतुर्भुजं महाकायं शङ्खचक्रगदाधरम् ।
मनसा ध्यायते विष्णुं मानसं स्नानमुच्यते ॥

अथवा कापिलं स्नानम्—

आर्द्रेण वाससा चाङ्गमार्जनं कापिलं मतम् ।

सारस्वतं स्नानमन्यत्र द्रष्टव्यम् । गायत्रस्नानं यथा—

गायत्र्या जलमादाय दशकृत्वोऽभिमन्त्र्य च ।
शिरश्चाङ्गानि सर्वाणि प्रोक्षयेत्तेन वारिणा ॥
स्नानं गायत्रकं नाम सर्वपापप्रणाशनम् ॥ इति ।

एवं गुरुपादोदकादिस्नानानि—

अशक्तानां तु मर्त्यानां गुरोः पादोदकं शुभम् ।
विप्रपादाद्विष्णुपादात्तुल्यं स्यात्सम्भृतं जलम् ॥
प्रोक्षणात्स्नानमाप्नोति ध्यानस्नानं विशिष्यते ॥ इति ।

ईदृशैर्गौणस्नानैर्जपादि कार्यं, न देवतार्चनादि,

प्रातः स्नातुमशक्तस्तु रोगाद्यैर्वा भयेन वा ।
पूर्ववस्त्रं परित्यज्य शुचित्वं सम्भवेत्तदा ॥
स च कर्मस्वनर्हः स्याद् भूतकृत्यार्चनादिषु ।
जपेत्सन्ध्यां तथा वेदान्सोऽध्ययीत यथाविधि ॥

इति आचार्यवचनात् । भूतकृत्यं वैश्वदेवः । आदिना ब्रह्मयज्ञतर्पणश्राद्धादिग्रहः ।

स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धेन जलमध्ये जलेन तु ॥

कात्यायनः—

ऊर्ध्वपुण्ड्रं मृदा कुर्याद्भस्मना तु त्रिपुण्ड्रकम् ।
उभयं चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु ॥

ब्रह्माण्डे--

ललाटे केशवं विद्यान्नारायणमथोदरे ।
माधवं हृदि विन्यस्य गोविन्दं कण्ठकूपके ॥
विष्णुं च दक्षिणे कुक्षौ तद्भुजे मधुसूदनम् ।
त्रिविक्रमं कर्णमूले वामकुक्षौ तु वामनम् ॥
श्रीधरं च हृषीकेशं वामयोर्बाहुकर्णयोः ।
पद्मनाभं पृष्ठदेशे ककुद्दामोदरं स्मरेत् ॥
मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभिः ।
सङ्कर्षणादिभिः कृष्णे शुक्ले चेत्केशवादिभिः ॥ इति ।

अथ भस्मधारणम्—

अग्निहोत्रादिजं भस्म विरजाहोमजं तथा ।
औपासनसमुत्पन्नं समिदग्निसमुद्भवम् ॥
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणाम् ।
शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥
अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ।
करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः ॥
त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते ।
अष्टाक्षरेण मन्त्रेण यः करोति त्रिपुण्ड्रकम् ॥
विष्णोः पदमवाप्नोति नान्यथा श्रुतिचोदितम् ।
श्रौतं भस्म द्विजं मुख्यं स्मार्त्तं गौणं प्रकीर्त्तितम् ॥
औपासनसमुत्पन्नं गृहस्थानां विशेषतः ।
अग्निरित्यादिभिर्मन्त्रैः शुद्धं भस्माभिमन्त्रितम् ॥
शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा ।
गायत्र्या वाऽथ देवर्षमन्त्रेण प्रणवेन वा ॥

अथ तद्विधिः—

वामहस्ततले भस्म क्षिप्त्वाऽऽच्छाद्यान्यपाणिना ।
अग्निरित्यादिमन्त्रेण स्पृशन्भस्माभिमन्त्र्य च ॥

धार्यं भस्म त्रिसंध्यं तु गृहिणा जलसंयुतम् ।

इत्यादि । कात्यायनः-

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ।
धृतत्रिपुण्ड्रः पूतात्मा मृत्युञ्जयति मानवः ॥ इति ।

भस्माभिमन्त्रणमन्त्रस्य पिप्पलाद ऋषिः, रुद्रो देवता, गायत्री छन्दः, भस्मशुद्ध्यर्थं जपे विनियोगः । अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वꣳ ह वा इदं भस्म मम एतानि चक्षूꣳषि भस्मानीति । विष्णुः-"स्नातः प्रक्षालितपाणिपादः शुचिर्बद्ध(१)शिखी दर्भपाणिराचान्तः प्राङ्मुख उदङ्मुखो वा देवताः पूजयेत्" इति ।

शिवार्चने सदाप्येवं शुचिः कुर्यादुदङ्मुखः । इति ।

अर्घदानादौ द्विराचमनं कार्यम्—

दाने भोजनकाले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जपहोमार्चनेषु च ॥

इति व्यासोक्तेः । अगस्त्यसंहितायाम्—

केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
द्वाभ्यामोष्ठौ तु संमृज्य द्वाभ्यामुन्मार्जनं तथा ॥
एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ।
संप्रोक्ष्यैकेन मूर्द्धानं ततः संकर्षणादिभिः ॥
आस्यनासाक्षि कर्णौ च नाभिहृत्कं भुजौ स्पृशेत् ।
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत् ॥ इति ।

शङ्खः—

तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ।
अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रे पुनः पुनः ॥
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ।

तलेन पाणितलेन ।

---

(१) 'शिरो' ख० ।

सर्वाभिस्तु ततः शीर्षं बाहू चाग्रेण संस्पृशेत् ॥

केशवादिभिरपः पीत्वा गोविन्दविष्णु इति करौ प्रक्षाल्य मधुसूदनत्रिविक्रमेति द्वाभ्यामङ्गुष्ठमूलेनोष्ठौ संमृज्य वामनश्रीधरेति द्वाभ्यां मुखमुन्मृज्य हृषीकेशेति वामकरं प्रोक्ष्य पद्मनाभेति पादौ प्रोक्ष्य दामोदरेति मूर्द्धानं प्रोक्ष्य संकर्षणेति संहतमध्यमाङ्गुलित्रयेणास्यं संस्पृश्य वासुदेवप्रद्युम्नेति द्वाभ्यामङ्गुष्ठानामिकाभ्यां चक्षुषी संस्पृश्याधोक्षजनारसिंहेति द्वाभ्यां तथैव श्रोत्रे संस्पृश्याच्युतेति कनिष्ठाङ्गुष्ठाभ्यां नाभिं संस्पृश्य जनार्दनेति पाणितलेन हृदयं संस्पृश्योपेन्द्रेति शिरः संस्पृश्य हरिकृष्णेति द्वाभ्यां दक्षिणबाहुमूले स्पृशेदिति । यद्वा, केशवादित्रिभिरपः पीत्वा गोविन्देति करौ प्रक्षाल्य अङ्गुष्ठप्रदेशिनीभ्यां घ्राणं स्पृशेत्, कराभ्यां विष्णुमधुसूदनेति, त्रिविक्रमवामनौ मुखपार्श्वयोरङ्गुष्ठमूलेन दक्षिणवामतः, श्रीधरेणोष्ठपुटावङ्गुष्ठमूलेन, हृषीकेशेत्यञ्जलिपुटं कृत्वा पद्मनाभेति पादौ स्पृष्ट्वा दामोदरेण मस्तके पञ्चाङ्गुलिना, संकर्षणेति (१)नासाबिलयोः करमुष्टिं कृत्वा दक्षिणवामनासापुटे वासुदेवप्रद्युम्नेति तर्जन्यङ्गुष्ठेन, दक्षिणवामनेत्रयोः अनिरुद्धपुरुषोत्तमावनामिकाङ्गुष्ठेन, दक्षिणवामनेत्रयोः अधोक्षजनारसिंहेति कनिष्ठिकाङ्गुष्ठेन, नाभिमूले अच्युतेति पञ्चाङ्गुलिना, करतलेन जनार्दनेति हृदि, तथैव मस्तके उपेन्द्रेति, पञ्चाङ्गुलिना हरिकृष्णेति दक्षिणवामांसयोः, सर्वत्र मध्ये मध्येऽपः स्पृशेत् इति पौराणाचमनम् ।

अथ स्मार्त्ताचमनं यथा--

कृत्वाऽऽदौ पादशौचं विमलमथ जलं त्रिः पिबेदुन्मृजेद्वि-<br>
र्देशिन्यङ्गुष्ठयुग्मं सजलमभिमुखे नासिकारन्ध्रयुग्मम् ।<br>
अङ्गुष्ठानामिकाभ्यां नयनयुगयुतं कर्णयुग्मं कनिष्ठा-<br>
ङ्गुष्ठाभ्यां नाभिदेशे हृदयमथ तलेनाङ्गुलीभिः शिरोंऽसौ ॥

अशक्तौ त्रिः पीत्वा हस्तौ प्रक्षाल्य मुखं प्रमृज्य खानि स्पृशेत् ।

---

(१) 'दरेतिपञ्चा' घ० ङ० ।

अत्यशक्तौ त्रिः पीत्वा हस्तौ प्रक्षाल्य श्रोत्रं स्पृशेत् ।

अथ श्रौताचमनम्—

गायत्र्यादित्रिभिः पीत्वा अब्लिङ्गैर्नेत्रभिः स्पृशेत् ।
सप्तव्याहृतिभिः प्राणान् शिरोव्याहृतिभिस्तथा ॥
यद्वौङ्कारेणाचमनं यद्वा व्याहृतिभिर्भवेत् ।
सावित्र्या वापि कर्तव्यं यद्वा कार्यममन्त्रकम् ॥
भोजने जलपाने च शौचे रथ्योपसर्पणे ।
व्यवहारे तथाऽन्यत्र पौराणाचमनं मतम् ॥
स्मार्त्तमाचमनं प्रोक्तं स्नानसन्ध्यादिकर्मसु ।
श्रौतमाचमनं प्रोक्तं ब्रह्मयज्ञेन कुत्रचित् ॥ इति ।

कौर्मे—

देवार्चने जपे होमे संध्ययोः श्राद्धकर्मणि ।
स्नाने दाने व्रते यागे प्राणायामास्त्रयस्त्रयः ॥

(१)(मार्कण्डेयः—

सङ्कल्पं च यथा कुर्यात्स्नानदानव्रतादिकम् ।
अष्टाक्षरेण देवेशं नरसिंहमनामयम् ॥
गन्धपुष्पादिभिर्नित्यमर्चयेदच्युतं नरः ।)
अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्मृतः ॥
छन्दश्च देवी गायत्री परमात्मा च देवता ।
गन्धपुष्पादिसकलमनेनैव निवेदयेत् ॥

अथवा—

पञ्चाक्षरेण मन्त्रेण पत्रं पुष्पं फलं तथा ।
यः प्रयच्छति शर्वाय तदनन्तफलं स्मृतम ॥

अथवा—

प्रणवादिनमोन्तं च चतुर्थ्यन्तं च सत्तम ।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः ॥

---

(१) कंसान्तर्गतं नास्ति घ० ङ० ।

**शौनकः**—

प्रातर्मध्यंदिने सायं विष्णुपूजां समाचरेत् ।

**सङ्ग्रहे**—

(१)अर्घ्योदकं न्यसेद्वामे गन्धपुष्पादि दक्षिणे ।
अग्रेऽर्घ्यं पार्श्वतो दीपौ फलादीनि यथारुचि ॥

अन्यत्रापि स्ववामाग्रतः कलशः शङ्खघण्टे । 'येभ्यो माता' 'एवापित्रे' इतिमन्त्रद्वयं पूजामारम्भे पठेत् "मनुष्यगंन्धात्ते धाप्ये अन्तरदधत येभ्यो माता एवापित्रे"इति ब्राह्मणदर्शनात् । आग्नेये–

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् ।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये रविः ॥
तस्य सर्वगतत्वाच्च हृदये भावितात्मनाम् ।

आवाहनं च—स्वहृत्कमले विष्णवादिकं स्वाभिलषितप्रकारेण ध्यात्वा भ्रूमण्डले विश्रमय्य ब्रह्मरन्ध्रं नीत्वा दुर्हृ[illegible] प्राणवायुना सहाकृष्य हस्तस्थपुष्पाञ्जलौ निधाय मूर्त्तौ स्थापनम् ।

स्थण्डिले नियमेवं स्यात्प्रतिमायां कृताकृतम् ।
चलायामचलायां तु शालग्रामशिलासु वा ॥
न कर्त्तव्यमिहाऽऽवाहमनुक्तं पूर्वमेव तत् ।
आदावन्ते च मन्त्राभ्यां पुष्पाञ्जलिसमर्पणम् ॥

**नारदीये**–

आवाहन ऋचा दद्यात्पूर्वं पुष्पाञ्जलिं हरेः ।
यागे चोन्मुखताप्राप्त्यै अन्ते चोद्वासने ऋचा ॥ इति ।
तद्विष्णोरितिमन्त्रेण सूक्तेन पौरुषेण वा ।
नैवाभ्यां सदृशो मन्त्रो वेदे सूत्रश्च पावनः ॥

**ऋग्विधाने**—

अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः ।
यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥

---

१ 'अग्न्योदकं' ख० घ० ङ० ।

वक्ष्ये पुरुषसूक्तस्य विधानं ह्यर्चनं प्रति ।
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ॥
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ।
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ।
पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत् ॥
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ।
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ॥
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ।
त्रयोदशीं दक्षिणे तु तथाऽऽस्ये च चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं चैव विन्यसेन्मूर्ध्नि षोडशीम् ।
यथा देहे तथा देवे न्यासं कुर्याद्विधानतः ॥
न्यासेन तु भवेत्सोपि स्वयमेव जनार्दनः ।
ब्राह्मणोऽस्येत्यादिकाभिर्ऋग्भिः पञ्चाङ्गकल्पना ॥
हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ।
शिखायै वषडित्युक्तं कवचायहुमीरितम् ॥
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात् ।
षडङ्गमन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत् ॥
पञ्चाङ्गनियमो यस्य तत्र नेत्रमनु त्यजेत् ।
अङ्गहीनस्य मन्त्रस्य नैवाङ्गानि प्रकल्पयेत् ॥
एवं न्यासविधिं कृत्वा पश्चाद्यागं समारभेत् ।
आद्ययावाहयेद्देवमासनं तु द्वितीयया ॥
पाद्यं तृतीयया चैव चतुर्थ्याऽर्घ्यं प्रदापयेत् ।
पञ्चम्याचमनं दद्यात्षष्ठ्या स्नानं समाचरेत् ॥
सप्तम्या तु ततो वासो ह्यष्टम्या चोपवीतकम् ।
नवम्या गन्धमेवं तु दशम्या पुष्पकं तथा ॥
एकादश्या तथा धूपं द्वादश्या दीपमेव च ।

नैवेद्यं च त्रयोदश्या नमस्कारे चतुर्दशी ॥
प्रदक्षिणे पञ्चदशी मार्जने षोडशी तथा ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥
हुत्वा षोडशभिर्मन्त्रैः षोडशान्नस्य चाहुतीः ।
पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ॥
तच्च सर्वं जपेद् भूयः पौरुषं सूक्तमुत्तमम् ।
षण्मासात्सिद्धिमाप्नोति एवमेव समर्चयन् ॥
स्नानं गन्धं धूपदीपं नैवेद्यं पञ्चधार्चनम् ॥ इति ।

ग्रन्थान्तरे—"नवम्याभरणं स्मृतम् । दशम्या गन्धदानं स्यादेकादश्या च माल्यकम् ॥ द्वादश्या धूपदानं स्यात् त्रयोदश्या च दीपकम् । चतुर्दश्या तु नैवेद्यं पञ्चदश्या नमस्क्रिया । उद्वासनं च षोडश्या उपचारास्तु षोडश" इति । ग्रन्थान्तरे—

दक्षिणां तु यथाशक्त्या षोडशेन प्रदापयेत् ।
ततः प्रदक्षिणं कृत्वा जपं कुर्य्यात्समाहितः ॥

शौ(१)नकः—

यथाशक्ति जपित्वा च सूक्तं चास्मै निवेदयेत् । इति ।
अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महीधरम् ।
मध्यमायां हृषीकेशमनामिकयां त्रिविक्रमम् ॥
कनिष्ठिकयां न्यसेद्विष्णुं करमध्ये तु माधवम् ।
एवं न्यासविधिं कृत्वा देहाङ्गन्यासमारभेत् ॥
मस्तके केशवं न्यस्य भाले नारायणं तथा ।
माधवं कर्णयोरक्ष्णोर्विष्णुं चैव तु नासयोः ॥
मुखे मधुसूदनं च कण्ठदेशे त्रिविक्रमम् ।
वामनं विन्यसेद्बाह्वोः श्रीधरं विन्यसेद्धृदि ॥
नाभ्यां विद्याद्धृषीकेशं कट्यां वै पद्मनाभकम् ।
दामोदरं पादयोश्च न्यासं द्वादशधा चरेत् ॥

(१) 'शौनकः' नास्ति ख० ङ० ।

एवं पुरुषसूक्तेन सर्वाङ्गन्यासमाचरेत् ॥ इति ।

स्कान्दे—

पञ्चाष्ट षोडश प्रोक्ताः द्वात्रिंशदुपचारकाः ।
गन्धपुष्पे धूपदीपौ नैवेद्यं पञ्चमं स्मृतम् ॥
प्रदाक्षिणां नमस्कारं ताम्बूलैः सह चाष्टकम् ।
आवाहनासने पाद्यमर्घ्यमाचमनीयकम् ॥
स्नानं वस्त्रोपवीते च गन्धपुष्पे च धूपकम् ।
दीपो नैवेद्यमाख्यातं प्रादक्षिण्यनमस्कृती ॥
विसर्जनमिति प्रोक्ता उपचारास्तु षोडश ।
मधुपर्कस्त्वलङ्कारश्चाक्षताः शुद्धमिश्रिताः ॥
ताम्बूलं दक्षिणा चैव फलं नीराजनं तथा ।
मन्त्रपुष्पाञ्जलिस्तोत्रच्छत्रचामरवाहनम् ॥
नृत्यं गीतं च वाद्यं च पर्यङ्कमिति षोडश ।
आवाहनादिसंमिश्रा द्वात्रिंशदुपचारकाः ॥

प्रपञ्चसारे—

आसनस्वागते चार्घ्यपाद्ये चाचमनीयके ।
मधुपर्काचमस्नानवसनाभरणानि च ॥
सगन्धसुमनोधूपदीपनैवेद्यचन्दनान् ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥
अर्घ्यपाद्याचमनकमधुपर्कासनान्यपि ।
गन्धादयो निवेद्यान्ता उपचारा द(१)श क्रमात् ॥
गन्धादिका निवेद्यान्ता पूजा पञ्चोपचारिकी ।
सपर्या त्रिविधा प्रोक्ता तासामेकां समाचरेत् ॥ इति ।

अष्टादशपक्षे उपवीतानन्तरमाभरणानि, नैवेद्यानन्तरं माल्यानुलेपनं च द्रष्टव्यम् । अन्यत्रापि—

आसनाभ्यञ्जने तद्वदुद्वर्त्तननिरूपणे ।
संमार्जने सर्पिरादिस्नापनावाहने ततः ॥

---

(१) 'दश' नास्ति ङ० ।

पाद्यार्घ्याचमनीयं च स्नानं च मधुपर्ककम् ।
पुनराचमनीयं च वस्त्रयज्ञोपवीतके ॥
अलंकारो गन्धपुष्पे धूपदीपौ तथैव च ।
ताम्बूलानि च नैवेद्यं पुष्पमाला तथैव च ॥
अनुलेपं च शय्या च चामरव्यजने तथा ।
आदर्शनं तथा चैव नमस्कारोऽथ नर्त्तनम् ॥
गीतवाद्यादिदानानि स्तुतिहोमप्रदक्षिणम् ।
दन्तकाष्ठं प्रधूतं च ततो देवविसर्जनम् ॥
उपचारा इमे प्रोक्ताः षट्त्रिंशत्सुरपूजने ।

हेमाद्रौ—

आवाहनासने पाद्यमर्घ्यमाचमनं तथा ।
गन्धपुष्पं तथा धूपं दीपं च मधुपर्ककम् ॥
उपहारं तथाचामं स्नानं चाङ्गविभूषणम् ।
वस्त्रोपवीतमाचाममलंकारविलेपने ॥
गन्धपुष्पं तथा धूपदीपमञ्जनमेव च ।
आदर्शं मङ्गलं सर्वदेयं सर्वात्मना तथा ॥
होमं भोजनमाचाममलंकारास्तथा पुनः ।
गन्धादि च पुनर्दद्यान्मुखवासं प्रदक्षिणम् ॥
स्तुतिदण्डनमस्कारमात्मनो विनिवेदनम् ।

स्तुतिः वैदिकी पौराणिकी स्वकृता वा ॥

भार्गवार्चनदीपिकायां षष्टिरुपचाराः—

पूर्वं प्रबोधनं कुर्याज्जयशब्दांस्तथा पुनः ।
संस्कारं च ततः कुर्यात्ततो नीराजनं परम् ॥
ततो दिव्यासनं दद्यात्ततो वै दन्तधावनम् ।
पादप्रक्षालनं कुर्यात्ततोऽर्घ्यं वै प्रकल्पयेत् ॥
आचामं मधुपर्कं च पुनराचमनीयकम् ।

ततोऽभ्यङ्गं सुगन्धैस्तु कुर्यात्तैलापसारणम् ।
ततः पुण्योदकैः कुर्यादभिषेकं सुगन्धिभिः ॥
क्षीरेण दध्ना च तथा घृतेन मधुनापिच ।
शर्करया मन्त्रयुक्तैर्गन्धपुष्पोदकैरपि ॥
महाभिषेकमाचाममङ्गवस्त्रं ततोऽर्पयेत् ।
वाससी परिधानार्थमुपवीतं तथाचमम् ॥
गन्धमाभरणं पुष्पं धूपं नीराजनं तथा ।
दृष्टयुत्तारणनैवेद्ये मुखवासं सुगन्धिभिः ॥
ताम्बूलं शयनं केशसाधनं वस्त्रदानकम् ।
किरीटचन्दने दद्यात्तत आभरणानि च ॥
पुष्पनीराञ्जनादर्शा मण्डपागमनं ततः ।
तत्रासनं पाद्यमर्घ्यमाचामं धूपदीपकौ ॥
नैवेद्यं च सताम्बूलं चन्द्रनीराञ्जनं तथा ।
चामरव्यजनं छत्रं पुरोगीतं मनोहरम् ॥
मृदङ्गादिस्वनं नृत्यं नमस्कारं प्रदक्षिणाम् ।
स्तुतिं कुर्यात्ततो विष्णोश्चरणौ मस्तके न्यसेत् ॥
निर्माल्यधारणं कुर्यान्नैवेद्यांशस्य भोजनम् ।
सेवामुद्दिश्योपविशेन्मञ्चके तूलिकां नयेत् ॥
सुखासनेन शयने नीत्वा तं तत्र शाययेत् ।
अर्चेत्कुसुमताम्बूलैः पादौ संवाहयेत्ततः ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं ततः ॥ इति ।

ऋग्विधाने—

दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
(१) आर्चितं स्याज्जगदिदं त्रैलोक्यं सचराचरम् ॥

पाद्मे—

शालिग्रामशिलायां च नावाहनविसर्जने ।

---

(१) 'अर्जितं' ख० ।

आवाहनऋचा दद्यात्पूर्वं पुष्पाञ्जलिं हरेः ॥
याग चोन्मुखतामाप्त्या अन्ते चोद्वासने ऋचा ।
वस्त्रमभ्युक्षणाच्छुध्येदपरं तु दिने दिने ॥
वस्त्रपदमलङ्काराद्युपलक्षणम् ,
न निर्माल्यं भवेद्वस्त्रं स्वर्णरत्नादिभूषणम् ॥
इति वचनात् । रत्नादिखचितमासनमन्यत्र बोध्यम् ।
पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताजलादिभिः ।
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ॥

अथार्घ्यः—तत्र शिवे—

आपः क्षीरं कुशाग्राणि अक्षता मधुतण्डुलाः ।
सिताश्च सर्षपाश्चैव अर्घोऽष्टाङ्गः प्रकीर्त्तितः ॥

विष्णौ तु—

अर्घं पुष्पाक्षतयवैः कुशाग्रतिलसर्षपैः ।
गन्धदूर्वाजलैः प्रोक्तं पाणौ वा मस्तकेऽपि वा ॥
शुद्धोदकेनाचमनम् । स्नानं वस्त्रं च, उभयत्राप्याचमनम् ।

अथ गन्धः—

गन्धेषु चन्दनं पुण्यं चन्दनादगुरुर्वरः ।
कृष्णागुरुस्ततः श्रेष्ठः कुङ्कुमं तु ततो वरम् ॥

गारुडे—

कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु ।
कुङ्कुमस्य त्रयश्चैव शशिनः स्याच्चतुः समम् ॥
कर्पूरचन्दनं दर्पः कुङ्कुमं च समांशकम् ।
सर्वगन्धसमं प्रोक्तं समस्तसुरवल्लभम् ॥

काशीखण्डे—

कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुङ्कुमस्य च(१) ।
चन्दनस्य त्रयो भागाः शशिनस्त्वेक एव तु ॥

---

(१) 'तु' घ० ङ०

# नोटिस ।

विद्वद्वर माननीय सज्जनों की सेवामें सादर निवेदन है कि श्री सिद्धान्त सुधानिधि नामक व्याकरणका अत्यन्त प्रशंसनीय ग्रन्थ छपकर तैयार हो गया है, जिसका निर्माता श्रीपर्वतीय विश्वेश्वरसूरि नामक सुप्रसिद्ध है, जिसने अलङ्कारकौस्तुभ, आर्या सप्तशती, तर्ककौतूहल इत्यादि अनेक ग्रन्थ भिन्न भिन्न शास्त्रोंके निर्माण करके शास्त्रोंका यथार्थ उद्धार कीया है।

यह सिद्धान्त सुधानिधि अष्टाध्यायीके क्रमसे ३ अध्याय तक निर्मित है और इसमें भाष्यकारादि भट्टोजीदीक्षित पर्यंत सकल वैयाकरणोंके ग्रन्थोंका साङ्गो पाङ्ग विचार करके सिद्धान्त प्रदर्शित किया है। तथा तत्तद्विषयोंमें नैयाकिक मीमांसक आलंकारिकादि मतोंका भी पूर्णतया ऊहापोह इस ग्रन्थमें होनेसे यह ग्रन्थ विशेषतः सर्व सिद्धान्त ज्ञानोपयोगी होनेसे इसका नाम बिलकुल यथार्थ है। अतः शास्त्रमर्मज्ञ लोक इसका देखकर इसको लाभ जरूर उठावेंगे। इस ग्रन्थकी पृष्ठ संख्या १५५० तक है। मूल्य १५)

हमारे यहां हर किस्मकी छपाई तथा जिल्द साजी का कार्य भी होता है।

निवेदकः—

हर तरह के संस्कृत ग्रन्थ तथा भाषा भाष्य पुस्तकों के मिलने का पता—

## जयकृष्णदास—हरिदासगुप्तः

**चौखम्बासंस्कृतसीरीज आफीस,**

विद्याविलास प्रेस, गोपालमंदीरलेन,

बनारस सिटी।

यक्षकर्दम इत्येष सर्वदेवमनोहरः ।
कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा ॥
कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ।

यत्तु—

दारिद्र्यं पद्मकं कुर्यादस्वास्थ्यं रक्तचन्दनम् ।
उशीरं चित्तविभ्रंशमन्ये कुर्युरुपद्रवम् ॥

इति निषेधः, स केवलपरः;

चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः ।
अनुलिप्तो हरिर्भक्त्या वरान्भोगान्प्रयच्छति ॥

इति आग्नेये मिलितानां विधानात् । स्कान्दे—

चन्दनागुरुकर्पूरपङ्कं गन्धमिहोच्यते ।
चन्दनागुरुकर्पूरचोरकुङ्कुमरोचना ॥
जटामांसी कपियुता शक्तिगन्धाष्टकं मतम् ।

चोरः कचोरः ।

चन्दनागुरुह्रीबेरकुष्टकुङ्कुमसेव्यकाः ।
जटामांसी मुरमिति विष्णोर्गन्धाष्टकं मतम् ॥
चन्दनागुरुकर्पूरतमालजलकुङ्कुमम् ।
कु(१)सीतं कोष्टसंयुक्तं शैवगन्धाष्टकं मतम् ॥

शिवार्चनचन्द्रिकायां—

ह्रीबेरं चन्दनं कुष्टमगुरुं कुङ्कुमं मुरम् ।
सेव्यकं च जटामांसी वैष्णवं तदुदीरितम् ॥
जलकाश्मीरकुष्टैस्तु रक्तचन्दनचन्दनम् ।
तमालागुरुकर्पूरैः शाम्भवं चाष्टगन्धकम् ॥
चन्दनागुरुकर्पूरैः केसरै रोचनान्वितैः ।
सशिल्हकजटामांसीसटीभिः शक्तिसम्भवम् ॥

(१) 'कुसीतं कोष्णसंयुक्तं' ख०

स्कान्दे—

यो ददाति हरेर्नित्यं तुलसीकाष्ठचन्दनम् ।
युगानि वसते स्वर्गे ह्यनन्तानि नरोत्तमः ॥
तुलसीदललग्नेन चन्दनेन जनार्दनम् ।
विले(१)पयेत्तु यो नित्यं लभते चिन्तितं फलम् ॥

गणपतिकल्पे—

शङ्खपात्रस्थितं गन्धं मन्त्रैर्दद्यात्कनिष्ठया । इति ।

अथ पुष्पम्—

शुद्धकाञ्चनपुष्पाणि रत्नमुक्ताफलान्यपि ।
सर्वाणि तुलसीपत्रकलां नार्हन्ति षोडशीम् ॥
उत्तमं तुलसीपुष्पं मध्यमं तुलसीदलम् ।
अधमं तुलसीपत्रं काष्ठचूर्णं ततोऽधमम् ॥
तुलसीमञ्जरीमालां विष्णवे यो निवेदयेत् ।
शालग्रामशिला येन पूजिता तुलसीदलैः ॥
स पारिजातमालाभिः पूज्यते सुरसद्मनि ।
श्यामापि तुलसी विष्णोः प्रिया गौरी विशेषतः ॥
तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ ।
शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च ॥
उत्पलानि च नीलानि कह्लारकुसुमानि च ।
मालतीकुन्दमन्दारनन्दावर्त्तादिकान्यपि ॥

पुष्पाध्यायादिग्रन्थान्तरे विस्तरः ।

अथ धूपः—

शङ्करस्याथवा विष्णोर्घृतयुक्तं च गुग्गुलम् ।
दद्याद्भक्त्या नरो यस्तु सर्वपापैः स (२)मुच्यते ॥

हारीतः—

रुहिकाक्षकणं दारुः सिह्लकं सागुरुं सितम् ।
शङ्खं जातीफलं श्रीशः प्रिया धूपा हरेरिमे ॥

---

(१) 'विलेपयति यो' ङ० (२) 'प्रमुच्यते' ङ०

रुहिका मांसी, कणो गुग्गुलभेदः, दारुः देवदारुः, सिह्लकं तुरुष्कं, सितः कर्पूरः, शङ्खं नखं, श्रीगश्चन्दनम् ।

विना मृगमदं धूपे जीवजातं विवर्जयेत् ।
महिषाख्यं गुग्गुलं च आज्ययुक्तं सशर्करम् ॥
धूपं ददाति राजेन्द्र नरसिंहाय भक्तिमान् ।
कृष्णागुरुसमुत्थेन धूपेन श्रीधरालयम् ॥
धूपयेद्वैष्णवो यस्तु स मुक्तो नरकार्णवात् ।

भविष्ये—

अगुरु चन्दनं मुस्ता सिह्लकं वृषणं तथा ।
समभागं तु कर्त्तव्यं धूपोऽयममृताह्वयः ॥
श्रीखण्डग्रन्थिसहितमगुरुं सिह्लकं तथा ।
मुस्ता तथेन्दुर्भूतेश शर्करा च दहेत्त्र्यहम् ॥
कृष्णागुरुं सिह्लकं च बालवं वृषणं तथा ।
चन्दनं तगरं मुस्ता प्रबोधः शर्करान्वितः ॥
कर्पूरं चन्दनं कुष्ठमुशीरं सिह्लकं तथा ।
ग्रन्थिकं वृषणं भीमं कुङ्कुमं गृञ्जनं तथा ॥
हरीतकी तथोशीरं यक्षधूप उदाहृतः ।
वृषणं सिह्लकं बिल्वं श्रीखण्डमगुरुं तथा ॥
कर्पूरं च तथा मुस्ता शर्करा सत्वचा द्विज ।
इत्येष विजयो धूपः स्वयं देवेन निर्मितः ॥
मधु मुस्ता घृतं गन्धो गुग्गुल्वगुरुशैलजम् ।
सरलं सिद्धासिद्धार्थां दशाङ्गो धूप उच्यते ॥

मदनरत्ने—

त्रिभागकुष्ठो द्विगुणो गुडश्च लाक्षात्रयं पञ्च नखस्य भागाः ।
हरीतकी सर्जरसश्च मांसी भागैकमेकं त्वथ शैलजस्य ॥
घृतस्य चत्वारि पुरस्य चैकं धूपो दशाङ्गः कथितो मुनीन्द्रैः ।

गन्धो मुस्ता, पुरो गुग्गुलुः ।

चन्द्रिकायां—

धूपस्य व्यजनेनैव धूपेनाङ्गविधूपने ।
नीराञ्जनेषु सर्वेषु विष्णोर्नामानि कीर्त्तयेत् ॥

नारसिंहे—

घृतेन वाथ तैलेन दीपं प्रज्वालयेन्नरः ।

तिलोद्भवं तैलम् । स्मृत्यर्थसारे—

नैवेद्यार्थं पृथक् भाण्डे स्नाता पत्नी पचेत्तथा ।
वैश्वदेवार्थमन्यस्मिन्व्यञ्जनानि पृथक् पृथक् ॥ इति ।
दरिद्रश्चेत्स्वभोज्यं यत्तदीशाय निवेदयेत् ।
अनिवेद्य हरे भुञ्जन्सप्त जन्मानि नारकी ॥

पाद्मे—

हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् ।
नैवेद्यं देवदेवाय यावकं पायसं तथा ॥
यावद्भक्ष्यं भवेत्पुंसस्तावद्देयं जनार्दने ।
नैवेद्यवस्त्वलाभे तु तोयान्यपि निवेदयेत् ॥

सारे—

(१)मण्डले चतुरस्रे तु पात्रं संस्थाप्य यत्नतः ।
अस्त्रमन्त्रेण संप्रोक्ष्य चक्रमुद्राभिरक्षितम् ॥
धेनुमुद्रां प्रदर्श्याथ गन्धपुष्पैः प्रपूज्य च ।
देवे पुष्पाञ्जलिं दत्त्वा मन्त्रमेतमुदीरयेत् ॥
हेमपात्रस्थितं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाणेमं सुसिद्धये ॥ इति ।

वैदिकमन्त्राभावेऽयं बोध्यः ।

प्रक्षिप्य तुलसीं प्रोक्ष्य वामाङ्गुष्ठेन संस्पृशेत् ॥

अत्र ग्रासमुद्रा दक्षिणेन कार्या । अथवा—

ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् ।
प्रदर्शयन् दक्षिणेन प्राणादीनां च दर्शयेत् ॥ इति ।

---

(१) 'मण्डपे' ख०

पुनराचमनं दद्यात्करोद्वर्त्तनमेव च ।
गाण्डूषिकं जलं दत्त्वा दद्यादाचमनं ततः ॥
विष्वक्सेनोद्धवाक्रूरसनकाद्याः शुकादयः ।
श्रीकृष्णस्य प्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥
बादरायणचण्डीशनन्दिभृङ्गिरिटादयः ।
सदाशिवप्रसादोऽयं सर्वे गृह्णन्तु शाम्भवाः ॥ इति ।
सकर्पूरं च ताम्बूलं दद्यान्नीराजनं तथा ।

चन्द्रिकायां—

लवङ्गजातीकङ्कोलचूर्णं क्रमुकखादिरम् ।
कर्पूरसहितं पत्रं ताम्बूलं च समर्पयेत् ॥

ताम्बूलीपत्राणि च श्वेतानि देयानि,

श्वेतपत्रं च चूर्णं च क्रमुकस्य फलानि च ।
नारिकेलफलोपेतं मातुलिङ्गसमायुतम् ॥
एलाकङ्कोलकर्पूरैर्मुखवासं प्रचक्षते ।

इति वचनात् । अशक्तं प्रति—

महापिप्पलपत्राणि क्रमुकस्य फलानि च ।
शुक्तिक्षारेण संयुक्तं ताम्बूलमिति कीर्त्तितम् ॥

इति वचनात् । संख्यामाह भरद्वाजः—

क्रमुकस्य फलान्यष्टावनुच्छिष्टानि सन्ति च ।
पत्राणि नागवल्ल्याश्च द्विगुणं शुक्तिचूर्णकम् ॥
कर्पूरसहितं यत्तत्ताम्बूलमिति भाषितम् ।

अथवा—

सुपूगं सप्तपत्रं च चूर्णेन च समान्वितम् ।
अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद् बुधः ॥
एकपूगं सुखारोगं द्विपूगं निष्फलं भवेत् ।
अतिश्रेष्ठं त्रिपूगं च अधिकं नैव दुष्यति ॥
अस्यालाभे यथालब्धं पत्रं क्रमुकचूर्णकम् ।
ताम्बूलं भावयेच्छुद्धं यत्तन्नयनवल्लभम् ॥

स्कान्दे—

तांम्बूलं दक्षिणा चैव फलं नीराजनं तथा ।
मन्त्रपुष्पाञ्जलिस्तोत्रच्छत्रचामरवाहनम् ॥
महानीराजनं श्रीमन्मङ्गलेशाय कल्पयेत् ।
कर्पूरेण तु यः कुर्याद्भक्त्या केशवमूर्द्धनि ॥
आरात्रिकं मुनिश्रेष्ठ प्रविशेद्विष्णुमव्ययम् ।
उत्थायोत्थाय कर्त्तव्यं प्रणामं दण्डवद् भुवि ॥
न देवं पृष्ठतः कृत्वा प्रणामं क्वचिदाचरेत् ।
वरमुत्थाय कर्त्तव्यं न वृथा भ्रमणं चरेत् ॥

दक्षिणे भागे नमस्कारः कार्यः,

अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ।
जपहोमनमस्कारान्न कुर्वीत कदाचन ॥

इति निषेधात् । (१)शिवे तु पुरतोऽपि—

शंभोः पशुपतेरग्रे दण्डवत्पातितो भुवि ।
पतन्ति पातकाः सर्वे नोत्तिष्ठन्ति कदाचन ॥

इति वचनात् । वाराहे—

वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत माम् ।
सदा स जायते मूर्खः सप्तजन्मनि भामिनि ॥

अन्तरीयान्यद्वस्त्रमिह धर्त्तव्यं योग्यत्वात् ।

नमस्कारेण चैकेन अष्टाङ्गेन हरिं स्मरेत् ।
मूर्धाभिवन्दनं कुर्यादुत्थायोत्थाय दण्डवत् ॥
प्रदक्षिणं न कुर्वीत पुरतः पृष्ठदर्शनात् ॥

नमस्कारानन्तरं प्रादक्षिण्यं विनैव नमस्कारान्तरं कार्यमित्यर्थः । "न वृथा भ्रमणं चरेत्" इतिवचनाच्च । अष्टाङ्गो वा कार्यः ।

दोर्भ्यां पद्भ्यां च जानुभ्यामुरसा शिरसा तथा ।
मनसा वचसा भक्त्या प्रणामोऽष्टाङ्ग ईरितः ॥

---

(१) 'शिवेऽपि' घ० ङ०

ग्रन्थान्तरे—

उरसा शिरसा दृष्ट्या मनसापि धिया तथा ।
पद्भ्यां कराभ्यां वाचा च प्रणामोऽष्टाङ्ग ईरितः ॥
पद्भ्यां कराभ्यां शिरसा पञ्चाङ्गा प्रणतिः स्मृता ।

(१)यद्वा—

शिरो हस्तौ च जानू च चिबुकं बाहुकद्वयम् ।
पञ्चाङ्गस्तु नमस्कारो विद्वद्भिः समुदाहृतः ॥

भविष्ये—

जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवेशे सर्वान्कामानवाप्नुयात् ॥

असम्भवे (२)केवलाभ्यां कराभ्यां कार्यः ।

एकहस्तनमस्कारं एका चैव प्रदक्षिणा ॥
अकालदर्शनं चैव हन्ति पुण्यं पुराकृतम् ॥

इति चन्द्रिकाधृतवचनात् । चन्द्रिकायां—

ततः प्रदक्षिणं कुर्याद्वामं जयजयस्वनैः ।
चक्रवद् भ्रामयेदङ्गं पृष्ठतोऽङ्गं न दर्शयेत् ॥

नारदीये—

पदान्तरे पदं न्यस्यन् हस्तौ चलनवर्जितौ ।
स्तुतिर्वाचि हृदि ध्यानं चतुरङ्गप्रदक्षिणम् ॥

स्कान्दे—

प्रदक्षिणं प्रकुर्वीत शतमष्टोत्तरं सदा ।
तिस्रः सर्वेषु देवेषु सूर्ये सप्त प्रकीर्त्तिताः ॥
विष्णौ चत्वारि वा त्रीणि दुर्गाया एकमेव हि ।
प्रदक्षिणात्रयं कुर्याच्छिवस्यायतने नरः ॥
एकां चण्ड्यां रवौ सप्त तिस्रः कुर्याद्विनायके ।
'एका चैव प्रदक्षिणा' इति अपराधान्तर्गतं तु देवीभिन्नपरम् ।

---

(१) 'यद्वा' नास्ति घ० ङ०
(२) 'असम्भवे मुकुलिताभ्यां कराभ्यां' घ० ङ०

परिशिष्टे तु—

एकां विनायके कुर्याद्द्वे सूर्ये त्रीणि शंकरे ।
चत्वारि केशवे कुर्यात्सप्ताश्वत्थे प्रदक्षिणाः ॥ इति ।

पौरुषसूक्तं जपस्तोत्रादि चोक्तम् । पारिजाते—

जानुभ्यां धरणीं गत्वा मूर्ध्ना हरिमथो (१)वदेत् ।

तत्र मन्त्रः—

भगवन्देवदेवेश पुरुषोऽसि सनातन ।
क्षमस्व पुण्डरीकाक्ष भक्तस्य तु विशेषतः ॥
ज्ञानतोऽज्ञानतो वापि कृतं न्यूनाधिकं मया ।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादाज्जनार्दन ॥

ततः—

मा(४) मकीनं च सकलं हरये तुभ्यमर्पये ।

इति संकल्पात्मकं स्वात्मार्पणम्,

(४)मामकीनं च सकलं हरये सम्यगर्पयेत् ॥

इति वचनात् ।

ॐतत्सदिति संप्रोक्तो मन्त्रः स्वात्मसमर्पणे ।

ततः सजलं शंखं नीराजयेत्,

शङ्खमध्यास्थितं तोयं भ्रामितं केशवोपरि ।
अङ्गलग्नमनुष्याणां ब्रह्महत्याऽयुतं दहेत् ॥

इति लिङ्गात् । एतद्वचनादेव शिरआद्यङ्गप्रोक्षणमपि हस्तेन कार्यम् ।

हस्तेन प्रोक्षणं कृत्वा हत्याकोटिविनाशनम् ।

इति वचनात् ।

भ्रामयित्वा हरेर्मूर्ध्नि मन्दिरं शंखवारिणा ।
प्रोक्षयेद्वैष्णवो यस्तु नाऽशुभं तद्गृहे वसेत् ॥ इति ।

गृहप्रोक्षणमपि हस्तेनैव, दृष्टन्यायात् । नारदीये–

उदकं चन्दनं चक्रं शंखं च तुलसीदलम् ।

---

(१) 'वहेत्' घ० ङ०        (४) 'मामदीयं' घ० ङ०

घण्टां पुरुषसूक्तं च ताम्रपात्रम(१)थाष्टमम् ॥
शालग्रामशिला चैव नवभिस्तीर्थमुच्यते ।

अथ तीर्थग्रहणं चन्द्रिकायाम्—

विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् ।
तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥

तच्च पात्रेणैव कार्यम् ,

यः पादसलिलं विष्णोः करेण पिबते यदि ।
स मूढो नरकं याति यावदिन्द्राश्चतुर्दश ॥

इति भविष्ये करस्य निषेधात् ।

शालग्रामशिलातोयं पिबेद्यः सकरेण तु ।
अज्ञानादैन्दवं प्रोक्तं ज्ञानादब्दं समाचरेत् ॥
श्रीविष्णोः पादसलिलं करे कृत्वा मुखे क्षिपेत् ।
अदत्त्वा पिबते यो वै रौरवे नरके वसेत् ॥

इत्यत्र तु मुखे क्षेपणं न तु पानमिति न तद्विरोधः । एवं—

धारयेन्मूर्ध्नि बालिश्याद्ब्रह्महा स निगद्यते ।

इति वचनं तु चन्द्रिकायां विवृतम्—

शालिग्रामशिलातोयमपीत्वा यस्तु मस्तके ।
प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते ॥ इति ।

तत्र मन्त्रः—

देवदेव जगन्नाथ शङ्खचक्रगदाधर ।
देहि विष्णो ममानुज्ञां तव तीर्थनिषेवणे ॥

तत्र वैदिको मन्त्रः-तदस्य प्रियमभि पाथो अस्यां नरो यत्र देवयुवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ अथ पौराणो मन्त्रः—

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥

---

(१) 'मथाष्टकम्' ख० ।

प्राश्नीयात्प्रोक्षयेद्देहं पुत्रमित्रपरिग्रहम् ।
कृत्वा पादोदकं शङ्खे वैष्णवानां महात्मनाम् ॥
तुलसीमिश्रितं दद्यात् पिबेन्मूर्ध्नाऽभिवन्दयेत् ।
आयसे च तथा कांस्ये काष्ठेऽलाबुमये तथा ॥
उद्धृत्य पादसलिलमघतुल्यं विनिर्दिशेत् ।
विष्णोः पादोदकं पीत्वा पश्चादशुचिशङ्कया ॥
आचमेद्यो ह्यपो मोहाद्ब्रह्महा स निगद्यते ।
विष्णुपादोदकात्पूर्वं विप्रपादोदकं पिबेत् ॥
विरुद्धमाचरेन्मोहाद्ब्रह्महा स निगद्यते ।

तत्र मन्त्रः—

पृथिव्यां यानि तीर्थानि तानि तिष्ठन्ति सागरे ।
ससागराणि तीर्थानि पदे विप्रस्य दक्षिणे ॥ इति ।
पादोदकं च निर्माल्यं नैवेद्यं च विशेषतः ।

तत्र मन्त्रः—

नैवेद्यं शिरसा नत्वा श्लोकमेतमुदीरयेत ।
यस्योच्छिष्टं हि वाञ्छन्ति ब्रह्माद्या ऋषयोऽमलाः ॥
सिद्धाद्याश्च हरेस्तस्य वयमुच्छिष्टभोजिनः ।

चन्द्रिकायाम्—

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥
इमं मन्त्रं समुच्चार्य प्रणमेद्दण्डवद्भुवि ।
अपराधसहस्रं तु क्षमते सर्वगो हरिः ॥

विष्णुधर्मे—

धूपं चारार्त्तिकं पश्येत्कराभ्यां तत्प्रपद्य च ।

एतच्च आत्माग्रे शंखं सपुष्पमभ्यर्च्य घण्टां चाभ्यर्च्य धूपारार्त्तिकार्चनं कार्यम् । वचनान्यन्यत्र बोध्यानि । वाराहे—

धूपार्त्तिं च तथा दीपं कराभ्यां यैर्नमस्कृतम् ।
सप्तजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥

पदार्थादर्शे—

एकाहपूजाविहतौ कुर्याद् द्विगुणमर्चनम् ।
त्रिरात्रे तु महापूजां संप्रोक्षणमतः परम् ॥
संप्रोक्षणं तु देवस्य देवमुद्रास्य पूर्ववत् ।
पञ्च पञ्च क्रमेणैव स्नापयित्वा मृदम्भसा ॥
गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च ।
प्रोक्षयेत्प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम् ॥
ततो मूलेन मूर्धादिपीठान्तं संस्पृशेदपि ।
तत्त्वन्यासं लिपिन्यासं मन्त्रन्यासं च विन्यसेत् ॥
प्राणप्रतिष्ठामन्त्रेण प्रतिष्ठापनमाचरेत् ।
पूजां च महतीं कुर्यात् स्वतन्त्रोक्तां यथाविधि ॥
पूजाहीनादिषु प्रायः सम्प्रोक्षणविधिः स्मृतः ॥

शालग्रामादौ न प्राणप्रतिष्ठा किन्तु महापूजैवेति स्मर्त्तव्यम् ।

विष्णुरहस्ये—

इति विष्ण्वर्चनं ये तु प्रकुर्वन्ति नरा भुवि ।
ते यान्ति शाश्वतं विष्णोरनन्तं परमं पदम् ॥

विष्णुः—

देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्ये विगर्हितः ॥

अथ द्वात्रिंशत्पूजापराधा वाराहे—

भुक्त्वा तु परकीयान्नं तत्परस्तन्निवर्त्तकः ।
प्रथमश्चापराधोऽयं सर्वविघ्नाय वै भवेत् ॥
अभुक्त्वा दन्तकाष्ठं तु यस्तु मामुपसर्पति ।
अपराधो द्वितीयोऽयं धर्मविघ्नाय कल्प्यते ॥
कृत्वा मैथुनसंयोगं यस्तु मां स्पृशते नरः ।
तृतीयमपराधं तं कल्पयामि वसुन्धरे ॥
स्पृष्ट्वा रजस्वलां नारीमस्माकं यः प्रपद्यते ।
चतुर्थमपराधं तं कल्पयामि वसुन्धरे ॥

स्पृष्ट्वा तु मृतकं चैव असत्कारकृतं तु वै ।
पञ्चमं चापराधं तु न क्षमामि वसुन्धरे ॥
स्पृष्ट्वा तु मृतकं यस्तु नाचम्य स्पृशते हि माम् ।
षष्ठं तमपराधं वै न क्षमामि वसुंधरे ॥
ममार्चनस्य काले तु पुरीषं यस्य गच्छति ।
सप्तमं चापराधं तु न क्षमामि वसुंधरे ॥
ममैवार्चनकाले तु यस्त्वसत्यं प्रभाषते ।
नवमं चापराधं तं न क्षमामि वसुन्धरे ॥
अविधानेन मां स्पृश्य मामेव प्रतिपद्यते ।
दशमश्चापराधोऽयं मम चाप्रियकारकः ॥
सक्रोधो यः स्पृशेद्गात्रं चित्तं कृत्वा चलाचलम् ।
एकादशं चापराधं न क्षमामि वसुन्धरे ॥
अकर्मण्यानि पुण्यानि यस्तु मामुपकल्पयेत् ।
द्वादशं चापराधं तं न क्षमामि वसुन्धरे ॥
यस्तु रक्तेन वस्त्रेण कौसुम्भेनोपगच्छति ।
त्रयोदशं चापराधं न क्षमामि वसुन्धरे ॥
अन्धकारे च मां देवि यः स्पृशेत्तु कदाचन ।
चतुर्दशं चापराधं न क्षमामि वसुन्धरे ॥
यस्तु कृष्णेन वस्त्रेण मम कर्माणि कारयेत् ।
पञ्चदशं चापराधं न क्षमामि वसुंधरे ॥
अधौतेन च वस्त्रेण यस्तु मामुपसर्पति ।
षोडशं चापराधं तं न क्षमामि वसुंधरे ॥
स्वयमन्नं च यो दद्यादज्ञाताय च माधवम् ।
सप्तदशापराधं तं न क्षमामि वसुन्धरे ॥
यस्तु मात्स्यानि मांसानि भक्षयित्वोपसर्पति ।
अष्टादशापराधं तं न क्षमामि वसुन्धरे ॥
जालपादं भक्षयित्वा यस्तु मां प्रतिपद्यते ।
एकोनविंशापराधं न क्षमामि वसुन्धरे ॥

दीपं स्पृष्ट्वा तु यो देवि मम कर्माणि कारयेत् ।
विंशतिं चापराधं तं न क्षमामि वसुन्धरे ॥
श्मशानं यस्तु वै गत्वा मामेव प्रतिपद्यते ।
एकविंशापराधं तं न क्षमामि वसुंधरे ।
पिण्याकं भक्षयित्वा तु यो मामेवाभिगच्छति ।
द्वाविंशं चापराधं तं न क्षमामि वसुन्धरे ॥
यस्तु वाराहमांसानि भक्षयित्वोपसर्पति ।
अपराधं त्रयोविंशं न क्षमामि वसुन्धरे ॥
सुरां पीत्वा च यो मर्त्यः कदाचिदुपसर्पति ।
अपराधं चतुर्विंशं न क्षमामि वसुंधरे ॥
कुसुम्भशाकं भक्षयित्वा यस्तु मामुपसर्पति ।
अपराधं पञ्चविंशं न क्षमामि वसुन्धरे ॥
परप्रावरणेनैव यस्तु मामुपसर्पति ।
षड्विंशापराधं तं न क्षमामि वसुन्धरे ॥
अजीर्णेन समाविष्टो यस्तु मामुपसर्पति ।
त्रिंशकं चापराधं तं न क्षमामि वसुन्धरे ॥
गन्धपुष्पाण्यदत्त्वा तु यस्तु धूपं प्रयच्छति ।
एकत्रिंशं चापराधं न क्षमामि वसुंधरे ॥
विना तूर्यादिघोषेण द्वारस्योद्घाटनं मम ।
महापराधं जानीयाद् द्वात्रिंशं तं मम प्रिये ॥

एषु प्रत्येकं प्रायश्चित्तं तत्रैव ।

संवत्सरस्य मध्ये च तीर्थे सूकरके मम ॥
कृतोपवासस्तु नरो गङ्गायां शुद्धिमाप्नुयात् ।
मथुरायां तथा चैव सापराधः शुचिर्भवेत् ॥

स्कान्दे—

जागरेद् द्वादशीरात्रौ पठेद्यस्तुलसीस्तवम् ।
द्वात्रिंशदपराधांश्च क्षमते तस्य केशवः ॥

पुराणोक्तस्तुलसीस्तवो व्रतरत्नादौ बोध्यः। प्रकारान्तरेण कृष्णभट्टीये—

तिर्यक्पुण्ड्रधरो भूत्वा यः कुर्याद्देवतार्चनम्।
याचितैः पत्रपुष्पाद्यैर्यः करोति ममार्चनम्॥
अप्रक्षालितपादो यः प्रविशेन्मम मन्दिरम्।
मम दृष्टेरभिमुखं ताम्बूलं चर्वयेच्च यः॥
कौसुम्भशाकं मर्त्यो वा भक्षयेन्मम सेवकः।
उरुवूकपलाशस्थैः पुष्पैः कुर्यान्ममार्चनम्॥
ममार्चामासुरे काले यः करोति विमूढधीः।
अवैष्णवस्य पक्कान्नं यो मर्त्यो विनिवेदयेत्॥
अवैष्णवेषु पश्यत्सु मत्पूजां विदधाति यः।
दिनान्तरितपक्कान्नं यो मह्यं विनिवेदयेत्॥
नीलीरञ्जितवस्त्रं च यो मह्यं विनिवेदयेत्।
नवप्रक्षालितं वस्त्रं जीर्णं वा विनिवेदयेत्॥
अमौनी घर्मलिप्ताङ्गो मत्पूजां विदधाति यः।
वातमूत्रनिरोधेन मत्पूजां विदधाति यः॥
नखोदकेन स्नपनं कुरुते यश्च मानवः।
कृत्वा वातमनाचम्य तथा प्रावृत्य कम्बलम्॥
पीठासनोपविष्टो वा पूजयेद्वा निरासनः।
मृन्मयं धूपदहनं दीपं यः कुरुतेऽर्चने॥
मत्पूजको(१)न कुरुते तन्तुपूजां च दामिनीम्।
मत्पूजकः शिवद्वेषी शिवभक्तश्च मां द्विषेत्॥
भूताष्टम्योर्न कुरुते नक्तं न हरिवासरम्।
परस्य परिधानं च परिधायार्चयीत च॥
अपूजयित्वा विघ्नेशमसम्भाष्य कपालिकम्।
क्रुद्धो यत्कर्म कुरुते त्रिकालार्चनविघ्नकृत्॥
अन्धकारे स्पृशेन्मां यः सम्भाष्य च रजस्वलाम्।

(१) 'कोतत्कुरुते' ख०

वामहस्ते च मां कृत्वा स्नापयेद्यदि मूढधीः ॥
महापराधाञ्जानीहि द्वात्रिंशन्न क्षमामि तान् ।

अन्ये चागस्तिनोक्ताः—

यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ।
देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः ॥
उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम् ।
एकहस्तप्रणामश्च तत्पुरस्तात्प्रदक्षिणम् ॥
पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम् ।
शमवातक्षणं(?) चैव मिथ्याभाषणमेव च ॥
उच्चैर्भाषितजल्पौ वा रोदनादिग्रहः ग्रहः ।
अग्रहानुग्रहौ चैव स्त्रीषु च क्रूरभाषणम् ॥
कम्बलावरणं चैव परानिन्दा परस्तुतिः ।
अश्लीलभाषणं चैव अधोवायुविमोक्षणम् ॥
शक्तौ गौणोपचारस्तु अनिवेदितभक्षणम् ।
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् ॥
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिकम् ।
पृष्ठीकृत्यासनं चैव परेषामभिवादनम् ॥
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ।
अपराधास्तथा विष्णोर्द्वात्रिंशत्परिकीर्तिताः ॥

अथापराधशतं गारुडे—

नारद उवाच—

कस्य कस्यापराधस्य किं फलं का गतिश्च भो ।
प्रत्येकमपराधस्य प्रायश्चित्तिश्च का भवेत् ॥
अशक्तश्च जडो वापि कथं शुद्धो वदस्व मे ।

ब्रह्मोवाच—

स्नानहीनस्तु यो मर्त्यः कृत्वा वै देवतार्चनम् ।
रौरवं नरकं याति यावदाभूतसंप्लवम् ॥

तस्यापचितिमन्विच्छन् जपेदष्टाक्षरं मनुम् ।
अयुतं सर्वपापघ्नं ततः शुद्धो भवेन्नरः ॥
निःशङ्कं देवतागारं प्रवेशं च करोति यः ।
असिपत्रवने घोरे पतत्याब्रह्मणो दिनम् ॥
पञ्चरात्रोपवासेन पञ्चगव्येन शुद्ध्यति ।
अप्रक्षालितपादश्च प्रविशेद्देवतालयम् ॥
विष्ठाकृमिर्भवेत्पापी सप्त(१)जन्मसु मानवः ।
देवस्थानमप्रशिरसा गच्छेदभिमुखं नरः ॥
कुम्भीपाके महाघोरे पतत्याचन्द्रतारकम् ।
गोमयालिप्तदेशे तु हरेः पूजां करोति यः ॥
सुतप्तवालुके घोरे नरके पतति ध्रुवम् ।
त्रिरावृत्य स पापात्मा गीतां शुद्ध्यति निश्चयः ॥
धूपहीनां च यः कुर्यात्पूजां विष्णोर्महात्मनः ।
तुषाग्नौ नाम नरके यावदिन्द्राश्चतुर्दश ॥
दशाङ्गं गुग्गुलं दत्त्वा स पापी शुद्ध्यति ध्रुवम् ।
घण्टानादविहीनां च देवतार्चां करोति यः ॥
कोलाहले महाघोरे नरके पतति ध्रुवम् ।
वेदपारायणं कृत्वा स पुमान् शुद्धिमाप्नुयात् ॥
मुखफूत्कृत्य वह्नौ तु धूपधूमं करोति यः ।
महातमासि नरके पतत्यालोक(२)संक्षयम् ॥
दीपमालां हरेः कृत्वा स च शुद्धिमवाप्नुयात् ।
स्तोत्रपाठं विना तूर्ष्णीं यो निर्माल्यं विसर्जयेत् ॥
निरुच्छ्वासे च नरके यावदिन्द्रपदं पतेत् ।
सहस्रनामपठनाच्छुद्धिं याति यतव्रतः ॥
अग्रोदकं त्रिवारं न वस्त्रेण शोधयेद्यदि ।
कालभक्षे महाघोरे पतत्येव नराधमः ॥

---

(१) 'शतजन्मस्तु' ख०
(२) 'संक्षये' ख०

ग्रीष्मे पानीयदानेन स पूतो जायते नरः ।
स्वच्छायाग्रोदकाद्यस्तु कुर्याद्देवाभिषेचनम् ॥
तप्तपङ्कह्रदं नाम नरकं याति मानवः ।
स सुवर्णाभिषेकेण हरेः शुद्धिमवाप्नुयात् ॥
अनाच्छाद्योदकुम्भस्य मुखे अग्रोदकाहृतम् ।
करोति मौढ्यात्पच्येत कालसूत्रादिषु द्विजः ॥
पवमानाभिषेकेण पवित्रो जायते नरः ।
अभक्ष्यभक्षणं यस्तु कुर्याद्वेदविगर्हितम् ॥
भयानके महाघोरे वासमाप्नोति मानवः ।
एकादश्युपवासे च तुलसीभक्षणाच्छुचिः ॥
अभक्ष्याणि च शाकानि तथैवान्नानि नारद ।
यो यो निवेदयेद्विष्णौ महारौरवमेति सः ॥
पराकं च व्रतं कृत्वा शुद्धिं प्राप्नोति मानवः ।
कक्षश्मश्रुनखस्पृष्टहस्ताद्देवाङ्गस्पर्शने ॥
अष्टभौमे महाघोरे वसत्याभुवमण्डलम् ।
अस्यवामस्य सूक्तस्य जपाच्छुद्धिमवाप्नुयात् ॥
अन्यावशिष्टवस्त्रस्य देवतायाः समर्पणात् ।
सुघोरं नाम नरकं प्रयात्यामनुकल्पकम् ॥
हीनवस्त्रार्चनां यस्तु करोति परमात्मनः ।
अतिघोरं च नरकं प्रयात्याभूतसंप्लवम् ॥
शीतार्त्ते वस्त्रदानेन पूतो भवति मानवः ।
योऽर्चां तु कुरुते विष्णोर्नीलवस्त्रेण मानवः ॥
कालरात्रिं महाघोरं नरकं याति दारुणम् ।
रात्रिसूक्ताच्चरुं हुत्वा शुद्धो भवति मानवः ॥
अधौतवस्त्रं यो विष्णोः समर्पयति मानवः ।
शूकरं नाम नरकं प्रयात्यालस्यदूषितः ॥
अतोदेवाश्चरुं हुत्वा पायसं शुद्धिमाप्नुयात् ।
निषिद्धान्नेन नैवेद्यं यः करोति नराधमः ॥

मलभोजं महाघोरं नरकं याति दारुणम् ।
नखश्मश्रुविना यस्तु दरिद्रो भुवि जायते ॥
द्वादश्यां भोजयित्वा तु ब्राह्मणान् शुद्धिमाप्नुयात् ।
अष्टाक्षरोपदेशस्तु यस्य कस्य गुरोर्न हि ॥
तादृशः पूजयित्वा तु विष्णुं वेदैकनायकम् ।
करालं नरकं याति यत्र दुःखानि भूरिशः ॥
सच्छास्त्रश्रवणादेव शुद्धिमाप्नोति निश्चितम् ।
शूद्राहृतैश्च कुसुमैर्विष्णोः पूजां करोति यः ॥
कीटदं नाम नरकं नानादुःखालयं व्रजेत् ।
पवित्रं तेत्यृचा हुत्वा स्नात्वा नद्यां शुचिर्भवेत् ॥
शूद्राहृतं न दुष्टं स्यात्सिद्धस्थाने महोत्सवे ।
शूद्राहृतं न दुष्टं तु शूद्रस्य हरिपूजने ॥
धौतपुष्पैः सपर्यां तु यः कुर्याच्छार्ङ्गधन्वनः ।
स चण्डनरकं याति पश्चाद्वैश्यो भवेन्नरः ॥
दधिक्राव्णऋचा विष्णुं दध्ना कृत्वा शुचिर्भवेत् ।
अन्यावशिष्टपर्युष्टम्लानपुष्पैर्हरिं यजेत् ॥
पद्मापद्मावतीभीमनरकान् याति दारुणान् ।
अतोदेवा-इदंविष्णुः-पौरुषं क्रमशो हुनेत् ॥
आज्यं पयः पायसं च क्रमाच्छुद्धो भवेन्नरः ।
छिन्नभिन्नातिरक्तानां पुष्पाणां तु समर्पणात् ॥
बहुसूचीमहासूचीसंज्ञान् याति च मानवः ।
पञ्चामृताभिषेकेण महानदजलाप्लुतः ॥
पयसा स्नापनाद्विष्णोः पश्चाच्छुद्धो भवेन्नरः ।
स्वाङ्गभूगलितानां च निर्हृतानां समर्पणात् ॥
अतिवातं महावातं चक्रवातं प्रयाति सः ।
अन्नधेनोः स्वर्णधेनोर्मधुधेनोश्च दानतः ॥
शुद्धं सुखमत्राप्नोति परत्र च परां गतिम् ।
वस्त्रपुटादर्कपुटादेरण्डादिपुटात्तथा ॥

आहृतैः पुष्पपत्राद्यैः पूजां विष्णोः करोति यः ।
अतितापं महातापमतिशीतं प्रयाति सः ॥
निर्गन्धपुष्पैः पूजां [ तु ] मुकुन्दस्य करोति यः ।
तथा पूयवहं नाम नरकं व्रजति ध्रुवम् ॥
वासहीनो भवेद् भूमौ पद्मपुष्पार्पणाच्छुचिः ।
तुलसीरहितैः पुष्पैर्योऽर्चयेदच्युतं हरिम् ॥
तामसं नरकं याति पुनरुत्थानवर्जितम् ।
कार्त्तिक्यां तुलसीपत्रैः संपूज्य च शुचिर्भवेत् ॥
लोकवार्त्तां वदन्विष्णोर्निर्माल्यं यस्तु लङ्घयेत् ।
चण्डकोलाहलं नाम नरकं याति दारुणम् ॥
पारायणात् पावमान्याः शुद्धतामेति मानवः ।
अप्रक्षाल्य च पुष्पाणि विष्णोः पूजां करोति यः ॥
कृमिभक्षमहाघोरं नरकं चाधिगच्छति ।
मन्दधीर्जायते भूमौ गोग्रासाच्छुध्यते नरः ॥
प्रक्षाल्य तुलसीं विष्णोः सपर्यां च करोति यः ।
सर्वसौख्यहरं नाम नरकं प्राप्य दुःखितः ॥
आवाहनादिषण्मुद्रां विना ह्यर्चां करोति यः ।
देहयोगवियोगाख्ये नरके वासमाप्नुयात् ॥
पुष्पाञ्जलिं मन्त्ररत्नाद्दत्वा शुद्धिमवाप्नुयात् ।
अग्निज्वालं प्रयात्याशु तथैवैरण्डदीपतः ॥
पिष्टामलकदीपस्य प्रदानाच्छुद्धिमाप्नुयात् ।
पञ्चसंस्कारहीनस्तु नरकं याति दारुणम् ॥
गङ्गावगाहनाद्वापि भारतस्य च कीर्त्तनात् ।
स नरः शुद्धिमाप्नोति नान्यथा शुद्धितामियात् ॥
शून्यदीपे विलुप्ते तु पूजां कर्त्तुं यदीच्छति ।
तैलयन्त्रं महाघोरं गत्वा तत्र निपीड्यते ॥
शङ्कराद्यैः समत्वेन विष्णोरर्चां करोति यः ।
स चान्धतमसो नाम्नो नरकानधिगच्छति ॥

सेनान्यैः पितृभिश्चैव समकालं हरिं व्रजेत् ।
दुःखोत्कटं नाम नरकं याति ब्रह्मार्पणं नरः ॥
श्रुत्वा भागवतं शास्त्रं शुद्धिमान् जायते नरः ।
पद्माक्षतुलसीमालाहीनकण्ठो वसेन्नरः ॥
शाल्मलीनरकं याति वलिबद्धो भवेन्नरः ।
कार्त्तिक्यां पद्ममालाभिः सुसंपूज्य शुचिर्भवेत् ॥
उत्तरीयपरित्यागाच्छायाहीने(१)ने पतत्ययम् ।
निराश्रयो भवेद् भूमौ दोग्ध्रीर्दत्त्वा शुचिर्भवेत् ॥
अपवित्रकरो यस्तु विष्णोरर्चां करोति यः ।
नरके पूयशोणाख्ये भुक्त्वा दुःखान्यनेकशः ॥
व्याधो भूत्वा सुपापीयान्नरकाने(२)कविंशतिः ।
अकच्छः पृष्ठकच्छो वा देवतार्चां करोति यः ॥
रेतसो भाजनं याति उपजग्धी भवेन्नरः ।
अश्वत्थसेवनाच्छुद्धस्तुलसीचन्दनादपि ॥
पाषण्डिनां च संसर्गं यः करोति दुराग्रहात् ।
सप्तशीलालयं नाम नरकं याति दारुणम् ॥
बहुमूत्रो भवेद् भूमौ सत्संगत्या विशुद्ध्यति ।
अनभ्यस्य च सच्छास्त्रं यो दुःशास्त्रं समभ्यसेत् ॥
अङ्गारराशिभवनं नरकं याति दारुणम् ।
स भूप्रदक्षिणां कृत्वा शुद्धिमाप्नोति निश्चितम् ॥
नरस्तुतीनां श्रवणं यः करोति नराधमः ।
नदीं वैतरणीं याति पूज्यस्तुत्या विशुद्ध्यति ॥
यः करोति विमूढात्मा नरस्तुत्या तु जीवनम् ।
मुसलोलूखलं नाम नरकं चाधिगच्छति ॥
नित्यं स पश्चिमे यामे विष्णुस्तुत्या विशुध्यति ।
पूज्यस्तुतिपरित्यागं यः कुर्यान्मनुजाधमः ॥

(१) 'हीनेष्वतत्पयम्' ख०
(२) 'नेव विन्दति' ख०

पूतिमांसादनं नाम नरकं सोऽधिगच्छति ।
मुखरोगी च भवति भारतश्रवणाच्छुचिः ॥
विष्णोर्निन्दां गुरोर्निन्दां श्रुत्वैव मनुजाधमः ।
नरकं चान्ध(१)तामिस्रं भुक्त्वा युगशतत्रयम् ॥
कपिलागोसहस्रं च दत्त्वा शुद्धिमवाप्नुयात् ।
अथवा विष्णुमाहात्म्यं श्रुत्वा शुद्धिमवाप्नुयात् ॥
सत्पुंसनिन्दाश्रवणं सच्छास्त्रस्यापि नारद ।
यः करोति विमूढात्मा महारौरवमेति सः ॥
स च्छिन्नोष्ठो भवेद् भूमौ भूमिदानेन शुध्यति ।
देवार्चासमये बालान् लालयन्मनुजाधमः ॥
इक्षुयन्त्रे महाघोरे पीड्यते यमकिङ्करैः ।
श्रुत्वा च शास्त्रसंदर्भं बालिशो नाभिपूज्यते ॥
देवालये पताकानां दानाच्छुद्ध्यति मानवः ।
व्यासङ्गाद्देवतार्चायां कृतायां मनुजेन वै ॥
आस्फालयन्ति तं याम्या क्षुरपाय शिलातले ।
पुस्तकस्य प्रदानेन तस्मात्पापात्प्रमुच्यते ॥
नखादिमलिनानां च देवागारे विसर्जने ।
विष्ठाकूपे पतत्याशु तत्रैव मलभोजनः ॥
चक्रकारो भवेद् भूमौ गन्धदानेन शुद्ध्यति ।
आज्याभिघारहीनस्य नैवेद्यस्य समर्पणे ॥
स तु हालाहलं नाम नरकं याति दारुणम् ।
स चापि शुद्धिमाप्नोति शतब्राह्मणभोजनात् ॥
आलस्याद्देवपूजायां तूष्णीं क्रीडति वा विभो ।
यः करोति विमूढात्मा चक्रे भेदान्निपीड्यते ॥
मलं बध्वा देवपूजां यश्चाचरति मूढधीः ।
तैलकूपं पातयन्ति तं पापं यमकिङ्कराः ॥

---

(१) 'तामिस्रं पतेद् युग' ख०

अजीर्णान्नो नरो यस्तु देवपूजां समाचरेत् ।
स पापात्मा ध्रुवं याति नरकं चण्डभीषणम् ॥
देवस्य पूजासमये विदित्वा गमनं सताम् ।
प्रत्युत्थानं न कुर्याच्चु अन्धकूपे पतत्ययम् ॥
महतां सेवनादेव स पूतो मुनिसत्तम ।
नित्यकर्मपरित्यागी सर्वानेतान् व्रजत्ययम् ॥
षष्ठकालव्रतं कृत्वा स शुद्धां याति वै गतिम् ।
शयानो मनुजः क्वापि यः शृणोति हरेः कथाम् ॥
नानादुःखग्रहं नाम नरकं याति दारुणम् ।
पश्चाद्व्यालो भवेद् भूमौ गृहदानाद्विशुद्ध्यति ॥
शृण्वन् पौराणिकीं गाथां कृत्वा ताम्बूलचर्वणम् ।
स याति नरकं घोरं वह्निभोजनसंज्ञकम् ॥
गुरोः समानरूढः सन् पुराणं यः शृणोति च ।
तप्तशूलासनं नाम नरकं याति दारुणम् ॥
गुरोः पर्यङ्कदानेन शुद्धिमाप्नोत्यसंशयम् ।
अश्रद्धया नरः श्रुत्वा पुराणं पापनाशनम् ॥
संमोहनं महाघोरं नरकं याति दुःखदम् ।
गत्वाऽपस्माररोगाढ्यः पुनरेवाभिजायते ॥
दिनापनयनं लोकवार्त्तया गृहचिन्तया ।
कुर्वन्निरयमाप्नोति तप्तशोणह्रदं नरः ॥
नमस्कारात्परं विष्णोः कृत्वा धूलिविधूननम् ।
तप्तधूलिनदं नाम नरकं चाधिगच्छति ॥
आरूढवृषभाशुद्धो युगबद्धवृषद्वयः ।
ताभ्यां वृषाभ्यां नियमात्किंचिद् दूरं व्रजेद् ध्रुवम् ॥
तेन शुद्धिमवाप्नोति नरकाद्वा कथञ्चन ।
आर्द्रवस्त्रधरो यस्तु कुर्वन्वै देवतार्चनम् ॥
अङ्गारवृष्टिपतनं नरकं प्रतिपद्यते ।
यतीनां वस्त्रदानेन मृदा स्नानेन शुद्ध्यति ॥

एकादशीदिने प्राप्ते यो भुङ्क्ते हरिवासरे ।
कृमिराशिं व्रजत्याशु यावदाभूतसंप्लवम् ॥
शुद्धिमाप्नोत्ययं स्नानाद्धोमत्यां कृष्णसंनिधौ ।
दीक्षितो देवपूजायां पूर्वं मैथुनमाचरेत् ॥
आयसाः कण्टकास्तीक्ष्णा नरके कूटशाल्मलौ।
पुंसूक्तमपठित्वा तु देवपूजां करोति यः ॥
वदनान्तरविन्यस्तसुप्रतप्तमयोगडी ।
आदावन्ते च साहस्रनामपाठविवर्जनात् ॥
तैलपूर्णकटाहेषु सन्तप्तेषु तु मानवः ।
निक्षिप्तोऽप्यात्मनो जिह्वां यमाज्ञाकारिभिर्भटैः ॥
अहुत्वा वाप्यदत्त्वा वा भोजनं कुरुते नरः ।
महोक्षमूत्रपूर्णायां वाप्यां वै क्षिप्यते नरः ॥
बृहदारण्यकं जप्त्वा चतुर्भिर्मुच्यते नरः ।
पुण्यकालोक्तातिशयसपर्यां यस्तु मुञ्चति ॥
क्षारोदं नाम नरकं नरो याति सुदारुणम् ।
तत्र शस्त्रैर्विशीर्णाङ्गो नमस्कारैर्विशुद्ध्यति ॥
अनिवेदितमन्नं यः शंखचक्रगदाभृतः ।
( भुनक्तीति शेषः । )
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥
चान्द्रायणत्रयं कृत्वा शुद्धिमाप्नोति मानवः ।
अन्यदेवार्पितं चान्नं यो भुङ्क्ते ज्ञानदुर्बलः ॥
( धू(१)म्रपाने महाघोरे आकल्पान्तमधो(२)मुखम् ।
विष्णुस्थानविहीने तु ग्रामेवासी नराधमः ॥ )
जन्तुपङ्के महाघोरे क्षिप्तः क्रन्दति विस्तरम् ।
स पङ्कुर्जायते भूमौ गङ्गासागरसंगमे ॥

---

(१) धनुश्चिन्हान्तर्गतं नास्ति घ० ङ० ।
(२) इतोऽग्रे 'चान्द्रायणत्रयं' पाठोऽधिकः ख०

स्नातः शुद्धिमवाप्नोति कथायाः श्रवणेन च ।
सत्संगमविहीने च ग्रामेवासी नराधमः ॥
शस्त्रावर्षे पतेद्घोरे शुद्धः स्यात्तीर्थसेवया ।
सुतेषु नामधेयानि विष्णोरन्यस्य नामतः ॥
आह्वानं कुरुते यस्तु तैलकुम्भे पतेद् ध्रुवम् ।
सकामः पूजितो येन देवदेवो जनार्दनः ॥
निवृत्तिमार्गे सरतः शुद्धिमेति न चान्यथा ।
देवोपकरणैर्यस्तु गृहयात्रां निवर्त्तयेत् ॥
महापेषे महाघोरे मुसलैः पीड्यते भृशम् ।
पक्षियोनिमवाप्नोति देवालंकरणाच्छुचिः ॥
शयानो मिथुनीभोगादेवागारे नराधमः ।
शरतल्पे महाघोरे प्राजापत्येन शुध्यति ॥
विना शङ्खं महाविष्णोराभिषेकं करोति यः ।
निरन्नं नरकं गत्वा स्वमांसं खादते नरः ॥
शङ्खेन पयसा देवं स्नाप्य शुद्धिमवाप्नुयात् ।
विष्णोरभिमुखं पादप्रसारं कुरुते नरः ॥
तं पापं पार्ष्णिदेशे तु छिद्रं कुर्वन्ति सत्वरम् ।
सेतुं गत्वा समुद्रस्य गङ्गासागरसंगमे ॥
स्नात्वा शुद्धिमवाप्नोति नान्यथा तु कथञ्चन ।
अवृन्दावनगेहे च निवसन्मानुषाधमः ॥
सर्वानेतान्महाक्रूरान्नरकाने(१)कविंशतिः ।
व्रतभ्रष्टो महापापं महारौरवमेति सः ॥
व्याघ्रयोनिमवाप्नोति बन्दिमोक्षाच्च शुध्यति ।
तुलामकरमेषे तु प्रातःस्नानविवर्जनात् ॥
पैशाचीं योनिमाप्नोति यावदाभूतसंप्लवम् ।
श्रुत्वा सच्छास्त्रमाहात्म्यं शुद्धिमाप्नोति मानवः ॥

---

(१) 'नैव विन्दति' ख० ।

अविभक्तानां पृथग्देवपूजामाह प्रयोगपारिजाते आश्वलायनः—

पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजातिनाम् ।
अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्पृथक् ॥

तत्रैव विष्णुधर्मे—

*शालग्रामशिलां वापि चक्राङ्कितशिलां तथा ।
ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत् ॥

इदं स्पर्शसहितपूजाविषयम् ।

शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥
ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती ।
सनाथा मृतनाथा वा तस्या नास्तीह निष्कृतिः ॥
स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर ।
स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य च ॥

इति स्कान्दात् । स्पर्शरहिता तु तयोर्भवत्येव,

शालग्रामं न स्पृशेत्तु हीनवर्णो वसुंधरे ।

---

पूजान्ते देवदेवस्य मुखवस्त्रार्पणं न हि ।
डाकिनीं योनिमासाद्य तिष्ठत्याभूतसंप्लवम् ॥
देवस्य दर्पणं दत्त्वा सद्यः पूतो भवेन्नरः ।
ब्रह्मपारंपरं स्तोत्रं पूजान्ते न पठेद्यदि ॥
न गृह्णाति स्वयं तस्य पूजां चैव तु वार्षिकीम् ।
इत्येतत्कथितं सर्वमपराधफलं मुने ॥
प्रायश्चित्तं मया तेषां विस्तरेण च वर्णितम् ॥ इति ।

*शालग्रामशिलामिति । शालग्रामो न विक्रेतव्यः । तथाच स्कान्दे—

शालग्रामशिलायास्तु मूल्यं यः कुरुते नरः ।
विक्रेता चानुमन्ता च यः परीक्षानुमोदकः ॥

स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः ॥
मोहाद्यः संस्पृशेच्छूद्रो योषिद्वापि कदाचन ।
स्वपते नरके घोरे यावदाभूतसंप्लवम् ॥
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुंधरे ।
दूरादेवास्पृशन्पूजां कारयेत्सुसमाहितः ॥

इति वाराहोक्तेः । (१)शालग्रामशिलामात्रे निर्बन्धो न प्रतिमादौ,

सर्ववर्णैस्तु संपूज्याः प्रतिमाः सर्वदेवताः ।
लिङ्गान्यपि तु पूज्यानि मणिभिः(२)कल्पितानि च ॥

इति तत्रैवोक्तेः ।

चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः ।
वैश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभिः ॥

इति स्कान्दात् । अन्ये तु दीक्षितविषयत्वेन व्यवस्थामाहुः । विष्णुधर्मे—

तयोरसंभवेऽर्चा वै सा चेह नवधा स्मृता ।
रत्नजा हेमजा चैव राजती ताम्रजा तथा ॥

---

सर्वे ते नरकं यान्ति यावदाभूतसंप्लवम् ॥ इति ।

स्त्रीशूद्रयोः स्पर्शपूजावत् साक्षात्शालग्रामपूजा निषिद्धा ।

ब्राह्मणक्षत्रवैश्यानां त्रयाणां मुनिसत्तम ।
अधिकारः स्मृतः सद्भिः शालग्रामशिलार्चने ॥
दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः ।
कर्त्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनम् ॥

इति पद्मात् । पाद्मे—

द्वारकाशैलसंभूतं यस्तोयं पिबते कलौ ।
पापानि तस्य नश्यन्ति शतजन्मार्जितान्यपि ॥

---

(१) 'शालग्राममात्रनिषेधो न' क०
(२) 'कल्पितास्तथा' क०

रैतिक्यर्चा तथा लौही शैलजा द्रुमजा तथा ।
अधमाधमा च विज्ञेया मृन्मयी प्रतिमा च या ॥

एषां फलानि तत्रैव ज्ञेयानि ।

( ना(१)र्च्या गृहेऽश्मजा मूर्तिश्चतुरङ्गुलतोऽधिका ।
न वितस्त्यधिका धातुसंभवा श्रेय इच्छता ॥
एवंलक्षणसंपन्ना पारंपर्यक्रमागता ।
उत्तमा सा तु विज्ञेया गुरुदत्तापि तत्समा ॥ )

तत्रैव पाद्मे शालग्रामं प्रक्रम्य—

तत्राप्यामलकीतुल्या पूज्या सूक्ष्मैव या भवेत् ।
यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् ॥

तथा—

यवमात्रं तु गर्तः स्याद्यवार्धं लिङ्गमुच्यते ।
शिवनाभिरिति ख्यातस्त्रिषु लोकेषु दुर्लभः ॥

---

धृते शिरसि पीते च सर्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तं हि पापानां क(१)लौ पादोदकं हरेः ॥ इति ।

शिलैव शैलं, स्वार्थेऽण् । द्वारकाशिलापूजायाः पृथक्करणस्थले एतत्, शालग्रामसहपूजने तस्यार्थतः सिद्धत्वात् । कौर्मे—

यो मोहादथ बालिश्यादकृत्वा देवतार्चनम् ।
भुङ्क्ते स याति नरकान् सूकरेष्वेव जायते ॥

यत्तु—

दानाध्ययनदेवार्चाजपहोमव्रतादिकम् ।
न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात् ॥ इति ।

तन्निरस्तम्,

श्राद्धाह्नि तु समभ्यर्च्य नृवराहं जनार्दनम् ।

इति विष्णुधर्मात् ।

पूजयित्वा शिवं भक्त्या पितृश्राद्धं प्रकल्पयेत् ।

---

(१) 'कंसान्तर्गतं नास्ति' क० (२) 'कुलपादोदकं' घ० ङ०

तत्रैव—

शालग्राममयी मुद्रा संस्थिता यत्र कुत्रचित् ।
वाराणस्या यवाधिक्यं समन्ताद्योजनत्रयम् ॥
यो मृतस्तत्समीपे तु मृतो वा नीयतेऽन्तिकम् ।
स वै मोक्षमवाप्नोति सत्यं सत्यं न चान्यथा ॥

तत्रैव--

चक्राङ्कमिथुनं पूज्यं नैकं चक्राङ्कमर्चयेत् ।
चक्राङ्कमिथुनात्सार्धं शालग्रामं प्रपूजयेत् ॥

तत्रैव वाराहे—

म्लेच्छदेशे शुचौ वापि चक्राङ्को यत्र तिष्ठति ।
यो(१)जनानां तथा त्रीणि मम क्षेत्रं वसुंधरे ॥

तत्रैव शालग्रामं प्रक्रम्य--

क्रयक्रीता परिज्ञेया मध्यमा याचिताऽधमा ॥

प्रयोगपारिजाते वाराहे--

एवंलक्षणसंपन्ना पारंपर्यक्रमागता ।
उत्तमा सा तु विज्ञेया गुरुदत्तापि तत्समा ॥

अथ पार्थिवपूजा नन्दिपुराणे--

आयुष्मान्बलवाञ्श्रीमान्पुत्रवान्धनवान्सुखी ।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत् ॥
तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम् ॥

तत्रैव--

*गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ।

---

इति लैङ्गात् । श्राद्धाहि विष्णुशिवेतरपूजा न कार्येति केचित् । पूजा च भूतशुद्ध्यादिप्राणप्रतिष्ठादिकं कृत्वैव कार्या । तद्विस्तरोऽन्यत्र बोध्यः ।

*गोभू इति । मृदाहरणादिसप्तसु मन्त्रा अनुपदं बोध्याः ।

---

(१) 'योजनानि' क०

ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥
सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः ।

भविष्ये—

पूर्वगोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ॥

अत्र-*'न प्राचीमग्रतः शंभोः' इति रुद्रयामले निषेधात् नान्तरालं प्राची, किन्तु *प्रसिद्धैव । तिथितत्त्वे देवीपुराणे—

*मृदाहरणसंघट्टं प्रतिष्ठाह्वानमेव च ।
स्नपनं पूजनं चैव विसर्जनमतः परम् ॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
शिवः पशुपतिश्चैव महादेव इति क्रमः ॥

---

अन्योपचारेषु च पञ्चाक्षरः षडक्षरो वा मन्त्र इत्यर्थः, नाममन्त्रो वा बोध्यः । *न प्राचीमिति ।

देवाग्रे स्वस्य वाप्यग्रे प्राची प्रोक्ता गुरुक्रमैः ।

इत्यपि द्रष्टव्यम् । तथाच प्राचीमग्रतः कृत्वा संमुखीकृत्य शम्भोः पूजां न कुर्यात् । *प्रसिद्धैवेति । प्राच्यैशान्यादिक्रमेण वामावर्त्तेन, 'आग्नेय्यन्ता' इत्युक्तेः । केचित्तु उदीचीमग्रतः कृत्वा उदीच्यभिमुखीभूयेति । तस्मादन्तरालमेव प्राचीमाहुः । तन्न बहुसंमतम् । *मृदिति । 'ॐहराय नमः' इति मृदमाहृत्य संशोध्य तस्यां शुचि जलं प्रक्षिप्य 'ॐमहेश्वराय नमः' इति संघट्टनं कृत्वा तेन पिण्डेन लिङ्गं कुर्यात् । तच्चाशीतिरक्तिकारूपाद्रक्षादधिकपरिमाणमङ्गुष्ठादधिकोच्चं च । ततः 'ॐशूलपाणये नमः शिवेह सुप्रतिष्ठितो भव' इति प्रतिष्ठाप्य

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं

स्कान्दे—

शुष्काण्यपि च पत्राणि श्रीवृक्षस्य निवेदयेत् ।

तत्रैव भविष्ये—

धत्तूरकैश्च यो लिङ्गं सकृत्पूजयते नरः ।
स गोलक्षफलं प्राप्य शिवलोके महीयते ॥

योगिनीतन्त्रे—

शिवागारे झल्लकं च सूर्यागारे च शङ्खकम् ।
दुर्गागारे वंशवाद्यं म(१)धुरीं न च वादयेत् ॥

श्राद्धहेमाद्रौ स्कान्दे—

स्पृष्ट्वा रुद्रस्य निर्माल्यं सवा(२)सा आप्लुतः शुचिः ।

प्रयोगपारिजाते क्रियासारे—

मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् ।
अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् ॥

---

विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

इति ध्यात्वा 'पिनाकधृते नमः शिवेहागच्छ' इत्यावाह्य प(३)-ञ्चाक्षरेण पाद्यार्घ्याचमनीयानि दत्त्वा 'ॐपशुपतये नमः' इति शुद्धोदकेन संस्नाप्य आचमनीयवस्त्राचमनीययज्ञोपवीतगन्धपुष्पधूपदीपनैवेद्याचमनीयफलताम्बूलदक्षिणानीराजनप्रदक्षिणानमस्कारान् 'ॐनमः शिवाय' इति मन्त्रेण कुर्यात् । ततोऽष्टमूर्त्तिपूजां कुर्यात् । सा चेत्थम्–ॐशि(४)वाय क्षितिमूर्त्तये नमः' यथास्थितप्राच्याम्, 'ॐभवाय जलमूर्त्तये नमः' इत्यैशान्यां, 'ॐरुद्रायाग्निमूर्त्तये नमः' इत्युत्तरस्यां, 'ॐउग्राय वायुमूर्त्तये नमः' इति वायव्यां, 'ॐभीमायाकाशमूर्त्तये नमः' इति प्राच्यां, 'ॐपशुपतये यजमानमूर्त्तये नमः' इति नैर्ऋत्यां, 'ॐमहादेवाय सोममूर्त्तये नमः' इति दक्षिणस्यां,

---

(१) 'मधुरीं' क०   (२) 'वाससा' ख० ग०

(३) 'नमः शिवाय' इत्यनेनेत्यर्थः ।

(४) 'ॐशर्वाय क्षितिपतये' घ०ङ० ।

अपनीतं च निर्माल्यं चण्डेशाय निवेदयेत् ।
अशून्यमस्तकं लिङ्गं सदा कुर्वीत पूजकः ॥

शूलपाणौ लैङ्गे—

वरं प्राणपरित्यागः शिरसो वापि कर्तनम् ।
न चैवापूज्य भुञ्जीत शिवलिङ्गे महेश्वरम् ॥
सूतके मृतके चैव न त्याज्यं शिवपूजनम् ॥

तिथितत्त्वे लैङ्गे—

विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोपि महादेवो न स्यात्तस्य फलप्रदः ॥
तस्मान्मृदापि कर्तव्यं ललाटे वै त्रिपुण्ड्रकम् ॥

रुद्राक्षधारणे विशेषः शिवरहस्ये—

एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति ।
अवध्यत्वं प्रतिस्रोतो वह्निस्तम्भं करोति च ॥
द्विवक्त्रो हरगौरी स्याद्गोवधाद्यघनाशकृत् ।
त्रिवक्त्रो ह्यग्निजन्माऽथ पापराशिं प्रणाशयेत् ॥

---

'ॐईशानाय सूर्यमूर्त्तये नमः' इत्याग्नेय्याम् । ततः स्तोत्रादिना स्तुत्वा त्रिः पुष्पाञ्जलिं समर्प्य नत्वा क्षमस्वेति संप्रार्थ्य 'ॐमहादेवाय नमः' इति विसर्जयेदिति । शिवपूजायां विशेषः—

आपः क्षीरं कुशाग्राणि दध्यक्षतमधुतण्डुलाः ।
सिताश्च सर्षपाश्चैव अर्घ्योऽष्टाङ्गः प्रकीर्त्तितः ॥
जलकाश्मीरकुष्टैस्तु रक्तचन्दनचन्दनैः ।
तमालागुरुकर्पूरैः शांभवं चाष्टगन्धकम् ॥
तुलसीबिल्वनिर्गुण्डीजम्बूराम्रत्रणं तथा ।
पञ्चबिल्वमिति प्रोक्तमर्चयेदिन्दुशेखरम् ॥
गुग्गुलं घृतसंयुक्तं शिवे धूपं निवेदयेत् ।
दधित्थं घृतसंयुक्तं दहेद्बिल्वमथापि वा ॥

चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति ।
पञ्चवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् ॥
षड्वक्त्रस्तु गुहो ज्ञेयो भ्रूणहत्यादि नाशयेत् ।
सप्तवक्त्रस्त्वनन्तः स्यात्स्वर्णस्तेयादिपापहृत् ॥
विनायकोऽष्टवक्त्रः स्यात्सर्वानृतविनाशकृत् ।
भैरवो नववक्त्रस्तु शिवसायुज्यकारकः ॥
दशवक्त्रः स्मृतो विष्णुर्भूतप्रेतभयापहः ।
एकादशमुखो रुद्रो नानायज्ञफलप्रदः ॥
द्वादशास्यस्तथादित्यः सर्वरोगनिबर्हणः ।
त्रयोदशमुखः कामः सर्वकामफलप्रदः ॥
चतुर्दशास्यः श्रीकण्ठो वंशोद्धारकरः परः ॥ इति ।

---

दीपादिकं प्रागुक्तं प्रतिष्ठायामिति । प्रतिष्ठा च स्मृत्यन्तरे—

प्रक्षाल्य गन्धतोयेन पञ्चगव्येन चोपरि ।
शिवाम्भसापि प्रक्षाल्य श्रीरुद्रेणाभिषेचयेत् ॥
रुद्राक्षाणां प्रतिष्ठेयमेवं वैदिकसंमता ।
अथवा वैदिकमते प्रतिष्ठा नैव विद्यते ॥

नारदीये—

शिवप्रदक्षिणे मर्त्यः सोमसूत्रं न लङ्घयेत् ।

प्रदक्षिणाप्रकारस्तु—

वृषं चण्डवृषं चैव सोमसूत्रं पुनर्वृषम् ।
चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ॥

सोमसूत्रप्रमाणं यथा—

प्रासादविस्तारसमानसूत्रं सोमस्य सूत्रं दिशि सोमसूत्रम् ।
सूत्राद्बहिर्लङ्घनतो न दोषः स्याद्दोष आभ्यन्तरलङ्घनेन ॥

लिङ्गावधिकं यावत् प्रासादभित्ति सोमस्य दिशि उत्तरस्यां दिशि सूत्रं सोमस्य सूत्रं सन्न लङ्घयेत् । तदग्रे तल्लङ्घने न दोष इत्यर्थः ।

तथा—

विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः ।
स याति नरकान्घोरान्यावदिन्द्राश्चतुर्दश ॥
पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत् ।
रुद्राक्षस्य प्रतिष्ठायां मन्त्रं पञ्चाक्षरं तथा ॥
त्र्यम्बकादिकमन्त्रं च तथा तत्र प्रयोजयेत् ॥

यद्वा 'ॐ अघोर ॐ ह्रैं अघोरतर ॐ ह्रौं ह्रां नमस्ते रुद्ररूपाय ह्रैं स्वाहा' अनेनाभिमन्त्र्य धारयेत् । तथा—

अष्टोत्तरशतं कार्या चतुःपञ्चाशदेव वा ।
सप्तविंशतिमाना वा ततो हीनाधमाः स्मृताः ॥

प्रजापतिः—

मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् ।
पुष्ट्यर्थी पञ्चविंशत्या पञ्चदश्याभिचारिके ॥
सप्तविंशतिरुद्राक्षमालया देहसंस्थया ।
यत्करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् ॥
यो ददाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्मुखम् ।
तस्य प्रीतो भवेद्रुद्रः स्व(१)पदं च प्रयच्छति ॥ इति ।

पदार्थादर्शे बोपदेवः—

रुद्राक्षान्कण्ठदेशे दशनपरिमितान्मस्तके विंशती द्वे
षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव ।
बाह्वोरिन्दोः कलाभिर्नयनयुगकृते एकमेकं शिखायां
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ॥

हेमाद्रौ शिवधर्मे—

स्नानं पलशतं ज्ञेयमभ्यङ्गः पञ्चविंशतिः ।
पलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितम् ॥
पञ्चविंशत्पलं लिङ्गे अभ्यङ्गं कारयेदथ ।

(१) 'स्वपदे' ग०

शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन च ॥
तावता मधुना चैव दध्ना चैव ततः पुनः ।
तावतैव च क्षीरेण गव्येनैव भवेत्ततः ॥
भूयः सार्धसहस्रेण पलानामैक्षवेण च ।
रसेन कारयेत्स्नानं भक्त्या चोष्णाम्बुना ततः ॥

विष्ण्वादौ तु स्कान्दे––

क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम् ।
घृताद्दशगुणं क्षौद्रं क्षौद्राच्चैक्षवजं तथा ॥

ब्राह्मे––

देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत् ।
पलानि तत्र देयानि श्रद्धया पञ्चविंशतिः ॥

इदं क्रोडीकृताभिप्रायेण । तत्रैव संग्रहे—

विष्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकम् ।
पादोदकं प्रसादं च लिङ्गे चण्डेश्वराय तु ॥

पञ्चायतनसंनिवेशमाह बोपदेवः पदार्थादर्शे—

शंभौ मध्यगते हरीनहरभूदेव्यो हरौ शंकरे-
भास्यैनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरेभवक्त्ररवयो लम्बोदरेऽजेश्वरे-
नाम्बाः शंकरभागतोऽतिसुखदा व्यस्तास्तु हानिप्रदाः ॥

शंकरभागतः ईशानकोणादारभ्य प्रदक्षिणमित्यर्थः ।
*अत्र दिक्स्वरूपमुक्तं प्रयोगपारिजाते मन्त्रशास्त्रे—

देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् ।
तदादि परिवाराणामङ्गाद्यावरणस्थितिः ॥

---

*अत्रेति । पञ्चायतनसन्निवेशे इत्यर्थः ।

यत्रैव भानुस्तु वियत्युदेति प्राचीति तां वेदविदो वदन्ति ।
इत्युक्ता प्राची न ग्राह्येत्यभिप्रायः । अत्र वदन्ति–इयं प्राची तान्त्रिकपूजायामेव न वैदिकपूजायां, तस्यां तु प्रसिद्धैव आवरणा-

तत्र क्रमः पाद्मे—

*रविर्विनायकश्चण्डी ईशो विष्णुस्तु पञ्चमः ।
अनुक्रमेण पूज्यन्ते व्युत्क्रमे तु महद्भयम् ॥

---

द्यभावात् । पञ्चायतनसंनिवेशेऽपि प्रसिद्धैव प्राची नतु पूज्यपूजकमध्यरूपेति । *रविरिति पौराणः प्रकारः । तान्त्रिकस्तु पञ्चानां मध्ये मुख्यस्यावाहनादिनमस्कारान्तं पूजाकाण्डं समाप्य अन्यस्येत्येवं कण्डानुसमयः ।

मुख्ये पुष्पाञ्जलिं दत्त्वा गणेशाद्यर्चनं भवेत् ।
गणेश एव मुख्यश्चेत्तत्र सूर्यक्रमाद्भवेत् ॥

इति क्रमाभिधानात् । मुख्ये प्रधानदेवतायां पुष्पाञ्जल्यन्तपूजाकाण्डं समाप्य पदार्थानुसमयेन गणेशादीनर्चयेदित्यर्थः । शारदातिलकटीकायां पुष्पाञ्जल्यन्तरमादौ विधीयते इत्युक्तम् । अत्र पक्षान्तरे मुख्यत्वोक्त्या देवतान्तरस्याङ्गत्वं लभ्यते । एवञ्चाङ्गप्रधानपूजयोरेककालीनत्वं सिद्ध्यति । तथाच सर्वेषामावाहनं ततः स्थापनमिति पदार्थानुसमय एव । ततः मुख्ये मध्ये पुष्पाञ्जल्यन्तां पूजां कृत्वाऽङ्गदेवतापूजा कार्येति । एतत्पक्षद्वयमपि तान्त्रिकपूजायामेव तत्रैवोक्तत्वात् । वैदिकपूजायां स्थापनक्रम एव ।

गणार्कौ (तु)समभ्यर्च्य शैवो विष्णुं प्रपूजयेत् ।
अर्चयेच्च शिवं पश्चाच्छिवमादौ तु वैष्णवः ।
ततो विष्णुं ततो दुर्गामेवं स्यादर्चनाक्रिया ॥

अत्र गणेशार्कयोः क्रमे न तात्पर्यं, किन्तु तावपूजयित्वा प्रधानं न पूज्यमित्यत्र । आदौ न सर्वादौ किन्तु विष्ण्वादौ । पौराणोऽयं क्रमः । आगमोक्तस्तु योगिनीतन्त्रे—

गणेशसूर्यविष्णवीशदुर्गा आवाह्य पूजयेत् । इति ।

अत एव विष्णुशिवगणेशसूर्यदुर्गाभ्यो नम इत्यादि श्लिष्टमन्त्र एव विष्णुपञ्चायतने वाजपेययाजिभिरुक्तः । सूर्यातिरिक्तपञ्चायतनपूजादि आदौ सूर्यपूजां कृत्वैव कार्या,

तथा—

पूज्यपूजकयोर्मध्ये प्राची प्रोक्ता विचक्षणैः ॥

अथ केशवादिमूर्तयः । बोपदेवः—

केविगोवादापुहृपेप्रजाच्युकृमसान्त्रिना ।

वाऽधोनृहसानिश्रीपा शाचगे वि गपे चपे ॥

अत्र केविगवित्याद्यैः केशवविष्ण्वादिचतुर्विंशतिमूर्तयोऽभिधीयन्ते । शात् शङ्खात् चगे चक्रगदे ज्ञेये इत्यर्थः । शिष्टे भुजे पद्मं त्वर्थतः सिद्धम् । अत्र दक्षि(१)णोर्ध्वकरक्रमेण ज्ञेयम्, 'दक्षि(१)णोर्ध्वकरक्रमात्' इति हेमाद्रौ वचनात् तेन हेमाद्रिणा संवादः । विशब्देन विपरीतं गचे इत्यर्थः । अत्रापि (२)शादित्यनुवृत्तिः । शङ्खाद्गदाचक्रे इत्यर्थः । गपे इत्यत्रापि शादनुवर्तते । शङ्खाद्गदापद्मे इत्यर्थः । विपरीते पद्मगदे इत्यत्रापि शङ्खाज्ज्ञेये । चपे चक्रपद्मे । शङ्खाच्चक्रपद्मे इत्यर्थः । वि इति अत्रापि, पद्मचक्रे इत्यर्थः । तेन(३)चगे इत्यष्टौ मूर्तयः । गपे इत्यष्टौ मूर्तयः । चपे इत्यत्र च । अत्र *मूलं हेमाद्रौ ज्ञेयम् ।

---

प्रातःसन्ध्यावसाने तु नित्यं सूर्यं समर्चयेत् ।

इति वचनात्,

अपूज्य प्रथमं सूर्यमपरान् यः प्रपूजयेत् ।

न तद्भूतकृतं पाद्यं संप्रतीक्षन्ति देवताः ॥

इति ब्राह्माच्च ।

*मूलमिति ।

शंखचक्रगदाजातः केशवः सूर्यसप्रभः ।

( इतः पुरुः )

---

(१) 'दक्षिणाधः क' ख० (२) 'अत्रापि शङ्खादनु' ख०

(३) 'तेन च गदे' ख०

कञ्जकम्बुचक्रगदायुतो विष्णू रविप्रभः ॥
गदाब्जशंखचक्रेतो गोविन्दो भास्करद्युतिः ।
वामनोऽरिगदापद्मशंखेतो रविसुप्रभः ॥
दामोदरः शंखगदाचक्रपद्मार्कसप्रभः ।
पद्मशंखगदाचक्रो सूर्याभः पुरुषोत्तमः ॥
सारिपद्मः शंखगदो हृषीकेशोऽर्कसप्रभः ।
उद्यदर्कनिभोपेन्द्रो गदाचक्राब्जशंखयुक् ॥
प्रद्युम्नो रविभः शंखगदाब्जारिधरो विभोः ।
जनार्दनश्चक्रशंखगदाब्जेतो रविप्रभः ॥
सूर्याभोऽच्युतनामाब्जचक्रशंखगदायुधः ।
उद्यदर्कनिभः कृष्णो गदापद्मारिशंखभृत् ॥
सशंखाब्जगदाचक्रः सूर्याभो मधुसूदनः ।
माधवश्चक्रशंखाब्जगदेतो रविसुप्रभः ॥
त्रिविक्रमो गदाचक्रशंखपद्मो रविप्रभः ।
नारायणः साब्जगदाचक्रशंखो रविप्रभः ॥
शंखचक्रे पद्मगदे वासुदेवो रविद्युतिः ।
रविप्रभो गदाशंखचक्राब्जेतो ह्यधोक्षजः ॥
नृसिंहः सूर्यभः पद्मगदाशंखादिसंयुतः ।
सारिपद्मगदाशंखो हरिः प्रद्योद्रविप्रभः ॥
शंखाब्जारिगदासूर्यप्रभः संकर्षणो विभुः ।
अनिरुद्धो गदाशंखपद्मचक्री रविप्रभः ॥
श्रीधरोऽरिगदाशंखपद्मेतोऽर्कसमद्युतिः ।
पद्मनाभः साब्जचक्रगदाशंखोऽजसान्निभः ॥ इति ।

श्रीक्रमेणापि यथा खिकेदानचीमाढगनाविधिमत्रिदंजीवजश्री-र्द्धहथिंपणादासद्यार्खींवृधीप्रान्टिीतिंपुंटादौनृदंधाच्युर्विंजोपदींहानि-अठाकु ॥ अस्यार्थः शंखचक्रगदापद्मानि भवतो धार्याणि । तेषां क्र-मेण अआइईसंज्ञाः । एवं शंखस्य कखगघेति चत्वारो वर्णाः संज्ञाः ।

अथ बौधायनसूत्रं त्रैविक्रमीं चानुसृत्य लिङ्गार्चाप्रतिष्ठोच्यते—'यजमानः पूर्वोक्तकाले पूर्वेद्युः दशद्वादशषोडशान्यतरहस्तं मण्डपं कृत्वाऽऽग्नेये हस्तमात्रं चतुरस्रं कुण्डं स्थण्डिलं वा पूर्वतो हस्तमात्रां वेदीं नैर्ऋते वा(१)स्तुमण्डपं मध्ये वेदीं तदुपरि सर्वतोभद्रं कृत्वा प्राणानाधास्यास्यां मूर्तौ लिङ्गे(२) वा देवस्य सान्निध्यसिद्ध्यर्थं दीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षय्यसुखकामोऽमुकमूर्तिप्रतिष्ठां करिष्ये इति सङ्कल्प्य गणेशपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धानि कृत्वाचार्यं चतुर ऋत्विजश्च वृत्वा वस्त्राद्यैः पूजयेत् । अथाचार्यो यदत्र संस्थितमिति सर्षपान् विकीर्यापोहिष्ठेति कुशोदकेन भूमिं प्रोक्ष्य देवा आयान्तु, यातुधाना अपयान्तु, विष्णो देवयजनं रक्षस्वेति भूमौ प्रादेशं कृत्वाऽस्मत्कृततुलापद्धतिमार्गेण मण्डपप्रतिष्ठां कृत्वाऽकृत्वा वा पूर्वरात्रौ हिरण्योपधानं देवं पञ्चगव्यहिरण्ययवदूर्वाश्वत्थपलाशपर्णान्युदकुम्भे प्रक्षिप्य ताभिरद्भिरापोहिष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानःसुवर्जन इ-

---

चक्रस्य चछजझेति । गदायाः टठडढेति । पद्मस्य तथदधेति । एवञ्च खिके इत्यादौ प्रथमैः कचटतैः प्रथमः शंखः, द्वितीयैः खछठथैः द्वितीयं चक्रं, तृतीयैः गजडदैः तृतीया गदा, चतुर्थैः घझढधैश्चतुर्थं पद्ममिति च ऊर्ध्वं दक्षिणकरक्रमेण विन्यासात्केशवादिमूर्त्तयः । अथार्थः—खिके खं शंखः संज्ञात्वात्, खश्चक्रं द्वितीयत्वात्, ईर्गदा संज्ञात्वात्, शिष्टं पद्ममर्थलभ्यम्, केशवः । दानः दः पद्मं संज्ञात्वात्, दः गदा तृतीयत्वात्, आ चक्रं संज्ञात्वात्, शिष्टः शंखः, नारायणः एवं क्रमेण चीमा इत्यादेरर्थः कार्यः ।

---

(१) 'मण्डलमध्ये' ख० 'मण्डलं मध्ये' क०
(२) 'लिङ्गेवा' नास्ति ख०

त्यनुवाकेनाभिषिच्य व्याहृतिभिरिदंविष्णुरिति फलयवदूर्वाः समर्प्य(१)नमस्ते रुद्रमन्यव इति रुद्रे ततो रक्षोहणमिति हस्ते कङ्कणं बद्ध्वा वाससाऽऽच्छाद्य अवतेहेड उदुत्तममिति जलेऽधिवासयेत्' । इदं बौधायनोक्तम् ।

ततश्चललिङ्गे अर्चायां वा अग्निं प्रतिष्ठाप्य गोक्षीरे नीवारचरुं कृत्वा विष्णुश्चेत् कृसरमपि श्रपयित्वाऽऽज्यभागान्ते पलाशोदुम्बराश्वत्थशम्यपामार्गसमिद्भिः आज्येन चरुणा तिलैर्वा प्रत्येकमष्टाविंशतिमष्टौ वाऽऽहुतीर्लोकपालमूर्तिपतिभ्यो हुत्वा स्थाप्य देवमन्त्रेण पूर्वोक्तसमित्तिलनैवारचर्वाज्यैरष्टसहस्रमष्टशतमष्टाविंशतिं वा हुत्वा 'अग्निर्यजुर्भिः' इत्यनुवाकेन दशाहुतीर्जुहुयात् । प्रतिद्रव्यहोमान्ते देवं पादनाभिशिरस्सु स्पृशेत् । आज्यहोमे चोत्तरतः सजलकुम्भे संपातानानयेत् । तेषां मन्त्राः—इन्द्राग्नेन्द्रो इतीन्द्रस्य, स्योनेति पृथिवीमूर्तेः, अघोरेभ्य इति तत्पतेः, शर्वस्य अग्न आयाहीत्यग्नेः, अग्निं दूतमित्याग्निमूर्तेः, न(१)मः शर्वाय च पशुपतये चेति पशुपतेः, यमाय सोममिति यमस्य, असि हि वीरेति यजमानमूर्तेः, स्तुहि श्रुतं तत्पतेः उग्रस्य, असुन्वन्तं निर्ऋतेः, आकृष्णेन सूर्यमूर्तेः, यो रुद्रो अग्नौ इति तत्पते रुद्रस्य, इमं मे वरुणस्य, शंनो देवी जलमूर्तेः, नमो भवायेति भवस्य, आनो नियुद्भिरिति वायोः, वात आ वातु वायुमूर्तेः, तमीशानं तत्पतेरीशानस्य, आप्यायस्वेति कुबेरस्य, वयं सोमेति सोममूर्तेः, तत्पुरुषाय महादेवस्य, अभित्वा ईशानस्य, आदित्प्रत्नस्येत्याकाशस्य, नम उग्राय चेति तत्पतेर्भीमस्य । ततो देवस्य पादौ स्पृशेत् । एवं द्वितीये

(१) 'नमस्ते रुद्रमन्यव इति रुद्रे ततो' नास्ति ख० ग०

(१) 'नमः शिवाय' क० ।

स्पृष्ट्वा नाभिं, तृतीये मध्यं, चतुर्थे उरः, पञ्चमे शिरः स्पृष्ट्वा प्रतिपर्यायं संपातजलेन देवमभिषिञ्चेत । ततः स्विष्टकृदादिहोममशेषं समाप्याचां शोधयेत् । स्थिरलिङ्गार्चादौ तु नेदानीमग्निस्थापनहोमादि कार्यम् ।

ततो देवं नत्वा—

स्वागतं देवदेवेश विश्वरूप नमोऽस्तु ते ।
शुद्धेऽपि त्वदधिष्ठाने शुद्धिं कुर्मः सहस्व ताम् ॥

इति संप्रार्थ्य 'उत्तिष्ठ ब्रह्मणस्पते' इति सवितृमुत्थाप्य पूर्वमकृतेऽग्न्युत्तारणे अधुना वा कार्यम् 'अग्निःसप्तिम्' इति सूक्तमग्निपदहीनं पठित्वा तत्सहितं पुनः पठेत् । एवमष्टसहस्रमष्टशतमष्टाविंशति वा पठन् जलं पातयेत् । ततोऽर्चां द्वादशवारं मृदा जलेन च प्रक्षाल्य मन्त्रवत्पञ्चगव्यं कृत्वा 'पयः पृथिव्याम्' 'आवोराजानम्' इति च संस्नाप्य 'आप्यायस्व' 'दधिक्राव्णः' 'तेजोसि' 'मधुवाता' 'आयं गौः' इति पञ्चामृतैः संस्नाप्य लिङ्गं चेत् 'नमस्ते रुद्र मन्यवे' इत्यष्टाभिः संस्नाप्य घृतेनाभ्यज्योद्वर्तनेनोद्वर्त्योष्णोदकेन प्रक्षाल्य गन्धं दत्त्वा संपातोदकेनाभिषिच्य सपल्लवैश्चतुर्भिः कुम्भैः 'आपोहिष्ठा' इति त्रिभिः 'आकलशेषु' इति च प्रत्येकं, 'समुद्रज्येष्ठा' इति चतुर्भिः 'आकलशेषु' इति च मिलितैः संस्नाप्यौदुम्बरादिपीठेऽर्चामुपवेश्य परितोऽष्टादिक्षु सजलकुम्भान्संस्थाप्य तेषु गन्धपुष्पदूर्वाः क्षिप्त्वा आद्ये सप्तमृदः, द्वितीये पुष्करपर्णशमीविकङ्कताश्मन्तकत्वचः पल्लवांश्च, तृतीयादिषु सप्तधान्यं पञ्चरत्नफलपुष्पाणि कुशदूर्वागोरोचनसंपातोदकगन्धफलसर्वौषधीः क्षिप्त्वा क्रमेण 'आपोहिष्ठा' इति तिसृभिः 'हिरण्यवर्णाः' इति चतसृभिः पवमानानुवाकेन चाभिषिच्यैककुम्भे

शमीपलाशवटखदिरबिल्वाश्वत्थविकङ्कतपनसाम्रशिरीषोदुम्बराणां पल्लवान् कषायांश्च क्षिप्त्वा 'अश्वत्थेवः' इत्यभिषिच्य पञ्चरत्नोदकेन 'हिरण्यवर्णाः' इति संस्नाप्य वाससी दत्त्वा उपवीतादि दीपान्तं कृत्वा 'हिरण्यगर्भः' 'य आत्मदा' 'यः प्राणतः' 'यस्येमे' 'येन द्यौः' 'यं क्रन्दसी' 'आपो ह यत्' 'यश्चिदापो' इत्यष्टौ पिष्टदीपान् दत्त्वा सुवर्णशलाकया तैजसपात्रस्थं मधु घृतं च गृहीत्वा 'चित्रं देवानां' 'तेजोसि' इति मन्त्राभ्यां

ॐ नमोभगवते तुभ्यं शि(१)वाय हरये नमः।
हिरण्यरेतसे विष्णो विश्वरूपाय ते नमः॥

इति च दक्षिणमध्ये देवनेत्रे मन्त्रावृत्त्या लिखेत्। 'अञ्जन्ति त्वा' इत्यञ्जनेन मधुना वाऽक्त्वा 'देवस्य त्वा सवितुः प्र(२)सवे०इन्द्रस्येन्द्रियेणानज्मि' इति मध्वाज्यशर्कराभिरक्त्वा तेनैवाञ्जनेन पुनरञ्जयेत्। स्थिरलिङ्गे तु स्वर्णसूच्या गन्धेन। 'ॐ नमो भगवते रुद्राय हिरण्यरेतसे पराय परमात्मने विश्वरूपायोमाप्रियाय नमः' इत्यञ्जनादिनाऽञ्जयेत्। ततः आदर्शभक्ष्यादि दर्शयेत्। ततः कर्ता आचार्याय गामृत्विग्भ्यश्च दक्षिणां दद्यात्। अथाचार्यः प्रत्यृचमादौ प्रणवं वदन् पुरुषसूक्तेन स्तुत्वा वंशपात्रे पंचवर्णौदनेन देवस्य नीराजनं कारयित्वा रुद्राय चतुष्पथादौ दद्यात्। मन्त्रस्तु-'ॐ नमो रुद्राय सर्वभूताधिपतये दीप्तशूलधरायोमादयिताय विश्वाधिपतये रुद्राय वै नमो नमः शिवमगर्हितं कर्मास्तु स्वाहा' इति। अश्वत्थपर्णे भूतेभ्यो नम इति। केचिदेतद्रात्रौ स्थिरप्रतिष्ठायामिच्छन्ति।

अथाचार्यः सर्वतोभद्रे देवानावाहयेत्। मध्ये ब्र-

(१) 'हराय हरये' क०
(२) 'प्रसवे० इन्द्रस्येन्द्रियेणानज्मि' नास्ति क०

ह्माणम्, पूर्वादिदिक्षु इन्द्रादिलोकपालान्, ईशानेन्द्राद्यन्तरालेषु वसून् रुद्रान् आदित्यान् अश्विनौ विश्वान्देवान् पितॄन् स्कन्दवृषौ, ब्रह्मेशानाद्यन्तरालेषु दक्षं विष्णुं दुर्गां स्वधाकारं मृत्युरोगान् समुद्रान् सरितः मरुतः गणाधिपं चेति। मध्ये एव पृथिवीं मेरुं संस्थाप्य देवं चावाह्य प्रागादि वज्रं शक्तिं दण्डं खड्गं पाशम् अङ्कुशं गदां शूलं, तद्बाह्ये गौतमं भरद्वाजं विश्वामित्रं कश्यपं जमदग्निं वसिष्ठम् अत्रिम् अरुन्धतीं च, तद्बाह्ये नवग्रहान्, तद्बाह्ये ऐन्द्रीं कौमारीं ब्राह्मीं वाराहीं चामुण्डां वैष्णवीं माहेश्वरीं वैनायकीमित्येताः नामभिरावाह्य सम्पूज्य अर्चायां देवं तन्मन्त्रेणावाह्य मण्डलमध्येऽर्चां 'सुप्रतिष्ठो भव' इति निवेश्य संपूज्य वह्नौ मण्डलदेवतानां नामाभिस्तिलाज्येन दशदशाहुतीर्हुत्वा पुष्पाञ्जलिं समर्प्य 'नमो महद्भ्यो०' इति देवं नत्वा मण्डलादुत्तरतः स्वस्तिके मञ्चकं तदुपरि शय्यां कृत्वा 'उत्तिष्ठ' इति देवमुत्थाप्य मङ्गलघोषैः शय्यायां देवमारोप्य पुरुषसूक्तोत्तरनारायणाभ्यां स्तुत्वा देवे न्यासं कुर्यात्। तद्यथा—पुरुषात्मने नमः, प्राणात्मने०, प्रकृतितत्त्वाय०, बुद्धितत्त्वाय०, अहंकारतत्त्वाय०, मनस्तत्त्वाय० इति सर्वाङ्गे। प्रकृतितत्त्वाय०, बुद्धितत्त्वाय० हृदि। शब्दतत्त्वाय० शिरसि। स्पर्शतत्त्वाय० त्वचि। रूपतत्त्वाय० हृदि। एवं हृद्येव रसगन्धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थपृथिव्यप्तेजोवाय्वाकाशसत्त्वरजस्तमोदेहतत्त्वानि विन्यसेत्। ततः पुरुषसूक्तस्याद्यमृग्द्वयं करयोः, तदुत्तरं जान्वोः, तदुत्तरं कट्योः, 'तं यज्ञम्' इति तिस्रः नाभिहृत्कण्ठेषु, 'तस्मादश्वा' इति द्वयं बाह्वोः, 'ब्राह्मणोस्य' इति द्वयं नासयोः, 'नाभ्या' इति द्वयमक्ष्णोः, अन्त्यां शिरसि। केचित्तत्त्वन्यासमन्य-

था आहुः । पुरुषप्रकृतिमहदहंकारतत्त्वानि, शब्दस्पर्श-रूपरसगन्धतन्मात्राणि, आकाशवायुतेजोऽप्पृथिवीश्रोत्रत्वक्चक्षुरसनाघ्राणवाक्पाणिपादपायूपस्थमनस्तत्त्वानीति । केचिदेतानि स्थिरलिङ्गादावेवेच्छन्ति । ततः 'सुखशायी भव' इति शय्यायां देवं स्वापयित्वा मण्डलशय्ययोरन्तराले न गन्तव्यमिति प्रैषं दत्त्वा स्विष्टकृदादिहोमशेषं समाप्य मण्डलदेवताभ्यो नामभिः पायसेन चरुणा वा बलीन्दद्यात्, नीवारचरुशेषेण दिग्बलिम् । नेदं स्थिरप्रतिष्ठायाम् । स्थिरलिङ्गार्चादौ त्वयं विशेषः–'अग्निस्थापनहोमवर्ज्यं सर्वं पूर्ववत्कृत्वा इदानीमग्निस्थापनं कृत्वा पूर्वोक्तहोमं कुर्यात् । नात्र नैवारश्चरुः । विष्णुश्चेत्पूर्वोक्तहोमं कृत्वा पुरुषसूक्तेन प्रत्यृचमाज्यं हुत्वा 'इदं विष्णुः' इति पादौ स्पृष्ट्वा पुनस्ता एव हुत्वा 'विष्णोर्नुकम्' इति नाभिं (१)स्पृष्ट्वा पुनस्ता एव हुत्वा 'अतो देवा' इति शिरः स्पृष्ट्वा पुनस्ता एव हुत्वा पुरुषसूक्तेन सर्वाङ्गं स्पृशेत् । स्थिरलिङ्गं चेदग्निस्थापनादि पूर्वोक्तसमिदाज्यतिलाहुतीर्हुत्वा 'या त इषुः' इत्यनुवाकान्तेन 'द्रापे' 'सहस्राणि' इत्यनुवाकाभ्यां च प्रत्यृचमाज्यं हुत्वा 'सर्वो वै रुद्रः' इति मूलं स्पृशेत् । पुनस्ता एव हुत्वा 'कद्रुद्राय' इति मध्यम्, पुनस्ता एव हुत्वा 'नमो हिरण्यबाहवे' इत्यग्रम्, पुनस्ता एव हुत्वा सर्वरुद्रेण सर्वाङ्गं स्पृशेत् । ततो 'यामन्त' इति पूर्णाहुतिं जुहुयान्न वा । एवमधिवासनं कृत्वा परेद्युः सद्यो वा पीठिकां स्नापयित्वा 'महीमूषु' इत्यावाह्य 'अदितिर्द्यौः' इति स्तुत्वा 'ह्रीं नमः' इति संपूज्य तेनैव पूर्णाहुतिं हुत्वा 'उत्तिष्ठ ब्रह्मणस्पते' इति देवमुत्थाप्य पुष्पा-

(१) 'स्पृशेत्' क० ।

ञ्जलिं दत्त्वा पुरुषसूक्तेन स्तुत्वा 'उदुत्यम्' इत्युत्थाप्य 'कनिक्रदत्' इति सूक्तेन विष्णुं 'सद्योजातम्' इति पञ्चानुवाकैर्लिङ्गं गृहं प्रवेश्य पीठिकायाम् इन्द्रादिनामभिरष्टरत्नानि क्षिप्त्वा सप्तधान्य(१)रूप्यवृषमनःशिलाः क्षिप्त्वा पायसेन संलिप्य प्रणवेनाङ्गन्यासं कृत्वा सुवर्णशलाकामन्तरितां कृत्वा सुलग्ने 'ॐ प्रतितिष्ठ परमेश्वर' इत्युक्त्वा 'अतो देवा' इति विष्णुं रुद्रेण च लिङ्गं स्थापयेत् । ततः प्राणप्रतिष्ठा ।

चलार्चादौ त्वधिवासनान्ते परेद्युः 'उत्तिष्ठ ब्रह्मणस्पते' इति देवमुत्थाप्य पुरुषसूक्तोत्तरनारायणाभ्यां स्तुत्वा घृते व्रीहिचरुं कृत्वा तद्देवतामन्त्रेण दशाहुतीर्हुत्वा नामभिर्जुहुयात् । अग्नये स्वाहा, सोमाय स्वाहा, धन्वन्तरये स्वाहा, कुह्वै स्वाहा, अनुमत्यै स्वाहा, प्रजापतये स्वाहा, परमेष्ठिने स्वाहा, ब्रह्मणे स्वाहा, अग्नये स्वाहा, सोमाय स्वाहा, अग्नयेऽन्नादाय स्वाहा, अग्नयेऽन्नपतये स्वाहा, प्रजापतये स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, सर्वेभ्यो देवेभ्यः स्वाहा, भूर्भुवःस्वः स्वाहा, अग्नये स्विष्टकृते इति । ततः 'सप्त ते अग्ने' 'पुनस्त्वा' इत्याभ्यां पूर्णाहुतिः । तत आचार्यो 'या ओषधीः' इति पुष्पफलसर्वौषधीः समर्प्य संपातोदकं (२)ताम्रपात्रे आदाय देवमन्त्रेण शतवारमभिमन्त्र्य तेनैवाभिषिञ्चेत् । ततः 'उत्तिष्ठ' इति देवमुत्थाप्य 'विश्वतश्चक्षुः' इत्युपस्थाय देवं ध्यात्वा जपेत् । ब्रह्मणे नमः । एवं विष्णवे० रुद्राय० इन्द्रादीन् अष्टौ वसुभ्यो रुद्रेभ्य आदित्येभ्योऽश्विभ्यां मरुद्भ्यः कुबेराय गङ्गादिमहानदीभ्योऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरये

(१) 'वृष' नास्ति क० । (२) 'ताम्रपात्रे' नास्ति क० ।

सर्वेशाय विश्वेभ्योदेवेभ्यो ब्रह्मणे नम इति। ततः संपातोदकेन यजमानमभिषिच्य देवं ध्यात्वा 'ॐप्रतितिष्ठ परमेश्वर' इति पुष्पाञ्जलिं निवेद्य सच्चिदानन्दं ब्रह्मैव भक्तानुग्रहाय गृहीतविग्रहं करचरणाद्यवयविनं शङ्खचक्राद्यायुधवन्तं निजवाहनाद्युपेतं निजहृत्कमलेऽवस्थितं सर्वलोकसाक्षिणमणीयांसं 'परमेष्ठ्यासि परमां श्रियं गमय' इति मन्त्रेण पुष्पाञ्जलावागतं विभाव्याऽर्चायां विन्यस्य प्राणप्रतिष्ठां कुर्यात्।

यथा—अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः, ऋग्यजुःसामानि छन्दांसि, क्रियामयवपुःप्राणाख्या देवता, आं बीजम्, क्रों शक्तिः, प्राणप्रतिष्ठायां विनियोगः। तत ऋष्यादीन् क्रमेण शिरोमुखहृदयगुह्यपादेषु विन्यस्य ॐ कं खं गं घं ङं अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः। ॐ चं छं जं झं ञं इं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा। ॐ टं ठं डं ढं णं उं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट्। ॐ तं थं दं धं नं एं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुम्। ॐ पं फं बं भं मं ओं वचनादानविहरणोत्सर्गानन्दात्मने औं नेत्रत्रयाय वौषट्। ॐ यं रं लं वं शं षं सं हं ळं क्षं अं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय फट्। एवम् आत्मनि देवे च कृत्वा देवं स्पृष्ट्वा जपेत्—ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं सः देवस्य प्राणा इह प्राणाः। ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं सः देवस्य जीव इह स्थितः। ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं सः देवस्य सर्वेन्द्रियाणि। ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं सः देवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखेन सुचिरं तिष्ठन्तु स्वाहेति। ततोऽर्चाहृदयमङ्गुष्ठं द-

त्वा जपेत्—

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥ इति ।

ततः प्रणवेन संरुध्य सजीवं ध्यात्वा 'ध्रुवा द्यौः' इति तृचं जप्त्वा कर्णे गायत्रीं देवमन्त्रं च जप्त्वा पुरुषसूक्तेनोपस्थाय पादनाभिशिरःसु स्पृष्ट्वा 'इहैवैधि' इति त्रिर्जपेत् । ततः कर्ता—

स्वागतं देवदेवेश मद्भाग्यात्त्वमिहागतः ।
प्राकृतं त्वमदृष्ट्वा मां बालवत्परिपालय ॥
धर्मार्थकामसिद्ध्यर्थं स्थिरो भव शुभाय नः ।
सांनिध्यं तु सदा देव स्वार्चायां परिकल्पय ॥
यावच्चन्द्रावनीसूर्यास्तिष्ठन्त्यप्रतिघातिनः ।
तावत्त्वयाऽत्र देवेश स्थेयं भक्तानुकम्पया ॥
भगवन् देवदेवेश त्वं पिता सर्वदेहिनाम् ।
येन रूपेण भगवंस्त्वया व्याप्तं चराचरम् ॥
तेन रूपेण देवेश स्वार्चायां सन्निधो भव ।

इति नमेत् । एतदन्तं सर्वदेवानां समानम् । देवमन्त्रश्च मूलमन्त्रो वैदिको वा ग्राह्यः ।

अथाचार्यः कर्ता वा लिङ्गमर्चां वा ॐ भूः पुरुषमावाहयामि, ॐ भुवः पुरुषमावाहयामि, ॐ स्वः पुरुषमावाहयामि, ॐ भूर्भुवःस्वः पुरुषमावाहयामीत्यावाह्य प्रणवेनासनं दत्त्वा तेनैव दूर्वाश्यामाकविष्णुक्रान्तापद्ममिश्रं पाद्यम्, 'इमा आपः शिवतमाः (१)पूताः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्यास्ता जुषतां प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नमः' इति पाद्यम्, 'भगवान् महादेवो रुद्राय नमः'

---

(१) 'पूताः' नास्ति क० ।

इति लिङ्गे, (१)एवं देवतान्तरेषूह्यम् । 'इमा आपः आचमनीयास्ता जुषताम्' (२)इति एलालवङ्गकङ्कोलकर्पूरमिश्रमाचमनीयम्, आपः क्षीरकुशाग्रैश्चाक्षतैर्यवतण्डुलैः यवैः सिद्धार्थकैश्चैव अर्घ्या इत्यर्घ्यम् । ततो वेदमन्त्रैः संस्नाप्य 'इदं विष्णुः' इति विष्णौ 'नमो अस्तु नीलग्रीवाय' इति लिङ्गे प्रतिसरं विसृस्य (३)वस्त्रं यज्ञोपवीतं च दत्त्वा—

इमे गन्धाः शुभा दिव्याः सर्वगन्धैरलंकृताः ।
पूता ब्रह्मपवित्रेण पूताः सूर्यस्य रश्मिभिः ॥

इति गन्धम्,

'इमे माल्याः शुभा दिव्याः सर्वमाल्यैरलंकृताः ।
पूता०'इत्यादिमाल्यम्, 'इमे पुष्पाः शुभा०'इत्यादि पुष्पम्,

वनस्पतिरसोद्भूतो (४)गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः(५) सर्वदेवानां धूपोयं प्रतिगृह्यताम् ॥

प्रतिगृह्णात्वित्यादि धूपम्,

ज्योतिः शुक्रं च तेजश्च देवानां सततं प्रियः ।
(६)प्रज्योतिः सर्वभूतानां दीपोयं प्रतिगृह्यताम् ॥

इति दीपं दत्त्वा विष्णौ संकर्षणवासुदेवप्रद्युम्नानिरुद्धपुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्दनोपेन्द्रहरिश्रीकृष्णेतिद्वादशनामाभिः केशवादिद्वादशनामभिर्वा पुष्पाणि समर्प्य तैरेव तर्पणं कृत्वा (७)पायसगुडौदनचित्रौद-

(१) 'एवं देवतान्तरेषूह्यम्' नास्ति क० ख० ।
(२) 'इत्याचमनीयम्, अर्घ्या' ग० ।
(३) 'वस्त्रं यज्ञोपवीतं च दत्त्वा' नास्ति ख० ।
(४) 'गन्धाढ्यो धूप उत्तमः' ग० ख० ।
(५) 'आघ्राणः' क० ।
(६) 'प्रभाकरः' क० ।
(७) 'पायसघृतप्लुतपूर्णशरावगुडौदनहरिद्रौदनचित्रौदनानि क०' ।

नानि 'पवित्रं ते विततम्' इति (१)निवेद्य संकर्षणादिपूर्वोक्तनामभिर्द्वादश कृसराहुतीर्हुत्वा तेनैव शार्ङ्गिणे० श्रियै० सरस्वत्यै० विष्णवे० इति हुत्वा 'विष्णोर्नुकं वीर्याणि' 'तदस्य प्रियमभिपाथो' 'प्रतद्विष्णुस्तवते वीर्येण' 'परोमात्रया तन्वा वृधानः' 'विचक्रमे पृथिवीमेष एतां' 'त्रिर्देवः पृथिवीमेष एताम्' (२)इति जुहुयात्। पुनः द्वादशनामभिर्जुहुयात्।

लिङ्गे तु दीपान्तं कृत्वा भवाय देवाय० शर्वाय० ईशानाय० पशुपतये० रुद्राय० उग्राय० भीमाय० महते देवाय नमः इति पुष्पाणि दत्त्वा तैरेव तर्पणं कृत्वा 'पवित्रं ते' इति पायसं गुडौदनं च निवेद्य पूर्वोक्तनामभिः कृसरं हुत्वा 'भवस्य देवस्य पत्न्यै स्वाहा' इत्याद्यष्टाभिर्गुडौदनं हुत्वा 'भवस्य देवस्य सुताय स्वाहा' इत्याद्यैर्हारिद्रौदनं हुत्वा 'त्र्यम्बकं यजामहे०' 'मानोमहान्तमुत मानो०' 'मानस्तोके तनये०' 'आरात्ते गोघ्नमुत पूरुषघ्ने०' 'विकिरिद्विलोहित०' 'सहस्राणि सहस्रशो' इति (३)द्वादश, एतैर्हुत्वा 'शिवाय शंकराय सहमानाय शितिकण्ठाय कपर्दिने ताम्राय अरुणाय अपगुरमाणाय हिरण्यबाहवे सस्पिंजराय बभ्लुशाय हिरण्याय' इति च जुहुयात्। ततः स्विष्टकृदादिहोमशेषं समाप्य पूर्वोक्तसर्वहविर्भिर्विष्णवे लिङ्गाय वा बलिं द-

---

(१) 'निवेद्य कृसरमाज्यमिश्रं जुहुयात्—वासुदेवाय स्वाहा, संकर्षणाय स्वाहा, प्रद्युम्नाय स्वाहा, अनिरुद्धाय०शान्त्यै० श्रियै० सरस्वत्यै० पुष्ट्यै० विष्णवे०' क०।

(२) 'इति द्वादशनामभिश्चामुष्मै स्वाहेति जुहुयात्' क० ख०।

(३) सहस्राणीत्यनुवाकस्य दशर्चत्वेनात्र दशभिरित्येवापेक्षितमिति भाति। अत्र द्वादशपदं सर्वत्र दृश्यते। तत्र सदसत्सद्भिर्विचारणीयम्।

द्यात् । मन्त्रस्तु—

त्वामेकमाद्यं पुरुषं पुरातनं
नारायणं विश्वसृजं यजामहे ।
त्वमेव यज्ञो विहितो विधेय-
स्त्वमात्मनात्मन् प्रतिगृह्णीष्व हव्यम् ॥ इति ।

लिङ्गे तु नारायणपदे रुद्रं शिवमिति वदेत् । ततोऽश्वत्थपर्णे 'भूर्भुवःस्वरोम्' इति हुतशेषं निधा(१)य प्रदक्षिणीकृत्य विश्वभुजे आत्मने परमात्मने नमः इति न(२)त्वा आचार्याय शतं तदर्धं तदर्धं द्वादश तिस्र एकां वा गां दत्त्वा ऋत्विग्भ्योऽपि दक्षिणां दत्त्वा शतं द्वादश वा ब्राह्मणान् भोजयेदिति संक्षेपः । प्रासादमात्रे नूतने तु मात्स्योक्तजलाशयप्रतिष्ठाविधिमेव कुर्यात् । गोरुत्तारणपात्रीप्रक्षेपादि तु न भवति द्वारलोपात् । वारुणहोमस्थाने वास्तुहोमः । अन्यत्तद्वदेव ।

इति भट्टकमलाकरकृतौ लिङ्गार्चाप्रतिष्ठाविधिः ॥

अथ पुनःप्रतिष्ठा । [illegible] हयशीर्षपञ्चरात्रे—

चाण्डालमद्यसंस्पर्शदूषिता वह्निनाऽथवा ।
अपुण्यजनसंस्पृष्टा विप्रहननजदूषिता ॥

संस्कार्येति शेषः । पदार्थादर्शे ब्राह्मे—

खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते ।
यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु ॥
अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते ।
दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः ॥

यागः पूजा । पशुर्गर्दभादिः । पञ्चरात्रे—

खण्डिता स्फुटिता दग्धा यस्मादर्चा भयावहा ।
तस्मात्समुद्धरेत्तां तु पूर्वोक्तविधिना नरः ॥

---

(१) 'निधायाग्निना सह प्रद' क० ।
(२) 'नत्वाऽङ्गुलीयकुण्ड[illegible] पूजयित्वाऽऽचार्याय'क० ।

*अर्चाभङ्गादावुपवासः कार्यः,

न राज्ञो विप्लवेऽश्नीयात्सुरार्चाविप्लवे तथा ।

इति विष्णुधर्मोक्तेः । सिद्धान्तशेखरे—

चौरचण्डालपतितश्वोदक्यास्पर्शने सति ।

श(१)वाद्युपहतौ चैव प्रतिष्ठां पुनराचरेत् ॥

पञ्चरात्रे—

अङ्गादङ्गादिसंधाने प्रतिष्ठां पुनराचरेत् ।

जला(२)धिवासरहितां नेत्रोन्मीलनवर्जिताम् ॥

शुद्धिविवेके विष्णुः—'द्रव्यवत्कृतशौचानां देवतार्चानां भूयः प्रतिष्ठापनेन शुद्धिः' इति । अर्चाः प्रतिमाः । तद्द्रव्यस्य ताम्रादेरुक्तशौचं कृत्वा पुनःप्रतिष्ठां कुर्यादित्यर्थः । स्मृत्यर्थसारेऽप्येवम् ।

तद्विधिर्बौधायनसूत्रे—'पूर्वप्रतिष्ठितस्याबुद्धिपूर्वमेकरात्रं द्विरात्रमेकमासं द्विमासं वाऽर्चनादिविच्छेदे शूद्ररजस्वलाद्युपस्पर्शने पूर्वोक्ते काले पुण्याहं वाचयित्वा युग्मान्ब्राह्मणान्भोजयित्वा निशायां जलाधिवासं कृत्वा श्वोभूते कलशपूर्णेन पञ्चगव्येन तत्तन्मन्त्रैः स्नापयित्वाऽन्यं कलशं शुद्धोदकेनापूर्य तस्मिन्नवरत्नानि प्रक्षिप्य तं कलशं तत्तद्गायत्र्याष्टसहस्रमष्टशतमष्टाविंशतिवारं वाऽभिमन्त्र्य तेनोदकेन देवं स्नापयेत्ततः शुद्धोदकेन स्नापये-

---

*अर्चाभङ्गादाविति ।

अग्निदग्धे तु दम्भोलिपतने देवमन्दिरे ।

पुनःप्रतिष्ठा कर्त्तव्या आर्त्ते च निस्वनेऽपि वा ॥

संप्रोक्षणविधानेन कुर्यादेवमतन्द्रितः ।

स्थानसंचलने वापि शवसूतकिसंस्पृशे ॥

---

(१) 'शवाद्युपहते' ग० ।

(२) 'जलाधिवासविहितनेत्रो' ख० ग० ।

दष्टसहस्रमष्टशतमष्टाविंशति वा पुरुषसूक्तेन मूलमन्त्रेण च । ततः पुष्पाणि दत्त्वा यथासंभवमर्चयित्वा गुडौदनं निवेदयेत्' इति । बुद्धिपूर्वं तु विच्छेदे पूर्वोक्तां प्रतिष्ठां पुनः कुर्यात् पूर्वोक्तविष्णुवचनात् । इदं मलमासशुक्रास्तादावपि कार्यमिति मदनरत्ने हेमाद्रौ च । देवार्चाप्रासादभेदने तु शूलपाणौ काश्यपः–'वापीकूपारामसेतुसभातडागवप्रदेवतायतनभेदने प्रायश्चित्तं चतस्र आज्याहुतीर्जुहुयात्–'इदं विष्णुः' 'मानस्तोके' 'विष्णोः कर्माणि' 'पादोऽस्य' इति, यां देवतामुत्सादयति तस्यै देवतायै ब्राह्मणान्भोजयेत्' इति । शङ्खलिखितौ–'प्रतिमारामकूपसंक्रमध्वजसेतुनिपातभङ्गेषु तत्समुत्थानं प्रतिसंस्कारोऽष्टशतं च निपातितानाम्' इति । समुत्थानं प्रतिक्रिया । प्रतिसंस्कारः पुनः प्रतिष्ठा । अष्टशतं पणा दण्डश्चेत्यर्थः ।

अथ जीर्णोद्धारः । सच लिङ्गादौ दग्धे भग्ने चलिते वा कार्यः । अयं चानादिसिद्धप्रतिष्ठितलिङ्गादौ भङ्गादिदुष्टेऽपि न कार्यः, तत्र तु महाभिषेकं कुर्यादिति त्रिविक्रमः । कर्ताऽमुकदेवस्य जीर्णोद्धारं करिष्ये(१)इत्यु-

---

चण्डालपुल्कसोदक्यापतिताद्यभिमर्शने ।
विण्मूत्रस्पर्शने वापि खरोष्ट्राभिप्रवेशने ॥
सन्ततार्चनलोपेऽपि अङ्गारस्पर्शनेऽपि वा ।
एवमाद्येषु जातेषु तदा संप्रोक्षयेद् गुरुः ॥
संप्रोक्षणविधाने तु न कालनियमस्तथा ।
पुण्याहं वाचयित्वा च ब्राह्मणैरुच्चारयेत् ॥

इत्याद्यन्यत्र विस्तरः ।

---

(१) 'करिष्ये इति संकल्प्य पुण्याहं' क० ।

कृत्वा पुण्याहं वाचयित्वा ना(१)न्दीश्राद्धान्तं कृत्वा आचार्यमृत्विजश्च वृत्वा पीठे(२)मण्डलदेवता आवाह्य लिङ्गे ॐ व्यापकेश्वर हृदयाय नमः, ॐ व्यापकेश्वर शिरसे स्वाहा, इत्येवं षडङ्गं कृत्वा देवतान्तरे मूलमन्त्रेण षडङ्गं कृत्वा(३)अर्चयेत् । अघोरमन्त्रम् अष्टोत्तरशतं जप्त्वाऽग्निं प्रतिष्ठाप्याघोरेण घृतसर्षपैः सहस्रं हुत्वा इन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णदेवं प्रणवेन संपूज्य सा(४)ज्यतिलैर्ब्रह्मादिमण्डलदेवतानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत्—

जीर्णभग्नमि(५)दं देव सर्वदोषावहं नृणाम् ।
अस्योद्धारे कृते शान्तिः शास्त्रेऽस्मिन्कथिता त्वया ॥
जीर्णोद्धारविधानं च नृपराष्ट्रहितावहम् ।
तदधस्तिष्ठतां देव प्रहरामि तवाज्ञया ॥ इति ।

ततः क्षीराज्यमधुदूर्वाभिः समिद्भिश्चाष्टोत्तरसहस्रम् अष्टोत्तरशतं वा देवमन्त्रेण हुत्वाऽङ्गानां दशांशेन लिङ्गचालनार्थं सहस्रं शतं वा पायसेन हुत्वा लिङ्गं प्रार्थयेत्—

'लिङ्गरूपं समागत्य येनेदं समधिष्ठितम् ।
याहि त्वं संमितं स्थानं संत्यज्यैव शिवाज्ञया ॥
अत्र स्थाने च या विद्या सर्वविद्येश्वरैर्युता ।
शिवेन सह संतिष्ठ'

इति मन्त्रितजलेनाभिषिच्य विसर्जयेत् । ततोऽस्त्रमन्त्रितेन खनित्रेण खात्वा लिङ्गमादाय नद्यादौ वामदेवेन लिङ्गं, प्रणवेन मूर्तिं क्षिपेत् । दारुजं तु मधुनाऽभ्यज्या-

(१) 'नान्दीश्राद्धान्तं कृत्वा' नास्ति क० ।
(२) 'पीठे मण्डलदेवता आवाह्य' नास्ति क० ।
(३) 'अर्चयेत् । अघोरमन्त्रमष्टोत्तरशतं जप्त्वा' नास्ति ख० ।
(४) 'साज्यतिलैः' नास्ति ख० । (५) 'मिदं चैव' ख० ।

घोरेण दहेत् । हेमरत्नादिमयं तु दग्धं चलितं वा पुनस्तत्रैव स्थापयेत् । ततः शान्त्यै अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत्—

भगवन्भूतभव्येश लोकनाथ जगत्पते ।
जीर्णलिङ्गसमुद्धारः कृतस्त्वाज्ञया मया ॥
अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले ।
प्रायश्चित्ताय देवेश अघोरास्त्रेण तर्पितम् ॥
ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि ।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर ॥

ततो यजमानः प्रार्थयेत्—

गोविप्रशिल्पिभूतानामाचार्यस्य च यज्वनः ।
शान्तिर्भवतु देवेश अच्छिद्रं जायतामिदम् ॥

मूर्तौ तु विशेषः—

त्वत्प्रसादेन निर्विघ्नं देहं निर्मापयत्यसौ ।
वासं कुरु सुरश्रेष्ठ तावत्त्वं चाल्पके गृहे ॥
वसन्क्लेशं सहित्वेह मूर्तिं वै तव पूर्ववत् ॥
यावत्कारयते भक्तः कुरु तस्य च वाञ्छितम् ॥ इति ।

ततो नवां मूर्तिं लिङ्गं वा कृत्वोक्तविधिना स्थापयेत् । मूलं त्वग्निपुराणे स्पष्टम् ।

इति जीर्णोद्धारः ॥

अथ तुलसीग्रहणम् । देवयाज्ञिककृतं स्मृतिसारे—

वैधृतौ च व्यतीपाते भौमभार्गवभानुषु ।
पर्वद्वये च संक्रान्तौ द्वादश्यां सूतकद्वये ॥
तुलसीं ये विचिन्वन्ति ते छिन्दन्ति हरेः शिरः ॥

विष्णुधर्मोत्तरे—

रविवारं विना दूर्वां तुलसीं द्वादशीं विना ।
जीवितस्याविनाशाय प्रविचिन्वीत धर्मवित् ॥

तथा—

संक्रान्तावर्कपक्षान्ते द्वादश्यां निशि सन्ध्ययोः ।
यैश्छिन्नं तुलसीपत्रं तैश्छिन्नं हरिमस्तकम् ॥

पाद्मे—

द्वादश्यां तुलसीपत्रं धात्रीपत्रं च कार्तिके ।
लुनाति स नरो गच्छेन्निरयानतिगर्हितान् ॥

रुद्रयामले—

द्वादश्यां च दिवा स्वापस्तुलस्यवचयस्तथा ।
विष्णोश्चैव दिवा स्नानं वर्जनीयं सदा बुधैः ॥

विष्णुधर्मे—

न छिन्द्यात्तुलसीं विप्रो द्वादश्यां वैष्णवः क्वचित् ।
देवार्थे तुलसीच्छेदो होमार्थे समिधां तथा ॥
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥

ग्रहणमन्त्रस्तु पाद्मे—

तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये ।
केशवार्थं विचिन्वामि वरदा भव शोभने ॥ इति ।

पारिजाते दक्षः—

समित्पुष्पकुशादीनां द्वितीयः प्रहरो मतः ।

अथ पुष्पादेः पर्युषितत्वम् । भार्गवार्चने भविष्ये—

प्रहरं तिष्ठते जाती करवीरमहर्निशम् ।
तुलस्यां बिल्वपत्रेषु सर्वेषु जलजेषु च ॥
न पर्युषितदोषोऽस्ति मालाकारगृहेऽपि च ॥

बृहन्नारदीये—

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥

तत्रैव पाद्मे—

तुलसी पर्युषिता नैव बिल्वं तु त्रिदिनावधि ।
पद्मं पञ्चदिनात्त्याज्यं शेषं पर्युषितं विदुः ॥

स्कान्दे—

पालाशं दिनमेकं तु पङ्कजं च दिनत्रयम् ।
पञ्चाहं बिल्वपत्रं च दशाहं तुलसीदलम् ॥

पदार्थादर्शे बोपदेवस्त्वन्यथाह—

बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृङ्गदूर्वा-
मन्दाम्भोजाहिदर्भामुनितिलत(१)सरब्रह्मकह्लारमल्लयः ।
चम्पाश्वारातिकुम्भीदमनमरुबका बिल्वतोऽहानि शस्ता-
स्त्रिंशत्त्र्येकार्यरीशोदधिनिधिवसुभूभूयमा भूय एवम् ॥

अस्यार्थः—शता शतावरी । मन्दः मन्दारः । अहि-र्नागकेशरः । मुनिरगस्त्यः । अश्वारातिः करवीरः । कुम्भी पाटलेति कैदेवनिघण्टुः । अरयः षट् । ईशा एकादश । उदधयश्चत्वारः । निधयो नव । वसवोऽष्टौ । भूः एकः । यमौ द्वौ । बिल्वमारभ्याऽहिपर्यन्तं गणयित्वा दर्भमारभ्य पुनस्त्रिंशदादि गणयेदित्यर्थः । एतद्दिनोत्तरं पर्युषितानीत्यर्थः । टोडरानन्दे स्कान्दे दमनमुपक्रम्य—

तस्य माला भगवतः परमप्रीतिकारिणी ।
शुष्का पर्युषिता वापि न दुष्टा भवति क्वचित् ॥

तिथितत्त्वे मात्स्ये—

बिल्वपत्रं च माध्यं च तमालामलकीदले ।
कह्लारं तुलसी चैव पद्मं च मुनिपुष्पकम् ॥
एतत्पर्युषितं न स्यात्कुशाश्च कलिकास्तथा ॥

स्मृतिसारावल्याम्—

जलजानां च सर्वेषां पत्राणामहतस्य च ।
कुशपुष्पस्य रजतसुवर्णकृतयोरपि ॥
न पर्युषितदोषोऽस्ति तीर्थतोयस्य चैव हि ।
मुकुलैर्नार्चयेद्देवं (२)पङ्कजैर्जलजैर्विना ॥

---

(१) 'तगर' ख० (२) 'चम्पकैर्ज' क०

अथ शिवनिर्माल्यनिर्णयः । सिद्धान्तशेखरे—

*धराहिरण्यगोरत्नताम्ररौप्यांशुकादिकान् ।
विहाय शेषं निर्माल्यं चण्डेशाय निवेदयेत् ॥
अन्यदन्नादि पानीयं ताम्बूलं गन्धपुष्पकम् ।
दद्याच्चण्डाय निर्माल्यं शिवभुक्तं तु सर्वशः ॥
आचार्यशिवचण्डानामाज्ञाभङ्गे तु लक्षकम् ।
धनस्य भक्षणे तेषां पादोनं लक्षमीरितम् ॥
निर्माल्ये भक्षिते लक्षपादतः शुद्धिरीरिता ।
दानं च भक्षणसमं तदर्धं तदुपेक्षणे ॥
अकामाद्भक्षणे यद्वा निर्माल्यस्य जपेत्सुधीः ।
ब्रह्मपञ्चक(१)साहस्रं धर्मेण सहितं ततः ॥
कामतो भक्षणे दीक्षा प्रायश्चित्तं न चान्यतः ।
निर्माल्यलङ्घनेऽघोरं प्रजपेदयुतं ततः ॥
स्पर्शश्च लङ्घनसमो विक्रयो भक्षणेन च ॥

स्मृत्यर्थसारेऽपि—'शैवसौरनिर्माल्ये नैवेद्यभक्षणे चान्द्रम्, अभ्यासे द्विगुणम्, मत्याभ्यासे (२)प्रतपनम्, अन्यनिर्माल्येऽप्यनापद्येवम्' इति । इदं च ज्योतिर्लि-

---

*धरेति ।

निर्माल्यं यो हि भक्त्या च शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः ॥
नरके पच्यते घोरे तिर्यग्योनौ च संभवेत् ॥

इतिनिर्माल्यधारणनिषेधात् । यत्तु—

ब्रह्महाऽपि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् ।
तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ॥

इति स्कान्दं, तत्तु अशुचिना न ग्राह्यं, किन्तु स्नानादिना शुचिनेति स्मार्त्ताः । अपनीतं तन्न ग्राह्यमिति श्रीदत्तः । शिवदी-

---

(१) 'साहस्रमर्धेन सहितं' क० (२) 'पतनम्' क० ख०

ङ्गाद्यतिरिक्तविषयम् । तथाच पुरुषार्थप्रबोधे भविष्ये—

ज्योतिर्लिङ्गं विना लिङ्गं यः पूजयति सत्तमः ।
तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकम् ॥
शालग्रामोद्भवे लिङ्गे*बाणलिङ्गे स्वयंभुवि ।
रसलिङ्गे तथार्षे च (१)सुरसिद्धप्रतिष्ठिते ॥
हृदये चन्द्रकान्ते च स्वर्णरौप्यादिनिर्मिते ।
शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते ॥

तथा—

बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते ।
चान्द्रायणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणम् ॥
लिङ्गे स्वयंभुवे बाणे रत्नजे रसनिर्मिते ।
सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत् ॥
यत्र चण्डाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः ।
चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः ॥

त्रैविक्रम्याम्—

बाणलिङ्गे च लौहे च सिद्धलिङ्गे स्वयंभुवि ।
प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥

———

क्षाहीनैर्न ग्राह्यमित्येके । ज्योतिर्लिङ्गाद्यतिरिक्तस्य न ग्राह्यमिति शिष्टाः । *बाणलिङ्गे इति । बाणलिङ्गलक्षणं यथा—

पक्वजम्बूफलाकारं कुक्कुटाण्डसमाकृतिम् ।
भुक्तिमुक्तिप्रदं चैव बाणलिङ्गमुदाहृतम् ॥
सदा सन्निहितस्तत्र शिवः सर्वार्थसाधकः ।
कृतप्रतिष्ठं तल्लिङ्गं बाणाख्येनासुरेण च ॥
चिपिटे पूजिते तस्मिन् गृहभङ्गो भवेद् ध्रुवम् ।
एकपार्श्वक्षते धेनुपुत्रदारधनक्षयः ॥

(१) 'सुप्रसिद्ध' ख०

अत्र--

ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् ।
तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ॥

इति स्कान्दादशुचिना न ग्राह्यं शिवनिर्माल्यं, किन्तु स्नात्वेति स्मार्ताः । अनुपनीतेन न ग्राह्यमिति श्रीदत्तः । शिवदीक्षाहीनैर्न ग्राह्यमिति शैवाः । तिथितत्त्वे हेमाद्रौ परिशिष्टे--

*अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलासङ्गात्सर्वं याति पवित्रताम् ॥

---

शिरसि स्फुटिते बाणे व्याधिर्मरणमेव च ।
अर्च्यं स्यात्कापिलं लिङ्गं मुनीनां मोक्षकाङ्क्षिणाम् ॥
तीक्ष्णाग्रं वक्रशीर्षं च त्र्यस्रं लिङ्गं च वर्जयेत् ।
पूजितव्यं गृहस्थेन वर्णेन भ्रमरोपमम् ॥

*अग्राह्यमिति । स्वयं नोपभुञ्ज्यादित्यर्थः,

दत्त्वा नैवेद्यवस्त्रादि नाददीत कदाचन ।
त्यक्तं यच्छिवमुद्दिश्य तद्दानेन न तत्फलम् ॥

इति भविष्याच्च ।

अथ व्रतोपयुक्तकृच्छ्रादीनि । तत्र प्राजापत्यमाह याज्ञवल्क्यः--

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्त्तितः ॥
यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ॥

दिवैव मध्याह्नकाले सकृद्भोजनम् एकभक्तं, सूर्यास्तमयानन्तरमेव सकृद्भोजनं नक्तं, दिवा रात्रौ वा भृत्यादिभ्योऽप्ययाचितस्य भोजनमयाचितम् । दिवैवेति केचित् । अहोरात्रमभोजनमुपवासः । अयं पादकृच्छ्रः । अत्र ग्राससंख्यायां पराशरः--

सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरायाच्याः परं निरशनं स्मृतम् ॥

अथवा आपस्तम्बः—

सायं द्वाविंशतिर्ग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः ॥
कुक्कुटाण्डप्रमाणो वा यथा वाऽऽस्यं विशेत्सुखम् ।

शक्त्या विकल्पः । आपस्तम्बस्तु व्यवस्थया पादकृच्छ्रमाह—

त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् ।
सायं त्र्यहं तथा पादः प्रातः पादस्तथा त्र्यहम् ॥
प्रातः पादं चरेच्छूद्रः, सायं वैश्यस्य दापयेत् ।
अयाचितं तु राजन्ये, त्रिरात्रं ब्राह्मणे स्मृतम् ॥ इति ।

प्रातःपाद एकभक्तत्रयं, सायंपादो नक्तत्रयम् , अयाचितमयाचितत्रयं, त्रिरात्रमुपवासत्रयम् । अयाचितत्रयानन्तरमुपवासत्रयमर्द्धकृच्छ्रः । नक्तत्रयं विना पादत्रयं पादोनकृच्छ्रः,

सायंप्रातर्विनाऽर्द्धं स्यात् पादोनं नक्तवर्जितम् ।

इति आपस्तम्बोक्तेः । अथवा

सायं प्रातस्तथैकं च दिनद्वयमयाचितम् ।
दिनद्वयं च नाश्नीयात्कृच्छ्रार्द्धं तद्विधीयते ॥

इत्यापस्तम्बेनैवोक्तोऽर्द्धकृच्छ्रः ।

प्रकृतमनुसरामः । अयं पादकृच्छ्रो यथाकथञ्चित्त्रिगुणः प्राजापत्यः । यथाकथञ्चिदित्युक्तेः एकभक्तादीनामानुलोम्येन स्वस्थानवृद्ध्या एकः । स च—

त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन् द्विजः ॥

इति मनूक्तेः । तेषां प्रातिलोम्येन स्वस्थानवृद्ध्या द्वितीयः, स च "प्रातिलोम्यं चरेयुः" इति वसिष्ठोक्तेः,

उपवासत्रयं कृत्वा कुर्याच्चायाचितत्रयम् ।
नक्तत्रयादे(१)कभक्तत्रयं स्यात्प्रातिलोम्यकम् ॥

---

(१) 'देकभक्तव्रतं' घ० ङ० ।

इति वचनात् । दण्डकलितवदावृत्त्या तृतीयः । स च—

त्र्यहं प्रातरहर्नक्तमहरेकमयाचितम् ।
अहः पराकं तत्रैकमेवं चतुरहौ परौ ॥

इति वसिष्ठोक्तेः । पराक उपवासः । अयमेव शिशुकृच्छ्रः,

अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः ।
बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुदाहरत् ॥

इति तेनैवोक्तेः । प्रोक्तपक्षत्रयेऽन्यतमपक्षं ज(१)पहोमवर्जं कुर्यादिति चतुर्थः,

तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥

इत्यङ्गिरोवचनात् ।

अशक्तौ एकां धेनुं दद्यात् । तदभावे निष्कं दद्यात्,

गवामभावे निष्कं स्यात्तदर्द्धं पादमेव वा ।

इत्युक्तेः । देशकालोचितं गोमूल्यं दद्यात्,

प्राजापत्यक्रियाऽशक्तौ धेनुं दद्याद्द्विजोत्तमः ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ॥

इत्युक्तेः । यद्यपि "धेनुः स्यान्नवसूतिका" (अ० को० २-९-७१) इत्युक्तं, तथापि धेनुदानाशक्तौ गोमात्रं दद्यात् बहुस्मृतिषु गोपदस्याप्युपादानात् । विप्रभोजनं वा कार्यम् । तत्संख्यानियमो महार्णवे चतुर्विंशतिमते—

कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहात्रिंशदेवं तृतीये
चत्वारिंशच्च तप्ते [illegible] विंशतिः स्यात्पराके ।
कृच्छ्रे सन्तापनाख्ये भवति षडधिका विंशतिः, सैव हीना
द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान् ॥

इति । अस्यार्थः—अहरह इत्यस्य प्रत्येकं सम्बन्धात् कृच्छ्रे अहरहः पञ्च ब्राह्मणान् भोजयेत् । ते(२) च षष्टिर्भवन्ति । अतिकृच्छ्रे

(१) 'तपहोम' घ० ङ० । (२) 'तेन' घ० ङ० ।

प्रत्यहं पञ्चदश, द्वादशादिने मिलित्वा ह्य(१)शीतिशतं विप्रा भवन्ति । कृच्छ्रातिकृच्छ्रे प्रत्यहं त्रिंशत्, मिलित्वा षष्ट्युत्तरं त्रिशतम् । असमृद्ध(२)धान्ये तु त्रिगुणिता द्वादशेति मिलिताः षट्त्रिंशत् । तप्तकृच्छ्रे प्रत्यहं चत्वारिंशत् त्र्यहसाध्येऽशीतिः, चतुरहसाध्ये षष्ट्यधिकं शतम्, द्वादशाहसाध्ये अशीत्यधिकं शतचतुष्टयम् । पराके प्रत्यहं षष्टिः, विंशत्यधिकं सप्तशतम् । सान्तपने प्रत्यहं षट्त्रिंशतिः । चान्द्रायणे प्रत्यहं चतुर्विंशतिः, तत्र मासो यदि त्रिंशद्दिनः तदा ७२० विंशत्यधिकसप्तशतं विप्रा भवन्ति । अधिकन्यूनादिनके तु सं(३)कलनमूह्यम् । स्वल्पधान्यस्तु कृच्छ्रे द्वादशैव ब्राह्मणान् भोजयेत् "विप्रा द्वादश वा भोज्याः" इति चतुर्विंशतिमतात् । अतिकृच्छ्रमाह मनुः—

एकैकग्रासमश्नीयात् त्र्यहानि त्रीणि पूर्ववत् ।
त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः ॥

त्रीणि त्र्यहानि नव दिनानि पूर्ववत् एकभक्तादिकाले तन्नियमवान् इत्यर्थः । अशक्तौ धेनुत्रयं देयं,

पराकतप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथा ।

इति चतुर्विंशतिमतात् । तदशक्तौ निष्कगोमूल्यादि प्राग्वत् । एवमग्रेऽपि । अथवा याज्ञवल्क्यः—

अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः ।

अयमेव पूर्वोक्तप्राजापत्यधर्मक एव । परन्तु एकभक्तादिदिनेषु प्रस्रातिपूरणमात्रमन्नं भुञ्जीत न तु द्वाविंशत्यादिग्रासानिति । अत्र येषु दिनेषु भोजनं तेषु पाणिपूरमा(४)त्रमन्नं विधेयम् । एवञ्चोपवासदिने न पाणिपूरान्नभोजनप्राप्तिः । अशक्तौ धेनुद्वयं देयं,

प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतम् ।

इति षट्त्रिंशन्मतात् । एवमग्रेऽपि । अनयोश्चातिकृच्छ्रयोः पापा-

(१) 'साशीति' घ० ङ० । (२) 'धान्यस्य' घ० ङ० ।
(३) 'संख्यासंक' घ० ङ० । (४) 'मात्र' नास्ति घ० ङ० ।

पेक्षः शक्त्यपेक्षो वा विकल्पः(१)। अतिकृच्छ्रपादादिव्यवस्था च प्राजापत्यवत्। कृच्छ्रातिकृच्छ्रमाह गौतमः—अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्र इति। द्वादशरात्रमुदकेनैव वर्त्तनं न त्वन्नेनेत्यर्थः। अशक्तौ तिस्रो धेनवो देयाः, प्राजापत्यत्रयस्थाने कृच्छ्रातिकृच्छ्रविधानात्। तदभावे निष्कत्रयं सार्द्धनिष्कः पादोननिष्को वा देयः। अथवा यमः—

एकैकं पिण्डमश्नीयात्त्र्यहं कल्ये त्र्यहं निशि।
अयाचितं त्र्यहं पिण्डं वायुभक्षस्त्र्यहं परम्॥
अतिकृच्छ्रं चरेदेतत्पवित्रं पापनाशनम्।
चतुर्विंशतिरात्रं तु नियतात्मा जितेन्द्रियः॥
कृच्छ्रातिकृच्छ्रं कुर्वीत एकस्थाने द्विजोत्तमः।

कल्ये प्रातः एकभक्ताकाले इति यावत्। एकस्थाने पूर्वोक्तद्वादशाहसाध्यातिकृ(२)च्छ्रद्वयेनैकः कृच्छ्रातिकृच्छ्र इत्यर्थः। अथवा याज्ञवल्क्यः—

कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्।

यमेन चतुर्विंशत्यहःसाध्ये कृच्छ्रातिकृच्छ्रे भोजनदिनेष्वेकैकग्रासमात्रविधानात् दुग्धभक्षणेऽपि पत्रपुटकादिभिर्ग्रासपरिमाणं कृत्वैव एकग्रासपर्याप्तं दुग्धमश्नीयात्। अशक्तौ तु—"सायं तु (३)द्वादश ग्रासाः" इति ग्राससंख्याया भोजनदिनेषु तावद्दुग्धं पीत्वा प्राजापत्यः कार्यः। तप्तकृच्छ्रमाह याज्ञवल्क्यः—

तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः॥

अयं चतुरहसाध्यः। तप्तक्षीरघृताम्बुभिः समस्तैः एकैकदिने वृत्तिः, तत एकोपवास इत्यर्थे तु द्व्यहसाध्यः। अथवा मनुः—

---

(१) 'सान्तपने प्रत्यहं षड्विंशतिः' अधिकं ख०।
(२) 'कृच्छ्रत्रये' घ० ङ०।
(३) 'द्वादशग्रासी' घ० ङ०।

तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् ।
प्रति त्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ॥

जलादिपारिमाणमाह पराशरः—

अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पि(स्त्रि(१)रात्रं चोष्णमारुतम् ॥

अपां त्रिपलं त्रिरात्रं पिबेदित्यादि प्रतिवाक्यं त्रिरात्रमित्यस्य सम्बन्धः । त्रिरात्रमुष्णोदकस्य बाष्पं पिबेदित्यर्थः । अथ पराशरः—

षट्पलं तु पिबेदम्भः त्रिपलं तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पि)स्तप्तकृच्छ्रं विधीयते ॥

जलादिकं चेहोष्णमेव । अशक्तौ त्र्यहसाध्ये निष्कार्द्धं चतुरहःसाध्ये एका धेनुः,द्वादशाहसाध्ये तिस्रो गावः,

पराकतप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथा ।

इत्युक्तेः । सान्तपनमाह याज्ञवल्क्यः—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
प्राश्यापरेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन् ॥

मिलितगोमूत्रादिषट्कमेव पीत्वा परेऽह्न्युपवसेत् । अयं दिनद्वयसाध्यः । अयमेव ब्रह्मकूर्चः । तत्र पराशरोक्तो विधिः कार्यः ।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम् ॥
गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ।
सप्तपत्रास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥
एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावती इदंविष्णुर्मानस्तोके च शंवती ॥

---

(१) कंसान्तर्गतं नास्ति ख० ।

एताभिश्चैव होतव्यं हुतशेषं पिबेद् द्विजः ।
प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च ॥
प्रणवेन समुद्धृत्य पिबेत्तत्प्रणवेन तु ।
यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ॥
प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम् ।
मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत् ॥
स्वर्णपात्रेण ताम्रेण ब्रह्मतीर्थेन वा पुनः ॥ इति ।

पूर्वेद्युरुपोष्य परेद्युरुक्तरीत्या ब्रह्मकूर्चं इति विज्ञानेश्वरः । अथवा जाबालः—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ॥

इदं सप्ताहसाध्यम् । यतिसान्तपनमाह (शङ्खः(१)—

एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम् ।

एतत् पञ्चगव्यं दिने आहारान्तरं विना पिबेदित्यर्थः । महासान्तपनमाह) याज्ञवल्क्यः—

पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥

गोमूत्रगोमयक्षीराणि दधिघृतकुशोदकानि सान्तपनद्रव्याणि एकैकदिने आहारान्तरं विना एकैकं पिबेत्तदनन्तरदिने उपवासः । अथवा यमः—

त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं सर्पिः त्र्यहं क्षीरं ततः शुचिः ॥
महासान्तपनं ह्येतत्सर्वपापप्रणाशनम् ॥

अयं पञ्चदशाहसाध्यः । जाबालः—

[illegible]कैकमेतेषां त्रिरात्रमुपयोजयेत् ।
त्र्यहं चोपवसेदन्त्यं महासान्तपनं विदुः ॥

---

(१) कंसान्तर्गतं नास्ति ख० ।

षण्णां पूर्वोक्तगोमूत्रादीनाम् । अयमेकविंशतिरात्रसाध्यः । अशक्तौ सप्ताहसाध्यसान्तपनस्य सार्द्धप्राजापत्यस्थाने विहितत्वादेका धेनुर्निष्कार्द्धं च देयम् ।

पराकतप्तातिकृच्छ्रस्थाने कृच्छ्रत्रयं न्यसेत् ।
सान्तपनस्य चाध्यर्द्धमशक्तौ व्रतमाचरेत् ॥

इति षट्त्रिंशन्मतात् । दिनद्वयसाध्ये सान्तपने निष्कार्द्धं, दिनत्रयसाध्ये यतिसांतपने तु एकां धेनुं दद्यात् । एकविंशतिदिनसाध्ये महासांतपने तिस्रो धेनवोऽर्धनिष्कं च देयं, पञ्चदशादिनसाध्ये तु धेनुद्वयं निष्कार्द्धं च देयं, सप्ताहसाध्ये तु एका धेनुः निष्कार्द्धश्च देयः षडुपवासतुल्यप्राजापत्ये धेनोरुक्तत्वात् सान्तपनस्य चाध्यर्द्धमित्यस्य सप्ताहसाध्यपरत्वाच्च । पराकमाह याज्ञवल्क्यः—

द्वादशाहोपवासेन पराकः परिकीर्त्तितः ।

अशक्तौ कृच्छ्रत्रयं

पराकतप्तकृच्छ्राणां स्थाने कृच्छ्रत्रयं न्यसेत् ॥

तिस्रो धेनव इति यावत् । यावकव्रतमाह शंखः—

गोपुरीषाद्यवान्नं च मासं नित्यं समाहितः ।
व्रतं तु यावकं कुर्यात्सर्वपापापनुत्तये ॥

गोर्भक्षणार्थं यवान्दत्त्वा तदनन्तरं गोमयमध्यानिःसृतैस्तैर्यवैः पक्वैः एकभक्तनक्तानि कुर्वन् मासं नयेत् । गोमूत्रपक्वैस्तु तैर्गोमूत्रयावकं भवति,

आतृप्तेश्चारयित्वा गां गोधूमान् यवमिश्रितान् ।
गोपयोऽर्यांश्च संगृह्य पचेद्गोमूत्रयावकम् ॥

इति योगियाज्ञवल्क्यात् । अशक्तौ यावकव्रते पञ्च धेनवः षडुपवासात्मकप्राजापत्यषट्स्थानत्वात् । प्रत्यहं यावकभोजनेऽपि तस्यात्यन्तक्लेशसाधनत्वेनोपवासतुल्यत्वात् । गोमूत्रयावकव्रते तु क्लेशाधिक्यात् षट् धेनवः । मासमेकग्रासमात्रदुग्धेन व-

र्त्तनं पयोव्रतम् । (१)तस्मिन् व्रते येन द्रव्येण शरीरवर्त्तनं तद्व्रतस्य तेन व्यपदेशात् । अत एव मार्कण्डेयः—

पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ।

मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु ॥ इति ।

पयोव्रतेऽशक्तस्य पञ्च धेनवः पयःपाने क्लेशाभावेऽपि पयसा एकग्रासमात्रपर्याप्ततयोपवासतुल्यत्वात् । चान्द्रायणमाह याज्ञवल्क्यः—

तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिखण्डसंमितान् ।

एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन् ॥

इन्दुक्षये न भुञ्जीत एष चान्द्रायणे विधिः ।

शिखी मयूरः । तिथिवृद्ध्या (२)शुक्ले शुक्लपक्षे तिथिवृद्ध्या प्रतिपदादितिथिवृद्ध्यैकैकं पिण्डं प्रतिपदि एकं द्वितीयायां द्वाविति क्रमेण पूर्णिमायां पञ्चदश चरेत् भक्षयेत् । तदा कृष्णे एकैकतिथिवृद्ध्या प्रतिपदि चतुर्दश द्वितीयायां त्रयोदशेत्येवं क्रमेण एकैकं चतुर्दशीपर्यन्तं ह्रासयेत् । इन्दुक्षये अमावास्यायां न भुञ्जीत । एतद्यवमध्यं नाम चान्द्रायणम् । अथ पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकत्यागेन प्रतिपत्प्रभृति चतुर्दशीपर्यन्तं ग्रासमश्नीयात् । अमावास्यायामुपोष्य एकैकवृद्ध्या पूर्णिमायां पञ्चदशग्रासान् भक्षयेत् । पिपीलिकामध्यं नाम चान्द्रायणम् । ह्रासवृद्धिभ्यां चन्द्रस्य अयनं चरणमिव चरणं यत्र कर्मणीति व्युत्पत्तेः । (३)एतच्च चान्द्रमाससाध्यम् । तत्र ह्रासवृद्धी निश्चित्य पिण्डेषु ते कल्पनीये । तत्र चन्द्रोदयकालीना तिथिर्ग्राह्या । तत्र ग्रासा मयूराण्डप्रमाणाः । ग्रासग्रहणकालश्चन्द्रोदयः । वैधत्वाच्च निशीथेऽपि तद्भक्षणम् । चन्द्रोदयानन्तरं प्रायः द्विषष्टिघटीव्यवधाने चन्द्रोदय इति । दिवापि तं परीक्ष्यैव ग्रासानां भक्षणम् । प्राणाग्निहोत्राधिकारिणामत्रैव तत्करणम् । तथाहि, यदा पञ्च पिण्डा-

---

(१) 'यस्मिन्' ख० । (२) 'शुक्ले' नास्ति घ० ङ० ।

(३) 'एतच्च चान्द्रायणसाध्यम्' घ० ङ० ।

स्तदा प्राणायेति प्रथमम् , अपानायेति द्वितीयं, व्यानायेति तृतीयम् , उदानायेति चतुर्थं, समानायेति पञ्चमम् । यदा चत्वारस्तदा द्वाभ्यां प्रथमम् । यदा त्रयस्तदा द्वाभ्यां पूर्वौ । यदा द्वौ तदा त्रिभिः प्रथमं द्वाभ्यामुत्तरम् । एकं तु सर्वैः । इतिकर्त्तव्यताविस्तरो महार्णवादौ द्रष्टव्यः । अशक्तावष्टौ गावो देयाः,

अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा ।

इति चतुर्विंशतिमतात् । यवमध्यपिपीलिकामध्यचान्द्रायणयोर्गौतमाद्युक्तप्रकारवतोरष्टौ गावः, स्वल्पप्रकारयुक्तयोस्तयोस्तु त्रयः ।

प्राजापत्ये तु गामेकामातिकृच्छ्रद्वयं स्मृतम् ।
चान्द्रायणे पराके च तिस्रस्ता दक्षिणास्तथा ॥

इति पराशरोक्तेः । समृद्धस्य पञ्च "पञ्च वापि प्रकीर्तिताः" इति पाठान्तरात् । अथवा याज्ञवल्क्यः—

यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥

प्रत्यहमष्टौ ग्रासान् भक्षयेत् । तत्रापि दिन एवाष्टौ, अथवा नक्तं चतुरो दिने चतुरः, अथवा एकस्मिन्दिने चतुरः अपरस्मिन्द्वादश, अथवा एकरात्रमुपोष्यापरस्मिन् षोडश, अथवा दिनद्वयमुपोष्य तृतीयदिने चतुर्विंशतिः, इत्यादि शक्त्या प्रकाराणां मध्ये यथाकथञ्चित् पिण्डान् चत्वारिंशदधिकशतद्वयं भक्षयेत्, 'तिस्रोऽशीतीः समाहितः' इति वचनाच्च । उपक्रमस्तु शुक्लकृष्णान्यतरप्रतिपदोरेव । मासश्च सावनः, अन्यथा चान्द्रमासे ह्रासादिवशेन तथा भक्षणासम्भवाच्च । एवञ्च नैरन्तर्येणानेकैतच्चान्द्रायणानुष्ठाने कदाचिद्द्वितीयचान्द्रायणादि द्वितीयादौ भवति । अयं चापरो विशेषः—पूर्वचान्द्रायणे तिथिनियतग्रासनियमवशात् (१)पूर्वप्रक्रान्तमेकादश्याद्युपवासादि प्रतिनिधिद्वारा कार्यम् , अत्र तु स्वयमेव कार्यं, तिथिनियमेन (२)ग्रासनियमाभावात् । अस्यैव च यतिचान्द्रायणादिसंज्ञा ।

---

(१) 'पूर्वप्रकारान्त' ख० । (२) 'ग्रासनियमा' घ० ङ० ।

*पञ्चायतनपूजायां तन्त्रेण च निवेदितमित्यर्थः। शिवपुराणे—

ये वीरभद्र(१)शपिताः शिवभक्तिपराङ्मुखाः।
शंभोरन्यत्र देवेषु ये भक्ता ये न दीक्षिताः॥
तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्।

---

अष्टावष्टौ समश्नीयात् पिण्डान् मध्यंदिने स्थिते।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरन्॥
चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं चरन्॥

इति मनूक्तेः।

त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः।
हविष्यान्नस्य वै मासमृषिचाद्रायणं स्मृतम्॥

इति यमोक्तमृषिचान्द्रायणम्। यतिचान्द्रायणाद्यशक्तौ तिस्रो गावो देयाः पूर्वोक्तवचनात्।

अथ मासोपवासव्रतम्। तच्च प्राक् कार्त्तिके प्रपञ्चितम्। तदशक्तौ अष्टौ गावः, तदशक्तौ पञ्च, षडुपवासतुल्यप्राजापत्यप्रत्याम्नायगोपञ्चकेन मासनिर्वाहात्। एवं सोमायनादिप्रत्याम्नायाः स्वयमूह्याः। अत्र प्राजापत्यादेरितिकर्त्तव्यताऽन्यतोऽवगन्तव्या। तत्र स्वातन्त्र्येण कुरुक्षेत्रप्रतिग्रहादिपापनिवृत्त्यर्थं क्रियमाणे वपनमावश्यकं न तु व्रतभङ्गनिवृत्त्यर्थं,

दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा।

इति विकल्पन्यायात्।

प्रकृतमनुसरामः। *पञ्चायतनेति। अत एव 'विष्णुशिवसूर्यगणेशदुर्गाभ्यो नमः' इति श्लिष्टमन्त्र एवोक्तः। शिवनामपूजायामिति केचित्।

---

(१) 'शमिताः' ख०

काशीखण्डे—

जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः ।
एष जालन्धरो बन्धः सम(१)स्तसुरवल्लभः ॥

तथा—

स्नापयित्वा विधानेन यो लिङ्गस्नपनोदकम् ।
त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति ॥
लिङ्गस्नपनवार्भिर्यः कुर्यान्मूर्द्धन्यभिषेचनम् ।
गङ्गास्नानफलं तस्य जायतेऽत्र विपाप्मनः ॥

इदं पूर्ववाक्यवशाद्विश्वेश्वरविषयमिति केचित् । काशीस्थपुराणप्रसिद्धसर्वलिङ्गविषयं, काशीखण्डे रत्नेश्वराख्याने तथैव दर्शनादित्यन्ये ।

अथ कृषिः । राजमार्तण्डः—

ऋक्षेषूत्तरपौष्णवैष्णवमघामूलानुराधाश्विनी-
प्राजापत्यकरद्विदैवतगुरुप्रालेयपादेषु च ।
निर्दोषैर्वृषभैर्हलैश्च सुमनोमालाभिरभ्यर्चितै-
र्दत्त्वा क्षेत्रपतेर्बलिं हलधरः क्षेत्रं ततः कर्षयेत् ॥

प्राजेशश्रवणोत्तरादितिमघामार्तण्डतिष्याश्विनी
पौष्णानुष्णमरीचयः शतभिषक् स्वाती विशाखा तथा ।
जीवार्केन्दुसितेन्दुनन्दनदिने लग्ने च सौम्योदये
सस्यानां वपने तथैव लवने शस्तास्तथा रोपणे ॥

चण्डेश्वरः—

हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये ।
स्थिरलग्ने गुरोर्वारे बीजं धार्यं ज्ञशुक्रयोः ॥
'ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा' ।
लेखयित्वा इमं मन्त्रं धान्यागारे निधापयेत् ॥
सस्यवृद्धिं परां कुर्यात्पूजितं प्रतिपूजयेत् ।
दक्षिणादिङ्मुखगमनं गमनमभिनवासु नारीषु ॥

---

(१) 'समस्तसुखवल्लभः' ख०

व्ययमपि सस्यधनानां न वुधा वुधवासरे कुर्युः ।
शनिवारे च नो कार्यो धनधान्यव्ययो वुधैः ।

अथ वस्त्रम् । श्रीपतिः—

रोहिणीषु करपञ्चकेऽविभे त्र्युत्तरासु च पुनर्वसुद्वये ।
रेवतीषु वसुदैवते च भे नव्यवस्त्रपरिधानमिष्यते ॥
जीर्णं रवौ सततमम्बुभिरार्द्रमिन्दौ
भौमे शुचे वुधदिने तु भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसंगमाय
मन्दे मलाय च नवाम्बरधारणं स्यात् ॥
रोहिणीगुरुपुनर्वसूत्तरे
या बिभर्ति नववस्त्रभूषणे ।
सा न योषिदवलम्बते पतिं
स्नानमाचरति वारुणेऽपि या ॥

अथालंकारवलयादि । दैवज्ञवल्लभः—

नासत्यपूषवसुभिः करपञ्चकेन
मार्तण्डभौमगुरुदानवमन्त्रिवारे ।
मुक्तासुवर्णमणिविद्रुमशङ्खदन्त-
रक्ताम्बराणि विधृतानि भवन्ति सिद्ध्यै ॥

ज्योतिर्निबन्धे—

हस्तानुराधमृगपूषधनिष्ठयुक्त-
चित्रोत्तरासु च पुनर्वसुरोहिणीषु ।
लग्ने स्थिरे रविसुतेन्दुजजीववारे
हेमादिधारणविधिः कथितो नराणाम् ॥

तत्रैव श्रीपतिः—

पौष्णाश्विनीवसुकरादिषु पञ्चकेषु
कौसुम्भहेममणिविद्रुमकाचशङ्खाः ।
नार्या धृताः सुतसुखार्थकरा भवन्ति
ब्राह्मोत्तरादितिगुरुष्वसुखाय भर्तुः ॥

तत्रैव—

शङ्खादिवररत्नानि पुष्यादित्युत्तरासु च ।
रोहिण्यां नैव गृह्णीत भर्तुर्जीवितकाङ्क्षिणी ॥

अथ सूचीकर्म—

वासवादितिभत्वाष्ट्रमैत्रचन्द्राश्विनीषु च ।
सूचीकर्म तनुत्राणमेभिर्ऋक्षैः प्रशस्यते ॥

अथ शय्या—

हस्तादितिब्रह्मगुरूत्तराणि
पौष्णाश्विमूलेन्दुभचित्रभानि ।
वारेषु जीवेन्दुसितेन्दुजानां
श(१)य्यासनारम्भणमुत्तमं स्यात् ॥

अथ शस्त्रधारणम्—

पुष्ये चादितिचित्रपद्मतनये शक्रोत्तरा रेवती-
स्वातीवाजिविशाखमित्रसहिते भानौ गुरौ भार्गवे ।
कुम्भे कीटगृहे वृषे मृगपतौ चेन्दौ शुभैर्वीक्षिते
सन्नाहः शरखड्गकुन्तछुरिका धार्या नृपाणां हिताः॥

अथ स्वामिसेवा । चण्डेश्वरः—

रोहिण्युत्तरपौष्णेषु वसुवारुणयोरपि ।
सेवेत स्वामिनं भृत्यः शुभवारोदये तथा ॥

ज्योतिर्निबन्धे—

दासीदासादिभृत्यानां कुर्यात्संग्रहणं(२)बुधे ।
स्थिरलग्ने शुभैर्दृष्टे मन्दवारे विशेषतः ॥

अथ गजाश्वदोलाः । स एव—

पौष्णप्रजेशादितिभद्वयानि
हस्तादिषट्कश्रवणोत्तराणि ।
दोलादिमातङ्गतुरङ्गमाणा-
मारोहणेऽभीष्टफलप्रदानि ॥

---

(१) 'शय्यासमारम्भण' क० ख० । (२) 'बुधैः' ग० ।

अथ नृत्यम्—

हस्तः पुष्यो वासवं रोहिणी च
ज्येष्ठा पौष्णं वारुणं चोत्तराश्च ।
पूर्वाचार्यैः कीर्तितश्चक्रवर्ती
नृत्यारम्भे शोभनोऽयं भवर्गः ॥

अथ राजदर्शनम् । श्रीपतिः—

मृगाश्विपुष्यश्रवणश्रविष्ठाहस्तध्रुवत्वाष्ट्रभपूषभानि ।
मैत्रेण युक्तानि नरेश्वराणां विलोकने भानि शुभप्रदानि ॥

अथ क्रयविक्रयौ—

भाद्रद्वयत्रिदशमन्त्रिदिवाकरेषु
मूलानिलोत्तरतुरङ्गमरेवतीषु ।
[illegible]
लाभः सदैव भवति क्रयविक्रयाभ्याम् ॥

वस्त्रे तु—

चित्रा शतभिषा स्वाती रेवती चाश्विनी शुभा ।
श्रवणश्च तथा प्रोक्ता वस्त्राणां क्रयणे शुभाः ॥

अथ सेतुः—

स्वातीयुक्ते [illegible] वृषलग्ने शुभे दिने ।
सेतूनां बन्धनं कार्यं ध्रुवभे चार्कजीवयोः ॥

अथ पशुकृत्यम् । श्रीपतिः—

चित्रोत्तरावैष्णवरोहिणीषु
चतुर्दशीदर्शदिनाष्टमीषु ।
स्थानप्रवेशं गमनं विदध्यात्
पुमान् पशूनां न कदाचिदेव ॥

चण्डेश्वरः—

हस्तमूलविशाखासु रेवत्यां श्रवणे तथा ।
मैत्रे च वारुणे श्रेष्ठं पशुक्रयणमुच्यते ॥

पूर्वात्रयामृतमयूखहुताशनेषु
इन्द्राग्निवाजिवसुवारुणशंकरेषु ।

एतेषु गोमहिषदन्तितुरङ्गमादि-
नाना(१)प्रकारपशुजातिगतिः प्रशस्ता ॥

अथ गजदन्तच्छेदः । ज्योतिर्निबन्धे—

त्वाष्ट्रे वैष्णव अश्विन्यामादित्ये वसुदैवते ।
दन्तिनां शुभदं कर्म पुष्ये हस्ते च क(२)र्तनम् ॥

अथ निक्षेपः—

भरणी त्रीणि पूर्वाणि आर्द्राश्लेषा मघा तथा ।
चित्रा ज्येष्ठा विशाखा च मूलं मृगपुनर्वसू ॥
एभिर्दत्तं प्रयुक्तं च यद्यन्निक्षिप्यते धनम् ।
पृष्ठतो धावमानस्य ध(३)निनो नोपपद्यते ॥

अथ ऋणमोक्षः । श्रीधरः—

वागीशमन्ददिवसांशकलग्नयुक्ते
रिक्तासु मन्ददिवसे कुलिकोदये च ।
मैत्रद्वितीयपदमैत्रमुहूर्तयुक्ते
राश्युद्गमे च ऋणमोक्षमुशन्ति सन्तः ॥

अथ राजमुद्रा—

मृदुध्रुवक्षिप्रचरेषु भेषु योगे प्रशस्ते शनिचन्द्रवर्जम् ।
वारे तिथौ पूर्णजयाह्वये च मुद्राप्रतिष्ठा शुभदा हि राज्ञाम् ॥

अथ नौः । चण्डेश्वरः—

पौष्णाश्विनीतुरगवारुणमित्रचित्रा-
[illegible] ।
वारे च जीवभृगुनन्दनके प्रशस्ते
नौकादिसंघटनवाहनमेषु कुर्यात ॥

अथ भोगः—

गुरुभरविभानुराधाविधातृपौष्णाश्विरोहिणीषु स्यात् ।
स्वात्युत्तरासु कुर्याच्छयनासनभोगभोगादि ॥

---

(१) 'नानाकुमारपशु' ख०　　(२) 'कीर्तितं' क०
(३) 'निर्धनो' ख० ग०

अथ श्मश्रुकर्म । श्रीपतिः—

पुष्ये पौष्णे चाश्विनीच्चैन्दवे च
शाक्रे हस्ताद्ये त्रिके भेप्यदित्याम् ।
क्षौरं कार्यं वैष्णवादित्रये च
मुक्त्वा भौमादित्यपाताङ्गिवारान् ॥
न स्नातभुक्तोत्कटभूषिताना-
मभ्यक्तयात्रासमरोत्सुकानाम् ।
क्षौरं विदध्यान्निशि संध्ययोर्वा
जिजीविषूणां नवमे न चाह्नि ॥

त्रिस्थलीसेतौ वृद्धगार्ग्यः—

रव्यारसौरवारेषु रात्रौ पाते व्रताहनि ।
श्राद्धाहःप्रतिपद्रिक्ताभद्राः क्षौरेषु वर्जयेत् ॥

गार्ग्यः—

षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमी तथा ।
आसु सन्निहितं पापं त्रिषु तैले भगे क्षुरे ॥

राजमार्तण्डः—

देवकार्ये पितुः श्राद्धे रवेरंशपरिक्षये ।
क्षौरकर्म न कुर्वीत जन्ममासे च जन्मभे ॥

बृहस्पतिः—

राजकार्ये नियुक्तानां नराणां भूपजीविनाम् ।
श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनम् ॥

तथा—

*क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके ॥

केचित्तूत्तरार्धमन्यथा पठन्ति ।

---

*क्षौरं नैमित्तिकमिति । अत्र 'निषेधे सत्यपि' इत्युपादानात् प्रायश्चित्ततीर्थयो रात्रावपि क्षौरम् । मृतिनिमित्तं तु दिन एव

मुण्डनस्य निषेधेऽपि कर्तनं तु विधीयते । इति ।

नारदः—

नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे ।
उद्वाहेऽखिलवारर्क्षे तिथिषु क्षौरमिष्टदम् ॥

भारते—

प्राङ्मुखः श्मश्रुकर्माणि कारयीत समाहितः ।
उदङ्मुखोऽथवा भूत्वा तथायुर्विन्दते महत् ॥

अपरार्के—

उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥
*दक्षिणं कर्णमारभ्य धर्मार्थे पापसंचये ।
शिखाद्ये नवसंस्कारे शिखाद्यन्तं शिरो वपेत् ॥

यतीनां तु विशेषो निगमे—

कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत् । इति ।

अन्येऽपि विधिप्रतिषेधाः प्रागुक्ताः ।

अथेन्धनसंग्रहः—

ब्रह्मानिलार्कमघमूलत्रिपूर्वरौद्र-
पौष्णानुराधगुरुविष्णुविशाखयुक्ते ।

---

'श्वस्तनी वपनक्रिया'इत्युक्तेः । *दक्षिणं कर्णमिति । तीर्थश्राद्धे वक्ष्यामः । निषिद्धदिने क्षौरे कृते पुनस्तद्दोषशान्त्यर्थं विहितकाले कार्यमित्याह गर्गः—

निषिद्धेषु च कालेषु क्षौर(१)कार्यं यदा भवेत् ।
तद्दोषशान्तये क्षिप्रं कुर्यात्तच्च शुभे दिने ॥ इति ।
आनर्तोऽहिच्छत्रः पाटलिपुत्रोदि(२)तिर्दिनः श्रीशः ।
क्षौरे स्मरणादेषां दोषा नश्यन्ति निःशेषाः ॥ इति ।

---

(१) 'क्षौरकर्म यदा' घ० ङ० ।
(२) 'दिनिर्दितिः श्रीशः' घ० ङ० ।

वारे कुजार्कभृगुनन्दनसोमजानां
श्रेष्ठन्धनस्य करणं भवति प्रशस्तम् ।

अथ नवान्नम् । श्रीपतिः—
रेवतीश्रुतिपुनर्वसुहस्तब्राह्मतः पृथगपि द्वितये च ।
त्र्युत्तरेषु गदितं पृथुकानां प्राशनं नवनवान्नविधानम् ॥

अथ नवभोजनपात्रम् । ज्योतिर्निबन्धे—
भोज्यपात्रं सुधासिन्धौ घटयेद्वा समाहरेत् ॥
तत्रान्नप्राशनप्रोक्ते काले भोजनमाचरेत् ॥

अथ नवपर्णफलादिभक्षणम् । चण्डेश्वरः—
मूलाश्विमैत्रकरतिष्यहरीन्द्रभेषु
पौष्णोत्तरैन्दवपुनर्वसुवासवेषु ।
वारेषु भूमितनयार्कजवारवर्ज्जे
ताम्बूलनूतनफलाद्यशनं हिताय ॥

अथ होमे आहुतिपातः । ज्योतिषे—
*तरणिविद्गुरुभास्करिचन्द्रमाः
कुजसुरेज्यविधुंतुदकेतवः ।
रविभतो दिनभं गणयेत्क्रमात्
प्रतिखगं त्रितयं त्रितयं न्यसेत् ॥
दिनकरार्कितमःकुजकेतवो
हुतभुजे न शुभास्त्वितरे शुभाः ।

---

*तरणीति । एवं वह्निवासोऽपि वोध्यः ।
सैका तिथिर्वारयुता कृताप्ता
शेषे गुणेभ्रे भुवि व(१)ह्निवासः ।
सौख्याय होमे शशियुग्मशेषे
प्राणार्थनाशो दिवि भूतले च ॥ इति ।

---

(१) 'वह्निवमः' घ० ङ० ।

दहनचक्रमिदं प्रविलोक्यतां
हवनकर्मणि सर्वसमृद्धये ॥

अत्र शान्तिरुक्ता विष्णुधर्मे—

क्रूरग्रहमुखे चैव संजाते हवने शुभे ।
शान्तिं विधाय गां दद्याद्ब्राह्मणाय कुटुम्बिने ॥
आयसीं प्रतिमां कृत्वा निक्षिपेत्तामधोमुखीम् ।
गोमूत्रमधुगन्धाद्यैरर्चितां प्रतिमां ततः ॥
स्वस्थां निधाय संपूज्य तत्र होमो विधीयते ॥

अत्रापवादः क्रि(१)यासारे—

नित्ये नैमित्तिके दुर्गाहोमादौ न विचारयेत् ।

अथ ज्वरादौ फलम् । श्रीपतिः—

स्वात्याश्लेषारौद्रपूर्वासु शाक्रे
रोगोत्पत्तिर्जायते यस्य पुंसः ।
तद्भैषज्यव्यापृतो निष्प्रयत्नः
स्याद्दुग्धाब्धेर्लब्धज(२)न्मापि वैद्यः ॥
व्याध्युत्पत्तिर्यस्य पौष्णे स(३)मैत्रे
प्राणत्राणं जायते तस्य कृच्छ्रात् ।
वैश्वे सौम्ये रोगमुक्तिस्तु मासा-
द्विंशत्या स्याद्वासराणां मघासु ॥
पक्षाद्धस्ते वासवे सद्विदैवे
मूलाश्विन्योराग्निधिष्ण्ये नवाहात् ।
याम्ये त्वाष्ट्रे वैष्णवे वारुणे च
नैरुज्यं स्यान्नूनमेकादशाहात् ॥
आहिर्बुध्न्ये तिष्यसंज्ञे यमाख्ये
प्राजापत्यादित्ययोः सप्तरात्रात् ।
रोगान्मुक्तिर्जायते मानवानां
निःसंदिग्धं जल्पितं गर्गमुख्यैः ॥

---

(१) 'क्रियासागरे' ख० (२) 'जन्मादिवैद्यः' क० (३) 'समित्रे' क०

ज्योतिषे—

एकाहो निधनं दशाहमनलाद्बाणा वियत्पर्वताः

सप्ताङ्का विलयश्च मासयुगुलं मासो मृतिः पक्षकः ।

द्वौ मासावथ विंशतिर्दश निशाः पक्षान्तपक्षा नखा

मासौ पक्षदशान्तपञ्चककुभः पीडादिनान्यश्विभाव ॥

दैवज्ञः—

उरगवरुणरौद्रा वासवेन्द्रत्रिपूर्वा

यमदहनविशाखाः पापवारेण युक्ताः ।

तिथिषु नवमिषष्ठी द्वादशी वा चतुर्थी

भवति मरणयोगो रोगिणां कालहेतुः ॥

अत्र (१)शान्तिः—कुम्भे हैमीं नक्षत्रदेवताप्रतिमां सम्पूज्य द्वादशदलेषु संकर्षणादिद्वादशमूर्तीर्द्वादशादित्यान् वा सम्पूज्य दूर्वासमित्तिलक्षीराज्यैर्गायत्र्या तद्देवतायै अष्टोत्तरशतं हुत्वा दध्योदनं बलिं दत्त्वाऽऽचार्याय गां प्रतिमां च दत्त्वा विप्रान् भोजयेदिति संक्षेपः । विशेषस्तु व्रतहेमाद्रौ पदार्थादर्शे च ज्ञेयः ।

अथ भेषजम् । चण्डेश्वरः—

मूलानुराधमृगतिष्यपुनर्वसौ च

पौष्णाश्विनीश्रवणशुक्रकरत्रये च ।

वारेषु वा(२)क्पतिदिनेषु सितेन्दुशस्ते

भैषज्यभक्षणममीषु हितं नराणाम् ॥

अथारोग्यस्नानम् । श्रीपतिः—

इन्दोर्वारे भार्गवे च ध्रुवेषु

सार्पादित्यस्वातियुक्तेषु भेषु ।

पि(३)त्र्ये चान्ते वापि कुर्यात्कदाचि-

(१) 'शान्तिः' नास्ति क०

(२) 'वाक्पतिसितेन्दुदिने प्रशस्तं भैष' क०

(३) 'पैत्र्ये' क०

नैव स्नानं रोगनिर्मुक्तजन्तुः ॥

चरे विलग्ने रविभौमवारे

रिक्ते तिथौ स्याद्बहुले च पक्षे ।

धिष्ण्ये चरे रोगनिपीडितानां

स्नानं नराणां निरुजत्वकारि ॥

अथ दन्तधावनम् । पृथ्वीचन्द्रोदये विष्णुः—

प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च ।

नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् ॥

नारदः—

चतुर्दश्यष्टमीपौर्णमासीसंक्रमणेषु च ।

नन्दासु च नवम्यां च दन्तकाष्ठं विवर्जयेत् ॥

श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका ।

व्यतीपाते च संक्रान्त्यां नन्दाभूताष्टपर्वसु ॥

तैलं क्षौरं रतिं मांसं दन्तकाष्ठं च वर्जयेत् ॥

वसिष्ठः—

शन्यर्कशुक्रवारेषु कुजाहे व्रतवासरे ।

जन्माहे श्राद्धदिवसे दन्तकाष्ठं विवर्जयेत् ॥

हेमाद्रौ स्कान्दे—

अभ्यङ्गे जलभिस्नाने दन्तधावनमैथुने ।

जाते च निधने चैव तत्कालव्यापिनी तिथिः ॥

संवर्तः—

रवौ विवाह आशौचे वर्जयेद्दन्तधावनम् ॥

व्यासः—

*अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।

---

*अलाभे दन्तकाष्ठानामिति ।

तृणपर्णैः सदा कुर्यादमामेकादशीं विना ।

इति वाक्यसारोक्तवचनाद् 'अपां द्वादश'इत्यादि एकाद-

अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥

अथामलकस्नानम् । व्यासः—

श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः ।
सप्तमीं नवमीं चैव पर्वकालं विवर्जयेत् ॥
चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत् ॥

क्रतुः—

षष्ठी च सप्तमी चैव नवमी च त्रयोदशी ।
संक्रान्तौ रविवारे च स्नानमामलकैस्त्यजेत् ॥

यत्तु—

नवमी दशमी चैव तृतीया च त्रयोदशी ।
प्रतिपद्द्वादशी कृष्णा स्नानं तासु विवर्जयेत् ॥

यच्च—

दर्शे स्नानं न कुर्वीत मातापित्रोः सुजीवतोः ।
पुत्रः कुर्वन्निराचष्टे पित्रोरुन्नतिजीविते ॥

इति कण्वयमाद्यैः स्नानमात्रं निषिद्धं, तद्भोगार्थ-स्नानपरं न नित्यनैमित्तिकपरामिति हेमाद्रिः ॥

अथ तैलस्नाननिषेधः । कात्यायनः—

पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ ।
तैलेनाभ्यज्यमानस्तु चतुर्भिः परिहीयते ॥

गर्गः—

पञ्चदश्यां चतुर्दश्यामष्टम्यां र(१)विसंक्रमे ।
द्वादश्यां सप्तमीषष्ठ्योस्तैलस्पर्शं विवर्जयेत् ॥
न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा ।
शाश्वतीं गतिमन्विच्छन् दशम्यामपि पण्डितः ॥

---

श्री[illegible] केचित् । तन्न, "पत्रैर्वा शोधयेन्मुखम्" इति वचनान्तरात् ।

---

(१) 'रविवासरे' क० ।

तत्रैवायुर्वेदे—

षष्ठ्यां दिनक्षयेऽष्टम्यामेकादश्यां च पर्वसु ।
द्वादश्यां च चतुर्दश्यां पञ्चम्यां प्रतिपत्तिथौ ॥
व्रते श्राद्धदिने जन्मत्रितये श्रवणार्द्रयोः ।
ज्येष्ठोत्तराफाल्गुनीषु व्यतीपाते च वैधृतौ ॥
विष्टियोगे च संक्रान्तौ मन्वादिषु युगादिषु ।
नाभ्यङ्गं तत्र बालानां वृद्धानां तु न दोषकृत् ॥ इति ।

व्यवहारतत्त्वे—

संक्रान्तिभद्राव्यतिपातवैधृति-
षष्ठ्यष्टमीपर्वसु नार्कभूसुते ।
स्नाने द्वितीया दशमी च गर्हिताः
ष(१)ष्ठ्याद्यमाद्या रदधावनेऽधमाः ॥

अस्यापवादमाह तत्रैव प्रचेताः—

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

आयुर्वेदे—

निषिद्धतिथिवारर्क्षग्रहणेष्वपि रात्रिषु ।
किञ्चिद्गोघृतयुक्तं वा विप्रपादरजोन्वितम् ॥
भानौ दूर्वान्वितं भौमे भूयुक्तं पुष्पयुग्गुरौ ।
सर्वेषां सर्वदा तैलमभ्यङ्गेषु न दुष्यति ॥

मङ्गलेष्वप्यदोषः,

माङ्गल्यं विद्यते स्नानं वृद्धिपर्वोत्सवेषु च ।
स्नेह(२)पात्रसमायुक्तं मध्याह्नात् प्राक्तदिष्यते ॥

इति मदनपारिजाते कात्यायनोक्तेः । हेमाद्रौ बृहन्मनुः—

तैलाभ्यङ्गो नार्कवारे न भौमे
नो संक्रान्तौ वैधृतौ विष्टिषष्ठ्योः ।
पर्वस्वष्टम्यां च नेष्टः स इष्टः
प्रोक्तान्मुक्त्वा वासरे सूर्यसूनोः ॥

(१) 'षष्ठ्यादिमाद्या' क० ख० । (२) 'स्नेहमात्र' ख० ।

तिलस्नाननिषेधस्तु षट्त्रिंशन्मते—

तथा सप्तम्यमावास्यासंक्रान्तिग्रहजन्मसु ।
धनपुत्रकलत्रार्थी तिलपिष्टं न संस्पृशेत् ॥

अथ गृहारम्भः । ज्योतिर्निबन्धे बादरायणः—

वैशाखे फाल्गुने पौषे श्रावणे मार्गशीर्षके ।
सूत्रारम्भः शिलान्यासः स्तम्भारम्भः प्रशस्यते ॥

नारदः—

सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः ।
मासाः स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः ॥

अत्र वृषसिंहवृश्चिकाः वैशाखश्रावणकार्तिकाः सौरा ज्ञेया इति कालादर्शः । तत्रैव कारणतन्त्रे—

स्थिरमासे स्थिरे राशौ स्थिरेंऽशे नववेश्मनाम् ।
कुर्वीत स्थापनं शङ्कोः स्तम्भस्थापनमेव वा ॥

कार्तिकनिषेधस्तुलापरः,

कुम्भे(१)मासेऽपि सर्वेषां मन्दिराणामुपक्रमम् ।
महर्षयः प्रशंसन्ति धान्यागारं विहाय च ॥

निषेधो धान्यगृहपरः ।

पाकभोजनशालादौ मार्गशीर्षश्च फाल्गुनः ।
रथ्यागेहमठादौ च सहस्यः शुचिरेव तु ॥

पौषाषाढनिषेधस्तु प्रधानगृहपरः,

न प्रधानगृहारम्भं कुर्यात्पौषे शुचावपि ।

इति तत्रैवोक्तेः । ज्योतिस्तत्त्वे—

पूर्वापरास्यं तु नभोऽन्त्यपौषे
याम्योत्तरास्यं सहसि द्वितीये ।
कार्यं गृहं जीवबुधर्क्षगार्के
नीचास्तगौ जीवसितौ च हित्वा ॥

---

(१) 'माघेऽपि' ख० ।

रत्नमालायाम्—

कर्कनक्रहरिकुम्भगतेऽर्के
पूर्वपश्चिममुखानि गृहाणि ।
तौलिमेषवृषवृश्चिकयाते
दक्षिणोत्तरमुखानि वदन्ति ॥

दैवज्ञवल्लभः—

शोकं(१)धान्यं पञ्चतां निःपशुत्वं
स्वापं नैःस्वं संगरं भृत्यनाशम् ।
स्वं श्रीप्राप्तिं वह्निभीतिं च लक्ष्मीं
कुर्युश्चैत्राद्या गृहारम्भकाले ॥

गर्गः—

त्र्युत्तरामृगरोहिण्यां पुष्ये मैत्रे करत्रये ।
धनिष्ठाद्वितये पौष्णे गृहारम्भः प्रशस्यते ॥
रोहिण्यां श्रवणत्रयेऽदितियुगे हस्तत्रये मूलके
रेवत्युत्तरफल्गुनीषुरगभे मैत्रोत्तराषाढयोः ।
शस्तं वास्तु कुजार्कवर्जितदिने गोकुम्भसिंहे मुखे
कन्यायां मिथुने नभःशुचिसहोराधोर्जके फाल्गुने ॥

कालादर्शे सनत्कुमारः—

आदित्यभौमवर्जं तु सर्वे वाराःशुभप्रदाः ।

वास्तुशास्त्रे—

मार्गशीर्षे तथा पौषे वैशाखे श्रावणे तथा ।
फाल्गुने च कृतं वेश्म सर्वसंपत्प्रदं भवेत् ॥
कार्तिके माघमासे च चैत्रे ज्येष्ठे तथाश्विने ।
मास्याषाढे भाद्रपदे न कुर्यात्सर्वथा गृहम् ॥
द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
त्रयोदशी च दशमी पूर्णा चैकादशी तथा ॥
वेश्मारम्भे शुभाय स्युर्विशेषाच्छुक्लपक्षगाः ॥

---

(१) 'रत्नं धान्यं' इति कालादर्शे पाठः ।

व्यवहारसारे—

शिलान्यासः प्रकर्तव्यो गृहाणां श्रवणे मृगे ।
पौष्णे हस्ते च रोहिण्यां पुष्याश्विन्युत्तरात्रये ॥

वास्तुप्रदीपे—

अधोमुखैर्भैर्विदधीत खातं शिलास्तथैवोर्ध्वमुखैश्च पट्टम् ।
तिर्यङ्मुखैर्द्वारकपाटयानं गृहप्रवेशो मृदुभिर्ध्रुवैश्च ॥

लल्लः—

स्नानं च पाकं शयनं च भोज्यं गजालयं वाजिगृहं धनस्य ।
देवस्य पूर्वादिदिशि क्रमेण मध्ये सभा भूपनिवेशनाय ॥

शिल्पशास्त्रे—

कन्यासिंहे तुलायां भुजगपतिमुखं शम्भुकोणेऽग्निखातं
वायव्ये स्यात्तदास्यं त्वलिधनमकरे ईशखातं वदन्ति ।
कुम्भे मीने च मेषे निर्ऋतिदिशि मुखं खातवायव्यकोणे
चाग्नेः कोणे मुखं वै वृषमिथुनगते कर्कटे रक्षखातम् ॥

तत्त्वचिन्तामणौ—

यत्र दैर्घ्यं गृहादीनां द्वात्रिंशद्धस्ततोऽधिकम् ।
न तत्र चिन्तयेद्धीमान् गुणानायव्ययादिकान् ॥

राजमार्तण्डः—

आयव्ययौ मासशुद्धिं तृणागारे न चिन्तयेत् ।
शिलान्यासादि नो कुर्यात्तथागारे पुरातने ॥

व्यवहारतत्त्वे—

निषिद्धेष्वपि कालेषु स्वानुकूले शुभे दिने ।
तृणकाष्ठगृहारम्भे मासदोषो न विद्यते ॥

चण्डेश्वरः—

पूर्णादि त्वष्टमीं यावत्पूर्वास्यं वर्जयेद् गृहम् ।
उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम् ॥
अमावास्याष्टमीं यावत्पश्चिमास्यं विवर्जयेत् ।
नवम्यादौ तथा याम्यं यावत्कृष्णचतुर्दशीम् ॥

ध्रुवं दृ(१)ष्ट्वाथवा स्मृत्वा कर्तव्यं वास्तुरोपणम् ।
सायाह्नवर्ज्यदिवसे रात्रौ त्यक्त्वा महानिशाम् ॥

वराहः—

दक्षिणपूर्वे कोणे कृत्वा पूजां शिलां न्यसेत्प्रथमाम् ।
शेषाः प्रदक्षिणेन स्तम्भाश्चैवं समुत्थाप्याः ॥

कालादर्शे वास्तुशास्त्रे—

खाते चैव शिलान्यासे(२)वृषचक्रं प्रशस्यते ।

तच्चोक्तं शान्तिरत्ने—

चतुर्हस्तप्रमाणं तु खात्वा गर्तं समन्ततः ।
कुम्भोदकैः सेचयेयुः शान्तिपाठपुरःसरम् ॥
तत ईशानदिग्भागे साक्षतं रत्नपञ्चकम् ।
साज्यं कुम्भं स्थिरं मुक्त्वा वास्तुपूजनपूर्वकम् ॥
कुम्भोपरि शिलान्यासः कर्तव्यस्तदनन्तरम् ॥

अथ गृहप्रवेशः । बृहस्पतिः—

नन्दायां दक्षिणद्वारं भद्रायां पश्चिमेन तु ।
जयायामुत्तरद्वारं पूर्णायां पूर्वतो विशेत् ॥

वसिष्ठः—

कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं
विप्रान्पूज्यानग्रतः पूर्णकुम्भम् ।
हर्म्यं रम्यं तोरणस्रग्वितानैः
स्त्रीभिः स्रग्वी गीतवाद्यैर्विशेच्च ॥

व्यवहारतत्त्वे—

सौम्यायने श्रावणमार्गपौषे
जन्मर्क्षलग्नोपचयोदयेंऽशे ।

---

(१) 'दृष्ट्वा तथा स्मृत्वा' क० ।

(२) वृषचक्रं धर्माब्धौ—नेष्टानि सप्त सूर्यर्क्षादिष्टान्येकादशाष्टमात् । दश शिष्टानि नेष्टानि चक्रे स्युर्वृषवास्तुनि ॥ यद्वा तुर्यात्पञ्चदशाञ्च्यो· विंशतिसंख्यकात् । वेदाब्धिपञ्च नेष्टानि गृहारंभप्रवेशयोः इति वास्तु चक्रम् ।

वामं गतेऽर्के गृहवास्तुपूजां
कृत्वा विशेद्वेश्म भकूटशुद्धम् ॥

वास्तुशास्त्रे—

लग्नात्प्रागादितो दिक्षु द्वौ द्वौ राशी नियोजयेत् ।
एकमेकं न्यसेत्कोणे सू(१)र्यं वामं विचिन्तयेत् ॥

वसिष्ठः—

चन्द्रजार्यसितवासरेषु च
श्रीकरं सुतमहार्थलाभदम् ।
सूर्यसूनुदिवसे स्थिरप्रदं
किन्तु चौरभयमत्र निर्दिशेत ॥

रत्नकोशे—

पुष्ये धनिष्ठामृगवारुणेषु
स्वायंभुवर्क्षे त्रिषु चोत्तरासु ।
अक्षीणचन्द्रे शुभदो नृपस्य
तिथावरिक्ते च गृहप्रवेशः ॥

नारदः—

प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः ।
माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः ॥
अकपाटमनाच्छन्नमदत्तबलिभोजनम् ।
गृहं न प्रविशेद्धीमानापदामाकरो हि त(२)त् ॥

ज्येष्ठः क्षुद्रगृहपरः । वृद्धगार्ग्यः—

भानोश्च भौमस्य विहाय वारौ
शूलादियोगानशुभानथापि ।
रिक्ता तिथिश्चापि मृदुध्रुवर्क्षे
सौम्यायने च प्रविशेद्गृहाणि ॥

रत्नमालायाम्—

त्वाष्ट्रमित्त्रशशिपू(३)षदैवतान्यामनन्ति मुनयो मृदून्यथ ।

---

(१) 'सूर्यं वामे विचारयेत्' ख०। (२) 'यत्' क०। (३) 'पुष्यदेवता' क०।

मैत्रगे हरति भूषणाम्बराद्गीतमङ्गलविधानमेषु च ॥

रोहिण्युत्तरात्रयं च ध्रुवाणि । प्रवेशश्च वास्तुपूजां कृत्वा कार्यः—

जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने ।
नवप्रासादभवने प्रासादपरिवर्तने ॥
द्वाराभिवर्तने तद्वत्प्रासादेषु गृहेषु च ।
वास्तू(१)पशमनं कुर्यात्पूर्वमेव विचक्षणः ॥

इति मात्स्योक्तेः । तत्रैव—

कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं
दध्यक्षताम्रदलपुष्पफलोपशोभम् ।
दत्त्वा हिरण्यवसनानि तथा द्विजेभ्यो
माङ्गल्यशान्तिनिलयं स्वगृहं विशेच्च ॥
गृह्योक्तहोमविधिना बलिकर्म कुर्यात्
प्रासादवास्तुशमने च विधिर्य उक्तः ।
संतर्पयेद्द्विजवरानथ भक्ष्यभोज्यैः
शुक्लाम्बरः स्वभवनं प्रविशेत्सुरूपम् ॥

अथ कलिवर्ज्यानि बृहन्नारदीये—

*समुद्रयातुः स्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥

---

यस्तु कार्त्तयुगो धर्मो न कर्त्तव्यः कलौ युगे ।
पापप्रयुक्ताश्च सदा कलौ नार्यो नरास्तथा ॥

इत्यादित्यपुराणवचनेन यद्यपि कृतयुगसंबन्धि धर्मसामान्यं निषिद्धं तथापि सर्वस्य तस्य निषेद्धुमशक्यत्वाद्विशेषानाह—*समुद्रेति । यद्यपि समुद्रयानं न विहितं तथापि बौधायनेन "समुद्रयानं ब्राह्मस्य न्यासापहरणम्"इत्यादिना तत्कर्तुः प्रायश्चित्तं विहितं, तदपि कलौ कर्त्तव्यमेवेति तत्करणानन्तरं तद्व्यवहारो निषिद्ध्यते,

(१) 'वास्तुप्रसवनं' क० ।

देवराच्च सुतोत्पत्तिर्मधुपर्के *पशोर्वधः ।
*मांसदानं तथा*श्राद्धे*वानप्रस्थाश्रमस्तथा ॥
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।
*दीर्घकालं ब्रह्मचर्यं*नरमेधाश्वमेधकौ ॥

---

द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः ।

इत्यग्रिमवचनाच्च । एतच्च प्रायश्चित्तं रागप्राप्ते समुद्रयान एव । शंखोद्धारादितीर्थे यात्राविधिनान्तरीयकं समुद्रयानमतो दोषाभावान्न प्रायश्चित्तमित्यन्यत्र विस्तरः । अत्र क्रत्वर्थमात्रनिषेधेपि न क्षतिः पुरुषार्थनिषेधान्तरसत्त्वात् । *पशोरिति ।

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।

इति अजादिसंग्रहार्थं पशुपदम् । *मांसदानमिति श्राद्धसम्बन्धि(१)क्रत्वर्थपुरुषार्थत्वं निषिध्यते, यथा वेदिबर्हिर्धर्माणां प्रधानसम्बन्धिमात्रांशे विधिः, न तु तादर्थ्यांशेऽपि, मानाभावात्, तद्वत् ।(२)एतेन—

शौचं च पात्रशुद्धिश्च श्रद्धा च परमा यदि ।
अन्नं तृप्तिकृच्छ्राद्धे [illegible] न चामिषम् ।

इति पुरुषार्थमामिषदानं निषिध्यते, न तु क्रत्वर्थं विधिस्पृष्टे निषेधानवकाशादिसपहसितम् । *श्राद्धे इति उपलक्षणार्थं, तेनो-(३)पयाचितकादावपि निषेधः । *वानप्रस्थेति ।

सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम् ॥
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥(या० स्मृ० ३-४५)

इति विहितः । वानप्रस्थो बुभूषुरिति शेषः । *दीर्घकालमिति । "अष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यम्" इति श्रुतिविहितम्,

यदि चात्यन्तिको वासो रोचेत स्वगुरोः कुले ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥

---

(१) 'क्रत्वर्थं पुरुषार्थं च' ख० ।  (२) 'एतेन' नास्ति घ० ङ० ।
(३) 'तेनोपयाचितकारादिनिषेधः' घ० ङ० ।

*महाप्रस्थानगमनं *गोमेधश्च तथा मखः ।
इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ॥
कमण्डलुः 'सोदकं च*कमण्डलुम्' इत्युक्तः, मृन्म-

---

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥
एतेष्वविद्यमानेषु स्थानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां सादयेदेहमात्मनः ॥

इति विहितं नैष्ठिकं च । स्थानमङ्गुष्ठाग्रादिना नियतमूर्ध्वावस्थानम्, आसनं नियमोपवेशनं, विहारो भ्रमणम्, एतैस्तपोविशेषो लक्ष्यते । नव्यास्तु दीर्घकालमिति कालापवादमात्रम् । अन्यथा दीर्घं ब्रह्मचर्यमित्येव ब्रूयात् । तेन श्रौतमेव निषिध्यते न नैष्ठिकम् । तेन द्राविडानां नैष्ठिकाचारोऽपि संगच्छते इत्याहुः । *नरमेधेति । "ब्रह्मणे ब्राह्मणमालभते" इति "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति विहितौ । *महाप्रस्थानेति ।

यो जीवितुं न शक्नोति महाव्याध्युपपीडितः ।
सोऽग्न्युदकमहायात्रां कुर्वन् वा न प्रदुष्यति ॥

इति विहितमाशरीरपातमुत्तरादिग्गमनम् । *गोमेधश्चेति । "मैत्रावरुणीं गां वशामनुबन्ध्यामालभेत" इति विहितो यागभेदः । चकारात् राजसूयग्रहः,

न कलौ क्रियते अश्वमेधो वाप्यथ गोसवः ।
नरमेधोऽक्षता नारी देवरात् पुत्रसन्ततिः ॥
गर्हितं सप्तकं ह्येतद्राजसूयः कमण्डलुः ।

इति हेमाद्रौ गारुडाद्वा । राजसूयश्च "राजा राजसूयेन यजेत" इति विहितः । *कमण्डलुमित्युक्त इति । इदमुपलक्षणम्,

दाक्षायणी ब्रह्मसूत्री वेणुमान् स कमण्डलुः ।

इत्युक्तस्योपलक्षणम् । तथाच स्नातकस्य इत्युक्तः "अथ

यो वा। दत्ता ऊढा,

*ऊढायाः पुनरुद्वाहं*ज्येष्ठांशं*गोवधं तथा।
कलौ पञ्च न कुर्वीत *भ्रातृजायां कमण्डलुम्॥

इति हेमाद्रौ वचनात्। ऊढायाः—

पुरा पुरुषसंयोगान्मृते देयेति केचन।

इत्या*दिभिर्विवाह्यतोक्ता। हेमाद्रौ ब्राह्मे—

गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा।
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः॥

गोत्राद्गोत्रजायाः पितृष्वसुः, मातृसपिण्डान्मातुलात्तत्कन्याया विवाहः कलौ न कार्यः। *तेन यानि तद्विधायकानि, तानि *युगान्तरविषयाणि। तथा च

---

कमण्डलुचर्यामुपदिशन्ति" इति बौधायनोक्तेतिकर्त्तव्यताकः काष्ठमयो मृन्मयो वेत्यर्थः। तेन मृन्मयो वेति वाकारः सङ्गच्छते। न च कमण्डलुधारणं वानप्रस्थाश्रमे इति मतं सम्यक्, तस्य पृथगुपादानात्।

ननु दत्तापदं कुतो न वाग्दत्तापरमित्यत आह-*ऊढाया इति। *ज्येष्ठांशमिति।

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्। (म० स्मृ.९.-११२)

इति विहितम्। *गोवधमिति। मधुपर्के इति शेषः। *भ्रातृजायामिति। जायामिति शेषः। पञ्चेति न परिसंख्या, वाक्यान्तरदर्शनात्। एतद्वाक्योपात्तत्वोपाधिना च पञ्चत्वम्। *आदिभिरिति। आदिना

ऋतावदृष्टे कन्यैव पुनर्देयेति केचन।

इत्यादिपरिग्रहः। ननु पैतृष्वसेयीमातुलकन्ययोर्विवाहे "तृप्तां जहुः" इत्यादिश्रुतिः प्रमाणं, श्रुतेः स्मृत्यपेक्षया प्राबल्यादित्यत आह-*तेनेति। *युगान्तरेति। न चैतद्युग एव अर्जुनादीनां कथं मातुलकन्यापरिणय इति वाच्यं "विहितान्यपि कर्माणि"

व्यासः—

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥

इति कलौ तन्निन्दामाह । मातृतस्तृतीयां मातुलकन्यामित्यर्थः । उक्तं चैतत्प्राक् । *मद्यं 'स्त्रीभ्यश्च सुरामाचामम्' इत्यादिना *विहितमपि वर्ज्यम् ।

---

इति अग्रिमवाक्यात् । *मद्यमिति । सुरापैष्टीनां चायं निषेधो न विषयीकरोति, सुरामद्ययोर्भेदात् ,

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥

इति मनुना द्विजातिसामान्ये तन्निषेधाच्च । न च माध्वीकादिकं,

माधूकमैक्षवं सैरं तालं खार्जूरपानसम् ।
मधूत्थं चैव माध्वीकं मैरेयं नारिकेरजम् ॥
अपेयानि दशैतानि मद्यानि ब्राह्मणस्य तु ॥

इति विष्णुना सामान्यत एव तन्निषेधात् , "नित्यं मद्यं ब्राह्मणो वर्जयेत्" इति निषेधान्तराच्च; किन्तु

कामादपि हि राजन्यो वैश्यो वापि कथञ्चन ।
मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते ॥

इति बृहद्याज्ञवल्क्येन राजन्यवैश्ययोरभ्यनुज्ञातं मद्यं निषिध्यते । एवं त्रैवर्णिकादिपुरस्कारेण वामागमादौ विहितं विनायकशान्त्यादौ च क्षत्रियादेरुक्तं मद्यं निषिध्यते । नन्वेतावता निषेधस्य प्राप्तिपूर्वकत्वोपपत्तौ कथं "स्त्रीभ्यश्च सुरामाचामम्" इति सङ्गच्छते, मद्ये सुरालक्षणायां मानाभावात् ? शृणु, मद्यमपीह सुराशब्देन ग्रहीतुं शक्यते, गौडी-पैष्टी-माध्वीभेदेन तस्यास्त्रिविधत्वात् । *विहितमिति । आश्वलायनगृह्ये "अपरेद्युरन्वष्टक्यम्" इत्यत्र विहितमित्यर्थः ।

हेमाद्रौ आदित्यपुराणे—

*विधवायाः प्रजोत्पत्तौ देवरस्य नियोजनम् ।

---

ओदनाग्रद्रवं प्राहुराचामं हि मनीषिणः ।

*विधवाया इति । अत्र—

विहितान्यपि क(१)र्माणि धर्मलोपभयाद् बुधैः ।
समापने निवृत्तानि साध्वभावात्कलौ युगे ॥

इति प्रकृतम् । समापने जन्मेजयाश्वमेधसमाप्तौ निवृत्तानि निवर्त्तितानि । तेन द्रोणादीनां वधे कथं पाण्डवादीनां कलिमध्ये दोषो नास्तीति न शङ्क्यम् । इदं च "देवराच्च सुतोत्पत्तिः" इति च वाग्दानानन्तरं मृते पत्यौ देवरपरं,

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥

अनेन विधानेन घृताभ्यङ्गादिनियमवन्नियोजनविधानेन ।

यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ ॥

इति मनुना,

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥

इति याज्ञवल्क्येन च तदनुज्ञानात्, न तु विवाहानन्तरं विधवायां,

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः ।

इति मनुना वि(२)वाहानन्तरं विधवानियोजननिषेधात् । नचैवं भारते कथं सत्यवत्यां कनिष्ठभ्रातृभार्यायां विधवायां व्यासो नियुक्त इति वाच्यम् , तत्र 'धनेनोपतोष्य कश्चन ब्राह्मणो नियोज्यः' इति भीष्मानुज्ञया सत्यवत्याः तथा(३)करणेन निषेधगतान्य-

---

(१) 'कार्याणि' ख० ।
(२) 'विवाहानन्तरं विधवानियोजन' नास्ति घ० ङ० ।
(३) 'तथा' नास्ति ख० ।

*बालायाः क्षतयोन्यास्तु वरेणान्येन संस्कृतिः ॥

---

पदस्य ब्राह्मणेतरान्यपरत्वात् । अन्यथा ब्रह्मक्षात्रियदेवक्षत्रियभेदो न स्यात् । महाप्रभावतया दोषकल्पनाविरहेणान्यपदस्य यथाश्रुतार्थत्वाद्वा । देवराच्चकारादनुज्ञातसपिण्डसगोत्रयोरपि ग्रहः । *बालाया इति 'दत्ताक्षतायाः' इत्येतत्समानार्थम् । वस्तुतस्तु ननु इदं वाक्यद्वयं कथं सङ्गच्छते, "नान्यस्मिन् विधवा नारी" इति मनुना सर्वदा तन्निषेधात् ।

मन्वर्थविपरीता तु स्मृतिः सापि विनश्यति ।

इति अङ्गिरोवाक्यात्, नापि देवरनियोजनं तदर्थः "देवराच्च सुतोत्पत्तिः" इत्यनेन पौनरुक्त्यापत्तेः, नापि वाग्दत्ताविषयकं तदानीं क्षतयोनित्वशङ्काया अभावात्; इति चेत् ? न,

दत्तामपि हरेत्पूर्वाच्छ्रेयाँश्चेद्वर आव्रजेत् ।

इति सप्तपद्युपक्रमणात्प्राग् यदन्यस्मै दानमुक्तं तद्विषयकत्वात् । ननु पराशरेण "कलावनुष्ठेयान्धर्मान् वक्ष्यामि" इति प्रतिज्ञाय

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ॥
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इति वचनाद् वाग्दत्तायाः कलौ पत्यन्तरमस्तीति (१)कथं दत्तापहारः कलिवर्ज्य इति चेत् ? (२)कलौ दत्तापहारो न कार्यः, वाग्दानानन्तरतन्मरणे पराशरवचनात्तस्याः वरान्तरेण विवाहः कार्यः,

कन्यायां शुल्कदत्तायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥

इत्युक्तवाक्ये कन्याया अनुमतौ पुरुषान्तराय दानलाभात् । इयांस्तु विशेषः—कन्यानुमतावपि देवराय सा न विवाह्या नियोगसाम्यात्, 'देवराच्च सुतोत्पत्तिः' इति सामान्यतो निषेधात् । एवं

---

(१) 'कथं वाग्दत्ता ख० ।
(२) 'कलौ दत्तापहारो न कार्यः' नास्ति ख० ।

*कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः ।
*आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥

---

सगोत्रसपिण्डयोरपि न विवाहेति । *कन्यानामिति ।

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः ॥

इति याज्ञवल्क्येन विहितः । अत्र-

असवर्णासु कन्यासु विवाहश्च द्विजातिभिः ॥

इति स्मृत्यन्तरं 'द्विजानामसवर्णासु' इति प्रागुक्तं चैकार्थं बोध्यम् । *आततायीति ।

गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥

इति विहितं सन्मुखमकूटशस्त्रेण मारणम् । एतेन "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः" इति सौमन्तवं व्याख्यातं, तस्य कलिपरत्वात् । एवं सति यत् श्रीरामेण रावणं हत्वा दश जारूप्या(?)श्वमेधाः कृता इति रामायणं तत् आततायिवधे युगान्तरे सपरिहारो दोष इत्येतदर्थम् । वस्तुतस्तु "गुरुं वा बालवृद्धं वा ब्राह्मणं वा" इत्यादिवाशब्दस्वारस्यात्कैमुत्यन्यायेन ब्राह्मणभिन्न आततायी वध्य इत्यत्रैव तात्पर्यम् । इदमपि स्ववधोद्यताततायिविषयम् ,

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥

इति गालववचनात् ।

स्वाध्यायिनां कुले जातं न हन्यादाततायिनम् ।
तं हत्वा भ्रूणहा स स्यादहत्वाऽभ्रूणहा भवेत् ॥

इति बृहस्पतिवचनम्

आततायिनमुत्कृष्टं व्रतस्वाध्यायसंयुतम् ।
यो न हन्याद्धर्मप्राप्तं सोऽश्वमेधफलं लभेत् ॥

द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः ।
*सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
*महाप्रस्थानगमनं *गोसंज्ञप्तिश्च गोसवे ।
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥
*अग्निहोत्रहव(१)न्याश्च लेहो लीढापरिग्रहः ।
वृत्तस्वाध्यायसा(२)पेक्ष्यमघसंकोचनं तथा ॥
*प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ।
संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः ॥

---

इति च स्ववधानुद्यताततायिपरमिति । एवञ्च स्ववधोद्यत-ब्राह्मणभिन्नाततायिवधः कलौ न कार्य इत्याशयेन द्विजानामिति पदम् । *सत्रेति । आसनोपायचोदिते "सप्तदशावराश्चतुर्दश-परमाः सत्रमासीरन्" इति विहिता सत्रदीक्षा, सत्राधिकार इति यावत् । *महाप्रस्थानम् आशरीरपातमुत्तरदिग्गमनम् ।

यो जीवितुं न शक्नोति महाव्याध्युपपीडितः ।
सोऽग्न्युदकमहायात्रां कुर्वन् वा न प्रदुष्यति ॥

इति विहिता महायात्रा । *गोसंज्ञप्तिरिति । गोसवनि-षेधार्थम् । *अग्निहोत्रेति । अग्निहोत्रं हूयते यया वैकङ्कतस्रुचा सोऽग्निहोत्रहवणी तस्या अग्निहोत्रहोमानन्तरं हुत्वाऽवशिष्टप्राशनार्थं जिह्वया लेहः कथञ्चिल्लीढायाः पुनर्ग्रहोऽग्निहोत्रसाधनत्वम् । *प्रायश्चित्तेति । कामकृते महापापादौ ।

न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ।

इत्यादिना विहितस्य विधानमुपदेशः ।

मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ।

इति मनुवाक्यं त्वेतद्युगपरम् । अत्र मरणान्तिकं विदधातुः जातिवधप्रायश्चित्तं सूच्यते । तच्च मतिपूर्वनिर्देश एव अन्यापदेशेन

---

(१) 'हवण्याश्च' क० । (२) 'साक्षेपमघ' क० ।

*संसर्गदोषः 'तत्संसर्गी च पञ्चमः' इत्युक्तः । स्तेयं च तदन्यानि महापातकानि ब्रह्महत्यासुरापगुरुतल्पानि त्रीणि, तेषां कामकृतानां मरणान्तिकं प्रायश्चित्तं विप्राणां कलौ नेत्यर्थः । मरणान्तिके हि जातिवधनिमित्तं द्वादशाब्दं द्विगुणं ब्रह्मवधनिमित्तं च द्विगुणं भवति तत 'चतुर्थे नास्ति निष्कृतिः' इति निषिद्धम् । न चा*त्महत्याविधिना तद्बाधः, तेन ह्यात्महत्यानिमित्त-

---

पृष्टं प्रति निर्देशे तदनन्तरं पृच्छकेन तथाचरणे तु न दोष इत्येतदर्थं मतिपूर्वमित्युक्तम् । अत्र पाठान्तरं-संसर्गदोषस्तत्संसर्गी च पञ्चमः इत्युक्तः । स्तेयं च तदन्यानि महापातकानि ब्रह्महननसुरापानगुरुतल्पगमनानि त्रीणि महापापानि, तेषां कामकृतानां विप्राणां प्रायश्चित्तं मरणान्तिकं कलौ नेत्यर्थः । मरणान्तिके हि जातिवधनिमित्तं द्वादशाब्दं द्विगुणं ब्रह्मवधनिमित्तं च द्विगुणं भवति । तत् 'चतुर्थे नास्ति निष्कृतिः' इति निषिद्धम् । न चात्महत्याविधिना तद्बाधः । तेन हि आत्महत्यानिमित्तस्यैव बाधो न जातिवधनिमित्तस्य । संसर्गिणस्तु कामतोऽपि व्रतस्यैवोक्तेर्न मरणान्तिकं, नापि स्तेये, तत्र राज्ञो वधकर्तृत्वात् । तेन तयोर्मरणान्तिकाभावात्तयोरेव निष्कृतिर्नान्येषां त्रयाणाम् । युगान्तरे (१)तु कलौ निषेधबलादेव प्रवृत्तिः । एतद्विप्रपरं न क्षत्रियादेः । तदुक्तं 'विप्राणां मरणान्तिकम्' इति । विशेषस्त्वस्मत्कृते प्रायश्चित्तरत्ने द्रष्टव्यः ।

अथैतद्व्याख्यायते-ननु 'प्रायश्चित्तविधानं च' इत्यनेन 'संसर्गदोषस्तेयान्य' इत्यस्य पौनरुक्त्यम्, इतरत्र मरणान्तिकाभावादित्यत्रैकदेशिमतमाह-*संसर्गेति । विधानं करणं क्रियमाणं प्रायश्चित्तमिति यावत् । तच्च महापापनिष्कृतिरित्येकं वाक्यम् । *आत्महत्याविधिना—

(१) 'तु' नास्ति घ० ङ० ।

स्यैव बाधो न जातिवधनिमित्त(१)स्य भिन्नविषयत्वात् । *संसर्गिणस्तु कामतोपि*व्रतस्यैवोक्तेर्न मरणान्तिकम् । नापि स्तेये त(२)त्र *राज्ञो वधकर्तृत्वात् । तेन तयोर्मरणान्तिकाभावात् तयोरेव निष्कृतिर्नान्येषां त्रयाणाम् । *युगान्तरे तु कलौ निषेधब(३)लात्प्रवृत्तिः । एतद्विप्रपरं *न क्षत्रियादेः । तदुक्तम् 'विप्राणां मरणान्तिकम्' इति । *विशेषोऽस्मत्कृते प्रायश्चित्तरत्ने ज्ञेयः ।

---

यः कामतो नरः कुर्यान्महापापं कथञ्चन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥

इत्यात्महननाविधिना । संसर्गदोषस्तेययोः पर्युदासबीजमाह *संसर्गिणस्त्विति । *व्रतस्यैवेति ।

यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥

इति मनूक्तेः । *राज्ञ इति ।

ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत् ।
स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽथवा शुचिः ॥

इति पाक्षिकमुक्त्यभिधानात् आत्महननाकरणाच्च । ननु

[illegible] प्राणान्तिकमिति स्थितिः ।

इति मनुनापि मरणान्तिकं निषिद्धमिति युगान्तरेऽपि न दुष्करमेवेत्यत्राह—*युगान्तरे त्विति । एकमूलकल्पनालाघवेन मानवस्यापि कलिपरत्वादिति भावः । *न क्षत्रियादेरिति । तथाच क्षत्रियादेर्मरणान्तिकं प्रायश्चित्तं क(४)लौ भवतीति भावः । ननु एतन्मते प्रायश्चित्तविधानं चेत्यस्य वैयर्थ्यं दुर्वारमित्यत्राह—*विशेषश्चेति । संसर्गदोषश्चेति वाक्यं पृथगेवेत्यभिप्रायः । त-

(१) 'निमित्तस्याभिन्न' ख० । (२) 'तेन' क० ।
(३) 'बलादेव' क० । (४) 'कलौ' नास्ति घ०ङ०

*वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ।
*दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ।
अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियः ॥
परोद्देशात्मसंत्याग उच्छिष्टस्यापि वर्जनम् ।
प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः ॥

---

च्चाग्रे स्पष्टम् । वस्तुतस्तु

विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं भवेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ।

इत्यत्र [illegible]महापापानन्तरं प्रायश्चित्तं कृत्वा यदि द्वितीयं पापं क्रियते तदा तद्द्विगुणं प्रायश्चित्तं कार्यं, तदुत्तरं महापापे तु [illegible], "प्रतिनिमित्तं नैमित्तिकावृत्तिः" इति [illegible]भिधाय चतुर्थे महापापे प्रायश्चित्तनिषेधः, ननु प्रकृते अकृतप्रायश्चित्तस्य कथञ्चिच्चातुर्विध्ये तत्प्रवृत्तिरिति । अत्र 'चतुर्थे नास्ति निष्कृतिः' इत्येव विधायकम् । अतो न वाक्यभेद इत्येके । एतच्च व्रत एव प्रवर्त्तते न मर[illegible], बाधात् । एवञ्च तत्र द्वैगु(१)ण्यादिविध्यन्तरमावश्यकमिति परे । *वरेति । वरस्य प्राजापत्यः । अतिथेः "आग्नावैष्णव" इति पशुयागविधिः ।

वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥

इत्यादि[illegible]विधिः । अत्र श्राद्धे पशुयागाभावेन तद्धर्मानतिदेशादुपाकरणाप्राप्तेः पशूपाकरणशब्देन तत्प्रकृतिकं पितृभ्यो मांसपरिवेषणं ल(२)क्ष्यते । एवञ्च "मधुपर्के पशोर्वधः" "मांसदानं तथा श्राद्धे" इति च गतार्थम्, एकमूलकल्पनालाघवात् । एवञ्च 'यस्तु प्राणिवधं कृत्वा' इत्यादि बृहत्पाराशरमपि कल्पितमेव । *दत्तेति ।

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।

---

(१) 'द्वैगुण्यादि' घ० ङ०   (२) 'लक्ष्यते' नास्ति घ० ङ०

अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च ।
*शामित्रं चैव विप्राणां*सोमविक्रयणं तथा ॥
षड्भक्तानशने चान्नहरणं हीनकर्मणः ॥

माधवीये पृथ्वीचन्द्रोदये च—

*शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ।
भोज्यान्नता गृहस्थस्य*तीर्थसेवातिदूरतः ॥
*शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता ।
आपद्वृत्तिर्द्विजाग्र्याणाम*श्वस्तानिकता तथा ॥
*प्र(१)जार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ।

---

इत्यादिद्वादशविधः पुत्रो विहितः तत्रौरसदत्तकव्यावर्त्तनाय दत्तौरसेतरेषामिति । *शामित्रमिति । 'आलभेत'इति विधिप्राप्तं यज्ञे पशुमारणम् । *सोमेति । "गवा क्रीणाति"इति विधिवशसिद्धं सोमविक्रयणम् । *शूद्रेष्विति ।

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

इति विहितम् । न(२)चेदं स्नातकप्रकरणत्वात्तेषामेवेति वाच्यम् "उत्तरेषां चैतदविरोधि"इति गौतमेन गृहस्थादीनामपि तदतिदेशात् । अतश्च गृहस्थपदं नाहिताग्निपरं मानाभावात् । दासादिपदं च नापितकुम्भकारयोरुपलक्षणम्, अन्यथाऽनौचित्यापत्तेः । *तीर्थसेवेति । तीर्थयात्रेति पाठान्तरम् । 'दूरतस्तीर्थमासेव्यम्'इत्युक्तं तीर्थसेवनम् । *शिष्यस्येति ।

गुरुवत्प्रतिपूज्याश्च सवर्णा गुरुयोषितः ।

इत्युक्ता पादस्पर्शादिका । *अश्वस्तनिकेति ।

त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ।

इति विहिता । *प्रजार्थं त्विति । क्वचिच्छाखायां जातक-

---

(१)'प्रजार्थे' ग० (२) 'नचैवं' ग०

# परिशिष्टदीपकः=संस्कारदीपकस्य परिशिष्ट-विषयाणां [illegible] ।

अस्मिन् ग्रन्थे विषयाः—

दानस्वरूपादिकं, दानविधिः, प्रतिग्रहविधिः, [illegible]देवताः, द्रव्य-धान्य-भूमानानि, कुण्डमण्ड[illegible]कारः, सहोमतुलादानप्रयोगः, होमरहिततुलादानप्रयोगः, बृहद्गोदानप्रयोगः, गवादिमूल्य[illegible], संक्षिप्तगोदानप्रयोगः, वृषदान–महिषीदान-त्रिविधविद्यादान–सुवर्णदान–भूम्यादिदशदानानि । सर्वप्रायश्चित्तप्रयोगः, ऋणधेन्वादिपञ्चधेनुदानानि । अश्वदान–हस्तिदान–रथदान–गृहदानानि । सवास्तु[illegible]प्रयोगः । शय्यादान–द्विजस्था[illegible]–नवग्रहदानानि । सुवर्णादिदानमन्त्राः । [illegible]शान्तिः । [illegible]ः । जलाशयोत्सर्गप्रयोगः । लघुजलाशयोत्सर्गप्रयोगः । मू० २।)

कातीयेष्टिदीपकः मू० १)

*सुराग्रहस्य तत्कर्तुः *ग्रहो*व्य(१)वहारकः ॥

नच मद्यं चेति सामान्येन निषिद्धस्या*ऽनेनोपसंहार इति वाच्यम्*निषे(२)धस्य निवृत्तिमात्रफ(३)लत्वेन विशेषा(४)नपेक्षत्वात्, *'न हिंस्यात्' इत्यस्य 'न ब्राह्मणं हन्यात्' इत्यनेनोपसंहारे हिंसान्तरस्यादोषत्वापत्तेश्च । निरूपितं चैतद्धेमाद्रिणा*ऽन्यत्रेत्युपरम्यते । *सुराग्रह-

---

सौत्रामण्यामिति व्याचष्टे—*सुरेति । सुराग्रह इति कर्तृव्युत्पत्त्या याज्यो याजकश्चाविशेषाद्ग्राह्यः । *व्यवहार इति । अनेन कृतप्रायश्चित्तस्यापीति लभ्यते । न च युगान्तरेऽकृतप्रायश्चित्तस्य व्यवहारः स्थित इति वाच्यं, तर्ह्येतद्वाक्यवैयर्थ्यात्, लौकिकसुराग्र(५)हणतुल्यत्वात् । *अनेनेति । मद्यं सुरा, कथञ्चित् सुराशब्दस्य तदर्थकतायाः प्रागुक्तत्वात् । तत्सौत्रामण्यां वर्ज्यमित्यर्थः । *निषेधस्येति ।

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।

इति यौक्तिकम् । एवञ्च निषेधे तदप्रवृत्तिरिति भावः । साधकाभावमुक्त्वा बाधकमप्याह—*न हिंस्यादिति । *अन्यत्रेति । "एकादश्यां न भुञ्जीत" इति सामान्यतो निषेधस्य "बोधिन्यादावुपवसेत्" इत्यनेनोपसंहारे अन्यशुक्लैकादश्यां भोजनप्रसङ्गवारणार्थविधीनामेवोपसंहारो न तु निषेधानामित्यादिकमुक्तमित्यर्थः । वस्तुतस्तु सुरेह पैष्टीति शङ्का तुच्छैव ।

तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ।

इत्येतत्परतया वा यो(६)ज्या "मा हिंस्यात्" इति निषेधस्याग्नीषोमीयादिविधिनेव 'सुरा वै' इति निषेधस्य सौत्रामणीसुराग्रहविधिना बाध इति तत्र प्रसक्तः सुराग्रहः कलौ निषिध्यते इत्य-

---

(१)'व्यवहारः' क० (२)'निषिद्धस्य' ख० (३)'फलत्वे' ख०
(४)'विशेषानपेक्षणात्' क० (५) 'ग्रहणस्य' घ० ङ०
(६) 'योज्या । निरूपितं चेति । न हिंस्यात्' ग०

स्योद्देश्यस्य सौत्रामणिविशे(१)षणा*विवक्षया*वाजपेयेऽपि निषेधः। *सौत्रामण्यां तु 'पयोग्रहा वा स्युः' इत्यापस्तम्बोक्ते*र्वैकल्पिकपयोग्रहैरप्यधिकारः। वाजपेये तु तत्प्राप्तौ*मानाभावात् सोमसुरयोः सहत्यागेनांशे सुराद्रव्यत्वात्*तत्प्रख्यनया यागनामत्वेन तां विना संज्ञायोगा॥न्न कलौ नाधिकार इति युक्तं प्रतीमः। *त्रिकाण्डमण्डनादिलिखनं तु*निर्मूलम*नाकरं च। *सुरेति

र्थः। नन्वेवं "राजा राजसूयेन" इत्यादावुद्देश्यविशेषणराजत्वादेरधिकारिसंकोचकत्वमिव तादृशस्य सौत्रामणीत्वादेः कर्मसंकोचकतया वाजपेयादौ सुरानिषेधानापत्तिरित्यत्राह-*सुराग्रहस्येति। *अविवक्षयेति। समुच्चयार्थकापिशब्देन कर्मान्तरसमुच्चयेनार्थतस्तद्विवक्षणारंभवादिति भावः। "ग्रहं संमार्ष्टि"इत्यादौ ग्रहत्वं विवक्षितं न त्वेकत्वमितिवत् सुरात्वं विवक्षितं न(२) त्वेकत्वसौत्रामणीसम्बन्ध इत्यपि बोध्यम्। *वाजपेयेऽपीति। एतेन वामागमादौ विनायकशान्त्यादौ च स्मार्त्ते सुतरां निषेधः सूचितः। 'स्त्रीभ्यश्च सुरामाचामन्' इत्यादिस्त्वपवादजणमेतत्। नन्वेवं क्रमेण सौत्रामण्यामनधिकारे तदङ्गकानां चयनादीनामप्यनधिकारापत्तिरित्यत्राह-*सौत्रामण्यामिति। *वैकल्पिकेति। एतेन सौत्रामण्यां येषां सुराग्रहाः पयोग्रहाश्च उभये तेषां न तस्यामधिकार इति सूचितम्। *मानाभावादिति। सौत्रामणीवाजपेययोः प्रकृतिविकृतिभावाभावात् वाजपेयप्रकरणे पयोग्रहानभिधानाच्चेति भावः। *तत्प्रख्येति। "तत्प्रख्यं चान्यशास्त्रम्"इति जैमिनिसूत्रम्। कर्मनामधेयस्य कस्यचिद्योगरूढत्वमस्तीति तदर्थः। प्रकृते च वाजोऽन्नं सुराख्यं हुत्वा पेयं यत्रेति व्युत्पत्त्या तत्र सुरापाननियमप्रतीतेरित्यर्थः। ननु त्रिकाण्डमण्डनेन पयोग्रहग्रहणेन वाजपेयेऽधिकार उक्त इत्यत आह-*त्रिकाण्डेति। *निर्मूलमिति।

(१) 'विशेषणाविवक्षया' ख० (२) 'न तु सौत्राम' ग० ख०

*एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।

इति उक्तः । अघस्याशौचस्य संकोचः

*न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ।

इत्युक्तस्य प्रायश्चित्तस्य विधानम् *उपदेशः । *'कलौ कर्तैव लिप्यते' इति व्यासोक्तेः पतितसंसर्गे दोषसत्त्वेऽपि पातित्यं नेत्यर्थः, *अन्यथा 'संसर्गः शोधितैरपि'

---

कल्पकारैस्तदनभिधानात् । *अनाकरमिति । कल्पसूत्रभाष्यादावपि पयोग्रहप्राप्त्यनभिधानात् । *वृत्तेति । वृत्तमग्निहोत्राद्यनुष्ठानं, स्वाध्यायो वेदाध्ययनम् । *एकाहादिति ।

पृथग्वेदाग्नियुक्तस्य त्र्यहमाशौचमिष्यते ।

इत्यादेरुपलक्षणमेतत् ।

दशाह एव विप्रस्य सपिण्डमरणे सति ।

कल्पान्तराणि कुर्वाणः कलौ भवति किल्बिषी ॥ इति(१) ।

प्रायश्चित्तविधानं चेति व्याचष्टे—*न तस्येति । कामकृते महापापादौ । उपदेश इति । स्वयमेव धर्मशास्त्राज्ज्ञात्वाऽन्यापदेशेन वा पृष्ट्वा तदनुष्ठानं तु न वार्यते,

मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ।

इति मानवे मतिपूर्वपदोपादानात् । संसर्गदोष इति व्याचष्टे-*कलाविति । अत्र दोषपदं यथाश्रुतमलग्नकम् ,

आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् ।

संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि ॥

इति पराशरोक्तेर्निर्विषयतापत्तेः ।

अतः संवत्सरेण पतति पतितेन सहाचरन् ।

इति प्रतिपादितं पातित्यं दोषः, तच्च कर्मानधिकारोऽसंव्यवहार्यता चेति, तन्नेत्यर्थः । स्वयं बाधकमाह—*अन्यथेति । दोषपदस्य दोषसामान्यार्थकत्वे

---

(१) 'इति वा स्यात्' घ० ङ० ।

सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ।

इति शोधितसंसर्गे दोषः, इह तु पतितसंसर्गे दोषाभाव इति विरोधापत्तेरित्यर्थः, 'कलौ कर्त्तैव' इति व्यासेन तस्य कर्त्तर्येव परिसंख्यानात्, 'कलौ पतति कर्मणा' इति पराशरोक्तेश्च । नव्यास्तु

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे ॥

इतिपराशरवचनेन संलापादिनवविधसंसर्गाभावेऽपि विहितोपदेशादित्याहुः ।

कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु ।
द्वापरे त्वन्नमादाय कलौ कर्त्तैव लिप्यते ॥

इति संभाषणादिजन्यपातित्यं वा दोषः, तस्यैव निषेधः न तु पतितेन सह संवत्सरं यावन्नवविधसंसर्गप्राप्तपातित्यं पूर्वोक्तवचनद्वयनाधमात्रेण चरितार्थस्य वाक्यस्य नवविधसं(१)सर्गप्रतिपादकवाक्यबाधकत्वायोगात्, 'कलौ पतति कर्मणा' इति पराशरवचनस्वारस्येन पतितसंसर्गरूपकर्मजन्यपातित्यस्य दुर्निवारत्वाच्च, पतितसंसर्गभिन्नेन ब्रह्महननादिकर्मणा पततीति व्याख्यानस्य निर्बीजत्वाच्च । किञ्च ब्रह्महननसुरापानगुरुतल्पगमनादिमहापापसंसर्गप्रायश्चित्तं कलौ न भवतीत्यर्थः । पराशरस्मृतावेव—

चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके ।
समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥
मद्यपश्च द्विजः कुर्यान्नदीं गत्वा समुद्रगाम् ।
चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ॥
अनडुत्सहितां गां च दद्याद्विप्रेषु दक्षिणाम् ।
सुरापानं सकृत्कृत्वा अग्निवर्णां सुरां पिबेत् ॥
स पावयेदथात्मानमिह लोके परत्र च ॥ इति ।

---

(१)'संसर्गप्राप्तिबाधकवाक्यं' ग० ।

सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ।

इति शोधितसंसर्गे दोषः, इह तु पतितसंसर्गे दोषाभाव इति विरोधापत्तेरित्यर्थः, 'कलौ कर्त्तैव' इति व्यासेन तस्य कर्त्तर्येव परिसंख्यानात्, 'कलौ पतति कर्मणा' इति पराशरोक्तेश्च । नव्यास्तु

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे ॥

इतिपराशरवचनेन संलापादिनवविधसंसर्गाभावेऽपि विहितोपदेशादित्यागः ।

कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु ।
द्वापरे त्वन्नमादाय कलौ कर्त्तैव लिप्यते ॥

इति संभाषणादिजन्यपातित्यं वा दोषः, तस्यैव निषेधः न तु पतितेन सह संवत्सरं यावन्नवविधसंसर्गप्राप्तपातित्यं पूर्वोक्तवचनद्वयबाधमात्रेण चरितार्थस्य वाक्यस्य नवविधसं(१)सर्गप्रतिपादकवाक्यबाधकत्वायोगात्, 'कलौ पतति कर्मणा' इति पराशरवचनस्वारस्येन पतितसंसर्गरूपकर्मजन्यपातित्यस्य दुर्निवारत्वाच्च, पतितसंसर्गभिन्नेन ब्रह्महननादिकर्मणा पततीति व्याख्यानस्य निर्बीजत्वाच्च । किञ्च ब्रह्महननसुरापानगुरुतल्पगमनादिमहापापसंसर्गप्रायश्चित्तं कलौ न भवतीत्यर्थः । पराशरस्मृतावेव—

चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके ।
समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥
मद्यपश्च द्विजः कुर्यान्नदीं गत्वा समुद्रगाम् ।
चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ॥
अनडुत्सहितां गां च दद्याद्विप्रेषु दक्षिणाम् ।
सुरापानं सकृत्कृत्वा अग्निवर्णां सुरां पिबेत् ॥
स पावयेदथात्मानमिह लोके परत्र च ॥ इति ।

---

(१) 'संसर्गप्रातिबाधकवाक्य' ग० ।

ब्रह्महमद्यपसुरापनिष्कृतीनाम् 'आसनाच्छयनाद्यानात्' इति संसर्गमभिधाय

चान्द्रायणं यावकं च तुलापुरुष एव च ।
गवां चैवानुगमनं सर्वपापप्रणाशनम् ॥

इति महापातकसंसर्गादिनिष्कृतेश्चोक्तत्वात् । न च पराशरोक्तस्य कलिनिषेधेन बाधः,

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥

इति पराशरेणैव विरोधे स्वस्मृतिप्राबल्योक्तेश्च । तस्मात्पतितसंसर्गे प्रायश्चित्ताचरणं कार्यमेवेति । अन्ये तु 'त्यजेद्देशं कृतयुगे' इत्याद्युक्तदेशादित्यागस्य 'कृते संभाष्य पतति' इति संभाषणादिजन्यपातित्यस्य वा न निषेधः, कलौ युगान्तरोक्ताप्राप्तेर्निषेधासंभवात् । तस्मात् 'कलौ पतति कर्मणा' इति कलौ कर्मणा ब्रह्महननादिना पतति न तु संसर्गेणेति व्याख्येयम् । इदानीन्तनानां संसर्गनिमित्तकप्रायश्चित्ताचरणं च पापक्षयार्थमेवेति ग्रन्थं समर्थयन्ते । अत्र केचिदुपन्यस्यन्ति—पापस्य अव्यवहार्यत्वं नरकोत्पादकत्वं "द्विजातिकर्मभ्यो हानिः पतनम्" इति गौतमात् ।

अधोऽधः पतनात्पुंसां पातकं परिकीर्त्तितम् ।
नरकाग्निषु घोरेषु पतनात्पापमुच्यते ॥

इति भविष्यात् । तत्र नरकोत्पादकत्वसत्त्वेऽप्यव्यवहार्यत्वं नास्तीति कथमुच्यते ? (१)न च प्रायश्चित्तेन नरकोत्पादकत्वेऽपि व्यवहारनिरोधिकाया नाशवदेतदिति वाच्यं, वैषम्यात् । तथाहि, अकामकृतस्य महापापादेः प्रायश्चित्तेन नाशः कामकृते तु व्यवहार्यतामात्रं

प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्यस्तु वचनादिह जायते ॥

(१) 'तत्र प्रा' घ० ङ० ।

इति विरोधापत्तेः। *स्तेयभिन्ने महापापे *रहस्यकृते

---

इति शास्त्रात्,

विहितं यदकामानां कामात्तद्द्विगुणं भवेत्।

इति वचनान्यथानुपपत्तेश्च, इह तु

पतितेन सहोषित्वा जानन्संवत्सरं द्विजः।

निश्चितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्॥

इति देवलोक्तेः संसर्गिणोऽप्यब्दान्ते पातित्येन प्रायश्चित्तं विना व्यवहाराङ्गीकारासंभवात् ब्रह्महननादिना शक्तिद्वयवत्पापं जायते संसर्गेण त्वेकशक्तिमत्पापमित्यत्र नियामकाभावाच्च। महापापे मरणान्तस्य प्रायश्चित्तत्वे व्यवहारानुपयोगित्वान्नरकानिवर्त्तकमात्रं परिशेषात्तु व्रतात्मकं व्यवहारोपयोगि, प्रकृते तु व्यवहारस्य प्रागेव सिद्धत्वात्तद्भङ्ग इत्यादिदूषणगणापत्तेः। "कामतोऽव्यवहार्यस्तु" इत्यत्राकारप्रश्लेषेणाव्यवहार्यत्ववादिनां शंकराचार्याणां सं(१)सर्गपातित्ये व्यवहाराभावस्येष्टत्वात्। तस्मात्संसर्गदोष इत्यस्य ब्रह्महननादौ प्रायश्चित्ते कृतेऽपि व्यवहाराभावः। संसर्गे तु कलौ प्रायश्चित्ते कृते स(२)ति स नास्तीत्येवार्थ इति। संसर्गदोष इत्यत्र संसर्गपदं संसर्गिसंसर्गपरं 'कर्त्तारं तु कलौ युगे' इति कर्तृत्यागविधिना तत्संसर्गे दोषप्रत्ययात्। 'कलौ कर्त्तैव लिप्यते' इति तु साक्षात्संसर्गिणः पातित्याभावव्यञ्जकमिति तु भट्टदिनकरः। 'स्तेयान्य' इति व्याचष्टे-*स्तेयभिन्ने इति। नन्वत्र स्तेयान्यमहापापेन प्रायश्चित्तं न कार्यमित्यसंगतं पराशरेणैव प्रत्येकं महापापे प्रायश्चित्ताम्नानात्।

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः।

द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः॥

इति पराशरस्मृतेः कलौ बलीयस्त्वादित्यत्राह-*रहस्येति। 'तस्मात्प्रकाशयेत्पापम्' इति पराशरोक्तेः कलौ प्रकाशप्रायश्चि-

---

(१) 'संसर्ग' नास्ति घ० ङ०। (२) 'सति' नास्ति घ० ङ०।

प्रायश्चित्तं नेत्यर्थः । *सवर्णान्या असवर्णा क्षत्रियादिस्तया दुष्टैः । *अयोनौ शिष्यादौ ।

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।

इत्युक्तस्त्यागः । *परोद्देशेन ब्राह्मणाद्यर्थमात्मन-

---

स्त्वमेव कार्यमिति भावः । यत्तु 'कलौ पाराशरा' इति वाक्ये नस्तेयान्येत्यस्य सर्वथा बाधे विषयान्तराभावादप्रामाण्यमतः स्तेयान्यमहापातकानिष्कृतिर्नोपदेश्या । उपदेशेऽपि संसर्गो न कार्य इति वा तात्पर्यम् । 'औदुम्बरी सर्वा वेष्टनीया' इति स्मृतेः 'अष्टकाः कर्त्तव्याः' इतिवन्मूलभूतश्रुतेरनुमानद्वारा प्रामाण्यं प्रापय्य "औदुम्बरीं स्पृष्टोद्गायेत्" इति प्रत्यक्षश्रुत्या बाधाच्छिद्रकुलादिपरिहारेण सर्वा वेष्टनीयेति कल्पनावदिति;तन्न, प्रायश्चित्तविधानं चेति तदुपदेशस्य निषिद्धत्वात्, ब्राह्मणभोजनविधिसार्थक्याय संसर्गस्येष्टत्वाच्च । स्तेयपर्युदासश्च तत्र रहस्यप्रायश्चित्ताभ्यनुज्ञानार्थः । केचित्तु अकामकृतेषु स्तेयान्यमहापापे नरकक्षयार्थं निष्कृतिर्न कार्या व्यवहार्यत्वार्थं तु कार्या मरणान्तिकप्रायपाठादिस्याहुः । सवर्णान्येति व्याचष्टे—*सवर्णान्येति । दुष्टिः मैथुनादिः । शोधितैः कृतप्रायश्चित्तैः । न च ब्राह्मणादेः क्षत्रियाद्युद्वाहनिषेधेनैव तत्संपर्को निषिद्ध इति वार्त्तमेतदिति वाच्यम् एतद्वाक्यस्य ही(१)नवर्णासंपर्कविषयकत्वात् । तादृशसंपर्ककृतप्रायश्चित्तानां संसर्गस्य पूर्वयुगेऽनुज्ञातस्य कलौ निषेध इति ग्रन्थस्तु अनुद्वाहेऽपि व्यभिचारादिप्रायश्चित्तानन्तरं संसर्गो नेत्येतत्पर इत्याहुः । अयोनाविति व्याचष्टे—*अयोनाविति । गुरुस्त्रियाः ब्राह्मणस्त्रियाः संग्र(२)हे गर्भधारणे परित्यागो गृहान्तरावस्थानम् ।

पतिघ्नी च विशेषेण जुङ्गितोपगता च या ।

इति उत्तरार्द्धम् । जुङ्गिता हीनयोनिः । युगान्तरे त्वयोनौ संग्रहे परित्याग इवेति भावः । परोद्देशेति व्याचष्टे—*परोद्देशे-

---

(१) 'हीनवर्णस्योत्तमवर्णा' घ० ङ० ।(२) 'संसर्गे गर्भधारणे' घ० ङ० ।

स्त्यागः । *यद्वा परोद्देशात्मत्यागो गोदानं 'मनसा पात्रमुद्दिश्य' इत्युक्तम् । *उद्दिष्टस्य त्यक्तस्य वर्जनं *'प्रतिग्रहसमर्थोऽपि' इत्युक्तम् । *वेतनग्रहणेन प्रतिमापूजा ।

*स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः ।

इत्युक्तः स्पर्शः । *षडिति ।

---

नेति ।

गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत् ।

इति विहितः । *यद्वेत्यादि । इदं च न सम्यक् बहुग्रन्थविरोधात् । उद्दिष्टस्यापीति व्याचष्टे-*उद्दिष्टस्येति । *प्रतीति ।

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ।

इत्यर्थः । प्रतिग्रहसामान्यनिषेधः कलौ वर्ज्य इत्यर्थः । केचित्तु 'उच्छिष्टस्यापवर्जनम्' इति पाठः, 'स्त्राम्युच्छिष्टमुच्छिष्टोपहतं च' इति वसिष्ठाद्युक्तं, तन्निमित्तकप्रायश्चित्तं नेत्यर्थ इत्याहुः । अन्ये तु अपवर्जनं दानम्

विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।

प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥ ( अ० को० )

इति त्रिकाण्डीस्मरणात् । "उदगुच्छिष्टं ब्राह्मणाय प्रयच्छेत्" इति मधुपर्कविहितं तन्नेत्यर्थ इत्याहुः । परंतु उच्छिष्टस्यापि वर्जनमिति पाठः । उच्छिष्टस्य ताम्बूलचर्वणाद्युच्छिष्टस्य पथि वर्जनमित्याहुः । प्रतिमेति व्याचष्टे-*वेतनेति । यावज्जीवं मया इयमेव प्रतिमा पूजनीयेत्येवमुद्देश्याद्युल्लेखपूर्वकसंकल्पोपलक्षणमेतत् । अस्थीति व्याचष्टे-*स्वाशौचेति । षड्भक्तेति व्याचष्टे-*षडिति । षण्णां भक्तानामनशनम् उपवासत्रयं,

तथैव(१)सप्तमे काले भक्तानि षडनश्नता ।

अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मणः ॥ (११-१६)

---

(१) 'सप्तमे भक्ते' इति मनुस्मृतौ ।

उपोषितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् ।

इत्युक्तम॥अन्नचौर्यम् । *आपदि*क्षात्रादिवृत्तिः ।
*'मुखेनैव धमेदग्निम्' इत्युक्तं धमनम् ।

*'दशाहेनैव शुद्ध्येत भूमिष्ठं च नवोदकम् ।

इत्युक्तो दशाहः । *'गुरवे तु वरं दत्त्वा' इत्युक्ता दक्षिणा । *शूद्रेषु दासगोपालेति ।

कन्दूपक्वं स्नेहपक्वं यच्च दुग्धेन पाचितम् ।

एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

इत्यपरार्के सुमन्तूक्ता*शूद्रस्य पाकक्रिया ।

*पितापुत्रविवादे तु साक्षिणां त्रिपणो दमः ।

---

इति मानवमपि संगृहीतमित्याह—*अन्नचौर्यमिति । आपदीति व्याचष्टे—*आपदीति । *क्षात्रादीति ।

क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः ॥

इति विहितम् । *मुखेनैवेति ।

मुखेनैव धमेदग्निं मुखाद्ध्येषो ह्यजायत ।

नाग्निं मुखेनेति तु यल्लौकिके योजयेत्तु तत् ॥

इतीत्यर्थः । नवोदके इति व्याचष्टे—*दशाहेनैवेति । शुध्येतेतिपाठः । कलौ नवोदके दशाहं त्याज्यत्वं नेत्यर्थः ।

काले नवोदकं शुद्ध्येन्न पिबेच्च त्र्यहं तु तत् ।

अकाले तु दशाहं स्यात्पीत्वा नाद्यादहर्निशम् ॥

इति दशाहप्रतिषेधस्यापवादः त्रिरात्रप्रतिषेधप्राप्त्यर्थः । अन्यथा काले त्र्यहप्रतिषेधः अकाले तु न किञ्चिदित्यनौचित्यापत्तेः । दक्षिणेति व्याचष्टे—*गुरवे त्विति । लाभे मूलानां दक्षिणां ददातीति विहिता दक्षिणापीह द्रष्टव्या । ब्राह्मणादिष्विति व्याचष्टे—*शूद्रेष्विति । पचनादीत्यादिना भोजनग्रह इत्याशयेनेदम् । *शूद्रस्येति । अत्रोभयत्राप्यर्थतः पाकक्रिया लभ्यते शूद्रकर्तृकपाकं विना तद्भोजनाभावात् । "आर्याधिष्ठिताः शूद्राः संस्कर्तारः स्युः"

इत्युक्तः । सायंगृहत्वं*'विधूमे सन्नमुसले' इत्युक्तम् ।
*पृथ्वीचन्द्रेण तु—

अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च ।
अनिकेता ह्यनाहारा यत्र सायंगृहास्तु ते ॥

इति विष्णुपुराणोक्तो निषिद्धः । *तेनाज्ञातशीलपान्थादेः श्राद्धादौ विनियोगो न कार्यः कलावित्यर्थ उक्तः । एतानि वर्ज्यानीत्यर्थः ।

---

इत्यापस्तम्बोक्तमपि हि ब्राह्मणगृहे शूद्रस्य पक्तृत्वे द्रष्टव्यम् । पितेति व्याचष्टे—*पितेति । यतेरिति व्याचष्टे—*यतेरिति । *विधूमे इति ।

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
कालेऽपराह्णभूयिष्ठे नित्यं भिक्षां यतिश्चरेत् ॥

इत्यर्थः । गृहपदस्य भिक्षार्थं गृहगमनपरत्वादिति भावः । यत्र सूर्यास्तो जातस्तत्रावस्थानं सायंगृहत्वमिति मतमाह—*पृथ्वीति । सायंगृहा इति तत्र मध्यम् । यद्यपि "अष्टौ मासान्निराहारः स्यात्"इत्यस्यैकवाक्यतया अनिकेता इति यतिपरमेव, तथाप्यनाहारा इत्यनेनाहारसामान्याभावबोधनासंभवादज्ञातेत्युक्तम् । अत एवोक्तो निषेध इत्यसमस्ताभिधानम् । यतिपदं चाविवक्षितार्थकं, विप्रा इति सामान्यतोऽभिधानात् । शीलपदेन कुलमप्युपलक्षणीयं, तेन गृहस्थादेरपि संग्रहः । वस्तुतस्तु उक्तानिषेध इति पाठः । उक्तस्य निषेध इत्यर्थः । अनिकेतत्वे सत्यनाहारस्य यतिष्वेव सत्त्वात् यतेरित्यपि विवक्षितम् । तत्र च यत्र सूर्यास्तो जातस्तत्रैव यतेरवस्थानं तद्वर्ज्यमित्यर्थः । *तेनेति । अत्र—

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु । इति,

'यच्छ्राद्धं मधुना हीनं' 'मधुप्रधानं शूद्रस्य' इत्यादेर्विषयं वक्ष्यति ।

निगमः—

अग्निहोत्रं गवालम्भं सं(१)न्यासं*पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

अग्निहोत्रं तदर्थमाधानम् । एतच्च सर्वाधानपरम्,

अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयु(२)गाश्रिता ॥

इति लौगाक्षिवचनादिति स्मृतिचन्द्रिकायाम् । एतेन—

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता ।

इति व्यासवचनं व्याख्यातम् । सर्वाधानेपि विशेषमाह

---

*पलपैतृकं पैतृकं मांसम् । ननु पूर्वयुगाश्रितेत्यत्र पूर्वयुगेत्यस्य पूर्वयुगानि कृतादीनि, युगस्य कलेः पूर्वो भाग इति वार्थः ? नाद्यः, एतेनेत्यादिविरोधात्, 'चत्वार्यब्दसहस्राणि' इति कलौ त्रेतापरिग्रहविधानात् । नान्त्यः, प्रकृ(१)तोपष्टम्भकतापत्तेः । अत्रोच्यते—आद्य एवार्थो ग्रन्थकृत्संमतो नापरः, एकदेशिसमासे लक्षणाप्रसङ्गात् । एवञ्च सामान्यतो निषिद्धमपि सर्वाधानं व्यासवाक्येन पुनः प्रतिप्रसूयते इति । यावद्वर्णेति चार्द्धाधानपरं न्यायप्राप्तानुवादः । वेदोच्छेदे व(२)र्णसंकरे वाऽधिकाराभावादेव तन्निवृत्तेः प्राप्तत्वात् । सर्वाधानेऽपि तु विशेषमित्यस्यावधिविशेषपरिच्छिन्ने सर्वाधानेऽर्धाधानावधिमित्यर्थः । *त्रिदण्ड इति । वैयासकी संख्या त्वेकदण्डपरा । गारुडे—

कलौ न क्रियते अश्वमेधो वाप्यथ गोसवः ।
नरमेधोऽक्षता नारी देवरात्पुत्रसंततिः ॥
गर्हितं सप्तकं ह्येतद्राजसूयकमण्डलू ।

---

(१) 'ज्येष्ठांशं गोवधस्तथा' क० । (२) 'युगाश्रया' ख० ।

(१) 'प्रकृतानुपलम्भकतापत्तेः' घ० ङ० । (२) 'वर्णसंस्कारे वाधि' ख० ।

देवलः—

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।

संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे ॥ इति ।

अत्र पूर्वयुगाश्रितेति लौगाक्षिवाक्ये पूर्वयुगानि कृतादीनीत्येकोऽर्थः । अन्ये तु युगस्य पूर्वं कलेः पूर्वभागः । स 'चत्वार्यब्दसहस्राणि' इति पूर्वोक्तवाक्याच्चतुश्चत्वारिंशच्छतवर्षावच्छिन्नः । तस्मिन्भागे सर्वाधानं कार्यम् । तदुत्तरं तु यावद्वर्णविभागोऽस्तीति वाक्यात् वर्णविभागपर्यन्तमर्धाधानमित्याहुः । संन्यासश्त्रिदण्डः ॥

इति श्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृते निर्णयसिन्धौ कलिवर्ज्यानि समाप्तानि । तृतीयपरिच्छेदपूर्वभागः समाप्तः ।

---

आदित्यपुराणे-

समयाः शकुनाः प्रश्नाः सामुद्रिकमुपश्रुतिः ।

उपयाचितमादेशा न भवन्ति कलौ क्वचित् ॥

तस्मात्तन्मात्रलाभेन कलौ कार्यं न कारयेत् ।

इति कलिवर्ज्यग्रन्थः ।

अथ संक्षेपतः कलिधर्माः । पराशरः—

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।

द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥

स्मृत्यन्तरोक्ता विरुद्धा धर्मा युगान्तरपरा इत्यर्थः । ब्रह्माण्डे—

त्रेतायां पाक्षिको धर्मो द्वापरे मासिकः स्मृतः ।

यथाशक्ति परः प्राज्ञस्तदह्ना प्राप्नुयात्कलौ ॥

**वैष्णवे—**

यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन यत् ।
द्वापरे तत्तु मासेन अहोरात्रेण तत्कलौ ॥

**काशीखण्डे—**

कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी ।
कलौ भागीरथी गङ्गा कलौ दानं विशिष्यते ॥

**आग्नेये—**

नास्ति श्रेयस्करं नृणां विष्णोराराधनात्परम् ।
कुर्वीताराधनं राजन्वासुदेवे कलौ युगे ॥

**नारदीये—**

शिवपूजापरा ये तु शिवनामपरायणाः ।
त एव शिवकल्पाश्च घोरे कलियुगे द्विजाः ॥
अतीवभाग्यास्ते विप्राः सकृद्ये के शिवार्चकाः ।
घोरे कलियुगे प्राप्ते सर्वधर्मबहिष्कृते ॥

**मात्स्ये—**

ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम् ।
अविमुक्तं न मुञ्चन्ति कृतार्थास्ते नरा भुवि ॥
गीता गङ्गा तथा भिक्षुः कपिलाऽश्वत्थसेवनम् ।
वासरः पद्मनाभस्य सप्तकं न कलौ युगे ॥

पद्मनाभस्य वासर एकादशी । अविमुक्तेन सहैतत्सप्तकं कलौ न दुर्लभमिति यावत् ।

कृते सर्वत्र तीर्थानि त्रेतायां पुष्करं स्मृतम् ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् ॥

**पराशरः—**

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमित्याहुर्दानमेव कलौ युगे ॥

भागवते—

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥

विष्णुधर्मे—

चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत् ।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः ॥

स्कान्दे—

तन्नास्ति कर्म यल्लोके वाग्जं मानसमेव वा ।
यत्तु न क्षीयते पापं कलौ गोविन्दकीर्त्तनात् ॥

विष्णुपुराणे—

ध्यायन् कृते, यजन् यज्ञैस्त्रेतायां, द्वापरेऽर्चयन् ।
यदाप्नोति, तदाप्नोति कलौ संकीर्त्य केशवम् ॥
अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

स्कान्दे—

यत्र विष्णोः कथा नित्या यत्र तिष्ठन्ति वैष्णवाः ।
कलिबाह्या नरास्ते वै येऽर्चयन्ति सदा हरिम् ॥

भारते—

कलौ पित्रादिदोषघ्ना विषयाकुष्टमानसाः ।
कृत्वापि सकलं पापं गोविन्दं संस्मरन् शुचिः ॥

स्कान्दे—

कलौ कृष्णस्य ये नित्यं क्रियायोगं वदन्ति ये ।
तैर्नरैर्[illegible]देहैः पवित्रा धरिणी कृता ॥
ये वै निन्दन्ति कृष्णस्य क्रियायोगं कलौ नराः ।
कल्पकोटिसहस्राणि ते वसन्ति यमालये ॥

इत्याद्यन्यत्र विस्तरः ।

नमो नारायणायेति कीर्त्तयन्ति च ये नराः ।
निष्कामा वा सकामा वा न कलिर्बाधते हि तान् ॥

प्रह्लाद उवाच—

स गङ्गा स गया सेतुः स काशी स च पुष्करम् ।
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम् ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ऽप्यथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
तानि प्राप्तानि येनोक्तं हरिरित्यक्षरद्वयम् ॥
वाराणस्यां कुरुक्षेत्रे नैमिषारण्य एव च ।
इष्टं स्यात्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥
अश्वमेधैर्महायज्ञैर्नरमेधैस्तथैव च ।
इष्टं स्यात् तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥
गवां कोटिप्रदानेन हेमकन्यासहस्रकम् ।
दत्तं स्यात्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ।
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥
प्रह्लादेन कृतं स्तोत्रं दुःखसागरशोषणम् ।
यः पठेत्स नरो याति तद्विष्णोः परमं पदम् ॥

भारते—

सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः ।
यस्त्वोंनमः शिवायेति मुच्यते तु कलौ नरः ॥

भविष्ये—

शिव शङ्कर रुद्रेश नीलकण्ठ त्रिलोचन ।
इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः ॥
ध्यानं परं कृतयुगे त्रेतायां यजनं तथा ।
द्वापरे लिङ्गपूजा च कलौ शंकरकीर्त्तनम् ॥

लैङ्गे—

प्रसङ्गेनापि शाठ्येन दम्भेनापि हि लोभतः ।
ये सेवन्ते महादेवं न ते पश्यन्ति भास्करिम् ॥

शिवभक्तिं प्रकुर्वाणो ये द्विषन्ति जनार्दनम् ।
तेषां निरयपातस्तु तावत्काल उदाहृतः ॥

काशीखण्डे—

न सिध्यति कलौ योगो न सिध्यति कलौ तपः ।
न्यायार्जितधनोत्सर्गः सद्यः सिध्येत्कलौ सदा ॥
न व्रतं न तपो नेज्या न जपो न सुरार्चनम् ।
दानमेव कलौ मुक्त्यै काश्यां दानं विशिष्यते ॥
कलिस्तान्नैव बाधेत कालस्तांश्च जिघांसति ।
एनांसि तान्न बाधन्ते ये च काशीं समाश्रिताः ॥

सौरे—

तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम् ।
वाराणसी तु नगरी प्रिया देवस्य शूलिनः ॥
यत्र विश्वेश्वरो देवः सर्वेषामेव देहिनाम् ।
ददाति तारकं ज्ञानं संसारो मोचकं परम् ॥

अथ गङ्गा । कौर्मे—

कृते तु सर्वतीर्थानि त्रेतायां पुष्करं परम् ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते ॥
पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥

कामिके—

विना गङ्गां धर्ममयीं कथं स्याच्च कलौ गतिः
शिरसः कर्त्तनं तस्य प्राणत्यागोऽपि वा वरः ।
समर्थस्तु कलौ काले गङ्गां यो नाभिगच्छति

भाविष्ये—

कलौ कलुषचित्तानां परद्रव्यरतात्मनाम् ।
विधिहीनक्रियाणां च गतिर्गङ्गां विना न हि ।
अनाश्रित्य तु गङ्गां हि मुक्तिमिच्छति यः कलौ
सूर्यं द्रष्टुमिहोद्युक्तो जात्यन्धसदृशस्तु सः ॥

भविष्ये—

मनोवाक्कायदुष्टानां पतितानां कलौ युगे ।
सैवेह शरणं गङ्गा पतितत्रायणोद्यता ॥
संसारार्णवमग्नानां भूतानां शरणार्थिनाम् ।
नान्यः शरणदः कश्चिदुपायो दृश्यते क्वचित् ॥
विना गङ्गां धर्ममयीं शरण्यां सर्वदेहिनाम् ।
महापातकसंहर्त्रीं सर्वसर्वार्थसाधिकाम् ॥

नारदीये—

कलौ यत् परमं ब्रह्म प्राप्तये सत्वरं नृणाम् ।
गङ्गाभजनमेवाहुर्महापुण्यं महर्षयः ॥
घटध्वं हे बुधा गङ्गां मत्वा विश्वमशाश्वतम् ।
घोरे कलियुगे प्राप्ते मुक्तिर्वो वाञ्छिता यदि ॥
गुणानामेकदेशोऽयं गङ्गायाः कीर्त्तितो मया ।
समस्तानीह को वक्तुं शक्तो वर्षशतैरपि ॥

महाभारते—

न गङ्गासदृशं तीर्थं न देवः केशवात्परः ।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥

दानधर्मे—

ते देशास्ते जनपदास्ते शैलास्तेऽपि चाश्रमाः ।
येषां भागीरथी पुण्या मध्ये याति सरिद्वरा ॥

ब्रह्माण्डे—

शतयोजनसंस्थास्तु गङ्गां भक्त्या स्मरन्ति ये ।
गङ्गा गङ्गेति यो ब्रूयान्मुच्यते सर्वपातकैः ॥

तथा—

यत्र तत्र स्थितो वापि मरणे समुपस्थिते ।
भक्त्या गङ्गां स्मरन् याति नरो विष्णुपुरं परम् ॥

ब्राह्मे—

ज्ञानतोऽज्ञानतो वापि कामतोऽकामतोपि वा ।
गङ्गायां तु मृतो मर्त्यो मोक्षं स्वर्गं च विन्दति ॥
क्षितौ तारयते मर्त्यान्नागां(?)स्तारयतेऽप्यधः ।
ऊर्ध्वं तारयते देवांस्तेन सा त्रिपथा स्मृता ॥ इति ।

इति पूर्वार्धः ।

॥ श्रीः ॥

# सटीके निर्णयसिन्धौ

## तृतीयपरिच्छेदोत्तरार्धे

## श्राद्धप्रकरणम् ।

नानानिबन्धवैमत्यभ्रान्तचित्तोद्दिधीर्षया ।
कमलाकरसंज्ञेन क्रियते श्राद्धनिर्णयः ॥

तत्स्वरूपमाह पृथ्वीचन्द्रोदये मरीचिः—

प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः ।
श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम् ॥

*ब्राह्मणस्वीकारान्तश्चतुर्थ्यन्तपदोपनीतपित्राद्युद्देश्यकस्त्यागः श्राद्धमित्यर्थः । तत्र यद्यपि होमपिण्डभो-

---

श्राद्धलक्षणं परिष्कुरुते—*ब्राह्मणेति । एतच्च तर्पणवारणाय, तत्र विप्रस्वीकाराभावात् । न तु त्यागाभावात्, 'इन्द्र ऊर्ध्वो अध्वर' इतिवद् द्रव्यदेवतासंयोगेन त्यागस्य तत्रापि कल्पनीयत्वात् । 'न मम' इत्यभिलापस्तु नास्ति, आचाराभावाव । यत्रैव यागाग्निहोत्रादौ तदाचारस्तत्रैव तन्मूलतया श्रुतिः कल्प्यते, न सर्वत्र । अत एव भूतबल्यादावपि न तदभिलापः । मानसस्तु त्यागः सर्वत्रैवाविशिष्टः । न च तर्पणे देवतैव नास्ति, "देवतास्तर्पयति" इत्याश्वलायनादिभिर्देवतापदेनैव तदुक्तेः । अ(१)न्तपदं च विप्रस्वीकारस्य श्राद्धस्वरूपघटकतावारणार्थम्, "पितरो देवता ब्रा(२)ह्मणास्त्वाहवनीयार्थे" इत्यादिनाऽपस्तम्बादिभिराहवनीयाधिकरण-

---

(१) 'अन्तपदं' मूले । (२) 'ब्राह्मणस्तु' ङ० ।

जनानि प्रधानमिति हेमाद्रिः,—

होमश्च पिण्डदानं च तथा ब्राह्मणभोजनम् ।
श्राद्धशब्दाभिधेयं स्या*देकस्मिन्नौपचारिकम् ॥

इति श्रीधरश्च, तथापि*क्वचिद्विशेषं वक्ष्यामः । *निमित्तभेदे भोजनस्य पिण्डानां वा निषेधो न प्राधान्यं विरुणद्धि *असोमयाजिनो दधिपयोयागवत् । यच्च शूलपाणिः—

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम् ।

इति हारीतीये नित्यश्राद्धमघादौ पिण्डनिषेधोऽस्ति ।

---

कहोमवत्त्यक्तद्रव्यप्रतिपत्तित्वव्यञ्जनात् । 'ब्राह्मणस्वीकारान्त' इति त्वशुद्धं, पिण्डदानस्यात(१)थात्वे प्राधान्यापत्तेः । इष्टापत्तौ 'पिण्डानां निषेधो न प्राधान्यम्' इति ग्रन्थासङ्गतेः उपनी(२)तत्वं च दैवतास्वत्वव्यञ्जकत्वार्थं न तु लक्षणघटकं, व्यर्थत्वात् । मृतोद्देश्य(३)कत्वं विवक्षितम् । जीवच्छ्राद्धे दे(४)वताश्राद्धे च श्राद्धपदं गौणं कुण्डपाय्यग्निहोत्रपदवत् । श्राद्धत्वस्य व्यासज्यवृत्तित्वमुपेत्याह—*एकस्मिन्निति । *क्वचिदिति । पिण्डदानविप्रभोजनयोः प्राधान्यम्, फलसम्बन्धात् । न त्वग्नौकरणस्य 'सोमाय पितृमते' इति(५) मन्त्रगतपितृपदस्याग्निष्वात्तादिपरत्वात्पित्राद्युद्देशे(६)त्वोद्देश्यतावच्छेदकत्वेऽप्यनुद्देश्यत्वात्, फलासम्बन्धाच्च । तयोश्च क्वचिद्द्वयोः क्वचिदेकतरस्यानुष्ठानमित्यत्र तु ऋषिवचांस्येव मानम् । एवं कुतः श्रा(७)द्धस्य व्यासज्यवृत्तित्वमव्यासज्यवृत्तित्वे बाधकाभावात् । ननु भोजनादेरपि प्राधान्यमनुपपन्नं तथात्वे तन्निषेधानुपपत्तेरित्यत आह—*निमित्तेति । *असोमेति । 'नासोमयाजी सन्नयेत्' इति प्रधानस्यापि नित्यस्य वैधसान्नाय्यस्य

---

(१) 'तथात्वेनाप्राधा' घ० ङ० । (२) 'नीतत्वान्तं च' ख० घ० ।
(३) 'मृतोद्देश्यत्वम' घ० । (४) 'देवश्राद्धे च' घ० ।
(५ 'इति मन्त्रस्थगत' ङ० । (६)'मेव मृतानामेव वोद्देश्य'घ० ।
(७) 'श्राद्धत्वस्य' घ० ।

नच प्राप्तिं विना सः । नचातिदेशं विना प्राप्तिः । नचा- ङ्गत्वेन विनातिदेशः प्रधानस्यानतिदेशात् । *सप्तमे उ- पकारकत्वेनातिदेशोक्तेः । तेन भोजनं प्रधानम्, पिण्डो- ऽङ्गम् । पिण्डदानमात्रविधिस्त्वङ्गभूतात्कर्मान्तरमेव, *प्र- करणान्तरन्यायादिति, तन्न;

जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
न पक्वं भोजयेद्विप्रान्सच्छूद्रोपि कदाचन ॥

इत्याद्यैर्जातश्राद्धशूद्रश्राद्धादौ भोजनस्य निषेधेना-

---

सोमयागो[illegible]विनिमित्तको यथा निषेधस्तथा विप्रालाभादिनिमित्त- को भोजनस्य मर(१)ण्यादिनिमित्तकश्च पिण्डदानादेर्निषेध इत्य- र्थः । *सप्तमे इति । यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेना- वधारितः, तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण तादृशोपकारद्वा- रैवान्याङ्गताबोधकं प्रमाणमतिदेशः । यथा "प्रकृतिवद्विकृतिः क- र्त्तव्या"इत्यादि । तत्र प्रयाजादिपदार्थानां यादृशोपकारद्वाराऽऽग्ने- याद्यङ्गत्वावधारणं, तेषामाग्नेयादिसम्बन्धित्वेन तादृशोपकारद्वारैव सौर्याद्यङ्गत्वबोधकम् । *प्रकरणान्तरेति । कौण्डपायिनामयने "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति"इत्यादौ । अत्र जुहोतिना दूरस्थस्यापि कर्मणः उपस्थिता तदनुवादेन मासादिरूपगुणवि- धिः । ( उपा(२)देयवदनुपादेयस्यापि तादृशकर्मानुवादेन विधाने बाधकाभावादिति प्राप्ते सर्वस्य प्रवर्तकस्य विधेः ) धात्वर्थनि- (३)ष्ठत्वेन कृतिविषयत्वरूपमनुपादेयत्वं प्रमाणत्वाच्चाज्ञातज्ञा- प्यत्वरूपं विधेयत्वं च प्रमेयम् । एवं च मासस्यानुपादे- यत्वाद्धात्वर्थ एवोपादेयत्वं तत्सामानाधिकरण्याच्च विधेयत्वमिति विहितस्य विधानायोगाद्भेदः, प्रकृतेऽपि पुनर्विधानाद्भेद इत्यर्थः ।

---

(१) 'मरण्यादिपिण्डनिमित्तकश्च' ख० ।
(२) धनुश्चिह्नान्तर्गतं नास्ति ख० ।
(३) 'नित्यत्वेन' ख० ।

त्त्वापत्तेः; *'न तौ पशौ करोति' इतिवदुपजीव्यविरोधेन विकल्पापत्तेश्च। *तेन श्राद्धशब्दाभिधेयत्वेनोभयप्राप्तौ निषेधः पर्युदासो वा *'दीक्षितो न ददाति न जुहोति' 'नासोमयाजी सन्न(१)येत्' इतिवदिति तत्त्वम्।

धर्मप्रदीपेऽपि—

*यजुषां पिण्डदानं तु बह्वृचानां द्विजार्चनम्।
श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम्॥

त(२)च्च 'पितॄन् यजेत, पितृभ्यो दद्यात्' इत्युभयप्रयोगदर्शनाद्यागदानोभयात्मकम्। 'पितरो देवता' इति

---

नैते पक्वनिषेधाः किन्त्वामादिविध्यर्थवादा इत्युक्तावप्याह—*न ताविति। तौ आज्यभागौ शास्त्रीयौ, प्राप्तिमुपजीव्य निषेधे तस्या अत्यन्तबाधासम्भवाद्विकल्पः। *तेन पिण्डदानादेरनङ्गत्वेन। नह्यातिदेशिक्येव प्राप्तिर्निषेधस्य पर्युदासस्य वोपजीव्या किन्त्वन्यादृश्यपीत्यत्र दृष्टान्तमाह--*दीक्षित इति। नित्यानां क्रत्वर्थानां च दानानां दानपदार्थत्वेन नित्यानामग्निहोत्रहोमादीनां काम्यानां चतुर्होतृहोमादीनां च होमपदार्थत्वेन प्राप्तौ दीक्षितस्य निषेधः। न चायं निषेधः दानहोमादिपदार्थगोचर इति कथमत्यन्तबाधो विकल्पविरहश्चेति वाच्यम्, दानहोमादिविधयः पुरुषार्थाः, निषेधस्तु प्रकरणात् क्रत्वव्यभिचारिदीक्षितसम्बन्धाच्च क्रत्वर्थः इति भिन्नविषयतया ईदृशविषये पुरुषार्थानामेव दीक्षितातिरिक्तपरताकरणात्।

*यजुषामिति। पिण्डदानमात्रमाधान्यवादिनां निषिद्धपर्युदस्तपिण्डदानके, विप्रभोजनमात्रप्राधान्यवादिनां तु निषिद्धार्युक्तविप्रभोजनके, प्रधानानन्त्वादङ्गमात्रमनुष्ठेयं स्यादत उभयप्राधा-

---

(१) 'सन्नयेत् इति तत्त्वम्' क०।
(२) धर्मप्रदीपस्थवचनं च।

पितृुद्देश्यकत्वाद्यागत्वं, *विप्रापेक्षया च दानत्वमित्यविरुद्धम् । एतेन नायं यागः । ( देव(१)तोद्देशेन त्यागो यागः ) यागोद्देश्या च देवतेत्यात्माश्रयादिति गौडमतमपास्तम् । वैधशब्दविशेषोद्देश्यत्वस्य तस्य इदमिति*स्वत्वारोपप्रतियोगित्वस्य वा देवतात्वात् । तत्रैव सुमन्तुः—

*श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् ।

आदित्यपुराणे—

न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥

तद्भेदानाह विश्वामित्रः—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥ इति ।

---

स्यासिद्धिस्तद्वादिनां प्रोक्तानिष्टाप्रसक्तेरित्यर्थः । *विप्रेति ।

देशे काले च पात्रे च श्रद्धया विधिना च यत् ।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥

इति वचनात् । विप्राणां पितॄणां च [illegible]योरपि कर्मण एकत्वात् । *स्वत्वेति । स्वत्वप्रतियोगित्वेनेच्छाविषयत्वमर्थः । तादृशेच्छायां स्वत्वारोपो बीजं, स्वीकाराभावेन स्वामित्वबाधात् ।

श्राद्धं त्रिविधम्—काम्यं नित्यं नैमित्तिकं च । काम्योपाधौ चोदितं काम्यम् । जीवनोपाधौ चोदितं नित्यम् अहरहरमावास्यादौ । अनियतनिमित्तकं उपरागादौ । तत्र श्राद्धस्य काम्यत्वं नित्यत्वं नैमित्तिकत्वं च क्रमेणाह—*श्राद्धादिति ।

---

( १ ) कंसान्तर्गतं नास्ति क० ।

एषां लक्षणानि भविष्ये—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।
वैश्वदेवविहीनं तदशक्तावु*दकेन तु ॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्तव्यमयुग्मान्भोजयेद्द्विजान् ॥
*कामाय विहितं काम्यमभिप्रेतार्थसिद्धये ।
वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ॥
गन्धोदकतिलैर्मिं(१)श्रं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
*नित्येन तुल्यं *शेषं स्यादे*कोद्दिष्टं *स्त्रिया अपि ॥

*एतदुभयमेव स्त्रियाः । तेन स्त्रीकर्तृकं स्त्रीसंप्रदानकं चेत्युभयनियम इति कल्पतरुः ।

---

*उदकं नित्यतर्पणम् ।

*कामायेति । नक्षत्रादौ । *नित्येनेति । *शेषम् अङ्गजातम् । सपिण्डीकरणस्योभयरूपत्वादेकोद्दिष्टांशे पार्वणांशे च क्रमेणा(२)नावश्यकर्त्तव्यत्वेनैकोद्दिष्टेन पार्वणेन च तुल्यं स्यादित्यर्थः । *एकोद्दिष्टं सपिण्डीकरणम् । *स्त्रियाः मातुः । मतमाह—*एतदिति । स्त्रिया अपीति स्त्रीशब्दः षष्ठ्यन्तः चतुर्थ्यन्तश्चेत्याशयः । एकोद्दिष्टं सपिण्डनं तदन्यैकोद्दिष्टान्यतरत् । अत्र स्त्रीकर्तृकं स्त्रीसंप्रदानकं वा एकोद्दिष्टमेवेति न नियमः, कर्तृसंप्रदान(३)योरन्यश्राद्धनिवृत्तिप्रसङ्गात् । नाप्येकोद्दिष्टं स्त्री(४)कर्तृकमेव स्त्रीसंप्रदानकमेव वेति, एकोद्दिष्टस्य पुरुषकर्तृसंप्रदानकत्वनि-

(१) 'युक्तम्' क० च० ।
(२) 'क्रमेण नित्येनावश्य' ग० ङ० ।
(३) 'संप्रदानयोः स्त्रियोरन्यश्राद्ध' घ० ङ० ।
(४) 'स्त्रीकर्तृकपदं स्त्रीसम्प्रदान' ङ० ।

*अमावास्यां यत्क्रियते तत्पार्वणमिति स्मृतम् ।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः ॥

*अत्र प(१)र्व—

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रमणं तथा ॥

इति विष्णुपुराणोक्तं संक्रान्त्यादि ।

गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां संपत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥
*निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥
*देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते ।

---

तृप्तिप्रसङ्गात् । एतेन स्त्रीकर्तृसंप्रदानकमेकोद्दिष्टमेवेत्याद्यपास्तमित्यरुचिः ।

*अमेति । अमायां पर्वशब्दः शक्तः । वाशब्दसङ्गतयेऽन्यत्र गौणीमाह—*अत्रेति । पार्वणशब्दो योगरूढः । तत्र योगो दर्शितः—

त्रीनुद्दिश्य च यत्श्राद्धं पार्वणं मुनयो विदुः ।

इति [illegible]त्रिपुरुषोद्देश्यकत्वे रूढिः । आब्दिकादौ पार्वणपदं गौणं, कौण्डपाय्यग्निहोत्रपदवत् ।

*निषेकेति श्रौतस्मार्तकर्मोपलक्षणम् ।

इष्टापूर्तादिके श्राद्धे वृद्धिश्राद्धवदाचरेत् ।

इत्यादिवचोनिचयश्चाग्रे विस्तृतः ।

*देवानिति । (२)तच्च द्वादश्याम् ,

---

(१) 'पर्वम्' क० ।
(२) 'एतच्च द्वादश्याम्' घ० ।

*गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ॥
यात्रार्थमिति तत्प्रोक्तं*प्रवेशे च न संशयः ।
*शरीरोपचये श्राद्धमर्थोपचय एव च ॥
पुष्ट्यर्थमेतद्विज्ञेयमौपचायिकमुच्यते ॥
*गोष्ठ्यां श्राद्धकर्तृसमुदाये संभूय सामग्रीसंपादनेन (श्रा(१)द्धमित्यर्थः)। *युगपत्तीर्थादिप्राप्तौ विदुषां श्रा-

---

देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ।
हविष्यश्राद्धवत्कुर्याद् द्वादश्यादिषु यत्नतः ॥

इति विश्वामित्रोक्तेरिति माधवः। श्राद्धसागरे च—

उत्पातादिनिमित्तेषु नित्यश्राद्धं तु दैविकम् ।
देवाँस्तूद्दिश्य विश्वादीन्प्रदद्याद्विप्रभोजनम् ॥

इति नैमित्तिकं दर्शितम् । *गच्छन्निति । तीर्थयात्रारम्भे इदम् । *प्रवेशे यात्रानन्तरगृहप्रवेशे । *शरीरेति । शरीरोपचयार्थभेषजादेरर्थोपचयार्थकृष्यादेश्च प्रयोगात् पूर्वमिति श्राद्धसागरकृतः। शरीराद्युपचयहेतुशान्त्यादावित्यन्ये । *गोष्ठ्यामिति । बहूनां विदुषां गोष्ठ्याम् इति योजना । *युगपदिति । तीर्थश्राद्धादेर्युगपत्कर्तव्यतया प्राप्तौ भिन्नपाकाशक्तौ विदुषामित्याद्यन्वयः । पृथक् पाकासम्भवे सम्पदा सम्भूय सामग्रीसंपादनेन यत्सुखं तदर्थम् । एवञ्च—

गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ॥

इति भविष्ये पार्वणपदमेकोद्दिष्टस्याप्युपलक्षणम् , तीर्थादेः पार्वणैकोद्दिष्टरूपत्वात् । अत्रास्मच्छब्देन सम्बन्धोल्लेखपूर्वकं स्वपित्रादिगणमुल्लिख्य अमुकशर्मणोऽमुकगोत्रस्येत्याद्यन्यपित्रादिगणमुल्लिखेत् । तत्क्रमेणैव श्राद्धप्रयोगं च समापयेत्, श्राद्धस्य गोष्ठ्यां वार्त्तायां क्रियमाणायां तज्जनितोत्साहेन क्रियमाणं श्रा-

---

(१) कंसान्तर्गतं नास्ति क० ।

द्धसंपदा सुखार्थं भिन्नपाकाशक्तौ बहुपितृकश्राद्धमेकः कुर्यादिति कल्पतरुः शङ्खधरश्च । *शुद्धिश्राद्धं प्रायश्चित्ताङ्गमिति मैथिलाः । अत्र पार्वणैकोद्दिष्टवृद्धिसपिण्डीकरणात्मकं चतुर्विधमेव मुख्यम् । तस्यैवायं प्रपञ्चः ।

---

द्धम् (१)तच्चोक्तवाक्यात् सपत्नीकपितृपार्वणमेव सपत्नीकमातामहपार्वणसहितम्, 'पितरो यत्र पूज्यन्ते' इति वचनादिति रघुनाथादयः । *शुद्धीति । मदनमहार्णवे—

तेषामनुज्ञया सर्वप्रायश्चित्तमुपक्रमे
विधाय वैष्णवं श्राद्धं साङ्कल्पं निवेदयेत् ।
धेनुं दद्याद् द्विजेभ्योऽथ दक्षिणां च स्वशक्तितः ॥ इति ।

तेषां ब्राह्मणानाम् । सर्वप्रायश्चित्तमित्यत्रापि सर्वप्रायश्चित्तविधिः । उपक्रमे प्रायश्चित्तोपक्रमे । विष्णुमुद्दिश्य साङ्कल्पमपिण्डकं श्राद्धं, पूजापूर्वकं चतुरादियुग्मान् ब्राह्मणान् भोजयेत्, आमादिकं वा दद्यात् । सभ्यानां च धेनुर्ब्रह्मदण्डत्वेन दक्षिणा च श्राद्धाङ्गत्वेनेति तदर्थः । इदं तु बोध्यम्, दार्शं प्रकृत्य मन्वादिषु धर्मपाठात्तस्य प्रकृतित्वम्, अन्येषां विकृतित्वम् । 'अथातः पार्वणश्राद्धे काम्ये आभ्युदयिके एकोद्दिष्टे वा' इत्याश्वलायनसूत्रानुसारिणां चत्वारि श्राद्धानि प्रकृत्य धर्माम्नानाच्चतुर्णामपि समानविधानतैव । यत्तु कातीयापस्तम्बसत्याषाढसूत्रेषु कृष्णपक्षश्राद्धं प्रकृत्य धर्माम्नानं तदष्टकादीन् (२)प्रति प्रकृतित्वार्थं "तस्य मासि श्राद्धेन कल्पो व्याख्यातः" इति आपस्तम्बादिसूत्रात् । न्यायेन सर्वश्राद्धप्रकृतित्वे प्राप्ते एतत्सूत्रस्य परिसङ्ख्यार्थत्वात् । एतत्सूत्रपरिसंख्यातेषु वार्षिकादिश्राद्धेषु तेषामपि दर्शश्राद्धमेव प्रकृतिः । दर्शश्राद्धस्य सर्वश्राद्धप्रकृतित्वे च वार्षिकादौ कपर्दिकारिका—

---

(१) 'गोष्ठीश्राद्धं तच्चोक्तवाक्यात्' घ० ।
(२) 'प्रतिप्रकृतित्वार्थं' ख० ।

अथ श्राद्धदेशाः । मनुः—

*शुचिदेशं विविक्तं तु गोमयेनो(१)पलेपयेत् ।
*दक्षिणाप्रवणं चैव*प्रयत्नेनोपपादयेत् ॥

पृथ्वीचन्द्रोदये विष्णुधर्मे—

दक्षिणाप्रवणे देशे*तीर्थादौ च गृहेऽपि वा ।
*भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः ॥

तत्रैव प्रभासखण्डे—

तीर्थादष्टगुणं पुण्यं स्वगृहे ददतः शुभे ।

भारते—

तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती ।

---

सपिण्डीकरणात्पूर्वमेकोद्दिष्टं सुतः पितुः ।
ऊर्ध्वं पार्वणवत्कुर्यात् [illegible] तु ॥

इति लौगाक्षिवाक्याद्वा दर्शविध्यन्तातिदेशः, न तु श्राद्धपदात् । अमाश्राद्धे तदितरश्राद्धे च तच्छब्दस्योक्तोपाधिना मुख्यत्वात् ।

*शुचीति । सर्वकर्माङ्गतया प्राप्तानुवादः । *दक्षिणाप्रवणं दक्षिणतो निम्नम् । *प्रयत्नेनेति । स्वतो दक्षिणाप्रवणत्वासत्त्वे खननादिना तत्संपादनार्थम् । *तीर्थम् ऋषिदेवतादिसेवितं जलं पुण्याश्रमादि च, तीर्थमित्यनुवृत्तौ(२)“ऋषिजुष्टजले क्षितौ” (अ० को० ३–३–८६) इति कोशात् । आदिना (३)देवालयादि । प्रयत्नतो भूसंस्कारादीत्यन्वयः । भूसंस्कारो मार्ज(४)-

---

(१) गोमयेनोपलिप्यं च क० च० ।

(२) यद्यप्यत्र सर्वेषु पुस्तकेषु ‘क्षितौ’ इत्येव पाठ उपलभ्यते तथापि अमरकोशे ‘गुरौ’ इत्युपलम्भात् लोके गुरौ तीर्थशब्दस्य प्रयोगोपलब्धेश्च ‘गुरौ’ इति पाठः सुन्दर इति प्रतिभाति ।

(३) ‘देवालयादि । एतेन काश्याद्यन्तस्तीर्थे आहत्य वचनानुपलम्भेऽपि श्राद्धस्य कर्तव्यतासिद्धिः’ घ० ।

(४) ‘मार्जनोपलेपादि’ घ० ।

प्रभासं पुष्करं चेति तेषु श्राद्धं महाफलम् ॥

स्कान्दे--

तुलसीकाननच्छाया यत्र यत्र भवेद्द्विज ।

तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे(१) ॥

---

नादि । तथाच याज्ञवल्क्यः--

भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।

सेकादुल्लेखनाल्लेपाद् गृहं मार्जनलेपनात् ॥ इति ।

मार्जनं मार्जन्या पांसुतृणादेः प्रोत्सारणम् । दाहः तृणादिना । कालः यावता कालेन लेपादिक्षयस्तावान् । गोक्रमणं गोपादपरिस्कन्दनम् । सेकः क्षीरगोमूत्रगोमयवारिभिः प्रवर्षणं च । उल्लेखनं तक्षणं खननं वा । अत एव यमः--

खननात्पूरणाद्दाहादद्भिर्घर्षणलेपनात् ।

गोभिराक्रमणात्कालात्भूमिः शुध्यति सप्तधा ॥ इति ।

लेपः गोमयादिना । एतैर्व्यस्तैः (२)समस्तैर्वा अमेध्या दुष्टा मलिना च भूः शुध्यति । अमेध्यादिभूमिं चाह देवलः--

यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा ।

चाण्डालाध्युषितं यत्र यत्र विष्ठादिसङ्कृतिः ॥

एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्त्तिता ।

श्वशूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् ॥

अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना भवेत् ॥ इति ।

शुद्धिविभागमाह देवलः--

पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।

दुष्टान्विता त्रिधा द्वेधा शुध्यते मलिनैकधा ॥

यत्र मनुष्यदाहश्चण्डालादिवासो वा तत्र दाहादिपञ्चभिः(३)शुद्धिः । यत्र मानुषादिप्रसवः, तन्मृतिः, विष्ठादिसङ्कृतिर्वा; तत्र

---

(१) 'तृप्तये द्विज'क० । (२) 'समस्तै' नास्ति ख० । (३) 'शुध्यति' ङ० ।

माधवीये श्राद्धोपक्रमे व्यासः—

महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले ।

शङ्खः—

गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदा बाहुदातीरे भृगु(१)लिङ्गे हिमालये ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायां च दत्तमक्षय्यतां व्रजेत् ॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः ॥

---

दाहवर्जितैस्तैरेव शुद्धिः । श्वशूकरखरैरुषितायास्तु गोक्रमणादिभिः त्रिभिः । उष्ट्रग्रामकुक्कुटादिभिरुषितायास्तु गोक्रमणं विना द्वाभ्याम् । अङ्गारादियुक्तायास्तु उल्लेखनमात्रेणेत्यर्थः । मार्जनानुलेपने तु सर्वत्र । एवञ्च गृहस्य तत्र पृथगुपादानं प्रतिदिवसं प्राप्त्यर्थम् । सशवगृहशुद्धिं वक्ष्यति—'गृहशुद्धिं प्रवक्ष्यामि' इत्यादिना ।

प्रसङ्गाद्द्रव्यशुद्धिरुच्यते । याज्ञवल्क्यः—

सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।
शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥
पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।

अब्जं मुक्ताफलशुक्तिशङ्खादि । ऊर्ध्वपात्रं यज्ञियोलूखलादि । ग्रहचमसवासांसि प्रसिद्धानि । आश्मं दृषदादि । शाकं वास्तुकादि । रज्जु बल्वजादिनिर्मिता । मूलम् आर्द्रकादि । फलम् आम्रादि । विदलं वैणवादि तद्विकारं छत्रादि च । चर्म अजादेः, तद्विकारं वरत्रादि च । पात्राणि प्रोक्षण्यादीनि । एषां लेपरहितानामुच्छिष्टस्पर्शमात्रे वारिणा क्षालनाच्छुद्धिः । तथा चादित्यपुराणे—

---

(१) 'भृगुतुङ्गे' क० ।

सुवर्णरूप्यशंखाश्मशुक्तिरत्नमयानि च ।
कांस्यायस्ताम्ररैतानि त्रपुसीसमयानि च ॥
निर्लेपानि च शुध्यन्ति केवलेन जलेन तु ॥

मनुः—

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ।
अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥

अनुपस्कृतम् अखातपूरितम् उत्कीर्णरेखाद्यनुपेतं च । सलेपानां तु मनुः—

तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
(१)भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥

मृद्भस्मनोरेककार्यत्वाद्विकल्पः, अपां समुच्चयः । हारीतः—"अद्भिः काञ्चनराजताब्जशुक्तीनां तद्गुणा(२)वर्जनस्नेहवैवर्ण्योपहतानां यवगोधूमकुलमाषमसूरमुद्गभस्मगोमयचूर्णैर्धावनम्, अम्ललवणाभ्यां ताम्राणां, भस्मना कांस्यानां, शणासितलेन सिकताघर्षणैः कार्ष्णायसानाम्, शिलाघर्षणमार्जनैर्मणिमयानाम्" इति । तद्गुणा गन्धादयस्तेषामवर्जनं सम्बन्धः, उच्छिष्टस्नेहादिना जातं वैवर्ण्यं च, तेनोपहतानाम् । काकादिमुखोपघाते तु शङ्खः-'कृष्णशकुनिमुखावमृष्टं पात्रं निर्लिखेत् श्वापदमुखावमृष्टं न प्रयुञ्जीत' । निर्लेखः तक्षणम् । श्वापदो मार्जारभिन्नः,

मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ।

इति स्मृतेः । योगीश्वरः-'चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा' । चरुः चरुस्थालः । स्रुक्स्रुवौ प्रसिद्धौ । सस्नेहपात्राणि प्राशित्रहरणादीनि । इदमपि निर्लेप एव, उक्तमानत्वात् । स एव—

स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम् ।

स्फ्यः काष्ठखड्गः । अनः शकटम् । शेषं प्रसिद्धम् । उष्णेन वारिणेति वर्त्तते । कांस्यपात्रे उच्छिष्टलेपे चापस्तम्बः—

(१) 'अश्मना' ख० । (२) 'वर्तन' ङ० ।

गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च ।
शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च ॥

दशभिः आवर्त्तितैः । आदित्यपुराणे—

शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिः ।

क्षारादिभिर्दशकृत्वो मार्जनं बोध्यम् । शङ्खः—

ब्रह्मक्षत्रविशां चैव सकृत्सम्मार्जनाच्छुचिः ।
चतुर्थेन तु यद्भुक्तं चतुर्भिस्तत्र मार्जनम् ॥
अग्नौ प्रक्षिप्य गृह्णीयाद्धस्तौ प्रक्षाल्य यत्नतः ।
गोशृङ्गेण तु संस्पृष्टं तत्पात्रं शुचितामियात् ॥

कांस्यपात्रे त्वङ्गिराः—

गण्डूषं पादशौचं च यः कुर्यात्कांस्यभाजने ।
षण्मासं भुवि निक्षिप्य पुनराकारमादिशेत् ॥

पुनराकारः पुनःकरणम् । भूनिक्षेपः पृथक्शोधकः । तेन दोषानुसारेण सप्ताहादि भुवि खात्वोद्धृत्य भस्मादिना मार्जनाच्छुद्धिरिति लभ्यते । स्मृत्यन्तरे—

लोहानां दहनाच्छुद्धिर्भस्मना गोमयेन च ।
दहनात्खननाद्वाऽपि शैलानामम्भसापि वा ॥
काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि ॥

यदि तैर्न शुध्येत तदा तावन्मात्रच्छेदनं दाहो वा । सर्वत्रापि छिन्नदग्धयोः शुध्यभिधानं दुर्लभोत्तमविषयम् । दरिद्रस्यानुत्तमेष्वपि मृद्भाण्डानामल्पोपहतौ याज्ञवल्क्यः—'पुनःपाकान्महीमयम्' इति । सलेपप्रकरणे योगीश्वरः—

तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसम्भुवाम् ।
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥

शृङ्गाणि मेषमहिषादेः । अस्थीनि करिवराहादेः । अस्थिपदेन दन्तानामपि ग्रहः । उच्छिष्टस्नेहादिलिप्तानां मृद्रसोदकादिनाऽवलेपच्छेदनाम्—

यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि वा देयं सर्वासु द्रव्यशुद्धिषु ॥

इति सामान्यशुद्ध्युक्तेः । तक्षणं तावन्मात्रस्यापनयनम् । फलसम्भुवां बिल्वनारिकेलादिफलोद्भूतानां पात्राणां गोवालैरुद्घर्षणे शुद्धिः । यज्ञकर्मणि प्रयुज्यमानानां यज्ञपात्राणां स्रुक्स्रुवादीनां दक्षिणेन हस्तेन दर्भैः दशापवित्रेण वा यथाशास्त्रं मार्ज(१)नम् । श्रौतमुदाहरणमन्येषामपि सौवर्णादिपात्राणां स्मार्त्ते लौकिके च कर्मणि कृतशौचानामेवाङ्गत्वमिति दर्शयितुम् । संहतपात्रे तु हारीतः—

संहतानां तु पात्राणां यद्येकमुपहन्यते ।
तस्यैव शोधनं प्रोक्तं सामान्यद्रव्यशुद्धिकृत् ॥

मृद्भाण्डे त्वाह मनुः—

मद्यैर्मूत्रपुरीषैश्च ष्ठीवनैः पूयशोणितैः ।
संस्पृष्टं नैव शुध्येत पुनःपाकान्महीमयम् ॥

एतैः संस्पृष्टं महीमयं पुनःपाकान्नैव शुध्येत, तस्य त्यागः कार्य इत्यर्थः । धान्यादेश्चण्डालादिस्पर्शे तु पराशरः—

चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापि वा ।
प्रक्षालनेन शुध्येत परित्यागान्महीमयम् ॥

याज्ञवल्क्यः—

प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ।

संहतानां राशीकृतानां धान्यानां वाससां च । वासःपदमुक्तशुद्धीनामुपलक्षणम् । अयमर्थः—धान्यानि वस्त्रादीनि वा बहूनि राशीकृतानि तत्र चण्डालादिभिः स्पृष्टानि अल्पानि, बहून्यस्पृष्टानि, तत्र स्पृष्टानामुक्तैव शुद्धिः, अस्पृष्टानां तु प्रोक्षणमिति । बहु(२)त्वं स्पृष्टापेक्षया ।

---

(१) 'मार्जनम् । इदं श्रौतमुदाहरणमपि' ङ० ।
(२)बहुत्वं वाऽत्रादि धान्यादि' ङ० ।

वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे ।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥

इति स्मृतेः । शेषम् असमुद्धृतं प्रोक्षणाच्छुध्यतीति भावः । यत्र तु स्पृष्टानां बहुत्वमस्पृष्टानामल्पत्वं तत्राह मनुः—

अद्भिस्तु प्रोक्षणं प्रोक्तं बहूनां धान्यवाससाम् ।
प्रक्षालनेन स्वल्पानामद्भिः शौचं विधीयते ॥ इति ।

स्पृष्टानां समत्वे तु प्रोक्षणम्, बहूनां प्रोक्षणविधानेनाल्पेषु क्षालने सिद्धे पुनरल्पानां क्षालनोक्तेः समेषु क्षालननिवृत्त्यर्थत्वाव । इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु क्षालनमेव पाक्षिकस्यापि दोषस्य परिहर्त्तव्यत्वात् । अनेकपुरुषोद्धार्याणां तु धान्यवासःप्रभृतीनां स्पृष्टानामस्पृष्टानां च प्रोक्षणमेव । अल्पधान्ये बौधायनः—

व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ।
तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा ॥

बहुधान्ये तु काश्यपः—'प्रोक्षणपर्यग्निकरणावगाहनैः व्रीहियवगोधूमानां, विमर्शनप्रोक्षणैश्च फलीकृतानां, निर्घर्षदलनप्रोक्षणैः [illegible]' इति । अनेकपुरुषोद्धार्याणां व्रीह्यादीनां प्रोक्षणादिभिस्त्रिभिः । पर्यग्निकरणं परितोऽग्न्यभिमर्शः, अवगाहः क्षालनम् । अत्र यथाक्रममल्पत्वमहत्त्वाभ्यां व्यवस्था । विमर्शनं पाणिभ्यां निर्मलकरणम् अल्पदोषे, महति तु प्रोक्षणम् । (१)(शमीधान्यानि मुद्गादीनि । एकपुरुषोद्धार्याणां निर्घर्षः, अल्पानां दलनम्, अनेकपुरुषोद्धार्याणां प्रोक्षणम्)। 'तण्डुलांस्तु [illegible]' इति तु अत्यन्ताल्पपरिमाणपरम् । आदित्यपुराणे—

गृहदाहे समुत्पन्ने दग्धे च [illegible] ।
अभोज्यस्तद्गतो व्रीहिर्धातुद्रव्यस्य सङ्ग्रहः ॥
मृन्मयेना[illegible]धोभुवि च तिष्ठताम् ।
यवमाषतिलादीनामदोषं मनुरब्रवीत् ॥

(१) कंसान्तर्गतं नास्ति ख० ।

ततः संक्रममाणेऽग्नौ स्थाने स्थाने (१)च दह्यते ।
न च प्राणिवधो यत्र केवलं गृहदीपनम् ॥
तत्र द्रव्याणि सर्वाणि गृह्णीयादविचारयन् ॥

याज्ञवल्क्यः—

त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥

त्रपुप्रभृ(२)तीनि प्रसिद्धानि तेषामुपघातानुरोधेन क्षारोदकेन अम्लोदकेन वारिणा च सम(३)स्तैर्वा । ताम्रपदेन रीतिकावृत्तस्नेहयोर्ग्रहः, एकयोनित्वात् । एतच्च ताम्रादीनामम्लोदकादिभिः उच्छिष्टलेपाद्यपगमसम्भवे । अनेनैव शुद्धिरिति न नियमः,

मलं संयोगजं यस्य येन येनोपहन्यते ।
तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥

इत्यविशेषोक्तेः । एवञ्च ताम्रादेरुच्छिष्टादिलेपस्य भस्मादिनापगमसम्भवेऽम्लाद्यनुपादानेऽपि न दोषः,

ताम्रायःकांस्यरैप्याणां त्रपुणः सीसकस्य च ।
शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः ॥

इति सामान्यतोऽप्यभिधानात् ।

भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ।

इत्याद्युक्तमपि शुद्धेः(४) परां काष्ठां वक्तुमेव, न त्वन्यनिषेधार्थम् । उपघातातिशये तु अम्लोदकादेरावृत्तिः । 'गवाघ्रातानि' इत्युपक्रम्य 'दशभिः क्षारैः' इत्युक्तेः । 'द्रवस्य द्रवद्रव्यस्य घृतादेः प्रस्थप्रमाणाधिकस्य श्वकाकाद्युपहत(५)स्य अन्यद्रव्यासंसृष्टद्रवस्य च प्लावः प्लावनं सजातीयद्रव्येण भाण्डपूरणं तन्निस्सरणं यावत्कार्यम्'

(१)'स्थले' ख० घ० । (२)'प्रभृतीनि सर्वाणि प्रसिद्धानि' ङ० ।
(३)'समस्तैर्व्यस्तैर्वा' ङ० । (४) 'शुद्धेः प्रकारान्तरं वक्तु' ख०
(५) । 'हतस्य च' ङ० ।

इति मिताक्षरा। वस्त्रान्तरिते पात्रे प्रक्षेपः प्लावनमिति मयूखः। ततोऽल्पस्य त्यागः। देशकालापेक्षयाऽपि बह्वल्पम्।

देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्॥

इति बौधायनोक्तेः। सौवर्णराजतादीनां सर्वेषामेवामेध्योपहतानां शुद्धिमाह याज्ञवल्क्यः—

अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धादिकर्षणात्।

अमेध्याः मलाः। ते च द्वादश,

वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविस्रवाः।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः॥

तथा—

मानुषास्थिशवं विष्ठा रेतो (१)मूत्रार्त्तवं वसा।
स्वेदाश्रुदूषिकाश्लेष्म मद्यं चामेध्यमुच्यते॥ इति।

गन्धापकर्षणान्ता शुद्धिः। आदिना लेपग्रहः, 'लेपगन्धापकर्षणैः शौचममेध्यलिप्तस्य' इति गौतमोक्तेः। ( स(२)र्वाशुद्धिषु प्रथमतो मृत्तोयैरेव लेपगन्धयोरपकर्षणम्, अशक्तौ अन्येन, "तद्भिः पूर्वं मृदा च" इति गौतमोक्तेः)। वसादिग्रहणं च सर्वेषाममेध्यत्वसूचकं न तु समानोपघातार्थम् 'मद्यैर्मूत्रपुरीषैश्च' इति मनुनोपघातविशेषाभिधानात्। अमेध्यत्वं चैतेषां देहाच्च्युतानामेव न स्वस्थानस्थानाम्, 'देहाच्चैव मलाश्च्युताः' इति विशेषोक्तेः। पुरुषस्य नाभेरूर्ध्वं करातिरिक्तानामङ्गानामन्यामेध्यस्पर्शे स्नानम्,

मानुषास्थिवसां विष्ठामार्त्तवं मूत्ररेतसी।
मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत्॥
तान्येव स्वानि संस्पृश्य प्रक्षाल्याचम्य शुध्यति॥

इति देवलोक्तेः।

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते।
तत्र स्नानमधस्ताच्च प्रक्षाल्याचम्य शुध्यति॥

---

(१) 'मूत्रार्तवे' ङ०। (२) कंसान्तर्गतं नास्ति ख०।

इति देवलोक्तेः । मूत्राद्युपघाते बौधायनः—

'तैज(१)सानां मूत्रपुरीषशुक्रासृक्कुणपमद्यैरत्यन्तोपहतानामा-वर्त्तनम्, अल्पसंसर्गे परिलेखनम्, स्पर्शमात्रे त्रिःसप्तकृत्वो भस्मना मार्जनम् । अतैजसानामेवम्भूतानामुत्सर्गः । स्मृत्यन्तरे—

भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ।
सुरामूत्रपुरीषैस्तु शुध्यते तापलेखनैः ॥
ताम्रमम्लेन शुध्येत न चेदामिषलेपनम् ।
आमिषेण तु यल्लिप्तं पुनर्दाहेन शुध्यति ॥

शङ्खः—

सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च ।
त्रिःसप्तमार्जनाच्छुद्धिर्न तु ताम्रस्य (२)तापनम् ॥ इति ।

सूतिकोच्छिष्टाद्युपहतानां सप्तभिर्यवगोधूमादिचूर्णैः प्रत्येकं त्रिर्मार्जनाच्छुद्धिरित्यर्थः । प्रतिमार्जनमुदकं बोध्यम् । बौधायनः—'कांस्यभिन्नतैजसानामल्पो(३)पघाते मार्जनं तापनं च' । कांस्ये तु न तापनं कार्यं, किन्तु क्षालनं मार्जनं चेत्यर्थः । अधिकोपहतानां तु स्मृत्यन्तरे—

सूतिकासवविण्मूत्ररजस्वलाहतानि च
प्रक्षेप्तव्यानि तान्यग्नौ यथावत्संदहेदपि ॥ इति ।

तैजसानां मूत्राद्युपघाते पुनःकरणं गोमूत्रे वा सप्तरात्रं परिवासनम् । कांस्यभिन्नतैजसानां लेपानिर्हरणाशक्तौ पुनः करणं,पुनःकरणाशक्तौ गोमूत्रवासः । लेपानां केषाञ्चिल्लेपापकर्षकनाह याज्ञवल्क्यः—

सोषैरुदकगोमूत्रैः शुद्धयत्याविककौशिकम् ।
सश्रीफलैरंशुप(४)ट्टमरिष्टैः कुतपं तथा ॥ (२-१८६)

ऊषः क्षारमृत्तिका, आविकम् ऊर्णामयं, कौशिकं

(१) 'तैजसाम्' ङ० । (२) 'भाजनम्' ख० ।
(३) अन्योपघाते' ख० ।
(४) 'पट्टसारिष्टैः कुभणम्' ङ० ।

कोशभवं तसरीपट्टादि, अंशुपट्टं वल्कलतन्तुकृतं, कुन(१)पः पार्वतच्छागरोमकृतः कम्बलः, अरिष्टः फनिलः। उदकगोमूत्रै-रिति वर्तते। उदकपदं पश्चादप्युदकप्राप्त्यर्थम्। बहुवचन-मिदम(२)धिकोच्छिष्टलेपादियोगे। (३)अल्पोपघाते तु देवलः—

> और्णकौशेयकुनपपट्टक्षौमदुकूलजाः।
> अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः॥ इति।
> तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः।
> धान्यकल्कैस्तु फलजै रसैः क्षारानुगैरपि॥ इति।

क्षौमवदेव शाणस्य, समानयोनित्वात्। और्णेति तूलिकादि-प्राप्त्यर्थम्,

> तूलिका(४)मुपधानं च पुष्परक्ताम्बराणि च।
> शोषयित्वा नयेत्किञ्चित्करैः सम्मार्जयेन्मुहुः॥
> पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि।
> तान्येवातिमलिनानि यथावत् परिशोधयेत्॥

इति देवलोक्तेः। पुष्परक्तानि कुङ्कुमकुसुम्भादिरक्तानि। पुष्पग्रहणं हरिद्रादिरक्तस्य क्षालनासहस्य प्राप्त्यर्थं न माञ्जिष्ठा-देः, तस्य क्षालनसहत्वात्। अत एव शङ्खः—'रागद्रव्याणि प्रो-क्षितानि शुचीनि' इति। अल्पशौचा इति, क्षालनासहत्वात्। सर्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत्वात्। स्मृत्यन्तरे—'अहतानां प्रोक्षणम्' इति। यन्त्रनिर्मुक्तनूतनवाससां प्रोक्षणाच्छुद्धिरित्यर्थः। याज्ञवल्क्यः—

> सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयम्।

क्षुमा अतसी तत्सूत्रनिर्मितं क्षौमं गौरसर्षपसहितैरुदकगोमूत्रैः, उच्छिष्टस्नेहलिप्तं मृन्मयं पुनःपाकेन शुध्यति।

प्रचेताः—'चैलानामुच्छिष्टेऽन्न(५)गन्धलेपानपगमने तन्मात्रच्छे-

---

(१) 'कुम्भणः' ङ०। (२) 'इदमधिकोपघाते' ङ०। (३) 'योगे संघाते' ख०। (४) 'तूलिकाद्युपधानं' ङ०। (५) 'गन्धलेपानपनयने' ङ०।

दनं कर्त्तनं वाससामभ्युक्षणात्' इति । शयनासनगतानां वस्त्राणां तु संहतवच्छौचमाह देवलः--

शयनासनयानादिदेहवन्धानि यानि च ।
वस्त्राण्येतानि सर्वाणि संहतानि मचक्षते ॥ इति ।

प्रोक्षणमिति भावः । मनुः--

चैलवच्चर्मणां शुद्धिर्विदलानां तथैव च ।
शाकमूलफलानां तु धान्यवच्छुद्धिरिष्यते ॥

स्मृत्यन्तरे-'वरित्रचर्मचामरवल्कलानां चैलवच्छुद्धिः'। सिद्धान्ते तु मनुः—

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
केशकीटैर्दूषितं च मृत्प्रक्षेपेण शुद्ध्यति ॥

गवाघ्रातं गोनिःश्वासोपहतम्, अवधूनम् उपरिवसनादिना पक्षिभिर्भक्षित्वा उत्क्षिप्य त्यक्तं च । याज्ञवल्क्यः—

गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।
सलिलं भस्म मृद्वाऽपि प्रक्षेप्तव्यं विशुद्धये ॥

अन्नम् अश्नीयमात्रम् । केशपदं लोमोपलक्षणम् । कीटाः पि(१)पीलिकादयः। 'सहपाके तु नित्यमभोज्यं केशकीटावपन्नम्' इति गौतमं द्रष्टव्यम् । वसिष्ठः—

देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत् ॥
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ॥

देवद्रोणी देवयात्रा । प्रकृतेषु अवश्यंभाविपर्वोत्सवेषु । विशेषमाह पराशरः-

पक्वं द्रोणाधिकं त्वन्नं श्वकाकाद्युपघातितम् ।
ग्रासमुद्धृत्य तन्मात्रं यच्च लालाकृतं भवेत् ॥
हेमोदकेन वाऽभ्युक्षेत् राजतेनाम्बुनाऽथवा ।

---

(१) 'पिपीलयादयः' ख० ।

अग्निज्वालोपसंस्पर्शात्सुवर्णमधुनापि वा ॥
विप्राणां ब्रह्मघोषेण पूतं भोज्यं च तद्भवेत् ॥

द्रोणः पञ्चाशदधिकपलशतद्वयम् । अल्पान्ने तु जमदग्निः—

अन्नमैकाहिकं पक्वं श्वकाकाद्युपघातितम् ।
केशकीटावपन्नं च तदप्येवं विशुध्यति ॥
क्रीतस्यापि विधिर्दृष्ट एवमेव मनीषिभिः ।

संस्कारे तु वसिष्ठः—

द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन च ।
छागेन मुखसंस्पृष्टमन्नं तच्छुचितामियात् ॥

घनाः पर्पटवटकादयः । द्रवाणां गोरसानाम् ,

श्रपणं घृततैलादेः प्लावनं गोरसस्य च ।
भाण्डानि क्षालयेदद्भिः शाकमूलफलानि च ॥

इति शङ्खोक्तेः । चकाराद् घृततैलयोरपि प्लावनम् । कीटाद्युपहतस्य तूत्पवनम् । तच्च वस्त्रान्तरितपात्रे प्रक्षेपः, अन्यथा तदपगमासम्भवात् । तथा च मनुः—

द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम् । इति ।

शूद्रभाण्डस्थितस्य तु मधूदकादेः पात्रान्तर(१)नयनाच्छुद्धिः, "मधूदके पयस्तद्विकाराश्च पात्रात्पात्रान्तरे नयनाच्छुद्धाः" इति बौधायनोक्तेः । पात्रात् शूद्रपात्रात् । तथा—

आधारदोषे तु नयेत्पात्रात्पात्रान्तरद्रवम् ।

मधुघृतादेर्वर्णापसदहस्तात्प्राप्तस्य पात्रान्तरानयनं पुनः पचनं (२) च कार्यम्, "अभ्यवहार्याणामनेनाभिघारितानां पुनःपचनमेवं स्नेहानां स्नेहवद्रसानाम्" इति शङ्खोक्तेः । तथा—

घृतं च पायसं क्षीरं तथैवेक्षुरसो गुडः ।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥

(१) 'पात्रान्तरानयनात्' ङ० ।
(२) 'तत्र' ङ० ।

पायसं पयोजन्यं दधि । यमोऽपि—

छागमांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
म्लेच्छभाण्डस्थितास्तस्मान्निष्क्रान्ताः शुचयः स्मृताः ॥

बौधायनः—

देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥

विष्णुः—

मृत्पर्णतृणकाष्ठानां श्वभिश्चाण्डालवायसैः ।
स्पर्शने विहितं शौचं सोमसूर्यांशुमारुतैः ॥

तथा—प्रोक्षणेन पुस्तकम् । योगीश्वरः—

रश्मिरग्नी रजश्छाया गौरश्वो वसुधाऽनिलः ।
विप्रुषो मक्षिका स्पर्शे, वत्सः प्रस्नवणे शुचिः ॥

रश्मिः सूर्यादेः । अग्न्यादयो नव प्रसिद्धाः । चाण्डालादिस्पर्शे चाशुचिः । रजः अजाद्यसम्बन्धि । तत्र—

श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम् ।
अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते ॥

इति दोषस्मरणात् । प्रस्रवणम् ऊधोगतक्षीराकर्षणम् । वत्सपदं बालस्यापि ग्रहार्थम्,

बालैरनुपरिक्रान्तं नित्यं मेध्यमिति स्थितिः ।

इति स्मृतेः । तथा—

शुचिरग्नी रजो वायुरापो दधि घृतं पयः ।
सर्वाण्येतानि मेध्यानि स्पर्शे छाया च नित्यशः ।

छाया तु चण्डालादेरन्या,

चण्डालपतितच्छायास्पर्शे दुष्टा तनुर्भवेत् ।

इति ब्राह्मात् । रजोऽपि रासभादेरन्यत्,

रेणवः शुचयः सर्वे वायुना ये समीरिताः ।
अन्यत्र शूकराजाविखरासभविमार्जनात् ॥

'विमार्जनी' इति पाठे पञ्चमी (१)त्यागश्छान्दसः ।

**देवलः—**

अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः ।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥
दधिसर्पिःपयःक्षौद्रभाण्डे दोषो न विद्यते ।
मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ॥

मार्जारः कर्मकालादन्यत्र शुचिः, तत्र स्पर्शे तु स्नानमिति ।

**याज्ञवल्क्यः—**

वाक्शस्तमम्बुनिर्णीतमज्ञातं च सदा शुचिः ।

कृतेऽपि शौचे यदि मनसोऽपरितोषात्संदेहस्तदेदं शुद्धमस्त्विति विप्रवचनेन शुचिः । यत्र च शुद्धिर्न विहिता तस्य क्षालनं, क्षालनासहस्य प्रोक्षणम् । अज्ञातं यत्काकादिनोपहतं तदपि शुचि ।

संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तम ।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥

इति प्रायश्चित्तं तु भक्षणविषयं न त्वन्योपयो(२)गविषयम् ।

कारुहस्तः शुचिः पण्यं भैक्ष्यं योषिन्मुखं तथा ।

कारवः रजकसूपकाराद्याः तत्साध्ये कर्मणि वस्त्रधावने सूतकादावपि तद्धस्तः शुचिः । तथा च स्मृत्यन्तरे—

कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ।
राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्त्तिताः ॥ इति ।

पण्यं विक्रेयं यवव्रीह्यादि । अनेकक्रेतृजनस्पृष्टमपि वणिजां सूतकादावपि च नाशुद्धम् । भैक्ष्यं ब्रह्मचर्यादि(३)गतम् । अनाचान्तस्त्र्यादिदत्तमशुचिरथ्याक्रमणादिनापि दुष्टं न तु चण्डालादिस्पृष्टम् । सम्भोगकाले योषिन्मुखं शुचि, 'स्त्रियश्च रतिसंसर्गे'

(१) 'पाठः' ख० ।
(२) 'भोग' ङ ।
(३) 'गतं' नास्ति ङ० ।

इति स्मृतेः । तथा—

नित्यमास्यं शुचिः स्त्रीणां शकुनेः फलपातने ।
प्रस्रावे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥
नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्मृतम् ॥

याज्ञवल्क्यः—

अजाश्वं मुखतो मेध्यं न गोर्न नरजा मलाः ।
पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥

अजाश्वयोर्मुखं मेध्यम् । न गोर्मुखं मेध्यम् । नरजा नरदेहजाता मला वसादयो न मेध्याः । पन्थानो राजमार्गाः चाण्डालादिस्पृष्टा अपि रात्रौ सोमांशुमारुताभ्यां दिवा च सूर्यांशुमारुताभ्यां (१)शुद्धाः ।

मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥
च्युतेऽप्यास्राववद्विद्यान्निगिरन्नेव तच्छुचिः ।

मुखजाः श्लेश्मबिन्दवः मेध्याः नोच्छिष्टाः । अङ्गे निपतिता न चेत्, "न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति, नचेदङ्गे प(२)तन्ति" इति गौतमोक्तेः । एवमाचमनबिन्दवः पादे गता अपि नोच्छिष्टाः । श्मश्रु चास्ये मुखे गतं प्रविष्टं नोच्छिष्टम् । दन्तसक्तमन्नादि स्वयमेव च्युतं त्यक्त्वा शुचिः, अच्युतं दन्तसमं 'दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात्प्राक् च्युतेः' इति गौतमोक्तेः । निगिरन्नेवेत्येवकारेण—

चर्वणे त्वाचमेन्नित्यं मुक्त्वा ताम्बूलचर्वणम् ।
ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥

इति आचमननिषेधः । ताम्बूलपदं फलादेरुपलक्षणम्,

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके ॥
दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः ॥

---

(१) 'शुद्धिः' ख० । (२) 'निपतन्ति' ङ०

इति शातातपात्। देवलः—

आत्मशय्याऽऽसनं वस्त्रं जायाऽपत्यं कमण्डलुः।
शुचीन्यात्मन एतानि परेषामशुचिर्भवेत्।
पादौ शुची ब्राह्मणस्य अजाश्वानां मुखं शुचिः॥
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम्।

तथा—

उपस्पृश्याशुचिस्पृष्टं तृतीयं चापि मानवः।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति॥

प्रथमोऽशुचिस्तत्स्पृष्टो द्वितीयः, तत्स्पृष्टस्तृतीयः, तत्स्पर्शे आचमनमात्रं न चतुर्थादौ, मानाभावात्।

शातातपः—

'शिशोरभ्युक्षणं प्रोक्तम्' इत्याद्युक्तमनुपतीतधर्मे याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।
आचान्तः पुनराचामेद्वासो विपरिधाय च॥

वसिष्ठः—

"रुदित्वा वान्तः पुनराचामेत्"।

मनुः—

सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वाऽनृतं वचः।
पीत्वाऽऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्॥ इति।

एतच्च अल्पानृतोक्तौ। भोजने त्वादावपि द्विराचमनम्, 'भोक्ष्यमाणस्तु प्रयतो द्विराचामेत्' इत्यापस्तम्बात्। स्नानपानयोरादौ सकृत्। अध्ययने त्वादावन्ते च द्विराचमनम्।

योगी—

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मारुतेनैव शुध्यन्ति पक्वेष्टकाचितानि च॥

रथ्यादिगतगोमयशर्करादिलाभार्थं बहुवचनम्। पक्वेष्टकादिभिश्चितानि गृहाणि च। एवकारेण प्रोक्षणनिवृत्तिः। तृणकाष्ठप-

*एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
आदित्यपुराणे—
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।
महानद्याः पश्चिमेन यावद् गृध्रेश्वरो गिरिः ॥
उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम् ।
एतद् गयाशिरो नाम त्रिषु लोकेषु विश्रुतम् ॥ इति ।
शूलपाणौ बृहस्पतिः—
गङ्गायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥

---

णादिमयानां तु अन्त्यादिस्पर्शे प्रोक्षणमिति दिक् । आदिनाऽशुचिद्रव्यापसारणम् ।
जघान दानवौ विष्णुः पूर्वं तु मधुकैटभौ ।
वृत्रं महेन्द्रश्च ततः पृथिवी मेदसा वृता ॥
तस्माच्छ्राद्धे पञ्चगव्यैर्लेप्या शोध्या तथोल्मुकैः ।
गौरमृत्तिकया कीर्णा प्रकीर्णा तिलसर्षपैः ॥
इति ब्रह्माण्डे । उल्मुकैरिति समन्ततः उल्मुकनिधानमध्युक्तम्, वराहकृतश्राद्धमधिकृत्य ब्राह्मे—
दंष्ट्रयोद्धृत्य च महीमभ्युक्ष्य सलिलेन च ।
धर्मोद्भवेनोपलिप्य कुशैरुल्लिख्य तां पुनः ॥
परिणीयोल्मुकेनैनां पर्युक्ष्य च पुनः पुनः ॥
इति परकृतिसरूपार्थवादात् । ध(१)र्मोद्भवं गोमयम् । *तीर्थादिति(२) । तीर्थमपेक्ष्य तैर्थ्यश्राद्धं गृहे अधिकफ(३)लदमित्यर्थः । विष्णुधर्मे तीर्थमात्रस्य श्राद्धनिमित्तत्वोक्तावपि कुरुक्षेत्राद्युपादानं तत्र तस्यावश्यकत्वार्थम् । *एष्टव्या इति । गयाश्राद्ध-

(१) 'धर्मोद्भवं गोमयं' नास्ति घ० (२) अस्य मूलं १३२८ पृष्ठे द्रष्टव्यम् ।
(३) 'अधिकफलम्' ख०

धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ।
दृष्ट्वैतानि पितॄंश्चार्च्य वंशान्विंशतिमुद्धरेत् ॥

त्रिस्थलीसेतौ वायवीये—

*शमीपत्रप्रमाणेन पिण्डं दद्याद् *गयाशिरे ।
उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ॥

सप्तगोत्राणि तु—

पिता माता च भार्या च भगिनी दुहिता तथा ।
पितृमातृष्वसा चैव सप्त गोत्राणि वै विदुः ॥ इति ।

एषां गोत्राणामेकोत्तरशतं कुलं पुरुषा इत्यर्थः । ते चोक्तास्तत्रैव—

तत्त्वानि विंशति *नृपा द्वादशैकादश दश ।
अष्टाविति च गोत्राणां कुलमेकोत्तरं शतम् ॥

तत्त्वानि चतुर्विंशतिः । ते च द्वादश पूर्वा द्वादश पराः । एवमग्रेपि । प्रयोगपारिजाते पाद्मे—

शालग्राममयी मुद्रा संस्थिता यत्र कुत्रचित् ।
वाराणस्या यवाधिक्यं समन्ताद्योजनत्रयम् ॥

तथा—

यत्किंचित्पैतृकं कुर्यात्सपिण्डं वा *तदन्तिके ।
विष्णुलोकं स गच्छेत्तु लभते शाश्वतं पदम् ॥

तत्रैव वाराहे—

म्लेच्छ(१)देशे शुचौ वापि चक्राङ्को यत्र तिष्ठति ।
योजनानां तथा त्रीणि मम क्षेत्रं वसुंधरे ॥

---

स्यात्यावश्यकत्वार्थम् । गयाशिरआदीनां चाधिकतरत्वम् । *शमीपत्रेति कैमुत्यन्यायेन । *गयाशिरे इति । शिरशब्दोऽदन्तः । *नृपाः षोडश । *तदन्तिके शालग्रामशिलान्तिके ।

---

(१) 'म्लेच्छदेशे' इत्येष श्लोको नास्ति ख० छ०

चक्राङ्क(१)स्य तु सान्निध्ये यत्कर्म क्रियते नरैः ।
स्नानं दानं तपः श्राद्धं सर्वमक्षयतां व्रजेत् ॥

अथ निषिद्धदेशाः । पृथ्वीचन्द्रोदये स्कान्दे—

त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् ।
*उत्तरेण महानद्या दक्षिणेन तु कीकटात् ॥
देशस्त्रैशङ्कवो नाम श्राद्ध(२)कर्मणि वर्जितः ।

वायवीये—

प्रणष्टाश्रमधर्माश्च देशा वर्ज्याः प्रयत्नतः ।

यमः—

रूक्षं कृमिहतं *क्लिन्नं *संकीर्णानिष्टगन्धिकम् ।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि ॥

तत्रैव शङ्खः—

*गोगजा(३)श्वादिजुष्टेषु *कृत्रिमायां तथा भुवि ।
न कुर्याच्छ्राद्धमेतेषु पारक्यासु च भूमिषु ॥

यमः—

परकीयप्रदेशेषु पितॄणां निर्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥

ब्राह्मभारतयोरपि—

परकीयगृहे यस्तु स्वान्पितॄंस्तर्पयेद्यादि ।

---

*उत्तरेणेति । महानद्याः फल्ग्वा उत्तरेण दक्षिणेन च द्वादशयोजनं कीकटो नाम त्रैशङ्कवो देशः ।

कीकटेषु गया पुण्या नदी चैव पुनःपुना ।

इत्यादिस्त्वपवादः । *क्लिन्नम् आर्द्रम् सपङ्कमिति यावत् । *संकीर्णं बहुभिर्व्याप्तम् । *गवित्यादि दृष्टान्तः । भूमित उच्चत्वादिना सादृश्यम् । तत्रोपविश्य सङ्कल्पादेर्वा निषेधः । *कृत्रि-

---

(१) 'चक्राङ्कस्य' क०
(२) 'श्राद्धकर्मविवर्जितः' क० छ०
(३) 'गोगजाश्वादिपृष्ठेषु' क० छ०

तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥
*अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जी(१)वितम् ।

*श्राद्धार्हाणामग्रभागं श्राद्धं, *तदनर्हाणां शूद्राणां तु मूल्यमिति केचित् । *षोडशीपिण्डेऽबान्धवानामपि पिण्डोक्तेः, 'येऽबान्धवा बान्धवा वा' इत्यादितर्पणबाधापत्तेश्च नामगोत्रपूर्वं श्राद्धनिषेधो नान्यत्रेति गौडाः । विप्रासुतस्य शूद्रापुत्रश्राद्धनिषेधो*नान्यत्र । अग्रदानं चान्नत्यागात्पूर्वं कार्यमिति मैथिलाः । तन्न, अग्रभागस्य श्राद्धपरत्वे मानाभावात् । अन्नदाने च *निषेधाभावात्(?) । *त्यागात्पूर्वं करणेऽमङ्गेन व्यवधानापत्तेः । अङ्गत्वे च मानाभावात् । *इदं च स्वाम्यनुज्ञाऽभावे । तदुक्तं तत्रैव ब्राह्मे–

स्वयमुलिप्तेषु गेहेषु स्वेष्वनुज्ञापितेषु च ।

---

मायाम् वेदिकाअट्टालिकादौ । *अग्रभागमिति । स्वसत्तां विना श्राद्धस्य दुष्करत्वात्तत्संपत्तये जीवनरूपं प्रथमतो मूल्यं दद्यादित्यर्थः । मतान्युत्थापयति–*श्राद्धार्हाणामिति । चकारस्य व्यवस्थितविकल्पार्थत्वादित्याशयः । *तदनर्हाणामिति ।

न ब्राह्मणेन कर्त्तव्यं शूद्रस्याप्यौर्ध्वदैहिकम् ।

इति निषेधात् शूद्राणां श्राद्धनिषेधं परिष्करोति–*षोडशीति । *नान्यत्रेति ।

शूद्रेण वा ब्राह्मणस्य विना पारशवात् क्वचित् ।

इत्युत्तरार्द्धे पारशवे कर्तृत्वस्य प्रतिप्रसूतत्वान्न तद्विरोधः । *निषेधादिति ।

श्राद्धं दित्सुर्न कस्मैचित्प्रदद्यात्प्रथमं नरः ।

इत्यादिनिषेधादित्यर्थः । दूषणान्तरमाह–*त्यागादिति । *इदमिति आपाततः । अन्यदेशीयानां नित्यस्य तद्देशीयानां नित्यादे-

---

(१) 'जीवनम्' क० ।

श्राद्धमेतेषु दानञ्च वर्ज्यमेतेषु नोच्यते ॥
किरातेषु कलिङ्गेषु कौ(१)ङ्कणषु खसेष्वपि ।
सिन्धोरुत्तर(२)कूलेषु नर्मदायाश्च दक्षिणे ॥
पूर्वेण करतोयाया न देयं श्राद्धमुच्यते ।

इदं काम्यविषयम् । अन्यथा तत्रत्यानां सर्वश्राद्धाकरणापत्तेः । नर्मदादाक्षिणेऽपवादः स्कान्दे-

सह्यस्य चोद्भवो यत्र यत्र गोदावरी नदी ।
पृथिव्यामपि कृत्स्नायां स प्रदेशोऽतिपावनः ॥

परकीयत्वापवाद आदित्यपुराणे-

अटवी पर्वताः पुण्या नदी तीराणि यानि च ।
सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रहः ॥
वनानि गिरयो नद्यस्तीर्थान्यायतनानि च ।
देवखाताश्च गर्ताश्च न स्वाम्यं तेषु विद्यते ॥

स्मृतिसारे-

*नैकवासा न च द्वीपे नान्तरिक्षे कदाचन ।
श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ॥

---

रिव काम्यस्यापि निषेद्धुमशक्यत्वात् । किन्तु भ्रमप्राप्तस्य तीर्थश्राद्धस्यान्यदेशीयानां काम्यस्य चायं निषेधः । (त्रे(३)शङ्क्वादिदेशनिषेधोऽप्येवम् ।) *नैकवासा इति । पारिभाषिकमप्येकवासो वर्ज्यम्,

सव्यादंसात्परिभ्रष्टमम्बरं यस्तु धारयेत् ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥

इति देवलोक्तेः । नैत्यकानां सकलनिषेधानामिदमुपलक्षणम् । म्लेच्छदेशलक्षणं व्रतहेमाद्रौ विष्णुः—

चातुर्वर्ण्यव्यवस्थानं यत्र देशे न विद्यते ।
स म्लेच्छदेशो विज्ञेय आर्यदेशस्ततः परः ॥ इति ।

---

(१) 'कोङ्कणेषु' क० (२) 'भागेषु' क० (३) कंसान्तर्गतं नास्ति ङ०

दिवोदासीये-

म्लेच्छदेशे तथा रात्रौ संध्यायां विप्रवर्जिते ।
न श्राद्धमाचरेद्विद्वान्न चा*काशे कथंचन ॥

अथ श्राद्धकालाः । ते च संक्रान्तियुगादिमहालयादयः प्रायेण पूर्वपरिच्छेदद्वये उक्ता एव । कचित्तूच्यन्ते ।
पृथ्वीचन्द्रोदये वृद्धपराशरः—

श्राद्धं वृद्धाव*चन्द्रे भच्छायाग्रहणसंक्रमे ।
*नवोदके नवान्ने च *नवच्छन्ने तथा गृहे ॥
नवेक्षवेषु चेहन्ते पितरो हि मघास्वपि ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥

इति शातातपपाठः । नवोदकं नवकूपवाप्यादाविति केचित् । वर्षोपक्रमे आर्द्राप्रवेशे इति गौडाः । नवान्नश्राद्धे विशेषो ज्योतिषे-

ज्येष्ठ*शेषा(१)र्धगे सूर्ये मृगनेत्रानिशात्मके ।
नवान्नै*र्भोजन(२)श्राद्धं जन्मचन्द्रतिथौ न च ॥
आश्लेषाकृत्तिकाज्येष्ठामूला(३)जपदगेषु च ।
गुरुभौमदिने रिक्ते तिथौ*नाद्यान्नवौदनम् ॥

---

*आकाशोऽट्टालिकादिरनावृतः ।

परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा ।

इति याज्ञवल्क्यवाक्येपि परिश्रितः परित आच्छादितः ।

*अचन्द्रः दर्शः । *नवोदके तीर्थोदके इत्यप्याहुः । *नवच्छन्ने नवसंपादिते इत्यप्याहुः । *शेषार्द्धः उत्तरार्द्धः । *भोजनश्राद्धं सङ्कल्पश्राद्धम् । तथा च ज्येष्ठोत्तरार्द्धं विहाय नवान्नश्राद्धं सांकल्पं कुर्यादित्यर्थः । *नाद्यादिति । नवौदनश्राद्धशेषभोजननिषेधस्त-

(१) 'ज्येष्ठशेषागत' क० ख०
(२) 'भोजयेच्छ्राद्धम्' क०
(३) 'मूलाजपद्दकेषु च । भृगुभौमदिने' क०

तत्रैव-

वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः ।

अतः कृष्णपक्षे नेति गौडाः । मैथिलास्तु

अकृताग्रयणं चैव धान्यजातं नरोत्तम ।

इति वाराहोक्तेः प्रतिधान्यं श्राद्धमाहुः । तन्न, जातपदस्य श्राद्धयोग्यसमूहपरत्वात् । हेमाद्रौ जातूकर्ण्यः—

ग्रहो(१)परागे च सुते च जाते
पित्र्ये गयायामयनद्वये च ।
नित्यं च शङ्खे च तथैव पद्मे
दत्तं भवेन्निष्कसहस्रतुल्यम् ॥

शङ्खं प्राहुरमावास्यां क्षीणचन्द्रां द्विजोत्तमाः ।
अष्ट(२)कासु भवेत्पद्मं तत्र दत्तं तथाऽक्षयम् ॥

तत्रैव शङ्खः—

यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च
पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम् ॥

याज्ञवल्क्यः—

*अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥

---

च्छ्राद्धनिषे(३)धार्थः । *अमावास्येत्यादि । अष्टकाशब्दः कर्मनामधेयमपि तदधिकरणकालपरः, पूर्वोत्तरतिथ्योरुपलक्षणं च । एवश्चामावास्याष्टकाकृष्णपक्षव्यतीपातगजच्छायानां मुख्यकालत्वं वृद्धिसंक्रान्तिद्रव्यादिसंपद्ग्रहणरुचीनां निमित्तभूतानां तदुपलक्षणत्वेन । नन्वस्यां स्मृतौ न कालानालिङ्गितश्राद्धविधिः येन तद्विहितं

---

(१) 'एष श्लोको नास्ति क० छ०
(२) 'अष्टकासु' क०
(३) 'निषेधार्थम्' क० ख०

*कृष्णपक्षः सर्वोऽपि *'शाकेनाप्यपरपक्षं नातिक्रमेत् मासिमासि वाऽशनम्' इति(१)श्रुतेः *'ऊर्ध्वं वा चतुर्थ्या यदहः संपद्यते ऽनेन चतुर्दशीम्'इति कात्यायनोक्तेः, 'मासिमासि कार्यमपरपक्षस्यापराह्णः श्रेयान्'इत्यापस्तम्बोक्तेश्च वीप्सया (२)सर्वं कृष्णपक्षेषु नित्यम् । तेनोपसंहारान्महालयपरत्वं परास्तम् । *अत्र प्रत्यहं,

---

श्राद्धमनुष्ठानेन कालसंबन्धो विधातुं शक्यते, स्वतन्त्रेष्ट्यादिविधिसत्त्वेन 'य इष्ट्या' इत्यादिवत् । अन्यथा 'सायं प्रातश्च जुहोति' इतिवत् सकृत्प्रयोगासंभवन्निवेशानेककालसमुच्चयवशादभ्यासमात्रा(३)पत्तिः । न च स्मृत्यन्तरगतांस्तत्तच्छ्राद्धविधीनपेक्ष्य तथा कार्यम्, तत्तत्कालविशिष्टानामेव तेषां तत्र विधानात् । विध्यनुवादयोरसत्त्वे च इतिकर्त्तव्यतानाकाङ्क्षणेनोत्तरत्र तद्विधानानुपपत्तिश्चेति चेत् ? न, एते श्राद्धकाला इतिकालविशिष्टकर्मविधिः, एषु कालेषु श्राद्धं कुर्यादित्यर्थात् । विध्येकत्वेऽपि संख्यान्यायेन एककर्मासंभवन्निवेशनानाकालवशात्कालभेदेन श्राद्धभेदः, 'यदाग्नेयः'इत्यत्राग्नेयभेदवत् । वस्तुतस्त्वत्र वाक्यतन्त्रतामा(४)त्रम् , पर्यवसानतस्तु विधिभेदः निमित्तानामेकविध्यनुप्रवेशासम्भवात्तदंशे विधिभेदस्यावश्यकत्वात्तन्मिश्रतया कालानां तदौचित्यात् । तद्भेदे च विहितस्य विधानायोगात् प्रतिविधि श्राद्धानां भेद एव ।

अष्टकामावास्ये निर्णीते, वृद्धिश्राद्धनिमित्तानि निर्णेष्यन्ते, अत आह-*कृष्णपक्ष इति । *शाकेनापीति । वीप्सातः कृष्णपक्षस्य सर्वमासीयत्वं, तच्छ्राद्धस्य नित्यत्वं 'शाकेनापि' इत्युक्तेः । *ऊर्ध्वं चेति । अपरपक्षे श्राद्धं कुर्वीतेति प्रकृतं, ततश्च प्रतिपत्प्रभृति सर्वतिथिलाभः, ऊर्ध्वं वेतिपञ्चमीप्रभृति, यदहरिति वाकारोऽनुवर्त्तते । इत्थं च पक्षत्रयमाह—*अत्रेति ।

---

(१) 'इति स्मृतेः' छ०
(२) 'सर्वकृष्णपक्षेषु' क०
(३) 'मात्रापत्तेः' ङ०
(४) 'मात्र'ख०

दशम्यादिपक्षोऽप्यन्यत्र । एषां पक्षाणां शक्ताशक्तभेदेन व्यवस्था । एतच्च हेमाद्र्यनुसारेण । विवेचनकारास्तु कृष्णपक्षश्राद्धं सकृदेव न तु प्रतितिथि आवर्त्तते, 'वसन्तनिमित्तकज्योतिष्टोमवत्सकृत्कृते कृतः शास्त्रार्थः' इति न्यायात्,

आश्वयुक्शुक्लपक्षे तु श्राद्धं कार्यं दिने दिने ।

इतिवत् वीप्साया अश्रवणाच्च । "अथ सर्वेष्वेवापरपक्षस्याहःसु क्रियमाणे पितॄन् प्रीणाति कर्त्तुस्तु कालाभिनियमात्फलनियमः' इत्यापस्तम्बं सर्वातिथिषु श्राद्धं विदध्यात् । मैवम्, कृष्णपक्षे कस्यांचित्तिथौ श्राद्धे कृते पितृतृप्तिरविशिष्टा । यदि तु स्त्र्यपत्यादिफलार्थी तदा प्रतिपद्येव द्वितीयायामेवेति कालनियमाच्छ्राद्धमिति हरदत्तेन व्याख्यानात् । युक्तं चैतत्, कृष्णपक्षनिमित्तकश्राद्धाश्रिततत्तत्तिथिविशेषफलानां फलसम्बन्धविधाने कामनयाऽप्येकस्मिन्कृष्णपक्षे एकतिथावेव श्राद्धे गुणफलानुरोधेनाश्रयानावृत्तेः । ऊर्ध्वं(२)वेत्यादि तु सकृत्करणस्यैव द्योतकं, 'यदहः संपद्यते तदहर्ब्राह्मणानामन्त्र्य' इति विधानान्तरैकवाक्यतया(३)कर्कादिव्याख्यानात् । 'यदहरुप(४)पद्यते' इति गोभिलीयं तु द्रव्यब्राह्मणसंपत्तिरित्येकवाक्यतया व्याख्यातमन्यैः । तथा च सामान्यतः सर्वकृष्णपक्षे चतुर्दशीभिन्नायां यस्यां कस्यांचित्तिथौ सकृच्छ्राद्धम्, वृद्धिविशेषकामनायां पञ्चम्यादिकस्यांचित्, ततोऽपि विशेषकामनायां दशम्यादिकस्यांचित्, ततो विशेषकामनायाममावास्यायां सकृदेव श्राद्धं कर्त्तव्यमिति पर्यवसन्नम् । महालये तु पञ्चपक्षा इति प्राहुः । मतद्वयेऽपि चतुर्दशी वर्ज्यैव,

नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने ।
नैव नन्दादि वर्ज्यं स्यान्नैव निन्द्या चतुर्दशी ॥

इति कार्ष्णाजिनिना भाद्रापरपक्षे चतुर्दशीवर्जननिषेधा-

(१) 'अनावृत्ते' ङ० (२) 'च' ङ० (३) 'कर्मादि' ङ० (४) 'उपपद्येत' ङ०

पञ्चम्यादि, यदहःसंपत्तिर्वा इति त्रयः पक्षाः । यदैकदिने श्राद्धं तदा दार्शं*पृथगेव, याज्ञवल्क्येनामावस्यायाः

---

दन्यत्र तद्वर्जनावगमात्;

> कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
> श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥

इति मनुना द[illegible] चतुर्दश्या वर्जनोक्त्या प्रतिपदादिषु पक्षद्वयोरपि तल्लाभाच्च । कृष्णपक्षे सामा(१)न्यवर्ज्यान्तरमपि नारदसंहितायाम्--

> न नन्दासु भृगोर्वारे रोहिण्यां च त्रिजन्मसु ।
> रेवत्यां च मघायां च कुर्यादापरपक्षिकम् ॥

नन्दाः प्रतिपत्षष्ठ्येकादश्यः । त्रिजन्मानि आद्यदशमैकोनविंशनक्षत्राणि । गार्ग्योऽपि--

> नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मसु ।
> एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥

बृद्धगार्ग्योऽपि--

> [illegible]े च पौष्णे च पित्र्यर्क्षे भार्गवे तथा ।
> यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति ॥ इति ।

ए(२)वम्--

> भानौ भौमे त्रयोदश्यां नन्दा[illegible] च ।
> पिण्डदानं मृदा स्नानं न कुर्या[illegible] ॥

इति पिण्डदानपदं श्राद्धोपलक्षणात्, एकमूलकल्पनालाघवात् । एतद्धेमाद्रिमते सकृत्करणपक्षे, विवेचनकृन्मते सर्वपक्षेषु द्रष्टव्यम् । *पृथगेवेति । हेमाद्रिमते वि[illegible] च कृष्णपक्षश्राद्धाद्भिन्नमेवेत्यर्थः, प्रकारान्तरविकल्पस्य दूषणीयत्वात् । दर्शे कृष्णपक्षश्राद्धकरणे चाविरुद्धाङ्गत्वे दार्शेन सिद्धिः, न तु विरु(३)द्धा-

---

(१) 'सामान्ये' ङ । (२) 'एवंच' ङ । (३) 'विरुद्धाङ्गत्वे' ङ ।

* पृथङ्निर्देशात् । एतेन 'कृष्णपक्षे यदहः संपद्यते अमावास्यायां तु विशेषेण' इति निगमोक्तेर्गुणोऽपरपक्षश्राद्धस्यामावास्येति शूलपाणि(१)मत*मपास्तम् । *'अशक्तौ दर्शेनापि मासिश्राद्धसिद्धिः' इति नारायणवृत्तिः । *निरग्निकानां कस्मिंश्चिदहनि । आहिताग्नेस्तु दर्श एव,

---

ङ्गकत्वे इति तु द्रष्टव्यम् । *पृथगिति । न चायनविषुवतोरिव प्राशस्त्यद्योतनार्थं तस्याः पृथङ्निर्देशः, कृष्णपक्षादिवदनुवादांशेन द्योतने अमावास्यान्वितश्राद्धकालांशेऽनुवा(२)दत्वम्, इतरभागे च विधित्वमिति वैरूप्यापत्तेः । न च पुनर्विधानादेव प्राशस्त्यं द्योत्यताम्, [illegible] पुनरुक्त्यासम्भवात् । अयनविषुवतोस्तु श्राद्धस्य विधानमेव [illegible] गोबलीवर्दन्यायेन(३) (तदितरत्वात्तयोस्तद्विधानात् । एवंविधवाक्यभङ्ग्या सामान्यविधेः स्वविषयेतरविषयत्व[illegible])विषुवतोः श्राद्धस्य सङ्क्रान्तरश्राद्धापेक्षयाऽऽवश्यकत्वसिद्धिः । न [illegible]समभिव्याहारात् कृष्णपक्ष[illegible]तदन्यतिथिषु[illegible]नास्त्विति वाच्यम्, हेमाद्रिमते यदहः सम्पद्यते [illegible] कृष्णप(४)क्षपदेन सर्वासु तिथिषु श्राद्धविधानस्य निराकृतत्वात् । *[illegible]ति । यद्यपि निगमवचने पृथग्विधानात्फलविशेषार्थिनः कृष्ण[illegible]ऽमावास्यारूपगुणविधिर्युक्त एव तथापि योगीश्वरवचने स न युज्यते; बहुवचनावगतपरस्पर[illegible]न्वयविघातवैरूप्यापत्तेरिति भावः । *अशक्ताविति । [illegible]श्राद्धादर्शस्य [illegible]वेदशवृत्तिग्रन्थसङ्गतिरित्यर्थः । एवञ्चाविरुद्धाङ्गकत्वं, विरुद्धा(५)ङ्गकत्वे त्वावृत्तिरिति तु बोध्यम् । *निरग्निकानामिति । कृष्ण[illegible] प्रकृतम् । *न

---

(१) 'मतमप्य' ख० । (२) 'अनुवादकत्वम्' ख० ।
(३) 'धनुश्चिन्हान्तर्गतो ग्रन्थो नास्ति' ख० । (४) 'पक्ष' नास्ति ङ ।

*न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ।

इति मनूक्तेः । *सर्वकृष्णपक्षाशक्तौ मात्स्ये—

*अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्वदा ॥

कर्कोऽपि-'आहिताग्नेः संवत्सरे त्रिःश्राद्धनियमः' इति। देवलः-

*अनेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत् ।
द्विश्चतुर्वा यथा श्राद्धं मासेमासे दिनेदिने ॥

कृष्णपक्षेष्वपि महालयस्य श्रेष्ठत्वम् । तच्चोक्तं प्राक् । व्यतीपाते विशेषमाह हेमाद्रौ शङ्खः—

फलं (१)लक्षं समुत्पत्तौ भ्रमणे कोटिरुच्यते ।

---

दर्शेनेति । व्याख्यातम् । *सर्वकृष्णपक्षाशक्ताविति । सर्वामावास्याऽशक्तावित्यर्थः । *अनेनेति । पादत्रयेण दर्शश्राद्धस्य त्रिरात्राद्यनुकल्पं विधाय चतुर्थपादेन कृष्णपक्षश्राद्धस्य सर्वदा कर्त्तव्यत्वाभिधानात् । ऋतुसंवत्सराभिप्रायेण मासचतुष्टयात्मका ऋतवः । हेमन्तप्रयुक्तं कुम्भस्थार्केऽमावास्यायाम्, ग्रीष्मप्रयुक्तं वृषार्के तस्याम्, वर्षाप्रयुक्तं कन्यार्के तस्यामिति ।

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पाञ्चयाज्ञियमन्वहम् ॥

इत्यमावास्याश्राद्धानुकल्प मनूक्तेश्च, मात्स्यपादत्रयस्य कृष्णपक्षपरत्वाभावप्रतीतेश्च । तत्रामावास्याश्राद्धकृष्णपक्षश्राद्धयोर्द्वयोरपि नैमित्तिकत्वेऽपि कृष्णपक्षश्राद्धाकरणहेतुकप्रत्यवायपरिहारस्यामावास्यायाम् अपि तत्कालत्वेन तत्र श्राद्धानुष्ठानेन सिद्धिः । अमावास्याश्राद्धाकरणहेतुकप्रत्यवायपरिहारस्य च त्रिःश्राद्धकरणेनापि सिद्धिः । त्रिः करणं च चतुः करणाशक्तौ । त्रिः करणाशक्तौ तु द्विः करणम् । तदशक्तौ सकृत्करणमित्याह-*अनेनेति ।

---

(१) 'लक्षमुत्पत्तौ' क० ख० छ० ।

पतने शतकोट्यस्तु पाते वै दत्तमक्षयम् ॥

ज्योतिःशास्त्रे—

द्वाविंशतिस्तथोत्पत्तौ भ्रमणे चैकविंशतिः ।

पतने दश नाड्यस्तु पतिते सप्त नाडिकाः ॥

अ(१)न्त्यौ च द्वौ व्यतीपातौ प्रागुक्तौ । हेमाद्रौ मार्कण्डेयः—

*यदा च श्रोत्रियोऽभ्येति गृहं वेद(२)विदग्निचित् ।

तेनैकेनापि कर्तव्यं श्राद्धं च विषु(३)वच्छुभे ॥

---

पार्वणश्राद्धमभिधायैतद्वचनोक्त्या अमावास्याश्राद्धानुकल्पत्वम् । एवं संवत्सरप्रक्रमात्तस्य 'मासे मासे' इत्यत्र 'दिने दिने' इत्यत्र वाऽन्वयः । 'मासे मासे' इत्यनेन मासानुमासिकमित्युक्तेरमावास्याश्राद्धं वा, 'मासि मासि चैवम्' इत्युक्तेरपरपक्षश्राद्धं वा गृह्यते । 'दिने दिने' इत्यनेन त्वहरहः श्राद्धम् ; 'मासे मासे' 'दिने दिने' इति वीप्साश्रुत्या प्रत्यहमपरपक्षश्राद्धमिति व्याख्यानस्य भ्रममूलकत्वात् । विवेचनमते तस्य सकृत्त्वात् । हेमाद्रिमतेऽपि 'अनेन' इति सर्वनाम्नः प्रक्रान्तपरामर्शित्वं न तु प्रक्रम्यमाणपरामर्शित्वमिति । एवं साग्निकस्य पार्वणासम्भवे पिण्डपितृयज्ञपिण्डदानमात्रेणैव तत्सिद्धिः । निरग्निकस्य तु ब्राह्मणभोजनमात्रमुक्तं निगमे—"आहिताग्नेः पित्रर्चनपिण्डैरेव, निरग्नेः पू(४)र्णमन्नदानम्" इत्यादि ।

द्रव्यं पायसादि ।

ब्राह्मणमाह—*यदा चेति । इ(५)दं द्रव्यब्राह्मणयोरुपलक्षणम् । सम्पत्ती इति द्विवचनान्तपाठ इति केचित् । 'द्रव्यब्राह्मणयोः सम्पत्तिर्यत्र काले' इति एकवचनान्तः पाठ इति माधवादयः । द्रव्यमित्यसमस्तमिति मिताक्षरा ।

---

(१) 'अन्यौ' क० । (२) 'वेदविदग्निवित्' ख० ।

(३) 'विधिवच्छुभम्' क० ।

(४) 'पूर्वम्' ख० । (५) 'इदं च' ङ० ।

इदं चापिण्डं कार्यमिति हेमाद्रिः । एतज्जीवत्पितृकोपि कुर्यात्,

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

इति मैत्रायणीयपरिशिष्टोक्तेः ।

तिथिविशेषे फलविशेषो याज्ञवल्क्येनोक्तः—

*कन्यां *कन्यावेदिनश्च पशून्वै सत्सुतानपि ।
*द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥
ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरौप्ये स *कुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।

एताः कृष्णपक्षस्था एव । महालये तु फलभूमेति पृथ्वी(१)चन्द्रोदयः । पौर्णमास्यां हेमाद्रौ पितामहः-

---

( ग(२)जच्छायाभोजने प्रायश्चित्तं तु कार्यं श्राद्धे-
मृतके सूतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः ॥
छायायां कुञ्जरस्याश्च भुक्त्वा च नरकं व्रजेत् ॥
भुक्त्वा प्रमादाद्विप्रस्तु सम्यक् चान्द्रायणं चरेत् ॥ इति । )

श्राद्धकाल इति न परिसंख्या, श्राद्धानुवादेन कालान्तरस्यापि विधानात् ।

*कन्यामिति । *कन्यावेदिनः जामातरः । *द्यूतं तत्र विजयः । *कुप्यं ताम्रादि । अत्र च कृष्णपक्षश्राद्धं नाश्रयः, तदनुपक्रमात् । अतोऽनेन प्रतिपदादिश्राद्धानि तत्तत्फलार्थितया तत्तत्तिथिषु विशिष्टविधिरूपेण विधीयन्ते । तानि च परस्परं कृष्णपक्षनिमित्ताच्छ्राद्धाद्भिद्यन्ते इति एकस्मिन्नपि कृष्णपक्षे यावत्कामं तेषामनुष्ठानम् । समानप्रकारकत्वे च [illegible] प्रसङ्गान्नित्यस्य सिद्धिः

---

(१) 'पृथ्वीचन्द्रः' क० ।    (२) कंसान्तर्गतं नास्ति घ० ।

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वाञ्श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

एतन्माघ्यादिपरम् ,

व्रीहिपाके च कर्तव्यं यवपाके च पार्थिव ।
पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ॥
प्रौष्ठपद्यामतीतायां तथा कृ(१)ष्ण(२)त्रयोदशी ।
एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ॥

इति विष्णुधर्मोक्तेः । विष्णुः—'माघी प्रौष्ठपद्यूर्ध्वं कृष्णा त्रयोदशी' इति । अत्र माघी पौर्णमासीति कल्पतरुः । 'श्रावणपूर्वमपि मघायोगसम्भवात्त्रयोदशीविशेषणम्' इति गौडाः । [illegible] याज्ञवल्क्यः—

स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्राञ्छ्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥
*प्रवृत्तचक्रतां वापि वाणिज्यप्रभृतीनपि ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
धनं वेदान्भिषक्सिद्धिं कुप्यं गामप्यजाविकम् ।
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥
कृत्तिकादिभरण्यन्तं स कामान्प्राप्नुयादिमान् ।

फलान्तराण्यपि महाभारतकौर्मादिज्ञेयानि । माधवीये मरीचिः—

कृत्तिकादिषु ऋक्षेषु श्राद्धे यत्फलमीरितम् ।
विष्कम्भादिषु योगेषु तदेव फलमिष्यते ॥

बृहस्पतिः—

आरोग्यं चैव सौभाग्यं शत्रूणां च प(३)राजितम् ।
सर्वान्कामानियां विद्यां धनमायुर्यथाक्रमम् ॥

(१) 'कृष्णा' क० । (२) 'चतुर्दशी' ख० ।
(३) 'पराजयम्' क० ख० ग० ।

*क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
*गृ(१)हे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
*कानीनः कन्यकाजातो मातामहसुतः स्मृतः ॥

---

*क्षेत्रज इति । वाग्दत्तविधवायाम्
'यस्या म्रियेत कन्यायाः' 'अपुत्रां गुर्वनुज्ञातः' इति वचनाद्देवरादिजः,

यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य च ।
स्वधर्मेण नियुक्तायां स ज्ञेयः क्षेत्रजः सुतः ॥

इति मनुना पुत्रोत्पादनासमर्थस्य जीवतोऽपि पत्युः क्षेत्रे तन्नियोगेन सवर्णाज्जातोऽपि क्षेत्रज उक्तः । अयं च क्षेत्रिणः,

अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ।

इत्युक्तेः । बीजिनोऽपि पुत्रेच्छा चेत् ,

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

इति याज्ञवल्क्योक्तेः । *गृहे इति । सवर्णजत्वनिश्चयेऽपि पुरुषविशेषजत्वेनानिश्चितः भर्तृगृहे सवर्णादुत्पन्न इत्यर्थः । अयं च क्षेत्रिण एव,

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥

इति मनूक्तेः । *कानीन इति । सवर्णादपरिणीतायामुत्पन्नः । स च—

अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः ।
पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

इति मातामहस्य सुत उक्तः । मनुना च—

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥

---

(१) 'गृहप्र' क० ।

*अक्षतायां क्षतायां वा जातः पौनर्भवस्तथा।
*दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥
*क्रीतश्च ताभ्यां विक्रीतः *कृत्रिमः स्यात्स्वयंकृतः।

---

इति परिणेतुः। एवञ्च तयोर्मध्ये यस्यापुत्रता तस्यैव। उभयोरपि तथात्वे उभयोरपीति। *अक्षतायामिति। पत्या भुक्तायामभुक्तायां वा जीवता तेन त्यक्तायां, विधवायां वा सवर्णाज्जातः,

या तु पत्या परित्यक्ता विधवा स्वेच्छयाऽथ वा।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते॥

इति विष्णूक्तेः। स च बीजिन एव, परित्यागेन मरणेन वा क्षेत्रे भर्तुः स्वत्वाभावात्, स्वेच्छापदाच्च। *दद्यादिति। मातापितृभ्यामन्यतराभावेऽन्यतरेण वाऽत्यन्तदुर्गतया भरणासामर्थ्येन विधिपूर्वकं दत्तः प्रतिग्रहीतृसवर्णः प्रतिग्रहीतुरेव। प्रपञ्चितं चेदं प्राक् प्रपञ्चयिष्ये च। अत्र होमान्यः ग्रहणापादनप्रतिग्रहीतृगोचरः सर्वोऽपि नियमः क्रीतकृत्रिमापविद्धस्वयंदत्तेष्वपि यथासम्भवमावश्यकः, अदृष्टार्थत्वात्‘तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः’ इति वासिष्ठे क्रयत्यागयोरुपादानात्। स्वयंदत्ते तु होमोऽपि,प्रतिग्रहसत्त्वात्। *क्रीत इति।

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि च॥

इति मनूक्तमसादृश्यं तु गुणैरेव,

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः॥

इत्युपसंहारात्। कानीनगूढोत्पन्नसहोढजपौनर्भवानां कुण्डगोलकत्वेऽपि साजात्यं जनकद्वारा। *कृत्रिम इति। मातापितृहीनः प्रौढः धनादिप्रलोभनेन स्वयं पुत्रार्थिना पुत्रीकृतः,

सदृशं यं प्रकुर्वीत गुणदोषविचक्षणम्।

*दत्ता(१)त्मा तु स्वयं दत्तो*(२)गर्भे विन्नः सहोढजः॥
*उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुत :।
*पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः॥ इति।

तथापि—

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।

इति हेमाद्रावा(३)दित्यपुराणे कलावितरेषां पुत्रत्वनिषेधादौरसदत्तकपरमेव।

---

पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः॥

इति मनूक्तेः। प्रकुर्वीतत्युपादानान्मातृपितृहीनतादिलाभः। *दत्तात्मेति। मातापितृभ्यां हीनस्त्यक्तो वा तवाहं पुत्रोऽस्मीति स्वमात्मानं दत्तवान् पूर्ववद् गृहीतः,

मातापितृभ्यां हीनो वा त्यक्तो वा स्यादकारणात्।
आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्तु स स्मृतः॥

इति मनूक्तेः। *गर्भ इति। सवर्णात्सम्भूतो गर्भिण्यां परिणीतायां गर्भस्थित्या स्वीकृतः पश्चादुत्पन्नो वोढुः पुत्रः,

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती।
वोढुः स गर्भो भवति सहोढ इति चोच्यते॥

इति मनूक्तेः। *उत्सृष्ट इति। मातापितृभ्यां तदन्यतरेण वा दोषाभावेऽपि भरणासामर्थ्येन, मूलजातत्वादिना वा त्यक्तो ज्ञातपित्रादिः सवर्णः पुत्रत्वेन गृहीतः,

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा।
यं पुत्रं प्रतिगृह्णीयादपविद्धस्तु स स्मृतः॥

इति मनूक्तेः। *पिण्डद इति। अभावोऽसन्निधानं नाशश्च। तत्र पिण्डदाने आद्यः, अंशहरणे द्वितीयः।

---

(१) 'दत्तान्मातुः' ग०। (२) 'गर्भे वित्तः' क०। (३) 'आदिपुराणे' ख०

यद्यपि—

पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः ।

इति याज्ञवल्क्योक्तेरौरसाभावे दत्तकप्राप्तिः, तथा-प्यौरसाभावे पौत्रः तदभावे प्रपौत्रः तदभावे दत्तकाद-यः इति ज्ञेयम्,

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥

इति जीमूतवाहनधृतवासिष्ठहारीतशङ्खलिखितोक्तेः,

लोकानन्त्यं दिवः प्राप्तिं पुत्रपौत्रप्रपौत्रकैः ।

इति याज्ञवल्क्योक्तेश्च ।

*पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च ।
पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा ॥
भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा ।
असंनिधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः ॥

इति स्मृतिसंग्रहे प्रपौत्रानन्तरं पुत्रिकापुत्रोक्तेस्ततस्सम-त्वाच्च*दत्तकस्य । यद्यपि बृहस्पतिना—

---

यद्यपि—

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥
पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा ।
स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्तिताः ॥

इति नारदीयः पाठक्रमः, तथाऽपि परिगणनमात्रेण कल्प्य-क्रममपेक्ष्य 'एषां पूर्वाभावे परः परः' इति प्रत्यक्षतो विहितक्रम एव ग्राह्यः ।

*पुत्र इति । एकवचनमौरसाभिप्रायम् *दत्तकस्येति ।

पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
रिक्थे च पिण्डदाने च स(१)मौ तौ परिकीर्तितौ ॥

इति पौत्रसाम्यमुक्तम् । याज्ञवल्क्येन च—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।

इति*औरससाम्यम् , तथापि 'लोके राजसमो मन्त्री' इत्यादौ किंचिन्न्यूने समशब्दप्रयोगात्, गौणमुख्ययोः साम्यायोगाच्च*स्तुत्यर्थं तत् न तु समविकल्प इति भ्रमितव्यम् ,

*पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः ।
( सपि(२)ण्डसंततिर्वापि क्रियार्हा नृप जायते ॥
तेषामभावे सर्वेषां समानोदकसन्ततिः ।)
मातृपक्षसपिण्डेन संबन्धो यो जलेन वा ॥

---

अत औरसानन्तरं न दत्तक इति भावः ।*औरससाम्यमिति। तथा च पुत्रिकासुतेऽपि "दत्तौरसेतरेषाम्"इति कालनिषेधो न प्रवर्त्तते इत्याशयः । *स्तुत्यर्थमिति ।

उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः ।
सवर्णा असवर्णाश्च ग्रासाच्छादनभाजनाः ॥

इति कात्यायनेन क्षेत्रजक्रीतकृत्रिमस्वयंदत्तापविद्धेषु सावर्ण्येन, कानीनगूढोत्पन्नसहोढपौनर्भवेष्वसावर्ण्येन च निमित्तेन व्यवस्थाकरणात्सावर्ण्यनिमित्तकचतुर्थांशहारित्ववारणाय साम्योपादानम् ;

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते ।
समस्तस्य विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥

इति मनूक्तेरिति च द्रष्टव्यम् । एवञ्च पुत्रिकासुतेऽपि प्रोक्तकलिनिषेधः प्रवर्त्तत एवेति भावः । *पुत्र इति । 'गौणमुख्य-

---

(१) 'समानौ' ख० । (२) धनुश्चिह्नान्तर्गतं नास्ति क०

कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्या क्रिया नृप।
*तत्संघातगतैर्वापि तद्रिक्थात्कारयेन्नृपः॥

इति विष्णुपुराणाच्चेति। प्रपौत्रानन्तरं दत्तकादय इति पृथ्वीचन्द्रमदनरत्नकालादर्शादयः। मदनपारिजातेऽप्येवम्।

*बोपदेवरुद्रधरादयस्तु—

*पुत्रेषु विद्यमानेषु नान्यो वै कारयेत्स्वधाम्।

इति सुमन्तूक्तौ—

पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति।
पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम्॥
नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः॥

इति छन्दोगपरिशिष्टे च पुत्रशब्दस्य द्वादशविधसुतपरत्वात्, *'पूर्वाभावे परः परः' इत्यस्यानन्यपरत्वाच्च, दत्तकाद्यभावे पौत्रादीना(१)मधिकार इत्याहुः, तद्गौणमुख्ययोः साम्यायोगाद्दत्तके सति पौत्रस्यांशहरत्वस्याप्यभावापत्तेः पुत्रपदस्यौरसमात्रपरत्वाच्चिन्त्यम्। अत एव निषेधादुपनीतपौत्रसत्त्वेऽप्यनुपनीतपुत्रस्यैवाधिकारः 'औरसश्चानुपनीतोऽपि कुर्यात्' इत्याह। पृथ्वीचन्द्रोदये

---

योर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन मुख्यपरम्, बद्धक्रमप्रपौत्रान्ते च दत्तक इति भावः। *तत्सङ्घातगतैः एकसार्थान्तर्गतैः।

सिद्धान्तमाह-*बोपदेवेत्यादिना। *पुत्रेष्विति। पुत्रपदं च नौरसमात्राभिप्रायकम्, तद्वाक्यवैयर्थ्यप्रसङ्गात्। (त(२)था च गौणमुख्यन्यायो नेह प्रवर्तते इति भावः।) ननु गौणमुख्य[illegible]त्वात्पौत्रानन्तर्यं दुर्वारमित्यत आह-*पूर्वाभावे इति। प्रोक्तस्मृतिसंग्रहवचने प्रोक्तविष्णुपुराणवचने च पुत्रपदं पुत्रत्वेन गौण-

---

(१) 'नामप्य' ग०। (२) धनुश्चिन्हान्तर्गतं नास्ति ख० ङ०

सुमन्तुः––

श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।
*व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि ॥

वृद्धमनुः––

कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः ।
*पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः ॥

*एको मुख्य औरस इत्यर्थः ।

मनुः––

नह्यस्मिन्युज्यते कर्म किंचिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयादृते ॥

ब्रह्म वेदः । सुमन्तुरपि—

नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी नि(१)बध्यते ।
मन्त्राननुपनीतोऽपि पठेदवैक औरसः ॥

---

सङ्ग्राहकम्, पुत्रग्रहणेन तेषामग्रहणे दत्तकादेः पुत्रत्वोक्तेर्निष्प्रयोजनकत्वप्रसङ्गात् । एकवचनं च जात्यभिप्रायकम्, स्मृतिसङ्ग्रहवचने पुत्रिकापुत्रपदं दौहित्रपरमिति न तद्विरोधः । न चैवं दत्तके सति पौत्रस्यांशहर्तृत्वमपि न स्यात्, सावर्ण्यनिबन्धनचतुर्थांशहारित्वस्यानुज्ञानात् । न च 'पुत्राभावे तु पत्नी स्यात्' इति वचनात् पत्न्येवाधिकारिणी स्यात् । तस्या योगीश्वरोक्तक्रमबद्धद्वादशविधपुत्रोत्तरं प्राप्त्यौरसपुत्रपत्न्योः क्रमे बाधिते 'सकृत्प्रवृत्तायाः किमवगुण्ठनेन' इति न्यायात् 'पुत्रः पौत्रः प्रपौत्रो वा' इति बद्धक्रमयोः पौत्रप्रपौत्रयोर्गौणमुख्यपुत्रोत्तरं पत्न्याश्च प्राङ्निर्देशः । *व्रतस्थ इति दृष्टान्तः । *पितृयज्ञाहुतिमिति । प्रत्याब्दिकादिष्ववश्यकर्त्तव्येष्वनुपनीतस्याधिकारसूचकम् । नन्वेक एवेत्यस्याद्वितीय एवेति नार्थः, सद्वितीयस्य श्राद्धानाधिकारप्रसङ्गात् ;

---

(१) 'न बध्यते' क० ।

अयं मन्त्रपाठ*स्त्रिवर्षकृतचूडस्यैव,

अ(१)नुपेतोऽपि कुर्वीत मन्त्रवत् पैतृ(२)मेधिकम् ।
यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः ॥

इति सुमन्तूक्तेः । यत्तु व्याघ्रः—

कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥ इति;

यच्च स्मृतिसङ्ग्रहे—

कृतचूडोऽनुपेतश्च पित्रोः श्राद्धं समाचरेत् ।
उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥ इति;

तत्प्रथमवर्षचूडाविषयमिति माधवमदनरत्नपृथ्वीचन्द्राः । *त्रि(३)वर्षोर्ध्वं मन्त्रवत्त्वस्य विकल्प इति चन्द्रिका बोपदेवश्च । दत्तकादिपरो निषेध इति वयम् ।

मदनरत्ने स्कान्दे—

*यज्ञेषु मन्त्रवत्कर्म पत्नी कुर्याद्यथा नृप ।
तथौर्ध्वदैहिकं कर्म कुर्यात्सा धर्मसंस्कृता ॥

---

एवकारवैयर्थ्याच्च; इत्यत आह-*एको मुख्य इति । *त्रिवर्षेति प्रथमादिवर्षस्य, कृतचूडेति अकृतचूडत्रिवर्षस्य व्यावृत्तिः । न च-'यदि च स्यात्त्रिवत्सरः' इति पृथगुक्तेर्वर्षत्रयात् पूर्वमपि कृतचूडस्य मन्त्रवदधिकारः स्यात्, विधेयकर्तृविशेषणद्वयस्यापि विवक्षितत्वात् । *त्रिवर्षोर्ध्वमिति । (४)व्यवस्थानादरादस्वरसः ।

*यज्ञेष्विति । त्रिवर्षकृतचूडस्यापि पत्नीवत्कृत्स्ने समन्त्रौर्ध्व-

---

(१) 'अनुपनीतः' ख० । (२) 'पितृमेधिकम्' ख० ।

(३) 'त्रिवर्षोर्ध्वं' नास्ति क० ।

(४) श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥

इति वचनादिति भावः ।

अशक्तौ तु कात्यायनः—

असंस्कृतेन पत्न्या च ह्यग्निदानं *समन्त्रकम् ।
कर्तव्यामितरत्सर्वं कारयेदन्यमेव हि ॥

पुत्रश्च न जन्मतोऽधिकारी किंतु वर्षोत्तरमित्याह कालादर्शः—

चौलादाद्याब्दिकादर्वाक् न कुर्यात्पैतृमेधिकम् ।

मदनरत्ने सुमन्तुरपि—

*पुत्रश्चोत्पत्तिमात्रेण संस्कुर्याद्दणमोचनात् ।
पितरं*नाब्दिकाच्चौलात्पैतृमेधेन कर्मणा ॥

एतच्चौरसस्यैव । दत्तकादीनां तूपनीतानामेवाधिकार इति कालादर्शः । पृथ्वीचन्द्रोदयेऽपि स्कान्दे—

पित्रोरनुपनीतोपि विदध्यादौरसः सुतः ।
और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः ॥ इति ।

अन्यत्रापि दर्शमहालयादावनुपनीतस्याधिकारोऽस्मा-

---

देहिकेऽधिकारः । तदुभयस्य वा शक्तौ समन्त्रकाग्निदानमात्रस्य वक्तव्यत्वादित्येकं मतम्, 'पत्न्या एव शक्तौ सर्वं समन्त्रमौर्ध्व-देहिकम् । अशक्तायास्तस्याः प्रथमवर्षकृतचूडस्यापि चाग्निदान-मात्रं समन्त्रम्, अन्यत्त्वमन्त्रं कारयेत्' इत्यस्य मन्त्रपाठमात्रपरत्वे-नौर्ध्वदेहिके तस्याधिकारात् । *समन्त्रकम् इत्यन्त एकश्छेदः । सर्वमित्यन्तोऽपरः । एवञ्च 'कारयेत्' इत्यस्य मन्त्रपाठपरतेत्यपरं मतम् । यत्तु ताभ्यामग्निदानमात्रं कर्त्तव्यं अन्यत्सर्वमन्येनेत्यर्थ इति, तन्न युक्तम्, 'यज्ञेषु' इति वचनेन पत्न्याः,

कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः ।

इत्यनेनानुपनीतस्य चाधिकारात् । *पुत्रश्चेति । ऋणमो-चनस्य हेतुत्वम्, 'अध्ययनतो वसति' इतिवत् । *नाब्दिकादि-ति । आ आब्दिकादिति च्छेदः । प्रथमवर्षीयचौलाद्विनेति तदर्थः ।

म्भः पूर्वमुक्तः । *प्रपौत्राभावे दत्तकादय एकादश पुत्राः तदभावे भर्तुः पत्नी, तस्याश्च सः,

*अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं *कृत्स्नमंशं लभेत च ॥

---

*प्रपौत्राभावे इति । प्रथममते । *अपुत्रेति । वस्तुतस्तु—

अपुत्रे संस्थिते कर्त्ता नास्ति चेच्छ्राद्धकर्मणि ।
तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्वणं तथा ॥

इति मनुना कर्त्ता नास्ति चेदित्युक्तेः और्ध्वदेहिके दर्शश्राद्धे च पौत्रप्रपौत्रयोरसत्त्वे पत्न्या अधिकारः । प्रथममते तु अपुत्रत्वम् औरसपुत्रराहित्यं, कर्तृराहित्यं गौणपुत्रान्तरराहित्यम्, द्वितीयमते अपुत्रत्वं मुख्यगौणपुत्रराहित्यम्, कर्तृराहित्यं च प्रपौत्रान्तरराहित्यं ब्राह्मणवसिष्ठन्यायादिति बोध्यम् । *कृत्स्नमिति । योगीश्वरेण द्वादशविधपुत्राभावे—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥

इति धनहारिक्रम उक्तः । अत्र विज्ञानेश्वरः विभक्तासंसृष्टिनि अपुत्रे मृते तद्धनं सर्वं परिणीता संयता स्त्री गृह्णीयात्, 'शयनं भर्तुः' इत्यादिवचनात् । अविभक्ते संसृष्टे वा तादृशे मृते भ्रातैव;

भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा ।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति भर्त्तुःशय्यां चेदाच्छिन्द्युरितरासु च ॥

इति नारदस्मरणात् । संसृष्टश्च पित्रादिभिरेव,

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।

पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥

इति बृहस्पतिवचनात् । पारिजातादौ तु विभक्तस्य पुत्रपौत्ररहितस्य सवर्णा असवर्णा वा पत्न्यः यथांशं विभज्य धनं (१)गृह्णीयुरित्युक्तम् । तदभावे दुहिता(२)तत्राप्यूढानूढासमवायेऽनूढा, 'स्त्रीधनं दुहितॄणामप्र(३)त्तानामप्रतिष्ठितानां च' इति स्त्रीधनविषयक-गौतमवचनस्य पितृधनेऽपि तुल्यत्वात् । ऊढास्वपि दरिद्रा, तद-भावे तु सम्पन्ना । तदभावे दौहित्रः चकारात्,

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।

इति वचनाच्च । तदभावे पितरौ "पिता मात्रा" ( पा० सू० १-२-७० ) इत्येकशेषेण (४)क्रमाप्रत्ययेऽपि अभ्यर्हितत्वेन मातुःपूर्वनिपातात् असवर्णासुतेषु पितुः साधारण्यादसाधारण्याच्च प्रथमं माता, ततः पिता, तदभावे भ्रातरः । तत्रापि प्रथमं सोदरः, एकमातृकत्वेन सन्निकर्षात् ;

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं हरेत् ॥

इति स्मृत्या सन्निकर्षविशेषस्य नियामकत्वोक्तेश्च । ततो भिन्नोदरः, तदभावे क्रमेण तयोः पुत्राः । यत्र तु अपुत्रे भ्रातरि मृते तद्धनविभागात् प्रागेव कश्चिद्भ्राता मृतः तदा तत्पुत्राणां पितृतो भागकल्पनेति न्यायेन पितृभाग एव । भ्रातृपुत्राभावे गो-त्रजाः । ते त्रिविधाः, सपिण्डाः सोदका गोत्रजाश्च,

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तेताचतुर्दशात् ॥
जन्मनाम्नोरविज्ञाने तत्परं गोत्रमुच्यते ।

इत्युक्तेः । सपिण्डेष्वपि प्रथमं पितामही ततः पितामहस्ततः

---

(१) 'गृह्णीयादित्युक्तम्' ङ० ।

(२) 'तत्राप्यूढा स्त्रीधनं' ङ० 'ऊढानूढास्त्रीधनं' ख० ।

(३) 'प्रमत्ताना' ख० 'प्रजाताना' ङ० ।

(४) 'क्रमप्रत्ययेऽपि' घ० ।

इति वृद्धमनूक्तेः,

भार्यापिण्डं पतिर्दद्याद्भर्त्रे भार्या तथैव च ।
श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः ॥ इति,

---

पितृव्यस्ततस्तत्पुत्रः ततः प्रपितामही ततः प्रपितामहः ततः प्रपितामहपुत्रः ततस्तत्पुत्र इति क्रमः । ततः प्रत्यासत्तिविशेषेण सोदकाः । ततो गोत्रजाः । ततो बन्धवः क्रमेणात्मपितृमातृसम्बन्धिनः । एतच्च बन्धुत्रयं ग्रन्थ एवाशौचे व्यक्तीभविष्यति । अत्र यद्यपि बान्धवाभावे शिष्य एवोक्तः तथापि तदभावे आचार्यस्तदभावे शिष्यो द्रष्टव्यः, 'पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभावे आचार्यस्तदभावेऽन्तेवासी' इत्युक्तेः । तदभावे तु सब्रह्मचारी, तदभावे श्रोत्रियः "श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्" इति गौतमोक्तेः । तदभावे ब्राह्मणमात्रम् ,

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥

इति मानवात् । ब्राह्मणस्वं राजा जात्वपि न गृह्णीयात् ,

ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन ।
ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा ॥

इति नारदेन,

नाहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।

इति मनुना च निषेधात् । क्षत्रियादिधनं तु सब्रह्मचारिपर्यन्ताभावे राजैव हरेत् ,

इतरेषु तु सर्वेषु सर्वाभावे हरेन्नृपः ।

इति मनूक्तेरिति । अथैवमविभक्तभ्रातृकस्य धनहारिणी पत्नी न प्राप्नोति प्रत्युत तस्य सोदर एव धनहारित्वात्स्यादित्यत आह*—भर्त्रे इति, पुत्राभावे इति च । एतद्वचनानुरोधेन 'कृत्स्नमंशं लभेत च' इत्यस्यैकयोगनिर्देशेऽपि भिन्नविषयत्वं

पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः ।

इति च हेमाद्रौ शङ्खोक्तेः । पृ(१)थ्वीचन्द्रोदयस्तु—

कानीन*गूढसहजपुनर्भूतनयाश्च ये ।

पत्न्यभावेऽधिकुर्युस्ते अप्रशस्ताः स्मृता हि ते ॥

इति स्मृतिसङ्ग्रहात् पत्न्यभावे कानीनादय इत्याह । पत्युरपि सपत्नीपुत्रे सति नाधिकारः, 'पितृपत्न्यः सर्वा मातरः' इति सुमन्तूक्तेः,

---

स्वीक्रियते, 'यश्चार्थहरः स पिण्डदायी' इत्यस्योत्सर्गत्वात् । अत एव दुहित्रादिसत्त्वे पुत्रादीनां मातृधनग्रहणेऽनाधिकारेऽपि तदौर्ध्वदेहिके पुत्रेषु विद्यमानेष्वित्यादिनाऽधिकारप्रतिपादनं सङ्गच्छते । उत्सर्गस्तु सर्वसम्बन्ध्यसत्त्वे प्रवर्त्तनीयः । तथाचाविभक्तसोदरसत्त्वेऽपि धनहारित्वेऽपि च पत्न्या एवाधिकार इत्यर्थः । अत्र च 'पुत्राभावे तु पत्नी स्यात्' इति शंखोक्तेः, 'अपुत्रस्य तु या पुत्री' इत्यादि जाबालोक्तेश्च, व्यवस्थापकापेक्षायां 'कृत्स्नमंशं लभेत च' इत्युक्तम् । 'पत्नी दुहितरश्च' इत्यादिना प्रथमं पत्न्यास्ततो दुहितुर्धनहर्तृत्वोक्तेरिति तु न्यायः । * गूढसहजौ गूढजसहोढजौ ।

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः ।

पौनर्भवश्च नैवैते रिक्थपिण्डांशभागिनः ॥

इति वैष्णवनिषेधश्च पत्नीसत्त्वे इति भावः । अत्रेदमस्वरसबीजम् । विष्णुस्मृतौ—औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नसहोढदत्तकक्रीतस्वयमुपगतापविद्धयत्रक्वचनोत्पादितान् क्रमेणाभिधाय एतेषां पूर्वपूर्वः श्रेयानिति क्रमविधानेऽपि यथा धनग्रहणे विज्ञानेश्वरप्रभृतिभिर्याज्ञवल्क्योक्तक्रम एव गृह्यते, न तु विष्णुस्मृत्युक्तः, तथा पिण्डदानेऽपि तत्क्रम एव ग्राह्यो न त्वन्य

---

(१) 'पृथ्वीचन्द्रस्त' क० ।

*विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम् ।
तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा स्मृताः ॥
तेषामभावे तु पतिस्तदभावे सपिण्डकाः ॥

इति मदनरत्ने कात्यायनोक्तेश्च,

बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥

इति बृहस्पतिवचनाच्च । अपरार्केऽप्येवम् । तेन(१) य-

---

इति । *विदध्यादिति । न च स्त्र्युद्देश्यकश्राद्धे औरसानन्तरं पौत्रिकेयो न्याय्यः, तस्यौरससाम्योक्तेः । तदभावे सपत्नीपुत्र इति वाच्यम्, पौत्रिकेयस्य कलिवर्ज्यत्वात्त्यागः । एवं क्षेत्रजादिर्यद्यपि कालादर्शादिमते पौत्रप्रपौत्रयोरनन्तरः, मतान्तरे तु तत्पूर्वः, गौणपुत्रत्वात्, तथाऽपि कलिवर्ज्यत्वाद्धेयः ।

बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवती मनुः ॥

इति मानवम्,

बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥

इति बृहस्पतिवचनं च औरसापेक्षया प्राबल्याभावेऽप्यन्यापेक्षयाऽस्य प्राबल्यं च द्रष्टव्यम् । न च यथा—

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इति मानवं न भ्रातृपुत्रस्य पुत्रत्वातिदेशेन पत्न्यपेक्षया प्राबल्यार्थम्, श्राद्धादौ रिक्थग्रहणे च भ्रात्रनन्तरं तदधिकारात्, किन्तु तस्य पुत्रीकरणसम्भवेऽन्येषां तन्निषेधार्थम्, तथाऽत्रापि भविष्यतीति वाच्यम्, तत्र वचनान्तराविरोधेन [illegible]

(१) 'यत्' नास्ति क० ।

च्छुद्धिविवेक उक्तं–'सत्यपि सपत्नीपुत्रे पत्युरेवाधिकारः' इति, तन्निरस्तम् । *यच्च तत्रैव कात्यायनः—

न भार्यायाः पतिर्दद्यादपुत्राया अपि क्वचित् ।

यच्च विष्णुपुराणम्—

कुलद्वयेपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप ।

इति; यच्च मार्कण्डेयपुराणम्—

सर्वाभावे स्त्रियः कुर्युः स्वभर्तृणाममन्त्रकम् ।

इति, *तदासुरादिविवाहोढाविषयम् ,

---

ऽप्यत्र निर्बीजे तत्त्यागायोगात् । अत एव वचनं तु भ्रातृपुत्राद्यभावविषयमिति सङ्गच्छते । यथा चैतत्तथा वक्ष्यामः । पत्यभावे दुहितृदौहित्रौ, विशेषवचनात् । अत एव—

न कदाचित्सगोत्राय श्राद्धं कार्यमगोत्रजैः

इति निषेधस्तु न प्रवर्तते । अनयैव रीत्या पुरुषश्राद्धेऽपि पत्न्यभावे तयोरधिकारे न व्याघातः । तदभावे पत्युर्भ्राता, तदभावे तत्पुत्रः, तदभावे स्नुषा, तदभावे पितृभ्रातृतत्पुत्रादयो वक्ष्यमाणाः । अनूढायास्तु पिता,

दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता ।

इति वचनात् । तदभावे भ्रात्रादिः । *यच्चेति । अत्र द्वावुपन्यासौ । 'न भार्यायाः' इत्याद्यः 'कुलद्वयेऽपि च' इत्यादिर्द्वितीयः । तत्र प्रथमतो द्वितीयं निरस्यति । *तदासुरादिविवाहोढेति । (१)अयं भावः—स्त्रीपदद्वयं न पत्नीपरम् , अमन्त्रकमित्यनेन विरोधात् । पत्न्याः समन्त्रककर्माम्नानात् । पुत्राभावे पत्नीविधानेन सर्वा(२)विध्यभावे विधानासम्भवाच्च । किन्तु तदन्योढापरम् । एवञ्च 'कुलद्वयेऽपि चोत्सन्ने' इति मातुलाद्यभावे वाऽस्या निवेशो-

---

(१) 'अयं भावः' नास्ति ख०

(२) 'विध्यभावेऽपि विधानेन' ङ०

*धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्तिता ।
*क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ॥
न सा दैवे न सा(१)पित्र्ये दासीं तां मुनयो विदुः ॥

इति माधवीये शातातपोक्तेः । यत्तु शुद्धिरत्नाकरः शूलपाणिश्च—

अपुत्रस्य च या पुत्री सापि पिण्डप्रदा भवेत् ।
तस्य पिण्डान्दशैकं वा एकाहेनैव निक्षिपेत् ॥

इति जाबालोक्तेः,

भर्तुर्धनहरा पत्नी तां विना दुहिता स्मृता ।
अङ्गादङ्गात्संभवति पुत्रवद् दुहिता नृणाम् ॥

इति बृहस्पतिना दुहितुर्धनहारित्वोक्तेश्च *पुत्राभावे कन्या, तदभावे सपत्नीपुत्र इत्याहतुः । तत् *पूर्वविरोधात्,

---

युक्त इति । एतेन 'मन्त्रवत्क्रियाकर्त्री पत्नी, तदभावेऽमन्त्रकक्रियाकर्त्र्य एताः' इत्यपाकृतम् । पत्नी च ब्राह्मादिविवाहोढेत्याह—*धर्म्यैरिति । ननु पुमधिकारिकयज्ञयोगवत्स्त्रीत्वं पत्नीत्वं, तच्च क्रीतायामप्यविशिष्टम् अतस्तस्याः श्राद्धाद्यर्थपाकादौ श्रौतस्मार्तसहभावे चार्हनेति शङ्कायामाह—*क्रयक्रीता त्विति । 'कन्यामुपयच्छेत' इति विधिसत्त्वेऽपि क्रय एव यज्ञसंयोगादिविघटक इति न तस्या भुजिष्यायाः पत्नीत्वमित्यर्थः । वस्तुतस्तु 'धर्म्यैर्विवाहैरूढा या सा पत्नी' इति वाक्ये यत्तच्छब्दाभ्यां जनननिबन्धनपितृस्वत्वनाशजनकधर्म्यविवाहस्यैव पतिस्वत्वोत्पादकत्वं लभ्यते । तथाच क्रयप्रयुक्तस्वत्वस्य नाशकाभावात्तद्वति स्वत्वान्तरानुत्पत्तेः क्रीतायां न विवाहाधीनस्वत्वसम्भव इत्यर्थः । *पुत्राभावे इति । स्त्रीश्राद्धं प्रकृतम् । *पूर्वेति 'विदध्यादौरसः पुत्रः' इत्यादिवचनेत्यर्थः । अर्थ-

---

(१) 'वा' ख० ।

*मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः ।

इति दुहितुर्मातृधनग्राहित्वेन पुत्रस्य तच्छ्राद्धानधिकारापत्तेश्चोपेक्ष्यम् । *वचनं तु *भ्रातृपुत्राद्यभा(१)वविषयम् । पत्न्यभावे *अविभक्तस्य सोदरः, *पूर्वोक्तशङ्खवचनात् । *विभक्तस्य तु दुहिता, *धनहारि-

ग्रहणे पिण्डदानव्याप्तिमपि निराकरोति-*मातुरिति । मातृकृतऋणशोधनावशिष्टं धनं दुहितरो गृह्णीयुः, ताभ्यः ऋतेऽन्वयः पुत्रादिर्गृह्णीयादित्यर्थः । अत्र न भार्यायाः (२)पतिरित्यादिपूर्वोपन्यासे आसुरादिविवाहोढापरमिति परिहारोऽसङ्गतः, तस्यामपि मृतायां पत्युरेवाधिकारादित्याशङ्क्य तत्समाधत्ते-*वचनं त्विति-'भार्यापिण्डं पतिर्दद्यात्' इत्यादिवचनं त्वित्यर्थः । *भ्रातृपुत्रेति । पुत्रीकृतेत्यादिः । तथाच पुत्रीकृतभ्रातृपुत्रसत्त्वे'न भार्यायाः'इति निषेधः, कालादर्शमते दत्तकाभावे मतान्तरे च प्रपौत्रान्ताभावे पत्युरधिकारादिति । अन्यथा 'वचनम्' इत्यस्य पत्युकारमतान्तर्गतवचनपरत्वासम्भवेनासङ्गतेः । यद्वा पुत्रीकृतेति नाध्याहार्यम् । वचनं पुत्रीपिण्डदानवचनम् । भ्रातृपुत्राद्यभावे भ्रातृपुत्रादिन(३)पत्यन्ताभावे इत्यर्थः । प्रथमोपन्याससमाधानं तु शुद्धिविवेकखण्डनेनैव लब्धमिति तन्नोक्तम् । अत्र 'पत्न्यभावे तु सोदरः' इति शङ्खेन सोदरस्याधिकारः, 'अपुत्रस्य च या पुत्री' इति वचनात् पुत्र्याः 'कुर्वन्मातामहस्यापि' इति वचनाच्च दौहित्रस्य इत्यत्र व्यवस्थां दर्शयति-*अविभक्तस्येति । विभक्तसंसृष्टेऽपि बोध्यः । *पूर्वोक्तेति । 'भ्रातुर्भ्राता' इत्यग्रिमवचनाद्धनहारित्वाच्चेत्यपि बोध्यम् । *विभक्तस्येति । विभक्तासंसृष्टस्येत्यर्थः । पत्न्यभावे इति वर्तते । *धनहारित्वादिति । 'यश्चा-

(१) 'भाव' नास्ति क० । (२) 'न पात' ख० घ० ।
(३) 'न पत्यन्ताभावे' ङ० ।

त्वात्; पूर्वोक्त(१)जाबालवचनाच्च । तत्राप्यूढानूढासमवाये *ऊढैव,

दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता ।
आशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः ॥

इति भरद्वाजोक्तेः । तदभावे दौहित्रः, *धनहारित्वात्,

*मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदैहिकम् ।
कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतात् ॥

इति चन्द्रिकायां वृद्धमनूक्तेः;

यथा व्रतस्थोऽपि सुतः पितुः कुर्यात्क्रियां नृप ।
उदकाद्यां महाबाहो दौहित्रोऽपि तथार्हति ॥

---

र्थहरः स पिण्डदायी' इति उ(२)त्सर्गस्य विरोधे व्यवस्थापनमपि प्रयोजनम् । एतेन मातुर्धनहारित्वेन दुहितैव स्यान्न पुत्र इति चिन्त्यमेतदित्यपाकृतम् । *ऊढैवेति । यद्यपि—

भर्तुर्धनहरा पत्नी तां विना दुहिता स्मृता ।

इति सामान्यत उक्तावप्यूढानूढासमवाये धनहर्तृत्वमनूढाया एवोक्तम्, तथापि अनूढायाः सर्वथा नाधिकारः, संस्कृतेत्युक्तेः । एवं भगिनीतत्सुतादीनां स्त्रीहारिधनहारिणोरपि संस्कारं विना नाधिकारः 'औरसभिन्नस्यान्ये तु संस्कृताः श्राद्धकारिणः' इति वाक्येनाधिकारिविशेषणसंस्कारलाभात् । *धनेति । 'अकृता' इति वचने 'दद्यात् पिण्डं हरेद्धनम्'इत्युक्तेः,

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः ॥

इति विष्णुना पौत्रेण सह निर्देशाच्च । धनहारिणोऽपि दौहित्रस्यैवाधिकार इत्याह—*मातेति । तत्र भ्रंशापवादेन सुतसादृश्येन धनहारिणोऽपि दौहित्रस्यैव मातामहश्राद्धाधिकार इत्यर्थः । तत्र

---

(१) 'जाबालिवचना' क० । (२) 'उत्सृजस्य विरोधेन' ङ० ।

इत्यपरार्के भविष्योक्तेश्च । *एतद्धनहारिण आव-
श्यकं नान्यस्येत्याह तत्रैव स्कन्दः—

श्राद्धं मातामहानां तु * अवश्यं धनहारिणा ।
दौहित्रेणा*र्थनिष्कृत्यै कर्तव्यं पूर्वमुत्तरम् ॥ इति ।

तेन 'दौहित्रोऽत्र पुत्रीकृतः' इति देवयाज्ञिकोक्तिः परास्ता । अत्र पत्नीदौहित्रसमवायें*शहरत्वात्पत्न्येव कुर्यात् ।

*दौहित्रभ्रातृपुत्रसत्त्वे विभक्तस्य दौहित्रः, अविभागे भ्रातृपुत्रः । भ्रातृतत्पुत्रसत्त्वे कनिष्ठश्चेत् भ्रातैव ।

---

विशेषं दर्शयति—*एतदिति । *अवश्यमिति । रिक्थग्राहिणां दौहित्रसोदरभ्रातृतत्सुतानामभावेऽरिक्थग्राही दौहित्रः, रिक्थग्राहाभावे उत्कृष्टदौहित्रस्य बद्धक्रमसोदरादिमध्ये निवेशासम्भवात् । एतेनारिक्थग्राहिदौहित्रस्य सर्वथाऽऽनावश्यकत्वं न शङ्क्यम् । यद्वा दौहित्रयोर्मध्ये यो धनहारी तस्यैवाधिकार इत्यर्थः । एवं भ्रात्रोरपि, धनहारीत्येतेनैकवाक्यात् । न चान्धादेर्ज्येष्ठस्याधनहारित्वे धनहारिणः कनिष्ठस्यैवाधिकारः स्यात्, एवं सति कनिष्ठ संसृष्टित्वेन धनहर्तुर्ज्येष्ठस्यैव चेति वाच्यम्, भ्रातृत्वधनहारित्वोभयसत्त्वेनेष्टत्वात् । अन्यथैतद्विषये दौहित्रेऽपि वैपरीत्यापत्तेः । रघुनाथस्तु विभक्तस्य दौहित्राभावे भ्राता, तदभावे क्रमेण तत्सुता सोदरभ्रातृतत्सुताः, तदभावे पितेत्याह । अत्र रिक्थग्राहिदौहित्रस्याप्रदर्शनान्न्यूनतैव । *अर्थनिष्कृत्यै इति । धनग्रहणस्योपकारव्याप्तत्वात् । *अंशेति । 'पत्नी दुहितरश्चैव' इति चशब्दसमुच्चितदौहित्रात् पत्न्या एव धनग्रहणाधिकारोक्तेः । *दौहित्रेति । वाक्यद्वये अंशहरत्वादिति वर्तते । अंशहारिदौहित्राभावो विशेषणाभावाद्विशेष्याभावाद्वोभयथाऽपि । विभक्तोऽपि सोदर एव, उक्तवाक्ये दौहित्रानन्तरं भ्रातुर्धनग्रहणाधिकारोक्तेः । तत्रापि सोदरः कनिष्ठस्तद्वद्धत्वे प्रथमं मृतानन्तरः ततस्तदनन्तरः, सान्निकर्षात् । कनि-

*ज्येष्ठश्चेत्तत्पुत्रः कुर्यादिति दाक्षिणात्यग्रन्थाः । हारलतादौ तु—

भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते ।
तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः ॥

इति ब्राह्मोक्तेः,

पत्नी कुर्यात्सुताभावे पत्न्यभावे सहोदरः ।

इति कौर्माच्च *ज्येष्ठभ्रातैव कुर्यान्न तत्पुत्रः । यत्तु 'नानुजस्य तथाग्रजः' इति, तत्क*निष्ठभ्रातृसत्त्वविषयम् । यच्च मनुः—

*सर्वेषामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ इति,

त*त्सोदराभावविषयमित्युक्तम् । एतेन *पुत्रत्वातिदेशोऽयम् । अतस्तस्मिन्सति एकादश पुत्राः प्रतिनिधयो

---

ष्ठाभावे त्वाह—*ज्येष्ठश्चेदिति । ज्येष्ठस्यावसरो वक्ष्यते । *ज्येष्ठभ्रातैवेति । ज्येष्ठबहुत्वे मृतानन्तरक्रमेण । *कनिष्ठेति । भ्रातृत्वाविशेषेणाधिकारप्राप्ते कनिष्ठसत्त्वे ज्येष्ठस्य तन्निषेध इत्यर्थः । एवमेव 'न योषिद्भ्यः पतिर्दद्यात्' 'न पुत्रस्य पिता दद्यात्' इत्यादीनामपि वचनान्तराविरोधाया(१)धिकार्यन्तरविषयत्वमूह्यम् । *सर्वेषामिति । न चायं पुत्रत्वातिदेश इति अस्मिन् सति नैकादशपुत्राः प्रतिनिधय इति वाच्यम्, प्रथममते योगीश्वरोक्तक्रमस्यानापत्त्या पौत्रप्रपौत्राभ्यां विच्छेदेऽपि धर्मपुत्रपदवत्त्वेन सदृशेनानेन तद्विच्छेदानौचित्यात् ; द्वितीयमते सर्वथा मध्ये प्रवेशाभावाच्च । परन्तु पुत्रीकरणपरस्याप्यस्य 'भ्राता वा भ्रातृसन्ततिः' इत्यनेनैकवाक्यताऽपि सम्भवतीत्याशयेनाह—*सोदराभावेति । *पुत्र इति । पुत्रपदस्यौरसपरत्वे मध्यस्थाः पुत्राःपौत्रप्रपौत्रेण पुत्राः, गौणसा-

---

(१) 'अधिकार्यान्तरविषय' ङ० ।

न कार्याः, स एव पिण्डदो*हरश्च, इति वाचस्पतिमनुटीकाकल्पतरुरत्नाकरादयः परास्ताः, द्वादशविधपुत्राभावे 'पत्नीदुहितरः' इति याज्ञवल्क्योक्तेश्च। तस्माद्द(१)त्तपुत्रप्रशंसेयमिति विज्ञानेश्वरः, अविभक्तविषयं वा। मदनरत्ने स्मृतिसंग्रहे—

पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसंनिधौ।
धनहार्यथ दौहित्रस्त*तो भ्राता च तत्सुतः॥
भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः।
ततस्त्वसोदरो भ्राता तदभावे च तत्सुतः॥ इति।

भ्रातृपुत्राभावे क्रमेण पितृमातृस्नुषास्वसृतत्पुत्रादयः, धनहारित्वात्। भगिनीतत्सुतयोर्विशेषमाह मदनरत्ने धारणपरत्वे 'पौत्रप्रपौत्रौ पत्नी च' इति चशब्दाद् दुहिता। विभक्तभ्रातृपरं चेदम्। परे तु 'न कदाचित्सगोत्राय' इति निषेधेन दुहितृदौहित्रयोरधिकारं निरस्य विभक्तभ्रातुरेवाधिकारमाहुः। ततो भ्राता चेति। कनिष्ठो दौहित्रः, तद्भ्राता चेति पाठान्तरात्। तत्सुतो दौहित्रसुतः। केचित्तु भ्रातृपदं मृतभ्रातृपरं न दौहित्रभ्रातृपरम्, 'भ्रातुः सहोदरो भ्राता' इति तृतीयपादे स्पष्टोक्तेरिति। त(२)न्न, तत्सुतशब्देन दौहित्रभ्रातृसुतग्रहणापत्त्या भ्रातृपुत्रादौ सत्यत्यन्तविप्रकृष्टस्य क्रियापत्तेः। कनिष्ठभ्रातृतत्सुतौ (३)चांशग्राहिणौ द्रष्टव्यौ, अनंशहारिणोस्तयोरन्ते निवेशात्। केचित्तु उभावपि दौहित्रसुतौ न स्मरन्ति। तदपेशलम्, पुत्रपौत्रप्रपौत्राणामिव दुहितृदौहित्रतत्सुतानां सन्निधानसाम्यात्, भिन्नगोत्रत्वनिबन्धनासन्निधानाच्च; मातृसपिण्डसोदकयोः स्वसपिण्डसोदकोत्तर-

(१) 'दत्तकपुत्रप्रशंसेयम' क०।

(२) 'तन्न तृतीयपादवैयर्थ्यापातात्। तस्माद्भ्रातृपदमधनहारिदौहित्रपरमित्याहुः। यत्तु भ्रातृशब्देनासोदरदौहित्रभ्रातृव्याख्यानं तन्न, सुतशब्देन' ङ०। (३) 'चांशहारिणौ' ङ०।

कात्यायनः—

अनुजा अग्रजा वापि *भ्रातुः कुर्वीत(१)संस्क्रियाम् ।
ततः स्वसोदरात्तद्वत्क्र*मेण तनयस्तयोः ॥

अपरार्के कार्ष्णाजिनिः—

पुत्रः शिष्योऽथवा पत्नी पिता भ्राता स्नुषा गुरुः ।
स्त्रीहारी धनहारी च कुर्यात्पिण्डोदकक्रियाम् ॥

---

त्ववत्स्वकीयोत्तरत्वस्यौचित्याच्च । किञ्च स्वस्रीयसुतलेखनाद्दौहित्र-सुतोऽभिमेतः, अन्यथाऽनौचित्यापत्तेः । सोदरासोदरासमवाये त्वाह—*भ्रातुरिति । असोदर(२)भ्रात्र्यामपि ज्येष्ठकनिष्ठसमवाये कनिष्ठः, कनिष्ठबहुत्वे ज्येष्ठबहुत्वे च सोदरवत् । भ्रातृतत्पुत्रसमवाये यथामतम्, सोदरभ्रातृतत्पुत्रवत् । रघुनाथस्तु द्वितीयश्लोकमनादृत्य भ्रातृशब्देन सोदरासोदरौ व्यवस्थाप्य तदभावे तत्सुतशब्देन क्रमेण सोदरासोदरभ्रा(३)तृपुत्रौ प्राह । युक्तं चैतत्, एवमेव भागिनीतत्सुतव्यवस्थापकाग्रिमवचनसंवादात् ।

पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा ।
भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा ॥
असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः ॥

इति स्मृतिसङ्ग्रहमालोच्याह—*क्रमेणेति । अत्र भ्रातृपुत्रोत्तरं पितुः पाठेऽपि तदुत्तरमरिक्थग्राहिदौहित्रस्य निवेशितत्वात्तदभावे तत्पुत्राद्युक्तेश्च तदुभयाभावे ज्येष्ठभ्राता, तदभावे पिता द्रष्टव्यः । अन्यथा 'पुत्राभावे तु पत्नी स्यात्' इत्यादेः पौत्रादिसद्भावेऽपि प्रवृत्त्यापत्तेः । तत्पुत्रादय इत्यादिना सपिण्डादयः । सपिण्डाः पितृव्यतत्पुत्रादयः, तदभावे सोदकाः, तदभावे मातृसपिण्डाः मातामहमातुलतत्पुत्रादयः, तदभावे तत्सोदकाः । एते चत्वारः

---

(१) 'सत्क्रियाम्' क० (२) 'भ्रातर्यपि' घ० 'भ्रातर्यमपि' ङ०
(३) 'भातृपुत्रेत्याह युक्तं' ख०

मार्कण्डेयपुराणे—

*पु(१)त्रो भ्राता च तत्पुत्रः पत्नी माता तथा पिता।
वित्ताभावेऽपि शिष्यश्च कुर्वीरन्नौर्ध्वदेहिकम् ॥

प्रत्यासत्तिक्रमेण प्राप्ताः। स्मृतिसंग्रहे-सपिण्डसोदकशब्दयोरात्ममातृसम्बन्धिद्वयपरत्वात्,

पुत्रपौत्रप्रपौत्रा वा भ्राता वा भ्रातृसन्ततिः।
सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते ॥
एषामभावे सर्वेषां समानोदकसन्ततिः।
मातृपक्षस्य पिण्डेन सम्बन्धो योजनेन वा ॥

इति विष्णुपुराणात्(च)। तदभावे बन्धुत्रयम्, सगोत्रानन्तरं शिष्यादिभ्यः प्राक् तेषां धनग्रहणोक्तेः। तत्रापि प्रत्यासत्तेः प्रथमं स्वबन्धवः, ततः पितृबन्धवः, ततो मातृबन्धवः, तदभावे आसुरादिविवाहोढा स्त्री सवर्णा, तदभावे ऊढाऽसवर्णा, तदभावेऽवरुद्धापि शूद्राव्यतिरिक्ता,

कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप।

इति विष्णुपुराणात्। कुलद्वयेति बान्धवान्तरपरम्, तेषामपि तत्सम्बन्धात्। तदभावे गुरोः शिष्यः, तदभावे यजमानस्य ऋत्विक्, तदभावे शिष्यस्याचार्यः सब्रह्मचारी वा मातृसपिण्डोत्तरत्वप्रापकगौतमोक्तेः। शिष्यानन्तरं सब्रह्मचारिणो धनहारित्वोक्तेः। तदभावे सखा, ततस्तदभावे जामातेति केचित्। वस्तुतस्तु सम्बन्धविशेषात्पूर्वं जामाता ततः सखा द्रष्टव्यः। तदभावे क्रमेण स्त्रीहारिधनहारिणौ। अथशब्दाद्यभावेऽपि कार्ष्णाजिनिवाक्ये पाठक्रमात्। अत्र रिक्थग्रहेऽधिकाराभावे यो धनहारी तस्य 'धनहारी'इत्यनेनाधिकारो बोध्यते न तु पुत्रादीनां मध्ये एको धनहारी नापरस्तदा धनहार्येव कुर्यान्नान्य इत्याह-*पुत्रो भ्राता-चेति। पुत्रो द्वादशविधः। भ्राता सोदरोऽसोदरश्च। चकारादौ-

(१) 'पित्रोर्भ्राता च' क०

तेन धनहारी एतद्भिन्न इति कालादर्शः। अत्र पाठक्रमो न विवक्षितः पूर्ववाक्येष्वथततःशब्दादिभिः श्रौतक्रमोक्तेः 'अथ जिह्वाया अथ वक्षसः' इतिवत्।

पृथ्वीचन्द्रोदये वृद्धमनुः—

स्नुषास्वस्रीयतत्पुत्रज्ञातिसम्बन्धिबान्धवाः।
पुत्राभावे तु कुर्वीरन्सपिण्डान्तं यथाविधि॥

मार्कण्डेयपुराणे—

पुत्राद्युत्सन्नबन्धोश्च सखापि श्वशुरस्य च।
जामाता स्नेहवत्कुर्यादाखिलं पैतृमेधिकम्॥

चन्द्रिकायां वृद्धशातातपः—

मातुलो भागिनेयश्च स्वस्रीयो मातुलस्य च।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च॥
एतेषां चैव भार्याणां स्वसुर्मातुः पितुस्तथा।
श्राद्धमेषां तु कर्तव्यमिति वेदविदो विदुः॥

शुद्धिविवेके पृथ्वीचन्द्रोदये च ब्राह्मे—

दत्तानां वाप्यदत्तानां कन्यानां कुरुते पिता।
चतुर्थेऽहनि तास्तेषां कुर्वीरन्सुसमाहिताः॥

दत्ता वाग्दत्ताः।

मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे।
तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्वदा॥
जामातुः श्वशुराश्चक्रुस्तेषां तेपि च संयताः।
मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा॥
भागिनेयसुतानां च सर्वेषां त्र्यपरेऽहनि।

---

हित्रादयः स्नुषा च। एते धनाभावे ऽपि उत्तराक्रियान्तं कुर्वीरन्नेवेत्यर्थः।

धनहार्यभावे क्रमेण राज्ञः पुरोहितो मन्त्री भृत्यश्चेत्याह—

*राज्ञोऽसति सपिण्डे तु निरपत्ये पुरोहितः ॥
मन्त्री वा तदशौचं तु पुरा चीर्त्वा करोति सः ॥

अत्र द्वितीयाहादौ श्राद्धविधान(१)मस्थिसंचयपरम्।

कालादर्शे—

*दाहादिमन्त्रवत्पित्रोर्विदध्यादौरसः सुतः ।
तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिकासुतः ॥
दौहित्रो धनहारी च भ्राता तत्पुत्र एव च ।
पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च ॥
सपिण्डः सोदको मातुः सपिण्डश्च सहोदकः ।
स्त्री च शिष्यर्त्विगाचार्या जामाता च सखापि च ॥
उत्सन्नबन्धो रिक्थेन कारयेदवनीपतिः ॥

---

*राज्ञोऽसतीति—

प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विक्भृत्यपुरोहितैः ॥

इति बृहस्पत्युक्तेश्च । दर्शितवचनेषु क्रमाप्रत्ययात्तदेतत्सर्वमनुक्रामति—*दाहादीति । प्रथममतेनेदम् । पुत्रिकासुत इति गौणपुत्रार्थकम् । दौहित्रात्प्राक् पत्नी बोध्या । धनहारिदौहित्रप्रभृतिसख्यन्तमध्ये अनुक्ता अपि प्रागुक्ता निवेश्याः । ततः स्त्रीधनहारिणौ । अन्ये तु सख्यभावे तत्संघातान्तर्गताः प्रत्यासत्तिविशेषक्रमेण, 'तत्सङ्घातगतैश्चैव' इति वचनात् । ततो धनहारीत्याहुः । धनहारी च ब्राह्मणस्य धनग्राही कश्चिद्ब्राह्मणः । न तु राजा, राज्ञो ब्राह्मणधनग्रहणानधिकारात् । राज्ञा वा धनहारिणेति धनहारित्वविशेषणात् । धनहारीचेन्न करोति तदा राज्ञा कारणीयः,

---

(१) 'अस्थिसञ्चयनपरम् क०'

गौतमः—'पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्यौ' । यत्तु चन्द्रिकायां वृद्धशातातपः—

प्रीत्या श्राद्धं प्रकर्त्तव्यं सर्वेषां वर्णलिङ्गिनाम् ।

इति, तत्सवर्णविषयम् ;

ब्राह्मणस्त्वन्यवर्णानां न कुर्यात्कर्म किंचन ।
कामाल्लोभाद्भयान्मोहात्कृत्वा तज्जातितां व्रजेत् ॥

इति ब्राह्मोक्तेः,

न ब्राह्मणेन कर्त्तव्यं शूद्रस्याप्यौर्ध्वदेहिकम् ।
शूद्रेण वा ब्राह्मणस्य *विना पारशवात्क्वचित् ॥

इति पारस्करोक्तेश्च । पारशवः ऊढशूद्रापुत्रः ।

अत्रेदं तत्त्वम् । सर्वत्र पुत्रादेः पूर्वस्याभावे पत्न्यादेरधिकार उक्तः । तत्राभावोऽसन्निधिर्नाशश्चोच्यते । अत एव पूर्वत्र 'असंनिधाने पूर्वेषाम्' इत्युक्तम् । तत्रासंन्निधौ पत्न्यादेः सर्वाधिकारे प्राप्ते—

प्रोषितावसिते पुत्रः कालादपि चिरादपि ।
एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः ॥

---

सर्वाभावे च नृपतिः कारयेत्तस्य रिकूथतः ।
तज्जातीयैर्नरैः सम्यग्दाहाद्याः सकलाः क्रियाः ॥
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः ॥

इति मार्कण्डेयपुराणात् । तज्जातीयैरिति विजातीयव्यावृत्तिः । ब्राह्मणाभिन्नानां राजा धनं गृहीत्वा तद्धनेनान्येन कारयेत् । मुमूर्षुणा सन्निहिताधिकार्यभावे धर्मपुत्रः कार्य इत्यग्रे व्यक्तम् । धनाहर्तृत्वे एषः, धनग्रहणे धनहारिप्रवेशात् । *विना पारशवादिति । नन्वेवं पारशवस्याधिकारप्रसवः स्यात् । तस्य च—

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।

'ज्येष्ठेनैव तु यत्कृतम्' इत्याद्यैर्देशान्तरे *अपवादात्पुत्रनाश (१)एव पत्न्यादेः सपिण्डनादावधिकारः। असंनिधौ तु तत्पूर्वमेव नोर्ध्वम्। *अतोऽनधिकारिणा भ्रात्रादिना कृतमप्यकृतमेवेति पुनरावर्तनीयम्। *मासिकापकर्षोऽप्या-

---

स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥

इत्युक्त्वा

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति मनूक्तेः, 'यत्र क्वचनोत्पादितस्तु द्वादशः' इति विष्णूक्तेश्च द्वादशविधपुत्राभावे निवेश इति चेन्मैवम्, पारशवस्य—

यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत्।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥

इति मनुना पुत्रान्तरासत्त्वेऽपि कृत्स्नदायनिषेधात्। अन्धादेरधिकारव्यावर्तनाय 'यश्चार्थहरः स पिण्डदायी' इति विष्ण्वादिभिरुक्तधनग्रहणस्य श्राद्धाधिकारप्रयोजकत्वोक्तेः योगीश्वरेणानुक्तेश्च, श्राद्धेऽनाधिकारात्। प्रतिप्रसवश्च वपनस्नानादिपरः (१)न तु तृणकाष्ठाद्यानयनपरः, मृतोपकारिकर्ममात्रस्यैव निषिद्धत्वात्। *अपवादादिति। 'पुत्राभावे तु पत्नी स्यात्' इत्यादेः,

पितुः पुत्रेण कर्त्तव्याः पिण्डदानोदकक्रियाः।

इत्यादेश्च सामान्यशास्त्रस्य सपिण्डनविषये बाधं विनाऽगतेरिति भावः। *अत इति। अधिकारभ्रमेण करणस्थले वास्तवोऽधिकारी यथाविध्येवावर्तयेत्। न तु प्रेतशब्दमपि त्यजेदित्यर्थः। *मासिकेति,

श्राद्धानि षोडशाद्याद्य विदधीत सपिण्डनम्।
श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सपिण्डनम् ॥

---

(१) 'एव' नास्ति क०

वर्तनीयः । *एकादशाहमासिकानि नावर्तन्ते,

तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः ।

इतिवदावृत्तिविधानाभावादिति केचित् । तन्न,—अस्य निर्मूलत्वात् । अतस्तदपि *कनिष्ठकृतमावर्तते । *वृद्धिश्रौतपिण्डपितृयज्ञार्थं तु कृतं नावर्तते,

नासपिण्ड्याऽग्निमान्पुत्रः पितृयज्ञं समाचरेत् ।

न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ॥

इति, 'वृद्ध्युत्तरनिषेधनात्' इति 'भ्राता वा भ्रातृपुत्रो वा' इत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात् । *यथात्र(१)ज्येष्ठकर्तृत्वबाधस्तथा(२)पुत्रकर्तृत्वस्यापि बाधः । सपिण्डने तु बहु वक्तव्यं तन्निर्णये वक्ष्यामः ।

---

इति समानकर्तृत्वान्वयव्यतिरेकस्मरणात् मासिकापकर्षावृत्तिकथनादपि सपिण्डनावृत्तौ प्रेतशब्दत्यागो नास्तीति लभ्यते। अन्यथा मासिकावृत्तौ प्रेतशब्दोऽस्ति सपिण्डनावृत्तौ तु स नास्तीति वैषम्यात् । एकादशाद्या इति वचनं महैकोद्दिष्टपरमिति न तदावृत्तिः । मतान्तरमाह—*एकादशाहेति । *कनिष्ठकृतमिति । सप्रेतशब्दमर्घ्यपिण्डादिकमिति शेषः । पतितादिकृतस्याप्यावृत्तिर्बोध्या । *वृद्धीति । कनिष्ठेन काम्यसपिण्डने कृते नावृत्तिरिति च वक्ष्यति । 'तज्ज्यायसापि' इत्यस्य समूलत्ववादिनस्तु अनाहिताग्निकनिष्ठकृतं समासिकसपिण्डनं पतितादिकृतवत् सप्रेतशब्दमावर्तनीयम् , अनधिकारिकृतत्वात् । तत्कृतं काम्यमाहिताग्निकनिष्ठेन श्रौतपिण्डपितृयज्ञार्थं कृतमपि सपिण्डनं तज्ज्यायसापीति वचनात् ज्येष्ठेन प्रेतशब्दहीनं सर्वमावर्तनीयम् । वृद्धौ तु नावर्तनीयमिति प्राहुः । भ्राता वेति वचनमधिकृत्याह—*यथेति ।

---

(१) 'ज्येष्ठकर्तृकत्वबाधः' क० ।
(२) 'पुत्रकर्तृकत्वस्यापि' क० ।

अधिकारविशेषेण क्रियाव्यवस्थोक्ता विष्णुपुराणे-

पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ।
त्रिप्रकाराः क्रियाः ह्येतास्तासां भेदाञ्शृणुष्व मे ॥
*आदाहाद्दादशाहाच्च मध्ये याः स्युः क्रिया नृप
ताः पूर्वा मध्यमा*मासि मास्येकोद्दिष्टसंज्ञिताः ॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पुत्रैः प्रोच्यन्ते ता नृपोत्तराः ॥
पितृमातृसपिण्डैश्च समानसलिलैस्तथा ।
तत्संघातगतैश्चैव राज्ञा वा धनहारिणा ॥

---

*आदाहादिति । आङ्द्वयमभिव्याप्तौ । दाहादिदशाहान्ताः क्रियाः पूर्वाः । *मासि मासीति । आदशाहादिति वर्तते । मर्यादायामाङ् । सपिण्डनसङ्ग्रहोऽर्थलभ्यः । मासि मासीत्यस्याविवक्षया वा । एकोद्दिष्टपदेनैव तत्सङ्ग्रहः, उत्तरासु तस्यावधित्वात् । तथाचैकादशाहादिसपिण्डनान्ता मध्यमा । सांवत्सरिकाद्या उत्तराः । तत्र पूर्वा मध्यमाश्च नृपत्यन्तानाम् । तत्र पूर्वासु नियमादुत्तरा न कार्याः । मध्यमासुत्वनियमो विधीयते । अन्ये तु एकोद्दिष्टपदेन सपिण्डनं न विवक्षितम् । तेन तत्पूर्वक्रियाया राजकर्तृकतया पुत्रमात्रकर्तृकत्वबाधः । सपिण्डने तु तत्कर्तृकत्वानियम इति । तन्न, अपुत्रकैकादशाहान्तान्तकर्तुः सपिण्डनाप्राप्तिप्रसङ्गात् । पुत्रादिभ्रातृसन्तत्यन्तानां दौहित्रतनयानां चोत्तराः पूर्वा मध्यमाश्च समुच्चीयन्ते, चकारात् । एवकारश्च सपिण्डादिनृपान्तानिवृत्त्यर्थः । न तु ज्येष्ठसत्त्वे पुत्रसत्त्वे वा इतरेषां कर्तृत्वाय, तन्नाशे एव तेषामाधिकारात् । न त्वसन्निधाने, वायुपुराणे प्रोषितग्रहणात् इति स्मर्तव्यम् । राजभिन्नानां तदीयधनाभावेऽपि स्वद्रव्येण पूर्वक्रियाधिकारः । राज्ञस्त तदीयद्रव्यसत्त्वे एव. 'राज्ञा वा धनहा-

पूर्वा मध्याश्च कर्तव्याः पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा ॥
*मृताहनि तु कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः ॥

---

रिणा' इति विशेषणात् । राज्ञश्च प्रयोजककर्तृत्व( मे(१)व । अन्यथा राजजातीये मृते साक्षात् विजातीये च प्रयोजककर्तृत्व ) मिति वैरूप्यं स्यात्, तज्जातीयैर्नरैरिति सजातीयानामेव साक्षात्कर्तृत्वात् । ननु पुत्राद्यैरित्याद्यशब्देन पौत्रप्रपौत्रयोर्दौहित्रैर्वेति दौहित्रस्याप्यधिकारनियमात्पत्न्यादेरुत्तरक्रियानधिकारः स्यात् इति चेत् । न, 'पुत्राभावे तु पत्नी स्यात्' इत्यादिवाक्यैस्तस्या अधिकारात् । न चैवमपि पुत्राद्यभावे दौहित्रसत्त्वे पत्न्या अनधिकारः स्यादितिवाच्यम्, 'पुत्राभावे तु पत्नीस्यात्' इत्यस्य 'दौहित्रैर्वा नरश्रेष्ठ' इत्यनेन बाधेऽपि—

अपुत्रा पुत्रवत्पत्नी पुत्रकार्यं समाचरेत् ।

इतिवचनात्सत्यपि दौहित्रे पत्न्यधिकारिणी । नच पुत्राभावे त्वित्यनेन गतार्थं, तस्य नाशासन्निध्योः प्रवृत्तत्वात् । अपुत्रेत्यस्यासान्निध्येऽप्रवृत्तेः, पुत्रवत्पदस्वारस्याच्च दौहित्राद्यपवादः । मात्रादीनां पूर्वमध्यमावत्सर्वोत्तराक्रियाप्राप्तावाह—*मृताहनीति । परिसंख्या । प्रतिसंवत्सरं मृताहन्येव पृथक् श्राद्धम् । अन्यत्र पत्याद्यंशभागित्वम्,

न योषिद्भ्यः पृथक् दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥

इति परिशिष्टात् । इदं वृद्ध्यन्वष्टक्यादेरुपलक्षणम्, तत्रापि स्त्रीणां पृथक् श्राद्धविधानात् । *दौहित्रेति । धनाहारिदौहित्रतत्सुतयोर्दौहित्रस्योत्तराक्रियाधिकारः न तत्सुतस्येति(२)( विशेषः । धनग्रहणे तु नृपान्तानां सर्वेषां मध्यमोत्तरा अप्यावश्यका

---

(१) धनुश्चिन्हान्तर्गतं नास्ति ङ० (२) धनुश्चिन्हान्तर्गतं नास्ति ङ०

*दौहित्रतत्पुत्रयोर्धनहारिणोरिदम्। *एवमन्यस्य धन-हर्तुः, 'यश्चार्थहरः स पिण्डदायी' इत्यापस्तम्बोक्तेः,

प्रेतस्य प्रेतकार्याणि अकृत्वा धनहारकः।
वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेत् ॥

इति पृथ्वीचन्द्रोदये व्याघ्रपादोक्तेः। मदनरत्ने स्कान्देऽपि—

मलमेतन्मनुष्याणां द्रविणं यत्प्रकीर्तितम्।

इत्युक्त्वा

ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा।
आदेहपतनात्तस्य कुर्यात्पिण्डोदकक्रियाम् ॥

इत्युक्तम्। क्रियानिबन्धे कात्यायनः—

न च माता न च पिता कुर्यात्पुत्रस्य पैतृकम्।
नाग्रजश्च तथा भ्राता भ्रातॄणां तु कनीयसाम् ॥

पृथ्वीचन्द्रोदये बौधायनः—

पित्रा श्राद्धं न कर्तव्यं पुत्राणां तु कथंचन।
भ्रात्रा चैव न कर्त्तव्यं भ्रातॄणां च कनीयसाम् ॥
यदि *स्नेहेन कुर्यातां सपिण्डीकरणं विना।
गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥

*अन्याभावे पित्रादिरपि कुर्यात्,

उत्सन्नबान्धवं प्रेतं पिता भ्राताऽथवाऽग्रजः।
जननी चापि संस्कुर्यान्महदेनोऽन्यथा भवेत् ॥

इति सुमन्तूक्तेः। ब्रह्मचारिणां तु शुद्धिविवेके पृथ्वी-

---

इत्याह—*एवमिति। अमित्यभिप्राय अत एवाह—अन्याभावे इति उत्तरा इति विशेषोपादानात् तासां पूर्वा मध्यमाश्च पृथक् भवन्ति। *स्नेहेनेति। तयोः स्नेह एवाधिकारबीजमित्यभिप्रायः। अत एवाह—*अन्याभावे इति। अधनहारिभ्रातृसुतान्ताभावे इत्यर्थः।

चन्द्रोदये च ब्राह्मे—

असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः ।

श्राद्धं तु*मातापितृभिर्न तु तेषां करोति सः ॥

श्राद्धं मासिकाब्दिकादि *सर्वं कार्यमित्यर्थः । नत्विति निषेधो*ऽन्यसत्त्वे । यत्तु छन्दोगपरिशिष्टे—

न त्यजेत्सूतके कर्म ब्रह्मचारी स्वयं क्वचित् ।

न दीक्षणात्परं यज्ञे न कृच्छ्रादि तपश्चरन् ॥

पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ।

*आशौचं कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम् ॥

यच्च याज्ञवल्क्यः—

न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥

इति । तदप्यन्यसत्त्वे, अन्याभावे तु ब्रह्मचारिणाऽपि कार्यं, पूर्वोक्तवृद्धमनुवचनात् ,

आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।

(१)संकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥

इति तेनैवोक्तेः; 'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः' इति वसिष्ठोक्तेः । अत्राशौचमेकाहं वक्ष्यामः । प्रागुपयनान्मृतस्य तु पञ्चवर्षोत्तरं सपिण्डीकरणवर्ज्यं षोडशश्राद्धादि सर्वं कार्यमित्युक्तं देवजानीये, 'असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां

(२)*मातापितृभिरिति । अधिकारमात्रं न तु क्रमोऽपि ।*सर्वमिति । वित्ताभावेऽप्यधिकारप्रतिप्रसवेनोत्तरान्तक्रियालाभ इत्यर्थः । *अन्यसत्त्वे इति । तेनानुपनीतकनिष्ठसत्त्वे ज्येष्ठस्यापि ब्रह्मचारिणः, समावृत्तज्येष्ठसत्त्वे ब्रह्मचारिकनिष्ठस्य वा नाधिकार इत्यर्थः । *आशौचमिति । ब्रह्मचारिदशायां मृतानामित्यादि ।

(१) मृतकान्नमित्यर्थः । (२) 'मातापितृभ्यामिति' घ० ङ०

कुशेषु' इति प्रचेतोवचनाच्च । एतच्चाग्रे वक्ष्यामः ।

अविभक्तानां विशेषमाह पृथ्वीचन्द्रोदये मरीचिः—

बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः ।
सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ॥
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥

ज्येष्ठस्य कर्तृत्वेऽपि सर्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्यपरान्नवर्जनादयः फलसंस्कारास्ते सर्वेषां भवन्तीति सिद्धम् । संसृष्टिनामप्येवम्, तुल्यत्वात् । विभक्तानां विशेषमाहोशनाः—

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु(१)कार्याणि संविभक्तधनेष्वपि ॥

लघुहारीतः—

सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।
पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ॥
ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक् ॥

मदनरत्ने—

विभक्तास्तु पृथक्कुर्युः प्रतिसंवत्सरादिकम् ।
एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ॥

---

एकत्रवासिनः अविभक्ताः । सर्वानुमत्या ज्येष्ठ एव साक्षात्कर्तेत्यर्थः । विभक्तानां त्वाह—द्रव्येणेति । अविभक्तानां स्वस्वांशदानसम्पादितसाधारण्येन द्रव्येणानुमतिद्वारा ज्येष्ठ एव साक्षात्कर्तेत्यर्थः । एवं च कर्तृत्वाधिकारयोर्भेदः, न त्वैक्यमित्याह—ज्येष्ठस्येति । सर्वे इति । अनुमतिकरणेनेति शेषः । पृथग्द्रव्याः विभक्ताः । अपिशब्दवशादविभक्तानामितरश्राद्धवत्सपिण्डीकरणान्तान्यपि अपृथगेव । विभक्तानां त्वितरवत्तेष्वपि भेदानुष्ठाने प्राप्ते

---

(१) 'कार्याणि सविभक्तधने' ग० ।

एतेनाब्दिकादिष्वविभक्तानामनियम इति वदन् शूलपाणिः परास्तः ।

*दत्तकस्तु जनकस्य पुत्राद्यभावे दद्यान्न तत्सत्त्वे,

*गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति मनूक्तेः । इदं जनकस्य पुत्रसत्त्वविषयम् । तच्च प्रवरमञ्जर्यां कात्यायनलौगाक्षिभ्यां स्पष्टमुक्तम् । अथ ये दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणा*(१)नार्षेया

---

पृथक् द्रव्या अपि सुताः सपिण्डीकरणान्तानि पृथक् नैव कुर्युः । इतराण्येव पृथक् कुर्युरित्यर्थः,

अर्वाक् संवत्सरात् ज्येष्ठः श्राद्धं कुर्यात्समेत्य च ।
ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक् ॥

इति व्यासवचनात् । सपिण्डीकरणेति तत्कालोपलक्षणम् । तेन द्वादशाहादौ सपिण्डीकरणेऽप्यनुमासिकान्तानां न पार्थक्यम् । नाक्षत्रसपिण्डनस्यैकत्वेऽपि प्रथमाब्दिकादि भिन्नमेव ।

*दत्तकस्त्विति।दत्तकःसर्वोऽपि द्व्यामुष्यायण एव।(२)केवलदत्तकानुपगमादिति मतेनेदम्।(३) (यद्वा केवलदत्तकोऽस्त्येव। परन्तु दत्तकस्त्वित्यस्य द्व्यामुष्यायणदत्तकस्त्वित्यर्थः। तेनायं ग्रन्थः द्व्यामुष्यायणदत्तकपरः) ।*गोत्रेति । दत्रिमः सुतः जनकस्य (३)(गोत्रं रिक्थं च न भजेत् । यतः) पुत्रं दातुः पितुः स्वधा और्ध्वदेहिकमपैति । यतो गोत्ररिक्थानुगः पिण्डः श्राद्धमित्यर्थः । अयं च प्रतिग्रहीतृमात्रगोत्रः। *अनार्षेयाः । ऋषिः प्रवरः । जनकप्रवरगोत्रही-

---

(१) "आर्षेयाः" इत्यपि पाठः ।

(२) 'केवले तत्र मानाभावादिति' ख०

(३) धनुश्चिन्हान्तर्गतं नास्ति ख०

र्वा श्राद्धं देयम्। *तत्र *द्वयोः पित्राद्योः पृथक् पिण्डदानं द्वयोरुद्देशेनैको वेति। अत्र केचित् आवयोरयमिति परिभाष्य यो दत्तस्तस्येदं द्वयोः पित्रोः श्राद्धम्। यस्त्वपरिभाष्य दत्तः स ग्रहीतुरेव सपालकायैव दद्यादित्याहुः। अत्र*मूलं त एव प्रष्टव्याः।

वस्तुतस्तु जनकस्य पुत्र*पत्न्याद्यभावे दत्तको द्वयोर्दद्यादन्यथा पालकायैव,*प्रागुक्तकात्यायनवचनात्। मानवीयमप्येतद्विषयमेव। *गोत्रं तु श्राद्धे पालकस्यैव विवाहादौ तूभयोरित्यादि मत्कृतप्रवरदर्पणे ज्ञेयम्। यस्तु मूल्यक्रीतायां परभार्यायां दास्यां चोत्पन्नः स बीजिन

---

इति देवलवचनात्। *द्वयोरिति, 'यदि द्विपिता स्यादेकस्मिन्पिण्डे द्वावुपलक्षयेत्' इत्यापस्तम्बोक्तेः। स्वयमप्युक्तं 'उभाभ्यामेव दद्युः' इत्यादि। एतदापस्तम्बादिपरमित्यन्ये। पिण्डभेदपक्षे द्व्यामुष्यायणपुत्रस्यामावास्यादौ पित्रे एकः, इतरयोर्द्वौ द्वाविति पञ्च। तत्पौत्रस्य प्रपितामह एव द्वौ, इतरौ द्वाविति चत्वारः। मृताहे इत्यस्यायमर्थः—एकमेवोद्दिश्य प्रतिसांवत्सरमेकोद्दिष्टमेवेति मृताहे एकोद्दिष्टाचारिपरम्। *मूलं त एवेति। आवयोरयमिति संविदः क्वाप्यनुक्तेः। तां विनाऽपि गृहीतस्य द्व्यामुष्यायणत्वमेव। तेन चामावास्यादौ जनकप्रतिग्रहीत्रोरुद्देशेन श्राद्धद्वयमेकं वा कार्यम्। तत्पुत्रेण तु दत्तकस्य तज्जनकप्रतिग्रहीतृभ्यां द्वाभ्यामपि सह सपिण्डनपार्वणश्राद्धादि। एवं तत्पुत्रादिभिरपीति। *पत्न्यादीति। आदिना सखिनृपतिभिन्नरिक्थग्राह्यग्राहिसकलपरिग्रहः। *प्रागुक्तेति। तत्रापत्यपदमधिकार्युपलक्षकम्, पौत्रादिसत्त्वे रिक्थग्रहणासम्भवात्। यद्यपि आहत्य जनकौर्ध्वदेहिकं न स्मर्यते तथाऽपि रिक्थादानमेव तदधिकारलम्भकम्। एवं च मनोर्गोत्रपरित्यागोक्तिविरोधमुद्धरति—*गोत्रं त्विति। वस्तुतस्तु दत्तको द्विविधः केवलो द्व्या-

एव दद्यात् । मूल्यं विना स्वयमुपनतायां तु क्षेत्रिण एव । तदुक्तं पृथ्वीचन्द्रोदये कौर्मे—

अनियोगात्सुतो यस्तु शुल्कतो जायते त्विह ।
प्रदद्याद्वीजिने पिण्डं क्षेत्रिणे तु ततोऽन्यथा ॥इति ।

क्षेत्रजादेर्विशेषस्तु कलौ तदभावान्नोच्यत इति दिक् ।

---

मुष्यायणश्च । । न चाद्ये प्रमाणाभावः पुत्रं प्रतिग्रहीष्यन्नित्यादिपुत्रप्रतिग्रहविधौ भाव्याकाङ्क्षायां जन्यपुंस्त्वरूपपुत्रत्वस्य भाव्यत्वासम्भवाच्छ्राद्धादिपितृकार्यप्रयोजकं प्रतिग्राह्यगतादृष्टं भाव्यमङ्गीकार्यम् । अतः प्रतिग्रहीतृकुले पितृपुत्रादिसम्बन्धविशेषप्रयुक्तानि कार्याणि प्रवर्तन्ते । तत्र 'गोत्ररिक्थे' इति मनूक्तेः । केवलोऽपि दत्तको लभ्यते,

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा ॥

इति प्रवराध्याये द्व्यामुष्यायणस्य जनकगोत्रानिवृत्त्युक्तेः तन्निवृत्तिबोधकमानत्वेन केवलदत्तकस्वीकारं विना विरोधप्रसङ्गात् । वस्तुतस्तु "जातपुत्रः कृष्णकेशोऽग्नीनादधीत इत्यादौ वयोवस्थाविशेष इव, "अर्द्धमन्तर्वेदि मिनोति, अर्द्धं बहिर्वेदि"इत्यत्र देशविशेष इवात्र गोत्ररिक्थपिण्डस्वधापदैः जनकादिसम्बन्धप्रयुक्तं कार्यमात्रं लक्ष्यते । तन्निवृत्त्युक्त्या च तद्धेतुजनकादिसम्बन्धमात्रनिवृत्तिः । तत एव च सोदरपितृव्यादिसम्बन्धनिवृत्तिरपि । द्व्यामुष्यायणे तु तदभाव इति सिद्धत्येव केवलो दत्तकः । किञ्च केवलदत्तकानुपगमे "ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृतः पञ्चमात्" इति गौतमीयो विवाहे बीजिकुले सप्तपुरुषं पञ्चपुरुषं च यावद्विवाहनिषेधो व्यर्थ एव स्यात् । द्व्यामुष्यायणे सापिण्ड्यसत्त्वात् केवले तत्र

गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ।

*जारजानां विशेषमाहापरार्के नारदः—

जायन्ते त्वनियुक्तायामेकेन बहुभिस्तथा ।
अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुताः ॥
दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता ।
अशुल्कोपहृतायां तु पिण्डदा वोढुरेव ते ॥

धर्मार्थं श्राद्धकरणे फलमाह चन्द्रिकायां शातातपः-

प्रीत्या श्राद्धं तु कर्तव्यं सर्वेषां वर्णलिङ्गिनाम् ।
एवं कुर्वन्नरः सम्यङ् महतीं श्रियमाप्नुयात् ॥

गयायामपि तत्रैव ब्रह्मवैवर्ते—

आत्मजो वाऽथवान्योऽपि गयाशीर्षे यदा तदा ।
यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ॥

---

इति सापिण्ड्यनिवृत्तेरुक्तेः । पिण्डः सापिण्ड्यं, स्वधौर्ध्वदेहिकमिति । अत एव शूरेण कुन्तिभोजाय दत्रिमत्वेन दत्तायाः कुन्त्याः सुतेऽर्जुने शूरपुत्रदुहित्र्याः सु(१)भद्रायाः सापिण्ड्यनिवृत्तिरुक्ता भट्टसोमेश्वरेण । अत एवायं प्रतिग्रहीतुरेवौर्ध्वदेहिकश्राद्धादि कुर्यात् । तत्पुत्रश्च पितुः सपिण्डनपार्वणश्राद्धादि प्रतिग्रहीत्रैव सह । एवं तत्पुत्रोऽपीति । एवं चावयोरयमिति संविदपि द्व्यामुष्यायण (ए(२)व, तस्यास्तज्ज्ञानार्थत्वेन दृष्टार्थत्वात् । अथेत्यादि कात्यायनवाक्यं च तत्परमेव, द्व्यामुष्यायणपदोपादानात् । एवमेव द्व्यामुष्यायण) पदवति प्रागुक्तवाक्यान्तरे ऽपि । कार्ष्णाजिनिवाक्यं च द्व्यामुष्याणपरम् । एवं द्व्यामुष्यायणो जनकस्य प्रतिग्रहीतुर्वा पुत्रान्तरासत्त्वे तस्मै पिण्डं दद्याद्रिक्थं च गृह्णीयात्, न तत्सत्त्वे । उभयोरौरससत्त्वे तु न कस्यापि । प्रतिग्रहीत्रौरसांशचतुर्थभागं हरेत्, "उत्पन्ने त्वौरसे पुत्रे" इति वचनात् । यदा तूभयोरपि न पुत्रस्तदा एकस्मिन् श्राद्धे इति

---

(१) 'सुभद्रायाः सपिण्डनपार्वणश्राद्धादि प्रतिग्रहीत्र्य' ङ०
(२) धनुश्चिन्हान्तर्गतं नास्ति ङ०

# परिशिष्टदीपकः=संस्कारदीपकस्य परिशिष्ट-विषयाणां निरूपणात्मकः ।

---

अस्मिन् ग्रन्थे विषयाः—

दानस्वरूपादिकं, दानविधिः, प्रतिग्रहविधिः, देयद्रव्यदेवताः, द्रव्य-धान्य-भूमानानि, कुण्डमण्डपनिर्माणप्रकारः, सहोमतुलादानप्रयोगः, होमरहिततुलादानप्रयोगः, बृहद्गोदानप्रयोगः, गवादिमूल्यनिरूपणम्, संक्षिप्तगोदानप्रयोगः, वृषदान—महिषीदान-त्रिविधविद्यादान—सुवर्णदान—भूम्यादिदशदानानि । सर्वप्रायश्चित्तप्रयोगः, ऋणधेन्वादिपञ्चधेनुदानानि । अश्वदान—हस्तिदान—रथदान—गृहदानानि । सवास्तुशान्तिशिलान्यासप्रयोगः । शय्यादान—द्विजस्थापन—नवग्रहदानानि । सुवर्णादिदानमन्त्राः । गोमुखप्रसवशान्तिः । मूलाश्लेषादिशान्तयः । जलाशयोत्सर्गप्रयोगः । लघुजलाशयोत्सर्गप्रयोगः । मू० २।)

कातीयेष्टिदीपकः मू० १)

December 1927.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 360

कमलाकरभट्टविरचितो

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

उरई गवर्न्मेन्ट हाईस्कूल संस्कृतभाषाध्यापकेन पं० व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा तदीयगुरुवर-म० म० पं० पर्वतीयनित्यानन्दपन्तप्रदर्शितरीतिमनुसृत्य संशोधितष्टिप्पण्या परिष्कृतश्च ।

The

NIRṆAYASINDHU,

of Kamalâkara Bhaṭṭa

With Commentary by Kṛṣṇam Bhaṭṭa.

Edited With Notes by

Gopâla S'âstri Nene Vyâkaranopâdhyâya

FASCICULUS XV–१५,

*PRINTED-PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1927.

# Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

एतच्च यदा फलभूमार्थिना त्रिस्त्रिर्वा क्रियते तदा प्रेतशिलाश्राद्धवर्ज्यं कुर्यात्, तस्य प्रेतत्वविमोक्षार्थत्वात् तस्य च जातत्वादिति केचित्। वस्तुतस्तु संन्यासिश्राद्धवदत्रापि सर्वं कार्यम्, साङ्गेऽधिकारादिति युक्तं प्रतीमः। संन्यस्तपित्रादिस्तु पितुः पित्रादिभ्यः सर्वश्राद्धेषु दद्यादित्युक्तं प्राक्; वक्ष्यते च जीवत्पितृकश्राद्धे।

अत्र स्त्रीशूद्राणां श्राद्धं मन्त्रवर्ज्यं तूष्णीं भवति,

*स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासुतस्य च।
प्राग्द्विजाश्च* व्रतादेशा*त्ते च कुर्यु*स्तथैव तत्॥

इति हेमाद्रौ मरीचिवचनात्;

अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते॥

इति ब्राह्मोक्तेश्च। गृह्यते सम्बध्यते। अस्य (१)श्राद्धप्रकरणे पाठेऽपि परिभाषात्वान्न प्रकरणेन सङ्कोचो युक्तः। तेन शूद्रस्य स्नानदानादावपि विप्रेण मन्त्रपाठः कार्यः। 'अमन्त्रस्य' इति विशेषणात्स्त्रिया अपीति शूलपाणिः। यत्तु तेनोक्तं *मन्त्रजन्यानियमादृष्टमिद्धिस्तु नमस्कारेण, 'अनुमतोऽस्य नमस्कारो मन्त्रः' इति गौतमोक्तेरिति।

---

प्रकारेणोभयोरप्येकमेव श्राद्धं कुर्यात् इति। स्वत्वसंपादकमूल्यदानादानाभ्यां विशेषमभिधाय यमनानुकुल्यसंपादकधनदानादानाभ्यां विशेषमाह—*जातरजा[illegible]ति। *स्त्रीणामिति। स्त्रीणां सुतस्य इति सम्प्रदाने षष्ठ्यौ, तेचत्युक्तेः। *व्रतादेशात् उपनयनात्। *ते स्त्रीशूद्राः। *तथैव अमन्त्रकमेवेत्यर्थः। *मन्त्रजन्येति। तिलावपनादेरमन्त्रत्वेऽपीत्यादि। दृष्टं मन्त्रार्थस्मरणम्। मन्त्रार्थश्च न तिलादिः।

---

(१) 'श्राद्धप्रकरणपाठेऽपि' क०।

तन्न, दृष्टद्वारैव (१)हि तत्प्राप्तिर्न स्वामन्त्रयेण । अन्यथा नखविपूतेऽप्यवघातजन्यादृष्टार्थं सोपि क्रियेतेति यत्किञ्चिदेतत् । *तेन 'पितॄणां नामगोत्रतः' इत्यादौ यत्र द्विजानामपि नाममन्त्र उक्तस्तत्र प्रतिप्रसवमात्रार्थं युक्तं न तिलावपनादावपि । अत्र केचित्—वैदिकमन्त्रो विप्रस्य, पौराणस्तु शूद्रैः पठनीयः,

न हि वेदेष्वधिकारः कश्चिच्छूद्रस्य विद्यते ।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह ॥

इति तत्रैव पाद्मोक्तेरित्याहुः । गौडा अप्येवम् । तन्न,

नाध्येतव्यमिदं शास्त्रं वृषलस्य तु सन्निधौ ।

इति कौर्मे *पुराणनिषेधेन *वेदस्य दूरापास्तत्वात्;

अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च ।
श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन ॥
श्रौतं स्मार्तं च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम ।

---

गौतमीयस्य निर्विषयत्वापात्तिं वारयति । *तेनेति । मन्त्रसामान्यनिषेधो हि नाममन्त्रादिकमपि विषयीकुर्यादिति । तत्र 'पितॄणां नामगोत्रतः' इति प्रतिप्रसूतं, तत्रेदमुपतिष्ठते इत्यर्थः । अग्निकमग्रे । द्विजानामपीति सम्पातायातम् । *पुराणेति । पुराणश्रवणेत्यर्थः । वेदस्येति । वेदश्रवणस्येत्यर्थः,

कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चाण्डलतां व्रजेत् ॥

इति पराशरोक्तेः । विचारः श्रवणाध्ययनादिः, तथा च व्याससूत्रे "श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च" इति । अत्र शङ्कराचार्याः—"अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रपूरणम् । पद्युवा एतच्छ्मशानं यच्छूद्र इति भवति चोदाहरणे जिह्वाच्छेदो

---

(१) 'हि' नास्ति । क० ।

तस्माच्छूद्रैर्विं*ना विप्रं न श्रोतव्यं कदाचन ॥

इति तत्रैव पुराणाधिकारे भविष्योक्तेश्च । एतेन धारणे शरीरभेदः' इति । वेदार्थज्ञानमपि निषिद्धं पाद्मे—

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चाऽस्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥

इति वेदार्थज्ञानौपयिकानामपि योगसाङ्ख्यपूर्वोत्तरमीमांसा-व्याकरणाद्यङ्गान्वीक्षिकीस्मृतिपुराणादेरध्ययनादि निषिद्धम् । विशिष्यनिषेधास्तु ग्रन्थगौरवभयान्न लिख्यन्ते ।

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥

इति सामान्यतो मनूक्तो निषेधः । *विना विप्रमिति । श्रवणं तु पुराणमात्रस्य ब्राह्मणं पुरस्कृत्यैव,

श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ।

इति महाभारतात् । अतएव पौराणानामपि गीताचण्डीपाठविष्णुसहस्रनामादिस्तोत्राणां पठने न शूद्रस्याधिकारः । यच्च आनुशासनिके विष्णुसहस्रनामसु—

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छू(१)द्रस्तु स्वमवाप्नुयात् ॥ इति ।

तत्र 'शूद्रः श्रवणेन'इति शङ्कराचार्यैर्व्याख्यातम् । यच्च—"श्रावयेच्चतुरो वर्णान्" इतिवचनाद्द्विजानामपि श्रवणमेव स्यादत उक्तम्—अध्येतव्यमिति । एतेन द्विजानामध्ययनविधिवशादधीतैर्मन्त्रैरेवार्थं स्मरेत् इति नियमलाभ इति वेदाध्ययनं ज्ञानद्वारा कर्मार्थत्वाद् दृष्टार्थं, पारायणादावदृष्टार्थम् । श्रवणं त्वदृष्टार्थ(२)मेव । शूद्राणां तु 'श्रावयेत्' इति स्मरणात् श्रुतैर्मन्त्रैरेवार्थं स्मरेदिति नियमलाभः, इति तुलादिमहादानादावपि मन्त्रश्रवणमेव ज्ञानद्वारा कर्मा-

(१) 'शूद्रस्तु सुखमाप्नुयात्' ङ० । (२) धनुश्चिह्नान्तर्गतं नास्ति । क ।

'नाध्येतव्यम्' इति निषेधो *मन्त्रेतरपुराणपर इति श्रीदत्तादिमत*मपास्तम्। तेन पौराणमन्त्राणामेव विप्रेण पाठो न वैदिकानामिति सिद्धम्। *द्विजस्त्रियस्तु सङ्कल्पमात्रं स्वयं कृत्वा वैदिकमन्त्रयुक्तं सर्वं ब्राह्मणद्वारा कारयेयुरिति प्रयोगपारिजातः। *अत एव 'स्त्रीणाम्' इत्यकृतविवाहस्त्रीपरमिति हेमाद्रिराह। 'अनुपनीतस्तु वैदिकमन्त्रयुक्तं सर्वं स्वयमेव कुर्यात्' इत्युक्तं प्राक्। यत्तु 'प्राग्द्विजाश्च व्रतादेशात्' इति तदशक्तविषयमचूडविषयं वा इति दिक्।

शूद्रस्य तु सदाऽऽमश्राद्धमेव,

सदा चैव तु शूद्राणामामश्राद्धं विधीयते।

---

र्थत्वाद् दृष्टार्थं फलार्थत्वाददृष्टार्थं च। अध्ययनं तु तस्य कर्मार्थमपि नास्त्येवेत्युक्तं भवति। धर्ममिति क्लीबम्। *मन्त्रेतरेति। "पौराणेतिकर्तव्यताम्नाने पठेत्" इत्याम्नातम्। तत्र शूद्रद्विजयोर्यथान्तर्भावाभावाभ्यां नित्यानित्यसंयोगविरोधान्निषेधो मन्त्रान्यपर इत्याशयः। *अपास्तमिति। पुराणानां तत्तच्छाखापरिग्रहवत्स्वप्रवृत्तेरिति भावः। अत एव तत्रेति मन्त्रपर्युदासादसंस्कृतेनेत्यादिना कारणाभिधानाच्च यज्ञेष्विति समन्त्रत्वकथनस्य विप्रेण मन्त्रपाठेऽप्युपपत्तेः। द्विजस्त्रीणां वैदिकमन्त्रश्रवणमात्रं प्रयोगपारिजातकारोऽपि वदतीत्याह-*द्विजस्त्रियस्त्विति। वस्तुतस्तु द्विजस्त्रीणां कारणे मन्त्रपठनाप्रसक्तेस्तेचेत्याद्यमन्त्रकत्वं व्यर्थम्। अतः करणपक्षोऽपि वाच्यः। तत्रापि वेदश्रवणेऽधिकारात्समन्त्रत्वकथनं पाठबोधनेनैवार्थवत्। कारणपक्षस्त्वशक्तापरः। ननु स्त्रीणामिति सम्प्रदाने कथं षष्ठी? ऊढोद्देश्यकश्राद्धे 'मातुः पितुः' इति वचनेन मन्त्रोक्तेरित्यत आह-*अत एवेति। ऊढाश्राद्धस्य समन्त्रत्वादेवेत्यर्थः।

इति सुमन्तूक्तेः; पृथ्वीचन्द्रोदये मात्स्येऽपि—

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा ।
नमस्कारेण मन्त्रेण कुर्यादामान्नवत्सदा ॥

तत्रैव वृद्धपराशरः—

आमान्नेन तु शूद्रस्य तूष्णीं तु द्विजपूजनम् ।
कृत्वा श्राद्धं तु निर्वाप्य सजातीनाशयेदथ ॥

स एव—

आमं शूद्रस्य पक्वान्नं पक्वमु*च्छिष्टमुच्यते ।

हेमाद्रौ भविष्ये—

धर्मोत्सवस्तु धर्मज्ञा यदि शूद्राः प्रकुर्वते ।
अग्नौकरणमन्त्रश्च *नमस्कारो विधीयते ॥
आवाहनादि कर्तव्यं यथा शूद्रेण तच्छृणु ।
देवानां देवनाम्ना तु पितॄणां नामगोत्रतः ॥
पिण्डादीन्निर्वपेद्वीर नामतो गोत्रतस्तथा ॥

शूद्राणां गोत्राभावेऽपि काश्यपं गोत्रं ज्ञेयम्, 'तस्मादाहुः सर्वाः प्रजाः काश्यप्यः' इति श्रुतेः; 'गोत्रनाशे तु काश्यपः' इति व्याघ्रपादोक्तेश्चेति हेमाद्रिः । एवमन्यत्र गोत्राज्ञाने । एवं तर्पणादिषु च ज्ञेयम् । तत्रैव भविष्ये—

*शूद्रस्तु गृहपाकेन न पिण्डान्निर्वपेत्तथा ।

---

*उच्छिष्टमिति । शूद्रस्वामिकहोमादौ पक्ववर्जनार्थम् । *नमस्कार इति । सोमाय पितृमते नमः, अग्नये कव्यवाहनाय नम इत्यर्थः । *शूद्रस्त्विति । धर्मोत्सव इति प्रकरणपाठादिदं धार्मिकशूद्रपरम् । इदानींतनशूद्राणां चाधार्मिकत्वात्सक्तुपिण्ड एवेति । यत्तु—'गृहपाकपायसयोर्विधानात् पक्वमुच्छिष्टमिति निषेधः पिण्डदाने न प्रवर्तते'

सक्तु मूलं फलं तस्य पायसं वा भवेत्स्मृतम् ॥

गौतमः—*'अनुमतोऽस्य नमस्कारो मन्त्रः' इति। *'देवताभ्यः पितृभ्यश्च' इत्ययं नमस्कारमन्त्र इति केचित्। विज्ञानेश्वरोऽप्येवमाह। हेमाद्रिस्तु—

शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना बुधः।

इति मात्स्ये मन्त्रनिषेधान्नाममन्त्रेणेत्याह। पृथ्वीचन्द्रोदये स्कान्दे—

राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः।
व्यसनेषु च सर्वेषु श्राद्धं विप्रेण* कारयेत्॥

यत्तु भारते राजधर्मेषु—

यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः।
शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः।

इत्युक्त्वा—

---

इति शूद्रधर्मप्रकरणे स्वयं लिखितं, तत्र निर्भरो न कार्यः। *अनुमतोऽस्येति। मन्त्रस्थाने हि नमस्कारादेशः। स च नमःशब्दः 'पितॄणां ना(१)मगोत्रतः' इति चोक्तं, केवलनामादेः प्रयोगासम्भवात् 'पिताऽमुकगोत्रामुकदासावनेजनं नमः' इत्यादि प्रयोगः, 'दासान्तं शूद्रजन्मनः' इत्युक्तेः। यत्तु—

नमस्कारेण मन्त्रेण पञ्चयज्ञान्न दापयेत्।

इति याज्ञवल्क्यवचनं तत्र गृहैकत्ववद्वाक्यभेदापत्तिभयेन पञ्चत्वमविवक्षितम्। एवञ्च शूद्रकर्तृकेष्टापूर्तेष्वपि नमस्कार एव मन्त्रः, कर्माङ्गता च तस्यैव; अनुष्ठेयाप्रकाशकत्वेऽपि वचनात्; 'यो नमसा स्वध्वरः, इति श्रुतेश्च। *देवताभ्य इति। देवेभ्यो नमः, पितृभ्यो नम इत्येतन्मते प्रयोगः कार्येदिति। परन्तु 'ब्राह्मणो हीनवर्णस्य' इति निषेधाच्छूद्रस्य ब्राह्मणो न प्रतिनिधिरित्युक्तं स्मर्तव्यम्।

---

(१) 'नामगोत्रवत् इति' ङ०।

ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ।
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः ॥

इति चोक्त्वा—

वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ।
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ॥
दानानि च यथाकालं द्विजेभ्यो विसृजेत्सदा ॥

तथा—

दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः ॥

इति म्लेच्छादीनां श्राद्धविधानं, तदपि सजातीयभोजनद्रव्यदानादिपरं न तु श्राद्धपरमिति ॥

इति श्रीनारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजकमलाकरभट्टकृते निर्णयसिन्धौ श्राद्धाधिकारिनिर्णयः ॥

अथ पितरः । हेमाद्रौ मात्स्यदेवलौ—

नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः ।
अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः ॥
नाममन्त्रास्त(१)दादेशा भवान्तरगतानपि ।
प्राणिनः प्रीणयन्त्येव तदाहारत्वमागतान् ॥
देवो यदि पिता जातः शुभकर्मानुयोगतः ।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥
गान्धर्वे भोगरूपेण पशुत्वे च तृणं भवेत् ।
श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपतिष्ठति ॥
पानं भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम् ।
दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदकम् ॥
मनुष्यत्वेऽन्नपानादि (२)नानाभोगकरं भवेत् ॥

अत्र पित्रादिशब्दैर्जनकादीनामेव देवतात्वमुच्यते

(१) 'तदादेशान्भवान्तर' क० (२) 'नामाभोगकर' ग०

न वस्त्रादीनाम्, 'अमावेतत्ते इति यजमानस्य पित्रे' इति शतपथश्रुतेः; 'यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय' इति विष्ण्वादिस्मृतेश्च । यत्तु मनुदेवलौ—

वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः ।
प्रपितामहास्तथाऽऽदित्याः श्रुतिरेषा सनातनी ॥

यच्च याज्ञवल्क्यः—

वसुरुद्रादितिसुताः पितरः श्रा(१)द्धदेवताः ।

तदभेदध्यानार्थम् । यानि तु हेमाद्रौ नन्दिपुराणे—

विष्णुः पिताऽस्य जगतो दिव्यो यज्ञः स एव च ।
ब्रह्मा पितामहो ज्ञेयो ह्यहं च प्रपितामहः ॥ इति,

यच्च भविष्ये—

अनिरुद्धः स्वयं ज्ञेयः प्रद्युम्नश्च पिता स्मृतः ।
संकर्षणस्तज्जनको वासुदेवस्तु तत्पिता ॥

स्वयं कर्ता । यत्तु तत्रैव—

प्रथमो वरुणो ज्ञेयः प्राजापत्यस्तथाऽपरः ।
तृतीयोऽग्निः स्मृतः पिण्डो ह्येष पिण्डविधिः स्मृतः ॥

यच्च मनुः—

सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः ।
वैश्यानामाज्यपा नाम शूद्राणां तु सुकालिनः ॥

यच्चादित्यपुराणे—

मासाश्च पितरो ज्ञेया ऋतवश्च पितामहाः ।
संवत्सरः प्रजानां च(२)सुष्ठ्वेकः प्रपितामहः ॥

यच्च नन्दिपुराणे—

अग्निष्वात्ता ब्राह्मणानां पितरः परिकीर्तिताः ।
राज्ञां बर्हिषदो नाम विशां का(३)व्याः प्रकीर्तिताः ॥

---

(१) 'श्राद्धदेवताः । इति तदभे' क० ।
(२) 'सुष्ठुकः प्रपितामहः' क०। (३) 'विशां कव्याः प्रकीर्तिताः' क०।

सुकालिनस्तु शूद्राणां व्यामा म्लेच्छान्त्यजातिषु ॥

अत्रावाहनादिषु पित्रादयः समुच्चयेन विकल्पेन वा यथाचारं तत्तद्देवतारूपेण वाच्या इति हेमाद्र्यादयः।

हेमाद्रौ ब्राह्मे—

पार्वणं कुरुते यस्तु केवलं पितृहेतुकम्।
मातामह्यं न कुरुते पितृहा स प्रजायते ॥

धौम्यः—

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥

अस्यापवादमाह कात्यायनः—

कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम्।
प्रत्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

कर्षूसमन्वितं सपिण्डीकरणम्। दर्शादौ सपत्नीकानामेव देवतात्वम्,

स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम्।
पितामही च स्वेनैव तथैव प्रपितामही ॥

इति तत्रैवोक्तेः; चन्द्रिकायां चतुर्विंशतिमते—

क्षयाहे वर्जयित्वैकं स्त्रीणां नास्ति पृथक् क्रिया।
केचिदिच्छन्ति नारीणां पृथक् श्राद्धं महर्षयः ॥
अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥

इति कात्यायनोक्तेश्च। अस्य निर्मूलतां वदन्तो गौडास्त्वज्ञा एव। अत्र *'भागः' इत्यध्याहारः, अन्यथा *'सपतिकायै मात्रे' इति प्रयोगापत्तेः। 'अत्र मातृशब्दो जनन्यामेव मुख्यः। तेन सपत्नमातृभ्यो न दद्यात्।

---

*भाग इति। अंशभागित्वादप्राधान्यलाभः। *सपतिकायै इति।

एवं पितामह्यादिशब्दैः पितृजनन्यादय एवोच्यन्ते इति तत्सपत्नीभ्यो न देयम्' इति हेमाद्रिः । *'कारुण्येन तु महालयादौ देयम्' इति स एव ।

अथ विश्वेदेवाः । हेमाद्रौ शङ्खबृहस्पती—

इष्टिश्राद्धे क्रतूदक्षौ सत्यौ नान्दीमुखे वसू ।
नैमित्तिके कामकालौ काम्ये च धुरिलोचनौ ॥
पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ॥

तत्रैव—

उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ।
अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः ॥
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥ इति ।

*'इष्टिश्राद्धं श्राद्धं (१)प्रति रुचिरित्युक्तम्' इति कल्पतरुः । *आधानादिकर्माङ्गमित्यन्ये । नैमित्तिकमेकोद्दिष्टम्,

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

पतिना सहेति तृतीयानिर्देशेन मातुः (२)(प्राधान्यलाभादिति भावः । *कारुण्येन त्विति । केचिदिच्छन्तीति चतुर्विंशतिमतात् ।) *इष्टिश्राद्धमिति । इच्छार्थेषधातोः क्तिना इष्टिः । हेमाद्यादिमतमाह—*आधानादीति । आदिना सोमयागनिषेकादिसंस्कारत्रयपरिग्रहः, तदङ्गम्—

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत् कृतम् ॥

इति पारस्करेण वृद्धौतिकर्तव्यतातिदेशेन कर्माङ्गशब्देन परिभाषितं, तदन्यकर्माङ्गं तु नान्दीमुखापरनामकवृद्धिश्राद्धशब्देन

---

(१) 'प्रति प्रतिरुचिः' क० (२) धनुश्चिह्नान्तर्गतं नास्ति । ख०

इति (१)भविष्योक्तेः । एतद्यद्यपि 'एकोद्दिष्टं देवहीनम्' इति तत्र विश्वेदेवनिषेधस्तथापि नवश्राद्धे *द्वादशमासिके च कामकालौ ज्ञेयौ,

*नवश्राद्धं दशाहानि नवमिश्रं तु षडृतून् ।
अतः परं पुराणं वै त्रिविधं श्राद्धमुच्यते ॥
य(२)स्मिन्नेव पुराणे वा विश्वेदेवा न लेभिरे ।
आसुरं तद्भवेच्छ्राद्धं वृषलं मन्त्रवर्जितम् ॥

इति बह्वृचपरिशिष्टात् । एतच्च बह्वृचानामेव, तेषामेवोक्तेः । अन्येषां तु 'नात्र विश्वेदेवाः' इति कात्यायनोक्तेस्तन्निषेध एवेति पृथ्वीचन्द्रोदयः । अन्ये तु *नैमित्तिकं सपिण्डीकरणमाहुः । भविष्ये यद्यप्येकोद्दिष्टं तच्छब्देनोक्तं, तथापि—

तदप्यदैवं कर्तव्यमयुग्मान्भोजयेद्द्विजान् ।
पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ।

इति वृद्धवसिष्ठेनेति तयोर्भेदः । वस्तुतस्तु इष्टिश्राद्धं न कर्माङ्गश्राद्धं मानाभावात् , किन्तु आधानाङ्गमात्रं तस्यैव पावमानेष्टीनां समप्राधान्यपक्षे कथञ्चिदिष्टिजन्माहवनीयादिप्रयोज्यत्वेनेष्टिश्राद्धत्वात् । यद्वा—

यस्य जाताः प्रमीयेरन् पुत्रा नैव भवन्ति वा ।
ऋतुकाले दिने षष्ठे दम्पती समलङ्कृतौ ॥
कृत्वाऽऽभ्युदयिकं श्राद्धं स्वस्तिवाचनपूर्वकम् ॥

इत्यादिना प्रयोगपारिजातादौ विहितपुत्रकामेष्ट्यङ्गश्राद्धमेव ग्राह्यम् । आधानाङ्गश्राद्धे तु नान्दीमुखवत् सत्यवसुविश्वेदेवौ । *द्वादशमासिके इति । षोडशश्राद्धानि द्रष्टव्यानि । *नवेति नवमिश्रस्यापि ग्रहः । *नैमित्तिकं सांवत्सरिकमित्यन्ये । पितृ-

(१) 'भविष्योक्तेः । यद्यपि' क० (२) 'अस्मिन्नेव पुराणे वा' क०

इति तत्रैव विश्वेदेवनिषेधात् । यद्यपि सपिण्डीकरणेऽप्यत एकोद्दिष्टत्वं तथापि—

स(१)पिण्डीकरणश्राद्धं देवपूर्वं नियोजयेत् ।

इति वचनात्तत्परत्वम् । हेमाद्रावादित्यपुराणे—

विश्वेदेवौ क्रतुर्दक्षः *सर्वास्त्विष्टिषु कीर्तितौ ।
*नित्ये नान्दीमुखे श्राद्धे वसुस(२)त्यौ च, पैतृके ॥
*नवान्नलम्भने देवौ कामकालौ सदैव हि ।
अपि*कन्यागते सूर्ये काम्ये च धुरिलोचनौ ॥
पुरूरवार्द्रवौ चैव विश्वेदेवौ तु पार्वणे ।

क्वचिद्विश्वेदेवापवादमाह हेमाद्रौ शातातपः—

नित्यं श्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।
मातुः श्राद्धं च युग्मैः स्याददैवं प्राङ्मुखैः पृथक् ॥
योजयेद्देवपूर्वाणि श्राद्धान्यन्यानि यत्नतः ॥

नान्दीश्राद्धे भिन्नप्रयोगपक्षे मातुः श्रा(३)द्धमदैवमिति हेमाद्रिः ।

अथ विप्राः । ते चोत्तममध्यमाधमभेदेन त्रिविधाः ।

---

पक्षे चतुर्दश्यामेकोद्दिष्टमित्यन्ये । *सर्वास्विति बहुत्वमाधानपरम्, पुनराधानेऽपि श्राद्धसत्त्वात् । काम्येऽपि श्राद्धपरं वा । *नित्येति । आवश्यकेत्यर्थः । *नवान्नेति । एतदेव पूर्वं नैमित्तिकपदेनोक्तमित्येके । नवान्नभोजनात्प्राक् पितृभक्त्या क्रियमाणमित्यन्ये । व्रीहिपाकयवपाकयोः कर्तव्यमितीतरे । नवान्नशब्दस्य नैमित्तिकमात्रोपलक्षणतया राहूपरागादेरपि ग्रह इति तु हेमाद्रिः । *कन्येति । कन्यास्थरविनिमित्तके महालयश्राद्धे प्रौष्ठपदीश्राद्धे च ।

---

(१) 'सपिण्डीकरणं श्राद्धं' क० ।
(२) 'सत्ये च' क० ।
(३) 'श्राद्धमदैवतम्' क० ।

तत्राद्याः । अत्र मदीयाः श्लोकाः—

*त्रि(१)नाचिकेतस्त्रिमधुश्च बह्वृचो-
ऽप्याथर्वणो याजुषसामगौ च ।

*त्रिनाचिकेतेति । ज्येष्ठसाम सामविशेषस्तद्व्रताचरणेन योऽधीते स ज्येष्ठसामा । सभ्यावसथ्याभ्यां सह त्रेता यस्यास्ति सपञ्चाग्निः । पञ्चाग्नि ( वि(२)द्याध्यायी च । सामगः सामवेदाध्यायी । आपस्तम्बः—

त्रिनाचिकेतः पञ्चाग्नि ) स्त्रिसुपर्णः षडङ्गवित् ।
ब्रह्मदेयानुसन्तान श्छन्दोगो ज्येष्ठसामगः ।
वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः ॥
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः ।

ब्रह्मदेयानुसन्तानो ब्राह्मविवाहोढाजः, गवां सुवर्णस्य वा सहस्रदः॥

अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥

सर्वेषु वेदादिष्वस्खलिताध्ययनक्षमा अग्र्याः । याज्ञवल्क्यः—

अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदे ॥

श्रोत्रियः श्रुताध्ययनसम्पन्नः । ब्रह्मविद् ब्रह्मज्ञानवान् , युवत्वं च सर्वविशेषणम् । ब्राह्मणाः, न क्षत्रियादयः । श्राद्धस्याक्षयफलसम्पादका इत्यर्थः । मनुः—

यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगम् ॥

---

(१) 'त्रिणाचिकेत' ग० ।
(२) धनुश्चिह्नान्तर्गतं नास्ति ङ० ।

षडङ्गविच्च त्रिसुपर्णवेत्ता-
ऽप्यथर्वशीर्षोऽध्ययने रतश्च ॥
ज्ञाता(१)यु*वेदार्थविदौ प्रवक्ता
स्याद्ब्रह्मचारी च तथा*ग्निचिच्च ।

तस्मात्सर्वप्रयत्नेन श्राद्धकाले त्वथर्वणम् ।
भोजयेद् द्रव्यकल्पेषु पितॄणां च तदक्षयम् ॥

माधवीये मनुः—
वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्मनिरताः शान्ताः क्रियावन्तस्तपस्विनः ॥
तेभ्यो हव्यं च कव्यं च प्रसन्नेभ्यः प्रदीयते ॥

मनुः—
य भाष्ये वेदत्रैविद्ये ये च व्याकरणे रताः ।
अधीयानाः पुराणं च धर्मशास्त्राण्यथापि वा ॥
चतुर्दशानां विद्यानामेकस्यापि च पारगाः ।
श्राद्धकल्पं पठेयुर्ये ते सर्वे पङ्क्तिपावनाः ॥

*वेदार्थेति,
स्थाणुर्भारहरो विप्रः पठनार्थं न वेत्ति यः ।
स कथं पात्रतामेति कथमर्हति केतनम् ॥
अतो विद्वत्तमायैव हव्यकव्यानि दापयेत् ।
अधीतमात्रवेदं तु तदभावे नियोजयेत् ॥

इति कौर्मम्। अनधीतवेदो वेदार्थवेत्ता निषिद्ध एव। *अग्निचिदिति ।

यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित् ।

इत्यादि । आपस्तम्बः—
ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः ।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥

---

(१) 'ज्ञातायुर्वेदार्थविदौ' ग० ।

सीदद्वृत्तिः सत्यवाक्*पूरुषैः स्वै-
र्मातापित्रोः पञ्चभिः ख्यातवंशः ॥
पत्नीयुक्तो ज्येष्ठसामा पुराण-
वेत्ता पुत्री चेतिहासेष्वभिज्ञः ।
योगी *भिक्षुः *सामगो ब्रह्मवेत्ता

चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ।
अथर्वशिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः ॥
शिशुरप्यग्निहोत्री च न्यायविच्च षडङ्गवित् ।
मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्मपाठकः ॥
निष्णातः सर्वविद्यासु शान्तो विगतकल्मषः ।
गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
विमुक्तः सर्वदा धीरो ब्रह्मभूतो द्विजोत्तमः ।
अनमित्रो न वा मित्रो मैत्र आत्मविदेव च ।

*पूरुषैरिति—
पुरुषत्रयविख्यातैः सर्वं श्राद्धं प्रकल्पयेत् ।
इति छागलोक्तेः ।
दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान् ।
इष्टान् वा यदि वाऽनिष्टांस्तत्कालेनैव मानयेत् ॥
इति याम्ये । दूरादिति प्रपितामहादन्यभोजनीयब्राह्मणपर्यन्तमिति माधवः । शङ्खः—
ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः ।
ब्रह्मदेयापतिश्चैव ब्राह्मणाः (१)पङ्क्तिपावनाः ॥
*भिक्षुः । हरेर्हरस्य वा ध्यानशीलः । कौर्मे—
पत्नीपुत्रसमायुक्तान् श्राद्धकर्मणि भोजयेत् ।
*सामगः सामस्वरविधिज्ञः । यद्वा—

(१) 'पङ्क्तिपावनाः । नित्यं योगपरो विद्वान् समलोष्टाश्मकाञ्चनः । ध्यानशीलो यतिर्विद्वान् ब्राह्मणाः पङ्क्तिपावनाः ॥ समेति' घ० ङ०

पञ्चाग्निश्च *श्रोत्रियस्तत्सुतो वा ॥
शंभुध्यायी श्रीशपादाब्जसेवी
पान्थश्चैते तूत्तमाः संप्रदिष्टाः ।
भिक्षुर्योगी *पान्थ एते त्वलभ्या
भाग्याल्लब्धाश्चेत्तदा भोजनीयाः ॥
श्राद्धे विप्रेषूपविष्टेषु पश्चा-
त्संप्राप्ताश्चेद्विप्रपङ्क्तौ तु भोज्याः ॥

यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते ॥

इति विशेषविध्यर्थमिदम् । *श्रोत्रिय इति । श्राद्धसागरादौ पितुः श्रोत्रियत्वेन पुत्रस्य श्रैष्ठ्यम् ,

अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः ॥
( अ(१)श्रोत्रियोऽपि पुत्रः स्यात्पिता स्याद्वेदपारगः ॥
ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता । )
मन्त्रसंपूजनार्थं तु सत्कारमितरोऽर्हति ॥

इति मनूक्तेः । ज्यायांसं श्राद्धार्हेषु श्रेष्ठमितरोऽश्रोत्रियसुतः श्रोत्रियः । पूर्वाभावे सत्कारे श्राद्धयोग्यत्वम् । यमः—

नक्षत्रतिथिपुण्याहान् मुहूर्तान्मङ्गलानि च ।
न निर्दिशन्ति ये विप्रास्तैर्भुक्तं ह्यक्षयं भवेत् ॥

*पान्थः अतिथिः,

न परीक्षेत चरितं न विद्यां न कुलं तथा ।
न शीलं न च देशश्चातिथेरागमनस्य च ॥
सुरूपं वा कुरूपं वा कुचैलं वा सुवाससम् ।
विद्यावन्तमविद्यं वा सगुणं वाऽथ निर्गुणम् ॥
मन्येत विष्णुमेवैनं साक्षान्नारायणं हरिम् ।

---

( १ ) धनुश्चिह्नान्तर्गतं नास्ति ङ०

अत्र मूलं हेमाद्रौ ज्ञेयम्। तत्रैव नारदः—

*यो वै यतीननादृत्य भोजयेदितरान् द्विजान्।
विजानन्वसतो ग्रामे कव्यं तद्याति राक्षसान्॥

दीपकलिकायां दक्षः—

विना मांसेन मधुना विना दक्षिणयाऽऽशिषा।
परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु॥

एतच्च(१) *ज्ञानिविषयम्। त्रिणाचिकेतस्त्रिसुपर्णौ यजुर्वेदैकदेशौ तद्व्रतेन तदध्यायिनौ, 'यस्य सप्त पूर्वे सोमपाः स त्रिसुपर्णः' इति बोपदेवः। सत्रिमधुर्ऋग्वेदैकदेशस्तदध्यायी। केचिन्नाचिकेतं चयनं त्रिः कृतवा-

---

अतिथिं समनुप्राप्तं विचिकित्सेन्न कर्हिचित्॥
पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम्।
दद्यादतिथिपूजार्थं स यज्ञः पाञ्चदक्षिणः॥
न वक्तव्यं सदा विप्रे क्षुधिते नास्ति किञ्चन।
तस्मै सत्कृत्य यो दद्यादपूतो(२) यज्ञ उच्यते॥

इति नृसिंहपुराणात्। छागलेयः—

आतिथ्यरहिते श्राद्धे भुञ्जते ये बुधा द्विजाः।
वृथाकृतेन पाकेन काकयोनिं व्रजन्ति ते॥

ब्रह्माण्डे—

शिखिभ्यो धातुरक्तेभ्यो त्रिदण्डिभ्यश्च भोजयेत्।

शिखिनो ब्रह्मचारिणः। धातुरक्तवस्त्रधारिणो वानप्रस्थाः। त्रिदण्डिनः कायवाङ्मनोदण्डोपेता यतयः। एषामुत्तरोत्तरं श्रैष्ठ्यं द्रष्टव्यम्। अत एवाह-*यो वै इति। ब्रह्माण्डेऽपि—

अलाभे सति भिक्षूणां भोजयेद् ध्यानिनः शुभान्।

---

(१) 'ज्ञानविषयम्। त्रिनाचिकेतः' क०
(२) 'पूजो' घ०

नित्यर्थमाहुस्तद्धेमाद्रिविरुद्धम् । हेमाद्रौ गौतमः-*'युवभ्यो दानं प्रथमं पितृवयस' इत्येके । मात्स्ये मनुः—

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
सामस्वरविधिज्ञश्च *पङ्क्तिपावनपावनाः ॥

कौर्मे—

असमानप्रवरको ह्यसगोत्रस्तथैव च ।
असम्बन्धी च विज्ञेयो ब्राह्मणः श्राद्धसिद्धये ॥

---

असम्भवेऽपि तेषां वै नैष्ठिकान् ब्रह्मचारिणः ॥
तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत् ॥

यतयस्त्रिदण्डिन इति केचित् । ध्यानिनो वानप्रस्थाः । उदासीनोऽसम्बन्धी । *ज्ञानीति । याज्ञवल्क्येन ब्रह्मविदुक्तः ।

एवम्—

गृहस्थानां सहस्राच्च वानप्रस्थशतादपि ।
ब्रह्मचारिसहस्राच्च योगी त्वेको विशिष्यते ॥
नास्तिको वा विधर्मो वा सङ्कीर्णस्तत्करोऽपि वा ।
अत्यन्तं तारयेन्नूनं योगीत्याह प्रजापतिः ॥

योगिनं मां मा जानन्त्विति भीत्या कृत्रिमं नास्तिक्यादिकं द्रष्टव्यम् ।

योगिनं समतिक्रम्य (१)(भोजयन्ति परं नरम् ।
दाता भोक्ता च नरकं गच्छतः सह बान्धवैः ॥

इति ब्रह्मवैवर्ते योगिश्रैष्ठ्यम् । *युवभ्य इति ।) युवा मध्यमवयस्कः । *पङ्क्तीति ।

(२)अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान् ॥

---

(१)धनुश्चिह्नान्तर्गतं नास्ति ङ । (२) 'अपाङ्क्तोपहता पङ्क्तिः' ङ ।

गारुडे—

श्राद्धेषु विनियोज्यास्ते ब्राह्मणा ब्रह्मवित्तमाः

ये *योनिगोत्रमन्त्रान्तेवासिसम्बन्धवर्जिताः ॥

मनुः—

*न मित्रं भोजयेच्छ्राद्धे धनैः कार्योऽस्य संग्रहः।

नारिं न मित्रं (१)यो विद्यात्तं तु श्राद्धे निमन्त्रयेत् ॥

द्वयोः*र्भ्रात्रोः श्राद्धे भोजनं निषिद्धम्,

पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिम्

सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत् ॥

इति श्राद्धदीपकलिकायां जातूकर्ण्योक्तेः।

अथ मध्यमाः। हेमाद्रौ कौर्मगार्ग्यौ—

नैकगोत्रे हविर्दद्याद्यथा कन्या तथा हविः।

*अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत् ॥

अत्र केचित्स्वशाखीयान्मुख्यानाहुः पठन्ति च—

निमन्त्रयीत पूर्वेद्युः स्वशाखीयान्द्विजोत्तमान् ॥

स्वशाखीयद्विजाभावे द्विजानन्यान्निमन्त्रयेत् ॥

---

*योनिसम्बन्धा मातुलादयः। गोत्रसम्बन्धाः सपिण्डादयः। मन्त्रसम्बन्धाः वेदाध्यापकाः। अन्तेवासिसम्बन्धा शिल्पशास्त्राद्युपाध्यायाः। *न मित्रमिति।

काम श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम्।

(अभिरूपं विद्वांसम्।)

द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥

इति त्वनुकल्पार्थमिति माधवः। काममित्यनुज्ञाभानमात्रम्। अरिभोजने दोषाधिक्यार्थमिति वस्तुगतिः। *भ्रात्रोरिति। पितृपुत्रावपि द्रष्टव्यौ। *अभावे हीति। असमप्रवराभावे समा-

---

(१) 'नारिं' न मित्रं यं विद्यात् क०

ब्राह्मणातिक्रमो नास्ति (१)मूर्खे चैव विवर्जिते।
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते॥

इति कात्यायनोक्तेः। विप्रस्यापि दोषः,

अविद्वान्प्रतिगृह्णानो भस्मीभवति दारुवत्।

इति मनूक्तेः। अपरार्के अत्रिः—

षड्भ्यस्तु पुरुषेभ्योऽर्वाग्गश्राद्धेयास्तु गोत्रिणः।
षड्भ्यस्तु परतो भोज्याः श्राद्धे स्युर्गोत्रजा अपि॥

एतच्च ब्राह्मणालाभे, अपिशब्दात्। असम्भवे हेमाद्रौ गौतमः–'शिष्यांश्चैके सगोत्रांश्च भोजयेदूर्ध्वं त्रिभ्यो गुणवतः'। आपस्तम्बः–'ब्राह्मणान्भोजयेद्योनिगोत्रमन्त्रान्तेवास्यसम्बन्धिनः। गुणहान्यां तु परेषां समुदितः सोदर्योऽपि भोजयितव्यः। एतेनान्तेवासिनो व्याख्याताः' इति। अत्र विशेषमाहात्रिः—

पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः।
न परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा॥

---

नातिक्रामेन्नरो धीमान् दारिद्र्याभिहतं तथा॥

इति मूर्खातिक्रमनिषेधः, तत्रोक्तं महाभारते—

यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्युतः।
तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधौ॥

भविष्येऽपि—

यस्य त्वेकगृहे मूर्खो दूरस्थश्च गुणान्वितः।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥

अन्यथा तु भविष्ये—

गायत्रीमात्रसारोऽपि ब्राह्मणः पूजितः स्वतः।
गृहासन्नो विशेषेण न भवेत्पतितः स चेत्॥ इति।

---

(१) 'मूर्खे वेदविवर्जिते' क०

ऋत्विक्पुत्रादयोऽप्येते सकुल्या ब्राह्मणाः स्मृताः ।
*वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥
सगोत्रा न नियोक्तव्याः स्त्रियश्चैव विशेषतः ॥ इति ।

अथ वर्ज्याः । अत्र मामकाः श्लोकाः—

वर्ज्यान् प्रवक्ष्ये त्वथ रोगिवैरि-
हीनाधिकाङ्गान्कितवान्कृतघ्नान् ।
नक्षत्रशास्त्रेण च जीवमाना-
न्भैषज्यवृत्त्याऽपि च राजभृत्यान् ॥
सङ्गीतकायस्थकुसीदवृत्त्या
वेदक्रयेणापि कवित्ववृत्त्या ।
देवार्चनेनापि च जीवमाना-
न्स्वाध्यायदाराग्निसुतोज्झकाणान् ॥
दुर्वालखल्वाटकुनख्यधर्मि-

---

सन्ध्योपासनमात्रगुणः परेषां समुदितः श्रेष्ठसमुदायमध्यस्थः ।
*वैश्वदेवे इति ।

पितृव्यगुरुदौहित्रऋत्विक्स्वस्रीयमातुलान् ।
पूजयेद्धव्यकव्येन वृद्धानातिथिबान्धवान् ॥

इति विष्णुपुराणवचने ऋत्विक्पितृव्यसोदर्यसपिण्डा वैश्वदेवस्थाने योज्याः, नतु पित्रादिस्थाने इत्यभिधाय तत्र प्रमाणत्वेनैतद्वचनमुदाहृतं माधवेन । शिष्यस्यापि वैश्वदेवस्थाने (१)एव निवेशः । एतेनान्तेवासिनो व्याख्याता इत्यनेन शिष्ये सोदर्यविहितार्थातिदेशात् । ननु—

आनृशंस्यं परो धर्मोऽयाचते यत्प्रदीयते ।
अयाचतः सीदमानान् सर्वोपायैर्निमन्त्रयेत् ॥

इति वासिष्ठम् । आनृशंस्यमुत्कृष्टो धर्मः, तद्वशानयाचन-

---

(१) 'एवाभिनिवेशः' घ०

नटांश्च पौनर्भवकृष्णदन्तान् ।
अगारदाही गरदः समुद्र-
यायी च (१)कुण्डाश्यथ कूटकारी ॥
बालांश्च योऽध्यापयते स्वपुत्रा-
दवाप्तविद्यस्त्वथ कुण्डगोलौ ।
अग्रेदिधिष्वाः पतिरस्त्रकर्ता
सोमक्रयी तैलिक(२)केकराक्षौ ॥

---

शीलान् अतएव सीदमानान् निर्गुणानपि सगुणानुकल्पाभावे सर्वोपायैर्यथा ते निमन्त्रणमनाकुर्वन्ति तादृशैरुपायैर्निमन्त्रयेदिति हि तदर्थः। तथा च माधवाचार्यैरनुकल्पानुकल्पेषु गणितः सीदद्वृत्तिः कुतो ग्रन्थकृता मुख्येषु गणित इति चेत् ? न, उत्कृष्टानामपि अयाचितत्वगुणेन सीदद्वृत्तित्वसम्भवात् । अन्येषां तु मध्यमत्वस्य माधवोक्तानुकल्पानुकल्पत्वस्य च ग्रन्थकृदनुमतत्वात् । अत्र मध्यमेष्वपि कुलीनत्वं श्रुतशीलवृत्तत्वञ्चावश्यकम् । "तस्मात् कुलीनाः श्रुतशीलवन्तः वृत्तस्थाः सत्यवादिनो ऽव्यङ्गाः पाङ्क्तेयाः" इति हारीतेन तस्मात्पदोक्तेः । कुलगुणादिकं च हारीतेनैवोक्तम् "स्थितिरविच्छिन्नवेदवेदिताऽयोनिमङ्करत्वमार्षेयत्वञ्चेति । कुलगुणाश्च वेदोङ्गानिधर्मोऽध्यात्मवित्त्वं विज्ञानं स्मृतिश्चेति षड्विधं श्रुतम् । ब्रह्मण्यता देवभक्तिः पितृभक्तता सौम्यता परानुपतप्तता अनसूयता अनुद्धतता अपारुष्यं मित्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम् । क्षमा दमो दया दानमहिंसा गुरुपूजनं शीलं स्नानं जपो होमस्तपः स्वाध्यायः सत्यवचनं सन्तोषो दृढव्रतत्वमुपव्रतत्वमिति षोडशगुणं वृत्तम् इति । अस्या-

---

(१) परदारेषु जायन्ते द्वौ सुतौ कुण्डगोलकौ । अमृते जारजः कुण्डो मृते भर्तरि गोलकः ॥ यस्तयोरन्नमश्नाति सकुण्डाशी प्रकीर्तितः ।
(२) केकरोऽर्ध्यर्धदृष्टिः ।

युद्धाचार्यः पक्षिणां पोषकश्च
स्रोतोभेत्ता वृक्षसंरोपकश्च ॥
मेषाणां वा माहिषाणां च पुष्ट्यै
स्वीयस्त्रीषु प्रहितैर्यश्च जारैः ।
जीवत्यध्येतुश्च दत्तानुयोगाद्
द्रव्यप्राप्त्यै वेदमुद्धाटयन्तः ॥

र्थः श्राद्धसागरे—स्थितिरविच्छिन्नसम्मानता । आविच्छिन्नवेदत्वे- दिता । वेदिपदं हविरासादनदेशवाच्यपि हविःसाध्ययागे लाक्षणि- कम् । अयोनिसङ्करत्वमसपिण्डाशूद्राजत्वादि । आर्षेयत्वं मन्त्रऋषि- ज्ञातृत्वम् । वेदः ऋग्वेदादि । अङ्गानि शिक्षादीनि षट् । धर्मो धर्म- शास्त्रम् । अध्यात्मविरत्वमुत्तरमीमांसाज्ञातृत्वम् । विज्ञानं वैशेषिकादि- शास्त्रज्ञानम् । स्मृतिर्वेदशास्त्राद्यविस्मरणम् । ब्रह्मण्यता ब्राह्मणेषु प्री- तिः । देवभक्तिः मातापितृभक्तिः । सौम्यता प्रियदर्शनता । परा- नुपतप्तता अन्यसन्तापाकरणम् । अनसूयता गुणेषु दोषानारोपि- त्वम् । अनुद्धतता अपूज्यानादरः । अपारुष्यं वागादिपारुष्यहीन- त्वम् । मित्रताऽविचार्यप्रियकारित्वम् । प्रियवादित्वम् अनिषिद्धसु- खजनकशब्दोच्चारयितृत्वम् । कृतज्ञता परकृतोपकारस्य पुनः पुनः स्म- रणम् । शरण्यता सति सम्भवे रक्षितृत्वम् । प्रशान्तिर्मनोनिग्रहः । क्षमा अनीर्ष्या । दमो बाह्येन्द्रियनिग्रहः । दया परदुःखप्रहा- णेच्छा । दानमभयदक्षिणादि । अहिंसा मनसाऽपि न शरीरवि- योगजनकव्यापाराचिन्तनम् । गुरुपूजनं गौरवितप्रीतिहेतुभूता क्रि- या । शीलं सत्स्वभावः । स्नानजपहोमाः नित्यनैमित्तिकाः । तपः कृच्छ्रचान्द्रायणादि, नतु नैमित्तिकम् । स्वाध्यायो वेदाध्ययनम् । सत्यवचनं विवाहादिव्यवहारातिरिक्तं ऋतं वाक्यम् । सन्तोषो य- त्किञ्चिल्लाभेऽपि । दृढव्रतत्वम् आश्रमोचितालाभिक्षादस्युपवासादीना- मत्यावश्यकानां गुरुतरेऽपि हेतावविच्छेदः । उपव्रतत्वं दशम्यादा-

ग्रामयाजिपशु*केशविक्रयी-
*स्तेनशिल्पिपितृवादकारकान् ।
अर्थकामरतशूद्रयाजक-
श्मश्रुहीनजटिमुण्डिनिर्घृणान् ॥
यस्य चैव गृहिणी रजस्वला
*स्वार्थपाकरतशापदायकान् ।
क्लीबकुष्ठयतिविलोहितेक्षणा-
न्कुब्जवामनमृषाभिशापिनः ॥
पुत्रहीनमथ कूटसाक्षिणं
प्रातिहाविक्रमयाज्ययाजकम् ।
*स्वात्मदातृपरिवेत्तृयाजक-
*स्तेनहिंस्रकमुखान्विवर्जयेत् ॥

अत्र*मूलं हेमाद्रौ पृथ्वीचन्द्रोदये च ज्ञेयम् । भारते वैकभक्तादीति । अयं च सर्वोऽपि—

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र व्रतमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

इति पात्रलक्षणप्रपञ्चः(१) । *केशविक्रयी कम्बलादिविक्रयी । *स्तेनः ब्राह्मणान्यस्वर्णचोरः । *स्वार्थपाकरतः पञ्चमहायज्ञशून्यः। *स्वात्मदाता दत्तात्मा स्वयंदत्तः। *स्तेनः ब्राह्मणकुप्यहर्ता । *मूलमिति । याज्ञवल्क्यः—

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥

---

(१) इतोऽग्रे घपुस्तके टिप्पण्यां "अत्र सम्भवति मुख्यकल्पेऽनुकल्पो न ग्राह्यः, प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ इति मनुवचनात्" इत्येतावान् ग्रन्थस्त्रुटितरूपेणोपलभ्यते ॥

दानधर्मेषु श्राद्धवर्ज्यविप्राधिकारे—

कितवो भ्रूणहा यक्ष्मी पशुपालो निरा(१)कृतिः ।
ग्रामप्रेष्यो वार्धुषिको गायकः सर्वविक्रयी ॥
सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः ।
पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ॥
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ।
पर्वका(२)रश्च सूची च मित्रध्रुक् पारदारिकः ॥

---

भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ॥
मातापितृपरित्यागी कुण्डाशी वृषलात्मजः ।
परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥
( याज्ञ० स्मृ० आचा० श्लो० २३-२५)

रोगी रोगाश्च—'उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगंदरो महोदरोऽश्मरी चेत्यष्टौ पापरोगाः' इति देवलोक्ताः। हीनं न्यूनमतिरिक्तमधिकं वाऽङ्गं यस्यासौ हीनातिरिक्ताङ्गः । काणः एकेनाप्यक्ष्णा यो न पश्यति सः, एतेन बधिरमूकादयोऽप्युपलक्ष्यन्ते । पुनर्भूः द्विरूढा तत्र जातः पौनर्भवः । अवकीर्णी क्षतव्रतः। कुनखी दुष्टनखः । श्यावदन्तकः स्वाभाविककृष्णदन्तः । वेतनं गृहीत्वा योऽध्यापयति स भृतकाध्यापकः । असता वा सता वा दोषेण कन्यां दूषयति स कन्यादूषी । अभिशस्तकः महापातकाभिशस्तः । परिविन्दकः परिवेत्ता । तद्याजकमुपलक्षणमिदम्,

---

( १ ) 'अधीत्य विस्मृते वेदे भवेद्विप्रो निराकृतिः ।' इति देवलः ।
( २ ) 'पर्वकारश्च सूचश्च' क०

अव्रतानामुपा(१)ध्यायः काण्डपृष्ठस्तथैव च ।
श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च ॥

---

परिवेत्ता(२)परिवित्तिर्यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥

इति स्मरणात् । कुण्डस्यान्नमश्नातीति कुण्डाशी, कुण्डशब्दो गोलकस्याप्युपलक्षकः । विहितकर्मत्यागी वृषलः तत्सुतो वृषलात्मजः । परपूर्वापतिः पुनर्भूपतिः । अदत्तादायी स्तेनः । कर्मदुष्टाः शास्त्रविरुद्धाचारयुक्ताः एते श्राद्धे निन्दिता वर्ज्या इत्यर्थः । मनुः—

(३)स्तेनाश्च पतिताः क्लीबा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत् ॥
जटिलञ्चानधीयानं (४)दुर्वालं कितवं तथा ।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् ॥
चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा ॥
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥
कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥
भृतकाध्यापकश्चैव भृतकाध्यापितस्तथा ।

---

(१) अक्षरपाठकः ।
(२) परिवेत्ता परिवेत्तिर्यथा' ङ०
(३) 'ये स्तेनपतितक्लीबा' अ०
(४) 'दुर्बलम्' अ०

(१)शूद्रशिष्यः शूद्रगुरुर्वाग्दुष्टः कुण्डगोलकौ ॥
अकारण(२)परित्यागी मातापित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी बन्दी च तैलिकः कूटकारकः ॥
पित्रा विवदमानश्च कितवो मद्यपस्तथा ।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ॥
धनुःशराणां कर्ता च यश्चाग्रेदिधिषूपतिः ।
मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च ॥
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥
हस्तिगोश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥
स्रोतसां भेदकश्चैव तेषाञ्चावरणे रतः ।
गृहसंवेशको दूतो वृक्षारोपक एव च ॥
श्वक्रीडी श्येनजीवी च कन्यादूषक एव च ।
हिंस्रो (३)वृषलपुत्रश्च गणानाञ्चैव याजकः ॥
आचारहीनः क्लीबश्च (४)यश्च याचनकस्तथा ।
कृषिजीवी (५)शीलजीवी सद्भिर्निन्दित एव च ॥
औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ।
(६)प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ॥

---

(१) 'शूद्रशिष्यो गुरुश्चैव' अ०
(२) 'परित्यक्ता' अ०
(३) 'वृषलवृत्तिश्च' अ०
(४) 'नित्यं याच' अ०
(५) 'श्लीपदी च' अ०
(६) 'प्रेतनिर्हारकश्चैव' अ०

एतान् विगर्हिताचारानपांक्तेया(६)न्द्विजाधमान् ।
द्विजातिप्रवरो विद्वानु(७)भयत्रापि वर्जयेत् ॥ ( मनुस्मृ० अ० ३ श्लो० १५०–१६७ ) ।

स्तेनोऽब्राह्मणस्वर्णान्नद्रव्यापहर्ता, ब्राह्मणस्वर्णहारिणः पतितशब्देनोक्तेः । नास्तिकेभ्यो वृत्तिर्जीविका येषां ते नास्तिकवृत्तयः । अनधीयानो जटिलो ब्रह्मचारीत्येकम् , अधीयानस्य तस्य तत्र प्राप्तत्वात् । न च तस्याश्रोत्रियत्वेन कथं प्राप्तिः ?

व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ।

इतिवाक्ये दौहित्रत्वाविवक्षाभ्रमेण अध्ययनरहितब्रह्मचारिणोऽपि प्राप्तेः । दुर्वालः कपिलकेशः खल्वाटो वा,

खल्वाटकश्च दुर्वालः कपिलः खण्ड एव च ॥

इतिमञ्जुहात् । कितवो द्यूतासक्तः । पूगयाजकः ग्रामयाजकः । श्राद्ध इत्युपादानाद् दुर्वालादयः पित्र्य एव वर्ज्या न दैवे । अन्यथा प्रकरणेनोभयत्र निषेधाद्विशेषोपादानं व्यर्थं स्यात् । अत एव गौतमः–"हविष्वेव दुर्वालादीनां श्राद्धे एवैके" इति । हविष्षु वैश्वदेवेऽपि दुर्वालादयो वर्ज्याः । एके पुनः श्राद्ध एवेति तदर्थः । चिकित्सका जीवनार्थमदृष्टार्थं वा भैषज्यकारिणः । देवलकस्तु–

देवार्चनपरो नित्यं वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्येषु गर्हितः ॥

इति देवलोक्तः । आपद्यपि मांसविक्रीय, अनापदि विपणजीवित्वेन निषेधे सिद्धे मांसविक्रयिणः पुनरुपादानवैयर्थ्यात् । अनापदि वाणिज्येन जीविनो विपणजीविनः । आपदि–

क्षात्रेण कर्मणा जीवेद्विशां वाऽपि यथेच्छया ।

---

(६) 'नराधमान्' घ० ङ०
(७) 'उभयत्र विवर्जयेत्' अ०

इत्यनुज्ञानात् । विहितत्यागकारणं विना श्रौतस्मार्ताग्निपरित्यागी त्यक्ताग्निः । एतच्च स्वाध्यायत्यागादेरुपलक्षणम्,

स्वाध्यायाग्निसुतत्यागस्तडागारामविक्रयः ।

इत्युपपातकगणनात् । अल्पवृद्ध्या धनं स्वीकृत्याधिकवृद्ध्या धनप्रयोजको वार्धुषिः,

समर्घं धनमुद्धृत्य महर्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मचारिषु गर्हितः ॥

इतिस्मृतेः । यक्ष्मी क्षयरोगी । अनापदि पशुपालः । अविवाहिते अनुपनीते वा ज्येष्ठे अनाहिताग्नौ वा ज्येष्ठादौ कनीयान् तदादिर्वा कृतदारः अनुपनीतः । अहिताग्निः दर्शपूर्णमासयाजी वा आवसथ्यमाधाता वा परिवेत्ता । ज्येष्ठादिस्तु परिवित्तिः प्राग्दर्शितः । निराकृतिस्तु--

अधीत्य विस्मृते वेदे भवेद् विप्रो निराकृतिः ।

इति देवलोक्तः । नानाजातीया अनियतवृत्तयो गणास्तेषां मध्यवर्ती गणाभ्यन्तरः । कुशीलवो गायकादिः । रजस्वलायाः कन्यायाः पतिः वृषलीपतिः,

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया या कुमारी रजस्वला ॥
यस्त्वेनामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

इति देवलोक्तेः । यस्य गृहे जारः सर्वदा संवसेत् सोऽपि वर्ज्यः,

परदाराभिगो मोहात्पुरुषो जार उच्यते ॥
स एवोपपतिर्ज्ञेयः सर्वदा संवसेद् गृहे ॥

इति स्मृतेः । वाग्दुष्टो (१)दुष्टवाक् निष्ठुरवाक् । पतितैर्देहाप-

(१) 'दुष्टवाक्' नास्ति घ०

तकिसंसार्गिभिः सह ब्राम्हैर्योनैश्च सम्बन्धैः (१)(विद्यायोनिसंबंधैः) संयोगं गतः, साक्षात् सम्बन्धे तु "यौन स्रौवमुख्यैस्तु सम्बन्धैः सद्य एव" इति वचनेन पतितत्वात् । [केकरोऽध्यर्धदृष्टिः(१)] । अग्रे दिधिषूस्तु—

ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता ॥

इति देवलोक्ता । पुत्राचार्यः पुत्रोऽक्षरपाठको यस्य सः । भ्रामरी वृत्त्यर्थमेव भ्रमरवदर्थार्जकः । गृहसंवेशको वर्द्धकिवृत्त्या जीवमानः । उरभ्राः अवयः ते वृत्त्यर्थं पालनीया यस्य स और-भ्रिकः । महिष्यः पाल्या यस्य स माहिषकः । अथवा—

महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी ।
तस्यां यो जायते गर्भः स वै माहिषकः स्मृतः ॥

इति देवलोक्तः । एतानुभयत्र दैवे पित्र्ये च वर्जयेत् इत्यर्थः। यमः—

ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः ।
राष्ट्रकामास्तथोन्मत्ताः पशुविक्रयिणस्तथा ॥
वृषलीफेनपीताश्च श्रेणियाजकयाजकाः ।
कालोपजीविनश्चैव ब्रह्मविक्रयिणस्तथा ॥
दण्डपूजाश्च ये विप्राः ग्रामकृत्यपराश्च ये ॥

दन्दशूका इति पाठान्तरम् ।

कुण्डाशिनो देवलकाः परदाराभिमर्शकाः ।
श्यावदन्ताः कुनखिनः शिल्पिनः कुष्ठिनश्च ये ॥

शिल्पिनः शिल्पविद्यामात्राध्येतारः ।

अगारदाहिनश्चैव हस्त्यश्वपदका द्विजाः ।
कन्यानां दूषकाश्चैव ब्राह्मणानां च दूषकाः ॥

---

(१) धनुश्चिह्नान्तर्गतं नास्ति घ०

परिविन्तिस्तथा स्तेनो दुश्चर्मा गुरुतल्पगः ।

सूचकाः प्रेष्यकाश्चैव किराताश्च कुशीलवाः ।
अजाविका माहिषिकाः सर्वविक्रयिणश्च ये ॥
धनुःकर्ता द्यूतवृत्तिः मित्रध्रुक् शस्त्रविक्रयी ।
पाण्डुरोगी गण्डमाली यक्ष्मी च भ्रामरी तथा ॥
पिशुनः कूटसाक्षी च दीर्घरोगी वृथाश्रमी ।
राज्ञः प्रेष्यकरो यश्च ग्रामस्य नगरस्य वा ॥
समुद्रयायी वान्ताशी केशविक्रयिणश्च ये ।
गोविक्रयी च दुर्वालः पूगानां चैव याजकः ॥
मद्यपश्च कदर्यश्च सह पित्रा विवादकृत् ।
दाम्भिको वर्द्धकीभर्ता त्यक्तात्मा दारदूषकः ॥
सद्भिश्च निन्दिताचारः स्वकर्मपरिवर्जकः ।
परिवित्तिः परिवेत्ता भृत्याचार्यो निराकृतिः ॥
शूद्राचार्यः सुताचार्यः शूद्रशिष्यस्तु नास्तिकः ।
इष्वस्त्रो दारकाचार्यो मानकृत्तैलिकस्तथा ॥
चोरा वार्धुषिका दुष्टाः परस्थानां च दूषकाः ।
चतुराश्रमबाह्याश्च सर्वे ते पङ्क्तिदूषकाः ॥
इत्येतैर्लक्षणैर्युक्तांस्तान् द्विजानाभियोजयेत् ॥

कदर्यस्तु—

आत्मानं धर्मकृत्यं च पुत्रं दारांश्च पीडयेत् ।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः ॥

इति देवलोक्तः । भविष्ये—

वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात् ।
तावती भ्रूणहत्या वै वेदविक्रयकोऽश्नुयात् ॥

बृहस्पतिः—

अधीष्यते ह्यहं दास्ये इत्युक्तो यस्तु दुर्मतिः ।

*कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ॥
ईदृशा ब्राह्मणा ज्ञेया अपाङ्क्त्या युधिष्ठिर ॥

तथा—

ऋणकर्ता च यो राजन्यश्च वार्धुषिको नरः ।

काण्डपृष्ठः स्वशाखां त्यक्त्वा परशाखयोपनीतस्तदध्यायी च । क्षत्रियवैश्यवृत्तौ नारदस्तु—

तस्यामेव तु यो वृत्तौ ब्राह्मणो वसते रसात् ।
काण्डपृष्ठश्च्युतो मार्गात्सोऽपाङ्क्तेयः प्रकीर्तितः ॥

इत्याह । हारीतः—

शूद्रापुत्राः स्वयंदत्ता ये चैते क्रीतकाः सुताः ।
पठेच्छास्त्राणि वेदं वा स प्रेत्य श्वाऽभिजायते ॥

विष्णुः—

न वार्यपि प्रयच्छेत बिडालव्रतिकद्विजे ।

*गायक इति वादननर्तनादेरुपलक्षणम् । *पर्वकारः वेषान्तरधारी ।

पर्व क्लीबं महे ग्रन्थे प्रस्तावे लक्षणान्तरे ।

इति मेदिनीति भारतटीका । *अव्रतानां शूद्राणाम् । *उपाध्यायः अक्षरपाठकः । *काण्डपृष्ठः स्वशाखां त्यक्त्वा परशाखयोपनीतः ((१)तदध्यायी च ।

तस्यामेव तु यो वृत्तौ ब्राह्मणो वसते रसात् ।
काण्डपृष्ठश्च्युतो मार्गात् सोऽपाङ्क्यः)प्रकीर्तितः ॥

इति नारदेन तु क्षत्रियवैश्यवृत्त्याजीवी उक्तः ।

शूद्राः पुत्राः स्वयं दत्ता ये चैते क्रीतकाः सुताः ।
ते सर्वे मनुना प्रोक्ताः काण्डपृष्ठा न संशयः ॥

इति च हारीतः । 'वेश्यापतिः काण्डपृष्ठः' इति भारतटीका । *कुशीलवः कुशी फालः तेन कर्षणं लक्ष्यते, लवः छेदनं तदु-

(१) कंसान्तर्गतं नास्ति घ०

ते सर्वे मनुना प्रोक्ताः काण्डपृष्ठा न संशयः ॥

अन्येऽपि हेमाद्रौ मात्स्ये—

त्रिशङ्कून्बर्बरानन्ध्रांश्चीनद्रविड(१)कौङ्कणान् ।
कर्णाटकांस्तथाऽऽभीरा(२)न्कालिङ्गांश्च विवर्जयेत् ॥

तत्रैव सौरपुराणे—

अङ्गवङ्गकालिङ्गांश्च सौराष्ट्रान् गुर्जरांस्तथा ।
आभीरान्कौङ्कणांश्चैव द्राविडान्दाक्षिणायनान् ॥
आवन्त्यान्मागधांश्चैव ब्राह्मणांस्तु विवर्जयेत् ॥

चन्द्रिकायां यमः—

काणाः कुब्जाश्च षण्ढाश्च कृतघ्ना गुरुतल्पगाः ।
मानकूटास्तुलाकूटाः *शिल्पिनो ग्रामयाजकाः ॥
राजभृत्यान्धबधिरमूकखल्वाटपङ्गवः ।
वणिजो मधुहर्तारो गरदा वनदाहकाः ॥
समयानां च भेत्तारः प्रदाने ये निवारकाः ।
*प्रव्रज्योपनिवृत्ताश्च वृथा प्रव्राजिताश्च ये ॥
यश्च प्रव्राजिताज्जातः *प्रव्रज्यावसितश्च यः ।
अवकीर्णी च *वीरघ्नो गुरुघ्नः पितृदूषकः ॥

(३)श्राद्धकाशिकायां कात्यायनः—

*छिन्नम्नः *कीलदुश्चर्मा शुक्लोऽतिकपिलस्तथा ।
छिन्नौष्ठश्छिन्नलिङ्गश्च नैव केतनमर्हति ॥

*छिन्नम्नः पित्रोर्वंशो त्रिपुरुषं विच्छिन्नवेदाग्निः । हेमाद्रौ भयोपजीवीति भारतटीका । *शिल्पिनः शिल्पोपजीविनः । *प्रव्रज्योपनिवृत्तः प्रव्रज्यां विहाय पूर्वाश्रमं गतः । *प्रव्रज्यावसितः । प्रव्रज्यात्यागी । *वीरघ्नः त्रेतात्यागी । *कीलो नपुंसकभेदः । काल इति वा पाठः । *छिन्नम्न इति । एतेन—

(१) 'कोङ्कणान्' क० (२) कलिङ्गांश्च' क० (३) 'श्राद्धकारिकायां' क०

मरीचिः—

अविद्धकर्णः कृष्णश्च लम्बकर्णस्तथैव च।
वर्जनीयाः प्रयत्नेन ब्राह्मणाः श्राद्धकर्मणि ॥

ब्राह्मे—

मूकश्च पूतिनासश्च छिन्नाङ्गश्चाधिकाङ्गुलिः।
*गलरोगी च *(१)गड्डुमान्स्फुटिताङ्गश्च सज्वरः ॥
षण्ढ*तूवर*मन्दांश्च श्राद्धेष्वेतान्विवर्जयेत् ॥

लम्बकर्णं चाह तत्रैव गोभिलः—

हनुमूलादधः कर्णौ लम्बौ तु परिकीर्तितौ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्ताविति शातातपोऽब्रवीत् ॥

चन्द्रिकायां यमः—

*द्व्यङ्गुलातीतकर्णस्य भुञ्जते पितरो न तु।

षण्ढश्चात्र चन्द्रिकोक्तः सप्तविधो ग्राह्यः। यथा—

षण्ढको वातजः षण्ढः पण्डः क्लीबो नपुंसकः।
कीलकश्चेति सप्तैव क्लीबभेदाः प्रकीर्तिताः ॥

पराशरमाधवीये तु चतुर्दशविधा उक्ताः। तेषां

---

काणाः कुण्ठाश्च मण्ठाश्च मूकान्धबधिरा जडाः।
कुनखाः कुष्ठिनश्चैव द्विर्नग्ना वृद्धमेहनाः ॥

विद्धशिश्नाः।

अतिदीर्घा अतिह्रस्वा अतिस्थूला भृशं कृशाः।
निर्लोमानोऽतिलोमानो गौराः कृष्णा अतीव ये ॥
एतान् विवर्जयेत्प्राज्ञः श्राद्धेषु श्रोत्रियानपि ॥

इति स्कान्दे। द्विर्नग्ना दुश्चर्माण इति व्याख्यानमनादेयम्, दुश्चर्मणां पृथगुक्तेः। *गलरोगी गण्डमाली। *गड्डुमान् कुब्जः। *तूवरः यौवनेऽप्यजातश्मश्रुः। *मण्डो वक्रजङ्घः, मन्द इति

---

(१) 'गण्डुमान्' क०

स्वरूपाणि *तत्रैव ज्ञेयानि ।

चन्द्रिकायां शातातपः—

अग्निष्टोमादिभिर्यज्ञैर्ये यजन्त्यल्पदक्षिणैः ।
तेषामन्नं न भोक्तव्यमपाङ्क्तास्ते प्रकीर्तिताः ॥

एतच्च शक्तौ सत्याम् । अपरार्के भारते—

अव्रती कितवः स्तेनः प्राणिविक्रयकोऽपि वा ।
पश्चाच्चेत्पीतवान्सोमं सोऽपि केतनमर्हति ॥

(१)श्राद्धदीपकलिकायां यमः—

अपत्नीकश्च वर्ज्यः स्यात्सपत्नीकोऽप्यनग्निकः ।

तत्रैवाश्वलायनः—

प्रतिमाविक्रयं यो वै करोति पतितस्तु सः ।
जीवनार्थं परास्थीनि धृत्वा तीर्थं प्रयाति यः ॥
मातापित्रोर्विना सोपि पतितः परिकीर्तितः ॥

---

पाठे जडः । *व्यङ्गुलेति । व्यङ्गुलोपलक्षणम् । *तत्रैवेति ।
नारदः—

यस्याप्सु प्लवते वीर्यं ह्रादि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षण्ढकः ॥
चतुर्दशविधः शास्त्रे षण्ढो दृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥
निसर्गषण्ढो बध्रश्च पक्षषण्ढस्तथैव च ।
अभिशापाद् गुरो रोगाद्देवक्रोधात्तथैव च ॥
ईर्ष्याषण्ढश्च सेव्यश्च वातरेता मुखेभगः ।
आक्षिप्तो मोघबीजश्च शालीनोऽन्यापतिस्तथा ॥ इति ।

निसर्गषण्ढः स्वभावतो लिङ्गवृषणहीनः । बध्रः छिन्न-मुष्कः । पञ्चदशदिनानि स्त्रियमासेव्य सकृद्भोगक्षमः पक्षषण्ढः ।

---

(१) 'श्राद्धदीपिकायां' क०

तत्रैव जातूकर्ण्यः—

यत्र मातुलजोद्वाही यत्र वा वृषलीपतिः ।
श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषम् ॥
पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिम् ।
सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत् ॥

बृहन्नारदीये—

शङ्खं चक्रं मृदा यस्तु कुर्यात्तसायसेन वा ।
स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः ॥
शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥

तेन ये *तप्तमुद्रादिविधयस्ते *शूद्रविषया इति । पृथ्वीचन्द्रोदये—

शिवकेशवयोरङ्कान् शूलचक्रादिकान्द्विजः ।

---

गुर्वभिशापषण्ढादयस्त्रयः स्पष्टाः । यस्येर्ष्यया पुंस्त्वमुत्पद्यते स ईर्ष्याषण्ढः । स्त्र्युपचारविशेषेण पुंस्त्वशक्तिर्यस्य स सेव्यषण्ढः । वातोपहतरेतस्को वातरेताः । यस्य मुख एव पुंस्त्वशक्तिः न योनौ स मुखेभगः । रेतोनिरोधात्षण्ढीभूत आक्षिप्तषण्ढः । मोघबीजी गर्भाधानासमर्थबीजी । अत्र प्रगल्भतया क्षोभाद्वा नष्टपुंस्त्वः शालीनः । भार्याभिन्नास्वेव पुरुषभावो यस्य सोऽन्यापतिः इति ।

*तप्तमुद्राविधयः—

यो न धारयते चक्रं शंखं वाऽपि कदाचन ।
तस्य सन्दर्शने सूर्यं पश्येत मतिमान्नरः ॥
इत्यादयः ।

*शूद्रेति ।

शृणु राम महाबाहो लिङ्गचक्रादिधारणम् ।

न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ॥

इत्याश्वलायनोक्तेश्च । नृत्यं (१)चोदराद्यर्थं निषिद्ध-मिति श्रीधरस्वामी । *अन्येऽपि निषेधा निबन्धेषु ज्ञे-

---

शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः ॥

विप्रस्य नैतद् गृह्यत्वात्प्रायश्चित्तमुदीरितम् ।'

इति हेमाद्रौ पाद्मोक्तेः । शूद्रधर्मरताः कुण्डगोलकाः,

शूद्राणां हि सधर्माणः (२)सर्वे तद्धर्मजाः स्मृताः ॥

इति मनुना तेषां शूद्रधर्मातिदेशात् । यद्वा भ्रष्टद्विजानामाग-मदीक्षाधिकारिणामेव तत्राधिकारः । नच पौराणो धर्मो वेदमूलम् इति कथं तत्र शिष्टानां नाधिकारः ?

अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः ।

अङ्कयेद्यदि वा मोहात्पतत्येव न संशयः ॥

इति शातातपोक्तेः । पुराणेष्वपि तान्त्रिकं दृश्यते । तथाच पराशरपुराणे दशमाध्याये—

वेदमूलतया नित्यं प्रवृत्ता अपि सत्तम ।

क्वचित्कदाचित् स्मर्तारस्तन्त्रार्थं तं ब्रुवन्ति च ॥

क्वचित्तन्त्रानुरोधेन धर्मं पौराणिका अपि ।

वदन्ति तादृशो धर्मो [illegible] ॥

पुराणे धर्मशास्त्रे च योऽर्थः श्रुत्या विरुद्ध्यते ।

स तन्त्रार्थस्तु विज्ञेयः समासेन मनीषिभिः ॥ इति ।

स्कान्देऽपि—

तन्त्रावलम्बनेनैव पुराणानीह कानिचित् ।

साक्षादेव विरुद्धार्थं प्रवदन्ति क्वचित् क्वचित् ॥

अधिकारविभेदेन नैव वेदं परं प्रति ॥

अधिकारविभेदो भ्रष्ट इति यावत् । *अन्येपीति ।

---

(१) 'चोदरार्थं' क० (२) 'सर्वेऽप्यध्वंसजाः स्मृताः' ग० घ०

या इति दिक्।

अत्र विप्राणां ग्राह्यत्वोक्त्यैव तद्वर्ज्यानां निषेधे सिद्धे पुनर्वर्ज्यपरिगणनं निषिद्धवर्ज्यनिर्गुणप्राप्त्यर्थमिति विज्ञानेश्वरः। कुष्ठिकाणादेरपवादो हेमाद्रौ वसिष्ठः—

अपि चेन्मन्त्रविद्युक्तः *शारीरैः पङ्क्तिदूषणैः।

विष्णुस्मृतौ—

"गणिकापति—अगम्यागामि—पर्याहित–पर्याधातृ–अविक्रेयविक्रेतृ—क(१)लपनमन्त्रकारक—आरूढपतित–पतितप्रयोगिविलासिताळवादक–शावक–शारीरिक–अलीकगृहस्थ–विविधरागबद्ध–वृथाकाषायधारि—वृथामुण्ड—वृथाजटिल–दन्तुर–आश्रमबाह्य—वृथालिङ्गधारि—अयाज्ययाजक—अविद्धकर्णा निन्द्याः" इति। स्मृत्यन्तरे भारतादौ चैवमेव निषिद्धा ब्राह्मणा मृग्याः। कृतप्रायश्चित्ता अपि ब्रह्महादयो वर्ज्याः, अतथाभूतानामप्रसक्तेः। वर्ज्यानां च विद्यादिसत्त्वेऽपि वर्ज्यत्वम्,

श्राद्धार्हगुणयोगेऽपि नैते जातु कथञ्चन।
निमन्त्रणीयाः श्राद्धेषु सम्यक् फलमभीप्सता॥

इति ब्रह्माण्डात्। *शारीरैरिति।

अनाश्रमी तु यो विप्रो जटी मुण्डी वृथा च यः।
वृथा काषायधारी यः श्राद्धे तं दूरतस्त्यजेत्॥
चिकित्सका देवलका वृथा नियमधारिणः।
सोमविक्रायिणश्चैव राजन्नार्हन्ति केतनम्॥
होतारो वृषलानां ये वृषलाध्यापकास्तथा।
तथा वृषलशिष्याश्च श्राद्धे नार्हन्ति केतनम्॥
अनग्नयश्च ये विप्रा मृतनिर्यातकाश्च ये।
स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनम्॥

(१) 'कथनमन्त्र' घ०

अदूष्यं तं *यमः प्राह पङ्क्तिपावन एव सः ॥

कश्चिद्विप्राणां जातिमात्रेण ग्राह्यत्वमुक्तम् । चन्द्रिकायामाग्नेये—

यदि पुत्रो गयां गच्छेत्कदाचित्कालपर्ययात् ।
तानेव भोजयेद्विप्रान् (१)ब्रह्मणा ये प्रकल्पिताः ॥
ब्रह्मणा कृतसंस्थाना विप्रा ब्रह्मसमाः (२)स्मृताः ॥
अमानुषा गयाविप्रा ब्रह्मणा ये प्रकल्पिताः ।
तेषु तुष्टेषु संतुष्टाः पितृभिः सह देवताः ॥

तत्रैव—

न विचार्यं कुलं शीलं विद्या च तप एव च ।
पूजितैस्तैस्तु सन्तुष्टा देवाः सपितृगुह्यकाः ॥

गयायां निर्गुणा अपि ते एव भोज्या इति हेमाद्रौ । अक्षय्यवटश्राद्ध एव तन्नियमो नान्यत्रेति त्रिस्थलीसेतौ पितामहचरणाः । पृथ्वीचन्द्रोदयेऽपि पाद्मे—

तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन ।
अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥

स्कान्देऽपि—

ब्राह्मणान्न परीक्षेत तीर्थे क्षेत्रनिवासिनः ।

मनुः—

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥

असम्भवपरमेतदिति मेधातिथिः । हेमाद्रौ व्यासः—

गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥

---

इति कालिकापुराणादावशारीरदोषाणां दिक् । *यमः क-

---

(१) 'ब्राह्मणा' क० (२) 'स्मृताः तत्रैव' क०

काणाः कूटाश्च कुब्जाश्च दरिद्रा व्याधितास्तथा ।
सर्वे श्राद्धे नियोक्तव्या *मिश्रिता वेदपारगैः ॥
अथ विप्रनिमन्त्रणम् । चन्द्रिकायां वाराहे—
वस्त्रशौचादि कर्तव्यं श्वः कर्तास्मीति जानता ।
स्थानोपलेपनं कृत्वा *ततो विप्रान्निमन्त्रयेत् ।
दन्तकाष्ठं च विसृजेद्ब्रह्मचारी शुचिर्भवेत् ॥
तत्रैव प्रचेताः—
*दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ।
पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्वकम् ॥
बृहस्पतिः—
उपवीती ततो भूत्वा देवार्थं तु द्विजोत्तमान् ।
अपसव्येन पित्र्येऽथ स्वयं शिष्योऽथवा सुतः ॥

---

मैविपाकाभिज्ञः, योग्यत्वेन दोषाणां क्षीणप्रायतालाभात् । *मिश्रिता इति । मिश्रणं च दैविक एव,
काणादीन् भोजयेद्दैवे श्राद्धे दाने तु वर्जयेत् ।
इति सौमन्तवात् । एवञ्च अदूष्यतावाक्यमपि दैविक एव ।
*ततो विप्रानिति । निमन्त्रणं च पूर्वेद्यू रात्रौ, तदसम्भवे परेद्युः,
निरामिषं सकृद् भुक्त्वा भुक्तसर्वजने गृहे ।
निमन्त्रयीत पूर्वेद्युरुपगम्य द्विजोत्तमान् ॥
इति जातूकर्ण्योक्तेः,
पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते ।
निमन्त्रयीत त्र्यवरान् सम्यक् विप्रान् यथोदितान् ॥
इति मनूक्तेः,
पूर्वेह्नि रात्रौ विप्राग्र्यान् कृतसायन्तनाशनान् ।
गत्वा निमन्त्रयेद्देवपितृदेशसमन्वितः ॥
इति ब्रह्माण्डात् । *दक्षिणमिति । दक्षिणचरणस्पर्शो जानु-

प्रचेताः—

सवर्णं प्रेषयेदाप्तं द्विजानां तु निमन्त्रणे ।

पृथ्वीचन्द्रोदये स्कान्दे—

राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः ।
व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत् ॥

चन्द्रिकायां यमः—

*अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ।

तत्रैव पैठीनसिः—*'सप्त पञ्च द्वौ वा श्रोत्रियान्निमन्त्रयेत्' । आश्वलायनसूत्रेऽपि—'एकैकमेकैकस्य द्वौ द्वौ त्रींस्त्रीन्वा *वृद्धौ फलभूयस्त्वम्' । *द्वाविति वृद्धिश्राद्धे । 'गौतमः—नवावरान् भोजयेदयुजो वा *यथोत्साहम्' । याज्ञवल्क्यः—

द्वौ दैवे *प्राक् त्रयः पित्र्ये *उदगेकैकमेव वा ।
*मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥

---

देशे कार्यः,

दक्षिणं जानुमालभ्य त्वं मयाऽत्र निमन्त्रितः ।

इति मात्स्यात् । मयूखे चरणौ गृहीत्वा प्रसादनमुक्तम् । तदुत्तरं निमन्त्रणं कार्यमिति शिष्टाः । *अभोज्यमिति ।

अभोज्यं ब्राह्मणस्यान्नं क्षत्रियाद्यैर्निमन्त्रितम् ।
तथैव क्षत्रियादीनां वृषलेन निमन्त्रितम् ॥

इति स्मृतिः । पार्वणश्राद्धे ब्राह्मणसंख्यामाह—*सप्तेति । *वृद्धाविति । सर्वथा ब्राह्मणवृद्धौ फलाधिक्यं, महाल्पकर्मणोः साम्यायोगात् । अन्यथा महाकर्मविध्यानर्थक्यप्रसङ्गात् । ननु द्वाविति कथं ? पित्र्ये अयुजो विधानादित्याशङ्क्याह—*द्वाविति । पित्र्ये ब्राह्मणयुग्ममित्यर्थः । *यथोत्साहं यथाविभवम् । *प्राक्

दीपकलिकायां पराशरः—

संपत्तावथ पात्राणामेकैकस्य त्रयस्त्रयः ।
पित्रादेर्ब्राह्मणाः प्रोक्ताश्चत्वारो वैश्वदेविके ॥

वृद्धयाज्ञवल्क्यः—

*दशैकं पञ्च वा विप्रान् पार्वणे विनियोजयेत् ॥

*अत्र वैश्वदेवे द्वौ चतुरो वोपवेश्य पित्रादीनामेकैकस्य स्थाने एकं त्रीन् पञ्च सप्त नव वोपवेशयेदिति नि-

प्राङ्मुखौ । *उदक् उदङ्मुखाः । *मातामहानामप्येवमिति । संख्यादिङ्नियमयोरतिदेशः । द्वयोरपि श्राद्धयोर्वैश्वदेविकस्य तन्त्रावृत्त्योर्विधानादावृत्तौ प्रयोगविधिभेदः, तन्त्रे च तदैक्यम् । *दशैकम् । एकादश वैश्वदेवे द्वौ, पित्र्ये प्रत्येकं त्रयः । एतद्वाक्यद्वयार्थं दर्शयन्नेव (१)पञ्च वेत्यस्यार्थमाह *अत्रेति । यत्तु—

चत्वारश्चेद्द्विजाः श्राद्धे दैवे चैको भवेत्तदा ।
त्रयः पित्र्ये भवन्त्येव वदन्त्येवं हि सङ्कटे ॥
अथवाऽपि त्रयो वा स्युरेकः स्यात्पितृषु त्रिषु ।
द्वौ दैवे चैव तु स्यातां विप्रावेके वदन्ति हि ॥

इति, तन्निर्मूलम् । समूलत्वे चाद्यं (२)महालयादिश्राद्धपरं, तत्र पितृवर्गमातामहवर्गैकोद्दिष्टवर्गसत्त्वात् । द्वितीयं तु विष्णुब्राह्मणपरम्, श्राद्धरक्षितृगयाधरब्राह्मणभोजनस्य केषाञ्चिदनुमतत्वात् । वस्तुतस्तु दैवे द्वौ पित्र्ये त्रय इति पञ्च ब्राह्मणाः । अथवा दैवे चत्वारः पित्र्ये त्रय इति सप्त,

अयुजो भोजयेच्छ्राद्धे न समा दैविके स्मृताः ।

इति अङ्गिरोवचनात् । न चात्र दैवे द्वौ पित्र्ये पञ्चेति विभागः, त्रिषु पञ्चानामयुग्मसंख्यया विभागासम्भवात्, 'नवावराः' इति सप्तानां विधानात् । नचायं बहुव्रीहिः,

(१) 'पञ्चधेत्य' घ० ङ० (२) 'महालयतीर्थश्राद्धादिपरम्' ङ०

क्षुण्णोऽर्थः। मनुः—

*द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदः।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥

पृथ्वीचन्द्रोदये शातातपः—

द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत्।
पित्र्ये तूदङ्मुखांस्त्रींश्च बह्वृचाध्वर्युसामगान्॥

*अल्पशक्तौ हेमाद्रौ देवलः—

एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत्।
षडर्घ्यान् दापयेत्तत्र *षड्भ्यो दद्यात्तथा हविः॥

---

सामर्थ्येऽपि नवभ्योऽर्वाग् भोजयीत द्विजोत्तमान्।
नोर्ध्वं कर्तव्यमित्याहुः केचित्तद्दोषदर्शिनः॥

इति ब्रह्माण्डात्। अत एव प्रोक्तोऽपि विप्रविस्तारो मनुना वर्जित इत्याह—*द्वाविति। नानाशाखीयविप्रसत्त्वे शाखाभेदेन विभागः। *अल्पशक्ताविति। अनेकब्राह्मणभोजनपर्याप्तान्नासत्त्वे इत्यर्थः। अनेकब्राह्मणालाभस्याप्युपलक्षणम्,

अन्नाभावे द्विजाभावे तीर्थे चापि महालये।
एकस्मिन्दीयते चान्नमर्घ्यान् पिण्डान् पृथक् पृथक्॥

इति स्मृतेः। *षड्भ्यो दद्यादिति। षड्भ्योऽन्नदानप्रकारमाह बृहस्पतिः—

यद्येकं भोजयेच्छ्राद्धे स्वल्पत्वात्प्रकृतस्य तु।
स्तोकं स्तोकं समुद्धृत्य तेभ्योऽन्नं विनिवेदयेत्॥

अस्यार्थः—एकब्राह्मणतृप्तिसमर्थनानाजातीयान्नसमुदायादेकपात्रेऽनेकपात्रे वा नानाजातीयमन्नमुद्धृत्य षडन्नसमुदायान् परिविष्य एकस्मै पित्रादये एकैकसमुदायं निवेदयेत्। अथवा एकस्मा-

गोभिलः—

*यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते ॥

अत्र वैश्वदेवे विशेषमाह तत्रैव वसिष्ठः—

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
*अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ॥
देवतायतने कृत्वा ततः श्राद्धं समाचरेत् ।

---

दन्नसमुदायात्स्तोकं स्तोकमुद्धृत्य बुद्ध्यैव पृथक्कृत्य निवेदयेदिति । अङ्गप्रधानजातं च षडुद्देश्यकं,

षडप्यावाहयेत्तत्र षड्भ्यो दद्यात्तथासनम् ।

इत्युत्तरार्द्धात् । एकविप्रश्च षड्दैवत्यार्थे सर्वगुणसम्पन्नः,

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतशीलादिसम्पन्नमलक्षणविवर्जितम् ॥

इति कौर्मात्,

भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् ।

इति अग्रिमवचनाच्च । *यद्येकमिति । यदि द्वौ ब्राह्मणौ तदा पितृवर्गे मातामहवर्गे च एकैकं नियुञ्ज्यात्, दैवे तु पात्रं कल्प्यम् । 'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायेन पैतृकस्य प्राधान्याद्वैश्वदेविकस्याङ्गत्वान्नाङ्गानुरोधेन प्रधानबाधो युक्त इति विज्ञानेश्वरादयः ।

*अन्नमिति । प्रकृतस्य प्रकृतश्राद्धीयस्य सर्वस्यान्नस्यैकदेशमन्नं वैश्वदेविकब्राह्मणभोजनपर्याप्तं पात्रे परिविष्य तत्रत्यासने विश्वान् देवानावाह्य तान् पुरोवर्तिन इव ध्यायन् 'पृथिवी ते पात्रम्' इत्यादि जप्त्वा अमुकसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्तुत्वा पित्र्यमन्नं सङ्कल्पयेत् । ततो वक्ष्यमाणसावित्रीजपादिकं कृत्वा पित्र्यविप्रभोजनकाले वैश्वदेविकान्नप्रतिपत्तिमाह—*प्रास्येदिति ।

*प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ॥

*एतच्च सपिण्डीकरणवर्ज्यं ज्ञेयम्, *'न त्वेवैकं सर्वेषां काममनाद्ये' इत्याश्वलायनोक्तेः । *अस्यार्थ उक्तो नारायणवृत्तौ-'आद्यं सपिण्डीकरणं (१)तद्वर्ज्येषु श्राद्धेषु *कामं त्रयाणामेकं भोजयेत्, सपिण्डीकरणे तु नियतं त्रिभिर्भवितव्यम्' इति । अनाद्ये *पार्वणवर्जिते वा अभोजनआमहेमश्राद्धादौ वा । (२)*अन्नाभावे चेति

एतच्च भोजनाभ्यनुज्ञानन्तरं कार्यम्,

प्रास्येदग्नौ ततोऽन्नं तु दद्याद्वा ब्रह्मचारिणे ।

इति वासिष्ठे 'ततः'पदोपादानात् । चतुर्विंशति(३)मते जलमप्युक्तम्—

विप्राभावे वृथा न स्याद्दद्यादग्नौ जलेऽपि वा । इति ।

*एतच्चेति । दैवपित्र्ययोरेकैकब्राह्मणनिमन्त्रणं चेत्यर्थः । *न त्वेवैकमित्यादि । अत्र वृत्तिः—एकैकमुभयत्र वेति मनूक्तपक्षस्यायं निषेधः । तं कुर्वता मनूक्तमन्यदनुज्ञातं भवति । तच्च दैवं भोजनं, तस्य विधिः स्मृतावगन्तव्यः । आचार्येण तु पित्र्यस्यैव विधिरुच्यते अस्मद्गृह्योक्तेतिकर्तव्यतामात्रमेव कार्यं, शास्त्रान्तरं दृष्ट्वा न विस्तरः कार्यः, 'सत्क्रियम्' इति मनूक्तेः; 'बह्वल्पं वा' इति वचनाच्चेति । अत्रेतिकर्तव्यताविस्तरो निषिद्धः न तु ब्राह्मणविस्तरः, 'वृद्धौ फलभूयस्त्वम्' इत्याचार्योक्तेः । आचार्यज्ञापितत्वाच्च दैवमप्यावश्यकमिति भावः । *अस्य "काममनाद्ये" इत्यस्य । *काममिति । आपत्कल्पोऽयमिति ज्ञापनार्थम् । *पार्वणवर्जिते इति । 'अथातः पार्वणश्राद्धे काम्य आभ्युदयिके' इति सूत्रोक्तेषु पार्वणम् । *अन्नाभावे सम्पदभावे

(१) 'तद्वर्ज्येषु सर्वश्राद्धेषु' क०
(२) 'अन्नाभावे चेति पाठान्तरं तत्रैव' क० (३) 'मते च' ङ०

व्याख्यान्तरं तत्रैव ज्ञेयम् । कारिकाऽपि—

दैवे पित्र्येऽथ वैकैकं सपिण्डीकरणं विना । इति ।

अत्रैकविप्रे साग्नेर्विशेषमाह पृथ्वीचन्द्रोदये प्रचेताः—

एकस्मिन् ब्राह्मणे दैवे साग्नेरग्निर्भवेत्सदा ।
अनग्नेः कुशमुष्टिः स्याच्छ्राद्धकर्मणि सर्वतः ॥

सर्वथा विप्रालाभे तत्रैव हेमाद्रौ (१)च सत्यव्रतः-

निधाय दर्भनिचयमासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं सर्वं श्राद्धं प्रकल्पयेत् ॥

'अत्रानन्यभावात्सत्रे इव ऋत्विक्कार्ये यजमानविधौ न दक्षिणा' इति केचित् । तन्न, अदृष्टार्थाया (२)दक्षिणायाः प्राप्तेः,—

सर्वं तत्त्रिजटे तुभ्यं यच्च श्राद्धमदक्षिणम् ।

इति पाद्मात्;—

विदध्याच्छ्रौत्रमन्यश्चेद्दक्षिणार्धहरो भवेत् ।
स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिपादयेत् ॥

इति छन्दोगपरिशिष्टाच्च । एवं यतिश्राद्धेऽपि कात्यायनः-

यज्ञव(३)स्तुनि मुष्टौ च स्तम्भे दर्भवटौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च ॥

मातृश्राद्धे तु विप्रालाभे सुवासिन्योऽपि भोजनीया इत्याहापरार्के वृद्धवसिष्ठः—

मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि ।
पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः ॥ इति ।

अष्टाविति वृद्धिश्राद्धविषयम् ।

पाद्मे उत्तरखण्डे—

सकृदभ्यर्चितं लिङ्गं शालग्रामशिलां च यः ।
पीठे संस्थापयित्वा तु श्राद्धं च कुरुते नरः ॥

---

(१) 'च' नास्ति क० (२) 'दक्षिणायाः' नास्ति क० (३) 'यज्ञवास्तुनि' क०

पितरस्तस्य तिष्ठन्ति कल्पकोटिशतं दिवि ॥

चन्द्रिकायां मात्स्ये—

पठन्निमन्त्र्य नियमान् श्रावयेत्पैतृकान् बुधः ।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ॥
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥

यत्तु मनुः—

सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिर्नः श्वोभूते श्राद्धकर्मणि ॥ इति,

तत्पूर्वेद्युर्निमन्त्रणपरं न तदहः । तत्रैव देवलः—

असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् ।
अज्ञातीनसमानार्षानयुग्मानात्मशक्तितः ॥

कात्यायनः—*'अनिन्द्येनामन्त्रितो *नापक्रामेत्' ( का०

---

दुर्भिक्षे च । *अनिन्द्येन भोज्यान्नेन । *नापक्रामेत् न नाभ्युपगच्छेत्, किन्त्वभ्युपगच्छेदेव । केतनं गृह्य गृहीत्वा शक्तश्चेत् । 'अनिन्द्येनामन्त्रिते शक्तेन न प्रत्याख्यानं कर्तव्यम्'इति गौतमः । तेन निन्द्येनामन्त्रणे भोक्तुमसामर्थ्ये च प्रत्याख्येयमिति गम्यते । इदं च फललिप्सूनां परान्नभोजनाभ्यनुज्ञामात्रम्,

कामं प्रतिश्रवस्तेषामनिन्द्यामन्त्रिसात्कृते ।

इति देवलोक्तेः । तत्र परान्नभोजनेऽल्पो दोषः न तु दोषसामान्याभावः । तत्रापदि द्रुपदाजपः, आपदाधिक्ये मनस्तापः । अत एव परान्नभोजनं प्रकृत्य मनुः—

लिप्येतैवैनसा विप्रो ज्वलनार्कमयोऽपि सन् । इति ।

निमन्त्रितान् नातिक्रामेत्, तदनन्तरं कस्यचिद्दोषजननेन परस्परातिक्रमे तु न दोषः । निन्द्यानाह याज्ञवल्क्यः—

कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।

आ० सू० १-१२) 'केतनं गृह्य शक्तः'।

अथ श्राद्धकर्तृभोक्तृनियमाः। तत्र निमन्त्रितविप्रत्यागेऽपरार्के यमः—

केतनं कारयित्वा तु योऽतिपातयति द्विजम्।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते॥
आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत्।
अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते॥

प्रमा(१)दात्त्यागे तु हारीतः—

प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः।
तर्पयित्वा यथान्यायं सर्वं तत् फलमश्नुते॥

---

वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम्॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम्।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम्॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम्।
शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम्॥
नृशंसराजरजककृतघ्नवधजीविनाम्।
चैलधावसुराजीवसहोपपतिवेश्मनाम्॥
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा॥ ( या० स्मृ० आ० १६३-१६७ )

कदर्यः लक्षितः। बद्धः शृङ्खलितः। रङ्गावतारी नटः। वैणः वीणावादनोपजीवी, वीणेति तौर्यत्रिकोपलक्षणम्। दीक्षी दीक्षासंस्कारवान्। अग्नीषोमीयवपाहोमोत्तरं न दोषः, 'असंस्थितेऽग्नीषोमीये यजमानस्य गृहे नाशितव्यम्' इति श्रुतेः। क्रुद्धः दृढतरान्तरकोपः। मत्तः धनादिना गर्वितः। क्रूरः निष्ठुरः। उग्रः परदुःखकृत्। रजकः वस्त्ररागकारी। चैलधा-

---

( १ ) 'प्रमादत्यागे' क०

प्रमादाभावे तु नारायणः—

एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतः शुचिः ।
यतिचान्द्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते ॥

---

चकः वस्त्रप्रक्षालकः । एषां कदर्यादिसोमविक्रय्यन्तानां त्रैवर्णिकानामन्नं न भोक्तव्यमित्यर्थः । यमोऽपि—

चक्रोपजीवी गान्धर्वः कितवस्तस्करस्तथा ।
ध्वजी दारोपजीवी च शूद्राध्यापकयाजकौ ॥
कुलालश्चित्रकर्मा च वार्धुषी चर्मविक्रयी ॥

चक्रोपजीवी शकटोपजीवी । गान्धर्वः गायकः । ध्वजी मद्यविक्रेता । इतरे प्रसिद्धाः । एते अभोज्यान्ना इत्यर्थः । आपस्तम्बोऽपि—

द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ।
मुनेरन्नमभोज्यं स्यात्सर्वेषां लिङ्गिनां तथा ॥

मुनिरित्युपलक्षणम् । लिङ्गिनः पाशुपतादयः । अङ्गिराश्च—

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
स तु जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते ॥

यत्तु सौमन्तवं—

गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च ।
अपूपान् भक्षयेच्छूद्रात् यच्चान्यत् पयसा शृतम् ॥

यदपि विष्णुपुराणम्—

सम्प्रोक्ष्य विप्रो गृह्णीयाच्छूद्रान्नं गृहमागतम् । इति,

तदापद्विषयम्,

अदत्तान्याग्निहीनस्य नान्नमद्यादनापदि । (या० स्मृ० १–१६०)

इति याज्ञवल्क्योक्तेः ।

(य(१.)स्य नाश्नन्ति देवाश्च पितरश्च तथाऽतिथिः ।

---

(१) कंसान्तर्गतं नास्ति ग०

यमः—

*आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चाण्डालेष्वभिजायते ॥

तत्रैव देवलः—

पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यप्रतिग्रहम् ।
भुक्ताहारोऽथवा भुङ्क्ते सुकृतं तस्य नश्यति ॥

वृथापाकः स विज्ञेयः तस्य नाद्यात् कथञ्चन ॥
योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

देवलः—

परपाकनिवृत्तस्य परपाकरतस्य च ।
अपचस्य च भुक्त्वाऽन्नं द्विजश्चान्द्रायणं चरेत् ॥

एतच्चाभ्यासविषयम् ।

गृहीत्वाऽग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ॥
पञ्चयज्ञान् स्वयं कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तथा ॥
गृहस्थधर्मप्रवृत्तो यो ददाति परिवर्जितः ।
ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्तितः ॥

एवमन्येऽप्यभोज्यान्ना अन्यतो ज्ञे(१)याः ।

*आमन्त्रित इति । आमन्त्रणमङ्गीकृत्य सत्यपि सामर्थ्ये पश्चान्निवारणं चेत् कुर्यात् तदा मनुः—

केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत् ॥ इति । (म० स्मृ० ३—१९०)

---

(१) 'बोध्याः' ङ०

यदि विप्रो *विलम्बेत तदोक्तमादित्यपुराणे—

आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन।
देवतानां पितॄणां च दातुरन्नस्य चैव हि॥
चिरकारी भवेद् द्रोही पच्यते नरकाग्निना॥

पृथ्वीचन्द्रोदये यमः—

निमन्त्रितस्तु यो विप्रो ह्य*ध्वानं याति दुर्मतिः।
भवन्ति पितरस्तस्य तं मासं पांसुभोजनाः॥
आमन्त्रितस्तु यः श्राद्धे हिंसां वै कुरुते द्विजः।
पितरस्तस्य तं मासं भवन्ति रुधिराशनाः॥
आमन्त्रितस्तु यः श्राद्धे भारमुद्वहते द्विजः।
पितरस्तस्य तं मासं भवन्ति स्वेदभोजनाः॥
निमन्त्रितस्तु यो विप्रः प्रकुर्यात्कलहं यदि।
पितरस्तस्य तं मासं भवन्ति मलभोजनाः॥

शङ्खः—

निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः।
श्राद्धं दत्त्वा च भुक्त्वा च युक्तः स्यान्महतैनसा॥

मैथु(१)नम् ऋतावपि निषिद्धम्।

---

(मू(२)श्राद्धदक्षिणादिलोभेनातिक्रमे तु चान्द्रायणं कार्यम्।)
यत्तु निर्धनस्य लोभादिनाऽतिक्रमे दोषाभाववचनं—

विद्यमानधनो विद्वान् भोज्यान्नेन निमन्त्रितः।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत्॥ इति।

तस्य समूलत्वे अत्यावश्यकधनव्यये उपस्थिते निर्धनस्य केतनदक्षिणामात्रेण तदनिर्वाहे लोभादिना तदतिक्रमानुज्ञापरम्।
*विलम्बेत आहूतोऽपि श्राद्धकालातिक्रमं करोति। *अध्वानमिति।

---

(१) 'मैथुनं च' क०   (२) मनुश्चिन्हान्तर्गतं नास्ति घ०

ऋतु(१)काले नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित् ।
तत्र गच्छन्नवाप्नोति ह्यनिष्टानि फलानि तु ॥ इति
तत्र माधवीये च वृद्धमनूक्तेः;
श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वाऽपि निमन्त्रितः ।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥
भोक्ष्यन् करिष्यन् श्वः श्राद्धं पूर्वरात्रौ प्रयत्नतः ।
व्यवायं भोजनं चापि ऋतावपि विवर्जयेत् ॥ इति
तत्रैवाश्वलायनोक्तेश्च । विज्ञानेश्वरेण तु श्राद्धे ऋतौ
गच्छतोऽपि न दोष इत्युक्तं तत्त्वगतिक(२)गतित्वे ज्ञेयम् ।
बृहस्पतिः—
द्विनिशं ब्रह्मचारी स्याच्छ्राद्धकृद्ब्राह्मणैः सह ।
अन्यथा वर्तमानौ तु स्यातां निरयगामिनौ ॥
पुनर्भोजनमध्वानं भारमायासमैथुनम् ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् ॥
स्वाध्यायं कलहं चैव दिवास्वापं तथैव च ॥
यत्तु श्राद्धकारिकायां पुराणसमुच्चये—
कृत्वा तु रुधिरस्रावं न विद्वान् श्राद्धमाचरेत् ।
एकं द्वे त्रीणि वा विद्वान् दिनानि परिवर्जयेत् ॥ इति,
तन्निर्मूलम् । पृथ्वीचन्द्रोदये यमः—
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभोक्ताऽष्ट वर्जयेत् ॥ इति ।
(३)तत्र सन्ध्यानिषेधः प्रायश्चित्तात् पूर्वं ज्ञेयः । यथाऽऽहो-
शनाः—
दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुक् द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि ॥

(१) 'ऋतुकाले' क० (२) 'तत्त्वगतिकत्वे' क० (३) 'तत्र नास्ति' छ० ग०

गौडास्तु—

सायंसन्ध्या परान्नं च छेदनं च वनस्पतेः ।
अमावास्यां न कुर्वीत रात्रिभोजनमेव च ॥
द्यूतं च कलहं चैव सायंसन्ध्यां दिवाशयम् ।
श्राद्धकर्ता च भोक्ता च पुनर्भुक्तिं च वर्जयेत् ॥

इति कामधेनौ वाराहोक्तेः श्राद्धकर्तुरपि सायंसन्ध्यानिषेधमाहुः । शिष्टास्तव(१)स्य निर्मूलत्वमाहुः । होमनिषेधस्तु *स्वविषयः,

सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेन्न तु हापयेत् ॥

इति छन्दोगपरिशिष्टात् । तत्रैवादित्य(२)पुराणे—

निमन्त्रितस्तु न श्राद्धे कुर्याद्भार्यादिताडनम् ॥

चन्द्रिकायां प्रचेताः—

श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ।
श्राद्धकर्ता न कुर्वीत दन्तानां धावनं बुधः ॥

हेमाद्रौ जा(३)बालिः—

दन्तधावनताम्बूले तैलाभ्यङ्गमभोजनम् ।
रत्यौषधपरान्नं च श्राद्धकृत्सप्त वर्जयेत् ॥ इ(४)ति ।

विष्णुरहस्ये—

श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्र्या शतसम्पूतमम्बु प्राश्य विशुध्यति ॥

---

न सीमानमतिक्रामेत् श्राद्धार्थं वै निमन्त्रितः ।
पर्यटन् सीममध्ये तु न कदाचित् प्रदुष्यति ॥

इति ब्रह्माण्डात्, सीम्नः परस्तान्न गच्छेत् । *स्वविषय

---

( १ ) 'अस्य नास्ति' छ० ग०　　( २ ) 'आदिपुराणे' क०
( ३ ) 'जाबालः' क०　　( ४ ) 'इति' नास्ति क०

पुनर्भोजनमध्वानं यानमायासमैथुनम् ।
दानप्रतिग्रहौ होमं श्राद्धभुक् त्वष्ट वर्जयेत् ॥

सोमोत्पत्तौ—

वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

एतद्विहितेध्माद्व्यतिरेकेण ।

वनस्पतिगते सोमेऽनडुहो यस्तु वाहयेत् ।
नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च ॥
वनस्पतिगते सोमे मन्थनं यस्तु कारयेत् ।
गावस्तस्य प्रणश्यन्ति चिरकालमुपस्थिताः ॥

वनस्पतिगतस्वरूपमाह पृथ्वीचन्द्रोदये व्यासः—

त्रिमुहूर्तं वसेदर्के त्रिमुहूर्तं वसेज्ज(१)ले ।
त्रिमुहूर्तं वसेद्गोषु त्रिमुहूर्तं वनस्पतौ ॥

कालिकायां वृद्धमनुः—

निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं *क्षुरम् ।
प्रमत्ततां च स्वाध्यायं क्रोधाशौचे तथाऽनृतम् ॥

केचिन्निमन्त्रणात्पूर्वं शुद्ध्यर्थं पूर्वेऽह्नि क्षौरं कुर्वन्ति, तत्र मूलं मृग्यम् । मरीचिः—

षष्ठ्यां पर्वसु पक्षादौ रिक्ताभद्रातिथिष्वपि ।
पाते श्राद्धे व्रताहे च क्षौरं वर्ज्यं निशासु च ॥

यदा कर्तुरशक्त्या तत्पुत्रशिष्यादिः श्राद्धं करोति तदा कर्त्रा प्रतिनिधिना च प्रागुक्तनियमाः कार्याः,

---

इति । अन्यहोमकर्तुरभावे स्वयमेव प्रायश्चित्तानन्तरं होमः कार्यः, 'दशकृत्व'इति वचनात् । *क्षुरमिति । नखकृन्तनाद्युपलक्षणम् ।

---

(१) 'जले वसेत्' क०

न शक्नोति स्वयं कर्तुं यदा ह्यनवकाशतः ।
श्राद्धं शिष्येण पुत्रेण तदाऽन्येनापि कारयेत् ॥
नियमानाचरेत्सोऽपि नियतांश्च वसुन्धरे ।
यजमानोऽपि तान्सर्वानाचरेत्सुसमाहितः ॥

इति हेमाद्रौ वाराहोक्तेः । स्त्रियास्तु पाद्मे—

मुक्तकच्छा तु या नारी मुक्तकेशी तथैव च ।
हसते वदते चैव निराशाः पितरो गताः ॥

आश्वलायनः—

श्राद्धेऽह्नि भोजयेद्वास्तौ न बालानपि यत्नतः ।
प्राक्पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्यात्स्वविग्रहम् ॥

वास्तौ गृहे ।

अथ श्राद्धवस्तूनि । तत्रादौ *कुशाः पृथ्वीचन्द्रोदये दक्षः—

समित्पुष्पकुशादीनां द्वितीयः परिकीर्तितः ।

अष्टधा भक्ते दिने द्वितीयो भाग इत्यर्थः । तत्रैव यमः-

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।
मूलेन लोकान् जयति शक्रस्य सुमहात्मनः ॥

व्यासः—

तर्पणादीनि कर्माणि पितॄणां यानि कानिचित् ।
तानि स्युर्द्विगुणैर्दर्भैः सप्तपत्रैर्विशेषतः ॥

शालङ्कायनः—

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् ॥

---

*कुशा इति । दर्भकुशयोर्भेदमाह कौशिकः—

सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ।
अप्रसूता स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ॥
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ॥

शङ्खः—

*अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

हारीतः—

*पवित्रं ब्राह्मणस्यैव चतुर्भिर्दर्भपिञ्जुलैः ।
एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥

स्मृत्यर्थसारे—

सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं*नवम् ॥

रत्नावल्याम्—

द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः ॥

हेमाद्रौ स्कान्दे—

अनामिकाधृता दर्भा ह्येकानामिकयापि वा ।
द्वाभ्यामनामिकाभ्यां तु धार्ये दर्भपवित्रके ॥

पवित्राभावे (१)तु तत्रैव सुमन्तुः—

समूलाग्रौ विगर्भौ तु कुशौ द्वौ दक्षिणे करे ।
सव्ये चैव तथा त्रीन्वै बिभृयात्सर्वकर्मसु ॥

---

*अनन्तर्गर्भि अनन्तगर्भ एकः । कुश एव पवित्रं कौशमिति स्वार्थे तद्धितः । आज्योत्पवने च तादृशे द्वे पवित्रे ग्राह्ये, 'पवित्राभ्यामाज्यमुत्पुनाति' इति सूत्रात् । तथा च पवित्रं यत्र कुत्रचित्कर्मणि द्विदलं पवित्रद्वयात्मकं विज्ञेयमिति, न तु दलद्वयोपेतकुशद्वयात्मकम्, पदार्थैकदेशतया कुशे द्विदलानन्वयात् सापेक्षतया कौशमिति तद्धितासम्भवाच्च । धार्यं पवित्रमाह—*पवित्रमिति । 'पिञ्जुलं कुशपत्रे स्यात्' इति कोशः । *नवमिति ।

त्रिभिस्तु शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा ।
चतुर्भिश्चाभिचाराख्यं कुर्वन् कुर्यात्पवित्रकम् ॥

---

(१) 'तु'नास्ति क० छ०

बौधायनः—

हस्तयोरुभयोर्द्वौ द्वावासनेऽपि तथैव च ।

दर्भग्रहणे मन्त्रमाह शङ्खः—

विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव ॥

स्मृत्यर्थसारे—

हुंफट्कारेण मन्त्रेण सकृच्छित्वा समुद्धरेत् ।

भारद्वाजः—

प्रेतक्रियार्थं पित्र्यर्थमभिचारार्थमेव च ।
दक्षिणाभिमुखश्छिन्द्यात्प्राचीनावीतिको द्विजः ॥

कुशाभावेऽपरार्के सुमन्तुः—

कु(१)शाः काशाः शरो गुन्द्रो यवा दूर्वाऽथ बल्वजाः ।
गोकेशमुञ्जकुन्दाश्च पूर्वाभावे परः परः ॥

---

इत्यपि । अस्याचमनाङ्गत्वमाह कात्यायनः—

सपवित्रः सदर्भो वा कर्माङ्गे पितृकर्मणि ।
अशून्यं तु करं कृत्वा सर्वत्राचमनं चरेत् ॥

सर्वकर्माङ्गत्वं च शातातपः—

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
सव्यापसव्यौ कुर्वीत सपवित्रौ करौ बुधः ॥

पवित्रे च ग्रन्थिमाहात्रिः—

ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्तुलः प्रोक्तः एवं धर्मो न हीयते ॥

द्विगुणीकृतानां दर्भशिखानां पाशं प्रदक्षिणम् अर्धवेष्टनं विधाय पश्चाद्भागेन यदा प्रवेशयेत्तदा वर्तुलो ग्रन्थिः । स एव यदा प्रादक्षिण्येन समवेष्टनं विधाय पुरोभागेन प्रवेशयेत्तदा ब्रह्मग्रन्थि-

(१) 'कुशः काशः' क० छ० ।

काशादौ विशेषमाह शङ्खः—

काशहस्तस्तु नाचामेत्कदाचि*द्विधिशङ्कया ।
प्रायश्चित्तेन युज्येत दूर्वाहस्तस्तथैव च ॥

पृथ्वीचन्द्रोदये यमः—

मासिमास्युद्धृता दर्भा मासिमास्येव (१.)चोदिताः ।

षट्त्रिंशन्मते—

मासेन स्यादमावास्या दर्भो ग्राह्यो नवः स्मृतः ।

गृह्यपरिशिष्टे—

*ये च पिण्डाश्रिता दर्भा यैः कृतं पितृतर्पणम् ।
अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते ॥

रिति हेमाद्रिः । एतेन भोजने पवित्रस्याप्यावश्यकत्वं गम्यते । *विधिशङ्कयेति ।

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्त्वोच्छिष्टं तु वर्जयेत् ॥

इति विधेरनुकल्पेऽपि प्रवृत्तिशङ्कयेत्यर्थः ।

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

इत्युपयुक्तानामप्यन्यत्र विनियोज्य(२)त्वात्तदपवादमाह—*ये चेति । अग्राह्यान् कुशानाह भरद्वाजः—

शुना शूद्रवराहेण मार्जारेणैकचक्षुषा ।
खरेण कुक्कुटेनैव स्पृष्टः कर्मरिपुः कुशः ॥
कृमिना कृकलासेन पतितेनान्त्यजेन च ।
भिषजा रोगिणा स्पृष्टः कुशः कर्मस्वशोभनः ॥
देवलेन च षण्ढेन व्रात्येनाज्ञातजन्मना ।
वर्ज्यः सूतकिना स्पृष्टः कुशोऽनुष्ठेयकर्मसु ॥

---

(१) 'ते स्मृताः । मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः । षट्त्रिं' क० ।

(२) 'त्वात्तन्नाह' ङ ।

लघुहारीतः—

पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥

हेमाद्रौ—

*अन्यानि च पवित्राणि कुशदूर्वात्मकानि च ।
हेमात्मकपवित्रस्य ह्येकां नार्हन्ति वै कलाम् ॥

अथ हविः । हेमाद्रौ प्रचेताः—

कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्*यवशालयः ।
*महायवा व्रीहियवास्तथैव च मधूलिकाः ॥
*कृष्णाः श्वेताश्च*लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥

महायवा वेणुबीजम् । मधूलिका*यावनाला इति

---

रक्तश्लेष्मास्थिभिः स्पृष्टः क्रियायुक्तः पुरा धृतः ।
उच्छिष्टजनसंस्पृष्टः कुशो ज्ञेयः क्रियारिपुः ॥

हारीतश्च—

येत्वन्तर्गर्भिता दर्भा ये च च्छिन्ना नखैस्तथा ।
क्वथिताश्चाग्निना ये च तान् दर्भान्परिवर्जयेत् ॥

इत्यादि । *अन्यानि चेति दर्भपवित्रासत्त्वे । तत्सत्त्वे त्वे- तद्द्वयमेव, विकल्पितयोरिव कल्पानुकल्पितयोरेकार्थविरोधित्वात् ।

*यवशालयः । यवाः शितशूकाः । शालयः कलमाद्याः । 'यवशालिः शालिभेदः' इति(१)माधवानुमतम् । *महाय- वव्रीहियवौ यवभेदौ । 'महायवा वेणुबीजम्' इति पाठस्तु न माधवानुमतः । *कृष्णाः स्थलजाः कृष्णवर्णव्रीहयः । *लो- हाः रक्तशालयः । प्रागुक्तस्यैव विवरणमित्यन्ये । *यावनाला

---

(१) 'माधवानुक्तं' घ० ङ झ० ।

हेमाद्रिः कल्पतरुश्च । भारते—

वर्धमानतिलं श्राद्धमक्षय्यं मनुरब्रवीत् ।
सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् ॥

चन्द्रिकायां देवलः—

इष्टापूर्ते मृताहे च दर्शवृद्ध्यष्टकासु च ।
पात्रेभ्यस्तेषु कालेषु देयं नैव कुभोजनम् ॥

सा(१)यणीये—

*अगोधूमं च यच्छ्राद्धं माषमुद्गविवर्जितम् ।
तैलपक्वेन रहितं कृतमप्यकृतं भवेत् ॥

हेमाद्रावत्रिः—

अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेत् ।

तत्रैव ब्राह्मे—

यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा ।
सन्तर्पयेत् पितॄन् मुद्गैः श्यामाकैः*सर्षपद्रवैः ॥
नीवारैर्हरिश्यामाकैः प्रियङ्गुभिरथार्चयेत् ॥

---

इति । तद्विशेषा इत्यर्थः । शालिविशेषा इत्यपि स एव । धान्यविशेषा इति माधवः । मद्गुलीति प्रसिद्धो दीर्घगोधूम इति तदर्थविदः । *अगोधूममिति गोधूमादेस्त्यागकर्तव्यत्वार्थम् । तैलयावनालयोरापत्कल्पत्वमाह निगमः—

यावनालानपि तथा वर्जयन्ति विपश्चितः ।
तैलमप्यापदि प्राज्ञाः सम्प्रयच्छन्ति याज्ञिकाः ॥

तैलमपि वर्जयन्ति । आपदि तु उभयमपि सम्प्रयच्छन्तीत्यर्थः *सर्षपाः गौराः । मार्कण्डेयः—

नीवाराः पौष्कराश्चैव वन्यानां पितृतृप्तये ।
प्रियङ्गवः कोविदारा निष्पावाश्चात्र शोभनाः ॥

---

(१) 'सायनीये' क० ।

हेमाद्रौ कार्ष्णाजिनिः—

*यदिष्टं जीवतश्चासीत्तद्द्यात्तस्य यत्नतः ।
स तृप्तो दुस्तरं मार्गं ततो याति न संशयः ॥

कलिकायामाश्वलायनः—

कदल्यादिफलैः शस्तैर्मूलैरार्द्रादिकैरपि ।
गोरसैर्मधुना दध्ना श्राद्धे संतर्पयेत् पितॄन् ॥
कदल्याम्रफलादीनि श्राद्धे सम्पादयेत्सुधीः ॥

हेमाद्रौ पृथ्वीचन्द्रोदये च मार्कण्डेयः—

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितमहाः ॥
विदार्या च भरुण्डैश्च तिलैः शृङ्गाटकैस्तथा ।
क(१)ञ्चुकैश्च तथा कन्दैः कर्कन्धूबदरैरपि ॥
पालेवतैरारुकैश्चाप्यक्षोटैः पनसैस्तथा ।
काकोल्या क्षीरकाकोल्या तथा पिण्डालकैः शुभैः ॥
लाजाभिश्च सधानाभिस्त्रपुसोर्वारुचिर्भटैः ।
सर्षपाराजशाकाभ्यामिङ्गुदै राजजम्बुभिः ॥
प्रियालामलकैर्मुख्यैः फल्गुभिश्च तिलण्टकैः ।
वेत्राङ्कुरैस्तालकन्दैश्चुक्रिकाक्षीरिकावचैः ॥
लोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः ।
मुञ्जातकैः पद्मफलैर्भक्ष्य भोज्यैश्च संस्कृतैः ॥
रागखाण्डवचोष्यैश्च त्रि(२)जातकसमन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम् ॥

---

पौष्कराः पद्मबीजम् । कोविदारः काञ्चनारः । निष्पावः वल्लः । *यादिष्टमिति । अनिष्टासाधनत्वेन संवादीच्छाविषयत्वमिष्टत्वम् । अदनीयस्यान्नमिष्टं 'हविष्यं च' इति

---

(१) 'कैचुकं' क० छ० । (२) 'द्विजातक' ग० ।

एषां कोशहेमाद्र्यादिव्याख्यावैद्यकाद्यनुसारेण मध्यदेशभाषया नामान्युच्यन्ते । सतीनैः कलायैः, 'कलायस्तु सतीनकः' इत्यमरः । बटूरीति प्रसिद्धैः । विदार्या *तत्कन्देन । *भरुण्डं जलजं 'मखाणा' इति श्राद्धमञ्जर्याम् । *(१)कूष्माण्डमित्यन्ये । *शृङ्गाटकं सिंघाडा । *कञ्चु(२)कः कंचनारः । *कन्दः सूरणः, 'अर्शोघ्नः सूरणः कन्दः' इत्यमरः । कर्कन्धूः वन्यं*सूक्ष्मं बदरम् । *पालेवतं कोशातकी । *आरुकम् अरुई । अक्षोटम् अखरोटः । काकोलीक्षीरकाकोल्यौ गौडेषु प्रसिद्धे । पिण्डालकं सुथनी । ( महा(३)राष्ट्राणां मोहलकन्द इति प्रसिद्धम् )। *त्रपुसादयस्त्रयः कर्कटीभेदाः । *चिर्भटं खर्बुजम् । स-

हविष्यत्वेन विशेषणात् । *तत्कन्देन भूकूष्माण्डीकन्देन । कृष्णवर्णभूकूष्माण्डफलमिति माधवः । *भरुण्डं काश्मीरदेश इति केचित् । *कूष्माण्डमिति । कूष्माण्डनिषेधस्तु अल्पतत्परः, वर्ज्यानुवृत्तौ

स्वल्पं तु कूष्माण्डफलं वज्रकन्दश्च पिप्पली ।

इति भरद्वाजोक्तेः । बहुशः कूष्माण्डनिषेधात् स्वल्पनिषेधो दोषाधिक्यार्थ इति भरुण्डं न कूष्माण्डमित्यस्वरसः । भूकूष्माण्डमिति वा पाठः । *शृङ्गाटक इति । आमशृङ्गाटकस्तु निषिद्ध इति श्राद्धदीपः । *कञ्चुक इति । कर्चूर इत्याख्यः शाक इति माधवः । *कन्द इति । वज्रकन्दस्तु निषिद्ध इति श्राद्धदीपः । कर्कन्धूबदरयोः पुनरुक्तिवारकं—*सूक्ष्ममिति । *पालेवतं जम्बीरानुकारिफलभेद इत्यन्ये । *आरुकम् अरण्यैर्वारुकमित्यन्ये । *त्रपुसं स्थूलकर्कटीभेदः । उर्वारुः स्वादुकर्कटी । चिर्भटं तिक्तकर्कटी । अर्थान्तरमाह—*चिर्भटमिति ।

( १ ) 'भूकूष्माण्ड' क० ग० छ० । ( २ ) 'केचुकः' क० छ० ।
( ३ ) कंसान्तर्गतं नास्ति क० छ० ।

र्षपा इति दीर्घश्छान्दसः। प्रियालं चिरौंजी। फल्गु उदुम्बरम्। तिलपर्णकं *पटोलम्। तालकन्दः कन्दविशेषः। चुक्रिका तिन्तिणी बि(१)म्बा। क्षीरिका खीराणि। मोचं कदलीफलम्। लकुचं बडहरम्। मुञ्जातकं गौडदेशे प्रसिद्धम्। पद्मफलं गट्टा। रागखाण्डवः—

पिप्पलीशुण्ठियुक्तस्तु मुद्गयूषस्तु खाण्डवः।
रागखाण्डवतां याति शर्करासंयुतं तु तत्॥

इत्युक्तः पानविशेषः। त्रिजातं लवङ्गैलापत्रकाणि। मदनरत्ने कौर्मे—

*कालशाकं च वास्तूकं मूलकं कृष्णनालिका।
प्रशस्तानीति शेषः।

हेमाद्रौ पृथ्वीचन्द्रोदये च वायुपुराणे—

कालशाकं महाशाकं द्रोणशाकं तथार्द्रकम्।
बिल्वामलकमृद्वीकापनसाम्रातदाडिमम्॥
चव्यं पालिवताक्षोटं खर्जूरं च कसेरुकम्।
कोविदारश्च कन्दश्च पटोलं बृहतीफलम्॥
पिप्पली मरिचं चैव एला शुण्ठी च सैन्धवम्।
शर्करागुडकर्पूरबदरीद्रोणपत्रकम्॥

तथा—

मधुकं रामठं चैव कर्पूरं गुडमेव च।

---

राजशाकं कृष्णसर्षपः। इङ्गुदः तापसतरुफलम्। *पटोलं स्वादु। लोचं नारिकेरं "नारिकेरफलं लोचम्" इति कोशः। बीजपूरं मातुलिङ्गम्।

*कालशाकं कालिकाख्यमुत्तरदेशे। एतेन कृष्णनालिका तदन्येति सिद्धम्।

---

(१) 'बिम्बी वा' क० छ०।

श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा ॥

रामठं हिङ्गु ।

कसेरुः कोविदारश्च तालकन्दस्तथा बिसम् ।
तमालं शतकन्दश्च मध्वालुः शीतकन्दकम् ॥
कालेयं कालशाकं च सुनिषण्णं सुवर्चलम् ।
मांसं शाकं दधि क्षीरं चाम्बुवेत्राङ्कुरस्तथा ॥
कट्फलं कौङ्कणी द्राक्षा तिन्दुकं मोचमेव च ।
अलाबुं ग्रीवकं चारं कर्कन्धुर्मधुसाह्वयम् ॥
वैकङ्कतं नारिकेलं शृङ्गाटकपरूषकम् ॥
पिप्पलीमरिचे चैव पटोलं बृहतीफलम् ॥
एवमादीनि चान्यानि स्वादूनि मधुराणि च ।
नागरं चार्द्रकं देयं दीर्घमूलकमेव च ॥ (१)इति ।

तथा—

शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः ।

द्रोणशाकं *(२)'गूम' इति प्रसिद्धम् । मृद्वीका द्राक्षा । *आम्रातम् आंबाडा इति प्रसिद्धो वृक्षः तत्फलं च । *पालिवतं जम्बीरम् पालि(३)आलमिति गौडप-

*गूमेति । कुम्भेति महाराष्ट्राः । *आम्रातं कपीतक इति वृद्धाः, अम्बडी इति देशीयाः । राताम्बा इति वृक्षे, तत्फले च आम्बसोल इति महाराष्ट्राः । चव्यं चविका । 'भव्यम्' इति वा पाठः । भव्यं कर्मरङ्गं कम्रक इति तुरुष्काः । मधुकं मधुकफलम् । बि(४)सम् पद्मिनीमूलम् । सुनिषण्णं त्रितुन्नशाकम् इति वृद्धाः । *पालिवतमिति । पारावतमिति पाठेऽपि पालि-

(१) 'इति' नास्ति क.　　　　(२) 'गूमा' क.

(३) 'उपानिआलम्' क., 'पानिआलं' छ.

(४) यद्यपि 'घ' 'छ' पुस्तकेषु "बिसं पद्मिनीफलम्" इति "मधुकं मधुकफलम्" इत्यस्मात्पूर्वं वर्तते परमस्माभिरग्रे मूलप्रतीकानुरोधेन स्थापितम् ।

सिद्धं वा । खर्जूरं खजूर इति प्रसिद्धम् । कसेरुः जलजः कन्दः । कोविदारः *कञ्चनारस(१)दृशः । तालकन्दः तालमूली । बिसं भसीडम् । शतकन्दः शतावरी । (२)शितकन्दः शालूकं, सेरुकीति प्रसिद्धम् । कालेयं करालसंज्ञः शाकः, दारुहरिद्रा वेति पृथ्वीचन्द्रोदयः । सुनिषण्णं *कर्कटीसदृशं सुलटीया इति गौडप्रसिद्धम् । *सुवर्चलं शा(३)कविशेषः । *कट्फलं श्रीपर्णीवृक्षफलम् । कौङ्कणी *अम्लरसा द्राक्षा । तिन्दुकं डिण्डिसमिति कैदेवः *तिन्दुफलं वा । ग्रीवकं फलविशेषः । चारं क्षुद्रतालम् । मधुसाह्वयं मधूकपुष्पं फलं वा । *वैकङ्कतं वैञ्चीति गौडख्यातम् । परूषकं *परूसामिति प्र-

---

आलमिति गौडाः । *काञ्चनारसदृश इति । प्राक् काञ्चनार इति व्याख्यातमपि व्याख्यातम्,

कूष्माण्डालाबुवार्ताककोविदारांश्च वर्जयेत् ।

इति काञ्चनारानिषेधात् । अयं च करकापरपर्यायः । *क(४)र्कटीति । सुलटीयेति गौडाः । *सुवर्चलं सुमसुमीति गौडाः । च(५)ञ्चुः कचूरेत्यतिप्रसिद्धः । *कट्फलमिति । कायफलमिति महाराष्ट्राः । *अम्लेति । 'स्वादूनि' 'मधुराणि' इति च सम्भवाभिप्रायेणोपात्तेष्वपि योजनीयम् । *तिन्द्विति पाठद्वयेऽप्यर्थः । *वैकङ्कतं स्रुवावृक्षफलम् । *परूसमिति प्रसिद्धमिति । परशुरामक्षेत्रमध्यं दीर्घमूलकं तुण्डकेरीफलमि-

---

(१) 'सदृश' नास्ति क. छ. (२) 'शीतकन्दः' नास्ति ग. छ.

(३) 'सुवर्चल सुमसुमीति गौडप्रसिद्धं' क. छ.

(४) 'कर्कटीति' इत आरभ्य 'गौडाः' पर्यन्तं टीकाग्रन्थो मूल'क' 'छ' पुस्तकानुरोधिपाठानुवादो दृश्यते ।

(५) चञ्चुरित्यस्य मूले स्थितिर्नैव दृश्यते इति चिन्त्यमिदं प्रतीकम् । 'चञ्चुः चुचुरित्यतिप्रसिद्धः' च पुस्तके ।

सिद्धम् । नागरं शुण्ठी । पृथ्वीचन्द्रोदये ब्राह्मे—

(आम्र(१)माम्रातकं बिल्वं दाडिमं बीजपूरकम् ।
प्राचीनामलकं *क्षीरं नारिकेरं परूषकम् ) ॥
नारङ्गकं च *खर्जूरं द्राक्षा नीलकपित्थकम् ।
एतानि फलजातानि श्राद्धे देयानि यत्नतः ॥

(मा(२)त्स्ये—

अन्नं तु सदधिक्षीरं गोघृतं शर्करान्वितम् ।
मासं प्रीणाति सर्वान्वै पितॄनित्याह केशवः ॥)

याज्ञवल्क्यः—

हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।
*मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहाः ॥
खड्गामिषं *महाशल्कं मधु मुन्यन्नमेव च ।

---

ति वृद्धाः । प्रागुक्तमूलकमेतदेव । *क्षीरं राजादनफलम् । 'खिरणी' इति गुर्जराः । *खर्जूरमिति । वत्सकं वारुकं वाऽन्यत्र पठितम् । आद्यं कुटजफलं, द्वितीयं वालुकमिति महाराष्ट्राः । शङ्खः—

आम्रान् पालेवतानिक्षून् मृद्वीकाभव्यदाडिमान् ।

अन्यत्रापि—

वीणाकं लकुचं जम्बु भव्यं भूतं तथारुकम् ।

भूतं कर्णाटेषु ।

श्राद्धे मांसमधुनोरावश्यकत्वमाभासितुं मांसं कीर्तयति—*मात्स्येति । *महाशल्कः मत्स्यभेदः । पृष्ठभागः शुक्त्याकारोऽवय-

---

(१) कंसान्तर्गतं नास्ति क. छ.
(२) कंसान्तर्गतं नास्ति क. छ.

*लोहामिषं *कालशाकं मांसं वार्ध्रीणसस्य च ॥'

निगमः—

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥

वार्ध्रीणसो जरच्छाग इति मेधातिथिः । कात्यायनः—

'छागो(१)स्रमेषानालभ्य शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृतान्वाहृत्य पचेत्' । कौर्मे—

क्रीत्वा लब्ध्वा स्वयं वाऽथ मृतानाहृत्य वा द्विजः ।
दद्याच्छ्राद्धे प्रयत्नेन तदस्याक्षय्यमुच्यते ॥

श्राद्धे दत्तस्य मांसस्याभक्षणे दोषमाह मनुः—

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति संभवानेकविंशतिम् ॥

अत्र बहुषु वचनेषु श्राद्धे मांसमधुनोः प्राशस्त्योक्तेः,

विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत् ।

इति हेमाद्रौ देवलोक्तेः,

यच्छ्राद्धं मधुना हीनं तद्रसैः सकलैरपि ।
मिष्टान्नैरपि संयुक्तं पितॄणां नैव तृप्तये ॥
अणुमात्रमपि श्राद्धे यदि न स्याच्च माक्षिकम् ।
नामापि कीर्तनीयं स्यात् पितॄणां प्रीतये ततः ॥

इति हेमाद्रौ ब्राह्मोक्तेश्च मांसमधुनोः श्राद्धे नियतत्वं गम्यते । गौडनिबन्धे मात्स्य(२)सूक्ते—

मध्वभावे गुडो देयः क्षीरस्य च तथा दधि ।

---

वो हि शल्कः । शल्कक इत्यन्ये । *लोहः लोहितवर्णच्छागः । कृष्णवर्ण इत्येके । लोहपृष्ठनामा शकुनिरित्यन्ये । *कालशाकं कालिका ।

---

(१) उस्रो वृषभः । अत्र छागसन्नियोगेनोस्रग्रहणं कल्पान्तरविषयं ज्ञेयम् । (२) 'मात्स्यसुमन्तू' ग०

न लभ्यते घृतं यत्र कुर्यात् घृतवतीजपम् ॥

श्राद्धकालिकायां नागरखण्डे—

कथंचिद्यदि विप्रेभ्यो न दत्तं भोजने मधु ।
पिण्डास्तु नैव दातव्याः कदाचिन्मधुना विना ॥

*बृहत्पराशरस्तु मांसं निषेधति—

यस्तु प्राणिवधं कृत्वा मांसैस्तर्पयते पितॄन् ।
स विद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे यथा किञ्चिद्बाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥

स एव—

*सर्वथान्नं यदा न स्यात्तदैवामिषमाश्रयेत् ।
*ब्राह्मणश्च स्वयं नाद्यात्तच्च श्वादिहतं यदि ॥

---

सिद्धान्तमाह—*बृहत्पराशरस्त्विति । सर्ववर्णान् प्रति श्राद्धीयमांसत्वेन पुरुषार्थस्य क्रत्वर्थस्य च मांसस्यायं निषेधः "कलौ पाराशरा धर्माः" इत्यत्र पराशरशब्देन बृहत्पराशरग्रहणस्यापि समस्तधार्मिकसंमतत्वादिति भावः । *सर्वथान्नमिति । इदमामिषविधेर्विषयप्रदर्शनमात्रम् । 'आमिषं नाश्रयेत्' इत्यत्र तात्पर्यम् । *ब्राह्मणश्चेति । एतत्सर्वादननिषेधोपलक्षकं सत् कलौ नियोगवचनं न प्रवर्तते इत्येवमर्थम् । वस्तुतस्तु मा(१)नवं यथान्यायशब्दसमभिव्याहारात् नियुक्तपदमन्यायनियोगेऽभक्षणे दोषाभावसूचकं 'यथान्यायं नात्ति' इत्यन्वयेऽव्ययीभाववैयर्थ्यात् काकाक्षिन्यायेनोभयत्राप्यन्वयसम्भवाच्च । अत एव ।

मन्वर्थविपरीता तु स्मृतिः साऽपि विनश्यति ।

इति व्यवस्थावचनस्यापि न प्रवृत्तिः । तदेतत् सकलं मनसिकृ-

---

१) "नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।" इत्यादिमानववचनमर्थः ।

*भागवतेऽपि—

न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ।
मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया ॥

तथेति शेषः ।

अत्र केचित्—

मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधु प्रधानं शूद्रस्य सर्वेषां वाऽविरोधि यत् ॥

इति हेमाद्रौ पुलस्त्योक्त्या *व्यवस्था*माहुः ।

---

त्य कलिक्षारसागरसमुत्तरणतरणिं श्रीभागवतं प्रमाणयति— *भागवतेऽपि न दद्यादिति । *व्यवस्थामिति । क्षत्रियवैश्ययोरेव मांसमिति वचनव्यक्त्या सर्वेषां मांसदानविधीनां क्षत्रियवैश्यपरत्वावगमान्न ब्राह्मणस्य श्राद्धे मांसदानसम्भवः । न च मांसमेव क्षत्रियवैश्ययोरिति कुतो नार्थः ? सर्ववर्णानामप्रतिषिद्धद्रव्यविधानानुपपत्तेः, तुल्यन्यायेन 'मुन्यन्नमेव ब्राह्मणस्य' इति वचनव्यक्त्या द्रव्यान्तरविधीनामानर्थक्यापाताच्च । न च प्रधानपदानुषङ्गान्मांसमेव क्षत्रियवैश्ययोः प्रधानमित्यर्थः, "याते अग्नेरजाशया हराशया" "इष एकपद्यूर्जे द्विपदी" इत्यादावनुषङ्गं विना साकाङ्क्षत्वस्य, एवं "चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनातु" इत्यत्र तेनैव पदेन अग्रे "वसोः सूर्यस्य रश्मिभिः" इत्यस्यान्वयस्य चानुषङ्गे प्रमाणत्वात्; प्रकृते च तदभावात् । *आहुरिति अस्वरसः । एवमपि काम्यमांसदानवारणं न स्यात् , "सप्तदश वैश्यस्य सामिधेन्यः" इत्यस्य वैश्यस्य सप्तदशैव सामिधेन्य इति वचनार्थमुपेत्य तस्य नित्यपरत्वसम्भवाद् वैश्यं प्रति काम्यैकविंशतिसामिधेन्यनुवचनस्य सिद्धान्तितत्वात् । अत एव विज्ञानेश्वरेण मुन्यन्नं नीवारादि यच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य प्रधानं समग्रफलदम् । एवमग्रेऽपि एतत्त्रयव्यतिरिक्तं यदविरोधि

पृथ्वीचन्द्रोदयस्तु—

*अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति निगमोक्तेः,

वराऽतिथिपितृभ्यश्च पशूपाकरणक्रिया ।

इति कलिवर्ज्येषु हेमाद्रावादित्यपुराणात्;

मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥

इत्युक्त्वा—

इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ।

---

अप्रतिषिद्धं सद् विहितं, तत् सर्वेषां प्रधानमित्यव्यवस्थयैव व्याख्यातमिति ।

*अक्षतेति । सर्ववर्णानां कलौ श्राद्धे मांसं क्षौद्रं च क्रत्वर्थं पुरुषार्थं च निषिद्धम् । न च "श्राद्धे मांसम्" इति श्राद्धार्थस्यैव निषेधः, न फलार्थस्येति वाच्यम् ; एतद्वाक्यस्य सर्ववर्णान् प्रति प्राप्तस्तत्र ब्राह्मणस्य नित्यमांसाभावेन काम्यमांसनिषेधपरत्वं, क्षत्रियवैश्ययोस्तु श्राद्धार्थमांससामान्यनिषेधपरत्वमिति वैरूप्यापत्तेः । अतः सर्ववर्णान् प्रति श्राद्धसम्बन्धिमांसत्वमधुत्वाभ्यां निषेधः "दीक्षितो न जुहोति" इत्यादिना दीक्षितं प्रति नित्यानामग्निहोत्रहोमादीनां काम्यानां चतुर्होतृहोमादीनां निषेधवत् । यत्तु—

कथञ्चिद् यदि विप्रेभ्यो न दत्तं भोजने मधु ।
पिण्डास्तु नैव दातव्याः कदाचिन्मधुना विना ॥

इति का(१)लभेदाप्रत्ययात् कलिनिषेधो भोजनमात्रपर इति पिण्डे कलावपि मधु देयम् ,

सर्वकालं तिला ग्राह्याः पितृकृत्ये विशेषतः ।

---

(१) 'काले दाप्रत्ययात्' च०

इति बृहन्नारदीयेऽभि(१)धानाच्च मांसविधिः कलिव्यतिरिक्तविषयः । *कलौ मांसनिषेधानां च देशाचाराद्व्यवस्था । तथाच बृहन्नारदीये श्राद्धं प्रकृत्य—

यथाचारं प्रदेयं तु मधु मांसादिकं तथा ।
देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्नरैः ॥
अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृतः ॥ इति ।
यस्मिन्देशे पुरे ग्रामे त्रै(२)विद्यैर्नगरेऽपि वा ।
यो यत्र विहितो धर्मस्तं धर्मं न विचारयेत् ॥

इति भृगूक्तेश्चेत्याह । तन्न, *हो(३)लाकाधिकरणन्यायेन देशविशेषव्यवस्थापकपदकल्पनायोगात् । निरूपितं चैतत् पितामहचरणैर्मांसमीमांसायामिति दिक् ।

मनुः—

*संवत्सरं तु *गव्येन पयसा पायसेन च ।

भोज्यपात्रे तिलान् दृष्ट्वा निराशाः पितरो गताः ॥

इतिवदिति; तदशुद्धम्, 'कथञ्चित्' इति विस्मरणादेरेव लाभात्तद्वचनस्यैकमूलकल्पनालाघवेन कलिभिन्नपरत्वात् । मतान्तरमाह—*कलाविति । *होलेति । होला हि क्वचिद्देशे क्रियते क्वचित्तु नेति देशविशेषव्यवस्थापकपदकल्पनयाऽनाचार इति सिद्धान्तः । मांसे देशविशेषव्यवस्थाऽपि युगान्तर एव, कलिनिषेधस्य जागरूकत्वात्

समयश्चापि साधूनां प्रमाणं वेदवद् भवेत् ।

इति वचनादिति दिगर्थः । *संवत्सरं तिष्ठति । *गव्येन मांसेन, प्रकरणात् । अयम्भावः—

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥

---

(१) 'विधानात्' क. (२) 'त्रैविद्ये' क. छ; (३) 'होलाधिक' क.

वा(१)र्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
*त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वा(१)र्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥

द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु ।
( हरिणो गौरमृगः । )
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च वै ॥
( शाकुनः भक्ष्यः पक्षी । )
षण्मासान् छागमांसेन पार्षतेन च सप्त वै ।
( पृषतः चित्रमृगः । )
अष्टावैणेयमांसेन रौरवेण नवैव तु ॥
( रुरुः कृष्णमृगः । )
दश मासास्तु तृप्यन्ति वराहमाहिषामिषैः ।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥

इत्यभिधाय "संवत्सरं तु गव्येन" इति श्लोकानन्तरं—

कालशाकं महाशल्कं खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥

इति काम्यानां मांसानां विधानेऽपि न तद्दानं युक्तम्, काम्यगव्यमांसस्यापि दानप्रसङ्गात् । अतस्तेषां कलिभिन्न एव विधेयत्वमुपेयम् । तथाच कलौ मांसस्य प्राप्तिरेव नास्ति । (२)बृहन्नारदीयवाक्यं तु विगीतमेवेति । *त्रिपिबं त्विति । त्रिभिः पिबतीति त्रिपिबः ।

पिबतो यस्य कर्णौ द्वौ जिह्वा चेति त्रयं स्पृशेत् ।
त्रिपिबं त्विन्द्रियक्षीणं यूथस्याग्रसरं तथा ॥
रक्तवर्णं तु राजेन्द्र छागं वार्ध्रीणसं विदुः । इति माधवः ।

---

(१) 'वार्ध्रीणस' क 'व्यार्ध्रीणस' छ.
(२) "यथाचारं प्रदेयं तु मधु मांसादिकं तथा" इत्यादीत्यर्थः ।

क्षीरादौ विशेषमाह हेमाद्रौ सुमन्तुः—

*पयो दधि घृतं चैव गवां श्राद्धेषु पावनम् ।
माहिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित् ॥

याज्ञवल्क्यः—

*सन्धिन्य*निर्दशा*ऽवत्सागोपयः परिवर्जयेत् ।
औष्ट्रमैकशफं स्त्रैण*मारण्यकमथाविकम् ॥

हेमाद्रौ हारीतः-'नवसूतायाः सप्तरात्रादित्येके, द-

---

पक्षिविशेषो वा,

कृष्णग्रीवो रक्तशिराः श्येनपक्षी विहङ्गमः ।
स वै वार्ध्रीणसः प्रोक्त इत्येषा वैदिकी श्रुतिः ॥

इति निगमवचनात् । *पय इति । माधवीये मात्स्ये—

अन्नं तु सदधिक्षीरं गोघृतं शर्करान्वितम् ।
मासं प्रीणाति सर्वान् वै पितॄनित्याह केशवः ॥

*सन्धिनीति । वृषेण या सन्धीयते सा सन्धिनी । गर्भिणीत्यर्थः । मृतवत्सत्वाद्वत्सान्तरेण सन्धीयमाना सन्धिनीति विज्ञानेश्वरः । एककालदोहना च । *अनिर्दशा अनिर्गतदशरात्रा । *अवत्सा वत्सरहिता । अन्यवत्सोपलक्षणमेतत्, "क्षीरमपेयमन्यवत्सायाः" इति बौधायनोक्तेः । *आरण्यकपयोनिषेध आरण्यकमहिषीव्यतिरिक्तविषयः,

अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥
आरण्यानां च सर्वेषां मृगाणां महिषीं विना ।

इति मनूक्तेः । गौतमः-"स्यन्दिनीयमसूसन्धिनीनां क्षीरं न पेयम्" इति । स्यन्दिनी स्रवत एव स्रवत्पयःस्तनी । यमसूः

शरात्रादित्यपरे, (१)मासेनो*पेयुषं भवतीति धर्मविदः।
*एतद्रजोभावपरम्। देवलः—

अजाऽऽविमहिषीणां तु पयः श्राद्धेषु वर्जयेत्।
विकारान् पयसश्चैव माहिषं तु घृतं हितम्॥

तत्रैव ब्राह्मे—

माहिषं चामरं मार्गमाविकैकशफोद्भवम्।
स्त्रैणमौष्ट्रं (२)याचितं च दधि क्षीरं*त्यजे*द् घृतम्॥
सगुडं मरिचाक्तं तु तथा पर्युषितं दधि।
*दीर्णं तक्रमपेतं च नष्टास्वादं च फेनवत्॥

माहिषापवादोऽपरार्के ब्राह्मे—

*देयं तक्रं तु सद्यस्कं नवनीतादनुद्धृतम्।

---

यमलप्रसूः। *उपेयुषमिति। नञपाठे 'सप्तरात्रात्' इत्यादेः स-सप्तरात्रं व्याप्येत्यर्थः। *एतत् अपेयत्वम्, अपेयं प्रकृत्य—

घृतात्फेनं घृतान्मण्डं पीयूषमथ चार्द्रगोः।

इति स्मरणात्। अस्यार्थः—घृतादुद्धृत्य तत्फेनमात्रं न पेयम्। घृतादुद्धृत्य मण्डं तदग्रं न पेयम्। आर्द्रायाः प्रसवप्रभृत्यनिवृत्तरज-जस्काया गोः पयो न पेयम्। एतदेव पीयूषम् "पीयूषोऽभिनवं पयः" इति कोशात्। मनुनाऽपि—

शेलुं गव्यं च पीयूषं प्रयत्नेन विवर्जयेत्।

इत्युक्तम्। *त्यजेदिति। श्राद्धे विशेषतो महिष्या अपि निषेधादारण्यमाहिषीपयः श्राद्धादन्यत्र बोध्यम्। याचितं याञ्च-या लब्धम्। *घृतमिति। माहिषे तु घृते प्रतिप्रसवो दर्शितः। *दीर्णं स्फुटितम्। दीर्घकालस्थितत्या नष्टस्वादु फेनवच्च तक्रं न पेयमित्यर्थः। *देयमिति उद्धृतनवनीततक्रनिषेधार्थम्।

---

(१) अत्रापि पूर्ववदेव मासंव्याप्य नवसूतायाः क्षीरमपेयमित्यर्थः। एकमासोत्तरं ग्रहणयोग्यं भवतीतितु फलितोऽर्थः। (२) 'याचितम्' क. ग.

*आरण्यमाहिषीक्षीरं शर्करास्रुतिसंयुतम् ॥
मध्वक्तं तु हितं चैव दद्यात्तदमृतं यतः ॥

*स्रुतिः क्षीरशरः । श्राद्धकौमुद्यां चैवम् । यद्यपि याज्ञवल्क्येन—

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥

इति पर्युषितं दध्यादि भोज्यमुक्तम्, तथापि *गुडमरीचाक्तस्य पर्युषितदोषोत्रोच्यत इति हेमाद्रिः । तत्रैव ब्राह्मे—

कालशाकं तन्दुलीयं *वास्तुकं मूलकं तथा ।
शाकमारण्यकं चैव दद्याच्छ्राद्धेषु नित्यशः ॥

तन्दुलीयं सूक्ष्मपत्रमिति हेमाद्रिः । महाराष्ट्राणां माठ इति प्रसिद्धम् । आरण्यकं फांजीचू (१)कादि । तत्रैव—

दाडिमं मागधी चैव नागरार्द्रकतिन्तिणी ।
आम्रातकं जीरकं च कु(२)म्बरं चैव योजयेत् ॥

मागधी पिप्पली । (ना(३)गरं शुण्ठी)। कु(२)म्बरं

---

दीर्णादिनिषेधस्तु दोषाधिक्यार्थः । *आरण्येति । द्रव्यसंपद्विशेषस्य श्राद्धबीजत्वान्निषेधो ग्राम्यविषय इति भावः । स्रुतिं व्याकरोति—*स्रुतिः क्षीरशर इति । *गुडेति । दध्न इति शेषः । *वास्तुकमिति ।

श्राद्धे न देया [illegible] निष्पावकोद्रवाः ।
मसूरक्षारवास्तोककुलित्थशणशिग्रवः ॥

इति तु माधवः ।

---

(१) 'फांजीच्चूचादि' ग. (२) 'कुवरम्' ग.
(३) कंसान्तर्गतं नास्ति क. छ.

कुस्तुम्बरं धानिया इति प्रसिद्धम्। वायवीये—

अगस्त्यस्य शिखास्ताम्राः का(१)षायाः सर्व एव च।

शिखा नवपल्लवाः। प्रभासखण्डे—

आरामस्य तु सीमन्ताः कलायाः सर्व एव च।

सीमन्ताः नवपल्लवाः। कौर्मे—

तमालं शतकन्दं च मध्वालुः शीतकन्दली।

मध्वालुः मोहलकन्दः। शीतकन्दली रताळू इति प्रसिद्धम्।

अथ वर्ज्यम्। मार्कण्डेयपुराणे—

यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितम्।

अन्यायकन्याशुल्कार्थं द्रव्यं चात्र विगर्हितम्॥

पित्रर्थं मे प्रयच्छस्वेत्युक्त्वा यच्चाप्युपाहृतम्॥

चन्द्रोदये शङ्खः—

*भूस्तृणं सुरसा *शिग्रु *पालङ्की मृचुकं तथा।

कूष्माण्डालाबु*वार्ताककोविदारांश्च वर्जयेत्॥

*पिप्प(२)ली मरिचं चैव तथा वै*पिण्डमूलकम्।

कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत्॥

---

*भूस्तृणं। भूतिकाख्यः शाकः। *शिग्रुः सौभाञ्जनो रक्तपुष्पो न श्वेतपुष्पः। *पालङ्की मुकुन्दाख्यो गन्धद्रव्यभेदः। *वार्ताकं वनभण्टा इति ख्यातम्। क्षुद्रवार्ताकीफलमित्यन्ये। *पि(३)प्पलीति।

कुलित्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः।

कटुकानि च सर्वाणि विरसानि तथैव च॥

इति मरीचिना सामान्यतोऽपि कटुकत्वेन पिप्पल्यादीनि

---

(१) 'शेषायाः' क. छ. (२) 'पिप्पलीम्' ग.

(३) यद्यपीतः प्रभृति प्रतीकत्रयं सर्वेषु पुस्तकेषु विपर्यस्ततया दृश्यते तथाप्यस्माभिर्मूलक्रमानुरोधेन स्थापितम्।

राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान् ।
*लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥

भूस्तृणं काश्मीरदेशे प्रसिद्धम् । सुरसा निर्गुण्डीति माधवः । तुलसीति पृथ्वीचन्द्रोदयः । *साच भक्ष्यत्वेन निषिद्धा न पुष्पत्वेनेति गौडाः । पालङ्की पालक इति प्रसिद्धा । मृचुकं जलजः शाकः । 'ससुकम्' इति पाठे खदिरशाक इति हेमाद्रिः । मरीचान्या-*र्द्राणीति हेमाद्रिः । कृतलवणं सांभरभिन्नम्,

*सैन्धवं लवणं चैव तथा मानससंभवम् । 'यच्च सामुद्रिकं भवेत्' इति शूलपाणौ पाठः ।

पवित्रे परमे ह्येते *प्रत्यक्षे अपि नित्यशः ।

इति वायवीयोक्तेः । मानसं साम्भरम् । यत्तु भविष्यम्—

तर्जन्या दन्तकाष्ठं च प्रत्यक्षं लवणं तथा । इति ।

तत्र ( प्रत्यक्ष(१)लवणं ) क्षारलवणं खारीति प्रसिद्धं निषिद्धम्,

भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत् ।

इति ब्राह्मोक्तेरिति शूलपाणिः । क्षीरलवणमिति पाठात् क्षीरमिश्रं लवणं निषिद्धमिति वाचस्पतिः । रा

---

वर्जितानि । *पिण्डमूलकं पिण्डाकारं मूलकम् । *लोहितानिति । लाक्षादीनित्यर्थः । लोहितग्रहणं निर्यासत्वेऽपि पाटलश्वेतहिङ्गुकर्पूरादेरनिषेधार्थम् । *सा चेति ।

तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।
प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥

इति पुराणात् । *आर्द्राणीति । पिप्पल्यप्याद्रैंव । *सैन्धवमिति । सामुद्रमपि ग्राह्यं हविष्येषु सहचारात् । *प्रत्यक्ष इति

---

(१) कंसान्तर्गतं नास्ति ग. छ.

जमाषाः *(१)रतरा इति प्रसिद्धाः। कोरदूषकाः *वन-कोद्रवाः। चन्द्रिकायां शङ्खः—

*पिण्डालकं च तुण्डीरं करमर्दं च *नालि(२)काम्।
कूष्माण्डं बहुबीजानि श्राद्धे दत्वा व्रजत्यधः॥

पिण्डालकं महाराष्ट्रेषु पे(३)ण्डरमिति प्रसिद्धम्। तुण्डीरं बिम्बीफलमिति कैदेवः। करमर्दं करवन्दामिति प्रसिद्धम्। तत्रैव—

बिडालोच्छिष्टमाघ्रातं श्राद्धे यत्नेन वर्जयेत्।
कूष्माण्डं माहिषीक्षीरमा*ढ(४)क्यो *राजसर्षपाः।
चणका राजमाषाश्च घ्नन्ति श्राद्धं न संशयः॥

(५)वृद्धपराशरः—

करीरफलपुष्पाणि विडङ्गमरिचानि च।
जम्भारिका सजम्बीरा सुपक्वं *बीजपूरकम्॥

---

"न प्रत्यक्षं लवणं दद्यात्" इति वैष्णवापवादार्थम्। *रतरा इति। 'चवळ्या' इति माहाराष्ट्राः। *व(६)नेति कोद्रवाद्भेदार्थम्। पिण्डालकस्य विधानादाह--*पिण्डालकमिति। *नालिका अब्जदण्डः। एलापल्लवभेद इत्यन्ये। *आढकी तुवरी। *राजसर्षपो राजिका,

आसुरी राजिका चैव कथ्यते राजसर्षपः।

इति हलायुधात्। (७)*बीजपूरानिति। बीजपूरनिषेधः प्रत्य-

---

(१)'पोवटे' क. 'चवळी' ग. (२)'नालिकम्' ग. (३)'पेण्ढरे' क. 'पेठर' छ.
(४) 'तुरी' इतिमहाराष्ट्रभाषायाम् (५) 'बृहत्' क० छ०।

(६) इदमपि प्रतीकत्रयं विपर्यस्तत्वेन सर्वपुस्तकेषु दृश्यमानत्वेऽपि मूलानुरोधिक्रमशो निर्दिष्टमस्माभिः।

(७) इदं "सौवीरतिक्तैर्लवणादिभिस्तु पाकस्य सिद्धिर्महतीह येस्तु। तद्बीजपूरान् मरिचादियोगात् सिद्धं प्रदेयं न तु दुष्यतीह॥ इति पृथ्वीचन्द्रोदये वृद्धपराशरेणान्यद्रव्यमिश्राणां बीजपूराणामदुष्टत्वात्फलितमिति बोध्यम। 'बीजपूरकम्' इति प्रतीकं शोभनं भवेत् तथैव मूलपाठादित्यवधेयम्।

जम्बलाबूनि पिप्पल्यः पटोलं पिण्डमूलकम् ।
*मसूराञ्जनपुष्पं च श्राद्धे दत्वा पतत्यधः ॥

जम्बू (१)सूक्ष्मम् । माधवीये चतुर्विंशतिमते—

यावनालान् कुलित्थांश्च वर्जयन्ति विपश्चितः ।

यावनालाः जोंधळाः । अत्र यानि चणकादीनि विहितनिषिद्धानि तेषां विकल्पः । अन्यथा—

श्यामाकैश्चणकैः शाकैर्नीवारैश्च प्रियङ्गुभिः ।
गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन् ॥

इति,

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि ।

इति हेमाद्रौ कौर्मविष्णुधर्मादिविरोधः स्यात् । पिप्पलीमरीचादेस्तु प्रत्यक्षस्य निषेधो नत्वन्यद्रव्यमिश्रस्य,
सौवीरतिक्तैर्लवणादिभिस्तु पाकस्य सिद्धिर्महर्ताह यैस्तु ।
तद्बीजपूरान् मरिचादियोगात्सिद्धं प्रदेयं न तु दुष्यतीह ॥

इति पृथ्वीचन्द्रोदये वृद्धपराशरोक्तेः । तत्रैव—

दातुश्च यस्मिन्मनसोऽभिलाषः श्रद्धा भवेद्यत्र च दीयमाने ।
श्राद्धेषु देयं विधिवत्तदेव तद्दत्तमक्षय्यमिति ब्रुवन्ति ॥

एतन्निषिद्धेतरविषयम् । चन्द्रिकायाम्—

कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि ।
न वर्जयेत् तिलांश्चैव मुद्गमाषांस्तथैव च ॥

---

क्षपरः । *मसूरेति । वायुपुराणे—

अकृताग्रयणं धान्यं जातं वै पारिपाटलान् ।
राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत् ॥

पारिपाटलाः स्थूला राजमाषाः कृष्णा इति,

कोद्रवान् राजमाषांश्च कुलत्थान् वरकांस्तथा ।
[illegible] विशेषेण पञ्चैतांस्तु विवर्जयेत् ॥

---

(१) 'सूक्ष्मा' ग०

यवागूः पायसं चैव यच्चा*न्य*त्स्नेहसंयुतम् ।
सर्वं *पर्युषितं भोज्यं शु(१)क्तं चेत्परिवर्जयेत् ॥

इति माधवीये यमोक्तवटकादेरपि पर्युषितस्य निषेधार्थमिति चन्द्रिकादयः । वर्ज्येषु विश्वामित्रः—

कपित्थं कु(२)रुकं चैव नारिकेलं च पैनिकम् ।
जम्बूफलादि पक्वं च पिण्याकं तन्दुलीयकम् ॥

हेमाद्रौ षट्त्रिंशन्मते—

वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथैव च ।

मर्कटकाः लाका इति प्रसिद्धाः । पैठीनसिः—

---

*अन्यत् ओदनादि । *स्नेहसंयुतं घृतेन दध्ना वा विघारितम् । *पर्युषितम् अग्निपक्वं सद् रात्र्यन्तरितम् । शुक्तस्वरूपं बृहस्पतिनोक्तम्—

अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः ।

अस्यार्थो माधवेनोक्तः—अनम्लमीषदम्लं वा यद् वस्तु कालान्तरेण वा द्रव्यान्तरसंसर्गेण वाऽत्यम्लं भवति तत् शुक्तं, न तु स्वभावतोऽत्यम्लमिति । शुक्तनिषेधो दध्यादिभिन्नविषयः,

दधि भक्ष्यं च शुक्तेषु सर्वं च दाधिसंभवम् ।
ऋजीषपक्वं भक्ष्यं स्यात् सर्पिर्युक्तमिति स्थितिः ॥

इति शङ्खोक्तेः । अनग्निक ऊष्मा ऋजीषं, तेन पक्वम् । यत्तु माधवेन यदि पर्युषितं प्रक्षालितं भोज्यम् ।

शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन ।
प्रक्षालितानि निर्दोषाण्यापद्धर्मो यथा भवेत् ॥
मसूरमाषसंयुक्तं तथा पर्युषितं च यत् ।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम् ॥

---

(१) 'भुक्तम' ग० शुष्कमिति युक्तं भाति । (२) 'कुसुमम' ग० ।

*वृन्ताकं ना(१)लिकापोतकुसुम्भाश्मन्तकानि च ।
शाकानामभक्ष्याः । इति ।
पोतं पोई इति प्रसिद्धम् । (कुसुम्भं कु(२)रडु इति माहाराष्ट्रे प्रसिद्धम्) । मार्कण्डेयः—
वर्ज्याश्चाभिषवा नित्यं शतपुष्पा*गवेधुकाः ।
जम्बीरकफलं वर्ज्यं कोवि(३)दाराश्च नित्यशः ॥
अभिषवः शु(४)क्तं इति इति चन्द्रिका । सन्धानकमिति पृथ्वीचन्द्रः । शतपुष्पा ओंवा इति प्रसिद्धम् । शाट्यायनः—
मारिषं नालिका चैव रक्ता या च कलम्बिका ।
असुरान्नमिदं सर्वं पितॄणां नोपतिष्ठते ॥
मारिषं मध्यदेशे मरसा इति, महाराष्ट्रेषु राजगिरा इति च प्रसिद्धम् । कलम्बिका वेणवाकृतिपत्रम् । तत्रैव—
गान्धारिका पटोलानि श्राद्धकर्मणि वर्जयेत् ।
गान्धारिका तन्दुलीयमिति चन्द्रिका । 'जवासाख्या दुरालभा' इति कैदेवः । भारते—
*हिङ्गु द्रव्येषु शाकेषु अ(५)लाबुं लशुनं तथा ।
इति यमोक्तेरित्युक्तं, तदपि श्राद्धे वर्ज्यमित्यर्थः। *वृन्ताकेति। नित्यभोजनेऽप्ययं निषेधः। *गवेधुकाः अरण्यगोधूमाः । तन्दुलेषु श्वेतवर्णाः शङ्खाकारा धान्यविशेषा इति ग्रन्थान्तरे। *हिङ्ग्विति।
अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।
इति पूर्वार्धम् । पुलका तुच्छधान्यम् । द्रव्येषु हिङ्गु अश्राद्धेयम् ।
मधुकं रामठं चैव कर्पूरं मरिचं गुडम् ।
(रामठं हिङ्गु)

(१) 'नलिका' ग० । (२) 'करडी' क 'करड' ग० ।
(३) 'कोविदार' क० । (४) 'मुक्तम्' ग० ।
(५) 'अलाबु' क० ।

कुकुण्डकान्यलाबूनि कृष्णं लवणमेव च ॥

पुनरलाबुग्रहणमुभयालाबुनिषेधार्थमिति पृथ्वीच-न्द्रः। कुकुण्डकं *वर्तुलं छत्राकम्। तत्रैव—

कुस्तुम्बुरुं कालिङ्गोत्थं वर्जयेदाम्लवेतसम्।

हेमाद्रौ ब्राह्मे—

वृन्ताकं पञ्चशिम्बं च लोमशानि फलानि च।
क(१)लिङ्गं रक्तचारं च वीणाकं घृतचारकम् ॥
कपालं काचमारी च *करञ्जं पिण्डमूलकम्।
गृञ्जनं चु(२)क्रिकां चैव गाजरं *जीव(३)कं तथा ॥

वृन्ताकं श्वेतम्,

कण्डूरां श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेत्।

इति देवलोक्तेः। तेन कृष्णस्यानिषेध इति चन्द्रिकामा-

श्राद्धकर्माणि शस्तानि सैन्धवं त्रपुमं तथा ॥

इत्यादिपुराणोक्तेर्विहितप्रतिषिद्धत्वाद्विकल्पः। (ए(४)वमन्य-त्रापि विहितप्रतिषिद्धत्वे) 'कालानलशुभास्तथा' इति माधव-पाठः। कालानलः कृष्णार्जकः। अत्र श्वेतार्जकोऽपि ग्राह्यः "अर्जकं वर्जयेत्" इति विष्णूक्तेः। शुभा तदाख्यः शाकः। *वर्तुलेति अतन्त्रम्,

नालिकाशणछत्राककुसुम्भालाबुविड्भवान्।
कुम्भीकञ्चुकवृन्ताककोविदारांश्च वर्जयेत् ॥

इत्युशनसा सामान्यतश्छत्राकोक्तेः। छत्राकं कवकम्। कञ्चुकं वृत्तालाबु। *करञ्जं नक्तमालफलम्। *जीवकं 'जीर-कम्' इति पाठे कृष्णजीरकम्,

कृष्णाजाजीविडं चैव शीतपाकी तथैव च।
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत् ॥

---

(१) 'कालिङ्गम' क०। (२) 'चुलिकाम्' क०। (३) 'जीवकाम्' क०।
(४) कंसान्तर्गतो ग्रन्थो नास्ति 'ङ' पुस्तके।

धवौ । *वस्तुतस्तु सदा श्वेतनिषेधात् पुनः श्राद्धे निषेधो ऽनर्थः । तेन भक्ष्यस्य कृष्णवृन्ताकस्यापि निषेधार्थमिदमिति वयम् । *कण्डूरा कपिकच्छूः । कुम्भाण्डं *वृत्तालाबूः । पञ्चशिम्बं वल्लमसूरराजमाषमठकुलित्थाः । लोमशानि कपित्थानि । रक्तचारं लोहितचारफलम् । वीणाकं कृष्णदीर्घकर्कटी । धूतचारकं चिरस्थितचारफलम् चारोळीति प्रसिद्धम् । कपालं नारिकेलम् । काचं कचुवृक्षफलम् । मरीचं आर्द्रमरीचानि । गृञ्जनं *पलाण्डुभेदः ।

इति शङ्खोक्तेः । *वस्तुतस्त्विति । मिताक्षरायां—

सेधाकच्छपगोधानां शशशल्लकघातकः ।
वृन्ताकफलगुञ्जाशी अहोरात्रेण शुद्ध्यति ॥

इति पराशरेण प्रायश्चित्तं स्मर्यते । तच्च कृ(१)ष्णवृन्ताकस्य भक्ष्यताप्रयोजकं पावित्र्यं गमयति अपवित्रेण पवित्रीकरणासंभवात् । न चैवं—

सुराम्बुघृतगोमूत्रपयसामग्निसंनिभम् ।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥

इति कथमपवित्रेणाप्यत्युष्णसुरापानेन पावित्र्यमिति वाच्यं, तत्र तथामरणस्यैव पञ्चम्या पावित्र्यहेतुत्वाम्नानात् । एकस्यापि मरणस्योष्णानुष्णसुरापानद्वयशोधकत्वं तु वचनात् । एवञ्च चातुर्मास्यव्रतादाविव श्राद्धेऽपि कृष्णवृन्ताकाविषयो निषेध इत्यर्थः । *कण्डूरेति । कण्डूरा प्रावृषायणी । तत्फलमित्यन्ये । *वृत्तालाबूरिति । तत्सदृशमिति माधवः । *पलाण्डुभेद इति । स च—

वर्जयेद् गृञ्जनं श्राद्धे का(२)ञ्चिकापिण्डमूलकम् ।
करञ्जं येऽपि चान्ये वै रसगन्धोत्कारास्तथा ॥

इति वाक्ये हरिद्रावर्ण इति माधवः । गृञ्जनं लशुनानुकारि

(१) 'कृष्ण' नास्ति ङ पुस्तके । (२) 'काञ्जिका' ङ ।

पश्चिमदिशि प्रसिद्धः न तु गाजरम्, तस्य पृथगुक्तेः। हेमाद्रिणा तु गृञ्जनं गाजरमेवोक्तम् । गौडश्राद्धकौमुद्यामप्येवं तच्चिन्त्यम् । चु(१)क्रिका चिरकालशुक्तं पानकम्। चन्द्रिकायां हारीतः- 'न वटप्लक्षोदुम्बरशेलुदधित्थनीपमातुलिङ्गानि भक्षयेत्' । शेलुः श्लेष्मातकः भोंकरसंज्ञः। दधित्थं कपित्थम्। (स्मृ(२)तिसारे—

क्षीरे तु लवणं दत्त्वा उच्छिष्टेपि च यद् घृतम् ।
स्नानं रजकतीर्थेषु ताम्रे गव्यं सुरासमम् ॥ )

गौडनिबन्धसागरे स्मृतिः—

नारिकेरोदकं कांस्ये ताम्रपात्रे स्थितं मधु ।
गव्यं च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥

---

सूक्ष्मनालः कन्दभेद इति विज्ञानेश्वरः।

गन्धाकृतिरसैस्तुल्यं गृञ्जनं तु पलाण्डुना ।
सूक्ष्मनालाग्रपत्रत्वाद् भिद्यते तु पलाण्डुतः ॥

इति वाग्भटटीकावचनं च तत्र मानम् । प्रायश्चित्तप्रकरणे माधवस्तु गृञ्जनं पत्रविशेषः यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्तीति लिखित्वा तच्च 'तमाखु' इति प्रसिद्धमिति चतुर्विंशतिमतव्याख्यायां भट्टोजीदीक्षिताः।

विषलिप्तेन शस्त्रेण मृगो यः परिहन्यते ।
अभक्ष्यं तस्य तन्मांसं तद्धि वै गृञ्जनं स्मृतम् ॥

इत्यपि त एव लिखन्ति । काञ्जिका आरनालम्। पुराणेऽपि—

वांशं करीरं सुरसं सर्जकं भूतृणानि च ।
श्राद्धकर्मणि वर्ज्यानि याश्च नार्यो रजस्वलाः ॥

सर्जकः पीतसारकः । अर्जक इति पाठे श्वेतकुबेरपत्रमिति मयूखः। रजस्वलाः दिनत्रयादूर्ध्वमनिवृत्तरजसः। भविष्ये—

---

(१) 'चुलिका' क० छ० । (२) कंसान्तर्गतं नास्ति क० ।

ताम्रपात्रे घृतं मांसं यच्च गव्यं घृतेतरत् ।
आमिषं तु गवां मांसं दधि मद्यं पयो रजः ॥
द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि ।
पयोऽनुद्धृतसारं च ताम्रपात्रे न दुष्यति ॥

---

लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
वृन्ताकनालिकालाबु जानीयाज्जातिदूषितम् ॥

लशुनः श्वेतकन्दः पलाण्डुविशेषः ।

लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम् ।
करण्यश्च पलाण्डुश्च लतार्कश्च परारिका ॥
गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः ।

इति सुश्रुतेनोक्तत्वात् । आपद्यपि श्वादिभिरवलीढं न भुञ्जीत,

अवलीढं श्वमार्जारध्वाङ्क्षकुक्कुटमूषकैः ।
भोजनं नोपभुञ्जीत तदमेध्यं हि सर्वतः ॥

इति देवलोक्तेः । भविष्ये—

सुरालशुनसंस्पृष्टं पीयूषादिसमान्वितम् ।
संसर्गाद् दुष्यते तद्धि शूद्रोच्छिष्टवदाचरेत् ॥

आदिशब्देन छत्राकादिदुष्टपरिग्रहः । स्मृत्यन्तरे—

नापणीयं न चाश्नीयाद्भिःपक्वं न पर्युषितम् ।
घृतं वा यदि वा तैलं विप्रो नाद्यान्नखच्युतम् ॥
यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः ।
हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च ॥
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ।
एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत् ॥

यत्तु आपणीयनिषेधोऽपूपादिव्यतिरिक्तविषयः,

अपूपाः सक्तवो धानास्तक्रं दधि घृतं मधु ।
एतत् पण्येषु भोक्तव्यं भाण्डलेपो न चेद्भवेत् ॥

इति शङ्खोक्तेरिति; तन्न, पुनर्निषे[illegible]मपूपानां

अथ जलम् । याज्ञवल्क्यः—

शुचि *गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।

वर्ज्यं जलमुक्तं हेमाद्रौ ब्रह्माण्डे—

दुर्गन्धि फेनिलं क्षारं पङ्किलं पल्वलोदकम् ।
न भवेद्यत्र गोतृप्तिर्नक्तं यच्चाप्युपाहृतम् ॥
यन्न सर्वार्थमुत्सृष्टं यच्चाभोज्यानिपानजम् ।
तद्वर्ज्यं सलिलं तात सदैव श्राद्धकर्मणि ॥

निपानो जलाशयः । शुद्धितत्त्वे शङ्खः—

स्नानमाचमनं दानं देवतापितृतर्पणम् ।
शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥

---

वर्ज्यत्वे आपणीयानामपि श्राद्धे वर्ज्यत्वौचित्यात् । "बहूनामेकधर्माणाम्" इति न्यायात् "सिद्धाः कृताश्च ये भक्ष्याः" इति निषेधाच्च । भरद्वाजः—

स्वल्पाम्बु कूष्माण्डफलं वज्रकन्दश्च पिप्पली ।
कुलित्थशणजीराणि करम्भाणि तथैव च ॥
अब्जादन्यद्रक्तपुष्पं शिग्रुः क्षारस्तथैव च ।
एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणि ॥

( *गो(१)तृप्तीति । एवञ्च कलिवर्ज्यं 'गोतृप्तिशिष्टे पयसि' इत्युक्तेः

अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्राजापत्यं समाचरेत् ॥

इत्याद्यन्यत्र विस्तरः ) । स्वल्पाम्बु गोतृप्तिहीनं जलम् । वज्रकन्दः आरण्यसूरणः । जीरं कृष्णम् । करम्भा दधिसक्तवः । क्षारो यवक्षारादिः । केचित्तु ग्राह्येषु कारवेल्ल्यादि लिखन्ति । पठन्ति च—

उर्वारुः कारवेलिश्च पटोली करपत्रकः ।

---

(१) कंसान्तर्गतं नास्ति 'च' पुस्तके ।

हेमाद्रावादित्यपुराणे—

(१)चिरपर्युषितं वाऽपि शूद्रस्पृष्टमथापि वा ।

जाह्नव्याः *स्नानदानादौ पुनात्येव सदा पयः ॥

कात्यायनः—

अपो निशि न गृह्णीयान्न पिबेच्च कदाचन ।

उद्धृत्याग्निमुपर्यग्नेर्धाम्नो धाम्न इतीरयेत् ॥

रजोदोषे तु प्रागुक्तं नारदीये—

त्यजेत्पर्युषितं पुष्पं त्यजेत्पर्युषितं जलम् ।

न त्यजेज्जाह्नवीतोयं (२)तुलसीपद्मबिल्वकम् ॥

अन्यान्यपि पृथ्वीचन्द्रोदये मात्स्ये—

मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः ।

रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥

पापं कुत्सितमित्याहुस्तस्य संतापकारिणः ।

अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥

ब्राह्मे—

यतिस्त्रिदण्डः करुणा राजतं पात्रमेव च ।

दौहित्रं कुतपः कालश्छागः कृष्णाजिनं तथा ॥

श्राद्धेष्वेतानि मुख्यानि मोचं चेक्षुरसं तथा ॥ इति ।

क्षत्रियादिभिश्च गोपयो न भक्ष्यम्,

क्षत्रियश्चैव वृत्तिस्थो वैश्यः शूद्रोऽथवा पुनः ।

यः पिबेत् कापिलं क्षीरं न ततोऽन्योऽस्त्यपुण्यकृत् ॥

इति माधवीये आपस्तम्बोक्तेः । शूद्रस्य तु पातित्यम्,

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् ।

उभौ तौ पापकर्माणौ पूयाशे नरके पतेत् ।

इति स्मृतेः । *स्नानदानादाविति । सर्वकर्मोपलक्षणम् । *अ-

(१) 'चिरं' ग० । (२) 'तुलसीबिल्वपद्मकम्' ग० ।

शस्तानीति शेषः । दौहित्रं खड्गपात्रमिति कल्पतरुः । अपरार्के स्मृत्यन्तरे--

अपत्यं दुहितुश्चैव खड्गपात्रं तथैव च ।
घृतं च (१)कपिलाया गोर्दौहित्रमिति कीर्तितम् ॥

ब्रह्माण्डे--

अमावास्यागते सोमे या तु खादति गौस्तृणम् ।
तस्या गोर्यद्भवेत् क्षीरं तद्दौहित्रमुदाहृतम् ॥

स्मृतिसंग्रहे--

उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम् ।
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ॥

उच्छिष्टं वत्सस्य दुग्धमित्यर्थः । शिवनिर्माल्यं गङ्गोदकम् । वान्तं मधु । मृतकर्पटं तसरीपट्टम् ॥

तिलेष्वापस्तम्बः--

अटव्यां (२)ये समुत्पन्ना *अकृष्टफलितास्तथा ।
ते वै श्राद्धे पवित्राः स्युस्तिलास्ते न तिलास्तिलाः ॥

*अभावे ग्राम्याः,

गौराः कृष्णास्तथाऽरण्यास्तथैव त्रिविधास्तिलाः ॥

इति ब्राह्मोक्तेः ।

अथ वर्ज्यानि चन्द्रि(३)कायां यमः--

कुक्कुटो विड्वराहश्च काकश्चाथ बिडालकः ।

---

टव्यामिति ।

जर्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वनोद्भवाः ।
जर्तिलाश्चैव ते ज्ञेया अकृष्टोत्पादिताश्च ये ।

इति सप्तव्रतः । *अकृष्टफलिताः अकृष्टभूमौ जाताः । निषेधस्तु "अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वाः" इतिवत् जर्तिलप्रशंसार्थः । जर्तिलाभावे क्षेत्रोत्पन्नानाह--*अभावे इति । *मृद्ध

---

(१) 'कपिला या गोर्दौहित्रम्' क० । (२) 'च' क० ।
(३) 'चन्द्रिकायाम्' नास्ति क० ।

वृषलीपतिश्च वृषलः षण्ढोऽवीरा रजस्वला ॥
एते तु श्राद्धकाले वै वर्जनीयाः प्रयत्नतः ।
खञ्जः काणः कुणिः श्वित्री दातुः प्रेष्यकरस्तथा ॥
न्यूनाङ्गोऽप्यतिरिक्ताङ्गस्तमप्यपनयेत्ततः ॥

वायवीये—

अन्नं पश्येयुरेते तु यदि वै हव्य(१)कव्ययोः ।
उत्सृष्टव्यं प्रधानार्थं संस्कारस्त्वापदि स्मृतः ॥

सुमन्तुः—

'चाण्डालादिवीक्षितमन्नमभोज्यमन्यत्र *मृद्भस्महिरण्योदकस्पर्शात् ।' तत्रैव जमदग्निः—

शुद्धवत्योऽथ कूष्माण्ड्यः पावमान्यस्तरत्समाः ।
पूतेन वारिणा दर्भैरन्नदोषमपोनुदेत् ॥

चन्द्रोदये—

पादुकोपानहौ छत्रं चित्ररक्ताम्बरं तथा ।
रक्तपुष्पं च मार्जारं श्राद्धभूमौ विवर्जयेत् ॥

निर्णयदीपे—

घण्टानिनादो हयसंनिधानं शम्बूकशङ्खौ कदलीदलं च ।
उन्मत्तजात्यर्कहयारिजानि श्राद्धस्य वैगुण्यकराण्यमूनि ॥

हयारिजं महि(२)षक्षीरादि ।

अथ श्राद्धदिनकृत्यम् । चन्द्रोदये उशनाः—

'गोमयोदकैः *भूमिभाजनशौचं कुर्यात् ।' पराशरः—

काञ्जिकं दधि तक्रं च शृतं (३)चाशृतमेव च ।
पूर्वमेव न दातव्यमेकोद्दिष्टेऽथ पार्वणे ॥

---

स्पष्टं श्राद्धप्रकरणे माधवो न लिखति । *भूमिः महानसादिभूमिः ।

(१) 'कव्यवाहयोः' क० ।　　(२) 'करवीरपुष्पम्' क० ।
(३) 'वा' ग० ।

हेमाद्रौ पराशरः—

*गृहाग्निशिशुदेवानां ब्रह्मचारितपस्विनाम् ।
तावन्न दीयते किञ्चिद्यावत्पिण्डान्न निर्वपेत् ॥

कौर्मे—

तिलानवकिरे*त्तत्र सर्वतो बन्धयेदजान् ।

तत्रैव देवलः—

तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः
आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ॥

अत्रात्मनेपदात्स्वयमेव पाकः कार्यः । अशक्तौ पत्न्या तदभावे बान्धवैः,

ततस्तानि पपाचाशु सीता जनकनन्दिनी ।

इति पाद्मलिङ्गादिति हेमाद्रिः । श्राद्धदीपकलिकायामाश्वलायनः--

समानप्रवरै(१)र्मित्रैः सपिण्डैश्च गुणान्वितैः ।
कृतोपकारिभिश्चैव पाककार्यं प्रशस्यते ॥

व्यासः--

गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः ।
निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत् ॥

पृथ्वीचन्द्रोदये ब्राह्मे--

*रजस्वलां च पाखण्डां पुंश्चलीं पतितां तथा ।
त्यजेच्छूद्रां तथा वन्ध्यां विधवां चान्यगोत्रजाम् ॥
व्यङ्गकर्णीं चतुर्थाहःस्नातामपि रजस्वलाम् ।
वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम् ॥

मातृपितृवंशजभिन्नां त्यजेदित्यर्थः । स्मृतिसारे--

न पाकं कारयेत् पुत्रीमन्धां वाऽप्यन्यगोत्रजाम् ।

---

काञ्जिकं तु निषिद्धमेव । *गृहाग्नीति । प्रातर्होमं विना । *तत्र

---

(१) 'मिश्रैः' ग० ।

मृतवत्सां च *गर्भघ्नीं गर्भिणीं चैव दुर्मुखीम् ॥

पाकभाण्डानि तु हेमाद्रौ नागरखण्डे--

सौवर्णान्यथ रौप्याणि कांस्यताम्रोद्भवानि च ।
मार्तिकान्यपि भ(१)व्यानि नूतनानि दृढानि च ॥

तत्रैव आदित्यपुराणे--

पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् ।
स्वर्णादिधातुजातेषु मृन्मयेष्वपि वा द्विजः ॥
अच्छिद्रेष्वविलिप्तेषु तथाऽनुपहतेषु च ।
नायसेषु न भिन्नेषु दूषितेष्वपि कर्हिचित् ॥
पूर्वं कृतोपयोगेषु मृन्मयेषु न तु क्वचित् ॥

वायुपुराणे--

न कदाचित्पचेदन्नमयःस्थालीषु पैतृकम् ।
अयसो दर्शनादेव पितरोऽपि द्रवन्ति हि ॥
कालायसं विशेषेण निन्दन्ति पितृकर्माणि ।
फलानां चैव शाकानां छेदनार्थानि यानि तु ॥
महानसेऽपि शस्त्राणि तेषामेव हि सन्निधिः ।
इष्यते नेतरस्यात्र शस्त्रमात्रस्य दर्शनम् ॥
((२)श्राद्धदेशे तु विदुषा पितॄणां प्रीतिमिच्छता । )
महान(३)से नियुक्तानामपि कार्यं न दर्शनम् ॥

तत्रैव--

पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु च ।
समुद्धरति वै घोरात् पितॄन् दुःखमहार्णवात् ॥
तैजसानामभावे तु पिठरे मृन्मयेऽपि च ।
नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात् ॥

---

महानसादिभूमौ । *रजस्वला व्याख्याता । *गर्भघ्नी कृतगर्भपा-

(१) 'भाव्यानि' छ० । (२) कंसान्तर्गतं नास्ति क० छ० ।
(३) 'महानसेऽपि यु' छ० ।

तत्रैवादित्यपुराणे--

पक्वान्नस्थापनार्थे तु शस्यन्ते दारुजान्यपि ।
दर्व्यादीन्यपि कार्याणि यज्ञियैरपि दारुभिः ॥

यमः--

विवाहे प्रेतकार्ये च मातापित्रोः क्षयेऽहनि ।
( नव(१)भाण्डानि कुर्वीत यज्ञकाले विशेषतः ॥

अथ पाकाग्निः । हेमाद्रौ प्रजापतिः--

*औपासनेनान्नसिद्धिरग्नौकरणमेव च ।

पृथ्वीचन्द्रोदयेऽङ्गिराः--

*शालाग्नौ तु पचेदन्नं लौ(२)किके वाऽपि*नित्यशः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन्*होमो विधीयते ॥

मनुः--

*वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।

---

यश्चित्ता बोध्या । ( (३)हेमाद्राविति । अस्य 'इति केचित' इत्यत्रान्वयः । *औपासनेनेति । ) येषां सूत्रे औपासनाग्नौ नित्यः पाकः तेषां श्राद्धपाकोऽपि तत्रैवेत्यर्थः । *शाला-ग्नाविति । तथा चार्धाधानिनः स्मार्ताग्नेश्चौपासनसद्भावा-त्तत्रैव पाकः, सर्वाधानिनस्तु लौकिक एवेत्यर्थः । होमः वै-श्वदेवहोमः । न त्वग्नौकरणं तस्य सर्वाधानिनो दक्षिणाग्नौ कर्त-व्यत्वात् 'नित्यशः' इति विशेषणाच्च । तथापि नैत्यकपाकाग्नेः श्रा-द्धे बाधो नास्तीत्यावेदनार्थमिदम् । नन्वेवं तीर्थमहालयादिश्राद्धेषु औपासनाग्निः स्यादित्यत्राह-*वैवाहिके इति । गृह्यकारैरु-क्तम्-अष्टकापार्वणश्राद्धहोमादि गृह्याग्निसाध्यं गृह्यम् । न च गृहं शाला तत्रोक्तं वास्तुकर्ममात्रं ग्राह्यं, न त्वष्टकाहोमादीति वाच्यम् , तावन्मात्रग्रहे मानाभावात् , वचनवैयर्थ्यात् । नापि गृहं दारास्त-

---

(१) कंसान्तर्गतं नास्ति छ. (२) 'लौकिकेनापि' क०
(३) कंसान्तर्गतं नास्ति 'च' पुस्तके ।

त्रोक्तं गृह्यमिति वाच्यं, गृहीत्यनेन गतत्वात् । पञ्चयज्ञविधानं गृही कुर्यादिति योजना । यत्तु वैवाहिकेऽग्नौ पञ्चयज्ञविधानं कुर्यादिति वैश्वदेवस्य गृह्यकर्मत्वेन । तन्न, "शालाग्नौ तु पचेदन्नम्" इति पूर्वोक्ताङ्गिरोवाक्यात् । वैश्वदेवविशेषे च भोजनं कार्यम् । पञ्चपदं विप्रभोजनहन्तकारादेर्मनुष्ययज्ञस्यापि तेनैव कर्त्तव्यत्वार्थम् । तत्राग्नेरनधिकरणत्वेऽपि तदनुकूलपाकस्याधिकरणत्वं बोध्यम् । वैश्वदेवे कृते पश्चात्तदन्नोपघाते भोजनार्थपाको लौकिक एव, न गृह्ये ।

अचोदितेन पाकेन कृतेनोद्धरणेन वा ।
लौकिकोऽग्निः स विज्ञेयः पुनराधानमर्हति ॥

इति बौधायनेनाविहितपाकनिषेधात् ,

अपचन्नेकरात्रेण पुनराधानमर्हति ।

इति स्मृत्यविषयत्वाच्च । यत्तु--

यस्य चाग्नौ न क्रियते यस्य चान्नं न दीयते ।
अभोज्यं तद्भवेदन्नं भुक्त्वा तूपवसेदहः ॥

इत्यापस्तम्बवचनं, तद्वैश्वदेवस्य पुरुषार्थत्वमात्रप्रकाशकं नतु भोजनार्थपाकार्थत्वमपि । अत एवाशौचे वैश्वदेवाभावान्न गृह्याग्नौ पाकः ।

पराग्निपक्वमश्नीयात्पर्वणि प्रोषितोऽग्निमान् ।

इति वाक्यं तु निर्मूलम् । एतेन पर्वणि वैश्वदेवार्थपाको भुज्यर्थः । अन्यथा तु लौकिकाग्निपक्वभोजनेऽपि न दोष इति परास्तम्, पर्वण्यन्नोपघातेऽभोजनप्रसङ्गात् ।

केचित्तु प्रोषितोऽग्निमान्पराग्निपक्वं नाश्नीयादिति सम्बन्धः । पृष्टोदिविविधानेनाग्निं सम्पादयेत्पर्वणि॥ इति तन्नाग्निदोषार्थमित्याहुः

यत्तु यज्ञपार्श्वः—

पचनाग्नौ पचेदन्नं सूतके मृतके तथा ।
अपक्त्वा तु वसेद्रात्रिं पुनराधानमर्हति ॥

इति, तददृष्टार्थपाकपरम् । अनाकरमित्यन्ये । ननु गृहं दम्पती तयोः फलदं कर्म गृह्यम् । तच्चाष्टकाहोमादि, नवग्रहादिशान्तिकर्मा-

पञ्चयज्ञविधानं च *पार्क्किं चान्वाहिकीं द्विजः ॥

*श्राद्धस्य गृह्यत्वं चोक्तमपरार्केण। अत्र विशेषः कर्मप्रदीपे--

प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनात्।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥
पाकान्तेऽग्निं त(१)माहृत्य गृह्याग्नौ तु पुनः क्षिपेत्।
ततोऽस्मिन्वैश्वदेवादि कर्म कुर्यादतन्द्रितः ॥

तदभावे लौकिके,

ततः पचेयुरन्नानि निर्वापानन्तरं शनैः।
वैवाहिकेऽग्नावन्यत्र लौकिके वापि संयतः ॥

इति कलिकायां सङ्ग्रहोक्तेः। पित्रर्थं निर्वापं कृत्वेत्यर्थः, अत एव हेमाद्रौ वायुपुराणे--

पित्रर्थं निर्वपेद् भूमौ कूर्चे वा दर्भसंस्कृते ॥ इति।

तत्रैव पाद्ममात्स्ययोः--

अ)ग्निमान्निर्वपेत्पैत्रं चरुं वा सममुष्टिभिः।
पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत् ॥

चरुग्रहणादन्नशाकादाविति हेमाद्रिः। *पिण्डपितृयज्ञार्थपाकविषयोऽयं निर्वाप इति तु युक्तम्। अयं चेतं-

---

ष्टिकादिहोमस्थदेवतादिहोमादि, तत्राप्यावसथ्याग्निः स्यात्? न स्यात्, ग्रहयज्ञादेर्दम्पतीमात्रसाध्यत्वाभावादेव गृह्यत्वाभावात्। येषां सूत्रे औपासनाग्नौ नित्यशः पाकः तेषां श्राद्धीयपाकोऽपि तत्रैव। *पार्क्किं पाकम्। तस्य आन्हिकत्वविशेषणाच्छ्राद्ध-पाकस्य कथमौपासनाग्निलाभ इत्यत्राह—*श्राद्धस्येति। तथाच तत्राग्नौकरणस्यौपासने कर्तव्यतया पाकोऽपि तत्रैवेति भावः। *पिण्डेति। तथाच श्राद्धे निर्वापो न कार्यः। श्रपणं त्वौपासने

---

(१) 'समाहृत्य' क०

रेषा(१)मग्निः । आश्वलायनानां तु 'गुरुणा*भिमृता अन्यतो वाऽपक्षीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन्' इत्यादिसूत्रेण पचनाग्नेस्त्यागमुक्त्वा 'इहैवायमितरो जातवेदाः' इत्यर्धर्चेन, 'शमीमयीभ्यामरणिभ्यामग्निं म(२)न्थेत्स पचनाग्निर्भवति' इति सूत्रे वृत्तौ चोक्तेः पचनाग्नावेव पाकः । बौधायनेनाप्युक्तम्--'आ(३)हृत्य पचनाग्निमौपासनं वाऽभिप्रव्रजन्ति' इति । स्मार्ताग्नौ पाकस्त्वन्यशाखाविषय इति केचित् । वस्तुतस्तु पूर्वोक्तस्य सर्वाधानविषयत्वं युक्तम् । *शिष्टाचारेऽपि न पचनं दृश्यते । अण्डविलायामपि सर्वाधानपक्षे वै(४)श्वदे० श्राद्धं च प(५)चनेऽग्नौ कुर्यात् *अन्यथौपासने इत्युक्तम् । अग्नौकरणं तु *प्रयोगपारिजातादिभिराब्दिकादिसर्वश्राद्धेषु पिण्डपितृयज्ञव्यतिषङ्गोक्तेर्लौकिके पचने वा पाके कृतेऽपि गृह्याग्नौ पक्वचरुणैव कार्यमिति प्रतिभाति । मदनरत्नेऽप्येवम् । *विधु(६)रोत्सन्नाग्न्यादेस्तु पृष्टोदिविविधानेनाग्निसंपादनमित्युक्तं हरिहरभाष्ये । इति पाकाग्निः ।

---

कार्यम् । तदभावे लौकिके इति । *अभिमृताः अपध्याताः । *अपक्षीयमाणाः पुत्रपशुहिरण्यादिभिरित्यादिः । *शिष्टाचारेऽपीति । तथाच लौकिकाग्नावेव श्राद्धपाक इति भावः । *अन्यथा अर्धाधाने । *प्रयोगेति । अमावास्याश्राद्धमात्रे व्यतिषङ्गपक्षेऽपि अग्नौकरणं गृह्याग्निपक्वेनैवेति द्रष्टव्यम् । *विधुरा इत्यादि कात्यायनादिपरम् ।

---

(१) 'अस्ति' ग० (२) 'मन्थयेत्' ग० (३) 'आहृत' ग० (४) 'वैश्वदेवश्राद्धम्' ग० (५) 'पचनाग्नौ' क. 'पचने कु' ग० (६) 'विधुरोच्छिन्ना' क. छ०

चन्द्रिकायां मार्कण्डेयः--

अह्नः षट्सु मुहूर्तेषु गतेषु प्रयतान्द्विजान् ।
प्रत्येकं प्रेषयेत्ते(१)षां प्रदायामलकोदकम् ॥

देवलः--

ततो निवृत्ते मध्याह्ने कृत्तरोमनखान् द्विजान् ।
अभिगम्य यथान्यायं प्रयच्छे*द्दन्तधावनम् ॥
तैल*मभ्यञ्जनं*स्नानं*स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्वकम् ॥

औदुम्बरैस्ताम्रमयैः । *'अत्र क्षौरामलकस्नानादि निषिद्धतिथ्यादिव्यतिरिक्तविषयम्' इति हेमाद्रिमाधवश्च । यत्तु चन्द्रिकायां प्रचेताः-

तैलमुद्वर्तनं स्नानं दद्यात्पूर्वाह्ण एव तु(२) ।
श्राद्धभुग्भ्यो नखश्मश्रुच्छेद(३)नं तु न कारयेत् ॥

इति, तन्निषिद्धतिथ्यादिविषयम् । निषिद्धतिथ्या तु प्रागुक्तम् । अभ्यङ्गे तु कलिकायां कात्यायनः—

तैलमु(४)द्वर्तनं देयं ब्राह्मणेभ्यः प्रयत्नतः ।
तैरभ्यङ्गश्च कर्तव्यो वर्ज्यं कालं न चिन्तयेत् ॥

अपरार्के प्रचेताः--

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
श्राद्धकृच्छुक्लवासाः स्यान्मौनी च विजितेन्द्रियः ॥

---

*दन्तधावनं दन्तधावनसाधनं काष्ठादि । *अभ्यञ्जनं तैलमित्येकम् । *स्नानं स्नानसाधनं जलम् । *स्नानीयम् उद्वर्तनम् । *अत्रेति । क्षौरादिकारणं तैलादिदानं च निषिद्धतिथिवर्जं कार्यम् । आमलोदकस्नानमप्यमावास्याव्यतिरिक्तविषयम्,

---

(१) 'प्रेष्यतान्' क० (२) 'ह्ने' ग० (३) 'छेदनं न तु' ग०
(४) 'उद्वर्तने' ग०

# काशीसंस्कृतसीरीज़्-पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परंतु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथग् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि | मूल्यम् । |
|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) | रु० १—८ |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) | रु० ८—० |
| ३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं १) | रु० २—८ |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) | रु० ०—६ |
| ५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमासिपर्यन्तः । ( व्याकरणं १ ) | रु० ८—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) | रु० ६—० |
| ७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया—तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ ) | रु० ०—८ |
| ८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । | रु० ०—८ |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं १) | रु० ०—१२ |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) | रु० २—० |
| ११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध—शौच—स्नान—भोजन—कल्पसहितम् । ( कर्मकाण्डम् १) | रु० ०—८ |
| १२ पुरुषसूक्तम् । सायणभाष्य—महीधरभाष्य—मंगलभाष्य—निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) | रु० १—४ |
| १३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च सवलितम् । ( वेदान्तं ३ ) | रु० १—४ |
| १४ कुमारसंभवंमहाकाव्यम् । महाकवि—श्रीकालिदासवि० । सञ्जीवनी—शिशुहितैषिणी—टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं २) | रु० १—८ |

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च । ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम्-मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः । ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । ( कर्मकाण्डं ) रु० १—०

२१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः—भाषाटीकासहितः ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्यटीका-श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः ( टिप्पणीसमलंकृतः ) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः । ( कर्मकाण्डवि० ३ ) रु० ०—४

२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः । अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीय-कृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः । (व्या०४) रु० ३—८

२८ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलालठक्कुरकृतार्थप्रकाशिकाटीकया च समलङ्कृतम् ( काव्यवि० ३ ) रु० ०—१२

९. कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ८—०

१० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहोपाध्याय वर्द्धमनोपाध्यायप्रणितप्रकाशसाहतः (न्याये४) रु० ६—०

१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या–तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ४) रु० ३—०

१२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनाभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि–गोतमादिचरितसस्वलितबृहत्भूमिकासहितम् । (न्यायं) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १–२–३–४ )(वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर–वामन–जयादित्यविनिर्मिता । (व्याकरणं ५) रु० ६—०

३८ प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः । टिप्पण्या च संयोजितः । (व्याकरणं ६) रु० १—४

३९. जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवादसमेतः । (वेदान्तं ५) रु० २—०

४० श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः । (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः–मेदिनीकारविरचितः । (कोशं १) रु० १—८

४२ मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम् । ( भाग१—२ ) (मीमांसा ३) रु० १०—०

April 1928

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 364

कमलाकरभट्टविरचितो

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

उरई गवर्न्मेन्ट हाईस्कूल संस्कृतभाषाध्यापकेन पं० व्याकर
णोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा तदीयगुरुवर-
म० म० पं० पर्वतीयनित्यानन्दपन्तप्रदर्शितरीतिमनु
सृत्य संशोधितष्टिप्पण्या परिष्कृतश्च ।

The

## NIRṆAYASINDHU,

of Kamalâkara Bhaṭṭa

With Commentary by Kṛṣṇam Bhaṭṭa.

Edited With Notes by

Gopâla S'âstri Nene Vyâkaranopâdhyâya

FASCICULUS XVI–१६,

*PRINTED-PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE.
*Vidya Vilas Press, North of Gopal Mandir, Benares*

1927.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२६४

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

हेमाद्रौ जा(१)बालः—

ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजनम् ।
रत्यौ(२)षधपरान्नानि श्राद्धकर्ता विवर्जयेत् ॥

वस्त्रे विशेषमाह तत्रैव भृगुः—

नग्नः स्यान्मलवद्वासा नग्नः कौपीनकेवलः ।
द्विकच्छोऽनुत्तरीयश्च अकच्छोऽवस्त्र एव च ॥
नग्नः काषायवासाः स्यान्नग्नश्चार्द्रपटः स्मृतः ।
नग्नो द्विगुणवस्त्रः स्यान्नग्नो रक्तपटः स्मृतः ।
नग्नस्तु स्निग्धवस्त्रः स्यान्नग्नः स्यूतपटस्त(३)था ॥

ततः कर्ता ऊर्ध्वपुण्ड्रं कुर्यात ,

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुण्ड्रं विना कृतम् ॥

इति हेमाद्रावुक्तेः,

यज्ञो दानं ज(४)पो होमः स्वाध्यायः पितृकर्म च ।
वृथा भवति विप्रेन्द्रा ऊर्ध्वपुण्ड्रं विना कृतम् ॥

इति बृहन्नारदीयात् ;

ऊर्ध्वं च तिलकं कुर्यात् दैवे पित्र्ये च कर्मणि ।

इति वृद्धपराशरोक्तेश्च । अन्ये तु—

ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः ।
श्राद्धकाले तु संप्राप्ते कर्ता भोक्ता च तत्त्यजेत् ॥

---

"धात्रीफलैरमावास्यायां न स्नायात्" इति स्मृत्यन्तरे तन्निषेधात् । (५)अन्यत्र तु तैलनिषिद्धतिथिषु तैलाभावेऽपि आमलोदकं दद्या-दित्यर्थः ।

---

(१) 'जाबालिः' ग० (२) 'रत्यौषधम' ग० (३) 'स्मृतः' क०
(४) 'तपः' ग० (५) 'अन्यत्र तु' नास्ति 'च' पुस्तके ।

वामहस्ते च दर्भांस्तु गृहे (१)रङ्गावलिं तथा।
ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः॥
इति सङ्ग्रहोक्तेः,
ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा।
श्राद्धकर्ता न कुर्वीत यावत्पिण्डान्न निर्वपेत्॥
इति विश्वप्रकाशे वचनाच्च न कार्यमित्याहुः। अत्राचाराद् व्यवस्था। अत एव बृहन्नारदीये--
ऊर्ध्वपुण्ड्रं च तुलसीं श्राद्धे नेच्छन्ति केचन। इति।
ऊर्ध्वपुण्ड्रविधिर्विप्रविषयः। निषेधः कर्तृपर इति पृथ्वीचन्द्रः। यत्तु हेमाद्रौ देवलः--
ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्॥
इति, तद्गन्धेन त्रिपुण्ड्रविषयम्,
प्राक्पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्यात्स्वविग्रहम्।
इत्याश्वलायनोक्तेः। पुण्ड्रं वर्तुलमित्यपरार्के मदनरत्ने च। पृथ्वीचन्द्रस्तु (२)पुण्ड्रं त्रिपुण्ड्रम्,
ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम्।
निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्॥
इति बृहत्पराशरोक्तेः। भोक्तुस्तिर्यग्लेपो भवत्येव,
वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा।
तिर्यगप्यूर्ध्वपुण्ड्रं वा धारयेत्तु प्रयत्नतः॥
इति व्यासोक्तेरित्याह। पृथ्वीचन्द्रोदये ब्राह्मे--
सदर्भेण तु हस्तेन यः कुर्यात्तिलकं बुधः।
आचम्य स विशुद्ध्येत दर्भत्यागेन चैव हि॥

---

(१) 'रङ्गवलिम्' क. 'रङ्गवलिम्' छ.
(२) 'पुण्ड्रम्' नास्ति क. छ.

श्राद्धा(१)रम्भे कालमाहापरार्के गौतमः—

*आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ।

एतदेकोद्दिष्टे । पार्वणे तूक्तं मात्स्ये—

ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमि(२)ष्यते ॥
मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः ।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥

---

*आरभ्येति ।

अह्नो मुहूर्त्ता विज्ञेया दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः ॥

इति मत्स्यपुराणादह्नोऽष्टमो मुहूर्तः कुतपः, नवमस्तु रौहिणः । यद्यपि मध्याह्न एकोद्दिष्टश्राद्धकालः तथापि गान्धर्वं हित्वा कुतप-रौहिणात्मकं मुहूर्तद्वयमेव ग्राह्यमित्यर्थः । एतच्च न पार्वणविषयम्, "ऊर्ध्वं मुहूर्त्तात्कुतपात्"इति वचनात् । "आ(३)रभ्य कुतपे श्राद्धं कुर्यात्" इति प्रारम्भात् पृथक् श्राद्धविधानेन परिशेषादप्येकोद्दिष्टविषयत्वात् ।

*ऊर्ध्वमिति । द्वेधाविभक्तदिनापराण्हे सायाह्ननिषेधवशेन पार्वणे तथाविधकाले एव पर्यवसानादिति भावः । वस्तुतस्तु पार्वणे अपराण्हव्याप्तेर्मुख्यत्वादिदं वचनं पार्वणैकोद्दिष्टयोः क्रोडीकाराभिप्रायं, स्वधाभवनपदस्य श्राद्धार्थकत्वात् ।

(४)मध्येऽह्नस्त्रिमुहूर्त्तं तु यदा चलति भास्करः ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥

इति तु पार्वणेऽपराह्णस्य कुतपत्वं कुतपे आरम्भसिद्ध्यर्थम् एको-

---

(१) 'श्राद्धारम्भकालम' ग. (२) 'इष्यते । तथा—मध्याह्ने' ग.
(३) 'प्रारभ्य श्राद्धं कुर्यात्' 'च' पुस्तके ।
(४) 'मध्ये तु त्रिमु' ङ पुस्तके ।

अथ श्राद्धपरिभाषा। चन्द्रिकायां कात्यायनः—

दक्षिणं पातयेज्जानुं देवान् *परिचरन् सदा।
पातयेदितरं जानुं पितॄन् परिचरन् सदा॥

बौधायनः—

*प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम्।
देवानामृजवो दर्भाः पितॄणां द्विगुणास्तथा॥

पृथ्वीचन्द्रोदये शङ्खः—

आवाहनार्घ्ये*संकल्पे पिण्डदाना*न्नदानयोः।
पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्मणि।
अक्षय्यासनयोः पाद्ये *गोत्रं नाम प्रकाशयेत्॥

---

दिष्टगौणकालविधानार्थं वा। *परिचरन्निति अतन्त्रं, सङ्कल्पादेः दैवपितृसाधारणधर्मतया सव्यजानुपातसद्भावात्।

दक्षिणजानुभूलग्नो देवेभ्यः सेचयेज्जलम्।
भूलग्नसव्यजानुश्च पितृभ्यः सेचयेज्जलम्॥

इति वृद्धपराशरेण तर्पणेतिकर्तव्यतायां तदभिधानं दैवपितृभेदेन सिद्धस्य सव्येतरजानुपातस्योद्बोधनार्थम्।

मनुष्यतर्पणं कुर्वन्न किञ्चिज्जानु पातयेत्।

इति पुलस्त्यवाक्यं "नान्तरिक्षे न दिवि" इतिवन्नित्यानुवादः। ( *(१)प्रदक्षिणमिति।

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः।

इति शातातपो द्रष्टव्यः। ) *सङ्कल्पे तिथ्यादिकीर्तने। *अन्नदाने अन्नसङ्कल्पे।

*गोत्रं नामेति बह्वृचानाम् "गोत्रं नाम च गृहीत्वा" इति तत्सूत्रात्। अस्य प्रकरणान्तरीयत्वेऽपि "विशये प्रायदर्शनात्" (जै०सू०२-३-५-१६) इति न्यायेनेहापि प्रवृत्तेः। इतरेषां तु नामपु-

---

(१) कंसान्तर्गतं नास्ति 'च' पुस्तके।

तत्रैव परिशिष्टे —

(१)क्षणे च पिण्डदाने च गन्धधूपाक्षये तथा ।
सङ्कल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा ॥
अन्नार्घ्यदाना(२)द्यन्तेषु गोत्रं नाम च कीर्तयेत् ॥

कलिकायां सङ्ग्रहे—

आसनावाहने पा(३)द्ये अन्नदाने तथैव च ।
अक्षय्ये पिण्डदाने च षट्सु नामानि कीर्तयेत् ॥

मा(४)त्स्ये —

सम्बन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च ।
पश्चाद्रूपं विजानीयात् क्रम एष सनातनः ॥

तत्रैव—

सकारेण तु वक्तव्यं गोत्रं सर्वत्र धीमता ।
सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत् ॥

यथा काश्यपसगोत्रेति;

पराशरसगोत्रस्य वृद्धस्य तु महात्मनः ।
भिक्षोः पञ्चशिखस्याहं शिष्यः परमधार्मिकः ॥

इति मोक्ष(५)धर्मे प्रयोगाच्च । तेन गोत्रसगोत्रयोः पर्यायत्वाच्छाखाभेदाद्व्यवस्थेति शूलपाणिः । (ए(६)तच्चैषावँकं गोत्रमिति स्फुटीभविष्यति । विभक्तीरुदाहरति—*गोत्रं स्वरान्तमिति । स्त्रियामपि विभक्तयो नागरखण्डे—

मातर्गोत्रे तथा मातुरासने कल्पने क्षणे ।
गोत्रे गोत्रायै गोत्रायाः प्रथमाद्या विभक्तयः ॥
देवि देव्यै तथा देव्या एवं सर्वत्र कीर्त्तयेत ।

गोभिलोऽपि—

गोत्रायाश्चासने कुर्याद्गोत्रे चैवार्घ्यपिण्डयोः ।

---

[१] 'दक्षिणा पि' ग. (२) 'द्यङ्गेषु' क.
(३) 'पात्रे' क० छ० । (४) 'मत्स्यः' क० छ० ।
(५) 'मोक्षधर्मेषु' ग० । (६) कंसान्तर्गतं नास्ति क० छ० ।

मान्नातं तेषामेव । ) हेमाद्रौ बृहत्प्रचेताः—

*गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्ष(१)य्यकर्मणि ।
गोत्रस्तु तर्पणे प्रोक्त एवं दाता न मुह्यति ॥
सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि ।
पितुरक्षय्यकाले तु पित्र्ये सङ्कल्पने तथा ॥
शर्मन्नर्घ्यादिके कार्ये शर्मा तर्पणकर्मणि ।
शर्मणोऽक्षय्यकाले तु पितॄणां दत्तमक्षयम् ॥

स्वरान्तं सम्बुद्ध्यन्तामिति हेमाद्रिः । तत्रैव चन्द्रिकायां च स्मृत्यन्तरे—

गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते ।
यस्मादाह श्रुतिः सर्वाः प्रजाः कश्यपसम्भवाः ॥

यत्तु सत्याषाढः–'अथाज्ञातबन्धोः पुरोहितगोत्रेणा-चार्यगोत्रेण वा' इति तद्विवाहपरम् । नामोच्चारणे विशेष-माह हेमाद्रौ बौधायनः—

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥

पित्रादिनामाज्ञाने तत्रैव—

पृथिवीषत्पिता वाच्यस्तत्पिता चान्तरिक्षसत् ।
अभिधानापरिज्ञाने दिविषत्प्रपितामहः ॥
पित्रादीनां नाम यदा पुत्रैर्न ज्ञायते तदा ।

आपस्तम्बसूत्रेऽप्येवम् । एतदन्यशाखापरम् । आ-श्वलायनानां तूक्तं तत्सूत्रे–'यदि नामान्यविद्वांस्तातपि-तृपितामहप्रपितामहेति ब्रूयात् ।' तत्कारिकापि—

नामानि चेन्न जानीयात्ततेत्यादि वदेत् क्रमात् ।

ततेति सम्बन्धमात्रपरम् । ते(२)न पितृव्यादावपि

---

गोत्रायाश्चाक्षय्यकाले गोत्रायै त्याग एव च ॥

---

( १ ) 'अक्षय्यक' म० । ( २ ) 'तत्' क० ख० ।

तथेति गौडाः । स्त्रीणां (१)तु *दान्तं नाम (२)इति ज्ञेयम्, 'दान्तं नाम स्त्रीणाम्' इति पृथ्वीचन्द्रोदये गोभिलोक्तेः । केचिद्देवीशब्दान्तमाहुः । अन्ये तु देवीदा इति द्वयोः समुच्चयमाहुः ।

हेमाद्रौ नारायणः—

विभक्तिभिस्तु यत्किञ्चिद्दीयते पितृदैवते ।
तत्सर्वं सफलं ज्ञेयं विपरीतं निरर्थकम् ॥

चन्द्रिकास्मृत्यर्थसारयोः नारदीये च—

*अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा ।
अन्नदाने चतुर्थी च शेषाः सम्बुद्धयः स्मृताः ॥

यत्तु व्यासः—

चतुर्थी चासने *नित्यं संकल्पे च विधीयते ।
*प्रथमा तर्पणे प्रोक्ता सम्बुद्धिमपरे जगुः ॥ इति ।

*अत्र शाखाभेदाद्व्यवस्थेति हेमाद्रिः । हेमाद्रौ भृगुः—

---

गोत्रामात्राहने कुर्यात्स्त्रीलिङ्गे तु न संशयः ।

*दान्तमिति । 'यशोदादा' इत्यादि । नागरखण्डे अन्तपदाश्रवणाद्देवीशब्दः नामोपलक्षणमिति नाम्नो न देवीशब्दान्तत्वं समुच्चयो वेत्यस्वरसः ।

*अक्षय्येति। एताश्च सम्बन्धनामगोत्ररूपपदेषु। *नित्यमिति । अस्य सङ्कल्पेऽन्वयः, आसने षष्ठ्या अभ्युक्तेः । सङ्कल्पोऽन्नदानम् । *प्रथमेति । प्रथमासम्बुद्धिभ्यां विकल्पिताभ्यां द्वितीया विकल्पते,

सम्बन्धनामगोत्रेण स्वधान्तेन नमो मतः ।
तर्पयामिपदेनैव तर्पयेत्पितृपूर्वकम् ॥

इत्याख्यातयोगबलाद्द्वितीयालाभात् । *अत्रेति । आसने षष्ठी-

---

(१) 'तु' नास्ति क० पु० । (२) 'इति' नास्ति ग० पु० ।

अर्घ्ये ॐवनेजनं पिण्डमन्नं ॐप्रत्यवनेजनम् ।
सम्बुद्धिं तत्र कुर्वीत ॐशेषे षष्ठी विधीयते ॥
(तत्रै(१)व मातुर्विशेषो नागरखण्डे—
मातर्मात्रे तथा मातुरासने कल्पनेऽक्षये ।
गोत्रे गोत्राग्यै गोत्राग्राः प्रथमाद्या विभक्तयः ॥ )
हेमाद्रौ प्रभासखण्डे—
ॐयज्ञोपवीतिना कार्यं दैवं कर्म प्रदक्षिणम् ।
प्राचीनावीतिना कार्यं पितृकर्माऽप्रदक्षिणम् ॥

---

चतुर्थ्यां । ॐअवनेजनम् आस्तीर्णे बर्हिषि पिण्डदानात् प्राग्दीयमानं जलम् । ॐप्रत्यवनेजनं पिण्डदानोत्तरं दीयमानमुदकम् । निमन्त्रणे तु षष्ठी,

गृहीतामुकसंज्ञस्यामुकगोत्रस्य चामुके ।

इति विधौ तदुक्तेः । ॐशेषे षष्ठीति ।

आसने तु भवेत् षष्ठी तथैवाक्षय्यपृच्छयोः ।
आवाहने द्वितीया स्यादेष शास्त्रविनिश्चयः ॥
गन्धं माल्यं च धूपं च दीपमन्नं सदक्षिणम् ।
अपृ(२)थक्त्वेन दातव्यं चतुर्थ्या भूतिमिच्छता ॥

इति भृगूक्तेः । ब्राह्मणानुज्ञाग्रहणार्थं श्राद्धारम्भे प्रश्नवाक्यं पृच्छा । आवाहने द्वितीयानियमः—

आवाहनं च कर्तव्यं विभक्त्या च द्वितीयया ॥
येनागच्छन्ति ते सर्वे समाहूताः पृथक् पृथक् ।
अन्यया च विभक्त्या तु पितॄनावाहयेत्क्वचित् ॥
नागच्छन्ति महाभागा यद्यपि स्युर्बुभुक्षिताः ।

इति नागरखण्डात् । धूपादौ तु सम्बुद्ध्या विकल्पः । दक्षिणा चेहाच्छादनम् । ॐयज्ञोपवीतिनेति । चतुर्विधं कर्म । किञ्चि-

---

( १ ) कंसान्तर्गतं नास्ति क० ख० ।
( २ ) 'अथवा केन दात' ङ पुस्तके ।

देवसम्बन्धित्वाद्दैवमेव । यथा—'विश्वेदेवाः प्रीयन्ताम्' इति वाचनादि । किञ्चित् पित्र्यमेव, पित्रेकसम्बन्धित्वात् । यथा—स्वधानिनयनादि । किञ्चिदुभयसम्बन्धादुभयात्मकम् । यथा पाकप्रोक्षणादि । किञ्चिद्देवपितृसम्बन्धराहित्याल्लौकिकमेव । यथा—स्वागतप्रश्नादि । तत्र दैवं यज्ञोपवीतिना कार्यम् । वामस्कन्धोपरि दक्षिणकक्ष्याधो निहितं ब्रह्मसूत्रं यज्ञोपवीतम्—

उत्तरे दक्षिणे पाणावुपवीत्युच्यते बुधैः ।
सव्ये प्राचीनावीती निवीती कण्ठसज्जने ॥

इति मनु—स्मरणात् । पित्र्यं साधारणं च प्राचीनावीतिना कार्यम् ;

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ॥

इति मनूक्तेश्च । आनिधनात् आसमाप्तेः । दक्षिणस्कन्धोपरि वामकक्ष्याधो निहितं ब्रह्मसूत्रं प्राचीनावीतम् । दर्भपाणिनेति पित्र्ये दर्भपाणित्वायोगव्यावृत्त्यर्थं, न तु दैवमानुषेभ्यो निवृत्त्यर्थं "दर्भपाणिः श्राद्धदशं प्रोक्ष्य सर्वं कुर्यात्" इति विष्णुना तस्य सर्वार्थत्वोक्तेः । यद्यपि पितृकर्मत्येवोक्तं तथापि दैवपितृसाधारणं पाकप्रोक्षणाद्यपि (१)कार्यं विप्रतिषिद्धप्रधानधर्मसमवाये प्रधानधर्मस्य बलीयस्त्वात् । तत्र साङ्गं विकिरदानं साङ्गं पिण्डदानं चाचमनवर्जं पित्र्यम् ।

अपसव्येन दर्भेषु पिण्डा देयास्त्रयस्तु वै ॥

इति कार्ष्णाजिन्युक्तेः । एवं सुप्रोक्षितमस्त्विति श्राद्धदेशप्रोक्षणं कर्मैकसम्बन्धात् । एवं साङ्गं स्वधावाचनं पात्रस्थार्घसंस्रवमोचनं न्युब्जपात्रोत्तानकरणं च ।

अपसव्यं ततः कृत्वा पिण्डपार्श्वे समाहितः ॥
क्षिप्त्वा दर्भपवित्राणि मोचयेत्संस्रवांस्ततः ।

---

(१) 'ग्राह्यं' च पुस्तके ।

इति अत्रिवचनाच्च । ततः आशीर्ग्रहणानन्तरं पिण्डपार्श्वे पिण्डार्थं कल्पिते देशे इत्यर्थः । पितृभ्यो वो जुष्टं निर्वपामि पितामहेभ्यो वो जुष्टं निर्वपामि इत्यादिमन्त्रव(१)न्निर्वपणं च पित्र्यमपि साधारणमेव, अत्र वैश्वदेविकार्थं पृथक् पाकाभावात् । यस्तु—

पित्रर्थं निर्वपेत् पाकं वैश्वदेवार्थमेव च ।

इति पृथक् पाकः, स पञ्चमहायज्ञान्तर्गतवैश्वदेवार्थं इत्यग्रे स्फुटम्। एवं श्राद्धार्हद्रव्याणां श्राद्धदेशं प्रत्याहरणम् ॥

आहरेदपसव्येन सर्वं दक्षिणतः शनैः ।

इति मत्स्यपुराणात् । एवं द्रव्यप्रोक्षणमपि । एवमधिकारसम्पद्वाचनम् । ननु "जयाशीः स्वस्तिवाचनम्" इति विधानाद्यज्ञोपवीतं स्यात् अस्याशीरूपत्वादिति चेत् ? न आशीर्हि अभ्यर्थना । नचेदमाशीः किन्तु कर्मस्वरूपसम्पत्त्यर्थं वाक्यमात्रम् । एवमेव पैतृकाभ्यर्चनपिण्डदानश्राद्धानां सम्पूर्णताभ्यर्थनं पित्र्यब्राह्मणेषु स(२)ङ्कल्पसिद्धिवाचनम् । अ(३)च्छिद्रवाचनं च नाशीरिति तत्राप्यपसव्यमेव । एवं गोमयगोमूत्रोपालेपा उल्मुकपरिभ्रमणकुशयवतिलविकिरणाद्यः श्राद्धसंस्काराश्च—( (४)एवं देशकालसङ्कीर्त्तनादि 'युष्मदनुज्ञया करिष्ये' इत्यादि वाक्यं तत्पूर्वभाविजपश्च;

अपसव्यं ततः कृत्वा जप्त्वा मन्त्रं तु वैष्णवम् ।
गायत्रीं प्रणवं वापि ततः श्राद्धमुपक्रमेत् ॥

इति प्रचेतोवचनात् । ततः ब्राह्मणानुपवेश्य प्राणायामानन्तरम् उपक्रमेत् सङ्कल्पयेत् । एवं ब्राह्मणभोजनप्रागुत्तरकालीनो गायत्रीमधुमत्यादिजपः सर्वोऽपि "भुक्त्वा यस्त्वश्नतां जपः" इत्यनेन भोजनकालीनजप एव, प्राचीनावीतापवादवचनानामुपसंहारात् ।

(१) 'न्निर्वापमेव पणं च' च पुस्तके ।
(२) 'सङ्कल्पमिति वा वचनं' ङ पुस्तके ।
(३) 'अच्छिद्र वा वचनं' ङ पुस्तके ।
(४) कंसान्तर्गतं नास्ति ङ पुस्तके ।

एवं 'तृप्ताः स्थ' इति प्रश्नः, शेषान्नविनियोगाश्च। एवं ब्राह्मणानुव्रजनम्। एवं जान्वालम्भादि नियमश्रावणान्तं विप्रनिमन्त्रणं दैवं यज्ञोपवीतिना,

सव्येन वैश्वदेवार्थान् प्रणिपत्य निमन्त्रयेत्।

इति प्रचेतोवचनाच्च। पित्र्यं च प्राचीनावीतिना,

कृतापसव्यः पूर्वेद्युः पितृपूर्वं निमन्त्रयेत्।

इति तेनैवोक्तेश्च। पुनर्निमन्त्रणद्वयं च दैवपित्र्यविभागेन सव्यापसव्येनैव "यथा प्रथममेवं द्वितीयमेवं तृतीयम्" इत्यापस्तम्बवचनात्। एवं दैवपित्र्याणि मण्डलकरणतदर्चनब्राह्मणचरणक्षालनतदर्चनार्घ्यदानानि दैवपित्र्यपादक्षालनार्चनाद्युपयुक्तद्रव्यप्रतिपत्तिरपि। एवम्--

ऋजून् सव्येन वै दत्वा दैवे दर्भान् प्रदक्षिणम्।

द्वि) गुणानपसव्येन दद्यात् पित्र्येऽपसव्यवत्॥

इति बृहस्पतिना दर्भासनं वैश्वदेविकं यज्ञोपवीतिना, पित्र्यं च प्राचीनावीतिना दर्शितम्। अत्र सव्यापसव्यशब्दाभ्यां यज्ञोपवीतप्राचीनावीतयोः प्रदक्षिणापसव्यशब्दाभ्यां च प्रादक्षिण्याप्रादक्षिण्ययोरिति नाभेदः। दर्भानिति दर्भासनम्। तच्चासनोपकल्पनं तत्र द्विजपादयोरधश्च कुशयवादिनिधानं द्विजोपवेशनं चेति। (१)( दैवे। पित्र्ये तु आसनोपकल्पनं द्विजपादयोरधश्च कुशतिलादिनिधानं द्विजोपवेशनं चेति।) एतच्च यज्ञोपवीतं दर्भासनादि आच्छादनदानान्तवैश्वदेविकपदार्थेषु द्रष्टव्यम्;

अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम्।

द्विगुणांस्तु कुशान् कृत्वा ह्युशन्तस्त्वेत्यृचा पितॄन्॥

"आवाहयेत्" इति याज्ञवल्क्येन दर्भासनदानाद्याच्छादनान्तवैश्वदेविकपदार्थकाण्डं समाप्यैव प्राचीनावीतोपदेशात्। एवं

---

(१) कंसान्तर्गतं नास्ति ङ० पुस्तके।

भाजनदीपिकादिस्थापनं पङ्क्तिभेदार्थं भस्मादिना मर्यादाकरणं भाजनक्षालनं करशोधनं तदुदकप्रतिपत्तिः भाजनेष्वाज्योपस्तरणं पात्रालम्भनाङ्गुष्ठनिवेशनान्नत्यागभोजनप्रैषाः अक्षय्योदकदानं भोजनपात्रचालनं च दैवपित्र्यभेदेन सव्यापसव्यविभागेन । अतिथेस्तु निमन्त्रणादि एतदन्तं सर्वं यज्ञोपवीतेन । अग्नौकरणे तु अनुज्ञाऽभ्यर्थनात् प्रभृति कातीयानां प्राचीनावीतम् आश्वलायनानां तु अनुज्ञाऽभ्यर्थनात् प्रभृति तदुत्तरपदार्थप्रभृति वा । अथवा सर्वेषामेवादितः प्राचीनावीतमुपवीतं वा "अनुज्ञाऽभ्यर्थनात् प्रभृति पर्युक्षणान्तं यज्ञोपवीतिना कृत्वा प्राचीनावीतं कार्यम्" इति मात्स्यानुसारिणः । हुतशे(१)षप्रतिपत्तिश्च प्राचीनावीतिनैव,

> हुत्वाग्नौ परिशेषं तु पितृपात्रेष्वनन्तरम् ।
> निवेद्यैवापसव्येन परिवेषणमाचरेत् ॥

इति शौनकोक्तेः । अत्रापसव्येनेत्यस्य न परिवेषणेन सम्बन्धः,

> अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति ।
> विष्ठामश्नन्ति पितरः तेन सर्वे द्विजोत्तमाः ॥

इति कार्ष्णाजिनिना निन्दाश्रवणात् । (२)("पिण्डांस्तु गोत्रपित्र्येभ्यः" इति प्रतिपत्तिस्तु पित्र्यैव, तत्सम्बन्धसत्त्वादिति दिक् ) ।

अथ लौकिकं यथा व्रीह्यादिक्रयकृषिप्रतिग्रहादि । न च पितृपाकसाधनस्य व्रीह्यादेः क्रयादिपितृसम्बन्धितया पित्र्यमिति तत्र प्राचीनावीतं स्यात् । अत्रोक्तं श्राद्धसागरे—यद्यपि पित्र्यसम्बन्धि पित्र्यं तथापि विहितमेव पित्र्यं ग्राह्यम् । एवं पितृकर्मेति कर्मशब्देनापि । किञ्च—

> प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
> पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ॥

(१) 'शिष्टं' 'च' पुस्तके । (२) कंसान्तर्गतं नास्ति 'च'० ।

इति मनुवचने विधिवत्पित्र्यमिति योजनया विहितपित्र्यं लभ्यते । नच क्रयादयो विहिताः । विहितव्रीह्यादिसिद्धिकरत्वात्तु ते प्रयोगानन्तःपातित्वाच्च यदा कदाचिदपि कर्त्तव्याः । अतः क्रयादि लौकिकम् । एवं दर्भच्छेदो गृहं प्रत्याहरणं च अविधानादेवावघातनिष्पवनफलीकरणसंयवनादि । नच स्थालीपाक इवावघातादेरतिदेशतः प्राप्तिरिति वाच्यं, धान्यस्यानिर्वापात्--

अग्निमान्निर्वपेत् पैत्रं पाकं चासममुष्टिभिः ।
पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत् ॥

इति वचने पाकसंकथनात्तत्साधनस्य तण्डुलावस्थस्यैव निर्वापोक्त्या धान्यावस्थस्य बाधात् । अग्निमानिति तु साग्निके निर्वापो नियम्यते । एवं वस्त्रशौचादि, दैवपित्र्ययोरपेक्षणीयतयाऽर्थतः प्राप्तस्य तस्य कालमात्रविधानात् । एवं वरुणस्तुत्यादिपूर्वकजलाहरणमपि, सर्वार्थत्वात् । एवमुपहतानुपहतभाण्डादिशौचमपि, तमकृत्वा तादृशभाण्डैः श्राद्धपाकादि कुर्वतः प्रत्यवायापत्तेः तस्य नियमतो यजमानकर्तृकत्वाभावाच्च । अत एव श्राद्धभूम्युपलेपनादि च शुचित्वविशिष्टश्राद्धदेशविधेरर्थप्राप्तानुवादत्वाच्च । एवं निमन्त्रणाय सुतशिष्यादिप्रेरणमादरार्थं निमन्त्रणीयस्थानोपसर्पणं च, लोकतः प्राप्तस्यैवाप्रमादार्थमनुवादात् । एवं मनोवाक्कायशुद्ध्यर्थमिष्टदेवतासंकीर्तनप्राणायामादि, श्राद्धानङ्गत्वात् । एवं--

निरामिषं सकृद् भुक्त्वा भुक्तसर्वजने गृहे ।
निमन्त्रयीत पूर्वेद्युरुपगम्य द्विजोत्तमान् ॥

इति पूर्वेद्युर्निमन्त्रणाङ्गं भोजनं, रागतः प्राप्तेरविधेयत्वात् । नच तदाश्रितो निरामिषत्वादिनियमो विधेय इति तस्य पित्र्यङ्गत्वात्तद्विशिष्टभोजने प्राचीनावीतं दुर्वारमिति वाच्यं, भोजनं हि पुरुषार्थं, निरामिषत्वादिनियमः श्राद्धीयनिमन्त्रणार्थत्वात्क्रत्वर्थः, कर्मा-

र्थञ्च पुरुषार्थं बलीयः इति न कर्मार्थप्रयुक्तं प्राचीनावीतं, किन्तु पुरुषार्थप्रयुक्तं यज्ञोपवीतमेव । किञ्च भोजनं धर्मी, तदाश्रितो नियमस्तु धर्मः, धर्मधर्मिणोर्धर्मी बलीयानिति भोजनाश्रितं यज्ञोपवीतं युक्तम् । किञ्च "सोत्तरच्छदमन्हैव यज्ञोपवीती भुञ्जीत" इत्यापस्तम्बोक्तेर्भोजनं प्रधानं, नियमाश्रितं प्राचीनावीतं तु निमन्त्रणाङ्गत्वादप्रधानं, प्रधानाप्रधानयोर्विशेषे प्रधानेन प्राबल्यादप्रधानं प्राचीनावीतं बाध्यते । किञ्च पित्र्यत्वेन प्राचीनावीतप्राप्तौ—

कृतापसव्यः पूर्वेद्युः पितृपूर्वं निमन्त्रयेत् ।

इति सङ्कल्पप्रभृतिनिमन्त्रणे पुनर्विधानात् तत् पूर्वकृत्ये निरामिषभोजनादौ प्राचीनावीतं परिसंख्यायते । एवं ब्रह्मचर्यादिनियमपालनं यद्यपि तच्छ्राद्धार्थत्वेन विहितत्वात् पित्र्यमिव भासते तथापि यज्ञोपवीतधर्मकदैवमानुषानेककार्यसङ्कीर्णत्वात् "भूयसा स्यात्सधर्मत्वात्" इति न्यायेन लौकिकम् । एवं श्राद्धभूम्युपलेपनपाकभूम्युपलेपनप्रोक्षणोल्मुकोपनयनतिलसर्षपावकिरणब्राह्मणवन्दनादासनीयापासनभाण्डादिमेलनक्षालनतण्डुलाद्यधिश्रयणाधःश्रपणावस्रावणोद्वासनादीनि, दैवपित्र्यसाधारणानामपि तेषां पत्न्यादिभिः सुकरतया यजमानैककर्तृकत्वाभावात् । एवं ब्राह्मणनखरोमकर्तृकदन्तधावनकाष्ठादि तैलामलकादिस्नानार्थद्रव्यप्रापणानि, दैवपित्र्यशून्यत्वात् । एवं निरुक्तकर्माङ्गस्नानयोस्तन्त्रेणानुष्ठाने स्नानम्, विरुद्धयोर्यज्ञोपवीतप्राचीनावीतयोरन्यतरस्मिन् हेये आगन्तुकस्य प्राचीनावीतस्यैव हेयत्वौचित्यात् । ननु कर्माङ्गस्नानं नित्यस्नानविकृतिः । तथाच कर्माङ्गस्नाने औपदेशिकेनापसव्येनातिदेशिकं यज्ञोपवीतं बाध्येत । एवञ्च पृथगनुष्ठीयमाने कर्माङ्गस्नाने पुनरपसव्यं स्यात् ? न स्यात् ! यतः पित्र्यमानिधनादिति वाक्येन स्नानादावपसव्यं विधीयते । प्रेतस्नानमपि पित्र्यं प्रेतक्रियायाः पितृमेधशब्दितत्वात् । ततश्च तत्रापसव्ये सिद्धे मरणे

तु यथावृद्धं पुरस्कृत्य यज्ञोपवीतान्यपेशलानि कृत्वा तीर्थमवतीर्य सकृन्निमज्योन्मज्येति बौधायनेन प्रेतस्नानेऽपसव्यपरिसंख्यानान्न तदितरपार्वणश्राद्धादिकर्माङ्गस्नानेऽपसव्यम् । यदि च दर्शश्राद्धं प्रकृत्य मानवं वचनमुक्तमिति न प्रेतस्नाने प्रवर्तते इति मन्यते तदा "प्राचीनावीतं पितृणाम्" इति वैदिकलिङ्गदर्शनात्सामान्यतः पित्र्यमात्रे प्राचीनावीतप्राप्तिरस्त्येव । एवं पित्र्यकर्मार्थस्नानाङ्गाचमनमपि । "यज्ञोपवीती स्नायात्" इति सेतिकर्तव्यताके स्नाने यज्ञोपवीतविधानात् । एवं श्राद्धारम्भब्राह्मणपादशौचार्चनविकिरपिण्डदानश्राद्धान्तेषु कर्माङ्गमाचमनमपि । अत एव यज्ञोपवीतं प्रकृत्य गौतमः—"यज्ञोपवीत्यामणिबन्धनात् पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशस्त्रिचतुर्वा अप आचामेत्" इति । ननु गौतमं सामान्यवचनं "पित्र्यं प्राचीनावीतिना कार्यम्" इति विशेषेण बाध्येतेति चेत् ? न, पित्र्यमिति तद्धितश्रुत्या हि पितृसम्बन्धितया विहितं कर्माभिधीयते । तच्च किञ्चित्साक्षात् पितृसम्बन्धितया विहितं पित्र्यविप्रगन्धदानादि, किञ्चित्तु पित्र्यकर्माङ्गत्वात् पित्र्यं पाकप्रोक्षणादि । तत्राचमने साक्षान्न पितृसम्बन्धः, किन्तु प्रकरणावगताङ्गत्वानुसन्धानात्स इति तत्र प्राचीनावीतशास्त्रं विलम्बते, झटिति यज्ञोपवीतशास्त्रमेव प्रवर्तते; पश्चात्प्राप्तवता प्राचीनावीतशास्त्रेणाचमनातिरिक्तविषये सावकाशेन बाधायोगाच्च । दक्षिणामुखत्वं तु कार्यम्, आचमनाधिकारे—

प्रथमं प्राङ्मुखं स्थित्वा पादौ प्रक्षालयेच्छनैः ।
उदङ्मुखस्तु दैवत्ये पैतृके दक्षिणामुखः ॥

इति देवलोक्तेः । यत्तु मध्ये क्षुतादिनिमित्तमाचमनं तत्कर्मानङ्गम् । ननु तस्यापि कर्मवैगुण्यहेत्वशुचित्वनिवृत्तिद्वारा साद्गुण्यापादकशुचित्वजननद्वारा वा कर्माङ्गत्वं दुर्वारम् । तथाचोक्तं—

वेदं कृत्वा यदा वेदिमकृत्वाचमति क्षुते ।

वेदिमेव करोतीति स वक्तुं शक्यते तदा ॥

इतिचेत् ? न, "शुचिना कर्म कर्तव्यम्" इति शुद्धिः कर्माङ्गम्। सा च पुरुषार्थेनाचमनेन निष्पाद्यमाना क्रतुनापि सम्बध्यते। कारिका त्वाचमनं न व्यवधायकमित्येतत्परा,

वेदिरेव ह्यनाचम्य कुर्वतो विगुणीभवेत्।
तामेव सगुणीकर्तुं शुध्द्या न व्यवधास्यते ॥

इत्युक्तेः। एवञ्चेदं शुध्द्यर्थतया लौकिकम्।

विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ॥

इति शङ्खोक्तिश्च तत्र प्राचीनावीतनिवर्तिका। एवञ्चाशुचित्वापादकनिमित्तप्रयुक्ताचमनं तु सुतरां लौकिकमिति सर्वमनवद्यम् एवं ब्राह्मणाव्हानमपि। ब्राह्मणानाहूयेत्यर्थः, प्राप्तस्यैवानुवादात्। (१)( एवं प्रत्युत्थानस्वागतप्रश्नोपवेशनानि रथ्यारजोमार्जनार्थं पादप्रक्षालनं रथ्यापसर्पणप्रयुक्ताप्रायत्यनिवर्तकाचमनदानानि च।) एवं यजमानस्य श्राद्धभूम्यागमनातिथ्युपवेशनभूम्यादिस्तुतिदेवतास्मरणप्राणायामाश्च। एवमापोशनार्थमुदकदानं, नित्यभोजनविहितत्वात्। एवं पात्रमोचनार्थं सकृद्गण्डूषदानम्। एवम् "अघोराः पितरः सन्तु" इत्याद्याशीः "जपाशीः" इति मरीचिवचनात्। "विश्वेदेवाः प्रीयन्ताम्" इति केवलदैवम्। स्वस्तिवाचने उपवीतं, मरीचिवचनात्। एवं ब्राह्मणदत्तपुष्पाक्षतग्रहणादि। "अद्य मे सफलं जन्म" इत्यादिप्रियभाषणब्राह्मणचरणसंवाहनस्वस्थानगमनार्थानुज्ञापनसीमान्तगमनानि प्रस्थाप्यमानविशिष्टपुरुषसत्कृतिरूपतया लौकिकानि। एवमुच्छिष्टोद्वासनं यजमानकर्तृकं पत्न्यै पिण्डदानं च, पितृसम्बन्धराहित्यात्। स्वजनकर्तृकं यजमानकर्तृकं वा शेषान्नभोजनं श्राद्धोपकारकमपि पञ्च-

---

( १ ) धनुश्चिन्हान्तर्गतं नास्ति च०।

अनुपनीतस्त्रीशूद्रादेस्तूत्तरीयेणैव सव्यापसव्ये ज्ञेये, तस्योपवीतस्थानीयत्वात्;

अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः ।

इति ब्राह्मोक्तेति वाचस्पतिः । यत्तु केचित् 'सदोपवीतिना भाव्यम्' इत्यस्य *पुरुषार्थत्वात् प्राचीनावीतकालेऽप्यु*पवीतान्तरेण तत्का(१)र्यमेवेति । तन्न, *वि(२)महायज्ञव्यवहितत्वात् प्रयोगबहिर्भावात् लौकिकमेवेति दिक् ।

*पुरुषार्थत्वादिति ।

विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

इति तस्य कर्मार्थत्वोक्तेरिति भावः *उपवीतान्तरेणेति । शूद्रस्य --

न शिखी नोपवीती स्यान्नोच्चरेत्संस्कृतां गिरम् ॥

इति निषेधेऽपि कर्मार्थमुपवीतमावश्यकं "विशिखो व्युपवीतश्च" इति वचनादित्यर्थः । *विशेषेणेति । 'वस्त्रं कृत्वा' इति । विशेषेणेत्यर्थः । "नोपवीती स्यात्" इति सामान्यतः कर्मार्थपुरुषार्थोपवीतनिषेधात्तदप्राप्तौ अपूर्वमुत्तरीयापसव्यं बोध्यते इति तु द्रष्टव्यम् । यज्ञोपवीतान्तरेणेति द्विजस्य कर्मार्थोपवीतेनेत्यर्थः "विशिखः" इत्युक्तेः । विशेषेणेति । प्राचीनावीतेनेत्यर्थः । पुरुषार्थस्यैवोपवीतस्य कर्मार्थत्वं "विशिखः" इत्यनेन बोध्यते । "नानृतं वदेत्" इति पुरुषार्थनिषेधे दर्शपूर्णमासप्रकरणे पुनः "नानृतं वदेत्" इति अनृतवदनवर्जनवत् । प्राचीनावीतेन कर्मार्थेन कर्मार्थं पुरुषार्थं चोपवीतं बाध्यते इति भावः । नचैवं जीवत्पितृकस्यात्यावश्यके पित्र्येऽपि यज्ञोपवीतापत्तिः,

न कुर्वीतापसव्यं च न कुर्वीतापि मुण्डनम् ॥

इति वृद्धगार्ग्येण निषेधादिति वाच्यं, तस्य पूर्णापसव्यनिषेधात्,

---

(१) 'तत्कार्यमिति' क० ।　　(२) 'विशेषबाधात्' ग० ।

शेषेण बाधात् । जमदग्निः—

***सू(१)क्तस्तोत्रजपं त्यक्त्वा *पिण्डाघ्राणं च दक्षिणाम् ।**

---

अपसव्यं द्विजाग्र्याणां पित्र्ये पूर्वत्र कीर्तितम् ।
आप्रकोष्ठात्तु कर्तव्यं मातापित्रोस्तु जीवतोः ॥

इति वाक्येन प्रकोष्ठादुपरि तन्निषेधपर्यवसानात् । मातेत्यतन्त्रम् । उत्तरीयापसव्यमाह शङ्खः—"अपसव्ये वासोयज्ञोपवीते कृत्वा" इति । क्वचित्प्राचीनावीतापवादमाह—*सूक्तेति । सूक्तजपः भुञ्जानेषु विप्रेषु पित्र्यसूक्तजपः ।

प्रदक्षिणं शिवा आपो जपाशीः स्वस्तिवाचनम् ।
विप्रेषु दक्षिणादानं षट् सव्यानि प्रचक्षते ॥

इति मरीच्युक्तेः । प्रदक्षिणं विसर्जनानन्तरं बहिर्निर्गत्य मण्डलोपरि स्थितानां ब्राह्मणानां प्रदक्षिणीकरणम् । शिवा आप इति । अनेन "शिवा आपः सन्तु" इत्यादिना क्रियमाणं जलकुसुमाक्षतक्षेपरूपं कर्म । अदृष्टार्थं मंत्राद्युच्चारणं जपः । आशीः "दातारो नोऽभिवर्धन्ताम्" इति, "अघोराः पितरः सन्तु" "गोत्रं वर्धन्ताम्" इत्यादिका । स्वस्तिवाचनं "स्वस्ति भवन्तो ब्रुवन्तु" इति वाचनम् । दक्षिणादानं पित्राद्युद्देशमन्तरेण ब्राह्मणानामानत्यर्थत्वपक्षे ।

सर्वं कर्मापसव्येन यत्किञ्चिदिह कीर्तितम् ।
विहाय दक्षिणामेकां तथा विप्रविसर्जनम् ॥

इति मरीचिवचनेऽपि एतदेव । पितृभ्य एव दानमिति पक्षे त्वपसव्येन । "हिरण्यं देवेभ्यो ददाति रजतं पितृभ्योऽपसव्यं तत्रापि" इति पारस्करवचनात् । एतानि सव्येनैव कर्तव्यानीत्यर्थः । नतु "सहस्रशीर्षा" इत्यादिजपः, आधिकारार्थतया ब्रह्मदण्डवल्लौकिकत्वात् । नापि भोजनप्रागुत्तरकालीनो गायत्री-

---

(१) 'सूक्तम' ग० ।

आह्वानं स्वागतं चा*र्घ्यं विना च परिवेषणम् ॥
*विसर्जनं *सौमनस्यमाशिषां प्रार्थनं तथा ।
विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना ॥
पितॄनुद्दिश्य कर्तव्यं प्राचीनावीतिना सदा ॥

हेमाद्रौ सङ्ग्रहे—

आदौ *विप्राङ्घ्रिशौचान्तेऽभ्यर्चने विकिरे कृते ।
पिण्डान्न्युप्यार्चयित्वा च विसर्ज्य ब्राह्मणांस्तथा ॥
आचामेच्छ्राद्धकर्ता च स्थानेष्वेतेषु सप्तसु ।
आद्यन्तयोर्द्विराचामेच्छेषेषु तु सकृत्सकृत् ॥

---

मधुमत्यादिजपः,

कृतापसव्यः कुर्वीत भुक्त्वा यस्त्वश्नतां जपः ।

इति वृद्धशातातपेनापसव्योक्तेः । अश्नतामिति विप्रभोजनोत्तरकालीनलाभः । स्तोत्रजपः "सप्तव्याधा" इत्यादिः । *पिण्डाघ्राणं पिण्डचालनोत्तरं क्रियमाणं तदाघ्राणम् । आह्वानस्वागते लौकिके एवेति न तत्रापसव्यप्राप्तिरित्येके; साधारण्यात् तत्प्राप्तिरित्यन्ये ।*अर्घ्यं गृहागतेभ्यो विप्रेभ्यः पाद्योत्तरं दीयमानमर्घ्यम् । तत्र साधारण्यात् प्राप्तिः । नत्वर्चनाङ्गं तत् । तस्य काण्डान्तःपातित्वात् । *विसर्जनम् "वाजेवाजे" इति विसर्जनम् । *सौमनस्यं "शिवा आपः सन्तु" इत्यादि । अत्र कर्कः आचान्तेषूदकपुष्पाक्षतदानं दैवपूर्वं ततोऽपसव्यं पित्र्ये । केचित्तु सव्यमिच्छन्ति, तत्र दानसंयोगात् । पितृयज्ञवदुपचारः पित्र्ये इति च दर्शनादिति । तदसत्, एतद्वचनविरोधात् । पूर्वोक्त मरीचिवचनविरोधात् पित्राद्युद्देशमन्तरेण क्रियमाणत्वाच्च ।

ततः पुष्पाणि सव्येन सोदकानि पृथक् पृथक् ।
दर्भपाणिः प्रदद्यात्तु वाङ्मनःकायसंयतः ॥

इति छागलेनोक्तेश्च । *विप्रान्ति दैवे । पित्र्ये तु आचमन-

तत्रैव—

आद्धारम्भेऽवसाने च पादशौचार्चनान्तयोः ।
विकिरे पिण्डदाने च षट्स्वाचमनमिष्यते ॥

आश्वलायनः—

दानाध्ययनदेवार्चाजपहोमव्रतादिकान् ।
न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात् ॥

एतन्नित्यवर्ज्यमिति बोपदेवः । इदं विष्णुभिन्नदेवपरम्,

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय क(१)ल्पते ॥
पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ॥

इति स्कान्दात् 'पितरः स(२)र्वमनुष्या विष्णुनाशितमन्नमश्नन्ति' इति श्रुतेः,

यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डांस्तुलसीविमिश्रानाकल्पकोटिं पितरस्तु तृप्ताः ॥

इति ब्राह्मोक्तेश्चेति श्रीधरस्वामिनृसिंहपरिचर्यादयः । एतत्सर्वं निबन्धविरोधान्निर्मूलम् ।

अत्र विशेषो हेमाद्रौ विष्णुधर्मे—

श्राद्धाहि तु समभ्यर्च्य नृवराहं जनार्दनम् ।

शिवपुराणे—

पूजयित्वा शिवं भक्त्या पितृश्राद्धं प्रकल्पयेत् ।

पूर्वनिषेधस्तु विहितभिन्नपरः । तथा हेमाद्रौ—

(३)देवार्चा दक्षिणाङ्गादिः पादजान्वंसमूर्धसु ।
शिरोंसजानुपादेषु वामाङ्गादि च पैतृ(४)के ॥

(१) 'कल्पयते' क० छ० । (२) 'सर्वे' ग० ।
(३) 'दैव्यर्चा' क० । (४) 'पैतृकम्' ग० ।

कलिकायां स्मृत्यन्तरे—

*श्राद्धारम्भे तु (१)ये दर्भाः पादशौचे विसर्जयेत् ।
अर्चनादौ तु ये दर्भा उच्छिष्टान्ते विसर्जयेत् ॥
मार्जनादौ तु ये दर्भाः पिण्डोत्थाने विसर्जयेत् ।
उत्तानादौ तु ये दर्भा दक्षिणान्ते विसर्जयेत् ॥
प्रार्थनादौ तु ये दर्भा नमस्कारे विसर्जयेत् ।

ऊहमाह विष्णुः—

*मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥

*यथान्यायमिति । *यत्र बहुवचनान्तः पितृशब्दस्तत्र *सर्वपितृवाचित्वान्नोहः । तत्रापि*'शुन्धन्तां द्वयं वक्ष्यति । *श्राद्धारम्भे चेति ।

आचान्तः प्राक्कुशांस्त्यक्त्वा पाणावन्यांश्च धारयेत् ।

इति श्राद्धारम्भे उक्ता बोध्याः ।

आतिदेशिकस्य मन्त्रसंस्कारान्यतरस्यान्यथाभाव ऊहः साम्नः प्रयोजनाभावान्नोद्देशः । *मातामहानामप्येवमिति । ननु नायमतिदेशः । तथा सति तन्मात्रेणोहे सिद्धे मन्त्रोहेनेत्यस्य वैयर्थ्यादिति चेत् ? सत्यम् । अस्ति च—

मातामहानामप्येवं तन्त्र वा वैश्वदेविकम् ।

इति पितृपार्वणातिदेशेन मातामहपार्वणे धर्मप्राप्तौ अपूर्वप्रयुक्तत्वान्मत्राणामूहः । तस्य न्यायप्राप्तत्वं व्युत्पादयति—*यथान्यायमित्यादिना । *यत्र "एतद्वः पितरो वासो" "अमीमदन्त पितरो यथाभागम्" इत्यादौ । *सर्वेति—

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
ततः प्रभृति वै प्रेतः [illegible] ॥

(१) 'च' क० छ० ।

पितरः' इत्यत्रोह एव; *सर्वपितृवाचित्वे उत्तरमन्त्रद्वयवैयर्थ्यात् । *बहुवचनं तु नोह्यते, प्रकृतावसमर्थत्वात् *पाशानिनिवत् । *ऋगन्ते च नोहः, *'तस्माद्दचं

---

इति दर्शनात्;

षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।
पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥

इति मातामहपितामहादिसाधारण्येन प्रयोगाच्च । तन्मन्त्रेषु सापिण्डीकरणान्तश्राद्धजन्यपितृत्वेन मातामहसाधारणार्थतया समवेतार्थत्वादित्यर्थः । *शुन्धन्तामिति जनकत्वोपाधिना ह्ययं पितृशब्दः प्रयुक्तः । "पिता यस्य तु वृत्तः स्यात्" इत्यादिवत् । नन्वयमप्यस्तु सपिण्डनान्तश्राद्धजन्यपितृत्वेनोपाधिना प्रयुक्त इत्यत आह *सर्वेति । शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति पितामहप्रपितामहशब्दयोरुपादानेन पितृशब्दो जनकपर एव । अन्यथा तन्मन्त्रद्वयं व्यर्थं स्यादित्यर्थः । एवञ्च 'शुन्धन्तां मातामहाः" इत्यादि "शुन्धन्तां मातरः" इत्यादिरूहः । येषां च "पितृभ्यः स्वधोच्यतां, पितामहेभ्यः स्वधोच्यतां, प्रपितामहेभ्यः स्वधोच्यताम्" इति शुन्धनमन्त्रास्तेषामप्युक्तन्यायादेवोहः । ननु प्रकृतौ एकस्मिन् पितरि बहुवचनस्यासमवेतार्थत्वाद्विकृतावेकवचनस्याप्यूहप्रसङ्ग इत्याह —*बह्विति । *पाशानिति । प्रकृत्यर्थसमवेतार्थकबहुवचनस्य विकृतावविकृतस्यैव प्रयोग इति पाशाधिकरणसिद्धान्त इति भावः *ऋगन्ते चेति । "पितॄन् हविषे अत्तवे आयन्तु नः पितरः" इत्यादि ऋक् । *तस्मादिति । "पुर्यान् वा एतदृचोऽक्षरं यदेनदूहति" इत्यादिः । यदि च अनूहवन् यथाम्नातमित्युक्तत्वादेव ऋगूहस्य वारणं तदापि निषेधोऽपि द्रष्टव्य इत्यर्थः । नन्वृचि अनृचि वा जनकपरोऽपि पितृशब्दः बहुवचनेन पितृपर्युदासे वर्ततां "प्राणदुर्भूपदधाति"

नोहेत्' इति निषेधात् । *एकोद्दिष्टेऽप्येवम् । प्रेतैकोद्दिष्टे तु *'एकवन्मन्त्रानूहेतैकोद्दिष्टे' इति विष्णूक्तेरूहः ।

---

इत्यत्रैव लिङ्गसमवायात् प्राणभृच्छब्दः प्राणभृदप्राणभृत्समुदाये । तादृशस्य च विकृतौ मातामहादिश्राद्धेऽसमर्थत्वात्प्रकृतिवदेव मातामहमातुःपितामहमातुःप्रपितामहेषु 'मातामहा' इत्यूहः । ऋङ्मन्त्रे तु वचनात्तन्निषेधश्चेति ? मैवं, नानार्थो हि पितृशब्दः तत्र जनकपरत्वोपगमे गौणी स्यादतः तादृशपितृत्वापन्नपर एव गृह्यते । तथा सति बहुवचनस्याप्यनायासेनोपपत्तिः । एवञ्च प्रकृतौ यादृशः शास्त्रार्थस्तादृश एव विकृताविति नोहप्रसङ्गः । ननु "पितरेतत्तेऽर्घ्यम्" इत्यादौ ऊहानूहविचारो न स्यात् , एतस्याभिलापमात्रत्वेन मन्त्रत्वाभावात् । अन्यथा शूद्रादेर्मन्त्रनिषेधात्तदुच्चारानापत्तेरिति चेत् ? नैवमपचीयते किञ्चिदस्माकम् , पितामहादौ पितामहेदं तेऽर्घ्यमित्यादि समवेतार्थाभिलापस्य दुर्वाररत्वात् । न च तत्र "पितरिदं तेऽर्घ्यम्" इत्याद्यपि समवेतार्थम् । "अर्घ्यप्रदानमन्त्रे तु" इत्यादिबह्वृचकारिकादिदर्शनेन तत्र स्वसम्बन्धवचनस्यावश्यकत्वेन चातथाभूतसापिण्डनश्राद्धजन्यपितृपरपितृशब्दानभिलापस्य समस्तधार्मिकसंमतत्वात् । *एकोद्दिष्टेऽप्येवमिति । पुराणैकोद्दिष्टे नोहः, तस्य पार्वणवदेव कर्तव्यत्वादित्यर्थः । *एकवदिति । एकोद्दिष्टे प्रेतैकोद्दिष्टे पितृपदघटितान् मन्त्रान् पितृपदस्थाने प्रेतपदघटितान् कुर्यादित्यर्थः । वचनादिति । "एकवत्" इतिवचनादित्यर्थः । वस्तुतस्तु इदं प्राचीनमतं न सम्यक् । एतद्वाक्यस्य प्रेतैकोद्दिष्टविषयत्वे मानाभावेन प्रेतशब्दोहाप्रतीतेः । किन्त्विदं प्रेतपुराणैकोद्दिष्टसाधारणम् , एकोद्दिष्ट इति सामान्यत एवाभिधानात् । ग्रन्थस्त्वित्थं योजनीयः एकोद्दिष्टे "शेषं पूर्ववदाचरेत्" इति पार्वणातिदेशात् "पितृनिमान् लोकान्" इत्याद्यृक्षु "शुन्धन्तां पितरः" इत्याद्यनृक्षु च प्राप्त ऊहः प्रथमे 'त-

*अत्र*बहुवचनस्याप्यूहो *वचनात्। वृद्ध्यादौ तु*विशेषं स्मादिचं नोहेत्' इति निषेधादन्त्ये न्यायाद्बाधितो विष्णुना प्रतिप्रसूयते। एकोद्दिष्टे श्राद्धे क्षयाहादौ क्रियमाणे मन्त्रानेकत्र यथा भवति तथा ऊहेतेति हि तदर्थः। एवञ्च पुराणैकोद्दिष्टे सर्व-पितृवाचिनः पितृशब्दस्य नोह इत्याह-एकोद्दिष्टेऽप्येवमिति। पुराणैकोद्दिष्टे सर्वपितृवाचिनः पितृशब्दस्य नोह इत्यर्थः। प्रेतै-कोद्दिष्टे त्विति। "पितृशब्दं न युञ्जीत" इत्याश्वलायनेन पि-तृशब्दस्य निवर्तितत्वात्। पितृशब्दस्येति शेषः। तस्योह इति पदेन सम्बन्धः। उभयत्राप्येकवचनोहमाह-एकवदिति। तथाच पुराणैकोद्दिष्टे ऋक्षु अनृक्षु चोह इत्यर्थः। *अत्र प्रेतैकोद्दिष्टे। *बहुवचनस्यापीति। अपिना पितृशब्दसमुच्चयः। तथाच "एत-द्वः पितरः" इत्यादौ "एतत्ते प्रेत" इत्याद्यप्यूह इत्यर्थः। *वच-नात् विष्णुवचनादाश्वलायनवचनाच्चेत्यर्थः।

वाजपेयिनस्तु यथाशौचापगमे सुस्नात इत्याद्यभिधाय वि-ष्णुना बहुवचनान्तपितृशब्दोपेतेषु मन्त्रेषु एकवचनोह उक्तः। स ऐकादशाहिके सपिण्डनप्रागभाविनि वा एकोद्दिष्टे न प्रवर्तेत तदा-नीमुक्तपितृत्वासत्त्वेन तद्वाचिपितृपदोपेतमन्त्राणां तत्राप्रवृत्तेः। नच मन्त्रे पितृशब्दो जनकपरः, बहुत्वान्वयार्थं पितामहादौ लक्ष-णापत्तेः। एकेन पितृत्वेन (१)सर्वेषु मुख्यत्वोपपत्तौ तस्या अ-न्याय्यत्वात्। नच शुन्धनमन्त्रे जनकवाचिपितृशब्दोत्तरबहुवचनेन ऊहो विधीयतामिति वाच्यम्। प्रेतशब्देनैवोद्देशाभिधानात्। "पितृ-शब्दं न युञ्जीत" इत्याश्वलायनेन पितृशब्दमुखेन तद्वन्मन्त्रनिषे-धाच्च। तस्मात्पुराणैकोद्दिष्ट एवोहः, एकोद्दिष्टप्रकरणपाठेऽपि वि-ष्णुना पुनरेकोद्दिष्टशब्दाभिधानात्। ऊहश्च "नमो वः पितरः" इत्यादावेव तत्र सर्वपितृपरपितृशब्दसत्त्वाद्बहुवचनस्य समवेतार्थ-

(१) 'सर्वेषु मुख्यत्वेन सर्वेषु मुख्यत्वो' ख०।

वक्ष्यामः । शेषाणामिति पितृव्याद्येकोद्दिष्टे आवाहना-
दिमन्त्रवर्ज्यं कार्यमिति कल्पतरुः । ऊहयोग्यपितृपदवान्
मन्त्र एव तत्र न प्रयोज्यः, नतूहः । नापि पितृपदर-
हितः प्रयोज्य इति शूलपाणिः । *अर्थान्तरं चोक्तं
प्राक् । बह्वृचकारिकाऽपि—

अर्घ्यप्रदानमन्त्रे तु मात्रादिपदमावपेत् ।
शुन्धन्तामिति पित्रादौ मात्रादिपदमावपेत् ॥

मातृश्राद्धे पिण्डदाने *'ये च त्वामत्रानु' इत्यत्र नोह
इति वृत्तिकृत् । तथा—

मातुःश्राद्धेऽप्यनूहेन कुर्यात्पिण्डानुमन्त्रणम् ।
दशादानमुपस्थानं तद्वत्कार्यमिति स्थितिः ॥
प्रवाहणमनूहेन तद्वत्प्राशनमिष्यते ॥

तथा—

आयन्तुनस्तिलोऽसीति उशन्तस्त्वेति यानि तु ।
अनूह्यः पितृशब्दोऽत्र पितृसामान्यवाचकः ॥

आपस्तम्बानां तु वक्ष्यते ।

---

त्वाच्च । नत्वर्घ्यपात्रेति तिलावापमन्त्रे । तत्र प्रत्येकं प्रयोगेन प्र-
कृतासमवेतार्थत्वात् । नापि—

एतद्वः पितरो वास इति जल्पन् पृथक् पृथक् ।

इति ब्रह्मपुराणोक्तपक्षे एतद्व इति मन्त्र इत्याहुः ॥

*विशेषम् "शुन्धन्तां पितरः" इत्यादौ 'शुन्धन्तां पितुः
पितरः' इत्यादिकम् । कल्पतरुशूलपाण्योर्व्याख्याने प्रमाणा-
भावमालोच्याह—*अर्थान्तरमिति । भोजस्त्रीणां शूद्रापुत्रस्य
चैकोद्दिष्टममन्त्रकं "स्त्रीणाममन्त्रकं श्राद्धम्" तथा 'शूद्रस्य च' इत्या-
दिप्रागुक्तमारीचादित्यर्थः । *ये चेति । याश्च ताभ्यश्चेति नोहः
ये च तेभ्यश्चेति पुंल्लिङ्गशेषात् ।

हेमाद्रौ मार्कण्डेयः—

स्नातः *स्नातान् समाहूतान् *स्वागतेनार्चयेत् पृथक्।

कलिकायां नारदीये —

प्रायश्चित्तविशुद्धात्मा तेभ्योनुज्ञां प्रगृह्य च ।

दद्याद्वै ब्रह्मदण्डार्थं हिरण्यं कुशमेव च ॥

तत्रैव सङ्ग्रहे—

तिथिवारादिकं ज्ञात्वा सङ्कल्प्य च यथाविधि ।

प्राचीनावीतिना कार्यं सर्वं सङ्कल्पनादिकम् ॥

सम्बन्धं प्रथमं ब्रूयान्नामगोत्रे तथैवच ।

वस्वादिरूपतां चापि स्वपितॄणामनुक्रमात् ॥

चन्द्रोदये नारदीये—

श्राद्धार्थं समनुप्रासान् विप्रान् भूयो निमन्त्रयेत् ।

आपस्तम्बस्तु 'पूर्वेद्युर्निमन्त्रणं, परेद्युर्द्वितीयं, तृतीयमामन्त्रणम्' इत्याह । यूयं मया निमन्त्रणीया इति निवेदनरूपं आद्यम् । तद्विधिमाह शौनकः—

गृहीत्वामुकसंज्ञस्यामुकगोत्रस्य चामुके ।

श्राद्धे तु वैश्वदेवार्थं करणीयः क्षणस्त्वया ॥

इत्येवं श्राद्धकृद् ब्रूयादोंतथेति वदेत्तु सः ।

श्राद्धस्य कर्ता स ब्रूयात्त्वं प्राप्नोतु भवानिति ॥

स वदेत् प्राप्नवानीति इतरस्तं प्रति द्विजः ॥

---

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।

पिण्डदः सप्तमस्तेषामिति लेपभाक्त्वस्य स्त्रीपुंससाधारण्यात् दासीदासरूपार्थाविसंवादाच्च ।

*स्नातानिति नियमः केनचित्कारणेनास्नातान्न भोजयेदित्यर्थः । *स्वागतेनेति ।

ततः स्नात्वा निवृत्तो यः प्रत्युत्थाय कृताञ्जलिः ।

देवौ पार्वणे पुरूरवार्द्रवौ वाच्यौ ।

पित्रादेरप्यनेनैव वृणीत विधिना द्विजान् ।

ततः कर्ता बह्वृचोऽनाहिताग्निः पिण्डपितृयज्ञं परिस्तरणादीध्माधानान्तं कुर्यात् । 'अग्नौधानिनोप्येवम्' इति प्रयोगपारिजाते परिशिष्टे च । भाष्यकारमते आब्दिकेऽप्येवम् । वृत्तिकारमते नेदम् ।

हेमाद्रौ शम्भुः--

*संमार्जितोपलिप्ते तु द्वारि कुर्वीत मण्डले ।
उदक्प्लवमु*दीच्यं स्याद्द*क्षिणं दक्षिणाप्लवम् ॥

व्याघ्रः—

उत्तरेऽक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत् कुशान् ।
दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेत् कुशान् ॥

तत्रैव बौधायनः—

चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम् ।
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥

तत्रैव लौगाक्षिः—

हस्तद्वयमितं कार्यं वैश्वदेविकमण्डलम् ।
दक्षिणे च चतुर्हस्तं पितॄणामङ्घ्रिशोधने ॥

कलिकायां सङ्ग्रहे तु--

प्रादेशमात्रं देवानां चतुरस्रं तु मण्डलम् ।

---

पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रमम् ॥

इति यमः कृताञ्जलिः स्वागतमित्युक्त्वाऽध्वकृतोपहतिशुध्यर्थं पादप्रक्षालनार्थमाचमनीयं चोदकं क्रमेण प्रयच्छेदित्यर्थः । *संमार्जितेति । उपलेपो गोमूत्रयुक्तगोमयेन कार्यः—

भवनस्याग्रतो भुवि ।
गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले ॥

इति मात्स्यात् । *उदीच्यं दैवम् । *दक्षिणं पित्र्यम् ।

त्यक्त्वा षडङ्गुलं तस्माद्दक्षिणे वर्तुलं तथा ॥

इत्युक्तम् । यत्तु स्मृत्यन्तरे—

गर्तः पञ्चाङ्गुलो विप्रे जानुमात्रो महीभुजि ।
प्रादेशमात्रो वैश्ये च साधिकः स तु शूद्रके ॥
तिर्यगूर्ध्वप्रमाणेन व्याख्यातो दैवपित्र्ययोः ।
चतुरस्रं वर्तुलं च कथितं गर्तलक्षणम् ॥
पादप्रक्षालनं प्रोक्तमुपवेश्यासने द्विजान् ।
तिष्ठंश्चेत् क्षालनं कुर्यान्निराशाः पितरो गताः ॥

इति, तत्समूलत्वे मण्डलाग्रे पृथक् ज्ञेयम् । तत्र गोमये हेमाद्रौ भृगुः—

अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः ।
आर्ताया नवसूताया न गोर्गोमयमाहरेत् ॥

मात्स्ये—

अक्षताभिः सपुष्पाभिस्तदभ्यर्च्या*पसव्यवत् ।
विप्राणां क्षालयेत्पादावभिवन्द्य पुनः पुनः ॥
प्रत्यङ्मुखास्थितः कुर्याद्विप्रपादाभिषेचनम् ॥

तत्रैव भविष्ये—

प्रक्षालयेद्विप्रपादान् शन्नोदे(१)वीरिति तृचा ।

पृथ्वीचन्द्रोदये वृद्धवसिष्ठः—

न कुशग्रन्थिहस्तस्तु पाद्यं दद्याद्विचक्षणः ।

कलिकायां सङ्ग्रहे—

ततः प्रक्षालयेत्पादौ भार्यास्राावितवारिणा ।

तथा—

श्राद्धकाले यदा *पत्नी वामे नीरप्रदा भवेत् ।

---

*अपसव्यवदिति । पूर्वमुदीच्यं पश्चाद्दक्षिणं तन्मण्डलमित्यर्थः ।
*पत्नी वामे इति ।

---

(१) 'देवीरित्यृचा' ग०।

आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

तत्रैव—

नाधः प्रक्षालयेत्पादौ कर्ता पित्रादिकर्मसु ॥

पाद्यानन्तरमर्घ्यमपि दद्यादिति हेमाद्रिः । तत्रैव लौगाक्षिः—

मण्डलादुत्तरे देशे दद्यादाचमनीयकम् ।

तत्रैव—

विधाय क्षालनं तेषां द्विराचमनमिष्यते ।
स्वयं चापि द्विराचामेद्विधिज्ञः श्रद्धयान्वितः ॥

हेमाद्रौ नारदीये—

यत्राचमनवारीणि पादप्रक्षालनोदकैः ।
सङ्गच्छन्ते बुधाः श्राद्धमासुरं तत्प्रचक्षते ॥

हे(१)माद्रौ व्यासः—

*सव्येनैवासनं धृत्वा दक्षिणे दक्षिणं करम् ।
व्याहृतीभिः समस्ताभिरासनेषूपवेशयेत् ॥
समाध्वमिति चैवोक्त्वा दक्षिणं जानु संस्पृशन् ।
आस्यतामिति तान्ब्रूयादासनं संस्पृशन्नपि ॥

---

सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः स्थिता ।
विप्रपादक्षालने च अभिषेके च वामतः ॥

इति वचनापवादः ।

*सव्येनैवेति ।

दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
परश्रिते शुचौ देशे गोमयेनोपलेपिते ॥
दक्षिणाप्रवणे सम्यगाचान्तान् प्रयतान् शुचीन् ।
आसनेषु विविक्तेषु सदर्भेषूपवेशयेत् ॥

---

( १ ) 'हेमाद्रौ' नास्ति क०ख० ।

(हे(१)माद्रौ शातातपः—
द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत् ।
पित्र्ये तूदङ्मुखांस्त्रींश्च बह्वृचाध्वर्युसामगान् ) ॥
याज्ञवल्क्यः—
द्वौ दैवे प्राक्त्रयः पित्र्ये उदगेकैकमेव वा ।
यत्तु हेमाद्रौ हारीतः—'दक्षिणाग्रदर्भेषु प्राङ्मुखान् ब्राह्मणान् भोजयेत् उदङ्मुखानित्येके' इति तन्मैत्रायणीयविषयम् । 'प्राङ्मुखान् भोजयेदुदङ्मुखानित्येके' इति तत्परिशिष्टात् विकल्प इति हेमाद्रिः । माधवीये यमः—
भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः *कामं तमपि भोजयेत् ॥
कौर्मे—
अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रचक्षते ।
विप्रनियमा माधवीये—
पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः ।
उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम् ॥
तत्रासनानि । पृथ्वीचन्द्रोदये यमः—
आसनं *कुतपं दद्यादितरद्वा पवित्रकम् ।
हेमाद्रौ चमत्कारखण्डे—
पितॄणां घटितं हैमं राजतं वापि चासनम् ।
येन ताम्रमयं दत्तमासनं पितृकर्माणि ॥
स वै दिव्यासनारूढो नहि प्रच्यवते दिवः ॥
हेमाद्रौ नागरखण्डे—
अयःशङ्कुमयं पीठं प्रदेयं नोपवेशने ।

*काममिति । तदनिच्छायां न दोषः । *कुतपं नेपालकम्ब-

(१) कंसान्तर्गतं नास्ति क० छ० ।

कालिकायां सङ्ग्रहे--

क्षौमं दुकूलं नैपालमाविकं दारुजं तथा ।
तार्णं पार्णं *बृसीं चैव विष्टरादि च विन्यसेत् ॥
अग्निदग्धान्यायसानि भग्नानि च विवर्जयेत् ॥

हेमाद्रौ छागलेयः--

पश्चाद्भागादुपक्रम्य *प्रा(१)चां पङ्क्तिर्यथा भवेत् ।
दक्षिणासंस्थिता ह्येषा पितॄणां श्राद्धकर्मणि ॥

पुलस्त्यः--

श्रीपर्णी वा(२)रुणी क्षीरी जम्बुकाम्रकदम्बकम् ।
सप्तमं बा(३)कुलं पीठं पितॄणां दत्तमक्षयम् ॥

सङ्ग्रहे--

शमी च काश्मरी शेलुः कदम्बो *वार(४)णस्तथा ।
पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथा ॥

( का(५)रिका--

द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रीन्विप्रानुदगाननान् ।

पैठीनसिः--

कुतपः श्राद्धवेलायां श्रोत्रियो यदि दृश्यते । )

आश्वलायनः--

नीवीवासोदशान्तेन स्वरक्षार्थं प्रबन्धयेत् ।

वृद्धयाज्ञवल्क्यस्तु--

दक्षिणे कटिदेशे तु तिलैः सह कुशत्रयम् ।

यत्तु कातीयम्--

नीवी कार्या दशागुप्तिर्वामकुक्षौ कुशैः सह । इति ।

---

*बृसी आसनविशेषः । *प्राचां प्राङ्मुखानाम् । *वारणः

---

(१) 'प्राच्याम्' ग० क० । (२) 'वारिणी' छ० ।
(३) 'वालुकम्' क० । (४) 'वारुणः' ग० ।
(५) कंसान्तर्गतं नास्ति' छ० ।

तद्वृद्धिश्राद्धे,

पितॄणां दक्षिणे पार्श्वे विपरीता तु दैविके ।

इति स्मृत्यन्तरात् । वामे दक्षिणे वेत्याचाराद्व्यवस्थेति मदनपारिजाते ।

आचार्यः—

प्राणायामत्रयं कृत्वा गायत्रीस्मरणं तथा ।

*श्राद्धं कर्तास्मीति वदेद्विप्रैर्वाच्यं कुरुष्व च ॥

ब्राह्मे—

*ततस्तिलान् गृहे तस्मिन् विकिरेच्चाप्रदक्षिणम् ।

श्रद्धया परया युक्तो जपेदपहता इति ॥

स्मृत्यर्थसारे—'अपहता इति तिलान्विकीर्य उदीरतामित्यृचा प्रोक्षेत् ।' पराशरः—

---

राजादनः । उपवेशनोत्तरं विप्रधर्मानाह मनुः—

आमन्त्रितो जपेद्दोग्ध्रीमासीनस्तु निषङ्गिणः ।

भुक्त्वा तु वामदेव्यं च श्राद्धभोक्ता न दुष्यति ॥

दोग्ध्रीम् "उपह्वये सुदुघाम्" इति, "हिं कृण्वतीम्" इति वा । साप्येका का चित् एकवचनात् । निषङ्गिणस्तु त्रयः "इन्द्रह्वयाम" इति "सइषुहस्तैः" "सनिषंगिभिः" इति च ऋक् । "नमो वञ्चते" इत्यादियजुः ।

आमन्त्रितो जपेद्दोहान् नियुक्तस्त्वृषभानपि ॥

अभीषङ्गांश्च तत्रैव जप्त्वाऽश्नीयाद्द्विजोत्तमः ।

दोहऋषभाभीषङ्गानि सामानि । *श्राद्धं कर्ताऽस्मीति ।

उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरा स्थितौ ॥

सम्प्रयतश्चोपविष्टान् सर्वान् पृच्छेद्द्विजोत्तमान् ।

इति वाक्ये श्राद्धं करिष्ये इति पृच्छेदिति श्राद्धिकोक्त्या कर्तेति न लुट् किन्तु तृच् । *तत इति प्रवृत्तिराज्ञादानम् । ततोऽपह-

तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रयत्नतः ।
प्रोक्षयेदन्नजातं तु शूद्रदृष्ट्यादिशुद्धये ॥

हेमाद्रौ ब्रह्माण्डे—

श्राद्धभूमौ गयां ध्या(१)त्वा (ध्या(२)त्वा देवं गदाधरम् ।
वस्वादींश्च पितॄन् ध्यात्वा ततः श्राद्धं प्रवर्तते ॥ )

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥
*आदिमध्यावसानेषु त्रिरावृत्तं जपेद् बुधः ।
पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥

तत्रैव स्कान्दे—

तिला रक्ष(३)न्त्वसुरान् दर्भा रक्ष(३)न्तु राक्षसान् ।
पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः ॥

वसिष्ठः—'शुद्धवतीभिः कूष्माण्डीभिः पावमानीभिश्च पाकादिं प्रोक्षयेत् ॥' इति ।

अथ देवार्चा । तत्र प्रत्युपचारमाद्यन्तयोरपो दद्यादित्युक्तं वृत्तौ स्मृत्यर्थसारे च । हेमाद्रौ ब्राह्मे--

*आसनेष्वासनं दद्याद्वामे वा दक्षिणेऽपि वा ।
पितृकर्मणि वामे च दैवे दद्यात्तु दक्षिणे ॥

ता इति तिलविकिरणानन्तरं देवताभ्य इति जप इत्येकं मतम् । जपानन्तरं तिलविकिरणमित्यपरम् । *आदिमध्येति । "आद्येऽवसाने श्राद्धस्य' इति माधवपाठः *आसनेष्विति । दर्भासनदानं च विप्रहस्ते जलदानोतरमाह योगीश्वरः—

पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ।
प्रदद्यादासने दर्भान्न तु पाणौ कदाचन ॥
देवानां सयवान् दर्भान् पितॄणां च तिलैः सह ।

---

( १ ) 'ध्यायेत्' ग०      ( २ ) कंसान्तर्गतं नास्ति छ० ।
( ३ ) 'रक्षन्ति' क० छ०

प्रचेताः—

आसनेष्वासनं दद्यान्नतु पाणौ कदाचन ।
धर्मोसीत्यथ मन्त्रेण गृह्णीयुस्ते तु तान् कुशान् ॥
'धर्मोऽसि विशिराजा प्रतिष्ठितः' इति मन्त्रः ।

गालवः—

*दर्भानादाय हस्ताभ्यां गृहीत्वा दक्षिणे करे ।
दैवे *क्षणः क्रियतां तु निरङ्गुष्ठं करं ततः ॥
ओंतथेति द्विजा ब्रूयुस्ते प्राप्नोतु भवानिति ।
कर्ता ब्रूयात्ततो विप्रः प्राप्नवानीति वै वदेत् ॥

पृथ्वीचन्द्रोदये बृहन्नारदीये—

यवैर्दर्भैश्च विश्वेषां देवानामिदमासनम् ।
दत्त्वेति भूयो दद्याद्वै दैवे क्षण इति क्षणम् ॥
*'तच्च षष्ठ्या चतुर्थ्या वा कार्यम्' इति स एव । 'ततोऽर्घ्यं कल्पयेत्' इति मन्वादयः । शौनकजयन्ताभ्यामर्घ्यरहितस्य देवार्चनस्योक्तेः—'आश्वलायनानां दैवेऽर्घ्यदानं न' इति बोपदेवः । तन्न, परिशिष्टप्रयोग-

---

पुराणे—

आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा ।
पितृकर्माणि वामे वै दैवे कर्मणि दक्षिणे ॥

ततः सधर्मकं द्वितीयं निमन्त्रणमाह—*दर्भानिति ।

एतच्च पुनरपो दत्त्वा, "ततः पुनरपो दत्त्वा निमन्त्रयेत्" इति सङ्ग्रहोक्तेः । निरङ्गुष्ठं गृहीत्वा च,

निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत् ।

इति पुराणात् । समाह्वानं निमन्त्रणम् । *क्षणः व्यापारान्तररहितास्थितिः ।

निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः । इत्यमरः ।

पारिजातविरोधात् । वृद्धिश्राद्धे तु दैवेऽप्यर्घ्यं दद्यात्,

देवेभ्योऽपि पृथग्दद्यादिहार्घ्यं श्रुतिचोदनात् ।

इति शौनकोक्तेः ॥

अथार्घ्यपात्रम् । पृथ्वीचन्द्रोदये मात्स्यपाद्मयोः--

पात्रं वनस्पतिमयं तथा पर्णमयं पुनः ।

जलजं वापि कुर्वीत तथा सागरसंभवम् ॥

ब्राह्मे--

सौवर्णताम्ररौप्याश्मस्फाटिकं शङ्खशुक्तयः ।

भिन्नान्यपि हि योज्यानि पात्राणि पितृकर्मणि ॥

हेमाद्रौ प्रजापतिः--

सौवर्णं राजतं ताम्रं खा(१)ङ्गं मणिमयं तथा ।

यज्ञियं चमसं वापि अर्घ्यार्थं पूरयेद् बुधः ॥

अत्र वि(२)प्रैकत्वचतुष्ट्वादावर्घ्यपात्रे द्वे एव । मानवसूत्रे तु-'द्वे वैश्वदेविके त्रीणि पित्र्ये एकैकमुभयत्र वा' इत्युक्तम् । तदेकविप्रपरं, पात्रालाभपरं वे(३)ति हेमाद्रिः । मदनरत्ने तु दैवे (४)एकं पात्रमुक्तम् । पृथ्वीचन्द्रोदयोऽपि--

त्रीणि पैतृकपात्राणि द्वे द्वे वै वैश्वदेविके ।

इति बृहत्पराशरोक्तेर्द्वे एवेत्याह । बह्वृचानां तु

*तच्च आसनं च । *विप्रद्वित्वेऽपीति । वस्तुतस्तु देवताभेदात् पात्रभेदो न ब्राह्मणभेदात् । देवेऽपि पुरूरवार्द्रवाद्योर्देवतयोर्भेद एव । अत एव—

विश्वान् देवान् यवैः पुष्पैरभ्यर्च्यन्त्यभिपूर्वकम् ।

पूरयेत् पात्रयुग्मं तु पवित्रेस्थ इति त्वृचा ॥

---

(१) 'खड्गम' क० ग०   (२) 'विप्रैकत्वद्विचतुष्ट्वादौ' ग०

(३) 'च' ग०   (४) 'एकपात्रम्' क० ग०

दैवे *विप्रद्वित्वेप्येकमर्घ्यपात्रमर्धशो दद्यादित्युक्तं परिशिष्टे प्रयोगपारिजाते च। कलिकायां हारीतः—

दत्तमक्षय्यतां याति ख(१)ड्गेनार्घ्यं तु यत्कृतम्।

वृद्धमनुः—

*मृन्मयं दारुजं पात्रमयःपात्रं च यद्भवेत्।
*राजतं दैविके कार्ये शिलापात्रं च वर्जयेत्॥

पुराणसमुच्चये—

मृत्स्नाभवं तथा *कांस्यमारक्तं ज(२)तुसंभवम्।
त्रपुसीसलोहभवं सदा पा(३)त्रं विवर्जयेत्॥

तत्रैव—

अष्टाङ्गुलं भवेत्पात्रं पितॄणां राजतं शुभम्।
दशाङ्गुलं तु देवानां सौवर्णं शक्तितः कृतम्॥
स्थापयेदर्घ्यपात्रे द्वे न्युब्जे तत्र कुशोपरि।
*द्वे द्वे पवित्रे विधिवत्पात्रयोश्चोपरि क्षिपेत्॥

---

इति वचनं "स्थापयेदर्घ्यपात्रे द्वे" इत्याग्रिमं च सङ्गच्छते। *मृन्मयमिति अपक्वमृन्मयनिषेध इत्येके।

खादिरौदुम्बराण्यर्घ्यपात्राणि श्राद्धकर्मणि।
अप्यश्ममृन्मयानि स्युरपि पर्णपुटास्तथा॥

इति बैजवापोक्तेरन्यलाभे निषेधः। आधिकमग्रे। *राजतमिति।

शिवनेत्रोद्भवं यस्माद्रजतं पितृवल्लभम्।
अमङ्गलं तद्यत्नेन देवकार्येषु वर्जयेत्॥

इति सोपपत्तिकोऽपि तन्निषेधः। *कांस्यमिति। कांस्यपर्णराजतान्यर्घ्योदकधारणानीति हारीतं तु पित्र्यपरं। *द्वे द्वे इति

---

(१) 'खाड्गेन' ग० (२) 'जन्तुसम्भवम्' क.
(३) 'पात्रं च वर्जं' ग०

यज्ञपार्श्वः—

*पवित्रेस्थेति मन्त्रेण पवित्रे छेदयेत्तु ते ।

*ओषधीमन्तरे कृत्वा अङ्गुष्ठाङ्गुलिपर्वणोः ॥

(१)स्फ्येन काष्ठेन लोहेन न मृन्मयनखादिभिः ॥

वसिष्ठः—

तूष्णीं प्रोक्ष्याम्भसा पात्रे कुर्यादूर्ध्वबिले ततः ।

पूरयेत्पात्रयुग्मं तु कृत्वोपरि पवित्रके ॥

वृद्धपराशरः—

पात्रद्वयमथार्घ्यार्थं तैजसं चैकवस्तुनः ।

प्राङ्मुखोऽमरतीर्थेन शन्नोदेव्योदकं क्षिपेत् ॥

यवोऽसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम् ॥

मानवसूत्रे—'सुमनसः प्रक्षिप्योत्पूय यवान् प्र(२)क्षिपेत्' इति । यवोऽसीति मन्त्रः । पाद्मे—

यवोसि धान्य(३)राजो वा वारुणो मधुमिश्रितः ।

निर्णोदः सर्वपापानां पवित्रमृषिभिः (४)स्मृतम् ॥

'राजो वा वारुणो मधुसंयुतः' इति (५)परिशिष्टपाठः । गोभिलेन तु—'यवोसि सोमदैवत्यः' इति तिलमन्त्रोऽत्र स्वाहा(६)युक्त (७)उक्तः । हेमाद्रौ यमः—

---

पात्रभेदेन पवित्रयोर्भेदार्थम् । *पवित्रस्थेति । पवित्रे स्थो वैष्णवी वायुर्वा मनसा पुनात्विति मन्त्रः ।

अन्तर्गर्भे कुशच्छिन्ने कौशे प्रादेशसंमिते ॥

इति उत्तरार्धम् । कुशमन्तरा कृत्वा च्छिन्ने कुशच्छिन्ने । अत एवाह-

---

(१) 'स्फेन' क० छ०

(२) 'प्रक्षिप्य' ग० छ० (३) 'धान्यराजोऽसि' छ० ।

(४) 'स्मृतः' ग० । (५) 'परिशिष्टपाठः' ग० ।

(६) 'स्वाहान्तः' क० । (७) 'उक्तः' नास्ति छ० ।

ग्रवद्भ्रस्तस्ततो देवान् विज्ञाप्यावाहनं प्रति ।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥

वृद्धपराशरः—

ततः सव्यकरं न्यस्य विप्रदक्षिणजानुनि ।
देवानावाहयिष्येऽहमिति वाचमुदीरयेत् ॥
आवाहयेत्यनुज्ञातो विश्वेदेवास आगत ।
विश्वेदेवाः शृणुतेममिति मन्त्रद्वयं पठेत् ॥

श्राद्धविशेषे विश्वेदेवानामज्ञाने हेमाद्रौ बृहस्पतिः—

उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ।
अनेनमुच्चारणीयस्तैर्मन्त्रः श्रद्धासमन्वितैः ॥
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

इदं चावाहनमर्घ्यपात्रासादनात्प्राक् हेमाद्रिणोक्तम् । तत्र कातीयैः *प्राक्कार्यम्, तथैव तत्सूत्रात् ; अन्यैस्तदुत्तरम् । पृथ्वीचन्द्रोदये शङ्खः—

सयवं पुष्पमादाय चरणादिशिरोन्तकम् ।
अर्चनेत्यर्चनं कुर्यादन्तरं चोदकं तथा ॥

पित्र्ये तु शिरआदिपादान्तम्,

पादप्रभृति मूर्धान्तं दैविके पूजनं भवेत् ।
शिरःप्रभृति पादान्तं नमो व इति पैतृके ॥

---

*ओषधीमिति । "तृणं काष्ठं वाऽन्तर्धाय" इत्यापस्तम्बः *प्रागिति ।

विश्वान देवान यवैः पुष्पैरभ्यर्च्यासनपूर्वकम् ।
पूरयेत्पात्रयुग्मं तु स्थाप्य दर्भपवित्रके ॥

इति मदनरत्ने (१)प्रचेतोक्तेः। कालिकायां सङ्ग्रहे--

तिष्ठन् कृताञ्जलिर्भूत्वा पठे(२)न्मन्त्रौ समाहितः।
विश्वेदेवाः शृणुत इत्यागच्छन्त्वपरं ततः॥

हेमाद्रौ जातूकर्ण्यः--

ततोऽर्घ्यपात्रसंपत्तिं वाचयित्वा द्विजोत्तमान्।
तदग्रे चार्घ्यपात्रं तु स्वाहार्घ्या इति विन्यसेत्॥

गार्ग्यः--

दत्त्वा हस्ते पवित्रं च कृत्वा पूजां च पादतः।
या दिव्या इति मन्त्रेण *हस्तेष्वर्घ्यं विनिक्षिपेत्॥

सङ्ग्रहे--

विश्वेदेवा इदं वोऽर्घ्यमिति दानं समादिशेत्।
तदन्ते 'स्वाहा नमः' इति वाच्यम्,
या दिव्या इति मन्त्रेण स्वाहाकारं नमोन्तकम्।

इति हेमाद्रौ नागरखण्डात्। आथर्वणसूत्रे तु-'पाद्यमर्घ्यमाचमनीयमिति द्विजकरे निनयेत्' इत्य*स्यैव त्रयमुक्तम्। गभस्तिः--

अर्घ्यं पिण्डप्रदानं च स्वस्त्यक्षय्ये तथैव च।
गन्धपुष्पादिकं सर्वं हस्तेनैव तु दापयेत्॥

प्रतिविप्रं या दिव्येत्यावृत्तिः बह्वृचानां त्व*नेन दत्ताघ्यानुमन्त्रणम्। ततः पात्रं 'देवेभ्यः स्थानमसि' इति न्युब्जमुत्तानं वा कार्यमिति (३)गारुडे उक्तम्। एतदापस्तम्बानां नियतमन्येषां न।

---

इति मात्स्यात्। *हस्तेष्विति बहुवचनमतन्त्रम्, एकार्घ्यस्यानेकहस्तेषु दानासम्भवात्। *अस्यैव द्विजकरस्यैव *अनेनेति।

---

(१) 'प्रचेतसोक्तेः' ग०। (२) 'मन्त्रम्' ग०।
(३) 'गौडे' छ०।

हेमाद्रौ विष्णुधर्मे--

(१)गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः ।
अर्चयेद्ब्राह्मणान् शक्त्या श्रद्दधानः समाहितः ॥

पृथ्वीचन्द्रोदये मार्कण्डेयः--

चन्दनागरुकर्पूरकुङ्कुमानि प्रदापयेत् ।

विष्णुः 'चन्दनकुङ्कुमकर्पूरागरुपद्मकान्यनुलेपनाय' इति । व्यासः--

अ*पवित्र(२)करो गन्धैर्गन्धद्वारेति पूजयेत् ।

कलिकायां स्मृतिः--

गन्धद्वारेति वै गन्धमा*यने ते च पुष्पकम् ।
धूरसीत्यमुना धूपमुद्दीप्यस्वेति दीपकम् ॥
युवं वस्त्राणि मन्त्रेण वस्त्रं दद्यात्प्रयत्नतः ।
आसने स्वासनं ब्रूयादर्घ्येऽस्त्वर्घ्यं द्विजोत्तमः ॥

'प्रसृष्टा अनुमन्त्रयेत' इत्याद्यग्रे स्पष्टम् । *अपवित्रकर इति । विप्रहस्ते "गन्धद्वारा"इति गन्धं दत्त्वा विगतपवित्र एव तैर्गन्धैर्भालगात्रकुक्षिवक्षःकक्षाद्यङ्गेषु लेपनरूपां पूजां कुर्यादित्यर्थः । द्विजैः स्वयं प्रतिगृहीतगन्धविलेपने तु नैतत्, "अपवित्रकरः पूजयेत्" इत्युक्तेः । वृद्धमनुः—

उपवीतित्वमुत्सृज्य कारयेन्नानुलेपनम् ।

शातातपः--

कण्ठ्यां त्रिपुष्करं कृत्वा गन्धैर्यस्तु विलिम्पति ।
पितृयज्ञे भवेच्छिद्रं निराशैः पितृभिर्गतैः ॥

त्रिपुष्करम् उपवीतम् । देवलः--

यज्ञोपवीतं विप्राणां स्कंधान्नैवावतारयेत् ।
गन्धादिपूजासिद्ध्यर्थं दैवे पित्र्ये च कर्मणि ॥

*आयने ते चेति । "पुष्पवतीरिति पुष्पम्" इति वि-

(१) 'गन्धपुष्पैश्च' छ० । (२) 'करा' छ० ।

(१)सुगन्धिश्च सुपुष्पाणि सुमाल्यानि सुधूपकः ।
सुज्योतिश्चैव दीपे तु स्वाच्छादनमिति क्रमः ॥
विप्राणां गन्धेन वर्तुलं त्रिपुण्ड्रं वा न कार्यम् ।
हेमाद्रौ देवलः—
ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ॥
पुण्ड्रकं वर्तुलमित्यपरार्के । मदनरत्ने च–'पुण्ड्रं त्रिपुण्ड्रं वर्तुलमर्ध(२)चन्द्रं च',
ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् ।
ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥
निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम् ॥
इति वृद्धपराशरोक्तेः । तिर्यग्लेपो भवत्येव,
वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा ।
तिर्यगप्यूर्ध्वपुण्ड्रं वा धारयेतु प्रयत्नतः ॥
इति व्यासोक्तेरिति पृथ्वीचन्द्रः । यत्तु (३)नारदीये—
ऊर्ध्वपुण्ड्रं च तुलसीं श्राद्धे नेच्छन्ति केचन । इति ।
तत् कर्तृपरम् । हेमाद्रौ ब्राह्मे—
पूतिकं मृगनाभिं च (४)रोचनं रक्तचन्दनम् ।
कालेयकं तूग्रगन्धं तुरुष्कं चापि वर्जयेत् ॥
कस्तूर्यां विकल्प इति हेमाद्रिः । वृद्धशातातपः—
पवित्रं तु करे कृत्वा यः समालभते द्विजान् ।

ष्णुः । पुष्पवतीरिति मध्यप्रतीको मन्त्रः । यथा ओषधीः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः अयं वो गर्भ ऋत्वियः प्रत्नः स-

(१) 'सुगन्धश्च' क० छ० ।
(२) 'अर्धचन्द्रं । तिर्यग्लेपो भवत्येवेति पृथ्वीचन्द्रः । यत्तु बृहन्नारदीये–ऊर्ध्वपुण्ड्रं' छ.
(३) 'बृहन्नारदीये' क. (४) 'रोचना' क. छ.

राक्षसानां भवेच्छ्राद्धं निराशैः पितृभिर्गतैः ॥

पुष्पं तु ब्राह्मे—

(१)जातीचम्पकलोध्राश्च मल्लिका (२)बाणबर्बरी ।
चूताशोकाऽऽटरूषं च (३)तुलसी शतपत्रकम् ॥
कुब्जकं तगरं चैव भृङ्गमारण्यकेतकी ।
यूथिकामतिमुक्तं च श्राद्धे योग्यानि भो द्विजाः ॥
कमलं कुमुदं पद्मं पुण्डरीकं च यत्नतः ।
इन्दीवरं कोकनदं कह्लारं च निवेदयेत् ॥

हेमाद्रौ वायुभविष्ययोः—

सुकुमारैः किसलयैर्यवदूर्वाङ्कुरैरपि ।
सम्पूजनीयाः पितरः श्रेयस्कामेन सर्वदा ॥

स्कान्दे—

(४)जातिश्च सर्वा दातव्या मल्लिका श्वेतयूथिका ।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥

तत्रैव वृद्धमनुः—

न *नियुक्तः (५)शिखावर्ज्यं माल्यं शिरसि धारयेत् ।

वर्ज्यानि पृथ्वीचन्द्रोदये भविष्ये—

केतकीं तुलसीपत्रं बिल्वपत्रं च वर्जयेत् ।
द्रोणं च करवीरं च धत्तूरं किंशुकं तथा ॥

माधवीये स्मृत्यर्थसारे च तुलसी निषिद्धा। तुलसीनिषेधो निर्मूल इति हेमाद्रिः। समूल(६)स्त्वेऽपि

धस्थमासदादिति। *आटरूषेति। "पित्र्ये च पद्मबिल्वार्कधत्तूरपारिभद्राटरूषका (७)न देयाः पितृकार्येषु" इति मात्स्यो निषेधः। पारिभद्रो मन्दारः। आटरूषो वासा। *नियुक्तः श्राद्धे निमन्त्रितः।

(१) 'जातिचम्पक' क. छ. (२) 'बाणचर्चरी' क. छ.
(३) 'तुलसीम' क छ. (४) 'जात्यश्च' छ.
(५) 'शिखावर्जम' छ. (६) 'अपि' नास्ति क.
(७) 'न देयाः' नास्ति च०

पिण्डपरः,

तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।
प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥

इति प्रयोगपारिजाते पाद्मोक्तेरिति बोपदेवः । (१)वृद्ध-पराशरः--

न जातीकुसुमैर्विद्वान् बिपल्वत्रैश्च नार्चयेत् ।
जपादिकुसुमं*झि(२)ण्टी*रूपिका सकुरण्टिका ॥
पुष्पाणि वर्जनीयानि श्राद्धकर्माणि नित्यशः ॥

हैमाद्रौ शङ्खः--

उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥
जलोद्भवानि देयानि रक्तान्यपि विशेषतः ॥

अङ्गिराः "न (३)जातीकुसुमानि दद्यान्न कदलीपत्रम्' इति । जात्यां विकल्प इति हेमाद्रिः । निषेधः पिण्डविषयः,

कुन्दं शंभौ च नो दद्यान्नोन्मत्तं गरुडध्वजे ।
पिण्डे (४)जाती च नो दद्यादेवीमर्केण नार्चयेत् ॥

इति वृद्धयाज्ञवल्क्योक्तेरिति बोपदेवः । स्मृतिसारे--

*आगस्त्यं भृङ्गराजं च तुलसी शतपत्रिका ।

---

स्कन्धे माल्यनिषेधः प्रागुक्तः । *झिण्टीति । "तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः । नीले झिण्टी" इत्यमरः *रूपिका अर्कपुष्पम् । *आगस्त्यमिति । मार्कण्डेयपुराणे-

शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।

---

(१) 'बृहत्पराशरः' छ.

(२) झिण्टी नीलकुरण्टकः । अर्कपुष्पमिति मयूखे ।

(३) नजातिकुसुमं दद्यान्न दद्यात्कदलीफलम् । इति । जात्यां' क०

(४) 'जातीम्' छ.

चम्पकं तिलपुष्पं च षडेते पितृवल्लभाः ॥
केतकीं करवीरं च बकुलं कुन्दकं तथा ।
पाटलां चैव जातीं च श्राद्धे यत्नेन वर्जयेत् ॥

केचित्पिण्डेऽपि तुलसीमाहुः--

पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीदलैः ।
प्रीणिताः पितरस्तैस्तु यावच्चन्द्रार्कमेदिनी ॥

इति मार्कण्डेयोक्तेः ।

धूपस्तत्रैव विष्णुधर्मे—

धूपस्तु गुग्गुलुर्देयस्तथा चन्दनसारजः ।
अगरुश्च सकर्पूरः*स्तुरुष्क*स्त्वक् तथैव च ॥

(१) विष्णुः--

'घृत*मधुयुक्तं गुग्गुलुं श्रीखण्डदेवदारुसरलादि दद्यात्' इति । तत्रैव देवलः--

ये हि *प्राण्यङ्गजा धूपा *हस्तवाताहताश्च ये ।
न ते श्राद्धे नियोक्तव्या ये च केचोग्रगन्धयः ॥
घृतं न केवलं दद्याद् दुष्टं वा तृणगुग्गुलुम् ॥
गन्धधूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥

तुरुष्कः लोहवानेत्याख्यः ।

तुरुष्कः सल्लकः । सिह्लो यावनोपीत्यमरात् । ( अ०को० का०२व०६श्लो०१२८ ) तुरुष्कः सल्लकीवृक्ष इति माधवाच्च । *त्वक् दालचीनीत्याख्या । मरीचिः--

चन्दनागुरुणीचोभे तमालोशीरपद्मकम् ॥ इति ।

*मध्विति शर्करापि प्रशस्ता;

माहिषाख्यं गुग्गुलं चाथाज्ययुक्तं सशर्करम् ।
ददाति नरसिंहाय हरये भक्तितत्परः ॥

इतिवत् । *प्राण्यङ्गजाः कस्तूर्यादयः । *हस्तवातेति । तथाच

---

(१) 'विष्णुः—लोहबाणघृतमधु' छ०

दीपमाह विष्णुः--

*घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् ॥

वस्त्रं ब्राह्मे--

कौशेयं क्षौमकार्पासं दुकूलमहतं तथा ।
(१)श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति चोत्तमान् ॥

हेमाद्रौ ब्रह्मवैवर्ते--

यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता ।
पितृभ्यो वस्त्रदानस्य फलं तेनाश्नुतेऽखिलम् ॥

तत्रैव पाद्मे--

निष्क्रयो वा यथाशक्ति वस्त्राभावे प्रदीयते ।

अन्यान्यपि च देयानि तत्रैव कालिकापुराणे--

(२)धात्वादिनिर्मिता रम्या दीपिकाः श्राद्धकर्मणि ।
पितॄनुद्दिश्य यो दद्यात्स भवेद्भाजनं श्रियः ॥
यो (३)धूपदानपात्रं तु पात्र(४)मारार्तिकस्य च ।
दद्यात्पितृभ्यः प्रयतस्तस्य स्वर्गेऽक्षया गतिः ॥

विष्णुधर्मे—

यः कञ्चुकं तथोष्णीषं पितृभ्यः प्रतिपादयेत् ।

व्यजनादिना देयः,

धूमस्य व्यजनेनैव धूपेनाङ्गं विधूपयेत् ।

इत्यस्येहापिप्रवृत्तेः सुवचत्वात् । *घृतेनेति । यत्तु--

घृताद्वा तिलतैलाद्वा नान्यद्द्रव्यं तु दीपकम् ॥ इति,

तत्रान्यनिषेधो वसामेदोविषयः, न पुनः कौसुम्भादितैलविषय इति माधवः ।

---

(१) 'श्राद्धेष्वेतानि' छ०
(२) 'धात्वादिनिर्मितां रम्यां दीपिकां' क. छ.
(३) 'धूपदानं पात्रं' क. ग.   (४) 'आरात्रिकस्य' छ.

ज्वरोद्भवानि दुःखानि स कदाचिन्न पश्यति ॥
स्त्रीणां श्राद्धे तु *सिन्दूरं दद्युश्चण्डातकानि च।
निमन्त्रिताभ्यः स्त्रीभ्यो ये ते स्युः सौभाग्यसंयुताः ॥

हेमाद्रावादित्यपुराणे—

न कृष्णवर्णं दातव्यं नापि कार्पाससम्भवम् ।
पितृभ्यो नापि मलिनं (१)नोपभुक्तं कदाचन ॥
न छिद्रितं नापदशं न धौतं कारुणापि च ॥

कार्पासनिषेधोऽन्यसम्भवे । तत्रैव—

पितॄन् सत्कृत्य वासोभिर्दद्याद्यज्ञोपवीतकम् ।
यज्ञोपवीतदानेन विना श्राद्धं तु निष्फलम् ॥

एतद्यतिस्त्रीशूद्रस्त्री(२)श्राद्धेऽपि देयमिति हेमाद्रिः ।
तत्रैव नृसिंहपुराणे—

कमण्डलुं ताम्रमयं श्राद्धेषु प्रददाति यः ।
काष्ठेन निर्मितं वाऽपि नारिकेलमथापि वा ॥
दद्यात् कमण्डलुं श्राद्धे स श्रीमानभिजायते ।
यो मृत्तिकाविरचितान् श्राद्धेषु च घटान् शुभान् ॥
प्रदद्यात्करकान्वाऽपि सोऽक्षयं विन्दते सुखम् ॥

---

*सिन्दूरमिति । कूर्पासमन्यत्रोक्तम् ।

हृच्छादनं कञ्चुकं च चोलः कूर्पासकः स्त्रियः ।

इति त्रिदण्डिः ।

चण्डातकं साटकं च सदृशं बहुकल्पनम् ।
निर्दशा साटिका ज्ञेयाऽप्यथवा छिन्नदशा ॥

इति कोशाः ।

अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ।

---

(१) 'नोपयुक्तम्' छ.     (२) 'श्राद्धेष्वपि' छ.

तत्रैव—

उपानच्छत्रवस्त्राणि भुक्तिपात्रं कमण्डलुम् ।
शयनासनयानानि दर्पणव्यजनानि च ॥
अन्नं सुसंस्कृतं गन्धांस्ताम्बूलं (१)दीपचामरम् ।
पितृभ्यो यः प्रयच्छेत्तु विष्णुलोकं स गच्छति ॥

सौरपुराणे—

चामरं तालवृन्तं च श्वे(२)तच्छत्रं च दर्पणम् ।
दत्त्वा पितॄणामेतानि भूमिपालो भवेदिह ॥

तत्रैव नन्दिपुराणे—

अलङ्काराः प्रदातव्या यथाशक्ति हिरण्मयाः ।
केयूरहारकटकमुद्रिकाकुण्डलादयः ॥

तथा—

स्त्रीश्राद्धेषु प्रदेयाः स्युरलङ्कारास्तु योषिताम् ।
मञ्जीरमेखलादामकर्णिकाकङ्कणादयः ॥

तथा(३)—

आदर्शव्यजनच्छत्रशयनासनपादुकाः ।
मनोज्ञाः पट्टवासाश्च सुगन्धाश्चूर्णमुष्टयः ॥
अङ्गारधानिकाः शीते योगपट्टाश्च यष्टयः ।
कटिसूत्राणि रौप्याणि मेखलाश्चैव कम्बलाः ॥
कर्पूरादेश्च भाण्डानि ताम्बूलायतनं तथा ।
भोजनाधारयन्त्राणि पतद्ग्राहांस्तथैव च ।
तथाऽञ्जनशलाकाश्च केशानां च प्रसाधनम् ।
एतान् दद्यात्तु यः सम्यक् सोऽश्वमेधफलं लभेत् ॥

स्कान्दे—

सौवर्णं राजतं वाऽपि कांस्येनाप्यथ निर्मितम् ।

---

(१) 'दीपचामरे' ग. (२) 'श्वेतं छत्रं' छ.
(३) 'तथा' नास्ति ग.

दत्त्वा भोजनपात्रं तु सम्राड् भवति भूतले ॥

वामनपुराणे—

बन्दीकृतास्तु ये केचित्स्वयं वा यदि वा परैः ।
येन केनाप्युपायेन यस्तान्मोचयते नरः ॥
पितरस्तस्य गच्छन्ति शाश्वतं पदमव्ययम् ॥

पराशरः—

वाचयेत्परिपूर्णत्वं वासो दत्त्वा विधानतः ।

नारदीये—

*दैवैश्च समनुज्ञातो यजेत्पितृगणं त्वथ ।

तत्र पित्र्ये आसनाद्यशेषमर्चनकाण्डं वैश्वदेविकं ज्ञेयम् । विशेषस्तूच्यते । तत्रासने द्विगुणभुग्नाः कुशाः । अत्रावाहनमासनात्पूर्वं वा, अर्घ्यपूरणोत्तरं वा, अग्नौकरणोत्तरं वेति स्मृतिषु पक्षा उक्ताः । एषां शाखाभेदेन व्यवस्था । द्वितीयपक्ष एव बहुसंमतः । तत्रार्घ्यमाहाश्वलायनः–*'तैजसाश्ममयमृन्मयेषु त्रिषु पात्रेष्वेकद्र-

---

इत्यमरः तच्च लहङ्गाख्य इति तद्व्याख्यातारः । *दैवैश्चेति । यद्यपि पदार्थप्रत्यासत्तेः पदार्थानुसमयः प्राप्नोति तथापि—

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ।

इति याज्ञवल्क्येन तत इत्यनेन वैश्वदेविकपदार्थकाण्डोत्तरं पित्र्यर्चनविधानाद्वाचनिकः काण्डानुसमयो व्यञ्जितः । स च देवानामनुज्ञामपेक्षते । आसनदानात् प्रागुत्तरं चापो दद्यात् । "अपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदायापः प्रदाय" इत्याश्वलायनसूत्रात् । कौर्मे—

यवार्थस्तु तिलैः कार्यः कुर्यादर्घ्यादि पूर्ववत् ।

श्राद्धे क्षणः क्रियतामित्यादि क्षणं कृत्वाऽर्घ्यादि पूर्ववत् कुर्यादित्यर्थः । *तैजसेति । तैजसमेकं पात्रम्, अश्ममयमेकम्, मृन्मय-

ण्येषु वा दर्भान्तर्हितेष्वप (१)आसिच्य-"शं नो देवीर-भिष्टये" इत्यनुमन्त्रितासु तिलानावपति—

तिलोसि सोमदेवत्यो गोसवे देवनिर्मितः ।

प्रत्नवद्भिः (२)प्रत्तः स्वधया पितॄनिमाँल्लोकान् प्रीण-याहि नः स्वधा नमः ॥ इति ।

अश्ममयं स्फाटिकादि । मृन्मयं हस्तकृतमेव,

कुलालचक्रनिष्पन्नमासुरं दैविकं न तत् ।

तदेव हस्तघटितं दैविकं केवलं तथा ॥

इति छन्दोगपरिशिष्टात् । अन्यान्यपि पात्राणि पूर्व-मुक्तानि । मनुः—

अन्नाभावे द्विजाभावे यद्येको ब्राह्मणो भवेत् ।

पात्राण्यासादयेत्त्रीणि न तु ब्राह्मणसंख्यया ॥

दत्तकादेः कर्तुर्द्विपितृत्वादावपि वचनात् त्रीण्येव पात्राणीति हरिहरः। माधवीये बैजवापः—

अर्घ्ये पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्मवित् ।

एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि ॥

हेमाद्रावप्येवम् । अत्रानुमन्त्रणं सकृत् । 'तिलोसि' इत्यस्य प्रतिपात्रमावृत्तिः पितृशब्दस्यानूहश्चेति वृत्ति-कृत् । दर्भश्च त्रिगुणं पवित्रम्,

तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे ।

एकोद्दिष्टे शलाकैकां निधायोदकमाहरेत् ॥

---

मेकम् । एतेषु त्रिषु द्रव्यासम्भवे एकद्रव्येषु वा त्रिषु । त्रीण्यपि तैजसानि वा त्रीण्यप्यश्ममयानि वा त्रीण्यपि मृन्मयानि वा। एतान्याग्नेयीदिक्सं-स्थानि निधाय तेषु दर्भानन्तर्धाय ततस्तेष्वपो निषिच्य ततः पात्रस्था अपः "शन्नो देवीः" इत्यनुमन्त्र्य त्रिषु पात्रेषु तिलानावपति "ति-

---

(१) 'प्रासिच्य' क. 'प्रदाय' ङ.        (२) 'पत्नः' क.

इति हेमाद्रौ चतुर्विंशतिमतात् । तत्रैव विष्णुः—*"दक्षिणाग्रदर्भेषु दक्षिणा(१)पवर्गचमसेषु पवित्रान्तर्हितेष्वप आसिञ्चेत्" । 'शन्नो देवीः' इति मन्त्रेण (२)जलासेचनं बह्वृचभिन्नविषयम् । अत्रास्मिन्पक्षे प्रतिपात्रं मन्त्रावृत्तिः ।

कारिकायाम्—

गन्धपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ ।

ब्राह्मे—

जलं क्षीरं दधि घृतं तिलतण्डुलसर्षपान् ।
(३)कुशाग्रमधुपुष्पाणि दत्त्वाऽऽचामेत्ततः स्वयम् ॥

जातूकर्ण्यः—

ततोऽर्घ्यपात्रसम्पत्तिं वाचयित्वा द्विजोत्तमान् ।
तदग्रे चार्घ्यपात्राणि स्वधार्घ्या इति विन्यसेत् ॥

ततस्तिलहस्तो विप्रसव्यजानौ दक्षिणकरं न्यस्याऽऽवाहनं पृच्छेत् । अत्र गोत्रसम्बन्धनामानि द्वितीयान्तत्वं च प्रागुक्तम् । बैजवापगृह्ये—'तिष्ठन् पितॄनावाहयिष्यामीत्यामन्त्र्य ।' कौर्मे—

अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः ।
आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः ॥
आवाह्य तदनुज्ञातो जपेदायन्तुनस्ततः ॥

अत्र सव्यस्यापि प्रागुक्तोर्विकल्पः । अत्राद्यमन्त्रान्ते "अस्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपमावाहयामि" इति मन्त्रान्ते । अर्घ्यपात्रे । "आवाहितोऽसि" इति मन्त्रेणेति वृत्तिः *दक्षिणाग्रदर्भेष्विति अर्घ्यपा-

---

(१) दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गतयाऽऽसादितेषु चमसेषु पात्रेष्वित्यर्थः । अपवर्गः समाप्तिः ।

(२) 'जलसेचनम्' ग.

(३) 'कुशाग्रं मधुपु' क. छ.

यामी(१)त्युक्त्वा मूर्धादिपादान्तं तिलान्विकीर्य–'आयन्तु नः' इति सर्वान्ते सकृज्जपेदिति निबन्धाः। अत्रोपवेशनसंवेशनपाद्यार्घ्याचमनीयान्यपि हेमाद्रिणोक्तानि तान्यथर्ववेदिनां नियतानि, नान्येषाम्। तेषां च प्रपितामहादिपित्रन्तं प्रातिलोम्येन सर्वः प्रयोगः।

वाराहे—

गन्धपुष्पार्चनं कृत्वा दद्याद्धस्ते तिलोदकम्।

गार्ग्यः—

शिरस्तः पादतो वाऽपि सम्यगभ्यर्चयेत्ततः।

"ततः–'स्वधाऽर्घ्याः' इति पितृपितामहादिविप्राग्रे प्रत्येकं निवेदयेत्" इति कारिकायां वृत्तौ च। आश्वलायनः–*"प्रसव्येनेतरपाण्यङ्गुष्ठान्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन–'पितरिदं ते अर्घ्यं, पितामहेदं ते अर्घ्यम्, प्रपितामहेदं ते अर्घ्यम्' इत्यप्पूर्वं ताः प्रतिग्राहयिष्यन् सकृत्सकृत्स्वधा अर्घ्या इति प्रसृष्टा अ(२)नुमन्त्रयेत 'या दिव्या आपः पृथिवि संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शं स्योना

---

त्रासादनप्रकारः। *प्रसव्येनेति। प्रसव्येन सर्वं पित्र्यं कर्म प्रसव्येन प्रकृत्यादित्वात्तृतीया। अप्रदक्षिणं कार्यमित्यर्थः। "प्रदक्षिणमुपचारः" इत्याभ्युदयिकश्राद्धेऽपवाददर्शनाद् योगविभागोऽवगतः। इतरस्य सव्यस्य पाणेरङ्गुष्ठान्तरेणार्घ्यं प्रयच्छेत्, उपवीतित्वात् पित्र्ये तावत् प्राचीनावीतिना भाव्यम्, अयं चोपवीती, तस्मादित्यर्थः। येन पाणिकर्म करोति दक्षिणेन वा सव्येन वा। येन पाणिना कर्म करोति तस्मिन्नंसे उपवीते स्थिते प्राचीनावीती। ततोऽन्यस्मिन्नंसे स्थिते तु उपवीती। अत्र तूपवीतित्वात्प्राचीनावी-

---

(१) 'इत्यात्युक्त्वा' ख. (२) 'अनुमन्त्रयीत' ग०

भवन्तु ॥" इति । *अर्घ्यादि प्राग्गन्धादेर्यज्ञोपवीतमेव । *अर्घ्यदानात् प्रागन्या अ(१)पो दद्यात् । यद्यप्यत्र सव्येन दक्षिणेन वाऽर्घ्यं दद्यादित्युक्तं, तथापि दक्षिणेनेत्य- *भिमतोऽर्थः । कारिकायां वृत्तौ चैवम् । "पित्रादेस्त्रिभिः पात्रैर्दद्यात् । पितुः स्थाने विप्रत्रयं चे(२)देकार्घ्यं विभज्य दद्यात् । *त्रयाणां—'स्वधा अर्घ्याः' इति स(३)कृत्प्रश्नः । *एवं पैतामहादावपि । अन्यजलदानमर्घ्यमन्त्राश्च प्रतिविप्रमावर्तन्ते । तेषु गन्धादौ च प्रतिविप्रं पदार्थानुसमयः काण्डानुसमयो वा । पित्रादित्रयाणामेकविप्रपक्षे त्रिभिः पात्रैरेकस्यैवार्घ्यं दद्यात्" इति वृत्तिः । कारिकापि—

*स्वधाऽर्घ्या इत्यपोऽर्घ्यास्ता उपवीती निवेदयेत् ।

निवेदनात्प्राक् प्राचीनावीतमेवेत्यर्थः ।

---

तत्सिद्ध्यर्थं सव्यपाणेः पितृतीर्थेन दद्यादिति । अथवा दक्षिणं पाणिं सव्येन पाणिना गृहीत्वा दक्षिणेनैव पाणिनोपवीत्येवार्घ्यं प्रयच्छेदित्यर्थः । अत्रोपवीतित्वादिति हेतुवशादर्घ्यमारभ्य उपवीतलाभे उत्तरावधिमाह—*अर्घ्यादीति । अपूर्वमित्यस्यार्थमाह— *अर्घ्यदानादिति । *अभिमतोऽर्थ इति । सव्यपाणेः शिष्टविगर्हितत्वादिति भावः । *त्रयाणामिति । त्रयाणां पात्राणां मध्ये पैत्रस्य पात्रस्येत्यर्थः । *एवं पैतामहादावपीति । यथा पैत्रस्य पात्रस्य सकृन्निवेदनं तथा पैतामहादिपात्रस्येत्यर्थः । तथा सत्येव सकृत्सकृदिति वीप्सासार्थक्यम् । पात्रभेदेन सकृन्निवेदनं न ब्राह्मणभेदेनेति भावः । एतत्सर्वं संगृह्य सौत्रस्य 'प्रसृष्टा' इत्यस्य निर्गीता इत्यर्थं कारिकाकारो दर्शयतीत्याह—*स्वधाऽर्घ्या इति । हस्ते पवित्रं दत्त्वा शिरःप्रभृति पूजां विधाय हस्तेऽर्घ्यदान-

(१)'आपः' क० छ०

(२) [illegible] ग० (३) 'सकृन्निवेदनम्' छ०

अर्घ्यं सशेषमादाय दक्षिणेन तु पाणिना ।
सव्यहस्तगृहीतेन निनयेत् पितृतीर्थतः ॥
दत्त्वा दत्त्वा निनीतास्ता यादिव्याचानुमन्त्रयेत् ॥

यत्तु—
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।

इति, यच्च वाराहे—
तिलाम्बुना चापसव्यं दद्यादर्घ्यादिकं द्विजः । इति,

यच्च व्यासः—
गोत्रसम्बन्धनामानि पितृणाम(१)नुकीर्तयन् ।
एकैकस्य तु विप्रस्य अर्घ्यपात्रं विनिक्षिपेत् ॥ इति;

तद्बह्वृचातिरिक्तविषयम् । तत आचामेत् । एवं मा(२)तामहेष्वपि ।

आश्वलायनः—'संस्रवान् समवनीय ताभिरद्भिः *पुत्रकामो मुखमनक्ति' । संस्रवः *शेषः, 'संस्रवो हि परिशिष्टो भवति' इति शतपथश्रुतेः । केचित्तु हस्तगलिताम्बु वदन्ति । समवनीया*न्त्ये द्वे पात्रे पितृपात्रे आ(३)सिच्येति वृत्तिः । 'प्रथमे पात्रे संस्रवान् समवनीय' इति कातीयसूत्राच्च । ब्राह्मे तु प्रतिबिम्बावलोकनमुक्तम् । स्कान्दे त्वायुःकामस्य नेत्रासेचनमुक्तम् । पित्र्यविप्रैः प्राङ्मुखस्य कर्तुरभिषेकः कार्य इति केचित् । आश्वलायनः-

नोद्धरेत्प्रथमं पात्रं पितृणामर्घ्यपातितम् ।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत ॥

---

मिति पूर्वमुक्तम् । *पुत्रकाम इति । न चेन्नानक्तीति वृत्तिः । *शेष इति । अर्घ्यस्येति शेषः । समवनीयेत्यस्यार्थमाह--*अन्त्ये इति । संस्रवानितीहापि संबध्यते । *पितृपात्रमिति । अ-

---

(१) 'अनुकीर्तयेत्' क०
(२) 'पितामहेष्वपि' क० (३) 'आसिञ्चेत्' छ०

'यावद्विप्रविसर्जनम्' इति तुर्यपादे यमीयः पाठः। अत्र वृत्तिः—*'पितृपात्रं समवनयनदेशान्न चालयेदाश्राद्धसमाप्तेः *यस्मात्तत्र तृतीयपात्रेणा*वृताः' इति। यद्वा *'प्रथमपात्रमेव न्यग्बिलं कुर्यात्' इति। कामाभावेऽपीदमेव शेषप्रतिपादनम्। हेमाद्रौ कौर्मे—

*संस्रवांश्च ततः सर्वान् पात्रे कुर्यात्समाहितः।
पितृभ्यः स्थानमसीति(१)न्युब्जं पात्रे निधापयेत्॥

शूलपाणौ यमस्तु—

पैतृकं प्रथमं पात्रं (२)तस्मिन् पैतामहं न्यसेत्।
प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेत्।

इत्याह। (३) अथ 'संस्रवानानीय तृतीयेनाच्छाद्य न्युब्जीकुर्यात्' इति सर्वैक(४)वाक्यतयार्थ इति केचित्। अत्रिः—

गन्धादिभिस्तदभ्यर्च्य तृतीयेनापिधापयेत्।
पितृभ्यः स्थानमसीति शुचौ देशेऽर्चि(५)तेऽर्चयेत्॥

---

र्घ्यपात्रमित्यादिः। पितॄणामर्घ्यशेषा आपो यस्मिन्नेकीकृताः, एवंभूतपात्रमित्यर्थः। कुतो न चालयेदित्यत्राह*यस्मादिति। *आवृताः अपिहिताः। तथाच प्रथमपात्रस्य तृतीयेण पात्रेण पिधानं कार्यमित्यर्थः। शौनकग्रहणं पूजार्थं न तु विकल्पार्थम्। *प्रथमपात्रमेवेति। तत्रेति सप्तमी तृतीयार्थे। तेन प्रथमेन पात्रेण पितरस्तिष्ठन्तीत्यस्यायं पर्यवसितार्थः। तच्चाश्राद्धसमाप्तेर्नोद्धरेदिति पूर्ववत्। *संस्रवानिति। तृतीयेनाच्छादनन्युब्जीकरणयोर्विकल्पितत्वात्समुच्चये प्रमाणाभाव इत्यस्वरसः। वृत्तिकृत[illegible]

(१) 'न्युब्जपात्रं' छ० (२)'तस्मिन् पैतामहं' क०'तस्मिं पैतामहं' ग०
(३) 'अथ' नास्ति छ० (४) 'वाक्यतार्थः' क०
(५) 'अर्चिते च यत्' छ०

अर्चनं न्युब्जीकृतेऽपि तुल्यम् , 'न्युब्जमुत्तरतो न्यसेत्' इति प्रचेतसोक्तेः । 'सर्वविप्रोत्तरतो न्यसेत्' इति हेमाद्रिकल्पतरू । 'विप्रवामे' इति हलायुधः । 'कर्तुर्वामे' इति शूलपाणिः ।

*उत्तानं विवृतं वाऽपि पितृपात्रं न तद्भवेत् ।

इत्युशनसोक्तेर्न्युब्जतैव साधुः *मातामहादिसंस्रवानपि पितृपात्र एव(१) गृहीत्वा प्रयाजवत्तन्त्रेण न्युब्जीकुर्यात् इति शूलपाणिः । एकोद्दिष्टे तू*हेन न्युब्जतेति पितृभक्तौ श्रीदत्तः । यमोपि—

*स्पृष्टमुत्तानमन्यत्र नीतमुद्घाटितं तथा ।
पात्रं दृष्ट्वा व्रजन्त्याशु पितरस्तं शपन्ति च ॥

वैश्वदेवे उत्तानमिति मदनपारिजातः । बैजवापः—

*तस्योपरि कुशान् दत्त्वा प्रदद्याद्देवपूर्वकम् ।
गन्धपुष्पाणि धूपं च दीपं वस्त्रोपवीतके ॥

अत्र गन्धादेर्दैवे पित्र्ये च पदार्थानुसमयस्य याज्ञवल्क्योक्तकाण्डानुसमयेन विकल्पो ज्ञेयः । बह्वृचानां तु सूत्रे दैवानुक्तेः काण्डानुसमय एव । अत्र प्राचीनावीती । नामगोत्रसम्बुद्ध्याद्युक्तं प्राक् । अन्यद्दैववत्तदन्ते आच-

---

निर्भरः । अतोऽयं ग्रन्थकुन्न्युब्जतायां निर्भरमाह—*उत्तानमिति । *मातामहादीनामिति । 'पितृणामर्घ्यपातितम्'इति यद्यपि पितृशब्दो न सपिण्डनान्तश्राद्धजन्यापितृत्वाश्रयपरः पितरिदं तेऽर्घ्यमित्यादि विरोधात् । किन्तु लक्षणया जनकादिपरः तथापि "मातामहानामप्येवम्" इत्यतिदेशात् तेषामपि संस्रवो ग्राह्य इत्यर्थः । *ऊहेन'पित्रे स्थानमसि'इति ऊहेन । *स्पृष्टं

---

(१)'एवम' छ०

मनं च। हेमाद्रौ कालिकापुराणे—

निर्वर्त्य ब्राह्मणादेशात् क्रियामेवं यथाविधि।
*भाजनानि ततो दद्याद्धस्तशौचं पुनः क्रमात्॥

आदेशात्पात्राणि दद्यादित्यन्वयः।(१)तेन तत्रापि प्रश्नानुज्ञे ज्ञेये। तत्रैव ब्राह्मे—

मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः।
गौरमृत्तिकया वापि भस्मना गोमयेन वा॥

भृगुः—

भस्मना वारिणा वाऽपि कारयेन्मण्डलं ततः।
चतुःकोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु॥
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम्॥

बह्वृचपरिशिष्टे तु—'दैवे चतुरस्रं पित्र्ये वृत्तं मण्डलं कृत्वा क्रमेण सयवान् सतिलांश्च दर्भान् दद्यात्' इत्युक्तम्। मार्कण्डेयः—

यातुधानाः पिशाचाश्च क्रूरा ये चैव राक्षसाः।
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम्॥

हेमाद्रौ हारीतः—'भूमावेव निदध्यान्नोपरि पात्राणि' इति तानि (२)च हेमाद्रावत्रिराह—

भोजने हैमरौप्याणि दैवे पित्र्ये यथाक्रमम्।

हारीतः—'(३)राजतपार्णताम्र (कां(४)स्यपात्राणि भोजने'। (५)इति। तत्रैव वाराहे—

सौवर्णानीह रौप्याणि) कांस्यानि तदसम्भवे।

---

हस्तादिना। तदुत्तरकृत्यमाह—*तस्योपरीति।*भाजनानीति। तानि च भोजनार्थोपकल्पितसर्वान्नधारणसमर्थानि, महान्तीति

---

(१) 'ते' छ० (२) 'तु' क० छ०
(३) 'राजतं पार्णं' क० ग० (४) कंसान्तर्गतं नास्ति छ०
(५) 'इति अन्यान्यपि हेमाद्रावत्रिराह—सौवर्णानि' क०

अन्यान्यपि हि कार्याणि दारुजान्यपि जानता ॥
नाऽ*यसान्यपि कार्याणि पैत्तलानि नतु क्वचित् ।
नच सीसमयानीह शस्यन्ते त्रपुजान्यपि ॥

अत्रिः—

पञ्चाशत्पलिकं कांस्यं ह्यधिकं (१)भोजनाय वै ।
गृहस्थैस्तु सदा कार्यमभावे हेमरौप्ययोः ॥
पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने ॥

पृथ्वीचन्द्रस्तु--

*कांस्यपात्रे हविर्दृष्ट्वा निराशाः पितरो गताः ।

इति ब्राह्मोक्तेः कांस्यपात्रनिषेधमाह । बोपदेवस्तु स्मृतिसंग्रहमुदाजहार—

श्राद्धे पलाशपात्राणि मधुकौदुम्बराणि च ।
पारिकाकुटजप्लक्षक्रकचानि क्रमाज्जगुः ॥
कदलीचूतपनसजम्बुपुन्नागचम्पकाः ।
अलाभे मुख्यपात्राणां ग्राह्याः स्युः पितृकर्मणि ॥ इति

हेमाद्रौ तु कदलीपात्रनिषेधमाहाङ्गिराः —'न जातीकुसुमानि दद्यान्न कदलीपत्रम्' इति । क्रतुः—

असुराणां कुले जाता रम्भा पूर्वपरिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गताः ॥

एवं पात्राण्यासाद्य भस्ममर्यादां कृत्वा विप्रहस्तशोधनं कुर्यात् । तत्र 'पिशङ्ग' 'रक्षाणो' इति मन्त्रद्वयं केचित्पठन्ति । मात्स्ये—

अकृत्वा भस्ममर्यादां यः कुर्यात्पाणिशोधनम् ।

---

विशेषस्मरणात् । *नायसानीति ।

यथोपपन्नं कार्याणि मृन्मयानि न तु क्वचित् ।

इति च । *कांस्यपात्रे इति । पञ्चाशत्पलान्न्यूनं कांस्यं

---

(१) 'भाजनाय' क०

आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

तथैव ब्रह्माण्डे—

प्रक्षाल्य हस्तपात्रादि पश्चादद्भिर्विधानवत् ।
प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपेच्छुचौ ॥

*मण्डलोपरीति हेमाद्रिः ॥

अथाग्नौकरणम् । हेमाद्रौ मार्कण्डेयः—

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः ।
अनाहिताग्निश्चौपासने*ऽग्न्यभावे द्विजे*प्सु वा ॥

वायवीये—

*आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः ।
अग्न्यर्थं लौकिकं वापि जुहुयात्कर्मसिद्धये ॥

*आहिताग्निः सर्वाधानी । अर्धाधानी तु गृह्य एवे-

---

वर्ज्यमित्यन्ये । *मण्डलोपरीति । पादप्रक्षालनेत्यादिः । *अ-ग्न्यभावे उभयविधाग्न्यभावे । त(१)थाचानग्निकस्य विप्रपाणावि-त्यर्थः । *अप्स्विति तीर्थश्राद्धपरमित्यग्रे स्फुटं । आहि-ताग्निपदस्य नार्धाधानिपरत्वमित्यत्र मानान्तरमाह—*आहृत्येति । प्रयत्नत आहृत्येत्युक्त्याऽर्धाधाने स्मार्ताग्नेः सत्त्वान्न दक्षिणाग्निर्युक्त इति भावः । पूर्ववाक्यं व्याचष्टे—*आहिताग्निरिति ।

अग्नौ करिष्यन्नादाय पृच्छेदन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥

इत्यतिदेशसामान्यवचनं "कर्म स्मार्तम्" इत्युपदेशसामान्यव-चनानुरोधेन दक्षिणाग्निव्यतिरिक्तप्राकृतपदार्थविषयम् । अतोऽर्धा-धानेन गृह्यसत्त्वे तत्रैव होमः । तदभावे तु दक्षिणाग्नौ । एवञ्चा-हिताग्निपदं सर्वाधानिपरम् । अनाहिताग्निपदं स्मार्ताग्निपरमर्धाधा-

---

(१) 'तथाच त्रिविधानग्निकस्य प्रवासादिश्च सर्वाधानिनश्च वि-प्रपाणावित्यर्थः' ङ पुस्तके ।

ति चन्द्रिकापरार्कमिताक्षरामाधवादयः । *तस्यापि द-
क्षिणाग्नौ *लौकिको गृह्य इति हेमाद्रिः कल्पतरुश्च ।

न्युपलक्षकम् । चकारो वा तत्समुच्चायकः । औपासनो गृह्याग्निः ।
एवञ्च "अग्न्यर्थं लौकिकं वाऽपि" इत्यस्यायमर्थः—अग्न्यर्थम् ।
औपासनाग्निकार्यसिध्यर्थम् । तच्च कार्यं निरग्निकस्य सर्वाधानिनश्च
तदर्थम् । ताभ्यां लौकिको वा हर्तव्य इति विकल्पः,

हस्तेऽग्नौकरणं कुर्यादग्नौ वा साग्निको द्विजः ।

इति पराशरोक्तेरिति । होमार्थमित्यनेन गृह्याग्निकार्ये दक्षिणा-
ग्निविधानात् गृह्यसत्त्वे तत्कार्यस्य तत्रैव सुकरतया फलतः सर्वाधा-
नेन तदसत्त्वे दक्षिणाग्निरिति भावः । ( (१)प्रवासादौ दक्षिणा-
ग्न्यसत्त्वे त्वाह )—लौकिक इति । पाणिहोमव्यावृत्तये(२) । अत
एव कर्मसिद्धये इति । दक्षिणाग्न्यादिलौकिकाग्निं विना पाणिहो-
मेनाग्नौकरणासिद्धेः । पा(३)णिहोमस्त्वाश्वलायनपरः । *तस्या-
पीति । अर्धाधानिनोऽपीत्यर्थः । तस्याप्याहिताग्नितया दर्शयागा-
र्थं विहृतदक्षिणाग्निसद्भावात् । फलचमसेनेव सोमस्य शरैरिव च
कुशानां गृह्याग्निसद्भावेऽपि दक्षिणाग्निना तद्बाधस्यैवौचित्यात् ।
अग्न्यर्थं लौकिके वाऽपीति दक्षिणाग्निकार्ये लौकिकस्य विधाना-
द्दक्षिणाग्न्यभावे गृह्याग्निप्राप्तेश्च । एतन्मते आहिताग्निराहिताग्निमात्रं ।
अनाहिताग्निः स्मार्ताग्निः । अत्र लौकिकशब्देन नासंस्कृतो-
ऽग्निरुच्यते,

न पैतृयाज्ञियो होमो लौकिकेऽग्नौ विधीयते ॥

इति तन्निषेधादित्यत आह—*लौकिक इति । नच श्राद्धस्य
गृह्यत्वात् "कर्म स्मार्तं विवाहाग्नौ" इत्युपदेशेन 'पितृयज्ञवत्' इत्य

(१) कंसान्तर्गतं नास्ति च, 'लौकिक इति च' इत्यग्रे पाठः
च पुस्तके । (२) अस्य 'इदम्' इति शेषः ।
(३) 'पाणिहोमस्त्वाश्वलायनपरः' नास्ति ङ ।

*आद्यपक्ष एव तु युक्तो बहुसंमतश्च । यद्यपि स्मार्तमग्नौकरणं *श्रौते दक्षिणाग्नौ न युक्तं तथापि वचनाद्भवतीति हेमाद्रिचन्द्रिकादयः । इदं दर्शश्राद्ध एव । आब्दिकादिषु तु सर्वाधानी पाणौ, अर्धाधानी गृह्ये कुर्यादिति हेमाद्रिर्माधवादयश्च;

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥

इति लौगाक्ष्यादिभिः क्रमोक्तेर्विहृतदक्षिणाग्निसत्त्वात् । *अत एवात्र वचने साग्निकः आहिताग्निरुक्तो हेमाद्रिणा । एतदापस्तम्बादीनामेव । आश्वलायनस्या-

---

तिदेशबाधात्सत्यपि दक्षिणाग्नौ औपासने एवार्धाधानिनो होम इति वाच्यम्, उपदेशस्यौपासनहोमादिषु सावकाशत्वाद्विरोधाभावेनातिदेशबाधस्यान्याय्यत्वाच्च वाचनिकातिदेशस्योपदेशतुल्यत्वाच्च । नापि "कर्म स्मार्तं विवाहाग्नौ" इत्यस्याबाधाय "आहिताग्निस्तु" इति वाक्यं सर्वाधाने गृह्यासत्त्वे दक्षिणाग्निविधानपरमिति वाच्यं, विशेषविषयेऽपवादविषये चोत्सर्गशास्त्रस्याप्रवृत्तेः । एवं प्रबलेऽपि हेमाद्रिमते श्राद्धसागरादिकृत् यायजूकसम्प्रदायं दर्शयति—*आद्य एवेति । *श्रौते इति ।

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ॥

इति वचनविरोधात् । तथाच सर्वाधानिनः पाणिहोमः स्यादित्याशयः । ननु 'आहृत्य' इत्युक्तेर्वार्षिकादौ सर्वाधानिनो होमार्थत्वेन विहारः स्यादत आह—*अत एवेति । तथाचाहिताग्निमात्रस्य विहृतदक्षिणाग्निसत्त्वादेव दर्शश्राद्धेऽर्धाधानिनोऽपि स्मार्तं बाधित्वा तत्रैव होमः । नह्यग्नौकरणेन दक्षिणाग्नेः अपूर्वो विहारश्चोद्यते क्लृप्तमादायैव तदुपपत्तेरिति । आब्दिकादिषु तदभावेन पाणावेव होमः। अर्धाधानिनस्तु गृह्ये स्मार्ताग्नावेवेति। परन्तु हेमाद्रिणा लौकि-

हिताग्नेः *पाणावेवेति वृत्तिः। *अर्धाधानिनो गृह्ये एव व्यतिषङ्गोऽपीति प्रयोगपारिजाते परिशिष्टे च । बोपदेवस्त्वाह *होमशब्दः पिण्डपितृयज्ञपरः,

पितृयज्ञे तु जुहुयाद्दक्षिणाग्नौ समाहितः ।
*श्राद्धे त्वौपासनाग्नौ तु निरग्निर्लौकिकेऽनले ॥
*अनग्नि*र्दूरभार्यश्च पार्वणे समुपस्थिते ।
*सन्धायाग्निं ततः कुर्याद्धोममग्निं समुत्सृजेत् ॥

इति त्रिकाण्डमण्डनोक्तेः । श्राद्धे गृह्याग्नावेवेति

---

को गृह्य इति यद्व्याख्यातं तन्न युक्तं, "न पैतृयज्ञिय" इति निषेधस्य पितृयज्ञाङ्गहोमपरत्वात् । नच तत्र तस्य वैयर्थ्यम्, अग्निप्रतिनिध्यभावस्य न्यायप्राप्तत्वादिति वाच्यं, तस्य तादृशानुवादत्वात् । वायुपुराणादिप्राप्ततन्निषेधकत्वाच्च । ( (१)यत्तु धूर्तेन आपस्तम्बानां मासिश्राद्धस्यापूर्वत्वेन पितृयज्ञादक्षिणाग्नेरप्राप्तत्वात् स्मार्तस्य चाभावेनाधिकरणाभावाद्धोमलोप एवेत्यभ्यधायि । तदयुक्तं, तत्र पितृयज्ञधर्मकत्वाभावेऽपि स्मृतिवाक्यैर्दक्षिणाग्नेः पाणिलौकिकाग्न्यादेश्च प्राप्तिसम्भवात् । ) *पाणावेवेति। एतन्मते आहिताग्निसामान्यस्य पितृयज्ञं कृत्वा श्राद्धं, "पितृयज्ञं तु निर्वर्त्य" इति वचनात् । *अर्धाधानिन इति । आश्वलायनस्येति वर्तते । *होमशब्दः होमपदमित्यर्थः होमशब्दः । *श्राद्धे त्विति । एतावता स्मार्ताग्नेरौपासनाग्निरार्थिकः । *अनग्निरिति । अनग्नित्वं त्रेधा—भार्यापरिग्रहाभावात्, तदुत्तरकालिकाग्न्यस्वीकारात्, स्वीकृतोच्छेदात् । *दूरभार्य इति । अग्न्यसंनिधाने । *संधायेति । संधानं च "अयाश्च"इत्यादिनाऽग्रे स्फुटम् । अत्र सर्वाधानिनो दर्शश्राद्धे अग्नौकरणे मार्कण्डेयोक्तदक्षिणाग्निर्दुर्वारः । औपासनाग्न्यभावेन निरग्नित्वाभावेन चाधिकरणद्वयाप्राप्तेरित्यस्वरसस्तुना सूचितः ।

---

( १ ) कंसान्तर्गतं नास्ति ङ ।

*लौकिकाग्न्यादिविधानं च तैत्तिरीयादिविषयम् । बह्वृचस्य त्वनग्नेरपि पाणिहोम एव । अग्निपाणी विना सूत्रे विधानान्तरानुक्तेः ;

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।

इति मनूक्तेश्च । वृत्तावप्येवम् ।

क्वचित्साग्नेरपि पाणिहोम उक्तो गृह्यपरिशिष्टे—

*अन्वष्टक्यं च पूर्वेद्युर्मासिमास्यथ पार्वणम् ।
काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टं तथाष्टमम् ॥
चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥ इति ।

*एकोद्दिष्टं सपिण्डीकरणं, शुद्धे तन्निषेधात् । बह्वृचभाष्यकारास्तु *सर्वैकोद्दिष्टेषु पाणिहोममाहुः । इदं च बह्वृचानामेव । *अत्रेदं तत्त्वम् । 'स्थालीपाकेन सह

---

*लौकिकाग्न्यादीति । आदिना अबादिपरिग्रहः । तैत्तिरीयादीनां पाणिहोमाभावात् । *अन्वष्टक्यं चेति । हेमन्तशिशिरयोः कृष्णनवम्यामान्वष्टक्यं तदष्टम्याः पूर्वदिने पूर्वेद्युः । मासिमासि प्रतिकृष्णपक्षं यस्यां कस्याञ्चित्तिथौ आन्वष्टक्यविधानेनोक्तम् । पार्वणं दार्शम् । काम्यं पुत्रादिकामनायां कृत्तिकादिषु । अभ्युदये पुत्रजन्मनि । अष्टम्यां हेमन्तशिशिरकृष्णाष्टम्याम् । एकोद्दिष्टं व्याकरोति—*एकोद्दिष्टमिति । *सर्वेति । "अथातः पार्वणश्राद्धे काम्ये आभ्युदयिके एकोद्दिष्टे च" इति सूत्रे समानविधानतया पार्वणधर्मप्राप्तेर्दुर्वारत्वात् । तथा आन्वष्टक्यादौ पक्षान्तकर्माभावेन विहृतदाक्षिणाग्न्यसत्त्वेऽपि आहिताग्निभिः प्रयोगपारिजातमते सर्वाधानेनौपासनाग्न्यसत्त्वे विहृत्य होमः कार्यः । अनेनैव न्यायेन सर्वश्राद्धेषु दक्षिणाग्निविहरणं कार्यमिति तु मयूखे । बह्वृचानां वार्षिकश्राद्धे मतभेदं दर्शयति—*अत्रेति ।

पिण्डार्थमुद्धृत्य' इति सूत्रे 'नात्रापूर्वः स्थालीपाकश्चो-
द्यते सर्वश्राद्धेषु प्रसङ्गात्तेनानुवादोऽयम्' इति वृत्तिका-
रोक्तेः पार्वणे आर्थिकस्या *नङ्गस्य व्यतिषङ्गस्य वार्षिका-
दिष्वनतिदेशादर्धाधानिनोऽपि पाणिहोम एवेति वृत्तिस्व-
रसः । एवं मासिकादावपि,

षोडशे मासिके श्राद्धे सपिण्डीकरणे तथा ।
पाणावेव तु होतव्यमन्यत्राग्नौ तु हूयते ॥

इति बोपदेवोदाहृतवचनाच्च । भाष्यकारमते तु—सूत्रे
स्थालीपाकेनेति *करणत्वा *न्नित्यवच्छ्रवणाच्च पार्वणे
*सोऽङ्गम् । ततः *काम्यादिषु तदभावे कार्यस्य पिण्डदा-
नस्याप्यभावः । एतदेवानुसृत्य विकृतावपि वार्षिकादौ
व्यतिषङ्ग उक्तः प्रयोगपारिजाते परिशिष्टे च । तेनैतन्म-
तेऽर्धाधानिनो *ऽग्नावेव । *वस्तुतस्तु स्थालीपाकेन *"स-

---

*अनङ्गस्येति । यदि व्यतिषङ्गोऽतिदिश्येत तदाङ्गं स्यान्न त्वङ्गमतो
नातिदिश्यते इत्यर्थः । *करणत्वादिति । "सह पिण्डार्थम्"
इत्येतस्य श्राद्धपाकसाहित्येन पिण्डनिर्माणार्थमित्यर्थः । तथाचो-
द्धरणकरणत्वं स्थालीपाकस्य भवति, उपपदविभक्तिमपेक्ष्य कार-
कविभक्तेर्बलीयस्त्वात् । *नित्यवदिति । अनियतश्रवणे हि
कदाचित्स्थालीपाकानुद्धरणेऽपि पिण्डप्रसङ्गः । *सः स्थालीपाकः ।
*काम्यादिष्विति । सूत्रकृता काम्यादीनां पृथगभिधानेन पार्वण-
विकृतित्वाभावादिति भावः । *अग्नावेवेति । एवकारेण पाणि-
व्यवच्छेदः । वार्षिकादाविति वर्तते । वृत्तिकृन्मते तत्र व्यतिषङ्गा-
भावात्पाणावेवेति ध्वननायैव तन्मते इति । अनयोर्मतयोः किं ग्रन्थ-
कृन्मते समञ्जसमित्यत्राह—*वस्तुतस्त्विति । *सह शास्त्रेये-
ति । यथा "सूक्तवाकेन प्रस्तरं प्रहरति" इत्यत्र सूक्तवाकप्रतिपाद्या-
नामग्न्यादीनां प्रहरणे देवतात्वं स्वीकार्यम् अन्यथा तत्र सूक्तवा-

हशाखया प्रस्तरं प्रहरति" इति [illegible]सहभाव[illegible]श्रुतेः । पत्नीवने त्वष्टुरुपलक्षणामिव नाङ्गत्वम् । *तत्त्वे वा नाङ्गानुरोधेन प्रधानभूतपिण्डदानत्यागो युक्तः । तेन *व्यकस्य करणत्वानुपपत्तेः । इष्टदेवतासम्बन्धाच्च प्रहरतिना याग उपलक्षणीयः, तद्वत् सहशाखया प्रस्तरं प्रहरतीत्यत्रापि, शाखाया अपि यागसाधनतया प्रस्तरतुल्यत्वादिति पौर्णमास्यां यागाङ्गतया शाखा संपाद्येति प्राप्ते सूक्तवाकवाक्ये एव प्रहरतिपदं यागोपलक्षणं न शाखावाक्ये । आर्थिकयाः शाखायाः प्रहरणे मुख्यार्थ एव प्रस्तरवत् कर्मत्वेन सहभाविनान्वयसंभवात् । तथा चानङ्गत्वान्न पौर्णमास्यां तत्संपादनमिति राद्धान्तः । एवं पात्नीवते आध्वर्यवो होममन्त्रः श्रूयते—"अग्नाइ पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इति । अत्र त्वष्ट्रा सह पानं गम्यते, सजूःशब्दस्य सहार्थत्वात् । नच "जुषी प्रीतिसेवनयोः" इति धातुवशात्त्वष्ट्रा समानप्रीतिरेव प्रत्येतव्या नतु साहित्यमिति वाच्यम् , एवमपि त्वष्ट्रा सह पानं विना समानप्रीतेरसिद्धेः । सहपानं च तदा नोपपद्यते यदि त्वष्टा न पिबेत् । नचा देवतायाः पानं भवतीति । तत्र त्वष्टापि उपलक्षणीय इति होमाङ्गमिति प्राप्ते शब्दतस्तावदग्नेरेव पानं गम्यते त्वष्टुस्तु सहभावमात्रम् । स च तस्याऽपानेऽप्युपपद्यते ।

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।

इत्यादौ भारमनुद्वहद्भिः पुत्रैः सहभावमात्रस्यापि दर्शनात् । तस्मात्त्वष्टुर्न देवतात्वमिति सिद्धान्तः । तथा [illegible] शाखाया न यागसाधनत्वं त्वष्टुर्वा नोपलक्षणत्वं तथा [illegible] न पिण्डदानसाधनत्वमिति नाङ्गत्वमित्यर्थः । अतः काम्यादिषु तदनपेक्षणात् पिण्डदानं भवत्येवेति भावः । तुष्यतु दु[illegible]नाह—*मत्त्वेवेति । बाधिताङ्गस्यैव त्याज्यत्वादिति भावः । *व्यतिषङ्गाभावेऽपीति । श्राद्धपितृयज्ञयोर्मृतकालत्वे इत्यादिः । अन्व-

तिषङ्गाभावेऽप्यग्नौ होमो भवतीति बोपदेवः। *अनाहिताग्नेर्गृह्याग्निमतस्तु सर्वमतेऽग्नावेव। *वार्षिकादौ वृत्तिमते व्यतिषङ्गो न, अन्यमते त्वस्ति। अत्र यथाचारमनुष्ठेयम्।

आश्वलायनः-'उद्धृत्य *घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा। प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति। अथाग्नौ जुहोति यथोक्तं पुरस्तात्' इति। *व्यतिषङ्गपक्षे इदमिति वृत्तिः। करवै करवाणी-

---

ष्टक्यादिचतुष्टये सर्वाधानिनो दक्षिणाग्निविहारस्यार्धाधानिन औपासनाग्निमतश्च औपासनाग्नेश्च सत्त्वादित्यर्थः। *अनाहिताग्नेरिति स्थालीपाकस्यानङ्गत्वे आश्वलायनस्य द्विविधाहिताग्नेर्निरग्नेश्च दर्शेऽग्नौकरणहोमेऽधिकरणं विवेचितम्। इदानीं तस्य गृह्याग्नेस्तदाधारत्वव्यवस्थापनफलमाह—*वार्षिकादाविति। अत्र च पाणिहोमादिति भावः। *घृताक्तमिति। (१)अनग्निश्चेदाज्यं गृहीत्वेति शौनकोक्तेस्तादृशान्नासम्भवे घृतमेवेति स्मृत्यर्थसारः। तत्र आज्यपदस्य तद्युक्तान्नपरत्वात्। अन्यथा—

अग्नौकरिष्यन्नादाय पृच्छेदन्नं घृतप्लुतम्।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत्॥

इति योगीश्वरादिविरोधात्। घृतपदेन शाकादिनिरासः—

जुहुयाद् व्यञ्जनक्षारवर्जितं तु यथाविधि।

इति मदालसावाक्ये व्यञ्जनादिपदं घृतेतरार्थकम्। *व्यतीति। उद्धृत्येत्युक्तेरिध्माधानान्तं पिण्डपितृयज्ञं कृत्वा ब्राह्मणव-

---

(१) "घृताक्तमिति। तादृशान्नसम्भवे घृतमेवेति स्मृत्यर्थसारः। अनग्निश्चेदाज्यं गृहीत्वेति शौनकोऽपि वक्ष्यामि तथापि तत्रान्नमाज्यमुक्तान्नपरम्। अनेनाग्नौकरिष्यन्नादाय पृच्छेदन्नं घृतप्लुतम् कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवदिति योगीश्वरादिभिश्चान्नस्यैवोक्तेः।" इति च पुस्तके पाठः।

त्यत्राग्नावित्यनुषङ्गः । पुरस्तात् पिण्डपितृयज्ञे । तच्चैवम्—'मेक्षणेनावदायावदानसंपदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाऽग्नौ पूर्वं यज्ञोपवीती मेक्षणमनुप्रहृत्य' इति । अवदानसंपदा *उपस्तरणाद्यपेक्षयेत्यर्थः । व्यतिषङ्गपक्षे

---

च्छौचाद्याच्छादनान्तं पार्वणं कृत्वा पिण्डपितृयज्ञस्थालीपाकादुद्धरणलाभादिति भावः । क्रियतामित्यादि यथासंख्यम् । ननु अवदायेत्येव सम्यक् न तु संपदिति, अत आह—*उपस्तरणादीति । सम्पत्पदेन पूर्वोत्तरयोरुपस्तरणाभिघारयोर्लाभादित्यर्थः । अवदानसंपन्नाम उपस्तरणं द्विरवदानं प्रत्यभिघारणं चेति वृत्तिः । द्विरवदानं चतुरवत्तिनः पञ्चावत्तिनस्तु त्रिरवदानं द्रष्टव्यम् । नच (१)वृत्तौ हविरभिघारणं कुतस्त्यक्तं ? तत्सहितचतुरवदानानन्तरमेषोऽवदानधर्म इति सूत्रकारोक्तेरिति वाच्यं, "नात्र हवींषि प्रत्यभिघारयति" इति स्विष्टकृति प्रत्यभिघारणनिषेधाद् हविरभिघारणस्यावदानधर्मानन्तर्गतत्वात् । अत एव यत्किञ्चिदेकतरावदानलोपे यादृशं प्रायश्चित्तं हविरभिघारणलोपे तादृशप्रायश्चित्तं न कार्यं, किन्तु अग्न्याज्ययोर्मध्येन हविर्नयनानन्तरं प्राथमिकहविरभिघारणलोपे यादृशं तादृशमेव द्वितीयादिहविरभिघारणलोपे । स्पष्टं चेदं याज्ञिकग्रन्थेषु । एवञ्च स्विष्टकृद्धोमानन्तरम् तेन हविषा होमान्तराभावाद् ग्रहीतव्यावदानार्हतासंपादकं हविरभिघारणं न कार्यं, व्यर्थत्वात् । तथा च "नात्र हवींषि प्रत्यभिघारयति" इति निषेधो नित्यानुवादः । एवञ्चाग्नौकरणादौ तृतीयं हविरभिघारणं न कार्यम् । किञ्च यत्र यत्रावदानमस्ति तत्रैष धर्मो अनुष्ठेय इति वृत्तिः । "नात्र हवींषि" इति निषेधे जागरूके कस्तदर्थः ? स्विष्टकृदवदानधर्मो हविरभिघारणा-

---

(१) 'वृत्तिकृता' च०

अतिप्रणीतेऽ*यं होमोऽन्यथा मुख्ये । 'अतिप्रणीते*ऽग्नाविध्ममुपसमाधाय' इति बह्वृचपरिशिष्टात् । केचित्तु घटितोऽन्यावदानधर्मस्तु तद्घटित इति चेत् ? अशुद्धत्वाद्घटितलभ्यस्य सामान्यतोऽवदानधर्मस्यानिरुक्तेः । अत्र स्विष्टकृतीति व्याख्यातं च प्रकृताभिप्रायं, चरमावत्ते इत्यर्थात् । अग्नौकरणादौ चरमावत्तस्य स्विष्टकृत्त्वाच्च तत्र हविषो नाभिघारणं, प्रयोजनाभावादित्यर्थः । *अयं होम इति । पूर्वोक्तमनुज्ञातं कृत्वाऽतिप्रणीतं यज्ञोपवीती परिसमुह्य पर्युक्ष्य प्राचीनावीती तूष्णीमग्नाविध्ममाधाय मेक्षणं स्रुवेणोपस्तीर्य तदन्नं द्विधा विभज्योत्तरभागमध्यादङ्गुष्ठपर्वमात्रं मेक्षणेनावदाय पूर्वभागादादाय पञ्चावत्ती तु तृतीयं क्षिप्त्वा हविरवत्तं चाभिघार्य 'सोमाय' इत्याहुतिमग्निदक्षिणभागे पराचीनपाणिर्हुत्वा पूर्ववद्दक्षिणभागस्थचरोरवदाय द्वितीयामाहुतिं जुहुयात् । नात्र हविःप्रत्यभिघारणम् । ततो यज्ञोपवीती मेक्षणमनुप्रहरेदिति । पैतृकधर्मेण जुह्वतां प्रयोगः । *अग्नाविति । बह्वृचपरिशिष्टत्वेग्निर्विशेषितः—

> योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
> मन्दाग्निरामयावी च दरिद्रश्चापि जायते ॥
> तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ।
> आरोग्यमिच्छता चायुः श्रियं चात्यन्तिकीं तथा ॥ इति ।

समिन्धनं चोक्तम्—

> जुहूषंश्च हुते चैव पाणिशूर्पस्रुवादिभिः ।
> न कुर्यादग्निधमनं कुर्यात्तु व्यजनादिना ॥ इति ।

(य(१)त्तु—

> मुखेन च धमेदग्निं मुखाद् ह्येषो ह्यजायत ।
> नाग्निं मुखेनेति तु यल्लौकिके योजयेत्तु तत् ॥ इति) तत् "मु-

( १ ) कंसान्तर्गतं नास्ति ङ ।

साग्निधमनक्रिया" इति कलिवर्ज्यम् । अत्र श्राद्धहेमाद्रिस्थोऽग्निसमिन्धनसमित्सु वर्ज्यावर्ज्यविवेको वृद्धैः श्राद्धसागरे प्रदर्शितः । यथा—

पलाशफल्गुन्यग्रोधप्लक्षाश्वत्थविकङ्कताः ।
उदुम्बरस्तथा बिल्वश्चन्दनं यज्ञियाश्च ये ॥
सरलो देवदारुश्च सारश्च खदिरस्तथा ।
समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥
ग्राह्याः कण्टकिनश्चैव यज्ञिया येच केचन ।
पूजिताः समिदर्थे ते पितॄणां वचनं यथा ॥
समिद्भिस्त्वाज्यलिप्ताभिर्जुहुयाद् यो हुताशनम् ।
फलं यत्कर्मणस्तस्य तन्मे निगदतः शृणु ॥
अक्षयं सर्वकामीयमश्वमेधफलं हि तत् ।
श्लेष्मातको नक्तमालः कपित्थो नीलशाल्मली ॥
चिरबिल्वस्तथा टङ्कस्तिन्दुकाम्रातकौ तथा ।
तिलकः कोविदारश्च एते श्राद्धे विगर्हिताः ॥
निवासाश्चापि कीटानां गर्हिताः स्युरयज्ञियाः ।
गुल्मैश्च वेष्टिता ये च वल्लीभिश्च समन्ततः ॥
शकुनीनां निवासाश्च वर्जयेत्तान् द्विजोत्तमः ।
अन्यांश्चैवंविधान् सर्वान् वर्जयेद्वै अयज्ञियान् ॥ इति ।

पलाशः किंशुकः । फल्गुः काकोदुम्बरिका । न्यग्रोधो वटः । प्लक्षः जटी । अश्वत्थः पिप्पलः । विकङ्कतः स्रुववृक्षः । उदुम्बरः जन्तुफलः । बिल्वो मालूरः । चन्दनं मलयजम् । यज्ञियाः काश्मर्यादयः । सरलः पीतद्रुः । सालो रालः । खदिरो बालपत्रः । कण्टकिनः इङ्गुदीप्रभृतयः । श्लेष्मातकः शेलुः । नक्तमालः करञ्जः । कपित्थो दधित्थः । नीपः कदम्बः । शाल्मलिः स्थिरायुः । चिरबिल्वः पूतिकरञ्जः । टङ्को हिमारकः । तिन्दुकः स्फूर्जकः । आम्रातकः कपीतनः । तिलको रोध्रः । कोविदारकः

स्य *रक्षोनिबर्हणार्थत्वान्मुख्ये वदन्ति । तदे*तद्विरोधाच्चिन्त्यम् । प्रयोगपारिजातेऽप्येवम् । शौनकः—

*स्वाहाकारेण होमे तु भवेद्यज्ञोपवीतवान् ।
तत्र प्रागग्नये हुत्वा पश्चात्सोमाय हूयते ॥
अग्नौ यज्ञोपवीत्येव प्रक्षिपेन्मेक्षणं ततः ॥

छन्दोगपरिशिष्टे—

अग्नौकरणहोमश्च कर्तव्य *उपवीतिना ।
अपसव्येन वा कार्यो *दक्षिणाभिमुखेन च ॥

*कातीयानां त्वपसव्यमेव, पिण्डपितृयज्ञवद्धुत्वेति सर्वातिदेशात् । सव्यं तु छन्दोगपरम्, गोभिलेनैतदुत्तरमेवापसव्योक्तेः ;

छन्दोगा जुहुयः सव्येनापसव्येन याजुषाः ।

---

कश्चनारः । अयज्ञियाः पिचुमन्दादयः । *रक्ष इति । अदृष्टार्थत्वादित्यर्थः । *एतद्विरोधादिति । अधिकरणसप्तमीविरोधादित्यर्थः । सतिसप्तम्या अकारकाविभक्तित्वेन दुर्बलत्वादिति भावः । एतच्च पार्वणाद्यग्नौकरणं प्राचीनावीती उपवीती वा कुर्यात्, तत्प्रकृतिभूतस्य पैतृयज्ञिकहोमस्य पैतृकत्वदैविकत्वाभ्यां विकल्पितोभयधर्मकत्वात् । तथाचोक्तं पितृयज्ञे स्वाहाकारेण वाग्निं पूर्वमिति । तत्र प्रकृतौ पैतृकधर्मेण जुह्वतां प्रयोगमुक्त्वा दैविकधर्मेण जुह्वतां तमाह—*स्वाहाकारेणेति । *उपवीतिनेति समीचीनपाणित्वप्राङ्मुखत्वयोरुपलक्षणम् । *दक्षिणाभिमुखेन चेति पराचीनपाणित्वोपलक्षकम् । बह्वृचानामेवायं विकल्पः । कातीयछन्दोगयोस्त्वेकैकधर्मनियम इत्याह—*कातीयानांत्विवत्यादिना । वृत्तिमते पाणिहोमेऽनुज्ञाविरहादभ्यनुज्ञायामिति पदं यत्र पिण्डपितृयज्ञकल्पः प्राप्नोति तत्राग्निप्राप्तेः सत्त्वान्न पाणिहोमेऽभ्यनुज्ञा, यत्र तु काम्यादौ न तत्कल्पः तत्राग्निप्राप्त्यभावात्तस्मिन्सत्याश-

इति वृद्धयाज्ञवल्क्योक्तेश्च ॥

अथ पाणिहोमः । आश्वलायनः—'अभ्यनुज्ञायां पाणिष्वेव वा' इति । *पिण्डपितृयज्ञकल्पाभावेनाऽग्न्यभावे काम्यादिष्वित्यर्थः । *तेन बह्वृचानामेकोद्दिष्टे पाणिहोमो भवत्येव । निषेधोऽन्यपरः । पाणिष्विति बहुवचनात्सर्वविप्रपाणिषु होम इति वृत्तिः । *एवं मातामहेऽपि । शौनकोऽपि--

*सर्वेषामुपविष्टानां विप्राणामथ पाणिषु ।
विभज्य जुहुयात्सर्वं सोमायेत्यादिमन्त्रतः ॥

यत्तु हेमाद्रौ कात्यायनः--

पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निकः ।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥ इति,

तद् बह्वृचातिरिक्तानाम् । यत्तु तत्रैव मात्स्ये—

अग्न्यभावे तु विप्रस्य पाणौ वाऽथ जलेऽपि वा ।
अजकर्णेऽश्वकर्णे वा गोष्ठे वाऽथ शिला(१)न्तिके॥इति

तत्तीर्थश्राद्धविषयम् ,

*तद्यदापां समीपे स्याच्छ्राद्धं ज्ञेयो विधिस्तदा ।

---

येन व्याचष्टे--*पिण्डेति । *तेनेति भाष्यकारमतम् । वृत्तिकारमते एकोद्दिष्टशब्दस्य सपिण्डनार्थत्वादित्युक्तम् । पाणिर्दक्षिणः, सव्यस्य शिष्टगर्हितत्वात् । *एवमिति । मातामहादिनिमकरस्याप्यधिकरणकारकत्वात् । *सर्वेषामिति । विभागस्य मन्त्रान्तरस्य च शङ्कावारणाय । उपविष्टेषु विप्रेष्वपि पित्र्याद्यर्थं निमन्त्रित एव प्रकृतत्वात् । यथा "आग्नेय्याग्नीध्रमुपतिष्ठते" इत्यत्र ज्योतिष्टोमे प्रकृता आग्नेय्य ऋचः । "अग्न आयाहि वीतये" इत्यादयः अन्याश्च दाशतय्याम् । तत्र या काचनाग्नेयी ग्राह्येति प्राप्ते लाघवात् प्रकृतैव सा ग्राह्येति तद्वत् । *तद्यदेति ।

---

(१) 'शिवान्तिके' क० अ० ।

इति तत्रैव कात्यायनोक्तेः । निर्जले त्व *जकर्णादौ । यत्तु चन्द्रोदये यमः—

*दैवविप्रकरेऽनग्निः कृत्वाग्नौकरणं द्विजः । इति,

*तदभार्यपरम् ,

अपत्नीको यदा विप्रः श्राद्धं कुर्वीत पार्वणम् ।

पित्र्यविप्रैरनुज्ञातो विश्वेदेवेषु हूयते ॥

इति तत्रैव कात्यायनोक्तेः । हूयते इति छान्दसो व्यत्ययः । हेमाद्रौ वायवीये—

वि(१)धुरो दैविके कुर्याच्छेषं पित्र्ये निवेदयेत् ।

दैवविप्रानेकत्वे तत्रैव—

वैश्वदेवे यदैकस्मिन् भवेयुर्बहवो द्विजाः ।

तदैव पाणौ होतव्यं स्याद्विधिर्विहितस्तदा ॥

सोऽप्याद्यः, *'प्रथमं वा नियम्येत' इति न्यायात् ।

---

अग्नौकरणहोमं तु कुर्यादप्स्वातियन्मतम् ।

इतिपूर्वार्धम् । *अजकर्णादाविति ।

अप्सु चैव कुशस्तम्बे अग्निं कात्यायनोऽब्रवीत् ।

रजते च सुवर्णे च निसं वसति पावकः ॥

इति शङ्खोक्तकुशस्तम्बाद्यपि द्रष्टव्यम् । दर्भवटुश्राद्धे शिष्टानां कुशस्तम्बे तदाचारोऽपि—*दैवविप्रेति । तदेकत्वमनुपदं स्फुटम् । पृथ्वीचन्द्रमतमाह—*तदभार्यपरमिति । *प्रथमं वेति । "प्रथमं वा नियम्येत कारणादतिक्रमः स्यात्" ( जै० सू० ११-१-८-४३ ) इति सूत्रम् । यथा "कपिञ्जलानालभेत" इत्यादौ प्रथमोपस्थितं त्रित्वमेव नियम्यते । यावत्कपिञ्जलालम्भासम्भ-

---

( १ ) पराशरमाधवीये-दैविकब्राह्मणपाणौ होमपक्षेऽपि पित्र्यब्राह्मणपात्रेष्वेव शेषं निक्षिपेत् । अत एव वायुपुराणे-हुत्वा दैवकरेऽनग्निः शेषं पित्र्ये निवेदयेत् । न स्मृताः शेषभाजो हि विश्वेदेवाः पुरागमैः ॥ इति ।

*तेन मृतभार्यस्य दैवे होमः। अनुपनीतब्रह्मचार्यादेस्तु *पित्र्ये,

*'अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न *विन्दति।'

इति हेमाद्रौ जातूकर्ण्योक्तेः। *सभार्यस्य नष्टाग्नेरपि

---

वेनैं क्वचिद्विश्रान्तेः स्वीकर्तव्यत्वात् प्रथमबहुत्वातिक्रमे कारणाभावाच्च। यथा 'ब्राह्मणान् भोजयेत्' इत्यादौ विप्रत्रयभोजनेन शास्त्रार्थसिद्धावप्यधिकफलार्थं त्रित्वमतिक्रम्य चतुरादिर्भोज्यते नचेह चतुराद्यालम्भे फलविशेषस्तद्वदत्रापि कारणाभावान्न प्रथमातिक्रम इत्यर्थः। *तेनेति। अपत्नीक इत्यस्य विधुर इत्युपसंहारेणार्थः। *पित्र्ये इति। विधुरान्यत्वात्;

अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे।

इति अग्न्यभावरूपनिमित्तोपादानाद्विप्रपदेन पित्र्यलाभाच्च। अत्राग्न्यभावः कुत इत्याकाङ्क्षायां भार्यापरिग्रहाभावेन तदुत्तरकालाग्निस्वीकाराभावेन चेत्यर्थमुत्तरार्धमाह—*अग्न्यभाव इति। *विन्दतीति। सप्तपदीभ्रमणं विना भार्यात्वाजननलाभेन तादृशाग्निस्वीकाराभावस्यापि लाभः। स्वीकृताग्न्युच्छेदोऽपि अग्न्यभाव एवेत्याह- *सभार्यस्येति। अग्न्यसन्निधानोपलक्षणमेतत्। वस्तुतस्तु—

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्।
यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुदाहृतः॥

इति मनुवचने यत् पाणावेवेति एवकारेण लौकिकाग्निजलाद्यधिकरणान्तरनिराकरणं तद् भार्यापरिग्रहाभावप्रयुक्त एव,

अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे।
अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न विन्दति॥

इति वचनात् अन्यत्र तु पाणिरपीत्यर्थः। मृतभार्याधिकारिकदैवविप्रपाणिहोमे प्राचीनावीतं स्यादित्याशङ्कावारणायाह—

पित्र्यविप्रकरे इति पृथ्वीचन्द्रः । *उपवीतेन दैवे होमः, प्राचीनावीतेन पित्र्ये । *यद्वा सर्वत्र दैवपित्र्यकरयोर्विकल्प इति हेमाद्रौ मदनरत्ने पारिजाते च । यदा तु पितृमातामहयोर्दैवपित्र्यविप्रभेदस्तदा *भेदेन पाणिहोम इत्यपरार्कचन्द्रिकादयः । यदा तु दैवं तन्त्रं तदा तन्त्रेण सकृदेव पाणिहोम इति केचित् । *हेमाद्रिस्तु—

मातामहस्य भेदेऽपि कुर्यात् *तत्रैव साग्निकः ।

इति कातीयस्मृते *र्भेदमाह । *एवं पित्र्येपि । माध-

---

*उपवीतेनेति । ननु अपत्नीकत्वं विधुरत्वमिति न सम्यक् । यतः पितृयज्ञे स्वाहाकारेण वाग्निं पूर्वमिति पक्षः दैविकधर्मेण जुहुतामुक्तः प्राक्तनश्च पैतृकधर्मेण । तदनुसारेण च दर्शश्राद्धादावपि पक्षद्वयम् । अत एव—

अनग्निको यदा विप्रः श्राद्धे कुर्वीत पार्वणम् ।
अग्नौकरणवत्तत्र होमो दैवकरे भवेत् ॥

इति कश्यपवचने उपवीतस्वाहाकारादिदैविकधर्मेण जुहुतामिदमिति हेमाद्रिः । यत्तत्रानग्निकत्वं यच्चान्यत्र विधुरत्वापत्नीकत्वादि तदतन्त्रम् । एतच्च सर्वत्र स्वधाकारादिपित्र्यधर्मिणा पित्र्यविप्रकरे स्वाहाकारादिदेवधर्मिणा देवविप्रकरे होमो न तु पित्र्यधर्मिणा वैधुर्यादिनिमित्तको देवविप्रकरे, अन्यधर्मिणोऽन्यधर्मासंभवादित्यस्वरसं सूचयन्नेवाह—*यद्वेति । *भेदेनेति पार्वणान्तरसादृगुण्यार्थम् । *हेमाद्रिस्त्विति तुरप्यर्थे । *तत्रैवेति । मातामहवैश्वदेविकविप्रभेदे तत्प्रथमकरे इत्यर्थः, "वैश्वदेवे यदैकस्मिन्" इत्युक्तवचनात् । *भेदम् आवृत्तिम् । अन्यथा तन्त्रमित्यर्थः । मातामहवैश्वदेविकाविप्रभेदेऽभेदे वाऽऽवृत्तिरित्यर्थस्तु अशुद्धः । अभेदे आसनार्चनादिवत् होमस्यापि तन्त्रताया युक्तत्वात् । तन्त्रेणेति पाठान्तरम् । तत्र भेदाप्तिस्य देवविप्रभेदे-

वीयेऽप्येवम् । एवं साग्नेरपि विदेशादौ पाणिहोमो ज्ञेयः । यत्तु कर्केणाग्निं विना श्राद्धमेव नास्तीत्युक्तम्, तत्सपिण्डीकरणवार्षिकाद्यकरणापत्तेर्यत्किंचिदेव । यत्तु बृहन्नारदीये—

अनग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ।
भ्रातृभिः कारयेच्छ्राद्धं साग्निकैर्विधिवद्द्विजः ॥
क्षयाहदिवसे प्राप्ते स्वस्याग्निर्दूरगो यदि ।
*तथैव भ्रातरः स्युश्चेल्लौकिकाग्नाविति स्थितिः ॥
औपासनाग्नौ दूरस्थे समीपे भ्रातरि स्थिते ।
यद्य *ग्नौ जुहुयाद्वाऽपि पाणौ वा स हि पातकी ॥
औपासनाग्नौ दूरस्थे केचिदिच्छन्ति सत्तमाः ।
पाणावेव तु होतव्यमिति नैतत्समञ्जसम् ॥ इति,

तद्वृद्धानादरादुपेक्ष्यम् । हेमाद्रौ यमः—

अग्नौकरणवत्तत्र होमो विप्रकरे भवेत् ।
*पर्युक्ष्य दर्भानास्तीर्य यतो ह्यग्निसमो द्विजः ॥

---

ऽपि तन्त्रमित्यर्थस्तु अशुद्धः । तत्रासनार्चनादिवद्धोमस्याप्यावृत्तेरेवौचित्यात् । किंतु प्रकारेणेत्यर्थः । साग्निक इति तूपलक्षणम् । स्वधाकारादिपित्र्यधर्मेण जुह्वतां त्वाह—*एवमिति । अमावास्यादिश्राद्धेषु विप्रभेदे पार्वणान्तरसाद्गुण्याय भेदेन पाणिहोमः । तदैक्ये तु तन्त्रेणैवेत्यर्थः । । यत्तु—

अग्नौकरणवत्कुर्याद् द्विजातौ वैश्वदेविके ।
पाणावेव तु तद्यान्न तु पित्र्ये कदाचन ॥ इति,

तद्दैवे कृत्वा पुनः पित्र्ये न कार्यमित्येवमर्थम् । * तथैव दूरगा एव । *अग्नौ लौकिकाग्नौ । शूद्रस्यामश्राद्धे पाणावग्नौकरणमित्युक्तं स्मर्तव्यम् । *पर्यस्तदर्भानिति । परितः सर्वतो अस्ता न्यस्ता दर्भास्तानित्यर्थः। परितो दर्भा न्यसनीयाः । पर्युक्ष्य

*मेक्षणेन करेण वा होमः । मेक्षणप्रहरणं नेति वृत्तिः । स्मृतिरत्नावल्याम्—

*नानुज्ञा पाणिहोमे स्यान्न स्तः पर्यूहनोक्षणे ।
नाग्ने नमस्यादिति च न स्यातामिध्मप्रेक्षणे ॥

कर्काचार्योऽप्येवमाह । माधवीये चन्द्रिकायां चा*-नुज्ञादि सर्वं भवतीत्युक्तम् ।

*पाणिहोमे प्रश्नाद्याहापरार्के शौनकः-'अनग्निश्चे-दाज्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पूर्ववत्तथास्तु'

---

दर्भानास्तीर्येति पाठः । पर्युक्षणं वाचनिकमिति मतान्तरम् । वृत्ति-कृन्मतमाह—*मेक्षणेनेति । *नानुज्ञेति च । अनुज्ञावचनं प्रत्यनुज्ञा-वचने च न स्त इति वृत्तिकृदुक्तेः । मेक्षणेन होमपक्षे तत्प्रहरणम-र्थाल्लुप्यते । करेण तत्पक्षे तु मेक्षणमेवेति विशेषः । अत्र पाणि-होमे इध्ममेक्षणविप्राभ्यनुज्ञा न सन्ति । पित्रादित्रिपाणि परिसमुह्य पर्युक्ष्य वामेनोपस्तीर्य दक्षिणेनावदाय जुहुयादिति स्मृत्यर्थसारः । *अनुज्ञादीनि । विप्राभ्यनुज्ञा ग्रात्या विरोधविरहात् अग्निपक्षशौ-नकवाक्याच्च । मेक्षणं चोपादेयम् । अन्नदानरूपकार्यसत्वात् । कार्ये प्रतिनिध्यभावाच्च परिसमूहनपर्युक्षणे तु न भवतः । पांसु-निरसनलक्षणदृष्टकार्यलोपेन नियमादृष्टमात्रस्याप्रयोजकत्वात् । प-रिस्तरणं कार्यमेव । अदृष्टमात्रौपयिकत्वात् । इध्मा तु लुप्यते । अग्न्यभावे तत्समिन्धनार्थस्य तस्याप्यभावात् । अनुज्ञानिषेधेऽस्त्र-रसं दर्शयन्नेवाह—*पाणिहोमे इति । आज्यमाज्यप्लुतमन्नं दर्व्या-दिपात्रे स्थापयित्वा तत्पात्रमुद्धृत्य करे धारयित्वा भवत्स्वेवाग्नौ-करणमिति कर्माधिकरणकारकयोर्निर्देशं कृत्वा शेषं पूर्ववत् अग्न्य-धिकरणहोमवत् करिष्ये करवै करवाणीति वाऽख्यातपदं प्रयुञ्जीत ब्राह्मणास्तु तथाऽस्त्वित्यनुज्ञां दद्युः । यद्वा अत्रापि पूर्ववदित्यनु-वर्तते । तेन क्रमेण क्रियतां कुरुष्व कुरु इति वा अनुज्ञावचनं क-

इति । *आश्वलायनः—'यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशत्यन्नमन्ने सृष्टं दत्तमृध्नुकम्' इति । पाणौ हुतं पात्रे निधाय विप्रैराचम्य भोजनार्थमन्ने परिविष्टे हुतशेषं पात्रेषु दद्यादित्यर्थः । सृष्टं प्रभूतम् । *नैमित्तिकं चेदमाचमनं न हुतभक्षणनिमित्तम् ।

*अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

इति बह्वृचपरिशिष्टात् । हेमाद्रावप्याचमने हेत्वर्थवाद उक्तः *'पाण्या(१)स्यो हि द्विजः स्मृतः' इति । भाष्ये

---

भ्यते । तथा पाणिहोमेऽग्नौकरणधर्मान्तरातिदेशोऽपि ज्ञातव्यः । तेन होमार्थान्ने पूर्वार्धपरार्धकल्पना अभिघारणप्रत्यभिघारणे द्विरवदानं मेक्षणेन करेण वा होम इति हुतशेषप्रतिपत्तिमाह—*आश्वलायन इत्यादिना । *यदीति । यदा द्विजपाणिषु जुहुयात्तदा होमाधिकरणीकृतपाणिषु द्विजेषु कृताचमनेषु सत्सु अन्यदन्नमनुदिशति ददाति । अथानन्तरं पाणौ हुतादन्नाच्छेषमन्नं किञ्चिद्ब्राह्मणेभ्यो दद्यात् । पित्र्यविप्रपात्रेषु निक्षिपेदित्यर्थः । आचमनं च निष्क्रम्य कार्यमिति वृत्तिः । ननु भक्षणाभावे कुत आचमनम् अशुचित्वाभावात् अथ भक्षणेऽशुचित्वेऽपि कुत आचमनम् ? वचनादिति चेत् ? अभक्षणेऽपि तत एवाचमनं कर्माङ्गस्येवाशुचित्वाभावेऽपि नैमित्तिकाचमनदर्शनादित्याह—*नैमित्तिकमिति । पाणिहोमनिमित्तकमित्यर्थः । तेनाग्नौ होमपक्षे तन्न कार्यं निमित्ताभावात् । पूर्वभक्षणं निषेधति—*अन्नमिति । *पाण्यास्य इति । तथा चाभ्यवहार्यस्य गौणास्यसंयोगादाचमनम् ।

(१) ब्राह्मणेवोक्तनिमित्तेषु नित्यमाचमनं कार्यमित्यर्थः ।

त्वाचान्तेषु *भक्षितेषु । चमु भक्षणे भक्षणोत्तरं च नाचमनं *अग्निसाम्यात् । (१)*पूर्वनिषेधस्तु सपिण्डीकरणे ज्ञेयः, *ददातिचोदितत्वात् न त्वत्र जुहोतिचोदितत्वादित्युक्तम् । नत्वेतद्धेतुसंमतम् । यत्तु बौधायनेन—

*तस्मिंस्तु प्राशिते दद्याद्यदन्न प्रकृतं भवेत् ।

इति भक्षणमुक्तं, तत् तच्छाखीयानामेवेति हेमाद्रिः । तत्रैव यमः—

पित्र्यपाणिहुताच्छेषं पितृपात्रेषु निक्षिपेत् ।
अग्नौकरणशेषं तु न दद्याद्वैश्वदेविके ॥

---

तच्च वाचनिकमेव, अशुचित्वाभावादित्यर्थः । *भक्षितेष्विति । एतन्मते नान्नद्वयमिश्रणम् । *अग्निसाम्यादिति । तदुक्तम्—

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।
यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ॥ इति ।

एवं सति "अन्नं पाणितले दत्तम्" इति निषेधविषयमाह—*पूर्वेति । *ददातीति । हुतशेषं पितृभ्यो ददातीति सपिण्डने ददातिचोदितस्यैव दत्तमित्यनेन ग्रहणम् । इदं तु जुहोतिचोदितमिति नात्र तन्निषेधः प्रवर्तते इत्यर्थः । नच वृत्तिकृतां ददात्यचोदिते दत्तमिति कथमिति वाच्यम्, तन्मते दत्तमित्यस्य विधितः पाणौ निहितमित्यर्थकत्वात् । *तस्मिन्निति ।

अग्नौकरणशेषेण यदन्नमभिघारयेत् ।

इति पूर्वार्धम् । अग्नौ आज्याहुतित्रयं ततो हुतशिष्टाज्याभिघारितान्नभक्षणमित्यर्थः । शाङ्खायनानां तु अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा यमायाङ्गिरस्वते स्वाहेति दैविकधर्मेण जुह्वतामाहुतयः । एवमन्येषामपि स्वस्वसूत्रानुसारेण द्वयं त्रयं

---

(१) 'अन्नं पाणितले' इत्यादिकः ।

तत्र पृथ्वीपतिरिति समम्। कर्कस्तु सूत्रे हुतशेषं दैवपित्र्ययोः पात्रेषु दद्यादित्याह। *तत्रैव वृद्धवसिष्ठः—

पितृपाणिकरे हुत्वा शेषं पात्रेषु निक्षिपेत्।
पितृभ्यः केचिदेकस्मिन् दद्यान्नैव च दैविके॥

(१)अथाश्वलायनानां सूत्रे—'उद्धृतायामग्नौ च क्रियमाणायामन्वाहार्यपचने कामं पुत्राद्व्रयन्तां कामं चाग्नौ च क्रियतामित्यनुज्ञात उद्धरेज्जुहुयाच्च'। नष्टाग्निविधुरादेर्विशेषो पृथ्वीचन्द्रोदये—

नष्टाग्निर्दूरभार्यश्च पार्वणे समुपस्थिते।
संधायाग्निं ततो होमं कृत्वा तं विसृजेत्पुनः॥

अथाग्नेरिति तत्कालेऽग्निं संधाय हुत्वा त्यजेदित्यर्थः। एतदाश्वलायनानामेव। पाणिहोमस्तु छन्दोगादीनाम्। विश्वप्रकाशेऽपि—

*नाग्निरौपासनेऽनग्निरग्नौ कुर्वीत लौकिके।
पाणौ होमं प्रशंसन्ति तत्वापस्तम्बशाखिनाम्॥
*स्नातका विधुरा वा स्युर्यदि वा ब्रह्मचारिणः।
अग्नौकरणहोमं तु कुर्युस्ते लौकिकेऽनले॥
अथाग्नौ मनो ज्योतिरित्युक्त्वा व्याहृतीर्हुनेत्॥

---

वा बोध्यम्। *अग्नौ तत्र हुतशेषस्य पितृपात्रे दानं वैश्वदेवपात्रे नार्पितं च। कर्कोक्तमर्थं निराकरोति—*तत्रैवेति। इदमुपलक्षणम्—उपवीतादिधर्मेण जुह्वतामग्नौ दैवपितृकरे वा होमेऽपि शेषदानं पितृपात्र एव पात्रे न दैवे इत्यपि द्रष्टव्यम्। *आपस्तम्बेत्यादि आपस्तम्बानामित्यर्थः। *नाग्निरिति द्विविधस्याप्याहिताग्नेर्दक्षिणाग्निरिति मतेनेदम्। *स्नातका इति प्रागुक्तद्विजपाणिस्तु एतन्मते आश्वलायनपर इति न तद्विरोधः। आपस्तम्बेन मासि-

(१) 'अथ' नास्ति क० अ०।

*ततोऽनुज्ञातोऽग्नीन्धनाद्याज्यभागान्ते यन्मे मातेत्याद्यैर्जुहुयात् । तत्र समान्नाहुतयः षडाज्यस्येति त्रयोदश । व्यस्थयो वा । यथा—'यन्मे माता प्रलुलोभ तन्मे रेतः पिता वृङ्क्तां यास्तिष्ठन्ति' इति द्वाभ्याममुष्मैस्वाहेति पितुर्नाम्ना द्वौ होमौ । यन्मे पितामही प्रलुलोभ तन्मे रेतः पितामहो वृङ्क्तामन्तर्दधे (१)ऋतुभिरिति तन्नाम्ना पितामहाय द्वौ । यन्मे प्रपितामही प्रलुलोभ तन्मे रेतः प्रपितामहो वृङ्क्तामन्तर्दधे ऋतुभिरिति तन्नाम्ना प्रपितामहाय द्वौ । मातामहेषु तूहः—'यन्मे मातामही प्रलुलोभ तन्मे रेतो मातामहो वृङ्क्ताम् । अन्यं मातामहाद्वृद्ध(२)म् इत्यादौ । यन्मे मातुः पितामही प्रलुलोभ तन्मे रेतो मातुः पितामहो वृङ्क्ताम् । अन्यं मातुः पितामहाद्वृद्ध(२)म् यन्मे मातुः प्रपितामही प्रलुलोभ तन्मे रेतो मातुः प्रपितामहो वृङ्क्ताम् । अन्यं मातुः प्रपितामहाद्वृ(२)द्धम् सर्वत्रामुष्मा इत्यत्र ङेन्तं तत्तन्नाम योज्यम् । तदु गृह्यसंग्रहे—

योऽयः पित्रादिशब्दानां स्थाने मातामहादिकः ।
अन्नहोमे तथा *स्पर्शे जलपिण्डादिदानके ॥
यन्मे मातामहीत्यादि तत्रोदाहरणं भवेत् ॥

ततो ये चेत्येकान्नाहुतिः । ततः स्वाहा पित्र्ये इत्याद्यैराज्यं हुत्वा स्विष्टकृतं हुत्वा *सर्वभक्ष्यं किञ्चिदादायोदगुष्णं भस्मापोह्य तत्र तूष्णीं स्वाहाकारेण जुहोति । परिषेचनान्तं स्थालीपाकवत् ।

---

श्राद्धविधौ त्रयोदशाहुतय उक्तास्ता दर्शयति—*तत इति । *स्पर्शे ब्राह्मणभोजनार्थान्नस्पर्शे । *सर्वभक्ष्यं सर्वविधमन्नम् ।

---

(१) 'ऋतुभिः' नास्ति क० ज० । (२) 'द्धं' ग० ।

अयमग्नौकरणहोमो मासिकश्राद्ध एव । 'तच्च स्मार्ताग्न्यभावे न कार्यम्' इति केचित् । कार्यमेवेति बहवः । अतएव *सर्वाधानिनो होमवर्जं मासिकश्राद्धमुक्तं सुदर्शनभाष्ये । महालये *तद्वदित्येके प्रकरणान्तरत्वात् । कर्मान्तरत्वेन स्मार्तपार्वणवत्कार्यम् इति त्वस्मद्गुरवः । आब्दिकादिषु तु स्मार्तपार्वणविधिरेव । एवं मातृवार्षिकादिषु । मासिश्राद्धविकृतावष्टकायां मातृश्राद्धे वैकृतहोमेन प्राकृतहोमबाधः । 'अन्वष्टकासु मातृश्राद्धं न' इति भाष्ये । *तत्रापि श्राद्धान्तरवत् क्रियमाणे तु यन्मे मातेत्यादौ गुणत्वेपि मातृप्राधान्यं विवक्षितम्, 'मासिश्राद्धेन कल्पो व्याख्यातः' इति सूत्रात् । *'आग्नेय्येव मनोता कार्या' इति वचनाद्*अग्निशब्दस्यैव वैकृतदेवताभिधायित्वम् । *तेनामुष्मा इत्यत्र 'अमुकशर्मभ्यां *पितृभ्याम्' इत्याद्यूहः कार्यः । 'तच्च मासिश्राद्धं जीवत्पित्रा(१)दीनां व्युत्क्रममृतपित्रा(१)दीनां च कार्यम्' इत्युक्तं सुदर्शनभाष्ये । तत्प्रकारस्तु व-

---

*सर्वाधानिन इति । आपस्तम्बानां मासिश्राद्धस्यापूर्वत्वेन पितृयज्ञादक्षिणाग्निप्राप्त्यभावात्स्मार्तस्याभावेन सर्वाधानिनोऽधिकरणाभावाद्धोमलोप इत्याशयः । इदमापाततः, पितृयज्ञधर्मकत्वाभावेऽपि स्मृतिवाक्ये न दक्षिणाग्नेः पाणिलौकिकाग्न्यादेश्च प्राप्तिसम्भवात् । *तद्वत् होमवर्जं मासिश्राद्धम् । भाष्याशयं निरस्यन्नेव मातुः श्राद्धे साधयति*—तत्रापीति । *आग्नेय्येवेति । यद्यप्यन्यदेवत्यः पशुः स्यादित्यग्नीषोमीयं प्रक्रम्य विहिताऽऽग्नेयीमनोतान्यदेवता कृत्वा दुष्करेति प्राप्ते सिद्धान्तमाह—*अग्निशब्दस्येति । *तेन मातुः प्राधान्येन । *पितृभ्यामिति । "पिता-

---

(१) 'पित्रादिना' क० ञ० ।

क्ष्यते । मातापित्रोर्द्वित्वादौ तु नोहः, 'तस्मादृचं नोहेत्' इति निषेधात्, प्रकृतावूहाभावाच्च *पत्नीं सन्नह्येतिवत् । उपदेशमते तूहः । यथा—'यन्मे मातरौ प्रलुलोभतुश्चरत्यावननुव्रते' इत्याद्यस्मत्पितृकृतमासिश्राद्धनिर्णये ज्ञेयमिति दिक् । अन्यत्प्राग्वत् ॥

अथ परिवेषणम् । तच्चोपवीत्येवाज्येन देवपूर्वं 'आमासुपक्वम्' इति पात्राण्युपस्तीर्य कुर्यात इति हेमाद्रिः । भारते दानधर्मेऽपि—

आज्याहुतिं विना नैव यत्किंचित् परिविष्यते ।
दुराचारैश्च यद् भुक्तं तं भागं रक्षसां विदुः ॥

तत्रैव शौनकः—

*विधिना देवपूर्वं तु परिवेषणमाचरेत् ।

तत्रैव धर्मः—

फलस्यानन्तता प्रोक्ता स्वयं च परिवेषणे ॥

तत्रैव वायुभविष्ययोः—

भार्यया श्राद्धकाले तु प्रशस्तं परिवेषणम् ।

ब्रह्माण्डे—

नापवित्रेण नैकेन हस्तेन न विना कुशम् ।
(१)नायसे नायसेनैव श्राद्धे तु परिवेषयेत् ॥

---

मात्रा" (पा०सू०१-२-७०) इत्येकशेषः । *पत्नीमिति । पत्नीद्वित्वे बहुत्वे वा नोहः प्रकृतावूहाभावादिति सिद्धान्तः । *विधिनेति । याज्ञवल्क्यः—

अन्नमिष्टं हविष्यं च दद्यादक्रोधनो नरः ।

इष्टं ब्राह्मणानाम् । मनुः—

यद्यद्रोचेत विप्रेभ्यस्तत्तद्द्यादमत्सरः ।

---

(१) अत्राऽयसेनेति पदमयत्नेनेत्यर्थकं ज्ञेयम् । 'नापसव्येन' इति पाठः । इति गपुस्तकटिप्पण्यां दृश्यते तच्चिन्त्यम् ।

वसिष्ठः--

आयसेन तु पात्रेण यदन्नं सम्प्रदीयते ।
भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ॥

पैठीनसिः-'सीसका*यसरीतिपात्राण्ययज्ञियानि ।
तत्रैव हारीतः--

सौवर्णराजताभ्यां च खड्गेनौ*दुम्बरेण वा ।
दत्तमक्षय्यतां याति *फल्गुपात्रेण वा पुनः ॥

कार्ष्णाजिनिः--

दर्व्या देयं घृतं चान्नं समस्तव्यञ्जनानि च ।
उदकं चैव पक्वान्नं नो दर्व्या तु कदाचन ॥

यमः--

पङ्क्त्यां विषमदातुश्च निष्कृतिर्नैव विद्यते ।

पृथ्वीचन्द्रोदये पराशरः--

सर्वदा च तिला ग्राह्याः पितृकृत्ये विशेषतः ।
भोज्यपात्रे तिलान् दृष्ट्वा निराशाः पितरो गताः ॥

चन्द्रिकायां वृद्धशातातपः--

हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः ।
पितॄणां नोपतिष्ठन्ति भोक्ता भुञ्जीत*किल्बि(१)षम् ॥

---

ब्रह्मोद्याश्च कथाः कुर्यात् पितॄणामेतदीप्सितम् ॥ )
*आयसं दर्वीपात्रिकादि अयसेन । *औदुम्बरं ताम्रम् ।
*फल्गुः काकोदुम्बरिका । *किल्बिषमिति ।
तस्मादन्तरितं कुर्यात् पार्णेनाथ तृणेन वा ।

---

(१) एतदग्रे 'तस्मादन्तरितं कुर्यात्पार्णेनाथ तृणेन वा' इत्यर्धमधिकं कंसाभ्यन्तरे गपुस्तके वर्तते तट्टिप्पणी च 'इदं धनुश्चिन्हगर्भितं पद्यार्धं केषुचित्पुस्तकेषु नास्ति' इति च वर्तते परमस्माभिस्तदर्धस्य टीकायामुपलम्भात् मूले न स्थापनं कृतमित्यवधेयम् ।

घृतपात्रे विशेषो ग्रन्थान्तरे—

ओदने परमान्ने च पात्रमासाद्य मुग्धधीः ।
घृतेन पूरयेत्पात्रं तद् घृतं रुधिरं भवेत् ॥

घृतादिपात्राणि भूमौ स्थापयेन्न भोजनपात्रे इति मदनरत्ने । सङ्ग्रहे—

हस्तदत्तं तु नाश्नीयाल्लवणव्यञ्जनादिकम् ।
अपक्वं तैलपक्वं च हस्तेनैव *प्रदीयते ॥

पात्रालम्भनमुक्तं चतुर्विंशतिमते—

उत्तानं दक्षिणं सव्यं नीचं पात्राण्युपस्पृशेत् ।

याज्ञवल्क्यः—

दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ।
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥

बौधायनः—'विप्राङ्गुष्ठेनानखेनानुदिशति' 'पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा मे पितॄणां क्षेष्ठा अमुत्रामुष्मिँल्लोके' इति । अत्र जुहोम्यग्रे स्वाहाशब्दः कातीयसूत्रे उक्तः । पैत्रे स्वधाशब्दः । अङ्गुष्ठे विशेषमाह हेमाद्रौ धौम्यः—

परिवृत्य नचाङ्गुष्ठं द्विजस्यान्ने निवेशयेत् ।

तथा—

उत्तानेन तु हस्तेन द्विजाङ्गुष्ठनिवेशनम् ।
यः करोति द्विजो मोहात्तद्वै रक्षांसि भुञ्जते ॥

---

इत्युत्तरार्धम् । *प्रदीयते इति । निगमः—

अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितम् ।
अधः कृच्छ्रासु घोरासु तिर्यग्योनिषु गच्छति ॥

देवलः—

नाश्रु सम्पातयेच्छ्राद्धे न जल्पेन्न हसेन्मिथः ।

तत्रैव यमः—

विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षस्व च क्रमात् ।

दैवे पित्र्ये चेत्यर्थः । तत्रैवात्रिः—

सम्बन्धनामगोत्राणि इदमन्नं ततः स्वधा ।
पितृक्रमादुदीर्येति स्वसत्तां विनिवर्तयेत् ॥
हस्तेनाभुक्तमन्नाद्यमिदमन्नमुदीरयेत् ।

अत्र 'अन्नदाने चतुर्थी स्यात्' इत्यादिविशेषाः पूर्वमुक्ताः । अत्र पूर्वोक्तमन्त्रान्ते 'पुरूरवार्द्रवसंज्ञका विश्वेदेवा देवता इदमन्नं सपरिकरं हव्यम् । (१)अयं ब्राह्मणस्त्वाहवनीयार्थे दत्तं दास्यमानं चातृप्तेः गयेयं भूः गदाधरो भोक्ता इदमन्नं ब्रह्म सौवर्णपात्रस्थमन्नमक्षय्यवटच्छायास्थम् अमुकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा नमो न मम' इति बह्वृचपरिशिष्टहेमाद्र्याद्यनुमतः प्रयोगः । एवं पित्र्ये अमुकगोत्रवसुरूपादि तत्तन्नाम ज्ञेयम् । ततो 'ये देवासः' इति दैवे, 'ये चेह पितरः' इति पित्र्ये केचिज्जपन्ति ।

ततोऽच्छिद्रं वाचयेत । तत्रैव प्रचेताः—

आपोशानकरे विप्रे संकल्पाच्छिद्रभाषणात् ।
निराशाः पितरो यान्ति देवैः सह न संशयः ॥

पारस्करः—

संकल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः ।

---

न विभ्रंशेन्न संक्रुध्येन्नोद्विजेन्नात्र कुत्रचित् ॥
प्राप्ते हि कारणे श्राद्धे नैव क्रोधं समुच्चरेत् ।
आश्रितः स्विन्नगात्रो वा न तिष्ठेत् पितृसन्निधौ ॥

स्तम्भभित्त्यादौ निहितशरीर आश्रितः ।

---

(१) 'अयं' नास्ति क. अ.

श्राद्धं निवे(१)द्यापोशानं जुषप्रैषोऽथ भोजनम् ॥

निवेद्येति ब्रह्मार्पणं कृत्वेत्यर्थः । अत एव बृहन्नारदीयेऽन्नत्यागमुक्त्वोक्तम्—

दत्तं हविश्च तत्कर्म विष्णवे वै समर्पयेत् । इति ।

यत्तु कृत्यरत्ने कार्ष्णाजिनिः—

अपसव्येन कर्तव्यं पितृ(२)कृत्यमशेषतः ।
अन्नदानादृते सर्वमेवं मातामहेष्वपि ॥ इति,

तदप्येतत्परम् । तत्र 'ब्रह्मार्पणं ब्रह्म हविः,' 'हरिर्दाता हरिर्भोक्ता,' 'चतुर्भिश्च' इति केचित्पठन्ति । धर्मप्रदीपे—

ततोऽन्नं पितृदेवेभ्यः सङ्कल्प्य च यथाविधि ।
दत्तं यद्दास्यमानं च आतृप्तेर्न ममेति च ॥

तथा—

श्राद्धीयान्नस्य संकल्पो भूमावेव प्रदीयते ।
हस्तेषु दीयमानं तु पितॄणां नोपतिष्ठते ॥
वैश्वदेवस्य वामे तु पितृपात्रस्य दक्षिणे ।
संकल्पोदकदानं स्यान्नित्यश्राद्धे यथारुचि ॥

प्रचेताः—

आपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ ।
मधुवाता इति तृचं मध्वित्येतत्त्रिकं तथा ॥

---

विष्णुः—"नान्नमासनमारोपयेत्, नावक्षुतं कुर्यात्" । आसनपदम् आधारोपलक्षणम् । ततश्चान्नपात्रमाधाराद्युपरि न स्थापयेदित्यर्थः । ब्राह्मे—

पित्र्ये कर्माणि भुञ्जानो भूमौ पात्रं न चालयेत् ।

---

(१) 'निवेद्यापोशानं श्राद्धम्' इति पाठो बहुत्र ।

(२) 'पित्र्यं शेषमशेषतः' क० 'पित्र्यं कृत्यमशेषतः' अ० ।

मिताक्षरायां पारस्करः—

सङ्क(१)ल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः ।
श्राद्धं निवेद्यापोशनं जुषप्रैषोऽथ भोजनम् ॥
गायत्रीं त्रिःसकृद्वापि जपेद्व्याहृतिपूर्विकाम् ।
मधुवाता इति तृचं मध्वित्येतात्त्रिकं तथा ॥

याज्ञवल्क्यः—

सव्याहृतिं च गायत्रीं मधुवाता इति त्र्यृचम् ।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥

यथासुखं जुषध्वमिति वाच्यम् । अत्रिः—

असंकल्पितमन्नाद्यं *पाणिभ्यां यद्युपस्पृशेत् ।
अभोज्यं तद्भवेदन्नं पितॄणां नोपतिष्ठते ॥
अन्नं दत्तं न गृह्णीया*द्यावत्तोयं न संपिबेत् ॥

व्यासः—

न्यस्तपात्रस्तु भुञ्जीत पञ्चग्रासान्महामुने ।
शेषमुद्धृत्य भोक्तव्यं पित्रर्थे तु न चोद्धरेत् ॥

*पाणिभ्यामिति ।

उभयोर्हस्तयोर्युक्तं पितृभ्योऽन्नं निवेदितम् ।
तस्मादेकेन हस्तेन तदन्नं समुपाहरेत् ॥
भाजनं च समालभ्य तिष्ठेदुच्छेषणावधि ॥

निवेदितान्नमुभयोर्हस्तयोरेकेन पात्रालम्भनादपरेण भोज्यमित्यर्थः । *यावत्तोयमिति । प्रचेताः—

---

(१) सङ्कल्पोत्तरं गायत्रीजपपूर्वकं मधुमतीः पठित्वाऽपोशनार्थं जलं दत्वा जुषध्वमिति प्रैषेण भोजनानुज्ञापनं कार्यमिति वचनार्थः । एवञ्च सावित्रीजपानन्तरमपोशनदानमुक्तं, प्रचेतोवचने तु विपरीतमुक्तम् । तत्रेयं व्यवस्था—पारस्करवचनं बह्वृचपरं प्रचेतोवचनं तदन्यपरम् । उपवीत्यन्नेषु मधु सर्पिर्वाऽऽसिच्य सप्रणवव्याहृतिं सावित्रीं मधुमतीश्च जपित्वा मध्विति च त्रिरुक्त्वा पितॄननुस्मृत्याऽपोशनं दत्वाऽपः प्रदाय ब्राह्मणान् यथासुखं जुषध्वमिति भोजनायातिसृजेदिति बह्वृचपरिशिष्टे ।

आपोशने विशेषमाह स्मृतिसमुच्चये—

आपोशनं वामभागे सुरापानसमं भवेत्।
दक्षभागे तु यः कुर्यात्सोमपानसमं भवेत्॥

तथा—

पुनरापूर्यापोशनं सुरापानसमं भवेत्।

हेमाद्रावत्रिः--

*दत्ते वाऽप्यथवाऽदत्ते भूमौ यो निक्षिपेद्बलिम्।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतैः॥

केचिदाज्येन कुर्वन्ति, तन्न

पायसेन तथाज्येन माषान्नेन तथैव च।
न कुर्याद्बलिदानं तु ओदनेन प्रकल्पयेत्॥

इति स्मृतिसारे निषेधात्। शङ्खः--

श्राद्धे नियुक्तान् भुञ्जानान्न पृच्छेल्लवणादि तु।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः॥

कात्यायनः-'अश्नत्सु जपेत्सव्याहृतिकां गायत्रीं सकृत्त्रिर्वा रक्षोघ्नीः पौरुषं सूक्तमप्रतिरथम्' इति। हेमाद्रौ सौरपुराणे--

ऐन्द्रं च पौरुषं सूक्तं श्रावयेद्ब्राह्मणांस्ततः।

मात्स्यपाद्मयोः--

ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विविधानि च।

---

पीत्वाऽपोशनमश्नीयात् पात्रे दत्तमगर्हितम्।
सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः॥

( *दत्ते(१)इति। भोक्तॄणां बलिदाननिषेधः।

पितृणामन्नमादाय बलिं यस्तु प्रयच्छति।
स्तेयेन ब्राह्मणः स्तेनः स सर्वः स्तेयकृद्भवेत्॥

इति भारद्वाजमिति बोध्यम्। बलिदाने त्वन्नमालभ्य त्रिः

---

(१) धनुश्चिन्हान्तर्गतं नास्ति च०।

इन्द्रेशसोमसूक्तानि पावमानीश्च *शक्तितः ॥
मण्डलं ब्राह्मणं तद्वत् प्रीतिकारि च यत्पुनः ।
अभावे सर्वविद्यानां गायत्रीजपमाचरेत् ॥

पृथ्वीचन्द्रोदये ब्राह्मे—

वीणां वंशध्वनिं चाथ विप्रेभ्यः संनिवेदयेत् ।
जपेच्च पौरुषं सूक्तं नाचिकेतत्रयं तथा ॥
त्रिमधु त्रिसुपर्णं च पावमानीर्यजूंषि च ॥

हेमाद्रावत्रिः—

*हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वापि वदेद् गुणान् ।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वा पिबेत् ॥

---

सावित्रीजपः प्रायश्चित्तमिति नागोजी । अत्रापोशानविधानबलिनिषेधाभ्यामन्ये पर्युक्षणादिप्राणाहुत्यन्ता नित्यभोजननियमाः सन्तीति लभ्यते । ) *शक्तित इति । यजुः सामाथर्वणां जप्यानि ग्रन्थान्तरेभ्यो द्रष्टव्यानि ।

अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम् ।
नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषाम् ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥

इति सप्तार्चिर्जपस्तु सर्वेषाम् । आश्रावय, अस्तु श्रौषट् यज, ये यजामहे, वौषट् इति चतुर्भिरित्याद्यर्थः । हेमाद्रौ—

महालये गयाश्राद्धे प्रीतिश्राद्धे तथैव च ।
सपिण्डीकरणश्राद्धे न जपेत्किल सूक्तकम् ॥

इत्यभिश्रवणनिषेधो द्रष्टव्यः । *हुंकारेणापीति । स्वस्तिवाचनानन्तरमदोषमाह वसिष्ठः—

हविर्गुणा न वक्तव्या यावन्न पितृतर्पणम् ।
पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥

*प्रौढपादो बहिःकच्छो बहिर्जानुकरोऽपि वा ।
अङ्गुष्ठे विनाऽश्नाति मुखशब्देन वा पुनः ॥
पीतावशिष्टतोयानि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धान् पुनः खादन्मोदकानि फलानि च ॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा ।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम् ॥

जाबालिः—
इष्टमुष्णं हविष्यं च दद्यादन्नं शनैःशनैः ।

वृद्धशातातपः—
अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ।
न याचते द्विजो मूढः स भवेत् पितृघातकः ॥

यत्तु यमः—
श्राद्धे द्विजो नैव दद्यान्न याचेन्नैव दापयेत् । इति,
तद्दत्तसंपादितवस्तुविषयमिति हेमाद्रिः । हारीतः—
ऊर्ध्वपाणिश्च विहसन् सक्रोधो विस्मयान्वितः ।
भग्नपृष्ठश्च यद्भुङ्क्ते न तत्प्रीणाति वै पितॄन् ॥

प्रचेताः—
न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।

---

*प्रौढपादलक्षणं च—
आसनारूढपादस्तु जानुनोर्वाऽथ जङ्घयोः ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥ इति ।

मनुः—
यद्वेष्टितशिरा भुङ्क्ते यद् भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद् भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥

निगमः—
मांसापूपफलेक्ष्वादि दन्तच्छेदं न भक्षयेत् ।
ग्रासशेषं न पात्येत पीतशेषं तु नो पिबेत् ॥

न पादौ न शिरो वस्ति न पदा भाजनं स्पृशेत् ॥

शङ्खः--

*श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

उशनाः--

भोजनं तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च ॥

ब्राह्मे--

न चाश्रु पातयेज्जातु न शुष्कां गिरमीरयेत् ।
न चोद्वीक्षेत भुञ्जानान्न च कुर्वीत मत्सरम् ॥

यमः--

स्वाध्यायं श्रावयेत्सम्यग्धर्मशास्त्राणि चैव हि ।

प्रचेताः--

भुञ्जानेषु तु विप्रेषु ऋग्यजुःसामलक्षणम् ।
जपेदभिमुखो भूत्वा पित्र्यं चैव विशेषतः ॥

---

*श्राद्धपङ्क्तौ इति । उच्छिष्टेन परिवेष्टृस्पर्शे श्राद्धेन्दुशेखरे मरीचिः--

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तो नरो यदि ।
भूमौ निधाय तद्द्रव्यमाचान्तोऽभ्युक्षणात् शुचिः ॥

पुनः परिवेष्टव्यमित्यर्थः । अत्रिः--

भुञ्जानस्य तु विप्रस्य सिक्थोच्छिष्टं तु यः स्पृशेत् ।
प्रक्षाल्य भुक्त्वा स्नात्वा च गायत्रीद्विशतं जपेत् ॥
उच्छिष्टभोजने चैव सहस्रं समुपोषणम् ॥

सहस्रं जप उपोषणं चेत्यर्थः । अन्योन्यभोजनपात्रस्योच्छिष्टस्पर्शे व्यासः--

उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टपात्रं विहृत्य च ।
सर्वान्नं पूर्ववत्क्षिप्त्वा भोजयेत्तु द्विजोत्तमान् ॥

यजूंषि चैव रुद्रं च राक्षोघ्नीर्ऋच एव च ॥

राक्षोघ्नीः कृणुष्वरक्षोहणमित्याद्याः । तत्रैव निगमः--

'भुञ्जत्सु जपेत् पावमानीरुदीरतांमध्वन्नवतीश्च' ॥

अन्नवत्यः पितुंनुस्तोषमिति । पृथ्वीचन्द्रोदये भरद्वाजः--

भुञ्जानेषु तु विप्रेषु प्रमादात्स्रवते गुदम् ।

*पादकृच्छ्रं ततः कृत्वा अन्यं विप्रं नि(१)योजयेत् ।

*क्षणपाद्यादि दद्यादित्यर्थः ।

विप्रवमने तत्रैव दक्षः--

*निमन्त्रितस्तु यः श्राद्धे भोजने मुखनिःसृते ।

तदैव होमं कुर्वीत *स्वाग्नौ विप्रः समाहितः ॥

प्राणादिपञ्चभिर्मन्त्रैर्यावद्*द्वात्रिंशसंख्यया ।

---

शङ्खः--

उच्छिष्टलेपनस्पर्शे प्रक्षाल्यान्येन वारिणा ।

भोजनान्ते नरः स्नात्वा गायत्रीत्रिशतं जपेत् ॥

चण्डालादिस्पर्शे तु भरद्वाजः—

तदन्नमत्यजन् भुक्त्वा स्नात्वा देवीसहस्रकम् । इति ।

जपेदिति शेषः । एतान्निषेधान् स्मरन्तो भुञ्जीरन् । (*पा(२)दकृच्छ्रं ततः कृत्वेति । एतच्च प्रायश्चित्तं श्राद्धकर्तुः । कृत्वेत्यस्यार्थमाह-*क्षणेति । *निमन्त्रित इति । एतच्च वैश्वदेविकविप्रवमने इत्यग्रे स्पष्टम् । *स्वाग्नौ लौकिकाग्नौ । परिसमूहनादिप्राप्त्यर्थं स्वपदम् । *द्वात्रिंशेति । प्राणाय स्वाहेति पञ्चमन्त्रैः क्रमेण षड्वारं हुत्वा प्राणापानमन्त्राभ्यां जुहुयादित्य(३)-

---

(१) 'निमन्त्रयेत्' क० ज० । (२) धनुश्चिन्हान्तर्गतं नास्ति च ।

(३) अत्र प्राणाय स्वाहा इत्यादि समानाय स्वाहेत्यन्तैः पञ्चभिर्मन्त्रैः पुनः पुनः षड्वारमावर्तितैस्त्रिंशत्संख्या भवति । अतो द्वात्रिंशत्पूर्तये प्राणापानमन्त्रौ पुनरावर्तनीयौ ।

*द्वा(१)त्रिंशदाहुतीर्हुत्वा होमशेषं समापयेत् ।
ब्राह्मणस्तु *ततः कृ(२)त्वा घृतप्राशनमाचरेत् ॥

*ऋग्विधाने तु--

इन्द्रायसामसूक्तेन *श्राद्धविघ्नो यदा भवेत् ।
अग्न्यादिभिर्भोजनेन श्राद्धं संपूर्णमेव हि ॥

इत्युक्तम् । अग्न्यादिभिरिति लौकिकाग्निस्थापनचरुनिर्वापाद्याज्यभागान्ते पितृनामगोत्रपूर्वमग्नौ *पितॄनावाह्य संपूज्यान्नत्यागं कृत्वा प्राणादिभिर्द्वात्रिंशदाहु(३)तीर्हुनेदित्यर्थः । भोजनेन पुनःश्राद्धेन । *तेन होमः पुनः श्राद्धं चेति पक्षद्वयमुक्तम् । सूक्तजपस्तूभयानुगतः ।

स्मृतिसङ्ग्रहे—

*प्राधान्यं पिण्डदानस्य भोजनस्य तदङ्गता ।
अतो भुक्तिक्रियाहानौ श्राद्धावृत्तिं न मन्वते ॥

*पिण्डदानोत्तरं वान्तौ होम एव नावृत्तिः । पिण्ड-

---

र्थः ।) *ततः कृत्वेति स्नानादिमध्यम् । ( *ऋ(४)ग्विधाने इत्यादि । *श्राद्धविघ्नः वमनम् । *पितॄनिति विश्वेदेवोपलक्षणम् । दक्षऋग्विधानवाक्यद्वयैकवाक्यतया ह्ययमर्थः—वैश्वदेविकस्य पित्र्यस्य वा वमने समप्रायश्चित्तप्रत्ययात् । वैश्वदेविकवमने चरुर्न कार्यः पित्र्यवमने तु स कार्य इति तु केचित् । एवञ्च श्रीहियवत्रदेनयोरेकत्र [illegible]— *तेनेति । *प्राधान्यमिति । भोजनस्य पिण्डदानाङ्गताकथनं न तद्व्युत्पादनार्थं किन्तु अङ्गवत्तल्लोपे पुनस्तत्करणं नास्तीति सर्वसिद्धन्यायप्रापणार्थम् ।

---

( १ ) इदं पद्यार्धं नास्ति ग० अ० ।

( २ ) 'स्नात्वा' क० । ( ३ ) 'हुतीर्हुत्वा सूक्तं जपेदित्यर्थः' क० ।

( ४ ) धनुश्चिन्हान्तर्गतो ग्रन्थसन्दर्भो नास्ति च पुस्तके अस्ति च केवलं 'मध्यं दर्शितं स्मृतिसङ्ग्रहार्थं पक्षद्वयप्रदर्शनपूर्वकं दर्शयति श्राद्धपङ्क्तौ त्वित्यादिसप्तभिः । प्रक्रमादिति विरेके पश्चातिवमन' इति ।

दानात् प्राग्वान्तौ *तद्दिने उपवासं कृत्वा परेद्युः पुनः श्राद्धं कार्यमित्यर्थः । तत्रैव—

*श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो वमते यदि ।
लौकिकाग्निं प्रतिष्ठाप्य अर्चयेच्च हुताशनम् ॥

तथा—

एक एव यदा विप्रो भोजने छर्दितो यदि ।
तदैवाग्निं समाधाय होमं कुर्याद्यथाविधि ॥

द्वितीयपक्षे ऋग्विधाने—

भो(१)जनोपक्रमादूर्ध्वं *प्रक्रमात् पूर्वतो यदि ।
श्राद्धविघ्ने पुनः कार्यं *जपहोमौ न तृप्तिदौ ॥

स्मृतिसंग्रहे—

*अकृते पिण्डदाने तु भुञ्जानो ब्राह्मणो वमेत् ।
पुनःपाकात्तु कर्तव्यं पिण्डदानं यथाविधि ॥

पिण्डदानं श्राद्धम्—

अकृते पिण्डदाने तु पिता यदि वमेत्तदा ।
पुनः पाकं प्रकुर्वीत श्राद्धं कुर्याद्यथाविधि ॥

इति तत्रैवोक्तेः । तथा—

*पित्रर्थानां त्रयाणां च पिता च वमते यदि ।

---

अतश्चाह—*पिण्डदानेति । *तद्दिने उपवासं कृत्वेति । अत्र प्रमाणमनुपदमग्रे । प्रथमपक्षे लौकिकाग्निस्थापनादि द्रढयति—*श्राद्धपङ्क्ताविति । अर्चयेदित्युक्त्या भिन्नावाहनादिलाभः । *प्रक्रमात् पि(२)ण्डदानप्रक्रमात् । *जपहोमौ इन्द्रायसामसूक्तजपसहितहोमः । *अकृते इति । श्राद्धस्यापराह्णिकतया तत्र पित्र्यविप्रवमने पुनः पाकेन तद्दुष्करमिति पुनः पाकोऽर्थात् परेद्युः फलितः । अतः स्पष्टं तद्वचनमाह—*पित्रर्थानामिति । विरे-

---

(१) भोजनानन्तरमित्यर्थः । (२) पिण्डदानात्पूर्वमित्यर्थः । अत्र 'पिण्डदानकरणात्' इति क्वचित्पुस्तके पाठः ।

तद्दिने चोपवासः स्यात्पुनः श्राद्धं परेऽहनि ।
वमने वा *विरेके वा तद्दिनं परिवर्जयेत् ॥

*एषु वचनेषु मूलं चिन्त्यम् । इदं मासिकाब्दिक-विषयम् । दर्शादौ तु वान्तावामेन तदैव कार्यम्,

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमवास्यादिनियतं माससंवत्सराहृते ॥

इति मरीचिस्मृतेः । श्राद्धे पिण्डदानमेव प्रधानमिति कर्काचार्याः । तन्मते दक्षोक्तो होम एव नावृत्तिः । विप्रभोजनमिति मेधातिथिः । भोजनपिण्डदानाग्नौक-रणानीति कपर्दिधूर्तस्वामिहेमाद्यादयः । तन्मते पूर्वोक्तो निर्णयः । अन्नत्यागमात्रं प्रधानम् । भोजनं तु प्रतिपत्ति-रूपमङ्गम् । अतो वान्तौ तद्धानेपि नावृत्तिरिति गौडमै-थिलादयः । तन्न, *श्राद्धस्य यागदानोभयरूपत्वात्संपूर्ण-दानाभावात् भोजनस्याङ्गत्वेपि सोमवमने इव नैमित्तिक-विधानमिति युक्तं प्रतीमः ।

*अत्रेदं तत्त्वम् । वैश्वदेविकस्य वमने होम एव नावृत्तिः, *अङ्गत्वात् । तच्च रक्षार्थत्वात् 'इष्टिश्राद्धे क्रतु-

केवेत्यभिधानं च "अन्यं विप्रं निमन्त्रयेत्" इति प्रागुक्तार्थकम् । तद्दिने विप्रान्तरनिमन्त्रणासम्भवेन तस्य परेद्युरेव सम्भवात् । *एषु वचनेष्विति । "अकृते पिण्डदाने तु" इत्यादिषु इत्यर्थः । एतद्वचनानां निर्मूलत्वेऽपि "अग्न्यादिभिर्भोजनेन" इति ऋग्वि-धानाद्धोमः पुनः श्राद्धं चेति पक्षद्वयं प्रा(१)माणिकमेव तत्र पुनः श्राद्धं परदिने तद्दिने चोपवास इत्यपि अर्थत एवेति । अन्येति मतं दूषयन्नेवाह—*श्राद्धस्येति । ऋग्विधाने होमः पुनः श्राद्धं चेति पक्षद्वयमुक्तं तद् व्यवस्थापयति—*अत्रेदमिति । *अङ्गत्वादिति ।

---

(१) यद्यप्यत्र ङ पुस्तके 'प्रामादिकमेव' इति पाठस्तथापि स चिन्त्यः ।

दक्षौ' इत्यादिस्मृतेश्च । *तत्र जयान् जुहुयादितिवत् । *पितामहादेरपि तथा । पितेत्युक्तेरिति केचित् ।*तस्यापि प्रधानत्वा*त्पितृवदिति तु युक्तम् । सपिण्डीकरणादौ *वार्षिकवत् ।

*सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।
तत्र पिण्डप्रधानत्वं प्रेतत्वविनिवर्तकम् ॥

इति स्मृतेः । महैकोद्दिष्टादौ तूभयप्राधान्यादावृत्तिरेव,

एक एव द्विजो भोज्यः पिण्डोऽप्येको विधीयते ।

इति स्मृतेः । वृद्धिसंकल्पनित्यश्राद्धादौ तु भोजनप्राधान्याद्वान्तावावृत्तिरेव,

वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतम् ।
नित्यश्राद्धमदैवं स्यात्पिण्डदानविवर्जितम् ॥

---

तदेवाग्निं समाधाय होमं कुर्याद्यथा विधिः ।

इति वचनाच्च । विश्वेदेवभोजनस्याङ्गत्वे दृष्टान्तमाह—*तत्रेति । केषाञ्चिन्मतमाह—*पितामहादेरपीति ।

पितुर्वान्तावुपोष्याह्नि तत्र श्राद्धं परेऽहनि ॥
पुनः कार्यं चान्यवान्तौ नोपोष्य श्राद्धमाचरेत् ।
दर्शादौ वमने वामश्राद्धं हेम स्मृतीरितम् ॥

इति अभियुक्तोक्तेश्च तथा वमने होम एव । एतन्मतं दूषयति—*तस्यापीति । *पितृवदिति । तद्दिने उपोष्य परेद्युः श्राद्धमित्यर्थः । *वार्षिकवदिति । उभयप्राधान्यात् । तदहरेव पुनः श्राद्धमित्यर्थः । दृष्टान्ते तु पूर्वोक्तवचनानां समूलत्वे वार्षिकं परेद्युः निर्मूलत्वे च तदहरेव, सपिण्डनं तु तदहरेवेति विरोधः । एवं यदि विप्रालाभः तदा कथञ्चित्पुनः पाकं कृत्वा दर्भवटुषु तदसंभवे तयोः केवलपिण्डदानमात्रात्सिद्धिरङ्गीकार्येत्याशयेन तन्मात्रा-

इति स्मृतेः,

भुक्तिक्रियायाः प्राधान्यं श्राद्धे संकल्पभोजके ।
तत्रैव पिण्डविप्रस्य तृप्त्यन्ते पुनः क्रिया ॥

इति संग्रहोक्तेश्च ।*मघादावप्येवम् । तीर्थमहालयादौ दर्शवदित्या*शार्कास्त्वोचनेन प्रतीमः ।

---

वश्यकतामाह—*सपिण्डीकरणान्तानीति । *मघादाविति । अपिण्डकश्राद्धेषु भोजनप्राधान्यादावृत्तिरित्यर्थः । *आशार्केति । तदनादरणे तु) वमनविरेकयोः पूर्वोक्तं गौडमैथिलमतमेव ग्राह्यमित्यभिप्रायः । श्राद्धस्ये(त्या(१)दिग्रन्थस्तु आशार्काद्यभिप्राय इति । पारिजाते व्यासः—

वटार्काश्वत्थपर्णेषु कुम्भीतिन्दुकपर्णयोः ।
कोविदारे करञ्जे च भुक्त्वा चान्द्रायणं चरेत् ॥
करे कर्पटके चैव आयसे ताम्रभाजने ।
वटार्काश्वत्थपर्णेषु भुक्त्वा चान्द्रायणं चरेत् ॥

प्रचेताः—

मृन्मये पर्णपृष्ठे च कार्पासे तान्तवे तथा ।
नाश्नीयान्न पिबेच्चैव न करेण तथाङ्गनः ॥ इति ।

स्मृतिसङ्ग्रहे—

वामहस्तविमुक्ते तु पात्रे हस्ते तथैव च ।
तथोदके पर्णपृष्ठे भुक्त्वा चान्द्रायणं चरेत् ॥

इत्यादि । जमदग्निः—

भुक्त्वा पीत्वा तु यः कश्चिद्रिक्तपात्रं समुत्सृजेत् ।
स नरः क्षुत्पिपासार्तो भवेज्जन्मानि जन्मनि ॥ इति ।

मनुः—

पिबतो यत्पतेत्तोयं भाजने मुखनिःसृतम् ।
अभोज्यं तद्भवेदन्नं भोक्ता भुङ्क्ते तु किल्बिषम् ॥

---

( १ ) कंसान्तर्गतो ग्रन्थो नास्ति च पुस्तके ।

आश्वलायनः—'तृप्तान् *ज्ञात्वा *मधुमतीः श्रावयेद्'

क्षीरं भुक्त्वा पिबेत्तक्रं ब्राह्मणो ज्ञानदुर्लभः ।
षष्टिवर्षसहस्राणि कुम्भीपाके स पच्यते ॥

ब्राह्मे—

यच्च पाणितले भुङ्क्ते यच्च फूत्कारसंयुतम् ।
अङ्गुलीं चोद्धरेद् यस्तु गोमांसाशनवत्स्मृतम् ॥

यमः—

वामभागे करं न्यस्य कटिभग्नस्तु यो द्विजः ।
हसते वदते चैव निराशाः पितरो गताः ॥

मार्कण्डेयः—

सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः ।
उद्धृत्य पाणिं विहसन् सक्रोधो विस्मयान्वितः ॥
श्राद्धकाले च यो भुङ्क्ते न तत्प्रीणाति वै पितॄन् ।
पादेन पादमाक्रम्य यो भुङ्क्ते नारकी तु सः ॥
अन्नं ब्रह्मेति च ध्यात्वा गर्हयन् भोजनं चरेत् ॥

स नारकीत्यनुवर्तते । आपस्तम्बः—

कौशं तु बिभृयान्नित्यं पवित्रं दक्षिणे करे ।
भुञ्जानस्तु विशेषेण गर्हितान्नस्य शोधनम् ॥
पवित्रं तु परित्यज्य श्राद्धे भुङ्क्ते तु यो द्विजः ।
अदभ्रमसुरान् गच्छेन्न तत्प्रीणाति वै पितॄन् ॥
ग्रन्थीकृत्य पवित्रेण न भुञ्जीयान्न चाचमेत् ।

इति निषेधस्तु वर्तुलग्रन्थिभिन्नपरः,

भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते ।

इति स्मृतेः । उशनाः—

नियुक्तश्चैव यः श्राद्धे यत्किञ्चित्परिवर्जयेत् ।
पितरस्तस्य तं मासं नैराश्यं प्रतिपेदिरे ॥ )

*ज्ञात्वेति । तृप्तेषु श्रावयेदित्यनभिधाय ज्ञात्वेत्यभिधानं

क्षन्नमीमदन्तेति च संपन्नमिति *पृष्ट्वा यद्यदन्नमुपभुक्तं तत्त*त्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदये-द*भिमतेऽनुमते वा' इति। *अत्र गायत्री मध्विति त्रिकजपोऽपि ज्ञेयः,

तृप्तान्बुध्वान्नमादाय सतिलं पूर्ववज्जपेत्।

इति प्रचेतसोक्तेः। व्यासः—

तृप्ताः स्थेति तु पृष्टास्ते ब्रूयुस्तृप्ताः स्म इत्यथ।

अभिमते विप्रैः स्वीकर्तुमिष्टे। शौनकोऽपि——

अन्नशेषैश्च किं कार्यमिति पृच्छेत तांस्ततः।
ते इष्टैः सह भोक्तव्यमिति प्रत्युक्तिपूर्वकम्॥
प्रदद्युः सकलं तस्मै स्वीकुर्युर्वा यथारुचि॥

श्राद्धविशेषे प्रश्नभेदमाह हेमाद्रौ विष्णुः——"पित्र्ये स्वदितमिति, गोष्ठ्यां सुश्रुतं संपन्नमिति, अभ्युदये दैवे रोचते इति, आयुष्यमिति स्वैरिषु'। स्वैरमिच्छाश्राद्धम्। याज्ञवल्क्यः——

अन्नमादाय तृप्ताःस्थ शेषं चैवानुमान्य च।
तदन्नं प्रकिरेद् भूमौ दद्यादापः सकृत्सकृत्॥

इदं चात्र विकिरदानमन्यशाखिनाम्। आश्वलाय-

पूर्वमन्याः श्रावयेदित्यर्थम्। तथाच याज्ञवल्क्यः——

आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं ततः। इति।

पूर्वजपः व्याहृतिगायत्रीमधुवाता इत्यृक्त्रयत्रिरावृत्तमधुपदरूप इत्याह–अत्रेति। *मधुमतीरिति। "मधुवाता" इति तिस्रः अक्षन्नित्येका च। *पृष्ट्वेति। विप्राश्च सुप्रसन्नमित्यूचुः। *स्थालीपाकेन सहेति व्यतिषङ्गपक्षे। अन्यत्र तु केवलभुक्त-शेषेणैव ब्राह्मणसमीपे पिण्डदानम्। *अभिमते इति। तथाच ब्राह्मणैर्यदि स्वीकर्तुमभिमतः शेषः तं तदा तेभ्यो निवेदयेत्। अथ यद्यनुमत इष्टैः सह भुज्यतामिति तदा स्वयमेव सर्वं स्वीकृत्य बन्धु-

नानां तु *पिण्डान्त एव सूत्रकृतोक्तम्। *कात्यायनस्तु विकिरोत्तरं गायत्र्यादिजपं तृप्तिप्रश्नं चाह । हेमाद्रौ देवलः--

तत: सर्वाशनं पात्रे गृहीत्वा विविधं बुधः ।
तेषामुच्छेषणस्थाने *विकिरं भुवि निक्षिपेत् ॥

माधवीये प्रचेताः--

सार्ववर्णिकमादाय ये अग्नीति भुवि क्षिपेत् ।

स च कुशे कार्यः । 'दर्भेषु विकिरश्च यः' इत्युक्तेः । मन्त्रः कातीयः ।

*अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ इति ।

अन्ये तु—

असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

इति हेमाद्रौ गोभिलोक्तेन दैवे,

---

भिः भुञ्जीतेत्यर्थः। *पिण्डान्त एवेति । "पिण्डदानानन्तरं प्रकीर्यान्नम्" इति सूत्रात् । *कात्यायनस्त्विति। हेमाद्रौ धर्मः--

केषाञ्चिद्विकिरः पूर्वं तृप्तिप्रश्नस्तथापरः ।
प्रश्नः पूर्वमथान्येषां विकिरस्तदनन्तरम् ॥
अमृतापिधानात्पूर्वं केषाञ्चिद्विकिरः स्मृतः ।
अन्येषां तु ततः पश्चाद्विदुषामिति संमतम् ॥
गायत्र्यादिजपात्पूर्वं केषाञ्चित्तदनन्तरम् ॥ इति ।

विकिरप्रतिपत्तिमाह-*विकिरमिति । *अग्निदग्धाश्चेति पूर्वार्धे--

'येऽग्निदग्धा येऽनग्निदग्धा जीवा जाताः कुले मम' इति,
'अनग्निदग्धा ये जीवा अग्निदग्धाः कुले मम' ।
'येऽनग्निदग्धा जीवा येऽप्यग्निदग्धाः कुले मम' ॥

असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः ।
दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥

इत्यग्निपुराणोक्तेन पित्र्येऽन्नं विकीर्य 'ये अग्निदग्धाः' इत्युच्छिष्टपिण्डं कुशोपरि पृथग्दद्यादित्याहुः । पृथ्वीचन्द्रोदयेऽप्येवम् । ब्राह्मे—

ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत् ।

माधवीये गौतमः—'विकिरमु*च्छिष्टैः प्रतिपादयेत्' । हेमाद्रौ व्यासः—

उच्छिष्टैरेव विकिरं सदैव प्रतिपादयेत् ॥

भृगुः—

*पिण्डवत्प्रतिपत्तिः स्याद्विकिरस्येति तौल्वलिः ।

श्राद्धकारिकायाम्—

*यजमानस्य दासादीनुद्दिश्य द्विजसत्तम ।

---

इति वा पाठः । यमः—

येषां न माता न पिता न बन्धुर्नचान्नसिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्प्रयान्तु लोकाय सुखाय ते तु ॥
येऽस्मत्कुले तु पितरोऽसपिण्डोदकक्रियाः ।
ये चाप्यकृतपिण्डास्तु ये च गर्भाद्विनिःसृताः ॥
तेषां दाहो न क्रियते येऽग्निदग्धाश्च ये परे ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति मन्त्रः । *उच्छिष्टैरिति सहार्थे तृतीया । *पिण्डवदिति । उच्छिष्टसन्निधौ पिण्डदाने तैः सह प्रतिपादनं पिण्डसन्निधौ चेत्पिण्डवदिति व्यवस्थेति केचित् । पिण्डसन्निधौ विकिरदानमाह धूम्रः—

कपित्थस्य प्रमाणेन पिण्डं दद्यात्समाहितः ।
तत्समं विकिरं दद्यात् पिण्डान्ते तु षडङ्गुलम् ॥ इति ।

उच्छिष्टभागेभ्योऽन्नदानमाह—*यजमानस्येति ।

# काशीसंस्कृतसीरीज़–पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परंतु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि । | मूल्यम् । |
|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) | रु० १—८ |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) | रु० ८—० |
| ३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं १) | रु० २—८ |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) | रु० ०—६ |
| ५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमासिपर्यन्तः । ( व्याकरणं १ ) | रु० ८—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुण निरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) | रु० ६—० |
| ७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया–तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ ) | रु० ०—८ |
| ८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । | रु० ०—८ |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं १) | रु० ०—१२ |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) | रु० २—० |
| ११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध–शौच–स्नान–भोजन–कल्पसहितम् । ( कर्मकाण्डम् १ ) | रु० ०—८ |
| १२ पुरुषसूक्तम् । सायणभाष्य–महीधरभाष्य–मंगलभाष्य–निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) | रु० १—४ |
| १३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) | रु० १—४ |
| १४ कुमारसंभवं महाकाव्यम् । महाकवि–श्रीकालिदासवि० । सञ्जीवनी–शिशुहितैषिणी–टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं २) | रु० १–८ |

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृतभाषाटीकासहितः। ( छंदः १ ) रु० ०—६
१६ कारिकावली। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। ( न्यायं २ ) रु० १—०
१७ पारस्करगृह्यसूत्रम्। काण्डद्वये हरिहर गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्टोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च। ( कर्मकाण्डं २ ) रु० ३—०
१८ संक्षेपशारीरकम्-मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०
१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। ( व्याकरणं २ ) रु० ०—८
२० कातीयेष्टिदीपकः। ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः। ( कर्मकाण्डं ) रु० १—०
२१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम्। हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम्। ( स्तोत्रवि० १ ) रु० १—०
२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः—भाषाटीकासहितः ( बौद्धन्याय वि० १ ) रु० १—८
२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरणं ३) रु० ४—०
२४ न्यायवार्त्तिकतात्पर्यटीका-श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०
२५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः ( मीमांसा १ ) रु० २—०
२६ पौरोहित्यकर्मसारः ( टिप्पणीसमलंकृतः ) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। ( कर्मकाण्डवि० ३ ) रु० ०—४
२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः। अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ३—८
२८ रघुवंशमहाकाव्यम्। महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम्। म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनककलालठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् ( काव्यवि० ३ ) रु० ०—१२

२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नेरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ८—०

३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचर्यविरचितः । महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहोपाध्याय वर्द्धमनोपाध्यायप्रणितप्रकाशसहितः (न्यायं४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ४) रु० ३—०

३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनाभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि-गोतमादिचरितसम्वलितबृहत्भूमिकासहितम् । (न्यायं) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १–२–३–४ )(वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर–वामन–जयादित्यविनिर्मिता । (व्याकरणं ५) रु० ६—०

३८ प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः । टिप्पण्या च संयोजितः । (व्याकरणं ६) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवादसमेतः । (वेदान्तं ५) रु० २—०

४० श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः । (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः–मेदिनीकारविरचितः । (कोशं १) रु० १—८

४२ मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम् । ( भाग१—२ ) (मीमांसा ३) रु० १०—०

४३ न्यायदर्शनम्। श्रीगोतममुनीप्रणितम्। श्रीवात्स्यायनमुनीप्रणित भाष्यसहितम्। श्रीविश्नाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम्। टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दानमयूखः। विद्वद्वरश्रीनीलकण्ठभट्टविरचितः। (धर्मशास्त्रं १) रु० १—८

४५ कालमाधवः। विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं २) रु० १—८

४६ भास्वती। श्रीमच्छतानन्दविरचिता। श्रीमातृप्रसाद (दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता। (ज्योतिषं ३) रु० २—०

४७ फक्किकाप्रकाशः। उपाध्यायोपाह्ववैयाकरणकेसरीबिरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचितः। पं० सीतारामशर्मकृतटिप्पण्या विभूषितः। (व्याकरणं ७) रु० १—४

४८ मिताक्षरा। श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या--श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा० ६) रु० १—४

४९ काव्यप्रकाशः। श्रीमम्मटाचार्यविरचितः। पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः (काव्य० ४) रु०४ —०

५० अधिकरणकौमुदी। श्रीदेवनाथठक्कुरकृता। (मीमां० ४) रु० १—०

५१ रघुवंशमहाकाव्यम्। महाकविश्रीकालिदासविरचितम् महामहोपाध्याय श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण विरचितया भावबोधिनी टिप्पण्या समलङ्कृतम् संपूर्णम्। रु० १—४

५२ कातबोधः। साजनीकृत टीकोपेतः। दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८

५३ रसचन्द्रिका। पर्वतीय-पण्डितप्रवर-श्रीविश्वेश्वरपाण्डेय निर्मिता (काव्य० ६) रु०१—०

५४ अलङ्कारमुक्तावली। पर्वतीय-विद्वद्वर-श्रीविश्वेश्वर पाण्डेय-निर्मिता— (काव्य वि० ७) रु० १२ ०

पत्रादिप्रेषणस्थानम्

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमंदिर के उत्तर फाटक
बनारस सिटी।

Agust. 1928.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

368

कमलाकरभट्टविरचितो

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

उरई गवर्न्मेंन्ट हाईस्कूल संस्कृतभाषाध्यापकेन पं० व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा तदीयगुरुवर-म० म० पं० पर्वतीयनित्यानन्दपन्तप्रदर्शितरीतिमनुसृत्य संशोधितष्टिप्पण्या परिष्कृतश्च ।

The

NIRṆAYASINDHU,

of Kamalâkara Bhaṭṭa

With Commentary by Kṛṣṇam Bhaṭṭa.

Edited with Notes by

Gopâla S'âstrī Nene Vyâkaraṇopâdhyâya,

Sanskrit Teacher, Govt. High School, Orai.

FASCICULUS XVII-१७.

*PRINTED-PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1927.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशातपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३६८

*Printed by Jai Krishna Das Gupta
at the Vidya Vilas Press, Benares.*

Agents:

1 Luzac & co, Booksellers,
LONDON

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

तस्मादन्नं त्यजेद् भूमौ वामभागेषु पैतृके ॥

मनुः--

उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।

दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥

विष्णुः—*'उदङ्मुखेष्वाचमनमादौ दद्यात् ततः प्राङ्मुखेषु' । पित्र्ये दैवे चेत्यर्थः । शातातपः—

विश्वेदेवनिविष्टानां चरमं हस्तधावनम् ।

हेमाद्रौ वाराहे--

*हस्तं प्रक्षाल्य यश्चापः पिबेद् भुक्त्वा द्विजः सदा ।

तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥

मरीचिः—

हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।

आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

तत्रैव संग्रहे---

*पवित्रग्रन्थिमुत्सृज्य मण्डले भुवि निक्षिपेत् ।

हस्तादीन् क्षालयेद्विद्वाञ्छरावादौ तु कुत्रचित् ॥

यच्च शिष्टं भाजनेषु तदश्नन्ति प्रहर्षिताः ।

दासा मृतस्य ये दीनास्तस्मात् तत्परिशेषयेत् ॥

इति पुलस्त्योक्तेश्च । "दद्यादापः सकृत्सकृत्" इत्युक्तं तत्र क्रममाह-*उदङ्मुखेष्विति । गण्डूषग्रहणाय हस्तशोधनं निषेधति-*हस्तमिति द्वाभ्याम् । गण्डूषप्रकारः स्मृतौ--

अर्द्धं पिबति गन्डूषमर्धं त्यजति भूमिषु ।

प्रीणन्ति पितरः सर्वे ये चान्ये भूमिदेवताः ॥ इति ।

तत्प्राशनेऽमृतापिधानमसीति मन्त्रः । तदवशिष्टतोयत्यागे च—

रौरवे पुण्यनिलये ब्रह्मार्बुदनिवासिनाम् ।

अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥

इति मन्त्रः । *पवित्रेति ।

व्यासः--

ताम्बूलोद्गिरणं चैव गण्डूषोद्गिरणं तथा ।
कांस्यपात्रे तथा ताम्रे न कुर्वीत कदाचन ॥
उष्णोदकैर्धान्यचूर्णैः करौ श्मश्रूणि *शोधयेत् ॥

अथ पिण्डदानम् ।*तच्चार्चनोत्तरमग्नौकरणोत्तरं भो-

---

पात्रे वै निक्षिपेद्यस्तु स विप्रः पङ्क्तिदूषकः ।

इत्युत्तरार्धम् । *शोधयेदिति । मरीचिः—

आचम्य च ततः कार्यं दन्तकाष्ठस्य भक्षणम् ।
भोजयेद्दन्तलग्नानि निहृत्याचमनं चरेत् ॥ इति ।

गण्डूषहस्तशोधनादिविस्तरोऽन्यत्र ऊह्यः । *तच्चेति । ब्रा-ह्मणार्चनानन्तरमाह देवलः—

अथ संगृह्य कलशं सदर्भं पूर्णमम्भसाम् ।
पुरस्तादुपविश्यैषां पिण्डावापं निवेदयेत् ॥

इत्यादिना । अथ ब्राह्मणार्चनानन्तरम् । अग्नौकरणानन्तरमाह मनुः—

अपसव्यमग्नौकृत्वा सर्वमावृत्परिक्रमम् ।
अपसव्येन हस्तेन निर्वपेदुदकं ततः ॥
त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः ।
ओदनेनैव विधिना निर्वपेद्दाक्षिणामुखः ॥ इति ।

तस्मादिति । अग्नौकरणशेषादित्यर्थः । भोजनोत्तरमाह कात्यायनः-"आचान्तेषु पिण्डदानमनाचान्तेष्वित्येके" इति । आचान्तेषु कृतगण्डूषेषु, "सम्यगाचान्तेषु ब्राह्मणेषु पिण्डान्नि-दध्यात्" इति कातीयवचनान्तरात् । विकिरोत्तरमाह स एव । अनाचान्तेषु इति । तृप्तेषु अन्नं सतृणमभ्युक्ष्यान्नविकरणमुच्छिष्टा-ग्रतः कुर्यादिति विष्णुनाऽऽचमनात्प्रागविकिरोक्तेः तदुत्तरमर्था-त्पिण्डदानासिद्धेः । स्वधावाचनोत्तरमाहतुः शङ्खलिखितौ—गायत्रीं समनुश्राव्य तृप्तान् ज्ञात्वा स्वादितमिति पृष्ट्वा शेषमन्नमनुज्ञाप्य कृतादन्नाद्विकिरं कुर्यात्स्वधां वाचयित्वा त्रिष्टरांस्त्रपी(?)रश्रीन् दद्या-

जनोत्तरं विकिरोत्तरं स्वधावाचनोत्तरं विप्रविसर्जनोत्तरं वेति हेमाद्रौ स्मृतिषु पक्षा उक्ताः । तेषां शाखाभेदेन व्यवस्था । *'प्रेतश्राद्धेषु पूर्वम*न्येषु भोजनोत्तरम्' इति चन्द्रिकामाधवौ । सर्वत्र भोजनोत्तरमिति बहवः । आश्वलायनः—*'भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यादाचान्तेष्वेके' । भुक्तवत्स्विति पूर्वनिषेधार्थम् । *साग्निरग्निप्रणीतसमीपे ।*अनग्निर्द्विजसमीपे । हेमाद्रौ जातूकर्ण्यः—

व्याममात्रं समुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।

प्रसारितभुजान्तरं व्यामः । सं(१)कटे तु व्यासः—'अरत्निमात्रमुत्सृज्य' इति । यत्तु तत्रैव—

सिकताभिर्मृदा वापि वेदी दक्षिणनिम्नगा । इति,

---

दिति । विष्टराः पिण्डाधस्तना दर्भाः । यमोऽपि—

आचान्तांश्चानुजानीयादभिवाद्य कृताञ्जलिः ।
भवन्तो रमतामत्र ज्ञात्वाऽनुज्ञातलक्षणम् ॥
स्वधेति चेति वक्तव्यं प्रीयन्तां पितरस्तथा ।
अक्षय्यमन्नदानं तु वाच्यं प्रीतैर्द्विजातिभिः ॥
ततोऽर्पणं कुर्यात् पिण्डानां तदनन्तरम् ॥ इति ।

विप्रविसर्जनोत्तरमाह हारीतः—"वाजेवाजे इत्यनुव्रज्य हविःशेषस्य पिण्डान्निदध्यात्" इति । *प्रेतश्राद्धेष्विति ।

अप्रशस्तेषु यागेषु पूर्वं पिण्डावनेजनम् ।
भोजनस्य प्रशस्ते तु पश्चादेवोपकल्पयेत् ॥

इति लौगाक्ष्युक्तेः । प्रशस्ते सपिण्डनादौ । *अन्येष्वित्यस्याप्ययमेवार्थः । आश्वलायनानां त्वाह—*भुक्तवत्स्विति । *साग्निरिति । पिण्डपितृयज्ञेन व्यतिषङ्गस्थले । *अनग्निरिति । साग्नेरपि व्यतिषङ्गासत्त्वे इत्यपि बोध्यम् ।

---

(१) 'संकटे तु' नास्ति क०

तद*न्यशाखिपरम् । देवलः—

*ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य च ।

चन्द्रिकायाम्—

पिण्डनिर्वपणं कार्यं कुशाभावे विचक्षणैः ।

काशेषु *राजदूर्वासु पवित्रे परमे हिते ॥

आश्वलायनः—*'स्फ्येन रेखा(१)मुल्लिखेत् 'अपहता असुरा रक्षांसि वेदिषदः' इति । तामभ्युक्ष्य *सकृदा-

हुत्वैवमग्निं पिण्डानां सन्निधौ त(दन(२)न्तरम् ।

पक्कान्नेन बलिं तेभ्यः पिण्डेभ्यो दापयेद् बुधः ॥

इति देवलेनाग्नौहोमस्य पिण्डसन्निधानं वदताऽर्था)दग्निसन्निधानेन पिण्डदानमुक्तम् । "अग्न्यभावे तु सर्वमन्नमुपादाय" इत्यग्निमयाज्ञवल्क्योक्तेर्विप्रसमीप एव । *अन्यशाखीति ।

उपलिप्ते महीपृष्ठे पिण्डदानं समाचरेत् ।

इति सामान्यतो मह्या एवोक्तेः । *तत इति । "अथ संगृह्य कलशम्" इति प्रागुक्तश्लोकानन्तरमिदमर्धम् । तत्र येषां शाखायां कलशेनैव कृत्यमभिहितं तत्परं कलशपदमित्यभिप्रेत्य तदुपेक्ष्य विप्रानुज्ञानन्तरदक्षिणादिक्प्राप्तिः सर्वशाखीयानुगतेति तावन्मात्रं संगृहीतम् । षट्त्रिंशन्मते—

सव्यं जानु निपात्यैव भूमौ पिण्डान् प्रयत्नतः ।

निर्वपेत् पितृतीर्थेन स्वधाकारमुदाहरन् ॥

मरीचिः—

पात्राणां खड्गपात्रेण पिण्डदानं विधीयते ।

राजतौदुम्बराभ्यां वा हस्तेनैवाथ वा पुनः ॥

खड्गस्य गण्डकस्य ललाटिकास्थिसम्भवं पात्रं खड्गपात्रं ताम्रम् । *राजदूर्वा अतिदीर्घदूर्वा । *स्फ्येनेति । पितृयज्ञे । *सकृदाच्छिन्नैः एकेन प्रयत्नेन छिन्नैः । सकृदाच्छिन्नान्युपमूल-

(१) 'लेखा' क० (२) कंसान्तर्गतं नास्ति च० ।

च्छिन्नैर्द(१)र्भैरवस्तीर्य प्राचीनावीती रेखां त्रि*रुदके-नोपनयेच्छुन्धन्तां पितरः शुधन्तां पितामहाः शुन्धन्तां प्रपितामहा इति तस्यां पिण्डान्निपृणीया*त्पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्ते*सौ ये च त्वामत्रानु' इति । हेमाद्रौ पारस्करः—

करभ्यामुल्लिखेत् स्फ्येन कुशैर्वापि महीं द्विजः ।

बह्वृचानां (२)करेणैव लेखा चाग्नेय्यभिमुखेति वृत्तिः । 'दक्षिणाप्राचीं वेदिमुद्धृत्य' इत्यापस्तम्बोक्तेश्च । देवलः—

आवाहयित्वा दर्भाग्रैस्तेषां स्थानानि कल्पयेत् ।
तेष्वासीनेषु पात्रेण प्रयच्छेत्सतिलोदकम् ॥

---

च्छिन्नानि भवन्तीति शतपथे । यत्समूलं तत्पितृणामिति तैत्तिरीये । ब्राह्मे तु लेखाकरणे मन्त्रोऽप्युक्तः—

निहन्मि सर्वं यदमेध्यमत्र हताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाश्च पिशाचसंघा हता मया यातुधानाश्च सर्वे ॥
एतेन मन्त्रेण सुसंयतात्मा दर्भेण वेदिं लिलिखेत्त्रिरेव । इति ॥

*उदकेनेति । उदकं च सतिलं "तिलोन्मिश्रेणोदकेनासिच्य" इति वचनात् ।

*पराचीनपाणिः उत्तान एवाधरीकृतपितृतीर्थः पाणिर्येनेति विग्रहः ।

*असाविति । संबुध्यन्तपित्रादिनाम्ना । तथाचायमर्थः—हेतात एतत् पिण्डरूपमन्नं तुभ्यं येचान्ये त्वामनुयान्ति तेभ्यश्चेति । ये इत्यत्र नोहः । अनुयायिनो यदि स्त्रीणां स्त्रिय एव तदोहः स्यात् । यदि पुमांस एव यदि वा पुमांसः स्त्रियश्च तदा नोहः "पुमान् स्त्रिया" [ पा०सू०१-२-१५७ ] इत्येकशेषात् । "पुंवन्मिथुने" इत्याचार्येणोक्तेश्च । तस्मादनुयायिनः

---

(१) 'दर्भैः' नास्ति क० (२) 'एकेन करेण लेखा' क०

*अन्त्येष्टिपद्धतौ भट्टास्तु—

एकोद्दिष्टे सपिण्डे तु कपित्थं तु विधीयते ।
नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा ॥
तीर्थे दर्शे च संप्राप्ते कुक्कुटाण्डप्रमाणतः ।
महालये गयाश्राद्धे कुर्यादामलकोपमम् ॥

इत्याहुः । कलिकायामाचार्यः—

यत्र स्युर्बहवः पिण्डास्तत्र बिल्वफलोपमाः ।
यत्र चैको भवेत्पिण्डस्तत्र खर्जूरसन्निभः ॥
प्रेतपिण्डस्तु दैर्घ्येण द्वादशाङ्गुल उच्यते ॥ इति ।

वायवीये—

पत्नी पिण्डांस्तु गृह्णीयात् त्रिवर्गस्य सहायिनी ।

हेमाद्रौ लौगाक्षिः—

महालये गयायां च प्रेतश्राद्धे दशाहिके ।
पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् ॥

---

दभावे बिल्वमात्रान् । *अन्त्येष्टिरिति ।

आर्द्रामलकमात्रांस्तु पिण्डान् कुर्वीत पार्वणे ।
एकोद्दिष्टे बिल्वमात्रं पिण्डमेकं तु कारयेत् ॥
नवश्राद्धे स्थूलतरं तस्मादपि तु निर्वपेत् ।
तस्मादपि स्थूलतरमाशौचे प्रतिवासरम् ॥

इत्यादौ आर्द्रामलकमात्रानेव पार्वणे इति न नियमः, किन्त्वामलकमात्रान् पार्वणे एवेति; अतोऽधिकपरिमाणपिण्डाचारो न विरुध्यते इति मयूखकृतः । मैत्रायणीये त्रयाणां यथोक्तपरिमाणाधिक्यमुक्तं पितामहस्य नाम्ना स्थवीयांसं प्रपितामहस्य नाम्ना स्थविष्ठमिति । आवाहनादिपिण्डदानान्तं कर्मोक्त्वाऽऽह याज्ञवल्क्यः—

मातामहानामप्येवं दद्यादाचमनं ततः ।

शाट्यायनिः—

असावेतत्त इत्युक्त्वा तदन्ते च स्वधा नमः ।

असावित्यत्र संबन्धरूपगोत्रादिविशिष्टं पित्रादिनामसंबुद्ध्यन्तमुक्त्वा पुनश्चतुर्थ्यन्तं तदन्तेऽयं पिण्ड इदमन्नं वा स्वधा नमो न ममेति वदेदिति हेमाद्रिः । पित्रादीनामज्ञाने त्वापस्तम्बः—'यदि नामानि न विन्द्यात्स्वधापितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं दद्यात्, स्वधापितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम्, स्वधापितृभ्यो दिविषद्भ्य इति तृतीयम् । एवं मातामहेषु मातृषु च' । बह्वृचानां तूक्तं *प्राक् । कलिकायां स्मृतिः—

*यावदेवोच्चरेन्मन्त्रं तावत्प्राणं निरोधयेत् ।

येषां तु गृह्योक्ते दर्शे मातुः श्राद्धं पृथगुक्तं तेषां *पितृभ्यः पश्चिमे मातृभ्यस्तत्पश्चिमे मातामहेभ्यः पिण्डादि

---

एवमित्युक्तवक्ष्यमाणपदार्थातिदेशः । पितृमातामहपार्वणयोश्चैकप्रयोगविधिपरिग्रहात्सहक्रियमाणयोर्मिथः प्रत्यासत्त्यनुग्रहाय पदार्थानामेवानुसमयो न काण्डयोः । *प्रागिति । नामान्यविद्वांस्तत्पि(१)तामहप्रपितामहेति । *यावदेवेति(२)'यथाक्रमम्' इत्युक्त्या मातामहादिलाभः । मन्त्रपाठः एकश्वासेन कार्य इत्यर्थः । *पितृभ्य इति । "पिण्डात् पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्धाय" इति शाङ्खायनसूत्रात् "पूर्वभागे पितृवर्गार्थम्" पश्चाद्भागे मातृवर्गार्थम्" इति आपस्तम्बगृह्यात् "स्त्रीपिण्डा इह पश्चिमाः स्युः" इति भाष्यार्थसङ्ग्रहाच्च । एतच्चान्ये न मन्यन्ते । प्रागुपक्रमे प्रदक्षिणोपचारः स्यात् । तथा च "पितॄणामप्रदक्षिणोपचारः" इति परिभाषाविरोधः । तस्माद्बौधायनेन ब्राह्मणोपवेशने पश्चिमोपक्रमत्वमुक्तमिति पिण्डपङ्क्तीनामपि पश्चिमोपक्रमत्वं युक्तम् "अ-

---

(१) 'पितामहप्रपितामहप्रपितामहेति' ङ० च० ।
(२) 'यावदेवेति । यथाक्रममति । यथा' ङ० च ।

देयमिति सांख्यायनः। अस्मिन्पक्षे तत्पश्चिमे मातामहीभ्योऽपि दद्यादिति हेमाद्रिः। पूर्वासु पितृभ्यो दद्यादपरासु स्त्रीभ्यः' इति सूत्राच्च। एवं यत्र तीर्थमहालयादौ

केचिदिच्छन्ति नारीणां पृथक्श्राद्धं महर्षयः।

इति चतुर्विंशतिमतात्,

पित्रादिनवदैवत्यं तथा द्वादशदैवतम्।

इत्याग्निपुराणाच्च मातॄणां पृथगुक्तम्। यत्र वा—

आचार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च।
तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलाञ्जलीन्॥
पिण्डांस्तेभ्यः सदा दद्यात्पृथग्भाद्रपदे नरः।
तीर्थेषु चैव सर्वेषु माघमासे मघासु च॥

इति चतुर्विंशतिमते,

---

णुरपि विशेषोऽध्यवसायकरः" इति न्यायात्। तस्मात् प्रधानद्वयमपि प्रत्यगुपक्रमा प्रागपवर्गा पित्र्यब्राह्मणसंस्था पिण्डसंस्था चेति समानं दक्षिणोत्तरदिगपवर्गा च वैश्वदेविकाद्विजसंस्थेति बौधायनसूत्रार्थः। शाङ्खायनापस्तम्बादिवाक्यानि च तत्तच्छाखीयविषयाणि। यत्तु—

पूर्वभागस्य दर्भेषु पितृपिण्डान् विनिक्षिपेत्।
पश्चात्स्तृतेषु दर्भेषु मातृपिण्डान् विनिक्षिपेत्॥ इति,

तदापस्तम्बपरमिति। अन्ये तु "पिण्डदानमप्रदक्षिणमुपचारः" इति सूत्रादुपक्रमं दक्षिणसंस्थं न तु दक्षिणोपक्रमं उत्तरसंस्थं मानाभावात्,

मध्यमं च तृतीयं च मध्यदेशाग्रदेशयोः।
मातामहादिप्रभृति एतेषामेव वामतः॥

इति कातीयात्। एवञ्च पित्रादीनां सम्बोध्यत्वे स्वसंमुखत्वं ततो मातामहादीनां दक्षिणभागस्थत्वे स्वसंमुखत्वं पित्रादिवाम-

दौहित्रपुत्रदाराश्च ये कनिष्ठाः सहोदराः ।
निःसन्ताना मृता ये च तेभ्योऽप्यत्र प्रदीयते ॥

इति भविष्ये एकोद्दिष्टान्युक्तानि, तत्रापि तत्पश्चिमे पिण्डदानं ज्ञेयम् । येषां न पृथक्तैः सपत्नीका पित्रादयो वाच्याः,

अन्वष्टकागयामातृश्राद्धं चैव मृतेऽहनि ।
एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत् पृथग्भवेत् ॥
इति शङ्खोक्तेश्च ।

मनुः—
तेषु दर्भेषु तं हस्तं निमृजेल्लेपभागिनम् ।

हस्तलेपाभावेऽपि हस्ते निमृज्यादेवेति मेधातिथिः । विष्णुः—'अत्र पितरो मादयध्वमिति दर्भमूले करावघ-

---

भागत्वं च निर्वहति । स्वदक्षिणभागस्यैव स्वसंमुखवामभागत्वसम्भवात् । नतु पिण्डत्रापकवामभागत्वम् "एतेषामेव वामतः" इति बहुवचनविरोधात् कर्तुरेकत्वादित्याहुः । एतेन—

पिण्डस्य पश्चिमे भागे मातुः पिण्डो यथाक्रमम्
मातामहस्य तत्पूर्वे आत्मपत्न्यास्तदुत्तरे ॥
पितृमातृद्वयोर्मध्ये मातुलाः सहभार्यकाः ।
पुंपिण्डाद्वामतः स्त्रीणां शेषं दक्षिणतो न्यसेत् ॥ इति,

तद्दम्भमात्रं, निर्मूलत्वात् । स्त्रीविषये वृद्धयाज्ञवल्क्यः—
जीवे भर्तरि वामाङ्गे मृते भर्तरि दक्षिणे ।

यत्तु—
श्राद्धे सदैव वामाङ्गे पत्नीनामुदकं हरेत् ।

तदापस्तम्बादिपरं, तेषां पित्रादिपिण्डपश्चिम एव पत्नीपिण्डविधानात् । स्मृत्यन्तरे—

वृद्धिश्राद्धं तु नारीणां दक्षिणाङ्गे सदा भवेत् । इति ।

तत्र कर्ता प्राङ्मुखः कर्म च प्रदक्षिणमिति [illegible] दिक् ।

र्पणम् ।' कालिकायां सुमन्तुः—

एकोद्दिष्टेषु वर्षासु दर्भलेपो न विद्यते ।
सपिण्डीकरणादौ तु लेपः सर्वत्र शस्यते ॥

मनुः—

आचम्योदक् परावृत्य त्रिरायम्य शनैरसून् ।
षडृतूंश्च नमस्कुर्यात् पितॄनेव च *मन्त्रवत् ॥
उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ॥

त्रिः प्राणायामं कृत्वेति मेधातिथिः । अमन्त्रं प्राणान्निरुध्येति कर्काद्याः । मन्त्रवत्—'वसन्ताय नमः' 'नमो वः पितरः' इत्याद्यैः । शेषं पूर्वावनयनशेषम् । आश्वलायनः—'निपृतानजुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति *सव्यावृदुदङ्ङावृत्य यथाशक्ति प्राणान्नासित्वाऽभिपर्यावृत्याऽमीमदन्त पितरो यथाभागमावृषायीषतेति चरोः प्राणभक्षं भक्षयेन्नित्यं निनयनम्' इति । नित्यग्रहणं शेषाभावेऽपि कुर्यादित्यर्थः । शौनकः—

---

षट्त्रिंशन्मते—

सव्यं जानु निपात्यैव भूमौ पिण्डान् प्रयत्नतः ।
निर्वपेत् पितृतीर्थेन स्वधाकारमुदाहरन् ॥

मरीचिः—

पात्राणां खड्गपात्रेण पिण्डदानं विधीयते ।
राजतौदुम्बराभ्यां वा हस्तेनैवाथ वा पुनः ॥

उदुम्बरं ताम्रम् । तत्र सव्यपाणिसंयोजनं पिण्डान् निदध्यात् सव्येन पाणिना दक्षिणं पाणिमुपसंयोज्येति । *मन्त्रवदिति । षडृतून् मन्त्रवन्नमस्कुर्यात् पितॄनेव नमस्कुर्यादिति शेषमुदकं चेति च योजना । *सव्येति । सव्यभागावर्तनेनोदङ्मुखो भूत्वा यथाशक्ति प्राणं निरुध्य पुनस्तथैव पर्यावर्तेदित्यर्थः ।

*अथैषामत्र पितर इत्याद्येनानुमन्त्रणम् ।
अमीमदन्तेत्याद्येन मन्त्रेणाप्यनुमन्त्र्य तान् ॥
पिण्डशिष्टचरोरन्नं किंचिदाघ्राय तत्त्यजेत् ।
प्रक्षाल्याचम्य शुन्धन्तामित्याद्यैरेव पूर्ववत् ।
मन्त्रैः पिण्डेषु पानीयं निषिञ्चेत् पितृतीर्थतः ॥

व्याघ्रः—

अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिण्डं तु पूर्ववत् ।
कृत्वावनेजनं कुर्यात्पिण्डपात्रमधोमुखम् ॥

एतत्कातीयादीनाम् ।

आचार्यः—

ततः सम्यग् द्विराचम्य नीवीं विस्रस्य वाग्यतः ।

आश्वलायनः–'असावभ्यङ्क्ष्वासावङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने *वासो दद्या*द्दशामू*र्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वं लोमैतद्वः पितरो वासो मानोतोऽन्यत् पितरो युङ्ग्ध्वम्' इति । श्राद्धचिंतामणौ ब्राह्मे-

एतद्वः पितरो वास इति जल्पन् पृथक् पृथक् ।
अमुकामुकगोत्रैतत्तुभ्यं वासः पठेद् बुधः ॥

इदं कातीयानाम्, 'एतद्व इति सूत्राणि प्रतिपिण्डम्' इति तत्सूत्रात । हेमाद्रौ ब्राह्मे—

श्रेष्ठमाहुस्त्रैककुदमञ्जनं नित्यमेव हि ।
तैलं कृष्णतिलेभ्यश्च दद्यादभ्यञ्जनं हि(१)तम् ॥

त्रैककुदं सुरमा इति प्रसिद्धम् । अञ्जनप्राथम्यमाप-

---

त्रिः प्राणायामस्तु कातीयादिपरो नतु बह्वृचपरः । निपृतानिति सूत्रार्थमाह–*अथेति ।*वास इति । एतदन्यतमम् एषामन्यतमम् पिण्डेषु दद्यात् । *दशा वस्त्रान्तप्रदेशः । *ऊर्णास्तुका अविलोमानि । पञ्चाशद्वर्षोर्ध्वं जीवन् स्वमेव लोम ।

---

(१) 'हि तत' क० अ० ।

स्तम्बादिविषयम्। तत्रैव व्याघ्रः—

*गन्धपुष्पाणि धूपं च दीपं च विनिवेदयेत्।

देवलः—

दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत्।
भक्ष्याण्यपूपानिक्षूंश्च व्यञ्जनान्यशनानि च॥

तत्रैव शङ्खः—

यत्किञ्चित् पच्यते गेहे भक्ष्यं भोज्यमगर्हितम्।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन॥

एतत्सव्येनेति केचित्। *युक्तं त्वपसव्येन। मनुः—

*अवजिघ्रेच्च तान् पिण्डान् यथान्युप्तान् समाहितः।

ततः 'नमो वः पितर इषे' इत्यादिनोपस्थानम्। मात्स्ये—

अथाचान्तेषु चाचम्य वारि दद्यात्सकृत्सकृत्।
तिलपुष्पाक्षतान् पश्चादक्षय्योदकमेव च॥

अत्र दैवे सव्यं पित्र्ये त्वपसव्यमिति कर्कः। *परिभाषोक्तवचनात्सव्यमिति युक्तम्। अत्र शिवा आपः सन्तु। सौमनस्यमस्त्वित्यादिप्रयोगो ज्ञेयः। मात्स्ये—

दत्त्वाशीः प्रतिगृह्णीयाद् द्विजेभ्यः प्राङ्मुखो बुधः।
अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः॥
गोत्रं तथा वर्धतां नस्तथेत्युक्तः स तैः पुनः।
दातारो नोऽभिवर्धन्तामन्नं चैवेत्युदीरयेत्॥
स्वस्तिवाचनकं कुर्यात्पिण्डानुद्धृत्य भक्तितः॥

---

मन्त्रस्तु सर्वत्रापि सकृदेवेति वृत्तिः। *गन्धपुष्पाणीति पिण्डपूजा। *युक्तं त्विति। पित्रुद्देशेन क्रियमाणत्वात्। युक्तं तु सव्येन निवेदयेदित्युक्त्या पितॄणां देवभावेनापि पूज्यत्वात्। *अवजिघ्रेदिति पिण्डाघ्राणम्। आश्वलायनानां तु पिण्डशिष्टचरोराघ्राणं नतु पिण्डाघ्राणमिति प्रागुक्तम्। *परिभाषा "सूक्तस्तो-

स्वस्तिवाचनात्प्राक्पात्रचालनं कार्यम् । हेमाद्रौ बृहस्पतिः—

भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतैः ॥

जातूकर्ण्यः—

पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथ वा सुतः ।
न स्त्रीभिर्न च बालेन नासजात्या कथञ्चन(१) ॥

याज्ञवल्क्यः—

*स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ।

तत्रैव वृद्धशातातपः—

पितॄणां नामगोत्रेण करे देयं तिलोदकम् ।
प्रत्येकं पितृतीर्थेन अक्षय्यमिदमस्त्विति ॥

अत्र षष्ठी प्रागुक्ता । तत्रैव नागरखण्डे—

उत्तानमर्घ्यपात्रं तु कृत्वा (२)दद्याच्च दक्षिणाम् ।
हिरण्यं देवतानां च पितॄणां रजतं तथा ॥

बृहस्पतिः—

तस्मात् पणं काकिणीं वा फलं पुष्पमथापि वा ।
प्रदद्याद्दक्षिणां यज्ञे तथा स सफलो भवेत् ॥

*अत्र पित्रुद्देशेन दक्षिणादाने अपसव्यं विप्रोद्देशे (३)न

---

त्रजपम् " इति वाक्यम् । *स्वस्तिवाच्यमिति । स्वस्तीति ब्रूतेति ब्राह्मणान् स्वस्ति वाचयेत् । तैः स्वस्तीत्युक्ते अक्षय्यमस्त्विति ब्रूतेति ब्राह्मणहस्ते उदकं दद्यात् । तेचाक्षय्यमस्त्विति ब्रूयुरित्यर्थः । *अत्रेति "हिरण्यं विश्वेभ्यो देवेभ्यः रजतं पितृभ्यः अपसव्यं तत्रापि" इति पारस्करोक्तेः । तत्रापि पित्रुद्देश्य-

---

(१) एतदग्रे 'जातूकर्ण्यः–द्विजभुक्तावशिष्टं तु शुचिभूमौ निखानयेदिति । श्वमार्जारादिदुःसत्त्वस्पर्शो श्राद्धं विनश्यति' इति आधिकं क० ।

(२) 'दत्वा' ग० । (३) 'विप्रोद्देशे तु' क० छ० ।

सव्यमिति माधवः। कलिकायामाचार्यः—

दद्याद्यज्ञोपवीत्येव *ताम्बूलं *दक्षिणां तथा।

अत्रिः—

वदेच्च तांस्ततो विप्रान् पित्रादिभ्यः स्वधोच्यताम्।

---

कदक्षिणादानेऽपि।

अपसव्यं कर्म सर्वं दक्षिणादानवर्जितम्।

इति जमदग्निवाक्यं तु-

आचान्तेभ्यो द्विजेभ्यस्तु प्रदद्यादथ दक्षिणाम्।

इति विप्रोद्देश्यकदक्षिणादानपरम्। सर्वत्रापि उद्देश्यत्वे चतुर्थी। दक्षिणादाने क्रममाह देवलः---

दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः। इति।

द्वयोः। वैश्वदेविकविप्रयोः। दक्षिणा च विप्रगुणानुसारेण विषमापि देया,

एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि।
भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः॥

इत्युक्तेः। अत्र श्राद्धकर्मणीत्यविवक्षितम्। तेनान्यत्रापि वैषम्यसिद्धिः। अत्र संख्याविशेषो नास्ति,

कृत्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत्।

इति याज्ञवल्क्यात्। स्वधावाचनोत्तरमाह याज्ञवल्क्यः—

ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम्।
विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत्।

*ताम्बूलमिति। ताम्बूले यज्ञोपवीत्येवेत्येवकारेण पित्र्ये प्राचीनावीतव्यवच्छेदः। *दक्षिणामिति विप्रोद्देश्यकत्वे। *विसर्जयेदिति।

यस्मिंस्ते संस्रवाः पूर्वं पितृपात्रे निवेशिताः।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत्॥

गोभिलः—'अघोराः पितरः सन्त्वित्युक्ते स्वधां वाचयिष्य इति पृच्छति पितृभ्यः स्वधोच्यतामित्युक्तेऽस्तु स्वधेत्युच्यमाने धारां दद्यादूर्जं वहन्ती' इति । आपस्तम्बेन तु 'पुत्रान् पौत्रानभितर्पयन्ती' इत्यपि परिषेचने मन्त्र उक्तः ।

आश्वलायनः'—अथैतान् प्रवाहयेत् । परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत ॥' इति । मात्स्ये—

वाजे वाजे इति जपन् कुशाग्रेण विसर्जयेत् ।

प्रचेताः—

स्वास्तिवाच्यं ततः कृत्वा पितृपूर्वं *विसर्जयेत् ।

आश्वलायनः—'अन्नं प्रकीर्योपवीत्यों स्वधोच्यतामिति विसृजेदस्तु स्वधेति वा ।' ब्रह्मवैवर्ते—

आमावाजेति मन्त्रं तु पठित्वा च प्रदक्षिणाम् ।
द्वारोपान्ते ततः कृत्वा संयतः प्रविशेद् गृहम् ॥
प्राञ्जलिश्च ततः प्राह तान् विप्रान् सत्यवादिनः ।
दातारो नोऽभिवर्धन्तामन्नं च न इ(१)तीव हि ॥
एवमस्त्विति ते तं च कथयन्ति समाहिताः ॥

एतन्मण्डलदेशे कार्यमिति हेमाद्रिः । मनुः—

दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु ॥ इति ।

बौधायनः—

अन्नं च नो बहुभवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ इति ।

अत्र 'दातारो वोऽभिवर्धन्तां—लभध्वं याचिद्ध्वम्'

---

( १ ) 'इति वहिति' ग० ।

इत्याद्यूहेन पठित्वा विप्रैः प्रतिवचनं कार्यमिति सुदर्शनभाष्ये। 'स्वादुषंसदः०' इति 'ब्राह्मणासः पितरः०' इति च मन्त्रद्वयं पठन्ति। शौनकः—

ब्राह्मणानथ निर्यातान् परीत्य त्रिःप्रदक्षिणम्।
सस्त्रीकः स्वजनैः सार्धं प्रणमेद्रचिताञ्जलिः॥
कनिष्ठप्रथमा ज्येष्ठचरमाः स्युः प्रदक्षिणे॥

हेमाद्रौ बृहस्पतिः—

अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात्।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम्॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः।
तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ॥

प्रचेताः—

विसृजेद्भक्तिसंयुक्तः सीमान्तं चाप्यनुव्रजेत्। इति॥

अथ पिण्डप्रतिपत्तिः। हेमाद्रौ ब्रह्माण्डे—

पिण्डमग्नौ सदा दद्याद्भोगार्थी प्रथमं नरः।
*पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मन्त्रपूर्वकम्॥
उत्तमां गतिमान्विच्छन् गोषु नित्यं प्रयच्छति।
आ(१)ज्ञां प्रज्ञां यशः कीर्तिमप्सु पिण्डं प्रवेशयेत्॥
प्रार्थयन् दीर्घमायुष्यं वायसेभ्यः प्रयच्छति।
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः॥

आश्वलायनः—'वीरं मे दत्त पितर' इति पिण्डानां मध्यमं पत्नीं प्राशयेत्। 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथायमरपा असत्' इति भर्त्रा *दत्तस्या-

---

इति याज्ञवल्क्योक्तेर्न्युब्जं पात्रमुत्तानं कृत्वा "वाजे वाजे" इति मन्त्रेण पितृपूर्वं विसर्जयेदित्याखण्डलार्थः। *पत्न्यै इति। इदं च केवलकाम्यम्। *दत्तस्येति। दानममन्त्रकम्।

---

(१) 'प्रज्ञां प्रजां यशः' क०।

येनादानं *द्वितीयेन प्राशनम्। आपस्तम्बस्तु दाने मन्त्रमाह—'अपां त्वौषधीनां रसं प्राशयामि भूतकृतं गर्भं धत्स्व' इति मध्यमं पत्न्यै प्रयच्छाति' इति। प्राशनेऽपि 'यथेह पुरुषो असत्' इति तदीयः पाठोऽन्येषां तत्तच्छाखायां ज्ञेयः। तत्रैव शङ्खः—

पत्नी वा मध्यमं पिण्डमश्नीयादार्तवान्विता।

कालिकायां छागलेयः—

*प्राची(१)नावीतमामन्त्र्य पत्नीः पिण्डो विभज्यते।
प्रतिपत्त्यस्य मन्त्रस्य कर्तव्यावृत्तिरत्र तु॥

माधवीये विष्णुधर्मे—

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः।

याज्ञवल्क्यः—

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा।

बृहस्पतिः—

*अन्यदेशगता पत्नी रोगिणी गर्भिणी तथा।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति॥

---

आदाने तु समन्त्रे "वीरं मे दत्त पितरः" इति मन्त्रः। *द्वितीयेन "आधत्त पितरो गर्भम्" इत्यनेन। षट्प्रयोगे पिण्डानां मध्यमयोर्द्वयोः प्राशनम्। *प्राचीनावीतमिति। अनेकभार्यस्तु प्राचीनावीतं पत्नीपिण्डं विभज्य प्रतिपत्ति मन्त्रावृत्तिं कृत्वा यथासंख्यं भागान् कृत्वा क्रमेणैकैकं भागं प्राशयेदित्यर्थः। *अन्येति।

छागलेयः—

अक्षता गुर्विणी वन्ध्या गतरक्ता रजस्वला।
नाश्नीयान्मध्यमं पिण्डं जारिणी च प्रसूतिका॥

---

(१) 'प्राचीनावीतिनामन्त्र्य' ग०।

अथ पिण्डोपघाते हेमाद्रौ प्रायश्चित्तकाण्डे देवलः—

श्वसृगालखरैः पिण्डः स्पृष्टो भिन्नः प्रमादतः ।
कर्तुरायुष्यनाशः स्यात्प्रेतस्तं नोपसर्पति ॥

जातूकर्ण्यः पूर्वश्लोकान्ते—

तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् ।
पुनः स्नात्वा तदा कर्ता पिण्डं कुर्याद्यथाविधि ॥

काकस्पर्शे तु न दोषः, पिण्डोपघातं प्रक्रम्य—

धनस्य च विनाशः स्यात् काकस्पर्शादिकं विना ।

इति तत्रैव श्लोकगौतमोक्तेः । स्मृतिदर्पणे अत्रिः—

मार्जारमूषकस्पर्शे पिण्डे च *द्विदलीकृते ।
पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात् ॥

बौधायनः—

श्वचाण्डालादिभिः स्पृष्टः पिण्डो यद्युपहन्यते ।
प्राजापत्यं चरित्वाऽथ पुनः पिण्डं समाचरेत् ॥

बोपदेवोऽप्येवमाह (१)अथ *दिनान्तरे तु प्राजापत्यमात्रम् । शेषप्रतिपत्तित्वेन पिण्डावृत्तौ मानाभावादिति मैथिलाः । तन्न, सपिण्डीकरणादौ शेषनाशे संयोजनादिलोपापत्तेः । तेन वचनाद्धमन इवात्रापि तन्मात्रपिण्डदानावृत्तिः । अत एव 'न च नक्तं श्राद्धं कुर्वीतार(२)ब्धे चाऽऽभोजनसमापनात्' इत्यापस्तम्बसूत्रम् । रात्रौ भोजनमात्रं पूर्वेद्युः कार्यम् । श्राद्धसमाप्तिस्तु परदिने एव । समाप्तिपर्यन्तं कर्तुरुपवासश्चेति हरदत्तेन व्याख्यातम् । तस्मात पाकान्तरेण पिण्डदानमात्रं कार्यम ।

---

अक्षता अजातरजस्का । अत्राननुकूलाऽपि बोध्या । *द्विदलीकृते भिन्ने । *दिनान्तरे त्विति । अनुपदमेतत्स्पष्टम् ।

---

(१) 'अथ' नास्ति क० छ०  (२) 'रब्धे वा' ग०

अथ पिण्डनिषिद्धकालः । स च प्रायेण *महालयादिनिर्णये पूर्वमुक्तः । हेमाद्रौ (१)बृहत्पराशरः—

*युगादिषु मघायां च विषुवत्ययने तथा ।
भरणीषु च कुर्वीत पिण्डनिर्वपणं नहि ॥

स्मृतिरत्नावल्याम्—

पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ।
श्राद्धं कुर्यात् प्रयत्नेन पिण्डनिर्वपणादृते ॥

तत्रैव कात्यायनः—

*वृद्धेरनन्तरं चैव यावन्मासः समाप्यते ।
*तावत् पिण्डान्नैव दद्यान्न कुर्यात्तिलतर्पणम् ॥

बौधायनः—

संस्कारेषु तथाऽन्येषु मासं मासार्धमेव च ।

तथा—

*भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ।

---

*महालयादीनि । आदिना—

यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित् ।
तेनैकेनापि कर्त्तव्यं पिण्डनिर्वपणादृते ॥

इति पुराणादिसङ्ग्रहः । हविःसम्पत्तावपि न पिण्डदानं, द्रव्यब्राह्मणसंपत्त्योः समस्वभावत्वात् । *युगादिष्विति । एतेन—

तीर्थे संवत्सरे प्रेते पितृयागे महालये ।
पिण्डदानं प्रकुर्वीत युगादिभरणीमघे ॥

इति व्याख्यातं युगादौ सत्यपि तीर्थादौ पिण्डदानं कार्यमित्यर्थात् तिथिवारप्रयुक्तो य इत्यस्य वक्ष्यमाणत्वात् । *वृद्धेरिति । वृद्धिश्च विवाहादिवृद्धिभिन्ना, अग्रिमवचनात् । *तावत पिण्डानिति । वार्षिकादिषु । *भानाविति । एतच्च श्राद्धनिषेधार्थ-

---

(१) 'वृद्धपराशरः' क० छ०

त्रिस्थलीसेतौ कार्ष्णाजिनिः—

*विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।

उत्तरार्धं प्राग्वत् ।

वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया ।
कृता गर्गादिभिर्मुख्यैर्मासमेकं तु कर्मणाम् ॥

हेमाद्रौ ज्योतिःपराशरः—

विवाहे विहिते मासांस्त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हि ॥

तत्रैव—

महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ॥
*कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वापणं सदा ॥ इति ।

मातापित्रोरिति क्षयाहविशेषणं *हविरुभयत्ववदविवक्षितम् । तेन भ्रातृपितृव्यादिवार्षिकेऽपि पिण्डदानं कार्यमिति केचित् । सपिण्डीकरणं नवश्राद्धषोडशश्राद्धोपलक्षणार्थमिति निर्णयामृते उक्तम् ।

---

मिति वाजपेयी । *विवाहेति । विवाहाद्यनन्तरं तीर्थयात्रा तच्छ्राद्धाङ्गपिण्डदानं च कार्यमिति वक्ष्यते । *कृतोद्वाहोऽपीति । आपेनोपनयनादिग्रहः । पिण्डानिषेधे स्वधावाचनं न कार्यं,

"पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।

स्वधावाचनलोपोऽत्र" इति वचनात् । *हविरिति । "यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यत्र हविर्विशेषणोभयत्वाविवक्षया एकैकहविर्नाशेऽपि तत्सिद्धिवदित्यर्थः । "यस्योभावग्नी अनुगतौ स्याताम्" इतिवदिहापि मातापित्रोरिति विवक्षितत्वान्नेतरत्रार्षिके पिण्डदानप्रसङ्ग इत्यरुचिः ।

क्षयाहे विशेषः सङ्ग्रहे—

मातापित्रोराब्दिके तु विवाहादिषु सर्वदा ।
तिलैः पिण्डाः प्रदातव्या अन्यश्राद्धे विवर्जयेत् ॥

अत्र मूलं चिन्त्यम् । रामकौतुके—

*नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे ।
गण्डे वैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः ॥

विश्वरूपनिबन्धे—

तिथिवारप्रयुक्तो यो दोषो वै समुदाहृतः ।
स श्राद्धे तन्निमित्ते स्यान्नान्यश्राद्धे कदाचन ॥

अन्यत्तूक्तं प्राक् । उच्छिष्टोद्वासनमाह हेमाद्रौ वसिष्ठः—

श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात् ।
श्च्योतन्ते वै सुधाधारास्ताः पिबन्त्यकृतोदकाः ॥

व्यासः—

उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः ।

इदं गृहान्तरसत्त्वे । एकगृहे तु मनुः—

उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥

*बलिं वैश्वदेवादि नित्यकर्मेति मेधातिथिः । ब्रह्माण्डे-

*शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।

---

*नन्दाश्वेति । एवञ्जातीयाः पिण्डदानकालविशेषनिषेधाः अतीतश्राद्धप्रेतकृत्यसकृन्महालयादिगोचराः इति पूर्वोत्तरग्रन्थे स्पष्टम् ।

*बलिमिति—

निर्वर्त्य प्रणिपत्याथ पर्युक्ष्याग्निं समन्त्रवत् ।
वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव च ॥

इति वचनात् । (*(१.)शूद्राय चेति । अग्रे निखननोक्त्या

---

( १ ) धनुश्चिह्नान्तर्गतं नास्ति च० पुस्तकेऽग्रे वर्तते ।

तथा—

*कामं दद्याच सर्वं तु शिष्याय च सुताय च।

भोक्तुरिति शेषः। जातूकर्ण्यः—

*द्विजभुक्तावशिष्टं तु शुचि भूमौ निखानयेत्।

अथ वैश्वदेवादि। अत्र मामकः श्लोकः—

*श्राद्धेऽनग्निककर्तृकेऽग्निकरणात्पश्चाज्जुहोतिर्बलि—
स्त्वन्ते स्यादथवा भवेद्विकिरतः पश्चात् पृथक्त्वे पचेः
श्राद्धान्ते त्वथवा महालयविधावूर्ध्वं भुजेः स्यात्क्षये
त्वन्तेऽमासु च मध्यतः शुभविधावादौ तथा साग्निके॥

अस्यार्थः—*साग्नेः पृथक्पाकेन सर्वत्रादौ वैश्वदेवः,

*पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च *साग्निकः।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः॥
पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च।

---

इदमधिकदोषार्थम्। अनुपेते विशेषमाह—*काममिति। शिष्यसुतौ चानुपेतौ बोध्यौ। तदिच्छायां दोषाल्पत्वार्थं कामपदम्) *द्विजभुक्तेति।

खनित्वा निक्षिपेद् भूमावन्यथा स्पर्शसंभवात्।
निषिद्धं स्पर्शनं तेषां तस्मात् खननमुत्तमम्॥

इति प्रचेतसोवचनात्। सायं मार्जनेऽपि खननमेव। *श्राद्धे इति। अग्निकरणात्पश्चाज्जुहोतीति अग्नौकरणानन्तरं वैश्वदेव इत्यर्थः। अन्ते बलिः भूतबलिः स्यात् अथवा विकिरितः पश्चाद्भवेदिति, परन्तु पचेः पाकस्य पृथक्त्वे इत्यन्वयः। सूचीकटाहन्यायेन प्रथमतः "आदौ तथा साग्निके" इत्यस्यार्थमाह—*साग्नेरिति। *पक्षान्तमिति। एतच्च वाक्यमेकादिनप्रसक्तानामन्वाधानादीनां क्रमाकाङ्क्षायां तन्मात्रं विधत्ते नतु कमपि पदार्थम्। तेन कदाचित्पिण्डपितृयज्ञस्य सद्यस्कालीनदर्शयागपक्षेऽन्वाधानस्य चोत्तरादिनकर्त्तव्यत्वेऽपि न दोषः। *साग्निक इति। पक्षान्तापिण्डपितृयज्ञयोर्म-

*वैश्वदेवं न पित्रर्थं न *दार्शं वैश्वदेविकम् ॥

इति लौगाक्षिस्मृतेः । अत्र साग्निक आहिताग्निरिति हेमाद्रिः ।

श्राद्धात् प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः ।
*एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥

इति हेमाद्रौ शालङ्कायनोक्तेश्च । तत्रैव परिशिष्टे—

संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥

स्मार्ताग्निमतां तद्रहितानां चाऽग्नौकरणोत्तरं विकिरोत्तरं वा होममात्रं*पृथक्पाकेन ।*भूतयज्ञादि तु श्राद्धान्त एव । अत्र *मूलं हेमाद्रिचन्द्रिकादौ स्पष्टम् । *सर्वेषां श्राद्धान्ते

---

ध्यविधानादेव वैश्वदेवस्य साग्निककर्त्तव्यत्वे सिद्धे साग्निकग्रहणस्यौपासनाग्निमतो निवृत्त्यर्थत्वादिति भावः । अत्र श्रौतस्मार्त्ताग्निमतोरुभयोरप्यविशेषेण वैश्वदेवकर्तृत्वावगमात् साग्निकपदमनुवादकं न तु स्मार्त्ताग्निमन्निवर्त्तकम् । अन्यथा श्रौताग्निमन्निवर्त्तकतया वैपरीत्यस्यापि सुवचत्वादित्यरुचिः । *वैश्वदेवमिति । भूतयज्ञोपलक्षणम् । *दार्शमिति सर्वश्राद्धपरम् । अत एव सर्वत्रेत्युक्तम् । साग्निकस्य क्वचिच्छ्राद्धे पश्चाद्वैश्वदेवमाह—*एकादशाहिकमिति । पश्चादिति च स्मार्ताग्निमतामिति हेमाद्रिमते । *पृथक्पाकेनेति,

पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

इति पैठीनसिवचनात् । श्राद्धोत्तरं श्राद्धशेषस्यापि योग्यत्वादेतस्य पिण्डदानात्प्राक् वैश्वदेवानुष्ठानपरत्वात् । *भूतयज्ञादीति । साग्नेरप्ययं शेष इत्यग्रे व्यक्तीभविष्यति । *मूलमि-

वा तत्पाकेन वैश्वदेवनित्यश्राद्धादीति तृतीयः ।

*श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा ॥

---

ति । आद्यः पक्षो ब्रह्माण्डे—

वैश्वदेवाहुतीरग्नावर्वाग् ब्राह्मणभोजनात् ।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतम् ॥ इति ।

अर्वाग्ब्राह्मणभोजनादित्युक्त्याऽग्नौकरणोत्तरत्वं लभ्यते । साग्नेरपि भूतयज्ञोऽन्ते एवाविशेषात् । द्वितीयो भविष्ये—

पितॄन् संतर्प्य विधिवद्बलिं दद्याद्विधानतः ।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम् ॥ इति ।

बलिश्च तत्रैवोक्तः—

ये अग्निदग्धा मन्त्रेण भूमौ यान्निक्षिपेद्बुधः ।
जानीहि तं बलिं वीर श्राद्धकर्माणि सर्वदा ॥ इति ।

एतेन विकिरानन्तर्यं लभ्यते । नचेदं पक्षद्वयमविशेषात्साग्न्यनग्न्युभयपरमस्त्विति वाच्यं,

वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनाग्निकः ।
लौकिकाग्नौ हुते शेषः पितॄणां नोपतिष्ठते ॥

इति वसिष्ठेनाऽनग्निकस्य श्राद्धात्पूर्वं वैश्वदेवनिषेधात्तस्य श्राद्धमध्ये वैश्वदेवासिद्धेः । आदौ मध्ये वा वैश्वदेवपक्षे पृथक्पाक एव "पित्रर्थं निर्वपेत् पाकम्" इति वचनात्,

गृह्याग्निशिशुदेवेभ्यो यतये ब्रह्मचारिणे ।
पितृपाको न दातव्यो यावत्पिण्डान्न निर्वपेत् ॥

इति स्मृत्यन्तराच्च । *सर्वेषां स्मार्त्ताग्निमतां तद्रहितानां चेति वर्तते, न त्वाहिताग्नीनां तेषामादौ तदुक्तेः । *श्राद्धमिति । इदं निरग्निपरम्,

यदा श्राद्धं पितुः कश्चित्कर्त्तुमिच्छत्यनाग्निमान् ।
वैश्वदेवं तदा कुर्यान्निवृत्ते श्राद्धकर्मणि ॥

इति पैठीनसिस्मृतेः। ततः—श्राद्धशेषात्।

श्राद्धाद्धि श्राद्धशेषेण वैश्वदेवं समाचरेत्।

इति चतुर्विंशतिमताच्च। *एवं वैश्वदेवकालत्रयस्य आशार्के (१)सांख्यायनपरिशिष्टमुदाहृत्यैव व्यवस्थोक्ता—

*आदौ वृद्धौ क्षये चा*न्ते दर्शे मध्ये महालये।
*एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते॥

इति बहुस्मृत्युक्तत्वात्सर्वेषां श्राद्धान्ते एवेति मेधातिथिस्मृतिरत्नावल्यादयो बहवः।

*बोपदेवस्तु वृत्तिकारेण विसर्जनान्तं श्राद्धमुक्त्वा 'उच्छेषणं तु' इति पूर्वोक्तमनुवाक्योदाहरणाद्बह्वृचानां

---

इति वचनात्। एवं वैश्वदेवे साग्न्यनग्न्युभयोरपि अधिकारः। विधवास्त्रीबालयोस्तु तत्कारयितृत्वमेव "स्त्री बालश्च कारयेत्" इति स्मृत्यर्थसारात्। "न स्त्री जुहुयान्नानुपेतः" इत्यापस्तम्बनिषेधात्, बालं प्रकृत्य "न त्वेनमग्निहवनबलिहरणयोर्नियुञ्ज्यात्" इति गौतमनिषेधाच्च। भिन्नपाकेन स्नातकवानप्रस्थयोरपि तदधिकारः—

स्नातकेनापि तत्कार्यं पृथक्पाको भवेद्यदि।

इति शौनकोक्तेः, वानप्रस्थानुपक्रम्य—

तेषां होमक्रियाधर्मः पञ्चयज्ञो विशेषतः।

इति भारतात्। केचिन्मतमाह—*एवमिति। *आदौ अग्नौकरणानन्तरम्। *अन्ते श्राद्धसमाप्त्यनन्तरम्। दर्शमहालययोर्मध्ये विकिरोत्तरम्। *एकोद्दिष्टे। महैकोद्दिष्टे अन्नशेषं ब्राह्मणाधीनं कृत्वा पश्चात्पृथक्पाकेन वैश्वदेवः;

एकोद्दिष्टेऽन्नशेषं तु ब्राह्मणेभ्यः समुत्सृजेत्।

इति देवलोक्तेरित्यर्थः। "आदौ वृद्धौ" इति तु तादृशाचा-

---

(१) 'शाखायन' क० छ०

श्राद्धान्ते एव, मध्यपक्षस्त्वन्यशाखापर इत्याह । हेमाद्रिस्तु वृद्धावप्यन्ते एव वैश्वदेवमाह । कातीयानां तु श्रौतस्मार्ताग्निमलाभादावेकेनैव (१)पाकेनेति कर्कः । *अन्येषां मते तैत्तिरीयाणां तु साग्निकानां सर्वत्रादौ वैश्वदेवः । पञ्चयज्ञाश्च अन्ते चेति सुदर्शनभाष्ये उक्तम् । अस्य पक्षद्वयस्य पूर्ववद्व्यवस्था । हेमाद्रौ मार्कण्डेयः—

ततो नित्यक्रियां कुर्याद्भोजयेच्च ततोऽतिथीन् ।
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ॥

ततः श्राद्धशेषात् । नित्यक्रियां नित्यश्राद्धम् । तत्र-'पृथक्पाकेन नैत्यकम्' इति तेनैवोक्तेः पाकैक्ये विकल्पः ॥

*अथ नित्यश्राद्धम् । हेमाद्रौ व्यासः—

---

रपरमित्याह-*बोपदेवस्त्विति । *अन्येषां कातीयानाम् । समाहितान् अतिथीन् । भृत्यादिभिरित्यादिना स्वगोत्रजादिग्रहः,

भृत्यवर्गयुतो भुङ्क्ते कव्यशेषं स्वगोत्रजैः ।
आसायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेत् ॥

इति प्रचेतोवाक्यात् ।

*अथ नित्यश्राद्धमिति ।

श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा ।

इति कात्यायनेन पितृयज्ञो द्वेधा उक्तः-नित्यश्राद्धरूपः बलिहरणरूपश्चेति । तत्र नारायणवृत्तौ अशक्तौ पित्र्यबलिहरणेन नित्यश्राद्धसिद्धिरिति पक्षान्तरमुक्तम् । तथाच वैश्वदेवहोमबलिहरणनित्यश्राद्धादिरूपमित्यर्थः । तदाह मनुः—

पयोमूलफलैर्वापि पितृभ्यस्तृप्तिमाहरन् ।
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ॥

एतच्च पञ्चमहायज्ञान्तर्गतम् ,

---

( १ ) 'पाकेन' नास्ति क०

*एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृही ।
*अपीत्यनुकल्पः । प्रचेताः—
नामन्त्रणं न होमं च नाह्वानं न विसर्जनम् ।
न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम् ॥
अत्र—
निर्दिश्य भोजयित्वा तु किञ्चिद्दत्वा विसर्जयेत् ।
इति तेनैवोक्तेर्दक्षिणाविकल्पः । यत्तु—
नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।
दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितम् ॥
इति काशीखण्डे । तद्विप्राभावपरमिति पृथ्वीचन्द्रः । भविष्ये—
आवाहनं स्वधाकारं पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमा विश्वेदेवा न चैव हि ॥
दातॄणामथ भोक्तॄणां नियमो न च विद्यते ॥

---

एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये ।
इति कात्तीयात् । एकस्यापि विप्रस्य भोजनपर्याप्तान्नालाभे तु कात्यायनः—
अदैवं नास्ति चेदन्नं भोक्ता भोज्यमथापि वा ।
अभ्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् ।
इदं च ब्राह्मणाय देयम्,
उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥
इति कौर्मात् । अधिकमनुपदमग्रे । इदं च षड्दैवत्यामित्याह—*एकमपीति । *अपीति । षट् द्वौ वा मुख्यः कल्पः । तच्च स्वभोज्यान्नेनैव कार्यम्,

एतद्दिवाऽसंभवे रात्रावपि कार्यम्,

दिवोदितानि कर्माणि प्रमादादकृतानि वै।
यामिन्याः प्रहरं यावत्तावत् कर्माणि कारयेत् ॥

इति बृहन्नारदीयोक्तेः।

रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत्।
ब्रह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः॥

इति पृथ्वीचन्द्रधृतसंग्रहोक्तेश्च। न च दार्शिकाब्दिकाद्यपि रात्रौ स्यादिति वाच्यम्, इष्टापत्तेः। ( त(१)स्य तिथिसम्बन्धित्वात्।

संध्यारात्रौ न कर्तव्यं श्राद्धं खलु विचक्षणैः।

इति वैष्णवाद्यै रात्रौ निषेधात्। अत एवाल्पद्वादश्यां—

उषःकाले द्वयं कुर्यात् प्रातर्माध्याह्निकं तदा।

इत्याद्यैर्वाक्यैस्त्रयोदशीश्राद्धं नोपकृष्यते भिन्नविषयत्वादित्युक्तं मदनरत्ने। नित्यं त्वपकृष्यते, अन्वहमित्युक्तेस्तिथिसर्वाधिकाभावात्। यथा च सुदर्शनभाष्ये— 'परपक्षे पित्र्याणीति नियमेऽपि नित्यश्राद्धत्वे संवत्सरमित्यत्यन्तसंयोगे द्वितीयाबलाच्छुक्लपक्षेऽपि इत्युक्तम्। तथा रात्रावपि। ) तथाच माधवेन प्रतिपत्प्रकरणे स्पष्ट-

---

मध्यान्हे वेदविदुषे दक्षिणापिण्डवर्जितम्।
नित्यश्राद्धं ततो दद्याद् भुङ्क्ते यत्स्वयमेव हि॥

इति ब्रह्माण्डात्। एतेन तैलादेरप्यनुज्ञा भवति।

अथ नित्यश्राद्धप्रयोगः—देशकालौ संकीर्त्य अस्मत्पितृपितामहप्रपितामहानां गोत्रादीनां सपत्नीकानाम् अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां गोत्रादीनां सपत्नीकानां च नित्य-

---

(१) कंसान्तर्गतो नास्ति क०

मुक्तम् । वयं चाग्रे वक्ष्यामः । *अस्य दिनेऽकरणे लोप एव । 'रात्रौ श्राद्धं न कुर्वीत' इति निषेधादिति पृ(१) थ्वीचन्द्रोदयः । पात्राभावे कौर्मे--

*उद्धृत्य वा यथाशक्ति किञ्चिदन्नं प्रकल्पयेत् ।

तत्प्रतिपत्तिमाह विष्णुः--'भिक्षुकाभावेऽन्नं गोभ्यो दद्यादग्नौ वा प्रक्षिपेत्' इति । हेमाद्रौ नागरखण्डे--

*नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिद्ध्यति ।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तन्न हापयेत् ॥

षड्दैवते पृथङ् नेत्यर्थः ।
मात्स्ये--

*ततस्तु वैश्वदेवान्ते सभृत्यसुतबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ॥

---

श्राद्धं करिष्ये इति संकल्प्य विप्रमुदङ्मुखमुपवेश्य क्षणादि संपूज्य पात्रमभिघार्यान्नं परिविष्य पृथ्वी ते पात्रमित्यादिब्रह्मार्पणान्तं कृत्वा भोजयित्वा विसर्जयेदिति । देवलः--

अघृतं भोजयेद्विप्रं स्वे गृहे सति सर्पिषि ।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥
मृष्टमन्नं स्वयं भुङ्क्ते पश्चात्कदशनं लघु ।

उत्तरार्धं तदेव । मतान्तरमाह--*अस्येति । नित्यश्राद्धस्येत्यर्थः । एतन्मते दार्शिकस्य लोपः । आब्दिकं तु अन्तरितं कार्यमिति विशेषः । *उद्धृत्य वेति । व्याख्यातम् । *नित्यश्राद्धमिति । दर्शश्राद्धादिस्थले । आब्दिकादौ तु पृथगेव, देवताभेदात् । आदौ वाऽन्ते वा वैश्वदेवः । तत्र वैश्वदेवशेषेण न भोजनं किन्तु श्राद्धशेषेणैवेत्याह--*ततस्त्विति ।

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।

इति याज्ञवल्क्याच्च । नचात्र रागप्राप्तभोजनमनूद्य श्राद्ध-

---

(१) 'पृथ्वीचन्द्रः' क० छ०

*सर्वं पर्वनिषिद्धं मांसमाषाद्यपीत्यर्थः । एवं कृष्णैकादश्यादौ गृहिणोऽपि भोजनम्, अस्य वैधत्वेन निषेधाप्रवृत्तेः । एवं ग्रहणवेधेऽपि । यत्त्वनाहिताग्नेरमाषममांसं व्रतयेदित्युक्तं, तद्वेयमेव श्रौतत्वेन तस्य बलवत्त्वात् । देवलः—

श्राद्धं कृत्वा तु यो मर्त्यो न भुङ्क्तेऽथ कदाचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥

---

शेषो विधेयः । भोजनस्य रागतो नित्यमप्राप्तेर्नित्यवच्छ्रवणविरोधात् । अतः प्रकरणाच्छ्राद्धाङ्गत्वेन भोजनक्रियैव विधेया "पयोव्रतं ब्राह्मणस्य" इतिवत् । अन्यथा तत्रापि व्रतानुवादेन पय एव विधीयेत । इदं च भोजनं यद्यपि पितृसेवितामिति द्वितीयाश्रुतेः प्रतिपत्तिकर्मतया प्रतिपाद्याभावे न्यायाल्लुप्येत तथापि श्राद्धदिने उपवासे दोषश्रवणात् पुनः पक्त्वापि अदृष्टार्थं भोजनं कार्यमेव । स्विष्टकृद्याग इव शेषनाशे आज्येन, "यस्य सर्वाणि हवींषि नश्येयुरपहेरयुर्वा आज्येनैता देवताः परिसंख्याय यजेत" इति वचनात् । श्राद्धदिने उपवासे दोषं वक्ष्यति—"श्राद्धं कृत्वा तु यो मर्त्यः" इत्यादि । एतदेव ग्रन्थकृत्संमतं "गृहिणोऽपि भोजनम्" इत्यभिधानात् । नच यतिश्राद्धशेषभोजनं तदर्थः 'अस्य वैधत्वेन' इति हेतूपन्यासासंगतेः । *सर्वमिति । नियम एवायं न परिसंख्या, त्रैदोष्यात् । तेन पितृभ्यो यन्न दत्तं तन्न भुञ्जीतेति नार्थः किन्तु पितृभ्यो दत्तं भुञ्जीतैवेति ।

यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम् ।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन ॥

इति वाक्यं तु पिण्डेभ्यो निवेदनावश्यकत्वार्थम् । नियमाधीनैव चार्थत इतरनिवृत्तिः ।

भक्ष्यादिकं न भोक्तव्यं पितृभ्यो यदवेदितम् ।

*शिवरात्र्येकादश्यादौ त्ववघ्राणमेवेत्युक्तं प्राक् । *यत्र तूपवासो नावश्यकस्तत्रैकभक्तमयाचितं वा कार्यमिति हेमाद्रिः । जातूकर्ण्यः—

*अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः ।
अन्यथा ह्यासुरं श्राद्धं *परपाके च सेविते ॥

श्राद्धशेषभोजनस्य क्वचिन्निषेधमाह—हेमाद्रौ प्रायश्चित्तकाण्डे मार्कण्डेयः—

पित्रादीनामथाऽन्येषां श्राद्धशेषान्नभोजनम् ।
व्रतिनां विधवानां च यतीनां च विगर्हितम् ॥

अन्ये भिन्नगोत्राः । व्रतिनो ब्रह्मचारिणः ।

श्राद्धावशिष्टभोक्तारस्ते वै निरयगामिनः ।
सगोत्राणां सकुल्यानां ज्ञातीनां च न दोषकृत् ॥

---

इत्यादि तु नियमविधिशेषः । चातुर्मास्यक्षीरदध्यादिव्रते च क्षीरादि भोक्तव्यं । यथा रागप्राप्तमाषादिः पर्वनिषिद्धः तथैव तादृशः क्षीरादिस्तत्र काम्यं तु तद्धेयमेव बलवत्त्वात् । *शिवरात्रीति ।

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

इत्युक्तवचनात् । नित्यत्वं न विवक्षितम्, अनुवाद्यविशेषणत्वात् । तेन काम्योपवासेऽप्याघ्राणमेव । एतच्चाघ्राणं भोजनस्थानापन्नं । तेन न पिण्डशेषाघ्राणेन सिद्धिः । आघ्राणेन निर्वाहाभावे त्वाह—*यत्र त्विति । एकभक्तमयाचितं चेदं श्राद्धशेषेणैव तद्धर्मकम् । तदभावे तु पुनः पाकेन हविष्यस्यैवेति द्रष्टव्यम् । *अहन्येवेति । सूर्ये विद्यमाने एवेत्यर्थः । क्षुदभावेऽपि किञ्चिद्भोक्तव्यमिति विधानात् । *परपाके इति ।

श्राद्धं कृत्वा परगृहे यो भुङ्क्ते मदविह्वलः ।
पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ॥

इति तत्रैवोक्तेः । तत्रैव जाबालिः—

विप्रस्त्वन्यगृहे श्राद्धशिष्टान्नं भोजनं चरेत् ।
प्राजापत्यं विशुद्धिः स्या*ज्ज्ञातिगोत्रे न दोषकृत् ॥

यतीनां वपनं लक्षं प्रणवजपश्चेति तत्रैवोक्तम् । अस्यापवादमाह स एव—

श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः ।
ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य योगिनः ।
एतेषां श्राद्धशिष्टान्नं भुक्त्वा दोषो न विद्यते ।
इति केचित्प्रशंसन्ति मुनयस्तदसांप्रतम् ॥

*विशेषान्तरं तत्रैव ज्ञेयम् । हेमाद्रौ जाबालिः—

ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकर्ता विवर्जयेत् ॥

पृथ्वीचन्द्रोदये आचार्यः—

न शूद्रं भोजयेत्तस्मिन् गृहे यत्नेन तद्दिने ।
श्राद्धशेषं *न शूद्रेभ्यः प्रदद्यादखिलेष्वपि ॥

---

इति शातातपात् । *ज्ञातिगोत्रे इति ।

निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना ।
आचम्य पाणी प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत् ॥

इति देवलोक्तेः । दीपनिर्वापणं भट्टादयो न लिखन्ति । अन्ये तु—

अश्रीभग्नपरखण्डाश्च तथाऽन्ये दीर्घरोगिणः ।

अश्रीः अकिञ्चनः ।

बन्दीमागधसूताश्च तौर्यत्रिकविदस्तथा ।
अलब्धभागाः श्राद्धेषु नाशयन्ति महद्यशः ॥
तस्मात्तेऽपि च भर्त्तव्याः सकलं च विभज्य वै ॥

इत्याहुः । तदेतद्वचनप्रामाण्ये वणिक्परम् । *विशेषान्तरं श्राद्धदिने ब्रह्मचर्यादि पत्न्यादेः श्राद्धशेषभोजनं वा ।*न शूद्रेति ।

इति कमलाकरभट्टकृते निर्णयसिन्धौ पार्वणश्राद्धम् ।

*अथानुकल्पः । तत्र *विप्रालाभे—

भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम् ।

*दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥

इति शङ्खोक्तेरेको विप्रः *पूर्वमुक्तः । *विप्राभावे *द-

अखिलेषु सर्वजातीयेष्वित्युपादानात्संकरलाभः । तत्र प्रायश्चित्तं तत्तारतम्यं चान्यतो बोध्यम् । एवञ्च रजकादेः श्राद्धशेषदानपाण्डित्यं महामोहसामित्यलम् ।

*अथानुकल्प इति ॥ मुख्याशक्तावनुकल्पोऽनुष्ठेयः,

यथा कथञ्चिन्नित्यानि कुर्यादिन्दुक्षयादिषु ।

पात्रद्रव्याद्यसंपत्तौ सोऽपि मुख्यफलं लभेत् ॥

इति शातातपोक्तेः । यथाकथञ्चित् अङ्गहान्यापि यावज्जीवं कर्त्तव्यतया विहितानि दर्शपूर्णमासादीनि पितृयज्ञश्राद्धादीनि च । पात्रम् उक्तलक्षणो ब्राह्मणः । द्रव्यं मुन्यन्नादि ।

श्राद्धानुकल्पं यः कुर्यात् जात्यवस्थाद्यपेक्षया ।

श्रद्धावान् सोऽप्यवाप्नोति मुख्यश्राद्धफलं नरः ॥

इति भविष्याच्च । जातिः शूद्रत्वादिः, तामपेक्ष्य मन्त्ररूपाङ्गहीनमनुकल्पम् । अवस्था अनुपनीतत्वम् । तत्र परतो मन्त्रपाठनादिमदनुकल्पम् । विप्रादेस्तु समन्त्रमविहिताप्रतिषिद्धद्रव्याद्यनुकल्पम् । आदिना प्रवासादि । तत्र परगोत्रविधवादिपाकेनापि अनुकल्पः । मुख्यानुष्ठानशक्तस्य तु मनुः—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।

न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ इति ॥

*विप्रालाभे अनेकविप्रालाभे । *दैवे इति । तत्प्रकारो "दैवे कृत्वातु नैवेद्यम्" इत्यादिना पूर्वमुक्तः । *पूर्वम्,

एकेनापि हि विप्रेण षट्पिण्डश्राद्धमाचरेत् ।

(१) 'अथानुकल्पाः' ग०

र्भबटुः,

निधाय वा दर्भबटूना*सनेषु समाहितः।
*प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥

इति देवलोक्तेः। *अशक्तावामश्राद्धम्—

आपद्य*नग्नौ तीर्थे च प्रवासे पुत्रजन्मनि।
आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे ॥

इति कात्यायनोक्तेः। पृथ्वीचन्द्रोदये जमदग्निः—

यावत्स्यान्नाग्निसंयुक्त उत्सन्नाग्निरथापि वा।

---

इत्यादिना। *विप्राभावे एकस्यापि विप्रस्याभावे। *दर्भबटुरिति।

अलाभे ब्राह्मणस्यैव कौशः कार्यो बटुः प्रिये।
एवमप्याचरेच्छ्राद्धं षट्दैवत्यं समाहितः ॥
विभक्तिं कुरुते यस्तु पितृहा स प्रजायते ॥

इति प्रभासखण्डात्। बटुः लघुमनुष्यचञ्चा। तल्लाभार्थं कौश इति। "चञ्चा तृणमयः पुमान्" इति कोशः। तं बटुं कुशमयं विप्रत्वेन प्रकल्प्य श्राद्धं कुर्यात् नतु विभक्तिं श्राद्धविच्छेदमित्यर्थः। आसनेषु ब्राह्मणोपवेशनोचितेषु। *प्रैषेति। श्राद्धं करिष्ये इत्यारभ्य श्राद्धं संपन्नमित्यादिप्रैषान् कुरुष्वेत्यारभ्य सुसंपन्नमित्यादि अनुप्रैषांश्च स्वयमेव वदेदित्यर्थः। एवं संकल्पितान्नप्रातिपत्तिमाह देवलः—

पात्राभावे परं कृत्वा पितृयज्ञविधिं नरः।
निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो गतिः ॥
पात्राभावे क्षिपेदग्नौ गवे दद्यात्तथाप्सु वा।
नतु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः ॥ इति।

*अशक्तौ पाकश्राद्धासंभवे। *अनग्नौ अनग्नित्वे भावप्रधाननिर्देशात्। अनग्नित्वं च न पाकाद्यर्थलौकिकाग्न्यभावः तस्यापत्पदेन ग्रहणादेतद्वैयर्थ्यात्; किन्तु श्रौतस्मार्त्ताग्न्यभावः। त-

*आमश्राद्धं तदा कुर्याद्धस्तेनाग्नौकरणं भवेत् ॥

कौर्मे--

अनग्निरधनो वापि तथैव व्यसनान्वितः ।

आमश्राद्धं द्विजः कुर्याद् वृषलस्तु सदैव हि ॥

*आहिताग्नौ प्रवासस्थे तत्पत्नी गृहे दर्शमृत्विगादिना कारयेत्,

अमावास्यादि नियतं प्रोषिते धर्मचारिणी ।

पत्यौ तु कारयेन्नित्यमन्येनाप्यृत्विगादिना ॥

इति लघुहारीतोक्तेरिति पृथ्वीचन्द्रोदयः । आदिपदमाब्दिकादिसर्वपार्वणपरमिति शूलपाणिः । सुमन्तुः--

पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप ।

अपत्नीनां महाबाहो विदेशगमनादिभिः ।

सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ॥

दाह-यावत्स्यान्नाग्निसंयुक्त इत्यादि । देशान्तरस्थत्वादिनाऽग्न्यभावोऽपि द्रष्टव्यः । *आमश्राद्धमिति । अयं मयूखेऽपि पाठः । विवेचने च हेमश्राद्धमिति पाठः । तथाचापरिग्रहनाशदेशान्तरस्थत्वादिना श्रौतस्मार्त्तान्यतराग्न्यभावे आमेनैव हेम्नैव वा श्राद्धमित्यर्थः । *पुत्रजन्मनीति । नच पुत्रोत्पत्तौ हेमनियममाहेत्यग्रिमग्रन्थविरोधः आमस्य विहितप्रतिषिद्धत्वेन विकल्पितत्वात् । नचामेन कल्याणान्यभिकाङ्क्षयान्निति निषेधात् तस्य पुत्रोत्पत्तावमुख्यत्वाद्वा । अधनत्वं चोपलक्षणम् ,

न भवेद्यस्य सामग्री दारा वा गृहमेव वा ।

आमश्राद्धं स कुर्वीत बालो वृद्धश्च यो भवेत् ॥

इति पारिजाते जमदग्निवाक्यात् । पाकसाधनसामग्र्यभावः पत्न्यभावः पाकयोग्यस्थानाभावः पाकशक्त्यभावश्च क्रमेणार्थः । तत्रान्त्यः पत्न्यभावपर्यवसन्नः । *आहिताग्नाविति । एतच्च पत्न्याः कर्तृत्वमेकाकिप्रवासे श्राद्धासंभवं निश्चित्येति बो-

प्रचेताः—

स्त्री शूद्रः *स्वपचश्चैव जातकर्मणि चाप्यथ ।
आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु ॥

स्वयं पचतीति स्वपचः । विष्णूशनसौ—

आत्मनो देशकालाभ्यां विप्लवे समुपस्थिते ।
आपद्यनग्नौ तीर्थे च प्रवासे पत्न्यसंभवे ॥
चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः ।
न पक्वं भोजयेद्विद्वान् सच्छूद्रोऽपि कदाचन ॥
भोजयन् प्रत्यवायी स्यान्न च तस्य फलं लभेत् ॥

अत्र प्रवासतीर्थ*ग्रहणादावामहेमश्राद्धमेव, पाकश्राद्धं तु न भवत्येवेति हेमाद्रिरत्नावल्यादयः । अपरार्क

---

ध्यम् । *स्वपचः अपत्नीकः ।*ग्रहणादाविति । आदिना संक्रमादिपरिग्रहः । पत्न्याग्निसान्निधानेपि पाकासंभवेऽपि च । तथाच प्रवासग्रहणयोः आदिपदग्राह्यपुत्रजन्मसंक्रमापद्भार्यारजोदर्शनपत्न्यभावेषु साग्निकोऽप्यामेनैवेत्यर्थ इति मयूखः । तीर्थपदं न दृश्यते । विवेचने तु पत्न्यभावे तद्रजोदोषे ग्रहणतीर्थसंक्रमादिषु च पत्न्याग्निसन्निधानेपि पाकसंभवेपि आममेव मुख्यं, हेम गौणं, पुत्रजन्मनि तु विपरीतमिति विवेक इत्युक्तम् । तीर्थे तु तीर्थजलसमीपे आमेन हेम्ना वा । गृहादौ त्वन्नेनैव,

सदैव हि जलान्ते तु आमश्राद्धं विधीयते ।
गृहाद्दशगुणं पुण्यं भवेत्तीर्थे निवापकृत् ॥

इति स्मरणात् । वस्तुतस्तु—

तीर्थे श्राद्धं प्रकुर्वीरन् पक्वान्नेन विशेषतः ।
आमान्नेन हिरण्येन कन्दमूलफलैरपि ।
एषामभावे कुर्याच्च श्रद्धयाऽपि जलेन च ॥

विज्ञानेश्वरादयस्तु—

*पाकाभावे द्विजातीनामामश्राद्धं विधीयते ।

इति सुमन्तूक्तेः साग्निकैर्निरग्निकैश्च प्रवासादौ सर्वत्र पाकाभावे आमादिना कार्यम्, पाकसंभवे त्वन्नेनैवेत्याहुः । *अत एव पाकश्राद्धमुक्त्वा—

एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु कर्मसु ।
भार्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः ॥

---

इति सुमन्तुवचनादुभयमपीति । *पाकाभावे इति । "आपद्यनग्नौ तीर्थे च" इति पूर्वोक्तः "संक्रमेऽन्नद्विजाभावे" इति वक्ष्यमाणश्चैतस्यैव प्रपञ्चः । ग्रहणपुत्रजन्मनोः द्विजाभावे च पक्वान्नभोक्त्रसंभवकृतः, पत्न्यभावतद्रजोदर्शनएकाकिप्रवासतीर्थप्राप्त्यादिषु पक्त्रभावकृतः, आपदन्नाभावादिषु पाकाभावकृतः पाकाभावः । एतदर्थमेव च--

आत्मनो देशकालाभ्यां विप्लवे समुपस्थिते ।
आमश्राद्धं द्विजैः कार्यं शूद्राणां तु सदैव हि ॥

इत्युशनोवाक्यं,

पाकाभावेऽधिकारः स्याद्द्विजादीनां नराधिप ।
अपत्नीनां महाबाहो विदेशगमनादिभिः ॥
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ॥

इति सुमंतुवाक्यं च ग्रन्थकृद्भिरुक्तम् । विदेशगमनादिभिः पाकाभावे इत्यन्वयः । अपत्नीनामिति हेतुगर्भविशेषणादपत्नीकत्वप्रयुक्तः पाकाभावोऽभिमतः । आत्मन इति तु आपदः पञ्च । एवञ्चैवंजातीयकेषु पाकश्राद्धासंभवद्वारकमेव द्विजान्प्रति आमहेमश्राद्धविधानं, संक्रमाग्न्यभावयोस्तु तदसंभवात्स्वतन्त्रं तदिति । शूद्रस्य पाकसम्भवेऽपि न पाकश्राद्धं किन्तु आममेव "शूद्रः कुर्यात्सदैव हि" "न पक्वं भोजयेद्विद्वान्" इत्यादिवचनैरिति । *अत

इति मात्स्ये निरग्नेरपि पाकेनोक्तमिति शूलपाणिकल्पतरू । *एतच्छन्दः श्राद्धमात्रपर इत्यन्ये ।

*एकोद्दिष्टं तु कर्तव्यं पाकेनैव सदा स्वयम् ।

इति लघुहारीतीयमपि साग्नेरेव । निरग्नेर्*महैकोद्दिष्टमप्यामेन । *शूद्रस्य तु दशाहपिण्डाद्यामेनेति

एवेति । अन्यथा निरग्नेरामादेः प्रतिपदोक्तत्वात् पाकः कथं प्राप्नुयात् ? *एतादिति । हेमाद्रिरत्नावल्यादिमताभिप्रायेण । *एकोद्दिष्टं त्विति ।

अभावे पाकपात्राणां तदहः समुपोषणम् ।

इत्युत्तरार्धम् । एतद्वचनं च मासिकानां स्वकालाकरणनिमित्तोपवासरूपप्रायश्चितविधायकम् । न ह्ययं मासिकेषु पाकविधिः किन्तु अनुवादः(१) । यद्वा निरग्नेरनुकल्पतयाऽमादिसंभवात्साग्नेरेवेत्युक्तम् । *महैकोद्दिष्टमपीति । अपिरामेनेत्यनन्तरं बोध्यः । होतव्यमनलेऽथवेति गोभिलीयस्य विप्राभावपरतया तत्सत्त्वे आमस्यापि सुकरत्वात् । *शूद्रस्य त्विति । कर्त्तव्यानि,

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।

मासेऽन्यस्मिंन्तिथौ तस्मिन् श्राद्धं कुर्यात्प्रयत्नतः ॥

इति देवलवाक्यात् ।

मासिकं चोदकुम्भं च यद्यदन्तरितं भवेत् ।

तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥

इति वाक्याच्च । नचोपवासरूपप्रायश्चित्तमात्रेण तत्सिद्धिरस्त्विति वाच्यं,

यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश ।

पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

इति तिथितत्वे वचनात् । निरग्नीनां च तत्र पाकस्याप्रा-

(१) इतोऽग्रे 'ततश्च तत्रोत्तरकाले' इत्यधिकं क० ।

हलायुधः ।*उत्सन्नाग्नीनां त्वामश्राद्धमेव. पूर्वोक्तजमदग्निवाक्यात् । मरीचिः—

*श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं *मासंसंवत्सरादृते ॥

स्मृतिदर्पणे—

मृताहं च सपिण्डं च*गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ॥

हेमाद्रौ व्यासः—

आमं ददतु कौन्तेय दद्यादामं *चतुर्गुणम् ।
द्विगुणं त्रिगुणं वापि नत्वेकगुणमर्पयेत् ॥
सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ।
आवाहनादि सर्वं स्यात्पिण्डदानं च भारत ॥
दद्याच्च द्विजातिभ्यः श्रृतं वाऽश्रृतमेव वा ।
तेनाग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ॥

प(१)क्षान्तरमाह स एव—

आमं ददद्धि कौन्तेय तदामं द्विगुणं चरेत् ।
त्रिगुणं चतुर्गुणं वापि न त्वेकगुणमर्पयेत् ॥

---

प्तेस्तत्परत्वासंभवात्साग्नेरेवेति हेमाद्र्यादिमतेन, नत्वपरार्कादिमतेनेति स्मर्त्तव्यम् । 'सदा चैव तु शूद्राणाम्' इति सदापदोपादानफलम्। *उत्सन्नाग्नीनामिति । निराग्निकतयाऽऽमश्राद्धसिद्धेः पुनरुपादानं तन्नियमार्थमिति भावः । *श्राद्धविघ्ने । भार्यारजोदर्शनादिना आपदादिना वा पाकश्राद्धासंभवे(२) । *मासेति । मासिकं सांवत्सरिकं च पाकेनैवेत्यर्थः । *गयाश्राद्धमिति । सर्वगयाश्राद्धासंभवे ततो वटश्राद्धमिति याज्ञिकाः । *चतुर्गु-

---

(१) 'पक्षान्तरमाह' नास्ति क० छ०
(२) इतोऽग्रे 'इति यावत्'इत्यधिकं ङ० ।

स्मृत्यर्थसारे सममप्युक्तम्। (१) ( विष्णुपुराणे वाराहे च—

असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः।
प्रदद्यात्तु द्विजातिभ्यः स्वल्पाल्पामपि दक्षिणाम्॥

अत्र शक्तित इत्यस्मात् *समलाभः। अदृयत इत्या*-शम्। ) षट्त्रिंशन्मते—

आमश्राद्धं यदा कुर्यात् पिण्डदानं कथं भवेत्।
*गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा॥
पिण्डान् दद्याद्यथालाभं तिलैः सह विमत्सरः॥

पृथ्वीचन्द्रोदये व्यासः—

आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदः सदा।
हस्तेऽग्नौकरणं कुर्याद् ब्राह्मणस्य विधानतः॥

एतत्साग्नेः। *निरग्नेः सदा तत्सत्त्वात्। यत्तु—

आमेन पिण्डं दद्याच्चेद्विप्रान् पाकेन भोजयेत्।

---

णामिति। चातुर्गुण्यादि पुरुषाहारापेक्षया। *समलाभ इति। स्मृत्यर्थसारमनुरुध्य। वस्तुतस्तु इदं पक्षान्तरमेव विधत्ते। अन्यथा प्रोक्तचातुर्गुण्यादिपक्षाणां शक्त्यैव व्यवस्थापनात्तदनुवादवैयर्थ्यप्रसङ्गात्। अन्नदानस्यासमर्थ इत्यस्य द्विगुणधान्यदानेऽसमर्थ इत्यर्थः। *आममिति। तस्य तद्धान्यं तद्दिने स्वगृहे पक्त्वा भोक्तव्यमिति कर्मव्युत्पत्त्या सूच्यते। वर्त्तमानसामीप्यस्यापि व्यञ्जनात्, नतु कार्यान्तरे विनियोक्तव्यम्। अनुपदं चैतत्स्फुटम्। *गृहपाकादिति। यद्यपि आमश्राद्धे शृतं वाऽशृतमित्युपक्रम्य पिण्डांस्तेनैव निर्वपेदित्युक्तं तथापि आमात्साधनान्तरविधिरयम्। प्रधानभूताद् गृहपकादोदनादुद्धृतेन तदेकदेशेनेत्यर्थः। एषां च पक्षाणां यथालाभं व्यवस्था। *निरग्नेरिति। उ(२)क्तश्च—

---

(१) धनुश्चिन्हान्तर्गतं नास्ति ग०    (२) पाणिहोम इत्यर्थः।

पक्केन कुरुते पिण्डमामान्नं यः प्रयच्छति ॥
तावुभौ मनुजौ प्रोक्तौ नरकार्हौ न संशयः ॥ इति,

त*द्दर्शादिपरम् ।*देशाचाराद्व्यवस्थेति युक्तम् । मरीचिः—

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः ॥

आवाहने 'हविषे अत्तवे' इत्यत्र 'स्वीकर्तवे' इत्यूहः । स्वधाकारे 'नमो वः पितर इषे' इत्यत्र इषेपदस्थाने *'आमद्रव्याय' इत्यूहः । विसर्जने 'वाजेवाजे' इत्यत्र

---

यावत्स्यान्नाग्निसंयुक्त उत्सन्नाग्निरथापि वा ।
आमश्राद्धं तदा कुर्याद्धस्तेऽग्नौकरणं भवेत् ॥

इत्यामश्राद्धेऽपि पाणिहोमः । अयं चानुवादः ।

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।

इतिपाणिहोमेन पाकश्राद्धस्यापि संभवेनाग्न्यधिकरणकस्याग्नौकरणस्यासम्भ(१)वेऽप्यबाधात् । अन्यथाऽधिकाराभावे श्राद्धस्यैवाप्राप्तेः । तत्रामादिसाधनविधिरपि दुःस्थितः स्यात् । अत एव सदापदोपादानम् । एवञ्चापेक्षितविधानानुरोधेन व्यासवाक्यं साग्निपरं निरग्निपरत्वे वैयर्थ्यादित्यर्थः । *दर्शादीनि । तत्रैकजातीयद्रव्येणैव प्रधानद्वयं कार्यमित्याशयेनेदम् । तदेतद्बहवो न मन्यन्ते ।

दद्याद्यच्च द्विजातिभ्यः शृतं वाऽशृतमेव वा ।
हस्तेऽग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ॥

इति वचनान्तरसंवादात्साधनान्तरविधिरनवस्थितःस्यादत आह—*देशाचारादिति । *आमद्रव्यायेति । द्रव्यपदं संपातायातम् । आमायेत्येव विवक्षितम् । अत्रोक्तं विवेचने—तप्स्यते लृडन्तम् । पारिजातमते—प्रतिगृहीतान्नभोजनोत्तरमेव पितृतृप्तौ मानाभावात्प्रार्थनायामर्थतो भविष्यत्ताया अपि लाभमालोच्य

---

(१) 'भवे बाधात्' छ० ।

'तृप्तास्थ'इति स्थाने'तप्स्यर्ते'*'तृप्यत' इति वोहः। यद्यपि "तस्मादृचं नोहेत्' 'इति ऋच्यूहो निषिद्धः तथापि *वचनाद्भवति।

*तृप्तिप्रश्नोऽवगाहश्च जुषप्रश्नो यथासुखम्।
आमश्राद्धे भवेन्नैतदपोशानं च पञ्चमम्॥

अयं चानुवादः *खलेवाल्यां छेदनादीनामिवा*र्थाभावाल्लोपासिद्धेः।

धर्मप्रदीपे तु—

आमं चतुर्गुणं दद्यादथवा द्विगुणं तथा।
हेम चाष्टगुणं तद्वदामे हैमेप्यसौ विधिः॥

---

तत्र लोट् न्याय्य इत्याह*तृप्यतेति। इषे इत्येतदाशास्यान्नप्रतिपादकमेव नतु प्रदेयान्नप्रतिपादकम्। तथा चामेऽपि नासमेवतार्थमिति न तत्रोहो युक्तः; किन्तु स्वधा-पित्र्यहविर्दानं, तत्करणं स्वधाकारः, तदङ्गमन्त्रः, इदमन्नमित्यादिः। तत्र एकब्राह्मणभोजनपर्याप्तान्ननिष्पादनसमर्थधान्यचतुर्गुणमिदं धान्यमिति इदमन्नमित्यत्रेदमाममिति वोहः, चतुर्गुणमित्यन्तस्य वैयर्थ्यात्। अन्यथा पाकश्राद्धे एकब्राह्मणभोजनपर्याप्तमन्नमित्यपि स्यादिति स्वधाकार इत्यस्यार्थ इति। अन्यकर्मणि विष्णो हव्यं रक्षस्वेत्यादौ अनूहः। *वचनादिति। "तस्मादृचं नोहेत्" इति सामान्यश्रुतिरपि बाध्यते इति भावः। नव्यास्तु न्यायप्राप्तबाधकत्वेनोपपन्नस्यास्य वाक्यस्य न श्रौतनिषेधबाधकत्वम्। अतोऽनृङ्मन्त्रेष्वेवोह इत्याहुः। अत्र भोजनसंबद्धान् पदार्थान् निवर्त्तयति—*तृप्तिप्रश्न इति। तृप्तिप्रश्नः तृप्ता स्थेति। अवगाहो द्विजाङ्गुष्ठनिवेशनम्। जुषप्रश्नः यथासुखं जुषध्वमिति। यथाविधि प्राणाहुत्यादिविधि(?)*खलेवाल्यामिति। खलेवाली यू(१)प इति वचनात्। *अर्थाभावात्।

---

(१) 'यज्ञे पशुबन्धनार्थम्' इत्यादि।

आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैव च ।
व्यतीपातादिके श्राद्धे नियमा(१)न् परिवर्जयेत् ॥
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ।
पिण्डदानं प्रकुर्वीत आमे हैमे कृते सति ॥
आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च ।
विकिरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत् ॥
आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम् ।
तृप्तिप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवम् ॥
आवाहनाग्नौकरणं विकिरं पात्रपूरणम् ।
तृप्तिप्रश्नं न कुर्वीत आमे हैमे कदाचन ॥

इत्युक्तम् । *एतच्च—

आवाहनं भवेत्कार्यमर्घ्यदानं तथैव च ।

इति हेमाद्रौ भविष्यादिविरोधाच्चिन्त्यम्, शाखान्तरविषयं वास्तु । *विकिरोऽप्यामेनेति हेमाद्रिः । शूद्रस्य तु तत्रैवोक्तम्—

अग्नौकरणमन्त्रश्च नमस्कारो विधीयते ।

अग्नये कव्यवाहनाय नमः, सोमाय पितृमते नमः, इ(२)त्थं मन्त्रः । मात्स्ये—

मन्त्रवर्ज्यं हि शूद्रस्य सर्वमेव विधीयते ।
एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा ॥
नमस्कारेण मन्त्रेण कुर्यादामान्नवद् बुधः ॥

तच्च पूर्वाह्णे कार्यम्,

---

तत्र छेदनादिकरणे स्वरूपहानिप्रसङ्गात् । कृष्णलावघातवदित्यन्ये । अर्थाभावात् वितुषीकरणरूपद्वारासम्भवात् । *एतच्चेति । आमश्राद्धसामान्याभिप्रायकम् । *विकिरोऽपीति । उपपादयिष्यते ।

---

(१) ब्रह्मचर्यादीन् । (२) 'इत्ययं' क० छ० ।

*आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं च मध्यतः ।

---

*आमश्राद्धं त्विति । इदमत्रावधेयं–यथाऽऽमश्राद्धं त्वित्यादि तथैव—

पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥
शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥

इति सावनदिनभागविधयः । नन्वेवं निषेधा नोपपद्येरन्—
तत्र तावन्मनुः—

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा ।
संध्ययोरुभयोश्चैव सूर्ये चैवातिरोहिते ॥

"नातिसंध्यासमीपतः" इति च । संध्या च खण्डरात्रिमण्डलोपलम्भयोग्यकालः मुख्यैव, न तु—

सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ।
उदयात्प्राक्तनी संध्या घटिकात्रयमिष्यते ॥

इति परिभाषिता, तस्या रात्र्यन्तर्गतत्वेन तन्निषेधेनैव निषेधसिद्धेः । स्कान्दे—

उपसंध्यं न कुर्वीत पितृपूजां कथञ्चन ।
स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत् ॥

मात्स्ये—

सायान्हस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत् ।
राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु ॥

बौधायनः—

चतुर्थप्रहरे प्राप्ते यः श्राद्धं कुरुते नरः ।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् ॥

हारीतः—

दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥ इति।

एते च न निषेधाः। तथात्वे शास्त्रीयप्राप्त्यपेक्षत्वेन तस्याश्चात्यन्तबाधाभावेन विकल्पापत्तेः "नानुयाजेषु" इत्यादिवत्; किन्तु पर्युदासाः। अत्र षष्टिनाड्यवच्छिन्नामावास्यादिविधिशेषतया पर्युदासत्वं रात्र्यादीतरामावास्यायामिति शूलपाणिः। तदसत्, पर्युदासो हि नञ्संबद्धतदितरसमस्तसमुदायिघटितसमुदायविषयस्य सामान्यविधेः तदितरसमुदायिमात्रसङ्कोचने न शेषः। नहि रात्रिसन्ध्यादयस्तिथिरूपसमुदायघटकाः क्षणानामेवैकचन्द्रकलाप्रवेशनिर्गमफलकानां तद्घटकत्वात्। भवन्ति तु ते अहोरात्ररूपसावनदिवसात्मकसमुदायघटकाः, तथैव व्यवहारात्। तथाहि यावता क्षणसमुदायेन रवेरेकमुदयाचलसंयोगमारभ्यापर उदयाचलसंयोगो भवति तावान् समुदायः सावनदिनत्वेन व्यवह्रियते। एवं रवेरुदयाचलसंयोगमारभ्यास्ताचलसंयोगः अस्ताचलसंयोगमारभ्य वोदयाचलसंयोगः यावता क्षणसमुदायेन भवति स समुदायः तदवान्तरसमुदायभूतः क्रमेणाहस्त्वेन रात्रित्वेन च। एवं संध्याप्रातःसंगवादयोऽपि अहोरात्रसमुदायित्वेनैव नतु तिथिसमुदायित्वेन मध्याह्नापराह्णादयश्च सावनदिनस्यैव भागाः, तत्रत्याहःशब्दस्य तद्वचनत्वात्। मुहूर्त्ता अपि तथा,

अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा।

इत्यादेरन्यत्रानुपपत्तेः। तस्माद्रात्रिसन्ध्यादिभिन्नेऽमावास्यादिभागे इति नार्थः किन्तु रात्रिसन्ध्यादिभिन्ने दिनभागे इत्येव। नच सावनदिनविधेरदर्शनात्क पर्युदास इति वाच्यम्, अमावास्यादिकालविधीनामेव सावनविधित्वात्। यथा हि केवलस्य वसन्तादेर्निमित्तत्वश्रवणमजीवतोऽनुष्ठानासंभवाद्वसन्तावच्छिन्नजीवन-

परं, तथा केवलस्यामावास्यादेरङ्गत्वश्रवणमहोरात्रं विहाय कर्मकरणाशक्तेस्तद्वदहोरात्रपरम्, अमावास्यावत्यहोरात्रे श्राद्धं कुर्यादिति। अत एव सङ्कल्पवाक्ये सर्वकर्मसु अद्येति सावनदिनस्याधिकरणत्वेनोल्लेखः।

अद्य सोमार्कग्रहणसंक्रांत्यादौ सुतीर्थके।

इत्यादिदानसङ्कल्पवाक्ये "अद्य कृष्णाष्टमीं प्राप्य" इत्यादिजन्माष्टमीव्रतसङ्कल्पवाक्ये च। अथवा यथा "दीक्षितो न ददाति" इति निषेधस्य यावज्जीवं दानहोमादीनि कुर्यात्तद्दीक्षितो नेत्यर्थः। तथा यदमावास्यादिमदहोरात्रे श्राद्धं कुर्यात्तद्रात्र्यादौ नेत्यर्थादेते निषेधा एव। एवमेव—

रात्रौ स्नानं न कुर्वीत तथा दानं च रात्रिषु।
पञ्चयज्ञविधाने च न कुर्यान्मृत्युजन्मनोः॥

इत्यादयो निषेधा व्याख्येयाः। एते च पर्युदासा निषेधा वा प्राप्तिमपेक्षन्ते। प्राप्तिश्च सत्यपि अमावास्यादिसामान्यविधौ न श्राद्धे रात्र्यादेः किन्तु आमश्राद्धादिभेदेन पूर्वाह्णादेरेव।

आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्॥
पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम्।
एकोद्दिष्टं तु मध्यान्हे प्रातर्वृद्धिनिमित्तकम्॥

इत्यादिवचनादिति चेत्? प्रातःसंध्यातत्समीपनिषेधस्तावत् प्रातर्वृद्धिनिमित्तकमित्येतत्प्राप्तपुत्रजन्मातिरिक्तविवाहादिनिमित्तकवृद्धिश्राद्धे। प्रातःसन्ध्यासमीपं च प्रथमो मुहूर्त्तः। स एवाचिरोदितपदेनोच्यते, "सूर्योदयमुहूर्त्ते च" इति शातातपोक्तेः। सायंसन्ध्यातत्समीपसायाह्नादिनिषेधश्च पार्वणे, तस्यापराह्णकालत्वात्। अपराह्णस्य द्वेधा त्रेधा वा विभागे रात्रिपर्यन्तत्वात्,

यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते॥ इति।

पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥

"वासरस्य तृतीयेंऽशे" इति वचनाभ्यामपराह्णत्वाविशेषाच्च तादृशस्यापि तस्य पार्वणाङ्गत्वप्रतीतेः। चतुर्थप्रहरसायाह्नदिनाष्टमभागान्त्यमुहूर्त्तानां च तारतम्येन वर्ज्यत्वम्। अथवा चतुर्थप्रहरनिषेधोऽल्पान्तरत्वात्सायाह्नपरः। नन्वेवं प्रातःसायमादिनिषेधविषये लब्धेऽपि रात्रिनिषेधः क्वेतिचेत्? अत्र केचित्–ग्रहणपुत्रजन्मादिनिमित्तके श्राद्धे सः। तथाच रात्रौ तच्छ्राद्धस्य विकल्पः;

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च ॥

इति वाक्ये आदिपदेन श्राद्धोपादानेन रात्रौ प्राप्तत्वात्प्राप्तिसापेक्षस्य निषेधस्य परिशेषात्तद्विषयत्वेन समानविषयत्वात्। विवाहे च दानस्यैवान्वयो न श्राद्धस्य "प्रातर्वृद्धिनिमित्तकम्" इति तन्निमित्तकश्राद्धस्य प्रातःकरणात्तत्र रात्रिविधानानुपपत्तेः। यदा रात्रौ विवाहे प्रातर्वृद्धिश्राद्धं न कृतं तदा रात्रौ कार्यमिति तु शूलपाणिरित्याहुः। तदसत्, एवमपि दर्शश्राद्धं प्रकृत्य "रात्रौ श्राद्धं न कुर्वीत" इति मानवनिषेधस्य कृष्णपक्षश्राद्धं प्रकृत्य "न नक्तं श्राद्धं कुर्वीत" इति निषेधस्य चागतेः, ग्रहणादिश्राद्धविषयत्वासंभवात्। वस्तुतस्तु तीर्थश्राद्धविषयोऽयं रात्रिनिषेधः। ननु महाभारते—

भुक्तो वाप्यथवाऽभुक्तो रात्रावहनि खेचर।
न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वराम् ॥

देवीपुराणे—

काले वाऽप्यथवाऽकाले तीर्थे श्राद्धं सदा नरैः।
प्राप्तैरेव च कर्त्तव्यं पितृणां चैव तर्पणम् ॥
पिण्डदानं च तच्छस्तं पितृणां चैव वल्लभम्।
विलम्बो न च कर्त्तव्यो न च विघ्नं समाचरेत् ॥

**काशीखण्डे-**

अकालेऽप्यथवा काले तीर्थे श्राद्धं च तर्पणम् ।
अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत् ॥

इति च रात्रावपि तीर्थश्राद्धविधानान्न रात्रिनिषेधस्तद्विषय इति चेत्? न, सर्वेषामेतेषां वाशब्दापिशब्दश्रवणाद् 'गुरुं वा बालवृद्धं वा' इत्यादिवत् स्वार्थतात्पर्यरहितानां—

रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम् ।

इतिवचनप्राप्तप्रातःसायाह्नादिप्रतिप्रसवार्थत्वात् । तथाचायमर्थः- प्रातःकाले तीर्थे प्राप्तैर्न कुतपापराह्णरूपः प्रारम्भप्रधानकालः प्रतीक्ष्यः सायाह्ने प्राप्तैश्च मुख्यकालापगमान्न श्राद्धं हेयं, किन्तु येन केनचित्प्रकारेण रात्रेः प्राक्कार्यम् । अत एव केचन शिष्टा रात्रिभोजनोत्तरकालादौ तीर्थं प्राप्ता अपि तच्छ्राद्धं न कुर्वन्ति । एवं मुख्यकालं या(१)वदस्यापि द्रव्यपात्रसम्पत्तावपि बोध्यम् । तत्रापि—

तीर्थद्रव्योपपत्तौ च न कालमवधारयेत् ।

इति मुख्यकालप्रतीक्षानिषेधमुखेन प्रातःसायान्हादेरेव प्रतिप्रसवात् । एवमेव प्रारब्धे श्राद्धे दैवमानुषप्रतिबन्धादसमाप्ते यदि रविरस्तमियात्तदा प्रारब्धत्वाद्रात्रावपि तत्समाप्तौ प्राप्तायां "नच नक्तं श्राद्धं कुर्वीत" इति निषेधः सङ्गच्छते । तत्र सामिकृतमेव स्थापयित्वा परेद्युः शेषं समाप्यं, तदुत्तरमेव च यजमानभोजनं, नतु पूर्वदिने इति, "प्रारब्धे चाभोजनमापरिसमापनात्" इत्युत्तरगौतमसूत्रात् । वस्तुतस्तु अपराह्णविधिर्न तन्नियमार्थः "मासि मास्यपरपक्षस्यापराह्णः श्रेयान्" इत्यापस्तम्बादेः;

दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।
अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते ॥

इति शातातपादेश्च प्राशस्त्यार्थत्वात् । एवञ्च "अपराह्णे

[१] 'यावदस्थायिद्रव्य' ङ ।

पितृक्रिया" इत्यादीनां प्राशस्त्यास्पृष्टवचसामपि प्राशस्त्यपरत्वमेव, पूर्ववाक्यैकवाक्यत्वात् । याच--

उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।

इत्यादिः सायाह्नस्य पित्र्यकालत्वोक्तिः साऽपराह्णे श्राद्धासम्भवे सायाह्ने कर्तव्यत्वार्था नतु सङ्गवादाविति । एवमेकोद्दिष्टादौ मध्याह्नादिविधयोऽपि प्राशस्त्यपरा एव;

अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥
मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः ।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥

इति मात्स्यादिवचनात् । तस्मात्कुतपापराह्णादीनां प्राशस्त्यमात्रपरत्वेन श्राद्धार्थत्वेनानियमितत्वात्सर्वश्राद्धे सर्ववेलानां प्रसक्तौ युक्त एव रात्रिसन्ध्यादेर्निषेधः । तथा--

प्रातःकाले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः ।
नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः ॥

इत्यादिप्रातःकालविहितवृद्धिश्राद्धेतरस्मिन्ननैमित्तिकसर्वश्राद्धे प्रातःकालस्य निषेधः । तथाच रात्रिसन्ध्याद्वयतदन्तिकप्रातःसायाह्नेतरतन्मध्यवर्त्तिमुहूर्त्तनवकमनैमित्तिकश्राद्धकालः । तत्र कुतपादिमुहूर्त्तपञ्चकं पार्वणेऽतिप्रशस्तम् "ऊर्ध्वं मुहूर्त्तात्" इत्याद्युक्तेः । एकोद्दिष्टे च मध्याह्ने प्रथमं गान्धर्वं हित्वा परौ मुहूर्त्तौ, "आरभ्य कुतपे श्राद्धम्" इत्याद्युक्तेः । संगवस्तु तत्र न विहितो न निषिद्ध इति बोध्यम् । तदेवं निषेधमुखेन श्राद्धवेला दर्शिता सा रात्रिसंध्यादिभिन्नोऽहर्भागः । विधिमुखेन तावत् सा च "पूर्वाह्णे दैविकं श्राद्धम्" इत्यादिना बोध्या । तत्र पूर्वाह्णः संगवः, प्रातःकालनिषेधात् । अतएव च "आमश्राद्धं तु पूर्वाह्णे" इत्यत्रापि स एव;

कालात् प्रातस्तनादूर्ध्वं त्रिमुहूर्त्ता तु या तिथिः ।
आमश्राद्धं तदा कुर्याद्द्विमुहूर्त्ताऽपि वा भवेत् ॥

इति व्याघ्रपादोक्तेश्च । द्विजकर्तृकामश्राद्धे एवायं कालः, शूद्रकर्तृके त्वपराह्ण इत्यादि ग्रन्थ एव स्पष्टम् । प्रातर्वृद्धिनिमित्तकमिति च पुत्रजन्मातिरिक्तवृद्धिपरम् । पुत्रजन्मरूपवृद्धिनिमित्तकं तु तदनन्तरमेव कार्यम्, नैमित्तिकानां निमित्तानन्तर्यस्यैव प्राप्तेः ।

पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तिकम् ।

इत्याद्युक्तेः । सन्ध्यारात्र्यादिनिषेधोऽपीह ग्रहणादौ च न प्रवर्त्तते । एवं पूर्वप्रवृत्ताशौचे सत्यपि भर्तृमरणे तत्पत्नीनामनुमरणमपि भवति । "भर्त्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वा" इति सतिसप्तम्या नैमित्तिकत्वावगमात्, भर्तृसंस्कारप्रयुक्तवह्निचित्युपजीवित्वेन निरवकाशत्वाच्च । रजस्वलायास्तु तन्न भवति । अशुचित्वादेव सर्वनित्यकाम्यकर्मनिषेधसिद्धेः नच किञ्चित्तदाचरेत्" इति पुनर्निषेधेन किञ्चिच्छब्दवशेन नैमित्तिकानामपि कर्मणां क्रोडीकारात् । सूतिकायाश्चोदक्यासमानधर्मत्वं बोध्यं, रजस्वलात्वात् । एवमादि सकलं विवेचनग्रन्थादवगन्तव्यम् । आमश्राद्धमिति च हेमश्राद्धस्याप्युपलक्षणं, तस्यापि पूर्वाह्ण एव कर्त्तव्यत्वात् । एवञ्चात्रापि तृप्तिप्रश्न इत्यादयः पञ्च निवर्त्तन्ते । तीर्थनिमित्तकाऽऽमहेमश्राद्धयोस्त्वर्घ्यादयोऽपि, तीर्थनिमित्तकपाकश्राद्धवत्,

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥

इत्यग्रिमवचनात् । एवञ्च धर्मप्रदीपे–विकिरावाहनादिनिषेधः तीर्थनिमित्तकामहेमाभिप्रायः । प्रवासादिनिमित्तके तत्र तस्य कर्त्तव्यत्वात् । विकिरोऽप्यामेनेति हेमाद्र्युक्तेस्तत्परत्वात् । आमातिरिक्तमोदनादिकं पिण्डदाने एव "पिण्डान् दद्यात्" इति पिण्डदानमात्रवचनात् । विकिरादौ त्वाममेव,

इति हारीतोक्तेः। एतद् *द्विजविषयम्। *शूद्रकर्तृकं त्वपराह्ण एव,

मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः।
आमश्राद्धं तु तत्रैव पितॄणां दत्तमक्षयम्॥

इति सुमन्तूक्तेरित्यपरार्के हेमाद्रौ चोक्तम्।

तदभावे हेमश्राद्धमाह हेमाद्रौ मरीचिः--

*आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान्।
*धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा॥

धर्मः--

आमं तु द्विगुणं प्रोक्तं हेम तद्वच्चतुर्गुणम्।

स्मृत्यर्थसारे-'हिरण्यमष्टगुणं चतुर्गुणं समं वा दद्यात।' हेमाद्रौ भविष्ये-

*अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।

---

आमश्राद्धमदः पिण्डास्तथाऽग्नौकरणं च यत्।
तद्दद्यात्तत्र तेनैव यत्किञ्चिच्छ्राद्धिकं भवेत्॥

इति प्रचेतसा यत्किञ्चित्पदेन विकिरादेरभिधानात्। *द्विजेति। पाकासम्भवे हि आमश्राद्धं द्विजानां, तत्र पश्चात्पाकेन भोजनसत्त्वात्। *शूद्रेति। तस्य नित्यप्राप्ततया पूर्वाह्णवैयर्थ्यमिति भावः। एतच्च मतं दूषयित्वा शूद्रस्यापि पूर्वाह्ण एवामश्राद्धं निर्धारितं विवेचने। *आमान्नस्यापीति। पुत्रजन्मातिरिक्तेषु पक्वान्नाभावे आमं तदभावे हेम इति आमहेम्नोरष्टदोषग्रस्तो विकल्पः। *धान्यात् एकैकब्राह्मणतृप्तिपर्याप्तान्नसिद्धिसमर्थादामात्। आमं हि अन्ततो द्विगुणं चतुर्गुणमष्टगुणमिति मुख्यः कल्पः। धर्मवाक्यं तदनुकल्पः। अत्यन्ताशक्तौ सममिति विवेकः। चतुर्गुणत्वादिकं तावद्धान्यलाभपर्याप्तत्वम्। वस्तुतस्तु धर्मवचनेन हेम्न आमद्वैगुण्यस्यैव प्राप्तेरामत्रैगुण्यादौ हेम्नस्तद्द्वैगुण्यं द्रष्टव्यम्। *अन्नाभावे इति। पुत्रजन्मानुरोधेनैव हेमपदोपादानम्। आम-

हेमश्राद्धं सग्रहे च तथा स्त्रीशूद्रयोरपि ॥

षट्त्रिंशन्मते तुर्यपादे—*'वर्जयित्वा *क्षयेऽहनि' इति पाठः ।*'यस्य भार्या रजस्वला' इति व्यासपाठः । पुत्रोत्पत्तौ तु*हेमनियममाह संवर्तः—

पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्वेन न चामेन कल्याणान्यभिकामयन् ॥

भविष्ये—

*गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ।
पिण्डदानं प्रकुर्वीत हेमश्राद्धे कृते सति ॥
*शूद्रस्तु गृहपाकेन त(१)त्पिण्डान्निर्वपेत्तथा ।

---

पदानुपादानं च । अन्यत्र त्वामासम्भव एव हेमश्राद्धमित्युक्तम् । तथा च सग्रहपदात्तत्कालापतिते वेधकाले ग्रहणकाले वा ग्रहणश्राद्धातिरिक्तम् दर्शादिश्राद्धमामादिनैव कार्यमित्यर्थः । एतेन—

संक्रमेऽन्नद्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं सग्रहे च द्विजः शूद्रः सदा चरेत् ॥

इति वचनान्तरमपि आमासम्भव एवेति न हेमश्राद्धस्य पुत्रजन्मातिरिक्ते मुख्यत्वभ्रमः कार्यः । *वर्जयित्वेति । सग्रहे इत्यनुवृत्तेः सग्रहे । *क्षयेऽहनीति । अनेन वेधादिकाले क्षयाहश्राद्धं हेम्ना न कार्यं किन्त्वामेनैवेत्यर्थः । *यस्येति । भार्यायां रजस्वलायामाब्दिकं दार्शं वा श्राद्धं हेम्नैवेत्यर्थः । एतच्च—

क्षयाहं तु परित्यज्य रौरवं नरकं व्रजेत् ।

इति मतेन । पञ्चमदिने तद्वादिनस्तु एतन्न पठन्ति । *हेमनियमं हेमश्राद्धस्य मुख्यत्वं, नचामेनेति तु हेमसम्भवाभिप्रायम् । हेमश्राद्धे पिण्डदानं नास्तीति भ्रमं वारयति—*गृहपाकादिति । *शूद्रस्त्विति । "स्त्रीशूद्राश्च सधर्माणः" इति वचनात् । स्त्रीशू-

---

(१) 'न पिण्डा' ग० ।

*सक्तु मूलं फलं तस्य पायसं वा भवेत्स्मृतम् ॥

हेमश्राद्धे पिण्डदानं नेति दिवोदासः । स्मृत्यर्थसारे तु विकल्प उक्तस्तदाशयं न विद्मः । षट्त्रिंशन्मते—

*नामन्त्रणाग्नौकरणे विकिरो नैव दीयते ।

*तृप्तिप्रश्नोऽपि नैवात्र कर्तव्यः केनचिद्भवेत् ॥

अत्र मरीचिना आमाभावे हेमविधानेन स्थानापत्त्या धर्मप्राप्तेः पूर्ववन्मन्त्रोहः पूर्वाह्णकालता च ज्ञेयेति दिक् । पूर्वोक्तधर्मप्रदीपोक्तेश्च ।

व्यासः—

हिरण्यमामं श्राद्धीयं लब्धं यत्*क्षत्रियादितः ।

यथेष्टं विनियोज्यं स्याद् भुञ्जीयाद्ब्राह्मणात्स्वयम् ॥

विप्रलब्धं भुञ्जीयात् । क्षत्रियादिलब्धे तु यथेष्टविनियोगः । *तेनापि श्राद्धवैश्वदेवादि न कार्यम् । देवोद्देशेन त्यक्तस्य देवतान्तराय त्यागायोगादिति देवयाज्ञिकः । शूद्रलब्धे तूक्तं तत्रैव षट्त्रिंशन्मते—

*आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्यते ।

तत्सर्वं भोजनायालं नित्यनैमित्तिके न च ॥ इति ।

---

द्रकर्तृकमामादिसाधनकं सर्वं श्राद्धमोदनपायसादिसाधनकपिण्डकमित्यर्थः । आमाभावे हेमविधानेनामस्यापि लाभात् । *सक्त्विति । पिण्डनिर्वपणार्थमिति शेषः । *नामन्त्रणेति । तीर्थनिमित्तके हेमश्राद्धे । अन्यनिमित्तके तु तत्र हेमाद्रिमते आमेन विकिरः कार्यः । *तृप्तिप्रश्न इति । भोजनसम्बन्धियावन्निवृत्तेरुपलक्षकम् । *क्षत्रियादित इति । आदिना वैश्यग्रहः । मूर्धावसिक्तग्रह इति केचित् । सामान्यतो यथेष्टविनियोज्यत्वोक्तावपि विशेषमाह—*तेनापीति । *आममिति । शूद्राल्लब्धस्यामस्य स्वीये परकीये वा भोजन एव विनियोगः न तु यथेष्टं, नापि वि-

शुद्धितत्त्वेऽङ्गिराः—

शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम् ॥
शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं तु सदा शुचि ॥

पराशरः—

तावद्भवति शूद्रान्नं यावन्न *स्पृशति द्विजः ।
द्विजातिकरसंस्पृष्टं सर्वं तन्न विरुध्यते ॥

विष्णुपुराणे—

संप्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम् ।

अङ्गिराः—

*पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतम् ।

सपिण्डश्राद्धाशक्तावाह हेमाद्रौ संवर्तः—

समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम् ।
अपि संकल्पविधिना काले तस्य विधीयते ॥
पात्रे भोज्यस्य चान्नस्य त्यागः *संकल्प उच्यते ॥

---

मलब्धवत्स्वभोजने एवेत्यर्थः । हिरण्यं तु शूद्रलब्धं नित्यादावपि विनियोज्यम्—

हिरण्यं तत्पुनः श्राद्धे गृहीतं नैव दुष्यति ।
तेन नित्यक्रियाः कार्या हिरण्यं नान्नमुच्यते ॥

इति षट्त्रिंशन्मतात् । तथा च शूद्रलब्धं हिरण्यं भोजने नित्यक्रियादौ लौकिकेऽलौकिके वा दक्षिणादौ नित्यनैमित्तिके वा विनियोज्यमिति फलितम् । *स्पृशति प्रतिगृह्णाति । *पात्रान्तरेति । तत्पाकश्च शूद्रगृहे न कार्यः,

शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम् ।
पक्वं विप्रगृहे भुक्तं भोज्यं तं मनुरब्रवीत् ॥

इतिपराशरमाधवीयस्मरणात् । गोरसं क्षीरादि, स्नेहं तैलादि । *संकल्प उच्यते इति ।

व्यासः—

*सांकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नावाहनाग्नौकरणे पिण्डांश्चैव न *दापयेत् ॥

*पात्रमर्घ्यस्य । समन्त्रकावाहनस्य निषेधः । *तूष्णीं तु भवत्येवेति हेमाद्रिः । स्मृ(१)त्यर्थसारे—'विकिरं तु न दातव्यम्' इति तृतीयपादे पाठः । स्मृत्यन्तरे—

त्यजेदावाहनं चार्घ्यमग्नौकरणमेव च ।
पिण्डांश्च विकिराक्षय्ये श्राद्धे सांकल्पसंज्ञके ॥

हेमाद्रौ वृद्धशातातपस्तु—

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ॥

---

तावन्मात्रेण संबद्धं सांकल्पं श्राद्धमुच्यते ।

इति वाक्यशेषात्साङ्गोपाङ्गासमर्थस्य संकल्प्यान्नदानमात्रं सांकल्पश्राद्धमित्यर्थः । संकल्पश्राद्धे यदङ्गं वा प्रधानं वा न कर्त्तव्यं तदाह—*सांकल्पं त्विति । *दापयेदिति । णिच् न विवक्षितः । *पात्रमिति । अर्घ्यो न देय इति भावः । *तूष्णीं त्विति । अमन्त्रकावाहनाकरणे देवताया असंनिधानप्रसङ्गेन श्राद्धानिष्पत्तिप्रसङ्गात् । नवीनास्तु पितृविग्रहः(?) स्वीकार्यः । अन्यथा धर्माधर्मफलभोगानुपपत्तेः । एवं तत्तृप्तिरपि श्राद्धफलत्वेन स्वीकार्या देवताधिकरणे देवतातृप्तेर्निराकरणेऽपि रात्रिसत्रन्यायेन पितृतृप्तित्वेन तस्या दुर्वारत्वात् । नत्वागमनरूपं तत्सांनिध्यं मानाभावात् । यत्तु—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥

इति प्रसादफलदातृत्वं तदपि नोपेयते आर्थवादिकत्वात् । तस्मात्सांनिध्यफलदातृत्वयोरनुपगमादमन्त्रकावाहनं वृथैवेत्याहुः ।

(१) 'स्मृत्यन्तरे' क० छ०

स्वधावाचनलोपोऽत्र *विकिरस्तु न लुप्यते ॥

इत्याह । पृथ्वीचन्द्रोदये वसिष्ठः—

आवाहनं स्वधाशब्दं पिण्डाग्नौकरणं तथा ॥
विकिरं *(१)चार्घ्यदानं च सांकल्पे षड् विवर्जयेत् ॥

विकिरे विकल्पः । स्मृत्यन्तरे—

अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
स तदा वाचयेद्विप्रान् संकल्पात्सिद्धिरस्त्विति ॥

छागलेयः—

*पिण्डो यत्र निवर्तेत मघादिषु कथंचन ।
सांकल्पं तु तदा कार्यं नियमाद्ब्रह्मवादिभिः ॥

काष्र्णाजिनिः—

*मौञ्जीबन्धाद्वत्सरार्धं वत्सरं पाणिपीडनात् ।
पिण्डान् सपिण्डा नो दद्युः प्रेतपिण्डं विनात्र तु ॥

---

*विकिरस्तु न लुप्यत इति । अत्र 'विकिरस्तु विलुप्यते' इति पाठेन विकिरविकल्पं दूषयित्वा —

अक्षय्यदक्षिणास्वस्तिसौमनस्यं यथा(व)स्थितम् ।

इति पाठेन अक्षय्यविवर्जनस्मृतेर्विगानमिच्छन्ति नव्याः । *अर्घ्यदानमिति । पिण्डदानं चेति पाठे पिण्ड उच्छिष्टपिण्डः । पिण्डदानस्य पृथगुपादानात् । पितृयज्ञः श्राद्धम् । अशक्ताधिकारिके संकल्पश्राद्धे अस्य श्राद्धस्य संकल्पात्सिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति यजमानेनोक्ते संकल्पात्सकलासिद्धिरस्त्विति ब्राह्मणा ब्रूयुरित्यर्थः । अग्नौकरणादिसंपादनसमर्थस्यापि कदाचित्सांकल्पिकश्राद्धं दर्शयति—*पिण्ड इति । *मौञ्जीबन्धादिति । उपलक्षणम्;

यावन्मासः समाप्येत तावत्पिण्डांश्च वर्जयेत् ।
वृद्धावनन्तरं प्राज्ञस्तथैव तिलतर्पणम् ॥

---

(१) 'पिण्डदानं' क० ग०

अस्यापवादः पित्रोराब्दिकादौ पूर्वमुक्तः । *त्यक्ताग्ने-रपि सांकल्पमुक्तं षट्त्रिंशन्मते—

अनग्निको यदा विप्र उत्सन्नाग्निस्तथैव च ।
तथा *वृद्धिषु सर्वासु संकल्पश्राद्धमाचरेत् ॥

अशक्तौ पृथ्वीचन्द्रोदये बृहन्नारदीये—

द्रव्याभावे द्विजाभावे अन्नमात्रं तु *पाचयेत् ।
पैतृकेन तु सूक्तेन होमं कुर्याद्विचक्षणः ॥

देवलः—

*पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धीयाहनि संप्राप्ते भवेन्निरशनोऽपि वा ॥

---

इति स्मरणात् । *त्यक्ताग्नेरिति ।

त्यक्ताग्नेः पार्वणं नैव नैकोद्दिष्टं सपिण्डनम् ।
अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात्संकल्प्य भोजयेत् ।

इति यमेन संकल्पश्राद्धे त्यक्ताग्निरूपकर्तृविशेषनियमनात् । *वृद्धिष्विति । साग्निकस्यापि संकल्पविधिना वृद्धिश्राद्धं पुनर्विधानात् । द्रव्याभावे ब्राह्मणभोजनपर्याप्तपक्वान्नामान्यतरा(?)भावे । द्विजाभावे श्राद्धयोग्यद्विजाभावे । एष एव 'अभावे द्रव्यविप्रयोः' इत्यस्यार्थः । *पाचयेदिति । णिच् भार्याभिप्रायेण । पैतृकं सूक्तम् "उदीरतामवर उत्परास" इत्यष्टर्चम् । होमं चतुःकृत्वः कुर्यात् । एतच्च महैकोद्दिष्ट एव "होतव्यमनलेऽथवा" इति गौभिलीयैकवाक्यत्वात् । अन्यत्र त्वाह—*पिण्डमात्रमिति । आमहेमश्राद्धाशक्तौ—

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा ।
कर्त्तव्यमृषिभिः प्रोक्तं पिण्याकेनेङ्गुदेन वा ॥

गुडेन वेति वा पाठः । इदं च देवीपुराणे पिण्डसाधनद्रव्या-

वृद्धवसिष्ठः—

किञ्चिद्दद्यादशक्तस्तु *उदकुम्भादिकं द्विजे ।
*तृणानि वा गवे दद्यात् पिण्डान्वाप्यथ निर्वपेत् ॥
*तिलदर्भैः पितॄन्वापि तर्पयेत्स्नानपूर्वकम् ॥

हेमाद्रौ भविष्ये—

अग्निना वा दहेत् *कक्षं श्राद्धकाले समागते ।
तस्मिन्वोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् ॥

श्राद्धसंहिता समन्त्रश्राद्धसंकल्पः । विष्णुवराहपुराणयोः—

असमर्थोऽन्नदानस्य (१)धान्यमामं स्वशक्तितः ।

शक्तपरम् । *उदकुम्भादिकमिति । आदिना—

अपि मूलैः फलैर्वापि तथाप्युदकतर्पणैः ।
अविद्यमाने कुर्वीत नतु प्राप्तं विलङ्घयेत् ।

इति हारीतोक्तं फलादिदानम्;

निवासमेव वा दद्यात् पिण्डं वाप्यथ निर्वपेत् ॥

इति भविष्योक्तं निवासदानं च ग्राह्यम् । *तृणानीति गोभोजनपर्याप्तानि तृणानि दद्यात्;

यतः कुतश्चित्संप्राप्य गोभ्यो वापि गवाह्निकम् ।

इति पितृवचनात् । नापि स्वयं छेत्तव्यानि "यतः कुतश्चित्" इत्युक्तेः । *तिलदर्भैरिति । तिलसंख्यापि—

तिलैः सप्ताष्टभिर्वापि समवेतं जलाञ्जलिम् ।
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति ॥

इति पितृवचनात् । तदसंभवे तिलान्वापीति तिलदानम्,

तत्राप्यसामर्थ्ययुक्तः कराग्रावस्थितांस्तिलान् ।
प्रणिपत्य द्विजाग्र्याय कस्मैचिदुपदास्यति ॥

इति वचनात् । *कक्षं गिरिदरीति श्राद्धसारः । अत्र पि-

(१) 'धान्यमाशं' छ० 'धान्यं मांसं' ग०

प्रदास्यति तिलान्वापि स्वल्पां वापि च दक्षिणाम् ॥
सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः ।
*पूर्वादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं न चान्नं
श्राद्धोपयोगि स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरौ मयैतौ
भुजौ कृतौ वर्त्मनि मारुतस्य ॥
इत्येतत् पितृभिर्गीतं भावाभावप्रयोजनम् ।
यः करोति कृतं तेन श्राद्धं भवति भारत ॥

प्रभासखण्डे—

गत्वारण्यममानुष्यमूर्ध्वबाहुर्विरौत्यदः ।
निरन्नो निर्धनो देवाः पितरो माऽनृणं कृथाः ॥
न मेऽस्ति वित्तं न धनं न भार्या
श्राद्धं कथं वः पितरः करोमि ।
वनं प्रविश्येह तु तन्मयोच्चै-
र्भुजौ कृतौ वर्त्मनि मारुतस्य ॥
श्राद्धर्णमेतद्भवतां प्रदत्तं
मह्यं दयध्वं पितृदेवताद्याः ।
आख्याय चोत्क्षिप्य भुजौ ततो वै
दिवा च रात्रिं समुपोष्य तिष्ठेत् ॥
भवेत्स वै तेन कृतेन तेषा—
मृणेन मुक्तः पितृदेवतानाम् ॥

इत्यनुकल्पः ॥

अथ श्राद्धभोजने प्रायश्चित्तम् । *दर्शे षट् प्राणा-

---

न्ये प्राचीनावीतित्वादयो धर्मा द्रष्टव्याः । *पूर्वादीति । सूर्यादीति पाठान्तरेपि अयमेवार्थः । *दर्शे इत्यादि ।

यामाः । वृद्धौ त्रयः । *संस्कारेषु जातकर्मादिचूडान्तेषु सांतपनम् *आद्ये चान्द्रं वा । अन्यसंस्कारेषूपवासः । *सीमन्ते चान्द्रमिति विज्ञानेश्वरः । *आपदि नवश्राद्धैकादशाहेषु भोजनं कार्यः । द्वादशाहे ऊनमासे च पादोनः । द्विमासे त्रिपक्षे ऊनषष्ठोऽनाब्दयोश्चार्धकृ-

---

भरद्वाजः—

भुङ्क्ते चेत्पार्वणश्राद्धे प्राणायामान्षडाचरेत् ।
उपवासस्त्रिमासादिवत्सरान्तं प्रकीर्तितः ॥
प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने ।
असरूपे स्मृतं नक्तं व्रतपारणके तथा ॥
द्विगुणं क्षत्रियस्यैतत्त्रिगुणं वैश्यभोजने ।
साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने ॥ इति ।

तत्र त्रिमासादीत्यापद्विषयमिति मयूखः । *संस्कारेष्विति ।

भरद्वाजः—

निवृत्तचूडहोमे तु प्राङ् नामकरणात्तथा ।
चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥
अतोऽन्येषु तु भुक्त्वाऽन्नं संस्कारेषु द्विजोत्तमः ।
नियोगादुपवासेन शुद्ध्यते निन्द्यभोजने ॥ इति ।

( सं(१)स्काराङ्गश्राद्धभोजने इत्यर्थो मिताक्षरासंमतः । व्यासः । ) *आद्ये इति । बौधायनः—

ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥ इति ।

सान्तपनं त्वशक्तपरमिति भावः । ब्रह्मौदने आधानाङ्गभूते सोमसाहचर्यात् । *सीमन्ते इति । सान्तपनवाक्यस्य "ब्रह्मौदने च सोमे च" इति बौधायनवाक्येन बाधात् । *आपदीति ।

---

(१) कंसान्तर्गतं नास्ति छ०.

च्छ्रः । त्रिमासाद्याब्दिकान्तेषु सपिण्डने च पाद-
कृच्छ्र उपवासो वा । गुरुद्रव्यार्थभोजनेऽर्धम् । जप-
शीले तदर्धम् । अनापदि तूनमासान्तेषु चान्द्रं कार्यं
वा । द्विमासादौ पादोनम् । त्रिमासादावर्धकार्यः । आ-
ब्दिके पादोनकार्यः । पुनराब्दिके एकाहः । *क्षत्रिया-
दिश्राद्धेषु द्वित्रिचतुर्गुणानि ज्ञेयानि । *चण्डालसर्प-
श्वादिहतपतितक्लीबादिनवश्राद्धे चान्द्रम् । आद्यमासि-
कान्ते चान्द्रं पराकश्च । द्वादशाहादौ पराकः । द्विमा-

---

विष्णुः—

प्राजापत्यनवश्राद्धे पादोनं चाद्यमासिके ।
त्रैपक्षिक तदर्धं तु पञ्चगव्यं द्विमासिके ॥ इति ।

इदं चापद्विषयम् । अनापदि तु—

चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके ।

मिश्रके मासिके ।

एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते ।

इति हारीतोक्तं द्रष्टव्यम् । मिश्रकमेकादशाहम् । नवश्रा-
द्धमित्येतदाद्यनवश्राद्धपरम् । प्राजापत्यं तु मिश्रके इत्येतदाद्यमा-
सिकपरम् । द्वितीयनवश्राद्धादिषु चतुर्विंशतिमते—

प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके ।
त्रैपक्षिके तदर्धं स्यात्पादौ द्वौ मासिके ततः ॥
पादोनं कृच्छ्रमुद्दिष्टं षण्मासे च तथाब्दिके ।
त्रिरात्रं चान्यमासेषु प्रत्यब्दं चेदहः स्मृतम् ॥ इति ।

*क्षत्रियादीति । [illegible] । यत्तु मिताक्षरायां परा-
शरमाधवीये च—

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
त्रैपक्षिके सान्तपनं कृच्छ्रं मासद्वये स्मृतम् ।

मासादावतिकृच्छ्रः। त्रिमासादौ कायः। आब्दिके पादः। अभ्यासे सर्वं द्विगुणम्। आमहेमसंकल्पश्राद्धेषु तत्तदर्धानि। यतिर्ब्रह्मचारी चोक्तं प्रायश्चित्तं कृत्वा त्रीनुपवासान् प्राणायामान्घृताशनं चाधिकं कृत्वा व्रतशेषं

---

क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम्।
वैश्यस्यार्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः॥
शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम्।
सार्धचान्द्रायणं मासे त्रिपक्षे त्वैन्दवं स्मृतम्॥
मासद्वये पराकः स्यादूर्ध्वं सान्तपनं स्मृतम्॥ इति,

तत्प्रकारान्तरं बोध्यम्। *चण्डालेति।

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः।
पक्षत्रयेऽतिकृच्छ्रं स्यात्षण्मासे कृच्छ्रमेव तु॥
आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके।
अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथा॥

इति शङ्खवचनं तस्य चण्डालादिहतविषयत्वेन स्तेनपतितक्लीबाद्यपाङ्क्तेयविषयत्वेन च माधवविज्ञानेश्वरादिभिर्व्याख्यानात्। अत्र मासिकमाद्यं, द्वितीयादिषु प्रायश्चित्ततारतम्यं कल्प्यम्। षण्मासे इत्यत्रोनषाण्मासम्। आब्दिके इत्यत्रोनाब्दिकं च बोध्यम्। न दोष इति पूर्ववदिति शेषः।

चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥
पतनानाशकैश्चैव विषोद्बन्धादिभिस्तथा।
भुक्त्वैषां षोडशश्राद्धे कुर्यादिन्दुव्रतं द्विजः॥ इति।

तथा—

अपाङ्क्त्यान्नमुद्दिश्य श्राद्धमेकादशेऽहनि।
ब्राह्मणस्तत्र भुक्त्वाऽन्नं शिशुचान्द्रायणं चरेत्॥

समापयेत् । अनापदि द्विगुणम् । *दर्शादौ दशगायत्रीमन्त्रिता आपः पिबेत् षट्प्राणायामा वा । संस्कारेषु चौले कृच्छ्रः । सीमन्ते चान्द्रम् । अन्येषूपवास इति दिक् । *अत्र माधवमिताक्षरादौ क्वचिद्विरोधो विषयभेदात्परिहार्यः । एकादशाहे चान्द्रं पुनःसंस्कारश्चेति प्रायश्चित्तकाण्डे हेमाद्रिः । यत्तूशनाः—

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः । इति,

तदनुक्तप्रायश्चितश्राद्धपरामिति विज्ञानेश्वरः ॥

---

आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुद्ध्यति ।
संकल्पितेऽथ भुक्त्वा तु त्रिरात्रं क्षपणं भवेत् ॥

इति भरद्वाजेन गुरुप्रायश्चित्ताभिधानात् । आमश्राद्धे इत्येतन्नवश्राद्धे । ब्रह्मचारिणस्तु बृहद्यमः—

मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः ।
त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥ इति ।

इदमज्ञानविषयम् । ज्ञाने तु—

मधु मांसं च योऽश्नीयाच्छ्राद्धं सूतकमेव वा ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥ इति ।

आमश्राद्धे तु सर्वत्रार्धम्,

आमश्राद्धे भवेदर्धं प्राजापत्यादि सर्वदा ।

इति षट्त्रिंशन्मते विशेषाभिधानात् । आपस्तम्बः—

याजकान्नं नवश्राद्धं सङ्ग्रहे चैव भोजनम् ।
स्त्रीणां प्रथमगर्भे च द्विजश्चान्द्रायणं चरेत् ॥ इति ।

स्त्रीणां सङ्ग्रहो विवाहः । *दर्शादाविति । "दशकृत्वः पिबेदापः" इत्यग्रिमवचनात् । अत्र स्वोक्तप्रकारे मिताक्षरामाधवयोर्विरोधं स्वयमेव परिहरति—*अत्रेति । *मिताक्षरादाविति ।

अथ क्षयाहश्राद्धम् । *तत्स्वरूपमाह हेमाद्रौ व्यासः—

*मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥

नारदीये—

*पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।

अत्र चान्द्रं मानं ज्ञेयम्,

आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ।

---

आदिना निबन्धान्तरग्रहः । तेन गुरुद्रव्यादावित्यादिषु प्रमाणं तद्विरोधपरिहारादि च पारिजातमदनरत्नादिषु बोध्यमिति । *तत्स्वरूपं क्षयाहस्वरूपम् । *मासेति । यो यस्मिन्नहनि म्रियते तस्य तथाभूतं तं प्रत्यब्दं क्षयाहं विदुरित्यन्वयः । अहनि अहोरात्रे तथाभूतं तत्सजातीयम् । मासपक्षतिथिस्पृष्टे इति विशेषणवशेन तथाभूतमित्यनेन मरणाधिकरणतिथिसाजात्यं लभ्यते । तच्च तन्मासतत्पक्षगतत्वेन प्रतिपत्त्वादिना च । एवञ्च तद्रूपेण मरणाधिकरणतिथिसाजात्यवत्तिथिमादाय तादृशतिथिमदहोरात्रं क्षयाहः वत्सरान्ततिथेश्च मृतिसम्बन्धाभावात्तदुत्तरवत्सराद्यतिथिरेव तादृशी । सांवत्सरिकश्राद्धाधिकरणाहोरात्रस्य तत्तिथ्या स्पर्शः । शास्त्रतः श्राद्धयोग्यत्वेन निर्णीतया मरणाधिकरणाहोरात्रस्य तत्तिथिस्पर्शो न त्रिमुहुर्त्तादिः किन्तु मरणकाले इत्याह—*पारणे इति । तस्माद्वर्षान्ते भवं वार्षिकमिति व्युत्पत्त्या वत्सरान्ते जाते मृततिथिमदहोरात्रं लभ्यते । एवञ्च क्षयाहश्राद्धस्य द्वितीयादिसंवत्सराद्यमृतितिथिसम्बन्धेनैवोत्पन्नत्वात्प्रथमसंवत्सराद्यायां मरणतिथौ न प्राप्तिरिति माधवानुयायिनः । वर्षे वर्षादौ भवं वार्षिकमिति व्युत्पत्त्या मासे मासादौ भवं मासिकमितिवत्प्रथमादिमासवर्षाद्यतिथिषु आब्दिकाद्यधिकरणत्वं प्रतीयते । आद्यवर्षीयप्रथमतिथेरेव मरणाधिकरणत्वात्सा द्वितीयादिवर्षीयप्रथमतिथिरेव च त-

त्सदृशीति तद्वदहोरात्रं तथा भूतं क्षयाह इति शूलपाण्यादयः। एतदभिप्रेत्यैव "आद्यमेकादशेऽहनि" इति याज्ञवल्क्यवाक्ये आद्यपदमाद्यमासिकाद्याब्दिकयोः प्राप्त्यर्थमिति भट्टनारायणभट्टादयः।

चक्रवत् परिवर्त्तेत सूर्यः कालवशाद्यतः।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिन्हितम्॥

इति लघुहारीतम्। अस्यार्थः—यतः सूर्यः कालवशात्कदाचिच्चक्रवन्मन्दादिगत्या परिवर्त्तेत गच्छेदतः सांवत्सरं श्राद्धम् मासचिन्हितमेव कार्यम्। एतदुक्तं भवति—चान्द्रमासश्च शुक्लादिश्चान्द्रः। तथाहि, अस्ति तावद्यदि वार्षिकं श्राद्धं यत्पक्षगतायां यस्यां तिथौ निधनं तद्राशिस्थे सूर्ये तत्पक्षगतायां तस्यां तिथौ सौरमानेन क्रियते तदा यदि कदाचित्सूर्यस्तुलादिमेषान्तं तीव्रं गच्छन् तां तिथिं न गच्छेत् तदा तल्लोपप्रसङ्गः, तद्राशिसूर्ये तत्तिथेरभावात्। यदि वा कदाचिन्मेषादितुलान्तं मन्दं गच्छन् तां तिथिं द्विः स्पृशेत् तदा तत्कालावच्छिन्नजीवनस्य निमित्तस्य सत्त्वादावृत्तिः स्यात्। गुणभूतकालानुरोधेन प्रधानावृत्तेरन्याय्यत्वे तु श्राद्धस्याविनिगमः स्यात्। अतो मासो ग्राह्य इति। स च—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥

इति लक्षितः शुक्लादिश्चान्द्रः तद्ग्रहणे तु न लोपादिप्रसक्तिः। एवञ्च हेतुवशादेतादृशरीत्यैव यत्र लोपादिप्रसक्तिस्तादृशं मासिकमपि जन्मतिथ्यादिकर्तव्यं सांवत्सारिकवदेव कार्यमित्यपि लभ्यते। मासमासान्यचिन्हितत्वभ्रमं वारयति स एव—

मासचिन्हं तु कर्तव्यं पौषमाघाद्यमेव हि।
यतस्तत्र विधानेन स मासः परिकीर्तितः॥ इति।

यन्मासचिन्हं कर्म सांवत्सारिकादि कर्त्तव्यं तन्माघाद्यं पौषादि-

इति (१)गर्गोक्तेः । *मलमासमृतस्य तु सौरम् ,

मलमासमृतानां तु सौरं मानं *समाश्रयेत् ।

इति हेमाद्रावुक्तेः । एतन्मृतमासस्यैवाधिक्ये ज्ञेयम् ।

---

विशेषचिन्हितम् कार्यम् । चैत्रादिति वक्तव्ये पौषमाघेत्युक्तिः । सौरयोस्तयोः सर्वथा पुष्यमघायोगासम्भवाभिप्रायेण । आद्यपदे-नाश्विनग्रहः । क्रमेण कन्याधनुर्मकरस्थे सूर्ये सत्याश्विनपौषमाघ-पौर्णमासीषु अश्विनीपुष्यमघानक्षत्राणि न सन्त्येव पौर्णमास्यन्ते सूर्याचन्द्रमसः सप्तमराशिस्थत्वनियमात् । सूर्याचन्द्रमसोः परो वि-प्रकर्षः पौर्णमासीति सिद्धान्तात् । स च सप्तमराशिस्थत्व एव । उभयतः परिगणने सप्तमराशेरेव विप्रकृष्टत्वात् इति तेषु विप्र-कृष्टत्वव्याघात एव । तथा माघे मकरस्थे सूर्ये मकरात्सप्तमराशिः क-र्कः तत्स्थत्वं पूर्णिमायां चन्द्रस्यापेक्षितं मघायोगे तु सिंहराशि-गतत्वाच्चन्द्रस्य सूर्यादष्टमराशिस्थत्वमायाति, तच्च बाधितमेवेति । एवमन्यत्रापि । मेषवृषमिथुनकर्कसिंहतुलावृश्चिककुम्भमीनस्थे च कदाचित्तत्तत्पौर्णमासीषु तत्तन्मासनक्षत्रयोगः सम्भवतीति तत्तद्रा-शिस्थसूर्याचन्द्रमसः सप्तमराशिस्थत्वसम्भवान्न सौरे विप्रकृष्टत्वव्या-घातः । यद्यपि चान्द्रपौर्णमासीष्वपि न नियमेन तत्तन्नक्षत्रयोगस्त-थापि तद्योग्यतया योगनिमित्तो व्यपदेशः । पाकमकुर्वत्यपि सूप-कारे पाचकव्यपदेशवत् । नन्वेवं —

> यस्मिन् राशौ गते सूर्ये विपत्तिं यान्ति मानवाः ।
> तेभ्यस्तत्रैव कर्त्तव्या पिण्डदानोदकक्रिया ॥

इत्यादीनां का गतिरित्यत्राह—*मलमासमृतस्य त्विति । *समाश्रयेदिति ।

> स एव दिवसस्त(२)स्य श्राद्धपिण्डोदकादिषु ।

इत्युत्तरार्धम् । (य(३)स्मिन् राशावित्येतत् ,

---

(१)'गार्ग्योक्तेः' क० छ० (२)'तत्र' च०। (३)धनुश्चिन्हान्तर्गतं नास्ति च०।

ब्राह्मे—

प्रतिसंवत्सरं कार्यं मातापित्रो*र्मृतेहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैवहि ॥

अपुत्रस्येति भ्रात्राऽप्यन्वयः । ज्येष्ठस्येति कनिष्ठस्या*नावश्यकत्वार्थम् । मदनरत्ने भाविष्ये—

प्रतिसम्वत्सरश्राद्धे नाधिमासं विवर्जयेत् ।
स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु ॥

इत्येतच्च मलमासमृतस्य यदा स एव मलमासस्तदा मलमासे तस्मिन्कर्त्तव्यताप्रतिपादकं, पूर्वोक्तदूषणगणग्रासात् ।

वर्षे वर्षे तु यच्छ्राद्धं मृताहे तन्मलिम्लुचे ।
कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र तु ॥

इति शातातपेनैव तेषां विषयदानात् । ) तथाच मलमासमृतस्य प्रथमाब्दिकं यन्नामके मलमासे मृतस्तन्नामके द्वितीयाब्दाद्ये शुक्लपक्षादिके मासि मृतपक्षीयमृततिथौ कार्यम् । यथा ज्येष्ठे मलमासे साति तत्र कृष्णपक्षमृतस्याषाढकृष्णपक्षे प्रथमाब्दिकं तस्यामान्तमानेन ज्येष्ठकृष्णत्वात् । एवं द्वितीयाब्दादावपि । ज्येष्ठशुद्धमृतस्य तु ज्येष्ठशुद्ध एव तस्यामान्तमानेनापि ज्येष्ठत्वादिति । अत्राधिमासमृतस्य द्वितीयाद्यब्दे तु न सौरविधिः । प्रथमाब्दिकं प्रकृत्यैव एतदभिधानाद्धेमाद्रिप्रभृतिभिरपि तन्मात्रविषयत्वप्रदर्शनात् । एवञ्चात्राधिकान्तरे सौरविधानात् द्वितीयाब्दादौ सौरः कुतो न भवतीति तु न शङ्क्यम्, अधिकान्तरे सौरविधानवशादेव द्वितीयाब्दादौ चान्द्रासिद्धेरिति । अत्र शुद्धमासे मृतस्य प्रथमाब्दिकं मलमास एव । द्वितीयाद्याब्दिकं शुद्ध एव नाधिके नाप्युभयोरिति ग्रन्थ एवोक्तं मलमासे । *मृतेऽहनीति । मरणाधिकरणतिथिसजातीयायां तिथावित्यर्थः, वत्सरान्तरातिथेर्मृतिसम्बन्धाभावात् । साजात्यं च प्राग्वत् तन्मासतत्पक्षगतत्वेन प्रतिपत्त्वादिना च । प्रति संवत्सरमिति वीप्साश्रवणात्प्रतिसांवत्सरिकं नित्यम् । *अनाच-

सर्वेषामेव श्राद्धानां *श्रेष्ठं सांवत्सरं मतम् ।

तथा—

भोजको यस्तु वै श्राद्धं न करोति खगाधिप ।
मातापितृभ्यां सततं वर्षे वर्षे मृतेऽहनि ॥
स याति नरकं घोरं तामिस्रं नाम नामतः ॥

तच्च नानास्मृतिष्वेकोद्दिष्टं पार्वणं चोक्तम् । आद्य-माह यमः—

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ॥

व्यासः—

एकोद्दिष्टं तु कर्तव्यं पित्रोश्चैव मृतेऽहनि ।
एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः ॥
अकृतं तद्विजानीयाद्भवेच्च पितृघातकः ॥

अन्त्यमाह शातातपः—

सपिण्डीकरणं कृत्वा कुर्यात् पार्वणवत्सदा ।

---

इयकत्वार्थमिति,

न पुत्रस्य पिता कुर्यान्नानुजस्य तथाऽग्रजः ।
अपि स्नेहेन कुर्यातां सपिण्डीकरणं विना ॥

इति पूर्वमुक्तेः । अत्र पित्रग्रजाभ्यां पुत्रानुजयोः सपिण्डीकरणं न कार्यमिति प्रतीयते नतु सर्वथेति । अन्येन तयोस्तदपि कारणीयम् । सांवत्सरादिकं तु पित्रग्रजाभ्यां तयोः स्वयमपि कार्यम् । नतु नित्यं, 'स्नेहेन' इत्युक्तत्वात् । स्नेहः मृताभ्युदयकामना । *श्रेष्ठं श्रेयःकारकम् । एतेन तदकरणे श्रेयोहानेः सूचनान्नरकप्राप्तिः सूच्यते इति नित्यत्वसिद्धिः । भोजकं श्राद्धमिति योजना तद्वशादामहेमाद्यनुकल्पनिवृत्तिः ।

अन्नेनैवाब्दिकं कुर्याद्धेम्ना नामेन न क्वचित् ।

प्रतिसंवत्सरं श्राद्धं (१)छागलेयोदितो विधिः ॥
यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते ॥

अत्रौ*रसक्षेत्रजयोः पार्वणं दत्तकादीनामेकोद्दिष्टमित्येकः पक्षः । *साग्नेः पार्वणं निरग्नेरेकोद्दिष्टमित्यपरः । *तद्दूषणं मिताक्षरादौ ज्ञेयम् । कल्पतरुस्तु

---

इति वचनाच्च । *औरसेति ।

औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश ।"

इति जाबालवचनात् । *साग्नेरिति ।

वर्षे वर्षे पितुः कुर्यात्पार्वणं चाग्निमान्द्विजः ।
पित्रोरनग्निमान्धीमानेकोद्दिष्टं मृताहनि ॥

इति सुमन्तूक्तेः । *तद्दूषणमिति । आद्यपक्षो नियुक्तः । औरसस्यापि—

एकोद्दिष्टं तु कर्त्तव्यमौरसेन मृतेऽहनि ।
सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणम् ॥

इति पैठीनसिना एकोद्दिष्टोक्तेः "प्रत्यब्दम्" इति जातूकर्ण्यवाक्यस्य क्षयाहातिरिक्ताक्षय्यतृतीयामाघीवैशाख्यादिश्राद्धपरत्वेन सुयोज्यत्वादाब्दिकपरत्वाभावाच्च । यत्तु—

पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् ।
सर्वत्रानेकगोत्राणामेकस्यैव मृतेऽहनि ॥ इति,

तदपि व्यवस्थापकं किन्तु औरसेन पितुः पार्वणं कार्यं भिन्नगोत्राणां मातुलादीनां त्वेकोद्दिष्टमित्यर्थकम् । अन्त्योपि न युक्तः,

अनग्नयश्च ये विप्रा ये च साग्नय एव च ।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम् ॥

---

(१) 'छागलेनो' ग.

*'साग्न्योरौरसक्षेत्रजयोः पार्वणम् । निरग्निकयोस्त्वेकोद्दिष्टम्' इत्याह । अपरार्केऽप्येवम् । *दत्तकादयो दश पुत्रास्तु साग्नयो निरग्नयश्चैकोद्दिष्टमेव कुर्युः;

प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥

इति जातूकर्ण्योक्तेः । यदा तु दत्तकस्य पिता दर्शे महालये वा मृतस्तत्र पार्वणैकोद्दिष्टयोर्विकल्पः । वस्तुतस्तु सर्वेषां *पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पः । स च *देशाचाराद्व्यवस्थित इति सर्वनिबन्धसिद्धान्तः । अत एव पृथ्वीचन्द्रोदये वृद्धपराशरः—

मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ।

इत्युक्त्वाह—

देशधर्मं समाश्रित्य वंशधर्मं तथा परे ।

---

इति पार्वणनिषेधादिति । *साग्न्योरिति । "औरसक्षेत्रजौ पुत्रौ" इति जाबालस्य—

यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् ।
पार्वणेन विधानेन देयमग्निमता सदा ॥

इति मात्स्ये विशेषणात् । "प्रत्यब्दं पार्वणेनैव" इति प्रकृतयोरौरसक्षेत्रजयोरनग्नित्वे एकोद्दिष्टं विदधता सुमन्तुना तयोः साग्नित्वे पार्वणस्य परिशेषादेव सिद्धेश्च । नन्वेवमेतन्मते इतरपुत्राणां कथमित्यत्राह—*दत्तकादय इति । *पार्वणेति ।

अमावास्याक्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन ॥

इत्यग्निमस्य समूलत्वे पार्वणं निर्मूलत्वे एकोद्दिष्टमित्यर्थः । *देशाचारादिति ।

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥

सूरयः श्राद्धमिच्छन्ति पार्वणं च (१)क्षयाह्न्यपि ॥ इति
तच्च केवलपितॄणां, न सपत्नीकानामिति हेमाद्रिः ।
अत्र मातामहा न कार्याः;

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

इति कात्यायनोक्तेः । कर्षूसमन्वितं सपिण्डनम् । यै-
रेकोद्दिष्टं क्रियते तेषामपि क्वचित् पार्वणमेव ।

अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन ॥

इति शङ्खोक्तेः । एवं संन्यासिनोऽपि ।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा ॥

इति प्रचेतसोक्तेः । वायवीये—

संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत् ॥

पृथ्वीचन्द्रोदये वृद्धपराशरः—

संग्रामे संस्थितानां च प्रेतपक्षे शशिक्षये ।
तेषां पार्वणमेवोक्तं क्षयाहेऽपि च सत्तमैः ॥

चन्द्रक्षयानाशकसंयुगेषु यः प्रेतपक्षे मृतवान् सपिण्डः ।
सपिण्डितानामपि चाब्दिकानि भवन्ति तेषामिह पार्वणानि ।

तथा—

*भ्रातुर्ज्येष्ठस्य कुर्वीत ज्येष्ठो भ्रातानुजस्य च ।
दैवहीनं तु तत्कुर्यादिति धर्मविदब्रवीत् ॥

इति वचनाद्वंशपरम्परायाताचारव्यवस्थितेरिति भावः । *भ्रा-
तुरिति । अत्रानुजस्य सांवत्सरिके उक्तं प्राक् । प्राञ्चस्तु—

(१) 'क्षयेहनि' क.

दैवहीनमेकोद्दिष्टम् । ज्येष्ठो भ्राताऽनाद्यगर्भजः ।
तथा च तत्रैव शातातपः—

अनाद्यगर्भज्येष्ठोऽपि भ्राता सद्भिर्निगद्यते ।
ऋते सपिण्डनात्तस्य (१)न वै पार्वणमाचरेत् ॥

आद्यगर्भे तु पार्वणमेकोद्दिष्टं वेत्यर्थः । मातुस्तु हेमाद्रौ कात्यायनः—

प्रत्यब्दं यो यथा कुर्यात् पुत्रः पित्रे सदा द्विजः ।
तथैव मातुः कर्तव्यं पार्वणं चान्यदेव वा ॥

*यत्तु तेनैवोक्तम्—

सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव तु ॥ इति ।

तत्सापत्नमातृपरम् । यत्तु वृद्धपराशरः—

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् ।
स एवा(२)स्य तु कुर्वीत पिण्डदानादिकक्रियाम् ॥
पार्वणं तेन कार्यं स्यात्पुत्रवद् भ्रातृजेन तु ।
पितृस्थाने तु तं कृत्वा शेषं पूर्ववदुचरेत् ॥ इति,

तत्पितृवद्देशाचारव्यवस्थितमिति पृथ्वीचन्द्रः । *श्राद्धदीपकलिकायां चतुर्विंशतिमते तु—

---

प्रतिसम्वत्सरं कार्यं मातापित्रोर्मृतेऽहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥

इति मानवे एवकाराज्ज्येष्ठस्यैव कार्यं न कनिष्ठस्य । "ज्येष्ठो भ्राताऽनुजस्य च" इति च देशाचारव्यवस्थितमित्याहुः । *यत्त्विति । पितृव्यभ्रात्रित्यत्र योग्यतया पितृव्यादिपदस्यापुत्रपितृव्यादिपरत्वेन तेषामेकोद्दिष्टनियमे सतीति शेषः । दाक्षिणात्यानुष्ठानपक्षमाह—*श्राद्धदीपेत्यादि इत्युक्तमित्यन्तेन । अपुत्र-

---

(१) 'नैव' क. छ. (२) 'स एव तस्य कुर्वीत' क. छ.

पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत् ।
एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं मिथः ॥
अपुत्रस्य पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः ।
मातामहस्य तत्पत्न्याः श्राद्धं पार्वणवद्भवेत् ॥

इत्युक्तं, तत्पत्न्याः कर्तृत्वेऽपि पार्वणमेव;

सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च ॥

इति लौगाक्षिस्मृतेः ।

तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्वणं तथा ।

इति सुमन्तूक्तेश्चेति निर्णयामृते उक्तम् ।

अन्ये त्वेतत्पाक्षिकपार्वणपरमाहुः । अत एव—

भर्तुः श्राद्धं तु या नारी मोहात्पार्वणमाचरेत् ।
न तेन तृप्यते भर्ता कृत्वा तु नरकं व्रजेत् ॥

---

स्येति अग्रजन्मन इति च पितृव्यभ्रात्रोरुभयोरेवान्वेति । तेन कनिष्ठयोस्तयोरेकोद्दिष्टं कार्यम् । इदं तु बोध्यं—मातापितृमातामहभिन्नानां दर्शश्राद्धादि न कार्यं विशेषवचनाभावात् पितृव्यभ्रात्रित्यादिजातूकर्ण्यादिवचनानां च क्षयाहे प्रकृत्यैव पाठादितरेषां तत्रैवोपसंहारात् । तीर्थमहालयादिश्राद्धे तु विशेषवचनादेव भवतः । पत्न्यास्तु दर्शेऽप्यधिकारः;

अपुत्रा पुत्रवत्पत्नी पुत्रकर्म समाचरेत् ।

इति वाक्यात् । पुत्रवदिति वतिना श्राद्धक्रियातौल्ये उक्ते तत्कर्तृकश्राद्धवदेव देवता लभ्यते परन्तु तत्पित्रादीनां भर्तृत्वादिनैव तन्मातामहानां च पितृत्वादिनैवोद्देश्यत्वं यं प्रति येन रूपेण सम्बन्धिता तं प्रति तेनैव रूपेणोद्देश्यत्वात् । तथाच "स्वभर्तृप्रभृतित्रिभ्यः" इत्यादिवाक्यमेतदर्थप्रकाशकम् । प्रत्याब्दिकादौ तु तन्मातामहानामसत्त्वादेव स्वपितृत्वादिनाप्यप्राप्तौ सर्वकालमित्येतद्दर्शा-

इति वचनं क्षयाहे पाक्षिकैकोद्दिष्टप्रशंसार्थं न पार्वणनिषेधार्थमित्युक्तं त्रिस्थलीसेतौ भट्टचरणैः । 'स्वभर्तृप्रभृति त्रिभ्यः' इत्यनेन विरोधाच्च ।

अपुत्राणां (१)त्वाह हेमाद्रावापस्तम्बः—

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥
मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारिभ्य एव च ।
दद्याद्वै मासिकं श्राद्धं सांवत्सर*मतोऽन्यथा ॥

पारिजाते तु अन्यथा पार्वणमित्युक्त्वा सर्वत्र पार्वणमित्युक्तम् । एकोद्दिष्टवाक्यानि तु तीर्थमहालयपराणीत्युक्तम् । पृथ्वीचन्द्रोदये वृद्धगार्ग्यः—

मातुः सहोदरा या च पितुः सहभवा च या ।
तयोश्च नैव कुर्वीत पार्वणं पिण्डनादने ॥

प्रचेताः—

सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते ।
अपुत्राणां च सर्वेषामपत्नीनां तथैव च ॥

अपत्नीनां ब्रह्मचार्यादीनाम् । मार्कण्डेयपुराणे—

*प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः ।

---

द्विपरम् यत्तु यत्र तथैव चेत्यस्य त्रिभ्य एवेत्यर्थेऽपि अपुत्रकापितुरेवेदं पार्वणविधानमिति । तन्न, अपुत्रत्वाश्रवणात् । महालयतीर्थादौ तु श्वश्रूपार्वणमपि तस्याः कृताकृतमिति नवदैवत्यं मातृपार्वणेन द्वादशदैवत्यमप्याहुः । स्वमातामहपार्वणेन पञ्चदशदैवत्यमिति चाहुः । स्वमातामहीपार्वणेनाष्टादशदैवत्यमपि केचित् । एतत्सर्वमपुत्रविषयमिति नव्याः । पित्रादौ जीवति तु द्वारलोपात्पार्वणलोप एवेति प्रपञ्चितं प्राक् । *अतोऽन्यथा पार्वणादन्यथा । एकोद्दिष्टमिति यावत् । *प्रतिसंवत्सरमिति । यथान्यायमे-

---

(१) 'ततः' ग. (२) 'चाह' ग.

मृताहनि यथान्यायं *नृणां यद्वदिहोदितम् ॥

नृणामिति दृष्टान्ताद्भोविप्रहतपाखण्ड्यादीनां सपिण्डानामभावेऽपि सांवत्सरमेकोद्दिष्टं कार्यमेवेति शूलपाणिः । अत्रिवृद्धवसिष्ठौ--

सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥
पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ॥

यत्तु जातूकर्ण्यः--

पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च ।
मातामहस्यासुतस्य श्राद्धादि पितृवद्भवेत् ॥ इति,

तदावश्यकत्वार्थं नतु पार्वणार्थमिति हेमाद्रिः । युक्तं त्वेवम् ।

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः ॥

इति पुलस्त्योक्तेर्मातामहस्य पार्वणमेव । तत्साहचर्यात् पितृव्यादौ तथा ।

पितृव्यभ्रातृमातॄणामेकोद्दिष्टं (१)च पार्वणम् ।

इति क्षयाहोक्त्योपक्रमे पुलस्त्योक्तेश्च विकल्पः । केचित्त्वापस्तम्बादिवाक्यानि--

व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ।

इत्यस्य पितृव्यादिपरत्वादकृतसपिण्डनपितृव्यादि-

---

कोद्दिष्टं कार्यमित्यन्वयान्मातुर्यथाचारमेकोद्दिष्टम् इतरासां च तन्मात्रं लभ्यते । *नृणामिति । अत्र यथाचारमेकोद्दिष्टमन्येषां तु तन्मात्रमिति रीतिरुक्तैव ।

इति क्षयाहश्राद्धम् ।

---

(१) 'न' ग०

पराणीत्याहुः । माता सपत्नमाता । एकोद्दिष्टं तु कनिष्ठपरामिति । पृथ्वीचन्द्रोदयेऽप्येवम् । विशेषस्त्वधिकारिनिर्णये प्रागुक्तः । केचित् पुत्रान्तराभावेऽपि पि(२)तामहवार्षिकमप्यावश्यकम्,

पुत्राभावे च तत्पुत्रः पत्नी माता तथा पिता ।
वित्ताभावेऽपि सञ्छिन्द्यः कुर्यात्तस्यौर्ध्वदेहिकम् ॥

इति मार्कण्डेयपुराणादित्याहुः । तन्न,

पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम् ।

इति कातीये विशेषोक्तेः ॥

अथ क्षयाहद्वैधे निर्णयः । तत्रैकोद्दिष्टं *मध्याह्ने कार्यम् । मध्याह्नश्च पञ्चधा विभक्ते दिने तृतीयभाग इति माधवः ।

आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु (३)मध्यमे ।
पार्वणं चापराह्णे तु *प्रातर्वृद्धिनिमित्तकम् ॥

इति हारीतोक्तौ प्रातःशब्दसाहचर्यात् । *तत्रापि

---

*मध्यान्हे इति । यस्त्वपराह्णः पितॄणामित्यपराह्णः यश्च पित्र्यं चास्तमिते रवौ इति सामान्यः योऽपि च—

दैवे कार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः ।
पितृकार्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः ॥

इतिवृद्धयाज्ञवल्क्योक्तेरस्तमयः स सर्वोऽपि "एकोद्दिष्टं तु मध्यतः" इत्यतिप्रतिपदोक्तेन मध्याह्नेनापोद्यत इति भावः । *प्रातरिति । प्रातःकालश्च त्रेधादिपक्षेषु नेति । अनायत्या पञ्चधाभागः सिद्ध्यति । एवञ्चात्र पूर्वाह्णः द्वितीयभागः । सायाह्नस्त्वर्थतो लभ्यते । कुतपः अष्टमो मुहूर्त्तः । आरम्भसमाप्तिकालौ दर्शयति—*तत्रापीति । *कुतपप्रथमे इति । कुतपाद्यन्तभागयोरि-

---

(१) 'मातामह' क० (२) 'मध्यतः' क० छ०

कुतपादिषु मुहूर्तद्वितये ज्ञेयम्;

प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥

इति गौतमोक्तेरेतत्परत्वात् । रौहिणो नवमो मुहूर्तः । मैथिलाः श्राद्धकौमुदी चैवम् । अन्यथा--

ऊर्ध्वं मुहूर्तात् कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥

इत्यादिविरोधात् । दीपिकापि "एकोद्दिष्टमुपक्रमेत कुतपे" इति । माधवीये व्यासोऽपि--

*कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् ।
आवर्तनसमीपे वा तत्रैव नियतात्मवान् ॥

तेन कुतपादिरौहिणान्तो मुख्यः कालः ।

पृथ्वीचन्द्रोदयेऽप्येवम् । *दिनद्वये तद्व्याप्तौ (१)अंशेन समव्याप्तौ च पूर्वा । *विषमव्याप्तावाधिक्येन निर्णयः । अव्याप्तौ पूर्वैव, परविद्धाया निषेधात् । (२)स च वक्ष्यते । पूर्वदिने ग्रहणे रौहिणलङ्घनापत्तेः परैवेति गौडाः । शुक्लकृष्णवशात्स्वर्वेदर्पाद्यैर्वा व्यवस्थेत्यन्ये । *तन्न, परविद्धानिषेधप्राबल्यात् । अत्र मूलं कालमाधवीये ज्ञेयम् ।

---

च्छयोपक्रमकालत्वविकल्पः । *दिनद्वये इति । अस्तमयवचनानुग्रहात् । *विषमेति ।

अल्पापराह्णे त्याज्या स्याद्ग्राह्या सा चाधिका भवेत् ।

इति दर्शश्राद्धोक्तन्यायात् अत्रापि आधिक्येन निर्णय इत्यर्थः । मतद्वयमपि दूषयति--*तन्नेति । शुक्लादिवाक्यं पूर्वोत्तरयोस्तिथ्योः शास्त्रेण प्राप्तिसाम्ये पुरुषेच्छानिवारणार्थमिति निर्णीतम् ।

---

(१) 'अंशेन' नास्ति ग० (२) 'साच पूर्वदिने रौहिण' ग०

पार्वणं त्वपराह्णे कार्यं *पूर्वोक्तवचनात् ।

मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् ।
अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ॥

इति पृथ्वीचन्द्रोदये वृद्धगौतमोक्तेश्च । पूर्वेद्युरेव परेद्युरेव वाऽपराह्णव्याप्तौ सैव ग्राह्या । दिनद्वये तद्व्याप्तौ तदस्पर्शेऽशतः समव्याप्तौ (१)वा पूर्वैव । विषमव्याप्तौ त्वधिका ग्राह्या,

ह्यपराह्णव्यापिनी स्यादाब्दिकस्य यदा तिथिः ।
महती यत्र तद्विद्धां प्रशंसन्ति महर्षयः ॥

नह्यत्र प्राप्तिसाम्यसंभवः, परविद्धानिषेधस्मरणात् । एतेन खर्वदर्पादिवाक्यसंचारोऽप्यपास्तः तस्य शुक्लादिवाक्यसमानार्थत्वात् । खर्वदर्पादिवाक्यं च न कर्मकालं बाधितुमलं "ह्रासवृद्धी न कारणम्" इत्युक्तेः । युग्मवाक्यं पित्र्यविषयमिति भावः । *पूर्वोक्तेति । यस्तु—

चतुर्थप्रहरे प्राप्ते यः श्राद्धं कुरुते नरः ।
आसुरं तद्भवेच्छ्राद्धं दाता तु नरकं व्रजेत् ॥

इति निषेधः स नापराह्णभागान्तर्भावेण, किन्तु सायाह्नभागान्तर्भावेणेति । ननु—

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥

इति मार्कण्डेयोक्तपूर्वाह्णस्य का गतिरिति चेत् ? देवोद्देशेन क्रियमाणं श्राद्धं शुक्लं फलकामानामुत्साहहेतुतया चित्तप्रसादहेतुत्वात् । पित्रुद्देशेन क्रियमाणं कृष्णं पितृमरणादिस्मारकतया चित्तकालुष्यकारित्वात् । तथाच तादृशस्य शुक्लादेः पक्ष इत्यर्थः । रौहिणमिति चैकोद्दिष्टविषयम् ।

---

(१) 'वा' नास्ति क०

इति मरीचिस्मृतेः ।

*दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम् ।
( पू(१)र्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

इत्यपरार्के नारदोक्तेः ॥

द्व्य(२)हे तु व्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः )
पूर्वविद्धा प्रकर्तव्या *त्रिमुहूर्ता भवेद्यदि ॥

इति सुमन्तूक्तेः ।

पूर्वस्यां निर्वपेत् पिण्डानित्याङ्गिरसभाषितम् ।

---

मध्याह्नव्यापिनी ग्राह्या तिथिः पूर्वाऽथवा परा ।
तत्र कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति त्वेकभक्तविषयमिति भावः । कुतपस्य पार्वणप्रारम्भकालत्वेऽपि "पित्र्यर्थे चापराह्णिकी" इति भविष्योक्तेरपराह्णव्याप्तिमात्रं दर्शितम् । उद्देशक्रमप्रातिलोम्येन नियामकमाह—द्व्यपराह्णेति । *दर्शं चेति । अंशतः समव्याप्तिपक्षे "द्व्यहे तु" इति वचनोपन्यासो न संगच्छते । अपराह्णस्पर्शसाम्येऽपि कुतपकालव्याप्तेराधिक्यादित्याशङ्कावारणायेदं परेद्युः कुतपकालव्याप्तेः सत्त्वेऽपि—

प्रायः प्रातरुपोष्या हि तिथिर्दैवफलेप्सुभिः ।
मूलं हि पितृतृप्त्यर्थं पैत्रं चोक्तं महर्षिभिः ॥ इति,
यस्यामस्तं रविर्याति पितरस्तामुपासते ।
स पितृभ्यो यतो दत्तो ह्यपराह्णः स्वयंभुवा ॥

इति तिथिमूलत्वास्तमयव्याप्तिरूपाभ्यां गुणाभ्यां पूर्वैवेत्यभिप्रायेणायं निषेध इति भावः । *त्रिमुहूर्तेति । इदं च दिनद्वये तदस्पर्शे "न द्व्यहे" इतिवचनश्रुतस्य त्रिमुहूर्तत्वस्य दार्ष्टान्तिततयोपयुज्यते । नन्वपराह्णवेलायामसत्त्वे कर्मकालव्याप्तिराहित्यादनुपादे-

---

(१) धनुश्चिह्नान्तर्गतं नास्ति क० (२) 'द्व्यहेऽप्यव्यापिनी' ग०

इति हेमाद्रौ पाठः। तत्रैव वृद्धमनुः—

न ह्यहर्व्यापिनी चेत्स्यान्मृताहस्य च या तिथिः।
पूर्वविद्धैव कर्तव्या *त्रिमुहूर्ता च या भवेत् ॥

मदनरत्नेऽप्येवम्। यत्तु (१)कार्ष्णाजिनिर्व्यासौ—

अह्नोऽस्तमयवेलायां कलामात्रा यदा तिथिः।
सैव प्रत्याब्दिके ज्ञेया नापरा पुत्रहानिदा ॥

इति त्रिमुहूर्तस्तुतिः। पूर्वेद्युः सायं त्रिमुहूर्ताभावे तु परैव;

त्रिमुहूर्ता न चेत् ग्राह्या परैव कुतपे हि सा।

इति कालादर्शे गोभिलोक्तेः। कालादर्शेऽपि—

प्रत्याब्दिकेऽप्येवमेव तिथिर्ग्राह्यापराह्णिकी।
उभयत्र तथात्वे तु महत्त्वेन विनिर्णयः ॥
समत्वे पूर्वविद्धैव ह्यतथात्वेऽपि सा यदि।
त्रिमुहूर्ता भवेत्सायं सर्वेष्टोऽयं विनिर्णयः ॥

अन्यत्रापि—

सायंतन्यपरत्र चेन्मृततिथिः सैवाब्दिके मासिके
ग्राह्या सा ह्यपराह्णयोर्यदि तदा यत्राधिका सा मता।
तुल्या चेदुभयापराह्णसमये पूर्वा न चेत्तु द्वये
पूर्वैव त्रिमुहूर्तगास्तसमये नो चेत्परैवोचिता ॥

माधवपृथ्वीचन्द्रौ तु-'दिनद्वयेऽपराह्णव्याप्तौ *अंशतः

---

यत्वामित्यत्राह-*त्रिमुहूर्त्ता चेति। अनेन-

पित्र्येऽस्तमयवेलायां स्पष्टा पूर्णा निगद्यते।

इत्यापाद्य साकल्यमपि उक्तं भवति *अंशत इति। इयं च त्रेधा-पूर्वेद्युरपराह्णस्य द्वितीयघटिकामारभ्य प्रवृत्ता परेद्युः तिथिवृद्धा पञ्चघटिका एका। पूर्वेद्युः चरमघटिकामारभ्य प्रवृत्ता परेद्युस्ति-

---

(१) 'कार्ष्णाजिन' क० छ०

समव्याप्तौ च क्षये पूर्वा वृद्धौ परा', *'खर्वदर्पौ परौ पूज्यौ' इत्युक्तेः ।

अपराह्णद्वयव्यापिन्यतीं(१)तस्य च या तिथिः ।
क्षये पूर्वा च कर्तव्या वृद्धौ कार्या तथोत्तरा ॥

इति बौधायनोक्तेः ।

क्षयाहस्य तिथिर्या तु अपराह्णद्वये यदि ।
पूर्वा क्षये तु कर्तव्या वृद्धौ कार्या तथोत्तरा ॥

इति बृहन्नारदीयाच्चेत्याहुः । वृद्धिक्षयौ चा*त्र परतिथेर्नतु ग्राह्यतिथेः, तस्याः क्षयेऽपराह्णद्वयव्याप्तेरसंभवात् । तदाह माधवः—

न ग्राह्यतिथिगौ वृद्धिक्षयावूर्ध्वतिथेस्तु तौ ॥ इति ।

*यत्तु पृथ्वीचन्द्रः—पूर्वोक्तवचनेषु यत्र सायाह्नास्तसमययोगिनी तिथिरुक्ता तत्रापराह्णव्यापिनी ज्ञेया;

सायाह्नस्त्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेत् ।

---

थिक्षयेणैकघटिका द्वितीया । पूर्वापराह्णस्य चरमघटीत्रये सति परापराह्णस्याद्यघटीत्रये सती चेति तृतीया । *खर्वेति । अत्र ग्राह्यतिथिगतौ वृद्धिक्षयौ ग्राह्यौ । *अत्र दिनद्वये अपराह्णव्याप्तावित्यत्र । ननु यत्र परतिथेरपराह्णे स्वल्पः क्षयः तत्र कथं पूर्वा ग्राह्या तिथेर्ज्योतिःशास्त्रप्रक्रिययाऽपराह्णद्वयव्यापित्वात् ? सत्यं, "तिथ्यादौ तु भवेद्यावान्" इति वचनात् । तिथिनक्षत्रयोगेषु क्षीयमाणेषु स क्षयो यावद्धटीमितः तेभ्यः पूर्वेषु तिथ्यादिषु ज्योतिःशास्त्रेणाऽदृष्टोऽपि ग्राह्यः । एवं वृद्धावपि इत्यर्थः । तथाच परतिथेरपराह्णे यावान्क्षयः तावतः ग्राह्यतिथौ योजनेन परस्याः कृत्स्नापराह्णव्यापित्वात्पूर्वेति । स्वकर्मणीत्यस्य स्वं ग्राह्यतिथिः तद्विहितं यत्कर्म तस्मिन्निमित्तभूते इत्यर्थः । *यत्त्विति । दिनद्वये अपराह्णास्पर्शे पर-

---

(१) 'तस्य यदा तिथिः' क० छ०

इति मात्स्यादौ सायाह्ननिषेधात्। यत्तु 'त्रिमुहूर्तादिग्रहणं तच्छ्राद्धाहापराह्णरूपत्रिमुहूर्तपरम्' इत्याह। तन्न *हेमाद्रिमदनरत्नकालादर्शादिग्रन्थविरोधात् *लक्षणापत्तेश्च चिन्त्यम्। तस्मात्पूर्वोक्तमेव साधु। यदा विघ्नवशाद्दिने सांवत्सरश्राद्धं न कृतं तदा *रात्रावपि कार्यम्,

मृताहं समतिक्रम्य चण्डालेष्वभिजायते।

इति मरीचिना मृताहातिक्रमे दोषोक्तेः; "न च नक्तं श्राद्धं कुर्वीतारब्धे वाऽऽभोजनसमापनम्" इत्यापस्तम्बेन *गौणकालोक्तेश्चेति माधवः। *आरब्धे श्राद्धे विघ्नवशाद्रा(१)त्रिपाते भोजनसमाप्त्यन्तं रात्रौ कार्यम्। शेषसमाप्तिः परदिन एवेति हरदत्तः। ग्रहणदिने वार्षिकप्राप्तौ तद्दिने एवान्नेनामेन हेम्ना वा कुर्यात् नोत्तरदिने

त्याशयेनेदम्। *हेमाद्रीति। एतैः तादृशविषये पूर्वाग्राह्यत्वाभिधानात्। नन्वत्र हेमाद्र्यादिमतस्य सम्यक्त्वे किं विनिगमकमित्यत्राह—*लक्षणेति। सायान्हादिपदानामपराह्णे लक्षणापत्तेरित्यर्थः। हेमाद्र्यादीनां तु त्रिमुहूर्तसायान्हव्यापिन्यामस्तमययोगः संभवतीति न तदापत्तिः। *रात्रावपीति। "दिवोदितानि कर्म्माणि" इति पूर्वोक्तवचनात्। *गौणेति। स्वकालादुत्तरो हि कालः गौणकालः। स च प्रकृते सायान्हः तदुत्तरश्च तत्र केनापि निमित्तेनापराह्णातिक्रमे सायान्हो ग्राह्यः;

स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वं यथाविधि।

इति व्यासोक्तेः। तत्राप्यसंभवे तु न श्राद्धलोपः कार्यः। "नच नक्तम्" इति तदुत्तरकालमभिप्रेत्यापस्तम्बेनोक्तेरित्यर्थः। नन्वत्र पिण्डसंकल्पस्य पूर्वकृतत्वात् आभोजनसमापनमित्युक्त्या तल्लोपापत्तिरित्यत आह—*आरब्धे इति। तत्र कर्ता उपवासं कु-

(१) 'रात्रिभागे पाते' ग०

इत्युक्तं प्राक् ग्रहणनिर्णये। तच्च प्रथमाब्दिकं त्रयोदशे मलमासे कार्यमन्यथा न;

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम्॥

इति लघुहारीतोक्तेः। इदम(१)न्त्याधिमासपरम्। द्वादशे त्रयोदशे वातीत इत्यर्थः। तेन यत्र द्वादशमासिकं शुद्धमासे भवति तत्र त्रयोदशेऽधिके एवाद्याब्दिकं कार्यम्। यत्राधिकमध्ये द्वादशं मासिकं तत्र तस्य द्विरावृत्तिं कृत्वा चतुर्दशे शुद्धे एव प्रथमाब्दिकमिति नि(२)ष्कर्षः। माधवीये हेमाद्रौ चैवम्। द्वि(३)तीयादिकं तु शुद्धमासे एव नाधिके, नाप्युभयोः। मलमासमृतानां तु यदा स एवाधिकः स्यात्तदा तत्रैव कार्यमन्यथा शुद्ध एवेति प्रागुक्तम्।

दर्शे वार्षिकं चेत्तदा पूर्वं वार्षिकं कृत्वा ततः पिण्डपितृयज्ञो दर्शश्राद्धं चेति निर्णयदीपे क्रम उक्तः। स्मृतिसारेऽपि--

दर्शे क्षयाहे सम्प्राप्ते कथं कुर्वन्ति याज्ञिकाः।
आदौ क्षयाहं निर्वर्त्य पश्चाद्दर्शो विधीयते॥ इति।

युक्तं त्वेवम्, तद्वचने मूलाभावात्।

पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः।

---

र्यात्। ततः परदिने एकोद्दिष्टे मध्यान्हे पार्वणे तु अपराह्णे पिण्डदानादिशेषं समापयेत्कालबाधस्यान्याय्यत्वात्। परदिने प्रातर्माध्याह्निकं नित्यकृत्यं यथासंभवं कर्तुर्भवत्येव, तत्त्यागे मानाभावात्। "नहि कर्मणि कर्मान्तरारम्भः" इत्यस्यैवंविधविषयेऽप्रवृत्तेरुक्तत्वात्। के-

(१) 'अन्त्यादिकमास' ग० (२) 'निष्कर्षः' नास्ति ग०
(३) 'द्वितीयाब्दिकं' ग०

इति दर्शश्राद्धे पिण्डपितृयज्ञानन्तर्यात्तस्याब्दिकेऽप्य-तिदेशात्प्रा(१)प्तेः 'पितृयज्ञानन्तरं वार्षिकं ततो दर्शश्राद्धम्' इति व्यतिषङ्गस्तु न भ(२)वति तस्या*र्थिकत्वात्। कालादर्शेऽपि—

निमित्तानि यतिश्चात्र पूर्वानुष्ठानकारणम्।

इति सर्वान्प्रत्यैकरूप्याभावात्क्षयाहनिमित्तस्यानियतत्वम्। देवजानीयेऽप्येवम्। एवं मासिकादिष्वपि ज्ञेयम्,

प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि।

इति सर्वातिदेशात्। मृताहे वृषोत्सर्ग उक्तो हेमाद्रौ विष्णुधर्मे—

अयनद्वितये चैव मृताहे बान्धवस्य च।
उत्सृजेन्नीलवृषभं कौमुद्याः समुपागमे॥

कौमुदी कार्तिकी॥

अथ (३)शुद्धश्राद्धम्। दिवोदासीये—

सपिण्डीकरणादूर्ध्वं *यावदब्दत्रयं भवेत्।
तावदेव न भोक्तव्यं क्षयेऽहनि कदाचन॥

वर्षान्तसपिण्डनेऽप्येतत्तुल्यम्;

---

चित्तु ननु सायाह्नवत्प्रातःसंगवावपि कुतो न गौणकालौ? मैवं, कुतपमुहूर्ते एव तदुपक्रमात्। तत्पूर्वयोश्च गान्धर्वरौहिणयोः कुतपत्वं तु छत्रिन्यायेनैव—

मध्याह्नस्त्रिमुहूर्तस्तु यदा चलति भास्करः।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम्॥

इति कुतपत्वेन व्यवहारात्। एवमपि ततः प्राक् प्राप्तेरसंभवाच्चेति रीत्या स्वकालादुत्तरत्वं दूषयति—*आर्थिकत्वादिति। उपपादितं चैतदधस्ताद्ग्रन्थे एव। *यावदब्देति यावच्छब्दो मर्या-

---

(१) 'प्राप्तेः पिण्डपितृ' क० 'प्राप्ते पितृ' ग०
(२) 'भवत्येव' ग० (३) 'शुद्धि' क०छ०

मृताहनि तु सम्प्राप्ते यावदब्दचतुष्टयम् ।
*बहिः श्राद्धं प्रकुर्वीत न कुर्याच्छ्राद्धभोजनम् ॥
प्रथमेऽस्थीनि मज्जा च द्वितीये मांसभक्षणम् ।
तृतीये रुधिरं प्रोक्तं श्राद्धं शुद्धं चतुर्थकम् ॥

इति श्राद्धकारिकोक्तेः (१)शुद्धं किञ्चिदिति ज्ञेयम् । स्मृत्यन्तरे--

*सप्तत्रिंशच्च यो मासान् श्राद्धे भुङ्क्ते तमोहतः ।
स पङ्क्तिदूषितः पापः प्रेताशी च भवेत्तु सः ॥

तत्र प्रथमेऽब्दे वर्षान्तसपिण्डनपक्षे मृताहात्पूर्वेऽह्नि सपिण्डनमब्दपूर्तिश्राद्धं च कृत्वा परेद्युर्वार्षिकं कुर्यादिति स्मृत्यर्थसारे उक्तम् । (२)कालकाण्डे हेमाद्रिस्तु मृताहे सपिण्डीकरणेनैव वार्षिकसिद्धिः;

पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्तितः ।
तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते ॥

इति वचनादित्याह । इदमेव युक्तम् ॥

अथ क्षयाहाज्ञाने मरीचिः—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥

इत्युक्तेः *शुक्लैकादश्यामपि । बृहस्पतिः—

न ज्ञायते मृताहश्चेत्*प्रमीते प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञात*स्तद्दर्शे स्यादथाब्दिकम् ॥

---

दायाम् । *बहिः गृहादिति वर्त्तते । कुतः किञ्चिदित्यत्राह-*सप्तत्रिंशच्चेति । सप्तत्रिंशत्तममासस्य चतुर्थवर्षाद्यत्वात् । *शुक्लैकादश्यामपीति । शुक्लपक्षे ज्ञाते शुक्लैकादश्येव ग्राह्या । पक्षस्याप्य-

---

(१) 'शुद्धं किञ्चिदिति ज्ञेयम्' नास्ति क०
(२) 'कालकाण्डे' नास्ति ग०

*दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानमासदिवसौ ग्राह्यौ *पूर्वोक्तया दिशा ॥

मदनरत्ने भविष्ये—

*मृताहं यो न जानाति मानवो विनतात्मज ।
तेन कार्यममावास्यां श्राद्धं सांवत्सरं सदा ॥
दिनमेव तु जानाति मासं नैव तु यो नरः ।
मार्गशीर्षेऽ(१)थवा भाद्रे माघे वा तद्दिनं भवेत् ॥

निर्णयामृते तु—

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु ।
तदा चाषाढके मासि माघे वा तद्दिनं भवेत् ॥

इति बृहस्पतिस्मृतेराषाढोऽप्युक्तः । कालादर्शेऽपि—

मासाज्ञाने दिनज्ञाने कार्यमाषाढमाघयोः ।

इत्युक्तम् । हेमाद्रौ प्रभासखण्डे—

मृताहं यो न जानाति मासं वापि *कथञ्चन ।
तेन कार्यममावास्यां श्राद्धं माघेऽथ मार्गके ॥

---

ज्ञाने तु साऽनुकल्प इति भावः । *प्रमीते प्रोषिते सतीति । मृततिथ्यज्ञानकारणे इत्यर्थः । *तद्दर्शे इति । तन्मासकृष्णशुक्लैकादश्योर्वा श्राद्धविधेरिति मरीचिवचनात् ।*दिनेति । मरणसम्बन्धिनोस्तिथिमासयोरुभयोरेवाज्ञाने प्रस्थानोत्तरमेव यस्य जीवनवार्ता न ज्ञाता तन्मृताहश्राद्धे प्रस्थानदिनमासौ ग्राह्याावित्यर्थः । *पूर्वोक्तयेति । प्रस्थानस्यापि मासज्ञाने तद्दिनाज्ञाने तन्मासीयामावास्यादिषु मासाज्ञाने दिनज्ञाने च मार्गशीर्षादिषु प्रस्थानतिथावित्यर्थः । शुक्लपक्षतदज्ञानयोः पूर्ववत् । यदा मरणतच्छ्रवणप्रस्थानानां त्रयाणामपि दिनमासयोरज्ञानं तदाऽऽह—*मृताहमिति । 'मृतस्याहः' इति पाठान्तरम् । स एवार्थः । *कथञ्चनेति । मरणादिना केनापि

(१) 'तथा' ग.

भविष्ये—

*मृतवार्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण तु ।

पूर्वोक्तेति प्रस्थानदिनाज्ञाने *मासज्ञाने च *तद्दर्शे मासाज्ञाने दिनज्ञाने च मार्गादाविति व*च्छ्रवणादिनेऽपि ज्ञेयमित्यर्थः । श्रवणादिनमासाज्ञाने माघमार्गदर्शे कार्यं पूर्वोक्तप्रभासखण्डात् । अतोऽत्र लोप इति शूलपाण्युक्तं हेयम् । तिथितत्त्वे यमः—

गतस्य न भवेद्वार्ता याव*द्द्वादशवार्षिकी ।
प्रेतावधारणं तस्य कर्तव्यं सुतबान्धवैः ॥
यन्मासि यदहर्यातस्तन्मासि तदहःक्रिया ।
दिनाज्ञाने कुहूस्तस्य आषाढस्याथवा कुहूः ॥

---

चिह्नेनेत्यर्थः । यदा प्रस्थानस्यापि दिनमासयोरज्ञानं यस्य वा प्रस्थानोत्तरं बहुकालं जीवनवार्ता श्रुतैव पश्चात्तन्मरणं ज्ञातं नतु तद्दिनमासौ तत्राह—*मृतेति । तत्र मरणश्रवणसम्बन्धिनौ दिनमासौ ग्राह्यौ इत्यर्थः । *मासज्ञाने मरणश्रवणसम्बन्धिमासमात्रस्मरणे । *तद्दर्शे तद्दर्शादिषु तेन क्रमेण कृष्णशुक्लैकादश्योरपि लाभः । *श्रवणादिनेपीति । मरणश्रवणसम्बन्धिदिनमात्रस्मरणे मार्गशीर्षादेस्तद्दिने इत्यर्थः । शुक्लपक्षतदज्ञानयोः प्राग्वत् । *द्वादशवार्षिकीति । पञ्चदशवार्षिक्युपलक्षणमेतत् । अज्ञातदेशगतस्य जीवनमरणान्यतरानिर्धारणात्पञ्चदशवर्षादीनि प्रतीक्ष्य पश्चात्प्रतिकृतदाहाद्यौर्ध्वदेहिकं कृतं तत्र दाहतिथावेवाह्निकं कार्यमित्यर्थः । पञ्चदशवर्षप्रतीक्षा पितृविषया । द्वादशवर्षप्रतीक्षा तदितरविषया,

पितरि प्रोषिते यस्य न वार्ता नैव चागतिः ।
ऊर्द्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ॥

इत्यग्रिमजातूकर्ण्यवाक्ये पितरीत्युक्तेः ।

अथ श्राद्धविघ्ने निर्णयः। तत्र विप्रस्य निमन्त्रणोत्तरं सूतके मृतके चाशौचाभावः,

निमन्त्रितेषु विप्रेषु *प्रारब्धे श्राद्धकर्मणि।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च॥
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्॥

इति ब्राह्मोक्तेः। कर्तुस्तु विष्णुराह—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥

श्राद्धे प्रारम्भस्तेनैवोक्तः—

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥ इति

माधवीये ब्राह्मेऽपि—

श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत्।

मिताक्षरायां स्मृत्यन्तरे सद्यःशौचं प्रकृत्य—

यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्मणि। इति।

लिखितस्त्वादिगौडग्रन्थास्तु *निमन्त्रणोत्तरं कर्तुर्भोक्तुश्च नाशौचम्;

निमन्त्रणोत्तरं श्राद्धे प्रारम्भः स्यादिति स्मृतिः।

इति विष्णूक्तेः। यत्तु 'श्राद्धे पाकपरिक्रिया' इति, तद्दर्शश्राद्धविषयमित्याहुः। दातृगृहे मरणादौ ब्राह्मे

---

यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरम्।
कुशपुत्रकदाहेन तस्य स्यादवधारणा॥

इत्यादेः पित्रतिरिक्तविषयकत्वात्। प्रतिकृतिदाहानन्तरं पित्रादेरागमने तु वक्ष्यति *प्रारब्धे इति। सतिसप्तमी। *निमन्त्रणोत्तरमिति। तच्च यदि पूर्वेद्युः रात्रौ क्रियते तदोभयोस्तदन-

उक्तम्—

*भोजनार्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते ।

गृहे इति शेषः ।

यदा कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहिताः ।

आचम्य परकीयेन जलेन शुचयो द्विजाः ॥इति ।

अस्य श्राद्धविषयत्वं हेमाद्रिणोक्तम् । पृथ्वीचन्द्रोदयेऽप्येवम् । मम तु प्रतिभाति—इदं विवाहादिविषयं नतु श्राद्धविषयं, तत्पदाभावात् । 'विवाहोत्सवयज्ञेषु' इत्युपक्रम्य—

भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।

अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥

इति षट्त्रिंशन्मतैकवाक्यत्वात् ।

*निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।

इति पूर्वोक्तविरोधाच्च । श्राद्धे तु यद्यपि विष्णुना पाकोत्तरमाशौचाभाव उक्तस्तथापि *कर्तुरेव सः । भोक्तुर्दोषोऽस्त्येव,

अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ।

अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथञ्चन ॥

विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ॥

इति आथर्वणे ब्राह्मोक्तेः । *आदिशब्देनाशौचमु-

---

न्तरमाशौचं नास्तीत्यर्थः । एवं सद्योनिमन्त्रणेऽपि द्रष्टव्यम् । *भोजनार्धेति । भोजनम् अन्नम् । अर्धशब्दस्योत्तरानिर्देशादत्र खण्डमात्रमर्थो नतु समांशः । कश्चिदित्युक्त्याऽसपिण्डोऽपि । *निमन्त्रितेष्विति । एतद्वाक्येन निमन्त्रणोत्तरं विप्रस्याशौचाभावोक्तेः । *कर्तुरेवेति । एवकारेण गौडग्रन्थेऽप्यरुचिः स्फोटिता । *आदिशब्देनेति श्राद्धादिष्वित्यादिशब्देनेत्यर्थः । अविज्ञातो-

च्यते । तत्राह विष्णुः—'ब्राह्मणादीनामाशौचे यः सकृ-देवान्नमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचव्य-पगमे प्रायश्चित्तं कुर्यात्' इति । यत्तु—

देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ।

इति ब्राह्मं, तत् श्राद्धकालीनस्य निषेधकं न तदुत्तर-कालीनस्य । शुद्धिदीपस्तु निमन्त्रितेष्वित्यामश्राद्धप-रम्, भोजनार्थे त्वित्यादि त्वन्नश्राद्धपरमित्याह ।

*प्रा(१)यश्चित्तं त्वाह मार्कण्डेयः—

भुक्त्वा तु ब्राह्मणाशौचे चरेत्सांतपनं द्विजः ।

एतत्कामतः । अभ्यासे शङ्खः—

ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती भवेत् । इति ।

अज्ञानात्तु छागलेयः—

एकाहं च त्र्यहं पञ्चसप्तरात्रमभोजनम् ।
ततः शुचिर्भवेद्विप्रः पञ्चगव्यं पिबेन्नरः ॥

इति वर्णक्रमेणेदम् । अभ्यासे तु द्वैगुण्यमित्यादि मिताक्षरामाधवीयादौ ज्ञेयम् । मिताक्षरामाधवादौ तु श्राद्धे कर्तुर्भोक्तुश्च सर्वथा दोषाभाव उक्तः । आशौच-मध्ये श्राद्धदिनप्राप्तौ तु माधवीये कालादर्शे च ऋष्य-

---

त्तराशौचमध्ये पूर्वाशौचीयैकादशाहिकैकोद्दिष्टादिकरणेऽपि न पुन-रावृत्तिरित्यग्रे स्पष्टम् । *प्रायश्चित्तादिकमिति । आदिना त-दीयाऽऽशौचपरिग्रहः । *देये इति । देय इत्येतन्मृताह्वातिरिक्त-व्यावृत्त्यर्थम्,

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च ।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तते ॥

---

( १ ) अत्र यद्यपि टीकायां 'प्रायश्चित्तादिकम्' इति प्रतीकं दृश्यते तथापि सर्वादर्शपुस्तकानुसारी आदिशब्दरहित एव पाठोऽस्माभिः स्थापितः ।

भृङ्गः—

*दैवे पितॄणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्ध प्रदीयते ॥

श्राद्धचिन्तामणौ ज्योतिषे—

प्रतिसांवत्सरं श्राद्धमाशौचात्पतितं च यत् ।
मलमासेऽपि तत्कार्यमिति भागुरभिाषितम्॥

आशौचान्त्यदिनत्वेन निमित्तत्वादित्यर्थः । एतन्मा-(१)सिकाब्दिकपरं न दार्शिकादौ । अत एव सुदर्शन-भाष्ये अपरपक्षे पित्र्याणीति निगमात् कृष्णपक्षश्राद्धलो-पे प्रायश्चित्तमेव नतु गौणकाले करणम् । तच्चोपवासः,

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥

इति मनूक्तेरित्युक्तम् । आशौचे तु प्रायश्चित्तमपि न मुख्यकाले अनधिकारात् ।

आशौचान्तेऽसंभवे तु व्यासः—

*श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके ।

---

इति शङ्खोक्तेस्तेषामदेयत्वात् । मृताहश्राद्धं तु विप्रमात्रं कार्यमेव,

श्राद्धविघ्ने समुत्पन्ने मृताहेऽविदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ॥

इति लघुहारीतात् । मृताहे इत्यस्य समुत्पन्ने इत्यत्रा-प्यन्वयः, तथापदसद्भावात् । तथाचाऽऽशौचानन्तरादिने प्रमा-दाकरणे तदुत्तरामायां तत्रापि कथञ्चिदसम्भवे कृष्णायामेका-दश्यां तत्राप्यसम्भवे शुक्लायां तस्यां कार्यमिति । एवं सूतका-न्तरितं मासिकमपि आशौचानन्तरदिने एव । तत्राप्यन्तरितं तद-मावास्यायां कार्यम् । तदाह—*श्राद्धविघ्ने इति ।

---

(१) 'मासिकादिपरं ग०

अमावास्यां प्रकुर्यात्तु शुद्धावेके मनीषिणः ॥

*मासिके चाब्दिके त्वह्नीति च। अह्नि मृतसूतके संप्राप्ते इत्यन्वयः।

हेमाद्रौ षट्त्रिंशन्मतेऽपि—

*मासिके चाब्दिके त्वह्नि संप्राप्ते मृतसूतके।
वदन्ति शुद्धौ तत्कार्यं दर्शे वापि विचक्षणाः।

गोभिलः—

देये प्रत्याब्दिके श्राद्धे अन्तरा मृतसूतके।
आशौचानन्तरं कुर्यात्तन्मासेन्दुक्षये (१)तथा ॥

मरीचिः—

श्राद्धविघ्ने समुत्पन्नेऽप्यविज्ञाते मृतेऽहनि।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥

विशेषत इत्युक्तेः शुक्लैकादश्यामपि। *आशौचेतर-विघ्ने एतदिति माधवपृथ्वीचन्द्रौ। यत्त्वत्रिः—

तदहश्चेत्प्रदुष्येत केनचित्सूतकादिना।
सूतकानन्तरं कुर्यात्पुनस्तदहरेव च ॥ इति,

*तत् पूर्वकालाभावे ज्ञेयम्। एत*दाब्दिकेतरश्राद्धप-

---

अनयोर्वाक्ययोराशौचविघ्नेऽमावास्याविधानात्तदनुकल्पभूता कृष्णैकादशी तदनुकल्पभूता शुक्लैकादशी च ग्राह्या। अत्रापि "शुद्धावेके" इत्युक्तेश्च। *आशौचेतरेति। पाकासम्भवादिना आब्दिकविघ्ने तु तदुत्तरामावास्यायां कृष्णैकादश्यां वा तत्कार्यम्,

आपन्नोऽप्याब्दिकं नैव कुर्यादामेन कर्हिचित्।
अन्नेनेदममायां तु कृष्णे वा हरिवासरे ॥

इति कार्ष्णाजिनिवचनात्। इहापि शुक्लैकादशी ग्राह्या, कृष्णपक्षे विशेषत इति वचनात्। यत्तु तन्मासि कृष्णैकादश्यां कुर्यादिन्दुक्षयेऽपिवेति, तत्रामायामकरणे कृष्णैकादशी अनुकल्प इति बोध्यम्। *तदिति। पुनस्तदहरेव चेत्येतदित्यर्थः। पूर्वकालः शुक्लै-

---

(१) 'पिवा' छ०

रम् । यच्च देवलः--

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिंस्तिथौ तस्मिन्श्राद्धं कुर्यात्प्रयत्नतः॥इति।

तदपि *मासिकपरमिति मदनरत्ने हेमाद्रौ च। इदमपि पूर्वकालासंभवे । व्याध्यादौ विस्मरणे चैवं ज्ञेयम् ।

अथ भार्यारजोदर्शने तत्र दार्शिकमानेन कार्यम्,
*श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं *माससंवत्सरादृते ॥

---

कादृश्यन्तः । *आब्दिकेतरश्राद्धं अनुमासिकम् अन्यश्राद्धस्य पुनःकर्त्तव्यत्वाभावात् मासिकश्राद्धस्योत्तरस्य स्वातन्त्र्येण कर्त्तव्यत्वाच्च । तथाच तत्र चत्वारः काला इति भावः । *मासिकपरमिति । वर्षान्तसपिण्डनपक्षादौ मासिकानामेकोद्दिष्टविधिनैव कर्तव्यत्वात् । केचित्तु 'पुनस्तदहरेव च' इत्यत्रिवाक्यमेतदेकवाक्यम् । तथाच यदैकोद्दिष्टविधिना वार्षिकं क्रियते तदा देवलवाक्यं तद्विधिना कर्तव्यानुमासिकपरम् । तत्रापि चत्वारः कालाः । यदा च पार्वणविधिना तदाऽत्र्यादिवाक्यानीति । यदि तु व्याध्यादिनाऽशक्तस्तदा पुत्रादिना तद्दिने एवान्नेनाब्दिकं कारणीयम् । अनुपादेयकालानुरोधेनोपादेयकर्तृप्रतिनिधेर्न्याय्यत्वात् । आपन्नोऽपीत्यादिवचनं तु न व्याध्याद्यापद्विषयं, तदाऽऽमेनापि दुष्करतया आमनिषेधवशेन तस्य पाकासम्भवरूपापद्विषयकत्वात् । प्रतिनिधिनाप्यसम्भवे तु अमावास्यादिषु सामान्यवचनादित्यलम् । *श्राद्धविघ्ने पत्नीरजोदर्शनादौ ।

अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ।
सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते ॥

इत्युशनोवाक्याच्च । *माससंवत्सरात् मासिकसांवत्सरिकात् । आमाभावे हेमश्राद्धमपि, अन्नाभावे द्विजाभावे इति

इति हेमाद्रौ हारीतोक्तेः। व्याघ्रपादोऽपि—

आर्तवे देशकालानां विप्लवे समुपस्थिते।
आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि॥ इति।

दीपिकापि—दर्शे तु भार्यार्तवेऽप्यामश्राद्धविधिं प्रवासिविधुराद्याश्चाचरेयुर्द्विजाः। वस्तुतस्तु—

पाकाभावे द्विजातीनामामश्राद्धं विधीयते।

इति सुमन्तूक्तेः पाककर्त्रन्तरसत्त्वेऽन्नेनान्यथाऽऽमेनेति युक्तम्।

मासिकानि सपिण्डानि अमावास्या तथाऽब्दिकम्।
अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला॥

इति कालिकायां वचनाच्च। *कालादर्शे तु स्त्रिया रजोदर्शने दर्शश्राद्धं पञ्चमेऽहनीति पक्षान्तरमुक्तम्। पारिजातेऽप्येवम्। एवं महालययुगादावपि।

*आब्दिकं तु रजोदर्शनेऽपि तद्दिने एव कार्यम्,

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनाग्निकः।
*अन्नेनैवाब्दिकं कुर्याद्धेम्ना वाऽऽमेन न क्वचित्॥

इति माधवीये लौगाक्षिस्मृतेः। मरीचिरपि—

अ(१)नाग्निकः प्रवासी च यस्य भार्या रजस्वला।
*आमश्राद्धं प्रकुर्वीत न तत्कुर्यान्मृतेऽहनि॥

---

प्रागुक्तवाक्यात्। *कालादर्शे त्विति। तुना दर्शादिश्राद्धस्य नाब्दिकश्राद्धतुल्यता। आशौचमध्ये दर्शपाते सर्वसंमततल्लोपानुपपत्तेः तदनन्तरं सुकरत्वादित्यरुचिः सूचिता। *आब्दिकं त्विति। आब्दिकं तद्दिने वा रजोनिवृत्तौ पञ्चमादिने वा कार्यमिति मतद्वयम्। तत्र प्रथममतमेतत्। *अन्नेनैवेति। एतेन तद्दिन एवेति ज्ञायते। अन्यथा पुष्पवात्स्विति वैयर्थ्यात्। *आमश्राद्धमिति।

---

(१) 'अनग्निश्च' क० छ०।

कार्ष्णाजिनिः—

*आपन्नोऽप्याब्दिकं नैव कुर्यादामेन कुत्रचित् ।
अन्नेन *तद(१)माया तु कृष्णे वा हरिवासरे ॥

प्रयोगपारिजाते—

रजस्वलायां भार्यायां क्षयाहं यः परित्यजेत् ।
स वै नरकमाप्नोति यावदाभूतसंप्लवम् ॥
मासिकानि *स(२)पिण्डानि अमावास्या तथाब्दिकम् ।
अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला ॥

देवयाज्ञिकनिबन्धेऽपि—

भर्तुः श्राद्धं पञ्चमेऽह्नि कुर्याद्भार्या रजस्वला ।
पुत्रः पित्रोः प्रकुर्वीत मृताहनि *शुचिर्यतः ॥

कालादर्शेऽपि—

रजस्वलाङ्गनोऽनग्निर्विदेशस्थोऽथवाब्दिके ।
दर्शादाविव नामेन त्वन्नेन श्राद्धमाचरेत ॥

अन्यत्रापि—

विदेशको वा विगताग्निको वा रजस्वलायामपि धर्मपत्न्याम् ।
श्राद्धं मृताहे विदधीत पाकैर्नामेन हेम्ना नतु पञ्चमेऽह्नि ॥

एवं मासिकेऽपि । यत्तु मरीचिः—

आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला ।

---

तदाब्दिकमामश्राद्धं न कुर्यादित्यर्थः । किन्त्वन्नेनैवेत्याशयः । *आपन्नोऽपीति । भार्यारजोदर्शनादिना पाकाभाव आपत् । *तदमायान्त्विति । कालान्तरविधानात्पञ्चमाहोरूपकालाविधानाच्च । *सपिण्डानीति । सपिण्डनसहितानीत्यर्थः । *शुचिर्यत इति । भार्याचेद्रजस्वला तदापि स्वयं शुचिरेवेत्यर्थः । श्लो-

---

(१) 'तदमायां वा' ग० ।

(२) यद्यप्यत्र सर्वपुस्तकेषु 'सापिण्डं च' इति पाठो दृश्यते तथाप्ययं टीकानुरोधेन स्थापित इत्यवधेयम् ।

पञ्चमेऽहनि तच्छ्राद्धं न तत्कुर्यान्मृतेऽहनि ॥

माधवीये—

श्राद्धं तदा न कर्तव्यं कर्तव्यं पञ्चमेऽहनि ।

इत्युत्तरार्धं, तदपुत्रस्त्रीकर्तृकश्राद्धविषयम्;

अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके ।

रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि ॥

इति श्लोकगौतमोक्तेः ।

दैवे कर्माणि(१)पित्र्ये च पञ्चमेऽहनि शुध्यति ।

इति प्रभासखण्डाच्च । नन्वशुचित्वादेव तत्र पञ्चमेऽह-न्यर्थात् श्राद्धं प्राप्तमिति वचनं व्यर्थम् ? मैवम्,

गर्भिणीसूतिकादिश्च कुमारी वा(२)ऽथ रोगिणी ।

यदा शुद्धा तदाऽन्येन कारयेत्प्रयता स्वयम् ॥

इति हेमाद्रौ भविष्योक्तेः । 'अनुपनीतस्त्रीशूद्राश्च श्रा-द्धमृत्विजा कारयेयुः स्वयं वाऽमन्त्रकं कुर्युः' इति स्मृ-त्यर्थसाराच्च*न्यद्वारा करणनिवृत्त्यर्थत्वात्तस्य, *त्वदुक्त-दिशा आशौचानन्तरं श्राद्धकर्तव्यताऽवेदकवाक्यवै-यर्थ्याच्च । अतः प्रा(३)गुक्तमरीच्युक्तेः पत्नी पञ्चमेऽह-नीति युक्तम् । यत्तु—

सप्ताहात्पितृदेवानां भवेद्योग्या व्रतार्चने । इति,

त*द्रजोनिवृत्तिपरामिति हेमाद्रिभिन्नसर्वनिबन्ध-सिद्धान्तः ।

---

कगौतमवाक्यस्य वैयर्थ्यमाशङ्क्याह—*अन्येति । प्रतिनिधिद्वारा करणनिवृत्त्यर्थत्वानुपगमे बाधकमाह—*त्वदुक्तेति । अस्माकं तु नाऽऽदृशकरणनिवृत्त्यर्थकतया न वैयर्थ्यमित्यर्थः । *रज इति । पञ्चमेऽहनीत्यपि रजोनिवृत्तिपरमेव,

---

(१) 'पित्र्ये वा' ग० । (२) 'वाऽन्य' ग० ।

(३) 'प्रागुक्तमरीच्युक्तेः' नास्ति छ० ।

*हेमाद्रिस्तु श्राद्धादौ स्त्रिया सहैवाधिकारात्तस्यां रजोदुष्टायां तन्निवृत्तेरेकभार्येण पञ्चमेऽहनि कार्यं *प्रागुक्तमरीच्युक्तेः। भार्यान्तरसत्त्वे तु *पुष्पवत्स्वपीति वचनात्तद्दिने एवेत्याह। दीपिकापि—"भार्यतौ सति पञ्चमे च दिवसे स्याद्वार्षिकं मासिकं पक्वान्नैर्बहुभार्यकस्त्वधिकृते पत्न्यन्तरे तिष्ठति। कुर्यात्तद्दिनयं स्वमुख्यादिवसे' इति। तच्चिन्त्यम्, सहाधिकारः सहत्वश्रुत्या वा एकफलभाक्त्वेन वा पाककर्तृत्वेन वा? नाद्यः, *तदभावात्। "पाणिग्रहणाद्धि सहत्वं कर्मसु" इत्यस्या *ग्निसाध्यक-

---

साध्वाचारा न तावत्स्यात्स्नातापि स्त्री रजस्वला।
यावत्प्रवर्तमानं हि रजो नैव निवर्तते॥

इति वचनात्। द्वितीयं पक्षमाह—*हेमाद्रिस्त्विति। *प्रागुक्तेति।

आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला।
पञ्चमेऽहनि तच्छ्राद्धं न तत्कुर्यान्मृतेऽहनि॥

इति मरीचिः। यथा "न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम्" इत्यत्र गिरागिरेति निषिध्य गिरापदकार्ये इरापदं विधीयते निषेधस्त्वनुवादः "शत्रुवदादेशः" इति न्यायात्। तथा मृताहं निषिध्य पञ्चममहो विधीयते। मृताहनिषेधस्त्वनुवादः। यस्य मृतस्य भार्या रजस्वलेत्यर्थे वाक्यवैयर्थ्यात्। नच प्रतिनिधिद्वारा करणनिवृत्त्यर्थत्वेन सार्थक्यं सुवचम्। प्रतिनिधिद्वारा व्रतादेरपि आरम्भाभावेन तत्रानुवर्तनवदिहापि प्रथमतः कदाचिदनुवृत्तिरेव प्रसज्येत। एवञ्च तत्र प्रथमाब्दिकस्य पञ्चमेऽहनि सिद्धौ तद्वदेव तदन्यस्यापि तत्रैव सिद्धेः प्रतिनिधिना करणस्याप्रसक्तेस्तन्निवृत्त्यर्थकत्वासम्भवात्। *पुष्पवत्स्वपीति। रजोदर्शनेऽप्यनेनाब्दिकस्य कर्तव्यत्वमुच्यते। तच्च भार्यान्तरसत्त्वेनोपपाद्यमिति भावः। *तदभावात्। सहत्वश्रुत्यभावात्। *अग्निसाध्येति। आहवनीयत्वादि-

**र्मविषयत्वात्। *आब्दिकस्य च निरग्नेरपि पाकेनैवोक्तेः स्मार्ताग्निसाध्यत्वानियमात् *'तामपरुध्य' इतिवत्(१)तु 'पुष्पवत्स्वपि' इति पूर्वोक्तवचनसत्त्वाच्च। कथं च भार्यान्तरसत्त्वेऽधिकारः 'ज्येष्ठया न विनेतरा' इति नियमात्। ज्येष्ठापरत्वे च तेनैव सिद्धेर्वचनवैयर्थ्यात्। न द्वितीयः, अविभक्तभ्रातृष्वेकस्याऽशुचित्वेऽन्यस्यानधिकारापत्तेः। न तृतीयः, प्रवासनिर्देशस्तूतिकारोगिण्यादिष्वव्यधिकरणापत्तेः।**

---

कामनायां यो दम्पत्योरधिकारः स एव सहाधिकारः। क्लृप्तपतिविद्यामात्रादेव कर्मनिर्वाहे तस्या अक्लृप्तविद्याकल्पनानुपगमलाघवात्। तदकामनायान्तु न सहाधिकारः। न चैवमाज्यावेक्षणादौ तस्या अप्रवृत्त्यापत्तिः। भर्तृमात्राधिकारिके तत्र ऋत्विजामिव तस्यास्तत्र केवलकर्तृत्वोपगमात्। एवमाहवनीयादिसाध्येषु दर्शपूर्णमासादिष्वपि पत्न्याः फलकामनायामेवाधिकारः, इतरथा च पतिमात्रस्यैवेति। न चैवं भर्तुरकामनायां स्त्रिया अधिकारापत्तिः। अपूर्वविद्याकल्पनागौरवात्। प्रकृते च कामनासत्त्वेपि भर्तुः पित्रादि श्राद्धे पत्न्या नाधिकारः।

प्रतिसम्वत्सरं कार्यं मातापित्रोर्मृतेऽहनि।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि॥

इति वाक्यं समंबन्धिकपितृमात्रादिपदगर्भवचनसां तां प्रति प्रवर्त्तयितुमशक्यत्वात्। कामनाविरहे तु सुतराम्। एवञ्च पत्नीसाहित्यं गलितमेव। "पाणिग्रहणात्" इति वाक्यं च सिद्धदर्शपूर्णमासादिसहाधिकारानुवादकमेव, नत्वपूर्वतद्बोधकं, मानाभावादिति भावः। नन्वौपासनेनैवाग्निसिद्धेः श्राद्धस्याप्यग्निसाध्यत्वमत आह—*आब्दिकस्येति। *तामपरुध्येति। तामनालम्भुकां

(१) 'वत् 'पुष्पवत्स्वपि' इति' नास्ति ग०।

# काशीसंस्कृतसीरीज़–पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परंतु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।


तत्र मुद्रितग्रन्थनामानि । मूल्यम् ।

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं१)रु०२—८

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः–प्रथम भाग अव्ययीभावः । रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमासिपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुण निरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०

७ पञ्चकिरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया–तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ )रु० ०—८

८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । रु० ०—८

९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध–शौच–स्नान–भोजन–कल्पसहितम् । ( कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य–महीधरभाष्य–मंगलभाष्य–निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि-श्रीकालिदासवि० । सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च । ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम्-मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । ( कर्मकाण्डं ) रु० १—०

२१ सप्तपाठि-श्रीशिवमाहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषा बिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः—भाषाटीकासहितः ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः ( टिप्पणीसमलंकृतः ) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। ( कर्मकाण्डवि० ३ ) रु० ०—४

२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः । अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलालठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् । ( काव्यवि० ३ ) रु० ०—१२

३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहोपाध्याय वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः (न्यायं४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ४) रु० ३—०

३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि—गोतमादिचरितसम्वलितबृहत्भूमिकासहितम् । (न्यायं वि० ५ ) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १—२—३—४ )(वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर—वामन—जयादित्यविनिर्मिता । (व्याकरणं ५) रु० ६—०

३८ प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः । टिप्पण्या च संयोजितः । (व्याकरणं ६) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवादसमेतः । (वेदान्तं ५) रु० २—०

४० श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः । (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः—मेदिनीकारविरचितः । (कोशं १) रु० १—८

४२ मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम् ( भाग१—२ ) (मीमांसा ३) रु० १०—०

४३ न्यायदर्शनम् । श्रीगोतममुनीप्रणीतम् । श्रीवात्स्यायनमुनीप्रणीतभाष्यसहितम् । श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम् । टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दानमयूखः । विद्वद्वरश्रीनीलकण्ठभट्टविरचितः । (धर्मशास्त्रं१) रु० १—८

September 1928.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

369

कमलाकरभट्टविरचितो

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

उरई गवर्न्मेन्ट हाईस्कूल संस्कृतभाषाध्यापकेन पं० व्याकरणोपाध्याय नेने-इत्युपाख्यगोपालशास्त्रिणा तदीयगुरुवर-म० म० पं० पर्वतीयनित्यानन्दपन्तप्रदर्शितरीतिमनुसृत्य संशोधितष्टिप्पण्या परिष्कृतश्च ।

The

NIRṆAYASINDHU,

of Kamalâkara Bhaṭṭa

With Commentary by Kṛṣṇam Bhaṭṭa.

Edited with Notes by

Gopâla S'âstrī Nene Vyâkaraṇopâdhyâya,

Sanskrit Teacher, Govt. High School, Orai.

FASCICULUS XVIII–१८.

*PRINTED-PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1927.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तबकः—३६९


*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ।

इति देवलोक्तावात्मनेपदात्स्वस्य बान्धवानां च पाककर्तृत्वोक्त्या विरोधाच्च ।

अ(१)थ--

ततस्तानि पपाचाशु सीता जनकनन्दिनी ।

इति पाद्मादिलिङ्गात्प्राशस्त्यं भार्यापाकस्योच्यते । न तत्कस्याप्यनिष्टम् । तेनैतद्वचनं युक्त्याद्यभावात् पूर्वोक्तवचोविरोधाच्च यत्किंचिदेव । यदपि-

श्राद्धीयाहनि संप्राप्ते यस्य भार्या रजस्वला ।

श्राद्धं तत्र न कर्तव्यं कर्तव्यं पञ्चमेऽहनि ॥

इति श्लोकगौतमपाठोऽन्यथा दर्शितः । माधवीये च तद्वशात्पक्षान्तरमुक्तम् । तेनापि नाभिप्रेतार्थसिद्धिः, यस्य प्रेतस्येत्यर्थात् । तेनात्र हेमाद्रिर्बभ्रामेति *बहुवक्तव्येपि नोच्यते ॥

अथान्वारोहणे निर्णयः । लौगाक्षिः-

*मृताहनि *समासेन पिण्डनिर्वपणं पृथक् ।

गृहान्तरे संस्थाप्य प्रारब्धश्रौतं निर्वाह्यं तथाऽऽब्दिकश्राद्धमपि निर्वाह्यमित्यर्थः । *बहुवक्तव्येऽपीति । तच्च विवेचनादौ स्पष्टम् । विस्तरभीत्याऽस्माभिरपि न लिख्यते । अत्र यथासंप्रदायं व्यवस्थेति रहस्यम् । तस्मात्—

मृताहन्याब्दिकं केचित्पञ्चमेऽन्हि तथा परे ।

मतद्वयं प्रमाणत्वाल्लोकैराद्रियतेऽधुना ॥

*मृताहनीति । यत्र पत्नी भर्तृचित्यामन्वारूढा तत्र भर्तुः तस्याश्च [illegible] मरणे तत्तत्तिथौ तस्य तस्याश्च पृथगेव वार्षिकं यदा च तिथ्यैक्यं तदा यद्यप्येकदेशकालकर्तृकत्वेन गृह्यमाणाविशेष-

(१) 'अथ' नास्ति ग० ।

नवश्राद्धं च दम्पत्योरन्वारोहण एव तु ॥

समासेन तन्त्रेण द्विपितृकश्राद्धवद्द्वयोरेकः पिण्डो विप्रश्च । *पिण्डशब्दः श्राद्धपरः । (१)नवश्राद्धं पृथगिति हेमाद्रिपृथ्वीचन्द्रौ । *अत्र मृताहनीत्ये*कत्वात् दिनभेदे दिनैक्ये वा मृततिथेरेकत्वे *कालैक्यं कर्त्रैक्यं पाकैक्यं च ।

*एकचित्याधिरोहे तु तिथिरेकैव जायते ।

---

त्वाद्देवताभेदेन पृथक्क्रियमाणयोरपि प्रधानयोरङ्गानां च तन्त्रं प्राप्नोति, तथाऽपि "एककाले गतासूनां बहूनाम्" इत्युत्तरवाक्यादैवादेकतिथौ मृतानामितरेषामिव पाकमात्रतन्त्रतोक्तेः पृथगेव दम्पत्योः श्राद्धं प्राप्नोति । तत्र तद्बाधेन प्रकारविशेषोऽनेन विधीयते । *समासेनेति । यथा द्विपितृकः पितृद्वयोद्देशेन एकं पिण्डं ददाति "एकपिण्डे द्वावुपलक्षयेत्" इति वचनात् । तथा दम्पत्योः स्त्रियोऽन्वारोहणे द्वयोद्देशेनैकं पिण्डं दद्यात् । अत एव ब्राह्मणोऽप्येक एव द्वयोरित्यर्थः । मृततिथेरेकत्वे तन्त्रवदेव नवश्राद्धस्यापि प्राग्वत्तन्त्रे प्राप्ते पार्थक्यमात्रं विधीयत इति भावः । *पिण्डशब्दः पिण्डनिर्वपणशब्दः । नच तस्य पिण्डश्राद्धं तत्समास एवार्थोऽस्तु, नवश्राद्धमिति श्राद्धपदसमभिव्याहारेणास्यापि तत्परत्वात् । नन्वेवं तिथिभेदेऽपि समासप्रसङ्गो वाचनिकत्वादत आह—*अत्रेत्यादि पृथगेवेत्यन्तम् । *एकत्वादिति । एकतिथिमृताहश्राद्धत्वमुद्देश्यतावच्छेदकं, तिथिभेद एकाहाप्राप्तेः साहित्यविधानायोगात् । तदवच्छिन्ने च समासो विधीयते । तस्याहोरात्रभेदे बाधापत्त्या अहपदं तिथिपरं स्वीकार्यम् । *कालैक्यमिति । समासविधानमन्यथात्वया प्रधानं तन्त्रार्थम् । तच्च कर्तृभेदे पाकभेदे वा न सम्भवति । अतस्तदैक्यमप्युक्तम् । *एकचित्तीति । उक्तरीत्या

---

(१) 'न च श्राद्धं' ग०

एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनी ॥

इति स्मृत्यन्तराच्च । अन्त्येष्टिपद्धतौ भट्टैरप्युदाहृतम्—

अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया ।
पिण्डदानक्रिया तद्वच्छ्राद्धं प्रत्याब्दिकं तथा ॥
नवश्राद्धानि सर्वाणि सपिण्डीकरणं पृथक् ।
एक एव वृषोत्सर्गो गौरेका तत्र दीयते ॥ इति ।

तिथिभेदे तु वार्षिकं पृथगेव । *तथा वार्षिके समासविधानादन्यत्र सर्वत्र पृथक्त्वे प्राप्ते नवश्राद्धमेव पृथगिति *परिसंख्यया*ऽन्यत्र पृथगुक्तेष्वपि वार्षिकषोडशश्राद्धतीर्थसापिण्डानान्वष्टक्यादिषु समास एवेति मदनपारिजातनिर्णयामृतादयः । अतः समासविधिबलात् ज्येष्ठपुत्रस्य कर्तृत्वे सपत्नमातुरन्वारोहणे तत्पुत्रे सत्यपि तद्वार्षिकादिकमविभक्तः सापत्नपुत्र एव ज्येष्ठः कुर्यान्नौरसः । वक्ष्यमाणपृथ्वीचन्द्रादिमते तु औरस एव मातुः पृथक्कुर्यात् । एवं बह्वीष्वपि मातृषु ज्ञेयम् । त्रिस्थलीसेतौ पितामहचरणैरप्येव*मुक्तम् । यत्तु गार्ग्यः—

एकचित्यां समारूढौ दंपती निधनं गतौ ।

---

भिन्नतिथावन्वारूढापरत्वासम्भवात् । समानकालकर्तृककर्मणामङ्गतन्त्रस्य वक्ष्यमाणरीत्या सिद्धत्वात् । प्रधानतन्त्रं समासपदार्थः । तत्र संवादमाह । अत्र मृताहनीत्युक्तेः समासविधानमाब्दिकमात्रविषयमिति मतं निरसितुं मृताहनि समासविधाने षोडशश्राद्धादौ समासो न विहितः स्यादिति तत्र तं प्रापयितुं चाह—*तथेति । *परिसंख्ययेति । अस्य वार्षिकेत्यादिनाऽन्वयः । *अन्यत्रेति । नवश्राद्धभिन्ने पृथक्त्वेऽपीत्यर्थः । एकदिने नवश्राद्धभिन्ने वार्षिकादौ समास एवेत्यर्थः । *एवमुक्तमिति । औरस एव मातुराब्दिकं पृथक्कुर्यात् सपत्नीपुत्रे तन्निरूपितपुत्रत्वाभावात्,

***पृथक् श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक् ॥**

**ओदनं पिण्डः । त*न्नवश्राद्धविषयम् । यत्तु भृगुः—**

***या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता ।**

**तां मृताहनि संप्राप्ते पृथक्पिण्डे नियोजयेत् ॥**

**प्रत्यब्दं च नवश्राद्धं युगपत्तु (१)समापयेत् ॥**

**तच्चैषां वार्षिक*मेकोद्दिष्टमुक्तं तद्विषयम् । *प्रत्यब्दं**

---

मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः ।

इति वाक्यात् । एतन्मते ज्येष्ठेन पितुरेव केवलं पितामहादिभिः सपिण्डनं कार्यं कनिष्ठेन तु मातुः पितृसपिण्डनादिने दिनान्तरे वा पृथक्सपिण्डनं कार्यम् । तच्चोभयथाऽपि पितृसपिण्डनोत्तरमेव, पितृभावापन्नसंयोजनसम्भवे प्रेतभावापन्नसंयोजने मानाभावात् । तच्च पित्रैकेनैव पित्रादित्रयेणेति मतद्वयम् । ***पृथक् श्राद्धमिति** । समासविधानेन विरोध इत्यभिमानः । ***नवश्राद्धेति** । पृथक् नवश्राद्धमिति लौगाक्षिवाक्यात् । ***या समारोहणमिति** । पृथक्पिण्डोक्त्या विरोध इत्यभिमानः । ***एकोद्दिष्टमिति** । एकोद्दिष्टे समासविधानाभावात् । मृताहनि प्रत्यब्दं चेत्यस्य पौनरुक्त्यमाशङ्क्याह—*प्रत्यब्दमिति । तथाच एकोद्दिष्टमाचरतां प्रत्यब्दं मृताहनि पृथक् द्वयोः पिण्ड इत्यर्थः । वस्तुतस्तु लौगाक्षिणैव दम्पत्योः समासो विधीयते विधेयस्य समासस्यानेकापेक्षत्वाद्दम्पत्योरिति तद्विशेषणं विवक्षितमेव । नवश्राद्धं च पृथक् । चस्त्वर्थे । नवश्राद्धं त्वन्वारोहणे पृथगेव कुर्यात् । पृथक्त्वं च [illegible] एवेति प्रधानमात्रभेदः । अङ्गानां च तन्त्रमित्येव । तदभिप्रायेण नवश्राद्धं च युगपत्तु समापयेदिति । समाप्तिग्रहणमुपक्रमस्याप्युपलक्षणम् । उपक्रमयौगपद्यं विना समाप्तियौगपद्यासम्भवात् । नच मृताहश्राद्धमात्रे समासे विहिते नव-

---

(१) 'समाचरेत्' ग०

च मृताहनीत्यन्वयः । नवश्राद्धं युगपदिति *दर्शे वर्ग-द्वयवदेकतन्त्रेण पृथगित्यर्थमाह हेमाद्रिः । *एतन्मृत-तिथेर्भेदविषयमिति पृथ्वीचन्द्रनिर्णयामृताद्याः । देवया-ज्ञिकोऽप्येवम् । *पराशरमाधवस्तु–*'गार्ग्यभृग्वादिवच-ना*ल्लौगाक्षिवाक्ये समासेन *पाकादितन्त्रैक्येन दर्शे

---

श्राद्धे तत्प्राप्त्यभावेन तद्विपर्ययात्मकं पृथक्त्वं कथं विधीयते इति वाच्यं, तस्यानुवादत्वात् । अत एव नवश्राद्धग्रहणमवयवपिण्डषोडश-श्राद्धादीनामुपलक्षणमिति । तदेतदभिप्रेत्याह—*दर्शे इति । एकतन्त्रेणोपक्रमसमाप्त्योर्यौगपद्येन प्रधानं पृथगित्यर्थः । *एतत् पृथक्पिण्डे नियोजनम् । मृततिथ्येकत्वे तु एक एव पिण्ड इति स्मर्त्तव्यम् । *पराशरमाधवस्तु इति । पक्षान्तरमिति शेषा-दिति । पक्षान्तरमाहेत्यर्थः । *गार्ग्येति ।

> एकचित्यां समारूढौ दम्पती निधनं गतौ ।
> पृथक् श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक् ॥

इति गार्ग्यम् ।

> एककाले गतासूनां बहूनामथवा द्वयोः ।
> तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक् पृथक् ॥

इति भृगुः । आदिना—

> एकचित्यां समारूढौ म्रियेते दम्पती यदि ।
> तन्त्रेण श्रपणं कुर्यात्पृथक्पिण्डं समापयेत् ॥

इत्यादिपरिग्रहः । प्रथमे ओदनमोदनपिण्डाः । तृतीये श्राद्धं ब्राह्मणभोजनम् । तेन ब्राह्मणभोजनपिण्डदानात्मकं प्रधानमात्रं भेदेन कार्यम् । अङ्गानां तु दर्शादौ पितृमातामहपार्वणद्वयवत्तन्त्र-मित्यर्थः । अत्र पक्षे लौगाक्षिवाक्यैकवाक्यतामप्याह–*लौगा-क्षिवाक्ये इति । अयमर्थः–"पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेत" इति वाक्यद्वये द्वित्वैककाल-

वर्गद्वयवत्पृथक्श्राद्धं (१)कुर्यात् नवश्राद्धं च तथा इत्याह ।

*पृथ्वीचन्द्रचन्द्रिकादयस्तु–'द्वयोरेकपिण्डदानं लौगाक्षिवचनं चा*पद्विषयम् । पृथक्पिण्डदानं तु मुख्यः कल्पः' । तदाह वृद्धपराशरः—

आरुह्य भर्तुश्चितिमङ्गना या प्राप्नोति मृत्युं खलु सत्त्वयुक्ता ।
एकादशाहे तु तयोर्विधेयं श्राद्धं पृथक् स्वर्गमपेक्ष्य सद्भिः ॥

---

तैकवचनस्योपादेयगतसाहित्यस्य च विवक्षितत्वात्तृतीयान्तेन साङ्गभावनोपादानादेकस्यां पौर्णमास्यामेकस्याममावास्यायां च साङ्गानां सहितानां त्रयाणां प्रधानानां विधानेऽपि स्वरूपतः प्रधाने साहित्यासम्भवादङ्गे तत्पर्यवसानवदिहापि लौगाक्षिणा विहितः समासः प्रधानेऽसम्भवन् अङ्गे पाकादौ पर्यवस्यति । यत्र प्रधानानां प्रयोगप्राशुभावभङ्गकल्पने विशेषतो नियामकमुपलभ्यते, तत्रैव केवलाङ्गतन्त्रोपगमात् । प्रकृते च गार्ग्यादिवचनसत्त्वे एव लौगाक्षिवाक्यसत्त्वात् । अत एव चित्रासौर्यादावङ्गतन्त्रमपि न, प्रधानभेदेन प्रयोगप्राशुभावस्योभयत्रापि भङ्गात् । संक्रान्तियुगादिमन्वादिव्यतीपातश्राद्धेषु तु अङ्गानां च तन्त्रमेव भिन्नप्रयोगविधिपरिगृहीतत्वेऽपि अगृह्यमाणविशेषात् । यत्राङ्गानां बहुत्वाल्पत्वकृतविशेषग्रहणं तत्र महताऽल्पस्य प्रसङ्गसिद्धिः । यथाऽमाश्राद्धेन संक्रान्तियुगादिव्यतीपातश्राद्धानाम् । सङ्कल्पवाक्ये च तन्त्रस्थले तन्त्रिणां सर्वेषामुल्लेखः, प्रसङ्गे तु तन्त्रिणोऽमाश्राद्धस्यैव न तु प्रसङ्गिनः संक्रान्त्यादिश्राद्धस्येत्यलं प्रसक्तानुप्रसक्तेन । *पाकादीति । आदिना विश्वेदेवादिग्रहः । पृथक् श्राद्धं ब्राह्मणपिण्डयोर्भेदः । एतन्मते च प्रधानसमासपक्षो नास्ति । ये तु पुनः पक्षद्वयं वदन्ति तदनुसारेणाह–*पृथ्वीचन्द्रेत्यादि । प्रधानसमासपक्षानुपगमे लौगाक्ष्युक्तं नवश्राद्धपार्थक्यं न सङ्गच्छते,

---

(१) 'कुर्यात्' नास्ति क० ख० ।

एकत्वमिच्छन्ति मतिप्रहीणा एकादशाहादिषु ये नृनार्योः ।
ते स्वर्गमार्गं विनिहत्य कुर्युः स्त्रीसत्वघातान्नरकाधिवासम् ॥

भर्त्रा सह मृता या तु नाकलोकमभीप्सती ।
सार्हेच्छ्राद्धं पृथक्पिण्डान् नैकत्वं तु स्मृतं तयोः ॥
पृथगेव हि कर्तव्यं श्राद्धमेकादशाहिकम् ।
यानि श्राद्धानि सर्वाणि तान्युक्तानि पृथक्पृथक् ॥ इति ।

विश्वादर्शेऽपि—

मातुर्गयाष्टकावृद्धिमृताहेषु महालये ।
श्राद्धं कुर्यात्पृथग्दैवं तन्त्रं चानुगतावपि ॥
एकचित्यां समारुह्य मृतयोरेकबर्हिषि ।
पित्रोः पिण्डान्पृथग्दद्यात्पिण्डं त्वापत्सु तत्सुतः ॥

इत्यग्निस्मृतेरित्याहुः । यत्तु षट्त्रिंशन्मते—

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।
न पृथक् पिण्डदानं तु तस्मात्पत्नीषु विद्यते ॥ इति,

तद्दर्शादिपरम् । चन्द्रप्रकाशेऽपि--

एकचित्यां समारूढौ दंपती प्रमृतौ यदि ।
पृथक् श्राद्धं प्रकुर्वीत पत्युरेव क्षयेऽहनि ॥
*मृतानामपि भृत्यानां भार्याणां पतिना सह ।
*पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ॥
तन्त्रेण श्रपणं कृत्वा श्राद्धं स्वामिक्षयेऽहनि ।
तृतीयस्य ततः कुर्यात्संनिपातेष्वयं क्रमः ॥ इति ।

सहगमने सर्वत्र श्राद्धार्थमेकपाक इत्याह मदन-

---

तस्य सहजतः सिद्धत्वादिति । तत्पक्षमुपेत्येदम् । *आपद्विषय-मिति । नवश्राद्धं युगपत्समापयेदिति चापत्परमेवेति बोध्यम् । प्रसङ्गादाह—*मृतानामपीति । *पूर्वकस्येति ।

एककाले गतासूनां बहूनामथवा द्वयोः ।

रत्ने प्रचेताः—

एकचित्यां समारूढौ म्रियेते दम्पती यदि ।
तन्त्रेण श्रपणं कुर्यात्पृथक् पिण्डं (१)समावपेत् ॥

पृथ्वीचन्द्रोदयेऽप्येवम् । अत्र भर्तुराशौचमध्येऽन्यदिने (२)ऽनुगमनेन स्त्रीमरणे पतिमरणदिनगणनयाशौचपिण्डदानैकादशाहादि कार्यम् । नात्र पक्षिणीवृद्धिः,

मृतं पतिमनुव्रज्य पत्नी चेदनलं गता ।
न तत्र पक्षिणी कार्या पैतृकादेव शुद्ध्यति ॥
पुत्रोऽन्यो वाग्निदस्तस्यास्तावदेवाशुचिस्तयोः ।
नवश्राद्धं सपिण्डं च युगपत्तु समापयेत् ॥

इति षडशीतिमतात् ।

यदा नारी विशेदग्निं प्रियस्य प्रियवाञ्छया ।
तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हि ॥

इति लघुहारीतोक्तेश्च । भर्त्राशौचोत्तरमन्वारोहणे तु त्र्यहमाशौचम् ।

ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शास्त्रतः ॥

इति ब्राह्मोक्तेरिति पृथ्वीचन्द्रापरार्कौ । एतदन्वारोहणे एव नत्वेकचितौ । ऋग्वेदवादः 'इमा नारीरविधवाः' इत्यादिः । एतत्सवर्णापरमित्यन्ये ।

स्मार्तगौडास्तु—

देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् ।

---

तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक् पृथक् ॥

इति पूर्वश्लोकः । इदं च भृगोर्वाक्यद्वयम् । अन्येषामपि एककाले मृतानां सांवत्सरिकाणां क्रमस्य प्रयोगभेदाख्यस्य पृथ-

---

(१) 'समाचरेत्' क० छ०। (२) 'ऽनुगमनेन' नास्ति ग०।

इत्युपक्रम्य, ब्राह्मे–'त्र्यहाशौचे तु निर्वृत्ते' इत्युक्ते-र्भर्त्रांशौचोत्तरमन्वारोहणे त्र्यहः, सहगमने तु पूर्णं दशाहादि । पिण्डास्तु दशापि सहैव । तथाच जनकशूलपाणिशुद्धितत्त्वधृतव्यासः–

संस्थितं पतिमालिङ्ग्य प्रविशेद्या हुताशनम् ।
तस्याः पिण्डादिकं ज्ञेयं क्रमशः पतिपिण्डवत् ॥
अन्विता पिण्डदानं तु यथा भर्तुर्दिनेदिने ।
त(१)दन्वारोहिणी यस्मात्तस्मात्सा नात्मघातिनी ॥

इति विष्णूक्तेश्च । पृथक्चितौ तु भर्त्रांशौचमध्ये तदूर्ध्वं वा सत्यां त्र्यहेण दशपिण्डाः,

अन्वितायाः प्रदातव्या दशपिण्डास्त्र्यहेण तु ।
स्वाम्याशौचे व्यतीते तु तस्याः श्राद्धं प्रदीयते ॥

इति तत्रैव पैठीनसिस्मृतेः । भर्त्रांशौचोत्तरं मृतौ तु चतुर्थेऽह्नि श्राद्धम् । शूलपाणिना त्विदमाग्निपुराणीयत्वेनोक्तम्–युद्धहतस्य सद्यःशौचे त्वन्वारोहणे त्रिरात्रम् । एकचितौ तु 'संस्थितं पतिम्' इति प्रागुक्तव्यासोक्तेः सद्यःशौचमित्याहुः । अन्यसपिण्डाशौचमध्ये वि(२)देशमृतान्वारोहणं त्वनाशङ्क्यमेव, शुचितायाः अङ्गत्वात् । अन्ये तु रजोवत्याः सूतिकायाश्चानुगमननिषेधादितराशौचस्यानिषेधः । अन्यथा प्रत्यक्षभर्तृमरणे का गतिरित्याहुः । तन्मूलवचनं विना चिन्त्यमेव । स्मृत्यर्थसारेऽपि–'सहगमने सर्वत्र श्राद्धपिण्डादौ पाकैक्यं का(३)लैक्यं कर्त्रैक्यं चेति' । या तु पतिमुद्दिश्याऽन्यकालेऽन्यतिथावन्वारूढा तस्याः श्राद्धं तत्क्षयतिथौ कार्यं न भर्तृतिथौ,

(१) 'तदर्थारोहिणी' क० । (२) 'विदेवमृत' नास्ति क० छ ।
(३) 'कालैक्यं' नास्ति क० ।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।

इति स्कान्दात्, 'तिथिरेकैव जायते' इत्यादिवचनाच्चेतिमदनरत्नपारिजातपृथ्वीचन्द्रादयः । अन्ये तु तस्याः पतिमरणेन मृतप्रायत्वात्,

सहाग्रतः पृष्ठतो वा तद्भक्त्या म्रियते यदि ।
तस्याः श्राद्धं प्रदातव्यं पृथक् पत्युः क्षयेऽहनि ॥

इति स्मृत्यन्तरात् ।

अग्रतः पृष्ठतो वापि तद्भक्त्या म्रियते यदि ।
तस्याः श्राद्धं सुतैः कार्यं पत्युरेव क्षयेऽहनि ॥

इति पुराणसमुच्चयाच्च भर्तृतिथावेवेत्याहुः । अत्र *मूलं चिन्त्यम् । अत्र विशेषो हेमाद्रौ स्मृत्यन्तरे—

माता मङ्गलसूत्रेण म्रियते यदि तद्दिने ।
उद्दिश्य विप्रपङ्क्तौ तां भोजयेच्च सुवासिनीम् ॥

अथ श्राद्धसंपाते निर्णयः । अत्र पित्रोर्मृततिथ्येक-

---

क्तवस्यैवाहत्यविधानं पाकमात्रं तन्त्रमित्यर्थः । *मूलमिति । अत्र वदन्ति—लौगाक्षिणा सामान्यतस्तिथिभेदे तदभेदे वाऽन्वारोहणे सति दम्पत्योर्मृततिथिनिमित्तके श्राद्धे समासो विधीयते, अविशेषप्रवृत्तस्यैकतिथिगतानुगमनमात्रविषयत्वरूपसङ्कोचे मानाभावात्, लघुभूतमृताहश्राद्धत्वरूपोद्देश्यतावच्छेदकसम्भवे गुरुभूतैकदिनमृताहश्राद्धत्वरूपस्य तस्यायुक्तत्वाच्च । यत्तु भिन्नतिथिनिमित्तकयोरेकाहाप्राप्तेर्न साहित्यं विधातुमर्हमिति । तन्न, अभ्युदितेष्टौ सह श्रपयतीति सहत्वमात्रविधानादर्थादप्राप्तं दध्यंशे श्रपणमिवेहापि साहित्यविधानात्तदन्यथाऽनुपपत्त्याऽर्थादेककालत्वमाक्षेपात्। नन्वेवं विनिगमनाविरहात् पत्नीमृताह एव भर्तुः श्राद्धं स्यात् । तावताऽप्येककालत्वाऽबाधात्? नैवम्, अन्वारूढाया भर्तृमरणसमानकालीनमरणप्रतिपादकार्थनिश्चयात् । "यस्य न श्रूयते" इत्या-

त्वे *मरणक्रमेण दर्शे वर्गद्वयवत्तन्त्रेण श्राद्धं कुर्यात् । पौर्वापर्याज्ञाने तु पितृपूर्वकं कुर्यादिति हेमाद्रिः । माधवादयस्तु—

पित्रोः श्राद्धे समं प्राप्ते नवे *पर्युषितेऽपि वा ।
पितृपूर्वं सुतः कुर्याद*न्यत्रासंनियोगतः ॥

इति कार्ष्णाजिनिस्मृतेः । सर्वत्र पितृपूर्वं भिन्नप्रयोगमाहुः । पार्वणैकोद्दिष्टयोः संपाते माधवीये जाबालिः—

*यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ॥

गृहदाहादिना युगपन्मरणे भृगुः—

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक्पृथक् ।
पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्यात्संनिपातेष्वयं क्रमः ॥

ऋष्यशृङ्गः—

भवेद्यदि सपिण्डानां युगपन्मरणं तदा ।
संबन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् ॥

गारुडे—

एकेनैव तु पाकेन श्राद्धानि कुरुतेऽत्र हि ।
विकिरं त्वेकतः कुर्यात् पिण्डान् दद्यात्पृथक्पृथक् ॥

अत्रानुगमने च दाहसपिण्डनादौ विशेषं वक्ष्यामः । अत्रिः—

---

दौ दाहदिने आहार्यमरणनिश्चयवद्भर्तृमृताहे अर्थवादेभ्य आहार्यमरणनिश्चयाद्वा "शंय्वन्ता प्रायणीया सन्तिष्ठते" इत्यादौ प्रथमोपस्थितेराद्यशंयुवाकान्तत्ववद्भर्तृमृताहे अर्थात्तिथेः प्राथम्यात्तत्रैव साहित्यस्यौचित्याद्वेत्यन्यत्र विस्तर इति । *मरणक्रमेणेति । "पूर्वकस्य मृतस्यादौ" इत्युत्तरवचनात् । *पर्युषिते चिरन्तने । *अन्यत्र मातापितृभिन्ने । *यद्येकत्रेति । यद्यपि एकोद्दिष्टकालात्पार्वण-

बहूनामथवा द्वाभ्यां श्राद्धं चेत्स्यात्समेऽहनि ।
तन्त्रेण श्रपणं कृत्वा पृथक् श्राद्धानि कारयेत् ॥

पुलस्त्यः--

महालये गयाश्राद्धे गतासूनां क्षयेऽहनि ।
तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात् पृथक्पृथक् ॥

*इदं च पृथक्पाकेन भिन्नश्राद्धाशक्तौ(१) । पृथक्पाकेन संबन्धासत्त्या श्राद्धभेदस्तु मुख्यः पक्षः,

एकत्रैव दिने श्राद्धद्वयं प्राप्तं यदा तदा ।
चरेदेव पुरा वर्षात् पितुर्मातुश्च तत्सुतः ॥
एकस्मिन्थः करोत्यह्नि द्वयोः श्राद्धं यदा द्विजः ।
तदा पूर्वमृतस्यादौ कृत्वा स्नात्वा यथाविधि ॥
पश्चात् पश्चान्मृतस्यैव पृथक्पाकैः समाचरेत् ।
नैकस्मिन् दिवसे श्राद्धं त्रयाणां कुत्रचिद्द्विजः ॥
एकः कुर्यात्तथा प्राप्ते अन्यो भ्राता समाचरेत् ।
भ्रातर्यविद्यमाने तु तत्परेऽह्नि समाचरेत् ॥
अन्यथा श्राद्धहन्ता स्याच्छ्राद्धसंकरकृद्भवेत् ॥

इत्याश्वलायनोक्तेरिति पृथ्वीचन्द्रः ।

कात्यायनः—

*द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् ॥

जाबालिः—

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमोदयम् ॥

---

कालः परस्तथापि एतद्वचनादेवैकोद्दिष्टं परं कार्यमित्यर्थः । *इदं चेति । पृथ्वीचन्द्रमतम् । आश्वलायनस्मृतेर्विगीतत्वात्पाकाभेदो-

---

(१) इतउत्तरं 'श्राद्धे सपिण्डसम्प्राप्ते पिण्डहीने तु वै यदा । श्राद्धं कृत्वा सपिण्डं तु पिण्डहीनमथाचरेत् ॥ सपिण्डं पिण्डसहितमित्यर्थः' इत्यधिकं क पुस्तके ।

कालादर्शे-

*नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि ।
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ॥
दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणः ।
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ॥

अस्य देवताभेदेऽपवादमाह स एव-

नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि ।
(द(१)र्शस्य चोदकुम्भस्य दर्शमासिकयोरपि ॥)
नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि ।
युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा ॥
प्रत्याब्दिकस्य चालभ्ययोगेषु विहितस्य च ।

---

पगमाच्चारुचिः । *द्वे बहूनीति व्याख्यातम् । *नित्येति । अत्र युगादिमन्वादिश्राद्धाभ्यां दर्शश्राद्धस्य प्रसङ्गसिद्धिरयुक्तैव दार्शिकस्य बहुलविधानेन तेनैव युगादिश्राद्धसिद्धेर्युक्तत्वात् । यत्र-त्वान्वष्टक्यादौ नवदैवत्येन केवलपित्रादीनां देवतात्वं तत्रान्वष्ट-क्यादिना मासिकाब्दिकयोः प्रसङ्गसिद्धिः । एवं सपिण्डकेन दा-र्शिकेन तदभावाङ्गकस्य संक्रान्त्यादिश्राद्धस्य यद्यपि न प्रसङ्गः सम्भवति विरोधात् , तथापि पिण्डदानस्यापि पर्युदासेन तदभा-वस्य सक्रान्त्यादावङ्गत्वाभावेनाविरोधात् । नच प्रकृतौ पिण्डदा-नं प्राप्तम् ।

अयनद्वितये श्राद्धविषुवद्द्वितये तथा ।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते ॥

इति विकृतौ तन्निवृत्तिरिति संनिधानाभावात्तदेकवाक्यत्वाभावेन पर्युदासाभावात् "न तौ पशौ करोति" इति निषेधाङ्गीकारे तु वि-कल्पापत्तिरिति वाच्यं, पिण्डदानप्राधान्यस्य प्रतिपादितत्वात्सं-

---

(१) इदमर्धं नास्ति क० छ० ।

सम्पाते *देवताभेदाच्छ्राद्धयुग्मं समाचरेत् ॥
निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणम् ।
पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि ॥

माधवीये स्मृतिसङ्ग्रहे—

काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यति ।

अथ श्राद्धाङ्गतर्पणम् । पारिजाते पृथ्वीचन्द्रोदये च गर्गः—

पूर्वं तिलोदकं कृत्वा अमाश्राद्धं तु *कारयेत् ।
प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकम् ॥
पक्षश्राद्धे *हिरण्ये च अनुव्रज्य तिलोदकम् ।

नच नित्यतर्पणस्यैवायं परेह्व्युत्कर्षः, नतु श्राद्धाङ्गतर्पणमस्तीति वाच्यम्,

यस्तर्पयति तान् विप्रः श्राद्धं कृत्वा परेऽहनि ।
पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम् ॥

---

क्रान्तौ श्राद्धं कार्यमिति विधिनैव तत्प्राप्तेः सन्निधाने पर्युदासोपपत्तेः। *देवताभेदात् । उदकुम्भमासिकाब्दिकेष्वपत्नीकाः पित्रादयः अन्यत्र सपत्नीका इति देवताभेदः, नित्यदार्शिकयोः षड्दैवत्यत्वान्मासिकैकोद्दिष्टयोरेकोद्दिष्टत्वाद्देवताभेदः, नित्यदार्शिकयुगादिमन्वादिप्रभृतीनामलभ्ययोगनिमित्तानां षड्दैवत्यत्वात्प्रत्याब्दिकस्य त्रिदैवत्यत्वादेकोद्दिष्टत्वाद्वा देवताभेदः, अतस्तत्र तन्त्रप्रसङ्गो नेत्यर्थः । *कारयेदिति । णिजविवक्षितः । कुर्यादित्यर्थः "एतयाऽन्नाद्यकामं याजयेत्" इतिवत् । *हिरण्ये हिरण्यश्राद्धे । अत्र चत्वारि वाक्यानि । प्रथमवाक्ये च तिलोदकविशिष्टममाश्राद्धं विधीयते । तस्य चामाश्राद्धे तर्पणोत्तरकालः । तद्विधिश्च "पुरस्तादुपसदां प्रवर्ग्येण चरन्ति" इत्यादीनामेव दृष्टः, स्वतन्त्राणां वा "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादीनां च । न च कस्यचित्प्रधानस्यान्याङ्गोत्तरकालता दृष्टा। न च "एतया पुनराधेयसंमि-

इति गर्गेण *फल(१)निन्दार्थवादाभ्यामङ्गत्वेनोक्तेः। श्राद्धप्रक्रमाद्वार्षिकम्। बृहन्नारदीयेऽप्याब्दिकं प्रक्रम्य–

परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन्।
तस्य ते पितरः क्रुद्धाः शापं दत्त्वा व्रजन्ति हि॥

*पितृशब्दश्च श्राद्धेज्यवर्गपरः। तेन तर्पणस्य

---

तयेष्ट्या इष्ट्वाऽग्निहोत्रं जुहोति" इत्यत्र अग्निहोत्रस्य ज्योतिष्टोमाङ्गभूतोदवसानीयोत्तरकालता दृष्टेति वाच्यं, तत्रावभृथोत्तरं दीक्षोन्मोके अग्निहोत्रे प्राप्ते उदवसानीयोत्तरत्वमवधिमात्रं समर्प्यते नतु तदुत्तरकालोऽङ्गम्। अन्यथा कदाचिदुदवसानीयायामकृतायामनुपादेयकालस्यात्याज्यत्वादग्निहोत्रानुष्ठानप्रसङ्गात्। नच क्वाप्यदृष्टचरमप्यत्रैवाङ्गीक्रियते इति वाच्यं, तथा सति दूरस्थश्राद्धानुवादेन कालस्य विधातुमशक्तेः प्रकरणान्तरेणामावास्या श्राद्धं भिद्येत, गर्गस्मृतावमास्याश्राद्धविध्यदर्शनात्। तत्सत्त्वे वा तस्य प्रयोगविधित्वात्। अतो गर्गस्मृतावमावास्याश्राद्धमात्रं विधीयते इति स्वीकार्यम्। किञ्च श्राद्धविध्यभावे कालमात्रविधानोपगमे वृद्धिश्राद्धे सपिण्डे चेत्साद्यपवादासङ्गतिः, प्राप्त्यभावेन निषेधाप्रवृत्तेः, निषेधस्य प्राप्तिपूर्वकत्वादिति। तस्य प्रकृतित्वेन प्रत्यब्दे प्राप्ते तिलोदके परेऽहनीति कालमात्रविधिः "आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति" इतिवत् "प्रत्यब्दे न भवेत्पूर्वम्" इति त्वनुवादः। एवमग्रेऽपि। *फलेति। नह्यन्यप्रकरणेऽन्यस्य फलं निन्दा वा सम्भवति युज्यते वेति भावः। ननु अनङ्गं तर्पणं कुतः कर्त्तव्यं किञ्च पितृशब्दः जनकपुरुषपरो जनकपरो वेति भ्रात्रादिवार्षिके तद-

---

(१) यथा पशुपुरोडाशयोर्दैवतैक्यं तथैव श्राद्धतर्पणयोरपीति भावः। तद्वत्। तथा 'सूक्तवाकाय प्रस्तरं प्रहरति' इति विशेषतः कथितानामग्न्यादीनामेव सूक्तवाकत्वेन सामान्यतः कथनात्सूक्तवाकायेति चतुर्थ्यैष्टदेवतात्वावगमाच्च यथा प्रस्तरप्रहरणस्येष्टदेवतासंस्कारकत्वं तद्वद्दृष्टपित्रादीनामपि संस्कारतयाङ्गत्वमिति ज्ञेयम्।

*पशुपुरोडाशयागवत् *प्रस्तरप्रहरणवच्चेष्टदेवतासंस्कारकता। *तेनाब्दिकादिने नित्यं स्वपित्रादितर्पणं कार्यमेव, श्राद्धाङ्गभूतस्यैव परैरुक्तेः। तदुक्तम्—

प्रत्यब्दाङ्गं तिलं (१)दद्या*न्निषेधेऽपि परेऽहनि।
वर्गैकस्य वचो येषामन्येषां तु विवर्जयेत्॥

कश्चिद्विशेषमाह गर्गः—

कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत्।
पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम्॥

तर्पणं तिलतर्पणम्, निषिद्धाहेऽपीत्युक्तेः।

सकृन्महालये त्वः स्यादष्टकास्वन्न एव हि।

अत्र सप्तमीनिर्देशात् अङ्गिता स्फुटैव। तत्र जयान् जुहुयात् मन्द्रं प्रापणीयायां मन्द्रं प्रातःसवने इत्यादिवत्। अस्यापवादो बृहन्नारदीये—

वृद्धिश्राद्धे (२)सपिण्ड्यां च प्रेतश्राद्धेऽनुमासिके।

---

नुपपत्तिरत आह-*पितृशब्दश्चेति। *पशुवदिति। यद्दैवत्यः पशुस्तद्दैवत्यः पुरोडाश इतिवच्छ्राद्धं यद्दैवत्यं तद्दैवत्यमेव तर्पणमित्यर्थः। ननु तत्र विशिष्य देवताभिधानात्तथेत्यतः सामान्यविशेषभावेन देवताभिधाने एकदैवत्ये दृष्टान्तमाह-*प्रस्तरेति। "सूक्तवाकाय प्रस्तरं प्रहरति" इति विशिष्याभिहितानामेवाग्न्यादीनां सूक्तवाकत्वेन सामान्येनाभिधानाच्चतुर्थ्या इष्टदेवतात्वलाभात् प्रस्तरप्रहरणस्येष्टदेवतासंस्कारकतावत्तर्पणस्यापि इष्टानां पित्रादीनां देवतानामेव संस्कारतयाऽङ्गत्वमित्यर्थः। *तेनेति। नित्यतर्पणस्योत्कर्षाभावेनेत्यर्थः।

पित्रोः क्षयाहे संप्राप्ते यः कुर्यात्तिलतर्पणम्।
आसुरं तर्पणं प्रोक्तं तत्तोयं रुधिरं भवेत्॥

इति तु तिलतर्पणपरमिति भावः। *निषेधेऽपीति। भानौ भौमे त्रयोदश्यामित्यादिर्निषेधः पूर्वोक्तः।

---

(१) 'दद्यान्निषिद्धेऽपि' ग० (२) 'सपिण्डे च' क० छ०

संवत्सरविमोके च न कुर्यात्तिलतर्पणम् ॥

तदयमर्थः-दर्शे विप्रनिमन्त्रणोत्तरं *पाकारम्भोत्तरं वा श्राद्धप्रयोगस्यारब्धत्वात् ब्रह्मयज्ञोत्तरं नित्यतर्पणेनैव श्राद्धाङ्गतर्पणस्य *तन्त्रेण *प्रसङ्गेन वा सिद्धिः। *ततः पूर्वं वैश्वदेवोत्तरं वा ब्रह्मयज्ञकरणे श्राद्धाङ्गतर्पणं *पृथक्कार्यम्। पित्रोर्वार्षिके तु नित्यतर्पणं तिलवर्ज्यं कार्यम्,

*नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणम् ।

---

न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ।

इति लौगाक्षिनिषेधादिरपि मात्राद्याब्दिकेऽपोद्यते इति भावः। कृष्णपदं चाधिकदोषार्थं, तिलमात्रतर्पणस्य प्राप्तेः तन्मात्रनिषेधस्य न्याय्यत्वात्। *पाकारम्भोत्तरमिति त्वभ्युपगमवादः। यत्र ह्यारम्भः श्रूयते तत्र परिभाषासार्थक्याय "श्राद्धे पाकपरिक्रिया" इति प्रवर्त्तते। इह हि आरम्भ एव न श्रूयते इति। *तन्त्रेणेति। अङ्गानां प्रधानानां च विशेषाग्रहे तन्त्रम्। यत्र पित्रादयस्त्रयः मातामहादयस्त्रय एव च मृता नेतरे तत्र तन्त्रम्। यत्रेतरेऽपि मृतास्तत्राह-*प्रसङ्गेनेति। श्राद्धस्य व्यहकालत्वे नि(१)त्यतर्पणस्य तत्र मध्यपातित्वात्तेनैव प्रसङ्गसिद्धिः। सद्यस्कालत्वेऽपि एवमेव। अन्याङ्गैरन्याङ्गस्य प्रसङ्गसिद्धेः पशुपुरोडाशादौ दृष्टत्वात्। *ततः पूर्वं नित्यतर्पणात्पूर्वम्। *पृथक्कार्यमिति। नित्यस्य प्रयोगानन्तःपातित्वात्। वस्तुतस्तु आरम्भणीयाबृहस्पतिसवादेः क्त्वाप्रत्ययवशात्प्रयोगाबहिर्भूताङ्गत्ववदिहापि क्त्वाप्रत्ययवशात्प्रयोगबहिर्भूतेन नित्यतर्पणेनैव दार्शिकतर्पणसिद्धिरिति। यत्र च रविवारादौ तिलरहितं तर्पणं तन्त्रप्रसङ्गयोरभावात्पुनः सतिलं तर्पणं कार्यम्। वार्षिकादौ च तन्त्रप्रसङ्गयोरुभयोरप्यभावात्पृथगेव तत्कार्यमिति। *नैवेति। अत्र पूर्वार्धमुत्तरार्धस्तावकं, तावतैव पूर्वेऽह्नि ति-

---

(१) 'तिलतर्पणस्य' च० ।

श्राद्धं कृत्वाऽपराह्णे च तर्पणं तु तिलैः सह ॥

इति वचनात् ।

सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत् पितृघातकः ॥

इति स्मृतिरत्नावल्यां वृद्धमनूक्तेश्च । अत्र नित्यतर्पणे तिलमात्रनिषेधो नतु तर्पणस्य, तिलैरित्यस्य वैयर्थ्यापत्तेः । यत्तु कातीयम्—

उपरागे *पितुः श्राद्धे पातेऽमायां च संक्रमे ।
निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥ इति,

तत् परेद्युः श्राद्धाङ्गतर्पणविषयमिति केचित् । श्राद्धाशक्तस्य तत्स्थानापन्नतर्पणविषयमिति युक्तम् । सकृन्महालये परेद्युस्तर्पणम् । अष्टकासु तु *सप्तम्यष्टमीश्राद्धयोरन्ते तदैव वर्गद्वयस्य । अन्वष्टक्ये तु मातृवर्गस्यापि । *तीर्थश्राद्धे दर्शवत् । *(३)माघ्यावर्षादिष्वष्टकावदन्ते । अनेकश्राद्धसंपाते तु यदि तत्प्रसङ्गासिद्धिस्तदा तदीयमेव तर्पणम् । तन्त्रत्वे तु श्राद्धसमसंख्यत्वे आदावन्ते वा । विषमसंख्यायां बह्वनुरोध इति । तस्माच्छ्राद्धाङ्गतर्पणं सिद्धम् ।

*तद्विधिः संग्रहे—

स्नात्वा तीरं समागत्य उपविश्य कुशासने ।
तर्पयेत पितॄन् सर्वान् स्नात्वा वस्त्रं च धारयेत् ॥

---

तर्पणोदासलिद्धेः । *पितुरिति मातुरुपलक्षणम् । *सप्तमीति । सप्तम्यन्वष्टक्ययोः स्वातन्त्र्यमते अष्टकाङ्गत्वमते तु दर्शविकृतित्वे पूर्वमेव तर्पणम् । तदभावे तर्पणं नैव कार्यम् । *तीर्थेति दर्शविकृतित्वात् । *माघ्यावर्षेति । अष्टकाविकृतित्वात् ।

---

(३) 'मघान्वष्टकादिष्वष्टका' ग०

तर्पणोत्तरं *नित्यस्नानं कृत्वेत्यर्थः ।

अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ।
नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत् ॥

अत्र वस्वादिरूपतोक्ता स्मृत्यर्थसारे—

वसुरुद्रादितिसुतान् श्राद्धार्थे तर्पयेत् पितॄन् ।

तच्च बह्वृचानां *दक्षिणेनैव, (१)'दक्षिणं प्रतीया-

---

*तद्विधिरिति । परेद्युरित्यादि । *नित्यस्नानमिति । अत्राद्यं स्नानममन्त्रकम् । द्वितीयं तु नित्यस्नानम् । तथाचादौ तूष्णीं स्नात्वा कुशेषूपविश्य श्राद्धाङ्गं तर्पणं कृत्वा पश्चान्नित्यस्नानं कृत्वा वस्त्रधारणादि कुर्यादित्यर्थः । एवञ्चेदं संध्यामकृत्वैव कार्यम् । बहवस्तु तथैवानुतिष्ठन्ति । मयूखकृतस्तु श्राद्धाङ्गतर्पणं संध्यां कृत्वैव कार्यं तां विनाऽन्यकर्माणि अनधिकारात्, "सन्ध्याहीनोऽशुचिर्नित्यम्" इति दक्षोक्तेः । नच तर्पणान्तं श्राद्धप्रयोगानुवृत्तेः कथं सन्ध्यानुष्ठानम् ? एवं सति श्राद्धानन्तरं सायंसन्ध्याननुष्ठानप्रसङ्गात् । तर्पणोत्तरं च पुनः स्नानं कार्यं सङ्कल्पवाक्ये स्नात्वेति पुनर्ग्रहणात् । तच्चानायत्याऽदृष्टार्थम् । अत्र च स्नानसन्ध्यादीनां सर्वकर्मार्थित्वेनोपवेशनस्य सामान्यतश्च प्राप्तेरदग्धदहनन्यायेन कुशास्तरणं तर्पणोत्तरस्नानं च विधीयत इति प्राहुः । *दक्षिणेनैवेति ।

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत् ॥

इति वचनात् । अत्र पूर्वार्धं बह्वृचपरं, सौत्रं दक्षिणपाणिमालम्ब्यान्वारम्भमात्रविधाने लाघवात् । उत्तरार्धं तु तदन्यपरम् ।

---

(१) 'अनादेशे दक्षिणं प्रतीयात्' ग०

दनादेशो' इति सूत्रात् । अत्र *प्रत्यञ्जलि मन्त्रावृत्तिः ।

---

*प्रत्यञ्जलीति । अञ्जलिसङ्ख्यायां शङ्खः—

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम् ॥

पैठीनसिः—

तिलोदकाञ्जलींस्त्रींस्त्रीनुच्चैरुच्चैर्विनिक्षिपेत् ।

पित्रञ्जलिभ्यः पितामहाञ्जलयः किञ्चिदुच्चैः ततोऽपि प्रपितामहाञ्जलयः । एवं मातृवर्गे मातामहवर्गे चेत्यर्थः । शालङ्कायनः—

मातृमुख्यास्तु यास्तिस्रस्तासां दद्याज्जलाञ्जलीन् ।
त्रींस्त्रीन्दद्यादथान्यासां स्त्रीणामेकैकमञ्जलिम् ॥

काशीखण्डे—

सपत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जली ।

सपत्नी सापत्नमाता । आचार्यस्य पत्नी चेत्यर्थः । व्यासः—

मातॄर्मातामहांस्तद्वत्त्रींस्त्रीनेव त्रिभिस्त्रिभिः ।
मातामहाश्च येऽप्यन्ये गोत्रिणो दातृवर्जिताः ॥
तानेकाञ्जलिदानेन प्रत्येकं च पृथक् पृथक् ॥ इति ।

मातामहीनामञ्जलित्रयमेकाञ्जलिर्वेति विकल्पः,

मातामह्यादिसर्वासामेकैकं तु जलाञ्जलिम् ।
दद्यात्तीर्थे विशेषेण धर्मं परममास्थितः ॥

इति गारुडात् । अन्ये तु मातामह्यादीस्तद्गुणसंविज्ञानबहुव्रीहिणा मातामह्यादिभिन्नानामेकाञ्जलिः, मातामह्यादीनां तु त्रय एवेत्याहुः । विरूपैकशेषस्य प्रमाणान्तरं विना असम्भवान्मातामह्यादीनामेक एवाञ्जलिरिति तु ग्रन्थकारानुयायिनः । अथवा मातामहस्य द्वावञ्जली,

द्वौ द्वौ मातामहानां च मातुलानां सकृत्तथा ।

इति हेमाद्रौ ब्रह्माण्डात् । इतरेषां तु ब्रह्माण्डे—

*निर्वापवत्तत्संध्यार्घ्यदानवच्च द्रव्यभेदात् । *अवघातवेदिप्रोक्षणादौ तु द्रव्यैकत्वान्न मन्त्रावृत्तिः । केचित्तु

---

गुर्वाचार्यश्वशुराणां सुहृत्संबन्धिनां सकृत् ।

नित्यतर्पणे यद्यपि सर्वे एवैते तथापि श्राद्धाङ्गतर्पणे यद्दैवत्यं श्राद्धं तद्दैवत्यमेवेत्युक्तम् । दक्षः—

प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् ।
उदङ्मनुष्यांस्तर्पयेत पितॄन् दक्षिणतस्तथा ॥

बौधायनः—"अनुतीर्थमप उपसिञ्चति देवानां दैवेन ऋषीणामार्षेण पितॄणां पित्र्येण मनुष्याणां प्राजापत्येन" इति ।

प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत्ततः ।

इति विष्णुपुराणाच्च ।

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

इति कोशः ।

कृतोपवीती देवेभ्यो निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा ॥
अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ।
नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत् ॥ इति ।

प्रकृते च पैत्रः सर्वो विधिर्ग्राह्यः दैवार्षमानुषस्तु द्वारलोपादेव निवर्त्तते । ननु तर्पणमेकं कर्म तत्र करणस्य मन्त्रस्य कुत आवृत्तिरित्यत्राह—*निर्वापेति । नन्वेककर्मणि मन्त्रावृत्त्यङ्गीकारे अवघातादौ तदावृत्तिः स्यादित्यत आह—*अवघातेति । अवहता एव व्रीहयः पुनरवहन्यन्ते प्रोक्षितैव वेदी पुनः प्रोक्ष्यते इति न द्रव्यभेद इत्यर्थः । अत्र वदन्ति—निर्वापे संध्यार्घ्यदाने च मन्त्रस्य द्रव्यसंस्कारकत्वादावृत्तिः"निरुप्तं प्रोक्षति" इति वचनात् ।

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।

*परिव्याणमन्त्रत्व*क्रियमाणानुवादित्वेन करणत्वाभावात्सकृदिच्छन्ति । तन्न, तत्र यूपद्वयैक्यात् परिवीरसीतिकरणीभूतमन्त्रान्तरसत्त्वादन्यतरेण व्यवधानापत्त्योभयोः करणत्वायोगात् कर्त्रभेदेन विकल्पायोगाच्च क्रियमाणानुवादित्वं नत्वत्र तथेति बौधायनादिवचनात् करणत्वमेव । तेनावृत्तिरेव युक्ता । एवं नित्येपि । यत्तु संग्रहे नाम्ना पठन्ति—

पित्रोः क्षयाहे संप्राप्ते यः कुर्यान्नित्यतर्पणम् ।
आसुरं तद्भवेच्छ्राद्धं तत्तोयं रुधिरं भवेत् ॥
सर्वदा तर्पणं कुर्याद्ब्रह्मयज्ञपुरःसरम् ।
मृताहे नैव कर्तव्यं कृतं चेन्निष्फलं भवेत् ॥

तत्समूलत्वे *सति तिलविषयम् । यच्च पठति

---

इति व्यासवचनाच्च । नचेह तथा यतो नात्र द्वितीययाऽञ्जलयः संस्कार्याः । धात्वर्थकर्मतया सक्तून् जुहोतीतिवाद्द्वितीयोपपत्तेः । नापि मन्त्रोऽञ्जलिसंस्कारः । "मन्त्रैश्च देयमुदकम्" इत्यादिस्मृत्या तृतीयया दानक्रियाङ्गस्यैवोक्तेरञ्जल्यङ्गत्वे मानाभावात् । नापि तर्पणभेदः । द्विस्त्रिरिति क्रियाभ्यावृत्तौ सुज्विधानात्संख्यायाः कर्मसामानाधिकरण्याभावेन भेदकत्वाभावात् । यथा "त्रिः प्रोक्षति" इत्यादौ त्रिरावृत्तिविशिष्टकर्म एकमेव तद्वत् । नच त्रीनित्येकशेषादेकस्मिन्निनयने त्रयाणां मन्त्राणां करणत्वापत्तिः । पशुसोमाधिकरणन्यायेन प्रथमं यागैक्येऽवगते तत्र त्रयाणां मन्त्राणां करणत्वासम्भवादेकैकनिनयने एकैकमन्त्रस्य करणत्वोपगमात् । तस्मादञ्जल्यावृत्तावपि न मन्त्रावृत्तिरिति । *परिव्याणमन्त्रः "युवा सुवासाः" इति मन्त्रः । *क्रियमाणं यूपैकादशिन्यादौ परिव्याणम् । युगपदित्ययं होतृमन्त्रः । "परिवीरसि परित्वा दैवीर्विशो व्ययंतां परीमः रायस्पोषो यजमानं मनुष्या" इति अध्वर्युमन्त्रः । *सति

कापिलः--

मन्वादिषु युगाद्यासु दर्शसंक्रमणेषु च ।
पौर्णमास्यां व्यतीपाते दद्यात् पूर्वं तिलोदकम् ॥
अर्धोदये गजच्छाये *ष(१)ष्ठ्यां चैव महालये ।
भरण्यां च मघाश्राद्धे तदन्ते तर्पणं विदुः ॥

शौनकः—

मातापित्रोर्मृताहे च परेऽहनि तिलोदकम् ।
कारु(२)ण्यश्राद्धविषये सद्यो दद्यात्तिलोदकम् ॥

एतन्निर्मूलम् ॥

अथ तिलतर्पणनिषेधः । गार्ग्यः--

*भानौ भौमे त्रयोदश्यां (३)नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

स्मृत्यर्थसारे--

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।

अर्धं तदेव ।

वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणम् ।

---

तिलेति । "सप्तम्यां भानुवारे च" इत्युक्तेः । *षष्ठी कपिलाषष्ठी । अत्रोत्प्रेक्षन्ते-"पूर्वं तिलोदकम्" इत्यादिवाक्यानां निर्मूलत्वे एषामपि निर्मूलत्वमेव । समूलत्वे तु तथात्वमिति । ननु उपरागे पितुः श्राद्धे इत्यादौ निषिद्धेपीत्युक्तेर्निषेधं बाधित्वा तिलतर्पणं स्यात् न सकृन्महालयादावित्याशङ्क्य—

तिथिवारसमायोगान्निषेधोऽयमुदाहृतः ।
ऋषिभिस्तर्पणे नित्ये निमित्तेन तु बाधितः ॥

इति वचनान्नैमित्तिकप्राबल्याच्च निषेधबाध इति वक्तुं निषेधाना-

---

(१) 'षष्ठीषु च महा' ग० (२) 'कारुण्याच्छ्राद्ध' ग०
(३) 'नन्दासु च मघासु च' क०

हेमाद्रौ मरीचिः--

सप्तम्यां रविवारे च *गृहे *जन्मदिने तथा ।
निशासंध्यासु पुत्रार्थी न कुर्यात्तिलतर्पणम् ॥

यत्तु संग्रहे--

नन्दायां भार्गवदिने कृत्तिकासु मघासु च ।
भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥
अयनद्वितये चैव मन्वादिषु युगादिषु ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥ इति,

*तच्चिन्त्यम् ।

पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः।

*इत्यादिविरोधात् । अत्रापवादः पृथ्वीचन्द्रोदये-

---

इ-*मानाविति । *गृहे इति । अयं निषेधः पृथक्तिलपरः,

यद्युद्धृतं निषिञ्चेत्तु तिलान्संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

इति बौधायनदर्शनात् । *जन्मदिने इति । जन्मनक्षत्रोपलक्षणम् । *तच्चिन्त्यमिति । युगादिनिषेधश्चिन्त्य इत्यर्थः । इदं मन्वाद्युपलक्षणम् ,

आसु तोयमपि स्नात्वा तिलदर्भविमिश्रितम् ।
पितॄनुद्दिश्य यो दद्यात्स गतिं परमां लभेत् ॥

इति मन्वादीन्प्रकृत्य नागरखण्डोक्तेः । *इत्यादीति । आदिना --

मन्वाद्यासु युगाद्यासु मदत्तः सतिलोऽञ्जलिः ।
सहस्रवार्षिकीं तृप्तिं पितॄणामावहेत्सदा ॥

इति कालादर्शग्रहः । अत्रेदं बोध्यं-पानीयमपीत्यपिना श्राद्धं ग्राह्यम् ,

श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत्पितरो वदन्ति ।

तीर्थे *तिथिविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥

स्मृत्यर्थसारेऽपि—
तिथितीर्थविशेषेषु कार्यं प्रेते च सर्वदा । इति ।

गोभिलः—
तिलाभावे *निषिद्धाहे सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेतु दर्भमन्त्रेण वा पुनः ॥

पतितस्य तिलोदकं वक्ष्यामः ॥

अथ वृद्धिश्राद्धम् । *तन्निमित्तं पृथ्वीचन्द्रोदये ब्राह्मे—
*जन्मन्यथो*पनयने विवाहे पुत्रकस्य च ।

---

इति वाक्यशेषात् । तथाच श्राद्धाशक्तस्य तत्स्थानापन्नतर्पणे तिलो विधीयते, नतु नैत्यके । तन्त्रप्रसङ्गयोरभावादेव नैत्यकान्नैमित्तिकस्य पृथगनुष्ठानमपि शक्तं प्रति तु अङ्गभूतायामञ्जलौ मन्वादिषु युगाद्यास्विति कपिलवाक्याद्दर्शविकृतित्वाद्वा सतिलत्वम् । एवं मन्वादिष्वपि, "आसु तोयमपि" इत्यपिशब्दात् । *तिथिविशेषे महालयाष्टकादौ । नच त्रयोदश्यादीनां कुतो न ग्रहः सजातीयेष्वेव विशेषोपादानात् । निषिध्यमानत्वेन साजात्यात् । तीर्थपदादेव गङ्गाप्राप्तौ [illegible] सर्वदा तिलप्राप्त्यर्थः । *निषिद्धाहे इति । निषिद्धाहे वा इत्यर्थः ।

उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे ।
निषिद्धाहेऽपि सर्वत्र तिलैस्तर्पणमाचरेत् ॥
यावन्मासः समाप्येत तावत् पिण्डांश्च वर्जयेत् ।
वृद्धावनन्तरं प्राज्ञस्तथैव तिलतर्पणम् ॥ इति ।

*तन्निमित्तं वृद्धिश्राद्धनिमित्तम् । वृद्धिः पुत्रजन्मेत्याह—*जन्मनीति । पुत्रजन्मनिमित्तकं मुख्यं, कर्माङ्गं तु गौणम् । तच्च नान्दीश्राद्धं तदुभयमपि तदिति केचित् । कर्माङ्गं वृद्धिवत्कृतमिति वृद्ध्यतिदेशात् तत् तदुभयमनुक्रामति जन्मनीति । *उपनय-

पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥
*वेदव्रतेषु चाधानयज्ञपुंसवनेषु च ।
*नवान्नभोजने *स्नाने ऊढायाः प्रथमार्तवे ॥
देवारामतडागादिप्रतिष्ठासू*त्सवेषु च ।
राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकान् ॥
वनस्थाद्याश्रमं गच्छन् पूर्वेद्युः सद्य एव वा ।
पितॄन्पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये ॥
(१)आदिपदात् संन्यासः । विष्णुपुराणे—
यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।

---

ने इति । तदन्तापत्यसंस्काराणामुपलक्षणं वेदव्रतस्नानविवाहाना-मभिधानात् । आधानयज्ञेति श्रौतकर्मणां पुंसवेत्यादि सौत्राणां स्त्रीसंस्काराणां देवारामेत्यादि पौराणानां महादानतडागाद्युत्सर्गव्रतदेवादिप्रतिष्ठानाम् । *वेदव्रतानि महानाम्न्यादीनि । *नवान्न-भोजने प्रथमाग्रयणे । *स्नानं समावर्त्तनम् । *उत्सवेष्विति । ग्रहशान्तिविनायकस्नपनादीनां मनुयाज्ञवल्क्यादिस्मृत्युक्तानाम् । नचैवमाचारप्राप्ते फलादिनाऽन्तर्वत्नीकुक्षिभरणादौ विवाहाद्यङ्गह-रिद्राचन्दनादौ वा एतत्करणापत्तिः, "तस्य ब्राह्मण्यश्च वृद्धा जीवपत्न्यो यद्यदुपदिशेयुस्तत्तत्कुर्युरिति" "अथ खलूच्चावचा ज-नपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात्" इति सूत्रानुमतत्वादि-ति वाच्यम् ,

कर्मण्यथाभ्युदयिके माङ्गल्ये चातिशोभने ।

इति ब्रह्माण्डे ऽतिशोभने इति विशेषणेन तद्व्यावर्त्तनात् । आ-भ्युदयिकं स्वाभ्युदयार्थं क्रियमाणं राज्याभिषेकग्रहशान्त्यादिमहा-दानादि । अत एव प्रायश्चित्ते न वृद्धिश्राद्धं तस्य पापनाशार्थत्वे-नाऽनाभ्युदयिकत्वात् । माङ्गल्यं गर्भाधानादिनामकर्मादि । नच

---

(१) 'आदिपदात् संन्यासः' नास्ति ग०

पु(१)त्रोत्पत्तौ *वृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥
तत्रैव—
नामकर्मणि बालानां चूडाकर्मादिके तथा ।
इत्युक्तेर्निष्क्रमान्नप्राशनयोर्न श्राद्धमिति मैथिलाः ।
तन्न, पूर्वोक्तविरोधात् 'नानिष्ट्वा' इति निषेधात् ।
सुतोत्पत्तौ तथा श्रा(२)द्धमन्नप्राशनिके तथा ।
इति राजमार्तण्डाच्च । यत्तु छन्दोगपरिशिष्टम्—
सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते । इति,
तत्तेषामेवेति कल्पतरुः । बह्वृचकारिकायाम्—

---

मात्स्ये—
नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।
कर्मप्रदीपे—
अनिष्ट्वा तु पितॄन् श्राद्धे न कुर्यात्कर्म वैदिकम् ।
इत्यादिसामान्यवचनैर्विवाहादिषु श्राद्धसिद्धेस्तेषां पुनर्वचनमुपसंहारार्थं, तेन विशेषवाक्योपात्तेतरकर्मसु न वृद्धिश्राद्धमुचितमिति वाच्यम्, तथा सति सामान्यवाक्यवैयर्थ्यापत्तेः । यत्र हि शाखान्तरगतत्वेन वा द्वारविशेषसम्बन्धप्रमाणेन वा सामान्यवाक्यमपि सार्थकं भवति तत्रैवोपसंहारो यथा "पुरोडाशं चतुर्धा करोति आग्नेयं चतुर्धा करोति" इत्यादौ । अनारभ्याधीतसाप्तदश्यवाक्यादौ च; नत्विह स्मृतिपुराणादीनां सर्वान्प्रति प्रमाणत्वेन शाखान्तरन्यायाभावात् साक्षात्कर्माङ्गत्वेन तस्य चोभयत्रापि नाल्पीयस्त्वेन साप्तदश्यन्यायाभावाच्च । तस्मात् केषुचित्पुनर्वचनं सामान्यवाक्यस्य प्रपञ्चमात्रं तेष्ववश्यावश्यकत्वार्थं वा । अत एवाग्निहोत्रहोमवैश्वदेवादिषु केषांचिद्वृद्धिश्राद्धाचरणं केषाञ्चित्तु नेति ।
*वृषोत्सर्गः काम्यः नतु प्रेतत्वनिवृत्त्यर्थः, तस्य श्राद्धत्वात् ।

---

(१) 'पुत्रजन्मवृषो' क० छ० (२) 'श्राद्धे अन्न' ग०

स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु ।
पुंसः सवनसीमन्तचौलोपनयनेष्विह ॥
विवाहे चानलाधेयप्रभृतिश्रौतक(१)र्मसु ।
इदं श्राद्धं प्रकुर्वन्ति द्विजा वृद्धिनिमित्तकम् ॥
अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते ।
वाप्याद्युद्यापनादौ तु कुर्युः पूर्तनिमित्तकम् ॥

बोपदेवकालादर्शे—

सीमन्तव्रतचौलनामकरणान्नप्राशनोपायन—
स्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च ।
*पुंसूत्यावसथप्रवेशन*सुताद्यास्यावलोकाश्रम—
स्वीकारक्षितिपाभिषेकदयिताद्यर्तौ च नान्दीमुखम् ॥

यत्तु कामधेनौ —

---

*पुंसूतिः पुंसवनं तनयोत्पत्तेः पृथगभिधानात् । *सुताद्यास्यावलोकेति ।

सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ॥

इति विष्णुपुराणात् । परन्तु अत्र तद्योग्यतासंपादकं जन्म ग्राह्यम् । सुताद्यास्यावलोकेति च प्रसवाद्यागतेन पित्रादिना जातकर्म चेत्क्रियते तदा जन्मनिमित्तकं श्राद्धमपि कार्यमित्येतद्वक्तुम् । आस्यावलोकेति निमित्तान्तरं प्रदर्शितमित्येतावन्मात्रम् । अत्र पुत्रजनने केवलं नैमित्तिकं जन्मनीत्याद्युक्तेः तत्र कर्माङ्गनिषेधात् । एवञ्च तत्रैकमेव श्राद्धं "कर्माङ्गं वृद्धिवत्कृतम्" इति जातकर्माङ्गश्राद्धमप्युक्तैव जन्मनिमित्तकश्राद्धदृष्टान्ताभिधानात् ।

वृद्धिश्राद्धं तु कर्त्तव्यं जातकर्मादिकेषु वै ।

इति हेमाद्रिस्थवचनेऽतद्गुणसंविज्ञानो बहुव्रीहिर्वा निमित्तकर्मणोः पदादिभ्यां समाहारो वा कर्त्तव्येष्विति पदाध्याहारो वा बोध्यः।

---

(१) 'कर्मणी' ग०

*जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्मसु ।
वत्सराभ्यन्तरे पित्रोर्वृषस्योत्सर्गकर्मणि ॥
वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाचरेत् ॥ इति ।

तत्र जलाशये वृद्धिश्राद्धस्य निषेधो न तु कर्माङ्गस्येति केचित् ।

*अन्ये त्वस्य निर्मूलतामाहुः । श्राद्धकौमुद्यां निर्णयामृते च मात्स्ये—

*अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके ।
पुंसवे च निषेके च नववेश्मप्रवेशने ॥
देववृक्षजलादीनां प्रतिष्ठायां विशेषतः ।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥

इदं चावश्यकम्,

वृद्धौ न तर्पिता ये वै पितरो गृहमेधिभिः ।
तद्धीनमफलं ज्ञेयमासुरो विधिरेव सः ॥

इति शातातपोक्तेः । अत्र श्राद्धत्रयं स एवाह—

*मातृश्राद्धं तु पूर्वं स्यात्पितृणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥

तत्कालमाह पृथ्वीचन्द्रोदये गार्ग्यः—

मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम् ।
मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम् ॥

((१)अशक्तौ वृद्धशातातपः—

*जलाशय इति प्रतिष्ठापदं प्रतितिष्ठतीति व्युत्पत्त्या स्थैर्यविशेषार्थकम् । स्वमतमाह-*अन्ये त्विति । अन्यथा काम्यवृषोत्सर्गादावपि त्यागः स्यात् । तदेव स्पष्टयति-*अन्नप्राशे चेत्यादिना । *मातृश्राद्धमिति मातृपूर्वकत्वेन पितृपूर्वकत्वव्यावृत्तिः।

(१) कंसान्तर्गतं नास्ति ग०

पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ )

अत्राप्यशक्तौ स एव—

पृथक्दिनेष्वशक्तश्चेदेकस्मिन् पूर्ववासरे ।
श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ॥ इति ।

वृद्धमनुरपि—

अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।
पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ॥

अत्र 'महत्सु पूर्वेद्युस्तदहरल्पेषु' इति गृह्यपरिशिष्टाद्व्यवस्था ज्ञेया । तच्च प्रातरेव,

पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ।

इति शातातपोक्तेः। अत्र प्रातःशब्दः सार्धप्रहरपरः,

प्रहरोऽप्यर्धसंयुक्तः प्रातरित्यभिधीयते ।

इति गार्ग्योक्तेरिति पृथ्वीचन्द्रः । इदं च पुत्रजन्मातिरिक्तविषयम् । तदाहात्रिः—

---

माता पितामही चैव सा पूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुः पित्रादयस्तथा ॥
एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥ इति ।

मात्स्ये—

उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ॥
ततो मातामहाः पूज्या विश्वेदेवास्तथैव च ॥ इति ।

उत्सवः प्रागुक्तः । आनन्दो यज्ञादिः । सन्तानोऽपत्यसंस्कारः । बहुवचनेन तदाद्यत्रयाणां ग्रहः । मात्रादयश्च मनुष्यपितरः प्राधान्येनोद्दिश्याः ।

ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ।

पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥ इति,
*एतदनियतनिमित्तपरम्,
नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् ।
तेषामनियतत्वे तु तदानन्तर्यमिष्यते ॥
इति लौगाक्षिस्मृतेः । आधानाङ्गं नान्दीश्राद्धं त्वपराह्ण एव,
आमश्राद्धं तु पूर्वाह्णे सिद्धान्नेन तु मध्यतः ।
पार्वणं चाऽपराह्णे तु वृद्धिश्राद्धं तथाग्निकम् ॥
इति निर्णयामृते गालवोक्तेः ।
नान्दीमुखाह्वयं प्रातराब्दिकं त्वपराह्णतः ।
इति विष्णूक्तेश्च । *इदं च मातृपितृमातामहादिक्रमेण नवदैवत्यं कार्यम् । *तत्र मातामहाः सपत्नीकाः । 'वृद्धप्रमातामहप्रमातामहमातामहानां सपत्नीकानाम्' इति पृथ्वीचन्द्रोदये गारुडे गद्यरूपेण पाठात् । हेमाद्रौ शङ्खः—
नान्दीमुखे सत्यवसू सङ्कीर्त्यौ वैश्वदेविके ।
वृद्धपराशरः—
नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् ।

---

इति नान्दीमुखा दिव्यपितरस्तु अभेदेनोद्देश्यस्वरूपे बोध्याः । कर्माङ्गाभ्युदयिकेऽप्येत एव देवताः,
निषेककाले सोमे च सीमन्तोन्नयने तथा ॥
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ।
इति वचनेन गर्भाधानादिकर्माङ्गश्राद्धे वृद्धिश्राद्धदेवताद्यनिर्देशात् । *एतदिति । तेन शान्तिविशेषादिग्रहः । अत्र द्वादशदैवत्यपक्षो न समञ्जस इत्याशयेनाह—*इदं चेति *तत्रेति । यद्यपि—
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ।

पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृ(१)तिः ॥

यत्तु वृद्धवसिष्ठः--

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
नाम सङ्कीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

यच्च स्मृत्यर्थसारे--

वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते । इति ।

यच्च गारुडे व्युत्क्रमप्रतिपादनं तच्च शाखान्तरविषयम्, 'पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः' इति बह्वृचपरिशिष्टे कात्यायनेन चानुलोम्याम्नानात्। पृथ्वीचन्द्रोदयेऽप्येवम्। यत्तु केचिद्वृद्धिपदं पित्रादिषु प्रयुञ्जते। तन्न,

अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणाम् ।
अनाम्नामतिलाद्यैश्च नान्दीश्राद्धं तु सव्यवत् ॥

इति पृथ्वीचन्द्रोदये सङ्ग्रहोक्तेः। न च निषेधादेव विधिः कल्प्यत इति वाच्यम्, प्रौष्ठपदीश्राद्धे प्रपितामहात्परेषां वृद्धापित्रादीनां देवतात्वान्नान्दीश्राद्धत्वसामान्येनेहापि तत्प्राप्तौ निषेधात्। गोत्रनामादिनिषेधस्तु--

शुभार्थी प्रथमान्तेन वृद्धौ सङ्कल्पमाचरेत् ।

इत्युपक्रम्य 'अनस्मद्वृद्धशब्दानाम्' इत्युक्तेः सङ्कल्पश्राद्धपरः, 'सपिण्डके तु सर्वं भवति' इति प्रयोगपारिजातात्।

गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेत् ।

इति छन्दोगपरिशिष्टे तद्विधानात्। यत्तु ब्राह्मे--

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥

---

(१) 'स्थितिः' क०

तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः ।

ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥ इति,

यच्च मार्कण्डेयपुराणे--

ये स्युः पितामहादूर्ध्वं ते तु नान्दीमुखाः स्मृताः। इति,

तज्जीवत्पित्रादित्रिककर्तृकवृद्धिश्राद्धविषयम् । तेन तस्येदमावश्यकम् । यत्तु विष्णुः–'पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्' इति, तद्दर्शादिविषयमिति कल्पतरुः । मदनपारिजातेऽप्येवम् । हेमाद्रिस्तु–

नान्दीमुखानां श्राद्धं तु कन्याराशिगते रवौ ।

पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ॥

इति प्रौष्ठपदीश्राद्धैकवाक्यत्वात्तत्रैव पूर्वेषां देवतात्वमित्याह । अत्र सत्यवसू विश्वेदेवावित्युक्तं प्राक् । यत्तु शातातपः--

मातुः श्राद्धं तु युग्मैः स्याद्दैवं प्राङ्मुखैः पृथक् । इति ।

तद्भिन्नप्रयोगमातृश्राद्धपरम् । यच्च मार्कण्डेयपुराणे–

विश्वेदेवविहीनं तु केचिदिच्छन्ति मानवाः । इति,

तद्भिन्नप्रयोगमातृश्राद्धभिन्नश्राद्धद्वये विश्वेदेवविकल्पार्थम् । प्रयोगैक्ये तु देवनियमः इति हेमाद्रिः ।

एतच्च मातृपूजापूर्वकं कार्यम्,

अकृत्वा मातृयागं तु यः श्राद्धे परिवेषयेत् ।

तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

इति शातातपोक्तेः । कौर्मेऽपि--

पुष्पैर्धूपैः सनैवेद्यैर्गन्धाद्यैर्भूषणैरपि ।

पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ॥ इति ।

छन्दोगपरिशिष्टे--

कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः ।

पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

प्रतिमासु च शुद्धासु लिखिता वा पटादिषु ।
अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥
कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु ।
कारयेत्पञ्चधारां वा नातिनीचां नचोच्छ्रिताम् ॥
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥
अत्र सर्वेष्विति ग्रहणात्ग्रहयज्ञतद्विकारेष्वपि नित्यं श्राद्धम् ।
नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किञ्चित्समाचरेत् ।
इति शातातपोक्तेश्च । इयं च वसोर्धारा तच्छाखीयानां नियता, अन्येषां त्वनियता, *'बह्वल्पं वा स्वगृह्यो-

इति परिभाषाप्राप्तं सपत्नीकत्वं तथापि—

माता पितामही चैव संपूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ॥
एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥

इति मात्स्येऽपि द्वादशदैवत्यविधाने न बाधप्रसङ्गवारकतया गारुडोक्तिः । *बह्वल्पं वेति ।

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

इत्यर्थः । येषां कल्पसूत्रे यावदितिकर्तव्यताकं कर्मोक्तं तेषां तावदेव । प्रधानस्य स्वसूत्राङ्गकलापेनैवाकाङ्क्षाशान्तेरितरस्मृत्याद्युक्ततदन्वयो नेत्यर्थः ।

स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः ।
अज्ञानादथवा लोभात्स तेन पतितो भवेत् ॥

इति वचनात्स्वगृह्योक्तं बह्वल्पं वा यादृशं तत्तादृशमेवानुष्ठेयं नतु शास्त्रान्तरमपेक्ष्यान्यथापि कर्तव्यम् । येषां तु गृह्ये स्मृत्यन्तरो-

क्तम्' इत्युक्तेः : *करणे त्वभ्युदयः, 'यन्नाम्नातं स्वशाखायाम्' इत्युक्तेः । आयुष्याणि 'आनो भद्राः' इत्यादीनि । *षड्भ्य इति मात्रादित्रिकोपलक्षणमिति

---

क्तस्य कस्यचिदङ्गस्य निषेधः तत्र तन्निषेधद्वारा तत्स्मृत्युक्तान्याङ्गस्याभिमतत्वबोधनात्तदनुष्ठेयम् ,

आत्मतन्त्रेषु यन्नोक्तं तद्ग्राह्यं पारतन्त्रिकम् ।
विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥

इति वचनात् । यस्य शास्त्रेऽनुक्ता विशेषास्ते खलु निश्चितं सामान्याः साधारणा इत्यर्थः । अत एव लौगाक्षिः--

ऊनो वाप्यतिरिक्तो वा यः स्वशाखोदितो विधिः ।
तेन सन्तनुयाद्यज्ञं न कुर्यात्पारतन्त्रकम् ॥

यज्ञपदमुपलक्षणम् । अत एवोक्तं--

स्वशाखाविधिमुत्सृज्य त्वन्यस्य विधिमाचरेत् ।
अप्रमाणमृषिं कृत्वा त्वन्धे तमसि मज्जति ॥
स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः ।
अज्ञानादथवा लोभात्स तेन पतितो भवेत् ॥ इति ।
ऋक्शाखी नैव कुर्वीत स्वकीयं परशाखया ।
प्रमादाद्यदि कुर्वीत पुनः संस्कारमर्हति ॥
यत्र नास्ति स्वशाखा चेदृक्शाखोक्तं समाचरेत् ।
पुनर्नार्हति संस्कारमन्यथाऽर्हति चेत् पुनः ॥
यजुःशाखाविधानेन यदि बह्वृचकर्म च ।
कृतं चापि हि तत्कर्म पुनः कुर्याद्यथाविधि ॥
ऋक्शाखाविधिना कर्म यदि स्यादन्यशाखिनाम् ।
न तत्कर्म पुनः कुर्यादिति यज्ञविदां मतम् ॥ इति ।

*करणे त्विति । उपयाचिताभिप्रायम् । *षड्भ्य इति । तथाच नवदैवत्यमेव तेनोक्तं भवति । परन्तु लक्षणां विनैव षट्-

पृथ्वीचन्द्रोदयः। *छन्दोगानां षड्दैवत्य*मन्येषां नवदैवत्यमित्याशार्कः। *मम तु मतं कोकिलमतानुसारिणां मातृमातामहप्रमातामहा इति मात्रा सहैव मातामहश्राद्धकरणात् तद्विषयमिदं षड्भ्य इति।

मातरस्तत्रैवोक्ताः—

गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश॥

मातरो लोकमातर इति सर्वविशेषणम्। तेन चतुर्दशत्वम्। यदा षोडशेति पाठस्तदा देवतान्तरम्। चन्द्रिकायां चतुर्विंशतिमते त्वन्या उक्ताः—

तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा।
इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाष्टमी॥

आसां जीवने प्रत्यक्षं पूजनम्। मृतानां त्वक्षतपुञ्जेषु इति हेमाद्रिः।

---

त्वस्य छन्दोगादिपरत्वसम्भवादुक्तव्याख्यानैयर्थ्यमरुचिः। *छन्दोगानामिति। गोभिलसूत्रे पार्वणद्वयाम्नानात्। कातीयानामप्येवमिति केचित्। *अन्येषामिति। "महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च। नवदैवतमत्रेष्टम्" इति वचनात्।

अत्र—

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च।
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठे मघासु च॥

इति वचनाद्यथासम्प्रदायं पक्षत्रयमिति मयूखः। तद्रक्ष्यति—अत्र द्वादशदैवत्यस्येति। *मम त्विति। एकेनैव पार्वणेन मातृमातामहयोः श्राद्धमिति तात्पर्यान्न षट्त्वानुपपत्तिरिति भावः।

*ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान्।
वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन्॥
मातृपूर्वान् पितॄन् पूज्य ततो मातामहानपि।
मातामहीस्ततः केचिद्युग्मा भोज्या द्विजातयः॥इति।

अत्र द्वादशदैवतस्य देशाचाराद्व्यवस्था। ब्रह्माण्याद्याः—

*ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः॥

इत्यपरार्के उक्ताः। अत्र चौलादीनां यौगपद्ये तन्त्रतोक्ता छन्दोगपरिशिष्टे—

*गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत्।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु॥

मातृभ्यः इति षष्ठ्यर्थे चतुर्थी। गणशः

---

*ब्रह्माणीति। ब्रह्माणमानयति जीवयति इति व्युत्पत्तेः। तेन "इन्द्रवरुण" सूत्रे ब्रह्मपदादानुगविधानेऽपि न दोषः। *ब्राह्मीति। वसोर्धारायां पूज्या एता इति याज्ञिकाः। *गणश इति। एकस्य शिशोः नामकर्मान्नप्राशनचौलोपनयनानि यदा एकस्मिन् काले क्रियन्ते तदा वृद्धिश्राद्धं तन्त्रेणैव कार्यमित्यर्थः। यत्र यत्र श्राद्धं भवेत्तत्र मातरः पूज्या इति च। केचित्तु अनेकेषां पुत्राणां कन्यानां वा सजातीयविजातीयानेकोपनयनोद्वाहादिसंस्कारे देशकालकर्त्रैक्याद्वृद्धिश्राद्धं तन्त्रेणेति वदन्ति। तन्न, योगसिद्ध्यधिकरणविरोधात्। तत्र हि सर्वफलार्थतया ज्ञातस्यापि ज्योतिष्टोमादेरेकस्मात्प्रयोगादेकमेव फलं नानेकानि फलानि, एकया सामग्र्या एकमेव कार्यं जायते इति नियमात्। तथाच तद्वदिहापि उपनयनविवाहादिजन्यपरमापूर्वाणामनेकत्वात्तत्संस्कार्यनिष्ठत्वेन तदङ्गाभ्युदयिकश्राद्धजन्यानामङ्गापूर्वाणामपि तन्निष्ठताऽपेक्षिता। नच सा सम्भवति उक्तनियमभङ्गापातात्। अतस्तत्र पृथगेव

*एकानेकपुत्राणां संस्कारेष्वेकदिने एकदेशकालकर्तृ-कयादित्यर्थः । तथा—

*असकृद्यानि कर्माणि क्रियेरन् कर्मकारिभिः ।
प्रतिप्रयोगं नैव स्युर्मातरः सगणाधिपाः ॥

*कर्मावृत्तावपि कुत्र श्राद्धं कार्यं (१)क्व नेत्युक्तं तत्रैव—

*आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पूर्णमासे तथैव च ॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥

---

वृद्धिश्राद्धमिति । *एकानेकेति । एकस्य अपत्यादेरनेकेषु नाम-कर्मादिसंस्कारेषु एकदिने एकेन कर्त्रा क्रियमाणेषु देशकालकर्तृ-क्याद्वृद्धिश्राद्धं सकृन्मातॄणां पूजा च सकृदित्येकोऽन्वयः । एव-मनेकस्यापत्यादेः जातकर्मादि संस्कारे प्रतिस्वमङ्गापूर्वोत्पत्तये संस्कार्याणां भेदेन संस्काराणां भेदेऽपि तत्र श्राद्धमेकमेवेत्यपर इति । तत्रानेकपदं दर्शितकेचिन्मतानुरोधि । नच तत्र निर्भरः कार्यः, योगसिद्ध्यधिकरणविरोधप्रसङ्गात् । न च कर्मनाशाज-लस्पर्शादिना यत्रानेकपुत्रादेः पुनरुपनयनं तत्परताऽनेकपदस्य युज्यते तस्य प्रायश्चित्तत्वेन श्राद्धस्यैवाभावात् प्रधानावृत्त्या प्राप्तामानान्दीश्राद्धावृत्तेरपवादमाह—*असकृदिति । "मातरः श्राद्धमेव च" इति पाठः । असकृत्पुनःपुनरित्यर्थः । प्र-तिदिनं प्रतिमासं प्रत्यब्दं चेति यावत् । *कर्मावृत्ताव-पीति । अयमर्थः एवं तर्हि ज्योतिष्टोमादिषु प्रतिप्रयोगं श्राद्धं न स्यात् "असकृद्यानि" इति सामान्यत एवाभिधानात् । अतः कुत्र कार्यं कुत्र न कार्यमिति संदेह इति । *आधाने

---

(१) 'कुत्र नेत्युक्तं' क० छ० ।

एतेषु प्रतिप्रयोगं नावर्तते किन्त्वादौ । एतद्भिन्ने सोमयागादौ तु प्रतिप्रयोगमावर्तत एव श्राद्धमित्यर्थः ।

क्वचिदादावपि निषेधमाह स एव—

*नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्ती*जातकर्मप्रोषितागतकर्मसु ॥
विवाहादिः कर्मगणो य उक्तो
गर्भाधानं शुश्रुमो यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्या-
च्छ्राद्धं नादौ कर्मणः कर्मणः स्यात् ॥

सोष्यन्त्या आसन्नप्रसवायाः 'सोष्यन्तीमभ्युक्ष्य' इत्युक्तं कर्म । *कात्यायनोक्तस्य श्राद्धस्य पाकप्राधान्यात्तस्य च—

जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।

इति निषे(१)धान्न जातकर्मणि नान्दीश्राद्धमित्या-

इति । नवयज्ञः आग्रयणेष्टिः । होमादिपदं च अग्निहोत्रहोमवैश्वदेवादौ ये वृद्धिश्राद्धमनुतिष्ठन्ति तत्परमित्युक्तं प्राक् । नारायणस्तु होमादिनवयज्ञपर्यन्तेषु न पृथक् श्राद्धं किन्तु आधाने कृतमेकमेव श्राद्धमुपकरोतीत्याह । *नाष्टकास्विति । इदं च वचनं नित्यानुवादो न निषेधः प्राप्त्यभावादित्याहुः । गोभिलीयानां होममात्रमष्टका नतु श्राद्धमिति तत्र निषेधार्थमष्टकापदम् । श्राद्धपदं च प्रमीतपितृगतफलार्थकं कर्म । अन्यथा पितृयज्ञे तत्प्रसङ्गात् । एवञ्च पृथगष्टकानिषेधो न व्यर्थ इति परे । सुतसंस्कारकर्मतया जातकर्माङ्गं श्राद्धं प्राप्तं निषेधति—*जातकर्मेति । आशार्कमतमाह—*कात्यायनोक्तस्येति । एतन्मते कर्माङ्गं नान्दीश्राद्धम् । तथाच तल्लोपेऽपि न प्रधानलोपः । वृद्धिवदिति दृष्टान्तासामञ्ज-

(१) 'निषेधान्न जातकर्मणि नान्दीश्राद्धम । आमान्नेन वा कार्यमित्याशार्कः । गौडास्तु' क० छ० ।

शार्कः। आमान्नेन वा कार्यमित्यपि तेनैवोक्तम्। *गौडास्तु जातकर्मण्येव निषेधः। पुत्रजन्मनिमित्तकं तु कार्यमेव 'जन्मन्यथोपनयने' इत्युक्तेः।

*नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्।
पुत्रजन्मनि तत्कार्यं जातकर्म समं नरैः॥

इति मार्कण्डेयपुराणाच्चेत्याहुः। हारलतायां श्राद्धविवेके चैवम्। *एतेन जातकर्माणि कालान्तरे श्राद्धनिषेधो न (१)पुत्रजन्मादिने इतिवाचस्पतिमतं परास्तम्। *अथ 'निषेककाले' इति वचनात् गर्भाधाने न निषेधः(२)। प्रोषितेति 'प्रोष्येत्य गृहानुपतिष्ठते पुत्रं दृष्ट्वा जपति' इति विहितं कर्म। विवाहादिः गर्भाधानान्तो यो गृहप्रवेशधृ(३)तिहोमचतुर्थीकर्मादिः कर्मसमूह उक्तः सूत्रकारेण, तत्रापि प्रतिकर्म नेत्यर्थः। अन्येऽपि हलाभियोगादयोऽपवादविषयास्तत्रैव ज्ञेयाः। अप्रचारान्नोच्यन्ते।

---

स्यं जातकर्मनिषेधवैयर्थ्यं चेत्यरुचिः। स्वमतमाह—*गौडास्त्विति। *नैमित्तिकमिति। अत्र नैमित्तिकजातकर्मपदाभ्यां पुत्रजन्मनिमित्तकमेव श्राद्धं नतु जातकर्माङ्गं, "न सोष्यन्ती जातकर्म" इति निषेधात्। *एतेनेति। सुताद्यास्यावलोकेत्यत्र निरूपिततत्त्वमेतत्। अत्र गर्भाधानं शुश्रुमो यस्य चान्ते इत्यत्र गर्भाधानेऽपि निषेध इति भ्रमं वारयति—*(४)अत्रेति।

---

(१) 'पुत्र' नास्ति क० छ०।

(२) यद्यपि गपुस्तके इतउत्तरं 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं विधिवत्कृतम्॥ इति पारस्करः, इत्यधिकं दृश्यते, तथापि क० छ० पुस्तकयोरनुपलम्भाट्टीकायां तदुपलम्भाच्च मूले उपेक्षितम्।

(३) 'धृतिहोम' नास्ति ग०।

(४) अत्र मूलानुरोधेन 'अथेति' इति प्रतीकमावश्यकम्।

अथाऽधिकारिणः। विष्णुपुराणे—

जातस्य जातकर्मादि क्रिया(१)काण्डमशेषतः।
पिता *पुत्रस्य कुर्वीत श्राद्धं चाभ्युदयात्मकम्॥

अत्र केचित् जीवत्पितुः साग्नेरेव वृद्धिश्राद्धेऽधिकारः नतु निरग्नेः,

न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः॥
पितामहेप्येवमेव कुर्याज्जीवति साग्निकः।
साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे॥

इति चन्द्रिकायां सुमन्तूक्तेरित्याहुः। प्रयोगपारिजातेऽप्यनाहिताग्निर्न (२)कुर्यादिति यद्व्याख्यातं, तन्न,

अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि।
येभ्य एव पिता दद्यात्तानेवोद्दिश्य तर्पयेत्॥

इति हारीतोक्तेः। सौमन्तवं तु वृद्धिश्राद्धभिन्नश्राद्ध(३)परमित्युक्तं मदनरत्ने। (४)श्राद्धपदं पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रोदयः। निर्णयामृते तु हारीतीयेऽनग्निकोऽनाहिताग्निरभिप्रेतः। पूर्ववचने तु साग्निकः श्रौ-

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥

इति पारस्करः। *पुत्रस्येति। पुंस्त्वमविवक्षितमनुवाद्यगतत्वात्। आभ्युदयिकं भवति तच्च समन्त्रकं, मन्त्रबाधे मानाभावात्। "तूष्णीमेताः क्रियाः स्त्रीणाम्" इति याज्ञवल्क्ये तु जातकर्मादिसंस्कारेषु मन्त्रबाधार्थम् 'एता' इत्यनेन प्रक्रान्ततया तेषामेव परामर्शात्। यदि हि "अप्स्ववभृथेन चरन्ति" इति तृतीयान्तेन साङ्गभावनामुक्त्वा तस्या तूष्णीत्वं विधीयते तदा स्यादपि

(१) 'काण्डविशेषतः' क०। (२) 'कुर्यादितीदं' क० छ०
(३) 'पर' नास्ति क०। (४) 'श्राद्धपदं' नास्ति क० छ०।

ताग्निः स्मार्ताग्निश्चोच्यते । तेनोभयाग्निहीनस्य नेत्युक्तम् । *तन्न, *पूर्वोक्तदिशा गतिसम्भवेऽनाग्निपदस्य स्मार्ताग्निपरत्वे मानाभावात् । वक्ष्यमाण*नित्यानित्यसंयोगविरोधात् ।

*पितरो जनकस्येज्या यावद्व्रतमनाहितम् ।
समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् ॥

इति पृथ्वीचन्द्रोदये यमवचोविरोधाच्च । अपरार्कोऽपि—

*'समावर्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्यात्'

इत्याह । अतः पूर्वमेव साधु । वोपदेवोऽप्येवमाह । यत्तु मतं जीवत्पितुः पुत्रनामकर्मादौ न वृद्धिश्राद्धं, हारीतीये—*जन्मादावित्यादिशब्देन तत्प्राप्तावपि—

उद्वाहे पुत्रजनने पि(१)त्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥ इति ।

---

अङ्गमात्रबाधः इह तु यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या इत्यत्रेष्टीनामिव क्रियाणां प्रथमान्तपदोपात्तत्वात्प्रधाने एव तूष्णींत्वविधिनाङ्गेऽपीति । तेन कन्याया जातकर्मादौ वृद्धिश्राद्धं समन्त्रमेवेति । मतद्वयं दूषयति—*तन्नेति । *पूर्वोक्तदिशा वृद्धिश्राद्धभिन्नश्राद्धपरतया । *नित्येति । जातकर्मादिकं कुर्यादिति नित्यसंस्कारादिकमानिसेन वृद्धिश्राद्धेन कुर्यादित्यर्थपर्यवसानात् । *पितर इति । उत्तरार्धेन जीवत्पितृकस्योपनयनोत्तरं विवाहमनुरुध्यैव वृत्तिश्राद्धाधिकारलाभात् । उभयाग्निहीनस्य नेत्यत्र व्यभिचारमप्याह—*समावर्त्तने इति । पित्र्येष्टिश्चातुर्मास्ये सौमिके मखे तृतीयसवने पुरोडाशखण्डैः पिण्डदानम् । *जन्मादाविति । अयं भावः । उद्वाह इति वाक्ये षट्पदं न षट्स्वेवेति परिसंख्यार्थं, त्रैदोष्यात् ।

---

(१) 'पुत्रेष्ट्यां' क० ।

मैत्रायणीयपरिशिष्टे—'उद्वाह एव तस्योपसंहारात् । एवं यत्र (१)संस्कारादिपदं तदप्युद्वाहादिपरमेव' इति । तन्न, उद्वाहपदस्य स्वविवाहपरत्वस्यापि सम्भवात् । पुत्रविवाहपरत्वे मानाभावात् ।

(ना(२)मकर्मणि बालानां चूडाकर्मादिके तथा ।

इत्यादिभिर्नित्यश्राद्धस्य चौलाद्यङ्गत्वावगतौ नित्यानित्यसंयोगविरोधाच्च । ) अतो जन्मादाविति सर्वसंस्कारसंग्रहः । तथा कात्यायनः—

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

---

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।

इत्यादिवचनान्तरविरोधाच्च । किन्तु उपलक्षणम् । तत्रोद्वाहपदं स्वद्वितीयोद्वाहपरं पुत्रजनन इति संस्कारसामान्योपलक्षणम् । पित्र्येष्ट्यामिति द्वयं उद्वाहादिचतुष्टयं वा यत्र प्रधाने जीवत्पितृकस्याधिकारस्तत्र तदङ्गपित्र्यस्योपलक्षणं, साजात्यात् । तेनाग्न्याधानरुद्रानुष्ठाननववेश्मप्रवेशाश्रमान्तरस्वीकारतडागारामकूपाद्युत्सर्गतुलापुरुषादिमहादानदर्शपूर्णमासादिषु जीवत्पितृकस्य नान्दीश्राद्धाधिकारः । उत्तरार्धे तु तीर्थे ब्राह्मण आयात इत्येताभ्यां स्वतन्त्रं श्राद्धमुपलक्ष्यते । तदेव चान्वष्टक्यं गयाप्राप्तौ सत्यामिति वचनोक्तमात्रान्वष्टक्यादित्रयमेव । नचैवमुक्तत्रयमात्रोपलक्षणे अहरहः श्राद्धसंक्रान्तियुगादिमन्वादिग्रहणादिश्राद्धादौ जीवत्पितृकस्याधिकाराभावे—

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥

इतिदर्शापरपक्षिकश्राद्धयोः प्राप्त्यभावान्निषेधानुपपत्तिरिति वा-

---

(१) 'यत्र तु' ग० । (२) धनुश्चिन्हान्तर्गतं नास्ति क० छ० ।

ताग्निः स्मार्ताग्निश्चोच्यते । तेनोभयाग्निहीनस्य नेत्युक्तम् । *तन्न, *पूर्वोक्तदिशा गतिसम्भवेऽनाग्निपदस्य स्मार्ताग्निपरत्वे मानाभावात् । वक्ष्यमाण*नित्यानित्यसंयोगविरोधात् ।

*पितरो जनकस्येज्या यावद्व्रतमनाहितम् ।
समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् ॥

इति पृथ्वीचन्द्रोदये यमवचोविरोधाच्च । अपरार्कोऽपि—
*'समावर्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्यात्'
इत्याह । अतः पूर्वमेव साधु । बोपदेवोऽप्येवमाह । यत्तु मतं जीवत्पितुः पुत्रनामकर्मादौ न वृद्धिश्राद्धं, हारीतीये—*जन्मादावित्यादिशब्देन तत्प्राप्तावपि—

उद्वाहे पुत्रजनने पि(१)त्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥ इति ।

---

अङ्गमात्रबाधः इह तु यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या इत्यत्रेष्टीनामिव क्रियाणां प्रथमान्तपदोपात्तत्वात्प्रधाने एव तूष्णींत्वविधिनाङ्गेऽपीति । तेन कन्याया जातकर्मादौ वृद्धिश्राद्धं समन्त्रमेवेति । मतद्वयं दूषयति—*तन्नेति । *पूर्वोक्तदिशा वृद्धिश्राद्धभिन्नश्राद्धपरतया । *नित्येति । जातकर्मादिकं कुर्यादिति नित्यसंस्कारादिकमानिसेन वृद्धिश्राद्धेन कुर्यादित्यर्थपर्यवसानात् । *पितर इति । उत्तरार्धेन जीवत्पितृकस्योपनयनोत्तरं विवाहमनुरुध्यैव वृत्तिश्राद्धाधिकारलाभात् । उभयाग्निहीनस्य नेत्यत्र व्यभिचारमप्याह—*समावर्त्तने इति । पित्र्येष्टिश्चातुर्मास्ये सौमिके मखे तृतीयसवने पुरोडाशखण्डैः पिण्डदानम् । *जन्मादाविति । अयं भावः । उद्वाह इति वाक्ये षट्पदं न षट्स्वेवेति परिसंख्यार्थं, त्रैदोष्यात् ।

---

(१) 'पुत्रेष्ट्यां' क० ।

मैत्रायणीयपरिशिष्टे-'उद्वाह एव तस्योपसंहारात् । एवं यत्र (१)संस्कारादिपदं तदप्युद्वाहादिपरमेव' इति । तन्न, उद्वाहपदस्य स्वविवाहपरत्वस्यापि सम्भवात् । पुत्रविवाहपरत्वे मानाभावात् ।

(ना(२)मकर्मणि बालानां चूडाकर्मादिके तथा ।

इत्यादिभिर्नित्यश्राद्धस्य चौलाद्यङ्गत्वावगतौ नित्यानित्यसंयोगविरोधाच्च ।) अतो जन्मादाविति सर्वसंस्कारसंग्रहः । तथा कात्यायनः—

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

---

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।

इत्यादिवचनान्तरविरोधाच्च । किन्तु उपलक्षणम् । तत्रोद्वाहपदं स्वद्वितीयोद्वाहपरं पुत्रजनन इति संस्कारसामान्योपलक्षणम् । पित्र्येष्ट्यामिति द्वयं उद्वाहादिचतुष्टयं वा यत्र प्रधाने जीवत्पितृकस्याधिकारस्तत्र तदङ्गपित्र्यस्योपलक्षणं, साजात्यात् । तेनाग्न्याधानरुद्रानुष्ठाननववेश्मप्रवेशाश्रमान्तरस्वीकारतडागारामकूपाद्युत्सर्गतुलापुरुषादिमहादानदर्शपूर्णमासादिषु जीवत्पितृकस्य नान्दीश्राद्धाधिकारः । उत्तरार्धे तु तीर्थे ब्राह्मण आयात इत्येताभ्यां स्वतन्त्रं श्राद्धमुपलक्ष्यते । तदेव चान्वष्टक्यं गयाप्राप्तौ सत्यामिति वचनोक्तमात्रान्वष्टक्यादित्रयमेव । नचैवमुक्तत्रयमात्रोपलक्षणे अहरहः श्राद्धसंक्रान्तियुगादिमन्वादिग्रहणादिश्राद्धादौ जीवत्पितृकस्याधिकाराभावे—

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥

इतिदर्शापरपक्षिकश्राद्धयोः प्राप्त्यभावान्निषेधानुपपत्तिरिति वा-

---

(१) 'यत्र तु' ग० । (२) धनुश्चिन्हान्तर्गतं नास्ति क० छ० ।

सुतानां चौलादिसंस्कारेषु पिता स्वपितृभ्यः पिण्डान् श्राद्धं *'पिण्डदोऽशहरश्चैषाम्' इति दर्शनात् ओद्वहनाद्विवाहपर्यन्तं दद्यात्। विवाहश्च प्रथमः,

*नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः।

अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्॥

---

च्यम्। तीर्थे इत्यनेन प्राप्तस्य गयाश्राद्धस्यैवायं निषेधः वाक्यान्तरेण गयाप्राप्तौ सत्यां मातृश्राद्धमात्रस्य विधानात्तत्र दर्शश्राद्धापरपक्षश्राद्धे दृष्टान्त इति। तेन गयाश्राद्धेतरतीर्थश्राद्धं ब्राह्मणपदस्य द्रव्योपलक्षणत्वात् द्रव्यब्राह्मणप्राप्तिश्राद्धद्वयं मात्रान्वष्टक्यादिश्राद्धत्रयं चेति षट्सु स्वतन्त्रश्राद्धेषु जीवत्पितृकस्याधिकार इति। अथवा—

सपितुः पितृकृत्येषु अधिकारो न विद्यते।

इति श्राद्धे सामान्यतो जीवत्पितृकस्याधिकारो निराकृतः। तत्र उद्वाहे पुत्रजनने इत्यनेन विवाहादिषु तीर्थादौ च जीवत्पितृकः कर्त्ता विधीयते। तत्र पुत्रजनने इत्यनेन पुत्रजन्मनिमित्तकश्राद्धे विहितः स कर्त्ता आधानाद्यङ्गभूते आभ्युदयिके अतिदेशेन लभ्यते। अतिदेशश्च निषेककाले सोमेचेत्यादिः प्राक् पारस्करेणोक्तः। तत्र सोमग्रहणमाधानाग्निहोत्रादीनां सर्वेषामुपलक्षणम्। एवञ्च जीवत्पितृकेण नान्दीश्राद्धं विनैवाधानादि कार्यमिति न भ्रमितव्यमिति। पिण्डपदस्य श्राद्धपरत्वे सम्वादमाह- *पिण्डद इति। स्त्रीणामपि पूर्त्तमहादाने कन्योद्वाहादिप्रधानेऽधिकारात्तदङ्गे नान्दीश्राद्धेऽप्यधिकारः स्पष्ट एव। तत्र जीवद्भर्तृकाया अजीवद्भर्तृकाया वा पूर्त्तमहादानादिषु पुरुषस्येव स्वीयान्येव मातृपितृपार्वणानि। भर्तृसन्निधानेन जीवद्भर्तृकायाः कन्योद्वाहे भर्त्तुरेव मात्रादिपार्वणत्रयम्। मृतभर्तृकायास्तु स्वीयमात्रादि पार्वणत्रयं, संस्कार्यपितृमातामहपार्वणद्वयं वा। *नान्दीश्राद्धमिति। यदि तु पिता देशान्तरं गतः मृतो वा पितामहादिश्च नास्ति तदा स्वयमेव नान्दीश्राद्धं

इति स्मृतेः । तस्य पितुरभावे *तत्क्रमात्—

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ॥

इति यः कर्तृक्रमस्तेन क्रमेण *ज्येष्ठभ्रात्रादिर्दद्यादिति चन्द्रिकादयः । *हेमाद्रिस्तु तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्यात्स तत्क्रमात्संस्कार्यपितृक्रमाद्द्यान्न तु स्वपितृभ्य इति व्याचख्यौ ।

*समावर्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वात् पितैव नान्दीश्राद्धं कुर्यात् । तदभावे ज्येष्ठभ्रात्रादिः । तदभावे स्वयमेव कुर्यात्, उपनयनेन कर्माधिकारस्य जातत्वात् । एवमाद्यविवाहेऽपीति पृथ्वीचन्द्रोदयचन्द्रिकादयः । मदनरत्नेऽप्येवम् । यदा तु पितरि संन्यस्ते प्रोषिते पतिते वा धर्मार्थं तत्पुत्रमन्यः संस्कुर्यात्तदा संस्कार्यपितुः पित्रादिभ्यो दद्यात्,

*पितरो जनकस्येज्या यावद्व्रतमनाहितम् ।

---

कुर्यात्, उपनयनेन कर्माधिकारस्य जातत्वात् । अत्र पूर्वार्धोक्तं पितुर्नान्दीश्राद्धं न विधेयं वाक्यभेदापत्तेः । किन्तु स्वद्वितीयादिविवाहे नान्दीश्राद्धं कुर्यादित्येक एव विधिरिति । *तत्क्रमादिति । "पिता पितामहो भ्राता" इत्यादिवचनात्पितामहादिः स्वपितृभ्य एव नान्दीश्राद्धं कुर्यादित्यर्थः । विवाहे पितामहानन्तरमुपनयने तु पितृव्यानन्तरं भ्राता । तत्र पूर्वसंस्कृतत्वं विशेषणम् । तेन ज्येष्ठत्वं लभ्यते इत्याह—*ज्येष्ठेति । एतेन यत्र ज्येष्ठा कन्या कनिष्ठो भ्राता तत्र कथञ्चिद्भ्रातुरुपनयनं कृत्वा पश्चात्तत्कन्यादानं न भवतीति सूचितम् । हेमाद्रिमतमाह—*हेमाद्रिस्तु इति । पृथ्वीचन्द्रमतमाह—*समावर्त्तनस्येति । अत्राद्यविवाहे पित्राद्यभावेऽस्तु स्वस्याधिकारः । समावर्त्तने तु सत्यपि पितरि स्वस्यैवाधिकारः "समावर्त्यमाने" इति सूत्रादित्यरुचिः । पितरीत्यादेरा-

समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् ॥

इति पृथ्वीचन्द्रोदये यमोक्तेः। जीवत्पितृकस्य *विशेषमाह कात्यायनः--

*वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ इति।

यत्तु बह्वृचपरिशिष्टे--जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात् तस्यां जीवन्त्यां मातामहस्यैव इति, तत् *तच्छाखीयानामेवेति दिक्। स्मृतितत्त्वादिगौडग्रन्थेषु तु जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यात्,

---

इत्यत्रवचनेनोक्ताधिकारिणोऽसत्त्वे इत्यर्थः। *पितर इति। जीवत्पितृके एव स्वरसत एतत्प्रवृत्तेः। एवञ्च मृतपितृकस्य बालस्य यत्रान्येन संस्कारः क्रियते तत्र संस्कार्यपित्रादिभ्य एवेत्यर्थसिद्धम्। *विशेषं देवताविशेषम्। *वृद्धाविति। अनेकनिमित्तसमावेशे वाक्यभेदापत्तेर्वृद्धितीर्थपदे जीवत्पितृकाधिकारिकश्राद्धमात्रोपलक्षके। तानि च श्राद्धानि प्राक् प्रपञ्चितानि 'उद्वाहे पुत्रजनने' इति अग्रे पुनः प्रपञ्चनीयानि च। उक्तरीत्या तेषु "मात्रोरर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि" इत्यादिवज्जीवत्पितृकाधिकारसमर्थनात्। तेषां देवताकाङ्क्षासत्त्वात् जीवत्सन्यस्तपितृकस्य तु दर्शश्राद्धादावप्यधिकारः उत्तरार्धेन च पितृदेवता एवैवं प्रतिदेवतात्वेनोच्यते। एवञ्च जीवत्पितृकस्य मातरि मातामहे च मृतेऽपि न स्वमातृमातामहपार्वणयोः प्राप्तिः, किन्तु पितुरेव। पितामहेऽपि जीवति तन्निरूपिता एव देवताः पौत्रस्य पितृनिरूपितत्वसम्बन्धेन एतद्वचनादेव प्राप्तेः। पिता हि पितृजीवनेन पितामहादिभ्यो ददाति अतः पुत्रोऽपि तानेव दद्यादित्यर्थस्य सम्भवात्। "अत्र ह्येवावपन्ति" इतिवदेवकारेण शब्दतस्तासां परिसंख्यातत्वात्। *तच्छाखीयानामेवेति। आश्वलायनानामेव गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्माद्यपत्य-

जीवन्तमपि दद्याद्वा प्रेतायान्नोदके द्विजः ।

इति कात्यायनोक्तेः,

जीवे तस्मिन्सुताः कुर्युः पितामह्या सहैव तु ।
तस्यां चैव तु जीवत्यां तस्याः श्वश्र्वेति निश्चयः॥

इति हारीतोक्तेश्चेत्युक्तम् । तस्मिन् *भर्तरि । दाक्षिणात्यास्तु पूर्वोक्तस्य सपिण्डीकरणादिविषयत्वात्

*जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत् ।

इति वचनात्तद्वर्गस्य लोप एवेत्याहुः । यत्तु चन्द्रिकायां पारस्करः--

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवच्च तत् ॥ इति ।

---

संस्कारेषु अयं प्रतिप्रसव इति भावः । अत्र स्वमातृपार्वणं कृत्वा पितुः पितृपार्वणं कुर्यान्मातृमातामहयोरन्यतरजीवने तु पितृनिरूपितः स वर्ग इज्यः । उभयोर्जीवने तु वर्गत्रयमपि पितृनिरूपितमेव, दाक्षिणात्यास्त्विति मतान्तरं तु अनुपदं वक्तव्यम् । तस्मिन्निति विवृणोति—*भर्त्तरीति । अत्र सपिण्डीकरणविधीनां वृद्धौ प्रवर्त्तनमयुक्तं प्रकरणहानिप्रसङ्गादिति अरुचिः । *जीवेत्त्विति ।

पितृवर्गे मातृवर्गे तथा मातामहस्य च ।

इति पूर्वार्धम् । पूर्वोक्तपरिशिष्टे एवकारोपादानादिति भावः । अत्र एवकारमालोच्य स्वीयमातृमातामहपार्वणे एव भवतो न पितृपार्वणमित्यर्थकरणमनुचितम्, अग्निहोत्रे मान्त्रवर्णिकाग्निसूर्ययोः [illegible] प्रजापतिविधाविव मातृमातामहयोः,

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।

इति पितृप्राप्तेर्मातामहप्राप्तावुपजीव्यत्वेन तद्बाधायोगान्मानाभावाच्च । एवकारादेश्च पितुर्मात्रादिमात्रपरिसंख्यानार्थत्वादित्य-

तत्र गर्भाधानादौ कर्माङ्गं, *जातकर्मादावुक्तं तु वृद्धिश्राद्धं पृथगेव वृद्धिवदित्युक्तेः। गौडनिबन्धे मात्स्ये—

*अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके ।
पुंसवे च निषेके च नववेश्मप्रवेशने ॥
देव(१)व्रते जलादीनां प्रतिष्ठायां तथैव च ।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥

*अत्र भूतनिमित्तानां वृद्धित्वम्, भाविनिमित्तानामङ्गत्वम् । वृद्धिशब्दस्तद्धर्मातिदेशार्थ इति गौडाः । *अन्ये तु निषेकादौ कर्माङ्गवृद्धिश्राद्धयोः समुच्चयमाहुः । नान्दीश्राद्धसंज्ञा तूभयानुगता ॥

अथेतिकर्तव्यता । पृथ्वीचन्द्रोदये वृद्धपराशरः—

मालत्याः शतपत्र्या वा मल्लिकाकुब्जयोरपि ।
केतक्याः पाटलाया वा देया माला न लोहिता ॥

श्राद्धे मालानिषेधस्यायमपवादः । तथा—

सुवेषभूषणैस्तत्र सालङ्कारैस्तथा नरैः ।
कुङ्कुमाद्यनुलिप्ताङ्गैर्भाव्यं तु ब्राह्मणैः सह ॥
स्त्रियोऽपि स्युस्तथाभूता गीतनृत्यादिहर्षिताः ॥

हेमाद्रौ ब्रह्माण्डे—

कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये ।

---

रुचिः । *जातकर्मादाविति । जातकर्मणि वृद्धिश्राद्धनिषेधाज्जातकर्मण आदिः तत्पूर्वमित्यर्थः । *अन्नप्राशे चेति । पुत्रोत्पत्तिनिमित्तकं वृद्धिश्राद्धम् । अन्यत्र तद्वत् यथा गङ्गायां मत्स्यः गङ्गायां घोषः इति गङ्गापदवदेकमेव शाक्तं भाक्तं च बोध्यम् । प्रकारान्तरमाह—*अत्रेति । *अन्ये त्विति । समुच्चयो व्यर्थ

---

(१) 'वेश्मव्रतजलादीनां' छ० ।

कुशा अपि वक्ष्यन्ते । छन्दोगपरिशिष्टे—

*प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।

*उभयतः दैवे पित्र्ये च । *वैश्वदेवौ द्वौ विप्रौ, पित्रादीनामेकैकस्य द्वौद्वाविति विंशतिः । *त्रिके वा द्वावित्यष्टौ विप्राः । अत्र विप्रालाभे स्त्रियोऽपि भोज्या इत्याह(१)परार्के वृद्धवसिष्ठः—

मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि ।
पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः ॥

*मातृत्रिके चतस्रः मातामहीत्रिके चेत्यष्टाविति हेमाद्रिः । अत्र *पित्र्ये प्राङ्मुखा विप्राः । पाद्ये पित्र्ये च-

इत्यरुचिः । *प्रातरिति ।

उपविश्य कुशान्दद्यादृजुनैव हि पाणिना ।

इत्युत्तरार्धम् । *उभयतः प्राङ्मुखानुदङ्मुखांश्चेत्यन्ये । *वैश्वदेवे द्वाविति ।

एकैकस्य तु वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत् ।
वैश्वदेवे तथा द्वौ च न प्रसज्येत विस्तरे ॥

इति छागलेयवाक्यात् । वर्गस्येत्यस्य वर्गस्थस्येत्यर्थात् । वर्गस्येतियथाश्रुतेऽप्याह--*त्रिके वेति ।

पूर्वाह्ने भोजयेद्विप्रानष्टौ सर्वं प्रदक्षिणम् ।

इति भविष्यात् ।

तथाच नवमं विप्रं चतुरस्रे खगेश्वर ।

इति भविष्यं तत्र चतुरस्रं पाद्यस्य मण्डलम् अतः तेन पाद्यं ग्राह्यम् । तत्र क्रियमाणे योऽतिथिरागच्छेत्तं नवमं भोजयेदित्यर्थः । *मातृत्रिके इति । द्वादशदैवत्यपरम् । मातामहीश्राद्धस्य मातृश्राद्धत्वं कथमित्यरुचिः । चतस्रः प्राङ्मुख्यः चतस्र उदङ्मुख्य इति युक्तम् । *पित्र्ये इति ।

---

(१) 'इत्याहाशार्के वृद्ध' क० छ० ।

तुरस्रं मण्डलमिति जयन्तः। हेमाद्रौ ब्राह्मे--

विप्रान् प्रदक्षिणावर्तं प्राङ्मुखानुपवेशयेत्।

छन्दोगपरिशिष्टे---

गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेत्।

नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते॥

*ज्येष्ठोत्तरकरान्युग्मान्कराग्राग्रपवित्रकान्।

कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते॥

पित्रादेर्द्वौ द्वौ विप्रौ तयोर्दक्षिणहस्तौ संयोज्य प्रथमोपवेशितविप्रकरोपरि तन्त्रेण द्वयोरर्घ्यं दद्यादित्यर्थः।

बह्वृचकारिकायां तु--

दत्त्वार्घ्यादे(१)कदेशः स्यादर्घ्यदानं प्रतिद्विजम्।

आवृत्तिरपि मन्त्रस्य प्रतिब्राह्मणमिष्यते॥

प्रतिद्विजं पृथक्कुर्यान्निवीत्यर्घ्यानुमन्त्रणम्॥

इत्युक्तम्।

मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्।

गायत्र्यनन्तरं स्तोत्रं मधुमन्त्रविवर्जितम्॥

न चाश्नंस्तु जपेदत्र कदाचित्पितृसूक्तकम्॥

---

प्राङ्मुखांश्चतुरश्चैव चतरश्च उदङ्मुखान्।

इति भविष्यात्। छान्दोग्ये चत्वार्येवार्घ्यपात्राण्याभ्युदयिके इति। *ज्येष्ठेति। युग्ममध्ये ज्येष्ठकरो द्वितीयविप्रकरस्योत्तरो येषु ते तथा। कराग्रे अग्रं पवित्रस्य येषु। कात्यायनः—

सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्।

निपातो नहि सव्यस्य जानुनो विद्यते क्वचित्॥

पाद्मे—

तिलार्थस्तु यवैः कार्यः सव्येनैवानुपूर्वशः।

---

(१) 'देकदेशात्स्या' ग०।

तथा—

संपन्नमिति तृप्ताःस्थप्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥
अक्षय्योदकदानं च अर्घ्यदानवदिष्यते ।
षष्ठ्यैव नियतं कुर्यान्न चतुर्थ्यां कदाचन ।

चन्द्रोदये ब्राह्मे—

*पठेच्छकुनिसूक्तं तु स्वस्तिसूक्तं शुभं तथा ।
नान्दीमुखान् पितॄन् भक्त्या साञ्जलिश्च *समाह्वयेत् ॥

तथा—

शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा ।
मिश्रीकृत्वा तु चतुरः पिण्डाञ्श्रीफलसन्निभान् ॥
दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम् ।
*द्राक्षामलकमूलानि यवांश्च विनियोजयेत् ॥

---

*पठेदिति ।

अन्य एव जपः कार्यः सोमसामादिकः शुभः ।

ब्रह्माण्डे—

स्वाहाशब्दं प्रयुञ्जीत स्वधास्थाने च बुद्धिमान् ।
वृद्धिश्राद्धे सदा सव्यं यज्ञसूत्रं च कारयेत् ॥
कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये ।
प्राङ्मुखो देवतीर्थेन वृद्धौ परिचरेत् पितॄन् ॥
सव्येनैवोपवीतेन क्षिप्रं देशविमार्जनम् ॥

आसायं न प्रतीक्ष्यमित्यर्थः । *समाह्वयेदिति ।

पठेत्पवित्रं मन्त्रं तु विश्वेदेवास आगता ।

इति उत्तरार्धम् । *द्राक्षेति । पिण्डेभ्यो निवेदयेत्यर्थः । (१)*पात्राणीति । "तानि सोपपात्राणि" इति परिशिष्टम् ।

---

(१) अस्य प्रतीकस्य मूलं नोपलभ्यते ।

तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा ॥

तत्रैव चतुर्विंशतिमते--

द्वौ द्वौ चाभ्युदये पिण्डावेकैकस्मै विनिक्षिपेत् ।
एकं नाम्ना परं तूष्णीं दद्यात्पिण्डान्पृथक्पृथक् ॥

वसिष्ठः---

प्राङ्मुखो देवतीर्थेन (१)प्राक्कूलेषु कुशेषु च ।
दत्त्वा पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखम् ॥

नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा पिण्डदानमन्त्र इति वृत्तिः। अत्र पिण्डाः कृताकृता इत्युक्तम् तत्रैव भविष्ये—

पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ॥

छागलेयः—

अग्नौकरणमर्घ्यं वाऽवाहनं चावनेजनम् ।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्तते ॥

तेनात्र भोजनस्यैव प्रधानत्वाद्यदि विप्रस्य वमनं तदा तस्यैव पार्वणस्य पुनरावृत्तिरिति सिद्धम्। अत्र सांकल्पे विशेषः प्रयोगपारिजाते संग्रहे—

शुभार्थी प्रथमान्तेन वृद्धौ सांकल्पमाचरेत् ।
न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ॥

नामगोत्रादिनिषेधोऽप्यत्रैव नतु सापिण्डकश्राद्धे इति स एव ।

अत्रायं क्रमः। नान्दीश्राद्धे दैवे क्षणः क्रियताम् इति द्वौ युगपन्निमन्त्र्य ओंतथेति विप्राभ्यां युगपदुक्ते प्राप्नुतां भवन्तौ प्राप्नुवाव इति वैश्वदेववत् पित्र्ये च द्विवचनान्तेन विप्रद्वये प्रयोगं कुर्यात् । आहिताग्निस्तु

(१) 'प्राक्कुलेषु' क० ।

हेमाद्रौ ब्राह्मे—

योऽग्नौ तु विद्यमानेऽपि वृद्धौ पिण्डान्न निर्वपेत् ।
पतन्ति पितरस्तस्य नरके स च पच्यते ॥

बह्वृचपरिशिष्टे—"द्वौ दर्भौ प(१)वित्रे, पवित्राणि चत्वारि । शंनोदेवीत्यनुमन्त्रितासु यवानावपति—'यवोसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितृनिमाँल्लोकान्प्रीणयाहिनः स्वाहेति स्वाहार्घ्याः इति पृच्छति । विश्वेदेवा इदं वो अर्घ्यं, नान्दीमुखाः पितर इति यथालिङ्गम*र्घ्यदानं गन्धादिदानं द्विर्द्विः । पाणौ *होमोऽग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति । 'अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहणम् । पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेन्मधुवाता ऋचःस्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च षष्ठीं भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्" इति । चन्द्रिकायां वृद्धवसिष्ठः—

पितृप्रश्ने तु *संपन्नं दैवे रुचितमित्यपि ।

---

सहायभूतपात्रान्तरसहितानीत्यर्थः । *अर्घ्यदानमिति । पितरः प्रीयन्तामिति अपां प्रतिग्रहणम् । एवमुत्तरयोरपि पितामहप्रपितामहयोः । सर्वं द्विर्द्विरिति परिशिष्टशेषः । गन्धादीनि एकैकत्र द्विर्द्विर्देयमित्यर्थः । *होमः अग्नौकरणहोमः । तथा पृषदाज्यमिश्र ओदनो हविः सर्वत्र तस्य अर्धं द्वे द्वे आहुतीर्जुहुयात्सर्वत्रान्नकार्ये । दधिमिश्रमाज्यं पृषदाज्यम् ।

भविष्ये—

पृषदाज्येन संयुक्तं दद्यादोदनमादितः ।
पायसं च तथा भक्ष्यं मोदकादिरसोत्तरम् ॥
मधुरं भोजनं दद्यान्नचाम्लं परिवेषयेत् ॥

---

(१) 'पवित्रे' नास्ति ग० ।

दधिकर्कन्धुमिश्राश्च पिण्डाः कार्या यथाक्रमम् ॥

कात्यायनः—'त्यमूषुवाजिनम्' इति विप्रांश्च विसर्जयेत् । *'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यक्षय्यस्थाने स्वधां वाचयिष्य इत्यस्य स्थाने 'नान्दीमुखान् पितृन् वाचयिष्ये' इति, न स्वधां प्रयुञ्जीतेति । अत्र साग्निरनग्निर्वा आदौ वैश्वदेवं कुर्यात् ।

---

*सम्पन्नमिति । पित्र्ये शातातपः—

प्रदद्यात्प्राङ्मुखः पिण्डान्वृद्धौ नाम्ना स बाह्यतः ।

स कर्ता बाह्यतो भोजनशालाया बहिः नतूच्छिष्टसमीपे ।

प्राङ्मुखांस्त्वथ दर्भांस्तु दद्यात्क्षीरावसेचनम् ॥

मार्कण्डेये—

नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् ।

प्राजापत्येन तीर्थेन यच्च किञ्चित्प्रजायते ॥

पिण्डाधिकारे ब्राह्मे—

अर्घ्यं पुष्पं च धूपं च प्रशस्तमनुलेपनम् ।

वासः साध्वहतं शुद्धं देयं च सदृशं समम् ॥

अथाक्षय्योदकस्थाने दत्त्वा क्षीरयवादिकम् ।

नान्दीमुखेभ्यश्चाक्षय्यमिदमस्त्विति सञ्जपेत् ॥

*नान्दीमुखा इति ।

नान्दीमुखाश्च पितरः प्रीयन्तामिति वाचयेत् ।

विश्वेदेवाश्च प्रीयन्तामिति दाताऽब्रवीदिमान् ॥

प्रीताभवन्तु ते तं च वदेयुर्मधुराक्षरम् ।

प्रीयन्तामिति च ब्रूयात्पिण्डान्स्वाहेति च क्षिपेत् ॥

दातार इति प्रार्थनातः प्राक् प्रार्थनाश्लोको भविष्ये—

माता पितामही चैव तथैव प्रपितामही ।

पिता पितामहश्चैव तथैव प्रपितामहः ॥

आदौ वृद्धौ क्षये चान्ते द(१)र्शे मध्ये महालये ।
एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥

इत्याशार्के शाङ्खायनपरिशिष्टात् । हेमाद्रौ तु—

शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः ।
श्राद्धाह्नि श्राद्धशेषेण वैश्वदेवं समाचरेत् ॥

इति चतुर्विंशतिमतान्नान्दीश्राद्धेप्यन्ते वैश्वदेव उक्तः । *बह्वृचानामपि वृत्त्यालोचनात्तथैव । पूर्वोक्तं तु येषां परिशिष्टं तद्विषयमन्यविषयं वा ज्ञेयम् । अत्र श्राद्धाङ्गतर्पणं नेत्युक्तं प्राक् ।

इति निर्णयसिन्धौ वृद्धिश्राद्धम् ॥

अथ *जीवत्पितृकश्राद्धम् । तत्रानेकपक्षा दृश्यन्ते । *जीवन्तं पितरं भोजयित्वा परयोः श्राद्धं कुर्यादित्येकः । होमान्तमेव कुर्यादित्यन्यः,

होमान्तः पितृयज्ञः स्याज्जीवे पितरि जानतः ।
पितरं भोजयित्वा वा पिण्डौ निपृणुयात् परौ ॥

---

मातामहस्तत्पिता च प्रमातामहकादयः ।
एते भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥

पाद्मे—

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा ।
नमस्कारेण मन्त्रेण कुर्यादेत्रादितो बुधः ॥

बह्वृचानामन्ते वैश्वदेवमाह—*बह्वृचानामिति । मृतोद्देश्यकद्रव्यत्यागः श्राद्धम् । अन्यत्र कुण्डपाय्याग्निहोत्रपदवत्तत्पदं गौणमिति मनसिकृत्वाऽऽह—*जीवत्पितृकश्राद्धमिति । *जीवन्तमिति । पितृयज्ञे चत्वारः पक्षाः । तत्र होमान्तमनारम्भोवेति कात्यायनोक्तं पक्षद्वयम् ।

---

(१) 'चान्ते मध्ये श्राद्धे तु पार्वणे' क० छ० ।

इति यज्ञपार्श्वोक्तेः। 'यदि जीवात्पिता न दद्याद्धोमात्कृत्वा विरमेत्' इत्यापस्तम्बोक्तेश्च। 'जीवतां पिण्डानग्नौ हुत्वा परेभ्यो देयम्' इत्यपरः, 'जुहुयाज्जीवेभ्यः' इत्याश्वलायनोक्तेः। जीवतामजीवतां च पिण्डदानमितीतरः 'जीवतामजीवतां वा देयमेवेति हिरण्यकेतुः' इति निगमात्।

तस्माज्जीवत्पिता कुर्याद्दर्भाभ्यामेव न संशयः।

इति भविष्योक्तेर्दर्भाभ्यामेवेत्यन्यः। एते पक्षाः कलौ निषिद्धाः,

प्रत्यक्षमर्चनं श्राद्धे निषिद्धं मनुरब्रवीत्।
पिण्डनिर्वपणं चापि महापातकसंमितम्॥

इति पृथ्वीचन्द्रोदये भविष्योक्तेः। चन्द्रिकाप्येवम्। तस्मात् पितरि जीवति श्राद्धानारम्भ एवेत्येकः पक्षः।

सपितुः पितृकृत्येषु अधिकारो न विद्यते।

इति कात्यायनोक्तेः।

जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत्।

इति हारीतोक्तेश्च। पितुः पित्रादिभ्यो दद्यादिति सिद्धान्तः,

ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्।

इति मनूक्तेः।

पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः।

इति कात्यायनोक्तेश्च। अयं बहुसंमतः पक्षः। अन्ये शाखाभेदेन ज्ञेयाः। एवं जीवन्मातामहेनाप्यूहेन कार्यं।

---

पितरं भोजयित्वा वा पिण्डौ निपृणुयात्परौ।
येभ्यः पिण्डान् पिता दद्यात्तेभ्यः पुत्रोऽपि वा ददेत्॥

इति परिशिष्टोक्तं पक्षद्वयम्। तत्र यानि श्राद्धानि पिण्डपि-

*मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः।
*मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम्॥

इति विष्णूक्तेः।

*एवं मात्रादिकस्यापि तथा मातामहादिके।

इति पृथ्वीचन्द्रोदयेऽग्निपुराणाच्च। *पितरि जीवति तु स्वमातरि मृतायामपि पितुरेव मातृमातामहयोः कुर्यात्। येभ्य एव पिता दद्यात् इति वक्ष्यमाणवचनात् इति पितामहचरणाः। मदनरत्ने तु—जीवत्पिता स्वमातृमातामहयोर्दद्यात् इत्युक्तम्। कालादर्शेऽप्येवम्। *मृते तु पितरि जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यात् इति स्मृतितत्त्वादिगौडग्रन्थाः। *दाक्षिणात्यास्तु—

पितृवर्गे मातृवर्गे तथा मातामहस्य च।
जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत्॥

इति वचनात्तद्वर्गत्याग एवेत्याहुः।

*एवं पतितसंन्यस्तपितृकादेरपि ज्ञेयम्,
वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते *सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥

इति षट्त्रिंशन्मतात्। संन्यस्ते जीवतीत्यर्थः। मृते-

---

तृपक्षकल्पने तेषु एतत्पक्षचतुष्टयमित्याशयेनेदम्। *मातामहानामप्येवमिति। मातामहादीनामेकद्वित्रिषु जीवत्सु एवं पितृपार्वणवदित्यर्थः। *मन्त्रोहः व्याख्यातः। [illegible]ह— *एवमिति। *पितरि जीवति त्विति आश्वलायनान्यपरम् आश्वलायनादीनामपत्यसंस्कारेतरपरं च। अपत्यसंस्कारे तु जीवत्पिता सुतसंस्कारेषु इत्यादि। *मृते त्विति मतान्तरं न दाक्षि- [illegible]। *दाक्षिणात्यास्त्विति। प्राग्वत्। *एवमिति सर्वश्राद्धपरम्। *सति जीवति। *मृतेऽपीति। सतीत्यस्य वैय-

तु संन्यस्ते तदाद्येव देयम् । *मृतेऽपि परेभ्य एवेति गौडाः । कात्यायनोऽपि—

*ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

अयं च संन्यस्तपित्रादेरविशेषात्सर्वे*श्राद्धेऽधिकारः । *एतत्त्रिदण्डिपरम् । एकादशाहपार्वणवार्षिकाद्यपि तस्यैव,

अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ।

इत्युक्त्वा—

त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

इत्युशनसा विशेषोक्तेः । *ब्राह्मणादिहते इत्यादिनिषेधस्त्वेकदण्डादिपरः । अतः परमहंसानां वार्षिकादिकमपि न कार्यमिति शूलपाणिश्राद्धतत्त्वादयो गौडग्रन्थाः । इदमेव तु युक्तम् । यत्तु हेमाद्रौ कौण्डिन्यः—

*दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव च ॥ इति,

त*त्संन्यस्तपित्राद्यतिरिक्तविषयम् । मैत्रायणीय-

---

श्र्यापत्तिररुचिः । *ब्राह्मणादीति । दर्पादिना गोब्राह्मणाद्यभिभवार्थं प्रवृत्तस्तैर्हतः स आत्मघातित्वात्सम्वत्सरं यावदसंस्कार्यः तावत्तत्पुत्रस्य पुत्रजन्मतीर्थप्राप्त्यादौ । व्युत्क्रमादिति च व्युत्क्रममृतसपिण्डनाभावपक्षे । *श्राद्ध इति । एवं नित्यतर्पणादावपि । शूलपाण्यादिमतमाह-*एतदिति । सङ्गवर्जिते इत्येतदित्यर्थः । *ब्राह्मणादीति ।

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते नैव कार्यं श्राद्धादि किञ्चन ॥

इति निषेधस्तु इत्यर्थः । *दर्शश्राद्धमिति । *संन्यस्त-

परिशिष्टे--

*उद्वाहे *पुत्रजनने पैत्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

तत्रैव--

महानदीषु सर्वासु तीर्थेषु च गयामृते ।
जीवत्पितापि कुर्वीत श्राद्धं पार्वणधर्मवित् ॥

गयामृते इति मातृव्यतिरिक्तविषयम्,

अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

इति तत्रैवोक्तेः । गयाप्राप्तौ प्रासङ्गिकयाम्,

गयां प्रसङ्गतो *गत्वा मातुः श्राद्धं समाचरेत् ।

इति वचनात् । तेन मृतमातृको गयायां तत्पार्वणमात्रं कुर्यात् । तज्जीवने तु तीर्थश्राद्धमपि नेति कालादर्शस्मृतिदर्पणादयः । अन्ये तु (१)गत्वा श्राद्धं नेति निषेधार्थः । *सामान्यतः प्राप्तं तीर्थश्राद्धं भवत्येव गयायामित्याहुः ।

---

पित्रादीति । वस्तुतस्तु प्रतिनिधीभूयैतानि न कुर्यादित्यर्थः । अन्यथाऽधिकाराभावेनाप्राप्तेर्निषेधे वैयर्थ्यापातात् । एवमग्रेऽपीति । *उद्वाहे स्वस्य द्वितीयादिविवाहे प्रथमविवाहे तु "नान्दीश्राद्धं पिता कुर्यात्"इत्युक्तम् । *पुत्रजनन इति । जीवत्पितृकाधिकारिककर्माङ्गाभ्युदयिकमात्रोपलक्षणमेतत् । व्याख्यातं चेदं प्राक् । *गत्वेति । तदुद्देश्यकवैधयात्रापूर्वकमित्यर्थः । *सामान्यत इति । अवैधगमने तु पितुर्देवता उद्दिश्य श्राद्धस्य कर्त्तव्यत्वान्मृतमातृकेन पितृपत्नीत्वेन तामुद्दिश्य दत्त्वा मातृत्वेनापि दद्यादित्यर्थः । वस्तुतस्तु गयायामिति पर्युदस्तं जीवत्पितृकस्य मृतायां मातरि तदुद्देश्यकमेव

---

(१) 'गया' क० ।

*(१)यदा तु पितुः प्रतिनिधित्वेन गयां याति, तदा यजमानस्य पितृपितामहप्रपितामहा इत्येव श्राद्धम्। तत्र स्वमातुः पितृपत्नीत्वेनैकोद्दिष्टं कृत्वा मातृत्वेन पुनः पार्वणं कुर्यादिति त्रिस्थलीसेतौ। तच्च फल्गुविष्णुपदाक्षय्यवटेष्वेवेति केचित्। आद्यन्ते एवेत्यन्ये। मध्यमान्ते इत्यपरे। सङ्कोचहेत्वभावात्तत्रत्यसर्वश्राद्धानि मातुः कार्याणीति युक्तं प्रतिभाति। यत्तु मदनपारिजाते--

*न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः॥

इति सुमन्तूक्तेः साग्नेरेव जीवत्पितृकस्य तीर्थादिश्राद्धमुक्तम्। साग्नेरपि मैत्रायणीयशाखीयस्यैव नान्येषाम् 'षडेते जीवतः पितुः' इति तत्परिशिष्ट एवोक्तेरिति रत्नावलीदिवोदासाद्याः। तदयुक्तं, *सौमन्तवं पिण्डपितृयज्ञविषयं संन्यस्तपित्राद्यतिरिक्तविषयं वेति पृथ्वीचन्द्रोदयोक्तेः। *वृद्धौ तीर्थे चेत्यादेः साधारण्ये-

---

प्रतिप्रसूयते वाक्ये तथैव श्रवणात्। पर्युदासवाक्ये च यात्रानुपादानात् तत्पूर्वकश्राद्धपर्युदासे मानाभावात्। "गयां प्रसङ्गतो गत्वा" इति च पित्राद्युद्देश्यकयात्रायां जीवत्पितृकं प्रत्यप्राप्तेरनुवादकमेवेति। स्वयंमुत इत्यत्र स्वयंफलमाह—*यदेति। *सौमन्तवमिति। सौमन्तवं च न सामान्यतोऽनाहिताग्नेः श्राद्धनिषेधकं मात्रादिवार्षिकाद्यकरणापत्तेः। तस्मादग्निसाध्येषु आन्वष्टक्यादिषु साग्निको जीवत्पितृकः पिण्डपितृयज्ञकल्पं विना श्राद्धं न कुर्यादित्यर्थकमिति पिण्डपितृयज्ञपदं च आरब्धपिण्डपितृयज्ञलाभार्थम्, अनुष्ठितप्रकृतेरेव विकृतावधिकारात्। *वृद्धाविति। अयं भावः—

जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम्।

---

(१) 'यदाऽपि' क० छ०।

ना*स्यापि *तथात्वाच्च। तथा निरग्नेरपि नान्दीश्राद्धमुक्तं प्राक्। एवं *पितामहजीवनेऽपि ज्ञेयम्। *विशेषः पितृकृतजीवत्पितृकानिर्णये ज्ञेयः।

---

सपितुः पितृकृत्येषु अधिकारो न विद्यते ॥

इत्यादिवचनैर्जीवत्पितृकस्य श्राद्धं निषिद्धमेव। एवञ्च जीवत्संन्यासिपतितपितृकयोरपि निषेधप्रवृत्तेः श्राद्धेऽनधिकारात्तत्र देवताविधानं नोपपद्येतेत्यतः सर्वेऽप्यमावास्यादिश्राद्धविधयः जीवदजीवत्पितृकसाधारणा एव स्वीकार्याः। तत्र जीवति पितरि दर्शश्राद्धादिकं पित्रादिपार्वणदेवताभावादभ्युदितेष्टावुपांशुयाजवल्लुप्यते। एतस्यैव जीवत्पिता नैव कुर्यादित्यादि सपितुः पितृकृत्येऽष्वित्यादि चानुवादकम्। वैधदेवताप्राप्तौ पुनः प्रवर्त्तन्ते इति क्रमेण जीवदजीवत्पितृकसाधारण्यमिति। *अस्यापि सौमन्तवस्यापि। *तथात्वात् जीवदजीवत्पितृकसाधारण्यात्। तथाच जीवदजीवत्पितृकः साग्निकः पिण्डपितृयज्ञकल्पेन श्राद्धं कुर्यात्। निषेधस्त्वनुवादः। तत्राजीवत्पितृकस्य देवतांशे कथन्ताविरहान्मृतपितृके "येभ्य एव" इति देवतोक्तिः। *पितामहेति। पितृपितामहयोर्जीवने इत्यर्थः। *विशेषः अपसव्यनिषेधादिः। अथवा नन्वेवं तेषां पितामहप्रपितामहवृद्धप्रपितामहत्वेन देवतात्वं स्यादित्यत्राह–विशेष इति। तत्र पितुः पितृपितामहप्रपितामहत्वेनैव;

म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्।
पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥

इति मनूक्तेः। अत्राद्यन्तग्रहणेन पितृपितामहत्वेनैव पितामहादीनां जीवत्पितृकं प्रति देवतात्वं तेषु च पितृत्वादेः स्वप्रतियोगिकत्वाभावात्पितृप्रतियोगिकत्वाच्च सम्बन्धघटकत्वेन पिता निर्देष्टव्यः। तथाच जीवत्पितृकैः श्राद्धतर्पणादौ पितुः पितृपितामहप्रपितामहानामित्येव प्रयोगः कार्य इति। पितृपिता-

अथ पितामहे जीवति मृते च पितरि यद्यपि—

पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः ।

इति मनुना जीवतः पितामहस्य भोजनमुक्तं तथापि प्रत्यक्षार्चनस्य पूर्वं निषिद्धत्वात् पितामहं विहाय पितृप्रपितामहवृद्धप्रपितामहेभ्यो देयम्,

पिता यस्य निवृत्तः स्याज्जीवेच्चापि पितामहः ।

पितुः स नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम् ॥

इति मनूक्तेः । अयमेव सर्वसंमतः पक्षः । यत्तु छन्दोगपरिशिष्टे—

पितामहे ध्रियमाणे पितुः प्रेतस्य निर्वपेत् ।

पितुस्तस्य च वृत्तस्य जीवेच्चेत्प्रपितामहः ॥

इति एकपुरुषं द्विपुरुषं वा पार्वणमाह तत्तीर्थपितृयज्ञपरम् । वृद्धौ पूर्वोक्तमेव । एवं पूर्वयोर्मृतयोः प्रपितामहे जीवति पितृमात्रे मृते परयोर्जीवतोश्च वृद्धप्रपितामहादिभ्यो ज्ञेयम् ।

जीवन्तमपि दद्याद्वा प्रेतायान्नोदके द्विजः ।

इति कात्यायनोक्तेश्च । एतत्सर्वं मनसिकृत्वाऽऽह हेमाद्रौ विष्णुः—'पितरि जीवति यः श्राद्धं कुर्याद्येषां पिता

---

महग्रहणं चोपलक्षणं पूर्वेषामिति सामान्यत उपादानात् । तेन पितुर्मातृपितामहीप्रपितामहीनामिति पितुर्मातामहमातृपितामहमातृप्रपितामहानामिति पितुः पत्न्या इति पितुर्भ्रातुरित्यादिरेव प्रयोग इति । एवं स्वाधिकारिकं यन्मातृमातामहपितृव्यादिवार्षिकश्राद्धं तत्र मातृत्वादिनैव देवतात्वं "मातुः श्राद्धं सुतः स्यात्" "कुर्यान्मातामहश्राद्धम्" "अपुत्रस्य पितृव्यस्य"इत्यादितः तथैव प्रत्ययात् । पित्राधिकारिकं चेत्तत्प्रेरितः करोति तदा अमुकस्य यजमानस्य पितृमातृपत्नीभ्रातॄणामित्यादिः प्रयोगः । अधिकं तत्रैव

कुर्यात्तेषां, पितरि पितामहे च जीवति येषां पितामहः पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्। यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात् पराभ्यां द्वाभ्यां दद्यात्। यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्पराभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात्'।

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम्॥ इति।

अत्र पितृवत्*मातामहे जीवति तत्पित्रादिभ्यः। यथा तत्र त्रिषु जीवत्सु नैव कुर्यात्तथात्रापीत्यादि सर्वमतिदेश्यम्। *एवं मातृजीवनेऽपीति शूलपाणिकालादर्शौ। तन्न, "येभ्य एव" इत्यादौ यच्छब्दादेर्व्यक्तिविशेषवाचित्वेन *तदप्रसङ्गादिति दिक्। *उत्तरार्धं व्या-

---

ख्यातम्। *मातामहे जीवतीति। मातामहादीनामेकद्वित्रिषु जीवत्सु एवं पितृपार्वणवदित्यर्थः। *एवमिति। मात्रादिष्वप्येवं न्यायसाम्यादित्यर्थः। न च—

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः।

इत्यत्र मातामहे जीवति च शब्दान्मातरि च जीवत्यां मातृपितामहप्रपितामहादिभ्यो देयमिति वाच्यम्, एवंशब्देन अतिदेशवाक्यस्य येभ्य एव पिता दद्यात्तेभ्यो दद्यादित्यादिसाक्षाद्विधायकवचनैर्बाधात्। तत्तु मृतपितृकपरम्। आदिना जीवन्मातृपि(१)तृकः पितुः (पि(२)तृमात्रादिभ्यो दत्त्वा स्वमातामहेभ्यो दद्यात्। तथा जीवत्पितृमातामहकः पितुः) पितृमातामहादिभ्यो दत्त्वा स्वमात्रादिभ्यो दद्यादित्यस्य ग्रहः। *तदप्रसङ्गादिति। स्वीयमातृमा-

---

(१) 'पितृ' नास्ति घ० (२) धनुश्चिन्हान्तर्गतं नास्ति घ०

ख्यातं प्राक्। यत्त्वत्र विज्ञानेश्वरेणोक्तं 'पित्रे पिण्डं निधायेति पितुरेकोद्दिष्टविधिना श्राद्धं कृत्वा प्रपितामहादिभ्यः पार्वणं कुर्यात्'। तद्व्युत्क्रममृतसपिण्डीकरणाभावपक्षे सपिण्डीकरणस्थानापन्नं ज्ञेयम्,

व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिण्डता।

इति वचनात्। *दर्शादौ तु पितुरेकोद्दिष्टमेव कार्यम् 'न जीवन्तमतिददाति' इति श्रुतेः।

जीवेत्पितामहो यस्य पिता चान्तरितो भवेत्।
पितुरेकस्य दातव्यमेवमाहुर्मनीषिणः॥

इति यज्ञपार्श्वोक्तेः(१)।

पितामहे जीवति वै पितर्येव समापयेत्॥

इति हारीतोक्तेश्च। शिष्टास्तु—

व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिण्डता।

---

तामहादिभ्यो दानाप्रसङ्गादित्यर्थः। लक्षणायां मानाभावादिति भावः। मृतमातृकादिरपि पितुरेव पितृमातृमातामहादिभ्य एव दद्यादिति दिगर्थः। *उत्तरार्धं "मन्त्रोहेन यथान्यायम्" इत्याद्यर्धम्। नहीदमूहं विधत्ते न्यायप्राप्तानुवादत्वात्। अत एव च यथान्यायमिति। मातामहपार्वणस्य "मातामहानामप्येवम्" इत्यनेनातिदेशेन प्राप्तौ अपूर्वप्रयुक्तत्वात् मन्त्राणां क्वचिदूहो भवति क्वचित्तु न। तत्र शुन्धन्तां मातामहा इत्याद्यूहः शुन्धन्तां पितर इत्यादिवाक्ये पितृपदस्य जनकपरतया मातामहादौ बाधितार्थकत्वात्। "एतद्वः पितरो वासः" इत्यादौ न पितृपदस्य सपिण्डनान्तश्राद्धजन्यपितृत्वावच्छिन्नार्थकतया तादृशार्थाबाधादिति। *दर्शादा-

---

(१) अत्र—सत्यव्रतः जीवत्पितामहविषये—'पितामहे स्थिते यस्य पिता यदि विपद्यते। द्वौ पिण्डावेकनामानावेकश्च प्रपितामहे॥ द्वौ पिण्डौ पितृनाम्नैव दद्याज्जीवत्पितामहः। प्रपितामहस्य चैवैकं पितुः प्रत्याब्दिकादिषु॥' इत्यधिकं केषुचित्पुस्तकेषु।

यदि माता यदि पिता भर्ता नैष विधिः स्मृतः ॥

इति माधवीये स्कान्दोक्तेर्व्युत्क्रममृतसपिण्डीकरणाभावः पितृव्यादिविषय इत्याहुः। एष विधिर्निषेधरूपः।

त्रिषु जीवत्सु विष्णुराह—'त्रिषु जीवत्सु नैव कुर्यात्' इति एतद्दर्शादिविषयम्। नान्दीश्राद्धं तु परेभ्यस्त्रिभ्यो भवत्येवेति कल्पतरुः। पृथ्वीचन्द्रोदयस्तु—

दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदि।

इति मनूक्तेः सर्वत्र विकल्पः। स च देशाचाराद्व्यवतिष्ठत इत्याह। सुदर्शनभाष्ये तु मासिकश्राद्धं जीवत्पित्रादिना व्युत्क्रममृतपित्रादिना च कार्यमेवेत्युक्तम्। मदनरत्ने क्रतुः—

*अष्टकादिषु संक्रान्तौ मन्वादिषु युगादिषु।
चन्द्रसूर्यग्रहे पाते स्वेच्छया (१)लभ्ययोगतः ॥
जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाखिलम् ॥

अन्ये विशेषाः श्रीपितृकृतजीवत्पितृकनिर्णये, भट्टकृतत्रिस्थलीसेतौ च ज्ञेयाः ॥

इति निर्णयसिन्धौ (२)जीवत्पितृकादिश्राद्धम् ॥

---

अथ विभक्ताविभक्तनिर्णयः। पृथ्वीचन्द्रोदये मरीचिः—

बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः।
सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ॥
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥

---

विति। 'व्युत्क्रममृतसापिण्डनाभावपक्षे' इत्यनुवर्त्तते। *अष्टकादिष्विति। प्रातिनिध्यं न कार्यमित्येवम्परामिदम्। अन्यथा

---

(१) 'पूज्ययोगतः' क० छ०। (२) 'जीवत्पित्रादिश्राद्धम्' क० ख०।

ज्येष्ठस्य कर्तृत्वेऽपि सर्वे फलभागिन इत्यर्थः। तेन ये ब्रह्मचर्यादिनियमास्ते फलितसंस्कारत्वात्सर्वैः कार्याः। एवं संसृष्टिनामपि तुल्यत्वात्। मिताक्षरायां नारदः—

*भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक्पृथक्॥

बृहस्पतिरपि—

*एकपाकेन वसतां पितृदेवद्विजार्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे॥

अत्र यद्यप्यविशेषश्रवणात् ब्रह्मयज्ञसंध्यादिष्वप्यविभक्तानां पृथङ्निषेधः प्राप्नोति, तथापि द्रव्यसाध्यश्राद्धवैश्वदेवादिष्वेव सः। द्रव्यस्यानेकस्वामिकत्वेनैकस्य व्ययेऽनधिकारात्। यानि तु द्रव्यासाध्यानि मन्त्रजपोपवाससंध्याब्रह्मयज्ञपारायणादीनि नित्यनैमित्तिककाम्यानि तेषु

---

प्राप्त्यभावेन निषेधायोगादिति भावः। *भ्रातॄणामिति। अविवक्षितम्, अविभक्तानामित्येतावन्मात्रं विवक्षितम्। तेन पितृपितामहपुत्रपौत्रादिष्वविभक्तेषु सपिण्डेष्वेक एव धर्म इत्यर्थः। अनेन च देशकालकर्त्रादीनामैक्ये कर्मणस्तन्त्रं न बाध्यते एकप्रयोगकत्वेन न्यायेनैव तत्प्राप्तेः, किन्त्वविभक्तकर्तृभेदे, वचनात्। तेन श्रौतस्मार्ताग्निसाध्यास्तावद्धर्मा अविभक्तानां पृथगेवेति आवहनीयत्वावसथ्यादीनां सम्बन्धिकत्वेन भेदात्। एवं पितृभ्रातृपुत्रादीनाममावास्यादौ श्राद्धादि पृथगेव देवताभेदात्। भ्रातॄणां तु निरग्निकानां तन्त्रेणैव देवतैक्यात्। प्रवासादिना देशभेदे तु भिद्यन्ते। एवं साग्निकानामग्निसाध्यान्यपि भिद्यन्ते। गृहस्थस्य देवतापूजादि वैश्वदेवादि चैकमेवेत्याह—*एकपाकेनेति। एतच्च

पृथगेवाधिकारः, द्रव्यव्ययाभावेऽनुमत्यनपेक्षणात्। 'द्रव्येण चाविभक्तेन' इत्यस्याविषयत्वात्।

पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजातिनाम्।
अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्तथा॥

इति प्रयोगपारिजाते आश्वलायनस्मृतेश्च। *अग्निहोत्रशब्दोऽग्निसाध्यश्रौतस्मार्तनित्यकर्मपरः तेष्वप्यन्यानुमत्यैवाधिकारेण न्यायसाम्यात्। *पितृश्राद्धादिषु तुल्यफलेषु नित्येष्वनुमतिं विनाप्येकस्याधिकारः,

एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम्।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः॥

इति वचनात्। धर्मार्थेऽवश्यकर्तव्ये पितृश्राद्धादाविति विज्ञानेश्वरः। केचित्त्वविभक्तानामपि पृथक्पाकत्वे देशान्तरे च दार्शिकाब्दिकयोः पृथक्त्वमाहुः,

भ्रातॄणामविभक्तानां पृथक्पाको भवेद्यदि।
वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक् पृथक्॥

इति हारीतोक्तेः।

अविभक्तेन पुत्रेण पितृमेधो मृताहनि।
देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च॥

इति यमोक्तेश्चेति। तत्र मूलं चिन्त्यम्। तदयमर्थः। पञ्चमहायज्ञमध्ये देवभूतपितृमनुष्ययज्ञानन्यानुमत्या ज्येष्ठ एव कुर्यात्।

होमाग्रदानरहितं न भोक्तव्यं कदाचन।
अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतम्॥

इति व्यासोक्तेश्च। यस्य तु ज्येष्ठेनाकृते वैश्वदेवेऽन्नं सिद्ध्येत्तेन तूष्णीमग्नौ किंचित्क्षिप्त्वा भोक्तव्यम्। यस्य

---

निरग्निकपरम्। न्यूनतां परिहर्तुमाह—*अग्निहोत्र शब्द इति।

त्वेषामग्रतोऽन्नं सिद्ध्येत्स नियुक्तमग्नौ कृत्वाग्रं ब्राह्मणाय दत्त्वा भुञ्जीतेत्यविभक्ताधिकारे पृथ्वीचन्द्रोदये गोभिलोक्तेः।

आश्वलायनस्तु पाकपार्थक्ये पृथक्त्वं तदेकत्वेऽपृथक्त्वमाह--

वसतामेकपाकेन विभक्तानामपि प्रभुः।
एकस्तु चतुरो यज्ञान् कुर्याद्वाग्यज्ञपूर्वकान् ॥
अविभक्ता विभक्ता वा पृथक्पाका द्विजातयः।
कुर्युः पृथक्पृथग्यज्ञान् भोजनात् प्राग्दिने दिने॥इति।

ब्रह्मयज्ञसंध्यास्नानतर्पणादि तूक्तहेतोः पृथगेव। देवपूजा तूक्तवचनद्वयादेकत्र पृथग्वा। दर्शग्रहणश्राद्धादि त्वेकस्यैव। तीर्थश्राद्धाद्यपि युगपत्सर्वेषामविभक्तानां प्राप्तावेकस्य। भेदेन प्राप्तौ भिन्नम्। गयाश्राद्धेऽप्येवम्,

एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः।
तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥
तारिताः स्मो वयं तेन स याति परमां गतिम् ॥

इति हेमाद्रौ कौर्मोक्तेः। काम्येऽपि दानहोमादावन्यानुमत्यैवाधिकारः। *द्रव्यासाध्यजपादौ तां विनापि। अपरार्के पैठीनसिः—

विभक्तैस्तु पृथक्कार्यं प्रतिसांवत्सरादिकम्।
*एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ॥

सांवत्सरात्पूर्वाणि मासिकान्येकत्रैव। तदाह लघु-

---

*पितृश्राद्धादिषु आदिना मातृश्राद्धादिग्रहः। *द्रव्येति। काम्ये इत्यनुवर्त्तते। *एकेनैवेति। तत्रापि ज्येष्ठ एव कुर्यात्,

एकेनैव तु कार्याणि संविभक्तधनेष्वपि।

हारीतः—

सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।
पृथङ् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ॥

सपिण्डनं मासिकोपलक्षणम्,

अर्वाक्संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य तु ।
ऊर्ध्वं सपिण्डीकरणात् सर्वे कुर्युः पृथक्पृथक् ॥

इति व्यासोक्तेः । उशनाः—

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥

मघात्रयोदशीश्राद्धं त्वविभक्तानामपि पृथगित्यु-

इति वचनात् । सपत्नानां भ्रातृणां तु ज्येष्ठे सत्यपि स्वस्व-मातृवार्षिकमान्वष्टक्यं स्वस्वमातामहवार्षिकं च भवत्येव मुख्यपुत्रत्वा-न्मुख्यदौहित्रत्वाच्च । मुख्याभावे तु सपत्नीपुत्रेषु ज्येष्ठ एव कुर्या-त् । एवमविभक्तेषु भ्रातृषु कस्यचिदेव सुतसंस्कारः स्वद्वितीयाद्यु-द्वाहो वा तदा स एव वृद्धिश्राद्धं कुर्यात्, तस्य तन्मात्रकर्तव्यत्वात् । तीर्थे यदा एक एव गच्छति तदा स एव तीर्थश्राद्धं कुर्यात्, तीर्थ-प्राप्तेर्निमित्तस्य जातत्वात् नैमित्तिकस्यावश्यकत्वात् । इह च सर्वेषां गमने ज्येष्ठ एव कुर्यात् "एकेनैव" इत्यस्य इहापि अविशेषात् । यदि पित्रा सह पुत्रास्तीर्थं गतास्तदा पुत्राणां न पृथक् तीर्थश्राद्धं पित्रधीनत्वेनास्वातन्त्र्यात् । पितुरशक्त्यादिना प्रतिबन्धे तु तत्प्र-तिनिधित्वेन भवत्येव । यदि तु पिता तीर्थेऽस्ति पुत्रश्च गतः तदा स्वातन्त्र्येण निमित्तस्य जातत्वात्कालभेदेन तदुपजीवनासम्भवात्पृ-थक् तीर्थश्राद्धं कुर्यादेव । एवमेव ज्येष्ठभ्रातरि तीर्थगते कनिष्ठस्य तत्र गमने श्राद्धप्राप्तिर्द्रष्टव्या । विभक्तानां तु परस्परेण सह पित्रा वा सह तीर्थगते पितरि तीर्थस्थे वा तीर्थगमने प्रागुक्तवचनात्पृथ-गेव तीर्थश्राद्धं । संन्यस्तादिपितृकाणां त्वविभागे ज्येष्ठेनैव, विभागे

क्तं प्राक्। यत्तु वृद्धवसिष्ठः—

मासिकं च वृषोत्सर्गं सपिण्डीकरणं तथा।
ज्येष्ठेनैव प्रकर्तव्यमाब्दिकं प्रथमं तथा॥ इति।

तन्निर्मूलम्। बह्वृचपरिशिष्टे 'नवश्राद्धं सह दद्युः' इति॥

अथ तीर्थश्राद्धम्। *तत्र यद्यप्यस्मत्पितामहकृतात्रिस्थलीसेतुरेव जागर्ति, तथापि किञ्चिदुच्यते। तत्र यात्रायां—

सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः।
*प्रायश्चित्ती व्रजेत्तीर्थं पत्नीविरहितोऽपि वा॥
यज्ञेष्वनधिकारी वा यश्च वा मन्त्रसाधकः॥

इति कौर्मादिवचनात्साग्नेः *सपत्नीकस्यैवाधिकारः। भारते—

*ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम।
न वियोनिं व्रजन्त्येते स्नानात्तीर्थे महात्मनः॥

---

तु सर्वैः कार्याणीति प्राग्वत्। एवं विभागात्रिभागयोर्निर्णयस्तर्पणेऽपि द्रष्टव्यः। मात्राद्यौर्ध्वदेहिके तु वक्ष्यति। यात्रायामधिकारिण आह-*तत्रेति। *प्रायश्चित्तीति। यात्रायां प्रायश्चित्तार्थं गमने अपत्नीकस्याप्यधिकार इत्यर्थः। *सपत्नीकस्येति। पत्नी च पातिव्रत्यादियुक्तैव,

पुंसां गुणवतीं भार्यां यो वा त्यक्त्वा प्रयाति हि।
तस्य पुण्यफलं सर्वं वृथा भवति नान्यथा॥

इति धर्मोक्तेः। गुणवतीमित्युक्तेरपतिव्रतायास्त्यागे न दोषः। एवञ्च साग्नेरिति अतन्त्रम्। निरग्नेरपि संग्रहस्यावश्यकत्वात्। *ब्राह्मण इति। चातुर्वर्ण्यस्याधिकारः। यत्तु—

जपस्तपस्तीर्थयात्राप्रव्रज्यामन्त्रसाधनम्।

स्कान्दे विधवाधर्मेषु—

स्नानं दानं तीर्थयात्रां विष्णुनामग्रहं मुहुः ।

*एतत् पुत्राद्यनुमत्यैव । सधवायाः पत्या *सहैवेति प्रागुक्तम् । काशीखण्डे—

*मातुः पितुः क्षेप्तुमनास्तथास्थि
सुतस्तु कुर्यात्खलु तीर्थयात्राम् ।

देवताराधनं चेति स्त्रीशूद्रपतनानि षट् ॥

इति मानवं तत्पतिसेवादीनायाः स्त्रियाः विप्राद्यसेवकस्य शूद्रस्य च निषेधकम् । एवं निरन्तरतीर्थयात्राया अपि तदुभयस्य निषेधः,

निरन्तरं तीर्थसेवा संन्यासो मन्त्रसाधनम् ।
देवताराधनं ध्यानं तेषां पापावहं परम् ॥

इति शातातपोक्तेः । तेषां शूद्राणाम् । अत्रापि विप्रसेवोच्छेदे तात्पर्यं बोध्यम् । भर्तृसेवोच्छेदे तु स्त्रियोपि वा "स्त्रीशूद्राश्च सधर्माणः" इत्युक्तेः । *एतदिति ।

बाल्ययौवनवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किञ्चित्कार्यं गृहेष्वपि ॥

इति मनूक्तेः ।

रक्षेत्कन्यां पिता, विन्नां पतिः, पुत्रास्तु वार्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः ॥

इति योग्युक्तेश्च । *सहैवेति ।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
पतिसंसेवनादेता लोकानिष्टान्व्रजन्ति हि ॥

इति वचनात् । यज्ञपदस्य तीर्थोपलक्षणत्वात् । *मातुरिति । तीर्थे मात्राद्यस्थिक्षेपकामस्य सर्वस्याप्यधिकारः । प्रसङ्गेन तीर्थप्राप्तौ तु शङ्खः—

तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत् ।

तद्विधिः स्कान्दे—

*तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे ।
गणेशं च पितॄन् विप्रान् साधून् शक्त्या प्रपूज्य च ॥
कृतपारणको हृष्टो गच्छेन्नियमधृक् पुनः ।
*आगत्याभ्यर्च्य च पितॄन् यथोक्तफलभाग्भवेत् ।
*उपवासात्प्राग् मुण्डनं च कार्यम्,
प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ।
कचानां वपनं कुर्याद्यथा न विकचा भवेत् ॥

---

स्नानजं फलमाप्नोति तीर्थयात्राकृतं न तु ॥

प्रसङ्गेन वाणिज्यराजसेवादिप्रसङ्गेन । पैठीनसिः--

अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ।
षोडशांशं स लभते यः परार्थेन गच्छति ॥

प्रसङ्गेन तदुद्दिश्य तीर्थान्तरप्रसङ्गेन । परार्थेन वेतनं गृहीत्वा । परान्नेनेतिपाठे परान्नं भुञ्जान इत्यर्थः ।*तीर्थयात्रामिति । यात्रामुहूर्तदिनात् प्रपूर्वदिने एकभुक्तहविष्यभोजनब्रह्मचर्यादिनियमाः कार्याः, नियमधृमित्युक्तेः । तदुत्तरादिने मुण्डनं कृत्वा उपवासं संकल्प्य कुर्यात् । ततः परादिने प्रातर्नित्यकृत्यानन्तरं गणेशेष्टदेवते संपूज्य घृतश्राद्धं विधाय यथाशक्ति वस्त्रालङ्कारादिभिर्ब्राह्मणान्संपूज्य यात्रासंकल्पं कृत्वा कार्पटीवेषेण मुहूर्त्तसमये गणेशनमस्कारादि कृत्वा ग्रामान्निर्गम्य क्रोशाभ्यन्तरस्थं वामग्रामं प्रदक्षिणीकृत्य गत्वा श्राद्धशेषघृतेन पारणं कुर्यात् । तदुत्तरदिनादौ स्नानादि विधाय गच्छेदित्यर्थः । उपवासासामर्थ्ये तु "नक्तं हविष्यान्नमनोदनं वा"इत्यादि तत्प्रातिनिधिः कार्यः । एतदेवानुपदं दर्शयिष्यति उपवासादित्यादिना । *आगत्येति । तीर्थयात्रां कृत्वा गृहागतेन पुनः श्राद्धं कार्यमित्यर्थः । नियमानां सेतौ विस्तरः

इति विष्णूक्तेः । प्रायश्चित्तार्थयात्रायां गङ्गायां चैतदित्येके । केचित्तु हेमाद्रौ भारते—

केशश्मश्रुनखादीनां वपनं नैव शस्यते ।
अतो न कार्यं वपनं *गयाश्राद्धार्थिना सदा ॥
ये भारतेऽस्मिन् पितृकर्मतत्पराः
संधार्य केशानतिभक्तिभाविताः ।
ऋणक्षयार्थं पितृतीर्थमागता-
स्तेषामृणं संक्षयमेष्यति ध्रुवम् ॥

इति निषेधात् गयायात्राङ्गं वपनं न कार्यमित्याहुः । वस्तुनस्तु—'गयाधिकरणकस्यैवायं निषेधो नतु यात्राङ्गस्य 'श्राद्धार्थिना' इत्युक्तेः । 'विशालं विरजं गयाम्' इत्यनेनैकवाक्यत्वाच्च । *श्राद्धं च षड्नवद्वादशदैवतं वा घृतेन कार्यम्,

गच्छेद्देशान्तरं यस्तु श्राद्धं कुर्यात्स सर्पिषा ।

इति विष्णुपुराणात् । यात्राङ्गवृद्धिश्राद्धोक्तेश्च ।

श्राद्धं च पारणादिने एव ।
उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च ।
गणेशं ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान् सुधीः ॥

---

*उपवासादिति । उपवाससंकल्पादित्यर्थः । तेन पूर्वदिने तद्दिन एव वा मुण्डने न क्षतिः । एके इत्यरुचिः । सा च तीर्थयात्रायामिति सामान्यत उपादानात् । यद्यपि "उद्यतस्तु गयां गन्तुम्" इत्यग्रिमवाक्ये गयापदं श्रूयते तथापि तस्य प्रकृताभिप्रायकतया इतरोपलक्षणत्वात् । अत एव कार्पटीवेषोऽपि सर्वयात्रासु शिष्टसंमत इति । *गयाश्राद्धार्थिनेति । अन्यथा गयायात्रार्थिनेति ब्रूयात् । "गणेशं च" इति चकारादिष्टदेवतासंग्रहः । "पितॄन्" इति । घृतश्राद्धपरम् । तत्र देवता आह—*श्राद्धं चेति ।

इति स्कान्द*लिङ्गात् । गौडनिबन्धे गौतमः—

तीर्थयात्रासमारम्भे तीर्थात्प्रत्यागमेऽपि च ।
वृद्धिश्राद्धं प्रकुर्वीत *बहुसर्पिःसमन्वितम् ॥

*वृद्धिपदं तद्धर्मार्थम् । श्राद्धोत्तरं यात्रासंकल्प इति भट्टाः । वायवीये—

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटीवेषं ग्रामं गत्वा प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ॥

*घृतस्य *भोजनम् । तच्च क्रोशमध्ये, *श्राद्धोत्तरं क्रोशागमननिषेधात् ।

ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ।

---

*लिङ्गादिति । अनेनार्थवादेन पूर्वदिने उपोष्य द्वितीयेऽह्नि श्राद्धं कृत्वा गणेशादीन् नत्वा पारणां कृत्वा प्रस्थानं कुर्यादिति विधिर्लभ्यते इत्यर्थः । *बहुसर्पिरिति । सर्पिर्मुख्यद्रव्यकमिति भट्टाः । "तीर्थात्प्रत्यागमेऽपिच" इत्यनेन तीर्थात्प्रत्यावृत्तः ग्रामान्तरे कृतोपवासः परेऽन्हि ग्रहानिष्टदेवतां च संपूज्य घृतेन पार्वणं श्राद्धं कृत्वा ब्राह्मणान्संपूज्य स्वग्रामं प्रदक्षिणीकृत्य कार्पटीवेषं बहिरेव त्यक्त्वा गृहं प्रविश्य श्राद्धशेषघृतेन पारणां कुर्यादिति सूच्यते । वस्तुतस्तु "आगत्याभ्यर्च्य च" इति वचनात् गृहमागत्य श्राद्धं कार्यं नतु सकल्पप्रास्थानिकधर्म इति बोध्यम् । आभ्युदयिकश्राद्धवारणाय *वृद्धीति । एवञ्च यात्राङ्गवृद्धिश्राद्धोक्तेश्चेत्यत्र निर्भरो न कार्यः । कार्पटीवेषः काषायवेषः । गमनमात्रे इत्येके । सदैवेत्यन्ये । *घृतस्येति । घृतस्यैवेत्यर्थः, तस्य मुख्यद्रव्यत्वात् । *भोजनमिति । एतदेव पारणम् । *श्राद्धोत्तरमित्ति ।

श्राद्धं कृत्वा न गच्छेत अध्वनि क्रोशपूरणे ।

गयायामे*चैतन्नान्यत्रेति *केचित् । हेमाद्रिस्तु 'गयायां श्राद्धदिने एव प्रस्थानम् । तीर्थान्तरे तु श्राद्धोत्तरदिने' इत्याह । प्रभासखण्डे—

यश्चान्यं कारयेच्छक्त्या तीर्थयात्रां नरेश्वरः ।
स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं *चतुर्गुणम् ॥

*यात्रामध्ये आशौचे रजसि वा शुद्धिपर्यन्तं स्थित्वा तदन्ते गच्छेत् । *मार्गवैषम्ये त्वदोषः । यात्रामध्ये तीर्थान्तरप्राप्तौ श्राद्धादि कार्यमेव । वाणिज्याद्यर्थं गतेन तु मुण्डनोपवासादि न कार्यमिति प्रयोगसेतौ भट्टाः । वस्तुतस्तु तत्रापि मुण्डनोपवासश्राद्धादि कार्यम् ,

अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ।

---

इति निषेधादित्यर्थः । *एतदिति । कार्पटीवेषधारणमित्यर्थः । गयामुपक्रम्यैव तद्विधानादिति भावः ! *केचिदिति । स्वमते गयाशब्दस्य प्रकृतपरतया सर्वतीर्थयात्रायामेतदिति सूचितम् । *चतुर्गुणमिति । स्वयं गच्छन्नन्यं गमयेत्तत्रेदम् । एवमेव—

नेता च त्वमृषीन् यस्मात्तेन तेऽष्टगुणं फलम् ।

इति भारतवचनात् । *यात्रामध्ये इति ।

दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ।

इत्युक्तेः । यात्राया दैवकर्मत्वात्पञ्चमेऽहनि रजोनिवृत्तौ सत्यामित्युक्तम् ।

तीर्थे गच्छन् चरेत्सन्ध्यास्तिस्र एकत्र मानवः ।
नास्नातो नाशुचिर्गच्छेन्न भुक्तो नच सूतकी ॥

इति पुराणाच्च । *मार्गेति ।

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत्कर्मयज्ञादि कारयेत् ॥

इति पैठीनसिवाक्यस्य मार्गवैषम्यादिना गत्यन्तराभावपर-

इति ब्राह्मोक्तेः। स्कान्दे—

छत्रिर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च।
वाणिज्यं कीस्तथा भागान् हन्ति सर्वं प्रतिग्रहः॥
*यानमर्धं चतुर्थांशं छत्रोपानहमेव च।

इत्युत्तरार्धपाठान्तरम्।

---

त्वात्। यद्यपि रजसि तथा प्राचीनग्रन्थेषु नोक्तं तथा गत्यन्तराभावे सूतकिवदित्याशयः। *यानमिति। साक्षात्स्वशरीरव्यापारासाध्यबुद्धिपूर्वकदेशान्तरप्राप्तिसाधनं यानम्। तत्र—

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम्।
नरयाने तदर्धं स्यात्पद्भ्यां तच्च चतुर्गुणम्॥

चतुर्गुणं चतुष्पादं पूर्णमिति यावत्। कृते चतुर्गुणो धर्म इतिवत्। गोभिलः—

गोभिर्युक्तेन यानेन तीर्थयात्रां करोति यः।
स याति नरकं घोरं यावद्गोरोमसंख्यया॥

अश्वरथयानमपि हययानमेव। तीर्थयात्रा पद्भ्यामेव कार्या,

तीर्थानुगमनं पद्भ्यां तपः परमिहोच्यते।
तदेव कृत्वा यानेन स्नानमात्रफलं लभेत्॥

इति प्रभासखण्डात्। अशक्तस्य तु गोभिलः—

असमर्थस्तु यानेन तीर्थयात्रां समाचरन्।
तदुक्तं फलमाप्नोति स्वशक्त्या धर्ममाचरन्॥

कौर्मे—

नरयानं चाश्वतरीहयादिसहितो रथः।
तीर्थयात्रास्वशक्तानां यानदोषकरं नहि॥

नौकापि यानमेव, परन्तु यत्र नावा विना गमनं दुर्घटं शङ्खोद्धारगङ्गासागरादौ मार्गस्थनदीपरतीरे च तत्र न दोषः अन्यत्र दोष एवेति स्पष्टं सेतौ। एवं यात्राकालशुद्धिः "नीचस्थे वक्रसंस्थे"

अत्र नदीषु विशेषः—

*मार्गेऽन्तरा नदीप्राप्तौ स्नानादि परपारतः ।
अर्वागेव सरस्वत्या एष मार्गगतो विधिः ॥

इत्यादिना ग्रन्थ एव सेतौ चोक्ता । क्वचिच्च गुरुमौढ्यादेर्न दोषः—

गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये ।
सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ।

वायवीये —

गयायां सर्वकालेषु पिण्डं दद्याद्विधानतः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न सक्तव्यं गयाश्राद्धं सिंहस्थेऽपि बृहस्पतौ ।

तथा—

अधिमासे च जन्मर्क्षे अस्ते च गुरुशुक्रयोः ।
तीर्थयात्रा न कर्तव्या गयां गोदावरीं विना ॥

यदि तीर्थयात्रार्थं चलितः परावर्त्तते तदा गारुडे—

तीर्थं चलित्वा यः कोपि पुनरागाति च गृहे ।
अनुज्ञातः शुभैर्विप्रैः प्रायश्चित्तं समाचरेत् ॥
संकल्पबाधनिमित्तकं प्रायश्चित्तं ब्राह्मणानुज्ञया चरेदित्यर्थः ।

यदा तीर्थं प्रति चलितः तीर्थमप्राप्यैव मृतस्तदोक्तं गारुडे—

यस्तीर्थसंमुखो भूत्वा व्रजन्ननशने कृते ।
चेन्म्रियेदन्तराले तु ऋषीणां मण्डलं व्रजेत् ॥ इति ॥

चकाराध्याहारात् अनशने मासोपवासादिव्रते च कृते इत्यर्थः । तथाचोभयत्राप्यन्तरालमरणे ऋषिलोकप्राप्तिरित्यर्थः । *मार्गे इति । मार्गं गच्छतः सरस्वतीभिन्ननदीप्राप्तौ परतीरे स्नानादिकार्यं तीर्थरूपनिमित्तसत्त्वात् । सरस्वत्यास्तु अर्वाक् तीरे एवेत्यर्थः । यत्र सरस्वतीभिन्ननद्यामर्वाक् तीर्थविशेषः सरस्वत्यास्तु परपारे तत्र क्रमेण प्रागपरस्मिंश्च स्नानादि कार्यं, तत्रापि तीर्थरू-

यत्तु—

पितॄनतर्पयित्वा तु नदीस्तरति यो नरः ।
तस्यासृक्पानकामास्ते भवन्ति भृशदुःखिताः ॥ इति,

तत्सरस्वतीपरम् । शङ्खः—

तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरेत् ।
स्नानजं फलमाप्नोति तीर्थयात्राकृतं न तु ॥

स एव—'न स्रवन्तीमतिक्रामेदनवासिच्य' । *तीर्थप्राप्तौ तु प्रभासखण्डे—

*यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः ।
लुठित्वा लोठनीं तत्र कृत्वा कार्पटिकाकृतिम् ॥

कृत्वेऽति गृहान्निर्गमसमये करणे इदम् ।

*प्रथमं *चालयेत्तीर्थं प्रणवेन जलं शुचि ।
अवगाह्य ततः स्नायाद्यथावन्मन्त्रयोगतः ॥

---

पनिमित्तस्य सत्त्वात् । *तीर्थप्राप्ताविति । तीर्थप्राप्तिदिनकृत्यम् । *यानानीति । यानारूढः सोपानत्को वा यदि तदा तीर्थप्राप्तिदिने यानोपानहौ परित्यज्य यावान्मार्गो गन्तुं शक्यस्तावन्मार्गं पादचारेण गच्छेत्तीर्थे दृष्टे साष्टाङ्गं प्रणमेत् । साष्टाङ्गप्रणामस्तु—

पद्भ्यां कराभ्यां जानुभ्यां शिरसा चोरसा तथा ।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग उच्यते ॥

इति लक्षितः । अत्र शिरोवगुण्ठनकञ्चुकादिमाल्यशस्त्रादि त्याज्यम् , आचारात् । ततः 'अमुकतीर्थाय नमः' इति पुष्पाक्षतफलादियुक्तमञ्जलिं दद्यात् । यथाशक्ति फलवस्त्रहिरण्यादि चोपायनं स्थापयेत् । ''रिक्तपाणिर्न पश्येत्तु' इत्युक्तेः । *प्रथममिति । *चालयेत् स्पृशेत् । प्रणवेन तीर्थं स्पृष्ट्वा यथावन्मन्त्रयोगतः अवगाह्य सचैलं स्नायादित्यर्थः । मन्त्राश्च स्नाने प्रसिद्धा

*मन्त्रश्च प्रभासखण्डे--

ॐ नमोस्तु देवदेवाय शितिकण्ठाय दण्डिने ।
रुद्राय चापहस्ताय चक्रिणे वेधसे नमः ॥
सरस्वती च सावित्री वेदमाता गरीयसी ।
सन्निधात्री भवत्वत्र तीर्थे पापप्रणाशिनी ॥ इति ।

मन्त्रवत्स्नानं च वपनोत्तरं कार्यम्,

पूर्वमावाहनं तीर्थे मुण्डनं तदनन्तरम् ।
ततः स्नानादिकं कुर्यात्पश्चाच्छ्राद्धं समाचरेत् ॥

इत्युक्तेः । यत्तु--

गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम् । इति,

तन्मुसलस्नानपरम् । काशीखण्डे--

तीर्थोपवासः कर्तव्यः शिरसो मुण्डनं तथा ।

उपवासे तत्रैवोक्तम्--

यदाह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे ।
उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ॥

अत्र--

उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रतः ।

---

एव ग्राह्याः । तत्र प्रथमतः तीर्थप्रार्थना कार्या । तत्र मन्त्रमाह-*मन्त्रश्चेति ।

सर्वेषामेव तीर्थानां मन्त्र एष उदाहृतः ।
इत्युच्चार्य नमस्कृत्वा स्नानं कुर्याद्यथाविधि ॥

इति वचने "इत्युच्चार्य नमस्कृत्य" इत्युक्त्या मन्त्रस्य तीर्थप्रार्थनाङ्गत्वप्रतीतेः । अथवा--

सागरस्वननिर्घोषदण्डहस्तासुरान्तक ।
जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां सुरेश्वर ॥
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ इति ।

इति प्राप्तिदिनेषूपवासोक्तेर्विकल्पः। मुण्डने तु स्कान्द-देवलौ--

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा कुरुक्षेत्रं विशालं *विरजं गयाम्॥

विरजं *लोणारम्। *प्रसिद्धमहातीर्थपरः सर्वतीर्थशब्दः॥

---

अत्रापि--

इमं मन्त्रं समुच्चार्य तीर्थस्नानं समाचरेत्।
अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम्॥

इत्युक्तेः प्रार्थनामन्त्रयोश्च विकल्पः। सचैलस्नानेति पाठः। तथाच प्रथमं प्रणवेन जलं स्पृशेत् ततः सचैलममन्त्रं स्नायात् ततो वपनं कृत्वा समन्त्रं स्नायात् इति सिद्धम्। *विरजम्। उत्कलदेशे,

आक्रान्तं दैत्यजठरं धर्मेण विरजाद्रिणा।
नाभिकूपसमीपे तु देवी तु विरजा स्थिता॥

इति वायवीये तत्र गयासुरनाभौ धर्मराजेन विरजाद्रिस्थापनोक्तेः। दक्षिणदेशस्थमप्याह—*लोणारमिति।

एवं कृते विधानेऽस्मिन्विरजे विरजो भवेत्।

इति आदित्यपुराणे तस्य विरजत्वोक्तेः। केचित्तु "नैमिषं पुष्करं गयाम्" इति पठन्ति। ननु सर्वेषां तीर्थानां ज्ञानमिदानीन्तनानां कथमित्यत्राह—*प्रसिद्धेति। महत्पदं च यत्र काश्यादौ अन्यानि प्रविष्टानि तीर्थानि तत्र तदकरणार्थम्। मात्स्ये अग्नितीर्थादीनि बहुन्युक्त्वा—

अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः।
तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः॥
एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम्।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

इति सर्वशब्दस्य प्रकृतसकलतीर्थपरत्वात्। एतच्च मुण्डनं निषेधेऽपि कार्यम्। निषेधाश्च—

अत्र विशेषः स्मृत्यन्तरे—

ऊर्ध्वमब्दाद्वृद्धिमासोनात्पुनस्तीर्थं व्रजेद्यदि ।
मुण्डनं चोपवासं च ततो *यत्नेन कारयेत् ॥
तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विज ॥

इति वा पाठः ।

प्रयागे प्रतियात्रं तु *योजनत्रय इष्यते ।

रव्यारसौरिवारेषु रात्रौ पाते व्रतेऽहनि ।
श्राद्धाहः प्रतिपद्रिक्ताभद्राः क्षौरेषु वर्जयेत् ॥
षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमीषु च ।
नक्षत्रे तु न कुर्वीत यस्मिन्जातो भवेन्नरः ॥
न प्रौष्ठपदयोः कार्यं नैवाग्रेये तु भारत ।
दारुणेषु तु सर्वेषु दुष्टतारां विवर्जयेत् ॥
कुम्भे कर्कटके चैव कन्यायां कार्मुके रवौ ।
रोमखण्डं गृहस्थस्य पितॄन् प्राशयते यमः ॥
विवाहमौञ्जीचूडासु वर्षमर्धं तदर्धकम् ।
अन्तर्वत्न्यां च जायायां नेष्यते केशवापनम् ॥

इत्यादयः । तदपवादश्च—

क्षौरं नैमित्तिकं का(१)र्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके ॥

अत्र वपनं करिष्ये इति सङ्कल्पः,

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

इति मन्त्रलिङ्गात् । *यत्नेनेति । फलेच्छायां तु अन्तरापि कार्यं न त्वावश्यकमित्यर्थः । तदा तद्वयं शस्तमिति वा तृतीयपा-(२)दपाठः । *योजनत्रय इति । योजनत्रयाधिकदेशादागतेनैव

(१) 'प्राप्तं' घ०　　　　(२) 'पाद' नास्ति ङ

क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सितासिते ॥

(त(१)था च बृहस्पतिः--

क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके ॥

अपरार्के स्कान्दे--

उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
*केशश्मश्रुलोमनखान्यु*दक्संस्थानि वापयेत् ॥

इदं प्रयागे सधवानामपि समूलं भवतीति भट्टाः ।

सर्वान् केशान् समुदधृत्य छेदयेदङ्गुलिद्वयम् ।
एवमेव हि नारीणां शस्यते वपनक्रिया ॥ इति ।

तच्चाकृतचूडानां न कार्यमिति केचित् । तत्त्वं तु नैमित्तिकत्वात् पित्रादिमृतिवत्कार्यमेवेति । तदपि प्रया-

---

कार्यं नतु तन्मध्यवर्तिना,

नैव संवत्सरे कुर्यात्प्रयागे वपनद्वयम् ।

इति तन्निषेधात् । विधिवत्स्नात्वेत्यन्वयः । तत्र त्रिस्थलीसेतौ प्रायश्चित्तं नोक्तम्, इदानीन्तनास्तु वपनात्प्राक् तत्संकल्पयन्ति,

प्रायश्चित्तं यथाशक्त्या द्वादशाद्धार्धमर्धकम् ।
आदौ गोमिथुनं दद्यात्प्रायश्चित्तं चतुर्विधम् ॥

इति वचनं च पठन्ति तत्सर्वमनुमन्यामहे तीर्थगामिनो हितत्वात् । *केशेति पाठक्रमात् केशश्मश्रुक्रमेण वपनं कार्यमित्येके क्षणमपि म्लेच्छाचारप्रसङ्गवारणार्थं श्मश्रुकूर्चयोरादौ वपनं कार्यं ततः केशानामित्यन्ये । *उदक्संस्थानीति ।

दक्षिणं कर्णमारभ्य धर्मार्थं पापसञ्चये ।
शिखाद्यं नवसंस्कारे शिखाद्यन्तं शिरो वपेत् ॥

---

( १ ) कंसान्तर्गतं नास्ति क० छ०

गे नित्यं नान्यत्र । तच्च *यतिभिस्तीर्थेऽपि ऋतुसंधिष्वेव कार्यं नान्यदा,

कक्षोपस्थशिखावर्जमृतुसंधिषु वापयेत् ।

इति स्मृतेः । इदं जीवत्पितृकेणापि तीर्थे कार्यम् । न च 'मुण्डनं पिण्डदानं च' इति दक्षवचनेन निषेधः,

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।

यो वापयति लोमानि स पुत्रः पितृघातकः ॥

इति स्मृत्या तत्संकोचात् । तदपि प्रयागे प्रतियात्रम्, अन्यतीर्थे आद्ययात्रायामेवेति शिष्टाः । *ततः स्नानम् ।

---

इति स्मृतेः । धर्मार्थे तीर्थादिवपने दक्षिणकर्णादि उदक्संस्थं वपेत् । पापक्षयनिमित्तके शिखामादौ कृत्वाधस्तादुदक्संस्थं सर्वतो वपेत् । नवसंस्कारे चूडाकरणे दक्षिणकर्णात् शिखान्तं शिखामारभ्य वामकर्णान्तं च वपेदित्यर्थः । *यतिभिरिति । ऋतुसंधिष्वेवेति परिसंख्यानात् यत्यादीनां तु सशिखम्,

यतिः शूद्रश्च विधवा सशिखं वपनं चरेत् ।

इति स्मृतेः । *ततः स्नानमिति ।

पृथिव्यां सर्वतीर्थेषु स्नात्वा पुण्येषु च द्विजाः ।

मुच्यते पातकैः सर्वैः समस्तैरपि पूरुषः ॥

इति कौर्मात् ।

नाव्रतो नाकृतात्मा च नाशुचिर्न च तस्करः ।

स्नाति तीर्थेषु कौरव्य नच वक्रमतिर्नरः ॥

इत्यादिकं तु अकृतादेस्तीर्थस्नानेऽनधिकारार्थम् । विपरीतप्रवाहादौ तु तीर्थस्नानं न कार्यम्,

प्रत्यावृत्तोदके स्नानं वर्ज्यं नद्यां द्विजातिभिः ।

इति स्मृतेः ।

अग्राह्यास्त्वागता ह्यापो नद्याः प्रथमवेगजाः ।

**परार्थे तु मार्कण्डेयपुराणे—**

**मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।**
**यमुद्दिश्य निमज्जेत अष्टमांशं लभेत्ततः ॥**

प्रक्षोभिताश्च केनापि तथा तीर्थाद्विनिर्गताः ॥

इति च स्मृतेः । गङ्गायां तु न निषेधः,

प्रतिस्रोतो रजो योगो रथ्याजलनिवेशनम् ।
गङ्गायां न प्रदुष्यन्ति सा हि ब्रह्मद्रवः स्वयम् ॥

इत्युक्तेः । किञ्च—

शाल्मलीतिन्तिणीनिम्बकरञ्जाश्च हरीतकी ।

बिभीतकीति वा पाठः ।

कोविदारकपित्थार्कबदर्येरण्डाशिग्रवः ।
शेलुश्च खादिरश्चैषां स्नानं छायासु वर्जयेत् ॥

रात्रौ सन्ध्यादौ च स्नाननिषेधः आकस्मिकतीर्थप्राप्तौ न प्रवर्त्तते, नैमित्तिकत्वात्;

रात्रौ स्नानं न कुर्वीत होमं दानं च रात्रिषु ।
नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु ॥

इति शातातपोक्तेः । रात्रौ तीर्थे स्नानं महानिशायां न कार्यमिति केचित् । अत्राकस्मिकतीर्थस्नानं रात्रौ न कार्यमेव । आकास्मिकतीर्थस्नानमशौचेऽपि कार्यम्,

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत्कर्मयज्ञादि कारयेत् ॥

इति पैठिनसिवाक्यात् । प्रासङ्गिकतीर्थस्नानं तु मलमासेऽपि कार्यम्, "तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः कार्याणि मलमासेऽपि" इति यमोक्तेः । प्रवाहाभिमुखः स्नानं कुर्यात्,

प्रवाहाभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै ।
स्थावरेषु च सर्वेषु आदित्याभिमुखः स्थितः ॥

पैठीनसिः—

*प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।
मज्जयेच्च यमुद्दिश्य सोऽष्टभागफलं लभेत ॥

ततस्तर्पणश्राद्धे । पृथ्वीचन्द्रोदये ब्रह्मदेवीपुराणकाशीखण्डादिषु—

*अकालेऽप्यथ वा *काले तीर्थे श्राद्धं च *तर्पणम् ।
अविलम्बेन कर्तव्यं नैव विघ्नं समाचरेत् ॥

इति जाबालिवाक्यात् । *कुशप्रतिकृतिं कुशग्रन्थिम् तत्र मज्जने मन्त्रः—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः स्वयम् । त्वयि स्नाते च स स्नातो यस्येदं ग्रन्थिबन्धनम् ॥ इति ।

प्रतिपुरुषं ग्रन्थिभेदः । इदं परार्थस्नानं प्रतिकृतिस्नापनं च जीवतामेव । अजीवतां तु तर्पणश्राद्धादीनि बोध्यम् । *अकाले रात्र्यादौ कृतभोजनादिनाऽपि । *काले अपराह्णादौ भोजनादिराहित्ये च प्राप्ततीर्थत्वस्याधिकारिविशेषणत्वात् ग्रहणादिवत्सर्वास्ववस्थासु श्राद्धं कार्यमिति भावः । काले इति तु दृष्टान्तः । *तर्पणमिति ।

स्नानाङ्गं तर्पणं कृत्वा पश्चाद्देवर्षितर्पणम् ।
कृत्वाऽऽनुपूर्व्यात्स्वपितॄन्तीर्थोदैस्तर्पयेत्ततः ॥

इति पठन्ति । तत एकं तिलाञ्जलिं दद्यात् । तत्र मन्त्रः—

देवासुरास्तथा नागा यक्षगन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥
जलेचरा भूमिलया वाय्वाधाराश्च जन्तवः ।
तृप्तिमेतेन यान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥

मात्स्ये—'पितॄणां चैव तर्पणम्' इति तुर्यपादः। तत्र देवता महालयनिर्णये प्रागुक्ताः। शङ्खदेवलौ—

तीर्थद्रव्योपपत्तौ च न कालमवधारयेत्।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं समाचरेत्॥

हारीतः—

दिवा वा यदि वा रात्रौ भुक्तो वोपोषितोऽपि वा।
न कालनियमस्तत्र गङ्गां प्राप्य सरिद्वराम्॥

---

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिला यान्तु ये चास्मत्तोऽभिकाङ्क्षिणः॥
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम्।
इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम्॥ इति।

यद्वा—

आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृ(१)बान्धवाः।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्॥ इति॥

यद्वा विस्तृततर्पणासम्भवे सङ्क्षेपेण तर्पणं कार्यम्। तत्र मन्त्रः—

आब्रह्मस्तम्बपर्यन्तं जगत्स्थावरजङ्गमम्।
मया दत्तेन तोयेन तृप्तिं यातु परां गतिम्॥ इति।
आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन्।
जलाञ्जलित्रयं दद्यात्कुर्वन् सङ्क्षेपतर्पणम्॥

इत्युक्तेः प्रत्यञ्जलि मन्त्रावृत्तिः। तिलतर्पणनिषेधश्चापि तीर्थे न प्रवर्त्तते "तीर्थे तिथिविशेषे च" इति प्रोक्तवाक्यात्। विधवयापि प्रत्यहं तीर्थे तर्पणं कार्यम्,

तर्पणं प्रत्यहं कार्यं भर्त्तुः कुशतिलोदकैः।

---

[१] 'मानवाः' घ०

भारते—

*भुक्तोवाप्यथ वाऽभुक्तो रात्रौ वा यदि वा दिवा।
पर्वकालेऽथ वाऽकाले शुचिर्वाप्यथ वाऽशुचिः॥
यदैव दृश्यते तत्र (१)नदी त्रिपथगा प्रिय।
प्रमाणं दर्शनं तस्मान्न कालस्तत्र कारणम्॥

अशौचेऽपि कार्यम्,

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि।
न तत्र सूतकं तद्वत्कर्मयज्ञादि कारयेत्॥

इति पैठीनसिस्मृतेः। *तदानीमकरणे त्वाशौचान्ते एव कुर्यात्। प्रभासखण्डे—

*न वारं न च नक्षत्रं न कालस्तत्र कारणम्।

---

तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्॥

इति स्कान्दे विधवाधर्मेषूक्तेः। संन्यासिना तु न तर्पणं कार्यम्,

न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम्।

इति वाक्यात्। *भुक्त इति। अङ्गारपर्णं प्रत्यर्जुनवाक्यम्। *तदानीमिति।

तदहश्चेत् प्रदुष्येत केनचित्सूतकादिना।
सूतकानन्तरं कार्यं पुनस्तदहरेव च॥

इति वाक्यस्य नैमित्तिके इहापि प्रवृत्तेः। नतु अमावास्यादिश्राद्धवल्लोपः निमित्ते सति नैमित्तिकानुष्ठानस्यासति प्रतिबन्धे कार्यत्वात्। यदा तु अकृतश्राद्ध एव निर्याति तदा तीर्थरूपदेशाभावात्तल्लोपः। तत्रापि बुद्ध्या त्यागे प्रत्यवायः। न त्वन्यथा त्यागे। रात्रिसंध्ययोरपि तीर्थप्राप्तौ निषेधं बाधित्वा स्नानमुण्डनोपवासतीर्थश्राद्धानि कार्याणि नैमित्तिकत्वेन तेषां साम्यात्। *न वारमिति। तीर्थश्राद्धादावुक्ते सर्वत्र तिथिवारनक्षत्रादिनिषेधा

---

(१) 'नदी च त्रिपथा क० छ०।

यदैव दृश्यते तीर्थं तदा पर्वसहस्रकम् ॥

मलमासेऽपि कार्यम्,

नित्यनैमित्तिकं कुर्यात्प्रयतः सन्मलिम्लुचे ।
तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च ॥

इति बृहस्पतिस्मृतेः ।

एतच्चाशौचे प्रकृतभोजनस्य रात्रौ वा स्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तावा*महेमश्राद्धविषयं ग्रहणादिवत् नतु बुद्धिपूर्वमाशौचादौ तीर्थप्राप्तिः कार्या । मलमासे तु *मासद्वये तीर्थश्राद्धं कार्यमिति चन्द्रिकायां देवीपुराणे—

श्राद्धं च तत्र कर्तव्यमर्घ्यावाहनवर्जितम् ।

---

न प्रवर्त्तन्ते इत्यर्थः । ते च पूर्वमुक्ता एव । यथा—"नन्दायां भार्गवदिने" 'प्राजापत्ये च पौष्णे च" "नक्षत्रे च न कुर्वीत" "भानौ भौमे त्रयोदश्यां" "नन्दाश्च कामरव्यार" "रात्रौ श्राद्धं न कुर्वीत" "उपसन्ध्यं न कुर्वीत" "विवाहे व्रतचूडासु वर्षमर्धम्" इत्यादयः ।

वृद्धिमात्रे तथाऽन्यत्र पिण्डदाननिराक्रिया ।
कृता गर्गादिभिर्मुख्यैर्मासमेकं तु कर्मिणाम् ॥

इत्यादयः पिण्डदाननिषेधा अपि तीर्थश्राद्धे न प्रवर्त्तन्ते । *आमेति । तावतैव वचनचारितार्थ्यात् न तु पाकोऽपि कार्यः, मानाभावात् । पाकश्राद्धं तु रात्रिसन्ध्ययोर्भुक्तवतश्च परदिने एव । तत्र आशौचे तु आशौचापगमे तदानीमपि तीर्थसम्बन्धसत्त्वादित्यर्थः । *मासद्वये इति । बिलम्बनिषेधान्मलमासे कालशुद्ध्या फलाधिक्याच्च ।

मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ।

इति वाक्याच्च । नचेदमुभयत्र तीर्थप्राप्तिपरम्, एतद्व्यतिरेके-

हेमाद्रौ—

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥

भविष्ये—

आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ।
आवाहनं न तीर्थे स्यान्नार्घ्यदानं तथा भवेत् ॥
आहूताः पितरस्तीर्थे कृतार्घ्याः सन्ति वै यतः ॥

अग्नौकरणं च नेति रत्नावल्याम् । अत्र षड्दैवते श्राद्धेऽपि मात्रादीनां पिण्डमात्रं देयम्,

हविःशेषं ततो मुष्टिमादायैकैकमाहृतः ।
क्रमशः पितृपत्नीनां पिण्डनिर्वपणं चरेत् ॥

इति तीर्थोपक्रमे देवलोक्तेरिति पृथ्वीचन्द्रः । ततः सामान्यपिण्डं दद्यात्,

ततः पिण्डमुपादाय हविषः संस्कृतस्य च ।
ज्ञातिवर्गस्य सर्वस्य सामान्यं पिण्डमुत्सृजेत ॥

इति तेनैवोक्तेः । पाद्मे—

तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः ।
आमान्नेन हिरण्येन कन्दमूलफलैरपि ॥

पिण्डद्रव्याणि देवीपुराणे हेमाद्रौ ब्राह्मे च—

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा ।
कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा ॥

पिण्डानां तीर्थे प्रक्षेप एव नान्या प्रतिपत्तिरित्युक्तं प्राक् । एतच्च विधवयाऽपुत्रया कार्यं न सपुत्रयेत्युक्तं प्राक् ।

सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचन ।

इति स्मृतेश्च । अनुपनीतेनापि कार्यम्,

एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।

णैव तदा श्राद्धसिद्धेः तीर्थिकपदानर्थक्यापत्तेः । देवीपुराणे—

तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन ।

पातित्यादिदोषयुक्तस्तु हेय एव । तथा—

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥

अग्नौकरणं विसर्जनं च न कार्यम् । इदं च तीर्थनिमित्तकश्राद्धे एव नतु तीर्थाधिकरणकश्राद्धे इति बोद्धव्यम् । देवलः—

नचात्र श्येनगृध्रादिपक्षिणः प्रतिषेधयेत् ।
तद्रूपास्तत्र पितरः समायान्तीति वैदिकम् ॥
आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत् ।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥

पिण्डदानं भवतीति शेषः । आमगृहपाकसक्तुपायसानां यथालाभं व्यवस्था । आमश्राद्धे तृप्तिप्रश्नादिनिषेधः मन्त्रोहश्च पूर्वमुक्तः । सर्वश्राद्धाशक्तौ पिण्डदानमात्रं कार्यमित्युक्तं प्राक् । यत्तु—

नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित् । इति ।

तदेकनिमित्तकश्राद्धपरम्,

द्विबहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् ॥

इत्युक्तेः । उपवासमुण्डने तु सकृदेव व्यापकतीर्थे एव तद्विधानात् । यत्र तु व्याप्यतीर्थे श्राद्धकरणाद्व्यापकतीर्थेऽपि सिद्धिस्तत्र न श्राद्धावृत्तिः किन्तु तन्त्रमिति । यथा गङ्गावे[illegible]त्तकानाम् । यथा वा गङ्गा[illegible]र्णिकाकाशीनिमित्तकानाम् । अथ श्रा[illegible]तीर्थ[illegible] वार्षिकं भिन्नमेव कार्यं देवताभेदात् । तीर्थश्राद्धं प्रथमतः कार्यं विलम्बासहत्वान्नैमित्तिकत्वाच्च । दार्शिकयुगादिमन्वादिसंक्रान्त्यादिश्राद्धानि तु पाकेन तीर्थश्राद्धकरणे पृथक् न कार्याणि, आमादिना तीर्थश्राद्धे तु पृथक् कार्याणि । एवमेव नित्यश्राद्धमपि यदि तीर्थश्राद्धं पाकेन तदा न पृथक् । आ-

इति पाद्मे तीर्थश्राद्धमुपक्रम्योक्तेः । एतच्च जीवत्पितृकेणापि कार्यमित्युक्तं प्राक् । यतिना तु न कार्यम्,

न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम् ।
त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम् ॥
गोत्रादिचरणं सर्वं पितृमातृकुलं धनम् ॥

इति स्मृतेः । गयायां तूक्तं वायवीये—

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।
दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते ॥
गयायां धर्मपृष्ठे च कूपे यूपे वटे तथा ।
दण्डं प्रदर्शयन् भिक्षुः पितृभिः सह मुच्यते ॥

कृत्यरत्ने प्रभासखण्डे—

तीर्थे चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिदुर्लभः ।
दशांशमर्जितं दद्यादेवं कुर्वन्न हीयते ॥ इति ।

*विशेषान्तराणि भट्टकृतत्रिस्थलीसेतौ ज्ञेयानीति दिक् ॥

इति श्रीकमलाकरभट्टकृते निर्णयसिन्धौ
तीर्थश्राद्धविधिः समाप्तः ।

इति श्राद्धप्रकरणं द्वितीयम् ।

१४ कुमारसंभवं महाकाव्यम् । महाकवि-श्रीकालिदासवि० । सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं २) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्टोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च । ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम्-मधुसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः । ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । ( कर्मकाण्डं ) रु० १—०

२१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्य-विरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायविन्दुः—भाषाटीकासहितः ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका-श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः ( टिप्पणीसमलंकृतः ) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः । ( कर्मकाण्डवि० ३ ) रु० ०—५

२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः । अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीय-कृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः । (व्या०४) रु० ३—८

२८ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलालठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् । ( काव्यवि० ३ ) रु० ०—१२

कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ८—०

न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहोपाध्याय वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः (न्यायं४) रु० ६—०

परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या–तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ४) रु० ३—०

अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपारव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२) रु०१—०

न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि–गोतमादिचरितसम्वलितबृहत्भूमिकासहितम् । (न्यायं चि० ५ ) रु० ६—०

शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १–२–३–४ )(वैदिकं ३) रु० ८—०

शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर–वामन–जयादित्यविनिर्मिता । (व्याकरणं ५) रु० ६—०

प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः । टिप्पण्या च संयोजितः । (व्याकरणं ६) रु० १—४

जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवादसमेतः । (वेदान्तं ५) रु० २—०

श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः । (ज्योतिषं २) रु० ०—६

मेदिनीकोशः–मेदिनीकारविरचितः । (कोशं १) रु० १—८

मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम् ( भाग१—२ ) (मीमांसा ३) रु० १०—०

न्यायदर्शनम् । श्रीगोतममुनीप्रणीतम् । श्रीवात्स्यायनमुनीप्रणीत भाष्यसहितम् । श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचि-

४४ दानमयूखः। विद्वद्वरश्रीनीलकण्ठभट्टविरचितः। (धर्मशास्त्रं १) रु० १—८
४५ कालमाधवः। विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं २) रु० १—८
४६ भास्वती। श्रीमच्छतानन्दविरचिता । श्रीमातृप्रसाद ( दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता । (ज्योतिषं ३) रु० २—८
४७ फक्किकाप्रकाशः। उपाध्यायोपाह्ववैयाकरणकेसरीबिरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचितः । पं० सीतारामशर्मकृतटिप्पण्या विभूषितः। (व्याकरणं ७) रु० १—१
४८ मिताक्षरा। श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या--श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा०६) रु० १—
४९ काव्यप्रकाशः । श्रीमम्मटाचार्यविरचितः। पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः (काव्य०४) रु०४ —
५० अधिकरणकौमुदी । श्रीदेवनाथठक्कुरकृता। (मीमां० ४) रु० १—८
५१ रघुवंशमहाकाव्यम्। महाकविश्रीकालिदासविरचितम् महामहोपाध्याय श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण विरचितया भावबोधिनी टिप्पण्या समलङ्कृतम् संपूर्णम् । रु० १—१
५२ काथबोधः। साजनीकृत टीकोपेतः। दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८
५३ रसचन्द्रिका । पर्वतीय-पण्डितप्रवर-श्रीविश्वेश्वरपाण्डेय निर्मिता (काव्य० ६) रु०१—८
५४ अलङ्कारमुक्तावली। पर्वतीय-विद्वद्वर-श्रीविश्वेश्वर पाण्डेय-निर्मिता— ( काव्य० वि० ७ ) रु०-१२-
५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः। नारायणभट्टीयव्याख्यासहितः। सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः । श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः । (छंद वि० १) १-८-०
५६ अलङ्कारशेखरः। केशवमिश्रकृतः। साहित्योपाध्याय वेतालोपाह्व श्री अनन्तरामशास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः। ( अल० वि० १ ) १—४
५७ शक्तिवादः-टीकात्रयोपेतः। श्रीगदाधरभट्टाचार्यप्रणीतः। कृष्णभट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः। ( न्या० वि० ७ )२-०-०

पत्रादिप्रेषणस्थानम्
जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमंदिर के उत्तर फाटक
बनारस सिटी ।

October 1928.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 370

कमलाकरभट्टविरचितो

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

काशीस्थराजकीयसंस्कृतपाठशालायां व्याकरणधर्मशास्त्राध्या
पकेन नेने-इत्युपाख्येन पं० गोपालशास्त्रिणा तदीयगुरुवर-
म० म० पं० पर्वतीयनित्यानन्दपन्तप्रदर्शितरीतिमनु-
सृत्य संशोधितष्टिप्पणया परिष्कृतश्च ।

The

# NIRṆAYASINDHU,

of Kamalâkara Bhaṭṭa
With Commentary by Kṛṣṇam Bhaṭṭa.
Edited with Notes by
Pandit Gopâla S'âstrī Nene, Assistant Professor,
Govt. Sanskrit College, Benares.

FASCICULUS XIX-१३

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1928.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३७०

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

श्रीः ।

# अथ आशौचप्रकरणम् ।

नारायणात्मजश्रीमद्रामकृष्णस्य सूनुना ।
कमलाकरसंज्ञेनाशौचं निर्णीयतेऽधुना ॥ १ ॥

मरीचिः—

*आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥

बृह(१)त्पराशरः—

गर्भस्रावे तु नैरुक्ता रात्रयो माससंमिताः ।
स्रावं गर्भस्य विद्वांसो मासादर्वाक्चतुर्थकात् ॥
पातमूर्ध्वं वदन्त्येके तत्राधिकं तु सूतकम् । )
स्रावे *मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् ।
पाते मातुर्यथामासं *सपिण्डानां दिनत्रयम् ॥

---

श्रीगणेशाय नमः ।

*आचतुर्थादिति ।

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं तु नारीणां स्रवः प्रसव उच्यते ॥

इति स्मृतौ सांज्ञिकोऽपि निर्देशो बोध्यः । *मातुरिति सावधारणम् । *सपिण्डानामिति यत्नगर्भपातपरं, जारजगर्भस्य पूर्णप्रसवे बीजिक्षेत्रिणोः सन्निध्यसान्निधिभ्यां त्रिरात्रैकरात्रव्यवस्थायाः सपिण्डानामेकाहस्नानव्यवस्थायाश्चाग्रे सत्त्वेन तदपूर्णनिर्गमे तेषामाशौचाभावस्यैवौचित्यात् । ननु मरीच्यादिस्मृ-

---

(१) धनुश्चिन्हान्तर्गतं नास्ति क० छ०

*अत्र सर्वत्र मूलं मि(१)ताक्षरायां ज्ञेयम् । अत्र मासत्रये त्रिरात्रं स्यादित्यनुवादः, रजस्वलात्वेनैव तत्सिद्धेः । यद्यप्यनेन चतुर्थमासेऽपि त्रिरात्रं प्राप्नोति तथापि—

*षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥

इत्यादिपुराणात् ,

*रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।

*इति मनूक्तेः;

*गर्भस्रावे यथामासमचिरे तूत्तमे त्र्यः ।

इति मरीच्युक्तेश्चतूरात्रं ज्ञेयम् । अचिरे त्रिमासमध्ये । *उत्तमे ब्राह्मणे । अत्र सपिण्डानां स्नानम्;

सद्यःशौचं सपिण्डानां गर्भस्य पतने सति ।

---

त्यनुपलम्भात् कथमेतदित्यत आह—*अत्र सर्वत्रेति । *षण्मासेति । नचेदं मात्रविषयं निरवकाशेन "स्रावे मातुस्त्रिरात्रं स्यात्" इत्यनेन बाधादिति वाच्यं 'माससमैः' इति विशेषणानन्यथासिद्धादिवसैरिति बहुवचनाच्चतुष्ट्वादित्रयस्य शोधकतावच्छेदकत्वावगमेन त्रिरात्राशौचस्यैव मासत्रयविषयत्वात् । *रात्रिभिरिति । आशौचप्रकरणस्थरात्रिदिनशब्दावहोरात्रलक्षकौ । नचाद्यमासमात्रं द्वितीयमासमात्रं तदुभयमेव वा तद्विषयोऽस्त्वित्यत आह—*गर्भेति । "गर्भसमा रात्र्यः संस्रवे गर्भस्य त्र्यहं वा" इति वासिष्ठं तु अचिरशब्दैकवाक्यतया त्र्यहपदं वा मासत्रयविषयमिति व्यवस्थया षण्मासपरम् । *उत्तम इति ।

राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु ।
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ॥

---

(१) 'मिताक्षरादौ' क० छ०

इति तत्रैवोक्तेः। *एतदाचतुर्थमासात्, पाते त्रिदिनस्योक्तेः। अकारणायाः शुद्धेरसम्भवात्सद्यःपदं स्नानपरम्। एवमग्रेऽपि। 'गर्भस्रावे स्नानमात्रं पुरुषस्य' इति वृद्धवसिष्ठोक्तेः। पुरुषस्येति सपिण्डोपलक्षणं *पूर्वोक्तवचनात्। *आचतुर्थमासं सपिण्डानां न स्नानं, किन्तु पुंस एव। पाते त्रिदिनं निर्गुणपरम्। गुणवतस्तु—

अजातदन्ते तनये शिशौ गर्भच्युते तथा।
सपिण्डानां तु सर्वेषामेकरात्रमशौचकम्॥

इति यमोक्तेरेकाहमिति मदनपारिजातः।

---

इति शेषमारीचात्। वस्तुतस्तु गर्भनाशप्रयुक्तमाशौचं सर्ववर्णेषु समं मारीचं तु विगीतत्वान्नादरणीयम्। अन्यथा त्रिषु मासेषु क्रमेण चतुःपञ्चाष्टदिनानि चतुर्थमासे तु माससंख्यानि चत्वारि दिनानि इत्यनौचित्यापत्तेः। पतनं स्रावो नतु पात इत्याह-*एतादिति। आचतुर्थेति मर्यादायामाङ्। "पाते मातुर्यथामासम्" इति पातशब्दस्य चतुर्थमासप्रभृति गर्भस्रावपरत्वात्। *पूर्वोक्तेति। नच पूर्वोक्ते मारीचे सपिण्डपदं पुरुषोपलक्षणमस्त्विति वाच्यं, तत्र सापिण्डाशौचवर्जनं त्रिरात्रनिषेध एव स्नानादात्रधिकाशौचे स्पष्टः। एवञ्च पाते येषां त्रिरात्रं तेषां स्रावे स्नानमित्यर्थलाभात् पुरुषपदेनैकवाक्यत्वं सद्यःशौचं सपिण्डानामिति बहुवचनाच्चेत्यर्थः। पुरुषपदस्य सपिण्डाशौचवर्जनमित्यत्र विशेषकत्वं वदतां मतमाह-*आचतुर्थमिति। अत्र पुरुषपदेन स्त्रीणां पातिभिन्नसपिण्डानां वा व्यावर्तनमप्युक्तं सम्बन्धसाम्यात्। पुंसः स्नानस्य तदितरेषां तन्निवृत्तेश्च विधौ वाक्यभेदप्रसङ्गाच्च। एवं जारजपूर्णगर्भनिर्गमो गर्भच्युतिस्तत्र पित्रन्यसपिण्डानां सन्निधावेकरात्रपरतया यमोक्त्युपपत्तेर्गुणवत्परत्वं न युक्तमित्यस्वरसः। अत ऊर्ध्व-

*सप्तममासादि दशाहम् । *एतत्सर्ववर्णविषयम्,
*तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च ।

इति व्याघ्रोक्तेः । पराशरः—

*जाते विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥

संवर्तः—

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥

पुत्रपदात्कन्योत्पत्तौ न पितुः स्नानमिति हारलतायाम् । तन्न, पुत्रपदस्य 'पौत्री मातामहस्तेन' इति कन्यायामपि प्रयोगात् । यच्च तत्रैवोक्तम्—

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात् ॥

---

मित्यादि विवृणोति-*सप्तमेति । दशाहमिति विप्रपरम् । षण्मासाभ्यन्तर इति श्लोकानन्तरम्—

अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते ।

इत्यादिपुराणात् । *एतदिति । अविकलाङ्गकस्य जीवतो गर्भस्य निर्गमः प्रसवः लोके तत्रैव तद्व्यवहारात् । स च सप्तमप्रभृतीति तत्पूर्वतनमित्यर्थः । *तुल्यमिति । गर्भग्रहणमारभ्याऽऽप्रसवं प्रसवमारभ्यौपनयनं च वयः। मर्यादायामाङ् । तत्पुरस्कृत्य यदाशौचमुक्तं "स्रावे मातुस्त्रिरात्रं स्यात्" इत्यादि "आदन्तजननात्सद्यः" इत्यादि च तत् सर्वेषां वर्णानां मातामहाद्याशौचवत्तुल्यम् अविशिष्टं तद्वाक्येषु वर्णविशेषानुपादानात् । दशाहादावतिक्रान्ते च यदाशौचं त्र्यहादि तदपि सर्वेषां वर्णानामविशिष्टमित्यर्थः । प्रसवनिमित्तकाशौचं तु वर्णभेदाद्भिन्नमित्याह-*जाते इति । प्रसवे इत्यर्थः ।

इत्यादिपुराणान्मुखदर्शनोत्तरमेव पितुः स्नानमिति । तन्न, विदेशे मुखदर्शनावध्यस्पृश्यतापत्तेः । मुखदर्शनोत्तरं पुनःस्नानार्थमिदमिति स्मार्तगौडाः । तन्न, मूलैक्येन ज्ञानमात्रपरत्वात् । *इदं सर्ववर्णसमम् ,

सूतिका सर्ववर्णेषु दशरात्रेण शुध्यति ।
*ऋतौ च न पृथक् शौचं सर्ववर्णेष्वयं विधिः ॥

इति हारलतायां प्रचेतसोक्तेः । यत्तु ब्राह्मे—

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः ।
गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव च ॥ इति ।

प्रयोगपारिजाते पारस्करः—

द्विजातेः सूतिका या स्यात्सा दशाहेन शुध्यति ।
त्रयोदशेऽह्नि संप्राप्ते शूद्रा शुध्यत्यसंशयम् ॥ इति,

त(१)दसच्छूद्रापरम् ।

आङ्गिराः—

सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते ।
संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥
नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति ।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥

संसर्गो मैथुनम् । स्पर्श इत्यन्ये । "मातुरेव सूतकम् , तां स्पृशतश्च" इति हारलतायां सुमन्तूक्तेरिति । तन्न,

---

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
जननस्यैवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥

इति स्मृतौ दशाहपदं विप्रपरम् । *इदं सूतिकाया दशाहास्पृश्यत्वं "माता शुध्येद्दशाहेन" इत्यभिहितं, तदग्रे कर्मानाधिकारमात्रमिति भावः । *ऋताविति चतुर्थेऽह्नि तत्प्रयुक्तस्नानादिव्यवहार-

---

(१) 'तदस्पृश्यत्वपरम्' ग० ।

संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ।

इति स्नानमात्रोक्तेः सीमन्तवचनस्य स्नानपर्यन्तमस्पृश्यत्वमात्रबोधकत्वात्। एवकारो बालस्पृश्यत्वार्थः । माधवस्तु—

*यस्तैः सहासपिण्डोऽपि प्रकुर्याच्छयनासनम् ।
बान्धवो वा परो वापि स दशाहेन शुध्यति ॥

इति बृहस्पतिस्मृतेः । शयनासनादिरूपं संसर्गमाह पराशरः—

*यदि पत्न्यां प्रसूतायां द्विजः संपर्कमृच्छति ।
सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित् ॥

पितृवत्सापत्नमातुः प्राक्स्नानादस्पृश्यत्वम् । सूतिकास्पर्शे तु *यावदाशौचम्,

अन्यास्तु मातरस्तद्वत्तद्गृहं न व्रजन्ति च ।

इति ब्राह्मोक्तेरिति शुद्धितत्त्वादयः । तन्न, *तद्गेहं गत्वा सूतिकां यदि न स्पृशन्ति तदा स्पृश्याः, अन्यथा न इति तस्यार्थः ।

कर्मानधिकारमाह पैठीनसिः—सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीम् । *इद-

---

णार्थम् । *यस्तैरिति प्रसवे कर्माधिकारस्य मरणे तत्सहितस्पृश्यत्वस्य च निषेधपरम् । मैथुनिनो दशाहमस्पृश्यत्वमाह—*यदीति । ऋच्छति प्राप्नोति । असंपर्केऽपि सूतकप्राप्तेः सूतकपदमस्पृश्यत्वार्थम् । तद्वदित्यतिदेशः स्नानावध्यस्पृश्यत्वार्थः । *यावदाशौचमिति । स्नानमित्यादिः । एवञ्चाह—*तद्गेहमिति । केचित्तु सूतिकास्पर्शे गार्भनिर्गमनौपयिकतदीयरजःस्पर्शे तद्गेहमिति तद्रजःस्पर्शनिषेधार्थम् । अन्यथा अविशेषेण पत्युरपि तद्गेहव्रजनमात्रेणास्पृश्यत्वापातादित्याहुः । दशश्लोकी-

माशौचोत्तरम् । अन्यथा *शूद्र्याः सपिण्डानामाशौचे

कारमतमाह—*इदमिति । *शूद्र्या इति । पुत्रप्रसवे शूद्र्या विंशतिरात्रं सपिण्डानां तु मासमित्यनौचित्यं स्यादित्यर्थः । *विधीति । विंशतिशब्देनैव जननप्रभृति विंशतिरात्रविधानं प्राप्तं दशाहकर्मानधिकारमनूद्याप्राप्तसदशाहो विधातव्यः । एवमेव मासपदेन मासविधाने प्राप्तदशाहमनूद्य विंशतिरात्रो विधेय इति विरोध इत्यर्थः । इदं तु बोध्यम्—अत्र त्रिंशच्छ्लोकीकारमतमेव सम्यक् विंशतिरात्रपदेन प्राप्ताप्राप्तविवेकेन विधानेन विध्यनुवादवैरूप्यस्यादोषत्वात् । अन्यथा दशपेयाधिकरणभङ्गापत्तेः । तत्र हि—"दश दशैकैकं चमसमनुप्रसर्पन्ति शतं ब्राह्मणाः सोमाय भक्षयन्ति" इत्यत्र पूर्ववाक्येन चमसोद्देशेन भक्षणकर्तृपरिच्छेदशतसंख्या विधीयते । तथाच चमसेषु प्रतिप्रधानमावृत्त्या शतसंख्या सिध्यति । तत्र चमसेषु अतिदेशतः कर्तृपरिच्छेदकत्वेन ब्राह्मण्यस्य च प्राप्तेरेककर्माङ्गत्वाज्जातिसंख्ययोरन्योन्यानियमे सिद्धे उत्तरवाक्येन शतानुवादेन ब्राह्मण्यविधौ कर्तृनवतौ प्राप्तं ब्राह्मण्यमनूद्य यजमानचमसे राजन्यजातिबाधाय तद् विधीयते इति तद्वैरूप्याङ्गीकारः । किञ्च विधेरुद्देश्यनिष्ठानुवादेन विरोधो नानुवादमात्रेण यथा "वषट्कर्तुः प्रथमभक्षः" इत्यत्र भक्षानुवादेन प्राथम्यविधौ । किञ्च यत्रैकेनैव पदेन स्वार्थ एकं वस्तु द्विरुद्देशेऽन्यं च प्रत्युपादीयते तत्र वैरूप्यम् । यथा "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र स्वाराज्यार्थं यागमनूद्य वाजपेयरूपगुणविधिपक्षे । नचेह तथा, दशाहोत्तरादिनेऽनधिकारमात्रबोधनात्, द्वादशाहीनस्येत्यादावतिदेशतोऽधिकोपसद्विधिवत् । वस्तुतस्त्वस्पृश्यत्वकर्मानधिकाराभ्यामाशौचं द्वेधा । तत्र यथाऽद्ये जननादिनं पूर्वावधिरुत्तरावधिर्दशमदिनं, तथैव द्वितीये प्राप्तौ पैठीनसिवाक्येन पुत्रजननादावुत्तरावधिदशमादिदिनबाधेन विंशतितमादिदिनं विधीयते । अन्यथा पतितादिष्विव

तदभावः स्यादि*त्यनुवादविरोधश्च । एतच्च सोम-यागादि*श्रौतभिन्नपरम् । 'प्रजातायाश्च दशरात्रादूर्ध्वं स्नानादि' इति कात्यायनोक्तेः । व्यासः—

*प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥

पुत्रशब्दोऽपत्यमात्रपरः । ब्राह्मे—

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं षष्ठं च सर्वदा ॥

जनने *विशेषः प्रागुक्तः ।

अत्र प्रयोगपारिजातः—पुंप्रसवे दशाहः, स्त्र्यपत्ये तु त्र्यहः,

पुंजन्मनि सपिण्डानां दशाहाच्छुद्धिरिष्यते ।

---

पूर्वोत्तरावधिविशिष्टापूर्वकर्मानधिकारविधाने महागौरवापत्तेः । यथाऽवभृथस्य दीक्षोन्मोचनार्थत्वाद् "दीक्षितो न जुहोति" इत्य-ग्निहोत्रानधिकारेऽवभृथावधिके प्राप्ते "एतया पुनराधेयसंमितयेष्ट्या इष्ट्वाऽग्निहोत्रं जुहोति" इत्यनेनाग्निहोत्रानधिकारे प्राप्तपूर्वावधिबाधे-नोदवसानीयारूपावध्यन्तरं विधीयते । एवमिहापि । उक्तं रघुना-थभट्टैरपि दशरात्रादिना सूत्याशौचस्य स्पर्शप्रतिबन्धकत्वशक्ति-नाशेऽपि कर्माधिकारप्रतिबन्धकत्वशक्तिर्विंशतिरात्रादौ विद्यते इति । तस्माज्जननप्रभृत्येवायं कर्मानधिकारः । इदं च वाक्यं त्रि-वर्ण एव न शूद्रे प्रवर्तते, तत्र मासं कर्मानधिकारसिद्धेरिति । एतेन युक्तं शूद्र्याः सपिण्डानामाशौचे तदभावः स्यादिति तत्प्रयु-क्तमिति । *श्रौतेति । अग्न्याधानिनामपि विच्छिन्नं स्मार्तादि तत्र नोत्पद्यते इति सूचनार्थम् । *प्रथमे इति । दानपूजादिषु स्मृतिपुराणसदाचारप्राप्तेषु वृद्धिश्राद्धादौ च योग्यत्वार्थम् ।

त्र्यहादेकोदकानां च एकाहं सूतकं *क्वचित् ॥

*स्त्रीजन्मनि सपिण्डानां सोदकानां त्र्यहाच्छुचिः ।
स्त्रीषु त्रिपुरुषं ज्ञेयं सपिण्डत्वं द्विजोत्तमाः ।

इत्यग्निस्मृतेरित्याह । मेधातिथिरपि—'अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते' इति वासिष्ठमुक्त्वा "आशौचे एवैतत्, विवाहे तु अवधिर्दर्शित एव" इत्याह । अन्ये तु त्रिपुरुषसापिण्ड्यस्य कानीनक(१)न्यापरत्वमाहुः ।

अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् ।
*प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः प्रजापतिः ॥

इति कौर्मविरोधाच्च। *अत्रेदं तत्त्वम्—'पञ्चमात्सप्तमाद्र्ध्वं मातृतः पितृतस्तथा' इत्या- … 

इति कौर्मविरोधाच्च। *अत्रेदं तत्त्वम्—'पञ्चमात्सप्तमाद्धीमान्यः कन्यामुद्वहेद्द्विजः। गुरुतल्पी स विज्ञेयः' इत्यादिविरोधात्त्रिपुरुषं प्रकरणान्मरणाशौचपरम्, वासिष्ठे तदग्रे उदकदानोक्तेः । तेन कन्याप्रसवेऽपि साप्तपौरुषं दशरात्रमेव । न च कन्यापु(२)त्रकृतं प्रसवे बलाबलं क्वाप्युक्तम् । अग्निस्मृतिस्त्वनुकल्पो विगीता चे(३)ति सर्वसिद्धान्तः । अन्यथा त्रिपुरुषसपिण्डानामष्टमादिसोदकानां च त्र्यहसाम्यायोगात् । चतुर्थादिसप्तमान्तानां च किमपि न स्यात् । (ते(४)न कन्याप्रसवे दशाह एव ।) *किञ्च स्त्रीजन्मोद्देशेन त्रिपुरुषं सापिण्ड्यं तेषां च त्रिरा-

---

*विशेषः षष्ठीपूजनादिः । *क्वचित् । आपत्तौ । *स्त्रीजन्मनि आशौचे, तत्सामान्ये विवाहोपादनात् । कानीनकन्याप्रसवपरत्वे बीजमाह—*प्रत्तानामिति । पुंप्रसवे इति शेषः । चकारः संपातायातः । वासिष्ठस्य मरणाशौचमात्रपरतां सिद्धान्तयिष्यन् स्त्रीजनने त्रिपुरुषसापिण्ड्यं त्र्यहं च दूषयति—*अत्रेति । *कि-

---

(१) 'कन्या' नास्ति क० । (२) 'पुत्रकसम्प्रसवे' छ० ।
(३) 'वेति' ग० (४) धनुश्चिन्हान्तर्गतं नास्ति क० छ० ।

त्रमित्यनेकार्थविधिः कथं स्यात् वाक्यभेदापत्तेः । *न च चतुर्थादीनां सोदकत्वं क्वापि सिद्धम् । तेन त्रिपुरुषं चतुर्थादीनां च स्त्रीजन्मनि सोदकत्वं विधाय पुनस्तेषां त्रिरात्राशौचविधौ विध्यनुवादविरोधो वाक्यभेदद्वयं चेत्यसंवादार्थाग्निस्मृति*र्हेया ।

अथ मृताशौचं । हारीतः—*जातमृते मृतजाते वा सपिण्डानां दशाहम् दशाहम् । इति स्वाशौचपरम् । *जातमृते नालच्छेदोर्ध्वम् ,

*यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥

इति जैमिन्युक्तेः 'नाड्यां छिन्नायामाशौचम्' इति हारीतोक्तेश्च । एतन्मृताशौचपरमेव । जननाशौचं तु नालच्छेदोत्कर्षेऽपि जननाद्येव । मृतजाते नालच्छेदाभा-

---

श्चेति । अभ्युच्चयमात्रं स्त्रीजन्मनि स्त्रीष्विति पदाभ्यां पृथगुद्देशसम्भवात् । सिंहगुहावलोकनन्यायेन पूर्वोक्ते दोषोद्धारं शङ्कते—*नचेति । *हेयेति । इदमुपलक्षणं । स्त्रीजन्मनीत्यस्य कानीनकन्यापरत्वानुपगमे सापिण्ड्यस्य तत्परत्वमनुचित, तत्परत्वोपगमे तत्प्रायपाठात् पुंजन्मनीत्यत्र कानीनपुत्रपरत्वापात्तिः । कन्यापुत्रभेदेन जननाशौचभेदे मानाभावादिति तृतीयदूषणमपि बोध्यम् । *जातमृतेति सप्तममासप्रभृति सूतिपरम् । *जातमृते नालच्छेदोर्ध्वमिति । जीवत उत्पन्नस्य नालच्छेदोर्ध्वमरणे इत्यर्थः । *यावदिति । अग्रिमबृहन्मनुवचनादत्र शिशुमृतौ पूर्णमिति पदयोरध्याहारः । तथाच यावन्नालच्छेदः तावच्छिशुमृतौ न पूर्णं प्रसवाशौचं, नालच्छेदोर्ध्वं तन्मरणे तु तत्सम्पूर्णमित्यर्थः । एवञ्च नालच्छेदोत्कर्षेऽपि प्रसवोत्तरमेव तदाशौचप्रवृत्तिः । जातकर्मादेस्तात्कालिकशुध्यैव कर्तव्यता । तथाच पुत्रोत्पत्तिनि-

वात् षष्ठीपूजाद्युत्कर्षापत्तेश्च । तेन *नाडीछेदात्प्राङ् मातुः स्पर्शे न दोष इति शुद्धितत्वोक्तिः परास्ता । नाभिच्छेदनात्प्राङ्मृतौ तु बृहन्मनुः--

*जीवन्जातो यदि ततो मृतः सूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥

इदं च प्रसवाशौचमेव, शावनिमित्तं स्नानमात्रम् । 'प्राङ्नामकरणा*त्सद्यःशौचम्' इति शङ्खोक्तेः ।

अत्र कश्चिदाह--'नामकरणमाशौचान्तकालोपलक्षणम्' । 'आशौचव्यपगमे नामधेयम्' इति विष्णूक्तेः,

आशौचे च व्यतिक्रान्ते नामकर्म विधीयते ।

इति मनूक्तेश्च नाम्नो नियतकालत्वात् । न च--

नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥

इति मनूक्तेरनियतकालत्वम् । दशम्यामतीतायां विप्रः । द्वादश्यामतीतायां क्षत्रियः । *वैश्यः षोडशे । शूद्र एकत्रिंशे इत्यपि ज्ञेयम् । *पुण्य इत्याद्यनुकल्पः ।

---

मित्तकस्नानेऽपि न सन्ध्यादि नवा नाडीच्छेदात्प्राग् मातुः स्पर्श इति । अत एव पूर्णमित्यध्याहारानभिज्ञ इति मतं निरस्यति—*नाडीति । एतन्मृते मृतजाते नालच्छेदाभावेपि न दशाहस्य लोपः । तस्य विशिष्यविधानादिति स नोक्तः । *जीवन्निति । ततः नालच्छेदात् प्राक् । जीवन् जातो नालच्छेदात् प्राक् सूतक एव मृतस्तदा पित्रादीनां त्रिरात्रमिति परिसंख्यायाः जननप्रयुक्ताधिकाशौचानिवृत्तिपर्यवसायित्वेन नालच्छेदात् प्राक् पञ्चमदिनादौ मृते चतुर्थदिनादावनुवृत्तस्यापि सूतकस्य निवृत्तिः । *सद्य इति मृतपरं, सूतौ दशाहादिसत्त्वात् । पूरयति-*वैश्य इति । स्वस्वाशौचान्ते नाम कुर्यादित्यर्थः । *पुण्य इति । अनुकल्पेन

*तेन *नाम्नः कालोपलक्षणम् । एवं दन्तजननेऽपि 'दन्तजन्म सप्तमे मासि' इत्युपनिषदि नियतकालत्वात् । चौले तु न कालोपलक्षणम्,

प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ।

इति मनूक्तेः,

ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनात् ॥

इति यमोक्तेश्च *तस्यानियतकालत्वादिति । तन्मन्दम्, चौलवन्नामदन्तजननयोरपि स्वरूपेण निमित्तत्वोपपत्तेस्तद्विशिष्टकालानुवादे वाक्यभेदात् सप्तममासादर्वाग्दन्तजनने तदभावप्रसङ्गाच्च । यस्तूपनिषद्दर्शनेन निर्णयं कुर्यात्स नूनं 'शतायुः पुरुषः' इति श्रुतेरर्वाक् पितृमरणे तदन्त्यकर्मापि त्यजेत् । ननु कालानुपलक्षणे नामोत्कर्षे तदभावे वा स्नानमात्राच्छुद्धिः स्यात् । ततः किम् ? अस्तु । अत एवोक्तं 'आदन्तजननात्सद्यः' इति । सा च विष्णुवचनाद्दाहाभावविषयेति वक्ष्यामः । त्रिवर्षादावपि स्यादिति चेत् ? न, दाहदन्तादिनिमित्तैर्विशेषा-

---

मुख्यकल्पनैयत्यभङ्ग इति भावः । ननु रात्रिविशेषेण दशमीद्वादशीशब्दावहोरात्रपराविति वचनबलादाशौचमध्येऽपि जातकर्मवन्नामकर्मोपपत्तौ अध्याहारोपलक्षणत्वयोर्मानाभाव इत्यत आह—*तेनेति । विष्णुमनुवचनेनाध्याहारादिप्रमाणेनेत्यर्थः । *नाम्नः कालः आशौचान्तकालः । अपूर्णे इति च्छेदः । एतेन संवत्सरे पूर्णे इत्यतो द्वितीयलाभः । नच द्वितीयेति व्यर्थं, तत्रापि पूर्णे इत्यनुषङ्गात् । नच तृतीये इत्यनर्थकं स्यात् अस्य तृतीयवर्षचरमावयवपरत्वात् पूर्वस्य तदाद्यावयवपरत्वादिति व्याख्यानाभासो नादेयः । *तस्येति । प्रथमाब्दावपि चूडाकरणस्योक्तत्वात् ।

शौचैः पूर्वस्य बाधात् । तदुक्तम्—

पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति । इति ।

"जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे(१)वा" इति परिशिष्टे—

द्वादश्यामपरे रात्र्यां मासे पूर्णे तथापरे ।

अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ॥

इति भविष्ये च नाम्नः कालानियमाच्च । नच प्राथम्याद्दशरात्रेऽतीते इति मुख्यः कालः अन्यस्त्वनुकल्प इति वाच्यम्, चौलेऽपि तथापत्तेः । न च दन्तजननकालानुपलक्षणे सदन्तजातमृतस्य दाहैकाहप्रसङ्गः, दशाहेन बाधात् । नामकरणोत्तरमेव दाहप्रवृत्तेः;

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।

शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥

इति बृहन्मनूक्तेश्च । आशौचं दाहोपलक्षणम्, सूतकवदिति पारस्करोक्तेः । यत्तु विष्णुः—

अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति ।

सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रिया ॥ इति,

तदपि प्रेताशौचनिषेधार्थं नतु *सद्यस्त्वपरं, वाक्यभेदात् । किञ्च—नामकालात्प्राङ्मृतस्य स्नानम्, तदुत्तरं त्वेकाहादि । नामकाले त्वेकादशाहे मृतस्य न किमपि

*सद्यस्त्वपरं सूतिकाशौचनिवृत्तिपरम् । इदं तु बोध्यं—तन्मन्दमित्याग्रहमात्रम् । नहि नामादिविशिष्टकालोऽनूद्यते येन वाक्यभेदः स्यात् । किन्त्वाशौचान्तकालः तत्राप्याशौचान्तत्वं न विशेषणम् उद्देश्यतावच्छेदकावलीढ एव विधेयान्वयस्य सकलशास्त्रसंमतत्वात् । सकलमासादिति त्विष्टापत्तिग्रस्तम् । श्रुतिस्तु पुरुषत्वसा-

(१) 'च' ग०

स्यात्। अथ शङ्खवचने ल्यब्लोपे पञ्चमी, तदा प्रागिति नोपपद्यते, 'नाम्नि वापि कृते सति' इति मन्वादिविरोधात्। कृतनाम्न इति माधवमिताक्षरादिविरोधाच्च न कालोपलक्षणं क्वापीति दिक्।

नामोत्तरे दन्तोत्पत्तेः प्राग्दाहे सत्यहः,
अदन्तजाते तनये शिशौ गर्भच्युते तथा।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम्॥

---

मानाधिकरण्येन शतायुष्ट्वरूपं सिद्धार्थमनुवदति। यद्वा दशरथादेर्दीर्घतरायुर्वचनप्रामाण्येन "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इत्यादिवत्संख्यापूर्वपदकसमासेन च शतपदादेः तात्पर्यविषयताऽनन्तादिभूयः संख्यार्थकतया बहुवर्षजीवनयोग्यः यथाश्रुत एव वा शतवर्षजीवनयोग्यः पुरुष इत्यर्थः, अतः आयुर्ह्रासकारि निषिद्धं कर्म तेन न कार्यमित्येवंपरा। एवं नन्वित्यादिशङ्कायामिष्टापत्तिरपि न युक्ता यस्याशौचान्ते नाम तस्य "आदन्तजननात्सद्यः" इत्येतद्दाहाभावं विधत्ते, यस्य तु तत्र न तस्य तत्र तदनुवाद इति वैषम्यात्। चौलेऽपीत्यप्यसङ्गतमेव "चूडा कार्या यथाकुलम्" इत्यादिभि सर्वचूडाकरणानां कुलधर्मप्राप्तत्वेन निर्देशात्। दशाहेनेत्यप्यशुद्धमेव अबाधेनैवोपपत्तौ बाधस्यान्याय्यत्वात्। "दशाहाभ्यन्तरे" इति वाक्ये आशौचपदं न दाहोपलक्षणं प्रयोजनाभावात्। किन्तु पूर्णाशौचनिषेधमात्रं सद्यःशौचस्योक्तत्वात्। "अन्तः सूतके चेदोत्थानादाशौचं सूतकवत्" इति पारस्करवाक्ये सूतिकाया उत्थानादादशाहमिति यावत्। शिशूपरमनिमित्तकोदकदानरहितमिति मिताक्षराऽपि सामान्यविधिप्राप्तान्निषेधपरा प्रत्युत सदन्तजातमरणनिमित्तकदाहादिना बाध्येत। किञ्चेत्यादिकमपि फल्गु। अनिवृत्ते दशाहे त्विति वैष्णवस्यैव वचोभङ्ग्याऽऽशौचान्तकालोपलक्षणपरत्वात् मन्वादेश्च

इति यमोक्तेः । दाहाभावे तु स्नानमात्रम् । *'अदन्तजाते प्रेते सद्य एव नास्याग्निसंस्कारः' इति विष्णुना दाहाभावे तदुक्तेः । 'आदन्तजननात्सद्यः' इति याज्ञवल्कीयाच्च । दाहविकल्पं चाह लौगाक्षिः—

*तूष्णीमेवोदकं कुर्यात्*तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥

अन्यत्राकृतचूडे । *अत्र चूडाकरणं तृतीयवर्षरूपकालोपलक्षणार्थमिति मेधातिथिहरदत्तौ । मनुरपि—

*नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ॥ इति ।

उदकं दाहोपलक्षणम् । *दन्तोत्पत्त्यनन्तरं प्राक्त्रिवर्षा-

---

विरोधः । नामकरणकालस्य वाक्यलक्षणापक्षे पदलक्षणापक्षे वा विवक्षितत्वात् । प्रत्युत आदन्तजननात्सद्य इत्यत्र यावता कालेन दन्तानामुत्पत्तिः तस्मिन् काले इति मिताक्षरायां कालानुपलक्षणे कालपदोपादानवैरस्यापत्तिः । एवञ्चेदृशाप्रामाणिकसिद्धान्तानुरोधेन नामोत्तरदन्तोत्पत्तेरित्यादिग्रन्थः अशौचान्तकालमारभ्य सप्तममासादित्यादिरीत्या व्याख्येय इति शिवम् । यमयाज्ञवल्क्ययोर्व्यवस्थापेक्षायामाह—*अदन्तेति । 'नास्य' इति निषेधसाहचर्यात्सद्यः शौचस्यादाहविषयत्वे इतरस्य दाहविषयत्वमिति भावः । *तूष्णीमेवेति । उदकदानमन्त्रं विनेत्यर्थः । *तूष्णीं विशेषविहितयमसूक्तादिजपं विनेति शेषः । कृतायां चूडायां वर्षत्रयात् प्रागपि दाहादि नियतमित्यर्थः । कृतचूडत्वं त्रिवर्षत्वमिति मतमाह—*अत्रेति । चूडायाः कालोपलक्षणत्वनिराकरणं चूडाया अप्यत्रिवर्षे दाहाद्यनैयत्यापत्तिश्चास्वरसः । *नात्रीति । अकृतायामपि चूडायां त्रिवर्षादूर्ध्वं दाहादि नियतमित्यर्थः । वि-

पोक्तेः ।

*बैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम् ।

इति मनूक्तेश्च । शुद्धितत्त्वादयो गौडास्तु--

अजातदन्तमरणे पित्रोरेकाहमिष्यते ।

दन्तजाते त्रिरात्रं स्याद्यदि स्यातां तु निर्गुणौ ॥

इति कौर्मात्काश्यपं शूद्रपरम् ।

अनूढानां तु कन्यानां तथा वै शूद्रजन्मनाम् ।

इति त्र्यहानुवृत्तौ शङ्खोक्तेः ।

त्रिरात्रं तु भवेच्छूद्रे षण्मासेऽपि शिशौ मृते ।

इति मात्स्यसूक्ताच्च । दन्तजाते शूद्रे तु पञ्चाहः । यथाहाङ्गिराः—

शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः ।

अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥

षड्वर्षान्तमतीतो यः शूद्रः संम्रियते यदि ।

मासिकं तु भवेच्छौचमित्याङ्गिरसभाषितम् ॥ इति ।

यत्तु 'अनूढभार्यः शूद्रस्तु' इति शङ्खोक्तं मासाशौचं, तत्सगुणशूद्रपरम् । निर्गुणे त्वनूढभार्ये शूद्रे त्रिवर्षोर्ध्वं द्वादशाहः । षडब्दोर्ध्वं मासः । षडब्दात्प्रागपि कृतोद्वाहे मास इत्याहुः । (१)एतत् 'तुल्यं वयसि सर्वेषाम्' इति विरोधाच्छिष्टविगानान्नादर्तव्यमिति विज्ञानेश्वरादयः । दाक्षिणात्यानां तथैव । अन्यदेशे प्रागुक्तमिति *गौडाः । एवं कन्यास्वपि । *तास्वप्यजातदन्तासु पि-

---

तद्विरोधः । *अजातदन्तानामिति । अजातदन्ताद्युक्तस्यैवायमपवादो नतु नाम्नः प्रागुक्तस्येत्येतल्लाभाय । *बैजिकेति । गार्भिकोपलक्षणं जनकत्वरूपादिति यावत् । *गौडा इति वि-

---

(१) 'एतत्सर्वम्' क०

त्रोरेकरात्रमिति माधवः। यत्तु विज्ञानेश्वरेणोक्तम्—

*ऊनद्विवर्षं उभयोः *सूतकं मातुरेव हि।

इति याज्ञवल्क्योक्तेः *"गर्भस्थे प्रेते मातुर्दशाहं, जाते उभयोः, कृते नाम्नि सोदराणां च" इति पैङ्गयोक्तेश्च पित्रोः सोदराणां च दशाहमस्पृश्यत्वमिति। *तन्नेदानीं प्रचरति। अत एव स्मृत्यर्थसारे तन्नादृतम्। कन्यासु चौलात्प्राङ्मृतौ स्नानम्,

अचूडायां तु कन्यायां सद्यः शौचं विधीयते।

इत्यापस्तम्बोक्तेः। इदं त्रिपुरुषमध्ये,

*अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते,

इति वसिष्ठोक्तेः। इदं वाग्दानोत्तरमिति गौडाः। तन्न,

अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्।

इति वचनात्।

---

गीतवचनार्थे देशव्यवस्थायां मानाभावोऽस्वरसः। स्वस्वपारम्पर्यागताचारात्तथोक्तमिति चेत्तथाऽपि न क्षतिः। दाक्षिणात्याचारस्य भवतामपि सम्मतत्वात्। *तास्वपीति। नेदानीं प्रचरति बालानामित्यादौ सामान्येन ग्रहणात्। *ऊनद्विवर्षं इति। नेदं पूर्णत्रिवर्षव्यावृत्त्यर्थं तत्राशौचस्य सुतरां तावत्त्वात्। अन्यथाऽनौचित्यात्। *सूतकं जननाशौचं दृष्टान्तः।

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते।

इत्युपक्रमात्। इदं च पित्रोर्जननादूर्ध्वं सोदराणां तु नामकरणादित्याह—*गर्भस्थे इति। *तन्नेति। जन्माशौचकाले सद्यःशौचादेस्तदूर्ध्वं त्रिरात्रादेश्च प्रतिपादकैरुक्तवाक्यैर्विरोधात्। वाग्दानमपि द्विवर्षरूपकालोपलक्षणं प्रथमवर्षकृतचूडायामपि सद्यःशौचप्रसङ्गात्। तथाच यदाकदाचित् क्रियमाणचूडापर्यन्तं सद्यःशौचमित्यर्थः। *अप्रत्तानामिति भेदे षष्ठी। तथा च पितृ-

*चौलोत्तरं वाग्दानात्पूर्वं तास्वेकाहः,

अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः ।

त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते ॥

इत्यङ्गिरसा *त्रिरात्रविषयेऽहोविधानात् ।

(अ(१)हस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।

---

पितामहप्रपितामहैः सहाविवाहिताया श्चतुर्थ्याः सापिण्ड्यं । कन्यामपेक्ष्य पञ्चमे वृद्धप्रपितामहे सापिण्ड्यनिवृत्तेः तन्मरणे सापिण्ड्यप्रयुक्तमाशौचं तत्सन्ततेर्नास्तीति भावः । गोविन्दार्णवादौ शुद्धिसंस्कारग्रन्थादौ स्फुटमेत(२)त् । *चौलोत्तरमिति । अकृतचूडायास्त्रिवर्षोत्तरं चेति शेषः । *त्रिरात्रेति । यत्र पुमपत्ये त्रिरात्रं तत्र कन्यास्वहोरात्रम् । यथा चौलोत्तरं त्रिवर्षोर्ध्वं चेत्यर्थः । यत्तु शुद्धिविवेके उक्तम्--

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते ।

सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥

ततो वाग्दानपर्यन्तं यावदेकाहमेव च ॥

इति ब्राह्मे चूडा तदुपलक्षितः तृतीयवर्षोऽन्ते यस्येति व्युत्पत्तेर्द्वितीयवर्षसमाप्ति सद्य इति । तन्न, विज्ञानेश्वरेण तृतीयवर्षसमाप्तिपर्यन्तं कन्यामृतौ सद्यः शौचोक्तेः चूडान्तशब्दस्य तृतीयवर्षान्तार्थकत्वात् । नच विज्ञानेश्वरमतमेव कुतो नासङ्गतमिति वाच्यं, यतः "विप्रे न्यूनात्रिवर्षे" इति "यद्यप्यकृतचूडो वै" इति "अविशेषेण वर्णानाम्" इति च त्रीण्यङ्गिरोवचांसि । तत्राद्येन तृतीयवर्षसमाप्तिपर्यन्तं पुमपत्यमृतावेकाहो विधीयते । द्वितीयेन तु वर्षत्रयादूर्ध्वं चूडोत्कर्षेऽपि त्रिरात्रम् । उभयत्र श्रुतमपि पुंस्त्वमनुवाद्यगतत्वादविवक्षितम् । अन्यथा त्रिवर्षादूर्ध्वं कन्याया दाहो न

---

(१) कंसान्तर्गतं नास्ति ग०

(२) तत्सन्तानेऽन्यस्मिन्नविवाह्यत्वाशौचादिधर्म्मा न भवन्ति इति ।

इति याज्ञवल्कीयाच ।) *अतः शूद्रस्योपनयनस्थानीय*विवाहात्पूर्वं त्रिरात्रम् । विवाहोत्कर्षे तु षोडशाब्दमध्ये त्रिरात्रमेवेत्यपरार्काद्याः । *शूद्रे निर्गुणे त्र्यब्दोर्ध्वं पञ्चाहं, षडब्दोर्ध्वं विवाहाभावे द्वादशाहमिति गौडाः । *सगुणानां षोडशाब्दोर्ध्वं तु विवाहाभावेऽपि पूर्णाशौचं वक्ष्यते । तदुत्तरं प्राग्विवाहाद्भर्तृकुले पितृकुले च *सप्तपुरुषावधि त्रिरात्रम्,

अवारिपूर्वं प्रत्ता तु या नैव प्रतिपादिता ।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ॥

इति मरीच्युक्तेः । रत्नाकरे शुद्धितत्त्वे च शङ्खः—

पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता ।

---

स्यात् । एवञ्चापत्यमात्रे आद्येन वाक्येन त्रिवर्षान्तमेकाहे तदूर्ध्वं द्वितीयेन त्रिरात्रे च सिद्धे तृतीयेन एकस्मृतितया पुंसस्त्र्यहत्रिध्ययोगात् त्र्यहमनूद्यैवोपनयनाविवाहरूपसंस्कारद्वयात्मकमुत्तरावधिमालम्ब्य चतुर्थपादेन कन्यायां त्रिरात्रापवादेनैकाहो विधीयते । अपवादापवादयोः समानविषयत्वाच्च कन्यायास्त्रिवर्षोर्ध्वं मृतावेकाहः सिद्ध्यति । त्रिवर्षान्तं च ब्रह्मपुराणोक्तं सद्यस्त्वमिति विज्ञानेश्वरमतं सम्यगिति । द्विजानामित्युपेक्ष्य वर्णानामित्युक्तेः फलमाह—*अत इति । *विवाहेति । संस्कारकर्मावध्युक्तेः "अनूढभार्य" इत्यग्रिमवाक्येऽनूढभार्यत्वरूपविशेषणसाफल्यार्थं च । षोडशात्प्राक् विवाहे सम्पूर्णमिति स्वाभिप्रायोऽत्रास्वरसः । *शूद्रे इति । "शूद्रे त्रिवर्षन्यूने तु मृते" इति त्र्यहपरम् "शुद्धिस्तु पञ्चभिः । अत उर्ध्वं मृते शूद्रे" इति च्छेदः । विवाह इत्यादि यदीत्यन्तो । विवाहे तु मासिकमिति पूर्वोक्ताङ्गिरोवाक्यार्थः । अपरार्कादिविरोधोऽत्रास्वरसः । *सगुणानामिति गौडमते । स्वमते सगुणनिर्गुणभेदे नाशौचभेदाभावात् । *सप्तेति । "अप्रत्तानाम्" इति प्रागुक्तसा-

अलङ्करणमपि वक्ष्यते । *कृतचूडस्य तु त्रिवर्षात्प्रागूर्ध्वं वाग्न्युदकदानं नियतम् । *यत्तु वसिष्ठः—'ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्' इति त*त्प्रथमाब्दचूडापरम् । *वर्षत्रयादूर्ध्वमकृतचूडस्यापि नियतम् । वर्षत्रयोर्ध्वमुपनयनात्पूर्वं च तूष्णीमग्न्युदकदानम् ।

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।

इति पूर्वोक्तलौगाक्षिस्मृतेः पिण्डदानमपि कार्यम् । 'असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेषु' इति प्रचेतसोक्तेः 'उदकदानं *सपिण्डैः कृतचूडस्य' इति गौतमोक्तेः उदकग्रहणमौर्ध्वदैहिकपरमिति हरदत्तः ।

द्वादशाब्दत्सरादर्वाक् पौगण्डमरणे सति ।

---

षेधः सूच्यते । *भूमाविति । ग्रामाद्बहिः श्मशानादन्यत्रास्थ्यादिराहित्येन शुद्धायां भूमावित्यर्थः । *कृतचूडस्येति । चूडायां कृतायां त्रिवर्षात् प्रागपि दाहादि नियतं, "तूष्णीमेव" इति वचनात् । अत्र प्रथमाब्दकृतचूडे दाहादिनियमेऽपि आशौचमेकाहमेव नचैवम् "आचूडान्नैशिकी स्मृता" इत्यनेन विरोधः,

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी ।

इति वचनान्तरवशात्तत्र चूडाशब्दस्य तृतीयवर्षपरत्वादिति । रुद्रधरोक्त खण्डयितुं तदपवादमाह—*यत्त्विति । *प्रथमाब्देति । त्रिरात्रैकरात्रयोः सचूडाचूडदाहपरत्वात् । आचूडादिति चूडाशब्दस्योक्तार्थे प्रमाणाभावादिति भावः । *वर्षत्रयादिति । अकृतायां चूडायां त्रिवषादूर्ध्वं दाहादिनियतं "नास्य" इति वचनादित्यर्थः । वर्षत्रयोर्ध्वमिति चकारश्च संपातायातः, ततः प्रागपि दाहादेः कर्त्तव्यत्वात् । तूष्णीं यमसूक्तादि जपेत् मन्त्रवर्जम् । *सपिण्डैरिति । पिण्डदानादावधिकारी उक्तः । केषांचिन्मत-

सपिण्डीकरणं न (१)स्यान्नैकोद्दिष्टानि कारयेत्॥
इति हरदत्तधृतदेवलोक्तेश्च। मरीचिरपि—
प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम्। इति।
एतदनुपनीतपरमिति विज्ञानेश्वरः।
*अत्र चूडैव पूर्वावधिः *पूर्ववाक्येषु तद्ग्रहणात्।
*उदकग्रहणस्योऽ*पलक्षणत्वाद्दाहः पूर्वावधिरिति केचित्।
द्वादशाब्दत्सरादित्यनुपनीतद्विजानूढशूद्राविषयम्। *त्र्य-
हाशौचे पिण्डदानविधिमाह पारस्करः—
प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा॥
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः॥ इति।
अत्र देवयाज्ञिकनिबन्धे विशेषः—
शिशुरादन्तजननाद्बालः स्याद्यावदाशिखः।
कथ्यते सर्वशास्त्रेषु कुमारो मौञ्जिबन्धनात्॥
आपञ्चवर्षात्कौमारं पौगण्डो नवहायनः॥
तथा—
गर्भे नष्टे क्रिया नास्ति*दुग्धं देयं शिशौ मृते।
*परं च पायसं क्षीरं दद्याद्बालविपत्तितः॥

---

माह-*अत्रेति। *पूर्ववाक्येषु लौगाक्ष्यादिवाक्येषु अग्न्यौ-र्ध्वदेहिकपरत्वेन व्याख्यातोदकपदवद्गौतमादिवाक्येषु च। चूडा-कर्मणि सम्प्राप्ते इत्यग्रिमवाक्योपलक्षणमेतत्। वाजपेयिमतमाह—*उदकेति। *उपलक्षणत्वात् प्रायश उदकदानस्य दाहसा-हचर्येण दाहोपलक्षणत्वात्। *त्र्यहाशौचे इति। एकाहाशौ-चे च न पिण्डदानमिति भावः। *दुग्धमिति। दन्तजननादर्वा-क्। चौलादर्वागाह-*परं चेति। वक्ष्यमाणं वस्त्रदानं चात्रैव।

---

(१) 'स्यादेको' न०

*एकादशं द्वादशाहं वृषोत्सर्गविधिं विना ॥

तथा—

यत्र प्रमीयते बालस्तत्र (१)प्रायः प्रदीयते ।
किञ्चित्समानवयसां संस्कृत्यान्नं यथाविधि ॥
भक्ष्यं भोज्यं च दातव्यं *तथा च सुखभक्षिका ।
तद्वस्त्राणि प्रदेयानि सोपानत्कानि तत्समे ॥
*कुमाराणां च बालानां भोजनं वस्त्रवेष्टनम् ।
यच्चोपजीवते बालस्तत्तद्विप्राय दीयते ॥

तथा—

*भूमिनिक्षेपणं बाले आवर्षद्वयमाशिखम् ।
ततः परं खगश्रेष्ठ देहदाहो यथाविधि ॥

अचूडेप्यूर्ध्वं खननानिवृत्त्यर्थमावर्षद्वयमिति । प्रागपि कृतचूडस्य तन्निवृत्त्यर्थमाशिखमिति । तथा—

चूडाकर्मणि सञ्जाते विपत्तिस्तु यदा भवेत् ।
सूतकान्ते प्रकर्तव्यं वृषस्योत्सर्जनं (२)तदा ॥
तत्र दाहः प्रकर्तव्य उदकं तत्र निश्चितम् ।
श्राद्धानि षोडशापि स्युः सपिण्डीकरणं विना ॥

इदं पञ्चवर्षोत्तरम्,

जन्मतः पञ्चवर्षाणि भुङ्क्ते दत्तमसंस्कृतम् ।

---

एतद् दुग्धं च सवयोभ्यः, समानवयसामित्यस्येहापि सम्बन्धात् । *एकादशेति ।

महादानविहीनं च कुमारे कृत्यमाचरेत् ।

इति उत्तरार्धम् । यद्यपि कुमारो मौञ्जिबन्धनादित्युक्तं तथापि पञ्चवर्षाधिके पूर्ववचसां न प्रवृत्तिरित्याह—*तथेति । बालपदं कुमारस्याप्युपलक्षणम् । अत एवाह—*कुमाराणां चेत्यादि ।

---

(१) 'दीपः' क० (२) 'तथा' ग०

पञ्चवर्षाधिके बाले विपत्तिर्यदि जायते ॥
वृषोत्सर्गादिकं कर्म कर्तव्यमुदकं ततः।
अहन्यहनि सम्प्राप्ते कुर्यात् श्राद्धानि षोडश ॥
पायसेन गुडेनैव पिण्डं दद्याद्यथाक्रमम्।
उदकुम्भप्रदानं च पददानानि यानि च ॥
दीपदानानि यत्किञ्चित्पञ्चवर्षाधिके सदा।
कर्तव्यं तु खगश्रेष्ठ व्रतार्वाक् प्रेततृप्तये ॥
स्वाहाकारेणैव कार्याण्येकोद्दिष्टानि षोडश।
ऋजुदर्भैस्तिलैः शुक्लैः प्राचीनावीतिना तथा ॥

इति तत्रैवोक्तेः। *अत्र मूलं चिन्त्यम्। वार्षिकादि तु न भवत्येव। (१)सपिण्डनाभावे पितृत्वायोगा*द्वचनाभावाच्च।

दिवोदासीये—

अव्रते निधनं प्राप्ते विप्रादौ शूद्रजातिवत्।
क्रियाः सर्वाः समुद्दिष्टाः सपिण्डीकरणं विना।
उदकं पिण्डदानं च कृतचूडे विधीयते ॥ इति।

स्त्रीणां तूद्वाहात्प्रागुदकपिण्डदानविकल्पः 'स्त्रीणां चैके *ऽप्रत्तानाम्' इति गौतमोक्तेः। 'स्त्रीशूद्राश्च सधर्माणः' इति वचनात् शूद्रेऽप्येवम्। एतद्वयोर्निमित्तमा-

---

खननादिव्यवस्थामाह—*भूमीति। *अत्र मूलं चिन्त्यमिति। अयं पाठः पूर्वोत्तरग्रन्थपर्यालोचनया, भूयसां देवयाज्ञिकोक्तप्रकाराणां वचनान्तरैर्लाभात्। यदि तत्पाठे आग्रहः तदा केषाञ्चित् प्रायः आचारलोपपरत्वेन व्याख्येयः। ननु पतिषु सपिण्डनाभावेऽपि पितृत्वं दृष्टमत आह—*वचनेति। तत्र सन्यासिनोराब्दिकादीनि वचनसत्त्वादिति भावः। *अप्रत्तानाम्।

---

(१) 'सपिण्डत्वाभावे' क० छ०

शौचं सर्ववर्णसमम्,

तुल्यं (१)वयसि सर्वेषामतिक्रान्ते तथैव च ।

इति व्याघ्रपादोक्तेः । यानि तु—

निर्वृत्तचूडके विप्रे त्रिराच्छुद्धिरिष्य(२)ते ।
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते ॥
शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥
षड्वर्षान्तमतीते तु शूद्रे मासमशौचकम् ।

इत्याङ्गिरसादीनि, तानि शिष्टविगानान्नादर्तव्यानीति विज्ञानेश्वरमदनपारिजातादयः । तेनैतद्वशाच्छूद्राणां व्यवस्था प्रागुक्ता हेयैव । 'तुल्ये वयसि सर्वेषाम्' इति दाक्षिणात्यपरम् । अन्यदेशे कौर्मोक्ता व्यवस्थेति शुद्धितत्त्वे ॥

अथ जात्याशौचम् । तच्च *द्विजपुंसामुपनयनोर्ध्वं प्रवर्तते,

त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ।
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ॥
त्रिंशद्दिनानि शूद्रस्य तदर्धं *न्यायवर्तिनः ॥

इति याज्ञवल्क्योक्तेः । यत्तु स एव—

त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ।

---

अविवाहितानाम् । *द्विजपुंसामिति । द्विजस्त्रीणां विवाहोर्ध्वमित्यग्रे स्पष्टम् । *न्यायवर्तिनः द्विजशुश्रूषादिस्वधर्ममनुतिष्ठतः ।

---

(१) वयोऽवस्थानिमित्तकं यदाशौचम 'आदन्तजन्मनः सद्यः' इत्यादिविहितं तत्सर्वेषां ब्राह्मणादीनां तुल्यविशिष्टम् । अतिक्रान्ते दशाहादिके च त्र्यहादि यदाशौचे तदपि सर्वेषामविशिष्टमिति विज्ञानेश्वरः ।

(२) 'रिष्यते इति निवृत्ते' ग०

इत्याह । *तत्र दशाहे त्रिरात्रमस्पृश्यत्वम् । एकदिनोत्पन्ने आशौचद्वये दशाहमस्पृश्यत्वम्,

मरणं यदि तुल्यं स्यान्मरणेन कथञ्चन ।
अस्पृश्यं तु भवेद्गोत्रं सर्वमेव सबान्धवम् ॥

इत्याङ्गिरसोक्तेः । दशाहाशौचपरत्वे 'दशरात्रमतः परम्' इत्यनेन पौनरुक्त्यापत्तेरिति शुद्धिविवेकादयः । तन्न, *स्मृतिभेदात् । त्रिरात्रं दशरात्रं वेति विकल्पायोगाच्च । यस्तु *पुत्राणां वेदानध्याप्य वृत्तिं विदधाति तत्राहाश्वलायनः—'द्वादशरात्रं महागुरुषु दानाध्ययने वर्जयेरन्' इति । अत्र यावदुक्तनिषेधो वा*ऽस्पृश्यत्वमात्रं वा नतु कर्मानधिकारः । एकादशाहान्ते वैश्वदेवोक्तेः ।

एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते । इति ।

*शुद्धितत्त्वे तु—त्रयः पुरुषस्यातिगुरवो भवन्ति माता पिताचार्यश्च इति विष्णूक्तेः पित्रादयो *महागुरवः । भर्ताप्युक्तो रामायणे—

---

शुद्धिविवेकादिमतमाह—*तत्रेति । *स्मृतिभेदादिति । क्व पौनरुक्त्यमित्यर्थः । *पुत्राणामिति । एतेन—

पुत्रानुत्पाद्य वेदार्थं ग्राहयित्वा यथाविधि ।
वृत्तिं च यो विदधते कथ्यते स महागुरुः ॥

इति स्मृत्यन्तरोक्तमहागुरुलक्षणं संगृहीतम् । दानं वेदस्य, अध्यापनमिति यावत् । प्रेतोद्देश्यं विना विहितं वा । अध्ययनमध्यापनोपलक्षणम् । *अस्पृश्यत्वमात्रं वेति । न तूत्तरीयस्पृशा तत् द्वादशाहसपिण्डनेऽपि द्वादशादिन एतदनुवृत्तेः । बहुवचनं सङ्क्रमयति—*शुद्धीति । आचार्यः—

उपनीय ददद्वेदमाचार्यः स उदाहृतः ।

पतिर्बन्धुर्गतिर्भर्ता दैवतं गुरुरेव च ।

शातातपः—

पतिरेको गुरुः स्त्रीणां *सर्वस्याभ्यागतो गुरुः ।

एकपद*मूढानां पितृमातृनिषेधार्थम् ।

*सोदकानां त्रिरात्रम्, त्र्यहात्तूदकदायिनः इति मनूक्तेः । अग्निपुराणे—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।

समानोदकभावस्तु निवर्तेत चतुर्दशे ॥

जन्मनामस्मृतेर्वै*के तत्परं गोत्रमुच्यते ॥

बृहस्पतिः—

दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके ।

त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः ॥

---

इत्युक्तः । *महागुरव इति । उक्ता इति शेषः । *सर्वस्येति न द्वादशरात्रनिमित्तघटकम्, अभ्यागतमरणे आशौचस्यैवाभावात् । *ऊढानामिति तासां कार्यान्तरे पित्रोर्गुरुत्वेऽपि न द्वादशरात्रे । अत्र—"त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते । ऊनद्विवर्ष उभयोः" इति याज्ञवल्क्यो विशेषितः । अथ वाऽव्यवस्थितविकल्पत्वाद्दशरात्रस्य सपिण्डपरत्वार्थं त्रिरात्रविषयमाह—*सोदकानामिति । *एके इति ।

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।

समानोदकभावस्तु जन्मनाम्नोरवेदने ॥

इति मानवे मते अनादरार्थम् सगोत्राणामेकाहस्य वक्ष्यमाणतया चतुर्दशपुरुषानन्तरस्यैव सोदकत्वेन ग्राह्यत्वात् इदं च पूर्णप्रसवे उपनीतमरणे च, सपिण्डानां दशाहतुल्यकक्षत्वेनोक्तेः । अर्वाक् तु स्नानमात्रम् । इदं च "स्नात्वा शुध्यन्ति गोत्रजाः" इति अर्वाक् योज्यम् । उपनयनवतामेव चेदाव्रतादेशादितिपूर्वावधिस्त-

*स्त्रीशूद्रयोस्तु विवाहोर्ध्वं जात्याशौचम्--

*वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ॥

इत्युक्तेः, *'दत्तानां भर्तुरेव हि। स्वजात्युक्तमशौचं स्यान्मृतके जातके तथा' इति माधवीये ब्राह्माच। शूद्रस्य विवाहाभावेऽपि षोडशवर्षोर्ध्वं मासः,

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम्।
मृत्युं समधिगच्छेचेन्मासात्तस्यापि बान्धवाः ॥
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा ॥

इत्यपरार्के शङ्खोक्तेः। *निर्णयामृतमदनपारिजातादौ त्वन्यथोक्तम्। हारीतः—

आ मौञ्जीबन्धनाद्विप्रः क्षत्रियश्चाधनुर्ग्रहात्।
आ(१)प्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहात् ॥

धनुःप्रतोदावष्टमेऽब्दे द्वादशे वस्त्रद्वयमिति। मेधातिथिस्तु—त्रिरात्रमाव्रतादेशात् इत्यत्र व्रतं कालोपलक्षणार्थम्। स च कालः स्वकीयः सर्वेषां चाष्टमवर्षरूपः। तेन चतुर्णामपि वर्णानामुपनयनाभावेऽप्यष्टमादूर्ध्वं पूर्णमेवाशौचम्। तथापि 'प्रागष्टमाच्छिशवः प्रोक्ताः' इति स्मृत्यन्तरादूर्ध्वं सम्पूर्णमर्वाक् त्रिरात्रम्। येपि 'आषोडशाद्बालः' इत्याहुस्तेषामप्यष्टमादूर्ध्वम् शूद्रे मास एव,

---

दा स्त्रीशूद्रयोः कथमित्यत आह—*स्त्रीशूद्रयोरिति। *वैवाहिक इति। उपनीतपुरुषाधिकारिकेषु विवाहितानामेवाधिकार इत्यर्थः। विशेषमप्याह--*दत्तानामिति। *निर्णयामृतेति। योगीश्वरवचनविरोधोऽत्रास्वरसः। उपनयनस्य कालोपलक्षणत्वे अष्टमादिवर्षात् प्रागुपनयने जात्याशौचं न प्रवर्ततेति मनसिकृत्य

---

(१) प्रतोदग्रहणं कृषिकर्मनियुक्तानडुहां शिक्षार्थं, तेन तत्कार्यक्षमत्वावधीति ज्ञेयम्।

ऊर्ध्वमष्टभ्यो वर्षेभ्यः शुद्धिः शूद्रस्य मासिकी ।

इति वचनादित्याह । हारलताशुद्धितत्त्वादिगौडग्रन्थेष्वप्युक्तम्—अनुपनीतो विप्र इत्युक्त्वा—

म्रियते यत्र तत्र स्यादाशौचं त्र्यहमेव हि ।

द्विजन्मनामयं कालस्त्रयाणां तु षडाह्निकः ॥

इत्यादिपुराणोक्तेरुपनयनकालोपलक्षणम् षडब्दपदं मासत्रयाधिकपरम्, 'गर्भाष्टमेऽष्टमे वाऽब्दे' इत्युक्तेः । यत्तु जाबालः—

व्रतचूडाद्विजानां च प्रतीतिषु यथाक्रमम् ।

दशाहे त्र्यह एकाहे शुद्ध्यन्त्यपि हि निर्गुणा ॥ इति

द्विजा दन्ताः । इदं प्रतीतिष्वित्युक्तेः पञ्चाब्दोपनीतपरमिति । *तदेतन्नाद्रियन्ते वृद्धाः ।

यानि तु पराशरः—

एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।

त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥

केवलवेदः केवलश्रौताग्नेरप्युपलक्षणम् । *अयं सङ्कोचो होमाध्ययनपर एव न तु संध्यादाविति हारलतायाम् ।

अङ्गिराः—

सर्वेषामेव वर्णानां सूतके मृतके तथा ।

दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ॥

देवलः—

आशुच्यं दशरात्रं तु सर्वेषामपरे विदुः ।

निधने प्रसवे चैव पश्यन्तः कर्मणः क्षयम् ॥

अत्यन्तोत्कृष्टस्य कर्महानौ पीडावतो विप्रप(१)रिच-

---

मेधातिथ्यादीन् दूषयति-*तदेतन्नेति । *अयमिति । यद्य-

---

(१) 'परिचर्यापरं शूद्रे दश' क० छ०

र्यापरशूद्रस्य दशरात्रमिति हारलतायाम् । दक्षः—

सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा ।
षड्दशद्वादशाहश्च पक्षो मासस्तथैव च ॥
मरणान्तं तथा चान्यद्दशपक्षास्तु सूतके ॥

मिताक्षरायां स्मृत्यन्तरे—

*चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिः (१)सप्तमे तु दिनत्रयम् ॥
अष्टमे दिनमेकं स्यान्नवमे यामकद्वयम् ।
दशमे स्नानमात्रेण चैतद्गौणं तु सूतकम् ॥

*इत्यादीनि, तान्या*पदनापद्गुणवदगुणवद्विषयाणि *दे(२)शाचारभेदाद्वा ज्ञेयानि । *सद्यःशौचादिषडहान्ताः पक्षा यायावरादिपराः । अत्र मरणान्तं जननादिनिमित्ताद्भिन्नम् ।

---

पि 'यानि' इत्यनेनैवान्वयादसङ्गतमेतत् तथापि परमतत्वेन स्वानभिमतत्वलाभान्नासङ्गतिः । एवमग्रेऽपि । *चतुर्थे इति । विप्रपरम् । *इत्यादीनीति ।

क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः ।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् ॥
एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा ।
शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके ॥ इति,

"पञ्चदशरात्रेण वैश्यः" इति वासिष्ठं चादिशब्दार्थः । *आपदिति । वर्णानामुच्चावचाशौचप्रतिपादकानामिदम् । *देशेति । वर्णानां दशाहाशौचपक्षप्रतिपादकाङ्गिरोवचनादिपरम् । *सद्य इति । यायावरः याजनाध्यापनप्रतिग्रहत्रिकहीनः । तस्य सद्यःशौचम् । शालीनाध्ध्यापनमात्रवृत्तिकस्यैकाहः ।

---

(१) 'सप्तमं त्वहरेव तु इत्यादीनि' क० छ० (२) 'देशान्तर' ग०

२१९॥

( अ(१)स्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।
इत्युक्तत्वान्मधुपर्कपशवालम्भवत् ) *शिष्टविगानान्नादर्तव्यानीति विज्ञानेश्वरः ।

---

याजनाध्यापनवृत्तिकस्य त्र्यहः । याजनाध्यापनप्रतिग्रहरूपात्रिवृत्तिकस्य चतुरहः । प्रतिग्रहान्तैस्त्रिभिः कृषिवाणिज्यपाशुपाल्यैश्च त्रिभिः षड्वृत्तिकस्य षडह इत्यर्थः । विज्ञानेश्वरमतमाह-*शिष्टेति । वर्णानां संस्कारोर्ध्वमुक्ताऽशौचकल्पप्रतिपादकानि दशाहाशौचप्रतिपादकानि चेत्यर्थः । यानि तु "एकाहाद्ब्राह्मणः शुद्ध्येत्" इत्यादीनि तानि अग्निवेदसाध्याग्निहोत्राद्यध्ययनादिकर्मपराणि यावत्यबाधिते अनुपपत्तिर्न शाम्यति तावद्बाधनीयमिति न्यायेन बाध्याकाङ्क्षायाम् "अग्निवेदसमन्वितः" इतिवाक्यशेषात् "प्रत्यूहेन्नाग्निषु क्रियाः" इत्यादिदर्शनात्कार्यान्वयस्य ज्यायस्त्वाच्च नतु सर्वथा शुद्धिपराणि,

दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ।

इत्यादेरपि बाधापत्तेः । एवञ्चायं सङ्कोचो होमाध्ययनपर एव नतु सन्ध्यादाविति हारलताऽपि सङ्गच्छते । स्वाध्यायविषये सद्यःशौचविधानमपि बहुवेदस्य—

ब्रह्मोदनकृतापावाश्चेन्न सूतकम् (?) ।

इत्यादीन्यपि ज्ञेयानि । यत्तु यानि "आपद्यपि च कष्टायां सद्यःशौचम्" इत्यादीनि तानि सद्यःशौचं विनाऽऽर्त्युपशमराहित्यपराणि । तेनाश्वस्तनिकस्य मातृपित्रादिकुटुम्बभरेण सद्यः शुद्धिः । यस्त्वेकाहपर्याप्तसञ्चितधान्यस्तस्यैकाहः । यश्चतुरहार्थसञ्चयो स कुम्भीधान्यस्तस्य चतुरहः कुसूलधान्यकस्य तु दशाहः । अत एव—

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
अर्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव च ॥

---

(१) कंसान्तर्गतं नास्ति क० छ०

*अस्नात्वा चाप्यहुत्वा च अदत्त्वाऽश्नंस्तथा द्विजः।
एवंविधस्य विप्रस्य सर्वदा सूतकं भवेत् ॥

इति दक्षोक्त्या--

अन्यपूर्वा यस्य गेहे भार्या स्यात्तस्य नित्यशः।
आशौचं सर्वकार्येषु देहे भवति सर्वदा॥

इति ब्राह्मादिवशाद्व्यवस्थेत्यपरार्कमदनपारिजातादयः।

*माधवस्तु--

वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ।

इति कलिवर्ज्येषूक्तेः--

दशाह एव विप्रस्य सपिण्डमरणे सति ।
कल्पान्तराणि कुर्वाणः कलौ भवति किल्बिषी ॥

---

इति मानवस्य—

कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥

इति चतुर्विधगृहस्थाभिप्रायकत्वं तेनोक्तम् । षडहस्तु तन्मते शिष्टविगीतः षष्ठमासपातपरो वेति । तत्कलौ नोपयुज्यते । *अस्नात्वा चेति ।

हीनवर्णा तु या नारी प्रमादात् प्रसवं व्रजेत् ।
प्रसवे मरणे तज्जमाशौचं नोपशाम्यति ॥

इति शङ्खवचनम् ।

व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ।
श्राद्धत्यागविहीनस्य भस्मान्तं सूतकं भवेत् ॥

इति स्मृत्यन्तरं च द्रष्टव्यम् । सिद्धान्तमाह—*माधवस्त्वि-

इति हारीतोक्तेश्च *न्यूनाशौचपक्षा युगान्त(१)रविषयाः। *मरणान्तादिपक्षास्तु निन्दार्थवादः। अन्यथा--

*नामधारकविप्रस्तु दशाहं सूतकी भवेत्।

इति विरोधः स्यादित्याह। यत्तु देवलः--

*दशाहादित्रिभागेन कृते सञ्चयने क्रमात्।
अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः।

इति पूर्णाशौचे स्पृश्यतामाह। यच्चानुपनीतातिक्रान्ताशौचे त्रिरात्रादौ तेनैवोक्तम्--

स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः। इति।

ति। *न्यूनेति। दक्षस्मृत्युक्तदशपक्षेषु ग्रन्थार्थतो विजानातीत्यादि।

व्रतस्थिद्दीक्षितानां च बाले देशान्तरे तथा।
व्रतिनां सत्त्रिणां चैव सद्यः शौचं विधीयते॥
एकाहाद्ब्राह्मणः शुद्ध्येद्योऽग्निवेदसमन्वितः।
हीने हीनतरे चापि त्र्यहश्चतुरहस्तथा॥
तथा हीनतमे चैव षडहः परिकीर्तितः। इति।

तदुपक्रमव्यवस्थाप्रकारा इत्यर्थः। *मरणान्तादीति। "अस्नात्वा च" इत्यादिनोक्ताः। तत्र प्रायश्चित्तगुरुत्वं कल्प्यम्, नतु तत्पर्यन्तमप्याशौचम्। नामधारकमाह व्यासः—

ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः।
जातिमात्रोपजीवी च स भवेन्नामधारकः॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च।
न कर्मविन्न चाधीते स भवेन्नामधारकः॥

*दशाहादीति आशौचकालाद्यतृतीयभागापगमसंचयना-

(१) इदं च 'कलौ पाराशरस्मृतिः' इति कालमुद्दिश्यैव प्रवृत्तायाः पराशरस्मृतेर्युगान्तरपरत्वं वदन्तस्तु स्वीयप्रतिभाभारक्रान्तचेतस एवेति व्याख्यातारः।

तदपि युगान्तरेषु,

अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ।

इति माधवीये (१)कलौ तन्निषेधात् । यत्तु हारलतायाम्—

चतुर्थेऽहनि कर्तव्यः संस्पर्शो ब्राह्मणस्य तु ।

इति प्रचेतसोक्तेस्त्र्यहैकाहाशौचेऽपि चतुर्थाह एवाङ्गस्पर्श इति । तन्न, देवलादिवशेनास्य दशाहगोचरत्वात् । *ये तु वर्णसङ्करजा मूर्धावसिक्ताद्यास्तेषामाशौचवि-

---

नुष्ठानयोर्मिलितयोरेव स्पर्शप्रतिबन्धशक्त्यपनायकत्वं न त्वेकस्येत्यर्थः । *ये त्वित्यादि । "ब्राह्मणात्क्षत्रियायामुत्पन्नः क्षत्रियः, क्षत्रियाद्वैश्यायामुत्पन्नो वैश्यः, वैश्याच्छूद्रायामुत्पन्नः शूद्रः" इति स्मृत्या मूर्धावसिक्तादीनां क्षत्रियत्वादिधर्मातिदेशात् सजातीयसपिण्डेषु मृतेषु प्रसूतेषु वा क्षत्रियादिजात्याशौचम् । ब्राह्मणादेस्तु विजातीयेषु मूर्धावसिक्तादिषु अनन्तरे षडहः, एकान्तरे त्र्यहः द्व्यन्तरे एकाहः—

एकाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु ।

षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥

इति हारीतवचनात् । यत्तु बौधायनं—

क्षत्रविट्शूद्रजातीया यस्य विप्रस्य बान्धवाः ।

तेषामाशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥

इति स्वजात्याशौचं, तत्स्वधर्महीनजातिमात्रपरम् । मूर्धावसिक्तादेर्ब्राह्मणादिषु तु जातमृते जात्याशौचमाह विष्णुः—"ब्राह्म-

---

(१) कलिवर्ज्येष्वपि सन्यासाग्निहोत्रयोस्त्वाचरणम् । स्मार्तस्याप्यङ्गस्पर्शस्यानाचरणम् । शुद्धिविवेकादिषु स्पर्शस्याप्याचरणम् । अत्र कारणं तु केवल स्वस्वाग्रह एव । तस्माद्यत्र कृते श्रुतिस्मृतिसम्वादेन निषेधस्तन्नाचरणीयम्, मधुपर्केऽपि गवालम्भे 'न हिंस्यात्सर्वा भूतानि' इति श्रुतिसम्वादादिति ।

शेषः *कलौ नोपयुक्त इति नोच्यते । *प्रतिलोमजानां नाशौचम् । मलापकर्षणार्थं तु स्नानमात्रमिति विज्ञानेश्वरः । माधवस्तु—

शौचाशौचे प्रकुर्वीरन् शू(१)द्रवर्णस्य सङ्कराः ।

इति ब्रह्मोक्तेः *शूद्रवदाह । हारलताऽप्येवम् ।

*दत्तक्रीतकृत्रिमादिपुत्रेषु *अहीनवर्णगासु स्त्रीषु च सपिण्डत्वेऽपि प्रसवे मरणे च *पूर्वापरपित्रो*र्भर्त्रोश्च त्रिरात्रमेव न दशाहादि,

*अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
*परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥

इति त्रिरात्रानुवृत्तौ विष्णूक्तेः । सपिण्डानां त्वेकाहः,

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
भर्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु सपिण्डतः ॥

इति माधवीये हारीतोक्तेः ।

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।

---

णस्य क्षत्रियाविट्शूद्रेषु षडाहत्रिरात्रैकरात्रैः क्षत्रियस्य विट्शूद्रेषु षड्रात्रत्रिरात्राभ्यां वैश्यस्य शूद्रे सपिण्डे षड्रात्रैः शुद्धिः । हीनवर्णानां तूत्कृष्टसपिण्डेषु जातेषु मृतेषु वा तदाशौचव्यपगमे शुद्धिः'' इति । *कलाविति । हीनोत्तमवर्णविवाहस्य कलिवर्ज्यत्वात् । *प्रतीति । प्रतिलोमाः सूतादयः ''प्रतिलोमा धर्महीनाः'' इति स्मरणात् । *शूद्रवदिति । यस्मिन्निमित्ते शूद्रस्य यदाशौचं सूतादीनां तत्र तदित्यर्थः । *दत्तः स्वयं दत्तः । *अहीनः प्रतिलोमभिन्नः । *पूर्वापरपित्रोः । बीजिक्षेत्रिणोः । *भर्त्रोः पूर्वापरभर्त्रोः । *अनौरसेष्विति । ''औरसो धर्मपत्नीजः'' इति परिभाषितः । बीजिनोऽपि ग्रहः । *परपूर्वास्विति । यद्यप्येतावता

---

(१) शूद्रवद्धर्षसङ्कराः' क० छ०

एकाहस्तु *सपिण्डानां त्रिरात्रं यत्र वै *पितुः ॥

इति मरीच्युक्तेश्च । शङ्खः—

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।
परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते ॥

परपूर्वा पुनर्भूः । इदं *सवर्णासु । हीनवर्णासु तु शङ्खलिखितौ—

परपूर्वासु भार्यासु पुत्रेषु *कृतकेषु च ।
नानघायो भवेत्तस्य नाशौचं नोदकक्रिया ॥

ब्राह्मेपि—

आशौचं तु त्रिरात्रं स्यात्समवर्णेषु निश्चितम् ।

यत्तु षडशीतौ—

अन्यपूर्वावरुद्धासु त्रिदिनाच्छुद्धिरिष्यते ।
तास्वेवानन्यपूर्वासु पञ्चाहोभिर्विशुध्यति ॥ इति ।

तत्र पञ्चाहे मूलं चिन्त्यम् । यत्तु याज्ञवल्क्यः—

*अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।

इत्येकाहमाह । *तदसंनिधौ ज्ञेयम् । यदा पितुरेकाहस्तदा सपिण्डानां स्नानम्.

---

पूर्वपत्युस्त्रिरात्रं लभ्यते तथापि अग्रे "भार्यास्वन्यगतासु च ।" "अन्याश्रितेषु दारेषु" इत्यादौ अन्यगतत्वादिविशेषणात्तल्लाभः । *सपिण्डानाम् । पूर्वापरपित्रोः पूर्वापरभर्त्रोश्चेति वर्तते । परपूर्वयोर्भर्तृपित्रोरिति प्रकृतम् । *पितुरिति भर्त्रुपलक्षणम् । *सवर्णासु अहीनवर्णासु । *कृतकेषु—अशास्त्रीयेषु । "पाखण्ड्यनाश्रिताः स्तेनाः" इति योगीश्वरोऽपि बोध्यः । *अनौरसेषु क्षेत्रजदत्तकादिषु पुत्रेषु जातेषु मृतेषु वा तथा स्वभार्यास्वन्यं प्रतिलोमव्यतिरिक्तमाश्रितासु प्रसूतासु मृतासु वाऽहोरात्रमेव नतु सत्यपि सापिण्ड्ये दशरात्रमित्यर्थः । भार्यापुत्रशब्दयोः सम्बन्धिशब्द-

*अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ॥

इति प्रजापत्युक्तेः । पित्रेति वोढुरुपलक्षणम्, तथोपक्रमात् । *यत्तु दत्तके *पालकप्रतियोगिकपुत्रत्वात्पूर्वपितुर्न त्रिरात्रम्, पूर्वसम्बन्धनिवृत्तेश्च न दशाहादीति काश्चित् । तन्न *जनकेऽपि—

---

त्वाद्यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैवेदमाशौचं न सपिण्डानाम् । यमाश्रितास्तस्य यस्य च न पुत्रस्तस्य तु त्रिरात्रमेव । *तदसन्निधाविति । यस्य यदाशौचं तावत्कालमध्ये तच्छ्रोतास सन्निधिः । एवञ्च त्रिरात्रादौ प्रथमदिनश्रवणे पूर्णं, द्वितीयदिनादिश्रवणे तच्छेषः । चतुर्थदिनादौ तन्नास्त्येव । यथा वयोतिक्रान्तमातामहादिमृतिषु । इदं तु विदेशस्थेऽप्यस्तीत्यर्थः । *अन्याश्रितेति । अन्यं प्रातिलोमाभिन्नम् । यद्यप्येकवाक्योपात्तत्वात् पित्रोस्त्रिरात्रपक्ष एव गोत्रिणां स्नानमिति प्रतीयते तथापि सपिण्डानां हारीतादिभिरेकाहस्यापि विधानात् मरीचिना सपिण्डानामेकाहस्य पित्रोस्त्रिरात्रविषयताभिधानाच्च परिशेषात् स्नानस्य पित्रोरेकाहविषयताऽवसीयते । गोत्रिणां स्नानविधानं समानोदकविषयमिति तु माधवः । वाजपेयिमतमुत्थापयति—*यत्त्विति । *पालकेति । पुत्राणामनौरसत्वविशेषणादिति भावः । *जनकेऽपीति । उपनीतदत्तकमरणेऽपीत्यभिप्रायः । मयूखकारास्तु दत्तकस्य मरणे जनकादेर्जनकादिमरणे दत्तकस्य नाशौचं प्रापकाभावात् । तथा हि—

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति मानवे गोत्ररिक्थस्वधापदैः जनकादीनां परस्परसम्बन्धप्रयुक्तं कार्यं लक्ष्यते "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यत्रेव

बैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम्।

इति वाचनिकाशौचस्यानिवार्यत्वात्। *पितृमरणेऽपि दत्तकादीनां त्रिरात्रम्। शुद्धितत्त्वे ब्राह्मे—

दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव च।

इत्युपक्रम्य—

सूतके मृतके चैव त्र्यहाशौचस्य भागिनः।

इत्युक्तेः(१)। स्मृतिकौमुद्यां हारलता(२)यामप्येवम्। दत्तकस्य पुत्रपौत्राणां जनने मरणे वा *सपिण्डानामेकाहः 'बीजिनश्च' इति गौतमेन साप्तपौरुषसापिण्ड्योक्तेः सपिण्डानां चैकाहस्योक्तत्वात्। सपिण्डे तु (३)पुत्रीकृते दशाह एव। तत्राकाङ्क्षाभावात्सापिण्डत्वेन दशाहव्यवस्था विशेषः। तेन लक्षितकार्यमात्रनिवृत्त्याऽऽशौचस्यापि निवृत्तिसिद्धेः। अन्यथा यावद्वचनं वाचनिकमिति न्यायेन दत्तकसोदरादीनां परस्परसम्बन्धानिवृत्त्या श्राद्धाशौचरिक्थग्रहणादौ परस्परमधिकारापत्तेरित्याहुः। नन्वेवं दत्तकमरणे पालकतत्पत्नीपुत्रान्तरादयः सर्वे कथं सापिण्ड्यादशाहमाचरन्ति त्रिरात्रैकरात्रयोरन्यतरस्यैव प्राप्तेः। सत्यम्, जनकस्य सपिण्डानां यत्रैकाहपक्षिण्यौ तत्र प्रतिग्रहीतृसपिण्डानां स्नानम्। जनकसपिण्डानां यत्र त्रिरात्रं तत्र प्रतिग्रहीतृसपिण्डानामेकाह इति मरीचिवचनार्थः। पालकपित्रोस्तु सान्निध्यसान्निधिभेदेन त्रिरात्रैकरात्रव्यवस्थाऽपि यत्र जनकयोर्नामकरणादूर्ध्वं प्रागुपनयनाद्बैजिकसम्बन्धात्त्रिरात्रमुक्तं तत्रैव। एवञ्चोपनीतदत्तकमरणे पालकपित्रोः सपिण्डानां चैकाहत्रिरात्रयोरप्राप्तेरौत्सर्गिकं दशाहादिकं दुर्वारमिति। *पित्रिति। *सपिण्डानामिति। अत्र च जनकेत्यादिः। दिगर्थस्तु कलौ नोपयो-

(१) अत्र दत्तौरसयोर्भ्रात्रोस्तत्पुत्रयोश्च' इदमधिकमेकस्मिन्पुस्तके गटिप्पण्याम। (२) 'यां चैवम्' क० छ०

(३) 'पुत्रीकृते सपिण्डदत्तौरसयोर्भ्रात्रोस्तत्पुत्रयोर्दशाह एव' क०छ०

प्राबल्याच्च । पूर्वापरयोर्भर्त्रुत्पन्नयोः पुत्रयोस्त्वाह माधवीये मरीचिः—

मातुरैक्याद्द्विपितृकौ भ्रातरावन्यगोत्रजौ ।
एकाहं सूतके तत्र त्रिरात्रं मृतके तयोः ॥

इति दिक् ॥

ऊढकन्यानां तु विष्णुराह—'संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत् पितृगृहे स्यातां *तदेकरात्रं त्रिरात्रं च' इति । प्रसवे एकरात्रं मरणे त्रिरात्रमिति विज्ञानेश्वरापरार्कौ । माधवस्तु—प्रसवेऽपि त्रिरात्रं पित्रोः, एकरात्रं भ्रात्रादिबन्धुवर्गस्य,

दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा ।
तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः ॥

इति ब्राह्मोक्तेरित्याह । यत्तु कश्चिदाह—पक्षपदेन भ्रातरो गृह्यन्ते । वाक्यान्तरेण भगिनीमृतौ त्रिरात्रोक्तेरिति । तच्चिन्त्यम्, *तदभावाद्*तद्विरोधाच्च । भ्रातुः *प्रसवे एकाहः । मृतौ त्रिरात्रमिति केचित् । युक्ता तु पक्षिणी,

परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेत् ।

इति ब्राह्मात् । भ्रातृभिन्नानामेकाहः, वर्गोक्तेः । 'इतरेषां यथाविधि' इति वक्ष्यमाणवचनाच्च । यत्तु *प्रधानगृहे मृतौ पित्रोः पूर्णं भ्रातुस्त्र्यह इति कश्चित् स निर्मूलत्वात्, 'नाशौचं पितृपक्षे' इत्येतद्विरोधाच्च भ्रान्तः ।

---

गः । अन्यगोचराविति पाठादाभीर्यादिषु स इति शिष्टाः । *तदेति । पितृपक्षे इति वर्तते । *तदभावात् वाक्यान्तरसत्त्वात् । *एतदिति । ब्राह्मेत्यर्थः । *प्रसवे भ्रातृगृहे प्रसवे । *प्रधानगृहे पितृवासगृहे । अत्रेदं तत्त्वम् । पित्रोर्विज्ञानेश्वरेणोक्तमेव । पक्षद्वय-

दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा।
म्रियते वा तदा तस्याः पिता शुध्येत्त्रिभिर्दिनैः॥

इति कल्पतरौ शुद्धितत्त्वे च। पतिगृहे प्रसवे तु पित्रादीनामाशौचं *नास्ति। मृतौ पित्रोस्त्रिरात्रमस्त्येव,

*प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि॥

अ(१)दत्तासु पित्रोरेकरात्रम् इति माधवीये शङ्खकार्ष्णाजिनिस्मृतेः 'बैजिकादभिसम्बन्धात्' इत्युक्तेश्च। स्मृत्यर्थसारेऽप्येवम्।

माधवस्तु *इदं त्रिरात्रं जातदन्तापरम्। दन्तोत्पत्तेः प्रागेकरात्रं पित्रोः,

सद्यस्त्वप्रौढकन्यायां प्रौढायां वासराच्छुचिः।
प्रदत्तायां त्रिरात्रेण दत्तायां पक्षिणी भवेत्॥

इति पुलस्त्योक्तेः। *अन्यत्र कन्यामृतौ पित्रोः पक्षि-

---

पदेन ग्राह्याणां भ्रातॄणां पितृगृहे वासे तत्र स्वगृहे च भगिन्याः प्रसवमरणयोः एकरात्रत्रिरात्रे। "तद्बन्धुवर्गस्त्वेकेन इति ब्राह्मवाक्यं च तद्भ्रातरः तज्जनकश्चोभौ प्रसवे एकेन मरणे त्रिभिः शुची इत्यर्थकमिति न विरोधः। पितृभ्रातृभिन्नानां तु नाशौचं प्रापकाभावात्। शुद्धितत्त्वे प्रसवे त्रिरात्रान्वयो निर्मूलः। विधिना एकरात्राभिधानात्। *नास्तीति। प्रापकाभावादिति शेषः। *प्रत्ता वाग्दत्ता असंस्कृता लक्षिता। इतरेषां भ्रातॄणां वक्ष्यमाणा पक्षिणीत्यर्थः। "गृहे यस्य मृतः कश्चित्" इत्यग्रिमाङ्गिरोवचनेन स्वगृहे मरणे एव त्रिरात्रस्य व्यवस्थापनात्। *इदमिति। अप्रत्तास्विति शेषः। प्रौढत्वं कृतचूडत्वम्। *अन्यत्रेति। स्वगृहादित्यादिः। "बैजिकादभिसम्बन्धात्"इत्यनेन विरोधादेकाहत्रिरात्रादेरप्रचाराच्चास्वरसः।

---

(१) 'अजातदन्तासु' ग०

णीत्याह। षडशीतावपि—

पितृगेहाद्यतोऽन्यत्र यदि पुत्री प्रमीयते।
पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चयः॥ इति।

ग्रामान्तरे इयमिति *स्मृत्यर्थसारे। भ्रातुस्तु *पक्षिणी,

श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्॥

इति वृद्धबृहस्पतिस्मृतेः। शुद्धितत्त्वे कौर्मे—

*आदन्तात्सोदरे सद्य आचूडादेकरात्रकम्।
आप्रदानात् त्रिरात्रं स्याद्दशरात्रमतः परम्॥

पित्रोर्मृतौ स्त्रीणां त्रिरात्रम्,

पित्रोरुपरमे स्त्रीणा*मूढानां तु कथं भवेत्।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः॥

इति माधवीये वृद्धमनूक्तेः। *इदं दशाहान्तः। ऊर्ध्वं तु पक्षिणी। भ्रातुर्भगिनीगृहे, तस्या वा तद्गृहे मृतौ त्रिरात्रम्। अन्यत्र तु पक्षिणीति षडशीतावुक्तम्। ब्राह्मेपि—

परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेत्।
मातुलाशौचवत्पुत्र्याः पितृभ्यामशौचमिष्यते॥ इति।

---

*स्मृत्यर्थेति। सन्निधौ कालशेषः। असन्निधौ सद्यः शुद्धिरित्यनेन विरोधोऽस्वरसः। *पक्षिणीति। विषयो विवेचितः। *आदन्तादिति। आचूडादित्यन्तं विभागः। तत्राऽऽदन्तादित्यनुवादः। सोदरपदं सपिण्डोपलक्षणम्। एकरात्रमाप्रदानादिति वाग्दानपर्यन्तम्। त्रिरात्रं वाग्दानोत्तरं पितृभर्तृकुलयोः। दशरात्रं भर्तृकुले एव। *ऊढानामिति। अनूढानां पुत्रवदिति भावः। *इदमिति। अत्र पक्षिण्यौ निर्मूले एव। भ्रातुर्भगिनीगृहे मृतौ त्रिरात्रम्। गृहे यस्य मृतः कश्चिदसपिण्ड इत्यस्य विधायकत्वभ्रान्त्येत्यस्वर-

*शिष्टास्त्वस्य निर्मूलत्वात्पितृव्ये स्नानमात्रमाहुः ।

त्रिंशच्छ्लोक्याम्—

*प्रेतेष्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्रीयेषु त्रिरात्रं त्रिदिवसमशुचिः सोदकस्तूभयत्र ।
पक्षि(१)ण्याशौचमृत्विग्दुहितृसुतसहाध्यायिबन्धुत्रयान्तेवासिश्वश्रूसुमित्रश्वशुरभागिनिकाभागिनेयप्रयाणे ॥
मातामह्यां च पित्रोः स्वसरि च विरतौ मातुले मातुलान्यां चाथो सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे ।
शिष्योपाध्यायबन्धुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषु स्वगृहपरमृतौ मातुले चैकरात्रम् ॥
रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वल्पसम्बन्धयुक्ते स्नानं वासोयुतं स्यादिदमपि सकलं सर्ववर्णेषु तुल्यम् ॥इति।

अत्र *मूलं मिताक्षरादौ स्पष्टम् । *दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रम् । अनुपनीतयोः पक्षिणी ।

संस्थिते पक्षिणीं रात्रिं *दौहित्रे भगिनीसुते ।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ॥

---

सः । सिद्धान्तमाह—*शिष्टास्त्विति । *प्रेतेष्विति । आचार्यत्वादिनिरूपकसम्बन्धिशिष्यादेरिदम् । उपनीयवेदाध्यापक आचार्यः । उभयत्रेति निवृत्तम् । *मूलमिति ।

त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत् ।

इत्यादिकम् । *दौहित्रेति । तेन तयोः श्लोकभेदेन कथनसङ्गतिः । *दौहित्रे इति । तेन च पुंस्त्वाविवक्षया दौहित्र्यां भागिनेय्यां च स्नानमेव । एवं बन्धुत्रयेऽपीति वाच्यम् । अनुवाद्य-

---

(१) मातुलबन्धुत्रयादीनामेव पक्षिण्याद्याशौचम् । अन्यथा दन्तजननादेः पूर्वं सोदकमातुलादेर्मृतौ त्रिरात्रपक्षिण्यादि, तादृशस्य भ्रात्रादेः सद्य इत्यनौचित्यं स्यादिति मयूखे ।

इति वृद्धमनूक्तेः। संस्कृते दाहेन। तेन दाहे त्रिरात्रं नान्यथेति गौडाः। तन्न, *विशेषवैयर्थ्यात्। *मातुलादौ सन्निधिविदेशाभ्यां पक्षिण्येकाहयोर्व्यवस्था। मनुः—

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः॥

श्रोत्रिये स्वगृहे मृते त्रिरात्रम्,

*श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत्।

इति स्मृतेरिति माधवः। *ए(१)कग्रामीणे त्वेकाहः। *ऋत्वि(२)जि बह्वल्पकालश्रौतस्मार्तयाजनपरे त्रिरात्रैकरात्रे ज्ञेये। यद्यपि कर्म कुर्वत एष वाचकः शब्दो भवतीति शम्बराचार्यैः कर्ममध्ये ऋत्विक्त्वमुक्तं तथापि कर्मण्याशौचनिषेधात्तदुत्तरमेवैतज्ज्ञेयम्। गौडास्तु—

समानोदकानां त्र्यहो गोत्रजानामहः स्मृतम्।

---

विशेषणस्य विवक्षितुमशक्यत्वात्। *विशेषेति। खननपक्षे दौहित्रभागिनेययोः दन्तजननात्प्रागपि पक्षिणी। तादृशस्य भ्रात्रादेः सद्यः। दाहपक्षे तयोः त्रिरात्रं भ्रात्रादेः सद्य इत्यनौचित्यापत्तेरित्यर्थः। *मातुलादाविति। मिताक्षरामतेन। *श्रोत्रियेत्विति। अस्खलितैकशाखाध्यायिनीत्यर्थः। "एकां शाखामधीत्य श्रोत्रियः" इति बौधायनोक्तेः। 'स्वगृहे' इत्यतन्त्रम्। उपसम्पन्नत्वं मैत्रीप्रातिवेश्यत्वादिना सदाचारेण वा। *समानेति। असमानग्रामीणे तु श्रोत्रिये नाशौचम्। "एकाहं सब्रह्मचारिणि समानग्रामीणे च श्रोत्रिये" इत्याश्वलायनेन श्रोत्रियविशेषणोक्तेः। *ऋत्विजीति। प्रचेताः—

मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति।

---

(१) 'समानग्रामीणे' इति पाठोऽपेक्षितो टीकानुरोधात्।
(२) 'ऋत्विक्षु' क० ग०

मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा ॥

इति जाबालोक्तेर्मातृबन्धुष्वेकाहमाहुः । *शिष्ये स्वोपनीते त्र्यहः, 'शिष्यसतीर्थ्यब्रह्मचारिषु क्रमेण त्रिरात्रमहोरात्रमेकाहः' इति माधवीये बौधायनोक्तेः । अन्यत्र तु मनुः—

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च । इति ।

बन्धुत्रयम्—आत्मपितृष्वसृमातृष्वसृमातुलपुत्राः, पितुःपितृष्वसृमातृष्वसृमातुलपुत्राः, मातुःपितृष्वसृमातृष्वसृमातुलपुत्राश्चेति विज्ञानेश्वरः । *अत्र पक्षिणी । पितृष्वस्रादिकन्यानामूढानां त्वेकाहः । 'तद्बन्धुवर्गस्त्वे-

---

मनुः—

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च । इति ।

बह्वल्पकालयाजनं श्रौतस्मार्तयाजनं चेत्यर्थः । इदं याज्येऽपि ऋत्विक्शब्दस्य याज्योपलक्षणत्वात् । अन्यथा न्यूनतापत्तेः । एवञ्च त्रिरात्रपक्षिण्याविति पाठः । त्रिरात्रैकरात्रे इति तु केनचित्कल्पितः । एकोदराणामिति वचनं मिताक्षरायाम् । तत्र मातृबन्धुपदं बन्धुत्रयोपलक्षणम् । गुरुरुपाध्यायः । मित्रोऽल्पकालमैत्र्यः । श्लोके सहाध्यायी एकस्माद्गुरोर्बहुकालं सहवेदमधीयानः । "पक्षिणीमसपिण्डे योनिसम्बन्धे सहाध्यायिनि च" इति गौतमोक्तेः । योनिसम्बन्धान्मातुलीयमातृष्वस्रीयपैतृष्वस्रीयादयः । अन्तेवासी द्विविधः—स्वोपनीतोऽतादृशश्च । तत्राद्ये विशेषमाह—*शिष्ये इति । सतीर्थ्यः सहाध्यायी । अहोरात्रमिति पक्षिणीत्यर्थः । शिष्ये एकस्माद्गुरोः कृत्स्नं वेदमधीयाने शिष्यविद्यार्थ्यध्यत्रैव द्रष्टव्यः । *बान्धवेष्विति । आत्मबान्धवा मातृबान्धवाः पितृबान्धवाश्चोच्यन्ते । *अत्रेति । पुत्रेष्वित्यर्थः । ऊढात्वनिबन्धनाशौचभेदे मानाभावः, वचनस्यान्यार्थत्वादित्यस्वरसः । श्लोके श्वश्रिन्त्यादि । श्वशुरयो-

केन' इति पूर्वोक्तन्नाम्नात् । यत्तु षडशीत्याम्—

एवं पित्रोर्भगिन्यौ ये ये पितामहयोस्तथा ।
ये मातामहयोश्चैव भगिन्यौ तत्प्रजाश्च याः ॥
मातुलाः स्वस्य पित्रोश्च पत्न्यश्चैषां प्रजाश्च याः ।
भ्रा(१)तरश्चेति सर्वेषु पक्षिणी स्वगृहे त्र्यहम् ॥
एवं श्वशुरजामातृदौहित्रविपदि स्मृतम् ॥

यच्च यमः—

जामातरि मृते शुद्धिस्त्रिरात्रेणोभयोः स्मृता ।
पक्षिणी शालकानां स्यादिति शातातपोऽब्रवीत् ॥ इति

तन्निर्मूलत्वान्मिताक्षरादिविरोधाच्चोपेक्ष्यम् ।

मदनपारिजाते विष्णुः—'असपिण्डे स्ववेश्मनि मृते एकरात्रम् ।' अत्र हरदत्तः—'अन्तःशवे च' इत्यापस्त-

---

भगिन्याश्चेत्यादि प्राग् लिखितम् ।

मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च ।
आशौचं पक्षिणीं रात्रिं मृता मातामही यदि ॥

इति यमवचनञ्च । गुरुः केवलाध्यापकः । एवञ्च गुरुपत्न्यां मानवैकाहो व्यवस्थापनीयः । स्वविषयेत्यादि । मृतिकालीनेन सूर्यनक्षत्रान्यतरेण ज्योतिषा सह वर्तते तत्सज्योतिरिति । दिनमृते दिनं रात्रिमृते रात्रिः । तथाच मनुः—

प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः ।

वृद्धमनुश्च—

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि ।
शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात् ॥ इति ।

शिष्येति । अहरित्यनुवृत्तौ—

गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेष्विति ।

---

(१) 'पितरश्चेति' क० छ०

स्वसूत्रतः शवे ग्रामे धनुःशतादर्वागन्नमभोज्यम्। दीपमुदकुम्भं चोपनिधाय तु भुञ्जीत यदि 'समानवंशं न गृहमेव सूतिकायामित्याह। *प्रधानगृहमृतौ तु—

*गृहे यस्य मृतः कश्चिदसपिण्डः कथंचन।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः॥

इत्यङ्गिरसोक्तमिति माधवः। एतेन—

त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च।

---

इति योगीश्वरवचने गुरुरेकदेशाध्यापकः। अन्तेवासी एकदेशमध्यापितः। अनूचानोऽङ्गानां प्रवक्ता। मातुलग्रहणमात्ममातृपितृबान्धवानामुपलक्षणम्। ग्रन्थे विष्णुवचनविरोधवारणाय— *प्रधानेति। *गृहे यस्येति। वस्तुतस्त्वसपिण्डोऽत्र पूर्वत्र च जात्याशौचानर्हः। तत्र वैष्णवमेव विधायकम्। इदं तु यत्र त्रिरात्रस्य पक्षिण्यादिकल्पान्तरविकल्पस्तत्र व्यवस्थापकम्, लाघवात्। नतु स्वगृहे यत्किञ्चिदसपिण्डमरणेऽपूर्वत्रिरात्रविधायकम्, गौरवात्। तथाच यत्र त्रिरात्रादिकं नियमेनोक्तं तत्र स्वगृहेऽन्यगृहे वा तदेवाशौचम्। यत्र तु त्रिरात्रं पक्षिण्या एकाहेन वा विकल्पितं तत्र स्वगृहमृतावङ्गिरोवचनात् त्रिरात्रम्। तदन्यत्र मृतौ तदन्यत्। एकाहपक्षिण्योर्विकल्पेऽप्येवम्। यत्र मातुलादौ त्रयविकल्पस्तत्र त्रिरात्रं प्राग्वत्, पक्षिणी तु मैत्र्यादियुक्ते न्यायवर्तिनि वा, मातुलादिमात्रे चैकाह इति। एवमाचार्योपाध्यायशिष्यसहाध्यायिष्वाशौचभागितदन्यगृहमरणमिव निवृत्ताध्ययनत्वानिवृत्ताध्ययनत्वाभ्यां सकलैकदेशाध्ययनेन च व्यवस्थेति। एवमेवास्वरसः।

रजकश्चर्मकारश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैतेऽन्त्यावसायिनः॥

इत्येतेऽन्त्यजाश्च। स्वगृहपरगृहमृत्याशौचमसङ्गादगृहशाद्धिमाह—

इति कौर्मे व्याख्यातम् । शुद्धितत्त्वे बृहन्मनुः—

*श्वशूद्रपतिताश्चान्त्या मृताश्चेद्द्विजमन्दिरे ।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥
दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः ।
द्वाभ्यां तु पतिते गेहमन्त्ये मासचतुष्टयात् ॥
अत्यन्त्ये वर्जयेद्गेहमित्येवं मनुरब्रवीत् ॥

*अन्त्यो म्लेच्छः । अत्यन्त्यः श्वपाक इति वाचस्पतिः । तत्रैव यमः—

द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात् ।

संवर्तः—

*गृहशुद्धिं प्रवक्ष्यामि अन्तस्थशवदूषिते ।
प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नं तथैव च ॥
गोमयेनोपलिप्याथ छागेन घ्रा(१)पयेद् बुधः ।
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभिः ॥
सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयम् ॥

बृहद्विष्णुः—

ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित ।
ग्रामस्य तावदाशौचं निर्गते शुचितामियात् ॥

गृहे पश्वादौ मृतेप्येवम् ।

यत्तु माधवीये प्रचेतसा मातृष्वस्रादिषु त्रिरात्रमुक्तम्-
मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरोः ।
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति ॥ इति ।

---

*श्वशूद्रेति । श्लोकेरात्रिमित्येकाहपरम् "एकाहं सब्रह्मचारिणि" इत्याश्वलायनोक्तेः। एकाचार्योपनीतः सब्रह्मचारी । मतान्तरमाह- *अन्त्य इति । *गृहशुद्धिमिति । उक्तकालानन्तरं द्रष्टव्या ।

---

(१) 'प्रापयेद्बुधः' क० छ० ।

गुरुराचार्यः । ऋत्विक् कुलागतः । तत्स्वगृहमृतौ ज्ञेयम् । श्वशुरयोरन्यत्र मृतावपि संनिधौ त्रिरात्रम्, असंनिधौ पक्षिणी, देशान्तरे एकरात्रम्, वक्ष्यमाणविष्णूक्तेरिति माधवगौडादयः । अन्यत्र तु मातृष्वस्रादिषु पक्षिणी,

पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ।

इति वृद्धमनूक्तेः । यत्तु वृद्धमनुः—

भगिन्यां (१)संस्थितायां तु भ्रातर्यपि च (२)संस्थिते ।
मित्रे जामातरि प्रेते दौहित्रे भागिनीसुते ॥
शालके तत्सुते चैव सद्यःस्नानेन शुध्यति ॥ इति ।

तद्भ्रातृदौहित्रादौ* देशान्तरे, शालकसुतजामात्रोः स्वदेशे ज्ञेयम् । शालके तु स्वदेशे एकाहः 'आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वश्रूश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रम्' इति माधवीये विष्णूक्तेः । हरदत्तीये दशश्लोक्यामप्येवम् । श्वशुर्यः शालकः । देशान्तरे स्नानम् । श्वशुरयोर्देशान्तरे एकाहः । जाबालः—

एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम् ।

*सर्वत्र मूल्याभावेऽपि क्रियाकर्तुर्दशाहः,

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥

इति मनूक्तेः । शिष्य इत्युपलक्षणम् ,

निरन्वये सपिण्डे तु मृते सति दयान्वितः ।

---

*-भ्रात्रिति । आदिना भगिनीभागिनेयग्रहः । मिताक्षरामते शालके आशौचं नास्त्येवेति माधवोक्त एकाहो न प्रचरति । आचार्यमातामहादयस्त्रिरात्रमाशौचमन्यास्मिन्नन्त्येष्टिकर्तरीत्याह—

---

(१) 'संस्कृतायां' ग० छ० । (२) 'संस्कृते' ग० छ० ।

आशौचं प्राकृतं तस्य सर्ववर्णेषु नित्यशः ॥

शस्त्राघाते क्षतं विना। शवस्पर्शे तु हारीतः—'शवस्पृशो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात्, रात्रौ चेदादित्यस्य।' *यत्तु मनुः—

अह्ना चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः।

शवस्पृशो विशुद्ध्यन्ति त्र्यहात्तूदकदायिनः॥ इति।

अह्ना रात्र्या चेत्यहो(१)रात्रमुक्तम्। त्रिभिस्त्रिरात्रैरिति नवरात्रमेवं दशरात्रमित्यर्थः। तत्तदन्नाशने तद्गृहवासे*ऽनापदि च ज्ञेयम्,

*अ(२)नदन्नन्नमह्नैव न चेत्तेषां गृहे वसेत्।

चान्त्यकर्मणी। अवैधे तत्र सद्यो मृतौ सद्यः शौचं, त्र्यहमध्ये त्रिरात्रम्। अन्त्यकर्म अवैधात्मत्यागिन इव सम्वत्सरादूर्ध्वमग्रे स्फुटम्। शवस्पृष्टे ग्रामान्तरवाहिना। असपिण्डशवनिर्वाहे शवस्पृशः शववाहकाः न प्रविशेयुः। स्पर्शे तु—

शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति।

इति देवलेन स्नानमात्रोक्तेः। तद्ग्रामवासिनान्त्वाह—*अथेति। *दशाह इति। निर्हरणीयजात्याशौचं दशाहादीत्यर्थः।

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।

विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥

यद्यन्नमत्ति तेषां तु दशाहेनैव शुद्ध्यति।

अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्॥

इति मनुस्मरणस्य विज्ञानेश्वरेणैव व्यवस्थापनात्। बन्धुवदिति। स्नेहेनेत्यर्थः। अन्हा अहोरात्रेण। मनुस्मृतौ पुनरुक्तिमाशङ्कते—*यत्त्विति। *अनापदीति। आपदि त्रिरात्रमभि-

(१) 'रात्रमित्युक्तं' ग०।

(२) कंसान्तर्गतं पुस्तकान्तरस्थत्वेन टिप्पण्यां ग० पुस्तके निवेशितं दृश्यते।

इति तेनैवोक्तेः । अङ्गिराः--

*आशौचं यस्य संसर्गादापतेद्गृहमेधिनः ।

क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ॥

*अथ निर्हाराद्याशौचम् । स्नेहेन सवर्णनिर्हारे तद-न्नाशने तद्गृहवासे च *दशाहः । तदन्नानशने तद्गृह-

---

मिति तत्सकलग्रन्थविरुद्धम् । यद्गृहावासे तद्गृहावासाभावे—*अ-नदन्निति । तत्पुत्रादिस्वामिकान्नादने । अनेन तद्गृहवासइव तेन तत्र तद्गृहवासाभावे दशाहोक्तेर्न पुनरुक्तिशङ्केत्यर्थः । यद्यप्यग्रे "अथ निर्हाराशौचम्" इत्यादि "एकाहः" इत्यन्तः पाठस्तथाप्यार्थ-क्रमानुरोधेनेत्थं व्याख्यातम् । *आशौचं यस्येति । संसर्गाशौचं निर्हाराद्याशौचम् । तत्र निर्हारादिकर्तृसम्बन्धिनां भार्यापुत्रादीनां द्रव्याणां च नाशौचम्, किन्तु तस्यैव । तस्यापि नित्यकर्मलोपे-त्यर्थः । अत्राशौचतया सामान्यप्राप्तस्य क्रियालोपस्य "क्रियास्त-स्य न लुप्यन्ते" इत्यपवादः । संसर्गाशौचं च निर्हरणादिकर्तृभि-न्नाप्रसक्तमेवेति "गृह्याणां च न तद्भवेत्" इत्यनुवादः । स च तेषां वैश्वदेवादिकर्तृत्वप्रतिपादनपरत्वेन सार्थकः । तथाच संसर्गा-शौचिना पुत्रादिद्वारैव क्रियाः कार्या न साक्षात् "गृह्याणां च न तद्भवेत्" इति वाक्यशेषादिति फलितम् । नच श्रौतस्मार्ताग्निसा-ध्यकर्मविषयक एव "क्रियास्तस्य न लुप्यन्ते" इति प्रतिप्रसवः, यथा सपिण्डाशौचिनां "प्रत्यूहेन्नाग्निषु क्रियाः" इति मदनपारि-जातोक्तं सम्यक्, तदन्यद्वारकत्वेनैव तत्सिद्धेरेतद्वैयर्थ्यापत्तेः वै-श्वदेवादिरूपाग्न्यनग्निसाध्यक्रियाविषयत्वात् । अथाशौचसामान्यप्रा-प्तस्य "प्रत्यूहेन्नाग्निषु क्रियाः" इत्यादेरेकाहादुच्यते । "विप्रो यो-ऽग्निवेदसमन्वितः" इति वाक्येनाऽऽद्याहोरात्रेऽपवादात्तत्र क्रिया-लोपे प्राप्ते "क्रियास्तस्य न लुप्यन्ते" इत्यन्यद्वारैवाग्निसाध्यक्रिया-स्वेव प्रतिप्रसवोऽस्तु । नचैकाहादिति वाक्यस्य मेधातिथ्यादि-

निबन्धेषु दशाहादिसपिण्डाशौचप्रकरण एव लिखनात् निर्हरणाद्याशौचे न प्रवृत्तिः किन्तु "हावयेत् न तु हापयेत्" इत्येतत्सहितस्य "प्रत्यूहेन्नाग्निषु" इत्यस्यैव। ततश्चाग्निसाध्यकर्मसु प्रथमाहोरात्रेऽप्यधिकारासिद्धेः "क्रियास्तस्य" इति व्यर्थं सदाऽनग्निसाध्यक्रियास्वेवाधिकारं विदध्यादिति वाच्यम्। गुरूपाध्यायाद्याशौचे सपिण्डाशौचप्रकरणाधीनतया प्रत्यूहेन्नाग्निषु एकाहादित्यथोः संसर्गाशौचत्वाभावेन "क्रियास्तस्य" इत्यस्य च प्रवृत्तेस्तत्राग्निसाध्यकर्मानुष्ठानस्यासिद्ध्यापत्तेः। मैवम्, यतः सूतके कर्मणां त्यागः। "सन्ध्यादीनां विधीयते" इति वाक्यस्य च सूतकप्रवृत्त्यनन्तरमेव सपिण्डाशौचे इव संसर्गाद्याशौचे गुर्वाद्याशौचे चाविशिष्टा प्रवृत्तिः। तन्मात्रं चोपजीव्यैव त्रिष्वप्याशौचेषु "प्रत्यूहेन्नाग्निषु क्रियाः" "एकाहाद्युच्यते" "हावयेन्न तु हापयेत्" इत्यादि प्रतिप्रसवस्यापि। एवं "क्रियास्तस्य न लुप्यन्ते" इत्यस्यापि एकाहादिश्चैतत्समकालमेव प्रवृत्तिर्नतु तदपवादत्वेनोत्तरकालम् यथा "न हिंस्यात्" इति निषेधो रागप्राप्तिमुपजीव्यैव "अग्नीषोमीयं पशुमालभेत" इत्येतत्समकालमेव प्रवर्तते नतु तदुत्तरकालम्, एवमिहापि। तथाच "क्रियास्तस्य न लुप्यन्ते" इत्यस्य निर्हरणाद्याशौचे अगन्यनग्निसाध्यकर्मसु प्रवृत्तेः सिद्धिः। ननु सपिण्डाशौचप्रकरणाधीनानां प्रत्यूहेदित्यादीनां कथमन्याशौचे प्रवृत्तिरिति चेत्परिभाषारूपाणां तेषां प्रकरणेन सङ्कोचायोगात्। यदि चैकाहाद्युच्यते इत्येतदघसङ्कोचपरमेव,

> त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः।

इत्युत्तरार्धात्। सच कलौ न प्रवर्तते,

> वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा।

इति कलिवर्ज्यवचनात्। तदा क्रियास्तस्येत्यस्यैकाहादित्यपवादकताविरहेऽपि प्रत्यूहेदिति वचनं संसर्गाशौचभिन्ने एव गव-

वासे त्र्यहः । गृहावासेऽन्नाभक्षणे चैकाहः । *भृतिग्रहणेन निर्हारे *दाहे च तज्जात्याशौचम्,

यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः ।
दशाहेन द्विजः शुद्ध्येद्द्वादशाहेन भूमिपः ॥
मासार्धेन (१)च वैश्यस्तु शूद्रो मासेन शुध्यति ॥

इति कौर्मोक्तेः । विजातीयनिर्हारे तु शवजातीयमाशौचम् । अत्र भृतिग्रहे द्विगुणम्,

अवरश्चेद्वरं वर्णं वरो वाप्यवरं यदि ।
वहेच्छवं तदाशौचं द्रव्यार्थे द्विगुणं भवेत् ॥

इति व्याघ्रोक्तेः। कौर्ममेतदिति गौडाः । दाहेप्येवम् । यत्तु ब्राह्मे—

योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।
आशौचं तु भवेत्तस्य प्रेतजातिसमं नृप ॥ इति,

तदापदि ज्ञेयम् । सोदकनिर्हारे तु दशाह इति माधवः । अलङ्करणे तु शङ्खः—

*कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणे कृते ।

---

र्तते । संसर्गाशौचे क्रियास्तस्येति विशेषोपादानात् । तस्मात्संसर्गाशौचे तदाशौचे श्रौतस्मार्ताग्निसाध्यकर्मानुष्ठानं संसर्गाशौचे तु अग्न्यनाग्निसाध्यकर्मणामन्यद्वाराऽनुष्ठानमिति । *भृतीति । तदन्नाशनाद्यभावेऽपीति शेषः । *दाहे दाहमात्रे । धर्मार्थदाहमात्रे पैठीनसिना निर्हरणतुल्यत्वोक्त्या अत्रापि तस्य तत्तुल्यत्वात् । एवञ्च विजातीयदाहादौ प्रायश्चित्तकृत एव निर्हरणाद्विशेषः । प्रायश्चित्तं त्वाशौचानुसारेण न्यूनाधिकमपि । *कृच्छ्रपाद इति । प्रायश्चित्तमिदमधिकं, स्पर्शाविनाभावेन स्पर्शाशौचस्याप्यत्वदितुम-

---

(१) 'तु' क० छ० ।

अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते ॥

धर्मार्थम*नाथसवर्णहरणे क्रियाकरणे च द्विजस्या*नन्तयज्ञफलम् । 'स्नानं प्राणायामोऽग्निस्पर्शश्च' इति माधवीये । अग्निदेऽप्येवम्,

प्रेतसंस्पर्शसंस्कारैर्ब्राह्मणो नैव दुष्यति ।
वोढा चैवा*ऽग्निदाता च सद्यः स्नात्वा विशुद्ध्यति ॥

इत्यपरार्के वृद्धपराशरोक्तेः । *मातुलत्वादिसम्बन्धे त्रिरात्रम् *'असम्बन्धिद्विजान्वहित्वा दहित्वा च सद्यः-

---

शक्यत्वात् । दूरतोऽलङ्करणेष्वेतत् । स्नानं त्विहापि । अन्यथा "स्नानमिष्यते" इत्यस्योल्लङ्घनापत्तेः । निहारादिसंस्पृष्टालङ्करणे तु तत्र यदुक्तं तत्संयुक्तमिदं भवति । *अनाथं स्वसम्बन्धहीनम् । स्नेहाद्यभाजनमिति रघुनाथः । सवर्णपदमसवर्णोपलक्षणम् । *अनन्तेति ।

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमनुपूर्वं भजन्ति ते ॥
न तेषामशुभं किञ्चित्पापं वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥
असगोत्रभवं ध्रुवमेतीभूतं द्विजोत्तमम् ।
वहित्वा च दहित्वा च प्राणायामेन शुद्ध्यति ॥

इति पराशरस्मरणात् ।

यः कश्चिन्निर्हरेत् प्रेतमसपिण्डः कथञ्चन ।
स्नात्वा सचैलः स्पृष्ट्वाऽग्निं तस्मिन्नेवाह्नि वै शुचिः ॥

इत्यङ्गिरःस्मरणाच्च । वहित्वेत्यादाविट् छान्दसः । *अग्निदाता चेति । चकारेण सकलौर्ध्वदैहिकसङ्ग्रहः । *मातुलत्वादिसम्बन्धे इति । प्रामादिकं, स्नेहादिसम्बन्धे इत्यस्यौचित्यात् । *असम्बन्धीति । अस्यापि स्नेहादिकं विनाऽनाथे-

शौचम्, सम्बन्धे त्रिरात्रम्' इति पैठीनसिस्मृतेः।

गौतममिताक्षरायां वृद्धात्रिः—

*सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम्।
आर्तवाद्द्विगुणा सूतिस्ततोऽपि शवदाहकः॥

अत्र पूर्वेणोत्तरनिवृत्तिरित्यर्थः विष्णुः। *मृतं द्विजं न शूद्रेण हारयेन्न शूद्रं द्विजेन देवलः—

ब्रह्मचारी न कुर्वीत *शववाहादिकक्रियाम्।
यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमेव च॥

याज्ञवल्क्यः—

आचार्यपित्रुपाध्यायान्निर्हृत्यापि *व्रती व्रती।

अनुगमने तु सपिण्डे न दोषः,

---

त्यर्थः। *सूतकादिति। यद्यप्यनाथप्रेतान्त्येष्टिकर्तुरपि दशाहस्य न निवृत्तिरिति प्रतीयते तथापि पराशरपैठीनसिस्मृतौ 'दहित्वा' इत्युपादानात्सामान्यतोऽन्त्येष्टिकर्तर्येवेदम्। तथा च पराशरादिस्मृतेर्दुर्गममार्गादौ स्थातुमशक्येऽनाथप्रेतान्त्येष्टावुपपत्तेरन्यत्र तत्करणे धर्मपुत्राविशेषेण दशाह एव। ब्राह्मणद्विजोत्तमादिपदमुपलक्षणम्। शूद्रस्यैव निर्हारकर्तृत्वकर्मत्वयोर्निषेध इत्याह—*मृतमिति। एवञ्च—

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण निर्हरेत्।

इति मानवेषु विप्रपदं द्विजोपलक्षणम्, शूद्रसंस्पर्शदूषितेति सामान्यतो दोषस्मरणात्। अत एव स्वेषु तिष्ठत्स्वित्यविवक्षितम्। *शववाहादीति। आदिनाऽलङ्करणमेव ग्राह्यं न दाहादिः तत्र गुरुप्रायश्चित्तस्य वक्ष्यमाणत्वात्। *व्रतीति। ब्रह्मचारी व्रत्येव, न भग्नव्रत इत्यर्थः। निर्हरणाद्याशौचं तु तस्य भवत्येव।

विहितं हि सपिण्डानां प्रेत*निर्हरणादिकम् ।
तेषां करोति यः कश्चित्तस्याधिक्यं न विद्यते ॥

इति देवलोक्तेः ।

*दोषः स्यात्त्वसपिण्डस्य तत्रानाथक्रियां विना ।

इति हारीतोक्तेश्च । *समोत्कृष्टवर्णे तु माधवीये कण्वः—

अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनम् ।
सर्पिः प्राश्य पुनः स्नात्वा *प्राणायामैर्विशुध्यति ॥ इति ।

---

व्रताभङ्गफलमग्रे स्फुटम् । *निर्हरणादिकमिति । आदिनानुगमनरोदनदाहोदकदानादिग्रहः—*दोषः स्यादिति । अत्रापि विहितं हीति पूर्वार्धं द्रष्टव्यम् । एवञ्च—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च ।
स्नात्वा सचैलः स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुद्ध्यति ॥

इति मानवे ज्ञातिर्मातृसपिण्डः न तु स्वसपिण्डः । एवं—

ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं हुतभुक् शुचिः ॥

इति योगीश्वरोक्तौ ब्राह्मणशूद्रद्विजपदमुपलक्षणम् । अम्भसीति सप्तम्यानुद्धृतत्वलाभः । यद्यपीदं सचैलस्नानादित्रयविधानं सामान्यपरमेव विशेषानुक्तेस्तथापि । किं सर्वत्र तस्येतरनिरपेक्षस्य शोधकत्वमुत तत्सापेक्षस्य ? नाद्यः, हीनानुयाने एकाहादिविरोधात् । नान्त्यः, अहीनवर्णे एकरात्राद्यसत्त्वात् । यदि हीने एकाहादेरधिकत्वेऽपि स्नानादित्रयमात्रस्य सर्ववर्णगामित्वे न बाधकम् । तदापि हीने एकाहाद्यनन्तरं स्नानादेः प्राप्त्या अहीने तदप्राप्त्या च विध्यनुवादवैरूप्यापत्तिः समोत्तमवर्णासपिण्डानुगमनमात्रपरत्वे तु नायं दोष इति ध्वनितम् । *समेति । समपिण्डसादिः । *प्राणायामैः त्रिभिः त्रित्वस्य प्रथमोपस्थित

हीनवर्णे तु *क्षत्रियेऽहः, वैश्ये पक्षिणी, शूद्रे त्रिरात्रम्, क्षत्रियस्य वैश्येऽहः, शूद्रे पक्षिणी, वैश्यस्य शूद्रेऽहः इति विज्ञानेश्वरः । *माधवस्तु—*विप्रस्य वैश्ये

---

त्वात् । यद्यपि विज्ञानेश्वरमते काण्वो विशेषो नास्ति तथापि प्रासङ्गिके तत्र मानवादिकं बुद्धिपूर्वे तु काण्वमिति व्यवस्थाव्यञ्जनाय काण्वमात्रोपादानम् । केचित्तु सर्वासपिण्डानुगमने स्नानादित्रयं कालनिरपेक्षं शोधकम् । तत्र समोत्तमानुगमने बुद्धिपूर्वे 'अनुगम्येच्छया' इत्यादि मनुनेच्छोपादानात् । हीनानुगमने तु प्रासङ्गिक एव तत् । बुद्धिपूर्वे तु तत्र एकाहाद्याशौचमेवेति मिताक्षरामतं परिष्कुर्वन्ति । इदं च घृतप्राशनं न भोजननिवर्तकम्, कृच्छ्रेष्वपाठेन कृच्छ्राद्यभावेन भोजनकार्याविघातकत्वात् । *क्षत्रिये इति । अहोरात्रं प्रक्रम्य वशिष्ठः—"शवानुगमने चैवम्" इति । पराशरः—

प्रेतीभूतं तु यः शूद्रं ब्राह्मणज्ञानदुर्लभः ।
अनुगच्छेन्नीयमानं स त्रिरात्रेण शुद्ध्यति ॥
त्रिरात्रे तु ततश्चीर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥ इति ।

यद्यप्यत्रानन्तरे एकाहो वशिष्ठोक्तेः, द्व्यन्तरे त्रिरात्रम्, पराशरवचनात् । एकान्तरे तु विशेषवचनं नास्ति; तथाप्यनन्तरापेक्षयाऽपकृष्टत्वाद् द्व्यन्तरापेक्षयोत्कृष्टत्वाच्च एकान्तरानुगमनकालादधिका द्व्यन्तरानुगमनकालान्न्यूना पक्षिणी लभ्यते । अत्रास्वरसात्स्वमतमाह—*माधवस्त्विति । *विप्रस्येति ।

क्षत्रियं मृतमज्ञात्वा ब्राह्मणो योऽनुगच्छति ।
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुद्ध्यति ॥

त्र्यहः. क्षत्रियस्य शूद्रेऽप्येवम् , *अन्यत् प्रागवत् । *स्नानाग्निस्पर्शघृताशनानि सर्वत्रेत्याह । हीनवर्णस्य *दाहौर्ध्वदेहिककरणे तु ब्राह्मे—

ब्राह्मणो हीनवर्णस्य न कुर्यादौर्ध्वदेहिकम् ।
कामाल्लोभात्तथा मोहात्कृत्वा *तज्जातितां व्रजेत् ॥

मनुः—

व्रात्यानां याजनं कृत्वा *परेषामन्त्यकर्म च ।

---

इत्युक्त्वा "प्रेतीभूतं तु यः शूद्रम्" इत्यतः प्राक्—

शवं च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति ।
कृत्वाशौचं द्विरात्रं च प्राणायामान् षडाचरेत् ॥

इति पराशरेणोक्तेः । अज्ञानं ज्ञानदौर्बल्यं मौर्ख्यं च शास्त्रार्थज्ञानराहित्यमिति यावत् । एवं व्यन्तरितत्वात् त्र्यहः । *अन्यदिति । ब्राह्मणस्य क्षत्रियानुगमने वैश्यस्य शूद्रानुगमने एकाहं विप्रस्य शूद्रानुगमने त्र्यहमित्यर्थः । *स्नानेति सचैलेत्यादिः । उपक्रमोपसंहाराभ्यां सचैलस्नानादेर्लाभादिति शेषः । *दाहेति । दाहे सर्वस्मिन्नौर्ध्वदेहिके चेत्यर्थः । "ब्राह्मणस्त्वन्यवर्णस्य"इति पाठे अन्यवर्णो हीनवर्णः । उत्तमवर्णप्राप्त्यापत्तेरिष्टत्वात् । ब्राह्मण इत्युपलक्षणम् । अधमजातिप्राप्तेरेव दोषत्वात् । और्ध्वदेहिकपदं केवलदाहोपलक्षणम् । *तज्जातितामिति । प्रायश्चित्ताकरणे तत्तुल्यतामित्यर्थः । तथाच हीनवर्णदाहादौ तत्तज्जातिप्रयुक्तमाशौचं प्रायश्चित्तं च तत्तदुक्तापेक्षया द्विगुणमिति फलितम् । यद्वक्ष्यति हीनेष्विति । कामादिहेतूक्तेर्धर्मार्थं द्विजैर्द्विजप्रेतदाहादिकरणे दोषो नेति गम्यते । स्पष्टं चेदं प्राक् । शूद्रस्य तु धर्मेणापि द्विजैर्दाहादि न कार्यम् । नापि शूद्रेण तेषामिति निर्हरणवदर्थासिद्धम् । स्नेहादिना समोत्कृष्टवर्णासपिण्डदाहादिकरणे त्वाह—*परेषामि-

अभिचारमहीनं च त्रिभिः *कृच्छ्रैर्व्यपोहति ॥

परेषां *सवर्णानां हीनेषु तद्वैगुण्यत्रैगुण्यचातुर्गुण्या-
यूह्यम् ॥

अथ रोदने *समोत्तमवर्णयोः सञ्चयनात्पूर्वं सचैलस्नानमूर्ध्वमाचमनम् । *हीनवर्णेषु तु संचयनात्प्राक् सचैलमूर्ध्वं स्नानमात्रम् । विप्रस्य क्षत्रवैश्यविषये तु ब्राह्मे—

अस्थिसञ्चयने विप्रो रौति चेत्क्षत्रवैश्ययोः ।
तदा स्नातः सचैलस्तु द्वितीयेऽहनि शुध्यति ॥
कृते तु सञ्चये विप्रः स्नानेनैव शुचिर्भवेत् ॥

---

ति । उत्सर्गस्य प्रागुक्तापवादमुक्तविषयत्वादस्य समोत्कृष्टपरत्वम् । *कृच्छ्रैरिति । गुरुलघूनां विजातीयानामेव प्राजापत्यसान्तपनादीनां ग्रहणं न तु त्रिःप्राजापत्यस्य, संख्यायाः पृथक्त्वनिवेशितत्वात् । आशौचे तु सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यादिति वक्ष्यति । भृत्यादिना दाहादावपि आशौचप्रायश्चित्ते द्विगुणे धर्मार्थे उक्तम्—*सवर्णेति । उत्कृष्टवर्णोऽपि बोध्यः । *समोत्तमवर्णयोरिति । ब्राह्मणेऽब्राह्मणादेरित्यर्थः । सचैलपदं सम्पातायातम् । *हीनवर्णेष्विति । क्षत्रिये क्षत्रियादेर्वैश्ये वैश्यादेः शूद्रे शूद्रस्य चेत्यर्थः ।

मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु ।
तावद्योऽबान्धवस्तत्र रौति तद्बान्धवैः सह ॥
तस्य स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् ।

अबान्धवः असपिण्डः समहीनान्यतरवर्णः नतु ब्राह्मण एव मानाभावात् । ततः अस्थिसञ्चयनानन्तरम्,

सचैलं स्नानमन्येषामकृते चास्थिसञ्चये ।
कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम् ॥

क्षत्रियस्य वैश्येऽप्येवम्। *शूद्रे तु सञ्चयनात्प्राक् विप्रस्य त्रिरात्रम्। *क्षत्रवैश्ययोर्द्विरात्रम्। ऊर्ध्वं तु द्विजानामेकाहः। शूद्रस्य शूद्रे स्पर्शं विना सञ्चयात्पूर्वमेकाहः। ऊर्ध्वं सज्योतिरिति माधवीये ज्ञेयम्। शुद्धितत्त्वे पारस्करस्तु—

अस्थिसञ्चयनादूर्ध्वं मासं याव*द् द्विजातयः।
दिवसेनैव शुध्यन्ति वाससां क्षालनेन च॥
*सजातेर्दिवसेनैव त्र्यहात्क्षत्रियवैश्ययोः॥

इत्युक्तम्। सपिण्डानां रोदननिर्हारादावदोष इत्युक्तं प्राक्। विज्ञानेश्वरस्तु—

मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम्।
वर्जयेत्तदहोरात्रं दानश्राद्धादिकर्म च॥

---

इति ब्राह्मादिति शेषः। क्षत्रविट्शूद्रजन्मनामन्येषामिति सम्बन्धः। *एवमिति। तुल्यत्वादित्यभिप्रायः। *शूद्रे त्विति।

अस्थिसञ्चयनादर्वाग् यदि विप्रोऽश्रु पातयेत्।
मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुद्ध्यति॥

इति पारस्करोक्तेः। *क्षत्रेत्यादि। अत्र प्रमादः—शुद्धितत्त्वे पारकरस्तु अस्थीत्यादि। तुर्ह्यर्थे अप्यर्थे च। एवञ्च इति हि पारस्कर इति योजयित्वा शुद्धितत्त्वेऽप्युक्तमिति योजनया शुद्धितत्त्वे पारस्करस्तु इत्युक्तमिति रचनाऽसङ्गतिः प्रत्युक्ता। तुरिति निपातेन कर्तृत्वाभिधानाद्वा पारस्करपदे प्रथमा। तथाच पारस्करेणोक्तमित्यर्थः। *द्विजातयः ब्राह्मणक्षत्रियवैश्याः। *सजातेरिति। अस्यायमर्थः—सजातेः शूद्रस्यास्थिसञ्चयनादर्वाक् स्पर्शं विनाऽनुगमने रोदने चाहोरात्रेण शुद्धिः। तत ऊर्ध्वं रात्रौ चेद्रात्र्या दिवसे चेदह्नेति। अन्ये तु सजातेरित्यस्थिसञ्चयनात्प्रा-

इति पारस्करोक्तेः सर्वत्रैकरात्र*माह ॥

अथाशौचान्नभक्षणे विष्णुः—*'ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचव्यपगमे प्रायश्चित्तम्' इति । अज्ञाने त्वङ्गिराः—

अन्तर्दशाहे भुक्त्वान्नं सूतके मृतकेऽपि वा ।
अस्याशौचं भवेत्तावद्यावदन्नं व्रजत्यधः ॥

प्रायश्चित्तं त्व*मत्या विप्रस्य वर्णक्रमेणैकाहत्र्यहपञ्चाहसप्ताहोपवासाः, दश विंशतिः षष्टिः शतं च प्राणा-

---

कालिकाविषयम् । तेन तत्र सजातेः शूद्रस्य तद्गृहवासादावहोरात्रं च यथा प्रागुक्तं सचैलमित्याहुः । *आहेति । स्नानमात्रादिशोधकान्तविषयं परिहृत्याहोरात्रस्य व्यवस्थापनसम्भवात्सर्वत्रेत्यसङ्गतमित्यस्वरसः । *ब्राह्मणादीनामिति । बुद्धिपूर्वं तदन्नाशने । सकृदपीत्यर्थं एव । यदह्नि आश्रावितमारभ्य यावत्तेषामाशौचं शिष्टं तावदाशौचविधानान्निर्हृत्य तदन्नभोजने केषांचित्त्रिरात्रोक्तिरशुद्धैव । आपदि तु कामतोऽकामतो वा तदन्नभोजने—

यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः ।
तावन्त्यहान्यशौची स्यात् प्रायश्चित्तं ततश्चरेत् ॥

इति कौर्मं बोध्यम् । *अमत्येति । सकृदिति शेषः ।

अज्ञानाद् भुञ्जते विप्राः सूतके मृतके तथा ।
एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनम् ॥
ततः शुचिर्भवेद्विप्रः पञ्चगव्यं पिबन्नरः ।

एकाहाशौचादि क्रमेण योज्यम् ।

प्राणायामशतं कृत्वा शुद्ध्यते शूद्रसूतके ।
वैश्ये षष्टिर्भवेद्राज्ञि विंशतिर्ब्राह्मणे दश ॥

यामाः पञ्चगव्याशनं च । *अभ्यासे द्विगुणम् । *आपदि तु प्राणायामशतं पञ्चशतमष्टसहस्रं गायत्रीजपश्च । मत्यापदि तु *सवर्णाशौचे त्रिरघमर्षणं गायत्र्यष्टसहस्रं च । क्षत्रियाशौचे उपवासः । वैश्याशौचे त्रिरात्रोपवासश्च । शूद्राशौचे कृच्छ्रः । क्षत्रवैश्ययोः पञ्चशतमष्टशतं गायत्रीजपः । उत्तमेषु शूद्रस्य सर्वत्र स्नानम् ।

---

इति छागलेयस्मरणं द्रष्टव्यम् । *अभ्यासे इति । अमत्येति वर्तते । एतदेवेति शेषः । *आपदीति । अमत्येति वर्तते सकृदिति च ।

अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा ।
प्रायश्चित्तं कथं तत्र चातुर्वर्ण्ये विधीयते ॥
गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके ।
विशः पञ्चशतेनैव क्षत्रियस्य शतेन च ॥
ब्राह्मणस्य तथा भुक्ते प्राणायामेन शुद्ध्यति ।

इति पराशरोक्तम् । *सवर्णाशौचे त्रिः इति । कामतः सवर्णस्याशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तन्निमग्नः त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्रं जपेत् । क्षत्रियाशौचे ब्राह्मणस्त्वेतदेव उपोषितः कृत्वा शुद्ध्यति वैश्याशौचे ब्राह्मणस्त्रिरात्रोपोषितश्च । ब्राह्मणाशौचे राजन्यः क्षत्रियाशौचे वैश्यः स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत् ।

वैश्यश्च ब्राह्मणाशौचे गायत्र्यष्टशतं जपेत् ।
शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यव्रतं चरेत् ॥

शूद्रश्च द्विजाशौचे स्नानमाचरेत् । शूद्राशौचे शूद्रः स्नात्वा पञ्चगव्यं पिबेदिति विध्युक्तम् । आपद्यभ्यासे त्वेतस्यैवावृत्तिः ।

मत्यानापदि *विप्रस्य वर्णेषु सांतपनकृच्छ्रमहासांतपन-चान्द्रायणि । अभ्यासे तु मासिकद्वैमासिकत्रैमासिकषाण्मासिकानी*त्यादि माधवीयादौ ज्ञेयम् ॥

अथ दासस्य स्वदास्युत्पन्नस्य सपिण्डमृतौ *स्नानमात्रेण स्वामिकार्ये स्पृश्यत्वम् । भक्तदासस्य त्र्यहादूर्ध्वम्,

सद्यःस्पृश्यो *गर्भदासो*भक्तदासस्त्र्यहा*च्छुचिः ।

इति स्मृत्यन्तरोक्तेः ।

---

*विप्रस्येति । सकृदन्नभोजने इति शेषः ।

भुक्त्वा तु ब्राह्मणाशौचे चरेत्सान्तपनं द्विजः ।
भुक्त्वा तु क्षत्रियाशौचे तथा कृच्छ्रो विधीयते ॥
वैश्याशौचे तथा भुक्त्वा महासान्तपनं चरेत् ।
शूद्रस्य च तथा भुक्त्वा द्विजश्चान्द्रायणं चरेत् ॥

इति मार्कण्डेयोक्तम् ।

शूद्रस्य सूतके भुक्त्वा षण्मासान् व्रतमाचरेत् ।
वैश्यस्य तु तथा भुक्त्वा त्रीन् मासान् व्रतमाचरेत् ॥
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् ।
ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती भवेत् ॥

इति शङ्खोक्तेः । *इत्यादीति । अत्र विष्णूक्तं विहाय सर्वं व्रतजातं ब्राह्मणस्यैव भोक्तुः क्षत्रियादेस्तु पादपादन्यूनं कल्प्यम् । आशौचस्पृष्टतत्स्वामिकासिद्धान्नभोक्तुस्त्विदं प्रायश्चित्तमाशौचिस्पृष्टभोजननिमित्तकप्रायश्चित्तेन समुच्चीयते निमित्ताविनाभावात्त्वात् । आशौचिस्पृष्टभोक्तुस्तु केवलम् । अनुज्ञातव्यतिरिक्तासिद्धतदीयादनीयप्रतिग्रहे तु नाशौचं किन्तु व्रतमेवार्धक्लृप्त्या योज्यमिति व्युत्पादनायादिपदम् । *स्नानमात्रेणेति । सचैलेत्यादि । *गर्भदासः स्वदास्युत्पन्नदासः । *भक्तदासः

*मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च ।
स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः ॥

इति शातातपोक्तेश्च । एतच्चा*नन्यसाध्ये तत्कार्यमात्रे । *अन्यत्र मासाद्याशौचमस्त्येव । एवं *दास्या अपि । सूतिकायास्तस्या अस्पृश्यत्वमपि मासमात्रम् ,

दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् ।
तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकम् ॥

इत्यङ्गिरसोक्तेः । षडशीतावपि—

*स्वामिशौचेन दासाद्याः स्पृश्या मासात्तु कर्मसु ।
योग्याः स्युर्मासतो दासी सूती चेत्स्पृश्यतामियात् ॥

*दत्तदासादीनां स्वसपिण्डमरणादौ स्वाम्याशौच-

---

अन्नेनोपात्तदासः । *शुचिः स्वामिकार्ये स्पर्शार्ह इति । अत्र मानमाह—*मूल्येति । *अनन्यसाध्ये इति ।

दास्यो दासाश्च यत्कर्म कुर्वन्त्यपि च लीलया ।
तदन्यो न क्षमः कर्तुं तस्मात्ते शुचयः स्मृताः ॥

इत्यादिवचनादनन्यसाध्यावश्यकतत्तत्कार्ये स्पृश्यता पर्यवसानादित्यर्थः । ननु प्रकृते शूद्रत्वादिनिमित्तकस्य सपिण्डमरणे मासाद्याशौचस्य दासत्वादिनिमित्तकः सङ्कोच एवास्त्वित्याशङ्कां निराचष्ट—*अन्यत्रेति । अन्यसाध्ये अनावश्यके च तत्कार्ये इत्यर्थः । तथाचानन्यसाध्यावश्यककार्यमात्रे स्पृश्यता अन्यत्र मासाद्याशौचमस्त्येवेति फलितम् । *दास्या इति । गर्भदास्याः सचैलस्नानमात्रात् भक्तदास्यास्तु त्र्यहात् स्पृश्यतेत्यर्थः । *स्वामीति दासादेः स्वामिशौचेन स्पृश्यत्वं, कर्मानाधिकारस्तु मासमित्यर्थः । दासो दत्तक्रीतादिः । शौचं स्वामिकार्यविशेषे स्पृश्यत्वमात्रं, न त्वाशौचसङ्कोच इत्याह—*दत्तदासादीनामिति ।

समसंख्यदिनोर्ध्वं सत्यपि मासाद्याशौचे स्वामिकार्ये स्पृश्यतेति हरदत्तः,

दासान्तेवासिभृतकाः शिष्याश्चैकत्रवासिनः ।
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके ॥

इति बृहस्पतिस्मृतेः । दासाश्चात्र—

*गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अन्नाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः ।
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

इति नारदोक्तेषु गर्भभक्तदासौ विना ज्ञेयाः । वडवा दासी तयाहृतस्तामुद्वाह्य दासो जात इत्यर्थः । अन्तेवास्यपि तेनैवोक्तः—

स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कृत्वा कालं सुनिश्चितम् ॥

---

शुद्ध्यन्ति स्पर्शार्हा भवन्ति । *गृहजात इति । गृहे स्वदास्यां जातः १, क्रीतो मूल्येन २, लब्धः प्रतिग्रहेण ३, दायादुपागतो विभागप्राप्तः ४, अन्नाकालभृतः दुर्भिक्षे दासत्वाय भरणाद्रक्षितः ५, स्वामिनाहितः धनग्रहणेनाधीनतां नीतः ६, ऋणमोचनेन दासत्वं प्राप्तः ७, युद्धे जित्वा गृहीतः ८, यदि वादे पराजितः स्यां तदा दासो भवेयमिति पणे जितः ९, तवाहं दास इति प्राप्तः १०, प्रव्रज्यावसितः संन्यासप्रच्युतः ११, कृतो वेतनादिना १२, भक्तदासः सर्वदा भक्तार्थमेव दास्यमुपगतः १३, वडवा दासी तयाऽऽहृतः तामुद्वाह्य जातो दासः १४, य आत्मानं विक्रीणीते स

आचार्यः शिक्षयेदेनं स्वगृहे दत्त*भोजनम् ॥ इति ।
शिष्य*स्तत्तुल्यो विद्यार्थी । दासादेः स्वामितत्सापिण्ड-मरणे तु विष्णुः—'पत्नीनां दासानामानुलोम्येन स्वामि-तुल्यमाशौचम्, मृते स्वामिन्यात्मीयम्', इति । प्रतिलो-मदासानामाशौचाभावः,

वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।

इति याज्ञवल्क्योक्तेः ।

*अथ *रात्रौ जनने मरणे वा—रात्रिं त्रिभागां कृत्वाऽऽद्यभागद्वये चेत्पूर्वं दिनम्, अन्त्ये तूत्तरमिति

---

आत्मविक्रेता १९ । *भोजनमिति ।

न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ।
शिक्षयेत्तामसं दुष्टं य आचार्यं परित्यजेत् ॥
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ।
शिक्षितोऽपि कृतं कालमन्तेवासी समाचरेत् ॥
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ।
गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ॥
शिक्षितश्चानुमान्यैनमन्तेवासी निवर्तते ॥

इति वचनशेषो द्रष्टव्यः ।

उत्तमस्त्वायुधी योऽत्र मध्यमस्तु कृषीवलः ।
अधमो भारवाही स्यादित्येवं त्रिविधो भृतः ॥

इति लक्षितो भृतकः । *तत्तुल्यः अन्तेवासितुल्याचरणः ।
रजोदर्शनपुत्रजन्मादेरुदयोत्तरमुत्पत्तौ तद्दिनप्रभृत्याशौचाहोरात्रग-णनायां न कस्यापि विप्रतिपत्तिः । रात्रौ तस्योत्पत्तौ त्वाह—*अ-थेति । *रात्राविति ।

रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ।
उत्तरांशः प्रभातेन युज्यते ऋतुसूतके ॥

मिताक्षरायाम् । यत्तु *प्रागर्धरात्रात् प्राग्वा सूर्योदयात्पूर्वं दिनमित्युक्तं, तत्र देशाचारतो व्यवस्था । सर्वं (१)चाशौचमाहिताग्नेर्दाहं तद्भिन्नस्य मरणमारभ्य ज्ञेयम्,

अनग्निमत उत्क्रान्तेरा*शौचादि द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ॥

इति पैठीनसिस्मृतेः । *साग्निराहिताग्निः । 'आहिता-

इति कश्यपस्मरणात् । *प्रागिति ।

उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥
अर्धरात्रावधिः कालः सूतकादौ विधीयते ।
रात्रावेव समुत्पन्ने मृते रजसि सूतके ॥
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ।

इति च काश्यपं द्रष्टव्यम् । *आशौचादीति । आदिना तन्निमित्तकसन्ध्यावन्दनत्यागादेः त्रैपक्षिकान्तप्रेतकर्मणश्च परिग्रहः । *साग्निरिति । यद्यपि विव्रीयमाणमत्राग्निमत्पदं तथापि--

अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः ।
शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथातिथि ॥

इति हारीतवचनस्थसाग्निपदस्येदं विवरणं द्रष्टव्यम् । अत्र साग्नेः संस्कारकर्मण इति श्रवणान्मृते आहिताग्नौ केनचित्प्रतिबन्धेन संस्कारविलम्बे आसंस्काराद्यथा नाशौचं तथा देशान्तरमृते तस्मिन्नपीत्यत्र पैठीनसिवाक्यस्यापेक्षितत्वम् । उभयोरपि सञ्चयनं संस्कारदिवसप्रभृति उभयोरपि मृताहो यथातिथीत्युक्त्या यत्राहिताग्नेर्विदेशमृतस्य संस्कारकर्म त्रिपक्षानन्तरं क्रियते तत्र दाहमारभ्य त्रैपक्षिकं कृत्वा तदुत्तरमासिकादिवसेऽतिक्रान्तानि मासिकानि कार्याणि दैवात्त्रिपक्षिकादिनमेवातिक्रान्तानां कालस्तदा तेन

(१) 'च' नास्ति क० छ० ।

ग्निश्चेत्प्रवसन्म्रियेत *पुनःसंस्कारं कृत्वा शववदाशौचम्' इति वसिष्ठे विशेषोक्तेः।

दाहादेव तु कर्तव्यं यस्य वैतानिको विधिः।

इति ब्राह्माच्च। *यत्तु—धूर्तस्वामिना रामाण्डारेण चोक्तम् 'आहिताग्नेरपि मरणाद्येव दशरात्रं 'दशाहं शावमाशौचम्' इति मरणनिमित्तत्वात्तस्य। यत्तु दाहादेव तस्याशौचमुक्तं तत्संस्कारनिमित्ताशौचं पृथगेव। तेन गृह्याग्नेः संस्काराङ्गं त्रिरात्रम्। श्रौताग्नेस्तु दशरात्रम्। मरणनिमित्तं तूभयोर्दशाहं दाहात्प्रागपीति।, त*द्वचनाविरोधा*त्पूर्वस्यैवोत्कर्षा*न्मूलकल्पनालाघवाच्च चिन्त्यम्।

अथातिक्रान्ताशौचम्। तत्रा*शौचमध्ये जननादौ ज्ञाते तच्छेषेण शुद्धिः,

*विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्'॥

इति मनूक्तेः। अत्र केचिदेतत्पुत्रातिरिक्तविषयम्।

---

तेषां स्वातन्त्र्यं कार्यं क्रियमाणे संस्कारकर्मण्येकादशाहे क्षयाहमा-

आब्दिकस्यैकोद्दिष्टविधिना कर्तव्यतया प्रसङ्गासिद्धिरित्यादिकमूह्यम्। *पुनरिति। काष्ठवल्लौकिकाग्निदाहस्य संस्कारत्वं नास्तीति व्यञ्जनाय पुनरिति। वासिष्ठे पुनराशौचमिति योजना। वदतो मतमुत्थापयति—*यत्त्विति। *वचनेति। उक्तहारीतवचनेत्यर्थः। *पूर्वस्यैव मरणनिमित्तकस्यैव। *मूलेति। एकमेवाशौचं मरणनिमित्तकम्, आहिताग्नौ संस्कारकर्मारम्भेऽन्यत्र मरणोत्तरं प्रवर्तत इत्युपगमादित्यर्थः। *आशौचमध्ये आशौचाधिकरणदशाहादिमध्ये। *विगतं मृतम् "पितरौ चेत्" इति वचनमनिर्दशे न प्रवर्तते निर्दशप्रकरणपाठात् किन्तु "विगतम्"

तेषां त्वाशौचमध्ये श्रवणेऽपि तदाद्येव दशाहादि ।

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥

इत्यस्य सर्वापवादत्वादित्याहुः । *तन्न, ज्ञातमरणस्य *निमित्तत्वात्, *'अनग्निमत उत्क्रान्तेः' इत्यादिविरोधाच्च । स्मृत्यर्थसारेऽपि—'जनने मरणे वा प्रथमदिनादूर्ध्वं ज्ञाते पुत्रादीनां शेषेणैव शुद्धिः' इति । षडशीतावपरार्के चैवम् । दशाहादूर्ध्वं ज्ञाते तु वृद्धवासिष्ठः—

मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा ।
अहस्तु नवमादर्वागूर्ध्वं *स्नानेन शुध्यति ॥

जनने त्वतिक्रान्ताशौचं नास्त्येव ।

---

इति मानवमेवेत्याशयेन दूषयति—*तन्नेति । *निमित्तत्वाद् आशौचानिमित्त(१)त्वात् । तथाच तस्य कालशेष एव शोधक इति भावः । मरणश्रवणस्य निमित्तत्वे बाधकमप्याह—*अनग्नीति । *स्नानेनेति उदकदानं च कार्यं "प्रेते दत्त्वोदकं शुचिः" इति वचनात् । नच—

संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति ।

इति मनुना संवत्सरोर्ध्वं स्नानोक्तेः नवममासोर्ध्वं कथं स्नानमिति वाच्यम्, तस्य संवत्सरोर्ध्वं स्नानमपि नेति भ्रमनिवृत्त्यर्थत्वात् । यत्तु देवलनाम्ना पठ्यते—

आशौचान्ते व्यतिक्रान्ते बन्धुश्चेच्छ्रूयते मृतः ।
तस्य त्रिरात्रमाशौचं पक्षिणी चार्धवत्सरे ॥
ऊर्ध्वं संवत्सरार्धात्तु श्रूयते चेन्मृतः स्वके ।
भवेदेकाहमेवात्र तच्च सन्यासिनां न तु ॥ इति ।

---

(१) दशाहाभ्यन्तरे शेषैर्दिवसैः शुद्धिरिष्यते । पुत्राणां चैव सर्वेषां सपिण्डानां समानता ॥ इति शौनकोक्तेश्च ।

नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि ।

इति देवलोक्तेः । पितुः स्नानं तत्रापि भवत्येव ।

निर्दशं ज्ञातिमरणं श्रुत्वा*पुत्रस्य जन्म च ।

सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥

इति मनूक्तेः । तच्चातिक्रान्ताशौचं दशाहादिजात्याशौचविषयम्, न त्वनुपनीतादिनिमित्तत्रिरात्रादौ ।

*उपनीते तु विषमं तस्मिन्नेवातिकालजम् ।

इति व्याघ्रोक्तेः । 'निर्दशं ज्ञातिमरणम्' *'अतिक्रान्ते दशाहे तु' इति मनूक्तेश्च । माधवीये देवलस्तु—

आ त्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः ।

परमेकाहमा*वर्षादूर्ध्वं स्नातो विशुध्यति ॥

---

तत्रार्धवत्सरस्य प्रथमार्धे त्रिरात्रमुत्तरार्धे पक्षिणी नवममासान्तमहो द्रष्टव्यम् । *पुत्रस्येति करणात् जन्मनि सपिण्डानां नातिक्रान्ताशौचम् । अन्यथा श्रुत्वा जन्म च निर्दशमित्येव ब्रूयात् । पुत्रजन्मश्रवणे स्नानोक्तेरन्येषां स्नानमपि नास्ति । *उपनीते त्विति । उपनीते मृते तु विषमं ब्राह्मणदीनां दशाहादिकं तस्मिन्नेवोपनीते मृत एवातिकालजमतिक्रान्ताशौचं नतु वयोवस्थाशौचातिक्रमे इत्यर्थः । नन्वेवमप्याचार्यसोदकादिमरणेऽतिक्रान्ताशौचप्रसङ्गः । नचेष्टापत्तिः त्रिरात्राहोरात्राद्याशौचानिमित्ते मरणे त्रिरात्राद्यनन्तरं ज्ञातेऽपकर्षस्यौचित्येन त्रिरात्रादेरनौचित्यादित्याशङ्क्याह—*अतिक्रान्तेति ।

अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही ।

त्रिरात्रं सूतकं तत्र न तद्द्रव्यस्य कर्हिचित् ॥

इति मनुनाऽतिक्रान्तविधेर्दशाहादिजात्याशौचविषयत्वोक्तेर्नाचार्याद्याशौचविषयत्वमित्यर्थः । आचार्यादेस्त्रिरात्राशौचातिक्रमेऽपि स्नानोदकदानमावश्यकम् । *आवर्षादिति । आपादो-

इत्याह । तत्रापदनापद्विषयत्वेन व्यवस्था । इदं चैकदेशे ।

देशान्तरे तु*स्नानमात्रम् ।

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः ॥

इति पराशरोक्तेरिति विज्ञानेश्वरः । स्नानं वत्सरान्ते ।

अर्वाक्त्रिपक्षात्त्रिनिशं षण्मासाच्च*दिवानिशम् ।
अहः *संवत्सरादर्वाग्देशान्तरमृतेष्वपि ॥

---

नवर्षादित्यर्थः । अन्यथा आपद्यपि नवममासोर्ध्वमेकाहापत्तेः । *स्नानमात्रमिति । स्नानोदकदानमात्रमित्यर्थः । *दिवानिशमिति । दिवाशब्देनाहर्द्वयं गृह्यते, अग्रेऽहर्मात्रविधानात् । "षष्ठमासात्तु पक्षिणी ततः" इति देवलोक्तेश्च । *संवत्सरादिति । पादोनेत्यादिः । तेनैकदेशे नवमोर्ध्वे स्नानं देशान्तरे त्वेकाह इति नाऽनौचित्यम् । ननु आत्रिपक्षादिति सामान्यतो विहितत्रिरात्रादेर्देशान्तरमृते प्राप्तौ ।

भृग्वग्निमरणे चैव देशान्तरमृते तथा ।
बालप्रेते च संन्यस्ते सद्यः शौचं विधीयते ॥

इति पराशरवचनमपवादः । अर्वाक् त्रिपक्षादिति वैष्णवे च देशान्तरमृतेष्वपीत्युक्तावपि माधवमात्रालिखिततयाऽनाश्वास इति चेत् ? न, पराशरवचनस्यासपिण्डविषयत्वात् ।

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते ।
सवासा जलमाप्लुत्य सद्य एव विशुध्यति ॥

इति मनुवचनात् । यदि चात्र चकारयोः श्रवणादसपिण्डो देशान्तरस्थ इति नार्थः तदापि मानवं पाराशरीयं च देशान्तरपदस्य प्रोषितार्थकत्वे पादोनवर्षोर्ध्वमेव प्रवर्तते । यत्तु—

देशान्तरमृतः कश्चित्सगोत्रः श्रूयते यदि ।

इति विष्णूक्तेरिति माधवः। *इदं सपिण्डानां देशान्तरे स्नानं *सोदकानामिति युक्तम्। लक्षणं त्वाह बृहस्पतिः-

*महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते॥

---

न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत्॥

इति पराशरस्य वचनम्। तत्र सगोत्रशब्दः सापिण्डपरः। सोदकानामिव तदुत्तरासगोत्राणामप्यतिक्रान्ताशौचस्यैवाप्रसक्तेः। एतदपि च देशान्तरपदस्य प्रोषितार्थकत्वे पूर्ववदेव। एतेषु त्रिष्वपि देशान्तरपदस्य पारिभाषिकदेशान्तरपरत्वेऽपि पूर्वत्रनवममासोर्ध्वमेव प्रवृत्तिर्युज्यते, नतु ततः प्रागपि; तत्र अर्वाक्त्रिपक्षादित्यपवादात्। यत्तु तत्र माधवमात्रलेखनेनानाश्वास इति कथनं तन्न युज्यते विज्ञानेश्वरग्रन्थे तदलेखेन न्यूनताया दुर्वारत्वात्। देवलवचनस्य देशान्तरपरत्वसम्भवेनाऽऽपत्परताया अशुद्धत्वाच्च। यदपि तद्वचने देशान्तरपदं प्रोषितार्थकमिति व्याख्यातं तदपि परिभाषायाः प्रवृत्तिसम्भवे तत्परित्यागग्रस्तम्। तथाचोक्तम्-

त्रिपक्ष्यां त्रिदिनं पक्षिण्याषष्ठान्नवमावधि।
एकाहस्तदनु स्नानं देशान्तरमृते स्मृतम्॥
त्रिमास्यां त्रिदिनं पश्चाद्देशान्तरवदिष्यते।

एकदेशे न तु स्नानमात्रं देशान्तरमृतावविशेषाद्दशाहोर्ध्वमिति सम्यज्ज्ञातमिति। एतदभिप्रेत्यैव विज्ञानेश्वरमतं परित्यज्य माधवमतं गृण्हाति *इदमिति। *सोदकानामिति। मानवस्य पाराशरस्य च पारिभाषितदेशान्तरमृतासपिण्डपरत्वादिति भावः। *महेति। महानद्यन्तराविशिष्टवाग्भेदो वा गिरिव्यवधानविशिष्टवाग्भेदो वार्थः वाकारैकवाक्यात्। एते च पक्षा देशभेदेन व्यवस्थिताः। शुद्धिविवेके तु षष्टियोजनान्तरत्वं तदभ्यन्तरे-

देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैवच ॥ इति ।

एतत्सर्वं मातापितृभिन्नविषयम् । तयोस्तु 'पितरौ चेत्' इति पूर्वपैठीनसिवाक्यात्सदा पूर्णमेव*दशाहादि । स्मृत्यर्थसारेऽपि–'मातापितृमरणे दूरदेशेऽपि संवत्सरोर्ध्वमपि पुत्रो दशाहादिकं पूर्णमाशौचं कुर्यात् । स्त्री(१) पुंसयोः परस्परं सपत्नीषु चैवम्' इति । शुद्धितत्त्वादयो गौडास्तु–

ऊर्ध्वं संवत्सरादाद्याद्बन्धुश्चेच्छ्रूयते मृतः ।
भवेदेकाहमेवात्र तच्च संन्यासिनां न तु ॥

इति देवलोक्तेः पित्रोरब्दमध्ये त्रिरात्रमूर्ध्वमेकाहः । बन्धुर्माता पिता भर्ता च । पूर्वोक्तदशाहस्तु कालिङ्गादिदेशपर इत्याहुः । ते बन्धुपदस्य पुत्रादिपरत्वे मानाभा-

---

ऽपि भाषाभेदगिरिमहानदीव्यवधानानि चेति पक्षद्वयमेव निष्कृष्योक्तम् । त्रिंशदन्ये इति पक्षस्तु संमतः । तदर्थश्च प्रत्यहं योजनत्रयगमनेनाशौचकालमध्ये मरणं यद्देशे ज्ञातुं शक्यं स मृतजीवतोः सदेशः सान्निधिरिति यावत् । अन्यो विदेश इति । दशाहाद्युत्तरं यदा कदाचिद्यत्र क्वापि देशे मातापितृमरणे ज्ञाते इति शेषः । *दशाहादीति । वचने दशाहशब्दस्य जात्याशौचपरत्वादेति भा-

---

(१) धर्मार्णवे पैठीनसिः–देशान्तरमृतौ भर्तुर्दशाहाच्च बहिःश्रुतम् । सम्पूर्णं सूतकं भार्या कुर्यादपि पतिस्तथा ॥ इति । तत्रैव गोभिलोऽपि–दूरदेशे मृतो भर्ता भार्या च म्रियतेऽथवा । सूतकानन्तरं श्रुत्वा दशाहं सूतकं पुनः ॥ इति । शुद्धिप्रकाशे–दूरस्था निधनं भर्तुर्दशाहाच्छ्रूयते बहिः । भार्या कुर्यादघं पूर्णं पत्न्याशौचं पतिस्तथा ॥ मातापित्रोर्यथाऽऽशौचं दशाहं क्रियते सुतैः । अनेकेऽब्देऽपि दम्पत्योस्तथैवस्यात्परस्परम् ॥ इति । धर्मप्रवृत्तौ–पत्न्या अपि तथाशौचं भवेदेवं विनिश्चितम् । पत्न्या अपि भवेद्भर्तुरित्येवं मनुरब्रवीत् । इति च ।

वादुपेक्षया। सापत्नमातुस्तु दक्षः—

पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः।
*संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत्॥

'हीनवर्णमातृषु सपत्नीषु चैवम्' इति स्मृत्यर्थसारे। केचित्—

पितुः पत्न्यां प्रमीतायामौरसे तनये तथा।

इति ब्राह्मोक्तेस्त्वौरसेऽपीदमाहुः। षडशीतावप्येवम्। एतत्सर्ववर्णतुल्यम्।

तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च।

इति व्याघ्रोक्तेः।

अथाशौचसंपाते उच्यते। तत्र शावे शावं, सूतके सूतकम्। शावे सूतकं, सूतके शावं वा। तत्राप्युत्तरं कालतः पूर्वेण समं न्यूनमधिकं चेति द्वादश भेदाः। यदैकदिने समं न्यूनमधिकं वाऽशौचद्वयं तत्र तन्त्रेणान्यसिद्धिः, द्वयोरेककालत्वात्। यदा तु द्वितीयादिदिनेषूत्तरं सजातीयं शावे जननं वा समकालं (१)न्यूनकालं वा परं स्यात्तदा षट्सु पक्षेषु*(२)पूर्वशेषेण शुद्धिः।

अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति।

इति याज्ञवल्क्योक्तेः। अन्तरा ज्ञाते इत्यर्थः, ज्ञातस्यैव जननादेर्निमित्तत्वात्। पूर्वाशौचोत्तरं तन्मध्यो-

---

वः। दूरदेशेऽपि संवत्सरोर्ध्वमपि इत्यपिभ्यां सदेशसंवत्सरपूर्वकालपरिग्रहः। *संवत्सरे इति। आशौचकालोत्तरं यदा कदाचिद्यत्र क्वचिद्देशे सपत्नमातृमरणे ज्ञाते देशकालाविशेषेण त्रिरात्रमित्यर्थः। देशकालाविशेषेण पुत्रे त्रिरात्रमयुक्तमित्यस्वरसः। *पूर्वशेषेण पूर्वाशौचकालशेषेण नवदिनादिरूपेणैवाशुद्धिनिवृ-

---

(१) 'न्यूनकालं' नास्ति क०। (२) 'पूर्वेणसिद्धिः' क०।

त्पन्ने ज्ञाते तूत्तरमेव कार्यम्। शुद्धितत्त्वेऽप्युक्तं–पूर्वाशौचान्तरुत्पन्नं समानं लघु वा निमित्तं तत्कालादुपरि श्रुतं स्वाशौचहेतुरेव। अज्ञातं तु न।

अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचन।

इत्यस्याशौचसांकर्येऽपि प्रवृत्तेः। तेनाज्ञानाद्वृषोत्सर्गादौ कृते पश्चात् (१)ज्ञातेऽपि नावृत्तिरिति। माधवीये यमोऽपि—

जनने जननं चेत्स्यान्मरणे मरणं तथा।
पूर्वशेषेण शुद्धिः स्यादुत्तराशौचवर्जनम्॥

अत्र केचित्—

अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्॥

इति *मनुपराशराद्यैर्दशाहग्रहणात्पूर्णाशौचे एव पूर्वशेषेण शुद्धिः। *त्र्यहाद्यल्पाशौचसंपाते तूत्तरेणैव शुद्धिरित्याहुः। हरदत्तोऽप्येवमाह। गौडा अप्येवम्। तन्न, *याज्ञवल्क्यादिवशेन *दशाहस्य तुल्यकालाशौचोपलक्षणत्वात्।

समानाशौचसंपाते प्रथमेन समापयेत्।
असमानं द्वितीयेन धर्मराजवचो यथा॥

---

त्तिः। *मनुपराशराद्यैरिति। आद्यपदेन।

पुनः पाते दशाहात् प्राक् पूर्वेण सह गच्छति।

इत्याद्यग्रिमदेवलवचने 'दशरात्रेष्वयं विधिः' इत्यादिग्रहः। *त्र्यहादीति। आदिना पक्षिण्यादेः सम्पातपरिग्रहः। *याज्ञवल्क्यादिवशेन "अन्तरा जन्ममरणे" इति योगीश्वरवचनैकमूलकल्पनानुरोधेन। *दशाहस्येति। देवलादिवचने दशरात्रश-

---

(१) 'ज्ञानेऽपि' क० 'तज्ज्ञानेऽपि' छ०।

इति माधवीये शङ्खोक्तेः । अपरार्कमिताक्षरादिविरोधाच्च ।

यदा तु सूतके शावं समं न्यूनमधिकं वा तदा न पूर्वशेषाच्छुद्धिः । तदाहाङ्गिराः—

सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् ।
तत्राधिकृत्यं मृतकं शौचं कुर्यान्न सूतकम् ॥

षट्त्रिंशन्मते—

शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी ॥

चतुर्विंशतिमतेऽपि—

मृतेन शुध्यते जातं न मृतं जातकेन तु ।

अतो यदा दशाहजननमध्ये तदन्ते वा त्र्यहादि शावं तदा पूर्वेण शुद्धावपि तन्निमित्तमस्पृश्यत्वं भवत्येव ।

मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ।

इति कौर्माच्च । गौतमव्याख्यायां वृद्धात्रिरपि—

सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम् ।
आर्तवाद्द्विगुणा सूतिस्ततोऽपि शवदाहकः ॥

अत्र पूर्वपूर्वेण नोत्तरोत्तरनिवृत्तिरस्पृश्यत्वाधिक्याद्दित्यर्थः । षडशीतावपि—

स्वभाववह्निसूतिस्तु न्यूनशावविशोधिनी । इति ।

---

च्देस्येत्यपि द्रष्टव्यम् । तुल्यकालेति न विवक्षितम् । किन्त्वाशौचमात्रम् । अन्यथा त्रिरात्राशौचमध्ये दशरात्रपाते प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायापवादकपूर्वशेषशुद्धेरप्रसक्त्यापत्तेः । न चेष्टापत्तिः, तथा सति तदपवादकानाम् "अघवृद्धिमदाशौचम्" इत्यादीनामव्यप्रवृत्त्या तेषामानर्थक्यप्रसङ्गात् । एवञ्च योगीश्वरवाक्यस्य मनु-

*रात्रिशेषादौ वर्धितद्वित्रिदिनैरागन्तुकैः सूतेर्बहुत्वं न स्वभावेन। अतस्तत्र न्यूनशावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेत्युक्तम्। ब्राह्मेऽपि—

नागन्तुकैरथाहोभिराशौचमपनुद्यते।

न च पातनिमित्तेन शावस्यान्यस्य शोधनम्॥ इति।

एवं नव पक्षाः। यदा तु त्र्यहाद्यल्पाशौचमध्ये सजातीयं विजातीयं वा दीर्घकालमुत्तरं, (१)तदाप्युत्तरं पूर्णं कार्यं न पूर्वेण शुद्धिः।

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि।

न पूर्वेण विशुद्धिः स्यात् स्वकालेनैव शुध्यति॥

इत्युशनसोक्तेः। तेन त्र्यहादिशावमध्ये दशाहादिसूतकेऽपि न पूर्वेण शुद्धिरित्यपरार्कः। शावनिमित्तमस्पृश्यत्वं च भवत्येव। शुद्धिविवेके तु—'शावेन शुध्यते सूतिः' इति प्रागुक्तेस्तत्राप्युत्तराशौचनिवृत्तिरुक्ता। तन्न, *उत्तरस्य कालाधिक्येन बलवत्वात्। माधवीये यमोऽपि—

*अघवृद्धिमदाशौचं पश्चिमेन समापयेत्।

यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि॥

आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यति॥ इति।

हारीतोऽपि—

---

पराशरदेवलवाक्यादिनोपसंहार इत्यपि न। एवञ्च तुल्यकालेति स्वरूपकथनमात्रं बोध्यम्। *रात्रिशेषादाविति। अन्येतु मते अहोरात्रादिशेषादाविति सिद्धान्तः। *उत्तरस्येति। "शावेन शुद्ध्यते सूतिः" इत्यादेर्विजातीयसमकालाशौचसन्निपाते शावेन शुद्धिरित्यर्थान्न विरोधः। ननु स्वल्पशावेन दीर्घसूत्याशौचनिवृत्तौ

---

(१) 'तदाप्युत्तरं' नास्ति क०।

गुरुणा लघु शुध्येत्तु लघुना नैव तद् गुरु। इति।

गुरुत्वं लघुत्वं च कालकृतमेव, पूर्वानुरोधात्। एतच्च हरदत्तेन स्पष्टमुक्तम्। मिताक्षरायामप्येवम्। यत्तु—

*अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्॥

इति हारीतकौर्मादि। *तत्रास्पृश्यत्वाभिप्रायं शावस्य गुरुत्वं ज्ञेयम्।

*क्वचिदल्पकालेनापि दीर्घकालाशौचनिवृत्तिमाह देवलः—

*परतः परतोऽशुद्धिरघवृद्धौ विधीयते।
स्याच्चेत्पञ्चतमादह्नः पूर्वेणैवात्र शिष्यते॥

अस्यार्थः *अघवृद्धौ दीर्घाशौचे *परतोऽशुद्धिः पर-

---

कुतो न तत्तात्पर्यम्। तत्राह—*अघमवृद्धिमदिति। *अघानामिति। पूर्वार्द्धमपोह्य समकालमसमकालं वा मरणं गरीय इत्युत्तरार्द्धेन लघुशावेन दीर्घसूत्याशौचनिवृत्तिसिद्धिरित्यभिमानं निरस्यति। *तत्रेति। उत्तरस्य स्वरूपनिवृत्तिस्वीकारे उशनोवाक्यविरोधः। किञ्च अघानामित्यत्र समकालीनविजातीययोः सन्निपाते शावेन शुद्धेरुत्तरार्धार्थतया सजातीयविजातीयविषमाशौचपाते गुरुणा शुद्धिरूपपूर्वार्धापवादासम्भवः। अघानामित्यस्योक्तार्थत्वेन दशाहसूत्याशौचनवमाहोरात्रे त्र्यहशावपाते पूर्वेणैव शुद्धिः "न सूतिः शावशोधनी" इत्यस्य समानाधिकयोः प्रवृत्तेरुक्तेः। अनेनैव न्यायेन त्र्यहसूतकोपान्ते पाक्षिण्येकाहशावपातेपूर्वशेषेण शुद्धिर्द्रष्टव्या। माधवमत आह—*क्वचिदिति। *परत इति। सार्वविभक्तिकस्तसिः। तेन क्वचित्सप्तम्यर्थे षष्ठ्यर्थे तृतीयार्थे च। *अघेति। स्वल्पपूर्वाशौचात् परतस्तन्मध्ये इत्यादिः। *परतः

माशौचम् । *यदि पूर्वाशौचमुत्तरस्य पञ्चमदिनात्परतोऽनुवर्तते तदा पूर्वेणैव शुद्धिः । *पूर्वस्योत्तराशौचार्धाधिककालव्यापित्वे पूर्वशेषाच्छुद्धिरित्यर्थः । यथा षष्ठे मासे गर्भपातनिमित्तषडहाशौचमध्ये दशाहपाते पूर्वेणोत्तरनिवृत्तिः । यथा वा त्र्यहमध्ये स्रावपातनिमित्तचतुरहपञ्चाहयो*रिति कश्चित् । *तन्न, *दशाहावधि

परेण । एवमुशनोवाक्यार्थमनूद्यापोदितस्य "स्याच्चेत्" इत्यादेरर्थमाह—*यदीति । पञ्चशब्दस्याशौचार्धोपलक्षणतामाह—*पूर्वस्येति । चतुरहान्तर्विदेशस्थमरणे श्रुते शेषशुद्ध्या तत्पञ्चदिनाधिकमाशौचम् । तत्र दशाहपाते पूर्वेण शुद्धिरित्याद्यपि द्रष्टव्यम् । एवं क्षत्रियाद्याशौचेपि योज्यम् । *इति कश्चिदिति । अत्रेतीति कश्चिदिति चच्छेदः । एतेनात्र किं दूषणीयम् । न तावदुशनोवाक्यस्य प्रामाणिकत्वं, तस्य विज्ञानेश्वरेण लिखनात् । नापि देवलवाक्यस्य तथात्वं, मिताक्षरायां तदलेखने शङ्कररघुनाथप्रभृतिभिः सकलनव्यैस्तत्परिग्रहात् । तस्योशनोवाक्यार्थापवादत्वेन दोषयोरलग्नकत्वाच्चेति प्रत्युक्तम् । तस्मात् यदित्यध्याहारेण यत्कश्चिदित्यनेन शुद्धिविवेकोक्तदेवलवाक्यार्थोऽध्याहृतयच्छब्दार्थतया ग्रन्थकृदभिप्रेतः स चैषः । चतुर्धाविभक्तपूर्वप्रवृत्ताशौचभागद्वयात्तु परतः अघवृद्धौ सजातीयसम्पूर्णाशौचान्तरपाते परतः परेणातीतेन शुद्धिर्नतु पूर्वेण । पञ्चतमादह्नः पूर्वेणाद्यभागद्वयमध्ये तादृशाशौचान्तरपाते तु पूर्वेणैवाशौचेनातीतेन निवृत्तिरिति ।

> आद्यं भागद्वयं यावत्सूतकस्य तु सूतके ।
> द्वितीये पतिते त्वाद्यात्सूतकाच्छुद्धिरिष्यते ॥
> अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः ।
> एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥

इति ब्रह्मपुराणात् । आदशाहाद्यशौचभागद्वयमध्ये सजा-

**पूर्वशेषशुद्ध्यावेदकवाक्यविरोधात्। *षष्ठादिदिने पूर्णाशौचमन्त्यरात्रौ तु द्व्यह इत्यनौचित्याच्च। *अस्मद्गुरवस्तु पञ्चतमादह्न आ(१)शौचं ततो न्यूनं त्र्यहादि चेत्स्यादस्मिन्विषये (२)पूर्वेणैवाशुद्धिः शिष्यते। दशाहादिरात्रिशेषे त्र्यहादिपाते त्र्यहाद्यल्पाशौचानां परस्परं रात्रिशेषे संपाते च न द्व्यहादिवृद्धिरित्यर्थमाहुः।** काचितीयसम्पूर्णद्वितीयाशौचपाते पूर्वाशौचापगमेन शुद्धिः। तदुपर्युपान्त्यद्वि[दि]नपर्यन्तं तत्पाते द्वितीयापगमेन अन्त्यतद्दिने तदनन्तरदिनद्वयेन तद्दिनरात्र्यन्तयामे तदनन्तरत्र्यहेण।

रात्रिशेषे त्र्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्।

इति वचनादिति व्यवस्थेति। तन्निरस्यति—*तन्नेति। *दशाहेति। "अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचमानवमात्" इति बौधायनवाक्यस्थेनाऽऽनवमादित्यनेन विरोधादित्यर्थः। *षष्ठादीति। षष्ठसप्तमाष्टमनवमदिनेष्वाशौचान्तरपाते दशमादिनोत्तरपञ्चषट्सप्ताष्टादिनेषु तदनुवृत्तिः दशमादिनतद्रात्र्यन्त्ययामयोस्तत्पाते तु द्वित्रिदिनयोरेव तदनुवृत्तिरित्यनौचित्यादित्यर्थः। ब्रह्मपुराणवाक्यार्थस्य प्रदर्शनीयतया न तद्विरोध इति भावः। मिताक्षरायां देवलवाक्यस्यालिखनेन विज्ञानेश्वरमते तादृशविषयाभावादस्तु तस्यानाकरत्वम्। वस्तुतस्तु तदलेखमात्रेण तस्यानाकरत्वं न वक्तुं शक्यं, माधवेन तल्लिखनात्। शङ्करप्रभृतिभिर्निबन्धैः पूर्वाशौचस्योत्तराशौचाधाधिककालव्यापित्व इत्यर्थकत्वेन ग्रन्थकृता च परिग्रहाच्च। अत एव विज्ञानेश्वरानुयायिनोऽन्येपि तत् परिगृह्णन्त्येव। परेत्वर्थान्तरं वर्णयन्ति इत्याह—*अस्मद्गुरवस्त्विति। अत्र पञ्चपदस्य नाशस्यं चतुर्थादित्युक्तावपि तादृशार्थलाभादित्यस्वरसः। सूर्योदयात् प्राचीनः

(१) 'आपततो न्यूनं' क०छ०। (२) पूर्वेणैव शुद्धिः' क०।

त्पूर्वशेषेण शुद्धेरपवादमाह गौतमः—'रात्रिशेषे सति द्वाभ्यां, प्रभाते तिसृभिः' इति । *प्रभातेऽन्त्ययामे ।

रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् ।

इति शातातपोक्तेः । इदं शावान्ते सूतकपाते सजातीये वा तुल्यम् । *अत्र केचित् । रात्रिशब्दोऽहोरात्रपरः । 'अहःशेषे द्वाभ्यां प्रभाते तिसृभिः' इति शङ्खलिखितोक्तेः । 'अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचमानवमाद्दिवसादत ऊर्ध्वं द्विरात्रेण व्युष्टायां त्रिरात्रेण' इति बौधायनोक्तेः ।

पुनःपाते दशाहात्प्राक् पूर्वेण सह गच्छति ।
दशमेऽह्नि पतेद्यस्याहर्द्वयात्स विशुध्यति ॥
प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिः ।

इति देवलोक्तेश्च । नवमदशमशब्दौ चोपान्त्यान्त्यदिनपरौ । तेन क्षत्रियादावपि तथेत्याहुः । माधवीयेऽप्येवम् ।

*अन्ये त्वाहुः—

अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी ।

---

प्राची प्रकाशकालः प्रभातो न ग्राह्य इत्याह—*प्रभाते इति । स्वसंमतं मतमाह—*अत्र केचिदिति । *अन्ये त्विति अस्वरससूचनाय । वाचस्पतेरनाकरोक्त्योक्तिः प्रामादिकी । विज्ञानेश्वरमाधवादिभिः प्रोक्तवचनानामलिखनात् । रात्रिमात्रावशिष्टे इति मिताक्षरास्थरात्रिपदं च कथं भीषणम् ? एवं हि विज्ञानेश्वरपङ्क्तिः—"रात्रिमात्रावशिष्टे पूर्वाशौचे यद्याशौचान्तरं सन्निपतेत्तर्हि पूर्वाशौचं समाप्यानन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः प्रभाते पुनस्तथा रात्रेः पश्चिमे यामे तिसृभी रात्रिभिः न पुनस्तच्छेषमात्रेण" । शातातपेनाप्युक्तम्—

रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात् । इति ।

तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥

इति मनुपराशराद्यैर्दशमादिनेनोत्तरस्य शुद्धेरुक्तत्वाद्विरोधः स्पष्ट एव। विरोधे च 'यद्वै किंचन मनुरवदत्तद्भेषजम्', 'कलौ पाराशरस्मृतिः' इत्यनेन पूर्ववचसां बाधः। अतएव वाचस्पतिना तेषामनाकरत्वमुक्तम्। साकरत्वेऽपि जातिमात्रविप्रादिविषयं देशान्तरविषयं युगान्तरविषयं वास्तु। तेन गौतमीये रात्रिशब्दो नाहोरात्रपरः 'रात्रिमात्रावशिष्टे' इति मिताक्षरोक्तेश्च न कुक्कुटिकृलेरिवान्यथा व्याख्या युक्ता। माधवस्तु 'अनिर्गतदशाहम्' इति पूर्वस्वग्रन्थविरोधादुपेक्ष्य इति। अस्मत्पितृचरणास्तु बौधायनीये-'आनवमाद्दिवसात्' इति द्वितीयाशौचस्य नवमं दिनं प्रथमस्य दशममेवाहुः। *द्व्यहादिवृद्धेः पूर्वशेषापवादत्वात्। *तस्य च न्यायतो द्वितीयदिनादेव प्रवृत्तेः अत ऊर्ध्वमिति दशमरात्रिपरम्। शङ्खलिखितोक्तौ देवलोक्तौ चाहःशेषे दशमेऽह्नि चातीते रात्रौ पतेदित्यर्थः, दशम्यां पिता नाम कुर्यादितिवत्। तेन न मन्वाद्यैर्विरोधो नापि मिताक्षराद्यैरित्याहुः*। अपरार्के निर्णयामृतस्वरसोऽप्येवम्। यत्तु तत्रैव ब्राह्मे-

---

शातातपीयाहःपदेन रात्रिं कथमालक्षीत कथं वा रात्रिपदेन तत्राहोरात्रलाभः। अथ दिने आशौचसत्त्वे मण्डूकप्लुतिभयेन तावन्मात्रस्य प्रकरणादहोरात्रार्थकत्वमुपेयते तावतैव विशेषप्रतिपत्तेर्व्याख्यानं कुर्प इति दशाहदशरात्रादिव्यवहारस्याहोरात्रगर्भार्थकतया प्रथमरात्रिशब्दस्य प्राकरणिकतदर्थकत्वेनैव विशेषप्रतिपत्तेस्तादृशार्थे व्याख्यानानपेक्षणादिति। नचैवंविधविषये द्विरात्रादिवृद्धिप्रसङ्गः "अत ऊर्ध्वं द्विरात्रेण" इत्यनुपदमुक्तेरित्यत आह-*द्व्यहादीति। *तस्य द्वितीयाशौचस्य। *आहुरिति। अने-

आद्यं भागद्वयं यावत्सूतकस्य तु (१)सूतकम्।
द्वितीयं पतति त्वाद्यात्सूतकाच्छुद्धिरिष्यते॥
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः।
एवमेव विचार्यं स्यान्मृतके (२)मृतकान्तरम्॥
मृतकस्यान्तरे यत्र सूतकं प्रतिपद्यते।
सूतकस्यान्तरे वाथ मृतकं यत्र विद्यते॥
मृतकान्ते भवेत्तत्र शुद्धिर्वर्णेषु सर्वशः॥ इति।

---

नाऽऽनवमाद्दिवसादित्यस्योक्तव्याख्यानेन यत्र द्वितीयाशौचं तृतीयादिदिने तत्राष्टदिनाद्युपलक्षणत्वं वाच्यं तादृशव्याख्याने प्रयोजनाभावश्चेत्यस्वरसः सूचितः। वस्तुतस्तु आनवमाद्दिवसादित्याङोऽभिविध्यर्थकतया नवमपदे दशमलक्षणायाश्चाप्राकरणिकतया अत ऊर्ध्वमित्यतः शब्देन दशमदिनमेव लभ्यते न तु रात्रिः। शङ्खलिखितोक्तौ देवलोक्तौ चातीते इति पूरणं निर्बीजं "दशम्यां पिता" इत्यादौ दशम्या नामकरणाङ्गशुचित्वकल्पनभयेन तत्पूरणात्। मिताक्षरास्थरात्रिपदस्य यथाश्रुतार्थसंरक्षणमयं भवादृशास्यौद्धत्याद्यतिशयमेवाविष्कुर्यात्। तस्याहोरात्रार्थकत्ववादिनां तु आर्षवचसामनायासारब्धयथाश्रुतार्थसंरक्षणम्। अपरार्कादिसर्वग्रन्थेष्वपि रात्रिपदमहोरात्रार्थकमेवेति सिद्धान्तः। मयूखकृतस्तु आशौचान्त्यरात्रावेवाशौचान्तरपाते त्र्यहवृद्धिः, रात्रिशेष इत्यत्र लक्षणायां मानाभावात्। परिभाषा तु त्रिरात्रदशाहादिपरा। अन्यथा दशाहादिविधिना रात्रावाशौचाभावेन पञ्चयज्ञाद्यनुष्ठानप्रसङ्गात्। तत्र "संध्यां पञ्चमहायज्ञान्" इत्यारब्धप्रवृत्तेः "दशाहं शावमाशौचं" "दशरात्रमतः परम्" इत्यादेः समानार्थकस्य दर्शनाच्चेत्याहुः। अत्र सर्वत्रापि पूर्वप्रवृत्ताशौचशेष एवोत्तराशौचा-

---

(१) 'सूतके। द्वितीये पतिते' क० ख०।
(२) 'मृतकान्तरे' क० ख०।

अस्यार्थ*स्तत्रैवोक्तः । पूर्वाशौचचरमाहोरात्रस्य दिनरूपे आद्यभागद्वयेऽन्याशौचपाते पूर्वेण शुद्धिः । भागद्वयोर्ध्वं रात्रौ सूतकान्तरे द्वितीयात्पूर्वभिन्नात्सूतकान्ताद् द्व्यहादिरूपाच्छुद्धिरिति । *अपरार्के त्वाशौचकालं (१) त्रेधा विभज्य निर्गुणाविषयत्वेनेदमुक्तम् । अस्य वचनस्य *निर्मूलत्वोक्तिर*ज्ञोक्तिरेव । अतः पूर्वाशौचा*न्त्यरात्रावन्याशौचेऽहोरात्रद्वयमाधिकं रात्रेरन्त्ययामे तु दिनत्रयमिति भट्टचरणोपदिष्टः पन्थाः ।

---

पादको नतु ज्ञातस्तज्ज्ञानं वा । *तत्रैवोक्त इति । वस्तुतस्तु अन्तरा पतितसूतकस्य चतुर्द्धा विभक्तस्य आद्यभागद्वयमर्द्धं यावत्पर्यन्तं तदाधिककालाव्यापिनि लघुनि पूर्वप्रवृत्तसूतके द्वितीये पतिते आद्यात् सूतकस्य तु सूतके इत्यत्र प्रथमनिर्दिष्टादन्तःपातिसूतकादेव शुद्धिर्नतु पूर्वात् । अतः अर्धादूर्ध्वं तदधिककालव्यापिनि लघुन्यपि सूतके तदधिके द्वितीये पतिते द्वितीयात्तत्रैव चरमनिर्दिष्टात्सूतकादेव शुद्धिः । एवं शावाशौचेऽपीति तदर्थः । तदेव "परतः परतोऽशुद्धिः" इति पूर्वोक्तदेवलवाक्यसमानार्थमेतादिति । *अपरार्के त्विति । अस्वरसः । स च आशौचकालस्य चतुर्धा विभागस्य स्फुटतरस्य परित्यागोऽनुचितः । तदुपगमेऽप्यर्थसाम्राज्यादिति । *निर्मूलोक्तिरिति । "आनवमाद्दिवसात्" इति बौधायनवाक्ये "दशमेऽह्नि पतेद्यस्य" इति देवलवाक्ये च नवमदशमशब्दयोरुपान्त्यान्त्यदिनोपलक्षणतया एतद्वाक्यस्य चरमाहोरात्रविषयत्वस्य वाक्यात् प्रकरणाद्वा लाभाभावे तद्विरोधादिति भावः । *अज्ञोक्तिरिति । चरमाहोरात्रस्योक्तव्याख्यानलब्धत्वादिति शेषः । *अन्त्यरात्राविति । अन्त्याहोरात्र इत्यर्थः, भट्टचरणैरप्युपसंहारात् । तैः स्वग्रन्थे अन्त्याहोरात्रस्यैवोक्त-

---

(१) 'त्रिधा' क० छ० ।

*एतत्संपूर्णाशौचसंपाते एव। *रात्रिशेषे *त्रिरात्रादिसंपाते तु पूर्वशेषेणैव शुद्धिः। द्विरात्रादिवृद्धेः पूर्ववाक्यैर्दशाहविषयत्वादपवादाभावे शेषशुद्धेरेव सामान्यतः प्रवृत्तेः। षडशीतौ तु *(१)दशाहान्ते त्र्यहपातेऽपि द्वित्रिदिनवृद्धिरुक्ता।

रात्रिशेषे यदाशौचं पूर्वानभिक्रमापनेत्।
ऊर्ध्वं दिनद्वयं पूर्वाद्यामशेषे दिनत्रयम्॥ इति।

अनधिकं समं न्यूनं वा। तत्तुच्छम्। *निर्मूलत्वाद*न्ते पक्षिण्यादिपातेऽपि द्विरात्रादिवृद्ध्यापत्तेश्च।

---

त्वात्। अत्र चरमाहोरात्रमध्ये द्व्यहत्र्यहव्यवस्था। सामान्यतः शावान्ते सूतकपाते सजातीयैरयुक्तं तत्र विशेषमाह—*एतदिति। *रात्रिशेषे इति। अहोरात्रशेष इत्यर्थः। *त्रिरात्रादिति। सम्पूर्णान्तःपातिनि असम्पूर्णान्तःपातिनि वा असंपूर्णे इति फलितम्। सजातीये सजातीयपाते शावे विजातीयपाते इति चेहाप्यस्ति। *दशाहाद्यन्ते इति। आदिना त्र्यहपरिग्रहः। *निर्मूलत्वादिति। "अन्तरा जन्ममरणे" इति पूर्वशेषशुद्ध्यावेदकवाक्ये विशेषानुपादानात् दशाहे त्र्यहादौ वा त्र्यहाद्विपाते प्रवृत्तिर्निष्प्रत्यूहा। एवं बौधायनादिवाक्ये क्षत्रियादिसम्पूर्णाशौचोपलक्षणतया दशरात्रादिपदस्यावश्यकतया लाघवेनाशौचमात्रोपलक्षणत्वे निष्प्रत्यूहं तद्विरोधान्निर्मूलत्वं दुर्वारमित्यर्थः। अत्र लघ्वन्तः पातिदीर्घसूत्यन्तःपातिशावस्थले द्वित्रिदिनवृद्धिस्तु प्रमाणान्तरादेवेति भावः। *अन्ते इति। इदं चात्र तत्त्वम्—यत्राशौचस्यान्त्याहोरात्रेऽन्त्ययामे वा त्र्यहं पतितं तत्र पूर्वशेषेण शुद्धौ प्राप्तायां रात्रिशेष इति प्रवर्तते इत्युपेयम्। नच तत्र पूर्वशेषशुद्धिरेव न प्रसज्यते अहोभिरिति बहुवचनोपादानादिति

---

(१) 'दशाहाद्यन्ते' इति टीकानुसारी पाठः।

---

वाच्यं, बहुत्वस्याविवक्षणात् । अन्यथा "रात्रिशेषे" इति गौतमीयादेस्तदपवादत्वभङ्गः स्यात् । यत्र तु अहोरात्रशेषे वा पक्षिण्येकाहयोः पातः तत्रोत्सर्गस्य पूर्वशेषे शुद्धिविधेः प्राप्तावपि तदपवादो द्व्यहत्र्यहविधिर्न प्रवर्तते । रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिरित्यस्यापूर्वविधित्वापत्तेः । नह्ययमपूर्वविधिः किन्तु प्रतिप्रसवः । कथमिति चेत् ? यत्र हि अहोरात्रशेषे यामशेषे वा दशाहादि प्राप्तं तत्र तन्मध्यगं द्व्यहत्र्यहोभयं प्राप्तमेव । शेषाहशुद्धिविधिबलाच्च तद्बाधे प्राप्ते द्व्यहत्र्यहविधिर्द्व्यहत्र्यहोज्जीवने न प्रतिप्रसवः । एवं यत्राहोरात्रशेषे त्र्यहाशौचपातस्तत्रापि शेषशुद्धिविधिना बाधितत्र्यहोज्जीवनेन नप्रातिप्रसव एव । यत्र तु यामशेषे त्र्यहाशौचपातस्तत्र येषां रात्रेर्द्वेधा विभागेन पूर्वार्धं येषां वा रात्रेस्त्रेधाविभागेनाद्यभागं पूर्वाहः शेषस्तेषां पूर्वाशौचापेक्षया अधिकत्र्यहप्राप्तेस्तस्य शेषाहोभिरित्यपवादप्राप्तौ यामशेष इति प्रतिसवः । येषां तु "यस्याहस्तस्य शर्वरी" इति पक्षः तेषामधिकत्र्यहस्याप्राप्तत्वान्न प्रतिसवः, किन्तु पूर्वशेषेणैव शुद्धिः । ग्रन्थकारोऽप्येतदभिप्रेत्यैव पूर्वशेषशुद्धिमुक्तवान् । तस्मात्पक्षिण्येकाहयोरहोरात्रशेषे वा प्राप्तौ न द्व्यहत्र्यहवृद्धिः किन्तु पूर्वशेषशुद्धिरेवेति । ननु सम्पूर्णाशौचान्त्याहोरात्रद्व्यहत्र्यहमध्ये संपूर्णविजातीयाशौचपाते पूर्वेणैव शुद्धिः सम्पूर्ण एवाशौचे आशौचान्तरपाते "अन्तरा जन्ममरणे" इत्यादिप्राप्तायाः शेषशुद्धेः रात्रिशेष इत्यपवादः । तथाच तत्र पूर्वशेषमात्रेणाहोरात्रादिशेषेण न शुद्धिः किन्तु द्व्यहत्र्यहयुक्तपूर्वशेषेणैवेत्यर्थः । ततश्च पूर्वाशौचस्य द्वादशरात्रत्रयोदशरात्ररूपेण महत्त्वात्तत्र जायमानं तृतीयाशौचं पूर्वेण गच्छतीति न तृतीयाशौचं सर्वं कार्यमिति तत्राह—*पूर्वाशौचेति ।

तु वर्धितस्या*ल्पत्वाद*धिकेनैव शुद्धिः । नच वर्धितस्य पूर्वशेषत्वं शङ्कनीयम् *रात्रिशेषे पूर्वशेषशुद्ध्यपवादे नैमित्तिकावृत्तिन्यायोज्जीवनात् । अपवादाभावे उत्सर्गस्य प्राप्तेः ।

अपवादान्तरमाह शङ्खः—

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
*पितुः शेषेण शुद्धिः स्यान्मातुः कार्या तु पक्षिणी॥

*अल्पत्वादिति । अयं भावः—अन्तरेत्यादिविधिना । न पूर्वाशौचे कश्चिद्गुणो विधीयते, किन्तु प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायेन द्वितीये संपूर्णे प्राप्ते तत्र ह्रासरूपो गुणः । तद्विधौ पूर्वाशौचमध्ये उत्तराशौचस्य यानि नवाष्टसप्तषडादिदिनानि तैरेवोत्तराशौचापगमो भवति । तदपवादश्च रात्रिशेष इत्यादि । तेन च द्व्यहत्र्यहवर्धितपूर्वाशौचान्त्याहोरात्रादिरूपह्रासविशेषरूपो गुणः तद्वशादहोरात्रादिशेषे पूर्वाशौचान्तर्गतोत्तराशौचकालमात्रेण न शुद्धिरिति । *अधिकेनैवेति । "अघवृद्धिमदाशौचम्" इत्याद्युक्तेरिति शेषः । अथात्र द्व्यहत्र्यहयोरन्त्यदिनेऽन्त्ययामे वा तृतीयासंपूर्णाशौचपाते रात्रिशेष इति वाक्यं प्राप्नोत्येवेति चेत् ? सत्यं, यत्र पूर्वशेषशुद्धिविधायकवाक्येन द्वितीयाशौचह्रासो विधीयते तत्रैव तदपवादत्वेन द्व्यहत्र्यहरूपह्रासविशेषस्तेन विधीयते । ततश्च यद्विहितं द्व्यहस्तत्पूर्वदशमाहोरात्रसहितं त्र्यहात्मकं, यच्च विहितं त्र्यहस्तद्यामाधिकं तदुभयमप्यल्पं तत्र द्वितीयाशौचह्रासासम्भवाद्रात्रिशेषे इति ह्रासविशेषोऽपि न प्रवर्तते इति तृतीयं संपूर्णाशौचं कार्यम् । एवञ्च तत्र त्र्यहपक्षिण्यादेः पूर्वेणैव निवृत्तिरिति आभासमुट्टङ्क्य निरस्यति—*रात्रिशेषे अहोरात्रशेषे रात्रिशेषे इति वचनरूपे इति शेषः । आवर्त्यमानं च नैमित्तिकं प्रकृते ह्रासविशेषरूपमित्याशयः।*पितुः शेषेण पितृमरणनिमित्तकाशौचस्य शे-

पादत्रयं स्पष्टम्। तुर्यस्य त्वयमर्थः—पित्राशौचमध्ये मातृमृतौ पित्राशौचान्ते मातुः पक्षिणीमधिकां कुर्यादिति। (१)तत्राशुद्धावित्युक्तेरात्महादेः पितुराशौचाभावान्मातृमरणे न पक्षिणी, किन्तु पूर्णमेवाशौचम्। *इयं च पक्षिणी तृतीयादिदिनपरा, नाद्यादिनद्वये प्रतिनिमित्तनैमित्तिकावृत्तिन्यायापवाद(२)पूर्वशेषापवादत्वादिति पितृचरणाः। *सपिण्डाद्याशौचेन मातापित्रोराशौचापगमो नास्त्येव। एवं*भर्तुरपि। इयं च *पक्षिणी

---

पे(३)ण। *इयं चेति। यद्यप्याद्यदिने प्रतिनिमित्तं नैमित्तिकावृत्तिफलाभावादाशौचद्वयस्य कथञ्चिद् युगपदेव शुद्धिस्तथापि द्वितीयदिने मातृमृतौ पक्षिणी अधिका भवत्येवेति अस्वरसः। *सपिण्डादीति। यद्यपि नेदं वाचनिकं तथापि मात्राशौचेनापि न पित्राशौचनिवृत्तिः किमुतान्येन। पित्राशौचेनापि केवलेन न मात्राशौचनिवृत्तिः किमुतान्येनेत्यर्थसिद्धम्। *भर्तुरपीति। मातापितृवद्भर्तुरपि महागुरुत्वादिति भावः। सपत्नमात्राशौचं पत्न्याशौचं च पूर्वाशौचेन निवर्तते, "प्रेतस्य सुतान्" इत्यत्र [illegible] सपत्नीपत्नीपुत्रग्रहणासम्भवात्। *पक्षिणीति। अधिकपाक्षिणीमध्ये सपिण्डाशौचान्तरपाते कथमिति चेत्? इत्थम्, यत्र पित्राशौचद्वितीयाहे मात्राशौचं तन्मध्ये तृतीयं दशाहं तत्र पूर्वेण शुद्धिः पूर्वस्य महत्त्वात्। यदा तु तृतीयाद्यहोरात्राणि मात्राशौचं तत्र तृतीयं दशाहं तत्र न पूर्वेण शुद्धिः पूर्वस्य लघुत्वात् "अघवृद्धिमद्" इति वचनात्। "परतः परतः" इति देवलवाक्यस्वीकर्तृणां तु तत्र पूर्वेणैव शुद्धिः। ननु पित्राशौचे दशमाहोरात्रादौ मातृमरणे त्र्यहत्र्यहाभ्यां किं पक्षि-

---

(१) 'अत्रा' ग०। (२) पूर्वशेषापवाद' नास्ति ग०।

(३) मात्राशौचपरिच्छेदकदिनोत्तरमपेक्षितदिनेष्वनुवर्तनेन शुद्धिर्न तु मात्राशौचशेषेणेत्यर्थः।

दशमदिनात्पूर्वं मातृमरणे ज्ञेया । *दशम्यां रात्रौ तत्प्रभाते वा मातृमरणे त्र्यहत्र्यहसमुच्चिता पक्षिणीति कश्चित् । तन्न, *संख्यान्तरोपजननापत्त्या त्र्यहादिश्रुतिबाधापत्तेः । अत एवैका देया षड् देया इत्यादौ श्रुतसंख्याबाधापत्तेः समुच्चयो निरस्तो द्वादशे । *गुरुणि लघोरन्तर्गतेः 'गुरुणा लघु शुद्ध्येत' इत्युक्तेश्च । *(१)मातुरन्वारोहणे तु न पक्षिणी ।

णी बाध्यते तौ वा पक्षिण्या बाध्येते इत्याशङ्क्याह—*दशम्यामिति । अयं भावः प्रकृते सामान्यविशेषन्यायेन न बाध्यबाधभावः, यतः त्र्यहत्र्यहयोर्दशमाहोरात्रतदन्त्ययामयोः प्रवृत्त्या विशेषरूपत्वं मातापितृविषयप्रवृत्त्या विशेषरूपत्वं दशमाहोरात्रादितत्पूर्वं च प्रवृत्त्या सामान्यरूपत्वमिति । अत एव न सावकाशनिरवकाशन्यायेनापि नच विकल्पः, त्रयोदशाहादावयं शुद्धोऽशुद्धश्चेति वस्तुनि विकल्पायोगात् । नच नवमदिनं यावत् पक्षिणी दशमदिनादौ त्र्यहादीति व्यवस्थाऽस्तु इति वाच्यं, मातापितृविषये दशमाहोरात्रादावपि पक्षिण्येव तद्भिन्नविषये त्र्यहादीत्यपि व्यवस्था संभवेन विनिगमकाभावात् । तस्मादुभयोर्नित्यप्रवृत्त्या समुच्चय इत्यर्थः । *संख्यान्तरेति । तथा सति कस्यापि संख्याया अनुष्ठितत्वं न स्यादिति भावः । तर्हि किं कार्यमित्यत आह—*गुरुणीति । पितृदशाहे आनवमं पक्षिणीसत्त्वेपि अन्त्यदिनतदन्त्ययामयोः त्र्यहत्र्यहावेवानुष्ठेयौ, ताभ्यामेव पक्षिण्याः प्रसङ्गासिद्धेः । यथा महालयतदन्तर्गतान्वष्टकाश्राद्धयोः सहानुष्ठाने बहुदैवत्यपिण्डदानेनान्वष्टकासम्बन्धिपिण्डदानसिद्धिस्तद्वदित्यर्थः । एतेन पितृदशमाहोरात्रादौ मातृमृतौ पक्षिणी सापिण्डान्तरमृतौ दुर्त्र्यहादीत्यनौचित्यं प्रत्युक्तम् । *मातुरिति । एवञ्च दशमेऽप्यहनि अनाहि-

(१) 'मातुरन्वारोहणे तु न पक्षिणी' नास्ति ग० ।

यदा नारी विशेदग्निं प्रियस्य प्रियवाञ्छया ।
तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हि ॥

इति पृथ्वीचन्द्रोदये लघुहारीतोक्तेः । तत्रैव षडशीतिमतेऽपि—

मृतं पतिमनुव्रज्य पत्नी चेदनलं गता ।
न तत्र पक्षिणी कार्या पैतृकादेव शुध्यति ।
पुत्रोऽन्योवाग्निदस्तस्यास्तावदेवाशुचिस्तयोः ।
नवश्राद्धं (१)सपिण्डं च युगपत्तु समापयेत् ॥

गृहीताशौचानां पुत्राणां पितुः संस्कारे मातुः सपिण्डस्य वा मरणे नायं निर्णयः, अतिक्रान्तकालाद्विद्यमाननिमित्तस्य च बलवत्त्वात् । द्वादशवर्षोत्तरं संस्काराशौचमध्ये सपिण्डमरणेऽप्येवम् । यत्तु अपरार्के ब्राह्मे—

ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शाश्वतम् ॥इति,

तत्*भर्तुराशौचोत्तरमन्वारोहणे त्रिरात्राशौचपरमिति पृथ्वीचन्द्रः । *ब्राह्मणादेः क्षत्रियाद्यनुगमनेऽल्पाशौचपरमित्यपरार्कः । शुद्धितत्त्वादयो गौडास्तु—भर्त्रशौचोत्तरमन्वारोहणे त्रिरात्रम् । सहगमने तु सम्पूर्णम् । युद्धहतस्य सद्यःशौचेऽन्वारोहणे ब्राह्मोक्तेस्त्रिरात्रत्वात् । भर्तुरपि *त्र्यहेण पिण्डदानम् । एकचितौ

---

ताग्नेः प्रोषितमृतस्य संस्कारेऽन्वारोहणे न पक्षिणी किन्तु यथायथं द्व्यहत्र्यहाविति । *भर्तुरिति । विप्रेतरपरं, विप्रायाः पृथक्चितिनिषेधात् । प्रतिषेधशास्त्रेऽपि विप्राया इव तदनुक्रामिक्षत्रियादेरपि स्वस्वाशौचं युक्तमित्यस्वरसः । *ब्राह्मणादेरिति । क्षत्रियादेः पृथक्चितिरेव । अन्त्येष्टिकर्ताऽप्यन्यः । *त्र्यहेणेति ।

तु सद्यःशौचमित्याहुः*। *अन्यत्प्रागुक्तम्।

पूर्वशेषेण शुद्धेरपवादान्तरमुक्तं षडशीत्याम्—

पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि॥

निर्णयामृते स्मृतिसङ्ग्रहेऽपि—

इयं विशुद्धिरुदिता सूतिकामग्निदं विना।

इदं मूल्येन दाहकरणे *मातुलादिसम्बन्धेन दाहमात्रकरणे तु त्रिरात्रमेवेत्युक्तं प्राक्। वृद्धात्रिः—

सूतिकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम्।
आर्तवाद्द्विगुणा सूतिस्ततोऽपि शवदाहकः॥

तथाशौचसम्पाते न शावजननिमित्ताकार्यप्रतिबन्धः।

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति।

इति प्रजापतिस्मृतेः। आशौचे तु द्विविधेऽपि शातातपः—

अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि।
प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं यथाविधि॥
प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत्।
तथैवाशौचपिण्डांस्तु शेषान्दद्याद्यथाविधि।

मातुः पक्षिणीमध्ये पितुरेकादशाहं च कुर्यात्।

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।

इति स्मृतेः। *केचित्त्विदं क्षत्रियादिपरम्, विप्रा-

---

"युगपत्तु समापयेत्" इति वचनात्। *आहुरिति। अस्वरसः। युद्धहते पृथक्चितौ स्त्रियां जात्याशौचम्, एकचितौ तु स्त्र्यनुरोधात्तादित्यौचित्यात्। *अन्यदिति। संस्काराशौचमध्ये रात्रिशेषादौ मात्रादिमृतौ इति मयूखाशयः। *मातुलादिसम्बन्धेनेति। इदं तु चिन्त्यं, पैठीनसिवाक्यविषये अ-

देस्त्वाशौचान्तर एकादशाहश्राद्धं नेत्याहुः । अत एव विज्ञानेश्वरेण—

दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ।

इति शुचित्वं महैकोद्दिष्टाङ्गविप्रनिमन्त्रणपरमिति वदता तत्र शुद्धेरङ्गत्वं दर्शितम् । एवं वृषोत्सर्गश्राद्धा-दावपि । देवयाज्ञिकेन त्वाशौचान्तरेऽपि भवत्येवेत्युक्तम् ॥

अथाशौचापवादः । स च पञ्चधा । कर्तृतः कर्मतः द्रव्यतः मृतदोषतः विधानाच्च । आद्यो ब्रह्मचारिण्यत्यादिषु ।

नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
*नाशौचं कीर्तितं सद्भिः पतिते च तथा मृते ॥

---

नाथप्रेते धर्मपुत्राविशेषेण दशाह इति निर्धारितत्वात् । *केचि-त्विति । विशेषो दर्शयिष्यते । *नाशौचमिति । आशौचं सपिण्डसोदकदौहित्रभागिनेयत्वाद्यनापाद्यनिमित्तकमेव ग्राह्यं, तस्यैव द्राग् बुद्धिस्थत्वात्; न तु दाहनिर्हाराद्यापाद्यनिमित्तकम् । किञ्च यथा सत्रादिषु अनापाद्यनिमित्तकाशौच एव निषेधः । तत्र तस्य तत्तत्कर्माधिकारप्रतिपादनार्थत्वात् । आपाद्यनिमित्तके तत्र तद-धिकारस्य ।

आशौचं यस्य संसर्गादापतेद् गृहमेधिनः ।
क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ॥

इति वचनसिद्धितयाऽऽनर्थक्यापत्तेः । तथा प्रकृतेपि तन्निषे-धश्च सर्वकर्मविषयः । "न राज्ञां राजकर्माणि" इतिवद्विशेषोपस्थाप-कपदाभावात् । सत्र्यादिषु तु तत्तकर्मविषय इति स्फुटी भविष्यति । ननु—

सन्निव्रातिब्रह्मचारिदातृब्रह्मविदां तथा ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥

इति योगीश्वरेण सद्यःशौचमुक्तम् । तथाच यत्यादेः

इति कौर्मोक्तेः । *तुर्यपादे 'शावे वापि तथैव च' इति देवलपाठः । आशौचमन्त्यकर्मोपलक्षणम् ,

ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः ।
यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमेव च ॥

इति देवलोक्तेः । एत*त्पित्राद्यतिरिक्तविषयम् ,

*आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतं *न व्रतेन वियुज्यते ॥

इति मनूक्तेः । ( हा(१)रीतः—

मातापित्रोस्तु यत्प्रोक्तं व्रतचारी तु पुत्रकः ।
व्रतस्थोऽपि हि कुर्वीत पिण्डदानोदकक्रियाम् ॥
भवत्यशौचं नैवास्य नैवाग्निस्तस्य लुप्यते ।
स्वाध्यायं च प्रकुर्वीत पूर्ववद्विधिदर्शितम् ॥

संवर्तः—

अन्यगोत्रोपसम्बन्धः प्रेतस्याग्निं ददाति यः ।
पिण्डं चोदकदानं च स दशाहं समाचरेत् ॥ )

---

सपिण्डजननादौ स्नानकालावच्छिन्नमाशौचं दुर्वारमित्याशङ्कायामाह—*तुर्यपादे इति ।

नाशौचं सूतके प्रोक्तं शावे वापि तथैव च ।

इति उत्तरार्धे इत्यर्थः । एतद्वचनवशादेतद्विषये योगीश्वरवाक्यस्थसद्यःशौचपदमाशौचाभावपरमिति सकलनिबन्धकारसंमतम् । अत एव यत्यादीनां सपिण्डमरणादौ न स्नानाद्यनुष्ठानं दृश्यते । ब्रह्मचारिणां तु शवस्पर्शानुगमनादिनिमित्तकमेव तत् । *पित्रादीति । अधिकार्यन्तरासत्त्वे । *आचार्यमिति । उपनयनपूर्वकं कृत्स्नवेदाध्यापक आचार्यः । मन्त्रब्राह्मणयोरध्यापक उपाध्यायः । तदन्यतराध्यापको गुरुः । *न व्रतेनेति । त-

---

(१) कंसान्तर्गतो ग्रन्थो नास्ति क० छ० ।

*निर्हरणमन्त्यकर्मपरम् । एवं मातामहस्य,

यथा व्रतस्थोऽपि सुतः पितुः कुर्यात् *क्रियां नृप ।
तथा मातामहस्यापि दौहित्रः कर्तुमर्हति ॥

इत्यपरार्के भविष्योक्तेः ।

मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् ।
कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतात् ॥

इति कालादर्शाच्च । तत्रान्त्यकर्मनिमित्तमस्पृश्यत्वं दशाहमस्त्येव,

सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः ।
सोऽपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेऽहनि ॥

इति दिवोदासोक्तवचनात् । अतएव 'ब्रह्मचारिणः *शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोश्च' इति गौतमीये व्रतनिवृत्तेरेव पर्युदासो नाशौचस्य ॥

सन्ध्यादिकर्मलोपस्तु नास्ति,

न त्यजेत्सूतके कर्म ब्रह्मचारी (१)स्वकं क्वचित् ।

इति छन्दोगपरिशिष्टात्;

पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्यपि यः सुतः ।
सव्रतश्चापि कुर्वीत श्राद्धपिण्डोदकक्रियाम् ॥

---

थाच भ्रष्टब्रह्मचर्यसन्धानार्थं पुनरुपनयनं प्रत्यवायपरिहारार्थं प्रायश्चित्तं च मातापित्राचार्योपाध्यायमातामहेषु न भवतीत्यर्थः । *निर्हरणमिति । शवकर्मिण इत्यग्रे वचनात् । *क्रियाम् । अन्त्यकर्म । *शवकर्मिण इति । यो यस्याग्निदाता स तज्जातीयमाशौचं न कुर्यादित्यर्थः । एवञ्च ब्रह्मचारिणः अनापाद्यनिमित्तकाशौचानिषेधेऽपि निर्हरणौर्ध्वदेहिकक्रियाद्यापाद्यनिमित्तकतन्निषेधाभावात् पित्रादेरन्त्येष्टिकरणे तदन्नाशनेऽपि ब्रह्मचारिणस्तन्नि-

---

(१) 'स्वयं' क० छ।

तेनाशौचं न कर्तव्यं सन्ध्या चैव न लुप्यते ।
अग्निकार्यं च कर्तव्यं सायं प्रातश्च नित्यशः ॥

इति चन्द्रिकायां संवर्तोक्तेश्च । *अत्र कर्मानधिकाररूपाशौचनिषेध एव । अपरार्कमाधवादयस्तु एकाहमाशौचमाहुः—

आचार्यं वाप्युपाध्यायं गुरुं वा पितरं च वा ।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥
कृत्वा पतति नो तस्मात्प्रेतान्नं तत्र भक्षयेत् ।
अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति ॥

इति *ब्राह्मोक्तेः । *तदन्नभोजने तु प्रायश्चित्तं पुनरुपनयनमाशौचं च ।

दिवोदासादयस्तु ब्राह्मोक्तेः प्रथमेऽह्नि संध्यादिलोपः,

ब्रह्मचारी यदा कुर्यात्पिण्डनिर्वपणं पितुः ।
तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुद्ध्यति ॥

इति प्रजापतिवचनात् द्वितीयाहादौ पिण्डदानकाले

---

मित्तं पूर्णाशौचमात्रम् इतरस्य सपिण्डस्यासापिण्डस्य वा तत्करणे तु पूर्णाशौचं प्रायश्चित्तं पुनरुपनयनं चेति त्रयम्। *अत्रेति । और्ध्वदेहिकानुष्ठानपृष्ठलग्नस्यास्पृश्यत्वस्य निषेधायोगात्। "संध्या च" इत्यादितद्विवरणाच्च । *ब्राह्मोक्तेरिति। 'दग्ध्वा' इत्यस्य सकलौर्ध्वदेहिकपरत्वादित्यभिमानः । वस्तुतः एकाहः पित्रादेर्दाहमात्रकरणविषयः । *तदन्नेति । चवाशब्दएतदाशौचं कृच्छ्रत्रयप्रायश्चित्तं पुनरुपनयनं चेत्यर्थः । एतच्च पित्रादेरौर्ध्वदेहिकेऽपि,

संकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ।

इति स्मरणात् । एवं निर्हरणे दाहमात्रे च पततीत्युक्तेः इतराशौचकल्पने मानाभाव इत्यस्वरसः । सिद्धान्ते प्रजापतिवा-

एवास्पृश्यत्वमात्रं नान्यदेत्याहुः। *दशाहमस्पृश्यत्वेपि कर्माङ्गस्नानविधानार्थमेतदिति युक्तम्। अन्त्यकर्माकरणे तु ब्रह्मचारिणः पित्रादिमरणेऽप्याशौचाभाव एव। सोऽपि ब्रह्मचर्यकाल एव समावर्तनोत्तरं तु पूर्वमृतानां त्र्यहाशौचं भवत्येव,

*आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्।
समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेत्॥

इति मनूक्तेः। *तत्रापि विकल्पः,

पितर्यपि मृते नैषां दोषो भवति कर्हिचित्।
आशौचं *कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम्॥

इति छन्दोगपरिशिष्टात्। तथा कृतजीवच्छ्राद्धेन किमप्याशौचं न कार्यमिति हेमाद्रिः। शुद्धितत्त्वे कौर्मे-

*सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपद्रवे।
*डिम्बाहवहतानां च विद्युता पार्थिवैर्द्विजैः॥

उपद्रवेऽत्यन्तमरके।

*उपसर्गमृते चैव सद्यःशौचं विधीयते।

---

कथमाह—*दशाहमिति। तावत्कालमित्यस्य दशदिनरूपपिण्डदानकालमित्यर्थः। कर्मानधिकारलक्षणाशौचेऽपि आशौचमध्य एव वाचनिके सध्यावन्दनरूपतत्तत्कर्मणि स्नानादेवाधिकारः। आहिताग्नेरिवाग्निहोत्रहोमादावित्यर्थः। *आदिष्टी आदिष्टं व्रतादेशः सोऽस्यास्तीत्यादिष्टी ब्रह्मचारी। अत्र व्याख्यानान्तरम् आदिष्टीति प्रक्रान्तप्रायश्चितः कथ्यते। तस्यैवायमुदकदानादिनिषेधः प्रायश्चित्तसमाप्त्युत्तरमुदकदानादिविधिश्चेति। *तत्रापि अन्त्यकर्मण्यपि। *कर्मणः समावर्तनस्य। *सद्यः शौचमिति। "आपद्यपि च" इति चानुपदम् "तत्तत्कार्येषु" इतिश्लोके स्फुटार्थः। *डिम्बाहवः शस्त्रकलहः। *उपसर्गः विस्फोटादिः। आप-

इति पराशरोक्तेः । उपसर्गोऽत्यन्तमरक इति शूलपाण्यनिरुद्धभट्टादयः । याज्ञवल्क्योऽपि—

आपद्यपि च कष्टायां सद्यःशौचं विधीयते ।

इति । मरणसमयेऽपि नाशौचम् । तथा च शुद्धिरत्नाकरे दक्षः—

स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितम् ।
आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् ॥

अतः सति वैराग्ये संन्यासोऽप्यातुरस्य भवतीति केचित् ॥

अथ कर्मतः त्रिंशच्छ्लोक्याम्—

*तत्तत्कार्येषु सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्प्यातुराणाम्
सम्प्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे ॥

नाशौचमिति शेषः । सत्री अन्नसत्रवान् मुख्यसत्रस्य दीक्षितपदा*त्सिद्धेः । व्रती *अनन्तव्रतादिनियमवान्, 'न व्रतिनां व्रते' इति विष्णूक्तेः । प्रचेताः—

---

द्गतो मुमूर्षुः । आतुरसन्यासावाप्तये सूतकनिवृत्तिर्नोक्तेति केचिदित्यस्वरसः । *तत्तत्कार्येष्विति । एकापि सप्तमी विषयभेदाद्भिद्यते । तेन सत्र्याद्यृत्विगन्तेषु तत्तत्सत्रव्रतव्यवहारदर्शनादिमन्त्रादियज्ञविषयस्वदेशस्य विस्फोटादिभिरुपसर्गैः राजभयाद्वा भ्रंशे उपस्थिते विद्यमाने वा तदभावार्थे शान्तिकर्मणि । आपदि अन्नाभावेन कुटुम्बपीडाप्राप्तौ तद्वारके प्रतिग्रहादौ । अनेकश्रुतिपठनस्य प्रत्यहाध्ययने । भिषजो नाडीस्पर्शादौ । कार्वादीनां तत्तत्कर्मणि आशौचं नेत्यर्थः । आशौचमिह प्रोक्तकर्मानधिकारः । *सिद्धेरिति तत्राशौचाभावलाभादिति यावत् । *अनन्तव्रता-

कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः ॥

*कारवः *सूपकाराद्याः । *शिल्पिनश्चैलनिर्णेजकाद्याः । *आतुरस्य व्याधिनाशार्थे दानादौ । *तुलादा-

---

दीति । द्वादशाब्दव्रतोपवासादिकं प्रायश्चित्ततयाऽन्यथा वा क्रियमाणं कृच्छ्रचान्द्रायणादि स्नातकव्रतानि भोजनव्यतिरेकेण जलं न पातव्यमित्यादयः सम्यक् सङ्कल्पाश्चाद्यर्थः । यद्यपि पुराणोक्तचतुर्दशाब्दकर्तव्यानन्तव्रतादि तद्दिन एवं स्वयं कार्यमित्याशयो लक्ष्यते तथापि तत्राशौचे उपवासः कर्तव्यः पूजादानादेश्चान्ते इति पूर्वोक्तं युक्तम् । जन्माष्टम्यनन्तव्रतादिकं तु मासानन्तरमुत्तराष्टमीचतुर्दश्यादौ सुकरम् । नृपः प्रजापालनाधिकृतः कश्चित् । नृपवान अमात्यादिः । *कारवः स्वशरीरेण कर्मकराः । *सूपकाराद्या इति । आदिना चैलनिर्णेजकादयः । *शिल्पिनः वासीवर्त्तिकादिव्यवधानेन कर्मकराः तक्षवच्चित्रकरादयः । चैलनिर्णेजकपदं च साधनविशेषमादाय निर्णेजनकर्तृतद्विशेषपरम् । *आतुरस्येति । उल्बणव्याध्यादिना मुमूर्षोरित्यर्थः । "आशौचं न राज्ञां राजकर्माणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्माणि न राजाज्ञाकारिणां तदिच्छायां न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोः" इति विष्णुः । "आपद्यपि च" इति । याज्ञवल्क्यादिश्च द्रष्टव्यः । अनेकाः श्रुताः शाखा वेदान् वा पठतीत्यनेकश्रुतिपठनः । अत्रचाङ्ग्र(न्था)ध्ययनमर्धीयार्थज्ञानं तदर्थानुष्ठानं च द्रष्टव्यम् । तथाच दक्षः—

ग्रन्थार्थं यो विजानाति वेदमङ्गैः समन्वितम् ।
सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम् ॥ इति ।

सम्प्रारब्धेष्वित्यस्य दानादिषु सम्प्रारब्धेषु एतदर्थे नाशौचमित्यर्थः । परिणयनादीत्यादिना संस्कारग्रहः । चूडोपनयनयोरुपादा-

नादेः प्रारम्भो नान्दीश्राद्धं सङ्कल्पो वा । *यजनं तडागोत्सर्गकोटिहोमादिः । लघुविष्णुः—

*व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥
*प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं *विवाहादौ श्राद्धं पाकपरिक्रिया ॥ इति

पाकस्य परिसमंतात्क्रिया पाकप्रोक्षणमिति शुद्धिप्रदीपस्तन्मन्दम्, *रूढेर्योगाद्बलवत्त्वात् । तीर्थेति आशौचे आकस्मिकतीर्थप्राप्तौ,

विवाह*दुर्गयज्ञेषु यात्रायां *तीर्थकर्मणि ।

---

नं ब्राह्मणवसिष्ठन्यायेन । तत्र प्रारम्भमाह—*तुलादानादेरिति । दीक्षितपदादिना यज्ञलाभादाह—*यजनमिति । होमार्चनयोर्यजनशब्देन ग्रहणे मूलमाह—*व्रतेति । *प्रारम्भ इति । सत्रं मुख्यं तत्र वरणाभावात् । *विवाहादाविति । आदिना नान्दीश्राद्धवत्कर्ममात्रग्रहः । एतदभिप्रेत्यैव श्लोके उपनयनपदम् । नान्दीश्राद्धवत्कर्माणि च "सीमन्तव्रतचौल" इत्यादिनोक्तानि । *रूढेरिति । पाकपरिक्रियाशब्दस्य पाके इति शेषः,

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
निमन्त्रितस्य विप्रस्य स्वाध्यायाद्विरतस्य च ॥
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ।इति ब्राह्मोक्तेः।

श्राद्धप्रारम्भः निमन्त्रणादन्यः पाकः तत्र श्राद्धकर्त्तुः, भोक्तुस्तु निमन्त्रणादेवाशौचाभाव इति बोध्यम् । "युद्धे सम्प्रारब्धे उपस्थिते सङ्ग्रामे समुपोढे राजानं सन्नाहयेत्" इत्याश्वलायनोक्तेस्तदुपयोगिनि संन्नहनादौ प्रास्थानिके शान्तिहोमादौ च नाशौचम् । प्रतिष्ठायां तु "देव प्रतिष्ठा" इति विष्णुवचनमुक्तम् । *दुर्गयज्ञेष्विति । वैरिवेष्टितदुर्गसंरक्षणार्थेषु यज्ञेषु शान्तिकोच्चाटनादिषु

न तत्र सूतकं तद्वत्कर्म यज्ञादि *कारयेत् ॥

इति पैठीनसिस्मृतेः। अत्र विशेषः प्रागुक्तः। जपः पुरश्चरणादिः स्तोत्रपाठः, अविच्छेदेन सङ्कल्पितहरिवंशश्रवणादिश्च। अत एवोक्तं ब्राह्मे—

गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित्। इति।

एवं देवपूजादि। मदनपारिजाते यमोऽपि—

*शिवविष्ण्वर्चनं दीक्षा यस्य चाग्निपरिग्रहः।
श्रौतकर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात् ॥

गौडशुद्धितत्त्वे मन्त्रमुक्तावल्याम्—

जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः।
नास्ति पापं यतस्तेषां सूतकं वा *यतात्मनाम् ॥

राघवभट्टीये नारदः—

*अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम्।
स्नात्वा नित्यं च निर्वर्त्य मानस्या क्रियया तु वै ॥
*बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्।
यदि कामो न चेत्कामी नित्यं पूर्ववदाचरेत् ॥

यत्तु नृसिंहकल्पे—

सदा मन्त्रजपं मुक्त्वा यदि स्यादशुचिर्नरः।
मनसावहितस्तत्र स्मरेन्मन्त्रं न तूच्चरेत् ॥

---

इत्यर्थः। *तीर्थकर्मणीति। अनेनैव तीर्थयात्रासिद्धेः पुनर्यात्रापदमर्थयात्रापरम्। तथाच क्रतुरपि—

पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति। इति।

*कारयेदिति। कुर्यादित्यर्थः। *शिवेति। यस्य दीक्षा स शिवाद्यर्चनं कुर्वीतेत्यर्थः। तदपि नियमत्वे न त्वन्यथेत्याह—*यतात्मनामिति। कथं कार्यमित्यपेक्षायामाह—*अथेति। *"बाह्यपूजा" इत्यादि "यदि कामः" इत्यन्त एकोऽन्वयः। 'उक्त्वा'

तन्मूत्राद्याशौचपरम् । रामार्चनचन्द्रिकायाम्—

*अशुचिर्वा *शुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि ।
मन्त्रैकस्मरणो विद्वान् मनसैव सदाऽभ्यसेत् ॥

कालनियमाभावे तु(१)*स्तोत्रहरिवंशादि हेयमेव । उत्सवो रथयात्रादिः । एषु नाशौचम् । अयं चाशौचाभावो*ऽनन्यगतित्वे आर्तौ च ज्ञेयः । अत्र *मूलमाकरे स्पष्टम् ।

अत्र दीक्षितस्य अवभृथात्पूर्वमेवाशौचाभावः । तदादि त्वाशौचमस्त्येव । 'तेन वैतानोपासनाः कार्याः' इति वैतानत्वेऽप्यवभृथादि न भवत्येव । अत एवोक्तं माधवीये ब्राह्मे—

---

'जप्त्वा' इति वा पाठः । तिष्ठेदिति शेषः । जपे सूतकाभावोक्तेस्तत्र मन्त्रोच्चारणसम्भवादित्याशयः । *अशुचिर्वेति । मूत्राद्याशौचं दृष्टान्तः । *शुचिर्वेति । उच्चारणासम्भवे मन्त्रस्मरणविधिः । गच्छन्नित्यादिस्तत्प्रपञ्चः । *स्तोत्रेति नियमाभावेऽपि "सूतके तु हरिं स्मृत्वा" इत्यादिहर्यादिस्मरणपूर्वकनमनरूपपूजायाः सुकरत्वात्त्यागः । *अनन्येत्यादि । नृपवैद्यादेस्तत्तत्कार्येष्वावश्यकतया सद्यः शौचं विना गत्यभावे अध्ययनाऽऽपदादौ चार्तिसत्त्वे इत्यर्थः । *मूलं "न राज्ञां राजकर्मणि" इत्यादि प्रागुक्तम् । अत्र नव्याः—अत्र यस्य यावत्कालं गतेरसद्भावश्च तस्य तावत्कालमाशौचमिति फलितम् । एवञ्च—

अर्वाक् सञ्चयनादस्थ्नां त्र्यहमे(काहमे)व वा ।
एकाहाद्ब्राह्मणः शुध्येद् योऽग्निवेदसमन्वितः ।
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥

इत्यादीनामेवंविधविषयत्वमेव । सगतिकस्य राजादेः कुष्ठ-

---

(१) 'स्तोत्रहरिवंशादि' नास्ति ग० ।

*तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।

स्नानं त्ववभृथे *यावत्तावत्तस्य न सूतकम् ॥ इति ।

'वैतानोपासनाः कार्याः' इत्यनेनैव *सिद्धेर्ऋत्विजां *दीक्षितानां चेति पुनर्दीक्षितग्रहणं यजमाने स्वयंकर्तृत्वार्थं स्नानप्राप्त्यर्थं वेति विज्ञानेश्वरः । *वस्तुतस्तु दीक्षणीयासंस्कृतस्य प्रागवभृथात्कर्मप्राप्त्यर्थं दीक्षितग्रहणम् । तेन ततः पूर्वं निषेध एव । यत्तु 'प्रारम्भो वरणं यज्ञे' इति, तदृत्विक्परम् । तथाच छन्दोगपरिशिष्टे—

न दीक्षिण्याः परं यज्ञे न कृच्छ्रादि तपश्चरन् । इति ।

---

लधान्यकादेः पूर्णमेव ।

स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितम् ।

आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् ॥

इति प्रोक्तवचनस्यापि इदं स्वस्थस्य दशद्वादशाहादिकं पूर्णम्, आपद्गतस्येदं सूतकं न किन्तु यदाऽऽपद्गतस्थितिः तावदेवेत्यर्थ इत्याहुः । *तद्वदिति । ऋत्विग्वदित्यर्थः । *यावदिति मर्यादायाम् । सत्रिव्रतिदीक्षितर्त्विक्प्रारब्धदानोत्सवादीनां तु नियत एव तत्तत्कार्येष्वधिकारः, तस्यालौकिकत्वात् । स्वरूपत आरम्भावश्यकत्वाच्च । अनाशौचिद्वारकत्वे मानाभावात् । *सिद्धेरिति । दीक्षितकर्मण्यप्यधिकारे इत्यादिः । *दीक्षितानां चेति । "यज्ञियं कर्म कुर्वताम्" इति वाक्यशेषः । स्वत्वत्यागातिरिक्ते हेतुः कर्तृत्वात् तत्रापि तथाप्राप्तौ इति शेषः । ननु अग्निमन्मात्रस्य तत्साध्यानन्यगतिकनित्यनैमित्तिककर्मस्वाधिकारो "नित्यानि निवर्तेरन्" "वैतानोपासनाः कार्याः" इति पैठीनसियोगीश्वराभ्यां वाच्यस्तथाच दीक्षितपदं व्यर्थमित्याशङ्क्य दीक्षणीयाया वैतानत्वेऽपि तत्प्रधानात् पूर्वमाशौचसंकोचकतया तत्सार्थक्यमित्याह— *वस्तुतस्त्विति । मधुपर्कशब्दस्य ऋत्विक्पूजाविशेषार्थकतया

शुद्धितत्वेऽप्येवम्। ऋत्विजां च मधुपर्कोत्तरमाशौचाभावः,

गृहीतमधुपर्कस्य यजमानात्तु ऋत्विजः।
पश्चादशौचे पतिते न भवेदिति निश्चयः॥

इति ब्राह्मात्। *अत एव रामाण्डारः-*चतुर्णां वरणपक्षेऽन्येषामाशौचेऽन्य आगमयितव्यः' इत्याह। एवं स्मार्तेऽपि तुलाकोटिहोमादौ मधुपर्के सति दोषाभावो ज्ञेयः। यत्तु 'प्रारम्भो वरणं यज्ञे' इति, तत्रापि मधुपर्कान्तं ज्ञेयम्। तेनाधानेष्टिपशुबन्धादौ तदभावादन्ये भवन्तीति सिद्धम्।

अपवादान्तरमाह याज्ञवल्क्यः-

वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्।

---

तत्पूर्वभागविवरणार्थत्वमाह—*अत एवेति। *चतुर्णामिति। ज्योतिष्टोमे इत्यादिः। नन्वेवं दर्शपूर्णमासवृतः सामिधेनीरन्वाह होता इत्युक्तेरवृत्तस्य सामिधेनीषु प्रवृत्तस्याशौचे त्यागः स्यात्। न स्यात्। वरणवत्येव कर्मणि वरणमारम्भोऽवरणवति दर्शपूर्णमासादौ तु स्वीयाद्यपदार्थकरणमेवारम्भ इति नियमादित्येके। वस्तुतस्तु यथा वरणवति वरणम् आरम्भो नावरणवति तथा येवरणवन्तस्तान् प्रत्येव वरणमारम्भः अन्यांस्तु प्रति आद्यपदार्थकरणमेवारम्भः। तथाच ज्योतिष्टोमे चतुर्णां वरणपक्षेऽन्येषां स्वीयाद्यपदार्थप्रवृत्त्युत्तरं न त्यागः। "अन्येषामाशौचे" इति रामाण्डारस्तु स्वीयाद्यपदार्थकरणपरतया नेयः। किञ्च ऋत्विक्वृतत्वयोर्न सामान्यविशेषभावः ऋत्विक्त्वं विहाय च सोमाध्वर्युषु वृतत्वसत्त्वात्, वृतत्वं विहाय चतुर्णां वरणपक्षेऽन्येषु ऋत्विक्त्वसत्त्वात्। अतः ऋत्विक्वाक्यवरणवाक्ययोर्नोपसंहारः। तस्मादृत्विग्वाक्येन दर्शपूर्णमासयोरवृत्तस्य होतुः सामिधेनीषु

तत्र *त्यागमात्रे स्नानोत्तरं स्वयंकर्तृत्वम्,

*श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्।

इति स्मृतेः। त्यागातिरिक्ते तु श्रौते स्मार्ते चान्यस्यैव कर्तृत्वम्।

सूतके मृतके चैव अशक्तौ श्राद्धभोजने।

प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्॥

इति बृहस्पत्युक्तेः। 'नित्यानि निवर्तेरन्वैतानवर्ज्यम्, शालाग्नौ चैके*ऽन्य *एतानि कुर्युः' इति पैठीनसिस्मृतेश्चेति विज्ञानेश्वरः। एकग्रहणं पूजार्थम्। तेन स्मार्तं कार्यमेवेति *हारलतायाम्। दाक्षिणात्यास्तु विकल्पमाहुः। *अपरार्कादिनिबन्धास्तु—श्रौतं सर्वं स्वयं कार्यं, स्मार्ते तु त्यागातिरिक्तेऽन्यस्यैव कर्तृत्वम्। त्यागमात्रे

---

प्रवृत्तस्य चतुर्णां वरणपक्षेऽन्येषां स्वीयाद्यपदार्थे प्रवृत्त्युत्तरं चाशौचाभाव उच्यते। तथाच वरणवतां वरणोत्तरम् अन्येषान्तु स्वीयाद्यपदार्थे प्रवृत्त्युत्तरमाशौचपातेऽपि तत्त्याग इति फलितम्। एवमित्यादिपङ्क्तिश्च वरणस्वीयाद्यपदार्थकरणान्यतरसत्त्वे तत्त्यागोऽन्यथा त्याग इत्यर्थिकैवेति। *त्यागमात्रे इति। तस्यैव प्रधानत्वात्। *श्रौते इति। औपासनमपि ग्राह्यम्। तस्य योगीश्वरेण श्रुतिचोदितत्वकथनात्। *अन्ये अनाशौचिनः। *एतानि त्यागातिरिक्तानि। एवञ्च "सूतके तु समुत्पन्ने" इत्यग्रिमजातूकर्ण्योक्तौ स्मार्तपदं वैतानोपलक्षणम् "वैतानोपासनाः" इति सामान्यतोऽधिकारेऽवगतेऽस्य विशेषमात्रबोधकत्वात्। यज्ञे याजमाने स्वयंकर्तृत्वं च प्रागुक्तम्। प्रकारान्तरेण नित्यत्वलाभं विना पूजार्थत्वमयुक्तम्। उक्तास्वरसादुक्तं—*हारेति। स्वसम्मतश्रौतस्मार्तविभागानुसारिमतमाह— *अपरार्कादिनिबन्धास्त्विति। आदिना कल्पसूत्रभाष्यकारादिग्रहः। विशेषान्त-

# काशीसंस्कृतसीरीज़्-पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परतु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि । | मूल्यम् । |
|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) | रु० १—८ |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) | रु० ८—० |
| ३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं १) | रु० २—८ |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) | रु० ०—६ |
| ५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावः । | रु० ५—० |
| ५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) | रु० ८—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुण निरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) | रु० ६—० |
| ७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ ) | रु० ०—८ |
| ८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । | रु० ०—८ |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं १) | रु० ०—१२ |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) | रु० २—० |
| ११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) | रु० ०—८ |
| १२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) | रु० १—४ |
| १३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) | रु० १—४ |

१४ कुमारसंभवं महाकाव्यम् । महाकवि-श्रीकालिदासवि० । सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं २) रु० १।-

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १ —०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन — कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च । ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम्—मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका—अर्थात् अभिनवा " परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः । ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । ( कर्मकाण्डं ) रु० १—०

२१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-[illegible] बिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम् । ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः—भाषाटीकासहितः ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्यटीका श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—

२५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः ( टिप्पणीसमलंकृतः ) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः । ( कर्मकाण्डवि० ३ ) रु० ०—..

२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः । अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः । (व्या०४) रु० ४—

२८ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृत[illegible]टीकया पं० श्री[illegible]कृत[illegible] च समन्वितम् । [illegible]

## काशीसंस्कृतसीरीज़ ।

September 1929.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 381

कमलाकरभट्टविरचितो

# निर्णयसिन्धुः

कृष्णंभट्टकृतव्याख्यासहितः ।

काशीस्थराजकीयसंस्कृतपाठशालायां व्याकरणधर्मशास्त्राध्यापकेन नेने-इत्युपाख्येन पं० गोपालशास्त्रिणा तदीयगुरुवर-म० म० पं० पर्वतीयनित्यानन्दपन्तप्रदर्शितरीतिमनुसृत्य संशोधितष्टिप्पण्या परिष्कृतश्च ।

The

NIRṆAYASINDHU,

of Kamalâkara Bhaṭṭa

With Commentary by Kṛṣṇam Bhaṭṭa.

Edited with Notes by

Pandit Gopâla S'âstrī Nene, Assistant Professor,

Govt. Sanskrit College, Benares.

FASCICULUS XX-२०

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1928.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३८१


*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

Agents:

1 Otto Harrassowitz, Leipzig:

GERMANY.

2 The Oriental Book-supplying Agency,

POONA.

तु स्वस्य—

कर्म वैतानिकं कार्यं स्नानोपस्पर्शवान् स्वयम्।

इति हारीतोक्तेः;

दर्शं च पूर्णमासं च कर्म वैतानिकं च यत्।

सूतकेऽपि त्यजन्मोहात्प्रायश्चित्तीयते द्विजः॥

इति मरीच्युक्तेः,

जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते।

शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः॥

इति जाबालोक्तेश्चेत्याहुः। अपरार्केऽप्येवम्। याज्ञिका अप्येवम्।

सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत्।

पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्॥

इति जातूकर्ण्योक्तेश्च। चरुः स्मार्तस्थालीपाकः। श्रवणाकर्मादिश्चेति विज्ञानेश्वरः। प्रारब्धं तु सापिण्डेनापि कार्यम्,

न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत्।

इति मनूक्तेः। *छन्दोगपरिशिष्टेऽपि—

होमः श्रौते तु कर्तव्यः शुष्कान्नेन फलेन वा।

*अकृतं हावयेत्स्मार्ते तदभावे कृताकृतम्॥

अकृतं व्रीह्यादि। कृताकृतं तण्डुलादि। स्मार्तहोमादौ तु विकल्पो ज्ञेयः 'शालाग्नौ चैके' इति प्रागुक्तेः। यदा करणं तदाऽन्यद्वारा।

*अत्रेदं तत्त्वम्। येषां बह्वृचादीनां द्वादशरात्रम-

---

रमाह—*छन्दोगेति। *अकृतमिति।

कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।

व्रीह्यादि त्वकृतं प्रोक्तमिति हव्यं त्रिधा स्मृतम्।

इति वचनात्। स्मार्तविकल्पे व्यवस्थामाह—*अत्रेदमिति।

होमेपि नाग्निविच्छेदस्तैर्न कार्यम्। तैत्तिरीयाद्यैः कार्यम्, (१)'चतूरात्रमहूयमानोऽग्निर्लौकिकः संपद्यते' इति सुदर्शनभाष्ये वचनात्। समारूढे त्वग्नौ तेनापि न कार्यम्, किंतु पुनराधानमेव; *समारोपप्रत्यवरोहयोराशौचापवादाभावादनन्यकर्तृकत्वाच्च। *अन्यथा पुनराधानमपि स्यात्। यत्त्वाश्वलायनः—

*तौ (२)चापि सूतके शावे पर्वणीष्टिं महापदि।
पुष्पवत्यां च भार्यायां न कुर्यात्तां कदाचन॥
*स्मार्ताग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः।
श्रौताग्निस्तु सकृद्धुत्वा समाप्ते वा स्वयं हुनेत्॥इति।

*तदपि *समारूढपरम्। *तदाह स एव-

स्मार्ताग्निरात्मनोऽन्येषामभावे सूतकादिषु।
समारोप्य तदन्तेषु विहृत्य जुहुयात्स्वयम्॥ इति।

तथाच मनुः-'प्रत्यूहेन्नाग्निषु क्रियाः' इति वैश्वदेवस्य

---

*समारोपेति। अग्निविच्छेदभयेन समारोपे यथा न तथा प्रत्यवरोहेऽपि नेत्यर्थः। *अन्यथा प्रत्यवरोहोपगमे आशौचाभावस्यानपेक्षणेनेति शेषः। *तौ श्रौतस्मार्ताग्नी। इष्टिमिति द्वितीयान्तम्। तथाच "दर्शं च पूर्णमासं च" इत्यनेन विरोधः। *स्मार्ताग्निरिति। तथाच होमाधिकारविधेः सूतकयोरिष्टी न कार्ये, किन्तु तन्निवृत्त्यनन्तरं कार्ये नतु सर्वथा त्याज्ये इति प्रथमविरोधोद्धारं स्फुटत्वादनभिधाय द्वितीयविरोधं परिहरति-*तदपीति। *समारूढेति। सकृद्धुत्वेति न सूतकशेषहोमपरं नापि समाप्ते इति तत्र होमत्यागपरं किन्तु शेषहोमं दत्त्वा समारोपे सूतके समाप्ते प्रत्यवरूढत्वादित्यर्थः। *तदाहेति। स्मार्ताग्नेः समारोप-

---

(१) 'त्रिरात्रमहूयमाने' ग०। (२) 'तौ वापि' क० छ०।

त्व*ग्निसाध्यत्वेऽपि वचनान्निवृत्तिः।

विप्रो दशाहमासीत वैश्वदेवविवर्जितः।

इति संवर्तोक्तेः। यद्यपि—

पञ्चयज्ञविधानं तु न कुर्यान्मृतजन्मनोः।

इति तेनैवोक्तेः पूर्वनिषेधो व्यर्थस्तथाप्यापस्तम्बादीनां वैश्वदेवस्य पञ्चयज्ञभिन्नत्वात्पृथङ्निषेधः। हरदत्तस्त्वाशौचेऽपि बह्वृचैर्वैश्वदेवः कार्यः, 'तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः' इति ब्रह्मयज्ञस्यैवाशौचे विशिष्य निषेधात्।

*सन्ध्यादीनामप्यपवादमाहापरार्के पुलस्त्यः-

संन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्।

न त्यजेत्सूतके वापि त्यजन् गच्छेदधो द्विजः॥

सूतके मृतके चैव सन्ध्याकर्म समाचरेत्।

मनसोच्चारयेन्मन्त्रा*न्प्राणायाममृते द्विजः॥

यत्तु चन्द्रिकायां जाबालः—

सन्ध्या पञ्चमहायज्ञा नैत्यकं स्मृतिकर्म च।

तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया॥

इति। यच्च संवर्तः-

सूतके कर्मणां त्यागः संध्यादीनां विधीयते।

---

पक्षमाहेत्यर्थः। आत्मनः सूतकादिष्वित्यन्वयः। *अग्नीति। 'प्रत्यूहेन्नाग्निषु क्रियाः' इत्यनेनाग्निसाध्यानां कर्तव्यत्वोक्तेरिति भावः। *सन्ध्यादीनामिति। अग्निसाध्यनित्यनैमित्तिककर्मान्यतया निषेधप्राप्ताविति शेषः। *प्राणायाममिति। प्राणायामे मन्त्रस्य मानसत्वे पर्युदासः, मुखनासावसञ्चारनिवाद्यवरोधेरूप तत्र तस्य सिद्धत्वात्। अतः मन्त्र एव सः। तथाचामन्त्रकः

यच्च विष्णुपुराणम्-

सर्वकालमुपास्या तु संध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥ इति,

तत्पूर्णसंध्यापरम् ,

*अर्घ्यान्ता मानसी संध्या कुशवारिविवर्जिता ।

इति शुद्धिदीपे च्यवनोक्तेः । *पैठीनसिस्त्वर्घ्ये मन्त्रोच्चारणमाह—'सूतके सावित्र्याऽञ्जलिं प्रक्षिप्य *सूर्यं ध्यायन्नमस्कुर्यात्' । प्रयोगपारिजाते भारद्वाजोऽपि—

सूतके मृतके कुर्यात् प्राणायामममन्त्रकम् ।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्यमुपस्थानं नचैव हि ॥

ग्रहणे श्राद्धादावप्याशौचापवादमाह व्याघ्रः—

स्मार्तकर्मपरित्यागो *राहोरन्यत्र सूतके ॥ इति ।

---

प्राणायामः कार्य इत्यर्थः । *अर्घ्यान्ता इत्यतद्गुणसंविज्ञानबहुव्रीहिणा प्राणायामातिरिक्तं सर्वं मानसमन्त्रैः कार्यम् । तत्रापि अर्घ्यदाने मन्त्रोच्चारमुत्तरकर्मलोपं चाह-*पैठीनसिस्त्विति । पुलस्त्येन सावित्र्या मानसत्वोक्तेः पुनस्तद्ग्रहणमुच्चारणलाभाय । *सूर्यमिति उत्तरकर्मलोपार्थम् । सूतकादौ नित्यस्नानशौचाचमनबलिदानप्राणाहुतिमात्रग्रहणादयो भुजिनियमाः । अस्पृश्यस्य स्नानादि च सर्वं कार्यमिति स्मृत्यर्थसारः । नित्यस्नानं चाङ्गतर्पणसहितं कार्यम् ,

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितम् ॥
उद्धृतैरुदकैः स्नायान्न कुर्याद्वस्त्रपीडनम् ॥

इति नैमित्तिकस्नान एव दैवपित्र्यतर्पणाद्यङ्गनिषेधात् । *राहोरिति । राहुदर्शननिमित्तककर्मत्यागो न कदापीत्यर्थमाभिप्रे-

लैङ्गेऽपि—

*सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

प्रयोगपारिजाते बृहस्पतिः—

*कन्याविवाहे संक्रान्तौ सूतकं न कदाचन ।

वृद्धशातातपः—

यदा भोजनकाले तु अशुचिर्भवति द्विजः ।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुद्ध्यति ॥
भक्षयित्वा तु तं ग्रासमहोरात्रेण शुद्ध्यति ।
अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुद्ध्यति ॥

इदमविशेषात्(१)सूतकादिपरमपीति शुद्धितत्त्वे शूलपाणौ च ॥

अथ द्रव्यतः । मरीचिः—

लवणे *मधुमांसे च पुष्पमूलफलेषु च ।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥
*तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः ।

---

सदम् । यथाश्रुतेऽप्याह—*सूतके इति । *कन्याविवाह इति । अथाऽऽर्यायाः कन्यायाः मुहूर्त्तान्तरालाभेनावश्यके विवाहे इत्यर्थः । एतादृशविषये—

अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् ।
गां दद्यात् पञ्चगव्याशी ततः शुद्ध्यति सूतकी ॥

इति पूर्वोक्तं विवाहप्रारम्भात् पूर्वं कूष्माण्डहोमादिकमावश्यकम् । *मधु क्षौद्रम् । *तिलेति तैलोपलक्षणम् । तथाच ब्राह्मम्—

लवणं मधुमांसं च पुष्पं मूलं फलानि च ।
काष्ठं लोष्ठं तथा पर्णं दधि क्षीरं घृतं तथा ॥

---

(१) 'सूतकादावपीति' क० ।

**पण्येषु चैव सर्वेषु *नाशौचं मृतसूतके ॥**

औषधं तैलमाजिनं शुष्कमन्नं च नित्यशः ।
आशौचिनो हि तद् ग्राह्यं स्वयं पण्यं च मूलजम् ॥ इति ।

**मूलजम्** । आकरजम् । ***नाशौचमिति** । नच चेतनेषु ।

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तते ॥

इत्यादिषु दानाद्यनधिकारे आशौचस्य निमित्तत्वोक्तेर्निमित्तिनिमित्तनोरभेदानुपपत्त्या जननादिजन्योऽतिशयविशेषस्तन्निमित्ततया स्वीकार्यः । द्रव्येषु त्वाशौचं नामातिशयो दुर्वचः मानाभावादिति वाच्यम्, तत्राशौचिस्वामिकृतस्य प्रतिग्रहाद्ययोग्यकृतस्यैव आशौचत्वात् । अत्र च 'स्वयङ्गृहः' इत्यादिकमेव मानम् । अशुचित्वेनानधिकारिणा विनियोजितत्वात् द्रव्येषु फलाजनकत्वमेवाशौचं नतु कर्मानर्हत्वं नाप्यतिशयविशेषः । तथा सति एकतरेण भ्रात्रा जननादौ ज्ञाते तस्याशौचित्वात्तत्स्वामिकद्रव्येणाज्ञातनिमित्तकेनाशौचिभ्रात्रन्तरेण कृतस्य कर्मणाऽशुचिद्रव्यकृतत्वाद्वैयर्थ्यं स्यात् । तस्माच्च ततः क्रीतद्रव्येणान्येषां कर्मासिद्धिः, क्रयस्याशौचनिवर्तकत्वाभावात् । अस्मन्मते तु द्रव्याणि शुचीन्येव, परं त्वनाधिकारविनियोजिततया न फलमिति न विरोध इति, तत्तुच्छम्, अशुचिभ्रातृतः प्रतिगृहीतैरासिद्ध्यापत्तेः । प्रतिग्रहीत्रा विनियुक्तानां फलाजनकत्वे मानाभावात् । नवाऽशुचिनाऽनधिकारिणा कृतस्य दानस्य फलाजनकतया प्रतिग्रहीतुः स्वत्वं नोत्पद्यत इति वाच्यम्, अनधिकारिकृताच्छास्त्रीयस्य फलस्यानुत्पादेऽपि लौकिकस्य तस्यानुत्पादे मानाभावात् स्वत्वस्य लौकिकत्वात् । तस्य लौकिकत्वं च लिप्सासूत्रे स्फुटम् । किञ्च यदेकभ्रातुरसाधारणं द्रव्यं तत्र भ्रात्रन्तरस्य स्वत्वमेव नास्तीति कथमशुचित्वम् ? साधारणं च तदनुमतिं विना न यथेष्टविनियोगार्हमिति कथं तस्य शुचित्वम् ?

स्वयमेव स्वाम्यनुज्ञया ग्राह्यं *न तद्धस्तादित्यर्थः । *क्रये तु तद्धस्तादपि न दोषः । पक्वं लड्डुकादि । अपक्वं तण्डुलादि । *एतदन्नसत्रपरम् ।

अन्नसत्रे प्रवृत्तानामा*ममन्नमगर्हितम् ।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत् ॥

इत्यङ्गिरसोक्तेः । *पक्वान्नमोदनादि नतु भक्ष्यम् । षट्-

---

एवं क्रयस्याशौचानिवर्तकत्वमपि मन्दम्, तस्य स्वत्वापनयनद्वारा द्रव्याशुद्ध्यपनायकत्वात् (१)तस्या आशौचिस्वत्वप्रयुक्तत्वात् । तत्रैव द्रव्ये कालस्य चेतनाशुद्धिनिवर्तनद्वारा तन्निवर्तकत्ववत् । 'स्वयङ्ग्रहः' इत्यनेन स्वाम्यनुज्ञाया इव ग्रहणफलस्यादनदानयोश्च लाभः । "दद्यादिमानि स्वयमनुमननात्स्वामिनः" इति त्रिंशत्श्लोकीदर्शनात् । मृतसूतके इति स्वयङ्ग्रहविधौ कृत्रिमस्यापि ग्रहः । पण्याशौचनिषेधश्च कृत्रिमोपलक्षणम् । लवणादिनियमार्थं च मृतसूतकग्रहणम् । स्वयमेवेत्यतन्त्रम् । आशौचिहस्तान्न ग्राह्यमित्यत्र तात्पर्यमित्याह—*न तद्धस्तादिति । पण्येषु सर्वेष्वित्यत्र सर्वपदं क्रयार्थं प्रसारिततदन्योभयपरम् । तच्च लवणादिभिन्नमपि तत्स्वामिनो वणिज आशौचेऽपि नाक्रेयत्वम् । तथा सत्याह—*क्रये त्विति । एवञ्च पण्येषु न स्वयङ्ग्रहनियम इति भावः । *एतत् पक्वापक्वाभ्यनुज्ञानम् । *आममन्नमिति पक्वोपलक्षणं 'पक्वापक्वे' इत्युक्तेः । अत एव पक्वान्ने भक्ष्यं पर्युदस्यन्नाह—*पक्वान्नमित्यादि । अनाशौचिभिरन्नसत्रिणामादनादिकमितरेषां भक्ष्यतण्डुलादिकमपि न ग्राह्यम्, अनुज्ञातभिन्नत्वात् । उभयत्र—

दशाहानि कुलस्यान्नमदोषं मनुरब्रवीत ।

इति यमोक्तेश्च । कुलस्याशौचिकुलस्यान्नमनाशौचिभिर्न भुज्यते, तदेवान्नं कुलस्य सकुलस्यादोषं भोज्यमित्यर्थ इति नि-

---

(१) द्रव्याशुद्धेः ।

त्रिंशन्मते—

*उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् ।
*एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ॥
*विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥
*भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥

बृहस्पतिः—'विवाहोत्सव' इत्याद्युक्त्वा—

*पूर्वसङ्कल्पितान्नेषु न दोषः परिकीर्तितः ।

---

ष्कर्षः । एतन्निषेधे विशेषमाह—*उभाभ्यामिति । *एकेनापीति । भोक्त्राऽऽशौचनिमित्तेऽज्ञातेपि दात्रा ज्ञाते दातुराशौचत्वात्तत्स्वामिकान्नं निषिद्धम् । भोक्तुः प्रायश्चित्तं त्वल्पमज्ञानप्रवृत्तत्वात् । दात्राऽज्ञातेऽपि भोक्त्रा ज्ञाते तु तद्द्रव्यस्याशौचिस्वामिकत्वाभावेऽपि वचनात् निषिद्धमित्यर्थः । भोक्तुरिति च तन्मात्रेण ज्ञातेऽपि तस्य दोषं वक्तुं, नतु दातृमात्रेण ज्ञातस्य दाननिषेधातिक्रमनिमित्तदोषं निवर्तितुमपि, अर्थद्वयकरणे वाक्यभेदापत्तेः ।

अपि दातृगृहीत्रोस्तु सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथञ्चन ॥
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ॥

इति ब्राह्ममपि भोक्तुः स्यादेवेत्यर्थम् । तत्र प्रायश्चित्तं पूर्वोक्तम् । आदिनाऽऽशौचं ग्राह्यम् । *विवाहेति । पृथक्कृतासिद्धान्नभोजने । *भुञ्जानेष्विति । विवाहादिव्यत्ययपृथक्कृतान्नभोजनेऽन्यत्र ब्राह्मणभोजने च । अवशिष्टं चान्नं त्याज्यम् ।

भोजनार्थे तु संभुक्ते विप्रैर्दातुर्विपद्यते ।
यदि काश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहिताः ।
आचम्य परकीयेन जलेन शुचयो द्विजाः ।

इति ब्राह्मात् । *पूर्वेति । आशौचसम्भावनया पूर्वमेव

षडशीतौ—

*संसर्गाद्यस्य चाशौचं यस्यातिक्रान्तकालता ।
तदीयस्य पदार्थस्य नाशौचं विद्यते क्वचित् ॥

शुद्धितत्त्वे—'शुद्ध्येत्' इत्यनुवृत्तौ विष्णुः—'प्रोक्षणेन च पुस्तकम्' इति ॥

अथ *मृतदोषे हेमाद्रौ षट्त्रिंशन्मते कौर्मे च—

व्यापादयेद्य आत्मानं स्वयमग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नापि कार्योदकक्रिया ॥

*शवदर्शनं यावदाशौचमस्त्येव,

हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् ।

---

ब्राह्मणार्थं पृथक्कृते सिद्धान्नमनुज्ञातव्यतिरिक्तमन्यच्च तत्रेत्यर्थः । *संसर्गादिति । निर्हाराद्याशौचेऽतिक्रान्ताशौचे च सर्वद्रव्ये नाशौचम् "आशौचं यस्य संसर्गात्" इति "अतिक्रान्ते दशाहे तु" इति वचनात् । परन्त्वाशौचिहस्तान्न ग्राह्यम् । आशौचिस्पृष्टनिषेधबाधे मानाभावात् । *मृतदोषे इति । मृतदोषो द्विविधः—मरणाभिसन्धिना दर्पात् स्वानिष्टानादरणेन वा शास्त्राभ्यनुज्ञां विनाऽग्निजलादिना चण्डालादिभिर्वा मृतानां "सर्वत आत्मानं गोपायत्" इति विधेः "न संशयमापद्येत तस्मादुह न पुरायुषः स्वः कामी प्रेयात्" इति निषेधस्य चातिक्रमणादेकः । पतितादीनां तत्तन्निषेधातिक्रमादपरः । मृतानां च तेषां तन्निमित्तकः तत्सपिण्डसोदकानां शिष्यदौहित्रादीनां च आशौचोर्ध्वदैहिकयोर्निषेधः । अन्यत्र तदपवादश्चोच्यते इत्यर्थः । तत्र सर्वत्र दशाहत्र्यहकालावच्छिन्नमेवाशौचं निषिद्धमित्याह—*शवेति । स्नानमात्रनिर्वर्त्यमित्यर्थः । नृपः अभिषिक्तः क्षत्रियादिः । गोपदं शृङ्गिदंष्ट्र्यादेः । विप्रपदं चण्डालादेश्चोपलक्षणम् । बुद्धिपूर्वं विषोद्बन्धनादिना आत्मानं व्यापादयन्ति ये ते आत्मघातिनः । आत्मघातिपदं "पाखण्ड्यना-

इति याज्ञवल्क्योक्तेः। शुद्धितत्त्वे कौर्मे—

सद्यःशौचं समाख्यातं शापादिमरणे तथा।

आदिपदादभिचारहते। भविष्ये—

*स्वेच्छया मरणं विप्राच्छृङ्गिदंष्ट्रिसरीसृपैः।

---

श्रिताः स्तेनाः" इत्येकयोगनिर्दिष्टपतिताद्युपलक्षणम्। आत्मघात्याद्याशौचनिषेधमाह याज्ञवल्क्यः—

पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः।

सुराप्य आत्मघातिन्यो नाशौचोदकभाजनाः॥ इति।

अस्यार्थः—पाखण्डा नरशिरःकपालादिश्रुतिस्मृतिबाह्यलिङ्गतद्धारिणः। भर्तृघ्न्यः अब्राह्मण्यादिपरिणेतृघातिन्यः। कामगाः स्वापेक्षया जात्या हीनपुंगन्त्र्यः कुलटाः। आदिपदाद्गर्भसुतदुहितॄणामब्राह्मणानामपि विप्राणां च घातिन्यः ग्राह्याः। शिष्यगा गुरुगाश्चेह ग्राह्याः।

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या।

पतिघ्नी च विशेषेण जुङ्गितोपगता तु या॥

इति स्मृतेः। स्वस्य निषिद्धा यासां पेयास्ताः सुराप्यः। सुराप्य इति लिङ्गग्रहैकत्ववत् "न ब्राह्मणः सुरां पिबेत्" इत्यादिनिषेधेष्विवाविवक्षितमपि तादृश्याः शूद्रा अपि द्विजातिभार्यायाः सङ्ग्रहस्य द्योतनेन सार्थकम्। अत एव—

पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्।

इति स्मृतौ भार्या शूद्रापीति व्याख्यातं विज्ञानेश्वरादिभिः। आत्मत्यागिन्यश्चोक्ता इति। *स्वेच्छयेति। स्वस्यैव विधिप्रयोज्या या इच्छा जलतद्गाम्भीर्यादि ज्वलनतत्तैक्ष्ण्यादि यथायथं ज्ञात्वा तत्र स्वव्यापादने इष्टसाधनताभ्रमेण तत्प्रवृत्तिर्हेतुः। अनेनाहमात्मानं व्यापादयामीति तात्त्विको भीषणमात्रार्थमतात्त्विको वाऽभिलाषः तत्पूर्वकं मरणम्। विषोद्बन्धनताडनान्त्यान्त्यजवि-

*अन्त्यान्त्यजवि(१)षोद्बन्धैरात्मना चैव ताडनैः ॥
पाखण्डमाश्रिताश्चैव *महापातकिनस्तथा ।
स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा ॥
न *तेषां स्नानसंस्कारो न श्राद्धं न सपिण्डनम् ॥

मादिना हननं धरणादिसामर्थ्यगर्वेण अयं मां मारयतिवति बुद्धिविरहेऽपि पाक्षिकमप्यनिष्टमनादृत्य तद्धननग्रहणादौ प्रवृत्तानां तैर्मरणे इत्यन्वयः । *अन्त्याः पूर्वोक्ता अन्त्यावसायिनः । अन्त्यजाश्चाण्डालादयः । एतच्चण्डालादुदकादित्याद्यग्रिमं च बुद्धिपूर्वके एव "प्रायोनाशकशस्त्राग्नि" इत्युत्तरगौतमवाक्ये 'इच्छताम्' इत्युक्तेरेकवाक्यतानुरोधेनोदके तदन्वये तत्साहचर्याच्चण्डालादावपि तदन्वयात् । एतेन—

राजभिर्निहतानां च शृङ्गिदंष्ट्रिसरीसृपैः ।
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कल्पयेत् ॥

इति वचने आत्मत्यागिनां पृथगुक्तेश्चण्डालादित्याद्यविशेषोक्तेश्च जलपश्वादिभिः प्रमादमृतेऽप्याशौचं नेति शङ्क्यम् । *महापातकिन इति । ते च—

ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पगः ।
एते महापातकिनो यश्च तैः सह संवसेत् ॥
एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः ॥

इति योगीश्वरेणोक्ताः । एवम् "अतिपातकिनोऽनुपातकिनश्च मातृपितृयोनिसम्बन्धस्यागनास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च" इति गौतमसूत्रोक्ताश्च द्रष्टव्याः । येषु निषेधमतिक्राम्यत्सु पापतातिः परयते ते पतिताः सर्वे इह मिताक्षरादिग्रथान् पर्यालोच्य गणनीयाः । मया गौरवभयात्तु न लिख्यन्ते । *तेषां स्नानसंस्कारा-

(१) 'द्विषोद्बन्धै' क० छ० ।

गौतमः—'*प्रायोऽनाशकशस्त्राग्निविषोदको(१)द्वन्धनप्रपतनैश्चेच्छताम्' इति। नाशौचमिति शेषः। अङ्गिराः—

*चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥
उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति॥

षट्त्रिंशन्मतेऽप्येवम्। ब्राह्मेऽपि—

शृङ्गिदंष्ट्रिनखिव्यालविषवह्निक्रियाजलैः।

व्यालो गजः।

*सुदूरात्परिहर्तव्यः कुर्वन्क्रीडां मृतस्तु यः।
नागानां विप्रियं कुर्वन्हतश्चाप्यथ विद्युता॥
नि(२)गृहीतः *स्वयं राज्ञा *चौर्यदोषेण कुत्रचित्।

---

विति केवलशवस्नपनदोषार्थम्। *प्राय इति। प्रायो महाप्रस्थानम्। अनाशकम् अनशनम्। प्रपतनं गिरिशिखरादेरवपातः। *चण्डालादिति। अत्र पापकर्मणां येषां चण्डालादिभिर्मरणमिति नार्थः। श्वादिपदवज्जन्मान्तरीयपापानुमानेऽपि निषेधे विशेषानाधायकतया तद्वैयर्थ्यात्, किन्तु येषां चण्डालादिभिर्मरणं तेषां पापकर्मणामिति। तेन चण्डालादिहेतुकमरणं पापहेतुः। पापं च निषेधातिक्रमः। निषेधात्तु पुरुषव्यापारगोचरः। नच प्रमादमृते सोऽस्तीत्यतोऽस्य प्रमादमरणं न विषयः। शृङ्गिणः गवादयः अश्वाश्वतरादयः। नखिनो व्याघ्रादयः। दंष्ट्रिणः नक्रादयः सर्वे तिर्यञ्चो बोध्याः। क्रिया दिव्यं कार्मणमभिचारप्रत्यभिचारादि। *सुदूरात् 'सुदूरा' इति पाठः। नागाः सर्पाः। विप्रियं ग्रहणादि। *स्वयमिति। राजादेः शक्यार्थज्ञातिक्रमपरम्। *चौर्येति। साहसादेरुपलक्षणम्। तथाच राज्ञा धनस्वाम्यादिभिर्वा हत इत्य-

---

(१) 'उद्बन्धनं गलपाशादि' ग०ः (२) 'निगृहीताश्च ये' क० छ०।

परदारान् *हरन्तश्च द्वे(१)षात्तत्पतिभिर्हताः ॥
असमानैश्च संकीर्णैश्चण्डालाद्यैश्च विग्रहम् ।
कृत्वा तैर्निहतास्तद्वच्चण्डालादीन्समाश्रिताः ॥
शस्त्राग्निगरदाश्चैव पाखण्डाः *क्रूरबुद्धयः ।
*क्रोधात्प्रायं*विषं वह्निं शस्त्रमुद्बन्धनं जलम् ॥
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ।
*कुशिल्पजीविनो ये च *सूनालंकारधारिणः ॥
*मुखेभगास्तु ये केचित् क्लीबप्राया नपुंसकाः ।
*ब्रह्मदण्डहता ये च ये चापि ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥

र्थः । *हरन्तः रमन्त इति वा पाठः । रमयन्त इत्यर्थः । *क्रूरबुद्धय इति । अत्र कान्तारशीर्णनौकाद्यारोहकूपाद्यवरोहादयः सर्वे दर्पोपहतमृतिहेतवो बोध्याः । *क्रोधादिति । शोकादेरुपलक्षणम् । *विषमिति । पूर्वं मरणाभिसंध्यभावेऽपि विषादिभक्षणे इदानीं तु तदभिसन्धिना तत्रेति न पौनरुक्त्यम् । *कुशिल्पम् । आपद्यपि निषिद्धचर्मकारादिशिल्पम् । *सूनेति । सूना प्राणिवधस्थानं तदलंकारः तदुपकरणं शस्त्रादि तद्धारिणस्तत्रानर्हास्तत्राधिकृता इत्यर्थः । *मुखेभगाः अयोनौ रेतः सेकिनः । क्लीबेषु नपुंसकेषु च पतितत्वोक्तिः मरणोत्तरकालीनौर्ध्वदेहिकदेवतात्वायोग्यतया । तेन तयोर्द्विजातिकर्मण्यपादकपापवत्त्वाभावेऽपि न क्षतिः । *ब्रह्मदण्डहताः । उत्पादितक्रोधजनितशापादिहताः । महापातकिपदं पूर्ववत् । गौतमोक्तानामतिपातक्यादीनां "चतस्रस्तु परित्याज्याः" इत्युक्तानां पतितानामनाश्रितानां चोपलक्षणम् । एवम्—

वृथासंकरजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्त्तेतोदकक्रिया ॥

(१) 'द्वेषात्तु पति' ग० ।

पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥
*एतानि पतितानां तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा ॥

एतद्बुद्धिपूर्वं*सर्वेषां करणे तु माधवीये वासिष्ठः—

य आत्मत्यागिनां कुर्यात्स्नेहात्प्रेतक्रियां द्विजः ।
*स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम् ॥

अज्ञाने तु—

कृत्वाग्निमुदकं *स्नानं संस्पर्शं वहनं कथाम् ।

---

पाखण्डमाश्रितानां च चरन्तीनां च कामतः ।
गर्भभर्तृद्रुहां चैव सुरापीणां च योषिताम् ॥

इति मनुवचने वृथाजाता अनाश्रमिणः दम्पत्यादिसाध्यकर्मानधिकारात् । संकरजाता भिन्नवर्णस्त्रीपुरुषजाताः प्रतिलोमजाः । तेषामेवातिनिन्दितत्वात् । प्रव्रज्यासु तिष्ठतां सन्यासिनां हंसपरमहंसैकदण्डत्रिदण्डादिभेदेन बहुत्वम् । यत्तु निन्दितसाहचर्यसम्पादनलोभेन वृथाशब्दान्वयेन कापालिकदिगम्बरादीनां वृथाप्रव्रज्यानां ग्रहणमिति । तन्न, तेषां पाखण्डमाश्रिता इत्यनेन पौनरुक्त्यात् । आत्मत्यागिनः अशास्त्रीयात्मत्यागिनः । अकृतनिष्कृतीनां चैतेषां पाखण्ड्यादीनां दाहादिकरणे त्वाह—*एतानीति । विमोहित इति णिच् । स्नेहाद्यभिप्रायो नतु विषयाज्ञानाभिप्रायः । *सर्वेषामिति । अकृतनिष्कृतीनां चैतेषां पाखण्ड्यादीनां दाहादिकरणे आशौचमपि कार्यम् ।

नाशौचं नोदकं नाश्रु न दाहाद्यन्तकर्म च ।
ब्रह्मदण्डहतानां च न कुर्यात्कटधारणम् ॥

इति यमेन निषिद्धस्याप्याशौचस्य दाहादिवत् प्राप्तेः । *स तप्तकृच्छ्रेति । तप्तकृच्छ्राभ्यां सहितमिति विगृह्य तप्तकृच्छ्रद्वययुक्तं चान्द्रायणमिति शम्भुभट्टेन व्याख्यातम् । *स्नानं शव-

रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति ॥

इति ज्ञेयम् । प्रत्येकं बुद्धिपूर्वं एतदिति मदनपारिजातः ।
*प्रत्येकं तु स्पर्शाश्रुणोर्मिताक्षरायाम्—

तच्छवं केवलं स्पृष्टमश्रु वा पतितं यदि ।
पूर्वोक्तानामकारी चेदेकरात्रमभोजनम् ॥

---

स्नपनम् । रज्जुच्छेदः काचित्कः । अश्रुपातं चेति चकारादिदमपि सर्वेषां दाहादिकरणे । तप्तकृच्छ्रश्च द्वादशाहसाध्यः ।

तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ।

इति मनूक्तः । क्षीरादिपरिमाणं च पराशरेणोक्तम्—

अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतम् ॥ इति ।

त्रिरात्रमात्मपूरणे उष्णोदकबाष्पं पिबेदित्यर्थः । न तु—

तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥

इत्युक्तः दुग्धसर्पिर्जलानां तप्तानामेकैकं प्रत्यहं पीत्वा एकाहोपवासरूपो दिवसचतुष्टयसाध्यः, किञ्चिन्न्यूनचतुरुपवासात्मकस्य तस्य न दाहाद्यष्टकपापानिवर्तकत्वसम्भवः प्रत्येकं दाहादिकरणे उपवासोक्तेस्तदष्टकस्यौचित्येन ततोऽतिन्यूनत्वात् ।*प्रत्येकमिति । "तच्छवं केवलं स्पृष्टमश्रु वा" इत्युत्तरवाक्ये स्पर्शाश्रुपदयोरुपलक्षणतयाऽज्ञानादेतेष्वेकैककरणे उपवासः, प्रत्याऽभ्यासे कृच्छ्रातिकृच्छ्रचान्द्राणि योग्यतया कुर्यादित्यन्तेऽपि ।बुद्धिपूर्वं दाहादिगुरुकरणे त्रिरात्रोपवासस्यानौचित्यात्स्पर्शाश्रुभिन्नस्य प्रत्येकं तथाकरणे एतत्कार्यं, परन्तु तप्तकृच्छ्रं पूर्वोक्तं चतुरहसाध्यं, नतु मनूक्तमित्यन्ये । तत्रापि काष्ठाद्यन्तरितस्पर्श एवोपवासः साक्षात् स्पर्शे तु तप्तकृच्छ्रमेवेत्यपरे । प्रतिपदोक्त-

एकरात्रं तु नाश्नीयात्त्रिरात्रं बुद्धिपूर्वकम् ॥

इति माधवीये उत्तरार्धम् । अन्येषु तु संवर्तः—

एषामन्यतमं प्रेतं यो वहेत दहेत वा ।

*कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥

अज्ञाने त्व*र्धम् । एतदनाहिताग्नेः । आहिताग्नेः कृच्छ्र एवेति माधवः । मिताक्षरायाम्—

*आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।

तेषामपि तथा*गङ्गातोये संस्थापनं हितम् ।

आहिताग्नेस्तु विशेषो हेमाद्रौ भविष्ये—

*वैतानं प्रक्षिपेदप्सु *आवसथ्यं चतुष्पथे ।

---

निष्कृतेरभिधानीयतया एतत् ज्ञापनं किमर्थमित्यस्वरसः । अन्ये तु स्पर्शाश्रुपाताभिन्नेषु दाहादिषु प्रत्येकं बुद्धिपूर्वे । *कटः शववहनसाधनं खट्वादिः । सान्तपनं च—

गोमूत्रगोमयक्षीरदधिसर्पिःकुशोदकम् ।

एकैकं प्रत्यहं पीत्वा एकरात्रमभोजनम् ॥

इति जाबालोक्तं सप्ताहसाध्यं द्रष्टव्यम् । *अर्धमिति । वस्तुतस्तु "अबुद्धिपूर्वं बन्धने छेदने दहने वा मासं भैक्षाहारस्त्रिषवणं च" इति सुमन्तूक्तं बोध्यम् । तत्त्रयमपि वाशब्दश्रवणात् प्रत्येकविषयम् । अत्र सर्वत्रापि दक्षिणादिरूपप्रत्याम्नायो वा कार्यमिति शिष्टाः । तेषां मरणानन्तरं दाहाद्यकरणे किं कार्यमित्यपेक्षायामाह—*आत्मन इति । *गङ्गेति । सम्भवाभिप्रायम् । एवञ्च तेषां वत्सरान्तादौ पर्णशरदाहः । अत्र प्रतिपत्त्यन्तरं वक्ष्यति गृह्यपरिशिष्टे तु "दग्ध्वा शरीरं प्रेतस्य" इत्यादिना । ननु "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति श्रुतिविहितदाहाभावे तोये स्थापनरूपा यजमानप्रतिपत्तिः, तत्रापि पात्राणां किं कार्यं तत्राह—*वैतानमिति । *आवसथ्यं

पात्राणि तु देहदग्नौ *साग्निके पापकर्मणि ॥

छन्दोगपरिशिष्टेऽपि—

महापातकसंयुक्तो दौरात्म्यादग्निमान्यदि ।
पुत्रादिः पालयेदग्नीन्युक्त आदोषसंक्षयात् ॥
प्रायश्चित्तं न कुर्याद्यः *कुर्वन्वा म्रियते यदि ।
*गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदम् ॥
पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत् ॥

माधवीये पराशरः—

*आहिताग्निर्मृतो विप्रश्चण्डालेना*त्मघातकः ।
दहेत ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ॥
*प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनात् ।
दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण क्षालयेत्ततः ॥
स्वेनाग्निना स्वमन्त्रेण पृथगेनं पुनर्दहेत् ॥

हेमाद्रौ तु—

दाहयित्वा शवं तेषां *शूद्रैरविधिपूर्वकम् ।

इत्युक्तम् । *एतद्दर्पादिना मरणे ज्ञेयम् ।

---

स्मार्ताग्निम् । *साग्निके पापकर्मणीति । आहिताग्नौ स्मार्ताग्नौ चात्मघातके इत्यर्थः । "यजमाने वृथा मृते" इति पाठे वृथा अविहितमार्गेणेत्यर्थः । आत्मघातके इति यावत् । *कुर्वन्वेति । प्रधानोपक्रमात् प्रागित्यर्थः, उपक्रान्तप्रधानस्य शुद्धत्वात् । *गृह्यमिति । चतुष्पथे इति शेषः । आहिताग्नेरपि तोये संस्थापनमुक्तम् । प्रतिपत्त्यन्तरमाह—*आहिताग्निरिति । चण्डालेनेत्युपलक्षणम् । *आत्मघातक इति । उद्बन्धनादिनेत्यादि । पतिते तु प्रकारं वक्ष्यति । *प्राजापत्यमिति । शक्तेन तु चान्द्रायणद्वयं कार्यम् । अन्यथा "पुत्रैश्चान्द्रायणत्रयम्" इत्यग्रिमेण विरोधात् । *शूद्रैः वर्णैः, न तु संकरैः । इदं च विप्रालाभे द्रष्टव्यम् । *एतदिति । चण्डालेन मृत इति

तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ।

इति श्रुतावात्महनने एव दोषोक्तेः । प्रमादमरणे त्वाशौचादि सर्वं भवत्येव । तदाहाङ्गिराः—

अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥

ब्राह्मेऽपि—

प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः ।
शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ॥
चण्डालैरथ वा चोरैर्निहतो वापि कुत्रचित् ।
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ॥ इति ।

प्रमादमरणे त्रिरात्रमाशौचमिति *गौडाः शुद्धितत्त्वादयः । *दशाहादीति दाक्षिणात्याः । अस्यापवादो हेमाद्रौ भविष्ये—

प्रमादादिच्छया वापि न कुर्यात्सर्पतो मृते ।

नागपूजां विना न कुर्यादित्यर्थः । बौधायनोऽपि—

बुद्धिपूर्वात्महन्तॄणां क्रियालोपो विधीयते ।

क्रियाऽन्त्यकर्म ।

तत्र दुर्मरणनिमित्तं दानादि कार्यम् । तच्च विश्वप्रकाशादौ शातातपीये च—

व्याघ्रेण निहते *विप्रे विप्रकन्यां विवाहयेत् ।
सर्पदष्टे नागबलिर्देयः सर्पश्च काञ्चनः ।
चतुर्निष्कमितं हैमं गजं दद्याद्गजैर्हते ।

---

आत्मघातक इति चेत्यर्थः । *गौडादिति । मानाभावोऽत्रास्वरसः । *दशाहादीति । बुद्धिपूर्वके निषिद्धस्यैव प्रामादिके प्राप्ते पालाशदाहे तु वक्ष्यति । *विप्रे इति अतन्त्रम्, एतत्सकलस्य सर्ववर्णसाधारण्यात् । सजातीया वा कन्या बोध्या । एतत्सर्वं

राज्ञा विनिहते दद्यात्पुरुषं तं हिरण्मयम् ॥
चौरेण निहते धेनुं वैरिणा निहते वृषम्।
वृषेण निहते दद्याद्यथाशक्त्या तु काञ्चनम्।
शय्यामृते प्रदातव्या शय्या तूलीसमन्विता।
निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता ॥
शौचहीने मृते चैव द्वि(१)निष्कं स्वर्णजं हरिम्।
*संस्कारहीने च मृते कुमारमुपनाययेत् ॥
निष्कत्रय स्वर्णमितं दद्यादश्वं हयाहते।
शुना हते क्षेत्रपालं स्थापयेन्निजशक्तितः ॥
सूकरेण हते दद्यान्माहिषं दक्षिणान्वितम्।
कृमिभिश्च मृते दद्याद्गोधूमान्पञ्च*खारिकाः ॥
वृक्षं वृक्षहते दद्यात्सौवर्णं वस्त्रसंयुतम्।
शृङ्गिणा निहते दद्यादृषभं वस्त्रसंयुतम् ॥
शकटेन हते दद्याद् द्रव्यं सोपस्करान्वितम्।
भृगुपातमृते चैव प्रदद्याद्धान्यपर्वतम्।
अग्निना निहते कार्यमुदपानं स्वशक्तितः।
दारुणा निहते चैव कर्तव्या सदने सभा ॥
शस्त्रेण निहते दद्यान्महिषीं दक्षिणान्विताम्।
अश्मना निहते दद्यात्सवत्सां गां पयस्विनीम् ॥
वृषेण च मृते दद्यान्मेदिनीं हेमनिर्मिताम्।
उद्बन्धनेन च मृते कपिं कनकनिर्मितम् ॥

---

स्त्रीदुर्मरणेऽपि योज्यम्। *संस्कारहीने इति। अष्टमवर्षादिरूपमुख्यकाले इत्यादि। संस्कारः पुंस उपनयनं स्त्रिया विवाहः, शूद्रस्य षोडशाब्दोर्ध्वं वस्त्रद्वयं च। अयं च दशाब्दान्तादिगौणकालात्यये तु पतितो बोध्यः। *खारी धान्यप्रमाणभेदः।

---

(१) 'निष्कं च स्वर्णजं' क०।

मृते जलेन वरुणं हैमं दद्याद् द्विनिष्कजम् ।
विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान् ॥
घृतधेनुः प्रदातव्या (१)कण्ठान्तकवले मृते ।
कासरोगेण च मृते अष्टकृच्छ्रं व्रतं चरेत् ॥
अतिसारमृते लक्षं गायत्र्याः प्रयतो जपेत् ।
शाकिन्यादिग्रहग्रस्ते जपेद्रुद्रं यथोदितम् ॥
विद्युत्पातेन निहते *विद्यादानं समाचरेत् ।
अन्तरिक्षमृते कार्यं वेदपारायणं तथा ॥
सच्छास्त्रपुस्तकं दद्यादस्पृश्यस्पर्शतो मृते ।
पतिते च मृते कुर्यात्प्राजापत्यांस्तु षोडश ॥
मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेत् ।
एवं कृते विधाने तु विदध्यादौर्ध्वदेहिकम् ॥

तथा *वैधमरणेऽपि न दोषः । तदाहतुर्मनु(२)वृद्धगार्ग्यौ—

*वृद्धः *शौचस्मृतेर्लुप्तप्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य *त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं(३)कृत्वा चतुर्थे श्राद्धमाचरेत् ॥ इति ।

हेमाद्रौ विष्णुधर्मेऽपि—

---

*विद्यादानं शास्त्राध्यापनम् । पतितेचेति विशेषतः पातित्याज्ञाने । *वैधेति । अभ्यनुज्ञाविधिबोध्येत्यर्थः । एतच्च सद्यः शौचोदकदानाभावाववैधात्मघाते एवेति सूचयति । *वृद्ध इति । आसन्नमृतिकाल इत्यर्थः । "यो जीवितुं न शक्नोति" इत्यभिधानात् । *शौचेति । वातजराद्यावेशेन शौचाचमनाद्यावश्यककर्मानुष्ठानासमर्थ इत्यर्थः । *त्रिरात्रमिति सामान्यत आशौचनिषेधो न प्र-

---

(१) 'कण्ठान्नकवले' ग० । (२) 'वृद्ध' नास्ति क० ।
(३) 'दत्त्वा' क० ।

नरस्तु व्याधिरहितो न त्यजेदात्मनस्तनुम् ।
असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः ।
अरिष्टैरात्मनो ज्ञात्वा मृत्युकालमुपस्थितम् ॥
व्याधितो भिषजा त्यक्तः पूर्णे (१)वायुषि चात्मनः ।
यथा युगानुसारेण संत्यजेदात्मनस्तनुम् ॥
तस्मिन्काले तनुत्यागाद्यथेष्टं फलमाप्नुयात् ।
आयुषस्तु पुरा दृष्टं मरणं ब्राह्मणस्य च ॥

नेति गौडानामपपाठः, उत्तरार्धे असङ्गतेः ।

क्षत्रियस्य तु सङ्ग्रामे मृते भर्तरि योषितः ।

अपरार्के ब्रह्मगर्गः—

यो जीवितुं न शक्नोति महाव्याध्युपपीडितः ।
सोऽग्न्युदकं महायात्रां (२)कुर्वन्नत्र न दुष्यति ॥

*अत्रोक्तवक्ष्यमाणवचोनिचयात्प्रयागातिरिक्तेऽचिकित्स्यरोगाद्युपहतानामधिकारः । *सोऽपि जीर्णवानप्रस्थस्यैवेति विज्ञानेश्वरदेवयाज्ञिकादयः । अतएव मिताक्षरादौ *भृगुपातानशनादिकं वानप्रस्थस्यैवोक्तम् ।

---

वर्तत इति भावः । *अत्रेति । अपिना वातजराद्याविष्टसमुच्चयः । अत्र प्रयागे वातजराद्याविष्टानामचिकित्स्यकुष्ठक्षयादिमहाव्याधिग्रस्तानां च बुद्धिपूर्वकमरणाभ्यनुज्ञानात्तत्र प्रायश्चित्तनारायणबली न कार्ये । विज्ञानेश्वरमतमाह- *सोऽपीति। *भृग्विति । आदिनाऽग्न्यम्बुप्रवेशमहाप्रस्थानपरिग्रहः । "वानप्रस्थो वीराध्वानं ज्वलनाम्बुप्रवेशनं भृगुपतनं वाऽनुतिष्ठेत्" इति स्मरणम् ।

वायुभक्षः प्रागुदीचीं गच्छेदावर्ष्मसङ्क्षयात् ।

इति योगीश्वरस्मरणं च तत्र मानम् । सकलानुष्ठानासमर्थ

---

(१) 'वायुषि' क० । (२) 'कुर्वन्वा न प्रदुष्यति' क० छ० ।

प्रविशेज्ज्वलनं तोयं करोत्यनशनं तथा॥ इति,
तत्प्रयागातिरिक्तपरमिति केचित्। हेमाद्रौ त्वेतदग्रे 'प्रयागवटशाखाग्रात्' इत्युक्तेर्ब्राह्मणस्य प्रयागेऽपि नेति *प्रतीयते।

माधवीयेऽपरार्के चादित्यपुराणे—

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि।
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा॥
अगाधतोयराशिं च भृगोः पतनमेव च।
गच्छेन्महापथं वापि तुषारगिरिमादरात्॥
*प्रयागवटशाखाग्राद्देहत्यागं करोति च।
स्वयं देहविनाशस्य काले प्राप्ते महामतिः।
*उत्तमान् प्राप्नुयाल्लोकानात्मघाती भवेत्क्वचित्।
*महा(२)पापक्षया*त्स्वर्गे दिव्यान्भोगान्समश्नुते॥
एतेषामधिकारस्तु सर्वेषां सर्वजन्तुषु।
नराणामथ नारीणां सर्ववर्णेषु *सर्वदा॥
ईदृशं मरणं येषां जीवतां कुत्रचिद्भवेत्।
आशौचं स्यात्त्र्यहं तेषां *वज्रानलहते तथा॥

---

*नैमित्तिकत्वेति। *प्रतीयते इति। अनेन स्वर्गादीत्यस्यापि सम्बन्धात्काम्यं प्रयागमरणं ब्राह्मणभिन्नस्यैवेति लभ्यते। तच्चानिष्टं। कामनाया असत्त्वे इव रोगिणामिव प्रायश्चित्तार्थतयैव च काम्यस्यापि युक्तत्वात्। तस्मादत्राब्राह्मण इत्यादेर्न सम्बन्ध इति सूचितम्। *प्रयागेति। अभ्यनुज्ञाविधिः। *उत्तमानिति काम्यविधिः। *महापापक्षयादिति प्रायश्चित्तार्थे नैमित्तिकविधिः। तत्र महापापवशेन नष्टमत्यापत्तिमाह—*स्वर्गे इति। 'सर्वेषाम्' इति वा पाठः। *सर्वदेति। रोग्यरोगिलम्भकम्। *वज्रानलहते इति। एतच्च वृद्धादीनामेव तादृशमरण-

---

(३) इदमर्धं नास्ति क०छ०।

वाराणस्यां म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः ।
काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः ॥
अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः ।
प्रणवं तारकं ब्रूते नान्यथा कुत्रचित्क्वचित् ॥

हेमाद्रौ चैवम् । अत्र *प्राप्तकाले इत्युक्तेरप्राप्तमरणकालायाः स्त्रिया अन्वारोहणे सम्पूर्णमेवाशौचम् । पृथ्वीचन्द्रस्त्वत्रापि त्र्यहमाह । शुद्धितत्त्वादिगौडग्रन्थेष्वप्येवम् ।

एतच्च वृद्धादिमरणं कलौ निषिद्धम् ।

भृग्वग्निपतनैश्चैव वृद्धादिमरणे तथा ।

इति माधवेन पृथ्वीचन्द्रेण च कलिवर्ज्येषूक्तेः । नचात्र यावदुक्तनिषेधः *विशिष्टोद्देशे *वाक्यभेदात् । नच कलौ वानप्रस्थाश्रमनिषेधादेव सिद्धेर्मरणनिषेधो व्यर्थ इति वाच्यम्, सर्ववर्णेष्वित्यादिभिस्तद्भिन्नस्यापि प्राप्तेः । *काम्यं भवत्येव 'ये वै तन्वं १ विसृजन्ति' इति श्रुतेः *स्मृत्या सङ्कोचायोगात् । नचेयं स्वाभा-

---

प्रकारविधानपूर्वकं त्र्यहाशौचं विधत्ते, दर्पादिना प्रमादेन वा मृत्तावाशौचाभावसम्पूर्णाशौचयोरुक्तेः । *प्राप्तेति । प्राप्तकालानां ज्वलनादिना मरणे त्रिरात्रमित्यर्थः । प्रयागे तु वक्ष्यति । पृथ्वीचन्द्रादिमते ऽस्वरसः स्फुटः । *विशिष्टोद्देशे भृग्वादिपातप्रयुक्तान्याविशिष्टमरणोद्देशे । *वाक्यभेदादिति ।

आत्मानं घातयेद्यस्तु भृग्वग्न्यशनाम्बुभिः ।

इति वाक्यं भिद्यतेत्यर्थः । *काम्यमिति । प्रयागे इति प्रकृतम् । काम्यमेवेति नोक्तम्, अकाम्यस्यापि प्रयागमरणस्येष्टत्वात् । *स्मृत्येति । यद्यपि कलिवर्ज्येषु प्रमाणं वेदवद् भवेदिति श्रुतेरपि सङ्कोच उक्तस्तथापि यावता श्रुतेः सङ्कोचं विनाऽगति-

विकमृत्युपरा, धीरपदोक्तेः । मात्स्यभारतादिषु—

*नलोकवचनात्तात न *वेदवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥

इत्युक्तेः । *अतएव विष्णुधर्मे रौग्यादिमरणमुक्त्वोक्तम्—

*यथा युगानुसारेण संत्यजेदात्मनस्तनुम् । इति ।

काश्यामप्युक्तं मात्स्ये—

अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः ।
प्रविशन्ति मुखं ते मे निःसन्दिग्धं वरानने ॥

हेमाद्रौ विवस्वान्—

*सर्वेन्द्रियवियुक्तस्य स्वव्यापाराक्षमस्य च ।
प्रायश्चित्तमनुज्ञातमग्निपातो महापथः ॥
धर्मार्जनासमर्थस्य कर्तुः पापाङ्कितस्य च ।

---

स्तावत एव सङ्कोचो नात्रेत्यर्थः । कृत्स्नेपि प्रयागमरणे उपलम्भकमाह—*न लोकेत्यादिना । लोकेति "सर्वत आत्मानं गोपायेत्" इत्यादीत्यर्थः । *वेदेति । "तस्मादुह नः पुरायुषः स्वःकामी प्रेयात्" इत्यादीत्यर्थः । नित्यकर्माद्यनुष्ठाननिरतो नाशितस्वीयान्तःकरणकल्मषः श्रवणादिसम्पत्तिद्वाराऽऽत्मसाक्षात्कारेण नित्यनिरतिशयानन्दब्रह्मात्मावाप्तिलक्षणं मोक्षं साधयेन्नतु अनित्याल्पसुखात्मसर्गार्थमायुःक्षयमिति हि तदर्थः । प्रयागे च मुक्तेरपि भावान्न तद्विरोध इत्यर्थः । तादृशं मुख्यफलमनिच्छतामवृद्धानामपि रागनिवृत्त्यर्थं स्वर्गाद्यर्थं वा कलावपि प्रयागमरणं भवतीत्याशयवानाह—*अत एवेति *यथायुगेति च । काश्यामग्निप्रवेशः काम्य एव, प्रकरणात् । *सर्वेन्द्रियेति । एतच्च मरणान्तिकपर्यवसायि अनिर्देश्यम् ,

मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ।

ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम् ॥

अपरार्के चैवम् । सहगमनं *कलौ भवत्येव,

कलौ नान्या गतिः स्त्रीणां सहानुगमनादृते ।

इति ब्रह्मवैवर्तात् । एतेन मरणान्तिकप्रायश्चित्तं काशीखण्डादौ चातुर्वर्ण्यस्य तनुत्यागविधयश्च युगान्तरपरा एव ।

प्रयागेऽपि त्रिस्थलीसेतौ स्कान्दे—

यथाकथञ्चित्तीर्थेऽस्मिन्प्राणत्यागं करोति यः ।

तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि ॥

पाद्मे विष्णुः—

देहत्यागं तथा धीराः कुर्वन्ति मम संनिधौ ।

मत्तनुं प्रविशन्त्येव न पुनर्जन्मने नराः ॥

कौर्मे—

व्याधितो यदि वा (१)दीनो वृद्धो वापि भवेन्नरः ।

गङ्गायमुनमासाद्य यस्तु प्राणान्परित्यजेत् ॥

ईप्सितांल्लभते कामान्वदन्ति मुनिपुंगवाः ॥

इति स्मरणात् । *कलाविति । ननु स्त्रीणामप्यात्मघाते दोषोक्तेः अतिप्रवृद्धस्वर्गाभिलाषिण्याः प्रतिषेधशास्त्रमुत्क्रामन्त्या अयमुपदेशोऽस्तु तीव्रक्रोधाक्रान्तस्य प्रतिषेधशास्त्रमुत्क्रामतः श्येनोपदेशवदिति । मैवं, श्येनवैषम्यात् । श्येनकरणिकायां भावनायां भाव्यायां हिंसासंस्पर्शेन निषेधसंस्पर्शात् फलद्वारा श्येनस्य निन्द्यत्वमिति मते तत्र मरणस्यैव अनुगमनशास्त्रेणाग्नीषोमीयशास्त्रेण हिंसाया इव विधीयमानत्वात्प्रतिषेधासंस्पर्शात् । श्येनस्य मरणानुकूलव्यापारत्वेन हिंसात्वात्तत्र रागतः प्रवृत्तिसम्भवेन विधेरप्रवर्तकत्वात्स्वरूपेणैव रागप्रयुक्तहिंसारूपत्वान्नि-

(१) 'दीनः क्रुद्धो' क० ख० ।

तथा--

या गतिर्योगयुक्तस्य सत्त्वस्थस्य मनीषिणः ।
सा गतिस्त्यजतः प्राणान् गङ्गायमुनसङ्गमे ॥

वाराहे--

तत्र यो मुञ्चति प्राणान् वटमूलेषु सुन्दरि ।
सर्वलोकानतिक्रम्य मम लोकं प्रपद्यते ॥

तथा--

अकामो वा सकामो वा वटमूलेषु सुन्दरि ।
शीघ्रं प्राणान्प्रमुञ्चेत यदीच्छेत्परमां गतिम् ॥

तथा--

पञ्चयोजनविस्तीर्णे प्रयागस्य तु मण्डले ।
व्यतीतान् पुरुषान् सप्त भविष्यांश्च चतुर्दश ॥
नरस्तारयते सर्वान् यस्तु प्राणान्परित्यजेत् ॥

ब्राह्मे—

ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्णुतत्परः ।

---

पेध्यत्वमिति पक्षे आत्ममरणे रागतः प्रवृत्ताया अपि तदनुकूले इतिकर्तव्यतारूपेऽग्निप्रवेशे विधित एव प्रवृत्तेः "वायव्यं श्वेतमालभेत भूतिकामः" इतिवन्न निषेधावकाश इति दिक् । सहगमनं प्रयागमरणं च न कस्यापि वर्जनीयम् , आचाण्डालसाधारणधर्मत्वात् । 'यथाकथञ्चित्' इत्यादिसर्वोऽपि संदर्भः काम्यप्रयागमरणबोधक इति नाभिप्रायः, किन्तु रोगिणामरोगिणां वृद्धानां पुंसां स्त्रीणां चाचाण्डालं प्रयागे देहपातोऽभ्यनुज्ञायते आपादत्रयेणान्येन च वचनसंदर्भेण । "प्राप्नुयादीप्सितान्यपि" इतिचतुर्थपादेन तु काम्यः । यागतिरित्यादिस्तत्प्रपञ्चः । नैमित्तिकस्तु पूर्वजानामात्मनश्च प्रायश्चित्तरूपतया स्वयमेवान्योपदेशेन शास्त्रादितो वा निश्चित्य कार्यो नतु निर्देश्यः, पूर्वोक्तवचनात् । "ध्यात्वा" इत्यादीतिकर्तव्यताविशेषपूर्वकं क्रियमाणस्तु झटि-

तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः ॥
दुष्कृतोऽपि दुराचारो ब्रह्महत्यादिपातकी ।
हरिं ध्यात्वा त्यजेद्देहं (१)प्रयागे मुक्तिमान्भवेत् ॥

भविष्योत्तरे—

*समाः सहस्राणि तु सप्त वै जले
दशैकमग्नौ पतने च षोडश ।
महाहवे षष्टिरशीतिर्गोग्रहे
अनाशके भारत चाक्षया गतिः ॥

इति सामान्यतोपि फलम् । एवमन्येऽपि विधयो ज्ञेयाः । यत्तु गौडाः प्रयागादिमरणं ब्राह्मणभिन्नविषयमित्याहु*स्तद्दूषणं पितामहचरणैः प्रयागविधौ कृतमिति नात्रोच्यते ।

अत्र *दशाहमाशौचम् । त्रिरात्रस्य *प्राप्तकालगोचरत्वादिति भट्टाः । युक्तं तु त्रिरात्रम् । दिवोदासीयेप्येवम् । शुद्धितत्वेऽपि काश्यपः—'अनशनमृ[illegible]-निहतानामग्निजलप्रविष्टानां भृगुसंग्रामदेशान्तरमृतानां

---

ति मुक्तिसाम(ग्री?)सम्पादकः । *"समाः सहस्राणि तु सप्त वै जले" इति तु प्रयागेतरपरम् । *तद्दूषणमिति । दूषणस्य ग्रन्थ एव प्रागुक्तत्वान्नेह प्रस्तूयते । *दशाहं सम्पूर्णमिति यावत् । *प्राप्तकालेति । प्रयागे सर्वस्वाशदात्रिव विहितोपायेन मरणेऽपि अप्राप्ततत्कालतया त्रिरात्राप्राप्तेरिति भावः । युक्तं तु त्रिरात्रमिति स्वशुद्धमेव, प्राप्तकालपरतया वा नेयम् । सङ्ग्रामेऽनिच्छतः कातरत्वादिना हनने "क्षत्रधर्महतस्य च" इति सद्यःशौचविधौ विशेषणात् प्राप्तमृत्युकालविषयं वा, भृग्वादिसाह-

---

(१) 'प्रायशो' ग० ।

जातदन्तानां च त्रिरात्रम्' इति । *एवं मरणान्तप्रायश्चित्तेऽपि । पूर्वोक्तश्चात्महादेर्दाहाशौचादिनिषेधस्तदानीमेव, वत्सरान्ते तु सर्वमौर्ध्वदेहिकं कुर्यात्,

*गोब्राह्मणहतानां च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् ॥

इति हेमाद्रौ षट्त्रिंशन्मतात् । एवं *म्लेच्छीकृतानामपि गयाश्राद्धमपि कार्यम्;

ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी ।
सर्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनात् ॥

इत्यग्निपुराणात् । एवं ब्राह्मेपि---

क्रियते पतितानां तु गते संवत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिः ॥
मार्तण्डपादमूले वा श्राद्धं हरिहरौ स्मरन् ।

---

चर्यात् । *एवमिति । सम्पूर्णमाशौचमिति प्रकृतम्, अप्राप्तमरणकालत्वात् । और्ध्वदेहिकं च तदैव, "यस्य मरणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत सर्वाण्येतस्मिन् उदकादीनि प्रेतकार्याणि कुर्यात्" इति गौतमोक्तेः । प्रक्रान्तप्रायश्चित्तश्चेदन्तरा म्रियते तस्यापि आशौचं पूर्णमेव;

प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते ।
शुद्धस्तदहरेवासाविहलोके परत्र च ॥

इति हारीतेन तस्य शुद्धत्वोक्तेर्निर्दुष्टमरणे पूर्णाशौचस्यैव न्याय्यत्वात् । युद्धहतानां सद्यःशौचं वचनादित्युक्तं वक्ष्यति च । *गोब्राह्मणेति । नन्वेवं गोब्राह्मणहतभिन्नानां पाखण्ड्यात्मघातकादीनां वर्षादर्वागेव नारायणबल्यादिपूर्वकौर्ध्वदेहिकं स्यात् । न स्यात्,

बहूनामेकधर्माणामेकस्यापि यदुच्यते ।

सूर्यपद इत्यर्थः ।

*तत्र वर्षमध्ये कृत्यमुक्तमपरार्के वायुपुराणे—

शुक्लपक्षे तु द्वादश्यां कुर्यात् श्राद्धं तु वत्सरम् ।
द्वादशाहनि वा कुर्याच्छुक्ले च *प्रथमेऽहनि ॥

छागलेयः—

नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ।

---

सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृताः ॥

इति वचनात् । *म्लेच्छीकृतानामिति । तेषामपि पतितेषु प्रवेशादिति भावः । पाखण्ड्यादीनां क्रियाधिकारार्थमाह—*तत्र वर्षमध्ये इत्यादि । *प्रथमेऽहनीति । अत्रायं वीरभोजनप्रयोगः—नारायणबलिदिनात् पूर्वदिने तद्दिने वा देशकालौ सङ्कीर्त्य अमुकगोत्रनाम्नः आत्मघाताद्यन्यतमदोषनिवृत्तिपूर्वकं नारायणबल्यधिकारार्थं क्रियाधिकारार्थं वा वीरभोजनविधिं करिष्ये इति सङ्कल्प्य द्वादशाष्ट चतुरो वा विप्रान् निमन्त्र्य तेभ्यः भो वीररूप ब्राह्मण इदं ते पाद्यमिति पाद्यं दत्वा उपासनगन्धाक्षतपुष्पसिन्दूरपिष्टान्तकमालाधूपदीपासनादिपदोहेन पूर्वमन्त्रेण दत्वा मधुरान्नानि परिविष्य "इदं विष्णुः" इति मन्त्रानन्तरं पृथिव्यादिस्थवीरेभ्य इदमन्नं परिविष्टं परिवेक्ष्यमाणं चाऽऽतृप्तेः स्वाहा हव्यं न ममेति सजलं त्यक्त्वा प्रार्थयेदेभिर्मन्त्रैः—

पृथिव्यां ये स्थिता वीराः प्रेतमोक्षप्रदायकाः ।
प्रलयानलमुख्यास्ते गृह्णन्त्वन्नादि कल्पितम् ॥
येऽन्तरिक्षे स्थिता वीराः प्रेतपिण्डविघातकाः ।
यातुधानास्तु ते प्रेतं मुञ्चन्तु सुरपूजिताः ॥

ततः भुक्तवत्सु द्विजेषु सोदकुम्भां दक्षिणां ताम्बूलं च दत्वा प्रेतमुक्त्याशीस्तेभ्यो गृहीत्वा विष्णुं स्मरेदिति । प्रेताभ्युदयादिकामनाप्रयुक्तत्वे कामनाया असत्वेऽकरणे गर्हा नेति तत्परिहारार्थ-

तथा *तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥

व्यासः—

*नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते ।
तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथा ॥ इति ।

सचा *त्मघातादिप्रायश्चित्तं कृत्वा कार्यः । तदुक्तं हेमाद्रौ षट्त्रिंशन्मते—

कृत्वा चान्द्रायणं पूर्वं क्रिया कार्या यथाविधि ।
नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ॥
पिण्डोदकक्रियाः पश्चाद्वृषोत्सर्गादिकं च यत् ।
एकोद्दिष्टानि कुर्वीत सपिण्डीकरणं तथा ॥

दिवोदासीये वृद्धशातातपस्तु—

पतिते च मृते शुद्ध्यै प्राजापत्यांस्तु षोडश ।
मृते चात्मत्यागहिते कृच्छ्राणां नवतिं चरेत् ॥

---

त्वेन निसत्त्वलाभः । *तेषामिति पाखण्ड्यादीनां बुद्धिपूर्वकात्मघातकानां चेत्यर्थः । प्रेतशुद्धिकारकत्वमुक्त्वा शुद्धिरौर्ध्वदेहिकयोग्यतासम्पादकत्वमप्याह—*नारायणमिति । शिवं वेति वाशब्दश्चार्थे । द्वितीयेऽन्हि शैवपिण्डसत्त्वात् । शवं यावदिति पाठे तु नारायणं शवं समुद्दिश्येत्यस्य विष्णुरूपं प्रेतं ध्यात्वेत्यर्थः, 'विष्णुं बुद्धौ समालम्ब्य' इत्युक्तेः । *आत्मघातादीति । आदिना आत्मघातकाभिन्नस्य पाखण्ड्यादेस्तद्योग्यप्रायश्चित्तपरिग्रहः । न केवलमात्मघातिनामेव नारायणबलिः किन्तु वत्सरादूर्ध्वं येषामौर्ध्वदेहिकं विहितं तेषां सर्वेषां तदर्हतासम्पत्तये इति । प्रायश्चित्तार्हस्य ब्रह्महादेरपि तमाह—*नारायणबलिमिति । यत्र मरणं यस्य यस्य तत्र तत्रेति पाठासत्त्वे सुगमं । तत्पाठे तु अभिशस्तेत्यादि निर्धारणषष्ठ्योर्यस्य यस्येत्यनेनान्वयः । ब्राह्मणहतानामिति दर्पपरम् । अभिशस्तादीनां द्वादशवर्षाणीति ब्राह्मण-

इत्याह। इदं प्रायश्चित्तार्हपित्रादिविषयम्;

इन्द्रियैरपरित्यक्ता ये च मूढा विषादिनः

घातयन्ति स्वमात्मानं चाण्डालादिहताश्च ये॥

तेषां पुत्राश्च पौत्राश्च दयया समभिप्लुताः।

यथा श्राद्धं प्रतन्वन्ति विष्णुनामप्रतिष्ठितम्॥

यथा ते संप्रवक्ष्यामि नमस्कृत्य स्वयंभुवे॥

इति हेमाद्रौ तेनैवोक्तेः। तत्रैव बौधायनोपि-*नाराय-णबलिं व्याख्यास्यामः-

('(१)चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि।

दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥

विषशस्त्ररज्जुपाषाणाद्देशान्तरमृते वा') अभिशस्त-पतितसुरापात्मत्यागिनां ब्राह्मणहतानां च द्वादशवर्षाणि त्रीणि वा य(२)त्र मरणं यस्य तत्र कुर्वीत' इति।

*गृह्यपरिशिष्टे तु-चण्डालादित्याद्युक्त्वा—

*दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः।

प्रायश्चित्तं तु कर्तव्यं पुत्रैश्चान्द्रायणत्रयम्॥

---

हतानां त्रीणीति यथासंख्येनान्वयः। अशक्तौ सर्वेषामेव त्रीणीति सूचनाय वाकारः। एतच्च तद्योग्यप्रायश्चित्ताभिप्रायम्। यत्रेति क्वाचित्कसम्पातः। मदनरत्ने मरणं यस्य यस्य तत्र तत्रेति न दृश्यते इत्यनुपदं स्फुटम्। कृत्वा चान्द्रायणं पूर्वमित्येकं चान्द्रायणं नारायणबल्यधिकारार्थत्वेनोक्तं तच्चाशक्तस्य। शक्तं प्रत्याह-*गृह्येति। *दग्ध्वेति।

न संस्कारविधिस्तेषां नैव कार्योदकक्रिया।

दहनं नैव कर्तव्यं सूतकं च न बन्धुभिः॥

---

(१) अत्रत्यधनुश्चिह्नान्तर्गतो भागो नास्ति क०छ०

(२) 'यत्र मरणं यस्य यस्य तत्र तत्र कुर्वीत' क०इदं नास्ति ग०

इत्युक्तम् । (मद(१)नरत्ने—"ब्राह्मणहतानां द्वादशवर्षाणि त्रीणि वा कुर्वीत" इति ।) मदनरत्ने ब्राह्मे—

*प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः ।
चाण्डालैर्ब्राह्मणैश्चौरैर्निहतो यत्र कुत्रचित् ॥
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ।
चान्द्रायणं त(२)प्तकृच्छ्रं द्वयं तस्य विशुद्धये ॥
यद्वा कृच्छ्रान्पञ्चदश कृत्वा तु विधिना दहेत् ।
बुद्धिपूर्वमृतानां तु त्रिंशत्कृच्छ्रं समाचरेत् ॥

इत्युक्तम् । स्मृतिरत्नावल्यां तु—'*द्विगुणं प्रायश्चित्तं कृत्वाऽर्वागप्यब्दात्सर्वं कार्यम्' इत्युक्तम् ।

आत्मनो घातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयम् ।
तप्तकृच्छ्रचतुष्कं च त्रिंशत्कृच्छ्राणि वा पुनः ॥
अर्वाक् संवत्सरात्कुर्याद्दहनादि यथोदितम् ।
कृत्वा नारायणबलिमनित्यत्वात्तदायुषः ॥ इति ।

---

इति पूर्वश्लोकात् प्रतिपत्तिलाभः । *प्रमादादपीति । चाण्डालादिप्रमादमृतानां वत्सरान्तप्रतीक्षानां नारायणबलिश्च नास्ति किन्तु प्रायश्चित्तोत्तरं तदैवोर्ध्वदेहिकमित्यर्थः । विधिचोदित इत्यनन्तरं—

शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ।

इति पाठः । चान्द्रायणं तप्तकृच्छ्रद्वयसमुच्चितं नतु तयोर्विकल्पः । *द्विगुणमिति । बुद्धिपूर्वमृतानामिति वर्तते ।

जलयुद्धधनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रपतनप्रायशस्त्रघातहताश्च ये ॥

इत्यात्मघातिन उपक्रम्य—

चान्द्रायणेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन च ।

---

(१) कंसान्तर्गतं नास्ति छ० (२) 'तप्तकृच्छ्रद्वयं' ग०छ०

इदं चात्मवधनिमित्तं तज्जातिवधप्रायश्चित्तेन समुच्चितं कार्यम्। *अतएव बौधायनेनोक्तं 'द्वादश वर्षाणि त्रीणि वा' इति। मदनपारिजाते स्मृत्यर्थसारे च—'ब्रह्महादीनां तद्योग्यं प्रायश्चित्तं कृत्वा नारायणबलिः कार्यः' इत्युक्तम्। एवं *म्लेच्छीकृतानामपि। यत्तु कश्चिदाह—'पुत्रकृतेन प्रायश्चित्तेन पितुः पापनाशे मानाभावः, आत्मघाते तु *वचनादस्तु, महापातके तु कथं स्यात्' इति। सः स्वयमेवात्मवधप्रायश्चित्तस्य जातिवधनिमित्तेन समुच्चयं वदन् हृदयशून्य एव। नहि जातिवधनिमित्तं पुत्रैः कार्यमिति वचनमस्ति। पुत्रकर्तृकसर्वप्रायश्चित्तादिविलुप्त्यापत्तेः प्रागुक्तबौधायनवचनाच्चेति *दिक्। 'इदं प्रायश्चित्तार्हाणामेव। प्रायश्चित्तान-

इति यमोक्तादित्यादिः। अत्र तप्तकृच्छ्रद्वयेन वेति वाशब्दस्यैव सत्त्वाच्छक्त्या विकल्प इति तु न सत्। तथापाठकल्पने मानाभावात्। जातिवधप्रायश्चित्तविधिमाह—*अत एवेति। ब्रह्महादीनां प्रायश्चित्तार्हाणामिति शेषः। *म्लेच्छीकृताना-मिति। प्रा(१)यश्चित्तार्हाणां तेषां तद्योग्यप्रायश्चित्तमित्यादि अर्वागशब्दात्तदौर्ध्वदेहिकं द्विगुणं प्रायश्चित्तं कृत्वेत्यादि च वर्तते। तदनर्हाणां तु तेषां पतितोदकमेव। *वचनात् "शस्त्रघातहताश्च ये" इत्युक्तवचनात्। नन्वेवं—

जलाग्निपतने चैव प्रव्रज्यानाशकेषु च।

इति पराशरवचने मर्त्तुमुद्यम्य जीवितानामेवेदं नतु मृतानां तत्कर्तुरेवाभावादिति माधवेनोक्तं कथं सङ्गच्छते इत्यत आह—*दिगिति। स्मृत्यर्थसारादिवशान्माधवग्रन्थो जीवतां जातिवधेन समुच्चितस्य तस्यावश्यकतापरो नतु तन्मरणोत्तरं

---

(१) कैश्चित् प्रलोभ्य म्लेच्छीकृतानामित्यर्थः।

र्हाणां तु पतितोदकमात्रं कार्यम्' इति केचित् । मदनपारिजातादिस्वरसोऽप्येवम् ।*वस्तुतस्तु 'तदर्हानर्हयोर्वचनेऽनुपादानादविशेषात्तत्रापि नारायणबलिर्गयाश्राद्धं चेति युक्तम् ।

पतितोदकविधिस्तु *'पित्राद्यतिरिक्तविषयः' इत्यपरे । स यथा हेमाद्रौ ब्राह्मे-

पतितस्य तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति ।
स हि दासीं समाहूय सर्वगां दत्तवेतनाम् ॥
अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यथ ।
हे दासि गच्छ मूल्येन तिलानानय सत्वरम् ॥
तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी ।
उपविष्टा तु वामेन चरणेन ततः क्षिप ॥
कीर्तयेः पातकीसंज्ञां त्वं पिबेति मुहुर्वद ।
निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत् ॥
एवं कृते भवेत्तृप्तिः पतितानां च नान्यथा ॥ इति ।

इदं च मृताहे कार्यम्; "पतितस्य दासी मृताहि यदा घटमपवर्जयेदेतावताऽयमुपचरितो भवति" इति मदन-

---

तत्समुच्चितस्य तस्याप्रामाणिकत्वपरोऽपि, बौधायनवाक्यस्यैव तत्प्रमाणत्वात् ।

ग्रंथद्वयस्याप्यविरोधनिर्वाहाच्चेतिदिगर्थः । ब्रह्मचारिणां प्रायश्चित्तार्हाणां तद्योग्यप्रायश्चित्तोत्तरं नारायणबलिर्भवतीति च दिगर्थः । एतेन यतीनां तादृशानां तद्योग्यप्रायश्चित्तं नारायणबलिं च कृत्वा संस्कारारम्भ इति प्रतीयते । *वस्तुतस्त्विति ।इदमापाततः 'कारुण्यात्' इति हेतुना प्रायश्चित्तनारायणबलिसहितौर्ध्वदेहिकायोग्यत्वसिद्धेः । *पित्रादीति आदिना मातृभर्त्रोः परिग्रहः । प्रायश्चित्तानर्हस्य प्रायश्चित्तेच्छोश्चाऽजातप्रायश्चित्तादेश्च पित्रादेर्वर्षो-

रत्ने विष्णूक्तेः। *इदं चामत्यागिविषयम्; "आत्मत्यागिनः पतितास्ते नाशौचोदकभाजः स्युः" इत्युपक्रम्य विष्णुना एतस्याभिधानादिति गौडाः। ( उप(?)लक्षणत्वात्सर्वेषामिति तु युक्तम्। ) यत्तु कश्चिदाह—'यः पतितो घटस्फोटेन बान्धवैर्बहिष्कृतस्तद्विषयाणि क्रियानिषेधवाक्यानि। जीवत्येव तस्मिन्नन्त्यकर्मणः कृतत्वात्तत्पुनः करणाभावात्' इति सस्वबन्धुत्यागेन जातवैराग्यस्य कृतप्रायश्चित्तस्याप्यकरणापत्ते*र्मिताक्षरादिविरोधमपश्यन् मूर्ख इत्युपेक्षणीयः। नच कृतघटस्फोटस्य संग्रहविधिर्नेति वाच्यम्। मनुनाऽकृतघटस्फोटस्य त्यागमुक्त्वा—

प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम्।
तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये॥

इत्युक्तेः। *अन्यथा प्रायश्चित्तमात्रे एतत्प्रसङ्गात्। अतो घटस्फोटेन बहिष्कृतस्यापि पित्रादेरन्ते *ना-

---

र्ध्वं तद्योग्यप्रायश्चित्तानन्तरं नारायणबलिं कृत्वा दाहाद्यौर्ध्वदेहिकमित्याशयः। अत्र पित्रादेः प्रायश्चित्तानर्हस्य घटस्फोटं विना मृतस्य प्रायश्चित्तस्य पुत्रादिना दुष्करत्वात्। अत एव तद्वैगुण्याद्यसम्भवान्निषेधाभावाच्च पतितोदकविधिर्दुर्वारः। "एतावताऽयमुपचरितो भवति" इति ऋषिभिरभिहितस्योपचारस्य 'एतावता' शब्दध्वनितदाहाद्यकरणस्य च निवर्तनं चानुचितं 'पतितस्य' इत्यस्य पितृव्यादिमृतविशेषार्थत्वकल्पनापत्तेश्चेति पूर्वमतानुवर्तिनः। *इदं चेति। प्रायश्चित्तार्हात्मघातकेषु दासीघट "एतावतायमुपचरितो भवति" इति वाक्यविरुद्ध इत्यस्वरसः। *मिताक्षरादीति। पतितोदकविधेः तत्रोक्तेस्तद्विरोध इत्यर्थः। *अन्यथा घटस्फोटं विना प्रायश्चित्तस्थले एव मनूक्तविध्युपगमे। *नारायणबलि-

---

(१) कंसान्तर्गतं नास्ति ग०

रायणबलिः का(१)र्यः । *निषेधास्तु पितृव्यादिपरा इति तत्त्वम् । केचित्तु नारायणबलौ कृतेऽप्यन्त्यकर्म सपिण्डनवर्जं कार्यम्,

गोब्राह्मणहतानां च पतितानां तथैव च ।
व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ॥

इति वचनात् ।

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।

इति श्राद्धप्रकारोक्तेश्चेत्याहुः । ते हेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधा*न्निर्मूलत्वाच्छ्राद्धप्रकारस्य *वृद्धिश्राद्धविषयत्वादुपेक्ष्याः ॥

नारायणबलिस्तु हेमाद्र्याद्यनुसारेणोच्यते । तत्रादौ क्रियानिबन्धे गारुडे तर्पणमुक्तम्—

कार्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि ।
दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन् ॥
अनादिनिधनो देवः शङ्खचक्रगदाधरः ।
अक्षय्यः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भव ॥ इति ।

---

रिति । 'सङ्ग्रहयोग्यप्रायश्चित्तपूर्वकम्' इत्यादि । ततो दाहाद्यौर्ध्वदेहिकं भवतीति शेषः । *निषेधाः क्रियानिषेधाः । ननूक्तषट्त्रिंशन्मतवशात्सपिण्डननिषेधः पित्रादिभिन्नविषय एवास्तु तत्राह—*निर्मूलत्वादिति । नच—

व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ।
यदि माता यदि पिता भर्ता नैष विधिः स्मृतः ॥

इति वचनात्कथं निर्मूलत्वमिति वाच्यम्, निर्मूलत्वोक्तेः पित्रादिभिन्नस्य सर्वथाऽकरणपक्षाभिप्रायकत्वात् । *वृद्धीति । संवत्सरान्तःक्रियमाणेत्यादि । न च पतितस्य नारायणबल्यादिनौर्ध्वदे-

---

(१) 'कार्यः' नास्ति ग० छ०

*शुक्लैकादश्यां देशकालौ सङ्कीर्त्यामुकगोत्रस्यामुकस्य *दुर्मरणात्मघातजदोषनाशार्थमौर्ध्वदेहिकसम्प्रदानत्वयोग्यतासिद्ध्यर्थं नारायणबलिं करिष्ये इति सङ्कल्प्य। ब्रह्माणं विष्णुं शिवं यमं प्रेतं च पञ्चकुम्भेषु—

विष्णुः स्वर्णमयः कार्यो रुद्रस्ताम्रमयस्तथा ।
ब्रह्मा रौप्यमयस्तत्र यमो लोहमयो भवेत् ॥
प्रेतो दर्भमयः कार्य (१)इति देवप्रकल्पना ॥

इति गारुडोक्तासु सर्वासु हैमीषु वा प्रतिमासु षोडशोपचारैः पुरुषसूक्तेनाभ्यर्च्याग्निं प्रतिष्ठाप्य चरुं पुरुषसूक्तेन प्रत्यृचं नारायणायेदमिति हुत्वा देवानामग्रे दक्षिणाग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन् नामगोत्राभ्यां मधुघृततिलयुतान् दश पिण्डान् यज्ञोपवीत्येवामुकगोत्रामुकशर्मन् प्रेत विष्णुरूपाऽयं ते पिण्ड उपतिष्ठतामिति दत्त्वा पुरुषसूक्तेनाभिम(२)न्त्र्य 'यत्ते यमम्' इति सूक्तेन पिण्डाननुमन्त्र्य शङ्खोदकेनाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रं विष्णुरूपं प्रेतं तर्पयामि इति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा एकमामान्नं ब्रह्मादिपञ्चभ्यो दद्यात् ॥

---

हिके जाते तदाद्येव देयत्वात् पतितपदं प्रायश्चित्तानर्हपतितपरं, तस्य चौर्ध्वदेहिकासत्त्वे सपिण्डनानिषेधासंगतिरिति वाच्यम्, एवमपि ब्राह्मणहतादिब्रह्हणासामञ्जस्यापत्तेः । प्रायश्चित्तानर्हतदप्रसिद्धेः । *शुक्लैकादश्यामिति ।

एकादश्यां तु शुक्लायां पञ्चम्यां श्रवणेन वा ।
तथा मृतानां शुद्ध्यर्थं कार्यो नारायणो बलिः ॥

इति वचनात् पञ्चम्यां श्रवणे वा कार्यः । *दुर्मरणेति । विशि-

---

(१) 'इति देवप्रकल्पना' नास्ति क० छ०
(२) 'मन्त्र्य तेनैव शङ्खो' ग०

मन्त्रस्तु--

ब्रह्मविष्णुमहादेवा यमश्चैव सकिङ्करः ।

बलिं गृहीत्वा कुर्वन्तु प्रेतस्य च शुभां गतिम्॥ इति।

मिताक्षरायां तु होमबल्यादि नोक्तम् । ततः प्रतिदैवतं त्रिविधं फलं शर्करामधुगुडघृतानि च निवेद्य पिण्डानभ्यर्च्य नद्यां क्षिप्त्वा रात्रौ नव सप्त पञ्च वा विप्रानिमन्त्र्योपोषितो जागरं कृत्वा श्वोभूते पुनर्विष्णुं यम संपूज्यैकोद्दिष्टविधिना श्राद्धपञ्चकं करिष्य इत्युक्त्वा विष्णुब्रह्मशिवयमप्रेतान्स्मरन्विप्रानुपवेश्य प्रेतस्थाने चैकं विष्णुं स्मरन् पाद्यावाहनार्घ्ययुतं तृप्तिप्रश्नान्तं कृत्वोल्लेखनादि कृत्वाऽन्नशेषेण विष्णवे ब्रह्मणे शिवाय यमाय सपरिवाराय चतुरः पिण्डान् दत्त्वा प्रेतनामगोत्रे स्मृत्वा विष्णुनाम्ना पञ्चमं दत्त्वाऽभ्यर्च्याचान्तेभ्यो दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विशेषतः संतोष्य विप्रैः प्रेतायेदं तिलोदकमुपतिष्ठतामिति सतिलमुदकं दापयित्वा भुञ्जीतेति । अत्र *विशेषान्तरं भट्टकृतान्त्येष्टिपद्धतौ ज्ञेयम् ।

---

ष्योहः कार्यः । *विशेषान्तरमिति । पञ्चकलशस्थापनादि, तत्र प्रतिमासु पुरुषसूक्तेन विष्णुः, हिरण्यगर्भ इति ब्रह्मा, कद्रुद्रायेति रुद्रः, यमाय सोम इति यमः, नाममन्त्रेण प्रेतश्च पूज्यः । स्वगृह्योक्तविधिना स्थण्डिलेऽग्निप्रतिष्ठापनम् । अन्वाधाने आज्यभागान्त नारायणं षोडशकृत्वश्चरुणा शेषेण स्विष्टकृतमित्यादि स्वगृह्योक्तमार्गेण निर्वापादिना चरुं कुर्यात् । स्विष्टकृदादिहोमशेषं समाप्य देवाग्रे दशपिण्डदानमपसव्येन कुर्यात् । यज्ञोपवीतयेवेति आधुनिकेन केनचित् कल्पितः पाठः । भट्टैस्तु कुशैः पुरुषसूक्तेनाभिषेक उक्तः । अर्चनानन्तरं पिण्डान् प्रवाहनद्यां क्षिपेत् न पत्न्यै दद्यात् । मन्त्रेण प्रार्थ्य विष्ण्वादिभ्य इमं बलिं समर्पयामीति दद्यात् । शर्क-

सर्पहते तु वर्षपर्यन्तं पूर्वेऽह्न्येकभक्तपूर्वं शुक्लपञ्चम्यामुपवासं नक्तं वा कृत्वा पिष्टमयं *नाग*मनन्तवासुकिशङ्खपद्मकम्बलककर्कोटकाश्वतरधृतराष्ट्रशङ्खपालकालियतक्षककपिलेतिनामभिः प्रतिमासं सम्पूज्य पायसेन विप्रान् सम्भोज्य वत्सरान्ते हैमं नागं गां च दत्त्वा नारायणबलिं कुर्यात् । मूलं तु हेमाद्रौ ज्ञेयम् । बौधायनसूत्रे-सर्पमृतानां 'नमोस्तु सर्पेभ्यः' इति तिस्र आहुतीर्हुत्वा, उदके मृतानां समुद्राय वयुनाय हुत्वेति क्रियां कुर्यादिति शेषः । व्यासः—

सौवर्ण*भारनिष्पन्नं नागं कृत्वा तथैव गाम् ।
व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात् ॥

---

इत्यादि निवेदनानन्तरं पिण्डानभ्यर्च्य नद्यां क्षिप्त्वेति भट्टैर्नोक्तम् । मध्यान्हे विष्ण्वादेः पूजा । विप्रा यथाज्येष्ठमुदङ्मुखा उपवेश्याः । भूमिहिरण्यादिना प्रेतविप्रसंतोषानन्तरम् अक्षय्यस्थाने तिलदर्भतुलसीपुष्पशङ्खोदकधारां दद्यात् । एवं नारायणबलिं विधाय स्नात्वा गुडशर्करापायसादियुक्तं स्वजनैः सह भुञ्जीतेति पद्धतिस्थं विशेषान्तरमित्यर्थः । *नागः दारुमयो मृन्मयो वा पञ्चफण इति भट्टाः । *अनन्तेति । अनन्तो वासुकिः शङ्खो पद्मः कम्बल एव च । कर्कोटकश्चाश्वतरः धृतराष्ट्रः शङ्खपालः कालीयस्तक्षकश्चेति कपिलोऽत्राक्रमागतः । अनन्तो वासुकिस्तक्षकः शङ्खः पद्मकम्बलौ कर्कोटकश्चाश्वतरः धृतराष्ट्रः शङ्खपालः कालीयः कपिलश्चेति क्रमो भट्टैरुदाहृतः । अतोन्त्येष्टिपद्धतिस्थप्रकारेण शिष्टानुष्ठानमिष्यते । *भारनिष्पन्नमिति । भारः पलसहस्रद्वयम् ,

तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ।

( अ० को० ९७३ )

इति कोशात् । परन्तु प्रायोऽशक्यार्थविधिः । तारनिष्पन्नमिति

हेमाद्रौ भविष्ये—

*पञ्चम्यां पन्नगं हैमं स्वर्णेनैकेन कारयेत् ।
क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत् ॥
प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शम्भुना ॥ इति ।

अपरार्के स्मृत्यन्तरेऽपि—

तदैव शुद्ध्यति प्रेतो नारायणबलौ कृते ।
यो ददाति क्रियापिण्डं तस्मै प्रेताय वै सुतः ॥
तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः ।
विष्णुश्राद्धसमाप्तौ तु *त्रयोदश्यां दिनत्रयम् ॥
आशौचं पिण्डदः कुर्यान्न तु तद्बन्धुगोत्रजाः ।
यस्य वै मृत्युकाले तु व्युच्छिन्ना संततिर्भवेत् ॥
स वसेन्नरके नित्यं पङ्कमग्नः करी यथा ॥

इत्युपक्रम्य —

बलिं नारायणं कुर्यात्तस्योद्देशेन भक्तिमान् ।

इति गारुडोक्तेरपुत्रस्यापि पत्न्याद्यैः कार्यं इत्युक्तं देवयाज्ञिकेन ॥

अथ विधानादाशौचाभावः । यथा–यतियुद्धमृतादिषु—

त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः ।
यतेः किंचिन्न कर्तव्यं न चान्येषां करोति सः ॥

---

पाठान्तरम् । तदा यथाशक्ति हेम लभ्यते । अशक्तौ प्रकारान्तरमाह —*पञ्चम्यामिति । अत्रोभयोः पञ्चमीषु भूमौ नागं पिष्टेनालेख्य सितैः गन्धपुष्पादिभिस्तिलतण्डुलैश्चाभ्यर्च्य गव्यं क्षीरं मोदकं च भूमौ निवेद्योपस्थाय मुञ्च मुञ्चामुमिति वदेत् । एवमब्दं नागमभ्यर्च्य ततः सौवर्णं नागं गां च दद्यादिति प्रयोगः । *त्रयोदश्यामिति "द्वादशाहनि" इति पूर्वोक्तपक्षमभिप्रेत्य । यस्य जन्मान्तरेण ब्राह्मणवधादिना एतज्जन्मनि प्रेतकृतः संतत्यादिप-

इति ब्राह्मात्। उशनाः—

> एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा।
> अहन्येकादशे प्राप्ते पार्वणं तु विधीयते॥
> सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः।
> त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते॥

तत्संस्कारं वक्ष्यामः। दत्तात्रेयः—

> एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्।
> न कुर्याद्वार्षिकादन्यद्ब्रह्मभूताय भिक्षवे॥

वार्षिकादिति पूर्वभाविमासिकादीनिनिषेधो नतु दर्शादेः

> संन्यासिनोप्याब्दिकादि पुत्रः कुर्यात्*यथाविधि।

इति वायवीयोक्तेः। पृथ्वीचन्द्रोदये प्रजापतिः—

> अहन्येकादशे प्राप्ते पार्वणं तु विधीयते।
> सपिण्डीकरणं तस्य न कर्तव्यं सुतादिभिः॥

एषु सपिण्डनादिनिषेधानुवादेन पार्वणोक्तेस्तत्स्थानापन्नत्वं पार्वणस्य गम्यते। 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम्' इतिवत्। इदं वार्षिकादिविधानं च त्रिदण्डिनामेव। एकदण्डिपरमहंसादीनां तु न किमपि कार्यम्, पूर्वोक्तोशनोवाक्ये त्रिदण्डग्रहणादिति शूलपाण्यादयो गौडाः। *त्रिदण्डिशब्देन मनोदण्डादिदण्डत्रयोक्तेः।

> यस्यैते नियता दण्डाः स त्रिदण्डीति चोच्यते।

इति स्मृतेः।

---

कृतिवधः तन्नाशो वा, तेन तन्निवृत्त्यर्थमपि नारायणबलिः कार्यः।

प्रतिबन्धनिवृत्तिसन्देहे वीरभोजनपूर्वकं नारायणबलिं कृत्वा तदुत्तरं पञ्चदिनमध्ये प्रेतस्यौर्ध्वदेहिकं कार्यम्। ततोऽप्यनुवृत्तौ तद्वयाश्राद्धं चेत्यनन्तदेवादयः *यथाविधीति।

> महालये तु यच्छ्राद्धं द्वादश्यामेव तद्भवेत्।

बौधायनः—

नारायणबलिश्चास्य कर्तव्यो *द्वादशेऽहनि ।

अस्य पार्वणेन समुच्चयो ज्ञेयः । तं च स एवाह—

कृत्वा विष्णोर्महापूजां पायसं विनिवेदयेत् ।
*अग्नौ कृ(१)त्वा तु तच्छेषं व्याहृतीभिः समाहितः ॥
यतीन् गृहस्थान्साधून्वा निमन्त्र्य द्वादशावरान् ।
अभ्यर्च्य गन्धपुष्पाद्यैर्मन्त्रैर्द्वादशनामभिः ॥
संभोज्य हव्येनान्नेन दक्षिणां च निवेदयेत् ।
त्रयोदशं द्विजश्रेष्ठमात्मज्ञं संयतेन्द्रियम् ॥
विष्णुं यथातथाऽभ्यर्च्य पाद्याद्यैश्च विधानतः ।
दद्यात् पुरुषसूक्तेन गन्धपुष्पादिकं क्रमात् ॥
वस्त्रालंकरणादीनि यथाशक्ति प्रदापयेत् ।
उच्छिष्टसंनिधौ तस्य दर्भानास्तीर्य भूतले ॥
भूर्भुवःस्वःस्वधायुक्तैस्तस्मै दद्याद्बलित्रयम् ।
*अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥
य(२)त्फलं तल्लभेदेवं यः करोति यतिक्रियाम् ॥

शौनकस्तु—

शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम् ।
चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः ।

---

इत्युत्तरार्धम् । गौडमतेऽस्वरसमाह—*त्रिदण्डीति । *द्वादशेऽहनीति । त्रयोदशाहादिव्यावृत्तिः । *अग्नाविति । व्याहृतिभिरग्नौ हुत्वा तच्छेषं पायसं निवेदयेदित्यन्वयः । *अश्वमेधेति ।

एवं यः कुरुते विद्वान्नारायणबलिं द्विजः ।
विष्णुलोकमवाप्नोति पुरुषो नात्र संशयः ॥

---

(१) 'अग्नौ हुत्वा' क० छ० । (२) 'तत्फलं लभते देव' ग० ।

देशान्तरमृतानां च मृतानां वाऽन्यसाधनैः ॥
जीवच्छ्राद्धमृतानां च कनिष्ठानां तथैव च ।
यतीनां योगिनां पुंसामन्येषां मोक्षकाङ्क्षिणाम् ॥
पुण्यायाघक्षयार्थाय द्वादशेऽहनि कारयेत् ।
द्वादश्यां श्रवणेऽब्दान्ते पञ्चम्यां पर्वणोऽस्तु वा ॥

इत्युक्त्वा पूर्वोक्तं सर्वं विधिमुक्त्वा अतोदेवेति षड्भिः पुरुषसूक्तेन प्रत्यृचं पायसं हुत्वा केशवादिद्वादशनामभिस्तद्रूपिणे पित्रे द्वादश विप्रान् संभोज्य तैरेव द्वादश पिण्डान्दद्यादित्यधिकमाह । युद्धमृते तु प्रागुक्तम् । कृतजीवच्छ्राद्धे मृते सपिण्डैराशौचादि कार्यं न वा । तदुक्तं हेमाद्रौ लैङ्गे—

मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयम् ।
कालं गते द्विजे भूमौ खनेद्वापि दहेत वा ॥
पुत्रकृत्यमशेषं च कृत्वा दोषो न विद्यते ॥

जीवत्यपि विशेषस्तत्रैवोक्तः—

नित्यं नैमित्तिकं यत्तु कुर्याद्वा संत्यजेत वा ।
बान्धवेपि मृते तस्य नैवाशौचं विधीयते ॥
सूतकं च न संदेहः स्नानमात्रेण शुद्ध्यति ॥

*एतद्योगिविषयम्; 'योगमार्गरतोऽपि च' इति तस्याप्युक्तेः । तथा आहिताग्नौ प्रोषितमृते तदस्थिदाहात्पूर्वं *पुत्रादीनामाशौचं संध्यादिकर्मलोपश्च नास्ति,

अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ॥

इति स्मृतेः । आहिताग्नेर्दाहात्प्रागपि दशाहः संस्का-

---

इत्यादि । *एतदिति । योगिनां नित्यमिति नैमित्तिकद्वयं कृताकृतं, सपिण्डमरणे सद्यःशौचमेवेत्यर्थः । *पुत्रादीनामिति ।

राङ्गं च भिन्नो दशाह इति धूर्तस्वामी रामाण्डारश्च । तच्चिन्त्यम्, मूलैकवाक्यवचोविरोधाच्च । एतत्प्रागुक्तम् । अत्र देहस्यैव संभवे दाहः;

आहिताग्नौ विदेशस्थे मृते सति कलेवरम् ।
*निधेयं नाग्निभिर्यावत्तदाद्यैरपि दह्यते ॥

इति ब्राह्मोक्तेः ।

तदभावे छन्दोगपरिशिष्टे—

*विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा ।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्ववत् ॥
अस्थ्नामलाभे *पार्णानि शकलान्युक्तयावृता ।

---

आदिना पत्नीदुहितृदौहित्रादिग्रहः । *निधेयं तैलद्रोण्यादौ । पर्युषितदोषापवादः । अत्र मृताग्निहोत्रं वक्ष्यते । *विदेशेति । देशान्तरमरणे पराकषट्कमष्टौ वा कृच्छ्रान् कृत्वाऽस्थीनि दहेत् । पराको द्वादशाहोपवासः तत्प्रत्याम्नायस्तु एकोपवासे एकब्राह्मण-भोजनम् । पराके पञ्च त्रयो वा प्राजापत्याः;

पराकतप्तकृच्छ्राणां स्थाने कृच्छ्रत्रयं भवेत् ।

इति चतुर्विंशतिमतात् । यद्यस्थीनि चण्डालादिभिः स्पृष्टानि तदा पञ्चगव्यगङ्गोदकाभ्यां प्रक्षाल्य विधिना दाहः । अन्ये तु पञ्चगव्यादिप्रोक्षणमविशेषेणेच्छन्ति । *पार्णानि पालाशानि । तदुक्तं कल्पतरौ—

अस्थीनि चेन्न लभ्यन्ते प्रोषितस्याग्निहोत्रिणः ।
पालाशपत्रवृन्तानां षष्ट्यधिकशतत्रयम् ॥
कृष्णाजिने नराकारं कृत्वा वेष्ट्याऽऽजिनेन तम् ।
ऊर्णासूत्रेण बध्वैव यवपिष्टैः प्रलेपयेत् ॥
निर्दिश्य दद्यात्तत्तोयं नाम्नेत्याहाश्वलायनः ।
अङ्कुराऽऽज्येन दहेत्कृत्वा मृद्दिग्धं तं च पार्श्वतः ॥ इति ।
२२९॥

दाहयेद*स्थिसंख्यानि *ततः प्रभृति सूतकम् ॥

हेमाद्रौ षट्त्रिंशन्मते—

*कुर्याद्दर्भमयं प्रेतं दर्भैस्त्रिशतषष्टिभिः ।
पालाशीभिः समिद्भिर्वा संख्या चैवं प्रकीर्तिता ॥

भविष्ये—

*चत्वारिंशच्छिरःस्थाने ग्रीवायां च दशैव तु ।
बाह्वोश्चैव शतं दद्याद्विंशतिं च तथोरसि ॥
उदरे विंशतिं दद्यात्त्रिंशतं कटिदेशयोः ।
ऊर्वोश्चैव शतं दद्यात् त्रिंशतं जानुजङ्घयोः ॥

---

नराकारं कृत्वेति । शिरोमणिः—"पुनन्तु मा" "इमं मे च वरुण" इति च प्रेतस्य धारणं कुर्यात् । शालिग्रामशिलायां जलैः विच्छिन्नेऽग्नौ तदादिप्रायश्चित्तहोम्यद्रव्यदानपूर्वकमग्निं संपाद्य सर्वप्रायश्चित्तं कुर्यात् ।

विष्णुमुद्दिश्य दातव्या सुशीला गौः पयस्विनी ।
तिला लोहं हिरण्यं च कार्पासं लवणं तथा ।
सप्तधान्यं क्षितिर्गौश्च एकैकं पावनं स्मृतम् ॥

इत्यादिकं वैतरण्यादिकं चान्यतोऽवगन्तव्यम् । मृद्दिग्धमिति । यवपिष्टलेपोत्तरं मृदादिभिः आलिप्य दग्ध्वाऽस्थ्नां स्थाने तां दग्धां मृदं सञ्चिनुयादित्यर्थः । *उक्तयाऽऽवृता स्वशाखोक्तया अनुष्ठानपद्धत्या । *अस्थिसंख्यानि षष्ट्यधिकशतत्रयमितानि । *ततः प्रभृतीति पुत्रादीनां दुहितृदौहित्रादीनां चेति शेषः । "आहिताग्निश्चेत् प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववदाशौचम्" इति प्रोक्तवासिष्ठवचनात् प्राथमिकदाहमपेक्ष्य वैदिकदाहस्य द्वितीयत्वमालोच्य पुनःपदम् । इदं च देहालाभेऽस्थ्नां दाहविधानमाहिताग्निभिन्नस्यापि, तदभावे पर्णशरविधानात् । पलाशवृन्ताभावे त्वाह—*कुर्यादिति । वृन्त-

पादाङ्गुलीषु दश वै एषा च प्रेतकल्पना ॥

मदनरत्ने यज्ञपार्श्वः—

*शिरस्यशीत्यर्धं दद्याद् ग्रीवायां तु दशैव तु।
बाह्वोश्चैकशतं दद्याद्दश चैवाङ्गुलीषु च ॥
उरसि त्रिंशतं दद्याद्विंशतिं जठरोदरे।
द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव तु ॥
ऊर्वोश्चैकशतं दद्यात्रिंशतं जङ्घयोर्द्वयोः।
पादाङ्गुलीषु द्वे दद्यादेतत्प्रेतस्य कल्पनम् ॥
मस्तके नारिकेरं तु अलाबुं तालुके तथा।
पञ्चरत्नं मुखे न्यस्य जिह्वायां कदलीफलम् ॥
चक्षुषोस्तु कपर्दौ द्वौ नासिकायां तु कालकम्।
कर्णयोर्ब्रह्मपत्राणि केशे वटप्ररोहकाः ॥
नालकं कमलानां तु आन्त्रस्थाने विनिक्षिपेत्।
मृत्तिका तु वसा धातुर्हरितालकगन्धकौ ॥
शुक्रे तु पारदं दद्यात्पुरीषे पित्तलं तथा।
संधीषु तिलपिष्टं तु मांसे स्याद्यवपिष्टकम् ॥
मधु स्याल्लोहितस्थाने त्वचास्थाने मृगत्वचा ॥
स्त(१)नयोर्जम्बीरे देये नासायां शतपत्रकम्।
कमलं नाभिदेशे स्याद्वृन्ताके वृषणाश्रिते ॥
लिङ्गे च रक्तमूलं तु परिधानं दुकूलकम् ॥
गोमूत्रं गोमयं गन्धं सर्वौषध्यादि सर्वतः॥ इति।

'क्रि(२)यानिबन्धे गारुडेऽप्येवमुक्तवान्यदपि—

घृतं नाभ्यां प्रदेयं स्यात्कौपीने च त्रपु स्मृतम्।
मौक्तिकं स्तनयोर्मूर्ध्नि कुङ्कुमेन विलेपनम् ॥

---

विभागमाह—*चत्वारिंशादिति। *शिरसीति अन्त्येष्टिपद्धति-

---

(१) 'स्तनयोर्गुञ्जके' क० छ० (२) कंसान्तर्गतं नास्ति ग०।

सिन्दूरं नेत्रकोणेषु ताम्बूलाद्युपहारकैः ।
सर्वौषधियुतं प्रेतं कृत्वा पूजां यथोदिताम् ॥

इदं निरग्नेरपि । तत्रैव वृद्धमनुः—

प्रोषितस्य तथा कालो गतश्चेद् द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥

बृहस्पतिः—

यस्य न श्रूयते वार्ता यावद् द्वादशवत्सरान् ।
कुशपुत्रकदाहेन तस्य स्यादवधारणा ॥

भविष्ये—

पितरि प्रोषिते यस्य न वार्ता नैव चागमः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य तु संस्कारं यथोक्तविधिना ततः ।
तदादीन्येव सर्वाणि प्रेतकर्माणि कारयेत् ॥

द्वादशाब्दप्रतीक्षा पितृभिन्नविषयेति मदनरत्ने उक्तम् । *गृह्यकारिकायां तु—

तस्य पूर्ववयस्कस्य विंशत्यब्दोर्ध्वतः क्रिया ।
ऊर्ध्वं पञ्चदशाब्दात्तु मध्यमे वयसि स्मृता ॥
द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता ।
चान्द्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः ॥
कुशैः प्रतिकृतिं दग्ध्वा कार्या शौचादिका क्रिया ॥

इत्युक्तम् । पराशरः—

देशान्तरगतो नष्टस्तिथिर्न ज्ञायते यदि ।
कृष्णाष्टमी ह्यमावास्या कृष्णा चै(१)कादशी च या ॥
उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत् ॥

---

स्थप्रकारः । तत्रैव मनःशिलादिकमपि द्रष्टव्यम् । *गृह्येति ।

---

(१) 'चैकादशी तथा' क०छ० ।

*इदं मासज्ञाने ।

तत्राहिताग्नेः पूर्णाशौचम् । अनाहिताग्नेस्तु त्रिरात्रम्;

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयम् ।
तदभावे पलाशानां वृन्तैः कार्यः *पुमानपि ॥
वेष्टितव्यस्तथा यत्नात् कृष्णसारस्य चर्मणा ।
ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यो यवैस्तथा ॥
सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः ॥
एवं *पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥

इति ब्राह्मोक्तेः । इदं त्रिरात्रं न दशाहमध्ये दाहे, तत्र *'प्रोषिते कालशेषः स्यात्' इत्युक्तेः; किंतु तदूर्ध्वम् । *तत्र पत्नीपुत्रयोः पूर्वम*गृहीताशौचयोर्दशाहाद्येव । *गृहीताशौचयोस्तु त्रिरात्रम् । पत्नीमृतौ भर्तुश्चैवं सपत्न्योश्चैवमिति स्मृत्यर्थसारे । अन्यसापिण्डानां तु *सर्वत्र

---

अयं पक्षः शिष्टपरिगृहीतः । *इदमिति । मासाद्यज्ञाने च पूर्वं ग्रन्थ एवोक्तम् । *पुमानपीति ।

शतैस्त्रिभिः षष्ट्यधिकैः शरवृन्तैर्विधानतः ।

इत्युत्तरार्धम् । *पर्णशरं पर्णः पालाशः तस्य शरः पर्णत्रयवृन्तं तन्निमित्तं प्रतिरूपकमिति यावत् । *प्रोषित इति । देशान्तरस्थे मृते कालशेषोऽवशिष्टः कालः शुद्धिहेतुरित्यर्थः । यदि कथञ्चिच्छरीरादेर्लौकिकाग्निदाहजलादिप्रक्षेपादिना अलाभेन दशाहमध्ये पर्णशरदाहः क्रियते तदापि न त्रिरात्रं, प्रोषितत्वस्याविवक्षितत्वात् । दशाहोर्ध्वमनाहिताग्नेर्विशेषमाह— *तत्रेति । *अगृहीतेति । द्वादशवर्षादिप्रतीक्षास्थले तत्पूर्वं मरणसन्देहादन्यत्र मरणाज्ञानाद्वाऽशौचस्याग्रहः । *गृहीतेति । मरणनिश्चयेनेत्यादि । *सर्वत्र आशौचग्रहाग्रहयोः ।

पर्णशरदाहे त्रिरात्रम् । तदाहाङ्गिराः—

देशान्तरमृतं श्रुत्वा *नाशौचं चेत्कथंचन ।

गृहीतमिति शेषः ।

कालात्ययेऽपि कुर्वीत दाहकाले दिनत्रयम् ॥ इति ।

स्मृत्यर्थसारे तु गृहीताशौचानां स्नानमात्रमुक्तम् । बह्वृचपरिशिष्टेऽपि—*अथातीतसंस्कारः स चेदन्तर्दशाहं स्यात्तत्रैव सर्वं समापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यादन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्व(१)-माशौचम् । गृहीताशौचयोः कर्माङ्गं त्रिरात्रमिति । षडशीतावप्येवम् । विश्वादर्शे तु 'प्रतिकृतिदहने त्वग्निदे स्यात्त्रिरात्रम्' इत्युक्तम् । *द्वादशवर्षादिप्रतीचोत्तरं दाहे

---

*नाशौचमिति । गृहीतमिति शेषः । ननु दशाहमध्ये पर्णशरदाहे कुतो न त्रिरात्रं प्रोषिते कालशेषः स्यादित्यस्यान्यत्र सावकाशत्वादित्याशङ्क्याह—*अथेति । अग्निषु अस्थिसंस्कारे सपिण्डानां त्र्यहं गृहीताशौचानां स्नानमात्रं बोध्यम्, 'अग्निदे' इति क्त्वाप्रत्ययेन समानकर्तृकत्वलाभात् । अन्येषां तु प्रोषितमरणरीत्याऽऽशौचम् । अत्र सत्यपि क्त्वाप्रत्यये समानकर्तृकत्वं न विवक्षितम्, "पत्नीपुत्रयोः कर्माङ्गं त्रिरात्रम्" इति परिशिष्टादित्यस्वरसः । *द्वादशेति । पत्नीपुत्रभिन्नसपिण्डानां द्वादशाब्दोत्तरं दाहे त्रिरात्रं तत्र मरणकालानवधारणेन कालविशेषव्यवस्थितत्रिरात्राद्यतिक्रान्ताशौचपक्षासम्भवेन प्राथमिकत्रिरात्रपक्षस्यैवोचितत्वात् । अन्यत्र तु व्यवस्थयाऽतीतसंस्कारः, अस्थिपालाशयसंस्कारः, त्रिरात्राद्यतिक्रान्ता-

---

(१) 'दशरात्रं' क० छ० सर्वं दशाहमित्यर्थः । इदं सपिण्डानाम् । दुहितृदौहित्रादयोऽपि स्वस्वाशौचभागिनः स्युः "आहिताग्निश्चेत् प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववदाशौचम्" इति वसिष्ठोक्तेः । अन्येष्वनाहिताग्निषु सपिण्डानामगृहीताशौचानां त्रिरात्रम् । गृहीताशौचानां तु स्नानमात्रमित्यनन्तभट्टाः ।

तु पुत्रादीनां सर्वेषां त्रिरात्रमिति कल्पतरुदिवोदासादयः

अथ *प्रेतसंस्कारे कालः । हेमाद्रौ गार्ग्यः—

प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् ।
आशौचमध्ये संस्कारे दिनं शोध्यं तु संभवे ॥
आशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः ।
संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि ॥
प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् ।
कृष्णपक्षश्च तत्रापि वर्जयेत्तु दि(१)नक्षयम् ॥

वाराहे—

चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत् ।
प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा ॥
करणे विष्टिसंज्ञे च शनैश्चरदिने तथा ।
त्रयोदश्यां विशेषेण जन्मतारात्रये तथा ॥
जन्मदशमैकोनविंशानि ज(२)न्मताराः ।

भारते—

नक्षत्रे तु न कुर्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रौष्ठपदयोः कार्यं तथाऽऽ*ग्नेये च भारत ॥
* दारुणेषु च सर्वेषु *प्रत्यरे च विवर्जयेत् ॥

काश्यपः—

भरण्यार्द्रामघाश्लेषामूलं द्विचरणानि च ।

---

शौचपक्षा एवेति । अन्ये तु गृहीताशौचानामगृहीताशौचानां वा सर्वेषां पुत्रादिसपिण्डानां सर्वत्र स्वाशौचकालादूर्ध्वं प्रतिकृतिदाहे त्रिरात्रमित्याहुः । *प्रेतसंस्कारे इति । त्रिपक्षादिक्रियमाणसपिण्डने यथोचितो निषेधकालो वर्ज्य इति बोध्यम् । *आग्नेयं कृत्तिका । *दारुणानि आर्द्राऽऽश्लेषाज्येष्ठामूलानि । *प्रत्य-

---

(१) 'दिनत्रयम्' क० (२) 'जन्मतारात्रयं' क० छ०

प्रेतकृत्येऽतिदुष्टानि धनिष्ठाद्यं च पञ्चकम् ॥
फाल्गुनीद्वितयं रोहिण्यनूराधापुनर्वसू ।
आषाढे द्वे विशाखा च भानि द्विचरणानि च ॥
(१)एतानि किञ्चिद्दुष्टानि सम्भवे सति वर्जयेत् ॥

ज्योतिर्नारदः—

चतुर्दशीं तिथिं नन्दां भद्रां शुक्रारवासरौ ।
सितेज्ययोरस्तमयं *द्व्यङ्घ्रिभं विषमाङ्घ्रिभम् ॥
शुक्लपक्षं च संत्यज्य पुनर्दहनमुत्तमम् ।
वसूत्तरार्धतः पञ्चनक्षत्रेषु त्रिजन्मसु ॥
पौष्णब्रह्मर्क्षयोश्चैव दहनात्कुलनाशनम् ॥

अस्यापवादमाह तत्रैव वैजवापः—

प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि ।
नक्षत्रतिथिवारादि शोधनीयं न किंचन ॥
*युगमन्वादिसंक्रान्तिदर्शे प्रेतक्रिया यदि ।
दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ॥

विश्वप्रकाशेऽपि—

गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे ।
नातीतः पितृमेधः स्याद्गयां गोदावरीं विना ॥

दानमपि तत्रैवोक्तम्—

भद्रायां भूमिदानं स्यात्त्रिपादर्क्षे हिरण्यदः ।

---

राणि जन्मनक्षत्रात् पञ्चमचतुर्दशत्रयोविंशानि । *द्व्यङ्घ्रिभमिति । द्विपुष्करावपि वर्ज्यौ प्रेतश्राद्धे प्रकृते—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
तत्र श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥

इत्यादिवचनात् । *युगेति । प्रेतक्रियायां दैवात् युगादि-

---

(१) 'इदमर्धं नास्ति ग०

वारेषु तत्तद्वर्णं तु वासोदानं विधीयते ॥
धनिष्ठापञ्चकमृते पञ्चरत्नानि दापयेत् ।
एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् ॥
नवषट्त्रिपलं वापि दद्याद्विप्राय शक्तितः ॥

इत्यलं प्रसङ्गेन ॥

हेमाद्रौ वृद्धमनुः—

अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकम् ।
प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च ॥
जीवन्यदि समागच्छेद् घृतकुम्भे निमज्ज्य तम् ।
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत तां भार्यामन्यां वा *तदभावतः ॥
अग्नीनाधाय विधिवद् व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः ॥

अनाहिताग्नेस्तु चरुः । मृ(१)तवार्ताश्रवणे त्वाश्वलायनः-

'सुरभय एव यस्मिन् जीवे मृतशब्दः' इति । यस्य तु जीवत एव मृतिवार्तां श्रुत्वा स्त्रिया सहगमनं कृतं तदा तद्वैधमेव, भर्तुर्मरणज्ञानस्यैव निमित्तत्वात प्रमात्वस्य गौरवेणायुक्तत्वाच्चेति केचित् । तन्न, मरणज्ञानस्य निमित्तत्वेतीतानागतयोरपि त(२)थात्वापत्तेः, भर्तुर्वैधदाहाभावेन तस्याः सहगमनाभावाच्च । तस्मादाशौचवज्ज्ञातमरणस्यैव निमित्तत्वम् । नचात्र तदस्ति । परं काम्यं

प्राप्तौ तिथ्यादि न शोध्यम्, नतु शुद्धकाले तदनुष्ठानसम्भवे तत्र निषेधाभाव इत्यर्थः । *तदभावत इति । सहगमनादिना-

(१) 'मृतवार्तामात्रश्रवणे इत्याश्वलायनः' क० छ०
(२) 'तत्रापत्तेः' ग०

मरणमस्तु । अत आत्महननदोषोऽस्तीति तातपादाः ।

तथा सर्पसंस्कारे कृते त्रिरात्रमाशौचम् । तद्विधिं चाह शौनकः—

अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमम् ।
सिनीवाल्यां पौर्णमास्यां पञ्चम्यां वापि कारयेत् ॥
कृतसर्पवधो विप्रः पूर्वजन्मनि वा यदि ।
वधं प्रख्यापयेत्पापी चरेत्कृच्छ्रांश्चतुर्दश ॥
विप्राय *लोहदण्डं च तन्मूल्यं वापि दापयेत् ॥
(या(१)ज्ञवल्क्योऽपि *"उरगेष्वा*यसो दण्डः" इति ।)

मूल्यमाह—

निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसम् ।
अनुमत्यादिकर्तॄणां निष्कमर्धं तदर्धकम् ॥

इदं स्वर्णरूप्ययोः शक्त्या ज्ञेयम् । संस्कारमाह—

प्रियङ्गुव्रीहिगोधूमैस्तिलपिष्टेन वा पुनः ।
कृत्वा सर्पाकृतिं शूर्पे निधाय प्रार्थयेदहिम् ॥
एहि पूर्वमृतः सर्प अस्मिन्पिष्टे समाविश ॥
संस्कारार्थमहं भक्त्या प्रार्थयामि समाहितः ॥
वस्त्रोपवीतगन्धाद्यैः संपूज्य च हरेद्बहिः ।
कुर्यात्संस्कारसंकल्पं प्राणायामपुरःसरम् ॥
यज्ञोपवीतिना कार्यं सर्पसंस्कारकर्म तु ।
लौकिकाग्निं प्रतिष्ठाप्य समिदाधानमाचरेत् ॥
ततोऽग्नेराग्निदिग्भागे भूमिं संप्रोक्ष्य वारिभिः ।
चितिं कृत्वाथ संस्तीर्य कुशैराग्नेयकाग्रकैः ॥

---

ऽन्यथा वा मरणात् । *लोहं सुवर्णम् । सुवर्णपर्यायेषु तस्य पाठादिति शङ्कावारणायाह—*उरगेष्विति । *आयसः ती-

(१) कंसान्तर्गतं नास्ति क० ग०

पर्युक्ष्याग्निं परिस्तीर्य परिषिच्य समर्चयेत् ।
कृत्वेध्माधानमाघारौ चक्षुर्षी च यथाविधि ॥
सर्पं गृहीत्वा यत्नेन चितिमारोपयेत्सुधीः ।
स्रुवेण जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः ॥
सर्पास्ये जुहुयादाज्यं व्याहृत्या च समग्रया ।
आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत ॥
चमसस्थैर्जलैः सर्पं व्याहृत्याभ्युक्ष्य पाणिना ।
अग्ने रक्षाण इत्यनया सर्पायाग्निं प्रदापयेत् ॥
उपतिष्ठेद्दह्यमानं नमोस्तु सर्पमन्त्रतः ।
ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया ॥
पूर्वजन्मनि वा सर्प तत्सर्वं क्षन्तुमर्हसि ।
क्षीराज्येन ततश्चाग्निं प्रोक्ष्य व्याहृतिभिर्जलैः ॥
नास्थिसंचयनं कुर्यात् स्नात्वाचम्य गृहं व्रजेत् ।
ब्रह्मचर्यादिकं कार्यं त्रिरात्राशौचमिष्यते ॥
सचैलं तु चतुर्थेऽह्नि स्नात्वा विप्रान् समर्चयेत ।
सर्पोऽनन्तस्तथा शेषः कपिलो नाग एव च ॥
कालिकः शङ्खपालश्च भूधरश्चेति नामभिः ।
गन्धपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद् द्विजान् ॥
घृतपायसभक्ष्यैश्च द्विजानष्टौ तु भोजयेत् ।
एवं कृते विधानेन सर्पसंस्कारकर्मणि ॥
सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशयः ॥
इति सर्पसंस्कारः ॥

क्वचित्तु जीवतोप्यन्त्यकर्माशौचं च कार्यम् । यथा—

---

ष्णग्रान्तोऽयोमयः । तथा च मनुः—

अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः ।

पराशरः- हत्वा मूषकमार्जारसर्पाजगरडुण्डुभान् ।

कृसरं भोजयेद्विद्वान् लोहदण्डश्च दक्षिणा ॥ इति ।

*प्रायश्चित्तानिच्छोः पतितस्य घटस्फोटे,
पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह ।

---

*प्रायश्चित्तानिच्छोरिति । प्रायश्चित्तेच्छोर्विना प्रायश्चित्तं मरणे तूक्तम् । गर्भहननादीनि च पतननिमित्तानि त्यागविधौ ग्राह्याणि । येतु बलात्कारेण म्लेच्छीकृताः मासोषिते प्राजापत्यम्, आहिताग्नेः पराकं वाग्रायणं वा । वत्सरोषिते चान्द्रपरातकानुपातकानि अभ्यस्तान्युपपातकानि च । स्त्रीणां पतितानामाह गौतमः— "ब्रह्महसुरापगुरुतल्पगमातापितृयोनिसम्बद्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन्" इति । ब्रह्महादयः त्रयः प्रसिद्धाः । मातृयोनिसम्बद्धागः । पितृयोनिसम्बद्धागः । स्तेनः स्तुवर्णस्तेनः । नास्तिकः वेदशास्त्रादिष्वप्रामाण्यनिश्चयवान् गुरुवेदवचनादावविश्वस्तश्च । निन्दितकर्मणां यत्कर्माभ्यासेन महापापसाम्यं भवति तादृशस्योपपापादेरसकृत्कर्ता । पतितात्यागी । तत्र पतितत्यागो द्विधा, विशेषणस्य विशेष्यस्य वा त्यागात् । तत्राद्यः पतितेन विधिवन्निष्कृतौ कृतायां पातित्यरूपविशेषणत्यागात् । द्वितीयस्तु विशेष्यस्य पतितस्य घटस्फोटे तत्त्यागात् । तदन्यतरशून्यः तत्सपिण्डः । अत एव प्रायश्चित्तानिच्छोरिति विशेषणं सङ्गच्छते । पतितसंसर्गात्यागीति तु न, पतितपदे तत्संसर्गलक्षणापत्तेः "तैश्चाब्दं समाचरन्" इति संसर्गिणः पृथगुपादानाच्च । अपतितत्यागी निश्चितपापशून्यस्य द्वेषादिना मिथ्याभिशंसनेन बहिष्कर्ता । यथा कृतघटस्फोटस्यापि कृतविहितप्रायश्चित्तानन्तरं पुनर्विधिवदसङ्ग्रहीता । पातकसंयोजकः पतनीयेषु कर्मसु उपदेशादिना प्रवर्तक इत्यर्थः । एवमितरे वेदविप्लावकादयः पतिता अन्यतो बोध्याः । अत्रेदं सकलधर्मशास्त्रग्रन्थसम्मतं ग्रन्थकारसम्मतं च परमरहस्यम्— प्रायश्चित्तानिच्छुः तदिच्छुरपि प्रायश्चित्तानर्हश्च तत्सपिण्डानां घट-

स्फोटार्हः । तदकरणे तेषां पतितात्यागित्वेन पातित्यापातात् । तत्राद्यः पश्चात्तापशून्यतया प्रायश्चित्तानर्हः—

कृत्वा पापं न गूहेत गूह्यमानं विवर्द्धते ।
स्वल्पं वाऽपि प्रभूतं वा धर्मविद्भ्यो निवेदयेत् ॥

प्रायश्चित्ते समुत्पन्ने धीमान् सत्यपराक्रमः ।
मुहुरार्तवसंयुक्तः शुद्धिं याचेत मानवः ॥ इति,
प्रायश्चित्तमकुर्वाणाः पापेषु निरता जनाः ।
अपश्चात्तापिनः कष्टान् नरकान् यान्ति दारुणान् ॥

इति याज्ञवल्क्याच्च ॥ आहार्यानुतापेन दत्तमपि प्रायश्चित्तं वृथा चेष्टेति सौमनसं ग्राह्यम् । अन्त्यश्च—

विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं भवेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ॥

इत्याद्युक्तः । युगपत्क्रमाद्वा द्वितीयादिमहापापे तन्त्रेण प्रायश्चित्तं तद्द्विगुणादि । एवं यत्र क्रमेण प्रायश्चित्तान्यपि त्रीणि कृतानि तत्रोभयत्र चतुर्थे निमित्ते प्रायश्चित्ताभावः । तत्र घटस्फोटानन्तरं प्रायश्चित्ताभावात् सङ्ग्रहो न सम्भवति । तस्माद्यदि कश्चित्प्रायश्चित्ताधिकारी घटस्फोटानन्तरमनुतापपूर्वकं प्रायश्चित्तं कुर्यात्तन्मात्रपरः सङ्ग्रहविधिरिति । परन्तु इदानीं सङ्ग्रहार्थो न लक्ष्यते चरितव्रत आयाते इत्यत्र व्रतशब्दोपादानात्तत्सत्याम्नायमूलदाक्षिणात्याचरणमपि न कृतघटस्फोटशोधकं व्रतानुकल्पानामिहाविधानात् । तस्माद्घटस्फोटानन्तरं कस्यापि सङ्ग्रहो न कार्य इति । पुंसां स्त्रीणां च महापातकातिपातके इत्यादिप्रायश्चित्तानिच्छवः ये वा ते प्रायश्चित्तेच्छवोऽपि गवादिहिंसनाः उच्छिष्टभोजनमार्जनादिकारिणः खरोष्ट्रविड्वराहाद्यामिषाशिनो म्लेच्छस्त्रीभिः सङ्गतिसहितभोजनादिकारिणः, एवंजातीयकाः । ये वा कामतो म्लेच्छीभूतास्ते परित्यागविधौ ग्राह्याः । उदकदानादेरुपलक्षणं ब्राह्मणैरि-

निन्दितेऽहनि *सायाह्ने ज्ञात्यृत्विग्गुरुसंनिधौ ॥
*दासी घटमपां पूर्णं पर्यस्येत्*प्रेतवत्तदा ।
अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह ॥

इति मनूक्तेः । निन्दिते रिक्तादौ । अपरार्के वसिष्ठोऽपि—"वेदविप्लावकशूद्रयाजकोत्तमवर्णवर्गपतितास्तेषां पात्रनिनयनमपात्रसंस्कारादकृत्स्नं पात्रमादाय दासोऽसवर्णपुत्रो वा *बन्धुरसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्ताग्रान् दर्भान् *लोहितान् वोपस्तीर्यापः पूर्णं पात्रमस्मै निनयेन्निनेतारं चास्य प्रकीर्णकेशा ज्ञातयोऽ(१)न्वालभेरन्नपसव्यं कृत्वा गृहेषु स्वैरमापद्येरन्नत ऊर्ध्वं तेन तं धर्मयेयुस्तद्धर्माणस्तं धर्मयन्तः" इति । उत्तमवर्णा ब्राह्मणादयः तेषां वर्गः समूहस्तस्मात्पतिता ब्रह्महादयः । अपात्रसंस्कारः कुत्सितपात्रसमूहः । प्रवृत्ताग्राः

---

त्युपलक्षणम् । बान्धवैरिति केचित् सहमिलितैरित्यर्थः । *सायाह्ने अन्हः पञ्चमे भागे । घटनिनयनं च ज्ञातिभिः कार्यम्,

दासीकुम्भं बहिर्ग्रामान्निनयेरन् स्वबान्धवाः ।
पतितस्य बहिष्कुर्युः सर्वकार्येषु चैव तम् ॥

इति योगीश्वरवचनात् रिक्तादिसायान्हे हि तदर्थः । जीवत एव पतितस्य स्वज्ञातयो बान्धवा मातृपक्षाश्च ते सर्वे सन्निपत्य सपिण्डादिप्रेषितया दास्याऽऽनीतमप्पूर्णं घटं ग्रामाद्बहिर्निनयेयुरिति हि तदर्थः । अथवास्यैव सपिण्डादिनियुक्ता घटं निनयेदित्याह—*दासीति । दासी प्रेष्या । *प्रेतवत् । अपसव्यदक्षिणामुखत्वयोः प्राप्त्यर्थम् । *बन्धुरो ब्रह्मबन्ध्वादिस्ततसदृशः ततोऽपि निन्द्यः । *लोहितास्तृणभेदाः । आपद्येरन्नित्य-

---

(१) 'न्वारभेरन्' क०

छिन्नाग्राः । स्वैरं यथेच्छं *धर्मादिकार्यं कुर्युः । अस्माद्वचनसामर्थ्यात्पात्रनिनयनात्प्राक्पतितज्ञातीनां धर्मकार्येष्वधिकारो नास्तीत्यपरार्कः । *"तस्य विद्यागुरून् योनिसंबन्धांश्च संनिपात्य सर्वाण्युदकादिप्रेतकार्याणि कुर्युः, पात्रं चास्य विपर्यस्येयुर्दासः कर्मकरो वा*ऽवकरादमेध्यं पात्रमानीय दासीघटात्पूरयित्वा दक्षिणाभिमुखः पदा विपर्यस्येदमुमनुदकं करोमीति नामग्राहं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बद्धाश्च वीक्षेरन् अप उपस्पृश्य ग्रामं प्रविशेयुः" इति गौतमोक्तेश्च । उदकादीत्युक्तेर्दाहनिवृत्तिः । प्रेतकार्याण्येकादशाहश्राद्धान्तानि । दास्याऽऽहृतोऽम्बुघटो दासीघटः । *तेनोदकेनामेध्यपात्रं पूरयित्वा *दासादिर्न्युब्जं वामपादेन कुर्यादिति हरदत्तः । अत्र नामग्राहवचनमुदकादिप्रेतकार्ये त(१)द्वत्वार्थम् । तेन तत्तूष्णीं भवति । एतच्च प्रायश्चित्तानिच्छोः । "तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनः पुनराचारं लभस्वेति स यद्येवमप्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येत्"

---

स्यार्थमाह—*धर्मादीति । कार्यमित्याह—*तस्येति । *अवकारो ग्रामात्करः निनयनं न्युब्जीकरणं तच्च सव्येनेत्युक्तेः वामपादेनेत्याह—*तेनेति । *दासादिरिति । ज्ञातिरपि बोध्यः । कृतघटस्फोटेन तृणाद्यन्तरितसम्भाषणे "अत ऊर्ध्वं तेन संभाष्य तिष्ठेदेकरात्रं सावित्रीं जपन् ज्ञानपूर्वकं तु त्रिरात्रम्" इति मिताक्षरोक्तं प्रायश्चित्तम् । एवं सहासनादौ विहितं तत्कार्यम् स्त्रीणां तु नीचाभिगमनं गर्भपातनं भर्तृहिंसनं—

विशेषपतनीयानि स्त्रीणामेतानि च ध्रुवम् ।

---

(१) 'तद्वर्जनत्वार्थम्' ग०

इति शङ्खोक्तेः। जीवन्तमेवोद्दिश्य पिण्डोदकश्राद्धानि नाम्ना दद्यादित्यपरार्कः ॥

कृतप्रायश्चित्तस्य घटस्फोटे कृतेऽपि संग्रहविधिमाह-गौतमः—"यस्तु प्रायश्चित्तेन शुद्ध्येत्तस्मिञ्छुद्धे शातकुम्भमयं पात्रं पुण्यह्रदात्पूरयित्वा स्रवन्तीभ्यो वा तत एनमु*पस्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेच्छान्ता द्यौः शान्ता पृथिवी शान्तं विश्वमन्तारिक्षं यो रोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभि*स्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गां चाचार्याय। यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत्सर्वाण्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युरेतदेव शान्त्युदकं सर्वेषूपपातकेषु" इति। घटस्फोटोत्तरं प्राणान्तिकप्रायश्चित्ते कृते तु मृत एव शुद्धयेन्न तत्र संग्रहविधिः। अतस्तेन विनापि प्रेतकर्म कुर्यादित्यर्थः। उपपातकेष्वपि घटस्फोटे कृते एवं कार्यमित्यर्थः। या-

---

इति योगीश्वरोक्तासाधारणपतननिमित्तानां मध्ये "चतस्रस्तु परित्याज्याः" इत्यादिसपुरस्कृतपरित्यागवचनात्तासां प्रायश्चित्ताजिच्छूनां चेन्न गृहवासादिजीवनहेतूच्छेदेन त्यागोऽन्यासां तु तादृशानां त्यागेऽपि न जीवनहेतूच्छेदः,

पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः।
वासो गृहान्तिके देयमन्नवासः सरक्षणम् ॥

इति योगीश्वरोक्तेः। तृणपर्णमयं कुटीगृहवासः प्रधानगृहान्तिके देयम्। तथा प्राणधारणमात्रमन्नं मलिनं च वस्त्रं पुनः पुरुषान्तरोपभोगनिवारणसहितामित्यर्थः। एष एवेति त्यागसङ्ग्रहाभयातिदेशवशात् कृतप्रायश्चित्तानां स्त्रीणां सङ्ग्रहोऽपि ग्राह्यः।
*उपस्पर्शयेयुः ह्रदादौ स्नापयेयुः। *तरत्समन्दीभिरिति।

ज्ञवल्क्यः—

*चरितव्रत आयाते निनयेर*न्नवं घटम् ।

जुगुप्सेरन्नचाप्येनं *संवसेयुश्च सर्वशः ॥

कृतघटस्फोटस्यैवायं परिग्रहविधिरिति मिताक्षरायामपरार्के च । अन्यथा प्रायश्चित्तमात्रे एतत्प्रसङ्गात् । मनुरपि घटस्फोटमुक्त्वा—

निवर्तेरंस्ततस्तस्मात्संभाषण(१)सहासनैः ।

इत्युक्त्वा—

प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम् ।

तेनैव सार्धं *प्राश्येयुः स्नात्वा पुण्ये जलाशये ॥

इति तच्छब्दं प्रायुङ्क्त । अपरार्के वसिष्ठोपि—"पतितानां चरितव्रतानां प्रत्युद्धारोऽथाप्युदाहरन्ति—

अग्रेऽप्युद्धरतां गच्छेत्क्रीडन्निव हसन्निव ।

पश्चात्पातयतां गच्छेच्छोचन्निव रुदन्निव ॥

इत्याचार्यमातृपितृहन्तारस्तत्प्रसादादपगतपापा एषां तेषां प्रत्यापत्तिः । पूर्णह्रदात्प्रवृत्ताद्वा सकाञ्चनं पात्रे माहेयं वाऽद्भिः पूरयित्वापोहिष्ठीयाभिरेनमद्भिरभिषिञ्चेयुः, जपेदिति वर्तते । गौतमेन शान्त्युदककरणं विशेष उक्तः । सङ्ग्रहविधायकमाह—*चरितव्रते इति । *नवम् अनुपहतम् । *संवसेयुरिति । इदं तु बोध्यम्—

शरणागतबालस्त्रीहिंसकान् संवसेन्न तु ।

चीर्णव्रतानपि सदा कृतघ्नसहितानिमान् ॥

इति तु संवासापवादः । चीर्णव्रतान् प्रायश्चित्तेन क्षीणदोषान् । व्यभिचारिणीवधे प्रायश्चित्तस्याल्पत्वेऽपि वाचनिकोयं व्यवहारनिषेधः किमिदं वचनं न कुर्यात् नास्ति वचनस्यातिभार

(१) 'सहासने' क० छ०

सर्व एवाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातः" इति। प्रत्युद्धारः परिग्रहः। तत्रोद्धरतां हसन्निवाग्रेसरः स्यात् पातयतां घटस्फोटं कुर्वतां शोचन्निव पश्चाद्गच्छेत्। मातापित्रादिहन्तॄणां परिग्रहो न कार्यः। तत्प्रसादे सति चीर्णव्रतानां कार्यः। प्रवृत्तं निर्झरः। पुत्रजन्मनेत्यभिषेकोत्तरं जातकर्मादयः संस्काराः पुत्रजन्मवत्कार्या इत्यपरार्कौ व्याचख्यौ। अत एव विज्ञानेश्वरः—

*घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम्।

प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया॥

इत्यत्र गवां भक्षणाभावे पुनर्व्रतं चरेदित्येतत्प्रकृते, एवं चरितव्रतविधौ विशेषोऽयमिति वदन् घटस्फोटोत्तरं परिग्रह एवैतन्न सर्वत्रेत्याह। तस्मात्कृतेऽपि घटस्फोटे प्रायश्चित्तं परिग्रहविधिः पुनःसंस्कारो भवतीति सिद्धम्। तथा जीवच्छ्राद्धे कृते हेमाद्रौ बौधायनः—'तत्राशौचं दशाहं स्यात्' इत्यलं प्रसङ्गेन।

एवं सापवादे आशौचे उक्ते प्रतिशाखं भिन्नेऽप्यन्त्यकर्मणि साधारणं किञ्चिदुच्यते। तत्राधिकारिणः (१)श्राद्धप्रकरणे प्रागुक्ताः सर्वाभावे धर्मपुत्रो वा कार्यः,

*अपुत्रेण सुतः कार्यो *यादृक् तादृक् प्रयत्नतः।

पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च॥

---

इति। *प्राशयेयुः निनयेयुः। *घटेऽपवर्जिते—ह्रदादेरुद्धृत्य पूर्णकुम्भेऽपनिनीते। गोभिः संस्कारः तद्दत्तयवसभक्षणमेव। यवसः शिरसाऽऽनेयः "स्वशिरसा यवसमादाय गोभ्यो दद्यात्"इति हारीतवचनात्। *यादृगिति। पतितादिभिन्न इति

---

(१) 'श्राद्धप्रकरणे' नास्ति क०ख०।

इति व्यासवचनात् । गृह्यपरिशिष्टे—

*असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात्स *दशाहं समापयेत् ॥

दद्या*त्पिण्डमिति शेषः । भविष्ये—

यत्राद्यो दीयते पिण्डस्तत्र सर्वं समापयेत् ।

ब्राह्मेपि—

प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः ।
अन्नं नवसु चान्येषु स एव प्रददात्यपि ॥

विज्ञानेश्वरादयस्तु 'केचित्तु *अग्निं दद्यात्' इति व्याचक्षते ।

सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः ।
सोऽपि कुर्यान्नवश्राद्धं शुद्ध्येत्तु दशमेऽहनि ॥

इति दिवोदासीये वचनाच्च ।

तत्रैव—

दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनम् ।
भूमिष्ठं पितरं पुत्रो यदि दानं प्रदापयेत् ॥
तद्विशिष्टं गयाश्राद्धादश्वमेधशतादपि ॥

तानि यथा—

मोक्षं देहि हृषीकेश मोक्षं देहि जनार्दन ।
मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम ॥

---

च स्मृत्यन्तरादवगन्तव्यम् । *असगोत्र इति । यः संनिकृष्टः सगोत्रासन्निधानात् प्रथमेऽहनि दद्यात्स एव पश्चात्तत्सान्निधानेऽपि दद्यान्नान्य इत्यर्थः । *दशाहमिति । तद्दानमिति शेषः । प्रथमदिनारब्धकर्मण एव दशाहसमाप्त्यन्वयप्रतीतेर्दाहस्य तदसम्भवात् पूरयति—*पिण्डमिति । प्रेतोद्देश्यकत्यागार्थोऽत्र ददातिः । *अग्निमिति । अधिकार्यसन्निधानेऽन्येन दाहे कृते प्रथमपि-

इति मोक्षधेनुमन्त्रः।

ऐहिकामुष्मिकं यच्च सप्तजन्मार्जितं ऋणम्।
तत्सर्वं शुद्धिमायातु गामेतां ददतो मम॥

इति ऋणधेनोः।

आजन्मोपार्जितं पापं मनोवाक्कायकर्मभिः।
तत्सर्वं नाशमायातु गोप्रदानेन केशव॥

इति पापधेनोः। भारते—

शुक्लपक्षे दिवा भूमौ गङ्गायां चोत्तरायणे।
धन्यास्तात मरिष्यन्ति हृदयस्थे जनार्दने॥

हेमाद्रौ वाराहे—

*व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः।
पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः॥

व्यासः--

आसन्नमृत्युना देया *गौः सवत्सा तु पूर्ववत्।
तदभावे तु गौरेव नरकोत्तारणाय वै॥
तदा यदि न शक्नोति दातुं वैतरणीं तु गाम्।
श(१)क्तोऽन्योऽरुक्तदा दत्त्वा दद्याच्छ्रेयो मृतस्य तु॥

---

ण्डोपक्रमात् प्राक् पुत्रादेरागमनेऽपि दाहकर्तृभिन्नतया निषेधः। अधिकमग्रे। यदि दाहकर्ता दशाहमसमाप्य मृतस्तदा दशाहकर्त्रा दाहोऽप्यावर्तनीयः। तदा देशान्तरे प्रथमदाहे सहागताया अपि द्वितीयदाहे सहगमनं भवत्येवेत्याहुः। *व्यतीपात इति दानस्यासावश्यकत्वार्थम्। *गौरिति। वैतरणीं दत्त्वा--

प्रदत्तासि मया देवि तर्तुं दुस्तरकाम्यया।
तावत्कालं प्रतीक्षस्व यावदागमनं मम॥

इति प्रार्थयेत्। अरुगिति च्छेदः। मृतस्याभ्युदयार्थमिति

---

(१) 'शक्तोऽन्य उक्तगां दत्त्वा' ग०।

मदनरत्ने जातूकर्ण्यः—

*उत्क्रान्त्यादीनि दानानि दश दद्यान्मृतस्य तु ।
गोभूतिलहिरण्याज्यं वासो धान्यं गुडानि च ॥
रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात् ॥
एतानि दश दानानि नराणां मृत्युजन्मनोः ।
कुर्यादभ्युदयार्थं तु प्रेतेऽपि हि परत्र वै ॥

ब्राह्मे—

ताम्रपात्रं तिलैः पूर्णं (१)प्रस्थमात्रैर्द्विजाय तु ।
सहिरण्यं च यो दद्याच्छ्रद्धावित्तानुसारतः ॥
सर्वपापविशुद्धात्मा लभते गतिमुत्तमाम् ।
उत्क्रान्तवैतरिण्यौ च दशदानानि चैव हि ॥
प्रेतेऽपि कृत्वा तं प्रेतं शवधर्मेण दाहयेत् ॥

तत्रैव परिशिष्टे—

म्रियमाणस्य कर्णे तु *पुण्यमन्त्रान् (२)जपेत्ततः ।

क्रियानिबन्धे गारुडे त्वष्टौ दानान्युक्तानि ।

तुलसीसंनिधौ कृत्वा शालग्रामशिलां तथा ।
तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥
सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ इति ।

दशदानवैतरिणीधेनूत्क्रान्तधेनुदानादि भट्टकृतान्त्ये-

---

ष्टिपद्धतौ द्रष्टव्यम् । *उत्क्रान्तीति मरणात् प्रागकरणे तदुत्तरकर्तव्यतार्थम् । मरणात् पूर्वं सर्वं प्रायश्चित्तं कार्यम् , कलौ निष्पापपुरुषाभावात् । तदकृत्वा मृते तु पुत्रादिस्तदैव कुर्यात् । सूतकान्ते कर्तव्यत्वेन सङ्कल्पयेत् सूतकान्ते वा कुर्यात् । इदमाग्रिमाणि च प्रायश्चित्तानि सद्यःकरणे प्रत्याम्नायेनैव सूतकान्ते तु करणे मुख्यतः प्रत्याम्नायेन वा । *पुण्यमन्त्रानिति । "नानानंवा" इत्यादयो

---

(१) 'प्रस्थमात्रं' क० छ० । (२) 'जपेन्नरः' क० ।

ष्टिपद्धतौ ज्ञेयम् । *कर्ताऽन्त्यकर्माधिकारार्थं *त्रीन् कृच्छ्रान् कुर्यादिति तत्रैवोक्तम् । अत्र देवयाज्ञिकेन मुमूर्षोर्मधुपर्कदानमुक्तम् । तदुक्तं वाराहे—

दृष्ट्वा सुविह्वलं ह्येनं यममार्गानुसारिणम् ।
प्रयाणकाले तु नरो मन्त्रेण विधिपूर्वकम् ॥
मधुपर्कं त्वरन् गृह्य इमं मन्त्रमुदाहरेत् ।
"ॐगृहाण चेमं मधुपर्कमाद्यं
संसारनाशनकरं त्वमृतेन तुल्यम् ।
नारायणेन रचितं भगवत्प्रियाणां
दाहे च शान्तिकरणं सुरलोकपूज्यम् ॥
अनेनैव तु मन्त्रेण दद्याच्च मधुपर्ककम् ।
नरस्य मृत्युकाले तु परलोकसुखावहम् ॥

अथ दुर्मरणे दिवोदासीये—

*चण्डालादिमृते विप्रे त्वन्तरिक्षमृतेऽपि वा ।
कृच्छ्रातिकृच्छ्रचान्द्रैस्तु शुद्धिस्तत्र प्रकीर्तिता ॥

देवजानीये जाबालिः—

शूद्रेण दग्धो यो विप्रो न लभेच्छाश्वतीं गतिम् ।
प्रायश्चित्तं प्रकुर्वीत *ब्राह्मणः पापशुद्धये ॥
चान्द्रायणं पराकं च प्राजापत्यं *विशोधनम् ॥

---

वैदिकाः । अन्ये च गीताविष्णुसहस्रनामादयः । अन्यतो विस्तरः ।

*कर्तेति । प्रेतधनहारिणोऽन्त्यकर्माकरणे तु शङ्खः—

प्रेतस्य तु प्रेतकार्याण्यकृत्वा धनहारकः ।
वर्णानां तद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेत् ॥

*त्रीनिति । अत्यशक्तौ, शक्तौ द्वादशाशक्तौ षड् बोध्याः । *चण्डालादीति । प्रमादत इत्यादिः । तत्र पूर्वोक्तं विप्र इति द्विजोपलक्षणम् । *बान्धवः पुत्रादिः । ब्राह्मण इति पाठेऽप्ययमेवार्थः । *विशोधनमिति ।

गृह्यकारिकायाम्—

उदक्या सूतिका वापि यदि प्रेतं स्पृशन्ति हि ।
तस्यैष विधिरादिष्टो वात्स्येनैव महात्मना ॥

एष *सूतिकोक्तः । मदनरत्ने स्मृत्यन्तरे—

*ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च ।
अस्पृश्यस्पर्शने चैव *खट्वादिमरणेऽपि च ॥
श्वानक्रव्यादसंस्पर्शे क्रिमिकीटोद्भवेऽपि च ।
एतद्दोषानुसारेण प्रायश्चित्तं समाचरेत् ॥

---

विप्रेभ्यो दक्षिणां दद्यात्ततः स्यादौर्ध्वदेहिकम् ।

इत्युत्तरार्धम् । चान्द्रायणादित्रयं च दक्षिणारूपं । और्ध्वदेहिकं च पञ्चगव्यक्षालितानामस्थ्नां पलाशवृन्तानां वा दाहमारभ्य सर्वं द्रष्टव्यम् । *सूतिकोक्त इति ।

सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।

इत्यादिना वक्ष्यमाण इत्यर्थः । अत्रोदक्यासूतिकयोरस्पृश्ययोरुपादानाच्छूद्रस्य स्पर्शेऽपि सूतिकामरणोक्तविधिरेव कार्यः;

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत् ।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥

इति मनुना शूद्रस्यास्पृश्यत्वव्यञ्जनात् । अस्पृश्यस्पर्शदोषस्यैव हेतुत्वाभिधानाच्च । शूद्रस्पर्शश्च साक्षात् परम्परासाधारणो ग्राह्यः,

स्थापयन्त्यनभिप्रेतमेकाग्निं च कटादिषु ।
शिबिकायां विमाने वा प्रचेतोवचनादिह ॥

इति विहितवहनस्य साक्षात् स्पर्शं विनाऽपि संभवात् परम्परोक्तिः । *ऊर्ध्वेति । मरणे इत्यस्य प्रत्येकं सम्बधादूर्ध्वोच्छिष्टादेरस्पृश्यस्पृष्टस्य च मरणं लभ्यते । *खट्वादीति । आ-

कृच्छ्रां*स्त्रिषट्पञ्चदशांश्चान्द्रत्रयमथापि वा ॥
शुद्ध्यै तदानीं सम्पाद्य शवधर्मेण दाहयेत् ॥

गृह्यकारिकायाम्--
*खट्वायां मरणे चैव त्रींस्त्रीन्कृच्छ्रान् प्रकल्पयेत् ।
*समान्त्यजैस्तु संस्पृष्टो मृतो दैवात्कथंचन ॥
एकत्रिंशता कृच्छ्रैस्तु शुद्धिरुक्ता मनीषिभिः ।
कुणपे त्वर्धदग्धे तु चिता स्पृष्टान्त्यजादिभिः ।
तत्स्पर्शने दूषणं च त्रिभिः कृच्छ्रैर्विशुध्यति ॥

---

दिना गृहादिग्रहः । *त्रिषडिति । द्वादशापि द्रष्टव्याः । एवं यथाशक्ति सङ्कल्पः । *खट्वायामिति ।

ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च ।
अस्पृश्यस्पर्शने चैव अन्तरालमृतौ तथा ॥

इति पूर्वश्लोकः । त्रींस्त्रीनित्यस्य पूर्वनिमित्तकात् उत्तरनिमित्तके कृच्छ्रत्रयमधिकं कल्पयेदित्यर्थः । तेन ऊर्ध्वोच्छिष्टमरणे कृच्छ्रत्रयम् , अधरोच्छिष्टे षट्कम् , इत्यादिक्रमेण खट्वामरणेऽष्टादश कृच्छ्राः फलिताः चकारेण निगडबद्धमरणसंग्रहः । तथाच—

ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च ।
अस्पृश्यस्पर्शने चैव अन्तरालमृते तथा ॥
खट्वायां मरणे चैव तथा निगडबन्धने ।
समस्त्वेतेषु कृच्छ्रांस्त्रीन् षण् नव द्वादश क्रमात् ॥
पञ्चदश क्रमेणैव यथासंख्यं प्रकल्पयेत् ॥

इति गृह्यकारिकायां पठित्वा 'यथासंख्यं प्रकल्पयेत्" इत्यस्य पञ्चसूक्तमेव द्वयोरष्टादश कल्पयेदित्यर्थं ब्रुवाणा न विरुध्यन्ते । *समान्त्यजैरिति ।

रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैतेन्त्यावसायिनः ॥

धर्मप्रदीपे तु--

चाण्डालसूतिकोदक्या स्पृष्टे प्रेते तथैव च ।
तस्य पापविशुद्ध्यर्थं कृच्छ्रान् पञ्चदशाचरेत् ॥

इत्युक्तम् । मनुः--

*अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसम्पर्कदूषिता ।

अत्रापि कृच्छ्रत्रयम् 'अस्पृश्यस्पर्शने चैव' इत्युक्तेः । तत्रैव कर्मप्रदीपे--

रात्रौ वा रात्रिशेषे वा म्रियन्ते चेद्द्विजातयः ।
दाहं कृत्वा यथान्यायं *द्वौ पिण्डौ नि(१)र्वपेत्सुतः ॥

रजस्वलागर्भिण्यादिमृतौ तु वक्ष्यामः । निर्णयामृते पारिजाते यमः--

सन्ध्यायां वा तथा रात्रौ दाहः पाथेयकर्म च ।
नवश्राद्धं च नो कुर्यात्कृतं निष्फलतां व्रजेत् ॥

एतद्दिनमृतस्य रात्रिनिषेधार्थम् । यत्तु स्कान्दे--

यदि रात्रौ दहेत्तस्य समाप्तिर्दहनस्य तु ।
परेऽहन्युदिते सूर्ये कार्या तस्योदकक्रिया ॥
दग्धस्य तु न वै कार्या रात्रौ जातूदकक्रिया ॥ इति ।

तन्निर्मूलम् । रात्रिमृतस्य तु तत्रैव सङ्ग्रहे—

रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम् ।
वपनं नेष्यते रात्रौ श्वस्तनी वापनक्रिया ॥ इति ।

---

इति स्मृतिः । *अस्वर्ग्येति । यद्यप्यत्र—

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण निर्हरेत् ।

इति मृतद्विजस्य शूद्रस्पर्श एव लभ्यते तथापि तत्र सूतिकोक्तविधेरेव दर्शितत्वात् शूद्रसम्पर्केति पुनरुपादानवशाच्छूद्रस्पृष्टमरणमपि ग्राह्यम् । अतोऽस्पृश्यस्पर्शने चैवेत्यस्य नासङ्गतिः । *द्वौ पिण्डाविति ।

---

(१) 'निर्वपेत्सुधीः' क० ।

वपनं तु प्रातः। तच्च सर्वैः पुत्रैः कार्यम्,

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ।

आधाने सोमयागे च वपनं सप्तसु स्मृतम्॥

इति मिताक्षरायां स्मृतेः। मरणस्यानङ्गित्वान्नैमित्तिकमिदम्। तदेव सङ्ग्रहवचनेन परेद्युरुत्कृष्यते तीर्थवत्। तेन कस्यचिद्दाहाङ्गत्वोक्तिश्चिन्त्या। मदनरत्ने गालवः—

प्रथमेऽहनि कर्तव्यं वपनं चानुभाविनाम्।

प्रेतस्य केशश्मश्रून्वादि वापयित्वाऽथ दाहयेत्॥

*आशौचान्ते तु पुनः कार्यं विधिबलात्। मदनपारिजातेऽप्येवम्। तेन सर्वस्यास्य निर्मूलत्वोक्तिरज्ञोक्तिरेव स्मृतिरत्नावल्याम्—

*शवं रात्र्युषितं चेत्त्रीन् कृच्छ्रान् कृत्वा दहेत्सुतः।

मदनरत्नेऽङ्गिराः—

ऊर्ध्वोच्छिष्टाधरोच्छिष्टे ह्यन्तरिक्षमृतेऽपि वा।

कृच्छ्रत्रयं प्रकुर्वीत आशौचे मरणेऽपि च॥

---

परदिने प्रथमद्वितीयदिनावयवपिण्डौ तदानीमेवावयवविषमश्राद्धं वा परादिने एव सर्वपिण्डदानं च सङ्गतमित्याशयः। *आशौचान्ते त्विति।

क्रियां च कुरुते यस्तु तद्दिने तस्य मुण्डनम्।

लघीयसां दशाहे तु पुत्राणां वपनं भवेत्॥

इति देवलवचनात्। यथाचारमिति तु भट्टाः। वपनं चादौ वामश्मश्रुणः, "वामकर्णकेशवापनम्" इति प्रघट्टकेऽभिधानात् प्रेतकर्मणोऽप्रादक्षिण्याच्च। *शवमिति। रात्रीति सन्ध्योपलक्षणम्।

दिवा वा यदि वा रात्रौ शवस्तिष्ठति कर्हिचित्।

तत्पर्युषितमित्याहुर्दहने तस्य का गतिः॥

अथ साग्नेर्विशेषः । कारिकायाम्—

*कृष्णपक्षे प्रमीयेत यद्याहि प्रातराहुतीः ।
शेषास्तु जुहुयाद्दर्शपर्यन्ताः पक्षहोमवत् ॥

प्रतिपत्प्रातर्होमान्ता इत्यर्थः ; 'यद्याहिताग्निरपरपक्षे म्रियेताहुनिभिरेनं पूर्वपक्षे हरेयुः' इत्याश्वलायनोक्तेः ।

तदानीमेव जुहुया*त्सायंकालाहुतीरपि ।
*सायं म्रियेत चेत्सायमाहुतीर्जुहुयादथ ॥

---

पञ्चगव्येन संस्नाप्य प्राजापत्यत्रयं चरेत् ॥

इति गालवोक्तं पञ्चगव्यस्नानमपि कार्यम् । *कृष्णपक्षे इति । अन्त्येष्टिपद्धतौ औपासनाग्नेरेतदुक्तावपि आहिताग्नेरप्येतदावश्यकत्वार्थं यद्याहिताग्निरित्युक्तम् ,

यश्चाहिताग्नेर्धर्मः स्यात्स औपासनिकस्य तु ।

इत्युक्तेः । अयमर्थः—कृष्णपक्षे प्रातर्होमे जाते तत्काले वा सायंहोमपर्यन्तं यदि मरणशङ्का तदा यजमानस्तत्पुत्रादिर्वा देशकालौ सङ्कीर्त्य तदुत्तरदिनप्रातर्होमप्रभृति तत्प्रातर्होमप्रभृति वाऽऽगामिदर्शोत्तरप्रातिपत्प्रातर्होमान्तानवशिष्टान् सायमौपासनहोमांश्चेदानीं तण्डुलैः पयसा वा होष्यामीति सङ्कल्प्य तदारभ्य प्रतिपत् प्रातर्होमान्तान् औपासनहोमान पक्षहोमवत्कृत्वा तदानीमेव तद्दिनसायंहोममारभ्य दर्शसायंहोमान्तानौपासनहोमान् कुर्यादित्यर्थः । *सायमिति । सायंहोमे जाते तत्काले वा प्रातर्होमपर्यन्तं यदि मरणशङ्का तदा यजमानः तत्पुत्रादिर्वा देशकालौ संकीर्त्य तदुत्तरदिनसायंहोमं तत्सायंहोमं वा आरभ्य तदुत्तरदर्शसायंहोमान्तानवशिष्टानौपासनहोमान् तथा प्रातर्होमप्रभृतिदर्शोत्तरशुक्लप्रतिपत्प्रातर्होमान्तानवशिष्टान् प्रातरौपासनहोमांश्चेदानीं तण्डुलैः पयसा वा होष्यामीति संकल्प्य तदारभ्य दर्शसायंहोमान्तानौपासनहोमान् कृत्वा तदानीमेव तत्प्रातर्होममारभ्य प्रतिपत्प्रातर्होमा-

तदानीमेव जुहुयात्प्रातःकालाहुतीरपि ।
*सकृद्गृहीतमन्त्रेष्टं भिन्नं तन्त्रं च होमयोः ॥
दर्शं चापि प्रकुर्वीत स्थालीपाकं तदैव तु ॥

छन्दोगपरिशिष्टे—

*हुतायां सायमाहुत्यां दुर्बलश्चेद्गृही भवेत ।
प्रातर्होमस्तदैव स्यात् जीवेच्च स पुनर्न वा ॥

*इदं शुक्लपरम् । दुर्बलो मुमूर्षुः । त्रिकाण्डमण्डनः—

*दर्शेष्टिं च तदा कुर्यादिष्टिर्यदि न सम्भवेत् ।
देवतानां प्रधानानामेकैकस्य हुनेत्पृथक् ॥
पुरोनुवाक्यायाज्याभ्यां चतुरात्तघृताहुतीः ॥

---

न्तानौपासनहोमान् कुर्यादित्यर्थः । *सकृद्गृहीतमिति । उक्तसंकल्पानन्तरं पर्युक्षणान्ते बृहत्पात्रे प्रकृतहोममारभ्य शुक्लप्रतिपत्प्रातःपर्यन्तहोमानां प्रत्येकमाहुतिद्वयपर्याप्तं तथा दर्शसायपर्यन्तहोमानामाहुतिद्वयपर्याप्तं च गृह्णीयात् । ततः समिद्द्वयसहितं तदुदगग्नेर्नित्यवत्संस्कृत्य प्रातर्होमार्थमेकां समिधमाधाय प्रातर्होमाहुतिद्वयं हुत्वा सायंहोमार्थमन्यां समिधमाधाय सायमाहुतिद्वयं हुत्वा होमद्वयस्य नित्यमन्त्रैः सकृदुपस्थानं कुर्यात् हविष्यान्तेति पञ्चभिः प्राजापत्यैश्चोपतिष्ठेतेति । एवं सायं म्रियेतचेदित्यत्रापि उक्तम् ,

होमदर्शौ न कर्तव्यौ पुनर्यदि स जीवति ।

इति कारिकोक्तेः । *हुतायामिति । शुक्लपक्षे रात्रौ मरणशङ्कायां प्रातर्होमस्यैवापकर्ष इत्यर्थः । यदि होमं विना मृतस्तदा कृष्णपक्षेऽहर्मरणे प्रातराहुतिमारभ्य रात्रिमरणे सायमाहुतिमारभ्य पक्षहोमवन्मरणादिनादिदर्शपर्यन्तादिनसङ्ख्यया चतस्र आहुतीर्जुहुयात् । दर्शस्थालीपाकं च कुर्यात् । शुक्लपक्षे रात्रिमृतस्य प्रातराहुतिं जुहुयादिति । अपकृष्टौ होमदर्शौ यजमानजीवने पुनर्न कुर्यात् । *दर्शेष्टिमिति । एवञ्च स्मार्ताग्नेर्दर्शस्थालीपाकासम्भवे

पूर्णाहुतिः ।

अथ प्रयोगः—देशकालादिस्मरणान्ते इदानीमपकृष्य दर्शस्थालीपाकप्रधानदेवताभ्यः प्रत्येकं चतुर्गृहीतमाज्यं होष्यामीति संकल्प्य समन्त्रमाज्यमुत्पूय स्रुक्स्रुवौ संमृज्य स्रुचि चतुर्गृहीतेनाज्येनाऽग्नये स्वाहाऽग्नये न ममेति हुत्वा विष्णुं स्मरेदिति । म्रियमाणस्य न यज्ञलोपो भवतीति आपस्तम्बोक्तेः यथाऽऽहिताग्नेर्मृतिशङ्कायां "विष्णुं बुभूषन् यजेत" "वायव्यं श्वेतमालभेत भूतिकामः" इत्यादय आरब्धाः काम्या व्याध्युपशमनार्था नैमित्तिक्यश्चेष्ट्यादिविकृतयः प्रकृतिवदपकृष्य कार्याः । तदसम्भवे तद्वदेव चतुर्गृहीताज्यहोमः । तथौपासनाग्नेरपि मृतिशङ्कायां नैमित्तिकारब्धकाम्यानां स्थालीपाकानामपकर्षः कार्य एव । तदसंभवे तु प्रधानदेवताभ्यः पूर्णाहुतिः । तत्सूत्रस्येहापि प्रवृत्तेः । "य आहिताग्नेः पुरोडाशास्त इह च खादन्ति नामधेयेन होमः" इति बौधायनवचनाच्च रेणुकारिकादिश्रौतोक्तमविरोध्यन्यन्मृग्यं तु शतशस्त्विदमिति । एवञ्चारब्धश्रवणाकर्मप्रसवरोहणादेरपि अपकर्षः । अतिनैकट्ये तु प्रधानदेवतानां चतुर्गृहीताज्येन पूर्णाहुतिः । अष्टकाश्राद्धे त्वपकर्ष एव न तु पूर्णाहुतिः । तथा सति प्रधानभूतब्राह्मणभोजनादेर्लोपापत्तेः । एवञ्च पूर्वेद्युः श्राद्धारम्भेऽपकर्षप्रसक्तौ त्रयं तस्मिन् जाते तु द्वयम् । एकदिनेऽनेकनैमित्तिकश्राद्धपाते निमित्तोत्पत्त्यनुक्रमेणैव तत्कार्यमतिनैकट्यात् । पाकासंभवे तु आमेनैव "आपद्यनग्नौ" इत्यनेनाऽऽमविधानात् । मृतासपिण्डनादिवदष्टकादौ पाकानियमाच्च ।

अथ प्रयोगः-पूर्वेद्युः श्राद्धे निमन्त्रणोक्तेस्तदभावे तदैवोपासनाग्निं प्रज्वाल्येध्माधानान्तं व्यतिषक्ततन्त्रं कृत्वा ब्राह्मणवच्छौचाद्यन्ते चतुर्गुणं समं वामं त्यक्त्वा सक्तुपायसादिना पिण्डान् दत्त्वा पूर्वेद्युः श्राद्धं समाप्याष्टमीश्राद्धं कुर्यात् । तत्रातिनैकट्ये स्थालीपा-

तथा—

अग्नावरण्योरारूढे प्रमीयेत पतिर्यदि ।

प्रेतं स्पृष्ट्वा मथित्वाग्निं *जप्त्वा चोपावरोहणम् ॥

घृतं च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रिया ॥

विच्छिन्नश्रौताग्नेर्मृतौ तु प्रेताधानं तत्रैवोक्तम् ,

*प्रेतं स्वाग्न्यालये क्षिप्त्वा मथिताग्न्यानलेऽरणी ।

सन्निधायारणीं मन्थेद्यस्येति यजुषा ततः ॥

---

कदेवतानां पूर्णाहुतिं हुत्वाऽष्टमीश्राद्धप्रधानं संकल्प्याच्छादनान्ते आमं त्यक्त्वा श्राद्धं समापयेत् । ततोऽन्वष्टक्यं संकल्प्येध्माधानान्ते आमादिना श्राद्धं सप्तमीश्राद्धवत्समापयेदिति । अन्यशाखीयाना-मप्येवम् । एवं होमारम्भे कृतेऽधिश्रिते होमद्रव्ये कुशेषु स्थापिते वा यदि यजमानो मृतः । तदा तत्सर्वं हविर्निःशेषं दहेन्न होमः । अनधिश्रिते तु हौम्ये मृतौ पासनवद्धविःसंस्कारं कृत्वा होमः । तथाच कारिका—

म्रियेताधिश्रिते नित्यहोमद्रव्ये हवेषु च ।

यथा निःशेषदग्धानि तथा तानि दहेत्तदा ॥

बर्हिष्यासादितेष्वेवं हव्येषु म्रियते यदा ।

सायं प्रातिगृहीतानि देवतानां हवींषि तु ॥

चतुर्थ्यन्तानि नामानि तावतीनां वदेदथ ।

स्वाहाकारेण युगपत्सर्वाणि जुहुयादथ ॥

नेष्टं त्विष्टकृदाद्यन्तं शेषं कार्यमिति स्थितिः ।

*जप्त्वा चोपावरोहणमिति । "उपावरोह जातवेद इमं प्रेतः स्वर्गाय लोकाय जनय प्रजानन् । आयुः प्रजां रयिमस्मासु धेहि प्रेताहुतीश्चास्य जुषस्व स्वाहा" इत्युपावरोहमन्त्रः । *प्रेतमिति ।

विच्छिन्नवह्निमुत्सृष्टपावकं विधुरानलम् ।

"यस्याग्नयो जुह्वतो मांसकामाः
संकल्पयन्ते यजमानमांसम् ।
जाग्रन्तु ते हविषे सादिताय
स्वर्गं लोकमिमं प्रेतं नयन्तु" इति मन्त्रतः ॥

प्रणीय पावकं तूष्णीं द्वादशोपात्तसर्पिषा ।
तूष्णीं हुत्वा ततः कुर्यात्प्रेते माल्या इति क्रियाम् ॥
नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् ।
आहरेदरणीद्वन्द्वं मनोज्योतिर्ऋचा ततः ॥

यज्ञपार्श्वः—

यजमाने चितारूढे पात्रन्यासे कृते सति ।
वर्षाद्यभिहते वह्नौ कथं कुर्वन्ति याज्ञिकाः ॥

---

आहिताग्निं मृते दग्धुं त्रेताग्न्युत्पत्तिसिद्धये ॥
भरद्वाजादयः प्राहुः प्रेताधानविधिं पृथक् ।
प्राचीनावीतवानुद्धृत्यावोक्ष्याऽऽयतनान्यथ"इत्यादिः ॥
प्राचीनावीतवान् कुर्यादग्न्यगारे तथा खरान् ।
तत्राग्निना च संस्कृत्य प्रेतं स्वाग्न्यासने क्षिपेत् ॥
नर्यालयेऽरणी स्थाप्य मन्थेद्यस्येति मन्त्रतः ।

नर्यो गार्हपत्यः ।

तूष्णीमुद्धृत्य शंस्याग्निं संस्कृतेन च सर्पिषा ॥
शंस्ये हुत्वा स्रुचा तूष्णीं गृहीत्वा द्वादशस्रुवान् ।

शंस्य आहवनीयः ।

दक्षिणाग्निं समुद्धृत्य निर्दहेत् पूर्ववच्छवम् ॥

उत्सन्नाग्नेररणी सत्त्वे इदम् । अरण्योरभावे तु उत्सन्नाग्नेर्मृतस्याथ न स्तः । पूर्वं यदारणी—

आनीयान्ये तयोः प्रेतपाणिं स्थाप्याथ दक्षिणाम् ।
आयन्तु इति पुत्रादिः समारोप्य यजुर्जपेत् ॥

तदर्धदग्धकाष्ठेन मन्थनं तत्र कारयेत् ।
तच्छेषालाभतोऽन्येन *दग्धशेषेण वा पुनः ॥
हुत्वाज्यं लौकिके वह्नौ हुतशेषं दहेत्तु वा ।

अत्राग्निषु सत्सु पर्णशरैः शरीरोत्पत्तिः । शरीरे वा सति प्रेताधानेनाग्न्युत्पत्तिः । उभयाभावे तु प्रेताधानेऽनधिकाराद्दाहादिसंस्कारलोपः । उदकदानाद्येव कार्यमिति केशवीकारशानक्षयीप्रमुखाः । तन्न,

निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ।

इति विरोधात् । 'क्रियालोपगता ये च' इति निषेधात्,

तदभावे पलाशानां वृन्तैः कार्यः पुमानपि ।

---

मृताग्न्याधानवत्सर्वं कृत्वा तं पूर्ववद्दहेत् ।
अनाहिताग्नेरप्येवं मृताधानं यथोदितम् ॥

अनाहिताग्नेरिति स्मार्ताग्निकातीयादिपरं, तेषां स्मार्ताधानात् । तदितरस्य विच्छिन्नस्मार्तस्य मृतस्य मते पुनःसंधानमेव । तच्चेत्थम्—पितुर्मातुः पत्न्यादेर्वा गृह्याग्निं विच्छेददिनादारभ्य एतावन्तं कालं गृह्याग्निविच्छेदजनितप्रत्यवायपरिहारार्थममुकप्राजापत्यात्मकं प्रायश्चित्तममुकप्रत्याम्नायद्वारा सद्यः सूतकान्ते वा इति सङ्कल्प्य अग्निविच्छेदेन लुप्तानां सायंप्रातर्होमानां दर्शपूर्णमासस्थालीपाकानां च पर्याप्तं व्रीह्याद्याज्यं द्रव्यं च तद्द्रव्यनिष्क्रयं वा नानानामगोत्रेभ्यो दातुमहमुत्सृजे इत्युत्सृज्यामन्त्रकं प्राणानायम्य यथाशास्त्रं प्रेतपुनःसंधानसंकल्पं कुर्यादिति । अत्र नास्तिक्यादालस्यादितः प्रमादाद्वाऽग्नित्यागे भिन्नं प्रायश्चित्तं भट्टकृतान्त्येष्टितो बोध्यम् । एवमाहिताग्नेर्मृतिशङ्कायामाधानं स्मार्ताग्नेः पुनःसंधानं यजमानस्य तत्पत्न्या वाऽनुज्ञया तदन्वारब्धः पुत्रादिः कुर्यात् । *भस्मशेषेणेति ।

अग्निनाशे मृतिश्चेत्स्यादाहिताग्नेस्तदोच्यते ।

इत्थ*भावे विधानस्याग्न्यभावेऽपि साम्याच्च । तेन प्रेताह्न्यभावेऽपि* स्विष्टकृद्वद्द्रव्यान्तरोक्तेरदृष्टार्थत्वात् प्रेताधानं दाहोऽपि भवत्येव । प्रतिकृतेरग्नीनां च प्रेताधानप्रयोजकत्वाक्षतेः ।

*पत्न्या अप्येवम्,

*दाहयित्वाग्निहोत्रेण *स्त्रियं वृत्तवतीं पतिः ।

इति याज्ञवल्क्योक्तेः । यत्तु—

द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायां तु सुरापानसमं स्मृतम् ॥

इति, तदाधाने सहानधिकृताविषयमिति विज्ञानेश्वरः । मदनरत्ने ब्राह्मेऽपि—

आहिताग्न्योश्च दंपत्योर्यस्त्वादौ म्रियते भुवि ।

---

नयोल्मुकं मथित्वैनं संस्कुर्युस्तदभावतः ॥
तद्भस्मस्पृष्टकाष्ठेन मथित्वा निर्दहेच्च तम् ॥

इति कारिकोक्तेः दग्धशेषेणेति व्यर्थः पाठः । *अभावे शरीराभावे । क्वचित्तथैव पाठः । *स्विष्टकृद्वदिति । (१)यथा हुतशेषनाशे आज्येन स्विष्टकृद्याग: तथा मृतशरीरनाशे पर्णशराहुतिरित्यर्थः । *पत्न्या अप्येवमिति । यन्मृतिशङ्कादौ कर्त्तव्यं होमदर्शादिकमारभ्य एतदन्तमुक्तं तत् न केवलं यजमानस्यैव; किन्तु पत्न्या अपि तस्या अपि आहिताग्नित्वस्मार्ताग्नित्वयोः सत्त्वात् एतच्च तस्यास्तदायत्त एव लभ्यते इत्यतस्तं दर्शयति—*दाहयित्वेति । वृत्तहीनायाः केवलाग्निभिर्दाहः पात्राणां तु चितेरुत्तरतः समीपे त्रेताग्न्येकदेशेन पृथग्दाहः । अतिनिन्दितायास्तु केवलाग्निभिरपि न दाह इति मयूखः । *स्त्रियं स्त्रीमात्रम् ।

---

(१) अस्य 'यद्द्रव्येण होमस्तेनैव स्विष्टकृदिति सिद्धान्तसत्त्वेऽपि' इत्यादिः ।

त(१)स्य देहः सपिण्डैश्च दग्धव्यस्त्रिभिरग्निभिः ॥
पश्चान्मृतस्य देहस्तु दग्धव्यो *लौकिकाग्निना ।
*अनाहिताग्निदेहस्तु दाह्यो गृह्याग्निना द्विजैः ॥

त्रिकाण्डमण्डनस्तु विकल्पमाह—

ज्येष्ठायां विद्यमानायां द्वितीयायै स्वयोषिते ।
काम्यं नित्याग्निहोत्रं वा न कथंचित्प्रयच्छति ॥
स्त्रीमात्रमविशेषेण दग्ध्वान्यैर्वैदिकाग्निभिः ।
विवाह्यादधते यद्वाधानमेवास्ति चे*द्वधूः ॥ इति ।

अत्रेदं तत्त्वम् । साग्नेः पत्नीमृतौ द्वौ पक्षौ । पुनर्विवाहेच्छायां पूर्वाग्निभिर्दहेदित्येकः पक्षः,

भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि ।
*पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥

इति मनूक्तेः ।

दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।

इति याज्ञवल्क्योक्तेश्च । पुनर्विवाहाशक्तौ निर्मन्थ्येन तां दग्ध्वा पूर्वाग्निष्वेवाग्निहोत्रेष्ट्यादि कार्यमित्यन्यः । *'आहार्येणाहिताग्निं पत्नीं च' इत्याश्वलायनोक्तेः ।

---

*लौकिकाग्निनेति । अधिकाराभावे तत्सत्त्वेऽपि वा आलस्यादिनाऽग्नेरस्वीकारे विच्छेदे वा पूर्वासंस्कृतेनाग्निनेत्यर्थः । एवञ्च—

अनग्निकां दहेदेवं कापालेन हविर्भुजा ।

इतिवक्ष्यमाणा निरग्निका व्याख्याता । *अनाहिताग्नीति । एवञ्च सहानधिकृताया न आहिताग्न्येकदेशेन दाहः किन्तु गृह्याग्निसत्त्वे तेनैवान्यथा लौकिकाग्निनेति सूचितम् । *वधूरिति । ज्येष्ठा वा तदन्या वेत्यभिप्रायः । * पुनर्दारक्रियां कुर्यादिति । अत्रापि ज्येष्ठादिसत्त्वे आधानमेव । *आहा-

---

(१) 'तस्य दाहः सपिण्डैश्च कर्तव्य' क०

भरद्वाजोऽपि—'निर्मन्थ्येन पत्नीम्' इति । *पूर्वाग्न्येकदेशेन दहेदिति यज्ञपार्श्ववेदयाज्ञिकादयः । यानि च—'तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्' इति श्रुतिः, विष्णुः छन्दोगपरिशिष्टे च—

मृतायामपि भार्यायां वैदिकाग्निं नहि त्यजेत् ।
उपाधिनापि तत्कर्म यावज्जीवं समाचरेत् ॥

उपाधिर्हेमकुशपत्न्यादिः,

अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः ॥

इत्यपरार्के स्मृत्यन्तरात् । कात्यायनोऽपि—

रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम् ।
ईजे बहुविधैर्यज्ञैः सह भ्रातृभिरच्युतः ॥

इत्यादीनि, तानि पूर्वाग्निष्वेवाग्निहोत्रादिपराणि नत्वपत्नीकस्याधानार्थानि, क्रतुविधीनामाधानाप्रयोजकत्वात् । अपत्नीकस्याधानाप्रवृत्तिरिति मानवपरिशिष्टाच्च । सोमो न भवत्येव, 'अपत्नीकोऽप्यसोमपः' इति श्रुतेः । यत्तु भरद्वाजापस्तम्बसूत्रम्—'दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयम्' इति । अस्यार्थः—पुनर्विवाहाशक्तौ यदग्न्याधेयं पूर्वं कृतमस्ति तदात्मार्थमेव न पत्न्यै दद्यादिति । ब्राह्मणभाष्यापरार्काशार्करामाण्डारादितत्त्वमप्येवम् । त्रिकाण्डमण्डनस्तु पक्षद्वयमाह । अन्येऽप्यपत्नीकस्याधानमाहुस्तदाशयं न विद्मः । वृद्धयाज्ञवल्क्यः-

---

र्गीं निर्मन्थ्यः । *पूर्वाग्नीति ।

तस्मान्नग्नैकदेशेन दग्धव्या पूर्वमारिणी ।
पत्नी ज्येष्ठतरा वाऽपि यज्ञपार्श्वे निरूपितम् ॥

इति कारिकोक्तेः । एवञ्च संसृष्टस्मार्ताग्न्योः पूर्वं ज्येष्ठामरणे

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन लौकिकेनापरो जनः ॥

क्रतुः—

एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥

कारिकायाम्—

पत्नीमपि दहेदेवं भर्तुः पूर्वं मृता यदि ।
*अनाग्निकां दहेदेवं कपालेन हविर्भुजा ॥

( छ(१)न्दोगपरिशिष्टे—

अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः ॥

इदं छन्दोगानामेव । तथा—

अग्निनैव दहेद्भार्यां स्वतन्त्रां पतिता न चेत् ।
तदुत्तरेण पात्राणि दाहयेत्पृथगन्तिके ॥
इदमपि तेषामेव । )

आशौचप्रकाशे क्रतुः—

*विधुरं विधवां चैव कपालस्याग्निना दहेत् ।

---

स्मार्ताग्निना दाहः कनिष्ठया पुनः संधानं, कनिष्ठामरणे तु लौकिकाग्निना स्मार्ताग्न्येकदेशेन वेति यज्ञपार्श्वानुयायिनः । "दक्षिणपूर्वे आहवनीयं निदधाति उत्तरपश्चिमे गार्हपत्यं दक्षिणपश्चिमे दक्षिणाग्निम्" इति स्मरणात् । त्रिभिरित्युक्तेः सभ्यावसथ्ययोर्न दाहसाधनता । "सभ्यावसथ्यौ आहिताग्नेर्दाहकर्मणि न प्रयुज्येते चिताप्रदेशात् प्रागुदीच्यां दिशि [illegible]त्सृजति" इति शाट्यायनिवचनात् । *अनाग्निकामिति । भर्तुः पूर्वं मृतेति वर्तते । *विधुरमिति । स्त्रीपुंसयोः पूर्वं मृतस्य गृह्याग्निना दाहः पश्चान्मृतस्य

---

( १ )कंसान्तर्गतं नास्ति ग०

ब्रह्म(१)चारी यती चैव दह्येतोत्तपनाग्निना ॥
तुषाग्निना च दग्धव्यः *कन्यका बाल एव च ।
अग्निवर्णं कपालं तु कृत्वा तत्र विनिक्षिपेत् ॥
करीषादि ततो वह्निर्जातो यः स कपालजः ॥

अनुपनीते यद्यपि *जातारण्यग्निः कैश्चिदुक्तस्तथापि तस्य कलौ निषिद्धत्वोक्तेरयमेव ज्ञेयः । स्मृत्यन्तरे—

*गृहस्थो ब्रह्मचारी च विधुरो विधवाः स्त्रियः ।
औपासनश्चोत्तपनस्तुषाग्निस्तु कपालजः ॥

उत्तपनस्तु—

दर्भाग्रेऽग्निं तु प्रज्वाल्य पुनर्दर्भैस्तु संयुतः ।
पुनर्दर्भैस्तृतीयोऽग्निरेष उत्तपनः स्मृतः ॥

यमः—

यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि च ।
प्रेतत्वं च सदा तस्य स चाधर्मेण लिप्यते ॥

---

तु कापालाग्निनेत्यर्थः । *कन्यका अविवाहिता । बालोऽनुपनीतः । *जातारण्यग्निरिति । जाते पुत्रे तत्संबन्ध्यग्निसाध्यकर्मार्थं स्वशाखोक्तविधिना संपाद्योऽग्निः प्रजारण्यभिधानः, तन्माथितोऽग्निरित्यर्थः । *गृहस्थ इति यथासंख्यम् । ब्रह्मचारिणः कापालाग्निविकल्पः,

कपालाग्नेर्दहेदेनमुपनीय यथा नरः ।

इति वृत्तावुक्तेः । सर्वेषामनग्निकानां कापालेन लौकिकेन वा दाह इति भट्टाः । तदाशयं न विद्म इति । वस्तुतस्तु अग्निसाध्यकामनासत्त्वे पत्न्या अपि प्राधान्यं तदसत्त्वे त्वङ्गत्वम् । आद्ये पूर्वं मृतां पत्नीमग्निभिर्दग्ध्वाऽपूर्वाधानं कुशादिपत्नीसहितस्तद्रहितो

---

(१) 'ब्रह्मचारिणं यतिं चैव दहेदुत्तप' क० छ० 'ब्रह्मचारी यती चैव दहेदुत्तप' ग०

देवलः—

> चण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् ।
> पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः ॥

---

वा कुर्यात् "तयोर्यः पूर्वं म्रियते तत्र त्रेतायां पितृमेधः संपद्यते" इत्युपक्रम्य "यद्ययं दारकर्मण्यशक्त आत्मार्थमग्न्याधेयं कुर्यात्" इति भारद्वाजसूत्रात् । अग्न्याधेयम् अपूर्वाधानम् । पुनराधेयशब्दाभावात् । अनयोश्च भेदो रामाण्डारभाष्येऽग्नीनां संभारेषु विधानेन स्थापनम् अग्न्याधेयं । पुनर्विधानान्तरेण स्थापनं पुनराधानम् । तस्यैव गुणाधिकार इति । अन्ये तु पूर्वमृतानां निर्मन्थ्येन दग्ध्वा तानग्नीन् उत्सर्गेष्ट्या त्यक्त्वा पुनराधानं कुर्यात्, नापूर्वाधानम् । अनेकभार्यस्य द्वयोरपि प्राधान्ये ज्येष्ठा चेत्पूर्वं मृता तदा सर्वाग्निभिस्तां दग्ध्वा कनिष्ठया पुनरग्न्याधेयं कुर्यात् । कनिष्ठा चेत्पूर्वं मृता तस्यै अर्धाग्नीन् दत्त्वा अर्धाग्निषु नित्यहोमादि कुर्यात् । द्वयोरन्यतरस्या अङ्गत्वे तु निर्मन्थ्येन दाहः कुशपत्न्यादिना पुनराधानम् । तयोरप्राधान्ये निर्मन्थ्येन दाह उत्सर्गेष्टिः पुनराधानं च । तथाच त्रिकाण्डमण्डनः—

> पुनः परिणयाधानं स्वामिनौ यदि सिध्यतः ।
> पत्न्यै मृतायै श्रौताग्निं दद्यान्निर्मन्थ्यमन्यथा ॥
> तथैवानेकभार्यस्य यद्येकाऽत्र प्रमीयते ॥ इति ।

नह्यत्र श्रौताग्निनिर्मन्थ्ययोर्विकल्पः प्रतीयते । यत्तु "नाग्निः पत्नीमृतौ" इत्यादिसामान्यतस्तत्र पुनर्विवाहाशक्तौ प्रधानायाः कथं निर्मन्थ्यः साग्निवदग्निस्वाम्याविशेषात् । अङ्गभूतायाश्च पुनर्विवाहेच्छायामपि कथं पूर्वाग्नयः ऋत्विग्विवानाहिताग्नित्वेन अग्निस्वाम्याभावात् । नहि पत्नी प्रधानैवाऽङ्गमेव वेति विरुद्धिः सुत्रचा । एवञ्च यावज्जीवं समापयेदित्यस्य विधुराधाने नित्यतयाऽधिकारपरता नतु पूर्वाग्निष्वग्निहोत्रादिपरता । तस्या अप्राधान्यस्य दु-

मनुः—

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्वैस्तु यथासंख्यं द्विजातयः॥

अत्र *प्रातिलोम्येन क्रमः,

पूर्वामुखस्तु नेतव्यो ब्राह्मणो बान्धवैर्गृहात्।
उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा॥
दक्षिणाभिमुखः शूद्रो निर्हर्तव्यः स्वबान्धवैः॥

इत्यादिपुराणादित्यपरार्कः। तेन त्रिंशच्छ्लोकयुक्तो- *ऽनुलोमक्रमो *हेयः। आश्वलायनः—*'ज्येष्ठप्रथमाः कनिष्ठजघन्या गच्छेयुः'

---

ष्कल्प्यत्वात्। एवञ्च व्यवस्थयाऽग्निनिर्मन्थ्ययोः सिद्धौ एकदेशाग्निदाहः प्रधानकनिष्ठापरः। "अपत्नीकोऽप्यग्निहोत्रमाहरेत्" इत्यैतरेयब्राह्मणभाष्ये पूर्वं मृताया निर्मन्थ्येन दाह उत्सर्गेष्टिः पुनराधानं चेति यदुक्तं तदङ्गत्वपक्षे बोध्यम्। अग्निहोत्रादिवद्विधुरस्यौपासनमपि भवति। तथाच भरद्वाजः "यद्ययमपत्नीकः स्यादुभाभ्यां तस्य संस्कार औपासनाग्निहोत्राभ्याम्" इति आकरे धर्मप्रकाशादौ विस्तरः। *त्रिभिरिति। "दक्षिणपूर्वमाहवनीयं निदधाति उत्तरपश्चिमे गार्हपत्यं दक्षिणपश्चिमे दक्षिणाग्निम्" इति स्मरणात् त्रिभिरित्युक्तम्। *प्रातिलोम्येनेति। शूद्रोपक्रमेणाव्यवधानाद्वैश्यस्यैव प्रथममुपस्थितत्वात्। अन्यथा शूद्रोपक्रमाभिधानस्य निरभिप्रायकत्वापत्तेरिति भावः। *अनुलोमेति यथायोगमिति क्रमेऽनुलोमप्रतिलोमाविशेषापेक्षायामुपस्थिततयाऽनुलोमक्रमस्यैवौत्सर्गिकत्वात्। पूर्वोपस्थितशूद्रेण पूर्वावधिना वर्णावधित्वसादृश्यादुत्तरावधिभूतब्राह्मणस्यापि प्रथममुपस्थित्या ब्राह्मणादिक्रमेणैव पश्चिमाद्यन्वयः। शूद्रोपक्रमस्य प्रातिलोमक्रमानियामकत्वादित्यभिमानः। *हेय इति। मातुर्न्यूनश्चिन्त्यमिति

आधानोत्तरं द्वितीयविवाहे कृते ख्यमानमरणे श्रौतस्मार्ताग्न्योः संसर्गः। बौधायनसूत्रे–"अथ यद्याहिताग्निर्द्वे भार्ये विन्देत प्राक्संयोगादग्निमथैतौपासनं परिस्तीर्याज्यं विलाप्य चतुर्गृहीतं गृहीत्वा समिद्वत्यग्नौ जुहोति संमितं संकल्पयेथामिति मिन्दाहुतीर्व्याहृतीश्च हुत्वाथैतमग्निमयं ते योनिर्ऋत्विय इति समिधि समारोप्य गार्हपत्ये समिधमभ्यादधाति भवतं नः समनसाविति गार्हपत्य आज्यं विलाप्य चतुर्गृहीतं गार्हपत्ये जुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यपरं चतुर्गृहीत्वा चित्तिः स्रुगिति संग्रहं जुहोत्यथ गार्हपत्ये स्रुवाहुतीर्जुहोति ब्राह्मण एक होतेति दशभिरथ प्राचीनावीत्यन्वाहार्यपचने जुहोति ये समाना ये सजाता इति द्वाभ्यामथ तत्रैव स्रुवाहुतिं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेत्यथ यज्ञोपवीती द्वादशगृहीतेन स्रुचं पूरयित्वा पुरुषसूक्तेनाहवनीये जुहोत्यथ स्रुवाहुतीर्जुहोत्य-

---

पाठान्तरविरोधोऽपि बोध्यः। द्वारपदं द्वारसत्त्वे तदभावे तु दिङ्मात्रनियमः, संभवतस्तस्य त्यागायोगात्। द्वारैक्येन तु सोऽपि। जीवतो नयने न दिगादिनियमः, मृतग्रहणात्। विशेषान्तरमाह हारीतः–"नगराभिमुखं प्रेतं हरेयुः" इति। *ज्येष्ठेति। यो यो ज्येष्ठः स पुरो गच्छेत् तथा यः कनिष्ठः स पश्चादित्यानुपूर्वीसिद्ध्यर्थमुभयोपादानम् तेन न सर्वज्येष्ठस्य प्राथम्यप्रसङ्गः।

ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः।

आश्मशानादनुव्रज्यादितरो ज्ञातिभिर्मृतः॥

इति योगीश्वरेणोनाद्विवर्षादितर इति विशेषणादूनाद्विवर्षस्यानुयाने नियमो बाध्यः। अनुयाने नियमान्तरमाहाश्वलायनः "अधो निवीताः प्रवृत्तशिखाः" इति। अधः कृतं निवीतमुपवीत-

ग्नये विविचये स्वाहाऽग्नये व्रतपतयेऽग्नये पवमानायाग्नये पावकायाग्नये शुचये स्वाहाऽग्नये पथिकृते स्वाहाऽग्नये तन्तुमतेऽग्नये वैश्वानरायेत्यथ चतुर्गृहीतं जुहोति मनोज्योतिरित्यत ऊर्ध्वं पैतृकं कर्म प्रतिपद्यते" इति ।

आहिताग्नौ विदेशमृते *पथिकृतीष्टि*र्मृताग्निहोत्रं तद्दाहः पात्रयोजनं च कल्पसूत्रादिभ्योऽस्मात्पितामहकृतपद्धतेश्च ज्ञेयमिति बहुवक्तव्येऽप्युपरम्यते । स्मार्ताग्नेस्तूक्तं मदनरत्ने छन्दोगपरिशिष्टे च—

दुर्बलं स्नापयित्वा तु शुद्धचैलाभिसंवृतम् ।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ॥
घृतेनाभ्यक्तमाप्लाव्य शुद्धवस्त्रोपवीतिनम् ।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषयेत् ॥

---

मुपरि वस्त्रं वा येस्तादृशाः । *पथिकृतीष्टिरिति । स्मार्ताग्नेस्तु—

यस्मिन् देशे स्थितो वह्निस्ततोऽन्यत्र मृतो यदि ।
चरुः पथिकृतः कार्यः पूर्णाहुतिरथापि वा ॥

इति वचनात्पथिकृतः चरुः प्रधानदेवतापूर्णाहुतिर्वा । *मृताग्निहोत्रमिति । तद्विधिर्ब्राह्मे—

तावत्कालं दक्षिणाग्रैः कुशैरास्तीर्य वेदिकाम् ।
अधोमुखं च समिधं धारयित्वा पिधानवत् ॥
परकीयेन वत्सेन दुग्ध्वा तां गां च तद्गृहे ।
गोक्षीरेणाथ तेनैव जुहुयादग्निहोत्रकम् ॥
पश्चादग्निं समारोप्य यज्ञभाण्डानि तान्यपि ।
उपयच्छेत विमाय ततो वृषभमेव च ॥
मथित्वाऽग्निं प्रणयनं कृत्वा तत्कुणपं दहेत् ॥ इति ।

तत्प्रकारः कारिकायाम्—

मृताग्निहोत्रं होतव्यं प्राग् दाहात्तत्र कथ्यते ।

हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु ।
मुखेष्वथापिधायैनं निर्हरेयुः सुतादयः ॥
आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम् ।
एकोऽनुगच्छेत्तस्यार्धमर्धं पथ्युत्सृजेद् भुवि ॥
ऊर्ध्वमादहनं कार्यमासीनो दक्षिणामुखः ।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ॥
अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयं महत् ।
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे ॥
आज्यपूर्णं स्रुवं दद्याद्दक्षिणाग्रां नासि स्रुचम् ।
पादयोरधरां प्राचीमरणीमुरसीतराम् ॥
पार्श्वयोः शूर्पचमसौ सव्यदक्षिणयोः क्रमात् ।
मुसले तु न्यसेन्न्युब्जमन्तरूर्वोरुलूखलम् ॥

---

प्राचीनावीतिना सर्वं शंस्यमेवोद्धरेत् खरेत् (?) ॥
साधनाभावतः कूर्चस्थापनं न भवेदिह ।
प्रागग्रैर्दक्षिणाग्रैश्च तृणैः शंसपरिस्तृतिः ॥
पर्युक्षणं च तस्यैव कार्यमत्राप्रदक्षिणम् ।
नर्यदक्षिणतो भस्म निरूह्याहं च सन्निधनीम् ॥
दुग्ध्वा भस्मन्यधिश्रित्याभिद्योतासनवर्जितम् ।
उद्वासयेत्तदासाद्य दक्षिणास्रुक् स्रुवं ततः ॥
प्रतप्य प्रैषरहितं तत् पयः सकृदुन्नयेत् ।
धारयेत्समिधं चाधो नर्यदक्षिणतो नयेत् ॥
तूष्णीं समिधमाधाय सव्यं जानु निपात्य च ।
अपसव्यं स्रुचं कृत्वा सकृत्सर्वं विनिक्षिपेत् ।
ततः कृष्णाजिनेऽस्थीनि पुरुषाकारवत् न्यसेत् ॥
स्वर्णादि स्थापयेत्तत्र घृतेनाभ्यज्य पूर्ववत् ।
पात्राणि योजयित्वा तं दहेत्त्रेताग्निभिस्ततः ॥ इति ॥

चात्रोविलीढमत्रैव *अनग्नेरप्ययं विधिः ।
अपसव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः ॥
अथाग्निं सव्यमावृत्को दद्याद्दक्षिणतः शनैः ।
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ॥

---

देशान्तरकलेवरागमानन्तरमिदं प्रेताग्निहोत्रं हुत्वा कलेवरं दग्धव्यमित्येके । वस्तुतस्तु प्राकृताग्निहोत्रस्थाने मृताग्निहोत्रविधानात्कलेवरस्यास्थ्नां वा गृहागमनपर्यन्तं प्रत्यहं सायंप्रातर्यथोपदिष्टं होतव्यम् ,

अन्यदीयेन वत्सेन या गौः स्नुतपयोधरा ।
आशरीराहृतेस्तस्याः पयसा होम इष्यते ॥
अन्यस्या अपि होतव्यं पयसा तदसम्भवे ।

इत्यन्त्येष्टौ वचनात् । अथ चाध्वप्रमीतस्याहिताग्नेस्तूष्णींधर्मकोऽग्निहोत्रहोमस्तथा तादृशस्यौपासनाग्नेरपि तादृश औपासनहोमः, ब्राह्मवाक्यस्य श्रौतस्मार्ताग्न्योः धर्मैकत्वेन स्मार्ताग्नावपि प्रवृत्तेः । अथ तत्प्रयोगः-मरणानन्तरं पुत्रादिर्देशकालौ सङ्कीर्त्य प्राचीनावीती अहर्मरणे प्रातर्होमप्रारभ्येत्यादि च पूर्ववदुक्त्वा रात्रिमरणे वैपरीत्येन च तदुभयमुक्त्वा पयसा तूष्णीं होष्यामीति संकल्प्य पर्युक्षणान्ते एकपात्र एव प्रातः सायं चाहुतिद्वयपर्याप्तं सकृद् गृहीतं गृहीत्वौपासनदक्षिणार्थे तूष्णीमधिश्रित्योल्मुकेनावज्वल्य त्रिः पर्यग्निकृत्वा तत्रैव यकर्शवान्नित्र(?) दक्षिणत उद्वास्य तत् पात्रं किञ्चित् कालमाकाशे धृत्वा भूमौ निधायाधस्तात्समिधं पालाशीं धृत्वाऽग्नेः पश्चात्कुशेषु समिधा सह निधाय सकृदेव तूष्णीं सर्वं जुहुयात् । प्रजापतिं मनसा ध्यात्वा प्रजापतये न मम इति त्यजेत् । अन्यत्सर्वं लुप्यत इति । होमश्च विद्यमानाग्नावेव सर्वविधः । मरणोत्तरं पुनःसन्धाने तु हविर्द्रव्यदानमात्रम् ।

*अनग्नेरपीति । इयांस्तु विशेषः—

असौ स्वर्गाय लोकाय स्वाहेति परिकीर्तयेत् ॥

तथा—

एवमेवाहिताग्नेश्च पात्रन्यासादिकं भवेत् ।
कृष्णाजिनादिकं चात्र विशेषोऽध्वर्युचोदितः ॥

तत्रैव

अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः ॥

*इदं छन्दोगानामेव । पात्रन्यासोक्तेरुत्तानदेहत्वं साग्निपरम्, निरग्निस्तु पुमानधोमुखः स्त्री तूत्ताना दाह्या,

सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः ।
अधोमुखो दक्षिणादिक्चरणस्तु पुमानिति ॥
उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः ॥

इत्यादित्यपुराणादिति *शुद्धितत्त्वहारलतादयः । उत्तरशिरस्त्वं सामगेतरपरम् । वाराहे त्वग्निदानेऽन्यो मन्त्रः—

कृत्वा तु दुष्कृतं कर्म जानता वाऽप्यजानता ।

---

आहितानाहिताग्न्यादेर्विशेषो वक्ष्यतेऽधुना ।
विगुल्फं बर्हिराज्यं चेत्येवमन्तं समं भवेत् ॥
नास्यानुस्तरणी कार्या पात्राणां न च योजनम् ।
पृषदाज्यं तथा चर्यादिति गृह्यविदां मतम् ॥
तां दिशं तु नयेदग्निमेतं चापि ततः परम् ।
अयुजो मिथुना वृद्धाः पीठचक्रेण भावतः ॥
प्रेतस्य पृष्ठतो भूत्वा ईयुः पूर्ववदेव च ।
भूमिभागं ततः प्राप्य कर्ता प्रोक्षति पूर्ववत् ॥ इति ॥

अग्निप्रदानमन्त्रः श्रौतः । *इदं दक्षिणाशिरस्त्वम् । *शुद्धी-

मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥
धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ।
दहेयं सर्वगात्राणि दिव्याँल्लोकान्स गच्छतु ॥
ज्वलमानं महावह्निं *शिरःस्थाने प्रदापयेत् ।
चतुर्वर्णेषु संस्थानमेवं भवति पुत्रकं ॥
अत्र क्रियानिबन्धे गारुडे षट्पिण्डदानमुक्तम्–
मृतस्योत्क्रान्तिसमये षट् पिण्डान् क्रमशो ददेत् ।
मृतिस्थाने तथा द्वारि चत्वरे तार्क्ष्य कारणात् ॥
विश्रामे काष्ठचयने तथा संचयने च षट् ॥

तथा—

आदौ देयास्तु षट् पिण्डा दश देया दशाहिकाः ।
*स्थाने चार्धपथेऽतीते चितायां शवहस्तके ॥
श्मशानवासिभूतेभ्यः षष्ठं संचयने तथा ॥

ततः—

त्वं भूतकृज्जगद्योने त्वं लोकपरिपालकः ।
उक्तः संहारकस्तस्मादेनं स्वर्गं मृतं नय ॥
इत्यग्निं दत्त्वा अस्मात्त्वमितिमन्त्रेणार्धदग्धे आज्या-
हुतिरुक्ता । आहिताग्नौ पराशरः–
शम्यां शिश्ने विनिक्षिप्य अरणी मुष्कयोरपि ।
जुहूं च दक्षिणे हस्ते वामे तूपभृतं न्यसेत् ॥
ओ(१)ष्ठे तूलूखलं दद्यात्पृष्ठे च मुसलं न्यसेत् ॥
उरसि क्षिप्य दृषदं तण्डुलाज्यतिलान्मुखे ।
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षुषोः ॥

---

ति । उत्तानत्वस्य ललाटादिपिण्डादिस्थापनाद्यनुगुणतयाऽधोमु-
खत्वं कैमुत्यन्यायलाभार्थमित्यस्वरसः । *शिरः स्थाने इति ।

(१) 'शिश्ने तूलूखलं' ग० ।

कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत् ।
अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत् ॥

प्रचेताः—

स्नानं प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः ।
नग्नदेहं दहेन्नैव *किञ्चिद्देयं परित्यजेत् ॥

यमः—

प्रेतं दहे*च्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम् ।

आश्वलायनसूत्रे 'संस्थिते प्रेतालंकारान् कुर्वन्ति *केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति नलदमालां प्रतिमुञ्चन्ति' इति । माधवीये ब्राह्मे—

दरिद्रोऽपि न दग्धव्यो *नग्नः कस्यांचिदापदि ।

तथा—

निःशेषस्तु न दग्धव्यः शेषं किंचित्त्यजे*त्ततः ।

दाहकालेऽग्निनाशे तु मदरत्ने यज्ञपार्श्वः—

यजमाने मृते क्वापि चितादौ वा प्रवेशिते ।
*वर्षाद्यभिहतेऽग्नौ तु कथं प्रेतविकल्पना ॥
शेषं दग्ध्वा प्रदग्धेषु निर्मन्थ्यैव तु कारयेत् ॥

---

पाददेशे इति बोध्यम् । *स्थाने मृतिस्थाने । *किञ्चिद्देयं शववस्त्रैकदेशं श्मशानवास्यर्थं देयम् । *शुभैर्गन्धैः धूपसुगन्धिचूर्णादिभिः । *केशेति । प्रेतवापनं कारिकानुक्तत्वाच्छिष्टानानुचरन्ति "नलदानुलेपनं भाले जीवताऽनुशार्य" इत्येवालङ्कारत्वात् । *नग्न इति । "अहतेन वाससाऽऽच्छाद्य" इत्याश्वलायनः । *ततः शवच्छादनवस्त्रात् । नर इति पाठे शवच्छादनवस्त्रशेषः शेषपदार्थः । *वर्षादीति । अग्निनाशपरम् । लौकिकाग्नौ व्याहृत्याऽऽज्यं हुत्वा तेन वा दाहः पूर्वोक्तः प्रेतमरणं हृत्वा यथोक्तमग्निं गमयित्वा अनवेक्षमाणा आरण्यान्तिक एव वा

( क्रि(१)यानिबन्धे—

उदधारामविच्छिन्नां सिञ्चेत्कर्ता प्रदक्षिणम् ।
स्कन्धावसिक्तकुम्भेन पादतः परितश्चितेः ॥ )

अथ पर्णशरादिदाहेनाग्निनाशे पश्चात्तद्देहलाभे मदनरत्ने ब्राह्मे—

अथ पर्णशरे दग्धे पात्रन्यासे कृते सति ।
गतेष्वग्निषु तद्देहो यद्यूर्ध्वं लभ्यते क्वचित् ॥
तदाऽर्धदग्धकाष्ठानि तानि निर्मथ्य तं दहेत् ।
यद्यर्धदग्धकाष्ठं तु तदीयं वै न लभ्यते ॥
तदा तदस्थिखण्डं तु निक्षेसव्यं महाजले ॥

दंपत्योरेकदा मृतौ विशेषमाहापस्तम्बः—तथैव प्रेते सहैव पितृमेधो द्विवचनलिङ्गान्मन्त्रान्सन्धारयन्ति । पितृमेधो दाहान्तं कर्म, 'दाहान्तमेकतन्त्रत्वम्' इति बौधायनोक्तेः । अस्थिसंचयनमप्येकम् । उदकपिण्डदानादि पृथगेव । सहगमनेऽप्येवम् । तदाह मदनरत्ने भाष्यार्थसंग्रहकारः—

एककालमृतौ भार्या भर्ता च यदि चेत् द्वयोः ।
तन्त्रेण दहनं कुर्यात्पिण्डश्राद्धं पृथक् पृथक् ॥
एककाले मृतौ जायापती यदि तदा पितुः ।
विभज्याग्निं क्रियां कुर्यादिति यत्तदसांप्रतम् ॥
दाहान्तमेकतन्त्रत्वमिति याज्ञिकसंमतम् ॥
मृतं पतिमनुव्रज्य या नारी ज्वलने गता ।
अस्थिसंचयनान्तोऽस्या भर्तुः संस्कार एव हि ॥
कीकसानां तु संस्कारो न्यायसिद्धोऽपि यो मतः ।
एककाले मृतेप्येवं कीकसानां विधिः स्मृतः ॥

---

(१) कंसान्तर्गतं नास्ति ग० ।

नवश्राद्धं सपिण्डान्तं भिन्नकालमृतौ यथा ॥

कपर्दिकारिकापि—

मृते भर्तरि तद्दाहात्प्राक् पत्नी म्रियते यदि ।
पत्न्यां वा प्राक् प्रमीतायां दाहादर्वाक्पतिर्मृतः ॥
तत्र तन्त्रेण दाहः स्यान्मन्त्रेषु द्वित्वमूह्यते ।
कीकसानां तु संस्कारः पृथगेव तयोर्भवेत् ॥
एकाहमृत्यौ युगपन्नवश्राद्धादिकं तयोः ।
मृतं पतिमनुव्रज्य पत्नी चेदनलं गता ॥
तत्रापि दाहस्तन्त्रेण पृथगस्थिक्रिया भवेत् ।

अस्थिसंचयनपृथक्त्वे विकल्पः । सहगमने सर्वत्र पाकैक्यमाह प्रचेताः—

एकचित्यां समारूढौ म्रियेते दंपती यदि ।
तन्त्रेण श्रपणं कुर्यात्पृथक्पिण्डं समाचरेत् ॥

अथोदकदानं वासिष्ठः—"शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्यवयन्ति *सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वन्त्ययुग्मम्" । आपस्तम्बः—"मातुश्च योनिसंबन्धेभ्यः पितुश्चासप्तमात्पुरुषाद्यावतां वा संबन्धो ज्ञायते तेषां प्रेतेषूदकक्रिया" इति । याज्ञवल्क्यः—

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।
अपनः शोशुचदघमनेन पितृदिङ्मुखाः ॥

---

ततोऽरतभूताः कनिष्ठभूता इति । अरण्यं श्मशानम् । तत्र स्नानार्थमागमने वैजवापः "अपोऽभ्युपयन्ति" इति अभ्युपगमप्रयोजनतया स्नाने लक्षणा उद्धृतजलेन स्नाननिवृत्त्यर्थम् । दाहस्य शाखाभेदेन भेदाद्यथोक्तम् । अरतीभूताः उद्विग्नाः । रीतीभूता इति पाठे श्रेणीभूताः । *सव्येति ।

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।

**सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ॥**

***सप्तमाद्दशमाद्वा दि(१)वसादर्वागिति विज्ञानेश्वरः । कातीयास्तु सप्तमाद्दशमाद्वा *पुरुषादित्याहुः, "सप्तमाद्दशमाद्वा पुरुषात्समानग्रामवासे *यावत्सम्बन्धमनुस्मरेयुः" इति पारस्करोक्तेः । *मन्त्रस्नानाङ्गमेवेति हेमाद्रिः । प्रचेताः—"*प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोप-**

---

इत्यस्य बाधार्थम् । वा आ अपीति च्छेदेऽर्थमाह—*सप्तमादिति । "अपोऽभ्युपयन्ति" इति अजहत्स्वार्थलक्षणम् । अपोऽभ्युपगम्योदकन्ददतीत्यर्थः, न तु स्नान्तीति,

एवं मातामहाचार्यप्रेतानामुदकक्रिया ।

इति अतिदेशानुपपत्तेः । अत्र बहुवचनान्मातामही बोध्या । मन्त्रस्योदकदानेऽन्वयः । अनेन प्रसिञ्चन्तीत्यन्वयादेतद्वाक्ये स्नानाभावाच्च । "अप" इति मन्त्रं पठित्वा "अमुकनामा अमुकगोत्रः प्रेतस्तृप्यतु" इति प्रयोगः । *पुरुषादिति । अर्वाग् ज्ञातयो अपोऽभ्युपयान्ति । उदकसमीपं गत्वा स्नात्वोदकं ददतीत्यर्थः । सप्तमादिग्रहणमतन्त्रमित्याह—*यावत्सम्बन्धमिति । जन्मनामज्ञानपर्यन्तमित्यर्थः । *मन्त्र इति । "सव्यानामिकयाऽपनोद्यापनः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति" इति । पारस्करोक्तेः । एवं सति मन्त्रे विकल्पः समुच्चयो वा । उदकदाने नामादियुक्त एव तन्यते मन्त्रः "असावेतत्ते उदकम्" इति तेनैवोक्तेः । असाविति प्रेतसम्बुद्धिः । स्नानप्रकारमाह—*प्रेतस्येति । नोद्धर्षयेयुरङ्गम् । न ह्येतावताऽन्यत्रोद्धर्षणं कार्यं तस्य मालिन्यनिवृत्त्यर्थत्वात् । वासस इत्युत्तरीयं क्षत्रवैश्यविषयम् । राजन्यवैश्यौ अपसव्ये वासोयज्ञोपवीते कृत्वेति शाङ्खोक्तेः ।

---

(१)' दिवसादातदन्त' क० छ०

वीतवाससो *दक्षिणामुखा ब्राह्मणस्योदङ्मुखा प्राङ्मुखाश्च राजन्यवैश्ययोः" । स एव *'नदीकूलं ततो गत्वा' इत्युक्त्वा—

सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततस्तु प्रविशेद् गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् ॥

प्रेतस्नाने विशेषः शुद्धितत्त्वे (१)आदिपुराणे—

आदौ वस्त्रं च प्रक्षाल्य तेनैवाच्छादितैस्ततः ।
कर्तव्यं तैः सचैलं तु स्नानं सर्वमलापहम् ॥

---

ब्राह्मणानां त्वेकं वासः तथा बैजवापोक्तेः । योगीश्वरोक्तं पितृदिङ्मुखत्वं विप्रस्यैवेत्याह–*दक्षिणेति । शूद्रे त्वनियमः, उदकदानस्य सर्ववर्णसमत्वात् । तत्र कानिचिदङ्गानि वर्णविशेषनियन्त्रितानि कानिचित्तु सर्ववर्णसमानीति । *नदीकूलमिति । शौचं कृत्वा यथार्थवत् ।

वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् । इति पादत्रयम् । नदी च भागीरथ्यादिः, "धर्म्यास्वप्सु" इति बैजवापोक्तेः । दश द्वादशाद्यञ्जलिदानं सर्वाशौचदिनानि मिलित्वा, तथा सति प्रत्यहमेकाञ्जलिदानासिद्धेः । प्रथमदिन एव दशाद्यञ्जलिदानविधिरिति केचित् । गृहप्रवेशः प्रथमदिन एव "उत्तीर्य वासांसि परिधाय सकृदेनान्यापीड्यादग्दशानि विसृज्यासीत आनक्षत्रदर्शनात्" इत्याश्वलायनोक्तेर्नक्षत्रदर्शनोत्तरं कार्यः स्नानगृहप्रवेशयोः पाठक्रमादार्थक्रमो विपरीतः । पुनः पदेन सकलपूर्वस्नानधर्मातिदेशेन नदीरूपाधिकरणप्राप्तेः गृहप्रवे-

---

(१) 'आदित्यपुराणे' ग० ।

पूर्वपरिहितं वस्त्रं प्रक्षाल्य पुनः परिधाय स्नाया-दित्यर्थः । *'अप नः' इति (१)मन्त्रेण वामहस्तानामिकया जलालोडनम् । अवतरणे वृद्धपुरःसरत्वोक्तेः । 'यथाबालं पुरस्कृत्य' इति बौधायनीयं जलादुत्थानपरमिति हारलतादयः । आश्वलायनः–*"सव्यावृतो व्रजन्त्यनीक्षमाणा *यत्रोदकमवहद्भवति तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रं नाम गृहीत्वा" इति । प्रचेतसाऽन्वहमञ्जलित्रयमप्युक्तम् । तत्र 'त्रिःप्रसेकं कुर्युः प्रेतस्तृप्यतु' इति । तथा—

*दिनेदिनेऽञ्जलीन् पूर्णान् प्रदद्यात्प्रेतकारणात् ।
तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते ॥

*एकवृद्धिस्त्रिकवृद्धिर्वेत्यर्थः । मदनरत्ने भरद्वाजगृह्ये

---

शोत्तरं तदसम्भवात् । पुनर्नदीगमनकल्पने गौरवात् तथैव शिष्टाचारात् । गृहशौचं त्वाशौचान्तादिने ।

*अप न इति । प्रोक्तपारस्करवाक्येऽपेतिमन्त्रस्य स्नानाङ्गत्वोक्तेरपनोदनममन्त्रकमेवेति बोध्यम् । *सव्यावृत इति । संस्कारानन्तरं चितामप्रदक्षिणमावर्त्य जलसमीपं स्नातुं व्रजन्तीत्यर्थः । "निर्हृत्य बान्धवाः प्रेतं संस्कृत्य प्रदक्षिणेन चितामभिगम्याप्सु सवाससो निमज्जनं कुर्यात्" इति विष्णूक्तेः । *यत्रेति । स्थिरजलं तडागादि । पूर्वोक्तनद्यसम्भवे । यद्यपि योगीश्वरेण सप्तमदिनपर्यन्तमेवोदकदानमुक्तं, गौतमेन तु "प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया" इति विषमदिने तदुक्तं, तथापि शिष्टाचारमनुरुध्याह—*दिने दिने इति । *एकवृद्धिः प्रथमदिने एकः द्वितीये द्वौ तृतीये त्रय इत्यादिक्रमेण । त्रिकवृद्धिः प्रथमे त्रयः द्वितीये षट् तृतीये नवेत्यादि । द्वैगुण्यत्रैगुण्यादिवृद्धि-

---

(१) 'मन्त्रेण' नास्ति क० ख० ।

तु द्विकवृद्धिरप्युक्ता—

आशौचान्ते प्रदद्यात्तु प्रेतपुत्रस्तिलाञ्जलीन् ।
प्रथमेऽह्नि सकृद्दद्यात् *पिण्डयज्ञावृता *दिवा ॥
त्रींश्च दद्याद्द्वितीयेऽह्नि तृतीये *पञ्च एव च ।
चतुर्थे सप्तसंख्यास्तु पञ्चमे नव चोत्सृजेत् ॥
षष्ठेऽह्नि चैकादशकाः सप्तमे तु त्रयोदश ।
अष्टमे पञ्चदशका नवमे दश सप्त च ॥
एकोनविंशतिं चाग्रे शताञ्जलिमतं स्मृतम् ।
केचिद्दशाञ्जलीन् प्रोचुः केचिदाहुः शताञ्जलीन् ।
पञ्चपञ्चाशतं चान्ये स्वशाखोक्तव्यवस्थया ॥

छन्दोगपरिशिष्टे—

अथानवेक्ष्यगन्पापः सर्वे चैव शवस्पृशः ।
गोत्रनामपदान्ते तु तर्पयामीत्यनन्तरम् ॥
*दक्षिणाग्रान्कुशान्कृत्वा सतिलं तु पृथक् पृथक् ॥

विष्णुपुराणे—

*सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् ॥

रामायणे—

इदं पुरुषशार्दूल विमलं दिव्यमक्षयम् ।
पितृलोकेषु पानीयं मद्दत्तमुपतिष्ठताम् ॥

---

पक्षाः स्मृत्यन्तरोक्ता बोध्याः । अत्रैकाञ्जलिपक्षः अञ्जलिपक्षः अञ्जलिवृद्धिपक्षश्चेति त्रयः पक्षाः । तत्रान्यतमानुष्ठानेन शास्त्रार्थ-सिद्धावपि गुरुपक्षावलम्बे प्रेतोपकारातिशयः कल्पनीयः । अन्यथा तदा स्नानानर्थक्यापातात् । *पिण्डयज्ञावृता पितृयज्ञप्रक्रियया प्राचीनावीतित्वादिरूपेण । *दिवेति रात्रिव्यावृत्तिः । *पञ्चेति एकवृद्धिपक्षे । उदकं तिलकुशसहितं देयमित्याह—*दक्षिणा-ग्रानिति । कुशानामिह द्विगुणभुग्नतां निषेधति—*सपि-